| अ० | पृ० | विषयाः |
|---|---|---|
| ३२ | ३२ | तोतादरीस्थबोपदेववृत्तान्तवर्णनम्. श्लो० २२ |
| ३३ | ३३ | व्याधकर्मब्राह्मणवृत्तान्तवर्णनम्. तस्यान्नपूर्णाप्रसादवृत्तान्तवर्णनम्. सप्तशतीप्रथमचरित्रमाहात्म्यवर्णनम्. श्लो० २५ |
| ३४ | ३३ | महानन्दिनृपतिवृत्तान्तवर्णने सप्तशतीमध्यमचारित्रमाहात्म्यवर्णनम्. श्लो० १४ |
| ३५ | ३४ | व्याकरणमहाभाष्यकारपतञ्जलिवृत्तान्तवर्णने सप्तशत्युत्तमचरितमाहात्म्यवर्णनम्. श्लो० १६ |
| | | ( इति द्वितीयःखण्डः ॥ २ ॥ ) |
| | | ( अथ तृतीयः खण्डः ॥ ३ ॥ ) |
| १ | ३४ | सूतेनशौनकादीन्मतिविक्रमराज्यकालाद्द्वादशशताब्दीसमयेजायमानैतिहासिकवृत्तान्तवर्णनम्.तत्र–पूर्वभारतयुद्धेमृतानांकौरवाणांयादवानांपाण्डवानां श्रीकृष्णादीनांचपुनरवतारकथाप्रस्ताववर्णनम्. श्लो० ३४ |
| २ | ३५ | भरतखण्डस्थाष्टादशराज्यस्थानविभागादिवर्णनम्,शकराजैरार्यदेशविध्वंसेकृतेसतिविक्रमादित्यपौत्रेणशालिवाहनेनशकानांपराजयकरणम्. आर्यदेशम्लेच्छदेशयोर्मर्यादाकरणम्.ईशपुत्रेण सामांसहस्यम्लेच्छदेशेस्थापनम्. शालिवाहनस्यषष्टिवर्षपर्यन्तंराज्यकरणोत्तरंस्वर्गमनम्. श्लो० ३४ |
| | ३६ | शालिवाहनवंशीयनृपतिराज्यवर्णनम्,शालिवाहनाद्दशमनप्तृभोजराजस्यदिग्विजययात्रावर्णनम्,वाहीकदेशस्थशिवेनसहभोजराजस्य संवादः,कालिदासेनचण्डीयागप्रभावेणवाहीकवधकरणम्, भोजराजस्थापितार्यधर्ममहम्मदीयधर्मशामसीहस्थलस्थितिवर्णनम्. भोजराजकालः. श्लो० ३३ |
| ४ | ३६ | भोजराजवंश्यानेकभूपालराज्यवर्णनम्, कलिवृद्ध्यर्थंभगवदवतारप्रस्तावः,व्रतपानाम्न्याऽऽभीर्याभगवत्पुत्रत्वाकांक्षिण्यातपःकरणम्, व्रत पाभीर्याचसुमन्नृपेणसहविवाहः,तस्यांदेशराज-त्सराजपुत्रयोर्जलताभ्यां सहतालनस्यबनरसाधिपस्ययुद्धेपराजयेस तिमैत्रीकरणम्,जयचन्द्रपरी क्षार्थंतेषांगमनवर्णनम्. श्लो० ३० |
| ५ | ३७ | जयचन्द्रपृथ्वीराजयोरुत्पत्तिपूर्वकमार्यदेशसमाद्धिभागाधिपत्यवृत्तान्तवर्णनं,परस्परवैरवृत्तान्तवर्णनंच. श्लो० ४० |
| ६ | ३८ | जयचन्द्रसुतायाःसयोगिन्याःस्वयंवरेपृथ्वीराजस्यप्रतिमायाः संयोगिन्यावरणम्,संयोगिन्यर्थेपृथ्वीराजस्यराजसमूहैःसहमहायुद्धवर्णनम्, ततःपृथ्वीराजस्यजयवर्णनम्. श्लो० ६३ |
| ७ | ३९ | भीष्मराजस्यतपसासंतुष्टेनेंद्रेणतस्मैवडवादानम्,परिमलराजस्यतपसा संतुष्टेनशङ्करेणतस्मैतवगृहेभगवान्वत्स्यतीतिवरप्रदानम्,लक्ष्मणराजस्यतपसासंतुष्टेनजगन्नाथेनतस्मैऐरावतीदानम्–एवंवरसंपन्नैस्तैरितरराजसमूहैश्चासिद्ध्युद्धसन्नाहैर्महावतींप्रतिगमनम्.तत्रतालनस्याज्ञायांतेषांस्थितिवर्णनम्. श्लो० ४१ |

| अ० | प० | विषयाः |
|---|---|---|
| ८ | ४० | सहदेवांशावतारकथाप्रसंगेनजम्बुकराजादिराजमण्डलवृत्तान्तवर्णनम्. श्लो० ३३ |
| ९ | ४१ | देशराजवत्सराजविवाहवृत्तान्तवर्णनम्, रामकृष्णधर्मादीनामंशावतारकथावर्णनम्. श्लो० ४९ |
| १० | ४२ | कृष्णांशचारित्रवर्णनम्,राजकरदीकरणवृत्तान्तवर्णनम्,मल्लक्रीडादिवृत्तान्तवर्णनम्,मृगयावृत्तान्तवर्णनम्. श्लो० ६२ |
| ११ | ४३ | कृष्णांशकृतमहीराजपराजयादिवृत्तान्तवर्णनम्. श्लो० ६१ |
| १२ | ४४ | कृष्णांशसमीपेराजमण्डलागमनम्,स्वपितृघातकगुर्जरस्थजम्बुकभूपालशासनार्थंसेनयासहतस्यराज्येगमनम्.तत्राविजयैषिणीतःशत्रुभेदविज्ञानम्,तत्रमहाघोरयुद्धवृत्तान्तवर्णनम्. श्लो० १५२ |
| १३ | ४८ | तस्ययुद्धस्यसमयवर्णनम्,पृथ्वीराजेनकरविनिमयेनबलखानितोगुर्जरराज्यग्रहणस्यवृत्तान्तवर्णनम्,धर्मांशबलखानिविवाहवृत्तान्तवर्णनम्. श्लो० १३६ |
| १४ | ५१ | जयंतावतारवृत्तांतवर्णनम्, तस्येंदुलनाम्नाख्यातिः, इंदुलस्यचारित्रवर्णनम्. श्लो० १९ |
| १५ | ५१ | चण्डिकादेवीवाक्यवर्णनम्. श्लो० १३ |
| १६ | ५१ | कृष्णांशस्य सप्तदशाब्देवयसिबलखानिविवाहवृत्तान्तवर्णनम्, तत्रबलखानिसंकट—तन्मोचनवृत्तान्तवर्णनम्. श्लो० ७९ |
| १७ | ५३ | पृथ्वीराजस्यसप्तकौरवांशपुत्रप्राप्तिवृत्तांतवर्णनम्, ब्रह्मानन्दविवाहवृत्तान्तवर्णनम्. श्लो० ७३ |
| १८ | ५५ | इंदुलंप्रतिहंसैः पद्मिनीवृत्तांतकथनानन्तरं तदर्थंसिंहलेगत्वायुद्धादिवृत्तांतवर्णनम्. तत्रबलखानिसैन्यपराभववर्णनम्. श्लो० ३० |
| १९ | ५५ | इंदुलस्य पद्मिन्या सह विवाहवृत्तान्तवर्णनम्, पद्मिनीजन्मवृत्तान्तवर्णनम्. श्लो० ६४ |
| २० | ५७ | पांचालदेशस्थबलवर्द्धनभूपालपुत्रमयूरध्वजस्य स्कंदप्रसादवर्णनम्. तद्वंधोर्लहरस्य च वरुणप्रसादवर्णनम्, सुखखानिविवाहवृत्तान्तवर्णनम्. श्लो० ५५ |
| २१ | ५८ | सिंधुदेशस्थमयूरध्वजराजपुत्र्यापुष्पवत्या सह कृष्णांशस्य विवाहवृत्तान्तवर्णनम्. श्लो० ११० |
| २२ | ६० | कृष्णांशपुष्पवत्योः संवादे पूर्वजन्मवृत्तांतवर्णनम्.कृष्णांशस्य स्वभगिन्याश्चंद्रावल्याः सद्मनि गत्वा समागमवृत्तांतवर्णनम्. तत्र धूर्तमहीपतिना पैशुन्ये कृते सति युद्धवृत्तान्तवर्णनम्. श्लो. ७६ |
| २३ | ६२ | चित्ररेखया सहेन्दुलस्य विवाहवृत्तान्तवर्णनम्. श्लो० १४९ |
| २४ | ६५ | पृथ्वीराजाग्रे चंदूभट्टेन भाषाग्रंथवर्णनम्. पृथ्वीराजेन महावत्यां कुंदनमलस्य दौत्येन प्रेषणम्.नृपाणां परस्परजयपराजयादिविविधवृत्तान्तवर्णनम्. श्लो० १११ |
| २५ | ६७ | दाक्षिणात्यबिन्दुगढस्थशारदानन्दनभूपकन्यायाः स्वयंवरवृत्तान्तवर्णनम्. श्लो०६४ |
| २६ | ६९ | महावत्यां युद्धवृत्तांतवर्णनम्. श्लो० ११० |

| अ० | पृ० | विषयाः |
|---|---|---|
| २७ | ७१ | कच्छदेशीययुद्धवृत्तान्तवर्णनम्. श्लो० ८६ |
| २८ | ७३ | कृष्णांशस्यशोभानामवेश्यासमागमसंवादपूर्वकंपुराणाचार्य-पुराणभेदवर्णनम्, शोभावेश्यापनीतकृष्णांशमोचनवृत्तान्तवर्णनम्. श्लो०८४ |
| २९ | ७५ | किंनरीकन्योत्पत्तिवृत्तान्तवर्णनम्.बौद्धराज्य–चीनराज्य-श्यामराज्यस्थैः सह युद्धवृत्तान्तवर्णनम्. श्लो० ६४ |
| ३० | ७६ | लक्षणपद्मिनीसमानयनयुद्धवृत्तान्तवर्णनम्. श्लो० १०४ |
| ३१ | ७८ | कृष्णांशस्य श्यालयोषिद्भिः संकटानयनम्. कृष्णांशश्यालयोषिद्विवाहादिवृत्तान्तवर्णनम्. गुर्जरस्थमूलदेवनृपतिकन्यामभावतीतत्पतिपीडकयक्षविनिग्रहः,काश्मीरस्थकेकयभूपतितनयामदनावतीविवाहवृत्तान्तवर्णनम्.पुण्ड्रदेशस्थनागवर्मभूपालतनयासुवेलाविवाहवृत्तान्तवर्णनम्. मद्रकेशकन्याकान्तिमतीविवाहवृत्तान्तवर्णनम्. देहलींमतिम्लेच्छराजस्य सहोदस्यागमनवृत्तान्तवर्णनम्. आर्यदेशे म्लेच्छागमनादिवृत्तान्तादिवर्णनम्. श्लो०१९९ |
| ३२ | ८२ | चन्द्रवंशीयादिसर्वनृपाणामंतिममहाघोरसंग्रामः, तत्र प्रायःसर्वनृपाणांक्षयवृत्तान्तवर्णनम्. पृथ्वीराजमृत्युविद्न्मालाहरणवृत्तान्तवर्णनम्. म्लेच्छेन सहोड्डीनेन देहल्यां स्वदूतस्य कुतुकोड्डीनस्यस्थापनवर्णनम्. श्लो० २६२ |
| | | (इति तृतीयः खण्डः ॥ ३ ॥) |
| | | **( अथ चतुर्थः खण्डः ॥ ४ ॥ )** |
| १ | ८८ | व्यासमहर्षिणा स्वमनः मत्युद्दिश्य भाविष्यत्कथावर्णनम्.अग्निवंश्यनृपचारित्रवर्णनम्.तत्र विक्रमवंश्यभूपालचारित्रवर्णनम्.बुंदेलखण्डस्थराष्ट्रवृत्तान्तः, कल्पसिंहांतममरवंशसमाप्तिवर्णनम्. श्लो० ५० |
| २ | ८९ | अजमेरपुरवृत्तान्तः, तोमरान्वयवृत्तान्तवर्णनम्. म्लेच्छोपभुक्तचपहानिवंश्यक्षत्रियपत्नीभ्यो जट्ट–जाट्य–मेहन–प्रभृतिक्षुद्र जातिक्षत्रियवृत्तान्तवर्णनम्. श्लो०२८ |
| ३ | ९० | शुक्लनामकाग्निवंश्यभूपालवंश्यचारित्रवर्णनम्. शुक्लेन ब्राह्मणद्वारबौद्धविजयकरणपूर्वकं द्वारकायांराज्यकरणम्,तद्वंश्यराजवृत्तान्तवर्णनम्.सिंधुदेशवृत्तान्तः,कच्छभुज–देशवृत्तान्तः,उदयपुरवृत्तांतः,कान्यकुब्जवृत्तान्तः लक्षणांतशुक्लवंश्यसमाप्तिवर्णनम् शेषक्षुद्रभूपालस्थितिवर्णनम्. श्लो० ७९ |
| ४ | ९२ | परिहरभूपतिवंश्यनृपतिवृत्तान्तवर्णनम्. श्लो० ४० |
| ५ | ९२ | ब्रह्मणो मध्याह्नकालमाप्तौभगवदवतारादिवृत्तान्तवर्णनम्. श्लो० ३६ |
| ६ | ९३ | देहलीस्थम्लेच्छभूपवृत्तान्तवर्णनारम्भः,सहोड्डीनेनदेवतातीर्थखण्डकरणम्,व्यासेन मनसे कल्पजातिधर्मस्थितिवर्णनम्,मोङ्गलतैमुरलङ्गराज्यवर्णनम्. इंद्राण्यासहेंद्रस्यभूमावागमनम्. तत्रबृहस्पतिनेंद्रादिभ्यः सूर्यमाहात्म्यवर्णनम्. श्लो० ६८ |
| ७ | ९५ | सूर्यमाहात्म्यवर्णनम्.तत्रधातृशर्मद्विजचरित्रवर्णनम्, मित्रशर्मद्विजचरित्रवर्णनम्, रामानन्दोत्पत्तिवृत्तान्तः, निम्बादित्योत्पत्तिवृत्तान्तः श्लो० ७८ |

| अ० | प० | विषयाः |
|---|---|---|
| ८ | ९६ | मध्वाचार्योत्पत्तिवृत्तान्तवर्णनम्, श्रीधराचार्योत्पत्तिवृत्तान्तवर्णनम्, विष्णुस्वाम्युत्पत्तिवृत्तान्तः.वाणीभूषणोत्पत्तिवृत्तान्तः,भट्टोजिदीक्षितोत्पत्तिवृत्तान्तः,वराहमिहिराचार्योत्पत्तिवृत्तान्तः.श्लो.१३२ |
| ९ | ९९ | धन्वन्तरिसमुत्पत्तिवृत्तान्तः, सुश्रुतोत्पत्तिवृत्तान्तः, जयदेवोत्पत्तिवृत्तान्तः. श्लो० ७१ |
| १० | १०१ | कृष्णचैतन्योत्पत्तिवृत्तान्तवर्णनम्. शङ्कराचार्यसमुत्पत्तिवृत्तान्तवर्णनम्. श्लो० ८६ |
| ११ | १०३ | आनन्दगिरिसमुत्पत्तिवृत्तान्तवर्णनम्,वनशर्मसमुत्पत्तिवृत्तान्तवर्णनम्.पुरीशर्मसमुत्पत्तिवृत्तान्तवर्णनम्. श्लो० ७८ |
| १२ | १०४ | भारतीशसमुत्पत्तिवृत्तान्तवर्णनम्. गोरखनाथसमुत्पत्तिवृत्तान्तवर्णनम्. क्षेत्रशर्मोत्पत्तिवृत्तान्तवर्णनम्. ढुण्ढीराजसमुत्पत्तिवृत्तान्तवर्णनम् श्लो० १०४ |
| १३ | १०७ | अघोरपंथिभैरवहनुमज्जन्म—रुद्रमाहात्म्य—बालशर्मसमुत्पत्तिवर्णनम्. श्लो० ५६ |
| १४ | १०८ | रुद्रमाहात्म्यवर्णनम्,रामानुजोत्पत्तिवर्णनम्. श्लो० १२४ |
| १५ | १११ | वस्ववतारवृत्तान्तवर्णनेकुबेरावतारत्रिलोचनवैश्योत्पत्तिसविस्तरवृत्तान्तवर्णनम्. श्लो० ७९ |
| १६ | ११२ | नामदेवसमुत्पत्तिवर्णनम्,रंकणवैश्यसमुत्पत्तिवृत्तान्तवर्णनम्.श्लो०८३ |
| १७ | ११४ | कबीर—नरश्री—पीपा—नानक-नित्यानन्दसाधूनांसमुत्पत्तिवृत्तान्तवर्णनम्. श्लो० ९४ |
| १८ | ११६ | अश्विनीकुमारावतारवर्णनेसधन-रैदाससमुत्पत्तिवृत्तान्तवर्णनम्.श्लो. ६० |
| १९ | ११७ | कृष्णचैतन्ययज्ञांशशिष्य-बलभद्र-विष्णुस्वामि—मध्वाचार्यादिचरित्रवृत्तान्तवर्णनम्. श्लो० ७२ |
| २० | ११९ | कृष्णचैतन्यचरित्रवर्णने जगन्नाथमाहात्म्यवर्णनम्. श्लो० ९५ |
| २१ | १२१ | कण्वब्राह्मणस्यार्यावत्यामुपाध्यायदीक्षितपाठकशुक्लमिश्राग्निहोत्रिद्विवेदित्रिवेदिपाण्डचतुर्वेदीत्यन्वर्थदशपुत्रतद्वंश्योत्पत्तिवृत्तान्तवर्णनम्. कृष्णचैतन्यादिकृतम्लेच्छमायानिरासवृत्तांतवर्णनम्. श्लो० ८७ |
| २२ | १२३ | तिमिरलिंगपुत्रसरुषादीनां देहल्यांराज्यवृत्तान्तवर्णनम्.अकब्बरराज्यवृत्तान्तवर्णनम्.अकब्बरवंश्यसलोमाखुर्दकावरंगराज्यवृत्तान्तवर्णनम्.दाक्षिणात्यदेवपक्षवर्धकसेवाजीय ( शिवाजी ) राज्यवृत्तान्तः,मुकुल ( मोंगल ) वंशक्षयवर्णनम्.नादरादिराज्यवृत्तान्तः, रामदत्तवरवानरवंश्यगुरुण्डान्वयसंभूतानांवाणिज्यार्थमार्यदेशंमत्यागमनम्,कलिकातानगरीवृत्तान्तः,अष्टकौशल्य ( पार्लमेन्ट ) द्वाराऽत्र राज्यवृत्तान्तः, गुरुण्डराज्यसमाप्तिः,मौनराज्यवृत्तान्तवर्णनम्. श्लो० ९७ |
| २३ | १२५ | वैक्रमीयद्वाविंशशताब्द्यांकिलिकिलायांभूतंनदिशिशुनन्द्युत्पातितद्वंश्योत्पत्तिवृत्तान्तवर्णनम्.वैक्रमीयसप्तविंशतिशताब्द्यांवैदिकधर्मप्रवर्त |

| अ० | प० | विषयाः |
| --- | --- | --- |
| | | के तीर्थक्षेत्रोद्धारकपुष्यमित्रराजोत्पत्तिवृत्तान्तवर्णनम्.तदनंतरमेकत्रिंशच्छताब्धांभ्रष्टाचारवृत्तान्तवर्णनम्.गुर्जरदेशेसंवहावर्त्तकसोमनाथराजोत्पत्तिवृत्तान्तः,राहुराज्येमहमदयिमतप्रचारवृत्तान्तः, सर्वभूमौ म्लेच्छमयत्ववृत्तान्तवर्णनम्. श्लो० १३२ |
| २४ | १२८ | दैत्यानां हारिखण्डेगमनम्. विश्वकर्मणान्यखण्डमार्गावरोधनम्.बलिना वामनांतिके पृथ्वीभोगवृत्तान्तवर्णनम्. वर्णसंकरजीवोत्पत्तिवृत्तान्तवर्णनम्. द्विहस्तमनुष्योत्पत्तिवृत्तान्तवर्णनम्. वामनांशसमुद्भवभूपवृत्तान्तवर्णनम्. कलिद्वितीयतृतीयचरणवर्तमानकालजातजीवजातवृत्तान्तवर्णनम्. श्लो० ८१ |
| २५ | १२९ | कलिचतुर्थचरणारंभेनरकाजीर्णनिवारणार्थब्रह्मकृतभगवत्स्तुतिवर्णनम्, कल्क्यवतारकथावर्णनम्. अष्टादशकल्पवृत्तान्तवर्णनम्. कल्क्यर्चामाहात्म्यम्. सत्ययुगारंभदिनमाहात्म्यम्. श्लो० २२३ |
| २६ | १३४ | कल्किविजयवृत्तान्तवर्णनम्. ब्राह्मणादिवर्णव्यवस्थापूर्वकराज्यपदस्थापनवृत्तान्तवर्णनम्. प्रतिसर्गपर्वोपसंहारफलवर्णनम्.श्लो०४२ |
| | | ( इति चतुर्थः खण्डः ॥ ४ ॥) |
| | | इति प्रतिसर्गपर्वस्थविषयानुक्रमणिका ॥ ३ ॥ |
| | | **अथोत्तरपर्वस्थविषयानुक्रमणिका ॥ ४ ॥** |
| १ | १ | मङ्गलाचरणम्,छत्राभिषिक्तयुधिष्ठिरमहाराजं प्रति व्यासाद्यनेकमहर्षिसमागमनम्.युधिष्ठिरेण तान्प्रति स्वज्ञातिवधजन्यपापनिवृत्त्यर्थनानाविधधर्मशुश्रूषया प्रश्नकरणम्.व्यासस्य श्रीकृष्णं प्रति प्रश्नोत्तरपूर्वकधर्मवर्णने निर्विर्ण्यप्रशंस्यचस्वाश्रमाय गमनम्. श्लो० ३० |

| अ० | प० | विषयाः |
| --- | --- | --- |
| २ | १ | श्रीकृष्णयुधिष्ठिरयोः संवादः, श्रीकृष्णेन युधिष्ठिरं प्रति सकलब्रह्माण्डोत्पत्तिवृत्तान्तकथनवर्णनम्. श्लो० ५५ |
| ३ | ३ | भगवन्मायास्वरूपदर्शनवृत्तान्तवर्णनम्. श्लो० १०७ |
| ४ | ५ | जन्मसंसारदोषाख्यापनवर्णनम्. श्लो० १३५ |
| ५ | ८ | अधर्मपापभेदवर्णनम्. श्लो० ८६ |
| ६ | १० | शुभाशुभगतिफलप्राप्तिवर्णने यमयातनाप्रकारवर्णनम्. श्लो० २१५ |
| ७ | १५ | शकटव्रतमाहात्म्यवर्णनम्. श्लो० ३१ |
| ८ | १६ | तिलकव्रतमाहात्म्यवर्णनम्. श्लो० २५ |
| ९ | १७ | अशोकव्रतमाहात्म्यवर्णनम्. श्लो० १७ |
| १० | १७ | करवीरव्रतमाहात्म्यवर्णनम्. श्लो० १० |
| ११ | १७ | कोकिलाव्रतमाहात्म्यवर्णनम्. श्लो० २४ |
| १२ | १८ | बृहत्तपो[illegible]माहात्म्यवर्णनम्. श्लो० ३९ |
| १३ | १९ | [illegible]भद्रोपवासव्रतमाहात्म्यवर्णनम्. श्लो० १०१ |
| १४ | २१ | यमद्वितीयाव्रतमाहात्म्यवर्णनम्. श्लो० २८ |
| १५ | २२ | अशून्यशयनव्रतमाहात्म्यवर्णनम्. श्लो० २४ |
| १६ | २२ | मधूकतृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० १७ |
| १७ | २३ | मेघपालीतृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० १५ |

| अ० | प० | विषयाः |
|---|---|---|
| १८ | २३ | रंभातृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० ३८ |
| १९ | २४ | गोष्पदतृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० १७ |
| २० | २४ | हरिकालीतृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० २९ |
| २१ | २५ | ललितातृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० ४५ |
| २२ | २६ | अवियोगतृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० ३७ |
| २३ | २७ | उमामहेश्वरव्रतमाहात्म्यवर्णनम्. श्लो० ३० |
| २४ | २७ | पुनः प्रकारान्तरेण रंभाव्रतमाहात्म्यवर्णनम्. श्लो० ४१ |
| २५ | २८ | सौभाग्याष्टकतृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० ४८ |
| २६ | २९ | रसकल्याणिनीव्रतमाहात्म्यवर्णनम्. श्लो० ७० |
| २७ | ३१ | आर्द्रानन्दकरीतृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० २७ |
| २८ | ३२ | चैत्र--भाद्रपद--माघ--तृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० ६० |
| २९ | ३३ | अनन्तरतृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० ८३ |
| ३० | ३५ | अक्षय्यतृतीयाव्रतमाहात्म्यवर्णनम्. श्लो० १९ |
| ३१ | ३५ | अंगारकचतुर्थीव्रतमाहात्म्यवर्णनम्. श्लो० ६६ |
| ३२ | ३७ | विनायकस्नपनचतुर्थीव्रतमाहात्म्यवर्णनम्. श्लो० ३२ |
| ३३ | ३८ | विनायकचतुर्थीव्रतमाहात्म्यवर्णनम्. श्लो० १४ |
| ३४ | ३८ | पंचमे व्रते शांतिव्रतमाहात्म्यवर्णनम्. श्लो० १० |
| ३५ | ३८ | सारस्वतव्रतमाहात्म्यवर्णनम्. श्लो० २१ |
| ३६ | ३९ | नागपंचमीव्रतमाहात्म्यवर्णनम्. श्लो० ६४ |

| अ० | प० | विषयाः |
|---|---|---|
| ३७ | ४० | श्रीपञ्चमीव्रतमाहात्म्यवर्णनम्. श्लो० ६० |
| ३८ | ४२ | विशोकषष्ठीव्रतमाहात्म्यवर्णनम्. श्लो० १७ |
| ३९ | ४२ | कमलषष्ठीव्रतमाहात्म्यवर्णनम्. श्लो० १५ |
| ४० | ४२ | मन्दारषष्ठीव्रतमाहात्म्यवर्णनम्. श्लो० १६ |
| ४१ | ४३ | ललिताषष्ठीव्रतमाहात्म्यवर्णनम्. श्लो० २१ |
| ४२ | ४३ | कार्त्तिकेयपूजाषष्ठीव्रतमाहात्म्यवर्णनम्. श्लो० ३० |
| ४३ | ४४ | विजयसप्तमीव्रतमाहात्म्यवर्णनम्. श्लो० ३० |
| ४४ | ४५ | आदित्यमण्डलविधिवर्णनम् श्लो० ९ |
| ४५ | ४५ | त्रयोदशवर्ज्यसप्तमीव्रतमाहात्म्यवर्णनम्. श्लो० ५ |
| ४६ | ४५ | कुक्कुटमर्कटीव्रतमाहात्म्यवर्णनम्. श्लो० ४५ |
| ४७ | ४६ | उभयसप्तमीव्रतमाहात्म्यवर्णनम्. श्लो० २७ |
| ४८ | ४७ | कल्याणसप्तमीव्रतमाहात्म्यवर्णनम्. श्लो० १६ |
| ४९ | ४७ | शर्करासप्तमीव्रतमाहात्म्यवर्णनम्. श्लो० १८ |
| ५० | ४८ | कमलासप्तमीव्रतमाहात्म्यवर्णनम्. श्लो० ११ |
| ५१ | ४८ | शुभसप्तमीव्रतमाहात्म्यवर्णनम्. श्लो० १४ |
| ५२ | ४८ | स्नपनसप्तमीव्रतमाहात्म्यवर्णनम्. श्लो० ४१ |
| ५३ | ४९ | अचलासप्तमीव्रतमाहात्म्यवर्णनम्. श्लो० ४८ |
| ५४ | ५० | बुधाष्टमीव्रतमाहात्म्यवर्णनम्. श्लो० ६७ |
| ५५ | ५२ | जन्माष्टमीव्रतमाहात्म्यवर्णनम्. श्लो० ७१ |

| अ० | प० | विषयाः |
|---|---|---|
| ५६ | ५३ | दूर्वाष्टमीव्रतमाहात्म्यवर्णनम्. श्लो० २३ |
| ५७ | ५४ | कृष्णाष्टमीव्रतमाहात्म्यवर्णनम्. श्लो० ३१ |
| ५८ | ५५ | अनघाष्टमीव्रतमाहात्म्यवर्णनम्. श्लो० ७६ |
| ५९ | ५६ | सोमाष्टमीव्रतमाहात्म्यवर्णनम्. श्लो० २४ |
| ६० | ५७ | श्रीवृक्ष ( बिल्व ) नवमीव्रतमाहात्म्यवर्णनम्. श्लो० ११ |
| ६१ | ५७ | ध्वजनवमीव्रतमाहात्म्यवर्णनम्. श्लो० ६३ |
| ६२ | ५९ | उल्कानवमीव्रतमाहात्म्यवर्णनम्. श्लो० १८ |
| ६३ | ५९ | दशावतारचरित्रव्रतमाहात्म्यवर्णनम्. श्लो० ३३ |
| ६४ | ६० | आशादशमीव्रतमाहात्म्यवर्णनम्. श्लो० ५० |
| ६५ | ३१ | तारकद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ४९ |
| ६६ | ६२ | अरण्यद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० २८ |
| ६७ | ६३ | रोहिणीचन्द्रव्रतमाहात्म्यवर्णनम्. श्लो० १८ |
| ६८ | ६३ | हरिहराहिरण्यगर्भप्रभाकराणामवियोगव्रतमाहात्म्यवर्णनम्.श्लो०२५ |
| ६९ | ६४ | गोवत्सद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ९५ |
| ७० | ६६ | गोविन्दशयनोत्थापनद्वादशीव्रतमाहात्म्यवर्णनम्.श्लो० ६७ |
| ७१ | ६७ | नीराजनद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ४६ |
| ७२ | ६८ | भीष्मपञ्चकव्रतमाहात्म्यवर्णनम्. श्लो० ५२ |
| ७३ | ६९ | मल्लद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० २१ |
| ७४ | ७० | भीमद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ७३ |
| ७५ | ७२ | श्रवणद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ७७ |
| ७६ | ७३ | विजयश्रवणाद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ६९ |
| ७७ | ७५ | संप्राप्तिद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० १३ |
| ७८ | ७५ | गोविंदद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० १४ |
| ७९ | ७५ | अखण्डद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० २६ |
| ८० | ७६ | मनोरथद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ३० |
| ८१ | ७७ | उल्काद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० १४ |
| ८२ | ७७ | सुकृतद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ७३ |
| ८३ | ७९ | धरणीव्रतमाहात्म्यवर्णनम्. श्लो० १५७ |
| ८४ | ८२ | विशोकद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ५८ |
| ८५ | ८३ | विभूतिद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ५७ |
| ८६ | ८५ | मदनद्वादशीव्रतमाहात्म्यवर्णनम्. श्लो० ३८ |
| ८७ | ८६ | अबाधकव्रतमाहात्म्यवर्णनम्. श्लो० १६ |
| ८८ | ८६ | मन्दारनिम्बार्ककरवीरमाहात्म्यवर्णनम्. श्लो० १० |
| ८९ | ८६ | यमदर्शनत्रयोदशीव्रतमाहात्म्यवर्णनम्. श्लो० ५२ |
| ९० | ८७ | अनङ्गत्रयोदशीव्रतमाहात्म्यवर्णनम्. श्लो० ४९ |
| ९१ | ८९ | पालीव्रतमाहात्म्यवर्णनम्. श्लो० १२ |
| ९२ | ८९ | रंभाव्रतमाहात्म्यवर्णनम्. श्लो० १६ |
| ९३ | ८९ | आग्नेयीचतुर्दशीव्रतमाहात्म्यवर्णनम्. श्लो० ८० |

| अ० | पृ० | विषयाः |
|---|---|---|
| ९४ | ९१ | अनन्तचतुर्दशीव्रतमाहात्म्यवर्णनम्. श्लो० ७५ |
| ९५ | ९३ | श्रवणिकाव्रतमाहात्म्यवर्णनम्. श्लो० ४८ |
| ९६ | ९४ | नक्तोपवासविधानवर्णनम्. श्लो० १६ |
| ९७ | ९४ | शिवचतुर्दशीव्रतमाहात्म्यवर्णनम्. श्लो० ३४ |
| ९८ | ९५ | फलत्यागचतुर्दशीव्रतमाहात्म्यवर्णनम्. श्लो० २९ |
| ९९ | ९६ | विजयपौर्णमासव्रतमाहात्म्यवर्णनम्. श्लो० ७१ |
| १०० | ९७ | वैशाखीकार्तिकीमाघीपौर्णमासीव्रतमाहात्म्यवर्णनम्. श्लो० २४ |
| १०१ | ९८ | युगादितिथिव्रतमाहात्म्यवर्णनम्. श्लो० ३४ |
| १०२ | ९९ | वटसावित्रीव्रतमाहात्म्यवर्णनम्. श्लो० ९८ |
| १०३ | १०१ | कार्तिक्यां कृत्तिकाव्रतमाहात्म्यवर्णनम्. श्लो० ५१ |
| १०४ | १०२ | पूर्णमनोरथव्रतमाहात्म्यवर्णनम्. श्लो० २९ |
| १०५ | १०३ | विशोकपूर्णिमाव्रतमाहात्म्यवर्णनम्. श्लो० २४ |
| १०६ | १०३ | अनन्तव्रतमाहात्म्यवर्णनम्. श्लो० ७० |
| १०७ | १०५ | सांभरायणीव्रतमाहात्म्यवर्णनम्. श्लो० ७१ |
| १०८ | १०६ | नक्षत्रपुरुषव्रतमाहात्म्यवर्णनम्. श्लो० ४३ |
| १०९ | १०७ | शिवनक्षत्रपुरुषव्रतमाहात्म्यवर्णनम्. श्लो० ३५ |
| ११० | १०८ | संपूर्णव्रतमाहात्म्यवर्णनम्. श्लो० ३६ |
| १११ | १०९ | कामदानवेश्याव्रतमाहात्म्यवर्णनम्. श्लो० ६६ |
| ११२ | ११० | वृन्ताकव्रतविधिवर्णनम्. गद्यम् १ |
| ११३ | १११ | ग्रहनक्षत्रव्रतमाहात्म्यवर्णनम्. श्लो० ४४ |
| ११४ | ११२ | शनैश्चरव्रतमाहात्म्यवर्णनम्. श्लो० ५१ |
| ११५ | ११३ | आदित्यादिननक्तविधिवर्णनम्. श्लो० २३ |
| ११६ | ११४ | संक्रान्त्युद्यापनवर्णनम्. श्लो० १७ |
| ११७ | ११४ | विष्टिव्रतमाहात्म्यवर्णनम्. श्लो० ४७ |
| ११८ | ११५ | अगस्त्यार्घ्यविधिव्रतमाहात्म्यवर्णनम्. श्लो० ८४ |
| ११९ | ११७ | अभिनवचन्द्रार्घ्यव्रतमाहात्म्यवर्णनम्. श्लो० ११ |
| १२० | ११७ | शुक्रबृहस्पत्यर्घपूजाविधिवर्णनम्. श्लो० १६ |
| १२१ | ११८ | व्रतपञ्चाशीतिमाहात्म्यवर्णनम्. श्लो० १८७ |
| १२२ | १२२ | माघस्नानविधिवर्णनम्. श्लो० ३६ |
| १२३ | १२३ | नित्यस्नानविधिवर्णनम्. श्लो० ३३ |
| १२४ | १२३ | रुद्रस्नानविधिवर्णनम्. श्लो० ३२ |
| १२५ | १२४ | चन्द्रादित्यग्रहणस्नानविधिवर्णनम्. श्लो० २१ |
| १२६ | १२५ | अपरसांभरायणीयव्रतमाहात्म्यवर्णनम्. श्लो० ४८ |
| १२७ | १२६ | वापीकूपतडागोत्सर्गविधिवर्णनम्. श्लो० ९१ |
| १२८ | १२८ | वृक्षोद्यापनविधिवर्णनम्. श्लो० ४५ |
| १२९ | १२९ | देवपूजाफलव्रतवर्णनम् श्लो० ५३ |
| १३० | १२९ | दीपदानविधिवर्णनम. श्लो० ६९ |
| १३१ | १३१ | वृषोत्सर्गविधिवर्णनम्. श्लो० २३ |
| १३२ | १३१ | फाल्गुनपूर्णिमोत्सववर्णनम्. श्लो० ५३ |

| अ० | प० | विषयाः |
|---|---|---|
| १३३ | १३३ | आन्दोलकाविधिवर्णनम्. श्लो० ५९ |
| १३४ | १३४ | दमनकान्दोलकरथयात्रामहोत्सववर्णनम्. श्लो० ७२ |
| १३५ | १३६ | मदनमहोत्सववर्णनम्. श्लो० ३६ |
| १३६ | १३६ | भूतमात्रुत्सवविधिवर्णनम्. श्लो० ४२ |
| १३७ | १३७ | श्रावणपूर्णिमारक्षाबन्धनविधिवर्णनम्. श्लो० २३ |
| १३८ | १३८ | महानवमीव्रतमाहात्म्यवर्णनम्. श्लो० ११६ |
| १३९ | १४१ | महेन्द्रध्वजमहोत्सववर्णनम्. श्लो० ४३ |
| १४० | १४२ | दीपालिकोत्सववर्णनम्. श्लो० ७६ |
| १४१ | १४३ | नवग्रहलक्षविधिवर्णनम्. श्लो० १२२ |
| १४२ | १४६ | कोटिहोमविधिवर्णनम्. श्लो० ८१ |
| १४३ | १४८ | महाशान्तिविधिवर्णनम्. श्लो० ४६ |
| १४४ | १४९ | गणनाथशान्तिविधिवर्णनम्. श्लो० २७ |
| १४५ | १५० | नक्षत्रहोमविधिवर्णनम्. श्लो० २३ |
| १४६ | १५० | अपराधशतव्रतवर्णनम्. श्लो० ६१ |
| १४७ | १५१ | कांचनपुरीव्रतवर्णनम्. श्लो० ८८ |
| १४९ | १५३ | कन्याप्रदानमाहात्म्यवर्णनम्. श्लो० ११ |
| १४९ | १५४ | ब्राह्मणशुश्रूषाविधिवर्णनम्. श्लो० ९ |
| १५० | १५४ | वृषदानविधिवर्णनम्. श्लो० १७ |
| १५१ | १५४ | प्रत्यक्षधेनुदानविधिवर्णनम्. श्लो० ३९ |
| १५२ | १५५ | तिलधेनुदानविधिवर्णनम्. श्लो० ४२ |
| १५३ | १५६ | जलधेनुदानविधिवर्णनम्. श्लो० ७२ |
| १५४ | १५८ | घृतधेनुदानविधिवर्णनम्. श्लो० १९ |
| १५५ | १५८ | लवणधेनुदानविधिवर्णनम्. श्लो० २३ |
| १५६ | १५९ | काञ्चनधेनुदानविधिवर्णनम्. श्लो० २८ |
| १५७ | १६० | रत्नधेनुदानविधिवर्णनम्. श्लो० १८ |
| १५८ | १६० | उभयमुखीगोदानविधिवर्णनम्. श्लो० १५ |
| १५९ | १६० | गोसहस्रप्रदानविधिवर्णनम्. श्लो० ४७ |
| १६० | १६२ | वृषभदानविधिवर्णनम्. १६ |
| १६१ | १६२ | कपिलादानमाहात्म्यवर्णनम्. श्लो० ८१ |
| १६२ | १६४ | महिषीदानविधिवर्णनम्. श्लो० २१ |
| १६३ | १६४ | अविदानविधिवर्णनम्. श्लो० २२ |
| १६४ | १६५ | भूमिदानविधिवर्णनम्. श्लो० ४२ |
| १६५ | १६६ | सौवर्णपृथिवीदानविधिवर्णनम्. श्लो० ३३ |
| १६६ | १६७ | हलपंक्तिदानविधिवर्णनम्. श्लो० २९ |
| १६७ | १६७ | आपाकदानविधिवर्णनम्. श्लो० ३८ |
| १६८ | १६८ | गृहदानविधिवर्णनम्. श्लो० ४५ |
| १६९ | १७० | अन्नदानमाहात्म्यवर्णनम्. श्लो० ७५ |
| १७० | १७१ | स्थालीदानविधिवर्णनम्. श्लो० ३२ |
| १७१ | १७२ | दासीदानविधिवर्णनम्. श्लो० २३ |
| १७२ | १७३ | प्रपादानविधिवर्णनम्. श्लो० २६ |
| १७३ | १७४ | अग्निष्टिकादानविधिवर्णनम्. श्लो० १२ |

| अ० | प० | विषयाः |
|---|---|---|
| १७४ | १७४ | विद्यादानविधिवर्णनम्. श्लो० २९ |
| १७५ | १७५ | तुलापुरुषदानविधिवर्णनम्. श्लो० ९९ |
| १७६ | १७७ | हिरण्यगर्भदानविधिवर्णनम्. श्लो० ६९ |
| १७७ | १७९ | ब्रह्माण्डदानविधिवर्णनम्. श्लो० ४६ |
| १७८ | १८० | कल्पवृक्षदानविधिवर्णनम्. श्लो० ४३ |
| १७९ | १८१ | कल्पलतादानविधिवर्णनम्. श्लो० १९ |
| १८० | १८२ | गजरथाश्वरथदानविधिवर्णनम्. श्लो० ५० |
| १८१ | १८३ | कालपुरुषदानविधिवर्णनम्. श्लो० २७ |
| १८२ | १८३ | सप्तसागरदानविधिवर्णनम्. श्लो० १९ |
| १८३ | १८४ | महाभूतघटदानविधिवर्णनम्. श्लो० १७ |
| १८४ | १८४ | शय्यादानविधिवर्णनम्. श्लो० २३ |
| १८५ | १८५ | आत्मप्रतिकृतिदानविधिवर्णनम्. श्लो० १७ |
| १८६ | १८५ | हिरण्याश्वदानविधिवर्णनम्. श्लो० १४ |
| १८७ | १८६ | हिरण्याश्वरथदानविधिवर्णनम्. श्लो० १४ |
| १८८ | १८६ | कृष्णाजिनदानविधिवर्णनम्. श्लो० २१ |
| १८९ | १८७ | हेमहस्तिरथदानविधिवर्णनम्. श्लो० १३ |
| १९० | १८७ | विश्वचक्रदानविधिवर्णनम्. श्लो० २९ |
| १९१ | १८८ | भुवनप्रतिष्ठामाहात्म्यवर्णनम्. श्लो० ६८ |
| १९२ | १८९ | नक्षत्रदानविधिवर्णनम्. श्लो० ३९ |
| १९३ | १९० | तिथिदानमाहात्म्यवर्णनम्. श्लो० ६६ |
| १९४ | १९२ | वराहदानविधिवर्णनम्. श्लो० २२ |
| १९५ | १९२ | धान्यपर्वतदानविधिवर्णनम्. श्लो० ४८ |
| १९६ | १९४ | लवणपर्वतदानविधिवर्णनम्. श्लो० ११ |
| १९७ | १९४ | गुडाचलदानविधिवर्णनम्. श्लो० २६ |
| १९८ | १९५ | हेमाचलदानविधिवर्णनम्. श्लो० ९ |
| १९९ | १९५ | तिलाचलदानविधिवर्णनम्. श्लो० २६ |
| २०० | १९५ | कार्पासाचलदानविधिवर्णनम्. श्लो० १० |
| २०१ | १९६ | घृताचलदानविधिवर्णनम्. श्लो० १३ |
| २०२ | १९६ | रत्नाचलदानविधिवर्णनम्. श्लो० १३ |
| २०३ | १९६ | रौप्याचलदानविधिवर्णनम्. श्लो० ११ |
| २०४ | १९७ | शर्कराचलदानविधिवर्णनम्. श्लो० ३८ |
| २०५ | १९८ | सदाचारधर्मवर्णनम्. श्लो० १५३ |
| २०६ | २०१ | रोहिणीचन्द्रशयनव्रतमाहात्म्यवर्णनम्. श्लो० ३० |
| २०७ | २०२ | कृष्णयुधिष्ठिरसंवादसमाप्तिः, श्रीकृष्णस्य द्वारकां प्रति गमनवर्णनम्. श्लो० १५ |
| २०८ | २०२ | उत्तरपर्वस्थसंक्षिप्तविषयानुक्रमणिकावर्णनम्. ग्रन्थसमाप्तिवर्णनम्. श्लो० ३४ |


इति खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयगोविन्दशास्त्रि-
विरचिता भविष्यपुराणस्य विषयानुक्रमणिका सम्पूर्णा ।



। अथ श्रीभविष्यमहापुराणे प्रथमं ब्राह्मपर्वं प्रारभ्यते ॥

# ब्राह्मपर्व १.


सूत
शौनकादि ऋषि
कृष्ण
सांब
सूर्य
सांब
नारद
दिंडी
ब्रह्मा
बालक
शांब ऋषि
बा.
विप्र
अरुण
गरुड
शतानीक
सुमंतु
ब्रह्मदेव
रुद्र
कृष्ण
कृष्णस्त्री सं.
सांब
ब्रह्मदेव. याज्ञवल्क्य
भीष्म
व्यास
ब्रम्हदेव
ऋ.
सूर्य
दिंडी
सांब.
सूर्य
ब्रह्मा.
विष्णु

श्रीगणेशायनमः ॥ ॥ ॐनमोभगवतेवासुदेवाय ॥ ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥
जयतिपराशरसूनुःसत्यवतीहृदयनंदनोव्यासः ॥ यस्यास्यकमलगलितंवाङ्मयममृतंजगत्पिबति ॥ २ ॥ मूकंकरोतिवाचालंपंगुंलंघयते
गिरिम् ॥ यत्कृपातमहंवंदेपरमानन्दमाधवम् ॥ ३ ॥ पाराशर्यवचःसरोजममलंगीतार्थगंधोत्कटंनानाख्यानककेसरंहरिकथासंबोधनाबो
धितम् ॥ लोकेसज्जनषट्पदैरहरहःसंपीयमानंमुदाभूयाद्भारतपंकजंकलिमलप्रध्वंसिनःश्रेयसे ॥ ४ ॥ योगोशतंकनकशृंगमयंददातिविप्रायवे
दविदुषेचबहुश्रुताय ॥ पुण्यांभविष्यसुकथांशृणुयात्समग्रांपुण्यंसमंभवतितस्यचतस्यचैव ॥ ५ ॥ कृत्वापुराणानिपराशरात्मजःसर्वाण्य
नेकानिसुखावहानि ॥ तत्रात्मसौख्यायभविष्यधर्मान्कलौयुगेभाविलिलेखसर्वम् ॥ ६ ॥ तत्रापिसर्वर्षिवरप्रमुख्यैःपराशराद्यैर्मुनिभिःप्रणी
तान् ॥ स्मृत्युक्तधर्मागमसंहितार्थान्व्यासःसमासादवदद्भविष्यम् ॥ ७ ॥ अल्पायुषोलोकजनान्समीक्ष्यविद्याविहीनान्पशुवत्सुचेष्टितान् ॥
तेषांसुखार्थंप्रतिबोधनायव्यासःपुराणंप्रथितंचकार ॥ ८ ॥ ❀ ॥ जयतिभुवनदीपोभास्करोलोककर्ताजयतिचशितिदेहःशार्ङ्गधन्वामुरारिः ॥
जयतिचशशिमौलीरुद्रनामाभिधेयोजयतिचसतुदेवोभानुमांश्चित्रभानुः ॥ १ ॥ श्रियावृतंतुराजानंशतानीकंमहाबलम् ॥ अभिजग्मुर्महात्मानः
सर्वेद्रष्टुंमहर्षयः ॥ २ ॥ भृगुरत्रिर्वसिष्ठश्चपुलस्त्यःपुलहःक्रतुः ॥ पराशरस्तथाव्यासःसुमन्तुर्जैमिनिस्तथा ॥ ३ ॥ मुनिःपैलोयाज्ञवल्क्योगौत
मस्तुमहातपाः ॥ भारद्वाजोमुनिर्धीमांस्तथानारदपर्वतौ ॥ ४ ॥ वैशंपायनोमहात्माशौनकश्चमहातपाः ॥ दक्षोंगिरास्तथागर्गोगालवश्चमहातपाः
॥ ५ ॥ तानागतानृषीन्दृष्ट्वाशतानीकोमहीपतिः ॥ विधिवत्पूजयामासअभिगम्यमहामतिः ॥ ६ ॥ पुरोहितंपुरस्कृत्यअर्घगांस्वागतेनच ॥ पूज
यित्वाततःसर्वान्प्रणम्याशिरसाभृशम् ॥ ७ ॥ सुखासीनांस्ततोराजानिरातंकान्गतक्लमान् ॥ उवाचप्रणतोभूत्वाबाहुमुद्धृत्यदक्षिणम् ॥ ८ ॥
इदानींसफलंजन्ममन्येऽहंभुविसत्तमाः ॥ आत्मनोद्विजशार्दूलास्तथाकीर्तिर्यशोबलम् ॥ ९ ॥ धन्योऽहंपुण्यकर्माचयतोमांद्रष्टुमा
गताः ॥ येषांस्मरणमात्रेणयुष्माकंपूयतेनरः ॥ १० ॥ श्रोतुमिच्छाम्यहंकिंचिद्धर्मशास्त्रमनुत्तमम् ॥ आनृशंस्यंसमाश्रित्यकथयध्वं
महाबलाः ॥ ११ ॥ येनाहंधर्मशास्त्रंतुश्रुत्वागच्छेपरांगतिम् ॥ यथागतोममपिताश्रुत्वावैभारतंपुरा ॥ १२ ॥ तथोक्तास्तेन

राज्ञावैब्राह्मणास्तेसमंततः ॥ समागम्यमिथस्तेतुविमृश्य[1]चभृशंतदा ॥ १३ ॥ पूजयित्वाततोव्यासमिदंवचनमब्रुवन् ॥ व्यासं
प्रसादयविभोएषतेकथयिष्यति ॥ १४ ॥ तिष्ठत्यस्मिन्महाबाहोवयंवक्तुंनशक्नुमः ॥ तिष्ठमानेगुरौशिष्यःकथंवक्तिमहामते ॥
॥ १५ ॥ अयंगुरुः[2]सदास्माकंसाक्षान्नारायणस्तथा ॥ कृपालुश्चतथाचायंतथादिव्यविधानवित् ॥ १६ ॥ चतुर्णामपिवर्णानांपावना
यमहात्मनाम् ॥ धर्मशास्त्रमनेनोक्तंधर्माद्यैःसुसमन्वितम् ॥ १७ ॥ बिभेतिगहनाच्छास्त्राल्लोकोव्याधिरिवौषधात् ॥ भारत[3]स्यचविस्तारो
मुनिनाव्याहृतःस्वयम् ॥ १८ ॥ यथास्वादुचपथ्यंचदद्यात्स्वंभिषगौषधम् ॥ तथारम्यंचशास्त्रंचभारतंकृतवान्मुनिः ॥ १९ ॥ आस्ति
क्यारोहसोपानमेतद्भारतमुच्यते ॥ तच्छ्रुत्वास्वर्गनरकौलोकःसाक्षादिवेक्षते ॥ २० ॥ देवतातीर्थतपसांभारतादेवनिश्चयः ॥ नजन्यतेना
स्तिकतातस्यमीमांसकैरपि ॥ २१ ॥ विष्णौदेवेषु[4]वेदेषुगुरुषुब्राह्मणेषुच ॥ भक्तिर्भवतिकल्याणीभारतादेवधीमताम् ॥ २२ ॥ धर्मार्थका
ममोक्षाणांभारतात्सिद्धिरेवहि[5] ॥ अजिह्मोभारतःपंथानिर्वाणपदगामिनाम् ॥ २३ ॥ मोक्षधर्मार्थ[6]कामानांप्रपंचोभारतेकृतः ॥ अनित्यताप
संतप्ताभवंतितस्यमुक्तये ॥ २४ ॥ विपत्तिंभारताच्छ्रुत्वावृष्णिपांडवसंपदाम् ॥ दुःखावसानाद्राजेंद्रपुण्यंचसंश्रयेद्बुधः ॥ २५ ॥ एवंविधं[6]भा
रतंवैप्रोक्तंयेनमहात्मना ॥ सोऽयंनारायणःसाक्षाद्व्यासरूपी[7]महामुनिः ॥ २६ ॥ सतेषांवचनंश्रुत्वाप्रतापीयोमहीपतिः ॥ प्रसादयामाससु
निंव्यासंशास्त्रविशारदम् ॥ २७ ॥ शतानीकउवाच ॥ अंजलिःशिरसाब्रह्मन्कृतोयंपादयोस्तव ॥ ब्रूहिमेधर्म[8]शास्त्रंतुयेनाहपूततांव्रजे ॥२८॥
समुद्धरभवादस्मात्कीर्तयित्वाकथांशुभाम् ॥ यथाममपितापूर्वंकीर्तयित्वातुभारतम् ॥ २९ ॥ तस्यैतद्वचनंश्रुत्वाव्यासोवचनमब्रवीत् ॥
एषशिष्यःसुमंतुर्मेकथयिष्यतितेप्रभो ॥ ३० ॥ यदिच्छसिमहाबाहोप्रीतिदंचाद्भुतंशुभम् ॥ श्रव्यंभरतशार्दूलसर्वपापभयापहम् ॥३१॥
यथावैशंपायनेनपुराप्रोक्तंपितुस्तव ॥ महाभारतव्याख्यानंब्रह्महत्याव्यपोहनम् ॥ ३२ ॥ अथतमृषयःसर्वेराजानमिदमब्रुवन् ॥ साधुप्रोक्तं

१ भृगुम्–इतिपाठः। २ स्वयं गुरुः सदाध्यक्षो यथा नारायणस्तथा–इ०पा०। ३ भारतशास्त्रसारोऽयमतः काव्यात्मना कृतः–इ०पा०। ४ विद्वत्सु–इ०पा०। ५ सिद्धचसंशयः–इ०पा०। ६ भारतं वै पंचविधम्–इ०पा०। ७ महामतिः–इ०पा०। ८ सर्वशास्त्रं च–इ०पा०।

महाबाहोव्यासेनामितबुद्धिना ॥ ३३ ॥ सुमंतुंपृच्छराजर्षेसर्वशास्त्रविशारदम् ॥ अस्माकमपिराजेंद्रश्रवणेजायतेमतिः ॥ ३४ ॥ अथव्या
सोमहातेजाःसुमंतुमृषिमब्रवीत् ॥ कथयास्मैकथास्ताताः श्रुत्वामोदतेनृपः[1] ॥ ३५ ॥ भारतादिकथानांतुयत्रास्यरमतेमनः ॥ असावपिमहा
तेजाःश्रुत्वाभावंमहामतेः ॥ ३६ ॥ व्यासस्यद्विजशार्दूलऋषीणांचापिसर्वशः ॥ चकारवक्तुंसमनस्तस्मैराज्ञेमहामतिः ॥ ३७ ॥ व्यासस्यशा
सनाद्विप्रऋषीणांचैवसर्वशः ॥ अथराजामहातेजाआजमीढोद्विजोत्तमम् ॥ ३८ ॥ प्रणम्यशिरसात्यर्थंप्रवक्तुमुपचक्रमे ॥ शतानीकउवाच ॥
पुण्याख्यानंममब्रह्मन्पावनायप्रकीर्तय ॥ ३९ ॥ श्रुत्वायद्ब्राह्मणश्रेष्ठमुच्येऽहंसर्वपातकात् ॥ सुमंतुरुवाच ॥ नानाविधानिशास्त्राणिसंतिपु
ण्यानिभारत ॥ ४० ॥ यानिश्रुत्वानरोराजन्मुच्यतेसर्वकिल्बिषैः ॥ किमिच्छसिमहाबाहोश्रोतुंयेनब्रवीमिते ॥ ४१ ॥ भारतादिकथानांतु
यासुधर्मादयःस्थिताः ॥ शतानीकउवाच ॥ मतानिकानिवि[2]प्रेंद्रधर्मशास्त्राणिसुव्रत ॥ ४२ ॥ यानिश्रुत्वानरोविप्रमुच्यतेसर्वकिल्बिषैः ॥
सुमंतुरुवाच ॥ श्रूयतांधर्मशास्त्राणिमनुर्विष्णुर्यमोऽङ्गिराः ॥ ४३ ॥ वसिष्ठदक्षसंवर्तशातातपपराशराः ॥ आ[3]पस्तंबोऽथउशनाका
त्यायनबृहस्पती ॥ ४४ ॥ गौतमःशंखलिखितौहारीतोत्रिरथापिवा ॥ एतानिधर्मशास्त्राणिश्रुत्वाज्ञात्वाचभारत ॥ ४५ ॥
वृंदारकपुरंगत्वामोदतेनात्रसंशयः ॥ शतानीकउवाच ॥ यान्येतानित्वयोक्तानिधर्मशास्त्राणिसुव्रत ॥ ४६ ॥ नेच्छा
मिश्रोतुंविप्रेंद्रश्रु[4]तान्येतानिहिद्विजाः ॥ त्रयाणामपिवर्णानांप्रोक्तानामपिपंडितैः ॥ ४७ ॥ श्रेयसेनतुशूद्राणांतत्रमेवचनंशृणु ॥
चतुर्णामिहवर्णानां श्रेयसेयानिसु[5]व्रत ॥ ४८ ॥ भवंतिद्विजशार्दूलश्रुतानिभुवनत्रये ॥ विशेषतश्चतुर्थस्यवर्णस्यद्विजसत्तम ॥ ४९ ॥
ब्राह्मणादिषुवर्णेषुत्रिषुवेदाःप्रकल्पिताः ॥ मन्वादीनिचशास्त्राणितथांगानिसमंततः ॥ ५० ॥ शूद्राश्चैवमृशंदीनाःप्रतिभांतिक्रमाद्द्विज ॥
धर्मार्थकाममोक्षस्यशक्ताःस्युरवनेकथम् ॥ ५१ ॥ आगमेनविहीनाहिअहोकष्टंमतंमम ॥ कश्चैषामागमःप्रोक्तःपुराद्विजमनीषिभिः ॥ ५२ ॥
त्रिवर्गप्राप्तयेब्रह्मञ्छ्रेयसेचतथोभयोः ॥ सुमंतुरुवाच ॥ साधुसाधुमहाबाहोशृणुमेपरमंवचः ॥ ५३ ॥ चतुर्णामपिवर्णानांयानिप्रोक्तानिश्रे

१ मनः–इ०पा० । २ ते विप्र–इ०पा० । ३ आपस्तंबोशना व्यासः–इ०पा० । ४ गुह्यानि–इ०पा० । ५ सर्वदा–इ०पा० ।

यसे ॥ धर्मशास्त्राणिराजेंद्रशृणुतानिनृपोत्तम ॥ ५४ ॥ विशेषतश्चशूद्राणांपावनानिमनीषिभिः ॥ अष्टादशपुराणानिचारितंराघवस्यच
॥ ५५ ॥ रामस्यकुरुशार्दूलधर्मकामार्थसिद्धये ॥ तथोक्तंभारतंवीरपाराशर्येणधीमता ॥ ५६ ॥ वेदार्थंसकलंयोज्यधर्मशास्त्राणिचप्रभो ॥
कृपालुनाकृतंशास्त्रंचतुर्णामिहश्रेयसे ॥ ५७ ॥ वर्णानांभवमग्नानांकृतंपोतमनुत्तमम् ॥ अष्टादशपुराणानिअष्टौव्याकरणानिच ॥ ५८ ॥
ज्ञात्वासत्यवतीसूनुश्चक्रेभारतसंहिताम् ॥ यांश्रुत्वापुरुषोराजन्मुच्यतेब्रह्महत्यया ॥ ५९ ॥ प्रथमंप्रोच्यतेब्राह्मंद्वितीयमैंद्रमुच्यते ॥ याम्यंप्रो
क्तंततोरौद्रंवायव्यंवारुणंतथा ॥ ६० ॥ सावित्रंचतथाप्रोक्तमष्टमंवैष्णवंतथा ॥ एतानिव्याकरणानीहपुराणानिनिबोधमे ॥ ६१ ॥ ब्राह्म्यं
पाद्मंवैष्णवंचशैवंभागवतंतथा ॥ तथान्यंनारदीयंचमार्कंडेयंचसप्तमम् ॥ ६२ ॥ आग्नेयमष्टमंवीरभविष्यंनवमंस्मृतम् ॥ दशमंब्रह्मवैवर्तं
लैंग्यमेकादशंस्मृतम् ॥ ६३ ॥ वाराहंद्वादशंप्रोक्तंस्कांदंचैवत्रयोदशम् ॥ चतुर्दशंवामनंचकौर्मंपंचदशंस्मृतम् ॥ ६४ ॥ मात्स्यंचगारुडं
चैवब्रह्मांडंचततःपरम् ॥ एतानिकुरुशार्दूलधर्मशास्त्राणिपंडितैः ॥ ६५ ॥ साधारणानिप्रोक्तानिवर्णानांश्रेयसेसदा ॥ चतुर्णामिहराजेंद्रश्रोतुमर्हा
णिसुव्रत ॥ ६६ ॥ किमिच्छसिमहाबाहोश्रोतुमेषांनृपोत्तम ॥ शतानीकउवाच ॥ भारतंतुश्रुतंविप्रतातस्यांकगतेनतु ॥ ६७ ॥ रामस्यच
रितंचापिश्रुतंब्रह्मन्समंततः ॥ पुराणानिचविप्रेंद्रभविष्यंनतुसुव्रत ॥ ६८ ॥ पुराणंवदविप्रेंद्रभविष्यंकौतुकंहिमे ॥ सुमंतुरुवाच ॥ साधु
साधुमहाबाहोसाधुपृष्टोऽस्मिमानद ॥ ६९ ॥ शृणुमेवदतोराजन्पुराणंनवमंमहत् ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यतेमानवोनृप ॥ ७० ॥ अश्व
मेधंचसंप्राप्यगच्छेद्भानौनसंशयः ॥ इदंतुब्रह्मणाप्रोक्तंधर्मशास्त्रमनुत्तमम् ॥ ७१ ॥ विदुषाब्राह्मणेनेदमध्येतव्यंप्रयत्नतः ॥ शिष्येभ्यश्चैवव
क्तव्यंचातुर्वर्ण्येभ्यएवहि ॥ ७२ ॥ अध्येतव्यंनचान्येनब्राह्मणंक्षत्रियंविना ॥ श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन ॥ ७३ ॥ देवार्चापुरतःकृत्वाब्रा
ह्मणश्चनृपोत्तम ॥ श्रोतव्यमेवशूद्रैश्चतथान्यैश्चाद्विजातिभिः ॥ ७४ ॥ श्रौतंस्मार्तंहिवैधर्मंप्रोक्तमास्मिन्नृपोत्तम ॥ तस्माच्छूद्रैर्विनाविप्रान्नश्रो

१ कर्मशास्त्राणि–इ०पा० । २ वायुरेव च–इ०पा० । ३ तदा–इ०पा० । ४ आज्ञागतेन मे–इ०पा० । ५ पूज्योऽसि सुव्रत–इ०पा० । ६ विशे-
षतः– इ०पा० । ७ कथंचन–इ०पा० । ८ अग्रतः–इ०पा० ।

तव्यंकथंचन ॥ ७५ ॥ इदंशास्त्रमधीयानोब्राह्मणःसंशितव्रतः ॥ मनोवाग्देहजैर्नित्यंकर्मदोषैर्नलिप्यते ॥ ७६ ॥ शृण्वंतिचापियेराजन्भ
क्त्यावैब्राह्मणादयः ॥ मुच्यंतेपातकैःसर्वैर्गच्छंतिचदिवंप्रभो ॥ ७७ ॥ श्रावयेच्चापियोविप्रःसर्वान्वर्णान्नृपोत्तम ॥ सगुरुःप्रोच्यतेतातवर्णाना
मिहसर्वशः ॥ ७८ ॥ सपूज्यःसर्वकालेषुसर्वैर्वर्णैर्नराधिप ॥ पृथिवींचतथैवेमांकृत्स्नामेकोपिसोऽर्हति ॥ ७९ ॥ इदंस्वस्त्ययनंश्रेष्ठमिदंबुद्धि
विवर्धनम् ॥ इदंयशस्यंसततमिदंनिःश्रेयसंपरम् ॥ ८० ॥ अस्मिन्धर्मोऽखिलेनोक्तोगुणदोषौचकर्मणाम् ॥ चतुर्णामपिवर्णानामाचारश्चा
पिशाश्वतः ॥ ८१ ॥ आचारःप्रथमोधर्मःश्रुत्युक्तश्चनरोत्तम ॥ तस्मादस्मिन्समायुक्तोनित्यंस्यादात्मवान्द्विजः ॥ ८२ ॥ आचाराद्विच्युतो
विप्रोनवेदफलमश्नुते ॥ आचारेणचसंयुक्तःसंपूर्णफलभाक्स्मृतः ॥ ८३ ॥ एवमाचारतोदृष्ट्वाधर्मस्यमुनयोगतिम् ॥ सर्वस्यतपसोमूलमाचारं
जगृहुःपरम् ॥ ८४ ॥ अन्येचमानवाराजन्नाचारंसंश्रिताःसदा[1] ॥ एवमस्मिन्पुराणेतुआचारस्यतुकीर्तनम् ॥ ८५ ॥ वृत्तांतानिचराजेन्द्रत
थाचोक्तानिपंडितैः ॥ त्रिलोक्यास्तुसमुत्पत्तिंसंस्कारविधिमुत्तमम् ॥ ८६ ॥ श्रवणंचेतिहासस्यविधानंकथ्यतेनृप ॥ तथास्मिन्कथ्यतेरा
जन्माहात्म्यंवाचकस्यतु ॥ ८७ ॥ व्रतचर्याश्रमाचाराःस्नातकस्यपरोविधिः ॥ दारादिगमनंचैवविवाहानांचलक्षणम् ॥ ८८ ॥ पुंसांचल
क्षणंराजन्योषितानांचकथ्यते ॥ महायज्ञविधानंचशास्त्रकल्पंचशाश्वतम् ॥ ८९ ॥ पृथिव्यालक्षणंतातदेवार्चायाःसुलक्षणम् ॥ वृत्तीनांलक्षणं
चैवस्नातकस्यव्रतानिच ॥ ९० ॥ भक्ष्याभक्ष्यंचशौचंचद्रव्याणांशुद्धिमेवच ॥ स्त्रीधर्मयोगंतापस्यंमोक्षंसंन्यासमेवच ॥ ९१ ॥ राज्ञश्चधर्मम
खिलंकार्याणांचविनिर्णयम् ॥ माहात्म्यंसवितुश्चात्रतीर्थानांचविशाम्पते ॥ ९२ ॥ नारायणस्यमाहात्म्यंतथारुद्रस्यकथ्यते ॥ महा
भाग्यंचविप्राणांमाहात्म्यंपुस्तकस्यच ॥ ९३ ॥ दुर्गादेव्यास्तथाचोक्तंसत्यस्यचमहामते ॥ संक्षिप्तंसंविधानंचधर्मःस्त्रीपुं
सयोरपि ॥ ९४ ॥ विभागंधर्मद्यूतंचकथकानांचशोधनम् ॥ वैश्यशूद्रोपचारंचसंकीर्णानांचसंभवम् ॥ ९५ ॥ आप
द्धर्मंचवर्णानांप्रायश्चित्तविधिंतथा ॥ संध्याविधिंप्रेतशुद्धिंस्नानतर्पणयोर्विधिम् ॥ ९६ ॥ वैश्वदेवविधिंचापितथाभोज्यवि

[1] आचरं फलमाश्रिताः-इ०पा०।

धिंनृप ॥ लक्षणंदंतकाष्ठस्यचरणव्यूहमुत्तमम् ॥ ९७ ॥ संसारगमनंचैवत्रिविधंकर्मसंभवम् ॥ नैःश्रेयसंकर्मणांचगुणदोष
परीक्षणम् ॥ ९८ ॥ दाराणांलक्षणंप्रोक्तंतथापात्रपरीक्षणम् ॥ प्रसूतिंचापिगर्भस्यतथाकर्मफलंनृप ॥ ९९ ॥ जातिधर्मान्कु
लधर्मान्वेदधर्मांश्चपार्थिव ॥ वैतानव्रतिकानांचतथासौप्रोक्तवान्विभुः ॥ १०० ॥ ब्रह्माकुरुकुलश्रेष्ठशंकरायमहात्मने ॥ शंकरेणतथावि
ष्णोःकथितंकुरुनंदन ॥ १०१ ॥ विष्णुनापिपुनःप्रोक्तंनारदायमहीपते ॥ नारदात्प्राप्तवाञ्छक्रःशक्रादपिपराशरः ॥ १०२ ॥ पराशरात्ततो
व्यासोव्यासादपिमयाविभो ॥ एवंपरंपराप्राप्तंपुराणमिदमुत्तमम् ॥ १०३ ॥ शृणुत्वमपिराजेंद्रमत्सकाशात्परंहितम् ॥ सर्वाण्येवपुराणा
निसंज्ञेयानिनरर्षभ ॥ १०४ ॥ द्वादशैवसहस्राणिप्रोक्तानीहमनीषिभिः ॥ पुनर्वृद्धिंगतानीहआख्यानैर्विविधैर्नृप ॥ १०५ ॥ यथास्कांदंतथा
चेदंभविष्यंकुरुनंदन ॥ स्कांदंशतसहस्रंतुलोकानांज्ञातमेवहि ॥ १०६ ॥ भविष्यमेतदृषीणांलक्षार्द्धंसंख्ययाकृतम् ॥ तच्छ्रुत्वापुरुषोभक्त्या
इदंफलमवाप्नुयात्॥१०७॥ऋद्धिर्वृद्धिस्तथाश्रीश्चभवंतितस्यानिश्चितम् ॥१०८॥ इतिश्रीभविष्येमहापुराणेशतार्द्धसहस्रसंहितायांब्राह्मेपर्वणि
कथाप्रस्तावनेप्रथमोऽध्यायः ॥१॥छ॥ सुमंतुरुवाच ॥ शृणुष्वेदंमहाबाहोपुराणंपंचलक्षणम्॥यच्छ्रुत्वामुच्यतेराजन्पुरुषोब्रह्महत्यया ॥१॥
पर्वाणिचात्रवैपंचकीर्तितानिस्वयंभुवा ॥ प्रथमंकथ्यतेब्राह्मंद्वितीयंवैष्णवंस्मृतम् ॥२॥ तृतीयंशैवमाख्यातंचतुर्थंत्वाष्ट्रमुच्यते ॥ पंचमंप्र
तिसर्गाख्यंसर्वलोकैःसुपूजितम् ॥ ३ ॥ एतानितातपर्वाणिलक्षणानिनिबोधमे ॥ सर्गश्चप्रतिसर्गश्च वंशोमन्वंतराणिच ॥ ४ ॥ वंशानुचरितं
चैवपुराणंपंचलक्षणम् ॥ चतुर्दशाभिर्विद्याभिर्भूषितंकुरुनंदन ॥ ५ ॥ अंगानिचतुरोवेदामीमांसान्यायविस्तरः ॥ पुराणंधर्मशास्त्रंचवि
द्याह्येताश्चतुर्दश ॥ ६ ॥ आयुर्वेदोधनुर्वेदोगांधर्वश्चैवतेत्रयः ॥ अर्थशास्त्रंचतुर्थंतुविद्याह्यष्टादशैवताः ॥ ७ ॥ प्रथमंकथ्यतेसर्गोभूताना
मिहसर्वशः ॥ यच्छ्रुत्वापापनिर्मुक्तोयातिशांतिमनुत्तमाम् ॥ ८ ॥ जगदासीत्पुराताततमोभूतमलक्षणम् ॥ अविज्ञेयमतर्क्यंचप्रसुप्तमि
वसर्वशः ॥ ९ ॥ ततःसभगवानीशोअव्यक्तोव्यंजयन्निदम् ॥ महाभूतानिवृत्तौजाःप्रोत्थितस्तमनाशनः ॥ १० ॥ योसावतींद्रियोऽग्राह्यः



१ देशधर्मान्कुलधर्मांश्चवैनृप–इ०पा० । २ गतम्–इ०पा० । ३ तस्य देहं स्तुवंति वै–इ०पा० । ४ शतसाहस्रार्धसंहितायाम्–इ०पा० । ५सर्वतः–इ०पा० ।

सूक्ष्मोऽव्यक्तःसनातनः ॥ सर्वभूतमयोऽचिंत्यःसएषस्वयमुत्थितः ॥ ११ ॥ योसौषड्विंशकोलोकेतथायःपुरुषोत्तमः ॥ भास्करश्चम
हाबाहोपरंब्रह्मचकथ्यते ॥ १२ ॥ सोऽभिध्यायशरीरात्स्वात्सिसृक्षुर्विविधाःप्रजाः ॥ अपएवससर्जादौतासुवीर्यमवासृजत् ॥ १३ ॥ यस्मादु
त्पद्यतेसर्वंसदेवासुरमानुषम् ॥ बीजंशुक्रंतथारेतउग्रंवीर्यंचकथ्यते ॥ १४ ॥ वीर्यस्यैतानिनामानिकथितानिस्वयंभुवा ॥ तदंडमभव
द्धैमंज्वालामालाकुलंविभो ॥ १५ ॥ यस्मिञ्जज्ञेस्वयंब्रह्मासर्वलोकपितामहः ॥ सुरज्येष्ठश्चतुर्वक्त्रःपरमेष्ठीपितामहः ॥ १६ ॥ क्षेत्रज्ञः
पुरुषोवेधाःशंभुर्नारायणस्तथा ॥ पर्यायवाचकैःशब्दैरेवंब्रह्माप्रकीर्त्यते ॥ १७ ॥ सदामनीषिभिस्तातविरंचिःकंजजस्तथा ॥ आपोनाराइ
तिप्रोक्ताआपोवैनरसूनवः ॥ १८ ॥ तायदस्यायनंपूर्वंतेननारायणःस्मृतः ॥ अरमित्येवशीघ्रायनियताःकविभिःकृताः ॥ १९ ॥ आपएं
वार्णवाभूत्वासुशीघ्रास्तेनतानराः ॥ यत्तत्कारणमव्यक्तंनित्यंसदसदात्मकम् ॥ २० ॥ तद्विसृष्टःसपुरुषोलोकेब्रह्मेतिकीर्त्यते ॥ एवंसभ
गवानंडेतत्त्वमेवनिरूप्यवै ॥ २१ ॥ ध्यानमास्थायराजेंद्रतदंडमकरोद्द्विधा ॥ शकलाभ्यांचराजेंद्रदिवंभूमिंचनिर्ममे ॥ २२ ॥ अंतर्व्योमदि
शश्चाष्टौवारुणंस्थानमेवहि ॥ ऊर्द्ध्वंमहान्गतोराजन्समंताल्लोकभूतये॥ २३ ॥महतश्चाप्यहंकारस्तस्माच्चत्रिगुणानितु ॥त्रिगुणानितुसूक्ष्माणि
बुद्धिगम्यानिभारत ॥ २४ ॥ उत्पत्तिहेतुभूतानिभूतानांमहतांनृप ॥ तेषामेवगृहीतानिशनैःपंचेंद्रियाणितु ॥ २५ ॥ तथैवावयवाःसू
क्ष्माःषण्णामप्यमितौजसाम् ॥ २६ ॥ संनिवेश्यात्ममात्रासुसराजन्भगवान्विभुः ॥ भूतानिनिर्ममेतातसर्वाणिविधिपूर्वकम् ॥ २७ ॥ यन्मू
र्त्यवयवाःसूक्ष्मास्तस्येमान्याश्रयाणिषट् ॥ तस्माच्छरीरमित्याहुस्तस्यमूर्तिंमनीषिणः ॥ २८ ॥ महांतितानिभूतानिआविशंतिततो
विभुम् ॥ कर्मणासहराजेंद्रसगुणाश्चापिवैगुणाः ॥ २९ ॥ तषामिदंतुसप्तानांपुरुषाणांमहौजसाम् ॥ सूक्ष्माभ्योमूर्तिमात्राभ्यःसंभवत्य
व्ययाद्व्ययम्[3] ॥ ३० ॥ भूतादिमहतस्तातयेनव्याप्तमिदंजगत् ॥ तस्मादपिमहाबाहोपुरुषाःपंचएवहि ॥ ३१ ॥ केचिदेवंपरांतातसृष्टि
मिच्छंतिपंडिताः ॥ अन्येऽप्येवंमहाबाहोप्रवदंतिमनीषिणः ॥ ३२ ॥ योऽसावात्मापरस्तातकल्पादौसृजतेतनुम् ॥ प्रजनश्चमहाबाहोसि

१ कर्दमस्तथा–इ०पा० । २ आपएकार्णवीभूता अधिप्रातेनता नराः–इ०पा० । ३ द्वयम्–इ०पा० ।

सृक्षुर्विविधाःप्रजाः ॥ ३३ ॥ तेनसृष्टःपुद्गलस्तुप्रधानंविशतेनृप ॥ प्रधानंक्षोभितंतेनविकारान्सृजतेबहून् ॥ ३४ ॥ उत्पद्यतेमहांस्तस्मा
त्ततोभूतादिरेवहि ॥ उत्पद्यतेविशालंचभूतादेःकुरुनंदन ॥ ३५ ॥ विशालाच्चहरिस्तातहरेश्चापिवृकस्तथा ॥ वृकैर्मुष्णंतिचबुधास्तस्मा
त्सर्वंभवंनृप ॥ ३६ ॥ तथैषामेवराजेंद्रप्रादुर्भवतिवेगतः ॥ मात्राणांकुरुशार्दूलविबोधस्तदनंतरम्[1] ॥ ३७ ॥ तस्मादपिहृषीकाणिविवि
धानिनृपोत्तम ॥ तथेयंसृष्टिराख्याताऽऽराध्यतःकुरुनंदन ॥ ३८ ॥ भूयोनिबोधराजेन्द्रभूतानामिहविस्तरम् ॥ गुणाधिकानिसर्वाणि
भूतानिपृथिवीपते ॥ ३९ ॥ आकाशमादितःकृत्वाउत्तरोत्तरमेवहि ॥ एकंद्वौचतथात्रीणिचत्वारश्चापिपंचच ॥ ४० ॥ ततःसभगवान्ब्र
ह्मापद्मासनगतःप्रभुः ॥ सर्वेषांतुसनामानिकर्माणिचपृथक्पृथक् ॥ ४१ ॥ वेदशब्देभ्यएवादौपृथक्संस्थाश्चनिर्ममे ॥ कर्मोद्भवानांदेवानां
सोसृजद्देहिनांप्रभुः ॥ ४२ ॥ तुषितानांगणंराजन्यज्ञंचैवसनातनम् ॥ दत्त्वावीरसमानेभ्यो[2]गुह्यंब्रह्मसनातनम् ॥ ४३ ॥ दुदोहयज्ञसिद्ध्य
र्थमृग्यजुःसामलक्षणम् ॥ कालंकालविभक्तीश्चग्रहान्तूंस्तथानृप[3] ॥ ४४ ॥ सरितःसागराञ्छैलान्समानिविषमाणिच ॥ कामंक्रोधंतथा
वाचंरतिंचापिकुरूद्वह ॥ ४५ ॥ सृष्टिंससर्जराजेंद्रसिसृक्षुर्विविधाःप्रजाः ॥ धर्माधर्मौविवेकायकर्मणांचतथासृजत् ॥ ४६ ॥ सुखदुःखादि
भिर्द्वंद्वैःप्रजाश्चेमान्ययोजयत् ॥ अण्व्योमात्राविनाशिन्योदशार्धानांतुयाःस्मृताः ॥ ४७ ॥ ताभिःसर्वमिदंवीरसंभवत्यनुपूर्वशः ॥ यत्कृतं
तुपुराकर्मसंनियुक्तेनवैनृप ॥ ४८ ॥ सतदेवस्वयंभेजेसृज्यमानंपुनःपुनः ॥ हिंस्राहिंस्रेमृदुक्रूरेधर्माधर्मेऋतानृते ॥ ४९ ॥ यद्यथास्याभव
त्सर्गेतत्तस्यस्वयमाविशत् ॥ यथाचलिंगान्यृतवःस्वयमेवानुपर्यये ॥ ५० ॥ स्वानिस्वान्यभिपद्यंतेतथाकर्माणिदेहिनः ॥ लोकस्येहविवृद्ध्य
र्थंमुखबाहूरुपादतः ॥ ५१ ॥ ब्रह्मक्षत्रंतथाचोभौवैश्यशूद्रौनृपोत्तम ॥ मुखानियानिचत्वारितेभ्योवेदाविनिःसृताः ॥ ५२ ॥ ऋग्वेदसंहितातातवसिष्ठे
नमहात्मना ॥ पूर्वान्मुखान्महाबाहोदक्षिणाच्चापिवैशृणु ॥ ५३ ॥ यजुर्वेदोमहाराजयाज्ञवल्क्येनवैसह ॥ सामानिपश्चिमात्तातगौत
मश्चमहानृषिः ॥ ५४ ॥ अथर्ववेदोराजेंद्रमुखाच्चाप्युत्तरान्नृप ॥ ऋषिश्चापितथाराजञ्छौनकोलोकपूजितः ॥ ५५ ॥ यत्तन्मुखंमहा



१ हृच्छयस्तदनंतरम्–इ०पा० । २ दत्तवान्सर्वमानेभ्यः–इ०पा० । ३ कालविभूतिं च नक्षत्राणि ग्रहांस्तथा–इ०पा० ।

वाहोपंचमंलोकविश्रुतम् ॥ अष्टादशपुराणानिसेतिहासानिभारत ॥ ५६ ॥ निर्गतानिततस्तस्मान्मुखात्कुरुकुलोद्वह ॥ तथान्याः
स्मृतयश्चापियमाद्यालोकपूजिताः ॥ ५७ ॥ ततःसभगवान्देवोद्विधादेहमकारयत् ॥ द्विधाकृत्वात्मनोदेहमर्धेनपुरुषोभवत् ॥ ५८ ॥ अर्धे
ननारीतस्यांचविराजमसृजत्प्रभुः ॥ तपस्तप्त्वासृजद्यंतुसस्वयंपुरुषोविराट् ॥ ५९ ॥ सचकारतपोराजन्सिसृक्षुर्विविधाःप्रजाः ॥ पतीन्प्र
जानामसृजन्महर्षीनादितोदश ॥ ६० ॥ नारदंचभृगुंतातकंप्रचेतसमेवहि ॥ पुलहंक्रतुंपुलस्त्यंचअत्रिमंगिरसंतथा ॥ ६१ ॥ मरीचिं
चापिराजेंद्रयोसावाद्यःप्रजापतिः ॥ एतांश्चान्यांश्चराजेंद्रअसृजद्भूरितेजसः ॥ ६२ ॥ अथदेवानृषीन्दैत्यान्सोऽसृजत्कुरुनंदन ॥ यक्षरक्षःपि
शाचांश्चगंधर्वाप्सरसोऽसुरान् ॥ ६३ ॥ मनुष्याणांपितॄणांचसर्पाणांचैवभारत ॥ नागानांचमहाबाहोससर्जविविधान्गणान् ॥ ६४ ॥
क्षणरुचोऽशनिगणान्रोहितेन्द्रधनूंषिच ॥ धूमकेतूंस्तथाचोल्कानिर्घाताञ्ज्योतिषांगणान् ॥ ६५ ॥ मनुष्यान्किन्नरान्मत्स्यान्वराहांश्च
विहंगमान् ॥ गजानश्वानथपशून्मृगान्व्यालांश्चभारत ॥ ६६ ॥ कृमिकीटपतंगांश्चयूकामाक्षिकमत्कुणान् ॥ सर्वंचदंशमशकंस्थावरंच[1]
पृथग्विधम् ॥ ६७ ॥ एवंसभास्करोदेवःससर्जभुवनत्रयम् ॥ येषांतुयादृशंकर्मभूतानामिहकीर्तितम् ॥ ६८ ॥ कथयिष्यामितत्सर्वं
क्रमयोगंचजन्मनि[2] ॥ गजाव्यालामृगास्तातपशवश्चपृथग्विधाः ॥ ६९ ॥ पिशाचामानुषास्तातरक्षांसिचजरायुजाः ॥ द्विजास्तु
अंडजाःसर्पानक्रामत्स्याःसकच्छपाः ॥ ७० ॥ एवंविधानियानीहस्थलजान्यौदकानिच[3] ॥ स्वेदजंदंशमशकंयूकामाक्षिकमत्कुणाः ॥ ७१ ॥
ऊष्मणाचोपजायंतेयच्चान्यत्किंचिदीदृशम् ॥ उद्भिज्जाःस्थावराःसर्वेबीजकांडप्ररोहिणः ॥७२॥ ओषध्यःफलपाकांतानानाविधफलोपगाः ॥
अपुष्पाःफलवंतोयेतेवनस्पतयःस्मृताः ॥ ७३ ॥ पुष्पिणःफलिनश्चैववृक्षास्तूभयतःस्मृताः ॥ गुच्छगुल्मंतुविविधंतथैवतृणजातयः ॥ ७४ ॥
बीजकांडरुहाण्येवप्रतानावल्ल्यएवच[4] ॥ तमसाबहुरूपेणवेष्टिताःकर्महेतुना ॥ ७५ ॥ अंतःसंज्ञाभवंत्येतेसुखदुःखसमन्विताः ॥ एतावत्य

१ स्थविष्ठं च नराधिप-इ०पा० । २ कर्मणि-इ०पा० । ३ औषधीनि च-इ०पा० । ४ व्रतत्यः-इ०पा० ।

स्तुगतयःप्रोद्भूताःकुरुनंदन ॥ ७६ ॥ तस्मादेवाद्दीतिमंतोभास्कराच्चमहात्मनः ॥ घोरेस्मिंस्तात्संसारेनित्यंसततयायिनि ॥ ७७ ॥
एवंसर्वंससृष्ट्वेदंराजँल्लोकगुरुंपरम् ॥ तिरोभूतःसभूतात्माकालंकालेनपीडयन् ॥ ७८ ॥ यदासदेवोजागर्तितदेदंचेष्टतेजगत् ॥ यदास्वपिति
शांतात्मातदासर्वंनिमीलति ॥ ७९ ॥ तस्मिन्स्वपितिराजेंद्रजंतवःकर्मबंधनाः ॥ स्वकर्मभ्योनिवर्तंतेमनश्चग्लानिमृच्छति ॥ ८० ॥ युग
पत्तुप्रलीयंतेयदातस्मिन्महात्मनि ॥ तदायंसर्वभूतात्मासुखंस्वपितिभारत ॥ ८१ ॥ तमोयदासमाश्रित्यचिरंतिष्ठतिसेंद्रियः ॥ ननवंकुरुते
कर्मतदोत्क्रामतिमूर्तितः ॥ ८२ ॥ यदाहंमात्रिकोभूत्वाबीजंस्थास्नुचरिष्णुच ॥ समाविशतिसंसृष्टस्तदामूर्तिंविमुंचति ॥ ८३ ॥ एवंसजाग्र
त्स्वप्नाभ्यामिदंसर्वंजगत्प्रभुः ॥ संजीवयतिचाजस्रंप्रमापयतिचाव्ययः ॥ ८४ ॥ कल्पादौसृजतेतातअंतेकल्पस्यसंहरेत् ॥ दिनंतस्ये
हयत्तातकल्पांतमितिकथ्यते ॥ ८५ ॥ कालसंख्याततस्तस्यकल्पस्यशृणुभारत ॥ निमेषादशचाष्टौचअक्ष्णःकाष्ठानिगद्यते ॥ ८६ ॥
त्रिंशत्काष्ठाःकलामाहुःक्षणस्त्रिंशत्कलाःस्मृताः ॥ मुहूर्तमथमौहूर्तावदंतिद्वादशक्षणम् ॥ ८७ ॥ त्रिंशन्मुहूर्तमुद्दिष्टमहोरात्रंमनीषिभिः ॥
मासस्त्रिंशदहोरात्रंद्वौद्वौमासावृतुःस्मृतः ॥ ८८ ॥ ऋतुत्रयमप्ययनमयनेद्वेतुवत्सरः ॥ अहोरात्रेविभजतेसूर्योमानुषदैविके ॥ ८९ ॥
रात्रिःस्वप्नायभूतानांचेष्टायैकर्मणामहः ॥ पित्र्येरात्र्यहनीमासःप्रविभागस्तुपक्षयोः ॥ ९० ॥ कर्मचेष्टास्वहःकृष्णःशुक्लःस्वप्नायशर्वरी ॥
दैवेरात्र्यहनीवर्षंप्रविभागस्तयोःपुनः ॥ ९१ ॥ अहस्तत्रोदगयनंरात्रिःस्याद्दक्षिणायनम् ॥ ब्राह्मस्यतुक्षपाहस्ययत्प्रमाणंमहीपते ॥ ९२ ॥
एकैकशोयुगानांतुक्रमशस्तन्निबोधमे ॥ चत्वार्याहुःसहस्राणिवर्षाणांतत्कृतंयुगम् ॥ ९३ ॥ तस्यतावच्छतीसंध्यासंध्यांशश्चतथाविधः ॥
त्रेतात्रीणिसहस्राणिवर्षाणिचविदुर्बुधाः ॥ ९४ ॥ शतानिषट्चराजेंद्रसंध्यासंध्यांशयोःपृथक् ॥ वर्षाणांद्वेसहस्रेतुद्वापरेपरिकीर्तिते ॥ ९५ ॥ चत्वारि
चशतान्याहुःसंध्यासंध्यांशयोर्बुधाः ॥ सहस्रंकथितंतिष्येशतद्वयसमन्वितम् ॥ ९६ ॥ एषाचतुर्युगस्यापिसंख्याप्रोक्तानृपोत्तम ॥ यदेतत्परि
संख्यातमादावेवचतुर्युगम् ॥ ९७ ॥ एतद्द्वादशसाहस्रंदेवानांयुगमुच्यते ॥ दैविकानांयुगानांतुसहस्रपरिसंख्यया ॥ ९८ ॥ ब्राह्ममेकमहर्ज्ञेयं

१ पूतात्मा-इ०पा० । २ सः-इ०पा० । ३ तात-इ०पा० । ४ त्रिंशत्कलो मुहूर्तस्तु अहोरात्रं मनीषिभिः-इ०पा० । ५ महाबाहो-इ०पा० ।

तावतीरात्रिरुच्यते ॥ एतद्युगसहस्रांतंब्राह्मंपुण्यमहर्विदुः ॥ ९९ ॥ रात्रिंचतावतीमेवतेहोरात्रविदोजनाः ॥ ततोऽसौयुगपर्यंतेप्रसुप्तःप्रतिबुध्यते ॥१००॥ प्रतिबुद्धस्तुसृजतिमनःसदसदात्मकम् ॥ मनःसृष्टिंविकुरुतेचोद्य[1]मानंसिसृक्षया ॥ १०१ ॥ विपुलंजायतेतस्मात्तस्यशब्दंगुणंविदुः ॥ विपुलात्तुविकुर्वाणात्सर्वगंधवहःशुचिः ॥ १०२ ॥ बलवाञ्जायतेवायुःसवैस्पर्शगुणोमतः ॥ वायोरपिविकुर्वाणाद्विरोचिष्णुतमोनुदम् ॥ ॥१०३॥ उत्पद्यतेविचित्रांशुस्तस्यरूपंगुणंविदुः॥तस्मादपिविकुर्वाणादापोजाताःस्मृताबुधैः॥१०४॥तासांगुणोरसोज्ञेयःसर्वलोकस्यभावनः[2] अद्भ्योगंधगुणाभूमिरित्येषासृष्टिरादितः ॥ १०५ ॥ यत्प्राग्द्वादशसाहस्रमुक्तंसौमनसंयुगम् ॥ तदेकसप्ततिगुणंमन्वंतरमिहोच्यते ॥१०६ ॥ मन्वंतराण्यसंख्यानिसर्गःसंहारमेवच ॥ तथाप्यहेसदाब्राह्मयेमनवस्तुचतुर्दश ॥ १०७ ॥ कथ्यंतेकुरु[3]शार्दूलसंख्ययापंडितैःसदा ॥ मनोःस्वायंभुवस्येहषड्[4]ईयामनवोऽपरे ॥ १०८ ॥ सृष्टवंतःप्रजाःस्वाःस्वामहात्मानोमहौजसः ॥ सावर्णैयस्तथापंचभौत्यौरौच्यस्तथापरः ॥ ॥ १०९ ॥ एतेभविष्यामनवःसप्तप्रोक्तानृपोत्तम ॥ स्वेस्वेंऽतरेसर्वमिदंपालयंतिचराचरम् ॥ ११० ॥ एवंविधंदिनंतस्यविरिंचेस्तुमहात्मनः ॥ तस्यांतेकुरुतेसर्गंयथेदंकथितंतव ॥ १११ ॥ क्रीडन्निवैतत्कुरुतेपरमेष्ठीनराधिप ॥ चतुष्पात्सकलोधर्मःसत्यंचैवकृतेयुगे ॥ ११२ ॥ नाधर्मेणागमःकश्चिन्मनुष्याणांप्रवर्तते ॥ इतरेष्वागमास्तातधर्मश्चकुरुनंदन ॥ ११३ ॥ यादृशाःपरिहीयंतेयथाहभगवान्[5]मनुः ॥ चौर्याच्चाप्यनृताद्राजन्मायाभिरमितद्युते ॥ ११४ ॥ पादेनहीयतेधर्मस्त्रेतादिषुयुगेषुवै ॥ अरोगाःसर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ॥ ११५ ॥ कृतत्रेतादिषुत्वेषांवयोह्रसतिपादशः ॥ वेदोक्तमायुराशीश्चमर्त्यानांकुरुनंदन ॥११६ ॥ कर्मणांतुफलं तातफलत्यनुयुगंसदा ॥ प्रभावश्चतदालोकेफलत्येवशरीरिणाम् ॥ ११७ ॥ अन्येकृतयुगेधर्मास्त्रेतायांद्वापरेपरे ॥ अन्येकलियुगेनॄणांयुगधर्मानुरूपतः ॥ ११८ ॥ तपःपरंकृतयुगेत्रेतायांज्ञानमुच्यते ॥ द्वापरेयज्ञमित्याहुर्दानमे[6]कंकलौयुगे ॥ ११९ ॥ सर्वस्यराजन्सर्गस्यगुप्त्यर्थंचमहाद्युते ॥ मुखबाहूरुपादानांपृथक्कर्माण्यकल्पयत् ॥ १२० ॥ अध्यापनमध्ययनंयजनंयाजनंतथा ॥ दानंप्रतिग्रहंचैवब्राह्मणानामकल्पयत् ॥ १२१ ॥ प्रजानां

१ बोध्यमानम्–इ० पा०। २ पावनः–इ०पा०। ३ मुनिशार्दूल–इ०पा०। ४ एवं स्युर्मनवःपरे–इ०पा०। ५ मुनिः–इ०पा०। ६ एव–इ०पा०।

पालनंराजन्दानमध्ययनंतथा ॥ विषयेष्वप्रसक्तिंचतथेज्यांक्षत्रियस्यतु ॥ १२२ ॥ पशूनांरक्षणंदानमिज्याध्ययनमेवच ॥ वणिक्पथं[1]
कुसीदंचवैश्यस्यकृषिमेवच ॥ १२३ ॥ एकमेवतुशूद्रस्यकर्मलोकेप्रकीर्तितम्[2] ॥ एतेषामेववर्णानांशुश्रूषामनुपूर्वशः ॥ १२४ ॥
पुरुषस्यसदाश्रेष्ठंनाभेरूर्ध्वंनृपोत्तम ॥ तस्मादपिशुचितरं मुखंतातस्वयंभुवः ॥ १२५ ॥ तस्मान्मुखाद्द्विजोजातइतीयंवैदिकीश्रुतिः ॥
सर्वस्यैवास्यधर्मस्यधर्मतोब्राह्मणः प्रभुः ॥ १२६ ॥ संसृष्टो[3]ब्रह्मणापूर्वंतपस्तप्त्वाकुरूद्वह ॥ हव्यानामिवकव्यानांसर्वस्यापिच गुप्तये
॥ १२७ ॥ अश्नंतिचमुखेनास्यहव्यानित्रिदिवौकसः ॥ कव्यानिचैवपितरः किंभूतमधिकंततः ॥ १२८ ॥ भूतानांप्राणिनःश्रेष्ठाः प्राणिनां
बुद्धिजीविनः ॥ बुद्धिमत्सुनराःश्रेष्ठानरेषुब्राह्मणाः स्मृताः ॥ १२९ ॥ ब्राह्मणेषुचविद्वांसोविद्वत्सुकृतबुद्धयः ॥ कृतबुद्धिषुकर्तारः
कर्तृषुब्रह्मवेदिनः ॥ १३० ॥ जन्मविप्रस्यराजेंद्रधर्मार्थमिहकथ्यते ॥ उत्पन्नः सर्वसिद्ध्यर्थं[4]यातिब्रह्मसदोनृप ॥ १३१ ॥ सचापिजायमा
नस्तुपृथिव्यामिहजायते ॥ भूतानांप्रभवायैवधर्मकोशस्यगुप्तये ॥ १३२ ॥ सर्वंहिब्राह्मणस्येदंयत्किंचित्पृथिवीगतम् ॥ जन्मना
चोत्तमेनेदं सर्वंवैब्राह्मणोऽर्हति ॥ १३३ ॥ स्वकीयंब्राह्मणोभुंक्तेविदधातिचसुव्रत ॥ करुणांकुर्वतस्तस्यभुंजंतीहेतरेजनाः ॥ १३४ ॥
त्रयाणामिहवर्णानांभावाभावायवैद्विजः ॥ भवेद्राजन्नसंदेहस्तुष्टोभावायवैद्विजः ॥ १३५ ॥ अभावाय भवेत्क्रुद्धस्तस्मात्पूज्यतमो
हिसः ॥ ब्राह्मणेसतिनान्यस्यप्रभुत्वंविद्यतेनृप ॥ १३६ ॥ कामात्करोत्यसौकर्मकामगश्चनृपोत्तम ॥ तस्माद्वृंदारकपुरीतस्मादपिमहः
पुनः ॥ १३७ ॥ महर्लोकाज्जनोलोकंब्रह्मलोकंचगच्छति ॥ ब्रह्मत्वंचमहाबाहोयातिविप्रोनसंशयः ॥ १३८ ॥ शतानीकउवाच ॥
ब्रह्मत्वंनामदुष्प्रापंब्रह्मलोकेषुसुव्रत ॥ १३९ ॥ ब्रह्मत्वंकीदृशंविप्रोब्रह्मलोकंचगच्छति ॥ नाममात्रोऽर्थोकिंविप्रोब्रह्मत्वंब्रह्मणःसदा ॥ १४० ॥
यातिब्रह्मन्गुणाः केस्युर्ब्रह्मप्राप्तौ ममोच्यताम् ॥ सुमंतुरुवाच ॥ साधुसाधुमहाबाहोशृणुमेपरमंवचः ॥ १४१ ॥ येप्रोक्तावेदशास्त्रेषु
संस्काराब्राह्मणस्यतु ॥ गर्भाधानादयोयेचसंस्कारायस्यपार्थिव ॥ १४२ ॥ चत्वारिंशत्तथाष्टौच[5] निर्वृत्ताःशास्त्रतोनृप ॥ सयातिब्रह्मणः

१ वाणिज्यं तु-इ०पा० । २ प्रतिष्ठितम्-इ०पा० । ३ ससृजे-इ०पा० । ४ सर्वधर्मार्थम्-इ०पा० । ५ चेह-इ०पा० ।

स्थानंब्राह्मणत्वंचमानद[1] ॥ १४३ ॥ संस्काराः सर्वथाहेतुर्ब्रह्मत्वेनात्रसंशयः ॥ शतानीकउवाच ॥ संस्काराः केमताब्रह्मन्ब्रह्मत्वेब्राह्मण
स्यतु ॥ १४४ ॥ शंसमेद्विजशार्दूलकौतुकंहिमहन्मम ॥ सुमंतुरुवाच ॥ सा[2]धुसाधुमहाबाहोशृणुमेपरमंवचः ॥ १४५ ॥ येप्रोक्तावे
दशास्त्रेषुसंस्काराब्राह्मणस्यतु ॥ मनीषिभिर्महाबाहोशृणुसर्वानशेषतः ॥ १४६ ॥ गर्भाधानंपुंसवनंसीमंतोन्नयनंतथा ॥
जातकर्मान्नाशनंचचूडो[3]पनयनंनृप ॥ १४७ ॥ ब्रह्मव्रतानिचत्वारिस्नानंचतदनंतरम् ॥ सधर्मचारिणीयोगोय[4]ज्ञानांकर्ममानद ॥
॥ १४८ ॥ पंचानांकार्यमित्याहुरात्मनःश्रेयसेनृप ॥ देवपितृमनुष्याणांभूतानांब्रह्मणस्तथा ॥ १४९ ॥ एतेषांचाष्टकाकर्मपार्व
णश्राद्धमेवहि ॥ श्रावणीचाग्रहायणीचैत्रीचाश्वयुजीतथा ॥ १५० ॥ पाकयज्ञास्तथासप्त[5]अस्याधानंचसत्क्रियाः ॥ अग्निहोत्रं
तथाराजन्दर्शंचविधुसंक्षये ॥ १५१ ॥ पौर्णमासंचराजेंद्रचातुर्मास्यानिचापिहि ॥ निरू[6]पणंपशुवधंतथासौत्रामणीतिच ॥ १५२ ॥
हविर्यज्ञास्तथासप्ततेषांचापिहिसत्क्रियाः ॥ अ[7]ग्निष्टोमोत्याग्निष्टोमस्तथोक्थ्यःषोडशींविदुः ॥ १५३ ॥ वाजपेयोतिरात्रश्चआप्तोर्यामोतिवै
स्मृतः ॥ संस्कारेषुस्थिताःसप्तसो[9]माःकुरुकुलोद्वह ॥ १५४ ॥ इत्येतेद्विजसंस्काराश्चत्वारिंशन्नृ[8]पोत्तम ॥ अष्टौचात्मगुणास्तातशृणुता
नपिभारत ॥ १५५ ॥ अनसूयादयाक्षांतिरनायासंचमंगलम् ॥ अकार्पण्यंतथाशौचमस्पृहाचकुरूद्वह ॥ १५६ ॥ यएतेष्टगुणास्तात
कीर्त्यंतेवैमनीषिभिः ॥ एतेषांलक्षणंवीरशृणुसर्वमशेषतः ॥ १५७ ॥ नगुणान्गुणिनोहंतिनस्तौत्यात्मगुणानपि ॥ प्रहृष्यतेनान्यदोषैरन
सूयाप्रकीर्तिता ॥ १५८ ॥ अपरेबंधुवर्गेवामित्रेद्वेष्टरिवासदा ॥ आत्मवद्वर्तनंयत्स्यात्सादयापरिकीर्तिता ॥ १५९ ॥ वाचामनसिका
येचदुःखेनोत्पादितेनच ॥ नकुप्यतिनचाप्रीतिःसाक्षमापरिकीर्तिता ॥ १६० ॥ अभक्ष्यपरिहारश्चसंसर्गश्चाप्यनिंदितैः ॥ आचारेचव्यव
स्थानंशौचमेतत्प्रकीर्तितम् ॥ १६१ ॥ शरीरंपीडयतेयेनशुभेनापिचकर्मणा ॥ अत्यंतंतन्नकुर्वीतअनायासःसउच्यते ॥ १६२ ॥ प्रश

१ मानवः–इ०पा०। २ अयं श्लोकः पुनरुक्तोऽपि प्राकरणिकतया युक्त एव प्रतिभाति। ३ चूडाकरणमेखलाः–इ०पा०। ४ जंतूनां कर्म मानद–इ०पा०। ५ अग्न्याधेयम्–इ०पा०। ६ निरूढपशुबंधं च–इ०पा०। ७ ज्योतिष्टोमो ह्यग्निष्टोमः–इ०पा०। ८नृप–इ०पा०। ९ मासाः–इ०, संस्थाः–इ०च पा०।

स्ताचरणंनित्यमप्रशस्तविवर्जनम् ॥ एतद्धिमंगलंप्रोक्तंमुनिभिर्ब्रह्मवादिभिः ॥ १६३ ॥ स्तोकादपिप्रदातव्यमदीनेनांतरात्मना ॥
अहन्यहनियत्किंचिदकार्पण्यंतदुच्यते ॥ १६४ ॥ यथोत्पन्नेनसंतुष्टःस्वल्पेनाप्यथवस्तुना ॥ अहिंसयापरस्वेषुसाऽस्पृहापरिकीर्तिता ॥
॥ १६५ ॥ वपुर्यस्यतुइत्येतैःसंस्कारैःसंस्कृतंद्विजः ॥ ब्रह्मत्वमिहसंप्राप्यब्रह्मलोकंचगच्छति ॥ १६६ ॥ वैदिकैःकर्मभिः पुण्यैर्निषेकाद्यै
र्द्विजन्मनाम् ॥ कार्यःशरीरसंस्कारःपावनःप्रेत्यचेहच ॥ १६७ ॥ गर्भशुद्धिंततःप्राप्यधर्मंचाश्रमलक्षणम् ॥ यातिमुक्तिंनसंदेहःपुराणेस्मि
न्नृपोत्तम ॥ १६८ ॥ उशंतिकुरुशार्दूलब्राह्मणानात्रसंशयः ॥ ( आश्रितानांविशेषेणयेनित्यंस्वस्तिवादिनः ॥ १६९ ॥ निकटस्थान्द्विजा
न्हित्वायोऽन्यान्पूजयतिद्विजान् ॥ सिद्धंपापंतदपमानात्तद्वक्तुंनैवशक्यते ॥ १७० ॥ तस्मात्सदासमीपस्थःसंपूज्योविधिवन्नृप ॥ पूजये
दतिथींस्तद्वदन्नपानादिदानतः ॥ १७१ ॥ ब्राह्मणःसर्ववर्णानांज्येष्ठःश्रेष्ठस्तथोत्तमः ॥ ) एवमस्मिन्पुराणेतुसंस्कारान्ब्राह्मणस्यतु ॥ १७२ ॥
शृणोतियश्चजानातियश्चापिपठतेसदा ॥ ऋद्धिंवृद्धिंतथाकीर्तिंप्राप्येहश्रियमुत्तमाम् ॥ १७३ ॥ धनंधान्यंयशश्चापिपुत्रान्बंधून्सुरूपताम् ॥
सावित्रंलोकमासाद्यब्रह्मलोकमवाप्नुयात् ॥ १७४ ॥ इतिश्रीभविष्येमहापुराणेशतसाहस्र्यांसंहितायांब्राह्मेपर्वणिद्वितीयोऽध्यायः ॥ २ ॥ छ ॥
शतानीकउवाच ॥ जातकर्मादिसंस्कारान्वर्णानामनुपूर्वशः ॥ आश्रमाणांचमेधर्मंकथयस्वद्विजोत्तम ॥ १ ॥ सुमंतुरुवाच ॥ गर्भाधानं
पुंसवनंसीमंतोन्नयनंतथा ॥ जातकर्मान्नप्राशश्चचूडामौंजीनिबंधनम् ॥ २ ॥ बैजिकंगार्भिकंचैनोद्विजानामपमृज्यते ॥ स्वाध्यायेनव्रतैर्होमैस्त्रै
विद्येनेज्ययाश्रुतैः ॥ ३ ॥ महायज्ञैश्चब्राह्मीयंयज्ञैश्चक्रियतेतनुः ॥ शृणुष्वैकमनाराजन्यथासाक्रियतेतनुः ॥ ४ ॥ प्राङ्नाभिवर्धनात्पुंसो
जातकर्मविधीयते ॥ मंत्रवत्प्राशनंचास्यहिरण्यमधुसर्पिषा ॥ ५ ॥ नामधेयंदशम्यांतुकेचिदिच्छंतिपार्थिव ॥ द्वादश्यामपरेराजन्मासिपू
र्णेतथापरे ॥ ६ ॥ अष्टादशेऽहनितथाऽन्येवदंतिमनीषिणः ॥ पुण्येतिथौमुहूर्तेचनक्षत्रेचगुणान्विते ॥ ७ ॥ मंगल्यंतातविप्रस्यशिवशर्मे



१ परार्थेषु–इ०पा० । २ ( ) एतच्चिह्नान्तर्गतोऽयं पाठः कस्मिंश्चिदेकस्मिन्पुस्तके दृश्यते । स च किंचित्प्रकरणाद्दूरवर्तीति हेतोश्चिह्नान्तः प्रवेशित इति बोध्यम् ।

तिपार्थिव ॥ राजन्यस्यविशिष्टंतु[1]इदंवमौतिकथ्यते[2] ॥ ८ ॥ वैश्यस्यधनसंयुक्तंशूद्रस्यचजुगुप्सितम् ॥ धनवर्धनेतिवैश्यस्यसर्वदासेतिही
नजे ॥ ९ ॥ मनुनाचतथाप्रोक्तंनाम्नोलक्षणमुत्तमम् ॥ शर्मवद्ब्राह्मणस्यस्याद्राज्ञोरक्षासमन्वितम् ॥ १० ॥ वैश्यस्यपुष्टिसंयुक्तंशूद्रस्य
प्रैष्यसंयुतम् ॥ स्त्रीणांसुखोद्यमक्रूरंविस्पष्टार्थमनोरमम् ॥ ११ ॥ मंगल्यंदीर्घवर्णांतमाशीर्वादाभिधानवत् ॥ द्वादशेऽहनिराजेंद्रशिशोर्नि
ष्क्रमणंगृहात् ॥ १२ ॥ चतुर्थेमासिकर्तव्यंतथान्येषांमतंविभो ॥ षष्ठेऽन्नप्राशनंमासियथेष्टंमंगलंकुले ॥ १३ ॥ चूडाकर्मद्विजातीनांसर्वे
षामनुपूर्वशः ॥ प्रथमेऽब्देतृतीयेवा[3]कर्तव्यंकुरुनंदन ॥ १४ ॥ गर्भाष्टमेऽब्देकुर्वीतब्राह्मणस्योपनायनम् ॥ गर्भादेकादशेराजन्क्षत्रियस्य
विनिर्दिशेत् ॥ १५ ॥ द्वादशेऽब्देपिगर्भात्तुवैश्यस्यव्रतमादिशेत् ॥ ब्रह्मवर्चसकामेनकार्यंविप्रस्यपंचमे ॥ १६ ॥ बलार्थिनातथाराज्ञःषष्ठेब्दे
कार्यमेवहि ॥ अर्थकामेनवैश्यस्यअष्टमेकुरुनंदन ॥ १७ ॥ आषोडशाद्ब्राह्मणस्यसावित्रीनातिवर्तते ॥ द्वाविंशतेःक्षत्रबंधोराचतुर्विंशतेर्वि
शः ॥ १८ ॥ अतऊर्ध्वंतुयेराजन्यथाकालमसंस्कृताः[4] ॥ सावित्रीपतिताव्रात्याव्रात्यस्तोमादृतेक्रतोः[5] ॥ १९ ॥ नचाप्येभिरपूतैस्तुआप
द्यपिहिकर्हिचित् ॥ ब्राह्म्यं[6]योनिंचसंबंधान्नाचरेद्ब्राह्मणःसह ॥ २० ॥ भवंतिराजंश्चर्माणिव्रतिनांत्रिविधानिच ॥ कार्ष्णरौरववास्तानिब्रह्म
क्षत्रविशांनृप ॥ २१ ॥ वसीरंश्चानुपूर्व्येणवस्त्राणिविविधानितु ॥ ब्रह्मक्षत्रविशोराजञ्छाणक्षौमाविकानिच ॥ २२ ॥ मौंजीत्रिवृत्समाश्लक्ष्णा
कार्याविप्रस्यमेखला॥क्षत्रियस्यचमौर्वीज्यावैश्यस्यशणतांतवी ॥ २३ ॥ मुंजालाभेतुकर्तव्याकुशाश्मंतकबल्वजैः ॥ त्रिवृताग्रंथिनैकेन
त्रिभिःपंचभिरेवच ॥ २४ ॥ कार्पासमुपवीतंस्याद्विप्रस्योर्ध्ववृतंत्रिवृत् ॥ शणसूत्रमयंराज्ञोवैश्यस्याविकसौत्रिकम् ॥ २५ ॥
पुष्कराणितथाचैषांभवंतित्रिविधानितु ॥ ब्रह्मणोबैल्वपालाशौतृतीयंप्लक्षजंनृप ॥ २६ ॥ वाटखादिरौक्षत्रियस्तुतथान्यंवेतसोद्भवम् ॥ पैल
वोदुंबरौवैश्यस्तथाश्वत्थजमेवहि ॥ २७ ॥ दंडानेतान्महाबाहोधर्मतोऽर्हतिधारितुम् ॥ केशांतिकोब्राह्मणस्यदंडःकार्यःप्रमाणतः ॥ २८ ॥
ललाटसंमितोराज्ञःस्यात्तुनासांतिकोविशः ॥ ऋजवस्तेतुसर्वेस्युर्ब्राह्मणाःसौम्यदर्शनाः ॥ २९ ॥ अनुद्वेगकरानृणांसत्वतोनाग्निदूषिताः ॥

१ बलिष्ठं तु–इ०पा०। २ कीर्त्यते–इ०पा०। ३ द्वितीये वा–इ०पा०। ४ त्रयोऽप्येते–इ०पा०। ५ न ते संस्कारभागिनः–इ०पा०। ६ ब्राह्म्यं वेदाध्ययनमित्यर्थः।

प्रगृह्यचेप्सितंदंडमुपस्थायचभास्करम् ॥ ३० ॥ सम्यग्गुरुंतथापूज्यचरेद्भैक्ष्यंयथाविधि ॥ भवत्पूर्वंचरेद्भैक्ष्यमुपनीतोद्विजोत्तमः ॥ ३१ ॥
भवन्मध्यंतुराजन्योवैश्यस्तुभवदुत्तरम् ॥ मातरंवास्वसारंवामातुर्वाभगिनीं निजाम् ॥३२॥ भिक्षेतभैक्षंप्रथमंयाचैनंनावमानयेत् ॥ सुवर्णर
जतंचान्नंसापात्रेस्याविनिर्दिशेत् ॥ ३३ ॥ समाहृत्यततोभैक्ष्यंयावदर्थममायया ॥ निवेद्यगुरवेश्नीयादाचम्यप्राङ्मुखः शुचिः ॥ ३४ ॥
आयुष्यंप्राङ्मुखोभुंक्तेयशस्यंदक्षिणामुखः ॥ श्रियंप्रत्यङ्मुखोभुंक्तेऋतंभुंक्तेउदङ्मुखः ॥ ३५ ॥ उपस्पृश्यद्विजोराजन्नन्नमद्यात्समा
हितः ॥ भुक्त्वाचोपस्पृशेत्सम्यगद्भिःखानिचसंस्पृशेत् ॥ ३६ ॥ तथान्नंपूजयेन्नित्यमद्याच्चैतदकुत्सयन् ॥ दर्शनात्तस्यहृष्येद्वै
प्रसीदेच्चापिभारत ॥ ३७ ॥ अभिनंद्यततोश्नीयादित्येवंमनुरब्रवीत् ॥ पूजितंत्वशनंनित्यंबलमूर्जंचयच्छति ॥ ३८ ॥ अपूजि
तंतुतद्भुक्तमुभयंनाशयेदिदम् ॥ नोच्छिष्टंकस्यचिद्दद्यान्नाद्याच्चैतत्तथांतरा ॥ ३९ ॥ यस्त्वन्नमंतराकृत्वालोभादात्तिनृपोत्तम ॥
विनाशंयातिसनरइहलोकेपरत्रच ॥ ४० ॥ यथाभवत्पुरावैश्योधनवर्द्धनसंज्ञितः ॥ शतानीकउवाच ॥ सकथमंतरंपूर्वमन्नस्य
द्विजसत्तम ॥ ४१ ॥ किमंतरंतथान्नस्यकथंवातत्कृतंभवेत् ॥ सुमंतुरुवाच ॥ पुराकृतयुगेराजन्वैश्योवसतिपुष्करे[3] ॥ ४२॥ धनवर्ध
ननामावैसमृद्धोधनधान्यतः ॥ निदाघकालेराजेंद्रसकृत्वावैश्वदेविकम् ॥ ४३ ॥ सपुत्रभ्रातृभिःसार्धंतथावैमित्रबंधुभिः ॥ आहारं
कुरुतेराजन्भक्ष्यभोज्यसमन्वितम्[4] ॥ ४४ ॥ अथतद्भुंजतस्तस्यअन्नंशब्दोमहानभूत् ॥ करुणःकुरुशार्दूलअथतंसप्रधावितः ॥ ४५ ॥
त्यक्त्वासभोजनंयावन्निष्क्रांतोगृहबाह्यतः ॥ अथशब्दस्तिरोभूतःसभूयोगृहमागतः ॥ ४६ ॥ तमेवभाजनंगृह्यआहारंकृतवान्नृप ॥ भुक्तशेषं
महाबाहोआहारंसतुभुक्तवान् ॥ ४७ ॥ भुक्त्वासशतधाजातस्तस्मिन्नेवक्षणेनृप ॥ तस्मादन्नंनराजेंद्रअश्नीयादंतराक्वचित् ॥ ४८ ॥ नचै
वात्यशनंकुर्यान्नचोच्छिष्टःक्वचिद्व्रजेत् ॥ रसोभवत्यत्यशनाद्रसाद्रोगःप्रवर्तते ॥ ४९ ॥ स्नानंदानंजपोहोमःपितृदेवाभिपूजनम् ॥ नभवंति
रसेजातेनराणांभरतर्षभ ॥ ५० ॥ अनारोग्यमनायुष्यमस्वर्ग्यंचातिभोजनम् ॥ अपुण्यंलोकविद्विष्टंतस्मात्तत्परिवर्जयेत् ॥ ५१ ॥ यक्षभूत

१ सत्यम्–इ०पा०। २ नृप–इ०पा०। ३ अभूत्पुण्यकर्मकृत्–इ०पा०। ४ भक्ष्यपेयसमन्वितम्–इ०पा०।

पिशाचानांरक्षसांचनृपोत्तम ॥ [1]गंम्योभवतिवैविप्रउच्छिष्टोनात्रसंशयः ॥ ५२ ॥ शुचित्वमाश्रयेत्तस्माच्छुचित्वान्मोदतोदिवि ॥ सुखेन चेहरमतेइतीयंवैदिकीश्रुतिः ॥ ५३ ॥ शतानीकउवाच ॥ शुचितामियात्कथंविप्रःकथंचाशुचितामियात् ॥ एतन्मेब्रूहिविप्रेंद्रकौतुकंपरमं मम ॥ ५४ ॥ सुमंतुरुवाच ॥ उपस्पृश्यशुचिर्विप्रोभवतेभरतर्षभ ॥ विधिवत्कुरुशार्दूलभवेद्विधिपरोह्यतः ॥ ५५ ॥ शतानीकउवाच ॥ उपस्पर्शविधिंविप्रकथयत्वंममाखिलम् ॥ शुचित्वमाप्नुयाद्येनआचांतोब्राह्मणोद्विज ॥ ५६ ॥ सुमंतुरुवाच ॥ साधुपृष्टोऽस्मिराजेंद्रशृणुवि प्रोयथाभवेत् ॥ शुचिर्भरतशार्दूलविधिनायेनवाविभो ॥ ५७ ॥ प्रक्षाल्यहस्तौपादौचप्राङ्मुखोदङ्मुखोऽपिवा ॥ उपविश्यशुचौदेशेबा हुंकृत्वाचदक्षिणम् ॥ ५८ ॥ जान्वंतरेमहाबाहो[2]ब्रह्मसूत्रसमन्वितः ॥ सुसमौचरणौकृत्वातथाबद्धशिखोनृप ॥ ५९ ॥ नतिष्ठन्नचसंजल्पंस्त थाचानवलोकयन् ॥ नत्वरन्क्रुधितोवापित्यक्त्वाराजन्सुदूरतः ॥ ६० ॥ प्रसन्नाभिस्तथाद्भिस्तुआचांतःशुचितामियात् ॥ नोष्णाभिर्नस फेनाभिर्युक्ताभिःकलुषेणच ॥ ६१ ॥ वर्णैर्नरसगंधाभ्यांहीनाभिर्नचभारत ॥ सबुद्बुदाभिश्चतथानाचामेत्पंडितोनृप ॥ ६२ ॥ पंचतीर्थानिविप्रस्यश्रूयंतेदक्षिणेकरे ॥ देवतीर्थंपितृतीर्थंब्रह्मतीर्थंचमानद ॥ ६३ ॥ प्राजापत्यंतथाचान्यत्तथान्यत्सौम्यमुच्यते ॥ अंगुष्ठमूलोत्तरतोयेयंरेखामहीपते ॥ ६४ ॥ ब्राह्मंतीर्थंवदंत्येतद्वसिष्ठाद्याद्विजोत्तमाः ॥ कायंकनिष्ठिकामूलेअंगुल्यग्रेतुदैवतम् ॥ ६५ ॥ तर्जन्यंगुष्ठयोरंतःपित्र्यंतीर्थमुदाहृतम् ॥ करमध्येस्थितंसौम्यंप्रशस्तंदेवकर्माणि ॥ ६६ ॥ देवार्चाबलिहरणंप्रातिक्षपणमेवच ॥ एतानिदेवतीर्थेनकुर्यात्कुरुकुलोद्वह ॥ ६७ ॥ अन्ननिर्वपणंराजंस्तथासं[3]पवनंनृप ॥ लाजाहोमंतथासौम्यंप्राजापत्येनकारयेत् ॥ ॥ ६८ ॥ कमंडलूपस्पर्शनंदधिप्राशनमेवच ॥ सौम्यतीर्थेनराजेंद्रसदाकुर्याद्विचक्षणः ॥ ६९ ॥ पितॄणांतर्पणंकार्यंपितृतीर्थेनधी मता ॥ ब्राह्मेणचापितीर्थेनसदोपस्पर्शनंपरम् ॥ ७० ॥ [4]घनांगुलिकरंकृत्वाएकाग्रःसुमनाद्विजः ॥ त्रिःकृत्वायःपिबेदापोमुखशब्द विवर्जितः ॥ ७१ ॥ [5]शृणुयत्फलमाप्नोतिप्रीणातिचयथासुरान् ॥ प्रथमंयत्पिबेदापऋग्वेदस्तेनतृप्यति ॥ ७२ ॥ यद्द्वितीयंयजु

---

१ भक्ष्यः–इ०पा० । २ यज्ञसूत्रसमन्वितः–इ०पा० । ३ संचयनम्–इ०पा० । ४ युतांगुलिकरम्–इ०पा० । ५ स सम्यक्फलमाप्नोति–इ०पा० ।

वेदंतेनप्रीणातिभारत ॥ यत्तृतीयंसामवेदंतेनप्रीणातिभारत ॥ ७३ ॥ प्रथमंयन्मृजेदास्यंदक्षिणांगुष्ठमूलतः ॥ अथर्ववेदंप्रीणातितेनराजन्न
संशयः ॥ ७४ ॥ इतिहासपुराणानियद्द्वितीयंप्रमार्जति ॥ यन्मूर्धानंहिराजेंद्रअभिषिंचतिवैद्विजः ॥ ७५ ॥ तेनप्रीणातिवैरुद्रांशिखामाल
भ्यवैऋषीन् ॥ यदक्षिणीचालभतेरविंप्रीणातितेनवै ॥ ७६ ॥ नासिकालभनाद्वायुंप्रीणात्येवनसंशयः ॥ यच्छ्रोत्रमालभेद्विप्रोदिशःप्रीणाति
तेनवै ॥ ७७ ॥ यमंकुबेरंवरुणंवासवंचाग्निमेवच ॥ यद्बाहुमन्वालभतेएतान्प्रीणातितेनवै ॥७८॥ यन्नाभिमन्वालभतेप्राणानांग्रंथिमेवच ॥
तेनप्रीणातिराजेंद्रइतीयंवैदिकीश्रुतिः ॥ ७९ ॥ अभिषिंचतियत्पादौविष्णुंप्रीणातितेनवै ॥ यद्भूम्याच्छादकंवारिविसर्जयतिमानद ॥ ८० ॥
वासुकिप्रमुखान्नागांस्तेनप्रीणातिभारत ॥ यद्बिंदवोंऽतरेभूमौपतंतीहनराधिप ॥ ८१ ॥ भूतग्रामंततस्तैस्तुप्रीणातीहचतुर्विधम् ॥ अंगुष्ठेनप्र
देशिन्यालभेतचाक्षिणीनृप ॥ ८२ ॥ अनामिकांगुष्ठकाभ्यांनासिकामालभेन्नृप ॥ मध्यमांगुष्ठाभ्यांमुखंसंस्पृशेद्भरतर्षभ ॥ ८३ ॥ कनि
ष्ठिकांगुष्ठकाभ्यांकर्णमालभतेनृप ॥ अंगुलीभिस्तथाबाहुमंगुष्ठेनतुमंडलम् ॥ ८४ ॥ नाभिंकुरुकुलश्रेष्ठशिरः[3]सर्वाभिरेवच ॥ अंगुष्ठोग्निर्म
हाबाहोप्रोक्तोवायुःप्रदेशिनी ॥ ८५ ॥ अनामिकातथासूर्यःकनिष्ठामववाविभो ॥ प्रजापतिर्मध्यमाज्ञेयातस्माद्भरतसत्तम ॥ ८६ ॥ एव
माचम्यविप्रस्तुप्रीणातिसततंजगत् ॥ सर्वाश्चदेवतास्तातलोकाश्चापिनसंशयः ॥ ८७ ॥ तस्मात्पूज्यःसदाविप्रःसर्वदेवमयोहिसः ॥ ब्राह्मे
णविप्रतीर्थेननित्यकालमुपस्पृशेत् ॥ ८८ ॥ कायत्रैदेशकाभ्यांवानपित्र्येणकदाचन ॥ हृद्गाभिःपूयतेविप्रःकंठगाभिस्तुभूमिपः ॥ ८९ ॥
वैश्योद्भिःप्राशिताभिस्तुशूद्रःस्पृष्टाभिरंततः ॥ उद्धृतेदक्षिणेपाणावुपवीत्युच्यतेबुधः ॥ ९० ॥ सव्येनप्राचीनावीतीनिवीतीकंठसंज्ञिते ॥
मेखलामाजिनंदंडमुपवीतंकमंडलुम् ॥ ९१ ॥ अप्सुप्रास्यविनष्टानिगृह्णीतान्यानिमंत्रवित् ॥ उपवीत्याचमेन्नित्यमंतर्जानुमहीपते ॥ ९२ ॥
एवंतुविप्रोह्याचांतःशुचितांयातिभारत ॥ यास्त्वेताःकरमध्येतुरेखाविप्रस्यभारत ॥ ९३ ॥ गंगाद्याःसरितःसर्वाज्ञेयाभारतसत्तम ॥ यान्यं
गुलिषुपर्वाणिगिरयस्तानिविद्धिवै ॥ ९४ ॥ सर्वदेवमयोराजन्करोविप्रस्यदक्षिणः ॥ हस्तोपस्पर्शनविधिस्तवाख्यातोमहीपते ॥ ९५ ॥ एषु

१ भारत-इ०पा० । २ नरः-इ०पा० । ३ सर्ववेदमयः-इ०पा० ।

सर्वेषुलोकेषुयेनाचांतोदिवंव्रजेत् ॥ ९६ ॥ इतिश्रीभविष्येमहापुराणेशतसहस्रार्धेसंहितायांब्राह्मेपर्वण्युपस्पर्शनविधिवर्णनंनामतृतीयोऽध्या
यः॥३॥सुमंतुरुवाच॥केशांतंषोडशेवर्षेब्राह्मणस्यविधीयते॥राजन्यबंधोर्द्वाविंशेवैश्यस्यत्र्यधिकेततः॥१॥अमंत्रकासदाकार्यास्त्रीणांचूडामही
पते ॥ संस्कारहेतोःकायस्ययथाकालंविभागशः ॥ २ ॥ वैवाहिकोविधिःस्त्रीणांसंस्कारोनैगमःस्मृतः ॥ निवसेद्वागुरोर्वापिगृहेवाग्निपरिक्रि
या ॥ ३ ॥ एषतेकथितोराजन्नौपनायनिकोविधिः ॥ द्विजातीनांमहाबाहोउत्पत्तिव्यंजकःपरः ॥ ४ ॥ कर्मयोगमिदानींतेकथयामिमहाब
ल ॥ उपनीयगुरुःशिष्यंप्रथमंशौचमादिशेत्॥५॥आचारमग्निकार्यंचसंध्योपासनमेवच ॥ अध्यापयेत्तुसच्छिष्यान्सदाचांतउदङ्मुखः ॥६॥
ब्रह्मांजलिकरोनित्यमध्याप्योविजितेंद्रितः ॥ लघुवासास्तथैकाग्रःसुमनाःसुप्रतिष्ठितः ॥ ७ ॥ ब्रह्मारंभेऽवसानेचपादौपूज्यौगुरोःसदा ॥
संहत्यहस्तावध्येयंसहिब्रह्मांजलिःस्मृतः ॥ ८ ॥ व्यत्यस्तपाणिनाकार्यमुपसंग्रहणंगुरोः ॥ सव्येनसव्यःस्प्रष्टव्योदक्षिणेनतुदक्षिणः ॥ ९ ॥
अध्येष्यमाणंतुगुरुर्नित्यकालमतंद्रितः ॥ अधीष्वभोइतिब्रूयाद्विरामोऽस्त्वितिवारयेत् ॥ १० ॥ ब्राह्मणःप्रणवंकुर्यादादावंतेचसर्वदा ॥ स्रव
त्यनोंकृतंपूर्वंपरस्ताच्चविशीर्यते ॥ ११ ॥ श्रूयतांचापिराजेंद्रयथोंकारंद्विजोऽर्हति ॥ प्राक्कूलान्पर्युपासीनःपवित्रैश्चैवपावितः ॥ १२ ॥
प्राणायामैस्त्रिभिःपूतस्ततस्त्वोंकारमर्हति ॥ ॐकारलक्षणंचापिशृणुष्वकुरुनंदन ॥ १३ ॥ अकारंचाप्युकारंचमकारंचप्रजाप
तिः ॥ वेदत्रयात्तुनिर्गृह्यभूर्भुवःस्वरितीतिच ॥ १४ ॥ त्रिभ्यएवतुवेदेभ्यःपादंपादमदूदुहत् ॥ तदित्यृचोऽस्याःसावित्र्याःपरमेष्ठीप्रजापतिः
॥ १५ ॥ एतदक्षरमेतांचजपन्व्याहृतिपूर्विकाम् ॥ संध्ययोरुभयोर्विप्रोवेदपुण्येनयुज्यते ॥ १६ ॥ सहस्रकृत्वस्त्वभ्यस्यबहिरेतात्त्रिकंद्विजः
॥ महतोऽप्येनसोमासात्त्वचेवाहिर्विमुच्यते ॥ १७ ॥ एतयर्चाविसंयुक्तःकालेचक्रियययास्वया ॥ विप्रक्षत्रियविड्योनिर्गर्हणांयातिसाधु
षु ॥ १८ ॥ शृणुष्वैकमनाराजन्परमंब्रह्मणोमुखम् ॥ ॐकारपूर्विकास्तिस्रोमहाव्याहृतयोऽव्ययाः ॥ १९ ॥ त्रिपदाचैवसावित्री
विज्ञेयाब्रह्मणोमुखम् ॥ योऽधीतेहन्यहन्येतांत्रीणिवर्षाण्यतंद्रितः ॥ २० ॥ सब्रह्मपरमभ्येतिवायुभूतःस्वमूर्तिमान् ॥ एकाक्षरंपरंब्रह्मप्राणा
यामःपरंतपः ॥ २१ ॥ सावित्र्यास्तुपरंनास्तिमौनात्सत्यंविशिष्यते ॥ होमक्रियातपःक्रियातथादानक्रियानृप ॥ २२ ॥ अक्षयांताःसदा

राजन्यथाहभगवान्मनुः ॥ अवरंत्वक्षरंज्ञेयंब्रह्माचैवप्रजापतिः ॥ २३ ॥ विधियज्ञात्सदाराजञ्जपयज्ञोविशिष्यते ॥ नानाविधैर्गुणोद्देशैः
सूक्ष्माख्यातैर्नृपोत्तम ॥ २४ ॥ उपांशुःस्याच्छतगुणःसाहस्रोमानसःस्मृतः ॥ येपाकयज्ञाश्चत्वारोविधियज्ञेनचान्विताः ॥ २५ ॥
सर्वेतेजपयज्ञस्यकलांनार्हंतिषोडशीम् ॥ जपादेवतुसंसिध्येद्ब्राह्मणोनात्रसंशयः ॥ २६ ॥ कुर्यादन्यंनवाकुर्यान्मैत्रोब्राह्मणउच्यते ॥ पूर्वांसं
ध्यांजपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ॥ २७ ॥ पश्चिमांतुसमासीनःसम्यगृक्षविभावनात् ॥ दिनस्यादौभवेत्पूर्वाशर्वर्यादौतथापरा ॥ २८ ॥
सनक्षत्रापराज्ञेयाअपरासदिवाकरा ॥ जपंस्तिष्ठन्परांसंध्यांनैशमेनोव्यपोहति ॥ २९ ॥ अपरांतुसमासीनोमलंहंतिदिवाकृतम् ॥ नोपति
ष्ठतियःपूर्वांनोपास्तेपश्चिमांनृप ॥ ३० ॥ सशूद्रवद्बहिःकार्यःसर्वस्माद्द्विजकर्मणः ॥ अपांसमीपेनियतोनैत्यकंविधिमास्थितः ॥ ३१ ॥
सावित्रीमप्यधीयीतगत्वाऽरण्यंसमाहितः ॥ वेदोपकरणेराजन्स्वाध्यायेचैवनैत्यके ॥ ३२ ॥ नात्रदोषोस्त्यनध्यायेहोममंत्रेषुवाविभो ॥ नैत्य
केनास्त्यनध्यायोब्रह्मसत्रंहितत्स्मृतम् ॥ ३३ ॥ ब्रह्माहुतिहुतंपुण्यमनध्यायवषट्कृतम् ॥ ऋगेकांयस्त्वधीयीतविधिनानियतोद्विजः ॥
॥ ३४ ॥ तस्यनित्यंक्षरत्येपापयोमेध्यंघृतंमधु ॥ अग्निशुश्रूषणंभैक्षमधःशय्यांगुरोर्हितम् ॥ ३५ ॥ आसमावर्तनात्कुर्यात्कृतोपन
यनोद्विजः॥आचार्यपुत्रशुश्रूषांज्ञानदोधार्मिकःशुचिः॥३६॥ आप्तःशक्तोऽर्थदःसाधुःस्वाध्याप्यादशधर्मतः ॥ नापृष्टःकस्यचिद्ब्रूयान्नचान्यायेन
पृच्छतः ॥ ३७ ॥ जानन्नपिहिमेधावीजडवल्लोकआचरेत् ॥ अधर्मेणचयःप्राहयश्चाधर्मेणपृच्छति ॥ ३८ ॥ तयोरन्यतरःप्रैतिविद्वेषंवा
निगच्छति ॥ धर्मार्थौयत्रनस्यातांशुश्रूषाचापितद्विधा ॥ ३९ ॥ नतत्रविद्यावप्तव्याशुभंबीजमिवोषरे ॥ विद्ययैवसमंकामंमर्तव्यंब्रह्मवा
दिना ॥ ४० ॥ आपद्यपिहिघोरायांनत्वेनामीरिणेवपेत् ॥ विद्याब्राह्मणमित्याहशेवधिस्तेऽस्मिरक्षमाम् ॥ ४१ ॥ असूयकायमाप्रदास्तथा
स्यांवीर्यवत्तमा ॥ शेवंसुखसुंशतीहकेचिज्ज्ञानंप्रचक्षते ॥ ४२ ॥ तौधारयतिवैयस्माच्छेवधिस्तेनसोच्यते ॥ यमेवतुशुचिंविद्यान्नियतं
ब्रह्मचारिणम्॥४३॥तस्मैमांब्रूहिविप्रायनिधिपायाप्रमादिने॥ब्रह्मयस्त्वननुज्ञातमधीयानादवाप्नुयात् ॥४४॥लौकिकंवैदिकंवापितथाध्यात्म
कमेवच॥सयातिनरकंघोरंरौरवंभीमदर्शनम्॥४५॥अणुमात्रात्मकंदेहंषोडशार्धमितिस्मृतम्॥आददीतयतोज्ञानंतंपूर्वमभिवादयेत् ॥४६॥

सावित्रीसारमात्रोपिवरोविप्रःसुयंत्रितः ॥ नायंत्रितस्त्रिवेदोऽपिसर्वाशीसर्वविक्रयी॥४७॥शय्याशनेध्याचरितेश्रेयसानसमाविशेत् ॥ शय्यास
नस्थश्चैवेनंप्रत्युत्थायाभिवादयेत् ॥ ४८ ॥ ऊर्ध्वंप्राणाह्युत्क्रामंतियूनःस्थविरआगते ॥ प्रत्युत्थानाभिवादाभ्यांपुनस्तान्प्रतिपद्यते ॥ ४९ ॥
अभिवादनशीलस्यनित्यंवृद्धोपसेविनः॥चत्वारिसम्यग्वर्धंतेआयुःप्रज्ञायशोबलम् ॥ ५० ॥ अभिवादपरोविप्रोज्यायांसमभिवादयेत् ॥ अ
सौनामाहमस्मीतिस्वनामपरिकीर्तयेत् ॥ ५१ ॥ नामधेयस्ययेकेचिदभिवादंनजानते ॥ तान्प्राज्ञोऽहमितिब्रूयात्स्त्रियःसर्वास्तथैवच ॥
॥ ५२ ॥ भोःशब्दंकीर्तयेदंतेस्वस्यनाम्नोभिवादने ॥ नाम्नःस्वरूपभावोहिभोभावऋषिभिःस्मृतः ॥ ५३ ॥ आयुष्मान्भवसौम्येतिवा
च्योविप्रोऽभिवादने ॥ अकारश्चास्यनाम्नोऽतेवाच्यःपूर्वाक्षरःप्लुतः ॥ ५४ ॥ योनवेत्त्यभिवादस्यविप्रःप्रत्यभिवादनम् ॥ नाभिवाद्यःस
विदुषायथाशूद्रस्तथैवसः ॥ ५५ ॥ अभिवादेकृतेयस्तुनकरोत्यभिवादनम् ॥ आशीर्वाकुरुशार्दूलसयातिनरकंध्रुवम् ॥ ५६ ॥ अभीति
भगवान्विष्णुर्वादयामीतिशंकरः ॥ द्वावेवपूजितौतेनयःकरोत्यभिवादनम् ॥ ५७ ॥ ब्राह्मणंकुशलंपृच्छेत्क्षत्रबंधुमनामयम् ॥ वैश्यंक्षेमं
समागम्यशूद्रमारोग्यमेवतु ॥ ५८ ॥ नवाच्योदीक्षितोनाम्नायवीयानपियोभवेत् ॥ भोभवत्पूर्वकत्वेनइतिस्वायंभुवोऽब्रवीत् ॥ ५९ ॥
परपत्नीतुयाराजन्नसंबद्धातुयोनितः ॥ वक्तव्याभवतीत्येवंसुभगेभगिनीतिच ॥ ६० ॥ पितृव्यान्मातुलान्राजञ्श्वशुरानृत्विजोगुरून् ॥
असावहमितिब्रूयात्प्रत्युत्थायजघन्यजः ॥ ६१ ॥ मातृष्वसामातुलानीश्वश्रूरथपितृष्वसा ॥ संपूज्यागुरुपत्नीचसमास्तागुरुभार्यया॥६२॥
ज्येष्ठस्यभ्रातुर्याभायासवर्णाहन्यहन्यापि ॥ पूजयन्प्रयतोविप्रोयातिविष्णुसदोनृप ॥ ६३ ॥ प्रवासादेत्यसंपूज्याज्ञातिसंबंधियोषितः ॥
पितुर्याभगिनीराजन्मातुश्चापिविशांपते ॥ ६४ ॥ आत्मनोभगिनीयाचज्येष्ठाकुरुकुलोद्वह ॥ सदासुमातृवद्वृत्तिमातिष्ठेद्भरतोत्तम ॥ ६५ ॥
गरीयसीततस्ताभ्योमाताज्ञेयानराधिप ॥ पुत्रमित्रभागिनेयाद्रष्टव्याह्यात्मनासमाः ॥ ६६ ॥ दशाब्दाख्यंपौरसख्यंपंचाब्दाख्यंकलाभृताम् ॥
अब्दपूर्वंश्रोत्रियाणांस्वल्पेनापिस्वयोनिषु ॥ ६७ ॥ ब्राह्मणंदशवर्षंचदशवर्षंचभूमिपम् ॥ पितापुत्रौविजानीयाद्ब्राह्मणस्तुतयोःपिता॥६८॥

१ माता मातृष्वसा चैव-इ०पा० । २ पुरुषोत्तम-इ०पा० ।

इत्येवंक्षत्रियापितावैश्यस्यापिपितामहः ॥ प्रपितामहश्चशूद्रस्यप्रोक्तोविप्रोमनीषिभिः ॥ ६९ ॥ वित्तंबंधुर्वयःकर्मविद्याभवतिपंचमी ॥
एतानिमान्यस्थानानिगरीयोयद्यदुत्तरम् ॥ ७० ॥ पंचानांत्रिषुवर्गेषुभूयांसिगुणवंतिच ॥ यस्यस्युःसोऽत्रमानार्हःशूद्रोपिदशमींगतः॥ ७१ ॥
चक्रिणोदशमीस्थस्यरोगिणोभारिणःस्त्रियाः ॥ स्नातकस्यतुराज्ञश्चपंथादेयोवरस्यच ॥ ७२ ॥ एषांसमागमेतातपूज्यौस्नातकपार्थिवौ ॥
आभ्यांसमागमेराजन्स्नातकोनृपमानभाक् ॥ ७३ ॥ अध्यापयेद्यस्तुशिष्यंकृत्वोपनयनंद्विजः ॥ सरहस्यंसकल्पंचवेदंभरतसत्तम ॥ ७४ ॥
तमाचार्यंमहाबाहोप्रवदंतिमनीषिणः ॥ एकदेशंतुवेदस्यवेदांगान्यपिवापुनः ॥ ७५ ॥ योध्यापयतिवृत्त्यर्थमुपाध्यायःसउच्यते ॥ निषे
कादीनिकार्याणियःकरोतिनृपोत्तम ॥ ७६ ॥ अध्यापयतिचान्येनसविप्रोगुरुरुच्यते ॥ अग्न्याधेयंपाकयज्ञानग्निष्टोमादिकान्मखान् ॥७७॥
यःकरोतिवृतोयस्यसतस्यर्त्विगिहोच्यते ॥ यआवृणोत्यवितथंब्रह्मणाश्रवणावुभौ ॥ ७८ ॥ समातासपिताज्ञेयस्तंनद्रुह्येत्कथंचन[2] ॥ उपा
ध्यायादशाचार्यआचार्याणांशतंपिता ॥ ७९ ॥ सहस्रेणपितुर्मातागौरवेणातिरिच्यते ॥ उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदःपिता ॥ ८० ॥
ब्रह्मजन्माहिविप्रस्यप्रेत्यचेहचशाश्वतम् ॥ कामान्मातापिताचैनंयदुत्पादयतोमिथः ॥ ८१ ॥ संभूतिंतस्यतांविद्याद्योनावभिजायते ॥
आचार्यस्तस्यतांजातिंविधिवद्वेदपारगः ॥ ८२ ॥ उत्पादयतिसावित्र्यासासत्यासाऽजरामरा ॥ उपाध्यायमादितःकृत्वायेपूज्याःकथितास्त
व ॥ ८३ ॥ महागुरुर्महाबाहोसर्वेषामाधिकःस्मृतः ॥ सहस्रशतसंख्योऽसौआचार्याणामिदंमतम् ॥ ८४ ॥ चतुर्णामपिवर्णानांसमहागुरु
रुच्यते ॥ शतानीकउवाच ॥ यएतेभवताप्रोक्ताउपाध्यायमुखाद्विजाः ॥ ८५ ॥ विदिताएवमेसर्वेनमहागुरुरेवहि ॥ ८६ ॥ सुमंतुरुवाच ॥
जयोपजीवीयोविप्रःसमहागुरुरुच्यते ॥ अष्टादशपुराणानिरामस्यचरितंतथा ॥ ८७ ॥ विष्णुधर्मादयोधर्माःशिवधर्माश्चभारत ॥ कार्ष्णं
वेदंपंचमंतुयन्महाभारतंस्मृतम् ॥ ८८ ॥ श्रौता[3]धर्माश्चराजेंद्रनारदोक्तामहीपते ॥ जयेतिनामएतेषांप्रवदंतिमनीषिणः ॥ ८९ ॥ एवंविप्र
कदंबस्यधा[4]रकःप्रवरःस्मृतः ॥ यस्त्वेतानिसमस्तानिपुराणानीहविंदति ॥ ९० ॥ भारतंचमहाबाहोससर्वज्ञोमतोनृणाम् ॥ तस्मात्सपू

१ भाविनः–इ०पा० । २ कदाचन–इ०पा० । ३ सौराः–इ०पा० । ४ वाचकः–इ०पा० ।

ज्योराजेंद्रवर्णैर्विप्रादिभिःसदा ॥ ९१ ॥ किंत्वयानश्रुतंवाक्यंयदाहभगवान्विभुः ॥ अल्पंवाबहुवायस्यश्रुतस्योपकरोतियः ॥ ९२ ॥ तमपी
हगुरुंविद्याच्छ्रुतोपक्रियायातथा ॥ ब्राह्मस्यजन्मनःकर्तास्वधर्मस्यचशासिता ॥ ९३ ॥ बालोऽपिविप्रोवृद्धस्यपिताभवतिधर्मतः ॥ अध्या
पयामासपितॄञ्छिशुरांगिरसःकविः ॥ ९४ ॥ पुत्रकाइतिहोवाचज्ञानेनपरिगृह्यतान् ॥ तेतमर्थमपृच्छंतदेवानागतमन्यवः ॥ ९५ ॥ देवा
श्चैतान्समेत्योचुर्न्याय्यंशिशुरुक्तवान् ॥ अज्ञोभवतिवैबालःपिताभवतिमंत्रदः ॥ ९६ ॥ अज्ञंहिबालमित्याहुःपितेत्येवतुमंत्रदम् ॥ पि
तामहेतिजयदामित्यूचुस्तेदिवौकसः ॥९७॥ जयोमंत्रास्तथावेदादेहमेकंत्रिधाकृतम् ॥ नहायनैर्नपलितैर्नमित्रेणनबंधुभिः ॥ ९८ ॥ ऋषयश्च
क्रिरेधर्मंयोऽनूचानःसनोमहान्॥ब्राह्मणक्षत्रियविशांशूद्राणांचविशांपते॥९९॥ज्येष्ठंवदंतिराजेंद्रसंदेहंशृणुवैयथा॥ज्ञानतोवीर्यतोराजन्धनतो
जन्मतस्तथा ॥ १०० ॥ शीलतस्तुप्रधानायेतेप्रधानामताम्म ॥ नतेनस्थविरोभवतियेनास्यपलितंशिरः ॥ १०१ ॥ योवैयुवाप्यधीयान
स्तंदेवाःस्थविरंविदुः ॥ यथाकाष्ठमयोहस्तीयथाचर्ममयोमृगः ॥ १०२ ॥ यश्चविप्रोनधीयानस्त्रयस्तेनामबिभ्रति ॥ यथायोषाऽफलास्त्री
षुयथागौर्गविचाफला ॥ १०३ ॥ यथाचाज्ञेऽफलंदानंतथाविप्रोऽनृचोऽफलः ॥ वैश्वदेवेनयेहीनाआतिथ्येनविवर्जिताः ॥ १०४ ॥ सर्वेतुवृष
लाज्ञेयाःप्राप्तवेदाअपिद्विजाः ॥ नानृग्ब्राह्मणोभवतिनवणिङ्नकुशीलवः ॥१०५॥ नशूद्रःप्रेषणंकुर्वन्नस्तेनोनाचिकित्सकः ॥ अव्रताह्यनधीया
नायत्रभैक्ष्यचराद्विजाः ॥ १०६ ॥ तंग्रामंदंडयेद्राजाचोरभक्तप्रदोहिसः ॥ संतुष्टोयत्रवैविप्रःसाग्निकःकुरुनंदन ॥ १०७ ॥ यातिसाफल्य
तांवेदैर्देवैरेवंहिभाषितम् ॥ वेदैरुक्तंयथावीरसुरज्येष्ठमुपेत्यवै ॥ १०८ ॥ वेपंतेब्राह्मणाभूमावभ्यस्यंतिह्यनग्निकाः ॥ क्लिश्यंतेतेकिमर्थंहिमू
ढावैफलकांक्षया ॥ १०९ ॥ अनुष्ठानविहीनानामस्मानभ्यसतांभुवि ॥ क्लेशंहिकेवलंदेवनास्मदभ्यसनेफलम् ॥ ११० ॥ अनुष्ठानंपरंदेव
अस्मत्स्वभ्यसनात्सदा ॥ इत्येवंराजशार्दूलवेदाऊचुर्हिवैधसम् ॥ १११ ॥ तस्माच्चवेदाभ्यसनादनुष्ठानंपरंमतम् ॥ चत्वारोवात्रयोवापिय
द्ब्रूयुर्वेदपारगाः ॥११२॥ सधर्मइतिविज्ञेयोनेतरेषांसहस्रशः ॥ यद्वदंतितमोमूढामूर्खाधर्ममजानतः ॥ ११३ ॥ तत्पापंशतधाभूत्वावक्तारमनु

१ मिथः–इ०पा० । २ धार्मिकः–इ०पा० । ३ न सत्यं शिशुरुक्तवान्–इ०पा० । ४ नामधारकाः–इ०पा० ।

गच्छंति ॥ शौचहीनेव्रतभ्रष्टेविप्रेवेदविवर्जिते ॥ ११४ ॥ दीयमानंरुदत्यन्नंकिंमयादुष्कृतंकृतम् ॥ जयोपजीविनेदत्तंयदात्मानंप्रपश्यति
॥ ११५ ॥ नृत्यतिस्मतदाराजन्करमुद्धृत्यभारत ॥ विद्यातपोभ्यांसंपन्नेब्राह्मणेगृहमागते ॥ ११६ ॥ क्रीडंत्यौषधयःसर्वायास्यामःपरमां
गतिम् ॥ [1]अव्रतानाममंत्राणामजयानांचभारत ॥ ११७ ॥ प्रतिग्रहोनदातव्योनाशिलातारयेच्छिलाम् ॥ श्रोत्रियायैवदेयानिह
व्यकव्यानिनित्यशः ॥ ११८ ॥ अश्रोत्रियायदत्तानिनपितॄन्नापिदेवताः ॥ यस्यचैवगृहेमूर्खोदूरेचापिबहुश्रुतः ॥ ११९ ॥
बहुश्रुतायदातव्यंनास्तिमूर्खेव्यतिक्रमः ॥ ब्राह्मणातिक्रमोनास्तिमूर्खेजयविवर्जितः ॥ १२० ॥ ज्वलंतमग्निमुत्सृज्यनहिभस्म
निहूयते ॥ नचैतदेवमन्यंतेपितरोदेवतास्तथा ॥ १२१ ॥ सगुणंनिर्गुणंवापिब्राह्मणंदैवतंपरम् ॥ नातिक्रमेद्वृहासीनंब्रा
ह्मणं[2]विप्रकर्माणि ॥ १२२ ॥ अतिक्रमन्महाबाहोरौरवंयातिभारत ॥ गायत्रीमात्रसारोपिब्राह्मणःपूज्यतांगतः ॥ १२३ ॥ गृहा
सन्नोविशेषेणनभवेत्पतितस्तुसः ॥ धान्यशून्योयथाग्रामोयथाकूपश्चनिर्जलः ॥ ब्राह्मणश्चानधीयानस्त्रयस्तेनामधारकाः ॥ १२४ ॥
यस्त्वेकपंक्त्यांविषमंददातिस्नेहाद्भयाद्वा यदिवार्थहेतोः ॥ वेदेषुदृष्टमृषिभिश्चगीतंतांब्रह्महत्यांमुनयोवदंति ॥ १२५ ॥ अहिंसयैवभूता
नांकार्यंश्रेयोऽनुशासनम् ॥ वाक्चैवमधुराश्लक्ष्णाप्रयोज्याधर्ममीप्सता ॥ १२६ ॥ यस्यवाङ्मनसीशुद्धेसत्यगुप्तेचभारत ॥ सवैसर्व
मवाप्नोतिवेदांतोपगतंफलम् ॥ १२७ ॥ नारुंतुदः स्यादार्तोपिनपरद्रोहकर्मधीः ॥ ययास्योद्विजतेवाचंनचत्तांसमुदीरयेत् ॥ १२८ ॥ यत्करोतिशुभं
वाचाप्रोच्यमानामनीषिभिः ॥ श्रूयतांकुरुशार्दूलसदाचापितथोच्यताम् ॥ १२९ ॥ नतथाशशीनसलिलंनचंदनरसोनशीतलच्छाया ॥
प्रह्लादयतिचपुरुषंयथामधुरभाषिणीवाणी ॥ १३० ॥ अर्हणाद्ब्राह्मणोनित्यमुद्विजेतविषादिव ॥ अमृतस्येवचाकांक्षेदपमानस्य
सर्वदा ॥ १३१ ॥ सुखंह्यवमतः शेतेसुखंच प्रतिबुध्यते ॥ सुखंचरतिलोकेस्मिन्नवमंताविनश्यति ॥ १३२ ॥ अनेनविधिनाराजन्संस्कृ
तात्माद्विजः शनैः ॥ गुरौवसन्संचिनुयाद्ब्रह्माधिगमिदंतपः ॥ १३३ ॥ तपोविशेषैर्विविधैर्व्रतैश्चविविधोदितैः ॥ वेदःकृत्स्नोधिगंतव्यःसरहस्योद्वि

१ अधमानाम्-इ०पा०। २ हि विकर्मणि-इ०पा०।

जन्मना ॥ १३४ ॥ वेदमेवाभ्यसेन्नित्यंतपस्तप्यन्द्विजोत्तमः ॥ वेदाभ्यासोहिविप्रस्यतपःपरमिहोच्यते ॥ १३५ ॥ आहैवसनखाग्रेभ्यः
परमंतप्यतेतपः ॥ १३६ ॥ यःसुप्तोपिद्विजोधीतेस्वाध्यायंशक्तितोन्वहम् ॥ योनधीत्यद्विजोवेदमन्यत्रकुरुतेश्रमम् ॥ १३७ ॥ सजीवन्नेवशू
द्रत्वमाशुगच्छतिसान्वयः॥नयस्यवेदोनजयोनविद्याश्वविशांपते॥१३८॥सशूद्रएवमंतव्यइत्याहभगवान्विभुः॥ मातुरग्रेचजननंद्वितीयंमौंजि
बंधने ॥ १३९ ॥ तृतीयंयज्ञदीक्षायांद्विजस्यविधिचोदितम् ॥ तत्रयद्ब्रह्मजन्मास्यमौंजीबंधनचिह्नितम् ॥ १४० ॥ तत्रास्यमातासावित्री
पितात्वाचार्यउच्यते ॥ वेदप्रदानात्त्वाचार्यंपितरंमनुरब्रवीत् ॥ १४१ ॥ नह्यस्यविद्यतेकर्मकिंचिदामौंजिबंधनात् ॥ नाभिव्याहारये
द्ब्रह्मस्वधानिनयनादृते ॥ १४२ ॥ शूद्रेणतुसमंतावद्यावद्वेदोनजायते ॥ कृतोपनयनस्यास्यव्रतादेशनमिष्यते ॥ १४३ ॥ब्रह्मणो
ग्रहणंचैव क्रमेणविधिपूर्वकम् ॥ यत्सूत्रंचापियच्चर्मयायाचास्यचमेखला ॥ १४४ ॥ वसनंचापियोदंडस्तद्वैतस्यव्रतेष्वपि ॥ सेवेतेमां
स्तुनियमान्ब्रह्मचारीगुरौवसन् ॥ १४५ ॥ संनियम्येंद्रियग्रामंतपोवृद्ध्यर्थमात्मनः ॥ वृंदारकर्षिपितॄणांकुर्यात्तर्पणमेवहि ॥ १४६ ॥
नराणांचमहाबाहोनित्यंस्नात्वाप्रयत्नतः ॥ पुष्पंतोयंफलंचापिसमिदाधानमेवच ॥ १४७ ॥ नानाविधानिकाष्ठानिमृत्तिकांचत
थाकुशान् ॥ वर्जयेन्मधुमांसंचगंधमाल्यरथान्स्त्रियः ॥१४८॥ शुक्तानिचैवसर्वाणिप्राणिनांचैवहिंसनम् ॥ अभ्यंगमंजनंचाक्ष्णोरुपानच्छत्र
धारणम् ॥१४९॥ संकल्पंकामजंक्रोधंलोभंगीतंचवादनम् ॥ नर्तनंचतथाद्यूतंजनवादंतथानृतम् ॥१५०॥ परिवादंचापिविभोदूरतःपरिव
र्जयेत् ॥ स्त्रीणांचप्रेक्षणालंबमुपर्वीतंपरस्यच ॥ १५१ ॥ पुंश्चलीभिस्तथासंगंनकुर्यात्कुरुनंदन ॥ एकःशयीतसर्वत्रनरेतःस्कंदयेत्क्वचित्
॥ १५२॥कामाद्धिस्कंदयन्रेतोहिनास्तिव्रतमेवतु ॥ सुप्तःक्षरन्ब्रह्मचारीद्विजःशुक्रमकामतः ॥ १५३ ॥ स्नात्वार्कमर्चयित्वातुपुनर्मामित्यृ
चंजपेत् ॥ मनोरपितथाचात्रश्रूयतेपरमंवचः ॥ १५४ ॥ उदकुंभंसुमनसोगोशकृन्मृत्तिकांकुशान् ॥ आहरेद्यावदर्थानिभैक्ष्यंचापिहि
नित्यशः ॥ १५५ ॥ गृहेषुयेषांकर्तव्यंताञ्छृणुष्वनृपोत्तम ॥ स्वकर्मसुरतायेवैतथावेदेषुयेरताः ॥ १५६ ॥ यज्ञेषुचापिराजेंद्रये

१ विलयनादृते-इ०पा० । २ गुरावधिवसन्सदा-इ०पा० । ३वंचनाम्-इ०पा० । ४ उपरोधम्-इ०पा० ।

चश्रद्धासमाश्रिताः ॥ ब्रह्मचार्याहरेद्भैक्ष्यंगृहेभ्यःप्रयतोन्वहम् ॥ १५७ ॥ गुरोःकुलेनभिक्षेतस्वज्ञातकुलबंधुषु ॥ अलाभेत्वन्यगोत्रा
णांपूर्वंपूर्वंविवर्जयेत् ॥ १५८ ॥ सर्वंचापिचरेद्ग्रामंपूर्वोक्तानामसंभवे ॥ अंत्यवर्जंमहाबाहोइत्याहभगवान्विभुः ॥ १५९ ॥ वाचंनि
यम्यप्रयतस्त्वर्थिशस्त्रंचवर्जयेत् ॥ चातुर्वर्ण्यंचरेद्भैक्ष्यमलाभेकुरुनंदन ॥ १६० ॥ आराद्राहृत्यसमिधः संनिदध्याद्विहोपरि ॥ सायंप्रातस्तु
जुहुयात्ताभिरग्निमतंद्रितः ॥ १६१ ॥ भैक्ष्याचरणमकृत्वानतमग्निंसमिध्यवै ॥ अनातुरःसप्तरात्रमवकीर्णिव्रतंचरेत् ॥ १६२ ॥
वर्तनंचास्यभैक्ष्येण प्रवदंतिमनीषिणः ॥ तस्माद्भैक्षेणवैनित्यंनैकान्नादीभवेद्व्रती ॥ १६३ ॥ भैक्षेणव्रतिनोवृत्तिरुपवाससमास्मृता ॥
दैवत्येव्रतवद्राजन्पित्र्येकर्मण्यथर्षिवत्॥ १६४ ॥काममभ्यर्थितोऽश्नीयाद्व्रतमस्यनलुप्यते ॥ ब्राह्मणस्यमहाबाहोकर्मयत्समुदाहृतम्॥ १६५
राजन्यवैश्ययोर्नैतत्पंडितैःकुरुनंदन ॥ चोदितोऽचोदितोवापिगुरुणानित्यमेवहि[1] ॥ १६६ ॥ कुर्यादध्ययनेयोगमाचार्यस्यहितेषुच ॥ बुद्धीं
द्रियाणिमनसाशरीरंवाचमेवहि ॥ १६७ ॥ नियम्यप्रांजलिस्तिष्ठेद्वीक्षमाणोगुरोर्मुखम् ॥ नित्यमुद्धृतपाणिःस्यात्साध्वाचारस्तुसंयतः
॥ १६८ ॥ आस्यतामितिचोक्तःसन्नासीताभिमुखोगुरोः ॥ वस्त्रवेषैस्तथान्नैस्तुहीनः स्याद्गुरुसंनिधौ ॥ १६९ ॥ उत्तिष्ठेत्प्रथमंचास्य
जघन्यंचापिसंविशेत् ॥ प्रतिश्रवणसंभाषेतल्पस्थोनसमाचरेत् ॥ १७० ॥ नचासीनोनभुंजानोनतिष्ठन्नपराङ्मुखः ॥ आसीनस्यस्थितः
कुर्यादभिगच्छंश्चतिष्ठतः ॥ १७१ ॥ प्रत्युद्गंतातुव्रजतः पश्चाद्धावंश्चधावतः ॥ पराङ्मुखस्याभिमुखोदूरस्थस्यैत्यचांतिकम् ॥१७२॥
नमस्कृत्यशयानस्यनिदेशेतिष्ठेत्सर्वदा ॥ नीचंशय्यासनंचास्यसर्वदागुरुसंनिधौ ॥ १७३ ॥ गुरोश्चचक्षुर्विषयेनयथेष्टासनोभवेत् ॥
नामोच्चारणमेवास्यपरोक्षमपिसुव्रत ॥ १७४ ॥ नचैनमनुकुर्वीतगतिभाषणचेष्टितैः ॥ परीवादस्तथानिंदागुरोर्यत्रप्रवर्तते ॥ १७५॥ कर्णौ
तत्रपिधातव्यौगंतव्यंवाततोऽन्यतः ॥ परीवादाद्रासभःस्यात्सारमेयस्तुनिंदकः ॥ १७६ ॥ परिभोक्ताकृमिर्भवतिकीटोभवतिमत्सरी ॥ दूर
स्थोनार्चयेदेनंनक्रुद्धोनांतिकेस्त्रियाः ॥ १७७ ॥ यानासनगतोराजन्नवरुह्याभिवादयेत् ॥ प्रतिकूलेसमानेतुनासीतगुरुणासह ॥ १७८ ॥

[1] चोदितो वापि गुरुणा नित्यमेव हि पार्थिव-इ०पा० ।

अशृण्वतिगुरौराजन्नकिंचिदपिकीर्तयेत् ॥ गोश्वोष्ट्रयानप्रासादप्रस्तरेषुकटेषुच ॥ १७९ ॥ आसीतगुरुणासार्धंशिलाफलकनौषुच ॥
गुरोर्गुरौसन्निहितेगुरुवद्वृत्तिमाचरेत् ॥ १८० ॥ गुरुपुत्रेषुचार्येषुगुरोश्चैवस्वबंधुषु ॥ बालः समानजन्मावाविशिष्टोयज्ञकर्मणि ॥१८१॥
अध्यापयन्गुरुसुतोगुरुवन्मानमर्हति ॥ उत्सादनमथांगानांस्थापनोच्छिष्टभोजने ॥ १८२ ॥ पादयोर्नैजनंराजन्गुरुपुत्रेषुवर्जयेत् ॥ गुरु
वत्प्रतिपूज्यास्तुसवर्णागुरुयोषितः ॥ १८३ ॥ असवर्णास्तुसंपूज्याः प्रत्युत्थानाभिवादनैः ॥ अभ्यंजनंस्नापनंचगात्रोत्सादनमेवच
॥ १८४ ॥ गुरुपत्न्यानकार्याणिकेशानांचप्रसाधनम् ॥ गुरुपत्नींतुयुवतींनाभिवाद्येतपादयोः ॥ १८५ ॥ पूर्णविंशतिवर्षेणगुणदो
षौविजानता ॥ स्वभावएवनारीणांनराणामिहदूषणम् ॥ १८६ ॥ अतोर्थान्नप्रमाद्यंतिप्रतिपाद्यविपश्चितः ॥ अविद्वांसमलंलोकेवि
द्वांसमपिवापुनः ॥ १८७ ॥ प्रमदाह्युत्पथंनेतुंकामक्रोधवशानुगम् ॥ मात्रास्वस्त्रादुहित्रावानविविक्तासनोभवेत् ॥ १८८ ॥ बलवा
निंद्रियग्रामोविद्वांसमपिकर्षति ॥ राजेंद्रगुरुपत्नीनांयुवतीनांयुवाभुवि ॥ १८९ ॥ विधिवद्वंदनंकुर्यादसावहमितिब्रुवन् ॥ विप्रोऽ
स्यपादग्रहणमन्वहंचाभिवादनम् ॥ १९० ॥ गुरुदारेषुकुर्वीतसतांधर्ममनुस्मरन् ॥ यथाखनन्खनित्रेणजलमाप्नोतिमानवः ॥ १९१ ॥
तथागुरुगतांविद्यांशुश्रूषुरधिगच्छति ॥ मुंडोवाजटिलोवास्यादथवास्याच्छिखीजटी ॥ १९२ ॥ नैनंग्रामेऽभिनिम्लोचेदर्कोनाभ्युदि
यात्कचित् ॥ तंचेदभ्युदियात्सूर्यःशयानंकामकारतः ॥ १९३ ॥ निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ सूर्येणह्यभिनिर्मुक्तः
शयानोभ्युदितश्चयः ॥ १९४ ॥ प्रायश्चित्तमकुर्वाणोयुक्तः स्यान्महतैनसा ॥ उपस्पृश्यमहाराजउभेसंध्येसमाहितः ॥ १९५ ॥ शुचौ
देशेजपञ्जप्यमुपासीतयथाविधि ॥ यदिस्त्रीयद्यवरजः श्रेयःकिंचित्समाचरेत् ॥ १९६ ॥ तत्सर्वमाचरेद्युक्तोयत्रवारमतेमनः ॥ धर्मार्थो
वुच्यतेश्रेयः कामार्थौधर्ममेवच ॥ १९७ ॥ अर्थएवेहवाश्रेयस्त्रिवर्गइतिसंस्थितिः ॥ पितामातातथाभ्राताआचार्याः कुरुनंदन ॥ १९८ ॥
नार्तेनाप्यवमंतव्याब्राह्मणेनविशेषतः ॥ आचार्योब्रह्मणोमूर्तिः पितामूर्तिः प्रजापतेः ॥ १९९ ॥ माताप्यथादितेर्मूर्तिर्भ्रातास्यान्मूर्तिरात्म

१ भार्यासु-इ०पा० । २ अतोऽर्थं प्रमाद्यंति प्रमाद्यास्तु विपश्चितः-इ०पा० । ३ अमृतम्-इ०पा० ।

नः ॥ यन्मातापितरौक्लेशंसहेतेसंभवेनृणाम् ॥ २०० ॥ नतस्यनिष्कृतिःशक्याकर्तुंवर्षशतैरपि ॥ तयोर्नित्यंप्रियंकुर्यादाचार्यस्यचभा
रत ॥ २०१ ॥ तेषुहित्रिषुतुष्टेषुतपः सर्वंसमाप्यते ॥ तेषांत्रयाणांशुश्रूषापरमंतपउच्यते ॥ २०२ ॥ नतैरनभ्यनुज्ञातोधर्ममन्यंसमाच
रेत् ॥ तएवहित्रयोलोकास्तएवत्रयआश्रमाः ॥ २०३ ॥ तएवचत्रयोवेदास्तएवोक्तास्त्रयोऽग्नयः ॥ मातावैगार्हपत्याग्निः पितावैदक्षिणः
स्मृतः ॥ २०४ ॥ गुरुराहवनीयश्चसाग्नित्रेतागरीयसी ॥ त्रिषुतुष्टेषुचैतेषुत्रींल्लोकाञ्जयतेगृही ॥ २०५ ॥ दीप्यमानः स्ववपुषादेववद्दिविमो
दते ॥ इमंलोकंपितृभक्त्यामातृभक्त्यातुमध्यमम् ॥ २०६ ॥ गुरुशुश्रूषयाचैवगच्छेच्छक्रसलोकताम् ॥ सर्वेतस्यादृताधर्मायस्यैतेत्रय
आदृताः ॥ २०७ ॥ अनादृतास्तुयस्यैतेसर्वास्तस्याफलाःक्रियाः ॥ यावत्त्रयस्तेजीवेयुस्तावन्नान्यत्समाचरेत् ॥ २०८ ॥ तेष्वेवनित्यंशुश्रूषां
कुर्यात्प्रियहितेरतः ॥ तेषामनुपरोधेनपार्थक्यंयद्यदाचरेत् ॥ २०९ ॥ तत्तान्निवदयेत्तेभ्योमनोवचनकर्मभिः ॥ त्रिष्वेतेष्वितिकृत्यंहिपुरुषस्यसमा
प्यते ॥ २१० ॥ एषधर्मःपरःसाक्षादुपधर्मोन्यउच्यते ॥ श्रद्दधानःशुभांविद्यामाददीतावरादपि ॥ २११ ॥ अंत्यादपिपरंधर्मंस्त्रीरत्नंदुष्कुलादपि ॥
विषादप्यमृतंग्राह्यंबालादपिसुभाषितम् ॥ २१२ ॥ अमित्रादपिसद्वृत्तममेध्यादपिकांचनम् ॥ स्त्रियोरत्नंनयोविद्याधर्मःशौचंसुभाषितम् ॥ २१३ ॥
विविधानिचाशिल्पानिसमादेयानिसर्वशः ॥ अब्राह्मणादध्ययनमापत्कालेविधीयते ॥ २१४ ॥ अनुव्रज्याचशुश्रूषायावदध्ययनंगुरोः ॥ नाब्रा
ह्मणेगुरौशिष्योवासमात्यंतिकंवसेत् ॥ २१५ ॥ ब्राह्मणेचाननूचानेकांक्षन्गतिमनुत्तमाम् ॥ यदित्वात्यंतिकोवासोरोचतेचगुरोःकुले ॥ २१६ ॥
युक्तःपरिचरेदेनमाशरीरविमोक्षणात् ॥ आसमाप्तेःशरीरस्ययस्तुशुश्रूषतेगुरुम् ॥ २१७ ॥ सगच्छत्यंजसाविप्रोब्रह्मणःसद्मशाश्वतम् ॥
नपूर्वंगुरवेकिंचिदुपकुर्वीतधर्मवित् ॥ २१८ ॥ स्नानायगुरुणाज्ञप्तःशक्त्यागुर्वर्थमाहरेत् ॥ क्षेत्रंहिरण्यंगामश्वंछत्रोपानहमेवच ॥ २१९ ॥ धान्यंवा
सांसिशाकंवागुरवेप्रीतमाहरेत् ॥ स्वर्गतेगांपरित्यज्यगुरौभरतसत्तम ॥ २२० ॥ गुणान्वितेगुरुसुतेगुरुदारेऽथवानृप ॥ सपिंडेवागुरोश्चापि
गुरुवद्वृत्तिमाचरेत् ॥ २२१ ॥ एतेष्वविद्यमानेषुस्थानासनविहारवान् ॥ प्रयुंजानोऽग्निशुश्रूषांसाधयेद्देहमात्मनः ॥ २२२ ॥ वीरस्यकुर्वंश्छु

१ आगमाः-इ०पा० । २ पवित्रम्-इ०पा० ।

श्रूषांयातिवीरसलोकताम् ॥ चरत्येवंहियोविप्रोब्रह्मचर्यमविप्लुतः ॥ २२३ ॥ सगत्वाब्रह्मसदनंब्रह्मणासहमोदते॥इत्येषकथितोधर्मःप्रथमंब्रह्म
चारिणः ॥ २२४ ॥ गृहस्थस्यापिराजेन्द्रशृणुधर्ममशेषतः ॥ कालेप्राप्यव्रतंविप्रऋतुयोगेनभारत ॥ २२५ ॥ प्रपालयन्व्रतंयातिब्रह्मसालो
क्यतांविभो ॥ सदोपनयनंशस्तंवसंतेब्राह्मणस्यतु ॥ २२६ ॥ क्षत्रियस्यततोग्रीष्मेप्रशस्तंमनुरब्रवीत् ॥ प्राप्तेशरदिवैश्यस्यसदोपनयनंप
रम् ॥ इत्येषात्रिविधःकालःकथितोव्रतयोजने ॥ २२७ ॥ इतिश्रीभविष्येमहापुराणेशतसहस्रार्धसंहितायांब्राह्मेपर्वणिउपनयनविधिवर्णनं
नामचतुर्थोऽध्यायः॥ ४ ॥छ॥ सुमंतुरुवाच ॥ षट्त्रिंशदब्दादिकंचर्यंगुरौत्रैवेदिकंव्रतम्॥तदर्धिकंपादिकंवाग्रहणांतिकमेवच॥१॥ वेदानधी
त्यवेदौवावेदंवापिनृपोत्तम ॥ अविप्लुतब्रह्मचर्योगृहस्थाश्रममावसेत् ॥ २ ॥ तंप्रतीतंस्वधर्मेणब्रह्मदायहरंपितुः ॥ स्रग्विणंतल्प[1]आसीनमर्हये
त्प्रथमंगवा ॥ ३ ॥ गुरुणासमनुज्ञातःसमावृत्तोयथाविधि ॥ उद्वहेतद्विजोभार्यांसवर्णांलक्षणान्विताम् ॥ ४ ॥ शतानीकउवाच ॥ लक्षणंद्वि
जशार्दूलस्त्रीणांवदमहामुने ॥ कीदृग्लक्षणसंयुक्ताकन्यास्यात्सुखदानृप ॥ ५ ॥ सुमंतुरुवाच ॥ यदुक्तंब्रह्मणापूर्वंस्त्रीलक्षणमनुत्तमम् ॥ श्रेय[3]
सेसर्वलोकानांशुभाशुभफलप्रदम् ॥ ६ ॥ तत्तेवच्मिमहाबाहोशृणुष्वैकमनानृप ॥ श्रुतेनयेनजानीषेकन्यांशोभनलक्षणाम् ॥ सुखासीनंसु
रश्रेष्ठमभिगम्यमहर्षयः ॥ ७ ॥ पप्रच्छुर्लक्षणंस्त्रीणांयत्पृष्टोऽहंत्वयाधुना ॥ प्रणम्यशिरसादेवमिदंवचनमब्रुवन् ॥ ८ ॥ भगवन्ब्रूहिनः सर्वं
स्त्रीणांलक्षणमुत्तमम् ॥ श्रेयसेसर्वलोकानांशुभाशुभफलप्रदम् ॥ ९ ॥ प्रशस्तामप्रशस्तांचजानीमोयेनकन्यकाम् ॥ तेषांतद्वचनंश्रुत्वावि
रिंचोवाक्यमब्रवीत् ॥ १० ॥ शृणुध्वंद्विजशार्दूलावच्मियुष्मास्वशेषतः ॥ प्रतिष्ठिततलास्सम्यग्रक्ताब्जसमन्विताः ॥ ११ ॥ ईदृशाश्चर
णाधन्यायोषितांभोगवर्धनाः ॥ करालैरतिनिर्मांसैरूक्षैरर्धशिरान्वितैः ॥ १२ ॥ दारिद्र्यंदुर्भगत्वंचप्राप्नुवंतिनसंशयः ॥ अंगुल्यःसंहतावृ
त्ताःस्निग्धाःसूक्ष्मनखास्तथा ॥ १३ ॥ कुर्वंत्यत्यंतमैश्वर्यंराजभावंचयोषितः ॥ ह्रस्वाःसुजीवितंह्रस्वाविरलावित्तहानये ॥ १४ ॥ दारि
द्र्यंमूलमग्नासुप्रेष्यंचपृथुलासुच ॥ परस्परसमारूढैस्तनुभिर्वृत्तपर्वभिः ॥ १५ ॥ बह्वनपिपतीन्हत्वादासीभवतिवैद्विजाः ॥ अंगुष्ठोन्नतपर्वाण

१ तत्र–इ०पा० । २ धन्या–इ०पा० । ३ ऋषीणां कुरुशार्दूल–इ०पा० ।

स्तुंगाग्राःकोमलान्विताः ॥ १६ ॥ रत्नकांचनलाभायविपरीताविपत्तये ॥ सुभगत्वंनखैःस्निग्धैराताम्रैश्चधनाढ्यता ॥ १७॥ पुत्राःस्युरुन्नतै
रेभिःसुसूक्ष्मैश्चापिराजता ॥ पांडुरैःस्फुटितैरूक्षैर्नीलैर्धूम्रैस्तथाखरैः ॥ १८ ॥ निःस्वताभवतिस्त्रीणांपीतैश्चाभक्ष्यभक्षणम् ॥ गुल्फाःस्नि
ग्धाश्चवृत्ताश्चसमारूढशिरास्तथा ॥ १९ ॥ यदिस्युर्नृपुरान्दघ्युर्बांधवाद्यैःसमाप्नुयुः ॥ अशिराःशरकांडाभाःसुवृत्तालपतनूरुहाः ॥ २० ॥
जंघाःकुर्वंतिसौभाग्यंयानंचगजवाजिभिः ॥ क्लिश्यतेरोमजंघास्त्रीभ्रमत्युद्धतपिंडिका ॥ २१॥ काकजंघापतिंहन्तिवाचाटाकपिलाचया ॥
जानुभिश्चैवमार्जारसिंहजान्वनुकारिभिः ॥२२॥श्रियमाप्यसुभाग्यत्वंप्राप्नुवंतिसुतांस्तथा॥घटाभैरध्वगानार्योनिर्मांसैःकुलटाःस्त्रियः॥२३ ॥
शिरालैरपिहिंस्राःस्युर्विश्लिष्टैर्धनवर्जिताः ॥ अत्यंतकुटिलैरूक्षैःस्फुटिताग्रैर्गुडप्रभैः ॥ २४ ॥ अनेकजैस्तथारोमैःकेशैश्चापितथाविधैः ॥
अत्यंतपिंगलानारीविषतुल्येतिनिश्चितम् ॥ २५ ॥ सप्ताहाभ्यंतरेपापापतिंहन्यान्नसंशयः ॥ हस्तिहस्तनिभैर्वृत्तैरंभाभैःकरभोपमैः ॥ २६॥
प्राप्नुवंत्यूरुभिःशश्वत्स्त्रियःसुखमनंगजम्॥दौर्भाग्यंबद्धमांसैश्चवधनंरोमशोरुभिः ॥२७ ॥तनुभिर्वधमित्याहुर्मध्यच्छिद्रेष्वनीशता॥संध्यावर्ण
समंचारुसूक्ष्मरोमान्वितंपृथु॥२८॥जघनंशस्यतेस्त्रीणांरतिसौख्यकरंद्विज ॥ अरोमकंभगंयस्याःसमंसुश्लिष्टसंस्थितम्॥२९॥अपिनीचकुलो
त्पन्नाराजपत्नीभवत्यसौ ॥ अश्वत्थपत्रसदृशःकूर्मपृष्ठोन्नतास्तथा ॥ ३० ॥ शशिबिंबनिभश्चापितथैवकलशाकृतिः ॥ भगःशस्ततमः
स्त्रीणांरतिसौभाग्यवर्धनः ॥ ३१ ॥ तिलपुष्पनिभोयश्चयश्चग्रेखुरसंनिभः ॥ द्वावप्येतौपरप्रैष्यंकुर्वातेचदरिद्रताम् ॥ ३२ ॥ उलूखलनि
भैःशोकंमरणंविवृताननैः ॥ विरूपैःपूतिनिर्मांसैर्गजसंनिभरोमभिः ॥ ३३ ॥ दौःशील्यंदुर्भगत्वंचदारिद्र्यमधिगच्छति ॥ कपित्थफलसं
काशःपीनोवलिविवर्जितः ॥ ३४ ॥ स्फीतःप्रशस्यतेस्त्रीणांनिंदितश्चान्यथाद्विजाः ॥ पयोधरभरानम्रप्रचलत्त्रिवलीगुरुः ॥ ३५ ॥ मध्यः
शुभावहःस्त्रीणांरोमराजीविभूषितः ॥ पणवाभैर्मृदंगाभैस्तथामध्यैर्यवोपमैः ॥ ३६ ॥ प्राप्नुवंतिभयावासक्लेशदौःशील्यमीदृशैः ॥ अव
क्रानुल्बणंपृष्ठमरोमशमगर्हितम् ॥ ३७ ॥ नानास्तरणपर्यंकरतिसौख्यकरंपरम् ॥ कुब्जमद्रोणिकंपृष्ठंरोमशंयदियोषितः ॥ ३८ ॥

१ आयतैः-इ०पा० ।

स्वप्नांतरेसुखंतस्यानास्तिहन्यात्पतिंचसा ॥ विपुलैःसुकुमारैश्चकुक्षिभिःसुबहुप्रजाः ॥ ३९ ॥ मंडूककुक्षिर्यानारीराजानंसाप्रसूयते ॥ उ
न्नतैर्वलिभिर्वंध्यासुवृत्तैःकुलटाःस्त्रियः ॥ ४० ॥ जारकर्मरतासास्यात्प्रव्रज्यांचसमाप्नुयात् ॥ उन्नताचनतैःक्षुद्राविषमैर्विषमाशया ॥ ४१ ॥
आयुरैश्वर्यसंपन्नावनिताहृदयैःसमैः ॥ सुवृत्तमुन्नतंपीनमदूरोन्नतमायतम् ॥ ४२ ॥ स्तनयुग्ममिदंशस्तमतोऽन्यदसुखावहम् ॥ उन्नतिःप्र
थमेगर्भेद्वयोरेकस्यभूयसी ॥ ४३ ॥ वामेतुजायतेकन्यादक्षिणेतुभवेत्सुतः ॥ दीर्घैतुचूचुकेयस्याःसास्त्रीधूर्तारतिप्रिया ॥ ४४ ॥ सुवृत्ते
तुपुनर्यस्याद्वेष्टिसापुरुषंसदा ॥ स्तनैःसर्पफणाकारैःश्वजिह्वाकृतिभिस्तथा ॥ ४५ ॥ दारिद्र्यमधिगच्छंतिस्त्रियःपुरुषचेष्टिताः ॥ अव
ष्टब्धवटीतुल्याभवंतिहितथाद्विजाः ॥ ४६ ॥ सुसमंमांसलंचारुशिरोरोमविवर्जितम् ॥ वक्षोयस्याभवेन्नार्याभोगान्भुंक्तेयथेप्सितान् ॥ ४७ ॥
हिंस्राभवतिवक्रेणदौःशील्यंरोमशेनतु ॥ निर्मांसेनतुवैधव्यंविस्तीर्णेकलहप्रिया ॥ ४८ ॥ चतस्रोरक्तगंभीरारेखाःस्निग्धाःकरेस्त्रियाः ॥
यदिस्युःसुखमाप्नोतिविच्छिन्नाभिरनीशता ॥ ४९ ॥ रेखाकनिष्ठिकामूलाद्यस्याःप्राताप्रदेशिनीम् ॥ शतमायुर्भवेत्तस्यास्त्रयाणामुन्नता
क्रमात् ॥ ५० ॥ संवृत्ताःसमपर्वाणस्तीक्ष्णाग्राःकोमलत्वचः ॥ समाह्यंगुलयोयस्याःसानारीभोगवर्धिनी ॥ ५१ ॥ बंधुजीवारुणैस्तुंगैर्न
खैरैश्वर्यमाप्नुयात् ॥ खरैर्वक्रैर्विवर्णाभैःश्वेतपीतैरनीशता ॥ ५२ ॥ रक्तैर्मृदुभिरैश्वर्यंनिश्छिद्रांगुलिभिर्द्विजाः ॥ स्फुटितैर्विषमैरूक्षैःक्लेशं
पाणिभिराप्नुयुः ॥ ५३ ॥ समरेखायवायासामंगुष्ठांगुलिपर्वसु ॥ तासांहिविपुलंसौख्यंधनंधान्यंतथाऽक्षयम् ॥ ५४ ॥ मणिबंधोऽव्यवच्छि
न्नोरेखात्रयविभूषितः ॥ ददातिनाचिरादेवभोगमायुस्तथाक्षयम् ॥ ५५ ॥ श्रीवत्सध्वजपद्माक्षगजवाजिनिवेशनैः ॥ चक्रस्वस्तिकवज्रासि
पूर्णकुंभनिभांकुशैः ॥ ५६ ॥ प्रासादच्छत्रमुकुटैर्हारकेयूरकुंडलैः ॥ शंखतोरणनिर्यूहैर्हस्तन्यस्तैर्नृपास्त्रियः ॥ ५७ ॥ यस्याःपाणितलेर
क्तायूपकुंभाश्वकुंडिकाः ॥ दृश्यंतेचरणेयस्यायज्ञपत्नीभवत्यसौ ॥ ५८ ॥ वीथ्यापणतुलामानैस्तथामुद्रादिभिःस्त्रियः ॥ भवंतिवणिजां
पत्न्योरत्नकांचनशालिनाम् ॥ ५९ ॥ दात्रयोक्त्रयुगाबंधफलोलूखललांगलैः ॥ भवंतिधनधानाढ्याःकृषीवलजनांगनाः ॥ ६० ॥ अनुन्नत

१ कुसुमाकारैः-इ०पा० । २ परकर्म-इ०पा० । ३ चुबुके-इ०पा० ।

शिरासंधिपीनंरोमविवर्जितम् ॥ गोपुच्छाकृतिनारीणांभुजयोर्युगुलंशुभम् ॥ ६१ ॥ निगूढग्रंथयोयस्याःकूर्परारोमवर्जिताः ॥ बाहवोल
लितायस्याःप्रशस्तावृत्तकोमलाः ॥ ६२ ॥ उन्नतावनताश्चैवनातिस्थूलानरोमशाः ॥ सुखदास्तुसदास्त्रीणांसौभाग्यारोग्यवर्धनाः ॥६३ ॥
स्थूलेस्कंधेवहेद्भारंरोमशेव्याधिताभवेत् ॥ वक्रस्कंधेभवेद्वंध्याकुलटाचोन्नतानते ॥ ६४ ॥ स्पष्टंरेखात्रयंयस्याग्रीवायांचतुरंगुलम् ॥ म
णिकांचनमुक्ताढ्यंसादधातिविभूषणम् ॥ ६५ ॥ अधनास्त्रीकृशग्रीवादीर्घग्रीवाचबंधकी ॥ ह्रस्वग्रीवामृतापत्यास्थूलग्रीवाचदुःखिता ॥
॥ ६६ ॥ अनुन्नतासमांसाचसमायस्याःकृकाटिका ॥ सुदीर्घमायुस्त्वस्यास्तुचिरंभर्ताचजीवति ॥ ६७ ॥ निर्मांसाबहुमांसाचाशिराला
रोमशातथा ॥ कुटिलाविकटाचैवविस्तीर्णानचशस्यते ॥६८॥ नस्थूलोनकृशोऽत्यर्थंनवक्रोनचरोमशः ॥ हनुरेवंविधःश्रेयांस्ततोन्योनप्रश
स्यते ॥ ६९ ॥ चतुरस्रमुखीधूर्तामंडलास्याशवाभवेत् ॥ अप्रजावाजिवक्रास्त्रीमहावक्राचदुर्भगा ॥ ७० ॥ श्ववराहवृकोलूकमर्कटास्या
श्चयाःस्त्रियः ॥ क्रूरास्ताःपापकर्मिण्यःप्रजाबांधववर्जिताः ॥ ७१ ॥ मालतीबकुलींभोजनीलोत्पलसुगंधियत् ॥ वदनंमुच्यतेनैतत्पान
तांबूलभोजनैः ॥ ७२ ॥ ताम्राभःकिंचिदालंभःस्थौल्यकार्श्यविवर्जितः ॥ अधरोयदितुंगश्चनारीणांभोगदःसदा ॥ ७३ ॥ स्थूलेकलह
शीलास्याद्विवर्णेचातिदुःखिता ॥ उत्तरोष्ठेनतीक्ष्णेनवनिताचातिकोपना ॥ ७४ ॥ जिह्वातनुतरावक्राताम्रादीर्घाचशस्यते ॥ स्थूलाह्र
स्वाविवर्णायावक्राभिन्नाचनिंदिता ॥ ७५ ॥ शंखकुंदेंदुधवलैःस्निग्धैस्तुंगैरसंधिभिः ॥ मिष्टान्नपानमाप्नोतिदंतैरेभिरनुन्नतैः ॥ ७६ ॥ सू
क्ष्मैरतिकृशैर्ह्रस्वैःस्फुटितैर्विरलैस्तथा ॥ रूक्षैश्चदुःखितानित्यंविकटैर्भामिनीभवेत् ॥ ७७ ॥ सुमृष्टदर्पणांभोजपूर्णेंविंबेंदुसंनिभम् ॥
वदनंवरनारीणामभीष्टफलदंस्मृतम् ॥ ७८ ॥ नस्थूलानकृशावक्रानातिदीर्घासमुन्नता ॥ ईदृशीनासिकायस्याःसाधन्यातुशुभंकरी ॥७९॥
उन्नतामृदुलायाचरेखाशुद्धानसंगता ॥ भ्रूवक्रतुल्यासूक्ष्माचयोषितांसासुखावहा ॥ ८० ॥ धनुस्तुल्याभिःसौभाग्यंवंध्यास्याद्दीर्घरोमभिः ॥
पिंगलासंगताह्रस्वादारिद्र्यायनसंशयः ॥ ८१ ॥ नीलोत्पलदलप्रख्यैराताम्रैश्चारुपक्ष्मभिः॥वनितानयनैरेभिर्भोगसौभाग्यभागिनी ॥८२ ॥



१ अदशा–इ०,अदशा–इ०च पा० । २ नेत्रतुल्याभिः–इ०पा० ।

खंजनाक्षीमृगाक्षीचवराहाक्षीवरांगना ॥ यत्रयत्रसमुत्पन्नामहांतंभोगमाप्नुते ॥ ८३ ॥ अगंभीरैरसंश्लिष्टैर्बहुरेखाविभूषितैः ॥
राजपत्न्योभवंतीहनयनैर्मधुपिंगलैः ॥ ८४ ॥ वायसाकृतिनेत्राणिदीर्घापांगानियोषिताम् ॥ अनाविलानिचारूणिभवंतिहिविभूतये ॥ ८५ ॥
गंभीरैःपिंगलैश्चैवदुःखिताःस्युश्चिरायुषः ॥ वयोमध्येत्यजेत्प्राणानुन्नताक्षीतुयांगना ॥ ८६ ॥ रक्ताक्षीविषमाक्षीचधूम्राक्षीप्रेतलोचना ॥
वर्जनीयासदानारीश्वनेत्राचैवदूरतः ॥ ८७ ॥ उद्भ्रांतकैःकरैश्चित्रैर्नयनैस्त्वंगनास्त्विह ॥ मद्यमांसप्रियानित्यंचपलाश्चैवसर्वतः ॥ ८८ ॥
करालाकृतयःकर्णानभःशब्दास्तुसंस्थिताः ॥ वहंतिविकसत्कांतिहेमरत्नविभूषणम् ॥ ८९ ॥ खरोष्ट्रनकुलोलूककपिलश्रवणाःस्त्रियः ॥
प्राप्नुवंतिमहद्दुःखंप्रायशःप्रव्रजंतिच ॥ ९० ॥ ईषदापांडुगंडायासुवृत्तापर्वणीत्विह ॥ प्रशस्तानिंदितात्वन्यारोमकूपकदूषिता ॥ ९१ ॥
अर्धेंदुप्रथमाभोगमरोमतुसमाहितम् ॥ भोगारोग्यकरंश्रेष्ठंललाटंवरयोषिताम् ॥९२॥ द्विगुणंपरिणाहेनललाटंविहितंचयत् ॥ शिरःप्रशस्तं
नारीणामधन्याहस्तिमस्तका ॥ ९३ ॥ सूक्ष्माःकृष्णामृदुस्निग्धाःकुंचिताग्राःशिरोरुहाः ॥ भवंतिश्रेयसेस्त्रीणामन्येस्युःक्लेशशोकदाः ॥९४॥
हंसकोकिलवीणालिशिखिवेणुस्वराःस्त्रियः ॥ प्राप्नुवंतिबहून्भोगान्भृत्यानाज्ञापयन्तिच ॥ ९५ ॥ भिन्नकांस्यस्वरानारीखरकाकस्वराच
या ॥ रोगंव्याधिंभयंशोकंदारिद्र्यंचाधिगच्छति॥९६॥हंसगोवृषचक्राह्वमत्तमातंगगामिनी ॥ स्वकुलंद्योतयेन्नारीमहिषीपार्थिवस्यच ॥९७॥
श्वशृगालगतिर्निंद्यायाचवायसवद्व्रजेत् ॥ दासीमृगगतिर्नारीद्रुतगामीचबंधकी ॥ ९८ ॥ फलिनीरोचनाहेमकुंकुमप्रभएवच ॥ वर्णःशुभ
करःस्त्रीणांयश्चदूर्वांकुरोपमः॥९९॥मृदूनिमृदुरोमाणिनात्यंतस्वेदजानिच॥सुरभीणिचगात्राणियासांताःपूजिताःस्त्रियः ॥ १०० ॥ नोद्वहेत्क
पिलांकन्यांनाधिकांगींनरोगिणीम् ॥ नालोमिकांनातिह्रस्वांनवाचाटांनपिंगलाम् ॥१०१॥ नर्क्षवृक्षनदीनाम्नींनांत्यपर्वतनामिकाम्॥नपक्ष्य
हिप्रेष्यनाम्नींनचभीषणनामिकाम् ॥१०२॥ अव्यंगांगींसौम्यनाम्नींहंसवारणगामिनीम् ॥ तनुलोमकेशदशनांमृद्वंगीमुद्वहेत्स्त्रियम् ॥१०३॥
महांत्यपिसमृद्धानिगोजाविधनधान्यतः ॥ स्त्रीसंबंधेदशैतानिकुलानिपरिवर्जयेत ॥ १०४ ॥ हीनक्रियंनिष्पुरुषंनिश्छंदोरोमशार्शसम् ॥

१ रुजं गता–इ०पा० । २ वृत्ताक्षी–इ०पा० ।

क्षयामयाव्यपस्मारिश्वित्रकुष्ठिकुलानिच ॥ १०५ ॥ पादौसगुल्फौप्रथमंप्रतिष्ठौजंघेद्वितीयंचसुजानुचक्रौ ॥ मेढ्रोरुगुह्यंचततस्तृतीयंनाभिः
कटिश्चेतिचतुर्थमाहुः ॥ १०६ ॥ उदरंकथयंतिपंचमंहृदयंषष्ठमथस्तनान्वितम् ॥ अथसप्तममंसजत्रुणीकथयंत्यष्टममोष्ठकंधरे ॥ १०७ ॥
नवमंनयनेचसभ्रुणीसललाटंदशमंशिरस्तथा ॥ अशुभेष्वशुभंदशाफलंचरणंचरणाद्यशुभेषुशोभनम् ॥ १०८ ॥ इदंमहात्मा
समहानुभावःशचीनिमित्तेगुरुरब्रवीद्द्विजाः ॥ शक्रेणपृष्टःसविशेषमुत्तमंसंलक्ष्यमुक्तंवरयोषलक्षणम् ॥ १०९ ॥ मत्सकाशात्पुनःश्रुत्वालक्षणं
पुरुषस्यच ॥ यथाधुनाभवद्भिस्तुश्रुतंमत्तोद्विजोत्तमाः ॥ ११० ॥ लक्षणेभ्यःप्रशस्तंतुस्त्रीणांसद्वृत्तमुच्यते ॥ सद्वृत्तमुक्त्वायास्त्रीसाप्रशस्ता
नचलक्षणैः ॥ १११ ॥ ईदृग्लक्षणसंपन्नांसुकन्यामुद्वहेत्तुयः ॥ ऋद्धिर्वृद्धिस्तथाकीर्तिस्तत्रतिष्ठतिनित्यशः ॥ ११२ ॥ इति श्रीभ
विष्येमहापुराणेशतसहस्रार्धसंहितायांब्राह्मेपर्वणिस्त्रीलक्षणवर्णनंनाम पञ्चमोऽध्यायः ॥ ५ ॥ छ ॥ शतानीकउवाच ॥ सद्वृत्तंश्रोतु
मिच्छामिदेवस्त्रीणांसुविस्तरात् ॥ उत्तमाधममध्यंचसंबंधेस्त्रीकृतेयथा ॥ १ ॥ सुमंतुरुवाच ॥ शतानीकमहाबाहोब्रह्मलोके
पितामहः ॥ उक्त्वासलक्षणंस्त्रीणांसद्वृत्तंचोक्तवान्पुनः ॥ २ ॥ यथोक्तंब्रह्मणातेषामृषीणांकुरुनंदन ॥ ऋषीणांवचनंश्रुत्वा
ब्रह्मावचनमब्रवीत् ॥ ३ ॥ शृणुध्वंद्विजशार्दूलाःस्त्रीणांसद्वृत्तमादितः ॥ वक्ष्येयुष्मास्वशेषेणलोकानुग्रहकाम्यया ॥ ४ ॥
त्रिवर्गप्राप्तयेवक्ष्येस्त्रीवृत्तंगृहमेधिनाम् ॥ प्राग्विद्यादीनुपादायतैरर्थांश्चयथाक्रमम् ॥ ५ ॥ विंदेतसदृशींभार्यांशास्त्रदृष्टेनकर्मणा ॥
गृहाश्रमोहिनिःस्वानांमहत्येषाविडंबना ॥ ६ ॥ तस्मात्पूर्वमुपादेयंवित्तमेवगृहैषिणा ॥ वरंसोढामनुष्येणतीव्रानरकवेदना ॥ ७ ॥
नत्वेवचगृहेदृष्टंपुत्रदारंक्षुधार्दितम् ॥ असंभवेशिशुंदृष्ट्वारुदंतंप्रार्थनापरम् ॥ ८ ॥ वज्रसारमयंमन्येहृदयंयन्नदीर्यते ॥ साध्वींभार्यांप्रियां
दृष्ट्वाकुचैलांक्षुत्कृशीकृताम् ॥ ९ ॥ अस्यदुःखस्यतत्रास्तिसुखंयत्समतांव्रजेत् ॥ रूक्षंविवर्णंक्षुधितंभूमिप्रस्तरशायिनम् ॥ १० ॥ पुत्रदारं
निजंदृष्ट्वाकिमकार्यंभवेन्नृणाम् ॥ बाहूत्तरीयंक्षुत्क्षामंदृष्ट्वादीनमुखंसुतम् ॥ ११ ॥ मृत्युरेवोत्सवःपुंसांव्यसनंजीवितंद्विजाः ॥ परिसीदत्स्वप

१ सनः–इ०पा० ।

त्येषुदृष्ट्वादीनमुखींप्रियाम् ॥ १२ ॥ वज्रकार्यशरीरास्तेयेनयांतिसहस्रधा ॥ तस्मादर्थविहीनस्यपुंसोदारपरिग्रहात् ॥ १३ ॥ कुतस्त्रिवर्ग
संसिद्धिर्यातनैवहितस्यसा ॥ अभार्यस्याधिकारोस्तिनद्वितीयाश्रमेतथा ॥ १४ ॥ तद्वदर्थविहीनानांसर्वत्रनाधिकारिता ॥ केचिदपत्यमे
वाहुस्त्रिवर्गावाप्तिसाधनम् ॥ १५ ॥ पुंसामर्थःकलत्रंचयेऽन्येनीतिविदोविदुः ॥ धर्मोपिद्विविधोयस्मादिष्टापूर्तक्रियात्मकः ॥ १६ ॥
सचदारात्मकःसर्वज्ञेयमर्थैकसाधनम् ॥ निजेनापिदरिद्रेण[1]लोकोलज्जातिबंधुना ॥ १७ ॥ परोपिहिमनुष्याणामैश्वर्यात्स्वजनायते ॥ नदरिद्रं
समीपेपिस्थितवंतंप्रपश्यति ॥ १८ ॥ दूरस्थमपिवित्ताढ्यमादराद्व्रजतेजनः ॥ तस्मात्प्रयततःपूर्वमर्थमेवप्रसाधयेत् ॥ १९ ॥ सहिमूलंत्रि
वर्गस्यगुणानांगौ[2]रवस्यच ॥ सर्वेपिहिगुणाविद्याकुलशीलादयोनृणाम् ॥ २० ॥ संतितस्मिन्नसंतोपिसंतिसंतोपिनासति ॥ शास्त्रंशिल्पंक
लाःकर्मयच्चान्यदपिचेष्टितम् ॥ २१ ॥ साधनंसर्वमर्थानामर्थोधर्मादिसाधनः ॥ साधनानांत्रिवर्गोस्तितंविनाकेवलंनृणाम् ॥ २२ ॥
अजागलस्तनस्येवनिधनायैवसंभवः ॥ प्राक्पुण्यैर्विपुलासंपद्धर्मकामादिहेतुना ॥ २३ ॥ भूयोधर्मेणसामुत्रतयातावितिचक्रमम् ॥
एकचक्रकमेतद्धिप्रोक्तमन्योन्यहेतुकम् ॥ २४ ॥ पूर्वपश्चिमबाहुभ्यामुत्तराधरमध्यमाः ॥ विज्ञायमतिमानेवंयस्त्रिवर्गंनिषेवते ॥ २५ ॥
संख्याशतसमायुक्तैरवाप्नोत्युत्तरोत्तरम् ॥ नाभार्यस्याधिकारोस्तित्रिवर्गेनिर्धनस्यवा ॥ २६ ॥ नाभार्यायाअतःपूर्वमर्थमेवप्रसाधयेत् ॥
तस्मात्क्रमागतैरर्थैःस्वयंवाधिगतैर्युतः ॥ २७ ॥ क्रियायोग्यैःसमर्थश्चकुर्याद्दारपरिग्रहम् ॥ अनुरूपेकुलेजातांश्रुतवित्तक्रियादिभिः
॥ २८ ॥ लभेतानिंदितांकन्यांमनोज्ञांधर्मसाधनाम् ॥ पुमानर्धपुमांस्तावद्यावद्भार्यांनविंदति ॥ २९ ॥ तस्माद्यथाक्रमंकालेकुर्या
द्दारपरिग्रहम् ॥ एकचक्रोरथोयद्वदेकपक्षोयथाखगः ॥ ३० ॥ अभार्योपिनरस्तद्वद[3]योग्यःसर्वकर्मसु ॥ पत्नीपरिग्रहाद्धर्मस्तथार्थोबहुला
भतः ॥ ३१ ॥ सत्प्रीतियोगात्कामोऽपित्रयमस्यांविदुर्बुधाः ॥ त्रिधाविवाहसंबंधोहीनतुल्याधिकैःसह ॥ ३२ ॥ तुल्यैः सहसमस्ते
षामितरौनीचमध्यमौ ॥ असमैर्निंद्यतेसद्भिरुत्तमैःपरिभूयते ॥ ३३ ॥ तुल्यैःप्रशस्यतेयस्मात्तस्मात्साधुतमोमतः ॥ कृत्वैवाधि

१लोको निजोऽप्यपार्थस्य शत्रुर्भवति भूमिप-इति पाठान्तरम् । २ रक्षणा यच-इ० पा० । ३ त्याज्यः सर्वेषु कर्मसु-इ०पा० ।

कसंबंधमपमानसंमश्नुते ॥ ३४ ॥ नचैषामानतिंगच्छेन्नैवनीचैःसहेष्यते ॥ उत्तमोऽपिचसंबंधोनीचैस्तत्समतांव्रजेत् ॥ ३५ ॥ अत
स्तंवर्जयेद्धीमान्निंदितंसदृशोत्तमैः ॥ विजातीयैश्चसंबंधंसहेच्छंतिनसूरयः ॥ ३६ ॥ उभयोर्भ्रश्यतेतेनयथाकोकिलयाशुकः ॥ तद्वाति
कुलबाह्यत्वादवश्यंचावमानतः ॥ ३७ ॥ प्रतिपत्तेरशस्यत्वाच्चोत्तमोपिनस्यते ॥ एकेऽपिपरिहर्तव्याअन्येपरिहरंत्युत ॥ ३८ ॥ त
स्माद्द्वावपिनैवेष्टौसंबंधावधमोत्तमौ ॥ एकपात्रादिभिर्येषामुपचारैःपरस्परम् ॥ ३९ ॥ प्रत्यहंवर्धतेस्नेहःसंबंधःसोभिधीयते ॥ यत्रा
वाहविवाहादावन्योन्याःप्रतिपत्तयः ॥ ४० ॥ स्पर्धयैवप्रवर्धंतेतेसंबंधाविदुर्बुधाः ॥ व्यसनेभ्युदयेवापियेषांप्राणैर्धनैरपि ॥ ४१ ॥ स
हैकप्रतिपत्तित्वंसंबंधानांसउत्तमः ॥ स्नेहव्यक्तौमनुष्याणांद्वावेवनिकषोपलौ ॥ ४२ ॥ तथाकृतज्ञतायांचव्यसनाभ्युदयागमौ ॥ सच
स्नेहोनृणांप्रायः[1]समेष्वेवाहिदृश्यते ॥ ४३ ॥ साम्यंचाप्युपगंतव्यंवित्तशीलकुलादिभिः ॥ तस्माद्विवाहसंबंधंसख्यमेकान्तकारिणाम् ॥
॥ ४४ ॥ सदृशैरेवकुर्वीतनोत्तमेनाप्य[2]नुत्तमैः ॥ ४५ ॥ इति श्रीभविष्येमहापुराणेशतसहस्रार्धसंहितायांब्राह्मेपर्वणिस्त्रीलक्षणसद्वृत्तवर्ण
नंनामषष्ठोऽध्यायः ॥ ६ ॥ छ॥ [3]ब्रह्मोवाच॥असपिंडाचयामातुरसगोत्राचयापितुः ॥ साप्रशस्ताद्विजातीनांदारकर्मणिमैथुने ॥ १ ॥ सहजो
नभवेद्यस्यानचविज्ञायतेपिता ॥ नोपयच्छेततांप्राज्ञःपुत्रिकाधर्मशंकया ॥ २ ॥ ब्राह्मणानांप्रशस्तास्यात्सवर्णादारकर्मणि ॥ काम
शस्तुप्रवृत्तानामिमाःस्युःक्रमशोऽवराः ॥ ३ ॥ क्षत्रस्यापिसवर्णास्यात्प्रथमाद्विजसत्तमाः ॥ द्वेचावरेतथाप्रोक्तेकामतस्तुनधर्मतः ॥ ४ ॥
वैश्यस्यैकावराप्रोक्तासवर्णाचैवधर्मतः ॥ तथावराकामतस्तुद्वितीयानतुधर्मतः ॥ ५ ॥ शूद्रैवभार्याशूद्रस्यधर्मतोमनुरब्रवीत् ॥
चतुर्णामपिवर्णानांपरिणेताद्विजोत्तमः ॥ ६ ॥ नब्राह्मणक्षत्रिययोरापद्यपिहितिष्ठतोः ॥ कस्मिंश्चिदपिवृत्तांतेशूद्राभार्योपदिश्य
ते ॥ ७ ॥ हीनजातिस्त्रियंमोहादुद्वहंतोद्विजातयः ॥ कुलान्येवनयंत्याशुससंतानानिशूद्रताम् ॥ ८ ॥ शूद्रमारोप्य[4]वेद्यांतुपतितोत्रिर्व
भूवह ॥ उतथ्यः पुत्रजननात्पतितत्वमवाप्तवान् ॥ ९ ॥ शूद्रस्यपुत्रमासाद्यशौनकः शूद्रतांगतः ॥ भृग्वादयोप्येवमेवपतितत्व

१ तस्मिन्काले हि दृश्यते–इ०पा० २ नापि चाधमैः–इ०पा० ।३ इतः प्रागेकस्मिन्पुस्तकेऽध्यायार्थकथार्थानुसंधानार्थम्–"अथ॥त्रिविधसंबंधनिर्णयः"–इ०पा० । ४ शय्यां तु–इ०पा० ।

मवाप्नुयुः ॥ १० ॥ शूद्रांशयनमारोप्यब्राह्मणोयात्यधोगतिम् ॥ जनयित्वासुतंतस्यांब्राह्मण्यादेवहीयते ॥ ११ ॥ दैवपि
त्र्यातिथेयानितत्प्रधानानियस्यतु ॥ नाश्नंतिपितरोदेवाः सचस्वर्गंनगच्छति ॥ १२ ॥ वृषलीफेनपीतस्यनिःश्वासोपहत
स्यच ॥ तस्यांचैवप्रसूतस्यनिष्कृतिर्नविधीयते ॥ १३ ॥ चतुर्णामपिवर्णानांप्रेत्यचेहहिताहितान् ॥ अष्टाविमान्समासेनस्त्रीविवाहान्निबोधत ॥ ब्राह्मोदैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥ गांधर्वोराक्षसश्चैवपैशाचश्चाष्टमोऽधमः ॥ १५ ॥ येयस्यधर्म्यो
वर्णस्यगुणदोषौचयस्ययौ ॥ तद्वःसर्वंप्रवक्ष्यामिप्रसवेचगुणागुणान् ॥ १६ ॥ षडानुपूर्व्याविप्रस्यक्षत्रस्यचतुरोऽवरान् ॥ विट्शू
द्रयोस्तुतानेवविद्याद्धर्म्यानराक्षसान् ॥ १७ ॥ चतुरोब्राह्मणस्याद्यान्प्रशस्तान्कवयोविदुः ॥ राक्षसंक्षत्रियस्यैकमासुरंवैश्यशूद्रयोः ॥ १८ ॥
पंचानांतुत्रयोधर्म्याद्वावधर्म्यौस्मृताविह ॥ पैशाचश्चासुरश्चैवनकर्तव्यौकदाचन ॥ १९ ॥ पृथक्पृथग्वामिश्रौवाविवाहौपूर्वचोदितौ ॥
गांधर्वोराक्षसश्चैवधर्म्यौक्षत्रस्यतौस्मृतौ ॥ २० ॥ आच्छाद्यचार्चयित्वाचश्रुतशीलवतेस्वयम् ॥ आहूयदानंकन्यायाब्राह्मोधर्मः प्रकी
र्तितः ॥ २१ ॥ यज्ञेतुविततेसम्यगृत्विजेकर्मकुर्वते ॥ अलंकृत्यसुतादानंदैवंधर्मंप्रचक्षते ॥ २२ ॥ एकंगोमिथुनंद्वेवावरा
दादायधर्मतः ॥ कन्याप्रदानंविधिवदार्षोधर्मःसउच्यते ॥ २३ ॥ सहोभौचरतांधर्ममितिवाचानुभाष्यच ॥ कन्याप्रदानमभ्यर्च्य
प्राजापत्योविधिःस्मृतः ॥ २४ ॥ ज्ञातिभ्योद्रविणंदत्त्वाकन्यायैचैवशक्तितः ॥ कन्याप्रदानंस्वाच्छंद्यादासुरोधर्मउच्यते ॥ २५ ॥
इच्छयान्योन्यसंयोगःकन्यायाश्चवरस्यच ॥ गांधर्वःसतुविज्ञेयोमैथुन्यःकामसंभवः ॥ २६ ॥ हत्वाछित्त्वाचभित्त्वाचक्रोशंतींरुदतींगृ
हात् ॥ प्रसह्यकन्याहरणंराक्षसोविधिरुच्यते ॥ २७ ॥ सुप्तांमत्तांप्रमत्तांवारहोयत्रोपगच्छति ॥ सपापिष्ठोविवाहानांपैशाचःप्रथि
तोऽष्टमः ॥ २८ ॥ अद्भिरेवद्विजाग्र्याणांकन्यादानंविशिष्यते ॥ इतरेषांतुवर्णानामितरेतरकाम्यया ॥ २९ ॥ योयस्यैषांविवाहानांमनुना
कीर्तितोगुणः ॥ सर्वंशृणुततंविप्राःसर्वंकीर्तयतोमम ॥ ३० ॥ दशपूर्वान्परान्वंश्यानात्मानंचैकविंशकम् ॥ ब्राह्मीपुत्रःसुकृतकृन्मोचयत्येनसःपितॄन् ॥

१ षडानुपूर्व्या विप्रस्य--इ०पा० । २ द्वौ धर्म्यौ वैश्यशूद्रयोः--इ०पा० ।

चयत्येनसोध्रुवम् ॥ ३१ ॥ ब्राह्मीपुत्रः सुकृतकृद्दैवोढाजंसुतंशृणु ॥ दैवोढजसुतोविप्राःसप्तसप्तपरावरान् ॥ ३२ ॥ आर्षोढजसुतः
स्त्रीणांपुरुषांस्तारयेद्द्विजाः ॥ ब्राह्मादिषुविवाहेषुचतुर्ष्वेवानुपूर्वशः ॥ ३३ ॥ ब्रह्मवर्चस्विनःपुत्राजायंतेशिष्टसंमताः ॥ रूपसत्वगुणोपेता
धनवंतोयशस्विनः ॥ ३४ ॥ पुत्रवंतोऽथधर्मिष्ठाजीवंतिचशतंसमाः ॥ इतरेषुनिबोधध्वंनृशंसानृतवादिनः ॥ ३५ ॥ जायंतेदु
र्विवाहेषुब्रह्मधर्मद्विषः सुताः ॥ अनिंदितैःस्त्रीविवाहैरनिंद्याभवतिप्रजा ॥ ३६ ॥ निंदितैर्निंदितानृणांतस्मान्निंद्यान्विवर्जयेत् ॥ करग्र
हणसंस्काराःसवर्णासुभवंतिवै ॥ ३७ ॥ असवर्णास्वयंज्ञेयोविधिरुद्वाहकर्मणि ॥ बाणः क्षत्रिययाग्राह्यः प्रतोदोवैश्यकन्यया ॥ ३८ ॥
वसनस्यदशाग्राह्याशूद्रयोत्कृष्टवेदने ॥ नकन्यायाःपिताविद्वान्गृह्णीयाच्छुल्कमण्वपि ॥ ३९ ॥ गृह्णन्हिशुल्कंलोभेनस्यान्नरोऽपत्यवि
क्रयी ॥ स्त्रीधनानितुयेमोहादुपजीवंतिबांधवाः ॥ ४० ॥ नारीयानानिवस्त्रंवातेपापायांत्यधोगतिम् ॥ आर्षेगोमिथुनंशुल्कंकेचि
दाहुर्मृषैवतत् ॥ ४१ ॥ अल्पोवापिमहान्वापिविक्रयस्तावदेवसः ॥ यासांनाददतेशुल्कंज्ञातयोनसविक्रयः ॥ ४२ ॥ अर्हणंतत्कुमारी
णामानृशंस्यंचकेवलम् ॥ इत्थंदारान्समासाद्यदेशमग्र्यंसमावसेत् ॥ ४३ ॥ ब्राह्मणोद्विजशार्दूलयइच्छेद्विपुलंयशः ॥ ऋषयऊचुः ॥
कोदेशः परमोब्रह्मन्कश्चपुण्योमतस्तव ॥ ४४ ॥ प्रवसन्यत्रविप्रेंद्रयशः प्राप्नोतिकंजज ॥ ब्रह्मोवाच ॥ नहीयतेयत्रधर्मश्चतुष्पात्स
कलोद्विजाः ॥ ४५ ॥ सदेशः परमोविप्राः सचपुण्योमतोमम ॥ विद्वद्भिः सेवितोधर्मोयस्मिन्देशेप्रवर्तते ॥ ४६ ॥ शास्त्रोक्त
श्चापिविप्रेंद्राःसदेशः परमोमतः ॥ ऋषयऊचुः ॥ विद्वद्भिः सेवितंधर्मंशास्त्रोक्तंचसुरोत्तम ॥ ४७ ॥ वदास्मासुसुरश्रेष्ठकौतुकंपर
मंहिनः ॥ ब्रह्मोवाच ॥ विद्वद्भिःसेवितःसद्भिर्नित्यमद्वेषरागिभिः ॥ ४८ ॥ हृदयेनाभ्यनुज्ञातोयोधर्मस्तंनिबोधत ॥ कामात्मतानप्रशस्तानचेहा
स्त्याप्यकामता ॥ ४९ ॥ काम्योहिवेदाधिगमःकर्मयोगश्चवैदिकः ॥ संकल्पाज्जायतेकामोयज्ञाद्यानिचसर्वशः ॥ ५० ॥ व्रतानियमधर्माश्चसर्वेसं
कल्पजाःस्मृताः ॥ कामाद्दतेक्रियाकाचिद्दृश्यतेनेहकर्हिचित् ॥ ५१ ॥ यद्यद्धिकुरुतेकाश्चित्तत्तत्कामस्यचेष्टितम् ॥ निगमोधर्ममूलंस्यात्स्मृ

१ परं ब्रह्मद्विषः--इ०पा० । २ महर्षयः--इ०पा० । ३ महीयते-इ०पा० । ४ नियमा धर्ममूलं स्युः--इ०पा० ।

तिशीलेतथैवच ॥ ५२ ॥ तथाचारश्चसाधूनामात्मनस्तुष्टिरेवच ॥ सर्वंतुसमवेक्षेतनिश्चितंज्ञानचक्षुषा ॥ ५३ ॥ श्रुतिप्राधान्यतोविद्वान्स्वधर्मेनिवसेतवै ॥ श्रुतिस्मृत्युदितंधर्ममनुतिष्ठन्सदानरः ॥ ५४ ॥ प्राप्यचेहपरांकीर्तिंयातिशक्रसलोकताम् ॥ श्रुतिस्तुधर्मोविज्ञेयोधर्मशास्त्रंतुवैस्मृतिः ॥ ५५ ॥ तेसर्वार्थेषुमीमांस्येताभ्यांधर्मोहिनिर्बभौ ॥ योऽवमन्येततेचोभेहेतुशास्त्राश्रयोद्विजः ॥ ५६ ॥ ससाधुभिर्बहिष्कार्योनास्तिकोवेदनिन्दकः ॥ वेदःस्मृतिःसदाचारःस्वस्यचप्रियमात्मनः ॥५७॥ एतच्चतुर्विधंविप्राःसाक्षाद्धर्मस्यलक्षणम् ॥ धर्मज्ञानंभवेद्विप्राअर्थकामेष्वसज्जताम्॥५८॥ धर्मंजिज्ञासमानानांप्रमाणान्निगमंपरम् ॥ निषेकादिश्मशानांतंमन्त्रैर्यस्योदितोविधिः ॥५९॥ अधिकारोभवेत्तस्यवेदेषुचजयेषुच॥सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम्॥६०॥तदेवानिर्मितंदेशंब्रह्मावर्तंप्रचक्षते ॥ तस्मिन्देशेयआचारःपारंपर्यक्रमागतः ॥६१॥ वर्णानांसांतरालानांससदाचारउच्यते॥कुरुक्षेत्रंचमत्स्याश्चपंचालाःशूरसेनयः॥६२॥एषब्रह्मर्षिदेशोवैब्रह्मावर्तादनंतरम् ॥ एतद्देशप्रसूतस्यसकाशादग्रजन्मनः ॥६३॥स्वंस्वंचरित्रंशिक्षंतिपृथिव्यांसर्वमानवाः ॥ हिमवद्विंध्ययोर्मध्येयत्प्राग्विनशनादपि॥६४॥ प्रत्यगेवप्रयागाच्चमध्यदेशःप्रकीर्तितः ॥ आसमुद्रात्तुवैपूर्वादासमुद्रात्तुपश्चिमात् ॥६५॥ तयोरेवांतरंगिर्योरार्यावर्त्तंविदुर्बुधाः॥ अटतेयत्रकृष्णागौर्मृगोनित्यंस्वभावतः ॥ ६६ ॥ सज्ञेयोयाज्ञिकोदेशोम्लेच्छदेशस्त्वतःपरः ॥ एतान्नित्यंशुभान्देशान्संश्रयीतद्विजोत्तमः ॥ ६७ ॥ यस्मिन्कस्मिंश्चनिवसेत्पादजोवृत्तिकर्शितः ॥ प्रकीर्तितेयंधर्मस्यबुधैर्योनिर्द्विजोत्तमाः ॥६८॥ संभवश्चास्यसर्वस्यसमासान्नतुविस्तरात् ॥६९॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिविवाहधर्मवर्णनंनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ कर्तव्यंयद्गृहस्थेनतादिदानींनिबोधत ॥ गदतोद्विजशार्दूलविस्तराच्छास्त्रतस्तथा ॥ १ ॥ वैवाहिकेऽग्नौकुर्वीतगृह्यंकर्मयथाविधि ॥ शुभदेशाश्रयश्चैवपत्नीवैवाहिकीगृहे ॥ २ ॥ स्वाश्रयेणविनाशक्यंनयस्माद्रक्षणादिकम्॥वित्तानामिवदाराणामतस्तद्विधिरुच्यते ॥३॥ हेतवोहित्रिवर्गस्यविपरीतास्तुमानद॥अरक्षणाद्भवंत्यस्माद

१ हि मानवः-इ०पा०। २ ब्रह्मसलोकताम्-इ०पा०। ३ वेदः-इ०पा०। ४ गिरिनद्योः-इ०पा०। ५ ब्राह्मणो वृत्तिकर्शितः-इ०पा०। ६ विपरीतार्थसाधकाः-इ०पा०।

मीषांरक्षणंमतम् ॥ ४ ॥ निसर्गात्पुंस्यसंतोषाद्गुणदोषविमर्षतः ॥ दुष्टानांचापिसंसर्गाद्रक्ष्याएवचयोषितः ॥ ५ ॥ पुरुषस्थानवेश्मानीत्रि
विधंप्राहुराश्रयम् ॥ वित्तानांरक्षणार्थमपूर्वाधिगमायच ॥ ६ ॥ कुलीनोनीतिमान्प्राज्ञःसत्यसंधोदृढव्रतः ॥ विनीतोधार्मिकस्त्यागी[1]विज्ञे
यःपुरुषाश्रयः ॥ ७ ॥ नगरेखर्वटेखेटेग्रामेचापिक्रमागते ॥ यात्रावशाद्वानिवसेद्धार्मिकाढ्यजनान्विते ॥ ८ ॥ गुरुणानुमतस्तत्रग्रामण्यादिजने
नवा ॥ प्रातिवेश्माद्यबाधेनशुद्धंकुर्यान्निवेशनम् ॥ ९ ॥ [2]द्वारचत्वरशालानांसर्वकारुकवेश्मनाम् ॥ द्यूतसूनासुरावेशनटराजानुजीविनाम्
॥ १० ॥ पाषंडदेववीथीनांराजमार्गंकुलस्यच ॥ दूरात्सुगुप्तंकर्तव्यंजीविकाविभवोचितम् ॥ ११ ॥ सापिधानैकनिष्काशंशुद्धपृष्ठंसमंततः ॥
सद्वृत्तासजनाकीर्णमदुष्टप्रातिवेशिकम् ॥ १२ ॥ प्रागुदक्प्रवणेदेशेवास्तुविद्याविधानतः ॥ प्रविभक्तक्रियाकांक्षंसर्वर्तुकमनोहरम् ॥ १३ ॥
अर्चास्नानोदकागारगोष्ठागारमहानसैः ॥ युक्तंगोवाजिशालाभिःसदासीभृत्यकाश्रयैः ॥ १४ ॥ बहिरंतःपुरेस्त्रीकंसर्वोपकरणैर्युतम् ॥
विभक्तशयनोद्देशमाप्तवृद्धैरधिष्ठितम् ॥ १५ ॥ अरक्षणाद्धिदाराणांवर्णसंकरजादयः ॥ दृष्टाहिबहवोदोषास्तस्माद्रक्ष्याःसदास्त्रियः ॥ १६ ॥
नह्यासांप्रमदंदद्यान्नस्वातंत्र्यंनविश्वसेत् ॥ विश्वस्तवच्चचेष्टेतन्याय्यंभर्त्सनमाचरेत् ॥ १७ ॥ नाधिकारंक्वचिद्दद्यादृतेपाकादिकर्मणः ॥
स्त्रीणांग्रामीणवत्ताहिभोगायालंसुशासिता ॥ १८ ॥ नित्यंतत्कर्मयोगेनताःकर्तव्यानिरंतराः ॥ इत्येवंसर्वदाव्याप्तेःस्यादविद्यानिराश्रया ॥ १९ ॥
[3]दौर्गंत्यमतिरूपंचाप्यसत्संगःस्वतंत्रता ॥ [4]पानाशनकथागोष्ठीप्रियत्वाकर्मशीलता ॥ २० ॥ कुहकेक्षणिकामुंडाभिक्षुकीसूतिकादिभिः ॥
[5]गोप्रसंगैस्तथासद्भिर्लिंगियाचकशिल्पिभिः ॥ २१ ॥ संवाहोद्यानयात्रासूद्यानेष्वामंत्रणादिषु ॥ प्रसंगस्तीर्थयात्रार्थधर्मेष्वप्रकटेषुच ॥ २२ ॥
विप्रयोगःसदाभर्त्रातज्ज्ञातिकुलनिःस्वता ॥ अमाधुर्यकदर्यत्वेभृशंपुंसांचवाच्यता ॥ २३ ॥ अतिक्रौर्यमतिक्षांतिरत्यंताभीतिपातनम् ॥

१ स्वामी-इ०पा०। २ द्वारचत्वरनागानांशस्त्रकारकवेश्मनाम् ॥ आतिन्यूनावरावेशनटरंगानुजीविनाम् ॥ पाखंडदेवतीर्थानाम्-इ०पा०। ३ सौगंध्यम
तिरूपत्वमुत्सृजेच्च पतिव्रता-इ०पा०। ४ पानगेयकथागोष्ठीप्रियत्वाकर्मशीलता-इ०पा०। ५ प्रसंगाद्यैस्तथासत्स्त्रीलिंगधारकशिल्पिभिः-इ०पा०।

स्त्रीभिर्जितत्वमत्यर्थंसत्यंतास्ताःसदोषताः ॥ २४ ॥ स्त्रीणांपत्युरधीनत्वात्पुमानेवहिनिंद्यते ॥ भर्तुरेवाहितज्ञाज्यंयद्भृत्यानामयोग्यता ॥ २५ ॥ तस्माद्यथोदितास्त्वेतारक्ष्याःशासनताडनैः ॥ ताडनैश्चयथाकालंयथावत्समुपाचरेत् ॥ २६ ॥ परिगृह्यबहून्दारानुपचारैःसमो भवेत् ॥ यथाक्रमोचितैःकर्मदानसत्कारवासनैः ॥ २७ ॥ प्रथमोभिजनोधर्मोयोग्यत्वंचसुपुत्रता ॥ पक्षोवित्तंविशेत्स्त्रीणांमानंतत्कारणं तथा ॥ २८ ॥ तस्मान्माननंकर्तव्यंहेयंचापिनतत्कृतम् ॥ गुरुत्वेलाघवेवापिसतांकार्येनिबंधनम् ॥ २९ ॥ आकस्मिकेप्रयुं जानःप्रेक्षावान्मानलाघवे ॥ सयत्किंचनकारित्वाच्चयमेवैतिलाघवम् ॥ ३० ॥ यथामानापमानौहिप्रयुज्येतानिमित्ततः ॥ तन्निमित्ताजन त्यागेप्रयतंतेतदाश्रिताः ॥ ३१ ॥ एतदेवह्यपत्यानांज्ञेयंमाननकारणम् ॥ यत्स्वापत्यनिमित्तेषुप्रधानेकुलयोग्यते ॥ ३२ ॥ तत्संयोगा त्सुखंपुंसांमहद्दुःखंवियोगतः ॥ तत्प्राप्तिःप्रतिहातव्यास्वार्थायैवप्रियाण्यपि ॥ ३३ ॥ अतःस्वार्थैकनिष्ठोऽयंलोकःसर्वोऽवसीयते ॥ तत्प्र सिद्धिर्भवेदस्तमानाद्भ्रांतिविधायकः ॥ ३४ ॥ ततोदारादिकाभृत्यानियंतव्यास्तथाद्विजाः ॥ यथेहामुत्रवाश्रेयःप्राप्नुयादुत्तरोत्तरम् ॥३५॥ स्त्रीणांधर्मार्थकामेषुनातिसंधानमाचरेत् ॥ तासांतेष्वभिसंधानाद्भवेदात्माभिसंहितः ॥ ३६ ॥ जायात्वर्धंशरीरस्यनृणांधर्मादिसाधने ॥ नातस्तासुव्यथांकांचित्प्रतिकूलंसमाचरेत् ॥ ३७ ॥ यज्ञोत्सवादौनाकस्मात्कांचिदासांविशेषयेत् ॥ वस्त्रतांबूलदानादौप्रतिपत्तौसमो भवेत् ॥ ३८ ॥ प्रियाप्रियत्वंभेदोहिकामतस्तुरहोगतः ॥ उपचारैःपुनर्वाक्यैस्तुल्यवृत्तिःप्रशस्यते ॥ ३९ ॥ आर्तवेतुपुनःसर्वाउपगम्याः प्रियाइव ॥ पूर्वाभिजातधर्मार्थापुत्रिणीचोत्तरोत्तरम् ॥ ४० ॥ उदग्गच्छेदनेनवविधिनानित्यमार्तवे ॥ तुल्यवृत्तिर्यथाकालंस्वंस्वंवासमखं डयन् ॥ ४१ ॥ नित्यपर्यायवासानामपादानमसून्विदुः ॥ ऋतुदुःखंप्रमोदश्चतथापूर्वसमागतः ॥ ४२ ॥ अन्यथासहयद्दुःखंसदसद्वार होगतम् ॥ उत्कंठितंवायत्किंचित्सपत्नीषुनतद्वसेत् ॥ ४३ ॥ यत्किंचिदन्यसंबंधमन्यथाकथितंमिथः ॥ तस्यकुर्यादनिवेदमात्मनैव

---

१ स्त्रीणांपत्युरधीनत्वंप्रमाणैरधिगम्यते–इ०पा०। २ हि पत्नीनाम्–इ०पा०। ३ समुत्पद्य निमित्तेषु प्रधाने गुणयोग्यता॥यत्संयोगाश्रयं पुंसां महद्दुःखं वियोगवत्–इ०पा०।

विचिंतयेत् ॥ ४४ ॥ अन्योन्यमत्सराख्यानैर्नतावाचापिभर्त्सयेत् ॥ गुणदोषौचविज्ञायस्वयंकुर्यान्निष्कलौ ॥ ४५ ॥ वस्त्रालंकारभोज्या
दौतदपत्येष्वनुक्रमात् ॥ मातृदोषाननाहत्यतुल्यदृष्टिःपिताभवेत् ॥ ४६ ॥ अन्यस्यान्यगतैर्दोषैर्दूषणंनहिनीतिमत् ॥ यत्तुतेषामपत्यं
तुतत्तुल्यमुभयोरपि ॥ ४७ ॥ प्रीतिंद्वेषमभिप्रायंशौचाशौचगतागमान् ॥ बहिरंतश्चजानीयाद्दासगूढचरैःसदा ॥ ४८ ॥ आत्मानमपिवि
ज्ञायचित्तवृत्तेरनीश्वरम् ॥ विश्वसेतकथंस्त्रीषुसर्वाविनयधामसु ॥ ४९ ॥ वृद्धदास्यःक्रमायाताधात्र्यश्चपरिचारिकाः ॥ तन्मातृपितृकाद्या
श्चषंडवृद्धाश्चरामताः ॥ ५० ॥ विविधैस्तत्कथाख्यानैस्तुल्यशीलदयान्वितैः ॥ प्रविश्यांतरभिप्रायंविद्यात्कालेप्रयोजितैः ॥ ५१ ॥ तेषु
तेषुकथार्थेषुकथ्यमानेषुलक्षयेत् ॥ मुखाकारादिभिर्लिंगैरभिप्रायंमनोगतम् ॥ ५२ ॥ सीतारुंधतिसंबंधैस्तथाशाकुंतलादिभिः ॥ सद
सच्चरिताख्यानैर्भावंविद्यात्प्रवृत्तितः ॥ ५३ ॥ तद्दुष्टानामदुष्टेषुसाधूनामितरेषुच ॥ प्रीतिःकथाप्रबंधेषुस्यात्संख्यंपुरुषेष्वितः ॥ ५४ ॥
एवमागमदुष्टाभ्यामनुमित्याचतत्त्वतः ॥ स्त्रीणांविदित्वाभिप्रायंवर्तेतासुयथोचितम् ॥ ५५ ॥ स्त्रीभ्योविप्रतिपन्नाभ्यःप्राणैरपिवियोज
नम् ॥ दृष्टंहिचर्यथाराज्ञामतोरक्षेत्प्रयत्नतः ॥ ५६ ॥ वेण्यागूढेनशास्त्रेणहतोराजाशुभध्वजः ॥ मेखलामणिनादेव्यासौवीरश्चनराधिपः
॥ ५७ ॥ भ्रात्रादेवीप्रयुक्तेनभद्रसेनोनिपातितः ॥ तथापुत्रेणकारूषोघातितोदर्पणासिना ॥५८॥ द्रौकाशिराजौवैवंद्यौचानंदापुरयोषिता ॥
विषंप्रयुज्यपंचत्वमानीतौपूजितात्मकौ ॥ ५९ ॥ एवमादिमहाभागाराजानोब्राह्मणाश्चह ॥ स्त्रीभिर्यत्रनिपात्यंतेतत्रान्योष्विहकाकथा ॥
॥ ६० ॥ तस्मान्नित्यप्रमत्तेनजायारक्ष्याश्चनित्यशः ॥ यथावदुपचर्याश्चगुणदोषानुरूपतः ॥ ६१ ॥ वैषम्यादुपचाराणांविकारैश्चा
निमित्तजैः ॥ विशेषेणसपत्नीकैरकस्माच्चापिवेदनैः ॥ ६२ ॥ असंभोगेचवाग्दंडपारुष्यादप्रसंगतः ॥ प्रद्वेषोभर्तरिस्त्रीणांप्रकोपश्चापि
जायते ॥ ६३ ॥ ततश्चायातिवाधक्यमुद्राढुश्चापिशत्रुताम् ॥ तस्मान्नतान्प्रयुंजीतदोषान्दारविनाशकान् ॥ ६४ ॥ नचैताःस्वकुलाचार
मधर्मंवापिचांजसा ॥ नगुणांश्चाप्युपेक्षंतेप्रकृत्याकिमुपीडिताः ॥ ६५ ॥ सतीत्वेप्रायशःस्त्रीणांप्रादिष्टंकारणत्रयम् ॥ परपुंसामसंप्रीतिःप्रि

१ भावंविद्यात्प्रवृत्तिभिः–इ० पा० । २ तथा–इ० पा० ।

येप्रीतिःस्वरक्षणे ॥ ६६ ॥ तस्मात्सुरक्षितानित्यमुपचारैर्यथोचितैः ॥ सुभृतानित्यकर्माणःकर्तव्यायोषितःसदा ॥ ६७ ॥ उत्तमांसामदानाभ्यांमध्यमाभ्यांतुमध्यमाम् ॥ पश्चिमाभ्यामुभाभ्यांचअधमांसंप्रसाधयेत् ॥ ६८ ॥ भेददंडौप्रयुज्यापिप्रागपत्याद्यपेक्षया ॥ तच्छिष्टानांतदापश्चात्सामदानंप्रसाधने ॥ ६९ ॥ यास्तुविध्वस्तचारित्राभर्तुश्चाहितकारिकाः ॥ त्याज्याएवास्त्रियःसद्भिःकालकूटविषोपमाः ॥ ७० ॥ इष्टाः[3]कुलोद्गताःसाध्व्योविनीताभर्तृवत्सलाः ॥ सर्वदासाधनीयास्ताःसंप्रदायोत्तरोत्तरैः[4] ॥ ७१ ॥ एवमेवयथोद्दिष्टंस्त्रीवृत्तंयोनुतिष्ठति ॥ प्राप्नोत्येवससंपूर्णंत्रिवर्गंलोकसंभवम् ॥७२॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिविवाहधर्मेषुस्त्रीविषयेनरवृत्तंनामाष्टमोऽध्यायः ॥८॥छ॥

॥ ॥ब्रह्मोवाच ॥ ॥ एवंस्त्रीषुमनुष्याणांवृत्तिरुक्तासमासतः ॥ सांप्रतंचमनुष्येषुस्त्रीणांसमुपदिश्यते ॥ १ ॥ सम्यगाराधनात्पुंसां[6]रतिर्वृत्तिश्चयोषितः ॥ पुत्राःस्वर्गाद्यदृष्टंचतस्मादिष्टोहितद्विधिः ॥ २ ॥ कर्तव्यंनामयत्किंचित्सर्वंविधिमपेक्ष्यते ॥ व्यक्तिमायातिवैफल्यंतदेवारब्धमन्यथा ॥ ३ ॥ विध्यपेक्षीणिसर्वाणिकार्याण्यविफलान्यपि[8] ॥ हेतुभूतास्त्रिवर्गस्यमहारंभाविशेषतः ॥ ४ ॥ सर्वसाध्याविधिज्ञानमागमैकनिबंधनम् ॥ साध्यंदृष्टमदृष्टंचद्वयंविधिनिषेधयोः ॥ ५ ॥ शास्त्राधिकारोनस्त्रीणांनग्रंथानांचधारणे ॥ तस्मादिहान्येमन्यंतेतच्छासनमनर्थकम् ॥ ६ ॥ आगमैकक्रियायोगेस्त्रीणामध्याधिकारिता ॥ मृतेभर्तरिसाध्वीस्यादित्यादौस्मृतिभाषितम् ॥ ७ ॥ तस्मात्कार्यमकार्यंवाविज्ञायप्रभुरागमात् ॥ गुणदोषेषुताःसम्यक्छास्तिराजाप्रजाइव ॥ ८ ॥ संत्येवप्रमदाःकाश्चिद्विशेषाधिगतागमाः ॥ यत्तुशास्त्राधिकारित्वंवचनंस्यान्निरर्थकम् ॥ ९ ॥ केचिद्वेदविदोविप्राःकृत्यैवैषाक्रियापराः ॥ तथापिजातिमात्रेणतएवात्राधिकारिणः[9] ॥ १० ॥ क्रियन्तेवेदशास्त्रज्ञैः प्रयोगाः शास्त्रलौकिकाः ॥ स्थितमेषामदूरेपिशास्त्रमेवनिबंधनम् ॥ ११ ॥ व्याधधीवरगोपालप्रभृतीनांचदृश्यते ॥ विष्टयंगारकसौर्यादिदिनानांपरिवर्जनम् ॥ १२ ॥ गम्यागम्यादिकार्येयंनियताचारसंस्थितिः ॥ लोकानांशास्त्रवाक्यानांप्राणाःस्वेष्टानिवं

---

१ स्वाहृताः–इ० पा० । २ सर्वाः–इ० पा० । ३ हृष्टाः कुलोद्भवाः–इ० पा० । ४ अप्रमादोत्तरोत्तरैः–इ० पा० । ५ स्त्रीवर्गंलोकसंमतम्–इ० पा० । ६ र तिर्भवति योषिताम्–इ० पा० । ७ स्थिर–इ० पा० । ८ अल्पफलानि च–इ० पा० । ९ तत्रापि–इ०पा० ।

धनाः ॥ १३ ॥ तस्माच्चतुर्णांवर्णानामाश्रमाणांचसर्वशः ॥ मुख्यगौणादिभेदानांज्ञेयाशास्त्राधिकारिता ॥ १४ ॥ पौर्वापर्यंतुविज्ञातु
मशक्यंलोकशास्त्रयोः ॥ तच्छास्त्रमेवमंतव्यंयथाकर्मशरीरवत् ॥ १५ ॥ आगमेचपुराणेचद्विधैवनास्तिकग्रहम् ॥ मार्गमहद्भिरा
चीर्णंप्रपद्येताविकल्पधीः ॥ १६ ॥ मूलंगृहस्थधर्माणांयस्मान्नार्यःपतिव्रताः ॥ तस्मादासांप्रवक्ष्यामिभर्तुराराधनेविधिम् ॥ १७ ॥
इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिआगमप्रशंसानामनवमोऽध्यायः ॥९॥ ७॥ ॥ ब्रह्मोवाच ॥ आराध्यानांहिसर्वेषामयमाराधनोविधिः ॥
चित्तज्ञानानुवृत्तिश्चाहितैषित्वंचसर्वदा ॥ १ ॥ कन्यापुनर्भूर्वेश्याचत्रिविधाएवयोषितः ॥ प्रियामध्याप्रियाचैवयोग्यामध्येतरातथा ॥ २ ॥
समाश्रेष्ठाचनीचाचभूयोपित्रिविधाःपुनः ॥ पूर्ववत्परयोर्वृत्तिरिष्टानुक्त्याप्रियाप्रिये ॥३॥ अधमाप्रिययोरत्रपतिपत्न्यादिकामता ॥ निषिद्धा
नांतुभक्षादितद्धियत्नाद्धिधीयते ॥ ४ ॥ एकद्वित्वबहुत्वाद्यायेभेदाःसमुदाहृताः ॥ ज्येष्ठादिवृत्तंवक्ष्यामस्तानशेषान्द्विजोत्तमाः ॥
॥ ५ ॥ वृत्तंचद्विविधंस्त्रीणांबाह्यमाभ्यंतरंतथा ॥ भर्तुरन्यजनेबाह्यंतस्याःशारीरमांतरम् ॥ ६ ॥ ज्ञातीतरविभागेनतद्बाह्यंद्विवि
धंपुनः ॥ पूज्यंतुल्यंकनिष्ठंचतत्प्रत्येकंपुनस्त्रिधा ॥ ७ ॥ रहोरतंप्रकाशंचशारीरमपितत्रिधा ॥ भर्तुश्चित्तानुकूल्येनप्रयोक्तव्यंयथोचि
तम् ॥ ८ ॥ मातापितास्वसाभ्रातापितृव्याचार्यमातुलाः ॥ सभार्याभगिनीभर्ताभर्तृमातृपितृष्वसा ॥ ९ ॥ धात्रीवृद्धांगनादिश्चयस्त
त्रातसमोजनः ॥ प्रथमोढासपत्नीचस्त्रीणांमान्यतमोगणः ॥ १० ॥ एषामेवत्वपत्यादिभगिनीभ्रातरस्तथा ॥ कनिष्ठाभर्तुरित्या
दिभार्याश्चात्समोमतः ॥ ११ ॥ हीनोऽन्यः शासनीयस्तुतत्रतावन्नविद्यते ॥ योग्यतासुतसौभाग्यैर्नयावत्स्यात्प्रतिष्ठिता ॥ १२ ॥
यत्रापिगुरुभर्तृणामानुकूल्येनसर्वदा ॥ वृत्तिःप्रशस्यतेस्त्रीणांपूर्जाचाराविरोधिनी ॥ १३ ॥ देवरैःपतिमित्रैश्चपरिहासक्रियोचितैः ॥
विविक्तदेशावस्थानंवर्जयेदतिनर्मच ॥ १४ ॥ प्रायशोहिकुलस्त्रीणांशीलविध्वंसहेतवः ॥ दुष्प्रयोगोरहोनित्यंस्वातंत्र्यमातिनर्मता ॥ १५ ॥

१ वृत्तज्ञानानुवृत्तिश्च-इ०पा० । २ पूर्ववत्परयोर्वृत्तिं विधान्मुक्त्वा प्रियागसम्-इ०पा० । ३ एकाद्विर्बहुनारीणाम्-इ०पा० । ४ सभक्ता-इ०पा० । ५ गुणः-इ०पा० । ६ पूज्यदाराविरोधिनी-इ०पा० ।

दुष्टसंगेत्वरास्त्रीणांयुवभिर्नर्मनोचितम् ॥ निर्भेषतास्वतंत्राणांसाफल्यंरहसिव्रजेत् ॥ १६ ॥ पुंसोदुष्टेंगिताकारान्दुष्टभावप्रयोजितान् ॥
भ्रातृवत्पितृवच्चैतान्पश्यंतीपरिवर्जयेत् ॥ १७ ॥ पुंसोऽन्याग्रहमालापस्मितावेप्रेक्षितानिच ॥ करांतरेणद्रव्याणांनिर्बंधग्रहणार्प
णम् ॥ १८ ॥ द्वारप्रदेशावस्थानंराजमार्गावलोकनम् ॥ प्रेक्षोद्यानादिशीलत्वंनिरुध्याद्देशमालयम् ॥ १९ ॥ बहूनांदर्शनेस्थानं
दृष्टिवाक्कायचापलम् ॥ ष्ठीवनत्वंससीत्कारमुच्चैर्हसितजल्पितम् ॥ २० ॥ सांगत्यंलिंगिदुष्टस्त्रीभिक्षुकीक्षणिकादिभिः ॥ मंत्रमंडलदीक्षा
यांसक्तिःसंवसनेषुच ॥ २१ ॥ इत्येवमादिदुर्वृत्तंप्रायोदुष्टजनोचितम् ॥ वर्जयेत्परिरक्षंतीकुलत्रितयवाच्यताम् ॥ २२ ॥ इतिश्रीभविष्ये
महापुराणेब्राह्मेपर्वणिस्त्रीदुर्वृत्तंनामदशमोऽध्यायः ॥१०॥छ॥ ब्रह्मोवाच ॥ यापतिंदैवतंपश्येन्मनोवाक्कायकर्मभिः ॥ तच्छरीरार्धजातेवसर्वं
दाहितमाचरेत् ॥१॥ तत्प्रियांप्रियवत्पश्येत्तद्द्वेष्यांद्वेष्यवत्सदा ॥ अधर्मानर्थयुक्तेभ्योऽयुक्ताचास्यनिवर्तते ॥२॥ प्रियंकिमस्यकिंपथ्यंसाम्यं
चास्यकथंभवेत् ॥ ज्ञात्वैवंसर्वभृत्येषुनप्रमाद्येतवैद्विजाः ॥ ३ ॥ देवतापितृकार्येषुभर्तुःस्नानाशनादिषु ॥ सत्कारेऽभ्यागतानांच
यथौचित्यंनहापयेत् ॥ ४ ॥ वेश्मात्माचशरीरंहिगृहिणीनांद्विधाकृतम् ॥ संस्कर्तव्यंप्रयत्नेनप्रथमंपश्चिमादपि ॥ ५ ॥ कृत्वा
वेश्मसुसंमृष्टंत्रिकालविहितार्चनम् ॥ वृत्तकर्मोपभोगानांसंस्कर्तव्यंयथोचितम् ॥ ६ ॥ प्रातर्मध्यापराण्हेषुबहिर्मध्यांतरेषुच ॥ गृहसं
मार्जनंकृत्वानिष्कारान्ननिशिक्षिपेत् ॥ ७ ॥ गोमहिष्यादिशालानांतत्पुरीषादिमात्रकम् ॥ व्यपनेयंतुयत्नेनसंमार्जन्याप्रसाधनम्
॥ ८ ॥ दासकर्मकरादीनांबाह्याभ्यंतरचारिणाम् ॥ पोषणादिविधिंविद्यादनुष्ठानंचकर्मसु ॥ ९ ॥ शाकमूलफलादीनांवल्लीनामौषध
स्यच ॥ संग्रहःसर्वबीजानांयथाकालंयथाबलम् ॥ १० ॥ ताम्रकांस्यायसादीनांकाष्ठवेणुमयस्यच[3] ॥ मृन्मयानांचभांडानांविविधानांचसं
ग्रहम् ॥११॥ कुंडकादिजलद्रोण्याकलशोदंचतालुकाः ॥शाकपात्राण्यनेकानिस्नेहानांगोरसस्यच ॥ १२॥ मुशलंकंडनीयंतुयंत्रकंचूर्णचा[4]
लनी ॥ दोहन्योनेत्रकंमंथामंडन्यःशृंखलानिच ॥ १३ ॥ संदंशःकुंडिकाशूलाःपट्टपिप्पलकोदषत् ॥ डाविकाहस्तकोदर्वीभ्राष्ट्रस्फुटलका

१ कालान्तरेण-इ०पा० । २ विरुद्धम्-इ०पा० । ३अश्ममयस्य-इ०पा० । ४ शूर्पवर्धिनी-इ०पा० ।

निच ॥ १४ ॥ तुलाप्रस्थादिमानानिमार्जन्यःपिटकानिच ॥ सर्वमेतत्प्रकुर्वीतप्रयत्नेनचसर्वदा ॥१५॥ हिंग्वादिकमथोजाजीपिपल्योमरिचा
निच ॥ राजिकाधान्यकंशुंठीत्रिचतुर्जातकानिच ॥१६॥ लवणंक्षारवर्णाश्चसौवीरकपरूषकौ ॥ द्विदलामलकंचिंचासर्वाश्चस्नेहजातयः॥१७॥
शुष्ककाष्ठानिवल्लूरमरिष्टापिष्टमाषयोः ॥ विकाराःपयसश्चापिविविधाःकंदजातयः ॥ १८ ॥ नित्यनैमित्तिकानांहिकार्याणामुपयोगतः ॥
सर्वमित्यादिसंग्राह्यंयथावद्विभवोचितम् ॥ १९ ॥ यत्कार्याणांसमुत्पत्तावुपाहर्तुंनदृश्यते ॥ तत्प्रागेवयथायोगंसंगृह्णीयात्प्रयत्नतः ॥२० ॥
धान्यानांवृष्टपिष्टानांक्षुण्णोपहतयोरपि ॥ भृशंशुष्कार्द्रसिद्धानांक्षयवृद्धीनिरूपयेत् ॥२१॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिगृहधर्मवर्ण
नंनामैकादशोऽध्यायः ॥११॥ ब्रह्मोवाच ॥ व्रीहीणांकोद्रवाणांचसारधर्मंसुदारकः ॥ कंगुकोद्रवयोर्ज्ञेयोवरटःपंचभागकः ॥ १ ॥ पंचभागा
न्प्रियंगूनांशालीनांचत्रयोऽष्टच ॥ चणकानांतृतीयांशःसमक्षुण्णंत्रयंविदुः ॥२॥ पानीययवगोधूमंपिष्टधान्यचतुष्टयम् ॥तुल्यमेवावगंतव्यंमु
द्गामाषास्तिलायवाः ॥ ३ ॥ पंचभागादिकाघृष्टागोधूमाःसक्तवस्तथा ॥ कुल्माषाःपिष्टमांसंचसम्यगर्धाधिकंभवेत् ॥ ४ ॥ सिद्धंत
देवद्विगुणंपुन्नाकोयावकस्तथा ॥ कंगुकोद्रवयोरन्नंचणकोदारकस्यच ॥ ५ ॥ द्विगुणंचीनकानांचव्रीहीणांचचतुर्गुणम् ॥ शालेःपंचगुणं
विद्यात्पुराणेत्वतिरिच्यते ॥ ६ ॥ क्रियापाकविशेषास्तुवृद्धिरेवोपादिश्यते ॥ निमित्तस्यवरान्नस्यतद्वृद्धिर्द्विगुणाभवेत् ॥ ७ ॥ तस्मा
द्भूयोविरूढस्यचतुर्भागोविवर्धते ॥ लाजाधानाःकलायाश्चभृष्टाद्विगुणवृद्धयः ॥ ८ ॥ भ्रष्टव्यानामतोऽन्येषांपंचभागोऽधिकोमतः ॥ चापका
नांचपिष्टानांपादहीनाःकलायजाः ॥ ९ ॥ मुद्गमाषमसूराणामर्धपादावरोभवेत् ॥ क्लिन्नशुष्कवरान्नानांहानिर्वृद्धिर्विशिष्यते ॥ १० ॥
तथार्धेनतुशोध्यानामाढक्यामुद्गमाषयोः ॥ मसूराणांचजानीयात्क्षयंपंचमभागकम् ॥ ११ ॥ षड्भागेनातसीतैलंसिद्धार्थककपित्थयोः
॥ तथानिंबकंदंबादौविद्यात्पंचमभागकम् ॥ १२ ॥ तिलेंगुदीमधूकानांनक्तमालकुसुंभयोः ॥ जानीयात्पादुकंतैलंखलमन्यत्प्रचक्षते॥१३॥

१ सारमर्धसुदारकः–इ०पा०। २ यमनीयवगोधूमम्–इ०पा०। ३ यवकोदारवस्यच–इ०पा०। ४ त्रिगुणम्–इ०पा०। ५ कुसुंभादेः–इ०पा०।
६माषकाणाम्–इ०पा०।

क्षेत्रकालक्रियादिभ्यःक्षयादेर्व्यभिचारतः ॥ प्रत्यक्षीकृत्यतान्सम्यगनुमित्यावधारयेत् ॥ १४ ॥ क्षीरदोषेगवां[1]प्रस्थंमहर्षीणांचस
र्पिषः ॥ पादाधिकमजावीनामुत्पादंतद्विदोविदुः ॥ १५ ॥ सुभूमितृणकालेभ्योवृद्धिर्वाक्षीरसर्पिषाम् ॥ अतस्तेषांविधातव्योह्यर्थ[2]देवाविनि
श्चयः ॥ १६ ॥ प्रत्यक्षीकृत्ययत्नेनपक्षमासांतरेतथा ॥ पयोवृत्तैर्गवादीनांकुर्यात्संभवनिर्णयम् ॥ १७ ॥ कार्पासकृमिकोषोत्थमं
धक्षौमादिकर्तनम् ॥ कुणिपंग्वंधयोषाभिर्विधवाभिश्चकारयेत् ॥ १८ ॥ बालवृद्धांधकार्पण्यंयत्कर्तव्यमवश्यतः ॥ विनियोगंन
येत्सर्वंप्रियोपग्रहपूर्वकम् ॥ १९ ॥ कर्मणामंतरालेषुप्रोषितेचापिभर्तरि ॥ स्वयंवैतदनुष्ठेयंनित्यानांचाविरोधतः ॥ २० ॥
शूद्राणांस्थूलसूक्ष्मत्वंवहुत्वंचव्ययाव्ययौ ॥ मत्वाविशेषंकुर्वीतचेतनप्रातिपत्तिषु ॥ २१ ॥ कारयेद्वस्त्रधान्यादि[3]स्वात्तवृद्धैरधि
ष्ठितम् ॥ शूद्राणांक्षयवृद्ध्यादिमंतव्यंवेतनानिच ॥ २२ ॥ क्षौमकार्पासयोर्विद्यात्सूत्रंपंचमभागकम् ॥ देशकालादिभागा
त्तुप्रत्यक्षाद्देवनिर्णयः ॥ २३ ॥ अवघातेनतूलस्यक्षयोविंशतिभागकम् ॥ छन्नांव्याप्तांतुवातेनतद्दूर्णांप्रचक्षते ॥ २४ ॥
पंचाशद्भागिकींहानिंसूत्रेकुर्वीतलक्ष[4]णात् ॥ वृद्धिस्तुमंडसंपर्काद्दशैकादशिकाभवेत् ॥ २५ ॥ श्लक्ष्णमध्यमसूत्राणामर्धाधिकसमंभवेत्
॥ स्थूलानांतुपुनर्मूल्यात्पादोनंवालचेतनम् ॥ २६ ॥ कर्मणोभूरिभेदत्वाद्देश[5]कालप्रभेदतः ॥ तद्विद्भ्यएवबोद्धव्योवालचेतननिश्चयः॥२७॥
स्थूलंदिनत्रयंदेयंमध्यमंचत्रिरात्रिकम् ॥ सूक्ष्ममापक्षतोमृ[6]ष्टंमासात्तत्परिकर्मकम् ॥ यदत्रक्षयवृद्ध्यादितदुत्सर्गप्रदर्शितम् ॥ २८ ॥ काल
कर्त्रादिभेदेनव्यभिचारोपिदृश्यते ॥ शय्यासनान्यनेकानिकंवलाश्चतुराश्रिकाः ॥ २९ ॥ कंबुकाश्चावकोषाश्चमध्यारक्ताश्चभूरिशः ॥ गुरु
बालादिवृद्धानामभ्यागतजनस्यच ॥ ३० ॥ भोगायानुगतोभर्ताकुर्याद्विविधमात्रकम् ॥ यदस्यश्वशुरादीनांकल्पितंशयनादिकम्
॥ ३१ ॥ भर्तुश्चैवविशेषेणतदन्येननसंकरेत् ॥ वस्त्रंमाल्यमलंकारंविधृतंदेवरादिभिः ॥ ३२ ॥ नधारयेन्नचैतेषामाक्रमेच्छयनानिवा ॥
पिण्याकनकर्कु[7]ट्टाश्चकालरूक्षाणियानिच ॥३३॥ हेयंपर्युषितान्नंगोभक्तेनोपयोजयेत् ॥ कुलानांवहुधेनूनांगोध्यक्षव्रजजीविनाम् ॥ ३४ ॥

१ ब्रह्मन्-इ०पा० । २ तत्तद्भागाविनिश्चयः-इ०पा० । ३ आयुवृद्धैः-इ०पा० । ४ लेखनादिति पाठः । ५ देशकालप्रसिद्धितः-इ० प० । ६ गृष्टम्-इ०पा० । ७ कोद्राश्च-इ०पा० ।

किलाटगविकादीनांभक्तार्थमुपयोजनम् ॥ दध्नःसमाहरेत्सर्पिर्दुहेद्वत्सान्नपीडयेत् ॥३५॥ वर्षाशरद्वसंतेषुद्वौकालावन्यदासकृत् ॥ तक्रंवाप्यु
पयुंजीतश्ववराहादिपोषणे॥३६॥पिण्याकक्केदनार्थंवाविक्रेयंवातदर्हयेत् ॥ वृत्तिंधान्यहिरण्येनगोपादीनांप्रकल्पयेत् ॥३७॥ तेहिक्षीरव्रतालो
भाद्रुपहन्युस्तदन्वयान् ॥ दोहकालंगवांदोग्धानातिवर्तेतवैद्विजाः ॥३८॥ प्रसरोदकयोगोपामंथकस्यचमंथकाः ॥ मासमेकंयथास्तन्यंमासमे
कंस्तनद्वयम् ॥३९॥ सततंपाययेदूर्ध्वंस्तनमेकंस्तनद्वयम्॥तिलपिष्टाभिःपिंडाभिस्तृणेनलवणेनच ॥४०॥ वारिणाचयथाकालंपुष्णीयादि
तिवत्सकान् ॥ जरद्गुर्गर्भिणीधेनुर्वत्सावत्सतरीतथा ॥४१॥ पंचानांसमभागेनघासंयूथेप्रकल्पयेत्॥एकोगोपालकस्तस्यत्रयाणामथवाद्वय
म् ॥४२॥ पंचानांवत्सकश्चैकःप्रवरास्तुपृथक्पृथक् ॥ गोचरस्यानयनार्थंव्यालानांत्रासनायच[1] ॥ ४३ ॥ घंटाकर्णान्निबध्नीयुःशोभारक्षार्थ
मेवच॥पशव्येव्यालनिर्मुक्तेदेशेभूरितृणोदके ॥ ४४ ॥ अभूतदुष्टेवारण्येसदाकुर्वीतगोकुलम् ॥ सगुप्तमटवीवासंनित्यंकुर्याद्दिजाविकम्
॥ ४५ ॥ ऊर्णांवर्षेद्विरादद्याच्चैत्राश्वयुजमासयोः ॥ यूथेवृषादशैतासांचत्वारःपंचवागवा ॥ ४६ ॥ अश्वोष्ट्रमहिषाणांचयथास्युःसुख
सेविताः ॥ विद्यात्कृषीवलादीनांयोगंकृषिककर्मसु ॥ ४७ ॥ भक्तवेतनलाभंचकर्मकालानुरूपतः ॥ क्षेत्रकेदारवाटेषुभृत्यानांकर्म
कुर्वताम् ॥ ४८ ॥ खलेषु[2]चविजानीयात्क्रियायोगंप्रतिक्षणम् ॥ योग्यतातिशयंमत्वाकर्मयोगेषुकस्यचित् ॥ ४९ ॥ ग्रासाच्छादशिरो
भ्यंगैर्विशेषंतस्यकारयेत् ॥ पद्मशाकादिवापानांकंदबीजादिजन्मनाम् ॥ ५० ॥ संग्रहःसर्वबीजानांकालेवापःसुभूमिषु ॥ जातानांरक्षणंस
म्यग्रक्षितानांचसंग्रहः ॥ ५१ ॥ तेषांचसंगृहीतानांयथावन्निवपक्रिया ॥ गृहमूलंस्त्रियश्चैवधान्यमूलागृहाश्रमः ॥ ५२ ॥ तस्माद्धान्येषुभ
क्तेषुनकुर्यान्मुक्तहस्तताम् ॥ धान्यंतुसंचितंनित्यंमितोभक्तपरिव्ययः ॥ ५३ ॥ नचान्नेमुक्तहस्तत्वंगृहिणीनांप्रशस्यते ॥ अल्पामित्येवनाव
ज्ञांचरेदन्नेषुवैद्विजाः ॥५४॥ मधुवल्मीकयोर्वृद्धिंक्षयंदृष्ट्वाजनस्यच ॥ येकेचिदिहनिर्दिष्टाव्यापाराःपुरुषोचिताः ॥ ५५ ॥ दंपत्योरैक्यमा
स्थायतद्विदानप्रसंगतः ॥ संत्येवपुरुषालोकेस्त्रीप्रधानाःसहस्रशः ॥ ५६ ॥ तेषुतासांप्रयोक्तृत्वाददोषइतिगृह्यताम् ॥ एवंयोग्यतयायु

१ शासनायच–इ०पा० । २ स्थलेषु–इ०पा०

क्ताःसौभाग्येनोद्यमेनच॥ ८७ ॥सम्यगाराध्यभर्तारंतत्रैनंवशमानयेत् ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिस्त्रीधर्मेद्वादशोऽध्यायः ॥१२॥
॥ ब्रह्मोवाच ॥ प्रथमंप्रतिबुध्येतप्रवर्तेतस्वकर्मसु ॥ पश्चाद्भृत्यजनस्यापिभुंजीतचशयीतच ॥ १॥ भर्त्राविरहितास्त्रीचश्वश्रूभ्यांचविशेषतः॥
देहलींनातिवर्तेतप्रतीकारेमहत्यपि ॥ २ ॥ उत्थायप्रथमंभर्तुरविज्ञातानानिष्क्रमेत् ॥ क्षपायांसावशेषायांरात्रौवावासरादिषु ॥ ३ ॥
तद्वासभवनस्यैवशनैराहूयकार्मिकान् ॥ स्वव्यापारेषुतान्सर्वांस्तत्रतत्रनियोजयेत् ॥ ४ ॥ विबुद्धस्यततोभर्तुर्निर्वर्त्यावश्यकंविधि
म् ॥ गृहकार्याणिसर्वाणिविदधीताप्रमादतः॥ ५ ॥ मुक्त्वावासकनेपथ्यंकर्मयोग्यंविधायच ॥ तत्कालोचितकर्तव्यमनुतिष्ठेद्यथाक्रमम्॥६॥
महानसंसुसंमृष्टंचुल्ल्यादिविहितार्चनम् ॥ सर्वोपकरणोपेतमसंबाधमनाविलम् ॥ ७ ॥ नचातिगुह्यंप्रकटंप्रविभक्तक्रियाश्रयम् ॥ भर्तुराप्त
जनाकीर्णगूढंकक्षादिवर्जितम् ॥ ८ ॥ तत्रपाकादिभांडानिबहिरंतश्चकारयेत् ॥ निर्णिक्तमलपंकानिशुक्तिवल्कादिचूर्णकैः ॥ ९ ॥ निशि
कुर्वीतधूमार्चिःशोधितानिदिवातपैः ॥ दधिपात्राणिकुर्वीतसदैवांतरितानिच ॥ १० ॥ साधुकारितदुग्धेषुशोधितेषुदिवातपे ॥ ईषदम्लोक्त
पात्रेषुस्वच्छंयेनभवेद्दधि ॥ ११ ॥ स्नेहगोरसपाकादिकृत्वासुप्रत्यवेक्षितम् ॥ कुर्यात्स्वयमधिष्ठायभर्तुःपाकविधिक्रियाम् ॥ १२॥ किं
प्रियंचकिमाग्नेयंषड्रसाभ्यंतरेषुच॥किंपथ्यंकिमपथ्यंचस्वास्थ्यंवास्यकथंभवेत् ॥ १३ ॥ इतियत्नाद्विजानीयादनुष्ठेयंचतत्तथा॥नित्यानुरागं
सत्कारमाहारंसुपरीक्षितम् ॥ १४ ॥ महानसादौकुर्वीतजनमाप्तंक्रमागतम् ॥ शत्रुंदायादसंबंधंक्रुद्धभीतावमानितम् ॥ १५ ॥ अवाच्योपगृ
हीतंवानैवमादीनियोजयेत् ॥ पुनःपुनःप्रतिष्ठाप्यगुप्तंस्वयमधिष्ठितम् ॥ १६ ॥ भर्तुराहारपानादिविदध्यादप्रमादतः ॥ पाकंनिर्वर्त्यमा
त्राणांकृत्वास्वेदप्रमार्जनम् ॥ १७ ॥ गंधतांबूलमाल्यादिकिंचिदादायमात्रया ॥ यथौचित्यादितत्कालेभर्तुर्विनयसंभ्रमैः ॥ १८ ॥ तत्का
लानुगतात्यर्थमाहारमुपपादयेत् ॥ स्वभावामयकालानांविपरीत्येनसर्वदा ॥ १९ ॥ सर्वमाहारपानादिप्रयोज्यंतद्विदोजगुः ॥हीनतुल्यादिक
त्वेनभर्तापश्यतियंयथा ॥२०॥ तत्तथैवाधिकंपश्येन्न्यायतःप्रतिपत्तिषु ॥ सापत्नकान्यपत्यानिपश्येत्स्वेभ्योविशेषतः ॥२१॥ भगिनीवत्स

१ प्रतीहासे–इ०पा०। २ सात्म्यं चास्य यथा भवेत्–इ०पा०।

पत्नीश्चतद्बंधून्निजबंधुवत् ॥ ग्रासाच्छादशिरोभ्यंगस्नानमंडनकादिकम् ॥२२॥सपत्नीनामकृत्वातुआत्मनोऽपिनकारयेत्॥व्याधितानांचिकि
त्सार्थमौषधादिकमादरात् ॥ २३ ॥ विदध्यादात्मनस्तासांसर्वाश्रितजनस्यच ॥ तच्छोकेशुचमादध्यात्तत्तुष्टौमुदमावहेत् ॥ २४ ॥ भृत्यबंधु
सपत्नीनांतुल्यदुःखसुखाभवेत् ॥ लब्धावकाशाःशृण्वंतिनिशिसुप्तोत्थिताःक्रमात् ॥ २५ ॥ अन्यत्रव्ययकर्तारंपतिंरहसिबोधयेत् ॥ यदवद्यं
सपत्नीनांस्वयमस्मैनतद्वदेत् ॥२६॥दौःशील्यादितुसापायंगूढमस्मैनिवेदयेत्॥दुर्भगामनपत्यांवाभर्त्राचातितिरस्कृताम्॥२७॥ अंदुष्टांसम्य
गाश्वास्यतेनैतामनुकूलयेत् ॥ तथावाग्दंडपारुष्यैर्जनंभर्त्राविपीडितम् ॥ २८ ॥ कुर्याद्विधेयमाश्वास्यनचेद्दोषायतद्भवेत् ॥ मत्वात्मनोनप
त्यत्वंकालंचापिगतंबहु॥२९॥ संतानादिकमुद्दिश्यकार्यमात्मनिवेदनम् ॥ यच्चान्यदपिजानीयात्किंचिदस्यचिकीर्षितम् ॥३०॥ तत्किलाजा
नतीवास्यसिद्धमेवप्रदर्शयेत् ॥ वैवाहिकंविधिंभर्तुःसर्वंकृत्वाससंभ्रमम्॥३१॥परिणीतांचतांपश्येन्नित्यंभगिनिकामिव॥पूजांसंबंधिवर्गस्यमंग
लंमंडलानिच॥३२॥कुर्यादभिनवोढायाःसुप्रहृष्टेनचेतसा॥मातृवच्छिक्षयेदेनांगृहकृत्येष्वमत्सरा ॥३३॥प्रदेशिकाविधिंवास्याविदध्याद्यतनतः
स्वयम्॥एवंभर्तुरभिप्रायंसर्वमित्यादिकारयेत्॥३४॥सुखार्थंवापिसंत्यज्यस्त्रीणांभर्ताधिदेवता॥भर्ताधिदेवतानार्यावर्णाब्राह्मणदेवताः ॥३५॥
ब्राह्मणाह्यग्निदेवास्तुप्रजाराजन्यदेवताः॥तासांत्रिवर्गसंसिद्धौप्रदिष्टंकारणद्वयम् ॥३६॥भर्तुर्यदनुकूलत्वंयच्चशीलमविप्लुतम् ॥ नतथायौवनंलो
केनापिरूपंनभूषणम्॥३७॥यथाप्रियानुकूलत्वंसिद्धंशश्वदनौषधम्॥वयोरूपादिहारिण्योदृश्यंतेदुर्भगाःस्त्रियः॥३८॥वल्लभामंदरूपाश्चवन्ध्यो
गलितयौवनाः॥तस्मात्प्रियत्वंलोकानांनिदानंयोग्यतापरम्॥३९॥तान्विनान्येगुणावंध्याःसर्वेऽनर्थकृतोपिवा ॥तस्मात्सर्वप्रयत्नेनाविदध्यादा
त्मयोग्यताम्॥४०॥परचित्तज्ञताचास्यामूलंसर्वक्रियास्विह॥बहिरागच्छतोज्ञात्वाकालंसंमृज्यभूमिकाम्॥४१॥सज्जीकृतासनातिष्ठेत्तस्याज्ञां
प्रतितत्परा॥स्वयंप्रक्षालयेत्पादावुत्थाप्यपरिचारिकाम् ॥४२॥ तालवृंतादिकैःकुर्याच्छ्रमस्वेदापनोदनम् ॥आहारस्नानपानादौसस्पृहंयत्रल

१ अधस्तां सम्यगावास्य तस्यै चान्नं प्रकल्पयेत्-इ०पा० । २ क्षमा परा-इ०पा० ।

क्षयेत् ॥४३॥ तदिंगितज्ञातत्त्वेनसिद्धमस्मैनिवेदयेत्॥सपत्नीपतिबंधूनांभर्तृचित्तानुकूल्यतः॥४४॥ प्रतिपत्तिंप्रयुंजीतस्वबंधूनांनवैतथा ॥
तेषुचात्मनिचज्ञात्वाभर्तृचित्तंप्रसादयेत् ॥ ४५ ॥ प्रतिपत्तिंतथाप्येषांनाद्रियेतस्वबंधुषु ॥ अपिभर्तुरभिप्रेतंनारीतत्कुलवासिनी ॥४६॥
सत्कारैर्निजबंधूनांतेननोपैतिवाच्यताम् ॥ पूज्यएवहिसंबंधःसर्वावस्थासुयोषिताम् ॥ ४७ ॥ कस्ततोऽप्युपकारांशंलिप्सेतकुलजःपुमान् ॥
संपूज्यस्वसुतांतस्मैविधिवत्प्रतिपाद्यते ॥ ४८ ॥ ततोऽस्यालिप्सतेनामाकिमकार्यमतःपरम् ॥ कन्यांप्रदायवैवृत्तिरात्मनःपरिकल्प्य
ते ॥ ४९ ॥ दासभंडनटादीनांमार्गोयंनमहात्मनाम् ॥ तस्मात्स्त्रीबांधवानित्यंप्रीतिमात्रैकसाधिनीम् ॥ ५० ॥ प्रतिपत्तिंसमादध्युःसंबं
धिभ्यःप्रसंगिनीम् ॥ तस्याभर्तारिरक्षेतप्रीतिंलोकेचवाच्यताम् ॥ ५१ ॥ आत्मनोऽसत्प्रवादंचचेष्टेरन्साधुवृत्तयः॥ एवंविज्ञायसद्वृत्तंस्त्रीवर्त्ते
ततथासदा ॥ ५२ ॥ येनतत्परिवर्गस्यभवेद्भर्तुश्चसंमता ॥ प्रियापिसाधुवृत्तापिविख्याताभिजनापिच ॥ ५३ ॥ जनापवादात्संप्राप्नोति
तानर्थंसुदारुणम् ॥ सर्वस्यामिषभूतत्वाद्गुणदोषानभिज्ञतः ॥ ५४ ॥ प्रायेणाविनयौचित्यात्स्त्रीणांवृत्तंहिदुष्करम् ॥ अगृह्यत्वान्मनो
वृत्तेःप्रायःकपटदर्शनात् ॥ ५५ ॥ निरंकुशत्वाल्लोकस्यानिर्वाच्याविरलाःस्त्रियः ॥ दैवयोगादयोगत्वाद्व्यवहारानभिज्ञतः ॥ ५६ ॥ वा
च्यतापत्तयोदृष्टाःस्त्रीणांशुद्धेपिचेतसि ॥ तासांदैवप्रतीकारोनोपभोगादृतेभवेत् ॥ ५७ ॥ चारित्रंलोकवृत्तंचएतयोर्विदुरौषधम् ॥ हिंदो
लकादिक्रीडायांप्रसक्तांतरुणींनिशि ॥ ५८॥ रममाणांविटैःसार्धंविधवांस्वैरचारिणीम् ॥ वृद्धादिभार्यांसज्जायांयानगेयादिसंगिनीम् ॥
॥ ५९ ॥ काश्रद्दध्यात्सतीत्येवंसाध्वीमपिहियोषितम् ॥ यौचासामिंगिताकारौसंदिग्धार्थप्रसाधकौ ॥ ६० ॥ तयोस्तत्वपरिज्ञानेविषयो
योगिनांयदि ॥ तस्माद्यथोक्तमाचारमनुतिष्ठेत्सुसंयुता ॥ ६१ ॥ मिथ्यालग्नोऽप्यसद्वादःकंपयत्येवतत्कुलम् ॥ त्रिकुल्यावाच्यतारक्ष्या
प्रतिष्ठाप्यथसंततिः ॥ ६२ ॥ भर्तुस्त्रिवर्गसिद्धिश्चसाध्यंतत्कुलयोषिताम् ॥ पातयंत्येवदौःशील्यादात्मानंसकुलत्रयम् ॥ ६३ ॥ उद्धरंति
तद्दैवताःस्त्रियश्चारित्रभूषणाः ॥ भर्तृचित्तानुकूलत्वंयासांशीलमविच्युतम् ॥ ६४ ॥ तासांरत्नसुवर्णादिभारएवनमण्डनम् ॥ लोकज्ञानेपरा
कोटिःपत्यौभक्तिश्चशाश्वती ॥ ६५ ॥ शुद्धान्वयानांनारीणांविद्यादेतत्कुलव्रतम् ॥ तस्माल्लोकश्चभर्ताचसम्यगाराधितोयया ॥६६॥ धर्म

१ न विप्लुतम्–इ० पा० ।

मर्थंचकामंचसैवाप्नोतिनिरत्यया ॥ ६७ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिस्त्रीधर्मकथनेत्रयोदशोऽध्यायः ॥ १३ ॥ छ ॥ ब्रह्मोवाच ॥
प्रोषितेमंडनंस्त्रीणांपत्यौमंगलमात्रकम् ॥ निष्पादनंचयत्नेनतदारब्धस्यकर्मणः ॥ १ ॥ शय्यागुरुसमीपेस्याद्देहसंस्कारवर्जनम् ॥ समु
पार्जनमर्थानांव्ययानांपरिहापणम् ॥ २ ॥ व्रतोपवासतात्पर्यंतद्वार्तापरिमार्गणम् ॥ दैवज्ञेक्षणिकप्रश्नोदेवानामुपयाचनम् ॥ ३ ॥ नित्यं
तस्यागमाशंसाक्षेमार्थंदेवपूजनम् ॥ नचात्युज्ज्वलवेषत्वंनसदातैलधारणम् ॥४॥ ज्ञातिवेश्मनगंतव्यंसकामगमनेनच॥[1]गुरूणामाज्ञयायावद्भ
र्तुरासजनैःसह ॥ ५ ॥ तत्रापिनचिरंतिष्ठेत्स्नानादीन्वापिनाचरेत् ॥ यावदर्थंक्षणंस्थित्वाततःशीघ्रंसमाचरेत् ॥ ६ ॥ आगतेप्रकृतिस्थैव
कृत्वातात्कालिकंविधिम् ॥ मुक्तप्रवासनेपथ्येत्स्नातेभुक्तवतिप्रिये ॥ ७ ॥ आत्मानंसमलंकृत्यसविशेषंमुदान्विता ॥ देवपूजोपहारादीन्द
द्यात्प्रागुपपादितान् ॥ ८ ॥ कनिष्ठामातृवज्ज्येष्ठांतदपत्यानिचात्मवत् ॥ पश्येत्तत्परिवर्गंतुनित्यंस्वपरिवर्गवत् ॥ ९ ॥ तत्पुरोनासनंति
ष्ठेत्पतिंनामंत्रयीतच ॥ तदभिप्रायतःकुर्यात्प्रवृत्तिंसर्वकर्मसु ॥ १० ॥ नसंसृजेततद्विष्टैःसख्यंकुर्वीततत्प्रियैः ॥ जनमाप्ततमंतस्यसदाभर्तु
श्चमानयेत् ॥ ११ ॥ पैतृकात्समुपानीतंवसुसौगंधिकादिकम् ॥ तस्मैनिवेद्यात्मतयातदातदुपयोजयेत् ॥ १२ ॥ सोपितत्प्रीतयेकिंचि
द्दाद्यादल्पमूल्यकम् ॥ संगोप्यमातृवत्स्थेयंतत्तथैवोपयोजयेत् ॥ १३ ॥ तत्प्रीत्यर्थंगृहीतंयद्वैलक्ष्यादिनिवृत्तये ॥ सविशेषंप्रसंगेनत[2]
स्यैतत्प्रतिपादयेत् ॥ १४ ॥ स्त्रीणांयदेतत्सापत्न्यंपरमात्सर्यकारणम् ॥ तस्मात्तत्परिहर्तव्यंपरमोदार[3]चर्यया ॥ १५ ॥ तथाकल्पितने
पथ्याभर्तुःपर्यायवासरे ॥ ह्रियमादायमानेवपतिंगच्छेद्रिसार्जिता ॥ १६ ॥ गत्वारहसिभर्तारंतत्कालोचितसंभ्रमैः ॥ तद्भावानुगतैस्तैस्तैः
सविशेषमुपाचरेत् ॥ १७ ॥ प्रतिबुध्यततःकालेसविशेषंत्रपान्विता ॥ ज्येष्ठायावसतिंगच्छेद्विशेषेणतथापुनः ॥ १८ ॥ अप्रातिकूल्यंज्ये
ष्ठायाहितमन्यत्रयोषितः ॥ ततःशनैस्त्ववच्छिद्यपतिंस्ववशमानयेत् ॥ १९ ॥ बाहिःपाकादियोगेनचतुःषष्ट्याचारहोगतम् ॥ ज्येष्ठामति
शयानेवभर्तारमुपरंजयेत् ॥२०॥ प्रागल्भ्यंरहसिस्त्रीणांलज्जाधिक्यंततोऽन्यदा ॥ चित्तज्ञानानुवृत्तिश्चपत्यौसंसेवनंपरम् ॥२१॥ एवमाराध्य

१ अवश्यं गमनेन च–इ०पा० । २ तस्मै–इ०पा० । ३ परमोदारकर्मणा–इ०पा० ।

भर्तारंगृहमाक्रम्यचक्रमात् ॥ गौरवंप्रतिपत्तिंवाज्येष्ठादिषुनहापयेत् ॥ २२ ॥ गृहव्यापारदानेषुपतिंगूढंतथावदेत् ॥ अधिकुर्यादनिच्छं
तीज्येष्ठैवेनांयथाबलात् ॥ २३ ॥ सापिविज्ञायभर्तारंकनिष्ठाकृष्टमानसम् ॥ विश्रामंप्रार्थयेदेनामधिकुर्यात्सुतामिव ॥ २४ ॥ मत्वाभर्तुर
भिप्रेतंरक्षंतीनिजगौरवम् ॥ कृतंभर्त्रानुकूलंस्यात्तदिष्टायानुमोदयेत् ॥ २५ ॥ स्वामिनोयदभिप्रेतंभृत्यैःकिंक्रियतेऽन्यथा ॥ क्लिश्यतेतत्रमू
ढात्मापरतंत्रोवृथाजनः ॥ २६ ॥ तस्मात्सर्वास्ववस्थासुमनोवाक्कायकर्मभिः ॥ हितंस्वाम्यनुकूलत्वंनारीणांतुविशेषतः ॥ २७ ॥
सापिज्येष्ठापतिंचैवगृहतंत्रंचसर्वदा ॥ संमावर्ज्यगुणैर्धीराप्रागवस्थांनविस्मरेत् ॥ २८ ॥ नसौभाग्यमदंकुर्यान्नचौद्धत्यादिविक्रियाम् ॥
नितरामानतिंगच्छेत्संदानायंभयादिव ॥ २९ ॥ यथायोग्यतयापत्यौसौभाग्यमभिवर्धते ॥ स्पर्धयेच्चकुलस्त्रीणांप्रश्रयोपाधिकंतथा ॥३०॥
एवमाराध्यभर्तारंतत्कार्येष्वप्रमादिनी ॥ पूज्यानांपूजनेनित्यंभृत्यानांभरणेषुच ॥ ३१ ॥ गुणानामर्जनेनित्यंशीलवत्परिरक्षणे ॥ प्रेत्यचेहच
निर्द्वंद्वंसुखमाप्नोत्यनुत्तमम् ॥ ३२ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिस्त्रीधर्मेषुसपत्नीकर्तव्यवर्णनंनामचतुर्दशोऽध्यायः ॥ १४ ॥ छ॥
॥ ब्रह्मोवाच ॥ दुर्भगाचपुनर्नित्यमुपवासादितत्परा ॥ बाह्येषुपतिकृत्येषुस्याद्विशेषाभियोगिनी ॥१॥ नप्रशंसांसपत्नीषुनिंदांचापितथात्म
नि॥असूयांभर्तुरीर्ष्यांवाप्रणयंवापिदर्शयेत् ॥ २ ॥ मद्विधायाहिवह्वेतत्तच्चात्यंतिकमश्नुते॥यदस्यायुष्मतोयावाभार्याशब्दाभिधेयताम्॥३॥
नचानिर्भूषणातिष्ठेन्नचाप्युद्धतभूषणा॥नान्यदागंधमाल्यादिग्राह्यंपत्युपचारतः ॥४॥तन्न्यूनंसर्वशोग्राह्यंवल्लभायाविशेषतः॥ भूषणंगंधमाल्यं
तुतावत्कालमलक्षितम् ॥५॥ संबाधानांप्रदेशानांनित्यंस्वेदादिमार्जनम् ॥ दंतनासादिपंकानांविगंधस्यचशोधनम् ॥ ६ ॥ निमित्तंभर्तुरेता
सांयत्किंचिदभिलक्षयेत् ॥नानेनवातयोर्यत्नंविदध्यादंगमार्जने ॥ ७ ॥ सर्वासांचसपत्नीनांसर्वत्रानुगताभवेत् ॥ वैतसींवृत्तिमास्थायवल्लभा
याविशेषतः॥८॥अन्यस्यायदनुष्ठेयंयन्नसौदेत्समार्पितम् ॥ भर्तुश्चाविदितंयत्नात्तत्कुर्यादविरोधिचेत् ॥ ९॥ कोशवस्त्रान्नतांबूलगंधपानौषधा
दिकम् ॥ तत्सर्वमनियुक्तानांदोषवत्त्वाद्विरुध्यते ॥ १० ॥ यत्तुमुक्तमनुष्ठेयंगृहसंमार्जनादिकम् ॥ स्त्रीणामनधिकारेऽपिप्रायस्ताद्वि

१ विज्ञायाथ-इ०पा०। २ खिन्नाकार्यभरादिषु-इ०पा० ३। गायत्युपचारतः-इ०पा०।

धिरुच्यते ॥ ११ ॥ अभ्यंगोद्वर्तनंस्नानंभोजनमंडनानिच ॥ कुर्याद्भर्तुरपत्यानांधात्रीकर्मणिसादरम् ॥ १२ ॥ आत्मवत्तान्यपत्या
निसाधयत्यनुयोगतः ॥ स्वेनाप्यमीषांवित्तेनविदध्यान्मंडनादिकम् ॥ १३ ॥ भोगःस्वयमपत्यैर्वास्त्रीवित्तस्यपतिर्विधा ॥ पूर्वैर्वय
स्यैभिन्नंद्यपश्चिमेचोपयोजनम् ॥ १४ ॥ उभयोगस्तुवामावाकर्मजःपृथगेवसः ॥ सद्वृत्तेत्वधिकांख्यातिंकुर्वीतक्रिययापुनः ॥ १५ ॥
नकापिदुर्भगानामसुभगानामजातितः ॥ व्यवहाराद्भवत्येषानिर्देशोरिपुमित्रवत् ॥ १६ ॥ भर्तृचित्तापरिज्ञानात्तदनुष्ठानतोऽपिवा ॥
वृत्तैर्लोकाविरुद्धैश्चयांतिदुर्भगतांस्त्रियः ॥ १७ ॥ आनुकूल्यान्मनोवृत्तेःपरोऽपिप्रियतांव्रजेत् ॥ प्रातिकूल्यान्निजोप्याशुप्रियःप्रद्वेष्यता
मियात् ॥ १८ ॥ तस्मात्सर्वास्ववस्थासुमनोवाक्कायकर्मभिः ॥ प्रियंसमाचरेन्नित्यंतच्चित्तानुविधायिनी ॥ १९ ॥ यामन्यांकामये
त्तांसांतंतयासंप्रयोजयेत् ॥ कुपितांचाप्रियांकांचिद्यत्नादस्मैप्रसादयेत् ॥२०॥ तत्पादपरिचर्यायांगात्रसंवाहनेतथा॥ पीडनेशिरसश्चैवपरं
कौशलमभ्यसेत् ॥ २१ ॥ पीडनंमृदुमध्यंचगात्रावस्थाविशेषतः ॥ मुखगात्रादिभिर्लिंगैःप्रयोज्यंतत्सुखावहम् ॥ २२ ॥ बाहूरुकटि
पृष्ठेषुस्कंधेशिरसिपादयोः ॥ गाढमर्दनमिच्छंतिप्रायोन्यत्रापिमध्यमम् ॥ २३ ॥ निर्मांसेषुप्रदेशेषुनाभिमूलेषुमर्मसु ॥ हृद्गंडककपो
लादाविच्छंतिमृदुमर्दनम् ॥ २४ ॥ गाढंजाग्रदवस्थायामर्धसुप्तस्यमध्यमम् ॥ किंचित्सपरिघातंचमृदुसुप्तस्यनेतिवा ॥ २५ ॥ विरुद्धंसर्व
गात्रेषुलोमवत्सुविशेषतः ॥ उत्कंडूयत्सुसोद्धर्षस्नेहाक्तेषुचमर्दनम् ॥ २६ ॥ स्पर्शाद्रोमांचजननंसनखच्छुरितंशनैः ॥ पुलकोल्लेखनोपेतंशि
रःकंडूश्चपार्श्वयोः ॥ २७ ॥ तेषुतेषुचगात्रेषुतत्प्रयोज्यंतथातथा ॥ निद्रागमायतत्कालेरागसंधुक्षणायच ॥ २८ ॥ तिष्ठतश्चोपविष्टस्यजाग्रतः
स्वपतोऽपिवा ॥ संवाहनंप्रशंसंतियदत्यर्थंसुखावहम् ॥ २९ ॥ नैष्पंद्यंपुलकोद्भेदोगात्राणामक्षिमीलनम् ॥ तत्प्रदेशार्पणंकिंचिद्बुध्ये
द्विकृतिदर्शनम् ॥ ३० ॥ ऊरुमूलादिसंदेशेतत्पाणिप्रतिपीडनम् ॥ लक्षयेन्निपुणायत्रतत्रैवाधिकमाचरेत् ॥ ३१ ॥ एवमेवयथोद्दिष्टंस्त्री
वृत्तंयानुतिष्ठति॥पतिमाराध्यसंपूर्णंत्रिवर्गंसाधिगच्छति ॥ ३२ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिस्त्रीधर्मेषुपंचदशोऽध्यायः ॥ १५ ॥छ॥

१ पादसंवाहने तथा-इ०पा०। २ कटिगुह्येषु-इ०पा०। ३ संविष्टस्योपविष्टस्य-इ०पा०। ४ न क्षयंति व्रणा यत्र-इ०पा०। ५ अधितिष्ठति-इ०पा०।

सुमंतुरुवाच ॥ ॥ इत्युक्त्वाभगवान्ब्रह्मास्त्रीलक्षणमशेषतः ॥ सद्वृत्तंचतथास्त्रीणांजगामसहिमालयम् ॥ १ ॥ ऋषयश्चतथाजग्मुः स्वानिधिष्ण्यान्यशेषतः ॥ स्त्रीलक्षणंतथावृत्तंश्रुत्वाकृत्स्नंमहीपते ॥ २ ॥ इत्थंलक्षणसंपन्नांभार्यांप्राप्यमहीपते ॥ कर्तव्यं यद्गृहस्थेनतदिदानींनिबोधमे ॥ ३ ॥ वैवाहिकाग्नौकुर्वीतगृह्यंकर्मयथाविधि ॥ पंचयज्ञविधानंतुपक्तिंकुर्यात्सदागृही ॥ ४ ॥ पंच सूनागृहस्थस्यतेनस्वर्गंनगच्छति ॥ कंडनीपेषणीचुल्लीउदकुंभःप्रमार्जनी ॥ ५ ॥ आसांक्रमेणसर्वासांविशुद्ध्यर्थंमनीषिभिः ॥ पंचोद्दिष्टामहायज्ञाः प्रत्यहंगृहमेधिनाम् ॥ ६ ॥ अध्यापनंब्रह्मयज्ञःपितृयज्ञश्चतर्पणम् ॥ होमोदैवोबलिर्भौमस्तथान्योऽतिथिपूजनम् ॥ ७ ॥ पंचैतान्योमहायज्ञान्नहापयतिशक्तितः ॥ सगृहेपिवसन्नित्यंसूनादोषैर्नलिप्यते ॥ ८ ॥ देवतातिथिभृत्यानांपितॄणामात्मनश्चयः ॥ ननिर्वपतिपंचानामुच्छ्वसन्नचजीवति ॥ ९ ॥ शतानीकउवाच ॥ यस्यनास्तिगृहेत्वग्निःसमृतोनात्रसंशयः ॥ नसपूजयितुंशक्तोदेवादीन्ब्राह्मणोत्तमः ॥ १० ॥ निरग्निकस्यविप्रस्यकथंदेवादयोद्विज ॥ प्रीताःस्युःशांतयेतस्यपरंकौतूहलंमम ॥ ११ ॥ सुमंतुरुवाच ॥ साधुपृष्टोऽस्मिराजेंद्रश्रूयतांपरमंवचः ॥ अनग्नयस्तुयेविप्रास्तेषांश्रेयोऽभिधीयते ॥ १२ ॥ व्रतोपवासनियमैर्नानादानैस्तथानृप ॥ देवादयोभवंत्येवप्रीतास्तेषांनसंशयः ॥ १३ ॥ विशेषादुपवासेनतिथौकिलमहीपते ॥ प्रीतादेवादयस्तेषांभवंतिकुरुनंदन ॥ १४ ॥ शतानीकउवाच ॥ भगवंस्त्वंतिथीन्ब्रूहितिथीनांचाविधिंचमे ॥ प्राशनंगुह्यधर्मांश्चउपवासविधीनपि ॥ १५ ॥ मुच्येमयेनपापाद्वात्वत्प्रसादाद्द्विजोत्तम ॥ संसाराच्चापिविप्रेंद्रश्रेयसेजगतस्तथा ॥ १६ ॥ सुमंतुरुवाच ॥ शृणुकौरवकर्माणितिथिगुह्याश्रितानितु ॥ श्रुतानिघ्नंतिपापानिउपोषितफलानिच ॥ १७ ॥ प्रतिपदिक्षीरप्राशनंद्वितीयायांलवणवर्जनम् ॥ तृतीयायांतिलान्नंप्राश्नीयाच्चतुर्थ्यांक्षीराशनश्चपंचम्याम् ॥ फलाशनःसदाषष्ठ्यांशाकाशनःसप्तम्यांबिल्वाहारोष्टम्यांतु ॥ १८ ॥ पिष्टाशनोनवम्यामनग्निपाकाहारोदशम्यामेकादश्यांघृताहारोद्वादश्यांपायसाहारः ॥ त्रयोदश्यांगोमूत्राहारश्चतुर्दश्यांयवान्नाहारः ॥ १९ ॥ कुशोदकप्राशनःपौर्णमास्यां

१ निकृत्त्यर्थम्-इ०पा०। २ स्तुतिदानैः-इ०पा०।

धिरुच्यते ॥ ११ ॥ अभ्यंगोद्वर्तनंस्नानंभोजनंमंडनानिच ॥ कुर्याद्भर्तुरपत्यानांधात्रीकर्मणिसादरम् ॥ १२ ॥ आत्मवत्तान्यपत्या
निसाधयत्यनुयोगतः ॥ स्वेनाप्यमीषांवित्तेनविदध्यान्मंडनादिकम् ॥ १३ ॥ भोगःस्वयमपत्यैर्वास्त्रीवित्तस्यपतिर्विधा ॥ पूर्ववय
स्यंभिनंद्यपश्चिमेचोपयोजनम् ॥ १४ ॥ उभयोगस्तुवामावाकर्मजःपृथगेवसः ॥ सद्वृत्तेत्वाधिकांख्यातिंकुर्वीतक्रिययापुनः ॥ १५ ॥
नकापिदुर्भगानामसुभगानामजातितः ॥ व्यवहाराद्भवत्येषानिर्देशोरिपुमित्रवत् ॥ १६ ॥ भर्तृचित्तापरिज्ञानात्तदनुष्ठानतोऽपिवा ॥
वृत्तेर्लोकविरुद्धैश्चयांतिदुर्भगतांस्त्रियः ॥ १७ ॥ आनुकूल्यान्मनोवृत्तेःपरोऽपिप्रियतांव्रजेत् ॥ प्रातिकूल्यान्निजोप्याशुप्रियःप्रद्वेष्यता
मियात् ॥ १८ ॥ तस्मात्सर्वास्ववस्थासुमनोवाक्कायकर्मभिः ॥ प्रियंसमाचरेन्नित्यंतच्चित्तानुविधायिनी ॥ १९ ॥ यामन्यांकामये
त्तासांतंतयासंप्रयोजयेत् ॥ कुपितांचाप्रियांकांचिद्यत्नादस्मैप्रसादयेत् ॥२०॥ तत्पादपरिचर्यायांगात्रसंवाहनेतथा[1] ॥ पीडनेशिरसश्चैवपरं
कौशलमभ्यसेत् ॥ २१ ॥ पीडनंमृदुमध्यंचगात्रावस्थाविशेषतः ॥ मुखगात्रादिभिर्लिंगैःप्रयोज्यंतत्सुखावहम् ॥ २२ ॥ बाहूरुकटि[2]
पृष्ठेषुस्कंधेशिरसिपादयोः ॥ गाढमर्दनमिच्छंतिप्रायोन्यत्रापिमध्यमम् ॥ २३ ॥ निर्मांसेषुप्रदेशेषुनाभिमूलेषुमर्मसु ॥ हृद्गंडककपो
लादाविच्छंतिमृदुमर्दनम् ॥ २४ ॥ गाढंजाग्रदवस्थायामर्धसुप्तस्यमध्यमम् ॥ किंचित्सपरिघातंचमृदुसुप्तस्यनेतिवा ॥ २५ ॥ विरुद्धंसर्व
गात्रेषुलोमवत्सुविशेषतः ॥ उत्कंडूयत्सुसोद्धर्षस्नेहाक्तेषुचमर्दनम् ॥ २६ ॥ स्पर्शाद्रोमांचजननंसनखच्छुरितंशनैः ॥ पुलकोल्लेखनोपेतांशि
रःकंडूश्चपार्श्वयोः ॥ २७ ॥ तेषुतेषुचगात्रेषुतत्प्रयोज्यंतथातथा ॥ निद्रागमायतत्कालेरागसंधुक्षणायच ॥ २८ ॥ तिष्ठतश्चोपविष्टस्यजाग्रतः[3]
स्वपतोऽपिवा ॥ संवाहनंप्रशंसंतियदत्यर्थंसुखावहम् ॥ २९ ॥ नैष्पंद्यंपुलकोद्भेदोगात्राणामक्षिमीलनम् ॥ तत्प्रदेशार्पणंकिंचिद्बुध्ये
द्विकृतिदर्शनम् ॥ ३० ॥ ऊरुमूलादिसंदेशेतत्पाणिप्रतिपीडनम् ॥ लक्षयेन्निपुणायत्रतत्रैवाधिकमाचरेत्[4] ॥ ३१ ॥ एवमेवयथोद्दिष्टंस्त्री
वृत्तंयानुतिष्ठति[5] ॥ पतिमाराध्यसंपूर्णंत्रिवर्गंसाधिगच्छति ॥ ३२ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिस्त्रीधर्मेषुपंचदशोऽध्यायः ॥ १५ ॥ छ ॥

१ पादसंवाहने तथा–इ०पा० । २ कटिगुह्येषु–इ०पा० । ३ संविष्टस्योपविष्टस्य–इ०पा० । ४ न क्षयंति व्रणा यत्र–इ०पा० । ५ अधितिष्ठति–इ०पा० ।

सुमंतुरुवाच ॥ ॥ इत्युक्त्वाभगवान्ब्रह्मास्त्रीलक्षणमशेषतः ॥ सद्वृत्तंचतथास्त्रीणांजगामसहिमालयम् ॥ १ ॥ ऋषयश्चतथाजग्मुः
स्वानिधिष्ण्यान्यशेषतः ॥ स्त्रीलक्षणंतथावृत्तंश्रुत्वाकृत्स्नंमहीपते ॥ २ ॥ इत्थंलक्षणसंपन्नांभार्यांप्राप्यमहीपते ॥ कर्तव्यं
यद्गृहस्थेनतदिदानींनिबोधमे ॥ ३ ॥ वैवाहिकाग्नौकुर्वीतगृह्यंकर्मयथाविधि ॥ पंचयज्ञविधानंतुपक्तिंकुर्यात्सदागृही ॥ ४ ॥ पंच
सूनागृहस्थस्यतेनस्वर्गंनगच्छति ॥ कंडनीपेषणीचुल्लीउदकुंभःप्रमार्जनी ॥ ५ ॥ आसांक्रमेणसर्वासांविशुद्ध्यर्थंमनीषिभिः ॥
पंचोद्दिष्टामहायज्ञाः प्रत्यहंगृहमेधिनाम् ॥ ६ ॥ अध्यापनंब्रह्मयज्ञःपितृयज्ञश्चतर्पणम् ॥ होमोदैवोबलिर्भौमस्तथान्योऽतिथिपूज
नम् ॥ ७ ॥ पंचैतान्योमहायज्ञान्नहापयतिशक्तितः ॥ सगृहेपिवसन्नित्यंसूनादोषैर्नलिप्यते ॥ ८ ॥ देवतातिथिभृत्यानांपितॄ
णामात्मनश्चयः ॥ ननिर्वपतिपंचानामुच्छ्वसन्नचजीवति ॥ ९ ॥ शतानीकउवाच ॥ यस्यनास्तिगृहेत्वग्निःसमृतोनात्रसंशयः ॥
नसपूजयितुंशक्तोदेवादीन्ब्राह्मणोत्तमः ॥ १० ॥ निरग्निकस्यविप्रस्यकथंदेवादयोद्विज ॥ प्रीताःस्युःशांतयेतस्यपरंकौतूहलंमम ॥ ११ ॥
सुमंतुरुवाच ॥ साधुपृष्टोऽस्मिराजेंद्रश्रूयतांपरमंवचः ॥ अनग्नयस्तुयेविप्रास्तेषांश्रेयोऽभिधीयते ॥ १२ ॥ व्रतोपवासनियमैर्नानादानै[2]
स्तथानृप ॥ देवादयोभवंत्येवप्रीतास्तेषांनसंशयः ॥ १३ ॥ विशेषादुपवासेनतिथौकिलमहीपते ॥ प्रीतादेवादयस्तेषांभवंतिकु
रुनंदन ॥ १४ ॥ शतानीकउवाच ॥ भगवंस्त्वंतिथीन्ब्रूहितिथीनांचविधिंच मे ॥ प्राशनंगुह्यधर्मांश्चउपवासविधीनपि ॥ १५ ॥ मुच्येमयेनपापौ
घात्त्वत्प्रसादाद्द्विजोत्तम ॥ संसाराच्चापिविप्रेंद्रश्रेयसेजगतस्तथा ॥ १६ ॥ सुमंतुरुवाच ॥ शृणुकौरवकर्माणितिथिगुह्याश्रितानितु
॥ श्रुतानिघ्नंतिपापानिउपोषितफलानिच ॥ १७ ॥ प्रतिपदिक्षीरप्राशनंद्वितीयायांलवणवर्जनम् ॥ तृतीयायांतिलान्नंप्राश्नीयाच्चतुर्थ्यां
क्षीराशनश्चपंचम्याम् ॥ फलाशनःसदाषष्ठ्यांशाकाशनःसप्तम्यांबिल्वाहारोष्टम्यांतु ॥ १८ ॥ पिष्टाशनोनवम्यामनग्निपाकाहारोदशम्या
मेकादश्यांघृताहारोद्वादश्यांपायसाहारः ॥ त्रयोदश्यांगोमूत्राहारश्चतुर्दश्यांयवान्नाहारः ॥ १९ ॥ कुशोदकप्राशनःपौर्णमास्यां

१ निकृत्यर्थम्-इ०पा० । २ स्तुतिदानैः-इ०पा० ।

कस्यचित् ॥५४॥ हैहयैस्तालजंघैश्चतुरुष्कैर्यवनैःशकैः ॥ उपोषिताइहात्रैवब्राह्मणत्वमभीप्सुभिः ॥५५॥ इत्येषापरमापुण्याशिवापापहरात
था ॥ पठितोपासिताराजञ्छ्रद्धयाचश्रुतातथा ॥५६॥ माहात्म्यंचापियोप्यस्याःशृणुयान्मानवोनृप ॥ ऋद्धिंवृद्धिंतथाकीर्तिंशिवंचाप्यादिवंव्र
जेत् ॥ ५७ ॥ इतिश्रीभविष्येमहापुराणेशतसहस्रार्धसंहितायांब्राह्मेपर्वणिप्रतिपत्कल्पेषोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ शतानीकउवाच ॥
ब्रूहिमेविस्तराद्ब्रह्मन्[3]प्रतिपत्कृत्यमादरात् ॥ ब्रह्मपूजाविधानंचपूजनेयत्रवैफलम् ॥ १ ॥ ॥ सुमंतुरुवाच ॥ शृणुष्वैकमनाराजन्कथयाम्येष
शांतिदम् ॥ पूर्वमेकार्णवेघोरेनष्टेस्थावरजंगमे ॥ २ ॥ स्वयंभूरभवद्देवःसुरज्येष्ठश्चतुर्मुखः ॥ ससर्जलोकान्देवांश्चभूतानिविविधानिच
॥ ३ ॥ कायेनमनसावाचाजंगमस्थावराणिच ॥ पितायःसर्वदेवानांभूतानांचपितामहः ॥ ४ ॥ तस्मादेषसदापूज्योयतोलोकगुरुःपरः ॥
सृजत्येषजगत्कृत्स्नंपातिसंहरतेतथा ॥ ५ ॥ रुद्रोऽस्यमनसोजातोविष्णुर्जातोऽस्य[4]वक्षसः ॥ मुखेभ्यश्चतुरोवेदावेदांगानिचकृत्स्नशः ॥ ६ ॥
देवाप्सरसगंधर्वाःसयक्षोरगराक्षसाः ॥ पूजयंतिसदावीरविरिंचिंसुरनायकम् ॥ ७ ॥ सर्वंब्रह्ममयंलोकंसर्वंब्रह्मणिसंस्थितम् ॥ तस्मात्सम
र्चयेद्ब्रह्मन्यइच्छेच्छ्रेयआत्मनः ॥ ८ ॥ योनपूजयतेभक्त्यासुरज्येष्ठंसुरेश्वरम् ॥ नसनाकस्यराज्यस्यनचमोक्षस्यभाजनम् ॥ ९ ॥ यस्तुपू
जयतेभक्त्याविरिंचिंभुवनेश्वरम् ॥ सनाकराज्यमोक्षेषुक्षिप्रंभवतिभाजनम् ॥ १० ॥ तस्मात्सौम्यमनाभूत्वायावज्जीवंप्रतिज्ञया ॥ अर्चयित्वा
सदादेवमापन्नोपिनरोनृप ॥ ११ ॥ वरंदेहपरित्यागोवरंनरकसंभवः ॥ नत्वेवापूज्यभुंजीतदेवंवैपद्मसंभवम् ॥१२॥ सदापूजयतेयस्तुवीरभ
क्त्यापितामहम् ॥ मनुष्यचर्मणानद्धःसवेधानात्रसंशयः ॥ १३ ॥ नहिवेधार्चनात्किंचित्पुण्यमभ्यधिकंभवेत् ॥ इतिविज्ञाययत्नेनपूजनी
यःसदाविधिः ॥ १४ ॥ योब्रह्माणंद्वेष्टिमोहात्सर्वदेवनमस्कृतम् ॥ नरोनरकगामीस्यात्तस्यसंभाषणादपि ॥ १५ ॥ ब्रह्मणोर्चांप्रतिष्ठाप्य
सर्वयत्नैर्विधानतः ॥ यत्पुण्यंफलमाप्नोतितदेकाग्रमनाःशृणु ॥ १६ ॥ सर्वयज्ञतपोदानतीर्थवेदेषुयत्फलम् ॥ तत्फलंकोटिगुणितंलभेद्वेधःप्र
तिष्ठया ॥ १७ ॥ कंजजंस्थापयेद्यस्तुकृत्वाशालांमनोरमाम् ॥ सर्वागमोदितंपुण्यंकोटिकोटिगुणंलभेत् ॥ १८ ॥ मातृजान्पितृजांश्चैवयां

१ च लंभितम्–इ० पा० । २ अत्र विशेषतः–इ० पा० । ३ प्रतिपत्कल्पम्–इ०पा० । ४ च–इ०पा० । ५ विरिंचि सर्वकामदम्–इ०पा० ।

चैवोद्वहतेस्त्रियम् ॥ कुलैकविंशमुत्तार्यब्रह्मलोकेमहीयते ॥ १९ ॥ भुक्त्वातुविपुलान्भोगान्प्रलयेसमुपस्थिते ॥ ज्ञानयोगंसमासाद्यसतत्रैव
विमुच्यते ॥ २० ॥ अथवाराज्यमाकांक्षेज्जायतेसंभवांतरे ॥ सप्तद्वीपसमुद्रायांक्षितावधिपतिर्भवेत् ॥ २१ ॥ त्रिसंध्यंयोजपेद्ब्रह्मकृत्वाष्ट
दलपंकजम् ॥ पौर्णमास्याःप्रतिपदितस्यपुण्यफलंशृणु ॥ २२ ॥ अनेनैवसदेहेनब्रह्मासंतिष्ठतेक्षितौ ॥ पापहासर्वमर्त्यानांदर्शनात्स्पर्श
नादपि ॥२३॥ उद्धृत्यदिविसंस्थाप्यकुलानामेकविंशतिम् ॥तैःकुलैःसहितोनित्यंमोदतेगांगतोनृप ॥ २४ ॥ अप्येकवारंयोभक्त्यापूजयेत्पद्म
संभवम् ॥पद्मस्थमूर्तिमंतंवाब्रह्मलोकंसगच्छति ॥२५॥ पुण्यक्षयात्क्षितिंप्राप्यभवेत्क्षितिपतिर्महान् ॥वेदवेदांगतत्त्वज्ञोब्राह्मणश्चापिजायते ॥
॥ २६ ॥ नतत्तपोभिरत्युग्रैर्नचसर्वैर्महामखैः ॥ गच्छेद्ब्रह्मपुरंदिव्यंमुक्त्वाभक्तिपरात्मिकान् ॥ २७ ॥ मृद्दारुवैष्टकशैलंवायःकुर्याद्ब्रह्मणो
गृहम् ॥ त्रिःसप्तकुलसंयुक्तोब्रह्मलोकेमहीयते ॥ २८ ॥ मृन्मयात्कोटिगुणितंफलंदार्विष्टकामये ॥ इष्टकाद्विगुणंपुण्यंकृतेशैलमयेगृहे ॥
॥ २९ ॥ क्रीडमानोपियःकुर्याच्छालांवैब्रह्मणोनृप ॥ ब्रह्मलोकेसलभतेविमानंसर्वकामिकम् ॥ ३० ॥ पुष्पमालापरिक्षिप्तंकिंकिणी
जालभूषितम् ॥ दोलाविक्षेपसंपन्नंघंटाचामरभूषितम् ॥ ३१ ॥ मुक्तादामवितानेनशोभितंसूर्यसप्रभम् ॥ अप्सरोगणसंकीर्णंसर्वकाम
सुखप्रदम् ॥ ३२ ॥ तत्रोषित्वामहाभोगीक्रीडमानःसदासुरैः ॥ पुनरागत्यलोकेस्मिन्राजाभवतिधार्मिकः ॥ ३३ ॥ पश्यन्परिहरञ्जन्तू
न्मृदुपूर्वमहीपते ॥ शनैःसंमार्जनंकुर्वंश्चान्द्रायणफलंभवेत् ॥ ३४ ॥ वस्त्रपूतेनतोयेनयःकुर्यादुपलेपनम् ॥ पश्यन्परिहरञ्जंतूंश्चांद्रा
यणफलंलभेत् ॥ ३५ ॥ नैरंतर्येणयःकुर्यात्पक्षंसंमार्जनार्चनम् ॥ युगकोटिशतंसाग्रंब्रह्मलोकेमहीयते ॥ ३६ ॥ तस्यांतेसचतुर्वेदःसुरूपः
प्रियदर्शनः ॥ आढ्यःसर्वगुणोपेतोराजाभवतिधार्मिकः ॥ ३७ ॥ कपटेनापियःकुर्याद्ब्रह्मशालांसुमानद ॥ संमार्जनादिवैकर्मसोऽपिप्राप्नो
तितत्फलम् ॥ ३८ ॥ तावद्भ्रमंतिसंसारेदुःखशोकभयप्लुताः ॥ नभवंतिसुरश्रेष्ठेयावद्भक्तामहीपते ॥ ३९ ॥ समासक्तंयथाचित्तंजंतो
र्विषयगोचरे ॥ यद्येवंब्रह्मणिन्यस्तंकोनमुच्येतबंधनात् ॥ ४० ॥ खंडस्फुटितसंस्कारंशालायांयःकरोतिवै ॥ आरामावसथाद्येषुलभते

१ गांभूमिंगतः—भूमिष्ठ एवेत्यर्थः । २ सर्वकामदम्—इ०पा० ।

मौक्तिकंफलम् ॥ ४१ ॥ नास्तिब्रह्मसमोदेवोनास्तिब्रह्मसमोगुरुः ॥ नास्तिब्रह्मसमंज्ञानंनास्तिवेधःसमंतपः ॥ ४२ ॥ प्रतिपद्यादिसर्वे
षुदिवसेषूत्सवेषुच ॥ पर्वकालेषुपुण्येषुपौर्णमास्यांविशेषतः ॥ ४३ ॥ शंखभेर्यादिनिर्घोषैर्महाद्भिर्गेयसंयुतैः ॥ कुर्यान्नीराजनंदेवे[3]सुर
ज्येष्ठेचतुर्मुखे ॥ ४४ ॥ यावत्पर्वाणिविधिनाकुर्यान्नीराजनंनृप ॥ तावद्युगसहस्राणिब्रह्मलोकेमहीयते ॥ ४५ ॥ स्नानकालेत्रिसंध्यंतु
यःकुर्यान्नृत्यवादनम् ॥ गीतंवासुखवाद्यंवातस्यपुण्यफलंशृणु ॥ ४६ ॥ यावंत्यहानिकुरुतेगेयनृत्यादिवादनम् ॥ तावद्युगसहस्रा
णिब्रह्मलोकेमहीयते ॥ ४७ ॥ कापिलापंचगव्येनकुशवारियुतेनच ॥ स्नापयेन्मंत्रपूतेनब्राह्मंस्नानंहितत्स्मृतम् ॥ ४८ ॥ कपिलापं
चगव्येनदधिक्षीरघृतेनच ॥ स्नानंशतगुणंज्ञेयमितरेषांनराधिप ॥ ४९ ॥ देवाग्निकार्यमुद्दिश्यकपिलामाहरेत्सदा ॥ ब्रह्मक्षत्र
विशश्चैवनशूद्रस्तुकदाचन ॥ ५० ॥ कापिलंयःपिबेच्छूद्रोदेवकार्यार्थनिर्मितम् ॥ सपच्येतमहाघोरेसुचिरंनरकार्णवे ॥ ५१ ॥ वर्ष
कोटिसहस्रैस्तुयत्पापंसमुपार्जितम् ॥ सुरज्येष्ठघृताभ्यंगाद्दहेत्सर्वंनसंशयः ॥ ५२ ॥ कल्पकोटिसहस्रैस्तुयत्पापंसमुपार्जितम् ॥
पितामहघृतस्नानंदहत्यग्निरिवेंधनम् ॥ ५३ ॥ घृतस्नानंप्रतिपदिसकृत्कृत्वातुकंजज ॥ कुलैकविंशमुत्तार्यविष्णुलोकेमहीयते ॥ ५४ ॥
अयुतंयोगवांदद्याद्दत्त्वावेदपारगे ॥ वस्त्रहेमादियुक्तानांक्षीरस्नानेनतत्फलम् ॥ ५५ ॥ सकृदाज्येनपयसाविरिंचिंस्नापयेत्तुयः ॥
गांगेयेनसयानेनयातिब्रह्मसलोकताम् ॥ ५६ ॥ स्नाप्यदध्नासकृद्वीरकंजजंविष्णुमाप्नुयात् ॥ मधुनास्नापयित्वातुवीरलोकेमहीयते ॥
॥ ५७ ॥ स्नानमिक्षुरसेनेहयोविरिंचेःसमाचरेत् ॥ सयातिलोकंसवितुस्तेजसाभासयन्नभः ॥ ५८ ॥ शुद्धोदकेनयोभक्त्यास्नापयेत्पद्मसं
भवम् ॥ उत्सृज्यपापकलिलंसयात्येवसलोकताम् ॥ ५९ ॥ वस्त्रपूतेनतोयेनस्नापयेद्यःसकृद्विभुम् ॥ ससर्वकालंतृप्तात्मालोकमस्य
त्ववाप्नुयात् ॥ ६० ॥ सर्वौषधीभिर्योभक्त्यास्नापयेत्पद्मसंभवम् ॥ कांचनेनविमानेनब्रह्मलोकेमहीयते ॥ ६१ ॥ गंधचंदनतोयेन

१ लोके–इ०पा० । २ सर्वकालेषु–इ०पा० । ३ भक्तिपूर्वम्–इ०पा० । ४ दशगुणम्–इ०पा० । ५ सहस्रे तु–इ०पा० । ६ विप्रे–इ०पा० । ७ फलो–
दकेन–इ०पा० ।

स्नापयेद्योंबुजोद्भवम् ॥ रुद्रलोकमवाप्नोतितेजसाहेमसन्निभः ॥ ६२ ॥ पाटलोत्पलपद्मानिकरवीराणिसर्वदा ॥ स्नानकालेप्रयोज्यानिस्थिराणिसुरभीणिच ॥ ६३ ॥ एषामेकतमंस्नानंभक्त्याकृत्वातुवेधसि ॥ विधूयपापकलिलंविधिलोकेमहीयते ॥ ६४ ॥ कर्पूरागरुतोयेन स्नापयेद्यस्तुकंजजम् ॥ सर्वपापविशुद्धात्माब्रह्मलोकेमहीयते ॥ ६५ ॥ गायत्रीशतजप्तेनविमलेनांभसाविभुम् ॥ स्नापयित्वासकृद्भक्त्याब्रह्मलोकमवाप्नुयात् ॥ ६६ ॥ विभुंशीतांबुनास्नाप्यधारोष्णपयसाततः ॥ स्नाप्यपश्चाद्घृतस्नानंकृत्वापापैर्विमुच्यते ॥ ६७ ॥ एतत्स्नानत्रयंकृत्वापूजयित्वातुभक्तितः ॥ अश्वमेधसहस्रस्यफलंप्राप्नोतिमानवः ॥ ६८ ॥ मृत्कुंभैस्ताम्रजैःकुंभैःस्नानंशतगुणंभवेत् ॥ रौप्येलक्षोत्तरंप्रोक्तंहैमैःकोटिगुणंभवेत् ॥ ६९ ॥ ब्रह्मणोदर्शनंपुण्यंदर्शनात्स्पर्शनंपरम् ॥ स्पर्शनादर्चनंश्रेष्ठंघृतस्नानमतःपरम् ॥ ७० ॥ वाचिकंमानसंपापंघृतस्नानेनदेहिनाम् ॥ क्षिणुतेपद्मजोयस्मात्तस्मात्स्नानंसमाचरेत् ॥ ७१ ॥ स्नापयित्वार्चयेद्भक्त्यायथातच्छृणुभारत ॥ शुचिवस्त्रधरःस्नातःकृतन्यासश्चभारत ॥ ७२ ॥ चतुर्हस्तंलिखेत्पद्मंचतुर्भागविभागितम् ॥ मध्येतस्यलिखेच्चक्रंदलैर्द्वादशभिश्चितम् ॥ ७३ ॥ सरोजानिततोन्यस्यअक्षराणिसमंततः ॥ अक्षरंविहितंचान्यत्पत्रभागेप्रकीर्तितम् ॥ ७४ ॥ नानावर्णकसंयोगाल्लिखेच्चैवानुपूर्वशः ॥ कृष्णोत्कटंतुमध्यंस्यात्पीतरक्तंतथापरम् ॥ ७५ ॥ सितंशुद्धंतुकर्तव्यंमध्यभागंतुवर्तितम् ॥ प्रभाकुंडलकैर्बाह्यैर्वेष्टयेच्चक्रनायकम् ॥ ७६ ॥ एवमालिख्ययत्नेनमूलमंत्रंततोन्यसेत् ॥ मूर्ध्नःपादतलंयावत्प्रणवंविन्यसेद्बुधः ॥ ७७ ॥ नादरूपंन्यसेत्तावद्यावच्छब्दस्यशून्यता ॥ तकारंविन्यसेन्मूर्ध्नि सकारंमुखमंडले ॥ ७८ ॥ विकारंकंठदेशेतुतुकारंसर्वसंधिषु ॥ वेकारंहृदिमध्येतुरेकारंपार्श्वयोर्द्वयोः ॥ ७९ ॥ णकारंदक्षिणेकुक्षौयकारंवामसंज्ञके ॥ भकारंकटिनाभिस्थंगोकारंजानुपर्वसु ॥ ८० ॥ दकारंजंघयोर्न्यस्यवकारंपादपद्मयोः ॥ स्यकारमंगुष्ठयोर्न्यस्यधीकारंचोरासिन्यसेत् ॥ ८१ ॥ मकारंजानुदेशेतुहिकारंगुह्यमाश्रितम् ॥ धिकारंहृदयेन्यस्ययोकारंचौष्ठयोर्न्यसेत् ॥ ८२ ॥ नकारंनासिकाग्रेतुप्रकारंनेत्रमाश्रितम् ॥ चोकारंतुभ्रुवोर्मध्येदकारंप्राणमाश्रितम् ॥ ८३ ॥

१ विधुलोकमवाप्नुयात्–इ०पा० । २ पूजयेत्–इ०पा० । ३ दशगुणम्–इ०पा० । ४ चांगसंधिषु–इ०पा० । ५ जानुयुग्मके–इ०पा० ।

याकारंविन्यसेन्मूर्ध्नितकारंकेशमाश्रितम् ॥ न्यासंकृत्वात्मनोदेहेदेवेकुर्यात्तथानृप ॥ ८४ ॥ सर्वोपकारसंपन्नंकृत्वासम्यङ्निरी
क्षयेत् ॥ कुंकुमागुरुकर्पूरचंदनेनाविमिश्रितम् ॥ ८५ ॥ गंधतोयमुपस्कृत्वागायत्र्याप्रणवेनच ॥ प्रोक्षयेत्सर्वद्रव्याणिपश्चादर्चनमाच
रेत् ॥ ८६ ॥ चक्रग्रंथिषुसर्वासुप्रणवंविनिवेशयेत्[1] ॥ भूयःप्लुतंसमुच्चार्यप्रणवंसर्वतोमुखम् ॥ ८७ ॥ विन्यसेत्पद्ममध्येतुपीठनिष्पत्ति
हेतवे ॥ आसनेपृथिवीज्ञेयासर्वसत्वधरामता ॥ ८८ ॥ ह्रस्वोंकारेमतासातुदीर्घोंकारेतुदेवराट्[2] ॥ प्लुतस्तुव्यापयेद्धांमोक्षदंचा
मृतात्मकम् ॥ ८९ ॥ यत्नस्थोननिवर्तेतयोगीप्राणपरायणः ॥ आवाहनंततःकुर्यादक्षरेणपरेणतु ॥ ९० ॥ आवाह्यतेजोरूपंतुन्य
सेन्मंत्रवरांस्ततः ॥ ततोविभावयेद्देवंपद्मस्थंचतुराननम् ॥ ९१ ॥ स्रष्टारंसर्वजगतांविष्णुरुद्रविधानगम् ॥ संभाव्यविधिवद्भक्त्याप
श्चाच्चार्चनमाचरेत् ॥ ९२ ॥ गंधपुष्पादिसंभारान्क्रमात्सर्वान्प्रकल्पयेत् ॥ गायत्रीमुच्चरन्मंत्रंसर्वकर्माणिकारयेत् ॥ ९३ ॥ पुष्पंधूपंतथा
दीपंनैवेद्यंसुमनोहरम् ॥ खंडलड्डुकश्रीवेष्टकासाराशोकवर्तिकाः ॥ ९४ ॥ स्वस्तिकोल्लोपिकादुग्धतिलावेष्टतिलाढिकाः ॥ फलानि
चैवपक्वानिलग्नखंडगुडानिच ॥ ९५ ॥ अन्यांश्वविविधान्दद्यात्पूपानिविविधानिच ॥ एवमादीनिसर्वाणिदापयेच्छक्तितोनृप ॥ ९६ ॥
मूलमंत्रेणदेवस्यततोदेहंविभावयेत् ॥ पूजयेच्चापिविधिनायेनतंतेब्रवीम्यहम् ॥ ९७ ॥ प्राणायामत्रयंकृत्वादेहसंशोधनायवै ॥ आवाह
येत्ततोनंतंधारयंतंवचःसदा ॥ ९८ ॥ ध्यात्वानंतंततोरुद्रंपद्मकिंजल्कमध्यगम् ॥ ध्यायेद्विष्णुंततोदेवंन्यसेत्पद्मोदरोद्भवम् ॥ ९९ ॥ एवं
त्रिदेवतारूढंपद्ममध्येऽब्जुजोद्भवम् ॥ पूजयेन्मूलमंत्रेणपद्मोदरभवंनृप ॥ १०० ॥ ऋग्वेदंतुयजुर्वेदंसामवेदंचपूजयेत् ॥ ज्ञानवैराग्य
मैश्वर्यंधर्मंसंपूजयेद्बुधः ॥ १०१ ॥ ईशानादिक्रमाद्राजन्विदिशासुसमंततः[3] ॥ शिक्षाकल्पोव्याकरणंनिरुक्तंछंदएवच ॥ १०२ ॥ ज्यो
तिषंचमहाबाहोउपवेदाश्चकृत्स्नशः ॥ इतिहासपुराणानियथायोग्यंयथाक्रमम् ॥ १०३ ॥ शिक्षाकल्पोव्याकरणंचोभेदेवस्यपुरतःस
दा ॥ कल्पादयस्ततश्चान्येदिशासुविदिशासुच ॥ १०४ ॥ महाव्याहृतयःसर्वाःप्रणवेनसमन्विताः ॥ पूर्वादिक्रमयोगेनपूजयेद्विधि

१ विनिवेदयेत्-इ०पा०। २ परंतप-इ०पा०। ३ समाहितः-इ०पा०। ४ इदमक्षरद्वयमधिकम्।

नानृप ॥ १०५ ॥ शक्तयोब्रह्मणस्त्वेतालोकरूपाण्यवस्थिताः ॥ पूजनीयाःप्रयत्नेनमंत्ररूपाःस्थिताःस्वयम् ॥ १०६ ॥ अरै[1]कांत
रसंस्थांश्चषट्समुद्रान्समर्चयेत् ॥ नक्षत्राणिग्रहाश्चैवरा[2]शयश्चविशेषतः ॥१०७॥ पूज्याःसर्वेयथान्यायंसुराग्रेषुव्यवस्थिताः॥नागाश्चगरुडश्चैव
पूजनीयस्तथाग्रतः ॥ १०८ ॥ देवताऋषयश्चैवसहिताःकुलपर्वताः ॥ तत्तेजोनिलयाःसर्वेपूजनीयाःप्रयत्नतः ॥ १०९ ॥ आचम्यवि
धिवत्पूर्वंमंत्रपूतेनवारिणा ॥ हृदयादीन्न्यसेदंगान्हृदयादिषुकृत्स्नशः ॥ ११० ॥ शिखानेत्रंतथाचर्मअस्त्रं[3]चभरतर्षभ ॥ महेंद्रादिदिशाश्चै
ताःपूजयेद्विधिवन्नृप ॥१११॥ हृदयंपुरतःपूज्यंशिरोदेवस्यपृष्ठतः॥पूर्वसंपूजयेद्देवंमूलमंत्रेणकृत्स्नशः ॥ ११२ ॥ विसर्जयेद्दर्शयित्वामुद्रांतु
भरतर्षभ ॥ अंकुशं[4]नरशार्दूलह्याह्वानेकंजमादिशेत् ॥ ११३ ॥ यस्त्वेवंपूजयेद्देवंप्रतिपन्नित्यमेवच ॥ उपोष्यपंचदश्यांतुसयातिपरमं[5]पद
म् ॥ ११४ ॥ सुमंतुरुवाच ॥ आपोहिष्ठेतिमंत्रोऽयंहृदयंपरिकीर्तितम् ॥ ऋतंसत्यंशिखाप्रोक्ताउदुत्यंनेत्रमादिशेत् ॥ ११५ ॥ चित्रंदे
वानांमस्तामितिसर्वलोकेषुविश्रुतम् ॥ वर्मणातच्छादयामिकवचंसमुदाहृतम् ॥ ११६ ॥ भूर्भुवःस्वरितितथाशिरसेपरिकीर्तितम् ॥
गायत्रीमूलमंत्रस्तुसाधकः सर्वकर्मणाम् ॥ ११७ ॥ गायत्र्यापूजयेद्देवमोंकारेणाभिमंत्रितम् ॥ प्रणवेनापरान्सर्वानृग्वेदादीन्प्रपूजयेत्
॥ ११८ ॥ आह्वानेपूजनेवीरविसर्गेब्रह्मणस्तथा ॥ गायत्रीपरमोमंत्रोवेदमाताविभाविनी ॥ ११९ ॥ गायत्र्यक्षरतत्त्वैस्तुपूजयेद्यस्तुदेवताम् ॥
सगच्छेद्ब्रह्मणःस्थानंदुर्लभंयद्दुरासदम् ॥ १२० ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिप्रतिपत्कल्पेब्रह्मणोऽर्चनविधिवर्णनंनामसप्तदशो
ऽध्यायः ॥ १७ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ पौर्णमासोपवासंतुकृत्वाभक्त्यानराधिप ॥ अनेनविधिनायस्तुविरिंचिंपूजयेन्नरः ॥ १ ॥ प्रतिप
द्यांमहाबाहोसगच्छेद्ब्रह्मणःपदम् ॥ ऋग्भि[6]र्विशेषतोदेवीविरिंचेर्वास्तुदेवताः ॥ २ ॥ कार्तिकेमासिदेवस्यरथयात्राप्रकीर्तिता ॥ यांकृ
त्वामानवोभक्त्यायातिब्रह्मसलोकताम् ॥ ३ ॥ कार्तिकेमासिराजेंद्रपौर्णमास्यांचतुर्मुखम् ॥ मार्गेणचर्मणासार्धंसावित्र्याचपरंतप ॥ ४ ॥

---

१ अवकाश्तवसंस्थाश्च-इ०पा० । मूलस्थोऽपि पाठःसंदिग्ध एव । २ ऋषयश्च-इ०पा० । ३ अल्पभारं च भारत-इ०पा० । ४ मुकुलम्-इ०पा० । ५ परमां गतिम्-इ०पा० । ६ अग्निः-इ०पा० ।

भ्रामयेन्नगरंसर्वंनानावाद्यैःसमन्वितम् ॥ स्थापयेद्भ्रामयित्वातुसलोकंनगरंनृप ॥ ५ ॥ ब्राह्मणंभोजयित्वाग्रेशांडिलेयंप्रपूज्यच ॥
आरोपयेद्रथेदेवंपुण्यवादित्रनिस्वनैः ॥ ६ ॥ रथाग्रेशांडिलीपुत्रंपूजयित्वाविधानतः ॥ ब्राह्मणान्वाचयित्वाचकृत्वापुण्याहमंगलम्
॥ ७ ॥ देवमारोपयित्वातुरथेकुर्यात्प्रजागरम् ॥ नानाविधैःप्रेक्षणकैर्ब्रह्मघोषैश्चपुष्कलैः ॥ ८ ॥ कृत्वाप्रजागरंह्येवंप्रभातेब्राह्मणंनृप॥
भोजयित्वायथाशक्त्याभक्ष्यभोज्यैरनेकशः ॥ ९ ॥ पूजयित्वाजनंवीरवस्त्रेणविधिवन्नृप[1] ॥ बीजेनचमहाबाहोपयसापायसेनच ॥ १० ॥
ब्राह्मणान्वाचयित्वाचछंदेनविधिनानृप ॥ कृत्वापुण्याहशब्दंचरथंचभ्रामयेत्पुरे ॥ ११ ॥ चतुर्वेदविदैर्विप्रैर्भ्रामयेद्ब्राह्मणोरथम् ॥ बह्वृचा
थर्वणोच्चारैश्छंदोगाध्वर्युभिस्तथा ॥ १२ ॥ भ्रामयेद्देवदेवस्यसुरज्येष्ठस्यतंरथम् ॥ प्रदक्षिणंपुरंसर्वंमार्गेणसुसमेनतु ॥ १३ ॥ नवो
ढव्योरथोवीरशूद्रेणशुभमिच्छता ॥ नारुहेतरथंप्राज्ञोमुक्त्वैकंभोजनंनृप ॥ १४ ॥ ब्रह्मणोदक्षिणेपार्श्वेसावित्रींस्थापयेन्नृप ॥ भोजको
वामपार्श्वेतुपुरतः कंजजंन्यसेत् ॥ १५ ॥ एवंतूर्यनिनादैस्तुशंखशब्दैश्चपुष्कलैः ॥ भ्रामयित्वारथंराजन्पुरंसर्वंप्रदक्षिणम् ॥ १६ ॥
स्वस्थानेस्थापयेद्भूयः कृत्वानीराजनंबुधः ॥ यएवंकुरुतेयात्रांभक्त्यायश्चापिपश्यति ॥ १७ ॥ रथंचाकर्षतेयस्तुसगच्छेद्ब्रह्मणःपदम् ॥
कार्तिकेमास्यमावास्यांयस्तुदीपप्रदीपनम् ॥ १८ ॥ शालायांब्रह्मणःकुर्यात्सगच्छेद्ब्रह्मणःपदम् ॥ प्रतिपदिब्राह्मणांश्चापिगुडमिश्रैः
प्रदीपकैः ॥ १९ ॥ वासोभिरहतैश्चापिसगच्छेद्ब्रह्मणःपदम् ॥ गंधैःपुष्पैर्नवैर्वस्त्रैरात्मानंपूजयेच्चयः[2] ॥ २० ॥ तस्यांप्रतिपदायां
तुसगच्छेद्ब्रह्मणःपदम् ॥ महापुण्यातिथिरियंबलिराज्यप्रवर्तिनी ॥ २१ ॥ ब्रह्मणःसुप्रियानित्यंबालेयापरिकीर्तिता ॥ ब्राह्मणा
न्पूजयित्वास्यामात्मानंचविशेषतः ॥ २२ ॥ सयातिपरमंस्थानंविष्णोरमिततेजसः ॥ चैत्रेमासिमहाबाहोपुण्याप्रतिपदापरा ॥ २३ ॥
तस्यांयःश्वपचंस्पृष्ट्वास्नानंकुर्यान्नरोत्तम ॥ नतस्यदुरितंकिंचिन्नाधयोव्याधयोनृप ॥ २४ ॥ भवंतिकुरुशार्दूलतस्मात्स्नानंप्रव
र्तयेत् ॥ दिव्यंनीराजनंतद्धिसर्वरोगविनाशनम् ॥ २५ ॥ गोमहिष्यादियत्किंचित्तत्सर्वंभूषयेन्नृप ॥ तैलशस्त्रादिभिर्वस्त्रै

१ तु तं वीरं वस्त्रेण विधिवन्नृप–इ०पा०। २ श्च नैवेद्यैः– इ०पा०।

स्तारेणास्तदधोनेयेत् ॥ २६ ॥ ब्राह्मणानांतथाभोज्यंकुर्यात्कुरुकुलोद्वह ॥ तिस्रोह्येताःपराःप्रोक्तास्तिथयःकुरुनंदन ॥ २७ ॥
कार्तिकेश्वयुजेमासिचैत्रेमासेचभारत ॥ स्नानंदानंशतगुणंकार्तिकेयातिथिर्नृप ॥ २८ ॥ बलिराज्यातिसुखदापांशुलाशुभनाशि
नी ॥२९॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिप्रतिपत्कल्पसमाप्तिवर्णनंनामाष्टादशोऽध्यायः ॥ १८ ॥छ॥ सुमंतुरुवाच ॥ द्वितीयायांतुरा
जेंद्रअश्विनौसोमपीतिनौ ॥ च्यवनेनकृतौयज्ञेमिषतोमघवस्यच[1] ॥ १ ॥ शतानीकउवाच ॥ कथमिंद्रस्यमिषतःकृतौतौसोमपीति
नौ ॥ च्यवनेनहिदेवानांपश्यतांतद्वदस्वमे ॥ २ ॥ अहोमहत्तपस्तस्यच्यवनस्यमहात्मनः ॥ यदिंद्रस्यबलादेवदेवत्वंप्रापितावुभौ
॥ ३ ॥ सुमंतुरुवाच ॥ पुरातनयुगेसंध्यांपश्चिमायांनराधिप ॥ च्यवनोयोगमास्थायगंगाकूलेऽवसच्चिरम् ॥ ४ ॥ तत्रशर्यातिरा
यातःस्नातुमंतः[2]पुरैःसह ॥ स्नात्वाभ्यर्च्यपितृन्[3]देवान्गमनायोपचक्रमे ॥ ५ ॥ तत्रमूढंजनपदमपश्यत्पथिचेष्टनम् ॥ विण्मू
त्रोत्सर्गसंरुद्धंज्योतिराक्षितनिष्क्रियम् ॥ ६ ॥ भ्रमंतंतत्रतत्रैवराजास्वबलमीक्ष्यवै ॥ उवाचदुर्मनाराजाअमात्यान्स्वान्पुरोगमान्[4]
॥ ७ ॥ च्यवनस्याश्रमोयंहिनापरोध्यस्तुकेनचित् ॥ नचोवाचयदाकश्चित्तस्यराज्ञस्तुपृच्छतः ॥ ८ ॥ तदासुतासुकन्यास्यप्रो
वाचपितरंवचः ॥ मयादृष्टंतुयत्तातसखिभिःसहकौतुकम् ॥ ९ ॥ तत्तेवच्मिनिबोधत्वंशृणुतातमहाद्भुतम् ॥ शिंजितारावबहुलाः कांचीनू
पुरमेखलाः ॥ १० ॥ गायन्त्योविलपन्त्यश्चक्रीडन्त्यश्चात्रकानने ॥ कोकिलध्वनिमश्रौषंव्यक्ताव्यक्ताक्षरंकृशम् ॥ ११ ॥ सुक
न्येह्येहिह्येहीतिवल्मीकाद्वाचमुद्गिरन् ॥ तत्रगत्वाद्भुतंतातपश्यामःकिलपावकौ ॥ १२ ॥ दीपाविवाचलशिखौभूयः कन्याउवा
चह ॥ मयाचकौतुकात्ताताकिमेतादित्यबुद्धितः ॥ १३ ॥ सूदितौदर्भसूच्यग्रैस्तत्तेजःसमुपारमत् ॥ तच्छ्रुत्वानृपतिस्त्रस्तस्तू
र्णंतद्वनमागमत् ॥ १४ ॥ यत्रास्तेभार्गवःकष्टंवल्मीकांतर्गतोमुनिः ॥ गत्वासतत्रप्रोवाचप्रणिपत्यद्विजोत्तमम् ॥ १५ ॥ अपराधं

१ केवलमार्षोऽयं पाठः सर्वेषु पुस्तकेषु । २ मंत्रिपुरःसरः–इ०पा० । ३ अतिथीन्–इ०पा० । ४ धर्मेणामात्यान्पुरोहितपुरोगमान्–इ०पा० ।

मयादेवतत्क्षमस्वनमोऽस्तुते ॥ सतंप्रोवाचनृपतिंमयाज्ञातंनराधिप ॥ १६ ॥ सुकन्यांमेप्रयच्छस्वनिवेशार्थींह्यहंनृप ॥ अनुक्र
मन्सुकन्यांतुदत्वाराजन्सुखीभव ॥ १७ ॥ इत्युक्तःप्रददौराजासुकन्यामविचारयन् ॥ ततःस्वपुरमागम्यअवसत्सुचिरंसुखी ॥
॥ १८ ॥ सुकन्यापिपतिंलब्ध्वासुप्रीताराधयत्तदा ॥ राजश्रियंपरित्यज्यवल्कलाजिनधारिणी ॥ १९ ॥ गतेबहुतिथेकालेवसंतेसमुप
स्थिते ॥ तपोद्योतितसर्वांगींरूपौदार्यगुणान्विताम् ॥ २० ॥ स्नातांस्वभार्यांच्यवनउवाचमधुराक्षरम् ॥ एह्येहिभद्रेभद्रंतेशयनीयं
समाश्रय ॥ २१ ॥ अपत्यंजनयस्वाद्यकुलद्वयविवर्धनम् ॥ एवमुक्तातुसाकन्याप्रांजलिः पतिमब्रवीत् ॥ २२ ॥
नार्हस्यद्यसुकल्याणसंगमंस्थंडिलेऽसमे ॥ ममप्रियंकुरुष्वाद्यततोमामाह्वयस्वच ॥ २३ ॥ पितृगेहेयथातिष्ठंशयनीयेसुसंस्कृते ॥ बहुगैरि
कवर्णाद्यैःश्वेतपीतारुणाकुले ॥ २४ ॥ वस्त्रालंकारगंधाद्यैस्तथात्वमपितत्कुरु ॥ आत्मानंवयसोपेतंरूपवंतंसुवर्चसम् ॥ २५ ॥ वस्त्रालंकार
गंधाढ्यंपश्येयंयेनसादरम् ॥ सुकन्यायावचःश्रुत्वाच्यवनःप्राहदुर्मनाः ॥ २६ ॥ नमेऽस्तिवित्तंकल्याणिपितुस्तेऽस्तियथावने ॥ सकथं
भूषयाम्यद्यसुरूपश्चकथंवद ॥ २७ ॥ प्रोवाचसापतिंभूयःप्रहसंतीकृतांजलिः ॥ वित्तंददावैलविलोरूपंवैरोचनोददत् ॥ २८ ॥ च्यवनः
प्राहभार्यांतांनंकरिष्येतपोव्ययम् ॥ एवमुक्तातपश्चोग्रंततापसुचिरंतदा ॥ २९ ॥ अथतत्रागतौवीरावश्विनौकालपर्ययात् ॥ दृष्टवंतौसुक
न्यांतांदीप्त्यावैदेवतामिव ॥ ३० ॥ उपगम्योचतुस्तांतौकात्वंसुंदरिरूपिणी ॥ किमर्थमिहएकात्वंतिष्ठसेकस्तवाश्रयः ॥ ३१ ॥ साता
वुवाचतन्वंगीशर्यातिदुहिताह्यहम् ॥ भर्ताचच्यवनोमह्यंकोचवांमेतथोच्यताम् ॥ ३२ ॥ ऊचतुश्चाश्विनौदेवावावांविद्धिनृपात्मजे ॥ किं
करिष्यसितेनत्वंजीर्णेनचकृशेनच ॥ ३३ ॥ आवयोर्वृणुभर्तारमेकमेवयमिच्छसि ॥ सात्वब्रवीच्चमामैवंवक्तुमर्हौदिवौकसौ ॥ ३४ ॥
भर्तारमनुरक्तांगीयथास्वाहाविभावसोः ॥ अश्विनावूचतुः ॥ आयातुचविशत्वद्यच्यवनोवैष्णवीजलम् ॥ ३५ ॥ ततोनौमध्यगंह्येकंवृणी

१ कृतमिति शेषः । मयेति कन्यायांस्वत्वाभिमानात् । परिवारकृतस्यापि कर्मणः स्वामिन्यारोपस्य सार्वत्रिकत्वात् । २ निवेशं गच्छ वै नृप-इ०पा० ।
३ नार्हसे ह्यद्य कल्याण आह्वानं स्थंडिले मम-इ० पा० । ४ तत्करिष्ये तपोव्ययात्-इ० पा० । ५ तत्वज्ञा-इ० पा० ।

ष्वान्यंयमिच्छसि ॥ तावब्रूतांसुकन्यांतुगत्वापृच्छस्वकंपतिम् ॥ ३६ ॥ तंचपृष्ट्वापुनश्चात्रागच्छनौसंनिधौपुनः ॥ आवामत्रैवतिष्ठा
वोयावदागमनंतव ॥ ३७ ॥ सागत्वाप्राहभर्तारमाश्विनावेवमूचतुः ॥ रूपवंतंचभर्तारंकरिष्यामोयमिच्छसि ॥ ३८ ॥ अथमध्यगतं
ह्येकंभर्तृत्वेनवरिष्यसि ॥ एवमस्त्वितितांप्राहसभार्यांच्यवनस्त्वरन् ॥ ३९ ॥ सातंगृह्यजगामाशुयत्रतौभिषजावुभौ ॥ सतावुवाच
च्यवनोयथोक्तंभवतोर्वचः ॥ ४० ॥ कुरुतंह्याश्विनौक्षिप्रंसुकन्याचेप्सितंवृणोत् ॥ तौतंसंगृह्यगंगायांप्रविष्टौमुनिनासह ॥ ४१ ॥ मुहू
र्तात्तुसमुत्तिष्ठन्नृपतश्चश्रियावृताः ॥ शोभेतेस्ममहाबाहोकमुद्भिद्यतपोयुताः ॥ ४२ ॥ कलपादौकलशेयद्वत्कंजाक्षव्योमवेधसः ॥ उद
कादुत्थितास्तस्मात्सर्वेतेसमरूपकाः ॥ ४३ ॥ सुकन्यातुततोदृष्ट्वाभर्तारंदेवरूपिणम् ॥ हर्षेणमहताविष्टानचतंवेदभारत ॥ ४४ ॥
समकायाःसमवयःसमरूपाःसमाश्रियः ॥ वस्त्रालंकारसदृशान्दृष्ट्वाचिंतागताचिरम् ॥ ४५ ॥ साचिंतयित्वासुचिरंवैद्यदेवावुवाचह ॥ बी
भत्सोपिमयाभर्तापरित्यक्तोनकर्हिचित् ॥ भवद्भिरात्मसदृशंकथंत्यज्यवृणेपरम् ॥ ४६ ॥ तस्मात्तमेवभर्तारंप्रयच्छध्वंदिवौकसः ॥
तयासबहुमानंतौप्रांजलिःप्रार्थितौतदा ॥ देवचिह्नानिस्वान्येवधारयन्तौसुपूजितौ ॥ ४७ ॥ सुकन्यानिपुणंतौतुसुनिरीक्ष्यचविह्वला ॥
नरजोननिमेषोवैनस्पृशेतेधरांपदे ॥ ४८ ॥ अयंचसरजोम्लानोभूमिमाश्रित्यातिष्ठति ॥ निमेषंचैवतस्यैवज्ञात्वावैच्यवनोवृतः ॥ ४९ ॥
च्यवनेवृतेसुकन्ययापुष्पवृष्टिःपपातह ॥ देवदुंदुभयश्चैवप्रावाद्यंतअनेकशः ॥ ५० ॥ ततस्तुच्यवनस्तुष्टोदिव्यरूपधरस्तदा ॥ उवा
चतौतुसुप्रीतअश्विनौकिंकरोमिवाम् ॥ ५१ ॥ भार्यादत्ताकृतंरूपंदेवानामपिदुर्लभम् ॥ उपकारंवरिष्ठंयोनकरोत्युपकारिणः ॥ ५२ ॥
एकविंशत्सगच्छेच्चनरकाणिक्रमेणवै ॥ तस्मादहंवरिष्ठंवैकरिष्येऽहममातुषम् ॥ ५३ ॥ उपकारंभवद्भ्यांतुप्रीतःकुर्यांसुनिश्चितम् ॥ य
ज्ञभागफलंदद्यांयद्देवेष्वपिदुर्लभम् ॥ ५४ ॥ एवमुक्त्वातुदेवेशौविससर्पमहामुनिः ॥ आजगामाश्रमंपुण्यंसहभार्योमुदान्वितः ॥ ५५ ॥
अथशुश्रावशर्यातिश्च्यवनंदेवरूपिणम् ॥ जगामचमहातेजाद्रष्टुंमुनिवरंवशी ॥ ५६ ॥ तंदृष्ट्वाप्राणिपत्यादौप्रतिपूज्ययथार्हतः ॥ सुकन्यांतु

१ इदम्–इ० पा० । २ अडभाव आर्षः । ३ कृतम्–इ० पा० ।

ततोदृष्ट्वाप्रणिपत्याभिनंद्यच ॥ ५७ ॥ सस्वजेमूर्ध्निआघ्रायततोतसंगंसमानयत् ॥ सातस्याःसस्वजेप्रेम्णाआनंदाश्रुपरिप्लुता ॥ ५८ ॥
संस्थाप्यतांमुदायुक्तोनृपतिःसहभार्यया ॥ भूयोब्रवीत्सुसंतुष्टंच्यवनस्तंनराधिपम् ॥ ५९ ॥ संभारंकुरुयज्ञार्थंयाजयिष्येनराधिप ॥ एव
मुक्तःसनृपतिःप्रणिपत्यमहामुनिम् ॥ ६० ॥ जगामस्वपुरंहृष्टोयज्ञार्थंयत्नमाचरत् ॥ सप्रेष्यान्प्रेषयन्क्षिप्रंयज्ञार्थेद्रव्यमाहरत् ॥ ६१ ॥
मंत्रिपुरोहिताचार्यानानयामाससत्वरम् ॥ समानीतेषुसर्वेषुतेषुद्रव्येषुभारत ॥ ६२ ॥ आजगामविशुद्धात्माच्यवनःसहभार्यया ॥ सपूजि
तश्चशुश्रावमहांतंत्यागमौजसम् ॥ ६३ ॥ अन्यैश्चबहुभिःसार्द्धमत्र्यंगिरसभार्गवैः ॥ प्रवर्तितेमहायज्ञेयजमानेनृपोत्तमे ॥ ६४ ॥ ऋत्विक्त्व
कर्मनिरतेहूयमानेहुताशने ॥ आहूताःस्वागताःसर्वेभागार्थंत्रिदिवालयाः ॥ ६५ ॥ यज्ञभागेप्रवृत्तेतुशास्त्रोक्तेतुविधानतः ॥ आगताव
श्विनौतत्रआहूतौच्यवनेनतु ॥ ६६ ॥ आह्वानेक्रियमाणेतुअश्विभ्यांतुतदानृप ॥ प्रोवाचेंद्रोऽथच्यवनंनैतौभागान्वितौकुरु ॥ ६७ ॥ देवा
नांभिषजावेतौनभागार्हौनदैवतौ ॥ च्यवनस्त्विंद्रमाहेदंदेवौह्येतावुभावपि ॥ ६८ ॥ ममोपकारिणावेतौदास्येभागंनसंशयः ॥ ततोह्युवाच
सक्रोधःसशक्रश्च्यवनंरुषा ॥ ६९ ॥ विप्रर्षेप्रहरिष्यामियदिभागंप्रयच्छसि ॥ एवमुक्तस्तुविप्रर्षिर्नचोवाचापिकिंचन ॥ ७० ॥ भागौददौ
चसोऽश्विभ्यांसुवमुद्यम्यमंत्रतः ॥ अथउद्यम्याभिदुरंमोक्तुकामोदिवस्पतिः ॥ ७१ ॥ स्तंभितश्च्यवनेनाथसवज्रःसनराधिप ॥ सस्तंभयि
त्वात्विंद्रंतुभागंदत्त्वाश्विनोर्वशी ॥ ७२ ॥ समापयामासतदायज्ञकर्मयथार्थवत् ॥ कंजजोऽथाजगामाशुआहचच्यवनंतदा ॥ ७३ ॥ उत्तंभ्य
तामयंलेखोभागश्चास्त्वाश्विनोरिह ॥ तथेंद्रस्तमुवाचेदंच्यवनंप्रीतमानसः ॥ ७४ ॥ जानामिशक्तितपसश्च्यवनेहतवोत्तमाम् ॥
स्थापनार्थंहितपसस्तवएतत्कृतंमया ॥ ७५ ॥ अद्यप्रभृतिभागोस्तुदेवत्वंचाश्विनोस्तथा ॥ यस्त्विमांतपसःख्यातिंत्वदीयांवैपठिष्यति
॥ ७६ ॥ शृणुयाद्वापिशुद्धात्मातस्यपुण्यफलंशृणु ॥ विरोचनसदोगत्वागत्वापुष्पसदस्तथा ॥ ७७ ॥ कालेथवामदेवस्यमुंजकेशसदस्तथा
॥ यौवनयुक्तःसक्रीडांस्तिष्ठतीतिनसंशयः ॥ ७८ ॥ एवमुक्त्वाजगामाशुदेवःस्वभवनंवशी ॥ च्यवनोऽपिसभार्योवैशर्यातिश्चाश्रमंगतः
॥ ७९ ॥ अथापश्यद्विमानाभंभवनंदेवनिर्मितम् ॥ शय्यासनवरैर्जुष्टंसर्वकामसमृद्धिमत् ॥ ८० ॥ उद्यानवापिभिर्जुष्टंदेवेंद्रेण

समाहृतम् ॥ गोखंडसन्निभंरेजेगृहंतद्धुविदुर्लभम् ॥ ८१ ॥ सुभूषणानिदिव्यानिरत्नवंतिमहांतिच ॥ अरजांसिचवस्त्राणिदिव्यप्रावरणानिच
॥ ८२ ॥दृष्ट्वातत्सर्वमखिलंसहपत्न्यामहामुनिः ॥ मुदंपरामिकांलेभेइंद्रंचप्रशशंसह॥८३॥एवमिष्टातिथिरियंद्वितीयाअश्विनोर्नृप॥ देवत्वंयज्ञ
भागंचसंप्राप्ताविहभारत ॥ ८४ ॥ उपोष्याविधिनायेनतंशृणुष्वनराधिप ॥ रूपंसुरूपंयोवांछेद्द्वितीयायांनराधिप ॥ ८५ ॥
कार्तिकेशुक्लपक्षस्यद्वितीयायांनराधिप ॥ पुष्पाहारोवर्षमेकंभवेत्सनियतात्मवान् ॥ ८६ ॥ कालप्राप्तानियानिस्युर्हविष्यंकुसुमा
नितु॥भुंजीयात्तानिदत्त्वातुब्राह्मणेभ्योनराधिप॥८७॥सौवर्णरौप्यपुष्पाणिअथवाजलजानिच॥व्रतांतेतस्यसंतुष्टौदेवौत्रिभुवनेऽश्विनौ ॥ ८८॥
ददतुःकामगंदिव्यंविमानमतितेजसम् ॥ सुचिरंदिविनारीभिर्लोकेऽसौरमतेऽश्विनोः ॥ ८९ ॥ इहचागत्यकल्पांतेजातोविप्रःपुरस्कृतः ॥
वेदवेदांगविदुषःसप्तजन्मांतराण्यसौ ॥ ९० ॥ जातोजातोभवेद्विद्वान्ब्राह्मणोसौकृतेयुगे ॥ दातायज्ञपतिर्वाग्मीआधिव्याधिविवर्जितः ॥९१॥
पुत्रपौत्रैःपरिवृतःसहपत्न्याऽवसच्चिरम् ॥ मध्यदेशेसुनगरेधर्मिष्ठोराज्यभाग्भवेत् ॥ ९२ ॥ इत्येषाकथितातुभ्यंद्वितीयापुष्पसंज्ञिता ॥
फलसंज्ञातथान्यास्यात्सुतेवैमुंजकेशिनि ॥ ९३ ॥ सुष्ठुपुण्यापापहराविष्टरश्रवसःप्रिया ॥ अशून्यशयनालोकेप्रख्याताकुरुनंदन ॥ ९४ ॥
तामुपोष्यनरोराजञ्छ्रद्धाभक्तिपुरस्कृतः ॥ ऋद्धिंवृद्धिंश्रियंवाथभार्ययासहमोदते ॥ ९५ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिशतसहस्रा
र्धसंहितायांद्वितीयाकल्पेशय्यात्याख्यानेपुष्पद्वितीयावर्णनंनामैकोनविंशोध्यायः ॥ १९ ॥ ॥ शतानीकउवाच ॥ ॥ ब्रूहिमेद्वि
जशार्दूलद्वितीयांफलसंज्ञिताम् ॥ यामुपोष्यनरोयोषिद्वियोगंनेहगच्छति ॥ १ ॥ पत्न्यानरोमुनिश्रेष्ठभार्याचपतिनासह ॥
तामहंश्रोतुमिच्छामिविधवास्त्रीनजायते ॥ २ ॥ उपोषितेनयेनार्यपत्न्याचसहितोनरः ॥ तन्मेब्रूहिद्विजश्रेष्ठश्रेयोऽर्थंनरयोषिताम् ॥ ३ ॥
येनमेकौतुकंब्रह्मञ्छ्रुत्वापूर्वंप्रसर्पति ॥ ॥ सुमंतुरुवाच ॥ ॥ अशून्यशयनांनामद्वितीयांशृणुभारत ॥ ४ ॥ यामुपोष्यनवैधव्यंस्त्री
प्रयातिनराधिप ॥ पत्नीवियुक्तश्चनरोनकदाचित्प्रजायते ॥ ५ ॥ शेतेजगत्पतिःकृष्णःश्रियासार्धंयदानृप ॥ अशून्यशयनानामतदा

१ कांचनानि तु–इ०पा०। २ तुनगरे–इ०पा०।

ग्राह्याहिसातिथिः ॥ ६ ॥ कृष्णपक्षेद्वितीयायांश्रावणेमासिभारत ॥ इममुच्चारयेत्स्नातःप्रणम्यजगतःपतिम् ॥ ७ ॥ श्रीवत्सधारिणंदेवं
भक्त्याभ्यर्च्यश्रियासह ॥ श्रीवत्सधारिञ्छ्रीकांतश्रीवत्सश्रीपतेऽव्यय ॥ ८ ॥ गार्हस्थ्यंमाप्रणाशंमेयातुधर्मार्थकामदम् ॥ गावश्चमाप्र
णश्यंतुमाप्रणश्यंतुमेजनाः ॥ ९ ॥ जामयोमाप्रणश्यंतुमत्तोदांपत्यभेदतः ॥ लक्ष्म्यावियुज्यतेदेवनकदाचिद्यथाभवान् ॥ १० ॥ तथा
कलत्रसंबंधोदेवमामेवियुज्यताम् ॥ लक्ष्म्यानशून्यंवरदयथातेशयनंसदा ॥ ११ ॥ शय्याममाप्यशून्यास्तुतथातुमधुसूदन ॥ एवंप्रसाद्य
पूजांचकृत्वालक्ष्म्यास्तथाहरेः ॥ १२ ॥ फलानिदद्याच्छायायाममभीष्टानिजगत्पतिम् ॥ नक्तंप्रणम्यायतनेहविर्भुंजीतवाग्यतः ॥ १३ ॥
ब्राह्मणायद्वितीयेऽह्निशक्त्यादद्याच्चदक्षिणाम् ॥ ॥ शतानीकउवाच ॥ ॥ कानितानिअभीष्टानिकेशवस्यफलानितु ॥ १४ ॥
योज्यानिशयनेविप्रदेवदेवस्यकथ्यताम् ॥ किंचदानंद्वितीयेऽह्निदातव्यंब्राह्मणस्यतु ॥ १५ ॥ भक्तैर्नरैर्द्विजश्रेष्ठदेवदेवस्यशक्तितः ॥
॥ सुमंतुरुवाच ॥ ॥ यानितत्रमहाबाहोकालेसंतिफलानितु ॥ १६ ॥ मधुराणिसुतीव्राणिनचापिकटुकानितु ॥ दातव्यानिनृपश्रेष्ठ
स्वशक्त्याशयनेनृप ॥ १७ ॥ मधुराणिप्रदत्तानिनरोवल्लभतांव्रजेत् ॥ योषिच्चकुरुशार्दूलभर्तुर्वल्लभतामियात् ॥ १८ ॥ तस्मात्कटु
कतीव्राणिस्त्रीलिंगानिविवर्जयेत् ॥ खर्जूरमातुलिंगानिश्वेतेनाशिरसासह ॥ १९ ॥ फलानिशयनेराजन्यज्ञभागहरस्यतु ॥ देयानिकुरुशार्दू
लस्वशक्त्यासुंजकेशिने ॥ २० ॥ एतान्येवतुविप्रस्यगांगेयसहितानितु ॥ द्वितीयेऽह्निप्रदेयानिभक्त्याशक्त्याचभारत ॥ २१ ॥ वा
सोदानंतथाधान्यफलदानसमन्वितम् ॥ गांगेयस्यविशेषेणधान्यदानंप्रचक्षते ॥ २२ ॥ एवंकरोतियःसम्यङ्नरोमासचतुष्टयम् ॥ ततोज
न्मत्रयंवीरगृहभंगोनजायते ॥ २३ ॥ अशून्यशयनश्चासौधर्मकामार्थसाधनः ॥ भवत्यव्याहतैश्वर्यःपुरुषोनात्रसंशयः ॥ २४ ॥ नारी
चराजन्धर्मज्ञाव्रतमेतद्यथाविधि ॥ याकरोतिनसाशोच्याबंधुवर्गस्यजायते ॥ २५ ॥ वैधव्यंदुर्भगत्वंचभर्तृत्यागंचसत्तम ॥ नाप्नोतिजन्म
त्रितयमेतच्चीर्त्वामहाव्रतम् ॥ २६ ॥ अदत्वाकटुकानीहफलानिकुरुनंदन ॥ खर्जूरमातुलिंगानिबृहत्फलशिरांसिच ॥ २७ ॥ दत्त्वाद्विजे

भ्योराजेंद्रमधुराणिपराणिच ॥ तस्मात्स्वशक्त्यायत्तेनदेयानिमधुराणिच ॥ २८॥ इत्येषाकथिताराजन्द्वितीयातिथिरुत्तमा ॥ यामुपो
ष्यनरोराजन्वृद्धिंवृद्धिंतथाव्रजेत् ॥ २९ ॥ ॥ शतानीकउवाच ॥ ॥ भवताकथितेयंवैद्वितीयातिथिरुत्तमा ॥ अश्विभ्यांद्विजशार्दूल
कथमस्यांजनार्दनः ॥ ३० ॥ संपूज्यःफलसंज्ञायांकथितःपद्मयासह ॥ तदत्रकौतुकंमह्यंसुमहज्जायतेद्विज ॥ ३१ ॥ ॥ सुमंतुरुवाच॥ ॥
एवमेतन्नसंदेहोयथावदसिभारत ॥ अश्विनोर्वैतिथिरियंकिंतुवाक्यंनिबोधमे ॥ ३२ ॥ अशून्यशयनादत्ताविष्णोरमिततेजसः ॥ अश्विभ्यां
कुरुशार्दूलप्रीतयेमुंजकेशिनः ॥ ३३ ॥ तावेवकुरुशार्दूलपूज्येतेऽत्रमहीपते ॥ नासत्यौभगवान्विष्णुर्दत्तश्चश्रीर्विभाव्यते ॥ ३४ ॥
इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिशतसहस्रार्धसंहितायांद्वितीयाकल्पसमाप्तौविंशोऽध्यायः ॥ २० ॥ छ ॥ सुमंतुरुवाच ॥ ॥ पति
व्रतापतिप्राणापतिशुश्रूषणेरता ॥ एवंविधापियाप्रोक्ताशुचिःसंशोभनंसती ॥ १ ॥ सोपवासातृतीयांतुलवणंपरिवर्जयेत् ॥ साग्रह्ण
तिचवैभक्त्याव्रतमामरणांतिकम् ॥ २ ॥ गौरीददातिसंतुष्टारूपंसौभाग्यमेवच ॥ लावण्यंललितंहृद्यंश्लाघ्यंपुंसांमनोरमम् ॥ ३ ॥ पुंसोम
नोरमानारीभर्तानार्यामनोरमः ॥ गौरीव्रतेनभवतिराजँल्लवणवर्जनात् ॥ ४ ॥ इदंव्रतंप्रतिविभोधर्मराजस्यशृण्वतः ॥ उमयाचपुरा
प्रोक्तंयद्वाक्यंतन्निबोधमे ॥ ५ ॥ मयाव्रतमिदंसृष्टंसौभाग्यकरणंनृणाम् ॥ मर्त्येतुनियतानारीव्रतमेतच्चरिष्यति ॥ ६ ॥ सहभर्त्रास
मोदिष्येद्यावद्धर्ताहरोमम ॥ याचकन्यानभर्तारंविंदतेशोभनासती ॥ ७ ॥ सात्विदंव्रतमुद्दिश्यभवेदक्षारभोजना ॥ मच्चित्तामन्मनाः
कुर्यान्मद्भक्तामत्परिग्रहा ॥ ८ ॥ गौरींसंस्थाप्यसौवर्णींगंधालंकारभूषिताम् ॥ वस्त्रालंकारसंवीतांपुष्पमंडलमंडिताम् ॥ ९ ॥ लवणंगुडं
घृतंतैलंदद्यैशक्त्यानिवेदयेत् ॥ कटुखंडंजीरकंचपत्रशाकंचभारत ॥ १० ॥ गुडघृष्टांस्तथापूपान्खंडवेष्टांस्तथानृप ॥ ब्राह्मणेव्रतसं
पन्नेप्रदद्यात्सुबहुश्रुते ॥ ११ ॥ शुक्लपक्षेसदादेयायथाशक्त्याहिरण्मयी ॥ धनहीनेतुभक्त्याचमधुवृक्षमयींनृप ॥ १२ ॥ अर्च्यांनित्यंसंनि
धानात्तत्रगौरीनसंशयः ॥ अक्षारलवणंरात्रौभुंक्तेचैवसुवाग्यता ॥ १३ ॥ गौरीसन्निहितानित्यंभूमौप्रस्तरशायिनी ॥ एवंनियमयुक्तस्य

---

१ अतुलतेजसः-इ०पा० । २ अशनम्-इ०पा० । ३ तथा खंडम्-इ०पा० । ४ शक्त्या-इ०पा० । ५ स्वास्तरशायिनी-इ०पा० ।

देव्यायत्समुदाहृतम् ॥ १४ ॥ तच्छृणुष्वमहाबाहोकथ्यमानंमहाफलम् ॥ भर्तारंतुलभेत्कन्यायंवांछतिमनोनुगम् ॥ १५ ॥ सुचिरंसहवै
भर्त्राक्रीडयित्वाइहैवसा ॥ संततिंचप्रतिष्ठाप्यसहतेनैवगच्छति ॥ १६ ॥ हेलिलोकंचन्द्रलोकंलोकंचित्रशिखंडिनः ॥ गत्वायातिसदाराज
न्वामदेवस्यभारत ॥ १७ ॥ विधवातुयदाराजन्देव्याव्रतंपरायणा ॥ भर्तारंनियतानित्यंसदार्चनपरायणा ॥ १८ ॥ इहचोत्सृज्यदेहं
स्वंदृष्ट्वाहरिपुरोप्रियम् ॥ आक्षिप्ययमदूतेभ्यःसहभर्त्रारमेद्दिवि ॥ १९ ॥ वर्षकोटिंदशगुणांरमित्वासाइहागता ॥ भर्त्रासहैवपूर्वोक्तंलभते
फलमीप्सितम् ॥ २० ॥ इंद्राण्यापिव्रतमिदंपुत्रार्थिन्यानराधिप ॥ लब्धःपुत्रोव्रतस्यांतेजयंतोनामनामतः ॥ २१ ॥ अरुंधत्यातथा
चीर्णंवसिष्ठप्रीतिकामतः ॥ दृश्यतेदिविचाद्यापिवसिष्ठस्यसमीपतः ॥ २२ ॥ रोहिण्यालवणत्यागात्सपत्नीगणमर्दनम् ॥ लब्धंदेव्याःप्र
सादेनसौभाग्यंचलंदिवि ॥ २३ ॥ इत्येषातिथिरित्येवतृतीयालोकपूजिता ॥ सदाविशेषतःपुण्यावैशाखेमासियाभवेत् ॥ २४ ॥ पुण्या
भाद्रपदेमासिमाघेस्येवंनसंशयः ॥ माघेभाद्रपदेचापिस्त्रीणांधन्यांप्रचक्षते ॥२५॥ साधारणीतुवैशाखेसर्वलोकस्यभारत ॥ माघमासेतृतीयायां
गुडस्यलवणस्यच ॥ २६ ॥ दानंश्रेयस्करंराजन्स्त्रीणांचपुरुषस्यच ॥ गुडेनतुष्यतेदत्तोलवणेनतुविश्वभूः ॥ २७ ॥ गुडपूपास्तुदातव्या
मासिभाद्रपदेतथा ॥ तृतीयायांतुमावस्यवामदेवस्यप्रीतये ॥ २८ ॥ वारिदानंप्रशस्तंस्यान्मोदकानांचभारत ॥ वैशाखेमासिराजेंद्रतृती
याचंदनस्यच ॥ २९ ॥ वारिणातुष्यतेवेधामोदकैर्भीमएवहि ॥ दानात्तुचंदनस्येहकंजजोनात्रसंशयः ॥ ३० ॥ यास्तेषांकुरुशा
र्दूलवैशाखेमासिवैतिथिः ॥ तृतीयासाऽक्षयालोकेगीर्वाणैरभिनंदिता ॥ ३१ ॥ आगतेयंमहाबाहोभूरिचंद्रंत्रसुव्रता ॥ कलधौतंतथान्नं
चघृतंचापिविशेषतः ॥ ३२ ॥ यद्यद्दत्तंत्वक्षयंस्यात्तेनेयमक्षयास्मृता ॥ यत्किंचिद्दीयतेदानंस्वल्पंवायदिवाबहु ॥ ३३ ॥ तत्सर्वमक्षयंस्या
द्वैतेनेयमक्षयास्मृता ॥ योऽस्यांददातिकरकान्वारिबीजसमन्वितान् ॥ ३४ ॥ सयातिपुरुषोवीरलोकंवैहेममालिनः ॥ इत्येषाकथितावीरतृतीयाति
थिरुत्तमा ॥ ३५ ॥ यामुपोष्यनरोराजन्नृद्धिंवृद्धिंश्रियंभजेत् ॥ ३६ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिशतसहस्रार्धसंहितायांतृतीयाकल्प
विधिवर्णनंनामैकविंशोऽध्यायः ॥ २१ ॥ सुमंतुरुवाच ॥ चतुर्थ्यांतुसदाराजन्निराहारव्रतान्वितः ॥ दत्वातिलान्नंविप्रस्यस्वयंभुंक्तेतिलौदनम् ॥ १ ॥



१ नतिपरायणा–इ०पा० । २ धर्मम्–इ०पा० । ३ सर्वकामफलप्रदम्–इ०पा० । ४ सर्वकामार्थसिद्धये–इ०पा० । ५ अस्यां दत्तम्–इ०पा० ।

वर्षद्वयेसमाप्तिर्हिव्रतस्यतुयदाभवेत् ॥ विनायकस्तस्यतुष्टोददातिफलमीहितम् ॥ २ ॥ यातिभाग्यनिवासंहिक्रीडतेविभवैःसह ॥ इहचागत्यपुण्यांतेदिव्योदिव्यवपुर्यशी ॥ ३ ॥ मतिमान्धृतिमान्वाग्मीभाग्यवान्कामकारवान् ॥ असाध्यान्यपिसाध्येहक्षणादेवमहांत्यपि ॥ ४ ॥ हस्त्यश्वरथसंपन्नः पत्नीपुत्रसहायवान् ॥ राजाभवतिदीर्घायुःसतजन्मान्यसौनृप ॥ ५ ॥ एतद्ददातिसंतुष्टोविघ्नहंताविनायकः ॥ शतानीकउवाच ॥ विघ्नंकस्यकृतंतेनयेनविघ्नविनायकः ॥ ६ ॥ एतद्वदस्वविघ्नेशविघ्नकारणमद्यमे ॥ सुमंतुरुवाच ॥ कौमारेलक्षणेपुंसांस्त्रीणांचसुकृतेकृते ॥ ७ ॥ विघ्नंचकारविघ्नेशोगांगेयस्यविनायकः ॥ तत्तुविघ्नंविदित्वासौ कार्तिकेयोरुषान्वितः ॥ ८ ॥ उत्कृष्यदंतंतस्यास्याद्धंतुंतंचसमुद्यतः ॥ निवार्यापृच्छ्यदेवेशोरोषःकार्यःकुतस्त्वया ॥ ९ ॥ तंचाचख्यौसपित्रेवैकृतपूरुषलक्षणम् ॥ तत्रविघ्नंकृतेमह्यंयोषितानांचलक्षणम् ॥ १० ॥ अथोवाचमहादेवःप्रहसन्त्स्वसुतंकिल ॥ ममकिंलक्षणंपुत्रपश्यसेत्वंवदस्वमे ॥ ११ ॥ सचोवाचकरेतुभ्यंकपालंद्विजलक्षितम् ॥ अविचारेणसंस्थाप्यंकपालीतेनचोच्यसे ॥ १२ ॥ सतल्लक्षणमादायसमुद्रेप्राक्षिपद्रुषा ॥ अथदेवसमाजेवैप्रवृत्तेब्रह्मरुद्रयोः ॥ १३ ॥ अहंज्यायानहंज्यायान्विवादोऽभूत्तयोर्द्वयोः ॥ तवसंभूत्यभिज्ञोऽस्तिमांतुवेदनकश्चन ॥ १४ ॥ एवंशिवेऽतिब्रुवतिब्रह्मणःपंचमंशिरः ॥ मुक्ताट्टहासंप्रोवाचत्वामहंवेदिताभव ॥ १५ ॥ एवंब्रुवंतंरुद्रेणब्राह्मंहयशिरोमहत् ॥ नखाग्रेणनिकृत्तंचतस्यैवचकरेस्थितम् ॥ १६ ॥ करस्थेनैवतेनासावागच्छद्यत्रयोहरिः ॥ तपस्तेपेतदामेरौतत्रासौभगवान्वशी ॥ १७ ॥ कृत्तेहयशिरेतस्मिन्स्थानात्तस्मात्तुब्रह्मणः ॥ रोषाद्विनिःसृतस्त्वन्यःपुरुषःश्वेतकुंडली ॥ १८ ॥ कवचीसशिरस्कश्चसशरःसशरासनः ॥ अनिर्देश्यवपुःस्रग्वीकिंकरोमिसचाब्रवीत् ॥ १९ ॥ अथोवाचरुषाब्रह्माहन्यतांससुदुर्मतिः ॥ सतुमार्गेणरुद्रस्यआगच्छत्तुंडतोद्रुतम् ॥ २० ॥ रुद्रोपिविष्णुतेजोभिःप्रविष्टःसत्वाधिष्ठितः ॥ सप्रविश्यतदापश्यत्तपंतंचोत्तमंतपः ॥ २१ ॥ हरोनारायणंदेवंवैकुंठमपराजितम् ॥ हरंदृष्ट्वाथसंप्राप्तंकार्यंचास्यविचिंत्यच ॥ २२ ॥ उवाचशूलिनंदेवोभुजंशूलेनमेभिद ॥ सबिभेदमहाते

१ ईप्सितम्—इ०पा०। २ लभते यशः—इ०पा०। ३ हस्त्यन्नस्वार्थसंपन्नः—इ०पा०। ४ विघ्नहर्ता—इ०पा०।

जामुंजंशूलेनतंहरः ॥ २३ ॥ शूलभेदादसृगूर्ध्वंजगामावृत्यरोदसी ॥ विनिवृत्यततःपश्चात्कपालेनिपपातह ॥ २४ ॥ असृक्कपालेपतितंप्रदेशिन्याव्यवर्द्धयत् ॥ यदाहिविनिवृत्तिःस्याद्देवस्यरुधिरंप्रति॥२५॥तदातुविसृजेत्तोयंसकृत्वावारुणींतनुम्॥तोयेप्रवृत्तेऽसृग्भूतेकपालेयत्रतच्छिरः॥२६॥ कपालेतुप्रदेशिन्यारुद्रोऽसौरुधिरेसृजत् ॥ आमुक्तकवचंरक्तंरक्तकुंडलिनंनरम् ॥२७॥ अथोवाचभवंदेवंकिंकरोमीतिमानद ॥ असावपिससर्जाथश्वेतकुंडलिनंनरम् ॥ २८ ॥ तावुभौसमयुध्येतांधनुःप्रवरधारिणौ ॥ यथाराजन्बलीयांसौकुजकेतूयुगात्यये ॥ २९ ॥ तयोस्तुयुध्यतोरेवंसंवर्तश्चाधिकोगतः ॥ नचादृश्यतविजयएकस्यापितदातयोः ॥ ३० ॥ अथांतरिक्षेतौदृष्ट्वावागुवाचाशरीरिणी ॥ अवतारोऽथभवितायुवयोर्हिमयासह ॥ ३१ ॥ भारापनोदः कर्तव्यःपृथिव्यर्थेस्सुरैःसह ॥ तदाश्रयौहिभवितादेवकार्यार्थसिद्धये ॥ ३२ ॥ भूलोकभावंनिर्धूयभूयोगंतासुरालयम् ॥ एवमुक्त्वातुवैकुंठोददावेकंरवेस्तदा ॥ ३३ ॥ श्वेतकुंडलिनंहृष्टस्तंजग्राहरविर्मुदा ॥ इंद्रस्यापिततश्चापरंरक्तकुंडलिनंददौ ॥ ३४ ॥ जग्राहचमुदायुक्तइंद्रःस्वंचपुरंययौ ॥ गतौरवींद्रौप्रगृह्यपुरुषौक्रोधसंभवौ ॥ ३५ ॥ अथोवाचतदारुद्रंदेवःकमलसंस्थितः ॥ गच्छत्वमपिकापालेकपालव्रतचर्यया ॥ ३६ ॥ अवतारोव्रतस्यास्यमर्त्यलोकेभविष्यति ॥ येचव्रतंत्वदीयंवैधारयिष्यंतिमानवाः ॥ ३७ ॥ नतेषांदुर्लभंकिंचिद्भवितेहपरत्रच ॥ एवंसंलप्यबहुशःसुमुखंप्रतिनंद्यच ॥ ३८ ॥ आहूयचसमुद्रंसप्रत्युवाचाविचारयन् ॥ [2]कुरुष्वाभरणंस्त्रीणांलक्षणंयद्विलक्षणम् ॥ ३९ ॥ कार्तिकेयेनयत्प्रोक्तंतद्ददस्वाविचारयन् ॥ सचाहममनाम्नेदंभवेत्पुरुषलक्षणम् ॥ ४० ॥ देवेनतत्प्रतिज्ञातमेवमेतद्भविष्यति ॥ कार्तिकेयेनयात्प्रोक्तंतद्ददस्वाविचारयन् ॥ ४१ ॥ प्रयच्छास्यविषाणंवैनिष्कृष्टंयत्त्वयाऽधुना ॥ अवश्यमेवतद्भूतंभावितव्यंतुकस्यचित् ॥ ४२ ॥ ऋतेविनायकंतद्धिदैवयोगान्नकामतः ॥ गृहाणएतत्सामुद्रंयत्त्वयापरिकीर्तितम् ॥ ४३ ॥ स्त्रीपुंसोर्लक्षणंश्रेष्ठंसामुद्रमितिविश्रुतम् ॥ इमंचसविषाणंवैकुरुदेवाविनायकम् ॥ ४४ ॥ अथोवाचचदेवेशंबाहुलेयःसमत्सरम् ॥ विषाणंदधिचास्याहंतववाक्यान्नसंशयः ॥ ४५ ॥

१ दृष्ट्वा-इ०पा० । २ स्त्रीणां च पुरुषाणां च-इ०पा० ।

यदात्वयंविषाणंचमुक्त्वातुविचरिष्यति ॥ तदाविषाणमुक्तःसन्भस्मएतंकरिष्यति ॥ ४६ ॥ एवमस्त्वितितंचोक्त्वाविषाणंतत्क
रेददौ ॥ विनायकस्यदेवेशः कार्तिकेयमतेस्थितम् ॥ ४७ ॥ सविषाणकरोद्यापिदृश्यतेप्रतिमानृप ॥ व्योमसूनोर्महाबा
होर्विघ्नंकर्तुमहात्मनः ॥ ४८ ॥ एतद्रहस्यंदेवानांमयातेसमुदाहृतम् ॥ यत्रदेवानवैवेददेवानांभुविदुर्लभम् ॥ ४९ ॥ मयाप्रसन्नेन
तवगुह्यमेतदुदाहृतम् ॥ कथितंतिथिसंयोगेविनायककथामृतम् ॥ ५० ॥ यइमंश्रावयेद्विद्वान्ब्राह्मणान्वेदपारगान् ॥ क्षत्रियांश्चस्ववृत्तिस्था
न्विट्शूद्रांश्चगुणान्वितान् ॥ ५१ ॥ नतस्यदुर्लभंकिंचिदिहचामुत्रविद्यते ॥ नचदुर्गतिमाप्नोतिनचयातिपराभवम् ॥ ५२ ॥ निर्वि
घ्नंसर्वकार्याणिसाधयेन्नात्रसंशयः ॥ ऋद्धिंवृद्धिंश्रियंचापिविंदेतभरतोत्तम ॥ ५३ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिशतसहस्रार्धसं
हितायांचतुर्थीकल्पवर्णनंनामद्वाविंशोऽध्यायः ॥ २२ ॥ छ ॥ शतानीकउवाच ॥ केनायंभीमजोविप्रप्रमथाधिपतिःकृतः ॥ भर्तृत्वे
चापिविघ्नानामधिकारीकथंबभौ ॥ १ ॥ सुमंतुरुवाच ॥ साधुपृष्टोऽस्मिराजेंद्रयदर्थंविघ्नकारकः ॥ यैर्वापिविघ्नकरणैर्नियुक्तोऽ
पिविनायकः ॥ २ ॥ तत्तेवच्मिमहाबाहोशृणुष्वैकमनाधुना ॥ आद्येकृतयुगेवीरप्रजासर्गमवापह ॥ ३ ॥ दृष्ट्वाकर्माणिसिद्धा
निविनाविघ्नेनभारत ॥ अथक्लेशांप्रजांदृष्ट्वागर्वितांकृत्स्नशोनृप ॥ ४ ॥ बहुशश्चिंतयित्वातुइदंकर्ममहीपते ॥ विनायकःसमृद्ध्यर्थंप्रजानांवि
नियोजितः ॥ ५ ॥ गणानांचाधिपत्येचभीमकंजजसात्वतैः ॥ तनोपसृष्टोयस्तस्यलक्षणानिनिबोधमे ॥ ६ ॥ स्वप्नेवगा
हतेऽत्यर्थंजलमुंडांश्चपश्यति ॥ काषायवाससश्चैवक्रव्यादांश्चाधिरोहति ॥ ७ ॥ अंत्यजैर्गर्दभैरुष्ट्रैःसहैकत्रावतिष्ठते ॥ व्रजमान
स्तथात्मानंमन्यतेऽनुगतंपरैः ॥ ८ ॥ विमनाविफलारंभःसंसीदत्यनिमित्ततः ॥ करटारूढमात्मानमंभसोंतरगेतथा ॥ ९ ॥ प
त्तिभिश्चावृतंयांतंसंगमनांतिकंनृप ॥ पश्यतेकुरुशार्दूलस्वप्नांतेनात्रसंशयः ॥ १० ॥ चित्तंचविकृताकारंकरवीरविभूषितम् ॥ तेनो
पसृष्टोलभतेराज्यंपौरुषसंभवम् ॥ ११ ॥ कुमारीनचभर्तारमपत्यंगर्भिणीतथा ॥ आचार्यत्वंश्रोत्रियश्चशिष्याश्चाध्ययनंतथा ॥ १२ ॥

वणिग्लाभंचनाप्नोतिकृषिंचैवकृषीवलः ॥ स्नपनंतस्यकर्तव्यंपुण्येऽहनिमहीपते ॥ १३ ॥ गौरसर्षपकल्केनसाज्येनोत्सादितेनतु ॥ शुक्लप
क्षेचतुर्थ्यांतुवारेतुधिषणस्यच ॥ १४ ॥ तिष्येचवीरनक्षत्रेतस्यैवपुरतोनृप ॥ सर्वौषधैःसर्वगंधैर्विलिप्तशिरसस्तथा ॥ १५ ॥ भद्रासनो
पविष्टस्यस्वस्तिवाच्यद्विजाञ्छुभान् ॥ व्योमकेशंतुसंपूज्यपार्वतींभीमजंतथा ॥ १६ ॥ कृष्णंसपितरंतातपवमानंसितंतथा ॥ धिषणं
चेन्दुपुत्रंचकोणंकेतुंचभारत ॥ १७ ॥ विधुंतुदंबाहुलेयंनंदकस्यचधारिणम् ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ १८ ॥
मृत्तिकांरोचनांगंधान्गुग्गुलंचाप्सुनिक्षिपेत् ॥ यदाहृतंह्येकवर्णैश्चतुर्भिःकलशैर्ह्रदात् ॥१९॥ चर्मण्यानडुहेरक्तेस्थाप्यंभद्रासनंतथा ॥ सहस्रा
क्षंशतधारमृषिभिःपावनंकृतम् ॥ २० ॥ तेनत्वामभिषिंचामिपावमान्यःपुनंतुते ॥ भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः ॥ २१ ॥ भ
गमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः॥यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्धनि॥२२॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुतेसदा॥ स्नातस्यसार्षपंतैलंस्रु
वेणौदुंबरेणतु ॥ २३ ॥ जुहुयान्मूर्धनिकुशान्सव्येनपरिगृह्यतु ॥ मितश्चसंमितश्चैवतथाचशालकंटकः ॥ २४ ॥ कूष्माण्डोराजश्रेष्ठास्तेऽ
न्वयःस्वाहासमन्विताः ॥ नामभिर्बलिमंत्रैश्चनमस्कारसमन्वितैः ॥ २५ ॥ दद्याच्चतुष्पथेशूर्पेकुशानास्तीर्यसर्वतः ॥ कृताकृतांस्तंडुलां
श्चपलालौदनमेवच ॥ २६ ॥ मत्स्यान्पक्वांस्तथैवामान्मांसमेतावदेवतु ॥ पुष्पंचित्रंसगंधंचसुरांचात्रिविधामपि ॥ २७ ॥ मूलकंपूरिकाः
पूपांस्तथैवोंडेरिकास्रजम् ॥ दधिपायसमन्नंचगुडवेष्टान्समोदकान् ॥ २८ ॥ विनायकस्यजननीमुपतिष्ठेत्ततोऽम्बिकाम् ॥ दूर्वासर्षपपुष्पा
णांदत्वापुष्पांजलित्रयम् ॥ २९ ॥ रूपंदेहियशोदेहिभगंभगवतिदेहिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ ३० ॥ अचलांबुद्धिं
मेदेहिधरायांख्यातिमेवच ॥ ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः ॥ ३१ ॥ भोजयेद्ब्राह्मणान्दद्याद्वस्त्रयुग्मंगुरोरपि ॥ एवंविनायकंपूज्य
ग्रहांश्चैवविधानतः ॥ ३२ ॥ कर्मणांफलमाप्नोतिश्रियंप्राप्नोत्यनुत्तमाम् ॥ आदित्यस्यसदापूजांतिलकंस्वामिनस्तथा ॥ ३३ ॥ विनायक
पतेश्चैवसर्वसिद्धिमवाप्नुयात् ॥ ३४ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिचतुर्थीकल्पेत्रयोविंशोऽध्यायः ॥ २३ ॥ शतानीकउवाच ॥

१ अह्नि विधिपूर्वकम्-इ०पा० । २ अब्जमानम्-इ०पा० । ३ कोणलक्ष्यं च-इ०पा० । ४ सूरिभिः पावनं स्मृतम्-इ०पा० ।

नराणांयोषितानांचलक्षणानिमहामते ॥ प्रोक्तानियानिविप्रेन्द्रव्योमकेशस्यसूनुना ॥ १ ॥ क्रुद्धेनयानिक्षिप्तानिईश्वरेणमहोदधौ ॥ कृष्ण स्यवचनाद्भूयःसमुद्रेणार्पितानिवै ॥ २ ॥ अर्पितानिततस्तस्यतेनप्राप्नोतिवैकथम् ॥ बाहुलेयेनविप्रेन्द्रतानिमेवदसुव्रत ॥ ३ ॥ सुमंतुरुवाच ॥ यथागुहेनराजेंद्रस्त्रीपुंसांलक्षणानिवै ॥ प्रोक्तानिकुरुशार्दूलतथातेकथयामिवै ॥ ४ ॥ शक्तिपाताद्धतेक्रौंचेव्योमकेशस्यसूनुना ॥ ब्रह्मातुष्टोब्रवीदेनंवरंवरयमेऽनघ ॥ ५ ॥ असावपिमहातेजाःप्रणम्यशिरसाविभुम् ॥ पितामहंबभाषेदंलक्षणंब्रूहिमेविभो ॥ ६ ॥ नराणांयोषितानांचकौतुकंपरमंमम ॥ यन्मयोक्तंपुरादेवप्रक्षिप्तंलवणार्णवे ॥ ७ ॥ मत्पित्रादेवदेवेशसक्रोधेनपुरातथा ॥ प्राप्तंचाविस्मृतंभूयस्तन्मेब्रूहिह्यशेषतः ॥ ८ ॥ ॥ ब्रह्मोवाच ॥ साधुपृष्टोऽस्मिदेवेशभीमस्यानंदवर्धन ॥ लक्षणानिनिबोधत्वंपुरुषाणामशेषतः ॥ ९ ॥ अधमोत्तममध्यानियानिप्रापपयोनिधिः ॥ शिवेह्निसुनक्षत्रेग्रहेसौम्येशुभेरवौ ॥ १० ॥ पूर्वाह्णेमंगलैर्युक्तेपरीक्षेताविचक्षणः ॥ प्रमाणंसंहतिंछायांगतिंसर्वांगलक्षणम् ॥ ११ ॥ दंतकेशनखश्मश्रुएतत्सर्वंविचक्षणः ॥ पूर्वमायुःपरीक्षेतपश्चाल्लक्षणमादिशेत् ॥ १२ ॥ क्षीणेह्यायुषिमर्त्यानांलक्षणैःकिंप्रयोजनम् ॥ जघन्योनवतिःप्रोक्तोमध्यमस्तुशतांगुलः ॥ १३ ॥ अष्टोत्तरशतंयस्यउत्तमंतस्यलक्षणम् ॥ प्रमाणलक्षणंप्रोक्तंसमुद्रेणशुभाशुभम् ॥ १४ ॥ यन्मेपुरादेववरतन्मयाकथितंतव ॥ अतःपरंप्रवक्ष्यामिदेहावयवलक्षणम् ॥ १५ ॥ पादैः[1]समांसैः[2]स्निग्धैरक्तैःसौम्यैःसुशोभनैः ॥ उन्नतैःस्वेदरहितैःशिराहीनैश्चपार्थिवः ॥ १६ ॥ यस्यपादतलेरेखासांकुशेवप्रकाशते ॥ सततंहिसुखंतस्यपुरुषस्यनसंशयः ॥ १७ ॥ अस्वेदनौमृदुतलौकमलोदरसंनिभौ ॥ श्लिष्टांगुलीताम्रनखौसु[3]पार्ष्णीव्योमकेशज ॥ १८ ॥ उष्णौशिराविरहितौगूढगुल्फौचभीमज ॥ कूर्मोन्नतौचचरणौप्रख्यातौपार्थिवस्यतु ॥ १९ ॥ शूर्पाकृतीमहाबाहोरूक्षौश्वेतनखौतथा ॥ वक्रौशिरासंततौचसंशुष्कौविरलांगुली ॥ २० ॥ दारिद्र्यदुःखदौज्ञेयौचरणौभीमनंदन ॥ ब्रह्मघ्नौदेव[4]शार्दूलपक्वमृत्सदृशौतले ॥ २१ ॥ पीतावगम्यानिरतौकृष्णौपानरतौसदा ॥ अभक्ष्यभक्षणेश्वेतौज्ञेयौसेनाधिपोत्तम ॥ २२ ॥ अंगुष्ठौपृथुलौयेषांतेनराभाग्यवर्जिताः ॥ क्लिश्यंतेविकृतां

१ समांसलैः–इ०पा० । २ स्निग्धांगुली–इ०पा० । ३ पादौ वै–इ०पा० । ४ नृपशार्दूल–इ०पा० ।

गुष्ठास्तेनराःपादगामिनः ॥ २३ ॥ चिपिटैर्विकृतैर्भग्नैरंगुष्ठैरतिनिंदिताः ॥ वक्रैर्भग्नैस्तथाह्रस्वैरंगुष्ठैःक्लेशभागिनः ॥ २४ ॥ शूर्पाकारैश्चविकृतैर्भग्नैर्वक्रैःशिराततैः ॥ सस्वेदैःपाण्डुरूक्षैश्चचरणैरतिनिंदिताः ॥ २५ ॥ यस्यप्रदेशिनीदीर्घाअंगुष्ठंयाअतिक्रमेत् ॥ स्त्रीभोगंलभतेनित्यंपुरुषोनात्रसंशयः ॥ २६ ॥ कनिष्ठायांतुदीर्घायांसुवर्णस्यतुभागिनः ॥ चिपिटाविरलाःशुष्कायस्यांगुल्योभवंतिवै ॥२७॥ सभवेद्दुःखितोनित्यंधनहीनश्चवैगृहे ॥ श्वेतैर्नखैर्विरूक्षैश्चपुरुषादुःखजीविनः ॥ २८ ॥ कुशीलाःकुनखैर्ज्ञेयाःकामभोगविवर्जिताः ॥ विकृतैःस्फुटितैरूक्षैर्नखैर्दारिद्र्यभागिनः ॥ २९ ॥ ब्रह्महत्यांचकुर्वीतिपुरुषाहरितैर्नखैः ॥ बंधुभिश्चवियुज्यंतेकुलक्षयकराश्चते ॥ ३० ॥ इंद्रगोपकसंकाशैर्नखैर्नृपतयःस्मृताः ॥ शंखावर्तप्रतीकाशैर्नखैर्भवतिपार्थिवः ॥३१॥ ताम्रैर्नखैस्तथैश्वर्यंधन्याःपद्मनखानराः ॥ रक्तैर्नखैस्तथैश्वर्यंपुष्पितैःसुभगोभवेत् ॥ ३२ ॥ सूक्ष्मैरुपचितैस्ताम्रैर्नखैर्नृपतयःस्मृताः ॥ रोमशैश्चतथाजंघैर्दुःखदारिद्र्यभागिनः ॥ ३३ ॥ बंधनंह्रस्वजंघानामैश्वर्यंचैवनिर्दिशेत् ॥ मृगजंघाश्चराजानोजायंतेनात्रसंशयः ॥ ३४ ॥ दीर्घजंघाःस्थूलजंघानित्यंभाग्यविवर्जिताः ॥ शृगालजंघाःपुरुषानित्यंभाग्यविवर्जिताः ॥ ३५ ॥ काकजंघानरायेतुभवेयुर्दुःखभागिनः ॥ [३]पीनजंघास्तथैश्वर्यंप्राप्नुवंतिनसंशयः ॥ ३६ ॥ सिंहव्याघ्रसमाजंघाधनिनःपरिकीर्तिताः ॥ पार्थिवानांभवेद्रोमचैकैकंरोमकूपके ॥ ३७ ॥ पंडितश्रोत्रियाणांचद्वेद्वेज्ञेयेमहामते ॥ त्रिभिस्त्रिभिस्तथानिःस्वामानवादुःखभागिनः ॥ ३८ ॥ केशाश्चैवमहाबाहोनिंदिताःपूजितास्तथा ॥ निर्मांसजानुर्म्रियतेप्रवासेशि[४]वनंदन ॥ ३९ ॥ सौभाग्यमल्पैःकथितंदारिद्र्यंविकटैस्तथा ॥ निम्नैःस्त्रीजितोज्ञेयाःसमांसैराज्यभागिनः ॥ ४० ॥ [५]हंसभासशुकानांचतुल्यायस्यगतिर्भवेत् ॥ सभवेत्पार्थिवः[६]पूज्यःसमुद्रवचनंयथा ॥ ४१ ॥ अन्येषामपिशस्तानांपक्षिणांचशुभागतिः ॥ वृषसिंहगजेंद्राणांगति[७]र्भोगविवर्धिनी ॥ ४२ ॥ जलोर्मिसदृशीयाचकाकोलूकसमाचया ॥ गतिर्द्रव्यविहीनानांदुःखशोकभयंकरी ॥ ४३ ॥ श्वानोष्ट्रमहिषाणां

१ नित्यशः-इ०पा०। २ भवंति नृपसत्तम-इ०पा० ।३ मीनजंघा-इ०पा० । ४ दांडिनंदन-इ०,कुरुनंदन-इ० चपा० । ५ हंसभासशिखंडीनाम्-इ०पा०। ६ पृथ्व्याम्-इ०पा०। ७ भाग्यविवर्द्धिनी-इ०पा० ।

चवरं[1]सूकरयोस्तथा ॥ गतिर्मेषसमायेषांतेनराभाग्यवर्जिताः ॥ ४४ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिपुरुषलक्षणवर्णनंनामचतुर्विं
शोऽध्यायः ॥ २४ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ दक्षिणावर्तलिंगश्चनरोवैपुत्रवान्भवेत् ॥ वामावर्तंतथालिंगेनरःकन्यांप्रसूयते ॥ १ ॥
स्थूलैःशिरालैर्विषमैर्लिंगैर्दारिद्र्यमादिशेत् ॥ ऋजुभिर्वर्तुलाकारैःपुरुषाःपुत्रभागिनः ॥ २ ॥ निम्नपादोपविष्टस्यभूमिंस्पृशतिमेहनः ॥
दुःखितंतंविजानीयात्पुरुषंनात्रसंशयः ॥ ३ ॥ भूमौपादोपविष्टस्यगुल्फौस्पृशतिमेहनः ॥ ईश्वरंतंविजानीयात्प्रमदानांचवल्लभम्[2] ॥ ४ ॥
सिंहव्याघ्रसमोयस्तुह्रस्वोभवतिमेहनः ॥ भोगवान्सतुविज्ञेयोऽशेषभोगसमन्वितः ॥ ५ ॥ रेखाकृतिर्मणिर्यस्यमेहनेहिविराजते ॥ पार्थि
वःसतुविज्ञेयःसमुद्रवचनंयथा ॥ ६ ॥ सुवर्णरजतप्रख्यैर्मणिमुक्तासमप्रभैः ॥ प्रवालसदृशैःस्निग्धैर्मणिभिःपार्थिवोभवेत् ॥ ७ ॥ पांडुरै
र्मलिनैरूक्षैर्दीर्घव्यासैर्दिशोव्रजेत् ॥ समैस्तथोन्नतैश्चापिसुस्निग्धैर्मणिभिर्गृही ॥ ८ ॥ धनरक्षास्तथास्त्रीणांभोक्तारस्तेभवंतिहि ॥ माणि
भिर्मध्यनिम्नैस्तुपितरस्तेभवंतिहि ॥ ९ ॥ योषितानांमहाशाहोनिःस्वाश्चापिभवंतिते ॥ नोल्बणैश्चापिधनिनोनरावीरभवंतिहि ॥ १० ॥
मूत्रधारापतेदेकावलितादक्षिणायदि ॥ सभवेत्पार्थिवःपृथ्व्याःसमुद्रवचनंयथा ॥ ११ ॥ द्वैधारेचतथास्निग्धेधनवान्भोगवान्स्मृतः ॥ बहु
धारास्तथारूक्षाःसशब्दाःपुरुषाधमाः ॥ १२ ॥ मीनगंधंभवेद्रेतोधनवान्पुत्रवान्भवेत् ॥ हविर्गंधंभवेद्यस्यधनाढ्यःश्रोत्रियःस्मृतः ॥ १३ ॥
सूप[3]गंधिर्भवेत्पुत्रीपद्मगंधिर्नृपःस्मृतः ॥ लाक्षागंधिर्भवेद्यश्चबहुकन्यःप्रजायते ॥ १४ ॥ मद्यगंधिर्भवेद्योद्धाक्षारगंधिर्दरिद्रता ॥ शीघ्रमैथुन
गामीयःसदीर्घायुरतोऽन्यथा ॥ १५ ॥ अल्पायुर्दैवशार्दूलविज्ञेयोनात्रसंशयः ॥ तनुशुक्रःस्त्रीजनकोमांसगंधीचभोगवान् ॥ १६ ॥ पद्मवर्णं
भवेद्रक्तंसनरोधनवान्भवेत् ॥ किंचिद्रक्तंतथाकृष्णंभवेद्यस्यतुशोणितम् ॥ १७ ॥ अधमःसतुविज्ञेयःसुखदुःखस्यभाजनम् ॥ प्रवालस
दृशंस्निग्धंभवेद्यस्यचशोणितम् ॥ १८ ॥ राजानंतंविजानीयात्सप्तद्वीपाधिपंगुह ॥ विस्तीर्णामांसलास्निग्धाबस्तिःपुंसांप्रशस्यते ॥ १९ ॥
निर्मांसाविकटारूक्षाबस्तिर्येषांनतेशुभाः ॥ गोमायुसदृशायस्यश्वानोष्ट्रमाहिषस्यच ॥ २० ॥ सभवेद्दुःखितोनित्यंपुरुषोनात्रसंशयः ॥

१ खङ्गशूकरयोस्तथा–इ०पा० । २ दुर्लभम्–इ०पा० । ३ मेषगंधिर्भवेत्पुत्री–इ०पा० ।

ऊर्ध्वगैश्चापिह्रस्वायुःशतंजीवीप्रलंब
यश्चैकवृषणस्तातजलेप्राणान्विमुंचाति ॥ २१ ॥ स्त्रीचंचलस्तुविषमैःसमैराज्यंप्रचक्षते ॥
धृक् ॥ २२ ॥ मानवाश्चापिरक्तैस्तुधनवंतोभवंतिवै ॥ स्थूलस्फिग्भवतिक्षेमीद्रव्ययुक्तःसमांसधृक् ॥ २३ ॥ व्याघ्रस्फिङ्भां
डलोराजामंडूकस्फिङ्नराधिपः ॥ द्विमंडलोमहाबाहोसिंहस्फिक्सार्वभौमता ॥ २४ ॥ उष्ट्रवानरयोर्यस्तुधारयोत्स्फिङ्महामते ॥
धनधान्यविहीनोऽसौविज्ञेयोभीमनंदन ॥ २५ ॥ पुमान्मृगोदरोधन्योमयूरोदरएवच ॥ व्याघ्रोदरोनरपतीराजासिंहोदरोभवेत् ॥ २६ ॥
मंडूकसदृशंयस्यपुरुषस्योदरंभवेत् ॥ सभवेत्पार्थिवःपृथ्व्यांसमुद्रवचनंयथा ॥ २७ ॥ मांसलैर्ऋजुभिर्वृत्तैःपार्श्वैर्नृपतयःस्मृताः ॥
कूर्मपृष्ठास्तुराजानोधनसौ
ईश्वरोव्याघ्रपृष्ठस्तुसेनायाश्चैवनायकः ॥ २८ ॥ सिंहपृष्ठोनरोयस्तुबंधनंतस्यनिर्दिशेत् ॥
भाग्यभागिनः ॥ २९ ॥ विस्तीर्णंहृदयंयेषांमांसलोमचितंसमम् । शतायुषोविजानीयाद्भोगवंतोमहाधनाः ॥ ३० ॥ विरलाः
शुष्कास्तथारूक्षादृश्यंतेंऽगुलयःकरे ॥ सभवेद्दुःखितोनित्यंनरोदारिद्र्यभाजनम् ॥ ३१ ॥ यस्यमीनसमारेखाकर्मसिद्धिश्चतस्य
तु ॥ धनवान्सतुविज्ञेयोबहुपुत्रश्चमानवः ॥ ३२ ॥ तुलायस्यतुवेदिर्वाकरमध्येतुदृश्यते ॥ वाणिज्यंसिध्यतेतस्यपुरुषस्यनसंशयः ॥
॥ ३३ ॥ सोमंपाणितलेयस्याद्विजस्यतुविशेषतः ॥ यज्ञयाजीभवेन्नित्यंबहुवित्तश्चमानवः ॥ ३४ ॥ शैलंवाप्यथवावृक्षंकरमध्येतुदृश्य
ते ॥ अचलांश्रियमाप्नोतिबहुभृत्यसमन्वितः ॥ ३५ ॥ शक्तितोमरबाणासिरेखांचापोपमाभवेत् ॥ यस्यहस्तेमहाबाहोसजयेद्विग्रहे
रिपून् ॥ ३६ ॥ ध्वजंचाप्यथवाशंखंकरमध्येतुदृश्यते ॥ समुद्रयायीसभवेद्धनीचसततंगुह ॥ ३७ ॥ श्रीवत्समथवापद्मंवज्रंवाचक्र
मेवच ॥ रथंवाप्यथवाकुंभोयस्यहस्तेप्रकाशते ॥ ३८ ॥ राजानंतंविजानीयात्परसैन्यविदारणम् ॥ दक्षिणेतुकरांगुष्ठेयवोयस्यतुदृश्यते
॥ ३९ ॥ सर्वविद्याप्रवक्ताचभवेद्वैनात्रसंशयः ॥ यस्यपाणितलेरेखाकनिष्ठामूलमुत्थिता ॥ ४० ॥ गतामध्यंप्रदेशिन्याःसजीवेच्छरदःशतम् ॥ ४० ॥
॥ ४१ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणि चतुर्थीकल्पेपुरुषलक्षणवर्णनंनामपंचविंशोऽध्यायः ॥२५॥ ब्रह्मोवाच ॥ समकुक्षिर्भवेद्भोगी

१ पद्मनालोपमा भवेत्-इ०पा० । २ उच्छ्रिता-इ०पा० ।

निम्नकुक्षिर्धनापहः ॥ मायावीविषमाकुक्षिस्तथाकुहककृत्सदा ॥ १ ॥ राजास्यान्निम्नकुक्षिस्तुसार्वभौमोमहाबलः ॥ सर्पोदरादरिद्राः
स्युर्बहुभक्षाश्चसुव्रत ॥ २ ॥ विस्तीर्णाभिर्मंडलाभिरुन्नताभिश्चनाभिभिः ॥ भवंतिसुखिनोवीराधनधान्यसमन्विताः ॥ ३ ॥ निम्ना
भिरथस्वल्पाभिःक्लेशभाजोभवंतिहि ॥ वलिर्मध्यंगतावीरविषमाचविशेषतः ॥ ४ ॥ धनहानिं तथाशूलंनित्यंजनयतेविभो ॥ वामावर्ता
सदाशांतंकरोतीतिविदुर्बुधाः ॥ ५ ॥ करोतिमेधांदक्षिणेनसंप्रवृत्तादिवस्पते ॥ पार्श्वायतादीर्घमायुरैश्वर्यमूर्ध्वतःस्मृतम् ॥ ६ ॥ गवाढ्य
तामधस्तात्तुकरोतीतिविदुर्बुधाः ॥ शतपत्रकर्णिकाभानाभिर्यस्यमहामते ॥ ७ ॥ भूपत्वंकुरुतेसातुपुरुषस्यनसंशयः ॥ समोदरोभवेद्भो
गीनिःस्वःस्याद्विषमोदरः ॥ ८ ॥ शस्त्रेणांतंव्रजेद्वीरस्त्रीभोगंचाप्नुयात्तथा ॥ आचार्योबहुपुत्रश्चयथासंख्यविनिर्दिशेत् ॥ ९ ॥ वलिभिर्दै
वशार्दूलइत्याहसपयोनिधिः ॥ अगम्यागामिनोज्ञेयाविषमाभिर्नसंशयः ॥ १० ॥ ऋजुभिश्चसुभोगीस्यात्परदाराविनिंदकः ॥ मांसलैर्मृदुभिः
पार्श्वैराजास्यान्नात्रसंशयः ॥ ११ ॥ अनूर्ध्वैश्चिबुकायेतुसुभगास्तेभवंतिवै ॥ निर्धनाविषमैर्दीर्घैर्भवंतीहसुवीरज ॥ १२ ॥ पीनैश्चोपचितै
र्निम्नैःस्कंधैर्भीमांगसंभव ॥ राजानःसुखिनश्चापिभवंतीहनसंशयः ॥ १३ ॥ समोन्नतंतुहृदयंसमंचपृथुचैवहि ॥ अवेपनंमांसलंचपार्थिवानांन
संशयः ॥ १४ ॥ खररोमचितंवीरशिरालंचविशेषतः ॥ अधनानांभवेदेवहृदयंऋक्षभवोत्तम[1] ॥ १५ ॥ समवक्षसोऽर्थयुताःपीनैःशूराःस्मृ
ताबुधैः ॥ तनुभिर्द्रव्यहीनाःस्युरसमैश्चाप्यकिंचनाः ॥ १६ ॥ वध्यंतेचापिशस्त्रेणनात्रकार्याविचारणा ॥ हनुभिर्विषमैर्वीरजन्महीनोभवेन्नरः
॥ १७ ॥ यस्योन्नतोभवेद्धनुःसभोगीस्यान्नसंशयः ॥ निर्मांसैर्विषमैर्वीरनिःस्वोनिम्नैःप्रचक्षते ॥ १८ ॥ धनवांश्चभवेत्पीनैःसुखभोगसमन्वितः ॥
विषमैरर्थहीनःस्याद्दुःखभागीसदानरः ॥ १९ ॥ चिपिटग्रीवकोदुष्टोमतोलोकेस्यवैगुह ॥ शूरःस्यान्महिषग्रीवोमृगग्रीवोभयातुरः ॥ २० ॥
कंबुग्रीवोभवेद्राजालंबकंठोऽग्रलक्षणः ॥ ह्रस्वग्रीवस्तुधनवान्सुसुखीभोगवांस्तथा ॥ २१ ॥ निर्मांसैरोमशैर्भग्नावल्पौवापिविशेषतः ॥ निर्धन
स्येदृशावंसौप्रख्यातौव्योमकेशज ॥ २२ ॥ भवेदरोमशंपृष्ठंधनिनांभीमसंभव ॥ अस्वेदनावुन्नतौचतथापीनौषडानन ॥ २३ ॥

१ चिबुकैर्ऋक्षभवोत्तम-इ०पा० ।

समरोमसुगंधौचकक्षौज्ञेयौधनान्वितौ ॥ अव्युच्छिन्नौतथाश्लिष्टौविपुलौचसुराधिप ॥ २४ ॥ शूराणामीदृशावंसौनगजानंदवर्धन ॥ उद्बुद्ध
बाहुकोयस्तुवधबंधनमाप्नुयात् ॥ २५ ॥ दीर्घबाहुर्भवेद्राजासमुद्रवचनंयथा ॥ प्रलंबबाहुर्विज्ञेयोनरःसर्वगुणान्वितः ॥ २६ ॥ ह्रस्वबाहुर्भ
वेद्दासःपरप्रेष्यकरोऽपिवा ॥ वामावर्तभुजायेतुदीर्घायतभुजाश्चये ॥ २७ ॥ संपूर्णबाहूराजास्यादित्याहसपयोनिधिः ॥ ग्रीवाचवर्तुला
काराकंबुरेखासमावृता ॥ २८ ॥ सभवेत्पार्थिवोभूमौसर्वदुष्टनिबर्हणः ॥ दीर्घग्रीवावकग्रीवाशुकग्रीवाश्चयेनराः ॥ २९ ॥ शुकग्रीवाःक
रिग्रीवाःसर्वेतेनिर्धनाःस्मृताः ॥ इभांगसदृशौवृत्तौसमौपीनौचसुव्रत ॥३०॥ आजानुलंबिनौबाहूपार्थिवानांनसंशयः ॥ दरिद्राणांलोमशौ
ह्रस्वौबाहूज्ञेयौसुरोत्तम ॥ ३१ ॥ तस्कराणांचविषमौस्थूलौसूक्ष्मौचसुव्रत ॥ निम्नंकरतलंयस्यापितृवित्तंनतस्यवै ॥ ३२ ॥ भवेद्भव
शार्दूलतथाभीरुश्चमानवः ॥ सुवृत्ततनुनिम्नेनधनवान्करतलेनतु ॥ ३३ ॥ उत्तानकरतलोदाताभवतीतिनसंशयः ॥ विषमाभवंतिविषमैर्नि
म्नाश्चापिविशेषतः ॥ ३४ ॥ करतलैर्देवशार्दूललाक्षाभैरीश्वराःस्मृताः ॥ अगम्यगमनंपीतैरूक्षैर्निर्धनतास्मृता ॥ ३५ ॥ अपेयपानंकुर्वंति
नीलकृष्णैःसदैवहि ॥ निम्नास्निग्धाभवेन्नृणांरेखाकरतलेगुह ॥ ३६ ॥ धनिनांनदरिद्राणामित्याहसपयोनिधिः ॥ विरलांगुलयोयेतुतेदरि
द्राःप्रचक्षते ॥ ३७ ॥ धनिनस्तुमहाबाहोयेघनांगुलयोनराः ॥ वदनंमंडलंयस्यधर्मशीलंतमादिशेत् ॥ ३८ ॥ शुंडवक्त्रानरायेतुदुर्भगास्ते
नसंशयः ॥ हरिवक्त्राजिह्मवक्त्राविकृतास्यास्तथानराः ॥ ३९ ॥ भग्नवक्त्राःकरालास्याःसर्वेतेतस्कराःस्मृताः ॥ संपूर्णवक्त्राराजानोगजासिं
हाननास्तथा ॥ ४० ॥ छागवानरवक्त्राश्चधनिनःपरिकीर्तिताः ॥ यस्यगंडौसुसंपूर्णौपद्मपत्रसमप्रभौ ॥ ४१ ॥ कृषिभागीभवेन्नित्यंबहु
वित्तश्चमानवः ॥ सिंहव्याघ्रगजेंद्राणांकपोलःसदृशोयादि ॥ ४२ ॥ महाभोगीसविज्ञेयःसेनायाश्चैवनायकः ॥ वदनंतुसमंश्लक्ष्णंसौम्यंसंवृ
तमेवहि ॥ ४३ ॥ पार्थिवानांमहाबाहोविपरीतंतुदुःखदम् ॥ महामुखंतुदेवेशदुर्भगत्वंप्रयच्छति ॥ ४४ ॥ स्त्रीमुखंपुत्रनाशायमंडलंसुखि
तांव्रजेत् ॥ द्रव्यनाशायवैदीर्घंपापदंभयदंतथा ॥ ४५ ॥ धूर्तानांचतुरस्रंस्यात्पुत्रहानिकरंशृणु ॥ निम्नवक्त्रंचदेवेदंपुत्रहानिकरंभवेत् ॥४६॥
ह्रस्वंभवतिकीनाशेपूर्णकांतंचभोगिनाम् ॥ रक्ताधरोनरपतिर्धनवान्कमलाधरः ॥ ४७ ॥ स्थूलोष्ठाहनुमूलाश्चशुष्कैस्तीक्ष्णैश्चदुःखिताः॥

१ वहुला यस्य–इ०पा०।

अस्फोटिताग्रंस्निग्धंचनतंमृदुतथागुह ॥ ४८ ॥ संपूर्णंचसदाशस्तंश्मश्रुभूमिपतेर्गुह ॥ रक्तैश्चाल्पैस्तथारूक्षैःश्मश्रुभिर्भीमनंदन ॥ ४९ ॥
नराश्चोराभवंत्येवपरदाररतास्तथा ॥ निर्मांसौयस्यवैकर्णौसंग्रामान्नाशंमृच्छति[1] ॥ ५० ॥ चिपिटाभ्यांभवेद्रोगीह्रस्वौचकृपणस्यच ॥
शंकुकर्णश्चभूनाथःसर्वशत्रुभयंकरः ॥ ५१ ॥ दीर्घायूरोमशाभ्यांतुविपुलाभ्यांनराधिपः ॥ भोगीचभवतेनित्यंदेवब्राह्मणपूजकः ॥ ५२ ॥
शिरावबद्धौक्रूरस्यव्यालंबौचविशेषतः ॥ मांसलौसुखदौज्ञेयौश्रवणौव्योमकेशज ॥ ५३ ॥ भोगित्वंनिम्नगंडोवैमंत्रीसंपूर्णगंडयोः ॥ शुभ
भाक्छुकनासस्तुचिरजीवीशुष्कनासिकः ॥ ५४ ॥ कुंदकुड्मलसंकाशैःप्रकाशैर्दशनैर्नृपः ॥ ऋक्षवानरदंताश्चनित्यंक्षुत्परिपीडिताः ॥५५॥
हस्तिदंताःखरदंताःस्निग्धदंतागुणान्विताः ॥ करालैर्विरलैरूक्षैर्दशनैर्दुःखजीविनः[2] ॥ ५६ ॥ द्वात्रिंशद्दंताराजानएकत्रिंशच्चभोगवान् ॥ त्रिंश
द्दंतानरानित्यंसुखदुःखस्यभागिनः ॥ ५७ ॥ ऊनत्रिंशच्चदशनैःपुरुषादुःखभागिनः ॥ कृष्णजिह्वोभवेत्प्रेष्यःसबलयातुजिह्वया ॥ ५८ ॥
भवेत्कोपस्यकर्तावैस्थूलरूक्षश्चजिह्वया ॥ श्वेतजिह्वानराज्ञेयाःशौचाचारसमन्विताः ॥ ५९ ॥ पद्मपत्रसमाजिह्वासूक्ष्मादीर्घासुशोभना
॥ स्थूलाचनचविस्तीर्णायेषांतेमनुजाधिपाः ॥६०॥ निम्नास्निग्धाचह्रस्वाचरक्ताग्रारसनायदि ॥ सर्वविद्याप्रवक्तारोभवंतेनात्रसंशयः॥६१॥
कृष्णतालुर्नरोयस्तुसभवेत्कुलनाशनः ॥ सुखभागीदुःखभागीपीततालुर्नराधिप ॥ ६२ ॥ विकृतंस्फुटितंरूक्षंतालुकंनप्रशस्यते ॥ सिं
हतालुर्नरपतिर्गजतालुस्तथैवच ॥ ६३ ॥ पद्मतालुर्भवेद्राजाश्वेततालुर्धनेश्वरः ॥ हंसस्वरानराधन्यामेघगंभीरनिःस्वनाः ॥ ६४ ॥
क्रौंचस्वनाश्चराजानोभोगवंतोमहाधनाः ॥ चक्रवाकस्वनाधन्याराजानोधर्मवत्सलाः ॥ ६५ ॥ कुंभस्वनोनरपतिर्दुंदुभिस्वनएवच ॥
रूक्षदीर्घस्वराःक्रूराःपशूनांसदृशानतु ॥ ६६ ॥ गुर्गुरस्वरसंयुक्ताःपुरुषाःक्लेशभागिनः[3] ॥ चापस्वनाभाग्ययुताभिन्नकांस्यस्वराश्चये ॥६७॥
क्षीणभिन्नस्वरायेस्युरधमास्तेप्रकीर्तिताः ॥ पार्थिवास्तनुनासाश्चदीर्घनासाश्चभोगिनः ॥ ६८ ॥ ह्रस्वनासानरायेतुधर्मशीलास्तुतेमताः ॥
हस्त्यश्वसिंहनासाश्चसूचीनासाश्चयेनराः ॥ ६९ ॥ वाणिज्यंसिध्यतेतेषांहयानांचैवविक्रयः ॥ विकृतानासिकायस्यस्थूला[4]ग्रारूप

१ न स गच्छति–इ०पा०। २ दुःखी–इ०पा०। ३ दुर्वाच–इ०पा०। ४ मांसला–इ०पा०।

वर्जिता ॥ ७० ॥ पापकर्मासविज्ञेयःसमुद्रवचनंयथा ॥ दाडिमीपुष्पसंकाशेभवेतांयस्यलोचने ॥ ७१ ॥ ॥ भूपतिःसतुविज्ञेयः
सतद्वीपाधिपोगुह ॥ व्याघ्राक्षाःकोपनाज्ञेयाःकर्कटाक्षाःकलिप्रियाः ॥ ७२ ॥ बिडालहंसनेत्राश्चभवंतिपुरुषाधमाः ॥ मयूरनकुलाक्षाश्चनरा
स्तेमध्यमाःस्मृताः ॥ ७३ ॥ नश्रीस्त्यजतिसर्वज्ञपुरुषंमधुपिंगलम् ॥ आपिंगलाक्षाराजानःसर्वभोगसमन्विताः ॥ ७४ ॥ रोचनाहरिताला
क्षागुंजापिंगाधनेश्वराः ॥ बलसत्त्वगुणोपेताःपृथिवीचक्रवर्तिनः ॥७५॥ द्विमात्राध्वनिनोनित्यंजीवंतिपरमाश्रिताः॥त्रिमात्रास्यंदिनोज्ञेयाःपुरु
षाःसुखभागिनः॥७६॥ चतुर्मात्रानिमेषैश्चनयनैरीश्वराःस्मृताः॥ दीर्घायुषोधर्मरताःपंचमात्रानिमेषिणः॥७७॥ह्रस्वकर्णामहाभागामहाकर्णा
श्चयेनराः ॥ आवर्तकर्णाधनिनःस्निग्धकर्णास्तथैवच ॥ ७८ ॥ दीर्घायुषःशुक्तिकर्णाःशंखकर्णामहाधनाः ॥ दीर्घायुषोदीर्घकर्णालंबकर्णा
स्तपस्विनः ॥ ७९ ॥ ललाटेचार्धचंद्रेणभवंतिपृथिवीश्वराः ॥ विपुलेनललाटेनमहाधनपतिःस्मृतः ॥ ८० ॥ स्वल्पेनतुललाटेननरोधर्म
रतःस्मृतः ॥ रेखाःपंचललाटेतुस्त्रियावापुरुषस्यवा ॥ ८१ ॥ शतंजीवतिवर्षाणामैश्वर्यंचाधिगच्छति ॥ चतूरेखामशीतिस्तुत्रिभिःसतातिरे
वच ॥ ८२ ॥ द्वाभ्यांषष्टिस्तुरेखाभ्यांचत्वारिंशस्तथैकया ॥ अरेखेनललाटेनविज्ञेयापंचविंशतिः ॥ ८३ ॥ रेखाछेदैस्तुविज्ञेयाहीनमध्यो
त्तमानराः ॥ अल्पायुषस्तथाल्पाभिर्व्याधिभिः परिपीडिताः ॥ ८४ ॥ त्रिशूलंपट्टिशंवापिललाटेयस्यदृश्यते ॥ ईश्वरंतंविजानीयाद्भोगिनं
कीर्तिमाश्रितम् ॥ ८५ ॥ उत्क्रांतनिम्नंतुशिरःस्वल्पोपहतमेवच ॥ चंद्रांकारंनरेंद्राणांगवाढ्यंमंगलंस्मृतम् ॥ ८६ ॥ विषमंतुदरिद्राणांशि
रोदीर्घंतुदुःखिनाम् ॥ नागकुंभनिभंराज्ञःसमंसर्वत्रभोगिनः ॥ ८७ ॥ कपिलैःस्फुटितैरूक्षैःस्थूलैश्चाशिखरेशयैः ॥ दुःखिताःपुरुषाज्ञेयारोम
श्मश्रुभिरेवच ॥ ८८ ॥ रूक्षाविवर्णानिस्तेजाःखराःस्थूलाश्चमूर्धजाः ॥ नातिस्तोकानबहुशोमूर्धजादुःखभागिनः ॥ ८९ ॥ विरलाश्चमृदु
स्निग्धाभ्रमरांजनसप्रभाः ॥ कचायस्यतुदृश्यंतेसभवेत्पृथिवीपतिः ॥ ९० ॥ इतिश्रीभविष्येमहापुराणेचतुर्थीकल्पेपुरुषलक्षणवर्णनंनाम
षड्विंशोऽध्यायः ॥ २६ ॥ कार्तिकेयउवाच ॥ संक्षेपतोममविभोलक्षणानिनृपस्यतु ॥ शुभानिचांगजातानिब्रूहिमेवदतांवर ॥ १ ॥ ब्रह्मोवाच ॥

१ पुरुष–इ०पा०। २ कुक्कुटाक्षाः–इ०पा०। ३ न स्त्रीत्यजति–इ०पा०। ४ छत्राकारम्–इ०पा०।

शृणुवक्ष्येंगजातानिपार्थिवस्यशुभानिच ॥ पार्थिवोज्ञायतेयैस्तुनराणांमध्यभागतः ॥२॥ त्रीणियस्यमहाबाहोविपुलानिनरस्यतु॥उन्नतानित थाषड्वैगंभीराणिचत्रीणिवै ॥ ३ ॥ चत्वारिचापिह्रस्वानिसप्तरक्तानिवाविभो ॥ दीर्घाणिचापिसूक्ष्माणिभवंतियस्यपंचवा ॥ ४ ॥ नाभिःसं धिःस्वनश्चेतिगंभीराणिचत्रीणिवै ॥ वदनंचललाटंचदंतोत्तमउरस्तथा ॥ ५ ॥ विस्तीर्णमेतत्रितयंवीरयस्य नरस्यतु ॥ सराजानात्रसंदेहःशृ णुष्वेवोन्नतानिच ॥ ६ ॥ कृकाटिकातथाचास्यंनखावक्षोथनासिका ॥ कक्षेचापिमहाबाहोषडेतानिविदुर्बुधाः ॥ ७ ॥ लिंगंपृष्ठंतथाग्रीवाजंघा ह्रस्वानिसुव्रत ॥ नेत्रांतेहस्तपादौतुताल्वोष्ठौचसुरोत्तम ॥ ८ ॥ जिह्वारक्तानखाश्चैवसप्तैतानिमहामते ॥ त्वचःकररुहाःकेशादशनाऋभ वोत्तम ॥ ९ ॥ सूक्ष्माण्येतानिचगुहपंचचापिविदुर्बुधाः ॥ नासिकालोचनेबाहूस्तनयोरंतरंहनुः ॥ १० ॥ इतिदीर्घमिदंप्रोक्तंपंचकंभूभुजां नृपा॥क्षुतंराज्ञांसकृद्विस्त्रिर्नादितंह्रादितंतथा ॥११॥ दीर्घायुषांप्रयुक्तंतेहासितंचविदुर्बुधाः ॥ पद्मपत्रनिभेनेत्रेधनिनांशिवनंदन ॥१२॥ भार्ग वीमाप्नुयात्सोहिरक्तांतेयस्यलोचने ॥ मधुपिंगैर्महात्मानोनराज्ञेयाःसुराधिप ॥ १३ ॥ भीरवोहिकुशाक्षास्तुचौरामंडलचक्रकैः ॥ [1]क्रूराःकेकर नेत्रास्तुगंभीरैरर्थसंपदः ॥ १४ ॥ नीलोत्पलाभैर्वेदविदोभृशंकृष्णैस्तथार्थिता ॥ मंत्रित्वंस्थूलसदृशोवदंतिभुवितद्विदः ॥ १५ ॥ श्यामाक्षाः सुभगाज्ञेयादीनाक्षैश्चदरिद्रता॥विस्तीर्णैर्भोगिनोज्ञेयाविपुलैश्चतथागुह॥१६॥अभ्युन्नताभिर्ह्रस्वायुर्विशालाभिःसुखीभवेत् ॥ दरिद्रोविषमा भिस्तुततोज्ञेयःसुरोत्तम ॥ १७ ॥ भ्रुवोबालेंदुसदृशाधनिनामृभवोत्तम ॥ दीर्घाभिर्निर्धनोज्ञेयःसंसक्ताभिस्तुसुव्रत ॥ १८ ॥ क्षीणाभिरर्थ हीनाःस्युर्नराज्ञेयाःसुरोत्तम ॥ मध्येनतभ्रुवोयेचपरदाररतास्तुते ॥ १९ ॥ विरलैरुन्नतैःशंखै[2]र्धन्याःस्युर्नात्रसंशयः ॥ निम्नैःस्तु[3]त्यर्थसंसक्ताउ न्नतैश्चजनाधिपाः ॥२०॥ विषमललाटाविधनाःसदास्युर्देवसत्तम ॥ आचार्याःशुक्तिसदृशैर्नराःस्युर्नात्रसंशयः ॥ २१ ॥ उन्नताशिरोभिराढ्या नराज्ञेयाःसदागुह ॥ वधबंधभागिनोवीरानरानिम्नललाटिनः ॥ २२ ॥ भृशमुन्नतैश्चमूर्खाश्चकृपणाश्चतथानतैः ॥ शुभावहंमनुष्याणांवदनं स्याद्यथाशृणु ॥ २३ ॥ [4]अदीनमाननंस्निग्धंसस्मितंचविशेषतः ॥ साश्रुदीनंतथारूक्षमस्निग्धंनिंदितंगुह ॥ २४ ॥ असंभावंसुखंज्ञेयंन

१ क्रोधनाःकोकनेत्रास्तु-इ०पा० । २ धनाढ्याः-इ०पा० । ३ सुतान्नसंसक्ताः-इ०पा० । ४ अदीनानश्रुस्निग्धं च-इ०पा० । ५ च तथा गुह-इ०पा० ।

राणांनशदारण ॥ अकंपंशुभदंज्ञेयंनराणांहसितंगुह ॥ २५ ॥ निमीलिताक्षंपापस्यहसितंनृभवोत्तम ॥ आमंडलंशिरोयस्यसगवाढ्योनरो
भवेत् ॥ २६ ॥ छत्राकृतिशिरोयस्यसभवेन्नृपतिर्नरः ॥ चिपिटाकारितशिराहन्याद्वैपितरौनरः ॥ २७ ॥ घंटाकृतिशिरोध्वानमसकृत्से
वतेनरः ॥ निम्नंशिरोनर्थदंस्यान्नराणांनृभवोत्तम ॥ २८ ॥ गुडैःस्निग्धैस्तथाकृष्णैरभिन्नाग्रैस्तथैवहि ॥ केशैर्नचातिबहुलैर्मृदुभिःपार्थिवो
भवेत् ॥ २९ ॥ बहुलाःकपिलाःस्थूलाविषमाःस्फुटितास्तथा ॥ परुषाह्रस्वातिकुटिलादरिद्राणांकचाघनाः ॥ ३० ॥ इत्युक्तंलक्षणंनृणां
शुभंवाशुभमेवच ॥ योषितांतदिदानींतेलक्षणंवच्मिभीमज ॥ ३१ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिशतसहस्रार्धसंहितायांचतुर्थीक
ल्पेपुरुषलक्षणसमाप्तौसप्तविंशोऽध्यायः ॥२७॥छ॥ ब्रह्मोवाच॥ शृणुविदानींमहाबाहोस्त्रीलक्षणमनुत्तमम् ॥यन्मयोक्तंपुरावीरनारदस्यमहात्म
नः ॥ १ ॥ तत्त्वंविज्ञायतेयेनशुभाशुभमवस्थितम् ॥ निंदितंचप्रशस्तंचस्त्रीणांवक्ष्यामिलक्षणम् ॥ २॥ मातरंपितरंचैवभ्रातरंमातुलंतथा ॥
द्वौतुविंबौपरीक्षेतसमुद्रस्यवचोयथा॥३॥ मुहूर्तेतिथिसंपन्नेनक्षत्रेचाभिपूजिते ॥ द्विजैस्तुसहवागम्यकन्यांपश्येतशास्त्रवित् ॥ ४॥ हस्तौपादौ
परीक्षेतअंगुल्योनखएवच ॥ [1]पाणिरेखचजंघेचकटिनासोरुएवच ॥ ५ ॥ जघनोदरपृष्ठंचस्तनौकर्णौभुजौतथा ॥ जिह्वाचोष्ठौचदंताश्चकपोलं
गलकस्तथा ॥ ६ ॥ चक्षुर्नासाललाटंचशिरःकेशांस्तथैवच ॥ [2]रोमराजिंस्वरंवर्णमावर्तानितुवापुनः ॥ ७ ॥ यस्यास्तुरेखाग्रीवायां[3]चरक्तां
तलोचना ॥ यस्यसागृहमागच्छेत्तद्गृहंसुखमेधते ॥ ८ ॥ ललाटेदृश्यतेयस्यास्त्रिशूलंदेवनिर्मितम् ॥ बहूनांस्त्रीसहस्राणांस्वामिनींतांविनि
र्दिशेत् ॥९॥राजहंसगतिर्यस्यामृगाक्षीमृगवर्णिका ॥ समशुक्लाग्रदंताचकन्यांतामुत्तमांविदुः॥१०॥मंडूककुक्षीयाकन्यान्यग्रोधपरिमंडला॥
एकंजनयतेपुत्रंसोपिराजाभविष्यति ॥ ११ ॥ हंसस्वरामृदुवचायाकन्यामधुपिंगला ॥ अष्टौजनयतेपुत्रान्धनधान्यविवर्धिनी ॥ १२ ॥
आयतौश्रवणौयस्याःसुरूपाचापिनासिका ॥ भ्रुवौचंद्रायुधाकारौसात्यंतंसुखभागिनी ॥ १३ ॥ तन्वीश्यामातथाकृष्णास्निग्धांगीमृदु
भाषिणी ॥ शंखकुंदेंदुदशनाभवेदैश्वर्यभागिनी ॥ १४ ॥ विस्तीर्णजघनंयस्यावेदिमध्यातुयाभवेत् ॥ आयतेविपुलेनेत्रेराजपत्नीतुसा

[1] पाणिरेषा च-इ०पा०। [2] रोमराजिस्तथामध्यमावर्तांगानि-इ०पा०। [3] यावद्वक्रानुलोमगा-इ०पा०।

भवेत् ॥ १५ ॥ यस्याःपयोधरेवामेहस्तेकर्णेगलेपिवा ॥ मशकंतिलकंवापिसापूर्वंजनयेत्सुतम् ॥ १६ ॥ गूढगुल्फांगुलिशिरा
अल्पपार्ष्णिःसुमध्यमा ॥ रक्ताक्षरिक्तचरणासात्यंतंसुखभागिनी ॥ १७ ॥ कूर्मपृष्ठायतनखौस्निग्धभावविवर्जितौ ॥ वक्रांगुलितलौपादौ
कन्यांतांपरिवर्जयेत् ॥ १८ ॥ येनकेनाचिदंशेनमांसंयस्याविवर्धते ॥ रासभींतादृशींविद्यान्नसाकल्याणमर्हति ॥ १९ ॥ पादेप्रदेशिनीय
स्याअंगुष्ठंसमतिक्रमेत् ॥ दुःशीलादुर्भगाज्ञेयाकन्यांतांपरिवर्जयेत् ॥ २० ॥ पादेमध्यमिकायस्याःक्षितिंनस्पृशतेयदि ॥ नसारमति
कौमारेस्वच्छंदाकामचारिणी ॥ २१ ॥ पादेअनामिकायस्याःक्षितिंनस्पृशतेयदि ॥ द्वितीयंपुरुषंहत्वातृतीयेसाप्रतिष्ठिता ॥ २२ ॥
पादेकनिष्ठायस्यास्तुक्षितिंनस्पृशतेयदि ॥ द्वितीयंपुरुषंहत्वातृतीयंसाप्रतिष्ठिता ॥ २३ ॥ नदेविकानधनिकानधान्यप्रतिनामिका ॥
गुल्मवृक्षसनाम्नीचकन्यांतांपरिवर्जयेत् ॥ २४ ॥ इंद्रचंद्रादिपुरुषसनाम्नीचयदाभवेत् ॥ नैताःपतिषुरज्यंतेयाश्चनक्षत्रनामिकाः ॥ २५ ॥
आवर्तःपृष्ठतोयस्यानाभिंसमनुविंदति ॥ तदपत्यंभवेद्ध्रस्वंह्रस्वायुश्चविनिर्दिशेत् ॥ २६ ॥ पृष्ठावर्तापतिंहंतिनाभ्यावर्तापतिव्रता ॥
कट्यावर्तातुस्वच्छंदानकदाचिद्विरज्यते ॥ २७ ॥ यस्यास्तुहसमानायागंडेजायेतकूपकम् ॥ नसारमतिकौमारेस्वच्छंदाकार्यकारिणी
॥ २८ ॥ यस्यास्तुगच्छमानायाघृट्टीकायतिजंघके ॥ सापुत्रंव्यवसेत्कर्तुंपतित्वेनात्रसंशयः ॥ २९ ॥ स्थूलपादाचयाकन्यासर्वांगे
षुचलोमशा ॥ स्थूलहस्ताचयास्याद्वैदासींतांनिर्दिशेद्बुधः ॥ ३० ॥ यस्याश्चोत्कटकौपादौमुखंचविकृतंभवेत् ॥ उत्तरोष्ठेचरोमाणिसाक्षि
प्रंभक्षयेत्पतिम् ॥ ३१ ॥ त्रीणियस्याःप्रलंबंतेललाटमुदरंस्फिचौ ॥ त्रीणिभक्षयतेसातुदेवरंश्वशुरंपतिम् ॥ ३२ ॥ समुद्धापेतचारि
त्रागुरुभक्तापतिव्रता ॥ देवब्राह्मणभक्ताचमानुषींतांविनिर्दिशेत् ॥ ३३ ॥ नित्यंस्नातासुगंधाचानित्यंचाप्रियवादिनी ॥ अल्पाशिन्य
त्यरोषाचदेवतांतांविनिर्दिशेत् ॥ ३४ ॥ प्रच्छन्नंकुरुतेपापमपवादंचरक्षति ॥ हृदयंस्याश्चदुर्ग्राह्यंमार्जारीतांविनिर्दिशेत् ॥ ३५ ॥ हसते
क्रीडतेचैवक्रुद्धाचैवप्रसीदति ॥ नीचेषुरमतेनित्यंरासभींतांविनिर्दिशेत् ॥ ३६ ॥ प्रातिकूलकरीनित्यंबंधूनांभर्तुरेवच ॥ स्वच्छंदेल

१ दुःखदा कार्यनाशिनी–इ०पा० ।  २ चोत्कंपकौ–इ०पा० ।

लितांचैवआसुरींतांविनिर्दिशेत् ॥ ३७ ॥ वह्वाशीबहुवाक्याचानित्यंचाप्रियवादिनी ॥ पतिंचहिंसतेयातुराक्षसींतांविनिर्दिशेत् ॥ ३८ ॥
शौचाचारपरिभ्रष्टारूपभ्रष्टाभयंकरी ॥ प्रस्वेदमलपंकाचपिशाचींतांविनिर्दिशेत् ॥ ३९ ॥ नित्यंस्नातांसुगंधांचमांसमद्यप्रियादिनीम् ॥ वृक्षो
द्यानप्रसक्तांचगान्धर्वींतांविनिर्दिशेत् ॥ ४० ॥ चपलाचंचलाचैवानित्यंवीक्षेदिशस्तथा ॥ चलस्वभावालुब्धाचवानरींतांविनिर्दिशेत् ॥ ४१ ॥
चंद्राननांशुभांगींतुमत्तवारणगामिनीम् ॥ आरक्तनखहस्तांतुविद्याद्विद्याधरींबुधः ॥ ४२ ॥ वीणावादित्रशब्देनवंशगीतरवेणच ॥ पुष्प
धूपप्रसक्तांचगांधर्वींतांविनिर्दिशेत् ॥ ४३ ॥ सुमंतुरुवाच ॥ इत्येवमुक्त्वासुमहानुभावोजगामवेधानिजमंदिरंवै ॥ स्त्रीणांतथापुंस्त्ववतांच
वीरयल्लक्षणंपार्थिवलोकपूज्यम् ॥ ४४ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिस्त्रीलक्षणवर्णनंनामाष्टाविंशोऽध्यायः ॥ २८ ॥ छ ॥ शतानीकउवाच
गकाराक्षरदेवस्यगणेशस्यमहात्मनः ॥ आराधनविधिंब्रूहिसांगंमंत्रसमन्वितम् ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ नतिथिर्नचनक्षत्रंनोपवा
सोविधीयते ॥ यथेष्टंचेष्टतःसिद्धिःसदाभवतिकामिका ॥ २ ॥ श्वेतार्कमूलंसंगृह्यकुर्याद्गणपतिंबुधः ॥ अंगुष्ठपर्वमात्रंतुपद्मासनगतंतथा ॥
॥ ३ ॥ चतुर्भुजंत्रिनेत्रंचसर्वाभरणभूषितम् ॥ नागयज्ञोपवीतांगंशशांककृतशेखरम् ॥ ४ ॥ दंतंसव्येकरेदद्याद्द्वितीयेचाक्षसूत्रकम् ॥
तृतीयेपरशुंदद्याच्चतुर्थेमोदकंन्यसेत् ॥ ५ ॥ कुंकुमंचंदनंचापिसमालंभनमुच्यते ॥ वासोभिर्भूषणैरक्तैर्माल्यैश्चाराधयेद्गणम् ॥ ६ ॥ धू
पेनचसुगंधेनमोदकैश्चापिपूजयेत् ॥ एवंपूज्याग्रतस्तस्यभोजयेद्ब्राह्मणंबुधः ॥ ७ ॥ वामनंकुब्जकंचापिभोजयेत्पुरतोद्विजम् ॥ आशीर्वा
दंततस्तस्मात्प्राप्यसिद्धिमवाप्नुयात् ॥ ८ ॥ भक्त्याकुरुकुलश्रेष्ठ[2]शृणुमंत्रपदानिवै ॥ गंस्वाहामूलमंत्रोयंप्रणवेनसमन्वितः ॥ ९ ॥ ओं
गांनमोहृदयंज्ञेयंगींशिरःपरिकीर्तितम् ॥ शिखाचगूंनमोज्ञेयागैंनमःकवचंस्मृतम् ॥ १० ॥ गौंनमोनेत्रमुद्दिष्टंगःफट्कामास्त्रमु
च्यते ॥ आगच्छोल्कामुखायेतिमंत्रआवाहनेह्ययम् ॥ ११ ॥ गंगणेशायनमोगंधमंत्रःप्रकीर्तितः ॥ पुष्पोल्कायनमःपुष्पमंत्रएषप्रकी
र्तितः ॥ १२ ॥ धूपोल्कायनमोधूपमंत्रएषप्रकीर्तितः ॥ दीपोल्कायनमोदीपमंत्रएषप्रकीर्तितः ॥ १३ ॥ ओंगंमहोल्कायनमोबलिमंत्रः

१ क्रुद्धा च-इ०पा०। २ दद्यात्पाद्यानि तस्य वै-इ० पा०।

प्रकीर्तितः ॥ ओंसंसिद्धोल्कायनमोमंत्रश्चायंविसर्जने ॥ १४ ॥ ओंमहाकर्णायविद्महेवक्रतुंडायधीमहि ॥ तन्नोदंतिःप्रचोदयात् ॥ १५ ॥
गायत्रीजपंपूर्वतः ॥ महागणपतयेवीरस्वाहा ॥ दक्षिणतः ॥ सदामहोल्काय ॥ पश्चिमतः ॥ कूश्मांडायोत्तरेणतु ॥ एकदंतत्रिपुरांतकाय
आग्नेय्यांवीरीनिर्दिशेत् ॥ १६ ॥ ओंशिवदत्तविकटहरहासप्राणायस्वाहानैर्ऋत्याम् ॥ तुलंबनात्यचलदंतकायस्वाहावायव्याम् ॥ १७ ॥
पद्मदंष्ट्रायनरायेतिऐशान्यांहोमयेद्बुधः ॥ हुंफट्हुंफट्हस्ततालध्वनिर्हसनकूर्दनः ॥ १८ ॥ मृदनर्तनगणपतिर्देवस्यमुद्राततोहोमंसमा
चरेत् ॥ नयदावश्याभवति ॥ कृष्णतिलाहुतिमष्टसहस्रंजुहुयात्रिरात्रेणराजावश्योभवति ॥ १९ ॥ तिलयवहोमेनसर्वेजनपदावश्याभ
वंति ॥ अतिरूपवतीकन्यागच्छंतमनुगच्छति ॥ २० ॥ चणतंदुलहोमेनाजितोभवेत् ॥ निंबपत्रसमैस्तैलैर्विद्वेषणंकरोति ॥ सोमग्रहणे
उदकमध्येअवतीर्यअष्टसहस्रंजपेत् ॥ संग्रामेअपराजितोभवति ॥ २१ ॥ ॐलंबराज्ञेनमः ॥ आदित्याभिमुखोभूत्वाअष्टसहस्रंजपेत् ॥
आदित्योवरदोभवति ॥ २२ ॥ शुक्लचतुर्थ्यामुपोष्यगंधपुष्पादिभिरर्चनंकृत्वातिलतंदुलाञ्जुहुयात् ॥ शिरसाधारयंस्तैरपराजितोभव
ति ॥ २३ ॥ अपामार्गसमिद्भिरग्निंप्रज्वाल्यएकविंशत्याहुतीर्योजुहुयात् ॥ त्रिरात्राच्छत्रुंव्यापादयति ॥ २४ ॥ अथोत्तरणमंत्रंव्याख्या
स्ये ॥ वृक्षमूलेकज्जलंगृह्यसप्तभिर्मंत्रितंकृत्वानेत्राण्यंजयेत्पश्यतिसवशीभवति ॥ २५ ॥ पुष्पंफलंमूलंचाष्टसहस्राभिमंत्रितं
कृत्वायस्यददातिसवश्योभवति ॥ २६ ॥ यत्किंचिन्मूलमंत्रेणकरोतितत्तत्सिध्यति ॥ सर्वेग्रहाःसुप्रीताभवंति ॥ नगरद्वारंग
त्वाअष्टसहस्रंद्वारंनिरूपयेत् ॥ २७ ॥ पुरंद्वारेणगृह्यतेप्राङ्मुखोयजतिसोच्चाटयति ॥ संमुखोजपतिचोरान्विद्रावयति ॥ २८ ॥
तृणानिलूनापयति ॥ काष्ठानिच्छिदापयति ॥ २९ ॥ गंजराजेनयुद्धापयति[3] ॥ जलमध्येसप्तरात्रंजपेत् ॥ अकालेवर्षापयति ॥
कूपतडागाञ्छोषयति ॥ प्रतिमंनृत्यापयति ॥ आकर्षयति ॥ स्तंभयति ॥ योजनशतात्स्त्रीपुरुषानाकर्षयति ॥ ३० ॥
गोरोचनांचसहस्राभिमंत्रितांकृत्वाहस्तेबद्धायोजनशतसहस्रंगत्वापुनरागच्छति ॥ ३१ ॥ अथमारयितुकामः । खादिरकीलकंकृत्वास्त्रीपुरुषं

१ अयं वीरशब्दोऽन्यत्र नास्ति । २ ओंउनचावनस्तकाय स्वाहा–इ०पा० । ३ गजं गजेन–इ०पा० ।

विचिंत्यहृदयेनिखानयेत् ॥ क्षणादेवम्रियते॥३२॥सर्वपातकविमुक्तोभवति॥ अग्नितेजाःसर्वेभ्योऽपराजितोभवति ॥ ३३ ॥ ओंवक्रतुंडाय
स्वाहा ॥ ॐएकदंष्ट्रायस्वाहा ॥ ॐकृतकृष्णायस्वाहा ॥ ॐगजकर्णायस्वाहा ॥ ॐलंबोदरायस्वाहा ॥ ॐविकटायस्वाहा ॥ ॐधूम्रव
र्णायस्वाहा ॥ ॐगगनकूजायस्वाहा ॥ ॐविनायकायस्वाहा ॥ॐगणपतयेस्वाहा॥ॐहस्तिमुखायस्वाहा ॥३४॥ इतिश्रीभविष्येमहापुराणे
ब्राह्मेपर्वणिगणपतिकल्पवर्णनंनामैकोनत्रिंशोऽध्यायः ॥२९॥छ॥ सुमंतुरुवाच॥निंबमयमंगुष्ठपर्वमात्रंगणपतिंकृत्वानित्यधूपगंधादिभिरर्चयि
त्वाप्रच्छिन्नंशिरसिबद्ध्वागच्छेत् ॥ सर्वजनप्रियोभवति ॥ श्वेतार्कमूलांगुष्ठमात्रंगणपतिंकृत्वाधूपादिभिरर्चयित्वासर्वान्वर्णान्वशमानयति ॥
श्वेतचंदनमंगुष्ठमात्रंगणपतिंकृत्वापुष्पगंधादिभिरर्चयित्वाशुक्लचतुर्थ्यामष्टम्यांवाबलिंकुर्याद्दष्टसहस्रंजुहुयाद्दधिपायसेनराजानंवशमानयति
॥ रक्तचंदनमयंगणपतिमंगुष्ठमात्रंकृत्वाभौतिकंबलिंदद्याद्दधिमधुघृताहुतीनांगणपतिमष्टसहस्रंजुदात्मप्रापिकांप्रजांवशमानयति ॥ रक्तकर
वीरमूलांगुष्ठपर्वमात्रंगणपतिंकारयेत् ॥ रक्तपुष्पगंधोपहारैर्बलिंदद्यात् ॥ तिललवणघृतेनाष्टसहस्रंजुहुयात् ॥ दशग्रामान्वशमा
नयति ॥ श्वेतकरवीरांगुष्ठपर्वमात्रंगणपतिंकृत्वातिलपिष्टदधिघृतक्षीरहरिद्रामिश्रेणाष्टसहस्रंजुहुयाद्वेश्यांवशमानयति ॥ अश्वत्थमूलांगुष्ठपर्व
मात्रंगणपतिंकृत्वागंधपुष्पधूपबलिंदत्त्वाशतंजुहुयाच्छत्रंवशमानयति ॥ अर्कमूलांगुष्ठपर्वमात्रंगणपतिंकृत्वागंधपुष्पधूपबलिंदद्यात् ॥
तिंदुकाष्टशतंजुहुयाच्छत्रुंवशमानयति ॥ विल्वमूलमयमंगुष्ठपर्वमात्रंगणपतिंकृत्वागंधपुष्पधूपार्चितंकृत्वात्रिमध्वक्तानामष्टसहस्रंजुहुया
द्राजामात्यान्वशमानयति ॥ शिरसिधूपान्धृत्वागच्छेद्राजद्वारंविग्रहेजयोभवति ॥ हस्तिदंतमृत्तिकामयमंगुष्ठपर्वमात्रंगणपतिंकारयेत् ॥
गंधपुष्पधूपार्चितंकृत्वाकृष्णचतुर्थ्यांनग्नोभूत्वाभ्यर्चयेत् ॥ सप्तवारंजपेन्नित्यंनारीणांसुभगोभवति ॥ वृषभशृंगमृत्तिकांगुष्ठमात्रंगणप
तिंकारयेत् ॥ गंधपुष्पार्चितंकृत्वागुग्गुलधूपंदद्याद्दोषपतिंवशमानयति ॥अथवावल्मीकमृत्तिकांगुष्ठपर्वमात्रंगणपतिंकारयेत् ॥ कटुकतैलै
नप्रतिमांलेपयेत् ॥ उन्मत्तककाष्ठेनाग्निंप्रज्वाल्याहुतीनामष्टसहस्रंजुहुयात्तिलसर्षपमिश्रेणसर्वधूपंदद्यात्त्रिकटुकेनलेपयेत्॥ अगरुधूपंदद्याद्रा

१ सप्तरात्रम्-इ०पा०।

जानंवशमानयति ॥ परेषांचवल्लभोभवति ॥ रक्तचंदनेनात्मानंधूपयेत्सुभगोभवति ॥ ॐगणपतयेवक्रतुंडायगजदंतायगुंलगुलेतिनिनादायं चतुर्भुजायत्रिनेत्रायमुशलपाशवज्रहस्तायसर्वभूतदमनायसर्वलोकवशंकरायसर्वदुष्टोपघातजननायसर्वशत्रुविमर्दनायसर्वराज्यसमीहनायरा जानामिहवशमानयहनहनपचपचवज्रांकुशेनगणेशफट्स्वाहा ॥ ॐगांगींगूंगैंगौंगः स्वाहानमः हृदयंमूलमंत्रस्य ॥ ॐकःशिरःॐःखःशिखा ॐगःहृदयम्ॐगुःवक्रम्ॐगैंनेत्रम्ॐघःकवचम्ॐङंआवाहनंहृदयस्यआवाहनांगानिभवंतिॐनमःहृदयंमूलमंत्रस्यॐगाःशिरःॐगैःनमः शिखा ॐगौःनमःकवचम्ॐनमःनेत्रे ॐगःफट्अस्त्रम् ॥ ॐअंगुष्ठोल्कायस्वाहाआवाहनंहृदयस्यस्वाहाविसर्जनंहृदयस्यॐगंधो ल्काय स्वाहा ॥ गंधमंत्रः ॥ ॐधर्मभूतोल्कायस्वाहा ॥ पुष्पमंत्रः ॥ दुर्जयायपूर्वेण ॥ ॐधूर्जटयेदक्षिणे ॥ ॐलंबोदरायपश्चि मतः ॥ ॐगणपतयेउत्तरतः ॥ ॐगणाधिपतयेऐशान्याम्॥ॐमहागणपतयेआग्नेय्याम् ॥ ॐकूश्मांडायनैर्ऋत्याम् ॥ ॐएकदंत त्रिपुरघातिनेत्रिनेत्रायवायव्याम् ॥ ॐमहागणपतयेविद्महेवक्रतुंडायधीमहि ॥ तन्नोदंतिःप्रचोदयात् ॥ गायत्री ॥ पद्मदंष्ट्रामालाप्र कर्षणीपरश्वंकुशपाशपटहमुद्राअष्टौमुद्रादर्शयित्वाततःकर्माणिकारयेत् ॥ कृष्णतिलाहुतीनामष्टसहस्रंजुहुयात् ॥ राजानंवशमानयेत्॥ आवाहनाद्येकादशमुद्रानैवेद्यांतंक्रमाद्दर्शयेत् ॥ आराधयेद्येनविधिनात्रिनेत्रंशूलिनंहरम् ॥ तेनैवाराधयेद्देवंविघ्नेशंगणपंनृप ॥ १ ॥ तदेवमंडलंचास्यअंगन्यासस्तथैवच ॥ ऋतेमंत्रपदानीहसमानंसर्वमेवहि ॥ २ ॥ पूजयेद्यस्तुविघ्नेशमेकदंतमुमासुतम् ॥ नश्यं तितस्यविघ्नानिनचारिष्टंकदाचन ॥ ३ ॥ यश्चोपवासंकृत्वातुचतुर्थ्यांपूजयेन्नरः ॥ सर्वेतस्यसमारंभाःसिध्यंतेनात्रसंशयः ॥ ४ ॥ यस्यानुकूलोविघ्नेशःशिवयोःकुलनंदन ॥ तस्यानुकूलंसर्वस्याज्जगद्वैसर्वकर्मसु ॥ ५ ॥ तस्मादाराधयेदेनंभक्तिश्रद्धासमन्वितः॥ कुंकुमागरुधूपेनतथैवोंडीरकस्रजा ॥ ६ ॥ पललैल्लापिकाभिश्चजातीउन्मत्तकैस्तथा ॥ शुक्लपक्षेचतुर्थ्यांतुविधिनानेनपूजये त् ॥ ७ ॥ निर्विघ्नंसिध्यतेतस्यसर्वकर्मनसंशयः ॥ एकदंतेजगन्नाथेगणेशेतुष्टिमागते ॥ ८ ॥ पितृदेवमनुष्याद्याःसर्वेतुष्यंतिभारत ॥

१ गुग्गुलचतुर्भुजाय–इ०पा० । २ दुर्गायै पूर्वे–इ०पा० । ३ एकदंतत्रिपुरान्तकाय–इ०पा० । ४ पललान्नविकारैश्चजातीकुरवकैस्तथा–इ०पा० ।

तस्मादाराधयेदेनंसदाभक्तिपुरःसरः ॥ ९ ॥ कर्णलेपैस्तुंडरीकैर्मोदकैश्चमहीपते ॥ पूजयेत्सततंदेवंविघ्ननाशायदंतिनम् ॥ १० ॥
इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिचतुर्थीकल्पेविनायकपूजाविधिनिरूपणंनामत्रिंशोऽध्यायः ॥३०॥ छ ॥ ॥ सुमंतुरुवाच ॥ शिवाशांता
सुखाराजंश्चतुर्थीत्रिविधास्मृता ॥ मासिभाद्रपदेशुक्लाशिवालोकेषुपूजिता ॥ १ ॥ तस्यांस्नानंतथादानमुपवासोजपस्तथा ॥ क्रियमाणंश
तगुणंप्रसादाद्दंतिनोनृप ॥ २ ॥ गुडलवणघृतानांतुदानंशुभकरंस्मृतम् ॥ गुडापूपैस्तथावीरपुण्यंब्राह्मणभोजनम् ॥ ३ ॥ यास्तस्यांनर
शार्दूलपूजयंतिसदास्त्रियः ॥ गुडलवणपूपैश्चश्वश्रूंश्वशुरमेवच ॥ ४ ॥ ताःसर्वाःसुभगाःस्युर्वै3विघ्नेशस्यानुमोदनात् ॥ कन्यकातुविशेषेण
विधिनानेनपूजयेत् ॥ ५ ॥ इतिशिवाकल्पः ॥ सुमंतुरुवाच॥माघेमासितथाशुक्लायांचतुर्थीमहीपते ॥ साशांताशांतिदानित्यंशांतिंकुर्या
त्सदैवहि ॥ ६ ॥ स्नानदानादिकंकर्मसर्वमस्यांकृतंविभो ॥ भवेत्सहस्रगुणितंप्रसादात्तस्य4दंतिनः ॥ ७ ॥ कृतोपवासीयस्तस्यांपूजयेद्विघ्न
नायकम् ॥ तस्यहोमादिकंकर्मभवेत्साहस्रिकंनृप ॥ ८ ॥ लवणंचगुडंशाकंगुडपूपांश्चभारत ॥ दत्वाभक्त्यातुविप्रेभ्यःफलंसाहस्रिकंलभे
त् ॥ ९ ॥ विशेषतःस्त्रियोराजन्पूजयंत्योगुरुंनृप ॥ गुडलवणघृतैर्वीरसदास्युर्भाग्यसंयुताः ॥ १० ॥ इतिशांताकल्पः ॥ सुमंतुरुवाच ॥
सुखावहाचसुसुखासौभाग्यकरणीपरम् ॥ ११ ॥ चतुर्थींकुरुशार्दूलरूपसौभाग्यदाशुभा ॥ सुखाव्रतंमहापुण्यंरूपदंभाग्यदंतथा ॥ १२ ॥
सुसूक्ष्मंसुकरंधन्यमिहपुण्यसुखावहम् ॥ परत्रफलदंवीरदिव्यरूपप्रदायकम् ॥ १३ ॥ हसितंललितंचोक्तंचेष्टितंचसुखावहम् ॥ सविलास
भुजक्षेपंचंक्रमंचेष्टितंशुभम् ॥ १४ ॥ सुखाव्रतेनसर्वेषांसुखंकुरुकुलोद्वह॥कृत्येनपूजितेचेशेविघ्नेशेशिवयोःसुते ॥ १५ ॥ यदाशुक्लचतुर्थ्यां
तुवारोभौमस्यवैभवेत् ॥ तदासासुखदाज्ञेयाचतुर्थीवैसुखेतिच ॥ १६ ॥ पुरामैथुनमाश्रित्यास्थिताभ्यांतुहिमाचले ॥ भीमोमाभ्यां
महाबाहोरक्तबिन्दुश्च्युतःक्षितौ ॥ १७ ॥ मेदिन्यांसप्रयत्नेनसुखेनाविधृतोऽनया ॥ जातास्याःसकुजोवीररक्तोरक्तसमुद्भवः ॥ १८ ॥
ममांगतोयथोत्पन्नस्तस्मादंगारकोह्ययम् ॥ अंगदोऽगोपकारश्चअंगानांतुप्रदोनृणाम् ॥ १९ ॥ सौभाग्यादिकरोयस्मात्तस्मादंगा

१ पुण्डरीकैः–इ०पा० । २ महत्–इ०पा० । ३ नित्यम्–इ०पा० । ४ दन्तिनो नृप–इ०पा० । ५ भवेत्–इ०पा० । ६ कुरुनंदन–इ०पा० । ७ मैत्रम्–इ०पा० ।

रकोमतः ॥ भक्त्याचतुर्थ्यांनक्तेनयोवैश्रद्धासमन्वितः ॥ २० ॥ उपोष्यातिनरोराजन्नारीवानान्यमानसा ॥ पूजयेच्चकुजं
भक्त्यारक्तपुष्पविलेपनैः ॥ २१ ॥ गणेशंप्रथमंपूज्यभक्त्याश्रद्धासमन्वितः ॥ तस्यतुष्टःप्रयच्छेतसौभाग्यंरूपसंपदम् ॥ २२ ॥
पूर्वंचकृतसंकल्पःस्नानंकृत्वायथाविधि ॥ गृहीत्वामृत्तिकांवंदेन्मंत्रेणानेनभारत ॥ २३ ॥ इहत्वंवंदितापूर्वंकृष्णेनोद्धरताकिल ॥
तस्मान्मेदहपाप्मानंयन्मयापूर्वसंचितम् ॥ २४ ॥ इमंमंत्रंपठन्वीरआदित्यायप्रदर्शयेत् ॥ आदित्यरश्मिसंपूतांगंगाजलकणो
क्षिताम् ॥ २५ ॥ दत्वामृदंशिरसितांसर्वांगेषुचयोजयेत् ॥ ततःस्नानंप्रकुर्वीतमंत्रयेतजलंपुनः ॥ २६ ॥ त्वमापोयोनिःसर्वेषांदैत्य
दानवदैवतम् ॥ स्वेदांडजोद्भिदानांचरसानांपतयेनमः ॥ २७ ॥ स्नातोऽहंसर्वतीर्थेषुसर्वप्रस्रवणेषुच ॥ तडागेषुचसर्वेषुमानसादिसरःसु
च ॥ २८ ॥ नदीषुदेवखातेषुसुतीर्थेषुह्रदेषुवै ॥ ध्यायन्पठन्निमंमंत्रंततःस्नानंसमाचरेत् ॥ २९ ॥ ततःस्नात्वाशुचिर्भूत्वागृहमागत्य
वैस्पृशेत् ॥ दूर्वाश्वत्थंशमींस्पृष्ट्वागांचमंत्रेणमंत्रवित् ॥ ३० ॥ दूर्वांनमस्यमंत्रेणशुचौभूमौसमुत्थिताम् ॥ त्वंदूर्वेमृतनामासिसर्वदेवैस्तु
वंदिता ॥ ३१ ॥ वंदितादहतत्सर्वंदुरितंयन्मयाकृतम् ॥ शमीमंत्रंप्रवक्ष्यामितन्निबोधमहीपते ॥ ३२ ॥ पवित्राणांपवित्रात्वंकाश्यपी प्र
थिताश्रुतौ ॥ शमीशमयमेपापंनूनंवेत्सिधराधरान् ॥ ३३ ॥ अश्वत्थालंभनेवीरमंत्रमेतंनिबोधमे ॥ नेत्रस्पंदादिजंदुःखंदुःस्वप्नंदुर्विचिन्त
नम् ॥ शक्तानांचसमुद्योगमश्वत्थत्वंक्षमस्वमे ॥ ३४ ॥ इमंमंत्रंपठन्वीरकुर्याद्वैस्पर्शनंबुधः ॥ ततोदेवितुगांदद्याद्दरिंकृत्वाप्रदक्षिणाम् ॥
समालभ्यतुहस्तेनततोमंत्रमुदीरयेत् ॥ ३५ ॥ सर्वदेवमयीदेविमुनिभिस्तुसुपूजिता ॥ तस्मात्स्पृशामिवंदेत्वांवंदितापापहा ॥
भव ॥ इमंमंत्रंपठन्वीरभक्त्याश्रद्धासमन्वितः ॥ ३६ ॥ प्रदक्षिणंतुयःकुर्यादर्जुनेकुरुनंदन ॥ प्रदक्षिणीकृतातेनपृथिवीस्यान्नसंशयः ॥
॥ ३७ ॥ एवंमौनेनचागत्यततोवह्निगृहंव्रजेत् ॥ प्रक्षाल्यचमृदापादावाचांतोऽग्निगृहंविशेत् ॥ ३८ ॥ होमंतत्रप्रकुर्वीतइमैर्मंत्रपदैर्वरैः ॥
शर्वायशर्वपुत्रायक्षोण्युत्संगभवायच ॥ ३९ ॥ कुजायललितांगायलोहितांगायवैतथा ॥ ॐकारपूर्वकैर्मंत्रैःस्वाहाकारसमन्वितैः ॥ ४० ॥

१ नित्यम्–इ०पा० । २ हरिब्रह्मशिवादिभिः–इ०पा० ।

अष्टोत्तरशतंवीरअर्धार्धमर्धमेवच ॥ एतैर्मंत्रपदैर्भक्त्याशक्त्यावाकामतोनृप ॥ ४१ ॥ खादिरैःसुसमिद्भिस्तुआज्यदुग्धैर्यवैस्तिलैः ॥ भ
क्ष्यैर्नानाविधैश्चान्यैःशक्त्याभक्त्यासमन्वितः ॥ ४२ ॥ हुत्वाहुतीस्ततोवीरदेवंसंस्थापयेत्क्षितौ ॥ सौवर्णराजतंवापिशक्त्यादारुमयं
नृप ॥ ४३ ॥ देवंदारुमयंवापिश्रीखण्डचन्दनैरपि ॥ ताम्रेपात्रेरौप्यमयेचाज्यकुंकुमकेसरैः ॥ ४४ ॥ अन्यैर्वालोहितैर्वापिपुष्पैःपत्रैःफलै
रपि ॥ रक्तैश्चविविधैर्वीरअथवाशक्तितोऽर्चयेत् ॥ ४५ ॥ यावद्विसृजतेवित्तंवित्तवान्वीरभक्तितः ॥ तावद्विवर्धतेपुण्यंदातुःशतसहस्रिकम् ॥
॥ ४६ ॥ अन्येताम्रमयेपात्रेवंशजेमृन्मयेपिवा ॥ पूजयंतिनराःशक्त्याकृत्वाकुंकुमकेशरैः ॥ ४७ ॥ पुरुषाकृति कृतंपात्रइमंमंत्रंसमर्चये
त् ॥ अग्निर्मूर्धेतिमंत्रेणगंधपुष्पादिभिस्तथा ॥ ४८ ॥ धूपैरभ्यर्च्यविधिवद्ब्राह्मणायप्रदीयते ॥ गुडौदनंघृतंक्षीरंगोधूमाञ्छालितंडुला
न् ॥४९॥ अवेक्ष्यशक्तिंदद्याद्वैदरिद्रोवित्तवांस्तथा ॥ वित्तशाठ्यंनकर्तव्यंविद्यमानेधनेनृप ॥ ५० ॥ वित्तशाठ्यंहिकुर्वाणोनामुत्रबलभाग्भवे
त् ॥ ॥ शतानीकउवाच ॥ ॥ अंगारकेणसंयुक्ताचतुर्थीनक्तभोजनैः ॥ ५१ ॥ उपोष्याकतिमात्रातुउताहोसकृदेवतु ॥ सुमंतुरुवाच ॥
चतुर्थीसाचतुर्थीतुयदांगारकसंयुता ॥ ५२ ॥ उपोष्यातत्रतत्रैवप्रदेयोविधिवद्गुडः ॥ उपोष्यनक्तेनविभोचतस्रःकुजसंयुताः ॥ ५३ ॥ चतु
र्थ्याचचतुर्थ्याचविधानंशृणुयादृशम् ॥ सौवर्णंतुकुजंकृत्वासविनायकमादरात् ॥ ५४ ॥ दशसौवर्णिकंमुख्यंदशार्धमर्धमेवच ॥ सौवर्णे
पात्रेरौप्येवाभक्त्याताम्रमयेऽपिवा ॥ ५५ ॥ विंशत्पलानिपात्राणिविंशत्यर्धपलानिवा ॥ विंशत्कर्षाणिवावीरविंशदर्धार्धमेववा ॥ ५६ ॥
रौप्यसंख्यंपलंकार्यंपलार्धमर्धमेवच ॥ शक्त्यावित्तैश्चभक्त्याचपात्रेताम्रमयेऽपितु ॥ ५७ ॥ प्रतिष्ठाप्यग्रहेशंतुवस्त्रैःसंपरिवेष्टितम् ॥ वि
विधैःसाधवैरक्तैःपुष्पैरक्तैःसमन्वितम् ॥ ५८ ॥ ब्राह्मणायसदाद्द्यादक्षिणासहितंनृप ॥ वाचकायमहाबाहोगुणिनेश्रेयसेनृप ॥ ५९ ॥
इतितेकथितापुण्यातिथीनामुत्तमातिथिः ॥ यामुपोष्यनरोरूपंदिव्यमाप्नोतिभारत ॥ ६० ॥ कांत्यात्रेयसमंवीरंतेजसारविसंनिभम् ॥
प्रभयारविकल्पंचसमीरबलसंश्रितम् ॥ ६१ ॥ ईदृग्रूपंसमाप्येहयातिभौमसदोनृप ॥ प्रसादाद्विघ्ननाथस्यतथागणपतेर्नृप ॥ ६२ ॥ पठतां

१ कृत्वा कृत्यम्–इ०पा० । २ भक्तितः–इ०पा० । ३ हि–इ०पा० । ४ सार्धंकुर्यांद्वैसर्वमेववा–इ०पा० ।

शृण्वतांराजन्कुर्वतांचविशेषतः ॥ ब्रह्महत्यादिपापानिक्षीयंतेनात्रसंशयः ॥ ६३ ॥ ऋद्धिंवृद्धिंतथालक्ष्मींलभतेनात्रसंशयः ॥ ६४ ॥ इतिश्रीभविष्येमहापुराणेशतसहस्रार्धसंहितायांब्राह्मेपर्वणिचतुर्थीकल्पेसुखावहांगारकचतुर्थीव्रतनिरूपणंनामैकत्रिंशोऽध्यायः ॥३१॥समाप्तश्चायंचतुर्थीकल्पः ॥ ४ ॥ छ ॥ सुमंतुरुवाच ॥ ॥ पंचमीदयिताराजन्नागानांनंदिवर्धिनी ॥ पंचम्यांकिलनागानांभवतीत्युत्सवोमहान् ॥१॥ वासुकिस्तक्षकश्चैवकालियोमणिभद्रकः ॥ ऐरावतोधृतराष्ट्रः[1]कर्कोटकधनंजयौ ॥ २ ॥ एतेप्रयच्छंत्यभयंप्राणिनांप्राणजीविनाम् ॥ पंचम्यांस्नपयंती[2]हनागान्क्षीरेणयेनराः ॥ ३ ॥ तेषांकुलेप्रयच्छंतितेऽभयप्राणदक्षिणाम् ॥ शप्तानागायदामात्रादह्यमानादिवानिशम् ॥ ४ ॥ निर्वापयंतिस्नपनै[3]र्गवांक्षीरेणमिश्रितैः ॥ येस्नापयंतिवैनागान्भक्त्याश्रद्धासमन्विताः ॥ ५ ॥ तेषांकुलेसर्पभयंनभवेदितिनिश्चयः ॥ ॥ शतानीकउवाच ॥ मात्राशप्ताःकथंनागाःसमुद्दिश्यचकारणम् ॥ कथंचानंदकरणंकस्यवासंप्रसादजम् ॥ ६ ॥ सुमंतुरुवाच ॥ उच्चैःश्रवाअश्वरत्नंश्वेतोजातोऽमृतोद्भवः ॥ तंदृष्ट्वाचाब्रवीत्कद्रूर्नागानांजननीस्वसाम्[4] ॥ ७ ॥ अश्वरत्नमिदंश्वेतंसंपश्येऽमृतसंभवम् ॥ कृष्णांश्चपश्यसेवालान्सर्वेश्वेतमुतांवरे ॥ ८ ॥ विनतोवाच ॥ सर्वश्वेतोहयवरोनास्यकृष्णोनलोहितः ॥ कथंत्वंपश्यस्यत्रकृष्णंविनतोवाचतांस्वसाम् ॥ ९ ॥ कद्रूरुवाच ॥ पश्येहमेकनयनाकृष्णवालसमन्वितम् ॥ द्विनेत्रात्वंतुविनतेनपश्यसिपणंकुरु ॥ १० ॥ विनतोवाच ॥ अहंदासीभवित्रीतेकृष्णेकेशेप्रदर्शिते ॥ नचेद्दर्शयसेकद्रुममदासीभविष्यसि ॥ ११ ॥ एवंतेविपणंकृत्वागतेक्रोधसमन्विते ॥ विनताशयनेसुताकद्रूर्जिह्ममचिंतयत् ॥ १२ ॥ आहूयपुत्रान्प्रोवाचवालाभूत्वाहयोत्तमे ॥ तिष्ठध्वंविपणेजेष्येविनतांजयगर्द्धिनीम् ॥ १३ ॥ प्रोचुस्तेजिह्मबुद्धिंतांनागामा[5]तांविगृह्यतु ॥ अधर्ममेतन्मातस्तेनकरिष्यामतेवचः ॥ १४ ॥ तांश्छशापरुषाकद्रूःपावकोवःप्रधक्ष्यति ॥ गतेबहुतिथेकालेपांडवोजनमेजयः ॥ १५ ॥ सर्पसत्रंसकर्तावैभुविअन्यैःसुदुष्करम् ॥ तस्मिन्सत्रेसतिग्मांशुःपावकोवःप्रधक्ष्यति ॥ १६ ॥

---

१ धृतशिरास्तथान्ये ये महोरगाः–इ०पा० । २ पूजयंति–इ०पा० । ३ च जलैर्गवां क्षीरैरामि श्रितैः–इ०पा० । ४ स्वसामित्यार्षम् ।
५ मातामित्यार्षम् ।

एवंशप्त्वारुषाकद्रूःकिंचिन्नोक्तवतीतुसा ॥ मात्राशप्तास्तथानागाःकर्तव्यंनान्वपद्यत ॥ १७ ॥ वासुकिंदुःखितंज्ञात्वाब्रह्माप्रोवाचसां
त्वयन् ॥ माशुचोवासुकेऽत्यर्थंशृणुमद्वचनंपरम् ॥ १८ ॥ यायावरकुलेजातोजरत्कारुरितिद्विजः ॥ भविष्यतिमहातेजास्तस्मिन्काले
तपोनिधिः ॥ १९ ॥ भगिनींचजरत्कारुंतस्यत्वंप्रतिदास्यसि ॥ भवितातस्यपुत्रोऽसौआस्तीकइतिविश्रुतः ॥ २० ॥ सततसत्रं
प्रवृद्धंवैनागानांभयदंमहत् ॥ निषेधतिसुमतिर्वाग्भिरग्र्याभिस्तंचरतोष्यति ॥ २१ ॥ तदिमांभगिनींराजंस्तस्यत्वंप्रतिदास्य
ति ॥ जरत्कारुंजरत्कारोःप्रदद्याअविचारयन् ॥ २२ ॥ यदासौप्रार्थतेऽरण्येयत्किंचिद्विवदिष्यति ॥ तत्कर्तव्यमशंकेनय
दीच्छेःश्रेयआत्मनः ॥ २३ ॥ पितामहवचःश्रुत्वावासुकिःप्रणिपत्यच ॥ तथाकरोद्यथाचोक्तंयत्नंचपरमास्थितः ॥ २४ ॥
तच्छ्रुत्वापन्नगाःसर्वेप्रहर्षोत्फुल्ललोचनाः ॥ पुनर्जातमिवात्मानंमेनिरेभुजगोत्तमाः ॥ २५ ॥ तत्रसत्रंमहाबाहोतवपित्राप्रवर्तितम् ॥ ऋत्विग्भिः
सहितेनेहसर्वलोकेषुदुष्करम्[2] ॥ २६ ॥ प्रोक्तंचविष्णुनापूर्वंधर्मपुत्रस्यधीमतः ॥ अवश्यंतस्यभवितानागानांभयकारकम्[3] ॥ २७ ॥ त
स्मात्कालांतराद्राजन्सार्ग्रेवर्षशतेगते ॥ तत्सत्रंभवितावोरंनागानांक्षयकारकम् ॥ २८ ॥ यास्यन्त्यधर्मभारितादंदशूकाविषोल्ब
णाः ॥ कोटिसंख्यामहाराज[1]निपतिष्यंत्यहर्निशम् ॥ २९ ॥ अपूर्वंतुनिमग्नानांघोरेरौद्राग्निसागरे ॥ आस्तीकस्तत्रभवितातेषांनौर्वहिसा
गरे ॥ ३० ॥ श्रुत्वासचाग्निराजानमृत्विजस्तदनंतरम् ॥ निवर्तयिष्यतियागंनागानांमोहनंपरम् ॥ ३१ ॥ पंचम्यांतत्रभविताब्रह्मा
प्रोवाचलेलिहान् ॥ तस्मादियंमहाबाहोपंचमीदयितासदा ॥ ३२ ॥ नागानामानंदकरीदत्तावैब्रह्मणापुरा ॥ कृत्वातुभोजनंपूर्वंब्राह्मणानां
तुकामतः ॥ ३३ ॥ विसृज्यनागाःप्रीयंतांयेकेचित्पृथिवीतले ॥ येचहेलिमरीचिस्थायेंतरेदिविसंस्थिताः ॥ ३४ ॥ येनदीषुमहानागा
येसरस्वतिगामिनः ॥ येचवापीतडागेषुतेषुसर्वेषुवैनमः ॥ ३५ ॥ नागान्विप्रांश्चसंपूज्यविसृज्यचयथार्थतः ॥ ततःपश्चात्तुभुंजीयात्सहभृत्यैर्नराधिप
॥ ३६ ॥ पूर्वंमधुरमश्नीयात्ततोभुंजीतकामतः ॥ एवंनियमयुक्तस्ययत्फलंतन्निबोधमे ॥ ३७ ॥ मृतोनागपुरंयातिपूज्यमानोऽप्सरो

१महाराज-इ०पा० । २ सर्वलोकसुदुर्धरम्-इ०पा० । ३ क्षयकारकम्-इ० पा० ।

गणैः ॥ विमानवरमारूढोरमतेकालमीप्सितम् ॥ ३८ ॥ इहचागत्यराजासा[1]वयुतानांवरोभवेत् ॥ सर्वरत्नसमृद्धःस्याद्वाहनाढ्यश्चजाय
ते ॥ ३९ ॥ पंचजन्मान्यसौराजाद्वापरेद्वापरेभवेत् ॥ आधिव्याधिविनिर्मुक्तःपत्नीपुत्रसहायवान् ॥४०॥ तस्मात्पूज्याश्चपाल्यो[2]श्चघृतपाय
सगुग्गुलैः ॥ शतानीकउवाच ॥ दशंतियेनरंविप्रनागाःक्रोधसमन्विताः ॥ ४१ ॥ भवेत्किंतस्यदष्टस्यविस्तरात्प्रब्रवीहिमे ॥ सुमंतुरु
वाच ॥ नागदष्टोनरोराजन्प्राप्यमृत्युंव्रजत्यधः ॥ ४२ ॥ अधोगत्वाभवेत्सर्पोनिर्विषोनात्रसंशयः ॥ शतानीकउवाच ॥ नागदष्टःपि
तायस्यभ्रातावादुहितापिवा ॥ ४३ ॥ मातापुत्रोथवाभार्याकिंकर्तव्यंवदस्वमे ॥ मोक्षायतस्यविप्रेंद्रदानंव्रतमुपोषणम् ॥ ४४ ॥ ब्रूहि
तद्द्विजशार्दूलयेनतद्वैकरोम्यहम् ॥ सुमंतुरुवाच ॥ उपोष्यापंचमीराजन्नागानांपुष्टिवर्धिनी ॥ ४५ ॥ त्वमेवमेकंराजेंद्रविधानंशृणुभार
त ॥ मासिभाद्रपदेयातुकृष्णं[3]पक्षेमहीपते ॥ ४६ ॥ सातुपुण्यामहाप्रोक्ताग्राह्यापिचमहीपते ॥ ज्ञेयाद्वादशसंवर्तेपंचम्योभरतर्षभ ॥४७॥
चतुर्थ्यांत्वेकभक्तंतुतस्यांनक्तंप्रकीर्तितम् ॥ भु[4]विचित्रमयान्नागानथवाकलधौतकान् ॥ ४८ ॥ कृत्वादारुमयान्वापिअथवामृन्मयान्नृप ॥
पंचम्यामर्चयेद्भक्त्यानागानांपंचकंनृप ॥ ४९ ॥ करवीरैःशतपत्रैर्जातीपुष्पैश्चसुव्रत ॥ तथागंधैश्चधूपैश्चपूज्यपं[5]चकमुत्तमम् ॥ ५० ॥
ब्राह्मणंभोजयेत्पश्चाद्घृतपायसमोदकैः ॥ अनंतंवासुकिंशंखंपद्मंकंबलमेवच ॥ ५१ ॥ तथाकर्कोटकंनागंनागमश्वतरंनृप ॥ धृतराष्ट्रंशंखपा
लंकालियंतक्षकंतथा ॥ ५२ ॥ पिंगलंचतथानागंमासिमासिप्रकीर्तितम् ॥ [6]वत्सरांतेपारणंस्याद्ब्राह्मणान्भोजयेद्बहून् ॥ ५३ ॥ इतिहास
विदेनागंगौरिकेणकृतंनृप॥तथार्चनाप्रदातव्यावाचकायमहीपते ॥५४॥ एषवै[7]नागपञ्चम्याविधिःप्रोक्तोबुधैर्नृप ॥ तवापित्राकृतश्चैवपितुर्मोक्षाय
भारत ॥ ५५ ॥ त्वमेकमेकंवैवीरपंचमींभरतर्षभ ॥ सुवर्णभारनिष्पन्नंनागंदत्वातथाचगाम् ॥ ५६ ॥ व्यासायकुरुशार्दूलपितुरा

---

१ वसुधायाः—इ०पा० । २ मान्याश्च—इ०पा० । ३ शुक्लपक्षे—इ०पा० । ४ भूरिचन्द्रमयं नागम्—इ०पा० ५ पुस्तकांतरे च " भूरिचन्द्रमयं नागमथवा कलधौतकम् ॥ कृत्वा दारुमयं वापि अथवा मृन्मयं नृप ॥ पंचम्यामर्चयेद्भक्त्या नागं पचफणं नृप ॥ करवीरैःशतपत्रैर्जातीपुष्पैश्च सुव्रत ॥ तथा गंधैश्च धूपैश्च पूज्यपन्नगमुत्तमम्—इ०पा० । ५ पन्नगम्—इ०पा० । ६ संवर्तांते पारणं स्यान्महाब्राह्मणभोजनम्—इ०पा० । ७ एष पारणके चापि—इ०पा० ।

९

नृण्यमाप्नुयाः ॥ तवापित्राकृताह्येवंपंचम्युपासनानृप ॥ ५७ ॥ उत्सृज्यनागतांवीरतवपूर्वपितामहः ॥ पुष्पोत्तरंसदोगत्वातथापुष्पसदो
नृप ॥ ५८ ॥ सुनासीरसदोगत्वातदाभर्गसदोगतः ॥ स्वभूसदस्ततोगत्वाकंजजस्यसदोगतः ॥ ५९ ॥ अन्येपियेकरिष्यंतिइदंव्रतम
नुत्तमम् ॥ दष्टकोमोक्ष्यतेतेषांशुभंस्थानमवाप्स्यति ॥ ६० ॥ यश्चेदंशृणुयान्नित्यंनरःश्रद्धासमन्वितः ॥ कुलेतस्यननागेभ्योभयंभवतिकु
त्रचित् ॥६१॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिपंचमीकल्पेनागपंचमीव्रतवर्णनंनामद्वात्रिंशोऽध्यायः ॥ ३२ ॥ छ ॥ शतानीकउवाच ॥
सर्पाणांकतिरूपाणिकेवर्णाःकिंचलक्षणम् ॥काजातिस्तुभवेत्तेषांकेषुयोनिकुलेषुवा ॥१॥ सुमंतुरुवाच॥पुरामेरौनगवरेकश्यपंतपसांनिधिम्॥
प्रणम्यशिरसाभक्त्यागौतमोवाक्यमब्रवीत् ॥ २ ॥ सर्पाणांकतिरूपाणिकिंचिन्हंकिंचलक्षणम् ॥ जातिंकुलंतथावर्णान्ब्रूहिसर्वंप्रजापते ॥
॥ ३ ॥ कथंवाजायतेसर्पःकथंसुंचेद्विषंप्रभो ॥ विषवेगाःकतिप्रोक्ताःकत्येवविषनाडिकाः ॥ ४ ॥ दंष्ट्राःकतिविधाःप्रोक्ताःकिंप्रमाणंविषागमे॥
कदातुगृह्णतेगर्भंकथंचेहप्रसूयते ॥ ५ ॥ कीदृशीस्त्रीपुमांश्चैवकीदृशंचनपुंसकम् ॥ किंनामदशनंचैवएतत्कथयसुव्रत ॥ ६ ॥ तस्यत
द्वचनंश्रुत्वाकश्यपःप्रत्यभाषत ॥ शृणुगौतमतत्त्वेनसर्पाणामिहलक्षणम् ॥ ७ ॥ मास्याषाढेतथाज्येष्ठेप्रमाद्यंतिभुजंगमाः ॥ ततो
नागोनागिनीचमैथुनेसंप्रपद्यते ॥ ८ ॥ चत्वारोवार्षिकान्मासान्नागीगर्भमधारयत् ॥ ततःकार्तिकमासेतुअंडकानिप्रसूयते ॥ १० ॥ अंड
कानांतुविज्ञेयेद्वेशतेद्वेचविंशती॥तान्येवभक्षयेत्सातुभागैकंघृणयात्यजेत् ॥१०॥ स्वर्णकिंवर्णाद्वैतस्मात्पुमान्संजायतेंडकात् ॥ तान्येवस्वा
दतेसर्पश्अहोरात्राणिविंशतिम् ॥ ११ ॥ स्वर्णकेतकवर्णाभाद्दीर्घराजिविसंनिभात् ॥ तस्मादुत्पद्यतेस्त्रीवैअंडाद्ब्राह्मणसत्तम ॥ १२ ॥
शिरीषपुष्पवर्णाभादंडकात्स्यान्नपुंसकम् ॥ ततोभिनत्तिचांडानिषण्मासेनतुगौतम ॥ १३ ॥ ततस्तेप्रीतिसंबंधात्स्नेहंबध्नंतिबालकाः ॥
ततोऽसौसप्तरात्रेणकृष्णोभवतिपन्नगः ॥१४॥ आयुःप्रमाणंसर्पाणांशतंविंशोत्तरंस्मृतम् ॥ मृत्युश्चाष्टविधोज्ञेयःशृणुष्वात्रयथाक्रमम्॥१५॥

१ श्रद्धाभक्तिसमन्वितः-इ०पा० । २ कस्मिंश्चित्पुस्तके पूर्वं प्रोक्तः-"सुमंतुरुवाच"इत्यादिःपाठो नास्ति परं त्वत्र-"तस्य तद्वचनं श्रुत्वा सुमंतुःप्राह तत्त्वदा ॥ इममर्थं पुरा पृष्टो गौतमेन च कश्यपः । प्रहृष्टवदनः सौम्यःकश्यपःप्रत्यभाषत ॥" इति पाठोऽस्ति।

मयूरान्मानुषाद्वापिचकोराद्वोखुरां[1]त्तथा ॥ बिडालान्नकुलाच्चैववराहाद्वृश्चिकात्तथा ॥ १६ ॥ एतेषांयदिमुच्येतजीवेद्विंशोत्तरंशतम् ॥
सप्ताहेतुततःपूर्णेदंष्ट्राणांचाधिरोहणम् ॥ १७ ॥ विषस्यागमनंतत्रनिक्षिपेच्चपुनःपुनः ॥ एवंज्ञात्वातुतत्त्वेनविषकर्मसमारभेत् ॥ १८ ॥
एकविंशतिरात्रेणविषदंष्ट्रासुजायते ॥ नागीपार्श्वसमावर्तीबालसर्पःसउच्यते ॥ १९ ॥ पंचविंशतिरात्रस्तुसद्यःप्राणहरोभवेत् ॥ षण्मासा
ज्जातमात्रस्तुकंचुकंवैप्रमुंचति ॥ २० ॥ पादानांचापिविज्ञेयेद्वेशतेद्वेचविंशती ॥ गोलोमसदृशाःपादाःप्रविशंतिक्रमंतिच ॥ २१ ॥ सं
धीनांचास्यविज्ञेयंद्वेशतेविंशतीतथा ॥ अंगुल्यश्चापिविज्ञेयाद्वेशतेविंशतीतथा ॥ २२ ॥ अकालजातायेसर्पानिर्विषास्तेप्रकीर्ति
ताः ॥ पंचसप्ततिवर्षाणिआयुस्तेषांप्रकीर्तितम् ॥ २३ ॥ रक्तपीतशुक्लदंताआनीलामंदवेगिनः ॥ एतेअल्पायुषोज्ञेयाअन्ये
चभीरवःस्मृताः ॥ २४ ॥ एकंचास्यभवेद्वक्त्रंद्वेजिह्वेचप्रकीर्तिते ॥ द्वात्रिंशद्दशनाःप्रोक्ताःपन्नगानांनसंशयः ॥ २५ ॥ तेषां
मध्येतुचत्वारोदंष्ट्रयासुविषावहाः ॥ मकरीकरालीकालरात्रीयमदूतीतथैवच ॥ २६ ॥ सर्वासांचैवदंष्ट्राणांदेवताःपरिकीर्तिताः ॥ प्रथमा
ब्रह्मदेवत्याद्वितीयाविष्णुदेवता ॥ २७ ॥ तृतीयारुद्रदेवत्याचतुर्थीयमदेवता ॥ हीनाप्रमाणतःसातुवामनेत्रंसमाश्रिता ॥ २८ ॥ नास्यां
मंत्राःप्रयोक्तव्यानौषधंनैवभेषजम् ॥ वैद्यःपराङ्मुखोयातिमृत्युस्तस्याविलेखनात् ॥ २९ ॥ चिकित्सानबुधैःकार्यातदंतंतस्यजीवितम् ॥
मकरींमासिकांविद्यात्करालीचद्विमासिका ॥ ३० ॥ कालरात्रीभवेत्त्रीणिचतुरोयमदूतिका ॥ मकरीं[2]गुडौदनंदद्यात्कषायान्नंकरालिका ॥
॥ ३१ ॥ कालरात्रीकटुयुतंदूतीवैसांनिपातिकम् ॥ मकरीशस्त्रकंविद्यात्करालीकाकपादिका ॥ ३२ ॥ कराकृतिःकालरात्रिर्याम्याकूपाकृ
तिःस्मृता ॥ मकरीवातुलाज्ञेयाकरालीपैत्तिकीस्मृता ॥ ३३ ॥ कफात्मिकाकालरात्रीयमदूतीसन्निपातकी ॥ शुक्लातुमकरीज्ञेयाकरालीर
क्तसंनिभा ॥ ३४ ॥ कालरात्रीभवेत्पीताकृष्णाचयमदूतिका ॥ वामाशुक्लाचकृष्णाचरक्तापीताचदक्षिणा ॥ ३५ ॥ समासेनतुवक्ष्यामियथै
तावर्णतःस्मृताः ॥ शुक्लातुब्राह्मणीज्ञेयारक्तातुक्षत्रियास्मृता ॥ ३६ ॥ वैश्यातुपीतिकाज्ञेयाकृष्णाशूद्रातुकथ्यते ॥ अतःपरंप्रवक्ष्यामिदंष्ट्रा

१ गोरखात्-इ०पा० । २ शुभौदनम्-इ०पा० ।

णांविषलक्षणम् ॥ ३७ ॥ दंष्ट्राणांतुविषंनास्तिनित्यमेवभुजंगमे ॥ दक्षिणंनेत्रमासाद्यविषंसर्पस्यतिष्ठति ॥ ३८ ॥ संक्रुद्धस्येहसर्पस्यविषंग च्छतिमस्तके ॥ मस्तकाद्धमनींयातिततोनाडीषुगच्छति ॥३९॥ नाडीभ्योगच्छतेदंष्ट्रांविषंतत्रप्रवर्तते ॥ तत्सर्वंकथयिष्यामियथावदनुपूर्व शः ॥ ४० ॥ अष्टभिःकारणैःसर्पोदशतेनात्रसंशयः ॥ आक्रांतोदशतेपूर्वंद्वितीयःपूर्ववैरिणम् ॥ ४१ ॥ तृतीयंदशतेभीतश्चतुर्थंमददर्पितः ॥ पंचमंतुक्षुधाविष्टःषष्ठंचेहविषोल्बणः ॥ ४२ ॥ सप्तमंपुत्ररक्षार्थमष्टमंकालचोदितः ॥ यस्तुसर्पोदशित्वातुउदरंपरिवर्तयेत् ॥ ४३ ॥ वल्मु ग्नाकृतिंदष्ट्वामाक्रांतंतद्विनिर्दिशेत् ॥ यस्यसर्पस्यदष्टस्यगभीरंदृश्यतेव्रणम् ॥ ४४ ॥ वैरदष्टंविजानीयात्कश्यपस्यवचोयथा ॥ एकदंष्ट्राप दंयस्यअव्यक्तंनचकल्पितम् ॥ ४५ ॥ भीतदष्टंविजानीयाद्यथोवाचप्रजापतिः ॥ यस्यसर्पेणदष्टस्यरेखादंतस्यजायते ॥४६ ॥ मददष्टंविजा नीयात्कश्यपस्यवचोयथा ॥ द्वेचदंष्ट्रापदेयस्यदृश्यतेचमहाक्षतम् ॥ ४७ ॥ क्षुधाविष्टंविजानीयाद्यथोवाचप्रजापतिः ॥ द्वेदंष्ट्रेयस्यदृश्येतेक्व चिद्रुधिरसंकुले ॥ ४८ ॥ विषोल्बणंविजानीयाद्दंशंतंनात्रसंशयः ॥ अपत्यरक्षणार्थायजानीयात्तंनसंशयः ॥ ४९ ॥ यत्तुकाकपदाकारंत्रि भिर्दंतैस्तुलक्षितम् ॥ महानागइतिप्रोक्तंकालदष्टंविनिर्दिशेत् ॥ ५० ॥ त्रिविधंदष्टजातैस्तुलक्षणंसमुदाहृतम् ॥ दष्टानुपीतंविज्ञेयंकश्यप स्यवचोयथा ॥ ५१ ॥ विषभागात्तुसर्पस्यत्रिभागस्तत्रसंक्रमेत् ॥ उदरंदर्शयेद्यस्तुउद्धतंतंविनिर्दिशेत् ॥ ५२ ॥ छर्दितंविषवेगेननिर्विषः पन्नगोभवेत् ॥ असाध्यश्चापिविज्ञेयश्चतुर्दंष्ट्राभिपीडितः ॥ ५३ ॥ ग्रीवाभंगोभवेत्किंचित्संदष्टोविषयोगतः ॥ इतोदंशस्ततःशुद्धोऽन्यंतरःपरि कीर्तितः ॥५४॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिशतसाहस्रार्धसंहितायांपंचमीकल्पेसर्पदंष्ट्रावर्णनंनामत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ छ ॥

कश्यपउवाच ॥ अतःपरंप्रवक्ष्यामिकालदष्टस्यलक्षणम्॥शृणुगौतमतत्त्वेनयादृशोभवतेनरः॥१॥जिह्वाभंगोथहृच्छूलंचक्षुर्भ्यांचनपश्यति॥ दंशंचदग्धसंकाशंपक्वजंबूफलोपमम् ॥ २ ॥ वैवर्ण्यंचैवदंतानांश्यावोभवतिवर्णतः ॥ सर्वेष्वंगेषुशैथिल्यंपुरीषस्यचभेदनम् ॥ ३ ॥ भग्नस्कं धकटिग्रीवऊर्ध्वदृष्टिरधोमुखः ॥ दह्यतेवेपतेचैवस्वपतेचमुहुर्मुहुः ॥४॥ शस्त्रेणच्छिद्यमानस्यरुधिरंनप्रवर्तते ॥दंडेनताड्यमानस्यदंडराजीन

१ विषवर्धने–इ०पा० ।

जायते ॥ ५ ॥ दंशेकाकपदंसुनीलमसकृज्जंबूफलाभंवनमुच्छूनंरुधिरार्द्रसेकबहुलंकृच्छ्रान्निरोधोभवेत् ॥ हिक्काश्वासगलग्रहश्चसुमहान्पांडु
स्त्वचादृश्यतेशुष्कांगंप्रवदंतिशास्त्रनिपुणास्तत्कालदष्टंविदुः ॥ ६ ॥ दंशेयस्याथशोथःप्रचलितवलितंमंडलंवास्सुनीलंप्रवेदोगात्रभेदःस्रव
तिचरुधिरंसानुनासंचजल्पेत् ॥ दंतोष्ठाभ्यांवियोगोभ्रमतिचहृदयंसंनिरोधश्चतीव्रोदिव्यानामेषदंशःस्थलविपुलमयोविद्धितंकालद
ष्टम् ॥ ७ ॥ दंतैर्दंतान्स्पृशतिचबहुशोदृष्टिरायासखिन्नास्थूलोदंशःस्रवतिरुधिरंकेकरंचक्षुरेकम् ॥ प्रत्यादिष्टःश्वसितिसततंसानुनासंचभाषे
त्पायंब्रूतेसकलगदितंकालदष्टंतमाहुः॥८॥वेपतेवेदनातीव्रारक्तनेत्रश्चजायते ॥ ग्रीवाभंगश्चलानाभिःकालदष्टंविनिर्दिशेत् ॥ दर्पणेसलिलेवा
पिआत्मच्छायांनपश्यति ॥ ९ ॥ मंदरश्मिंतथातीव्रंतेजोहीनंदिवाकरम् ॥ वेपतेवेदनात्रस्तोरक्तनेत्रश्चजायते ॥ १० ॥ सयातिनिधनंजंतुः
कालदष्टंविनिर्दिशेत् ॥ अष्टम्यांचनवम्यांचकृष्णपक्षेचतुर्दशीम् ॥ ११ ॥ नागपंचमीदष्टानांजीवितस्यनसंशयः ॥ आर्द्राश्लेषामघाभरणी
कृत्तिकास्तुविशेषतः ॥ १२ ॥ विशाखास्त्रिषुपूर्वासुमूलस्वातीशतात्मके ॥ सर्पदष्टानजीवंतिविषपीतंचयैस्तथा ॥ १३ ॥ शून्यागारे
श्मशानेचशुष्कवृक्षेतथैवच ॥ नजीवंतिनरादष्टानक्षत्रेतिथिसंयुते ॥ १४ ॥ अष्टोत्तरंमर्मशतंप्राणिनांसमुदाहृतम् ॥ तेषांमध्येतुमर्माणिदश
द्वेचापिकीर्तिते ॥ १५ ॥ शंखेनेत्रेभ्रुवोर्मध्येबस्तिभ्यांवृषणोत्तरे ॥ कक्षेस्कंधेहृदिमध्येतालुकेचिबुकेगुदे ॥ १६ ॥ एषुद्वादशमर्मसुदंश
शस्त्रेणवाहतः ॥ नजीवतिनरोलोकेकालदष्टंविनिर्दिशेत् ॥ १७ ॥ अकचटतपयशांवदंतिप्रोक्तानजीवंतिनतस्य ॥ गतंब्रूयाद्यादिस्खलति
शिरस्तस्यसंप्राप्तकालः ॥ १८ ॥ भवतिचयदिदूतउत्तमस्याधमोवायदिभवतिचदूतउत्तमोवाधमस्य ॥ आदौदष्टस्यनामयदिवदति
क्वचिद्भक्तितस्याथपश्चात्तंवर्णभेदोयदिभवतिसमःप्राप्तकालस्यदूतः ॥ १९ ॥ दूतोवादंडहस्तोभवतिचयुगलंपाशहस्तस्तथावार
क्तंवस्त्रंचकृष्णंमुखशिरसिगतमेकवस्त्रश्चदूतः ॥ तैलाभ्यक्तश्चतद्वद्यादित्वरितगतिर्मुक्तकेशश्चयातियःकुर्याद्घोरशब्दंकरचरणयुगैःप्राप्तका
लस्यदूतः ॥ २० ॥ नागोदयंप्रवक्ष्यामिईशानेनतुभाषितम् ॥ ब्रह्मणातुपुरासृष्टाग्रहानागास्त्वनेकशः ॥ २१ ॥ अनंतंभास्करंविद्यात्सोमं

१ निशाकरम्-इ०पा० ।

विद्यात्तुवासुकिम् ॥ तक्षकंभूमिपुत्रंतुककोंटंचबुधंविदुः ॥ २२ ॥ पद्मंबृहस्पतिंविद्यान्महापद्मंचभार्गवम् ॥ कुलिकःशंखपालश्चद्वावेतौतुश
नैश्चरः ॥ २३ ॥ पूर्वपादःशंखपालोद्वितीयःकुलिकस्यच ॥ नित्यंभागेयथोद्दिष्टदिनरात्रीतथैवच ॥ २४ ॥ शुक्रसोमौचमध्यान्हेउदयेतुक्ष
मासुतः ॥ शनिःप्रागष्टमेभागेदिवारात्रेत्विहोच्यते ॥ २५ ॥ ग्रहाश्चभुंजतेचैवशेषंभागस्यलक्षणम् ॥ रविवारेसदाज्ञेयौपादौदशचतुर्दश ॥
॥ २६ ॥ अष्टद्वादशमेचंद्रेदशषष्ठेकुजेतथा ॥ बुधस्यनवमेपादेराहौचादिवसस्यच ॥२७॥ गुरोर्द्वितीयःषष्ठश्चषोडशस्यतुवर्जयेत् ॥भास्कर
स्यदिनेप्रोक्तेचतुर्थेदशमेष्टमे ॥ २८ ॥ शनैश्चरदिनेपादंत्यजेच्चैवसुदारुणम् ॥ द्वितीयंद्वादशंचैवषोडशस्यतुवर्जयेत् ॥ २९ ॥ मुहूर्तंघटि
कादूर्ध्वंघटिकचतुर्थभागंविंशतिश्च ॥ कुहूसुतंबुद्बुदंनिमेषमेतत्कालस्यलक्षणम् ॥ ३० ॥ इतिश्रीभविष्येमहापुराणेपंचमीकल्पेदंशदष्टक
दूतलक्षणंनामचतुस्त्रिंशोऽध्यायः ॥३४॥छ॥ कश्यपउवाच ॥ सविषादंष्ट्रयोर्मध्येयमदूतीतुवैभवेत् ॥ नचिकित्साबुधैःकार्यातंगतायुंविनिर्दि
शेत् ॥ १ ॥ प्रहरार्धंदिवारात्रावेकैकंभुंजतेबहिः ॥ एकस्यचसमानंचद्वितीयंषोडशंतथा ॥ २ ॥ नागोदयेयमुद्दिश्यहतोविद्धोविदा
रितः ॥ कालदष्टंविजानीयात्कश्यपस्यवचोयथा ॥ ३ ॥ यन्मात्रंपततेबिंदुर्वालाग्रंसलिलोद्धृतम् ॥ तन्मात्रंस्रवतेदंष्ट्राविषंसर्प
स्यदारुणम् ॥ ४ ॥ नाडीशतेतुसंपूर्णेदेहेसंक्रमतेविषम् ॥ यावत्संक्रामयेद्बाहुंकुंचितंवाप्रसारयेत् ॥ ५ ॥ अनेनक्षणमात्रेणवि
षंगच्छतिमस्तके ॥ वेपतेविषवेगेतुशतशोऽथसहस्रशः ॥ ६ ॥ वर्धतेरक्तमासाद्यततोवातोशिखीयथा ॥ तैलबिंदुर्जलंप्राप्ययथावेगेनवर्धते
॥ ७ ॥ शिखंडीआश्रयंप्राप्यमारुतेनसमीरितः ॥ ततःस्थानशतंप्राप्यत्वचास्थानंविचेष्टितम् ॥ ८ ॥ त्वचासुद्विगुणंविद्याच्छोणितेषुचतु
र्गुणम् ॥ पित्तेतुत्रिगुणंयातिश्लेष्मेवैषोडशंभवेत्॥९॥वायौत्रिंशद्गुणंचैवमज्ज्ञाषष्टिगुणंतथा ॥ प्राणेचैकार्णवीभूतेसर्वगात्राणिसंधयेत्[1] ॥१०॥
श्रोत्रेनिरुध्यमानेनयातिदष्टस्त्वसाध्यताम् ॥ ततोऽसौम्रियतेजंतुर्निश्वासोच्छ्वासवर्जितः ॥ ११ ॥ निष्क्रांतेतुततोजीवेभूतेपंचत्वमागते ॥
तानिभूतानिगच्छंतियस्ययस्ययथातथम् ॥ १२ ॥ पृथिव्यापस्तथातेजोवायुराकाशमेवच ॥ इत्येषामेवसंघातःशरीरमभिधीयते ॥१३॥

१ वर्धयेत्-इ०पा०।

पृथिवीपृथिवींयातितोयंतोयेषुलीयते ॥ तेजोगच्छतिचादित्यंमारुतोमारुतंव्रजेत् ॥ १४ ॥ आकाशंचैवमाकाशेसहतेनैवगच्छति ॥ स्व
स्थानंतेप्रपद्यंतेपरस्परानियोजिताः ॥ १५ ॥ नजीवेदागतःकश्चिदिहजन्मनिसुव्रत ॥ विषार्तंनउपेक्षेतत्वरितंतुचिकित्सयेत् ॥ १६ ॥ एक
मस्तिविषंलोकेद्वितीयंचोपपद्यते ॥ यथानानाविधंचैवस्थावरंतुतथैवच ॥ १७ ॥ प्रथमेविषवेगेतुरोमहर्षोऽभिजायते ॥ द्वितीयेविषवेगेतुस्वे
दोगात्रेषुजायते ॥ १८ ॥ तृतीयेविषवेगेतुकंपोगात्रेषुजायते ॥ चतुर्थेविषवेगेतुश्रोत्रांतरनिरोधकृत् ॥ १९ ॥ पंचमेविषवेगेतुहिक्कागात्रेषुजा
यते ॥ षष्ठेचविषवेगेतुप्राणेभ्योऽपिप्रमुच्यते ॥ २० ॥ सप्तधातुवहाह्येतेवैनतेयेनभाषिताः ॥ त्वचःस्थानेविषेप्राप्तेतस्यरूपाणिमेशृणु
॥ २१ ॥ अंगानितिमिरायंतेतपंतेचमुहुर्मुहुः ॥ एतानियस्यचिह्नानितस्यत्वचिगतंविषम्॥ २१ ॥ तस्यागदंप्रवक्ष्यामियेनसंपद्यतेसुखम् ॥
अर्कमूलमपामार्गंप्रियंगुंतगरंतथा ॥ २३ ॥ एतदालोड्यदातव्यंततःसंपद्यतेसुखम् ॥ ततस्तस्मिन्कृतेविप्रनानिवर्तेतचेद्विषम् ॥ २४ ॥ त्व
चःस्थानंततोभित्त्वारक्तस्थानंप्रधावति ॥ विषेचरक्तंसंप्राप्तेतस्यरूपाणिमेशृणु ॥ २५ ॥ दह्यतेमुह्यतेचैवशीतलंबहुमन्यते ॥ एतानियस्य
रूपाणितस्यरक्तगतंविषम् ॥ २६ ॥ तत्रागदंप्रवक्ष्यामियेनसंपद्यतेसुखम् ॥ उशीरंचंदनंकुष्ठमुत्पलंतगरंतथा ॥ २७ ॥ महाकालस्यमूला
निसिंदुवारनगस्यच ॥ हिंगुलंमरिचंचैवपूर्ववेगेतुदापयेत् ॥ २८ ॥ बृहतीवृश्चिकाकालीइंद्रवारुणीमूलकम्[3] ॥ सतगंधघृतंचैवद्वितीयेपरिकी
र्तितम् ॥ २९ ॥ सिंदुवारंतथाहिंगुंतृतीयेकारयेद्बुधः ॥ तस्यपानंचकुर्वीतअंजनंलेपनंतथा ॥ ३० ॥ एतेनैवोपचारेणततःसंपद्यतेसुखम् ॥
रक्तस्थानंततोगत्वापित्तस्थानंप्रधावति ॥३१॥ पित्तस्थानगतेविप्रविषरूपाणिमेशृणु ॥ उत्तिष्ठतेनिपततेदह्यतेमुह्यतेतथा ॥३२ ॥ गात्रतः
पीतकःस्याद्वैदिशःपश्यतिपीतिकाः ॥ प्रबलाचभवेन्मूर्च्छानचात्मानंविजानते ॥३३॥ विषाक्रियांतस्यकुर्याद्ययासंपद्यतेसुखम् ॥ पित्तस्था
नमतिक्रम्यश्लेष्मस्थानंचगच्छति ॥ ३४ ॥ पिप्पल्योमधुकंचैवमधुखंडंघृतंतथा ॥ मधुसारमलाबुंचजातिंशंकरवालुकाम् ॥ ३५ ॥ इंद्रवा
रुणिमूलंचगवांमूत्रेणपेषयेत् ॥ नस्यंतस्यप्रयुंजीतपानमालेपनांजनम् ॥ ३६ ॥ एतेनैवोपचारेणततःसंपद्यतेसुखम् ॥ श्लेष्मस्थानंततःप्रा

१ तैलकम्-इ०पा० । २ चैव तद्देहम्-इ०पा० । ३ इंद्रवारुकमूलकम्-इ०पा० ।

नेतस्यरूपाणिमेशृणु ॥३७॥ गात्राणितस्यरुध्यंतेनिःश्वासश्चनजायते ॥ लालाचस्रवतेतस्यकंठोघुरुघुरायते ॥ ३८॥ एतानियस्यरूपाणित
स्यश्लेष्मगतंविषम् ॥ तस्यागदंप्रवक्ष्यामियेनसंपद्यतेसुखम् ॥ ३९ ॥ त्रिकटुकौश्लेष्मातकीलोध्रंचमधुसारकम् ॥ एतानिसमभागानिगवांमूत्रे
णपेषयेत् ॥ ४० ॥ तस्यपानंचकुर्वीतअंजनंलेपनंतथा ॥ एतेनैवोपचारेणततःसंपद्यतेसुखम् ॥ ४१॥ श्लेष्मस्थानमतिक्रम्यवायुस्थानंचग
च्छति ॥ तत्ररूपाणिवक्ष्यामिवायुस्थानगतेविषे ॥४२॥ आध्मायतेचजठरंबांधवांश्चनपश्यति ॥ ईदृशंकुरुतेरूपंदृष्टिभंगश्चजायते॥एतानि
यस्यरूपाणितस्यवायुगतंविषम्॥४३॥तस्यागदंप्रवक्ष्यामियेनसंपद्यतेसुखम्॥शोणामूलंप्रियालंचरक्तंचगजपिप्पलीं॥४४॥भार्ङ्गींवचांपिप्प
लींचदेवदारुमधूककम्॥मधूकसारंसहसिंदुवारंहिंगुंचपिष्ट्वागुटिकांचकुर्यात्॥दद्याच्चतस्यांजनलेपनादिएषोऽगदःसर्पविषाणिहन्यात् ॥४५॥
अंजनंचैवनस्यंचक्षिप्रंदद्याद्विषान्विते ॥ वायुस्थानंततोमुक्त्वामज्जास्थानंप्रधावति ॥ ४६ ॥ विषेमज्जागतेविप्रतस्यरूपाणिमेशृणु ॥
दृष्टिश्चहीयतेतस्यभृशमंगानिमुंचति ॥ ४७ ॥ एतानियस्यरूपाणितस्यमज्जागतंविषम् ॥ तस्यागदंप्रवक्ष्यामियेनसंपद्यतेसुखम् ॥ ४८ ॥
घृतमधुशर्करान्वितमुशीरंचदनंतथा ॥ एतदालोड्यदातव्यंपानंनस्यंचसुव्रत ॥ ४९ ॥ ततःप्रणश्यतेदुःखंततःसंपद्यतेसुखम् ॥ अथतस्मि
न्कृतेयोगेविषंतस्यानिवर्तते ॥ ५० ॥ मज्जास्थानंततोगत्वामर्मस्थानंप्रधावति ॥ विषेतुमर्मसंप्राप्तेशृणुरूपंयथाभवेत् ॥ ५१ ॥ निश्चेष्टःपतते
भूमौकर्णाभ्यांबधिरोभवेत् ॥ वारिणासिच्यमानस्यरोमहर्षोनजायते ॥५२॥ दंडेनहन्यमानस्यदंडराजीनजायते ॥ शस्त्रेणच्छिद्यमानस्यरु
धिरंनप्रवर्तते ॥ ५३ ॥ केशेषुलुच्यमानेषुनैवेकशान्प्रवेदते ॥ यस्यकर्णौचपार्श्वौचहस्तपादंचसंधयः ॥ ५४ ॥ शिथिलानिभवंतीहसगता
सुरितिश्रुतिः ॥ एतानियस्यरूपाणिविपरीतानिगौतम ॥ ५५ ॥मृतंतुनविजानीयात्कश्यपस्यवचोयथा ॥ वैद्यास्तस्यनपश्यंतियेभवंतिकु
शिक्षिताः ॥ ५६ ॥ [?]क्षणास्तुपश्यंतिमंत्रौषधिसमन्विताः ॥ तस्यागदंप्रवक्ष्यामिस्वयंरुद्रेणभाषितम् ॥ ५७ ॥ मयूरपित्तंमार्जारपित्तं
गन्धनाडीमूलमेवच ॥ [?]कुमंतगरंकुष्ठंकासमर्दंत्वचंतथा ॥ ५८ ॥ उत्पलस्यचाकिंजत्कंपद्मस्यकुमुदस्यच ॥ एतानिसमभागानिगोमूत्रेण ॥५२॥

१ श्रोत्राणि तस्य रुध्यंते–इ०प्रा०। २ गंधनानालीमूलमेव च–इ०पा०।

तुपेषयेत् ॥ ५९ ॥ एषोऽगदोयस्यहस्तेदष्टेनम्रियतेसवै ॥ कालाऽहिनापिदष्टेनक्षिप्रंभवतिनिर्विषः ॥ ६० ॥ क्षिप्रमेवप्रदातव्यंमृतसंजीवनौ
षधम् ॥ अंजनंचैवनस्यंचक्षिप्रंदद्याद्विचक्षणः ॥ ६१ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिपंचमीकल्पेधातुगतविषक्रियावर्णनंनामपंचात्रिं
शोऽध्यायः ॥ ३५ ॥ छ ॥ गौतमउवाच ॥ कीदृशंसर्पदष्टस्यसर्पिण्याःकीदृशंभवेत् ॥ कुमारदष्टःकीदृक्स्यात्सूतिकादंशितस्यच ॥ १ ॥ रूपं
नपुंसकेनेहव्यंतरेणचकीदृशम् ॥ एतदाख्याहिमेसर्वंमेभिर्दष्टस्यलक्षणम् ॥ २ ॥ कश्यपउवाच ॥ अतःपरंप्रवक्ष्यामिनागानांरूपलक्षणम् ॥
सर्पदष्टस्यचतथासमासाद्द्विजपुंगव ॥ ३ ॥ अथसर्पेणदष्टस्यऊर्ध्वंदृष्टिःप्रजायते ॥ सर्पीदष्टस्यचतथाअधोदृष्टिःप्रजायते ॥ ४ ॥ कन्या
दष्टस्यवामास्याद्दृष्टिर्द्विजवरोत्तम ॥ कुमारेणापिदष्टस्यदक्षिणाएवजायते ॥ ५ ॥ गर्भिण्यावाथदष्टस्यतथास्वेदश्चजायते ॥ रोमांचं
सूतिकायास्तुवेपथुश्चापिजायते ॥ ६ ॥ नपुंसकेनदष्टस्यअंगमर्दःप्रजायते ॥ पन्नगीप्रभवोरात्रौदिवासर्पोविषाधिकः ॥ ७ ॥ नपुंसकस्तुसं
ध्यायांकश्यपेनतुभाषितम् ॥ अंधकारेतुदष्टोयउदकेगहनेवने ॥ ८ ॥ सुप्तंवाचेत्प्रमत्तंवायदिसर्पोनदृश्यते ॥ दष्टरूपाण्यजानन्वै
कथंवैद्यचिकित्सितम् ॥ ९ ॥ चतुर्विधाइहप्रोक्ताःपन्नगास्तुमहात्मना ॥ दर्वीकरामंडलिनोराजिलाव्यंतरास्तथा ॥ १० ॥ दर्वीकरावात
विषामंडलाःपैत्तिकाःस्मृताः ॥ श्लेष्मलाराजिलाज्ञेयाव्यंतराःसान्निपातिकाः ॥ ११ ॥ रक्तंपरीक्षयेदेषांसर्पाणांतुपृथक्पृथक् ॥ कृष्णंदर्वीक
राणांतुजायतेनाल्पमुल्बणम् ॥ १२ ॥ रक्तंघनंचबहुशःशोणितंमंडलीकृतम् ॥ पिच्छिलंराजिलेस्वल्पंतद्वद्व्यंतरकेतथा ॥ १३ ॥ सर्पास्तु
चतुरोज्ञेयाःपंचमोनोपलभ्यते ॥ ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चैवचतुर्थकः ॥ १४ ॥ ब्राह्मणेमधुरंदद्यात्तिक्तंदद्यात्तथोत्तरे ॥ वैश्येकर्षफलंद
द्याच्छूद्रेत्रिस्थूणमेवच ॥ १५ ॥ ब्राह्मणेनतुदष्टस्यदाहोगात्रेषुजायते ॥ मूर्च्छाचप्रबलास्याद्वैनात्मानमभिजानते ॥ १६ ॥ श्यामवर्णमुखं
चस्यान्मन्यास्तंभश्चजायते ॥ तस्यकुर्यात्प्रतिकारंयेनसंपद्यतेसुखम् ॥ १७ ॥ अश्वगंधाप्यपामार्गंसिंदुवारंसुरामयम् ॥ एतत्सर्पिःसमायुक्तंपाने
नस्येचदापयेत् ॥ १८ ॥ एतेनैवोपचारेणसुखीभवतिमानवः ॥ क्षत्रियेणतुदष्टस्यकंपोगात्रेषुजायते ॥ १९ ॥ मूर्छामोहस्तथास्याद्वैनात्मा

१ मुखशोषः-इ०पा० । २ कटुकमेव च-इ०पा० ।

नमभिजानते ॥ जायतेवेदनातस्यऊर्ध्वंचैवनिरीक्षते॥२०॥तस्यकुर्यात्प्रतीकारंयेनसंपद्यतेसुखम्॥अर्कमूलमपामार्गंप्रियंगुमिन्द्रवारुणीम् ॥
॥ २१ ॥ एतत्सार्पिःसमायुक्तंपानंनस्यंचदापयेत् ॥ एतेनैवोपचारेणसुखीभवतिमानवः ॥ २२॥ वैश्येनापिहिदष्टस्यशृणुरूपाणियानितु ॥
श्लेष्मप्रकोपोलालाचनचोद्वहतिचेतनाम् ॥२३॥ मूर्छाचप्रबलायस्यआत्मानंनाभिनंदति ॥ तस्यकुर्यात्प्रतीकारंयेनसंपद्यतेसुखम् ॥ २४ ॥
अश्वगंधासगोमूत्रागृहधूमंसगुग्गुलम् ॥ शिरीषार्कपलाशेनश्वेताचगिरिकर्णिका ॥ २५ ॥ गोमूत्रेणसमायुक्तंपानंनस्यंचदापयेत् ॥ एषवैश्ये
नदष्टानामगदःपरिकीर्त्तितः ॥ २६ ॥ शूद्रेणापिहिदष्टस्यशृणुतत्त्वेनगौतम ॥ कुथ्यतेवेपतेचैवज्वरःशीतंचजायते ॥ २७ ॥ अंगानिचुलु
चुलायंतेशूद्रदष्टस्यलक्षणम् ॥ तत्रागदंप्रवक्ष्यामियेनसंपद्यतेसुखम् ॥२८॥ पद्मंचलोध्रकंचैवक्षौद्रंपद्मस्यकेसरम् ॥ मधुंमधूकसारंचश्वेतांच
गिरिकर्णिकाम् ॥ २९ ॥ एतानिसमभागानिपेषयेच्छीतवारिणा ॥ पानलेपांजनंनस्यंसुखीभवतिमानवः ॥ ३० ॥ पूर्वाण्हेचरतेविप्रोमध्या
ह्नेक्षत्रियश्चरेत् ॥ अपराण्हेचरेद्वैश्यःशूद्रःसंध्याचरोभवेत् ॥ ३१॥ आहारोवायुपुष्पाणिब्राह्मणानांविदुर्बुधाः ॥ मूषिकाक्षत्रियाणांचआहारो
द्विजसत्तम ॥ ३२ ॥ वैश्यामंडूकभक्षाश्चशूद्राःसर्वाशिनस्तथा ॥ अग्रतोदशतेविप्रःक्षत्रियोदक्षिणेनतु ॥ ३३ ॥ वामपार्श्वेसदावैश्यःपश्चाद्वै
शूद्रमादिशेत् ॥ मदकालेतुसंप्रातेपीड्यमानामहाविषाः ॥ ३४ ॥ अवेलायांदशंतेवैमैथुनार्ताभुजंगमाः ॥ पुष्पगंधाःस्मृताविप्राःक्षत्रियाश्चंद
नावहाः ॥ ३५ ॥ वैश्याश्चघृतगंधावैशूद्राःस्युर्मत्स्यगंधिनः ॥ वासंतेषांप्रवक्ष्यामियथावदनुपूर्वशः ॥ ३६ ॥ वापीकूपतडागेषुगिरिप्रस्रवणे
षुच ॥ वसंतिब्राह्मणाःसर्पाग्रामद्वारेचतुष्पथे ॥ ३७ ॥ आरामेषुपवित्रेषुशुचिष्वायतनेषुच ॥ क्षत्रियोवसतेनित्यंतोरणेषुसरःसुच ॥ ३८ ॥
श्मशानेभस्मशालासुपलालेषुतटेषुच ॥ गोष्ठेषुपथिवृक्षेषुविप्रवैश्यावसंतिच ॥३९॥ अविविक्तेषुस्थानेषुनिर्जनेषुवनेषुच ॥ शून्यागारेश्म
शानेचशूद्रावित्रवसंतिच ॥ ४० ॥ श्वेताश्चकपिलाश्चैवयेसर्पास्त्वनलप्रभाः ॥ मनस्विनःसात्विकाश्चब्राह्मणास्तेबुधैःस्मृताः ॥ ४१ ॥ रक्त

१ प्रियंगुमत्तवारुणीम्–इ०पा० । २ क्रुध्यते–इ०पा० । ३ चिमिचिमायते–इ०पा० । ४ चांतरे–इ०पा० । ५ आहारं चात्र पुष्पाणि–इ०पा० ।
६ नदीह्रदतडागेषु–इ०पा० । ७ विप्रो वै वसते नित्यं सदा ब्राह्मणसत्तम–इ०पा० । ८ विशुद्धायतनेषु च–इ०पा० ।

वर्णाःसुवर्णाभाः प्रवालमणिसंनिभाः ॥ सूर्यप्रभास्तथाविप्रक्षत्रियास्तेभुजंगमाः ॥ ४२ ॥ नानाविचित्रराजीभिरतसीवर्णसन्निभाः ॥ बाण
पुष्पसवर्णाभावैश्यास्तेवैभुजंगमाः ॥ ४३ ॥ काकोदरनिभाःकेचिद्येचअंजनसन्निभाः ॥ काकवर्णाधूम्रवर्णास्तेशूद्राःपरिकीर्तिताः ॥ ४४ ॥
यस्यसर्पेणदष्टस्यदंशमंगुष्ठमंतरम् ॥ बालदष्टंविजानीयात्कश्यपस्यवचोयथा ॥ ४५ ॥ यस्यसर्पेणदष्टस्यदंशंद्व्यंगुलमंतरम् ॥ यौवन
स्थेनदष्टस्यएतद्भवतिलक्षणम् ॥ ४६ ॥ यस्यसर्पेणदष्टस्यसार्धद्व्यंगुलमंतरम् ॥ वृद्धदष्टंविजानीयात्कश्यपस्यवचोयथा ॥ ४७ ॥ अनं
तःप्रेक्षतेपूर्वंवामपार्श्वेतुवासुकिः ॥ तक्षकोदक्षिणेनेहकर्कोटःपृष्ठतस्तथा ॥ ४८ ॥ चलतेभ्रमतेपद्मोमहापद्मोनिमज्जति ॥ विसंज्ञस्तिष्ठतेचैव[1]
शंखपालोमुहुर्मुहुः ॥ ४९ ॥ सर्वेषांकुरुतेरूपंकुलिकःपन्नगोत्तमः[3] ॥ अनंतस्यदिशापूर्वावासुकेस्तुहुताशनी ॥५०॥ दक्षिणातक्षकस्योक्ताक
र्कोटस्यतुनैर्ऋती ॥ पश्चिमापद्मनाभस्यमहापद्मस्यवायुजा ॥ ५१ ॥ उत्तराशंखपालस्यऐशानीकंबलस्यतु ॥ अनंतस्यभवेत्पद्मंवासुकेः
स्यात्तथोत्पलम् ॥ ५२ ॥ स्वस्तिकंतक्षकस्योक्तंकर्कोटस्यतुपङ्कजम् ॥ पद्मस्यतुभवेत्पद्मंशूलंपद्मेतरस्यतु ॥५३॥ शंखपालेभवेच्छत्रंकुलिक
स्यार्धचंद्रकम्[2] ॥ अनंतकपिलौविप्रौक्षत्रियौशंखवासुकी ॥ ५४ ॥ महापद्मस्तक्षकश्चवैश्यौविप्रप्रकीर्तितौ ॥ पद्मकर्कोटकौशूद्रौसद्राज्ञेयौ
मनीषिभिः ॥५५॥ अनंतकुलिकौशुक्लौवर्णतोब्रह्मसंभवौ ॥ वासुकिःशंखपालश्चरक्तौह्यग्निसमुद्भवौ ॥ ५६ ॥ तक्षकश्चमहापद्मईषत्पीतौ[4]बभू
वतुः ॥ पद्मकर्कोटकौविप्रसर्पौकृष्णौबभूवतुः ॥ ५७ ॥ हयंयानंवृषंछत्रंराजानमथपावकम्[5] ॥ धरणीमुत्पाद्यधृतानेतान्सिद्धिकरान्विदुः ॥
॥ ५८ ॥ पूर्णकुंभःपताकाचकांचनंमणयस्तथा ॥ शिरीषंमाणिकंकंठेजीवजीवेतिसुव्रत[6] ॥ ५९ ॥ एतेषांदर्शनंश्रेष्ठंकन्याचैकप्रसूयिका ॥
चतुःषष्टिःसमाख्याताभोगिनोयेतुपन्नगाः[7] ॥६०॥ अदृश्यास्तेषुषट्त्रिंशद्दृश्यास्त्रिंशन्महीचराः[8] ॥ विंशच्चस्रग्विणःप्रोक्ताःसप्तमंडलिनस्तथा[9] ॥
॥ ६१ ॥ राजीवंतोदशप्रोक्तादर्व्यःषोडशपंचच ॥ ढुंढुभोडुंडुभश्चैवचेटभश्चेंद्रवाहनः[10] ॥ ६२ ॥ नागपुष्पसवर्णाख्यानिर्विषायेचपन्नगाः ॥

---

१ विमज्जंस्तिष्ठते–इ०पा०। २ त्रिरेखकम्–इ०पा०। ३ नृपोत्तम–इ०पा०। ४ प्रायःपीतौ–इ०पा०। ५ हयपालम्–इ०पा० ६ शयनंमाणिकं कंठे–इ,० । शरसौमाणिकं कंठे–इ०च पा०। ७ मत्तपन्नगाः–इ०पा० ।८ अष्टत्रिंशन्महीचराः–इ०पा०। ९ मुकुलिनः–इ०पा० । १० क्षेत्रभःक्षेत्रवाहनः–इ०पा०।

एवमेवतुसर्पाणांशतादिनवतिस्मृतम् ॥६३॥ वराहकर्णीगजपिप्पलींचगांधारिकांपिप्पलदेवदारु॥मधूकसारंसहसिंदुवारांहिंगुंचापिष्टागुटिकाच
कार्या ॥६४॥ सुमंतुरुवाच ॥ इत्युक्तवान्पुरावीरगौतमस्यप्रजापतिः ॥ लक्षणंसर्वनागानांरूपवर्णौविषंतथा ॥ ६५ ॥ तस्मात्संपूजयेन्नागा
न्सदाभक्त्यासमन्वितः ॥ विशेषतस्तुपंचम्यांपयसापायसेनच ॥ ६६ ॥ श्रावणेमासिपंचम्यांशुक्लपक्षेनराधिप ॥ द्वारस्योभयतोलेख्यागो
मयेनविषोल्बणाः ॥ ६७ ॥ पूजयेद्विधिवद्वारंदधिदूर्वाक्षतैःकुशैः ॥ गंधपुष्पोपहारैश्चब्राह्मणानांचतर्पणैः ॥ ६८ ॥ येत्वस्यांपूजयंतीहनागा
न्भक्तिपुरःसराः॥नतेषांसर्पतोवीरभयंभवतिकर्हिचित् ॥ ६९ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिपंचमीकल्पेश्रावणिकनागपंचमीव्रतव
र्णनंनामषट्त्रिंशोऽध्यायः ॥३६॥ सुमंतुरुवाच ॥ तथाभाद्रपदेमासिपंचम्यांश्रद्धयान्वितः॥अथालेख्यनरोनागान्कृष्णवर्णादिवर्णकैः॥ १ ॥
पूजयेद्गंधपुष्पैश्चसर्पिःपायसगुग्गुलैः ॥ तस्यतुष्टिंसमायांतिपन्नगास्तक्षकादयः ॥२॥ आसप्तमात्कुलात्तस्यनभयंनागतोभवेत्॥तस्मात्सर्वप्र
यत्नेननागान्संपूजयेद्बुधः ॥३॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिपंचमीकल्पेभाद्रपदिकनागपंचमीव्रतवर्णनंनामसप्तत्रिंशोऽध्यायः ॥३७॥
सुमंतुरुवाच ॥ तथाचाश्वयुजेमासिपंचम्यांकुरुनंदन ॥ कृत्वाकुशमयान्नागान्गंधाद्यैःसंप्रपूजयेत् ॥ १ ॥ घृतोदकाभ्यांपयसास्नापयित्वा
विशांपते ॥ गोधूमैःपयसास्विन्नैर्भक्ष्यैश्चविविधैस्तथा ॥ २ ॥ यस्त्वस्यांविधिवन्नागाञ्छुचिर्भक्त्यासमन्वितः ॥ पूजयेत्कुरुशार्दूलतस्यशेषा
दयोनृप ॥ ३ ॥ नागाःप्रीताभवंतीहशांतिमाप्नोतिवाविभो ॥ सशांतिलोकमासाद्यमोदतेशाश्वतीःसमाः ॥ ४ ॥ इत्येतत्कथितंवीर[3]
पंचमीकल्पमुत्तमम् ॥ यत्रायमुच्यतेमंत्रःसर्वसर्पनिषेधकः ॥ ५ ॥ ॐकुरुकुल्लेफट्स्वाहा ॥ इति श्रीभविष्येमहापुराणेशतसाहस्त्र्यांसंहि
तायांब्राह्मेपर्वणिपंचमीकल्पसमाप्तिकथनंनामाष्टत्रिंशोऽध्यायः ॥३८॥ ७ ॥ सुमंतुरुवाच ॥ षष्ठ्यांफलाशनोराजन्विशेषात्कार्तिकेनृप ॥
राज्यच्युतोविशेषेणस्वंराज्यंलभतेऽचिरात् ॥ १ ॥ षष्ठीतिथिर्महाराजसर्वदासर्वकामदा ॥ उपोष्यातुप्रयत्नेनसर्वकालजयार्थिना ॥ २ ॥
कार्तिकेयस्यदयिताएषाषष्ठीमहातिथिः ॥ देवसेनाधिपत्यंहिप्राप्तंतस्यांमहात्मना ॥ ३ ॥ अस्यांहिश्रेयसायुक्तोयस्मात्स्कंदोभवाग्रणीः ॥

१ कृष्णपक्षे इत्यप्रासंगिकः--इ०पा० । २ इंद्राण्या सह पूजयेत्--इ०पा० । ३ विभ--इ०पा० ।

तस्मात्षष्ठ्यांनक्तभोजीप्राप्नुयादीप्सितंसदा ॥ ४ ॥ दत्वार्घ्यंकार्तिकेयायस्थित्वावैदक्षिणामुखः ॥ दध्नाघृतोदकैःपुष्पैर्मंत्रेणानेनसुव्रत ॥ ५ ॥ सप्तर्षिदारजःस्कंदःस्वाहापतिसमुद्भवः ॥ रुद्रार्यमाग्निजविभोगंगागर्भनमोऽस्तुते ॥ ६ ॥ प्रीयतांदेवसेनानीःसंपादयतुहृद्गतम् ॥ दत्वाविप्रायआत्मान्नंयच्चान्यदपिविद्यते ॥ ७ ॥ पश्चाद्भुंक्तेत्वसौरात्रौभूमिंकृत्वातुभाजनम् ॥ एवंषष्ठ्यांव्रतंस्नेहात्प्रोक्तंस्कंदेनयत्नतः ॥ ८ ॥ तन्निबोधमहाराजप्रोच्यमानस्यमेऽखिलम् ॥ षष्ठ्यांयस्तुफलाहारोनक्ताहारोभविष्यति ॥ ९ ॥ शुक्लांकृष्णांसुनियतोब्रह्मचारीसमाहितः ॥ तस्यसिद्धिंधृतिंतुष्टिंराज्यमायुर्निरामयम् ॥ १० ॥ पारत्रिकंचैहिकंचदद्यात्स्कंदोनसंशयः ॥ योहिनक्तोपवासःस्यात्सनक्तेनव्रतीभवेत् ॥ ११ ॥ इहवामुत्रसोत्यन्तंलभतेख्यातिमुत्तमाम् ॥ स्वर्गेचनियतंवासोलभ्यतेनात्रसंशयः ॥ १२ ॥ इहचागत्यकालांतेयथोक्तफलभाग्भवेत् ॥ देवानामपिवंद्योऽसौराज्ञांराजाभविष्यति ॥ १३ ॥ यश्चापिशृणुयात्कल्पंषष्ठ्याःकुरुकुलोद्वह ॥ तस्यासिद्धिस्तथातुष्टिर्धृतिःस्यात्ख्यातिसंभवा ॥ १४ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिषष्ठीकल्पेएकोनचत्वारिंशोऽध्यायः ॥३९॥

शतानीकउवाच ॥ अहोव्रतंमहत्कष्टंसंशयोह्यादिवर्तते ॥ कार्तिकेयस्यमाहात्म्यंश्रुत्वाजन्मतथाद्विज ॥ १ ॥ अनेकजनितस्येहकार्तिकेयस्यसुव्रत ॥ माहात्म्यंसुमहद्विप्रकथमेतद्विभाव्यते ॥ २ ॥ जातिःश्रेष्ठाभवेद्वीरउतकर्मभवेद्वरम् ॥ संशयस्तुमहानत्रहृद्गामेकृत्तिकासुतम् ॥ ३ ॥ एतद्वदविनिश्चित्यनयथासंशयोभवेत् ॥ जन्मतःकर्मणश्चैवयज्ज्यायस्तद्ब्रवीहिमे ॥ ४ ॥ सुमंतुरुवाच ॥ इममर्थंपुरापृष्टोब्रह्माशिष्यैर्मनीषिभिः ॥ यदुक्तंतेनतेषांचतत्तेवाच्मिनिबोधमे ॥ ५ ॥ सुरश्रेष्ठंसुखासीनमभिगम्यमहर्षयः ॥ प्रणम्यचमहाबाहोविश्वामित्रस्याविप्रताम् ॥ ६ ॥ दृष्ट्वाविस्मयमागत्यकौतूहलसमन्विताः ॥ भक्तिश्रद्धांपुरोधायप्रणम्यानतकंधराः ॥ ७ ॥ ऋषयऊचुः ॥ भोब्रह्मन्नादिकल्पोहिब्राह्मण्यंब्रूहिकिंभवेत् ॥ जात्यध्ययनदेहात्मसंस्कारा[1]चारकर्मणाम् ॥ ८ ॥ बाह्याभ्यंतरसामान्यविशेषायादिकृत्रिमाः ॥ मनोवाक्कर्मशारीरजातिद्रव्यगुणात्मकाः ॥ ९ ॥ संत्यव्यक्ताःप्रसिद्धायेजातिभेदविधायिनः ॥ वस्तुभूताःपरोक्षैर्वा

---

[1] संस्काराधानकर्मणाम्–इ०पा० ।

प्रमाणैर्नविनिश्चिताः ॥ १० ॥ अव्यक्तागमसिद्धश्चेज्जातिभेदाविधिर्नृणाम् ॥ विकल्पोऽयंनपुष्णातिभवतःशेमुषीबलम् ॥ ११ ॥ ब्रह्मो
वाच ॥ एवमेतन्नसंदेहोयथायूयंवदंतिह ॥ शृणुध्वंयोगिनोवाक्यंसतर्कशिष्यश्रेयसे ॥ १२ ॥ योगेश्वरउवाच ॥ प्रमाणेहिप्रसिद्धेतुभि
न्नार्थविषयेयतः ॥ स्पष्टयोग्यार्थविषयंप्रत्यक्षंतावदीक्षते ॥ १३ ॥ सामान्यातींद्रियग्राहीसिद्धांतोऽभ्युपगम्यते ॥ सएवभगवानेकंप्रमाण
मितिचेन्नतत् ॥ १४ ॥ यस्माद्द्विविधमेतत्तेसंकटंभद्रवर्तते ॥ वेदस्यपौरुषेयत्वंनित्यजातिसमर्थकम् ॥ १५ ॥ कार्याविशे
षावेदोक्तानयुक्तमकृतंवचः ॥ ताल्वादिकरणानांचव्यापारानंतरंश्रुतेः ॥ १६ ॥ व्यापारात्परतस्तस्यप्रागभावविशेषतः ॥ तद्भावानु
विधायित्वमन्वयव्यतिरेकतः ॥ १७ ॥ तस्माद्धूमाग्निवद्धार्थफलभावोऽवतिष्ठते ॥ नचव्यापारवचसोरन्यथानुपपत्तितः ॥ १८ ॥ पुरु
षानुगताजातिर्ब्राह्मणत्वादिकास्तिचेत् ॥ द्विवर्णजातिभेदेनप्रत्यक्षार्थोपलक्षणात् ॥ १९ ॥ गोवर्गमध्यंचगतोयथाश्वोनिर्धार्यतेज्ञैःसु
विचक्षणत्वात् ॥ मनुष्यभावादविशिष्यमाणस्तद्वद्द्विजःशूद्रगणान्नभिन्नः ॥ २० ॥ मनुष्यजातेर्नपरोविशेषोयःकल्प्यतेसर्वनरानुयायी ॥
संस्कारयुक्ताहिक्रियाविशिष्टाद्विजन्मनांशूद्रविवेकहेतुः ॥ २१ ॥ जीवोपिब्राह्मणःप्रोक्तोयैरतत्त्वज्ञमानवैः ॥ प्रभ्रष्टब्राह्मणत्वास्तेजायंतेवि
प्रसंगतः ॥ २२ ॥ जराजन्मांतरक्लेशदुष्टग्राहकुलाकुलम् ॥ नरतिर्यगसच्छूद्रयोनिदुःखोर्मिसंकटम् ॥ २३ ॥ दौःस्थित्यरोगशोकार्तिज
नावर्तसमन्वितम् ॥ श्वानशूकरचांडालकृमिकूर्मादिकायतम् ॥ २४ ॥ संसारसागरंघोरंमग्नःपरिपरिप्लवन् ॥ भूरिपापभराक्रांतःसजीवो
ब्राह्मणःकथम् ॥२५॥ ब्रह्मोवाच ॥ सप्तव्याधकथाविप्रामनुनापरिकीर्तिता ॥ तांनिशम्ययदुश्रेष्ठनित्यंजातिपदंत्यजेत् ॥ २६ ॥ सप्तव्याधा
दशार्णायां[1]मृगाःकालंजरेगिरौ॥चक्रवाकाःसरिद्वीपेहंसाःसरसिमानसे॥२७॥तेऽपिजाताःकुरुक्षेत्रेब्राह्मणावेदपारगाः ॥ प्रास्थितादीर्घमध्वानंयू
यंकिमवसीदथ ॥ २८ ॥ तस्मान्नजीवद्ब्राह्मण्यंयास्यामोहिकथंचन ॥ २९ ॥ शस्त्रादिमद्भार्गवजातियुक्तोगजाश्वगोजोष्ट्रखरादिकानाम् ॥
शक्त्याकृतोह्यंगजवर्णधर्मैर्भेदःस्फुटंलक्षणतोऽत्रयद्वत् ॥ ३० ॥ तदुत्तरान्नैवविकर्तनीयाब्राह्मण्यजातिर्नृषुनास्तिकाचित् ॥ नित्याकृ

1 दशारण्ये–इ०पा०।

तिर्नानुपभेदरूपायथाहिभेदःपरमोत्रासिध्येत् ॥ ३१ ॥ सिताद्यसाधारणतुल्यरूपाःसनातनोगेषुनवर्णभेदः ॥ ब्राह्मण्यमध्रुवमिदंकिलकृत्रिम
त्वादकृत्रिमंभवतिसामयिकत्वयोगात् ॥ ३२ ॥ सांकेतिकंसुकृतलेशविशेषलब्धंवाणिज्यभेषजकृतामिवजातिभेदाः ॥ किंब्राह्मणाये
सुकृतंत्यजंतिकिंक्षत्रियालोकमपालयंतः ॥ ३३ ॥ स्वधर्महीनाहितथैववैश्याःशूद्राःस्वमुख्यक्रिययाविहीनाः ॥ तस्मान्नगोश्ववत्काश्चि
ज्जातिभेदोऽस्तिदेहिनाम् ॥ कार्यशक्तिनिमित्तस्तुसंकेतःकृत्रिमोभवेत् ॥ ३४ ॥ एवंप्रमाणैःप्रतिषिध्यमानांसांकेतिकींयातिनरोव्यवस्थाम् ॥
स्वकीयसिद्धांस्वमतैर्निषिद्धांनबुध्यतेमूढमनावराकः ॥ ३५ ॥ गोमहिष्यजवाज्युष्ट्रवानेयाविगजाधिपाः ॥ प्रेष्यवार्धुषिकाकालकर
णोद्यतमानसाः ॥ ३६ ॥ वणि[1]क्कारुक्रियाविष्टादिव्यास्तेऽपिचयेद्विजाः ॥ विनष्टास्तेतुविज्ञेयाःक्रव्यादाश्चकुशीलवाः ॥ ३७ ॥ पलां
डुलशुनादाश्च[2]मेयोष्ट्रीक्षीरपायिनः ॥ मांससर्वरसक्षीरक्रयविक्रयकारिणः ॥३८॥ पुनर्भूवृषलीवेश्याचांडालस्त्रीनिषेविणः ॥ शूद्रान्नरसपुष्टांगाः
प्रेतवस्त्रान्नभोजनाः ॥ ३९ ॥ मृतसूतकलब्धान्नपानाद्यभ्यवहारिणः ॥ ब्रह्मदेवपितृभूतमनुष्येषुबहिष्कृताः ॥ ४० ॥ मात्सर्यमदविद्वेषतृष्णा
कामतमोमयाः ॥ हीनाचा[3]राहियेकेचिदपरेपिशुनाद्विजाः ॥ ४१ ॥ प्रकारैर्बहुभिःसर्वेतेप्रणश्यंतिनान्यथा ॥ एवंशास्त्रोदितन्यायमार्गभ्रष्टा
स्तुयेनराः ॥ ४२ ॥ विशिष्टगोत्रसंस्कारकलापसकलात्मकाः ॥ वेदानध्यापयंतोऽपितेऽधीयानाःश्रुतिक्रमात् ॥ ४३ ॥ ब्राह्मणत्वाद्विही
यंतेदुराचारविधायिनः ॥ तस्मान्नजातिरेकत्रभूतात्मास्तपायिनी ॥ ४४ ॥ नाशित्वादत्रचश्लोकान्मानवाःसमधीयते ॥ सद्यःपतातिमांसेनला
क्षयालवणेनच ॥ ४५ ॥ त्र्यहेणशूद्रोभवतिब्राह्मणःक्षीरविक्रयी ॥ गोरक्षकावाणिजिकास्तथाकारुकुशीलवान् ॥ ४६ ॥ प्रेष्यान्वार्धुषिकांश्चैव
शूद्रांस्तान्मनुरब्रवीत् ॥ शूद्रोब्राह्मणतामेतिब्राह्मणश्चैतिशूद्रताम् ॥ ४७ ॥ क्षत्रियोयातिविप्रत्वंविद्याद्वैश्यंतथैवच ॥ ४८ ॥ इतिश्रीभ
विष्येमहापुराणेब्राह्मेपर्वणिषष्ठीकल्पेकार्तिकेयवर्णनेचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ ब्रह्मोवाच ॥ वेदाध्ययनमप्येतद्ब्राह्मण्यंप्रतिपद्यते ॥ वि
प्रवद्वैश्यराजन्यौराक्षसारावणादयः ॥ १ ॥ श्वादचांडालदासाश्चलुब्धकाभीरधीवराः ॥ येन्येऽपिवृषलाःकेचित्तेपिवेदानधीयते ॥ २ ॥ शू

१ वाणिज्याविष्टहृदयाः—इ०पा० । २ मत्स्यादास्त्रीषु यायिनः—इ०पा० । ३ हीनवाचः—इ०पा० ।

द्रोदेशांतरंगत्वाब्राह्मण्यंक्षत्रियैश्रितः ॥ व्यापाराकारभाषाद्यैर्विप्रतुल्यैःप्रकल्पितैः ॥ ३ ॥ वेदानधीत्यवेदौवावेदंवापियथाक्रमम् ॥ प्रोद्वहं
तिशुभांकन्यांशुद्धब्राह्मणजांनराः ॥ ४ ॥ अथवाधीत्यवेदांस्तुक्षत्रवैश्यैस्तुवानराः ॥ गौडपूर्वांकृतामेयुर्जातिंवादाक्षिणात्यजाम् ॥ ५ ॥
अपरिज्ञातशूद्रत्वाद्ब्राह्मण्यंयातिकामतः ॥ तस्मान्नज्ञायतेभेदोवेदाध्यायक्रियाकृतः ॥ ६ ॥ शास्त्रकारैस्तथाचोक्तंन्यायमार्गानुसारिभिः ॥
तेसाधुमतमाकर्ण्यसंतःसंतिविमत्सराः ॥ ७ ॥ आचारहीनान्नपुनंतिवेदायद्यप्यधीताःसहषड्भिरंगैः ॥ शिल्पंहिवेदाध्ययनंद्विजानांवृत्तंस्मृतं
ब्राह्मणलक्षणंतु ॥ ८ ॥ अधीत्यचतुरोवेदान्यादिवृत्तेनातिष्ठति ॥ नतेनाक्रियतेकार्यंस्त्रीरत्नेनेवषंडकः ॥ ९ ॥ शिखाप्रणवसंस्कारसंध्यो
पासनमेखलाः ॥ दंडाजिनपवित्राद्याःशूद्रेष्वपिनिरंकुशाः ॥ १० ॥ प्रसंगोपिहिशूद्राणांनशक्योविनिवारितुम् ॥ देवोत्तमत्रयेणापिनिवर्त्य
तेनराःस्वयम् ॥ ११ ॥ तस्मान्नैतेऽपिलक्ष्यंतेविलक्षणतया[3]नृणाम् ॥ यज्ञोपवीतसंस्कारमेखलाचूलिकादयः ॥ १२ ॥ अभिचारिकमंत्राद्यै
र्दुर्लभत्वादिभाषणैः ॥ ब्राह्मणस्यैवशक्तिश्चेत्केनास्यविनिहन्यते ॥ १३ ॥ तपःसत्यादिमाहात्म्याद्देवतासमयस्मृतिः ॥ मंत्रशक्तिर्नृणा
मेषांसर्वेषामपिविद्यते ॥ १४ ॥ वंचनंदुर्वचस्यापिक्रियतेसर्वमानवैः ॥ शूद्रब्राह्मणयोस्तस्मान्नास्तिभेदःकथंचन ॥ १५ ॥ शापानुग्रहका
रित्वंशक्तिभेदोनविद्यते ॥ चौरचाटादिराजन्यदुर्जनाभिहतेनृणाम् ॥ १६ ॥ आत्मदुःखोदयापायंस्वेषुजंतुषुरक्षणम् ॥ कर्तुनप्रभवः
शूद्रोब्राह्मणस्तद्वदेवहि ॥ १७ ॥ माभूद्युगेकलावेतद्देशेचाकार्यकृद्द्विजे ॥ स्यादन्यदेशकालादौद्विजानामतिशायिनाम् ॥ १८ ॥ शापानुग्रह
सामर्थ्यमन्यद्वाध्यात्मगोचरम् ॥ ब्रह्मसाधनमेतद्धिलिंगंकेचित्प्रचक्षते ॥ १९ ॥ संसाररक्तचेतस्कामोहांधतमसावृताः ॥ पतंत्युन्मार्गगर्ते
षुप्रत्यग्निशलभायथा ॥ २० ॥ जातिधर्मःस्वयंकिंचिद्विशेषःश्रुतिसंगमात् ॥ असिद्धःशूद्रजातीनांप्रसिद्धोविप्रजातिषु ॥ २१ ॥ संस्का
रोयोनिसाध्योवासामग्रीप्रभवोऽथवा ॥ शूद्रेभ्योऽतिशयंधत्तेयःसाधारणतागुणः ॥ २२ ॥ विप्राणांपंचधाभिन्नःकल्पनीयःसपंडितैः ॥ न
जातिजस्त्रयीजोवाविशेषोयुक्तिबाधकात् ॥ क्रमाक्रमक्रियाःसंतिनसनातनवस्तुनः ॥ २३ ॥ नित्योनहेतुर्विगतक्रियत्वाद्धेतुर्भवेद्भेदविशे

१ उद्वहन्तिद्विजस्त्रियः–इ०पा०। २ न तैः क्रिया सतां कार्या वैश्यास्ते ब्राह्मणा मताः–इ०पा०। ३विचक्षणतया–इ०पा०। ४ केनान्यस्यविहन्यते–इ०पा०।

षतःसः ॥ सतत्समस्तत्प्रतिसन्निधानात्कालात्ययेक्षित्वमयुक्तमेव ॥ २४ ॥ स्वांतःशरीरवृत्तिस्थःश्रुतियोगादुदेतियः ॥ सोनन्यवेदवि
ज्ञातस्वभावोन्यैर्नगम्यते ॥ २५ ॥ विशिष्टाधीतिधर्मत्वेक्रात्रिमाब्रह्मसंगतिः ॥ यस्यास्त्यतिशयस्तस्यनान्योनाश्रयतेयदि ॥ २६ ॥ दृश्य
स्वभावंकिमभीष्टमेतद्ब्राह्मण्यमाहोस्विददृष्टरूपम् ॥ सर्वैःप्रतीयेतहिदृश्यरूपंततोन्यथावद्भतिरेवनस्यात् ॥ २७ ॥ सामग्र्यभावात्परमं
विशेषंभूदेवगात्रस्थमभूमिदेवाः ॥ स्मरंतितेनात्मनिपुण्यपापंयथातथेत्येतदयुक्तमुक्तम् ॥ २८ ॥ सामग्र्यनुष्ठानगुणैःसमग्राःशूद्रायतःसंतिस
माद्विजानाम् ॥ तस्माद्विशेषोद्विजशूद्रनाम्नोर्नाध्यात्मिकोबाह्यनिमित्तकोवा ॥ २९ ॥ संस्कारतःसोऽतिशयोयदिस्यात्सर्वस्यपुंसोस्त्यति
संस्कृतस्य ॥ यःसंस्कृतोविप्रगणप्रधानोव्यासादिकस्तेननतस्यसाम्य[1]म् ॥३०॥ हेतुत्वंघटतेनैषांजात्यादीनामसंभवात् ॥ जातेरकृतकत्वा
च्चअधीतेनविशेषतः ॥३१॥ संस्काराशतिशयाभावादंतरस्यागतेपरैः ॥ भौतिकत्वाच्छरीरस्यसमस्तानामसंहतैः ॥ ३२॥ किंचान्यनास्तिक
म्लेच्छयवनादिजनेष्वलम्॥वेदोदितबहि[3]र्दुष्टचरितेषुदुरात्मसु॥३३॥[4]धर्मादतिशयोदृष्टःक्रूरसाहसिकादिषु ॥ तस्माद्विप्रेषुजात्यादिसामग्रीप्र
भवोनसः ॥ ३४ ॥ तस्मान्नचविभेदोस्तिनबाहिर्नांतरात्मनि ॥ नसुखादौनचैश्वर्येनाज्ञायांनाभयेष्वपि ॥ ३५ ॥ नवीर्येनाकृतौनाक्षेनव्या
पारेनचायुषि ॥ नांगेपुष्टेनदौर्बल्येनस्थैर्येनापिचापले ॥ ३६ ॥ नप्रज्ञायांनवैराग्येनधर्मेनपराक्रमे ॥ नत्रिवर्गेननैपुण्येनरूपादौनभैषजे
॥ ३७ ॥ नस्त्रीगर्भेनगमनेनदेहमलसंप्लवे ॥ नास्थिरंध्रेनचप्रेम्णिनप्रमाणेनलोमसु ॥ ३८ ॥ शूद्रब्राह्मणयोर्भेदोमृग्यमाणोऽपियत्नतः ॥
नेक्ष्यतेसर्वधर्मेषुसंहतैस्त्रिदशैरपि ॥ ३९ ॥ उक्तमात्राविसंभूतिर्विचारक्रमकारिभिः ॥ वृद्धवृंदारकाधीशैरप्रधृष्यमिदंवचः ॥ ४० ॥ नब्राह्म
णाश्चंद्रमरीचिशुभ्रानक्षत्रियाःकिंशुकपुष्पवर्णाः ॥ नचेहवैश्याहरितालतुल्याःशूद्रानचांगारसमानवर्णाः ॥ ४१ ॥ पादप्रचारैस्तनुवर्णकेशैः
सुखेनदुःखेनचशोणितेन ॥ त्व[5]ङ्मांसमेदोस्थिरसैःसमानाश्चतुःप्रभेदाहिकथंभवंति ॥ ४२ ॥ वर्णप्रमाणाकृतिगर्भवासवाग्बुद्धिकर्मेंद्रियजीविते
षु ॥ बलत्रिवर्गामयभेषजेषुनविद्यतेजातिकृतोविशेषः ॥ ४३ ॥ सएकएवात्रपतिःप्रजानांकथंपुनर्जातिकृतःप्रभेदः॥प्रमाणदृष्टांतनयप्रवादैः

१ भाव्यम्–इ॰पा॰ । २ विद्यते–इ–पा॰ । ३ अपि–इ॰पा । ४ योऽस्मात्–इ॰पा॰ । ५ त्वङ्मांसकेशास्थिरसैः–इ॰पा॰ ।

परीक्षमाणोविघटत्वमेति ॥ ४४ ॥ चत्वारएकस्यपितुःसुताश्चतेषांसुतानांखलुजातिरेका॥एवंप्रजानांहिपितैकएवापित्रैकभावान्नचजातिभेदः
॥ ४५ ॥ फलान्यथोदुंबरवृक्षजातेर्यथाग्रमध्यांतभवानियानि ॥ वर्णाकृतिस्पर्शरसैःसमानितथैकतोजातिरतिप्रचिंत्या ॥ ४६ ॥ येकौशि
काःकाश्यपगौतमाश्चकौंडिन्यमांडव्यवसिष्ठगोत्राः ॥ आत्रेयकौत्सांगिरसाःसगर्गामौद्गल्यकात्यायनभार्गवाश्च ॥४७॥ गोत्राणिनानाविधजा
तयश्चभ्रातृस्नुषामैथुनपुत्रभावाः॥वैवाहिकंकर्मनवर्णभेदाःसर्वाणिशिल्पानिभवंतितेषाम् ॥४८॥ येचान्येपंडिताःप्राहुर्देहंब्राह्मणतांनराः। तेषां
दुर्दृष्टितिमिरमपनीयानुकंप्यच ॥ ४९ ॥ न्यायाञ्जनौषधैर्दिव्यैःपरिणामसुखावहैः ॥ उपनीतैःप्रयत्नेनस्वदृष्टिंसंविदध्महे ॥५०॥मूर्तिमत्त्वाच्च
नाशित्वंनाशित्वाच्छेषभूतवत्॥देहाधारनिविष्टानांब्राह्मण्यंनप्रकल्प्यते॥५१॥एकैकोवयवस्तेषांनब्राह्मण्यंसमश्नुते ॥नचानेकसमूहेपिसर्वथा
तिप्रसंगतः॥५२॥ पृथिव्युदकवाय्वग्निपरिणामाविशेषतः॥देहतःसर्वभूतानांब्राह्मणत्वप्रसंगतः॥५३॥देहस्यब्राह्मणत्वंयैरतत्त्वज्ञैःप्रकल्प्यते॥
संस्कर्तॄणांशरीरस्यतेषांनब्रह्मताभवेत् ॥५४ ॥ मृग्यमाणेप्रयत्नेनदेहेतन्नोपलभ्यते ॥ तस्मान्नदेहेब्राह्मण्यंनापिदेहात्मकंभवेत् ॥५५॥ वर्णा
पसदचांडालश्वादादीनांप्रसज्यते॥यदिदेहस्यविप्रत्वंभवाद्भिरुपगम्यते ॥५६ ॥ देहशक्तिगुणैःक्षीणैःकायभस्मादिरूपवत्॥ तस्माद्देहात्मकेनै
तद्ब्राह्मण्यंनापिकर्मजम् ॥५७॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिषष्ठीकल्पेब्राह्मण्यविवेकवर्णनंनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ छ ॥
॥ ब्रह्मोवाच ॥ अपरैश्चसदाचारयोगयुक्तैर्मनीषिभिः ॥ यदकारिमहासत्त्वैःसुभाषितमिदंशृणु ॥१॥ बहुवनस्पतिशंखपिपीलिकाभ्रमरवारण
जातिसुदाहरन् ॥ गतिषुकर्मभिर्मितोनटवत्सदाभ्रमतिजंतुरलब्धसुदर्शनः ॥ २ ॥ रूपैश्वर्यज्ञानकुलैर्विभवैर्वार्मितोभूत्वाधर्मपथंचेद्विज
हासि ॥ नवक्ष्येव्रजन्भुवनानित्वमटिष्यंस्तस्मादभिभस्मीभूतेमदआत्मनः ॥ ३ ॥ जातिकुलरूपवयोवर्णानेकश्रुतमदाधाःक्लीबाः ॥ पर
त्रचेहचाहितमप्यर्थंनपश्यंति ॥ ४ ॥ ज्ञात्वाभवपरिवर्तेंजातीनांकोटिशतसहस्रेषु ॥ हीनोत्तममध्यत्वंकोजातिमदंबुधःकुर्यात् ॥ ५ ॥ नै

१ येचार्थम्–इ०पा०। २ वेदाहाराविनष्टानाम्–इ०पा०। ३ समस्तोऽपि हि देहोऽयं सर्वख्यातिप्रसङ्गतः–इ०पा०। ४ वर्णापसदचाण्डालनिषादानां प्रसज्यते–इ०पा०।

काञ्ज्ञातिविशेषानिंद्रियानिवृत्तिपूर्वकान्सर्वान् ॥ कर्मवशाद्गच्छत्यत्रकस्यैकाशाश्वतीजातिः ॥ ६ ॥ विद्वत्सदसियोप्याहसंस्काराद्ब्राह्मणो भवन् ॥ नायज्ञैः[1]सनिराकार्योवाक्यैर्न्यायानुसारिभिः ॥ ७ ॥ गर्भाधानंपुंसवनंसीमंतोन्नयनंतथा ॥ जातकर्मनामकर्मतथान्नप्राशनंचवै ॥ ८ ॥ चूडोपयनंचास्यव्रतादेशस्तथैवच ॥ समावर्तनमप्यन्यत्पाणिग्रहणमेवच ॥ ९ ॥ इत्येवमादिसंस्कारविधानैर्यैतिसंस्कृताः ॥ तएवब्राह्मणायेषांनैरंतर्येणकामनाः[2] ॥१०॥ यस्माद्द्वैब्राह्मणाजाताब्राह्मणैःकृतसंस्कृतैः ॥ नायुःशक्तिर्हिकांत्यादिविशेषोविद्यतेस्फुटः ॥११॥ तौवाब्राह्मणगात्रोत्थौसंस्कृतासंस्कृतौनरौ ॥ इष्टानिष्टात्यनाप्तिभ्यांनाभिद्येतेपरस्परम् ॥ १२ ॥ ज्ञानाध्ययनमीमांसानियमेंद्रियनिग्रहैः ॥ विनासंस्कारयोगेऽपिपुंसःशूद्रान्नभिन्नता ॥ १३ ॥ संस्कारःक्रियमाणश्चनशूद्रेचप्रवर्तते ॥ संस्कृतांगश्चपापेभ्योनपश्यातिनिवर्तते[3] ॥ १४ ॥ विलासिनीभुजंगादिजनवन्मदविह्वलाः ॥ व्यामुह्यंतिसदाचाराद्ब्राह्मणत्वात्[4]पततिच ॥ १५ ॥ संस्कृतोऽपिदुराचारोनरकंयातिमानवः ॥ निःसंस्कारःसदाचारोभवेद्विप्रोत्तमःसदा ॥ १६ ॥ मंत्रपूतात्मसंस्कारयुक्तोपिप्लवतेनतु ॥ ब्राह्मण्यादविकल्पंसपश्चाद्दुश्चरितोनरः ॥ १७ ॥ सामर्थ्यात्पतनंतस्माद्ब्राह्मण्यान्मुच्यतेध्रुवम् ॥ दुरनुष्ठानसक्तानांपुंसांपुरुषपुंगवैः ॥ १८ ॥ किंक्वचिद्दृष्टमेवैतत्किंवास्पर्धाविदत्ययम् ॥ तुल्यमुत्सहसेकर्तुमप्यदृष्टंतदावद ॥ १९ ॥ आचारमनुतिष्ठंतोव्यासादिमुनिसत्तमाः ॥ गर्भाधानादिसंस्कारकलापरहिताःस्फुटम् ॥२०॥ विप्रोत्तमाःश्रियंप्राप्ताःसर्वलोकनमस्कृताः ॥ बहवःकथ्यमानायेकतिचित्तान्निबोधत ॥ २१ ॥ जातोव्यासस्तुकैवर्त्याःश्वपाक्याश्चपराशरः ॥ शुक्याःशुकःकणादाख्यस्तथोलूक्याःसुतोभवत् ॥ २२ ॥ मृगीजोथर्ष्यशृंगोपिवसिष्ठोगणिकात्मजः ॥ मंदपालो[5]मुनिश्रेष्ठोनाविकापत्यमुच्यते ॥ २३ ॥ मांडव्योमुनिराजस्तुमंडूकीगर्भसंभवः ॥ बहवोन्येऽपिविप्रत्वंप्राप्तायेपूर्वमद्विजाः ॥ २४ ॥ यच्चैतच्चारुचरितैरच्चर्यमुच्चरितंवचः ॥ तद्विचार्याचरन्तुच्चैराचारोपचितद्युतिः ॥ २५ ॥ हरिणीगर्भसंभूत[6]ऋष्यशृंगोमहामुनिः ॥ तपसाब्राह्मणोजातःसंस्कारस्ते

---

१ न्यायज्ञैःसत्क्रियाःकार्याः-इ०पा० । २ नेह ते हतकाथमाः-इ०पा० । ३ संस्कृतांगस्य पापेभ्यो लावण्यं विनिवर्तते-इ०पा० । ४ ब्राह्मण्यं हापयन्ति च-इ०पा० । ५ मंदपालः-इ०पा० । ६ लाविकागर्भस-इ०पा० ।

नकारणम् ॥ २६ ॥ श्वपाकीगर्भसंभूतःपिताव्यासस्यपार्थिव ॥ तपसाब्राह्मणोजातःसंस्कारस्तेनकारणम् ॥ २७ ॥ उलूकीगर्भसंभूतः
कणादाख्योमहामुनिः ॥ तपसाब्राह्मणोजातःसंस्कारस्तेनकारणम् ॥ २८ ॥ गणिकागर्भसंभूतोवासिष्ठश्चमहामुनिः ॥ तपसाब्राह्मणोजातः
संस्कतारस्तेनकारणम् ॥ २९ ॥ लाविकागर्भसंभूतोमंदपालोमहामुनिः ॥ तपसाब्राह्मणोजातःसंस्कारस्तेनकारणम् ॥ ३० ॥ वेदतंत्रजसं
स्कारकलापनिपुणैरपि ॥ विद्यातपोधनबलादुत्कृष्टंलभ्यतेफलम् ॥ ३१ ॥ लब्धसंस्कारदेहाश्चमहापातकिनोनराः ॥ यस्मान्निवर्तते
ब्रह्मतस्मात्सांकीतिकंविदुः॥३२॥इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिषष्ठीकल्पेब्राह्मण्यसंस्कारविवेकवर्णनंनामद्वाचत्वारिंशोऽध्यायः॥४२॥
॥ छ ॥ ब्रह्मोवाच ॥ ॥ किंचान्यदपरंयूयंवेदमंत्रविदोजनाः ॥ प्रष्टव्याःकस्यसंस्कारोविशेषमुपगच्छत ॥ १ ॥ किंदेहस्यैतयेनासौ
निसर्गमलिनःस्थितः ॥ शुक्रशोणितसंभूतःशमलोद्भवकीटवत् ॥ २ ॥ निषेकादिश्मशानांतैर्विविधैर्विधिविस्तरैः ॥ देहिनोऽतिशयं
कचिदुपगच्छंतिमानवाः ॥ ३ ॥ तेषांगूढमनःकायवाग्विदुष्टैःसुचेष्टितैः ॥ असंयतमनुष्याणांपक्षोऽयंदूष्यतेमया ॥ ४ ॥ वैदिकाखिल
संस्कारसारभूताद्विजातयः ॥ सर्वकार्यकरान्सर्वान्वृषलानातिशेरते ॥ ५ ॥ चंडकर्माविकर्मस्थोब्रह्महागुरुतल्पगः ॥ स्तेनोगोघ्नःसुरापानः
परस्त्रीरमणप्रियः ॥ ६ ॥ मिथ्यावादीमदोन्मत्तोनास्तिकोवेदनिंदकः ॥ ग्रामयाजकनिर्ग्रंथौबहुदोषोदुरासदः ॥ ७ ॥ निषिद्धाचारसंसेवी[1]
चोरश्चाटोमदोद्धतः ॥ धूर्तोनटःशठःपापीसर्वाशीसर्वविक्रयी ॥ ८ ॥ वाङ्मनःकायजैर्दुष्टैर्हतायेब्राह्मणाधमाः ॥ तेनशुद्धिंव्रजंतीहअपि
यज्ञशतैरपि[2] ॥ ९ ॥ शूद्राणांयान्यनिष्टानिसंपद्यंतेस्वभावतः ॥ विप्राणामपितान्येवनिर्विघ्नानिभवंतिन ॥१०॥ तस्मान्मंत्रोग्निहोत्रंवावेद्यां
पशुवधोपिवा ॥ हेतवोनहिंविप्रत्वेशूद्रैःशक्याक्रियायथा ॥ ११ ॥ येचापिकर्मबंधेनबद्धाःसीदन्तिजंतवः ॥ संसारानलसंतापविक्लवक्लित
मानसाः ॥ १२ ॥ तेजन्ममरणाटव्यांसुखामृतपिपासवः ॥ कृपणस्याश्रयेऽटन्तोलभन्तेनैवनिर्वृतिम् ॥ १३ ॥ चतुर्वर्णानरायेतुतत्तद्वी
र्यैनराधमाः ॥ तेषांसर्वात्मनासैवधर्मैःसांकार्यमीक्ष्यते ॥ १४ ॥ शूद्रविप्रादयोयोनौनानभिद्यंतेपरस्परम् ॥ सर्वधर्मसमानत्वात्संस्कारादि

१ निषिद्धाचारसंवीतो यो रथ्यादौ मदोद्धतः-इ०पा०। २ वर्षशतैः-इ०पा०।

निरर्थकम् ॥ १५ ॥ तदनुष्ठानवैधव्यावियोगमरणादिभिः ॥ असेव्यसेवनैरन्यैःशूद्राविप्रादयःसमाः ॥ १६ ॥ बुद्ध्याशक्त्यास्वभावेनधर्मैं[1]
र्जात्यादिभिःश्रिया ॥ कर्तव्यैःपुण्यपापाभ्यांशैनैःसर्वशरीरगैः[2] ॥ १७ ॥ बंधनैरोधनैर्नानायातनोपायपीडनैः ॥ दण्डैरदण्डकरणैर्विषादपरि
वेदनैः ॥ १८ ॥ सात्त्विकैःप्रीतिधर्माद्यैराजसैश्चित्रवेष्टितैः ॥ तामसैस्तापमोहाद्यैर्दूयमानाःपुनःपुनः ॥ १९ ॥ श्लेष्ममारुतपित्ताद्यैर्महाबी
भत्सदर्शनैः ॥ क्वचिद्वृत्तिनिवृत्तिभ्यानृतामृतहिताहितैः ॥ २० ॥ अलंकारोपयोगेनमन्मथाद्यैर्विचेष्टितैः ॥ धनलाभाशयानैकजंतुसंघात
पातनैः ॥ २१ ॥ अधिसिद्धिगतिंयातिनानाविधमनोरथैः ॥ आत्मस्नेहपरद्वेषस्वीकृतद्रव्यरक्षणैः ॥ २२ ॥ अतिक्षीबत्वसंक्षोभक्षुतक्षाम
क्षमामयैः ॥ यातनोपायपैशुन्यशून्यत्वोपशमैस्तथा ॥ २३ ॥ अप्रशस्तैरनुष्ठानैःसमीपस्थापदःसमाः ॥ हिंसकाःप्राणिनःपापवितथा
लापभाषिणः ॥ २४ ॥ साधूनांभाषकाःस्तेनानिर्दयाःपारदारिकाः ॥ नीचकर्मसमाचाराःसर्वभक्षाःपिशाचवत् ॥ २५ ॥ दुष्कुलीनादुरा
चारानृपाणामुपजीविनः ॥ विप्रकार्याविकर्मस्थाधनिनोदुष्टचेतसः ॥ २६ ॥ लुब्धकाहरिणान्हत्वावासंकृत्वायथावने ॥ तथाखादंतिपि
शुनाबहव[3]श्चाक्रियावशात् ॥ २७ ॥ वेदवाद[4]मधीयानाःप्राणिघाताभिशंसिनः ॥ पुष्णंतिकपटैरर्थान्वेदविक्रयिणोऽधमाः ॥ २८ ॥ मा
यिनोमत्सरग्रस्तालुब्धामुग्धामदोद्धताः ॥ चाटाःकार्पटिकाःक्रूराःकदर्याःकलहप्रियाः ॥ २९ ॥ वाचाटादुष्टकुलटाअटन्तोभाटकैःसह ॥
भंडमान्याभटाटोपैःसंक्रुद्धाःसुविलुंठकाः॥ ३० ॥ पर्यटाभाटकाजीवाःकंठकश्लोकभाषिणः॥ विक्रीयन्तेह्यविक्रेयमभक्ष्यद्रव्यभाक्षिणः॥३१॥
शूद्रकर्मानुतिष्ठंतोनिस्तपास्तेनराधमाः ॥ सेवाध्यापनवाणिज्यकृष्याद्यारंभलंभिताः ॥ ३२॥ गृण्हन्तःसंपदोबाह्याद्रव्यधान्यधनादिकाः ॥
क्रोधादाभ्यंतरान्दोषांस्तथादुष्टमनोरथान् ॥ ३३ ॥ अत्यजंतोविशिष्टानांश्रेष्ठास्तेकचमर्दिनः ॥ नोपदेयानिवस्त्राणिनित्यमाददतेद्विजाः
॥ ३४ ॥ हापयंतिनहेयानिकथंतेगुरवःक्षितौ ॥ दंडिकादिंडिकाभंडाश्चंडाश्चंडालचेष्टिताः ॥ ३५ ॥ वैतंडकास्तेनिघ्नंतियथासिंहोमृगा
न्पशून् ॥ निर्ग्रंथंमुनिमालोक्यमन्यमानाःसमुन्नतम् ॥ ३६ ॥ परिभूयावतिष्ठंतेधिक्तान्रिक्तान्स्ववैरिणः ॥ तस्मात्संसारि

१ धर्मेणेज्यादिभिः–इ०पा० । २ मंत्रैः–इ०पा० । ३ हरयश्च–इ०पा० ४ दयादममधीयानाः–इ०पा० ।

कान्सत्वांश्चित्तक्लेशकलंकिताः ॥ ३७ ॥ दौःशील्यदौर्मनस्याद्यैस्तुल्यजातीयबन्धनात् ॥ शूद्रांप्ररोचतेविप्रोरागिणींमैथुनंप्रति ॥ ३८ ॥
साकामदुःखविगमेगर्भंधत्तेसमागमे ॥ कामंकामातुराभ्यस्तुरोचंतेशूद्रमानवाः ॥ ३९ ॥ मैथुनंप्रतिब्राह्मण्यतेऽपितस्यसुखावहाः ॥
येतुजात्यादिभिर्भिन्नागवाश्वोष्ट्रमतंगजाः ॥ ४० ॥ तेविजातिषुनोगर्भंकुर्वंतेऽपिसुखार्थिनः ॥ अनड्वानेवगोरेवकामंपुष्णातिसं
गमे ॥ ४१ ॥ घोटकाश्वरतिंसम्यक्कुर्वंतेवडवासुच ॥ पतिंकरभमेवाप्यकरभीरमतेमुदा ॥ ४२ ॥ गजमेवपतिंलब्ध्वासुखंतिष्ठतिहस्ति
नी ॥ तिर्यग्जातिस्त्रियासाकंकुर्वाणोऽपिहिमैथुनम् ॥ ४३ ॥ नतस्याःकुरुतेगर्भंनरोनापिसुखासिकाम् ॥ तिरश्चासहकुर्वाणामैथुनंमनु
जांगना ॥ ४४ ॥ नाधत्तेतत्कृतंगर्भंनयुक्तंमैथुनंतयोः ॥ नैवंकश्चिद्विभागोस्तिमैथुनेस्त्रीमनुष्ययोः ॥ ४५ ॥ येनसंक्षीयतेभेदःप्रस्फुटंद्विज
शूद्रयोः ॥ वेदपाठच्छलेनायंनक्रियाभिःप्रपद्यते ॥ ४६ ॥ बहुभिर्जडसंघातैरविशिष्टेपदेऽहनि ॥ देहेदेहिनिचामुष्मिन्नशुचावनवस्थि
ते ॥ ४७ ॥ रागद्वेषादिभिर्दोषैरधिकंपरिपीडिते ॥ कुलालचक्रवद्भ्रांतमानसेविषयार्णवे ॥ ४८ ॥ घोरदुःखभयाक्रांतेसमाजेऽनी
श्वरात्मनि ॥ जन्ममृत्युजराशोकानिष्टयागाग्निपीडिते ॥ ४९ ॥ हीनसत्वशरीरादौनविशेषोविभाव्यते ॥ तस्मान्मनुष्यभेदोऽयंसंके
तबलनिर्मितः ॥ ५० ॥ ब्राह्मण्यंब्राह्मणासंगाद्ब्राह्मणीचोपसेवते ॥ पतिंत्यक्त्वासुखास्वादलालसैर्मदलालसैः ॥ ५१ ॥ आसेव्यतेविटंगत्वावं
धकीचेटकैरपि ॥ ब्राह्मण्यात्प्रच्यवंतेन्येमहापातकसेविताः ॥ ५२ ॥ व्यलीककल्पनैवैषातस्माज्जात्यादिकल्पना ॥ ५३ ॥ इतिश्रीभविष्ये
महापुराणेब्राह्मेपर्वणिषष्ठीकल्पेवर्णव्यवस्थावर्णनंनामत्रिचत्वारिंशोऽध्यायः॥४३॥छ॥ ब्रह्मोवाच॥ ॥ हेयोपादेयतत्वज्ञास्त्यक्तान्यायपथाग
माः ॥ जितेंद्रियमनोवाचःसदाचारपरायणाः ॥ १ ॥ नियमाचारवृत्तस्थाहितान्वेषणतत्पराः ॥ संसाररक्षणोपायाक्रियायुक्तमनोरथाः
॥ २ ॥ सम्यग्दर्शनसंपन्नाःसमाधिस्थाहतक्रुधः ॥ स्वाध्यायभक्तहृदयास्त्यक्तसंगाविमत्सराः ॥ ३ ॥ विशोकाविमदाःशांताःसर्वप्रा
णिहितैषिणः ॥ सुखदुःखसमालोकाविविक्तास्थानवासिनः ॥ ४ ॥ व्रतोपयुक्तसर्वांगाधार्मिकाःपापभीरवः ॥ निर्ममानिरहंकारादानशू
रादयापराः ॥ ५ ॥ सत्यब्रह्मपदःशांताःसर्वशास्त्रेषुनिष्ठिताः ॥ सर्वलोकहितोपायप्रवृत्तेनस्वयंभुवा ॥ ६ ॥ वागीश्वरेणदेवेननाभेये

नभवाच्छिदा ॥ ब्रह्मणाकृतमर्यादास्तएवब्राह्मणाःस्मृताः ॥ ७ ॥ महातपोधनैरार्यैःसर्वसत्त्वाभयप्रदैः ॥ सर्वलोकहितार्थायनिपुणंसुप्र
तिष्ठितम् ॥ ८ ॥ बृहत्त्वाद्भगवान्ब्रह्मानाभेयस्तस्ययेजनाः ॥ भक्त्यासक्ताःप्रपन्नाश्चब्राह्मणास्तेप्रकीर्तिताः ॥ ९ ॥ क्षत्रियास्तुक्षत
त्राणाद्वैश्यावार्ताप्रवेशनात् ॥ येतुश्रुतेर्द्रुतिंप्राप्ताःशूद्रास्तेनेहकीर्तिताः ॥ १० ॥ येचाचाररताःप्राहुर्ब्राह्मण्यंब्रह्मवादिनः ॥ तेतुफलंप्रशंसं
तियत्सदामनसेप्सितम् ॥ ११ ॥ क्षमादमोदयादानंसत्यंशौचंधृतिर्घृणा ॥ मार्दवार्जवसंतोषाअहंकारस्तपःशमः ॥ १२ ॥ धर्मोज्ञा
नमपैशुन्यंब्रह्मचर्यममूढता ॥ ध्यानमास्तिक्यमद्वेषोवैराग्यंचशमात्मता ॥ १३ ॥ पापभीरुत्वमस्तेयममात्सर्यमतृष्णता ॥ नैःसंग्यं
गुरुशुश्रूषामनोवाक्कायसंयमः ॥ १४॥ यएवंभूतमाचारमनुतिष्ठंतिमानवाः ॥ ब्राह्मण्यंपुष्कलंतेषांनित्यमेवप्रवर्धते ॥ १५ ॥ तेस्वमतास्वाद
लब्धवर्णाचारामहौजसः ॥ सर्वशास्त्रविरोधेनपवित्रीकृतमानसाः ॥ १६ ॥ सज्जनाभिमताःप्राज्ञाःपुराणागमपंडिताः ॥ गीतगीतागमाचाराः
स्मृतिकाराःपठंतिच ॥ १७ ॥ मन्वंतरेषुसर्वेषुचतुर्युगविभागशः ॥ वर्णाश्रमाचारकृतंकर्मसिद्धत्यनुत्तमम् ॥१८॥ संसिद्धायांतुवार्तायांतत
स्तेषांस्वयंप्रभुः ॥ मर्यादांस्थापयामासयथारब्धांपरस्परम् ॥१९ ॥ येवैपरिगृहीतारस्तेषांसत्वबलाधिकाः ॥ इतरेषांक्षतत्राणान्स्थापयामा
सक्षत्रियान् ॥ २० ॥उपतिष्ठंतियेतान्वैयाचंतोनर्मदाःसदा ॥ सत्यब्रह्मसदाभूतंवदंतोब्राह्मणास्तुते ॥ २१ ॥ येचान्येप्यबलास्तेषांवैश्यकर्म
णिसंस्थिताः ॥ कीलानिनाशयंतिस्मपृथिव्यांप्रागतंद्रिताः ॥ २२ ॥ वैश्यानेवतुतानाहकीनाशान्वृत्तिमाश्रितान् ॥ शोचंतश्चद्रवंतश्चपरि
चर्यासुयेनराः ॥ २३ ॥ निस्तेजसोऽल्पवीर्याश्चशूद्रांस्तानब्रवीत्तुसः ॥ ब्राह्मणक्षत्रियविशांशूद्राणांचपरस्परम् ॥ २४ ॥ कर्माणिप्रविभक्ता
निस्वभावप्रभवैर्गुणैः॥शमस्तपोदमःशौचंक्षांतिरार्जवमेवच ॥ २५ ॥ ज्ञानंविज्ञानमास्तिक्यंब्रह्मकर्मस्वभावजम् ॥ शौर्यंतेजोधृतिर्दाक्ष्यंयुद्धे
चाप्यपलायनम् ॥२६॥ दानमीश्वरभावश्चक्षात्रंकर्मस्वभावजम् ॥ कृषिगोरक्षवाणिज्यंवैश्यकर्मस्वभावजम् ॥ २७॥ परिचर्यात्मकंकर्मशूद्र
स्यापिस्वभावजम् ॥ योगस्तपोदयादानंसत्यंधर्मश्रुतिर्घृणा ॥ २८ ॥ ज्ञानंविज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ॥ शिखाज्ञानमयीयस्यप
वित्रंचतपोमयम् ॥ २९ ॥ ब्राह्मण्यंनिष्कलंतस्यमनुःस्वायंभुवोऽब्रवीत् ॥ यत्रवातत्रवावर्णेउत्तमाधममध्यमाः ॥ ३० ॥ निर्वृत्तःपा

पकर्मभ्योब्राह्मणःसविधीयते ॥ शूद्रोऽपिशीलसंपन्नोब्राह्मणादधिकोभवेत् ॥ ३१ ॥ ब्राह्मणोविगताचारःशूद्राद्धीनतरोभवेत् ॥ नसु
रांसंधयेद्यस्तुआपणेषुगृहेषुच ॥ ३२ ॥ नविक्रीणातिचतथासच्छूद्रोहिसउच्यते ॥ ३३ ॥ यद्येकास्फुटमेवजातिरपराकृत्यात्परंभेदिनीय
द्वाव्याहृतिरेकतामधिगतायच्चान्यधर्मयथौ ॥ एकैकाखिलभावभेदनिधनोत्पत्तिस्थितिव्यापिनीकिंनासौप्रतिपत्तिगोचरपथंयायाद्विभक्त्या
नृणाम् ॥३४॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिषष्ठीकल्पेवर्णविभागविवेकवर्णनंनामचतुश्चत्वारिंशोऽध्यायः ॥४४॥छ॥ ब्रह्मोवाच ॥
इदंशृणुमयाख्यातंतर्कपूर्वमिदंवचः ॥ युष्माकंसंशयेजातेकृतंवैजातिकर्मणोः ॥ १ ॥ पुनर्वच्मिनिबोधध्वंसमासान्नतुविस्तरात् ॥ संसिद्धिं
यांतिमनुजाजातिकर्मसमुच्चयात् ॥ २ ॥ सिद्धिंगच्छेद्यथाकार्यंदैवकर्मसमुच्चयात् ॥ एवंससिद्धिमायातिपुरुषोजातिकर्मणोः ॥ ३ ॥इ
त्येवमुक्तवान्पूर्वंशिष्याणांबोधनेपुरा ॥ योगीश्वरोमहातेजाःसमासान्नतुविस्तरात् ॥४॥ सुमंतुरुवाच ॥ इतिपृष्टःपुराब्रह्माऋषीन्प्रोवाचभा
रत ॥ सवितर्कमिदंवाक्यंविप्रर्षेजातिकर्मणोः ॥ ५ ॥ तस्मात्त्वयामहाबाहोनकार्योविस्मयोनृप ॥ कार्तिकेयंप्रतिसदादेवानांदुर्विदा
गतिः ॥ ६ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिषष्ठीकल्पेकार्तिकेयवर्णनंनामपंचचत्वारिंशोऽध्यायः ॥४५॥छ॥ सुमंतुरुवाच ॥ येयंभा
द्रपदेमासिषष्ठीचभरतर्षभ ॥ सुपुण्येयंपापहराशिवाशांतागुहप्रिया ॥ १ ॥ स्नानदानादिकंसर्वंयस्यामक्षय्यमुच्यते ॥ येऽस्यांपश्यंतिगांगेयं
दक्षिणापथमाश्रितम् ॥ २ ॥ ब्रह्महत्यादिभिःपापैर्मुच्यंतेनात्रसंशयः ॥ तस्मादस्यांसदापश्येत्कार्तिकेयंनृपोत्तम ॥ ३ ॥ पूजयंति
गुहंयेस्यांनराभक्तिसमन्विताः॥प्राप्येहतेसुखान्कामान्गच्छंतींद्रसलोकताम् ॥ ४ ॥ यस्तुकारयतेवेश्मसुदृढंसुप्रतिष्ठितम् ॥ दार्वशैलमयं
चापिभक्त्याश्रद्धासमन्वितः ॥ ५ ॥ गांगेययानमारुह्यगच्छेद्गांगेयसद्मवै ॥ संमार्जनादियःकर्मकुर्याद्गुहगृहेनरः ॥ ६ ॥ ध्वजस्यारोहणंराज
न्सगच्छेद्गुहसद्मवै॥चंदनागरुकर्पूरैर्यश्चपूजयतेगुहम्॥७॥ गजाश्वनरयानाढ्यंसेनापत्यमवाप्नुते॥राज्ञांपूज्यःसदाप्रोक्तःकार्तिकेयोमहीपते॥८॥
कार्तिकेयमृतेनान्यंराज्ञांपूज्यंप्रचक्षते ॥ संग्रामंगच्छमानोयःपूजयेत्कृत्तिकासुतम् ॥ ९ ॥ सशत्रुंजयतेवीरयथेंद्रोदानवान्रणे ॥ तस्मात्सर्व
प्रयत्नेनपूजयेच्छंकरात्मजम् ॥ १० ॥ पूजयानस्तुतंभक्त्याचंपकैर्विविधैर्नृप ॥ मुच्यतेसर्वपापेभ्यस्तदागच्छेच्छिवालयम् ॥ ११ ॥ तैलंघ

ष्ठ्यांनभुंजीतनदिवाकुरुनंदन ॥ यस्तुषष्ठ्यांनरोनक्तंकुर्याद्भिरतर्षभ ॥ १२ ॥ सर्वपापैःसनिर्मुक्तोगांगेयस्यसदोव्रजेत् ॥ त्रिःकृत्वोदाक्षिणामाशांगत्वायःश्रद्धयान्वितः ॥ पूजयेद्देवदेवेशंसगच्छेच्छांतिमंदिरम् ॥ १३ ॥ इतिश्रीभविष्येमहापुराणेशतसाहस्रार्धसंहितायांषष्ठीकल्पेकार्तिकेयमाहात्म्यवर्णनंनामषट्चत्वारिंशोध्यायः ॥४६॥ इतिषष्ठीकल्पःसमाप्तः ॥ ६ ॥ सुमंतुरुवाच ॥ सप्तम्यांसोपवासस्तुनक्ताहारोऽपिवाभवेत्॥सप्तम्यांदेवदेवेनलब्धंस्वंरूपमादरात्॥१॥अंडेनसहजातोवैअंडस्थोबुद्धिमानवान्॥अंडस्थस्यैवदक्षेणभार्यादत्वास्वकांसुतम् ॥२॥ नाम्नारूपेतिरूपेणनान्यानारीतथाभवेत्[1] ॥ अंडस्थएवसुचिरंस्थितोमार्तंडइत्यतः ॥ ३ ॥ दक्षाज्ञयाविश्वकर्मावपुरस्यप्रकाशयन् ॥ प्रकाशतस्ततोनामतस्यजातंनराधिप ॥ ४ ॥ अंडस्थस्यैवसंजातौयमुनायमएवच ॥ दाक्षायणीतस्यभार्यावैराग्यात्तनुमध्यमा ॥ ५ ॥ चिंतयामाससादेवीदुःखान्निर्वेदमागता ॥ अहोतेजोमयंरूपंकांतंकांतस्यकांतिमत् ॥ ६ ॥ नचास्यकिंचित्पश्यामिअंगंतेजोविमोहितम् ॥ शुभंकनकतुल्यंमेरूपंकांतंसुकांतिमत् ॥ ७ ॥ सांप्रतंश्यामतांयातंदग्धमेतस्यतेजसा ॥ तस्मात्तप्स्येतपश्चाहंगत्वावैउत्तरान्कुरून् ॥ ८ ॥ स्वांछायामत्रनिक्षिप्यभयाच्छापस्यरूपिणी ॥ निक्षिप्योवाचतांबालांमाचास्मैवैवादिष्यसि॥९॥ एवंसानिश्चयंकृत्वागतावैउत्तरान्कुरून् ॥ स्वरूपंतत्रनिक्षिप्यवडवारूपधारिणी ॥१०॥ चचारसामृगैःसार्धंबहून्वर्षगणान्नृप ॥ असावपिचमार्तंडश्छायांभार्याममन्यत ॥ ११ ॥ शनिंचतपतींचैवद्वेअपत्येचजज्ञिवान् ॥ अथच्छायात्मापत्यानिस्नेहेनपरिपालयेत् ॥ १२ ॥ नातिस्नेहेनचापश्यद्यमुनांयममेवच ॥ अथताभ्यांविवादोऽभूदादित्यदुहित्रोर्द्वयोः ॥ १३ ॥ तेउभेविवदंत्यौतुपरस्परमसंमतम् ॥ यमुनातपतीचोभेनिम्नगेसंबभूवतुः ॥ १४ ॥ यमोपियमुनाभ्राताछाययाताडितोभृशम् ॥ पादमुद्यम्यतस्यावैतस्थौसम्मुखएवसः ॥ १५ ॥ छायाशशापतंरोषाद्यस्मात्पादोद्यतोमम ॥ तस्मात्तेकर्मबीभत्संप्राणिनांप्राणहिंसनम् ॥ १६ ॥ भविष्यतिचिरंमूढआचंद्रार्कंनसंशयः ॥ पादंचयदिभूमौत्वमिमंसंस्थापयिष्यसि ॥ १७ ॥ कृमयोभक्षयिष्यंतिमच्छापकलुषीकृतम् ॥ तेषांविवदमानानांमार्तंडोऽभ्यागमत्ततः ॥ १८ ॥ यमोप्याहमहात्मानंमार्तंडंलोकपावनम् ॥ तातानित्यमियं

[1] तथाविधा–इ०पा० ।

चापिक्रूरभावेनपश्यति ॥ १९ ॥ नचास्याःसुसमादृष्टिरस्मास्वस्तीतिलक्ष्यते ॥ प्रोवाचाथसतांछायांमार्तंडोभृशकोपनः ॥२० ॥ सं[1]मेअप
त्योकिंमूढेसमत्वंनानुपश्यसि ॥ यमःप्रोवाचपितरंनेयंमातापितर्मम ॥ २१ ॥ मातुश्छायात्वियंपापाशप्तोऽहमनयापितः ॥ यमुनातपती
वृत्तंतत्सर्वंविन्यवेदयत् ॥ २२ ॥ अथप्रोवाचमार्तंडो[2]मातिपादोमहीतले ॥ मांसंरुधिरमादायक्रमयोयांतुभूतलम् ॥२३॥ यमुनायाश्चयत्तोयं
गंगातुल्यंभविष्यति ॥ नर्मदायास्तपत्याश्चसमंपुण्येनवैद्विज ॥ २४ ॥ विंध्यस्यदक्षिणेनेहतपतीप्रवहिष्यति ॥ तत्सायुज्यतयासार्धंगंगाया
स्यातिशोभना ॥ २५ ॥ गंगामासाद्ययमुनागंगासैवभविष्यति ॥ सौरसौम्येउभेपुण्येसर्वपापप्रणाशने ॥ २६ ॥ [3]सौरीचवैष्णवीचोभेमहापा
पभयापहे ॥ त्वंपुत्रलोकपालत्वंब्रह्मणोऽज्ञांसभाजयन् ॥२७॥ अद्यप्रभृतिच्छायेयंस्वदेहस्थाभविष्यति ॥ एवंसंस्थाप्यस्वांभार्यामपत्यानि
तथैवच ॥ २८ ॥ आजगामसकाशंवैदक्षस्याह[4]चकारणम् ॥ दक्षोविज्ञायतत्सर्वंमार्तंडमिदमाहवै ॥ २९ ॥ रूपंनपश्यतितुभ्यंसाभार्याउत्त
रान्गता ॥ रूपंतेप्रकटिष्यामियदिशक्ष्यसिवेदनाम् ॥ ३० ॥ असौप्रोवाचशक्ष्येऽहंप्रकाशीकुरुमेवपुः ॥ अथसस्मारतक्षाणंस्मरितश्चाजगाम
सः ॥ ३१ ॥ प्रोवाचदक्षस्तक्षाणंमार्तंडंवैप्रकाशय ॥ तक्षाप्रोवाचमार्तंडंवेदनांविसहिष्यसि ॥ ३२ ॥ विसहिष्येथप्रोवाचतक्षाणंदक्ष
चोदितः ॥ अथतक्षाप्रकाशंवैतस्यरूपंविभावसोः ॥ ३३॥ मुखादारभ्यपादांतंततक्षकरणैःस्वकैः ॥ किरणैस्तुद्यमानेषुतस्यांगेषुपुनःपुनः ॥
॥ ३४ ॥ क्षणेक्षणेमूर्छयतिमार्तंडोवेदनातुरः ॥ तस्यशापभयात्तक्षापादांगुल्फादियावतः ॥ ३५ ॥ चकाराथोनिराकाराअंगुल्योनप्रकाशय
त् ॥ पर्याप्तंतक्षकर्मैवंवेदनाममबाधते ॥ ३६ ॥ तक्षाप्रोवाचमार्तंडंवेदनांजहिगोपते ॥ करवीरस्यपुष्पाणिरक्तचंदनमेवच ॥ ३७ ॥ करादा
रभ्यगात्राणिविलिप्येदेहजानिते ॥ तत्तत्कृतंतथातेनसरुजंत्यक्तवान्रविः ॥ ३८ ॥ अतश्चेमानिचेष्टानिमार्तंडस्येहभूपते ॥ करवीरस्यपुष्पा
णितथावैरक्तचंदनम् ॥ ३९॥ इदमाहपुरादत्तोह्यनूरस्याग्रतोनृप ॥ करवीरस्यपुष्पाणिरक्तचंदनमेवहि ॥ ४० ॥ इतिहासपुराणाभ्यां[4]सुपर्ण
गुग्गुलंतथा ॥ यःप्रयच्छतिमेभक्त्यासमेप्राणान्प्रयच्छति ॥४१॥ तस्मान्नदेयमन्यन्मेभक्तियुक्तेनजानता ॥ मार्तंडस्यांडजंतेजोगृहीत्वाकि ॥ ६१ ॥

१ समेत्योवाचसच्छायांसमत्वंनानुपश्यसि–इ०पा० । २ मुंच पादं महीतले–इ०पा० । ३ गौरी च–इ०पा० । ४ श्रावणम्–इ०पा० ।

लभारत ॥ ४२ ॥ चकारवं[1]ज्रमजरंशत्रुलेखादिनाशनम् ॥ मार्तंडःपरितुष्टोऽभूल्लब्ध्वारूपंगतव्यथः ॥४३॥ जगामसकुरून्वेगात्स्वभार्यादर्श
नोत्सुकः ॥ मृगमध्यगतांदृष्ट्वावडवारूपधारिणीम् ॥४४॥ अश्वरूपंततःकृत्वास्वभार्यामधिरुह्यसः ॥ अवासृजत्स्वकंतेजोवेगेनारुह्यसोऽश्व
वत् ॥ ४५ ॥ परपुरुषाशंकयासास्थितादेवस्यसंमुखी ॥ तेजोनासापुटाभ्यांतुयुगपत्साक्षिपत्पुनः ॥४६॥ तत्रजातौदेवभिषजौनासत्यावाश्वि
नाविति ॥ रेतसोऽतेतुरेवंतोविरोचनसुतोमहान् ॥ ४७ ॥ तपतीशनिश्चसावर्णिश्छायापत्यानिवैविदुः ॥ यमुनायमश्चपूर्वोक्तौसंज्ञायाश्चतथा
त्मजौ ॥ ४८ ॥ भार्यांल[2]ब्ध्वावपुर्दिव्यंतथापुत्रांश्चभारत ॥ सप्तम्यांदेवदेवस्यसर्वमेवमिदंयतः ॥ ४९ ॥ अनेनकारणेनेष्टासदादेवस्यसप्त
मी ॥ सप्तम्यांसोपवासस्तुरात्रौभुंजीतयोनरः ॥ ५० ॥ कृत्वोपवासंषष्ठ्यांतुपंचम्यामेककालभुक् ॥ दत्वासुसंस्कृतंशाकंभक्ष्यभोज्यैःसम
न्वितम् ॥ ५१ ॥ देवायब्राह्मणेभ्यश्चरात्रौभुंजीतवाग्यतः ॥ यावज्जीवंनरःकश्चिद्व्रतमेतच्चरेदिति ॥ ५२ ॥ तस्यश्रीर्विजयश्चैवत्रिवर्गश्चापिव
र्धते ॥ मृतश्चस्वर्गमा[3]यातिविमानवरमास्थितः ॥५३॥ सूर्यलोकेसरमतेमन्वंतरगणान्बहून् ॥ इहचागत्यकालांतेनृपःशांतिसमन्वितः॥५४॥
पुत्रपौत्रैःपरिवृतोदातास्यांनृपतिश्चिरम् ॥ भुनक्तिहिधरांराजन्विग्रहैश्चाजितःपरैः॥ ५५ ॥ येनराराजशार्दूलशाकाहारेणसप्तमीम् ॥ उपोष्य
लब्धंतत्तीर्थंपित्र्यंवैराजसंज्ञिकम् ॥५६॥ कुरुणातवपूर्वेणशाकाहारेणसप्तमीम्॥धर्मक्षेत्रंकुरुक्षेत्रंकृतंतस्यविवस्वता ॥५७॥ सप्तमीनवमीषष्ठी
तृतीयापंचमीनृप ॥ कामदास्तिथयोह्येताइहैवनरयोषिताम् ॥ ५८ ॥ सप्तमीमाघमासेतुनवम्याश्वयुजेमता ॥ षष्ठीभाद्रपदेधन्यावै
शाखेतुतृतीयका ॥ ५९ ॥ पुण्याभाद्रपदेप्रोक्तापंचमीनागपंचमी ॥ इत्येतास्तेषुमासेषुविशेषास्तिथयःस्मृताः ॥ ६० ॥ शाकंसुसं
स्कृतंकृत्वार्यं[4]श्चभक्त्यासमन्वितः ॥ दत्वाविप्रेयथाशक्त्यापश्चाद्भुंक्तेनिशिव्रती ॥ ६१ ॥ कार्तिकेशुक्लपक्षस्यग्राह्येयंकुरुनंदन ॥
चतुर्भिर्वापिमासैस्तुपारणंप्रथमंस्मृतम् ॥ ६२ ॥ अगस्तिकुसुमैश्चात्रपूजाकार्याविभावसोः ॥ विलेपनंकुंकुमंतुधूपश्चैवापराजितैः॥६३॥
स्नानंचपंचगव्येनतमेवप्राशयेत्ततः ॥ नैवेद्यंपायसंचात्रदेवदेवस्यकीर्तितम् ॥ ६४ ॥ तदेवदेयंविप्राणांशाकंभक्ष्यमथात्मना ॥ शुभशा

१ चक्रमजरम्-इ०पा० । २ सवर्णायास्तथात्मजौ-इ०पा० । ३ आप्नोति-इ०पा० ४ परभक्ष्यसमान्वितम्-इ०पा० ।

कसमायुक्तंभक्ष्यपेयसमन्वितम् ॥ ६५ ॥ द्वितीयेपारणेराजञ्छुभगंधानियानिवै ॥ पुष्पाणितानिदेवस्यतथाश्वेतंचचंदनम् ॥ ६६ ॥
अगरुश्चापिधूपोऽत्रनैवेद्यंगुडपूपकाः ॥ स्नानंकुशोदकेनात्रप्राशनंगोमयस्यतु ॥ ६७ ॥ तृतीयेकरवीराणितथारक्तंचचंदनम् ॥ धूपानांगु
ग्गुलश्चात्रप्रियोदेवस्यसर्वदा ॥ ६८ ॥ शाल्योदनंतुनैवेद्यंदधिमिश्रंमहामते ॥ तमेवब्राह्मणानांचभक्ष्यलेह्यसमन्वितम् ॥ ६९ ॥ काल
शाकेनचविभोयुक्तंदद्याद्विचक्षणः ॥ गौरसर्षपकल्केनस्नानंचात्रविदुर्बुधाः ॥ ७० ॥ तस्यैवप्राशनंधन्यंसर्वपापहरंशुभम् ॥ तृतीयेपार
णस्यांतेमहद्ब्राह्मणभोजनम् ॥ ७१ ॥ श्रवणंचपुराणस्यवाचनंचापिशस्यते ॥ देवस्यपुरतस्तातब्राह्मणानांतथाग्रतः ॥ ७२ ॥ ब्राह्मणाद्वा
चकाच्छ्राव्यंनान्यवर्णसमुद्भवात् ॥ अथतान्ब्राह्मणान्सर्वान्भक्त्याशक्त्याचपूजयेत् ॥ ७३ ॥ वाचकस्यामलेराजन्वाससीसंनिवेदयेत् ॥
वाचकेपूजितेदेवःसदातुष्यतिभास्करः ॥ ७४ ॥ करवीरंयथेष्टंतुतथारक्तंचचंदनम् ॥ यथेष्टंगुग्गुलंतस्ययथेष्टंपायसंसदा ॥ ७५ ॥ यथेष्टा
मोदकास्तस्ययथावैताम्रभाजनम् ॥ यथेष्टंचघृतंतस्ययथेष्टोवाचकःसदा ॥ ७६ ॥ पुराणंचयथेष्टंवैसवितुःकुरुनंदन ॥ इत्येषासप्तमीपुण्या
शाकाह्वागोपतेःसदा ॥ ७७ ॥ यामुपोष्यनरोभक्त्याभाग्यवांश्चप्रजायते ॥७८ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेशाकसप्त
मीव्रतवर्णनंनामसप्तचत्वारिंशोऽध्यायः ॥४७॥छ॥शतानीकउवाच॥॥विस्तराद्वदविप्रेंद्रसप्तमीकल्पमुत्तमम्॥महाभाग्यंचदेवस्यभास्करस्य
महात्मनः ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ अत्रैवाहुर्महात्मानःसंवादंपुण्यमुत्तमम् ॥ कृष्णेनसहसत्त्वेनस्वपुत्रेणमहीपते ॥ २ ॥ भक्त्याप्रणम्य
विधिवद्वासुदेवंजगद्गुरुम् ॥ इहामुत्रहितंशांबःपप्रच्छज्ञानमुत्तमम् ॥ ३ ॥ जातोजंतुःकथंदुःखैर्जन्मनीहनबाध्यते ॥ प्राप्नोतिविविधान्का
मान्कथंचमधुसूदन ॥ ४ ॥ परत्रस्वर्गमाप्नोतिसुखानिविविधानिच ॥ अनुभूयोचितंकालंकथंमुक्तिमवाप्नुते ॥ ५ ॥ दृष्ट्वैवंममनिर्वेदोजातो
व्याधिर्जनार्दन ॥ दृष्ट्वमंजीविताशापिरोचतेनहिमेक्षणम् ॥ ६ ॥ किंत्वेवमकृतार्थोऽस्मियन्मेप्राणानयांतिहि ॥ संसारेनपतिष्यामिजराव्या
धिसमन्विते ॥ ७ ॥ येनोपायेनतन्मेऽद्यप्रसादंकुरुसुव्रत ॥ आधिव्याधिविनिर्मुक्तोयथाहंस्यांतथावद ॥ ८ ॥ ॥ वासुदेवउवाच ॥ देव

१ भार्गव्यां न वि[illegible]यते-इ०पा०। २ स[illegible] शांबशब्दे सांब इति दंत्यादिरपि पाठःपुस्तकान्तरेषु।

तायाःप्रसादोऽन्यःसर्वस्यपरमोमतः ॥ उपायःशाश्वतोनित्यइतिमेनिश्चितामातिः ॥ ९ ॥ अनुमानागमाद्यैश्चसम्यगुत्पादितामया ॥ कदा
चिदन्यथाकर्तुंधीयतेकेनाचित्क्वचित् ॥ १० ॥ प्रसादोजायतेतस्यसम्यगाराधनक्रिया ॥ यदातांचसमुद्दिश्यकृतातद्देदिनातथा ॥ ११ ॥
विशिष्टादेवतासम्यग्विशिष्टेनैवदेहिना ॥ आराधिताविशिष्टंचददातिफलमीहितम् ॥ १२ ॥ शांबउवाच ॥ अस्तित्वेनचसंदेहोकेषांचिद्देव
तांप्रति ॥ नास्तीतिनिश्चयोऽन्येषांविशिष्टास्त्वंकथांकुरु ॥ १३ ॥ ॥ वासुदेवउवाच ॥ ॥ सिद्धंतुदेवतास्तित्वमागमेषुबहुष्वथ ॥ प्रमाणमाग
मोयस्यतस्यास्तित्वंचविद्यते ॥ १४ ॥ अनुमानेनवाप्यद्यतदस्तित्वंप्रसाध्यते ॥ प्रमाणमस्तियस्येदंसिद्धायस्येहचास्तिता ॥ १५ ॥ प्र
त्यक्षेणापिचास्तित्वंदेवतायांप्रसाध्यते ॥ तच्चावश्यंप्रमाणंचदृष्टंसर्वशरीरिणाम् ॥ १६ ॥ यदिनामाविविक्तास्तुतिर्यग्योनिगताअपि ॥
नोत्पद्यतेतथाह्यस्तित्वव्यवहारोयथास्थितः ॥ १७ ॥ शांबउवाच ॥ प्रत्यक्षेणोपलभ्यंतेसम्यग्वैयादिदेवताः ॥ अनुमानागमाभ्यांचतदर्थंनप्रयो
जनम् ॥ १८ ॥ वासुदेवउवाच ॥ प्रत्यक्षेणोपलभ्यंतेनसर्वादेवताःक्वचित् ॥ अनुमानागमैर्गम्याःसंतिचान्याःसहस्रशः ॥ १९ ॥ शांबउवा
च ॥ याचाक्षगोचराकाचिद्विशिष्टेष्टफलप्रदा ॥ तामेवादौममाचक्ष्वकथयिष्यस्यथापराम् ॥ २० ॥ ॥ वासुदेवउवाच ॥ प्रत्यक्षंदेवता
सूर्योजगच्चक्षुर्दिवाकरः ॥ तस्मादभ्यधिकाकाचिद्देवतानास्तिशाश्वती ॥ २१ ॥ यस्मादिदंजगज्जातंलयंयास्यातियत्रच ॥ कृतादिलक्षणःका
लःस्मृतःसाक्षाद्दिवाकरः ॥ २२ ॥ ग्रहनक्षत्रयोगाश्चराशयःकरणानिच ॥ आदित्यावसवोरुद्राआश्विनोवायवोऽनलः ॥ २३ ॥ शक्रःप्र
जापवतिःसर्वेभूर्भुवःस्वस्तथैवच ॥ लोकाःसर्वेनगानागाःसरितःसागरास्तथा ॥ २४ ॥ भूतग्रामस्यसर्वस्यस्वयंहेतुर्दिवाकरः ॥ अस्येच्छ
याजगत्सर्वमुत्पन्नंसचराचरम् ॥ २५ ॥ स्थितंप्रवर्ततेचैवस्वार्थेचानुप्रवर्तते ॥ प्रसादादस्यलोकोऽयंचेष्टमानःप्रदृश्यते ॥ २६ ॥ अस्मिन्न
भ्युदितेसर्वमुदेदस्तमितेसति ॥ अस्तंयातीत्यदृश्येनाकिमेतत्कथ्यतेमया ॥ २७ ॥ तस्मादतःपरंनास्तिनभूतंनभविष्यति ॥ योवैवेदे
षुसर्वेषुपरमात्मेतिगीयते ॥ २८ ॥ इतिहासपुराणेषुअंतरात्मेतिगीयते ॥ बाह्यात्मेतिसुषुम्नास्थःस्वप्नस्थोजाग्रतःस्थितः ॥ २९ ॥ अस्तं

१ यामदंडक्षणानि च–इ०पा०।

यातीत्यदृष्टेनकिमेतत्कथ्यतेमया ॥ तस्मादतःपरंनास्तिनभूतंनभविष्यति ॥ ३० ॥ यन्नवाहइतिख्यातःप्रेरकःसर्वदेहिनाम् ॥ नानेनर
हितंकिंचिद्भूतमस्तिचराचरम् ॥ ३१ ॥ योवेदैर्वेदविद्भिश्चविस्तरेणेहशक्यते ॥ वक्तुंवर्षशतैर्नासौशक्यःसंक्षेपतोमया ॥ ३२ ॥ तस्मा
द्गुणाकरःख्यातःसर्वत्रायंदिवाकरः ॥ सर्वेशःसर्वकर्तायंसर्वभर्तायमव्ययः ॥ ३३ ॥ जातामस्त्यादयःसम्यग्गतिमन्तोमहेश्वरात् ॥ मंडल
व्यतिरिक्तंचजानामिपरमार्थतः ॥३४॥ तथास्यमंडलंकृत्वायोह्नेनमुपतिष्ठति ॥ प्रातःसायंचमध्याह्नेसयातिपरमांगतिम् ॥ ३५ ॥ किंपुनर्मं
डलस्थंयोजपतेपरमार्थतः॥विविधाःसिद्धयस्तस्यभवंतिनतदद्भुतम् ॥३६॥ मंडलेचास्थितंदेवंदेहेचैवंव्यवस्थितम् ॥ स्वबुद्ध्यैवमसंमूढोयः
पश्यतिसपश्यति॥३७॥ध्यात्वैवंपूजयेद्यस्तुजपेद्योजुहयाच्चयः॥ससर्वान्प्राप्नुयात्कामान्गच्छेद्धर्मध्वजंतथा ॥३८॥ तस्मात्त्वमिहदुःखानामंतं
कर्तुंयदिच्छसि ॥ इहामुत्रचभोगानांभुक्तिंमुक्तिंचशाश्वतीम् ॥३९॥ आराधयार्कमर्कस्थोमंत्रैरिहतदात्मनि ॥ अंगैर्वृतंवृतेचैवस्थानेशास्त्रेण
शोधिते ॥ ४० ॥ कवचेनचसंगुप्तेसर्वतोऽस्त्रेणरक्षिते ॥ एवंप्राप्स्यसियत्नेनसर्वदाफलमीप्सितम् ॥ ४१ ॥ दुःखमाध्यात्मिकंनेहतथा
चैवाधिभौतिकम् ॥ आधिदैविकमत्युग्रंनभविष्यतितेसदा ॥ ४२ ॥ नभयंविद्यतेतेषांप्रपन्नायेदिवाकरम् ॥ इहामुत्रसुखंतेषामच्छिद्रंजाय
तेसुखम् ॥ ४३ ॥ सूर्येणेदंममोद्दिष्टंसाक्षाद्यज्ज्ञानमुत्तमम् ॥ आराधितेनविधिवत्कालेनबहुनातथा ॥ ४४ ॥ प्राप्यतेपरमंस्थानंयत्रधर्म
ध्वजःस्थितः ॥ एतत्संक्षिप्तमुद्दिष्टंक्षिप्रसिद्धिकरंपरम् ॥ ४५ ॥ यथानान्यदतोऽस्तीतिस्वयंसूर्येणभाषितम् ॥ उपायोयंसमाख्यातस्तव
संक्षेपतस्त्विह ॥ ४६ ॥ यस्मात्परतरोनास्तिहितोपायःशरीरिणाम् ॥ ४७ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेआदित्य
माहात्म्यवर्णनंनामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ छ ॥ ॥ वासुदेवउवाच ॥ अथार्चनविधिंवक्ष्येधर्मकेतोरनुत्तमम् ॥ सर्वकामप्रदंपुण्यं
विघ्नघ्नंदुरितापहम् ॥ १ ॥ सूर्यमंत्रैःपुरःस्नातोयजेत्तेनैवभास्करम् ॥ यतस्ततःप्रवक्ष्यामिस्नानमादौसमासतः ॥ २ ॥ आचां
तस्तमुपालभ्यमुद्रयाशुचिशुद्धया ॥ कृत्वानीराजनंपुत्रसंशोध्यचजलंततः ॥ ३ ॥ स्नानाद्धृदयपूतेनमन्त्रेणमत्कुलोद्वह ॥

२ तस्मात्क्षयकरोयोऽसौ।–इ०पा० । २ दृष्ट्वा–इ०पा० । ३ तं देवम्–इ०पा० । ४ ध्रुवम्–इ०पा० । ५ स्नानादुदयपूतेन मधुना मत्कुलोद्वह–इ०पा० ।

उत्थायाचम्यतेनैववासस्तीपरिधायच ॥ ४ ॥ द्विराचम्याथसंप्रोक्ष्यतनुंसप्ताक्षरेणच ॥ उत्थायाचम्यतेनैवरवेःकृत्वार्घ्यमेवच ॥ ५ ॥ द
त्वातेनैवजप्त्वातंस्वकंध्यात्वार्कंवद्धृदि ॥ गत्वाचायतनंशुभ्रमार्कमार्कींतनुंयजेत् ॥ ६ ॥ पूरकंकुंभकंकृत्वारेचकंचसमाहितः ॥ कृत्वों
कारेणदोषांस्तुहन्यात्कायादिसंभवात् ॥ ७ ॥ वायव्याग्नेयमाहेंद्रवारुणीभिर्यथाक्रमम् ॥ किल्बिषंवारुणाद्भिश्चहन्यात्सिद्ध्यर्थमात्मनः
॥ ८ ॥ शोषणंदहनंस्तंभंप्लावनंचयथाक्रमात् ॥ वाय्वग्नींद्रजनाख्याभिर्धारणाभिःकृतेसति ॥ ९ ॥ ध्यात्वाविशुद्धमात्मानंप्रणमेतार्क
मास्थितम् ॥ देहेतेनैवसंचिन्त्यपंचभूतमयंपरम् ॥ १० ॥ सूक्ष्मंस्थूलंतथाक्षाणिस्वस्थानेषुप्रकल्प्यच ॥ विन्यस्यांगानिखादीनिहृदाद्या
निहृदादिषु ॥ ११ ॥ खस्वाहाहृदयंभानोःखमर्कायशिरस्तथा ॥ उल्कास्वाहाशिखार्कस्ययैचहुंकवचंपरम् ॥ १२ ॥ खांफडस्त्रंचसं
हारश्चादितःप्रणवःकृतः ॥ सपूर्वंप्रणवस्याथोमंत्रकर्मप्रसिद्धये ॥ १३ ॥ एभिर्जलंत्रिधाजप्त्वास्नानद्रव्याणितेनच ॥ संप्रोक्ष्यपूजयेत्सूर्यं
गंधपुष्पादिभिःशुभैः ॥ १४ ॥ ततोमूर्तिषुसर्वासुरात्रावग्नौप्रपूजयेत् ॥ प्राक्पश्चिमोदगभ्यग्राःप्रातःसायंनिशासुवै ॥ सप्ताक्षरेणसन्मंत्रंध्या
त्वाचपद्मकर्णिकाम् ॥ १५ ॥ आदित्यमंडलान्तस्थंतत्रदेहंप्रकल्पयेत् ॥ प्रभामंडलमध्यस्थंध्यात्वादेहंयथापुरा ॥ १६ ॥ सर्वलक्षणसंपू
र्णंसहस्रकिरणोज्ज्वलम् ॥ रक्तैर्गंधैश्चपुष्पैश्चचरुभिर्बलिभिस्तथा ॥१७॥ रक्तचंदनमिश्रैर्वावस्त्रैरावरणैःशुभैः ॥ आवाहनादिकर्माणिरक्षांतु
हृदयेनच ॥ १८ ॥ तच्चित्तश्चसदाकुर्याज्ज्ञात्वाकर्मक्रमंबुधः ॥ कृत्वाचावाहनंमंत्रैरेकत्रस्थापनंततः ॥ १९ ॥ यावद्यागावसानंतुसांनिध्यं
तत्रकल्प्यच ॥ दत्त्वापाद्यादिकांपूजांशक्त्यावार्घ्यंनिवेद्यच ॥ २० ॥ जप्त्वातुविधिवद्ध्यात्वाततोदेवींविसर्जयेत् ॥ एषकर्मक्रमःप्रोक्तःसर्वे
षांयजनक्रमात् ॥ २१ ॥ प्रवक्ष्यामिजपस्थानंपद्मेशावरणेतथा ॥ आदित्यंकर्णिकारस्थंदलेष्वंगानिपूर्वशः ॥ २२ ॥ सोमादीन्राहु
पर्यंतान्ग्रहांश्चैवोदगादितः ॥ मूर्तिमल्लोकपालांश्चक्रमादावरणेष्वथ ॥ २३ ॥ तदस्त्राणिचरक्षार्थंस्वमंत्रैःपूजयेत्क्रमात् ॥ प्रणवै
श्चाभिधानैश्चचतुर्थ्यामभियोजितैः ॥ २४ ॥ सर्वेषांकथितामंत्रामुद्राश्चकथयाम्यतः ॥ व्योममुद्रारतिःपद्मामहाश्वेतास्त्रमेवच ॥ २५ ॥
पंचमुद्राःसमाख्याताःसर्वकर्मप्रसिद्धये ॥ उत्तानौतुकरौकृत्वाअंगुल्योग्रंथिताःक्रमात् ॥ २६ ॥ तर्जनीमेतिथावत्ताःसमेवाधोमुखोस्थिते ॥

तर्जन्यौमध्यमस्यैवज्येष्ठाग्रेवानुगोपरि ॥ २७ ॥ मुद्रेयंसर्वमुद्राणांव्योममुद्रेतिकीर्तिता ॥ सर्वकर्मसुयोगेयंतथास्थानंप्रकल्पते ॥ २८॥
पद्मवत्प्रसृताःसर्वामहाश्वेतारवेःस्मृता ॥ जवसंनिहितोनित्यंरथारूढोरविःस्मृतः ॥ २९ ॥ हस्तावूर्द्धमुखौकृत्वावामांगुष्ठेनयोजितौ ॥
द्रव्याणांशोधनेयोज्यारक्षार्थंचविशेषतः ॥ ३० ॥ अनयामुद्रयासर्वंरक्षितंशोधितंभवेत् ॥ अर्घ्यंदत्वाप्रयोक्तव्यापूजांतेचविशेषतः॥ ३१ ॥
जपध्यानावसानेचयदीच्छेत्सिद्धिमात्मनः ॥ अनेनविधिनानित्यंजपेदब्दमतंद्रितः ॥ ३२ ॥ सलभेतेप्सितान्कामानिहामुत्रनसंशयः ॥ रो
गात्प्रमुच्यतेरोगाद्धनहीनोधनंलभेत् ॥ ३३ ॥ राज्यभ्रष्टोलभेद्राज्यमपुत्रःपुत्रमाप्नुयात् ॥ प्रज्ञामेधासमृद्धिश्चचिरंजीवतिमानवः ॥ ३४ ॥
सुरूपांलभतेकन्यांकुलीनांपुरुषोध्रुवम् ॥ सौभाग्यंस्त्रीकुलीनापिकन्याचपुरुषोत्तमम् ॥ ३५॥ अविद्योलभतेविद्यामित्युक्तंभानुनापुरा ॥
नित्ययागःस्मृतोह्येषधनधान्यसुखावहः ॥३६॥ प्रजापशुविवृद्धिश्चनिष्कामस्यापिजायते ॥ तदैकःस्तूयतेस्वर्गेशक्रवच्चतेचनरोत्तमः॥३७॥
भक्त्यातंपूजयेद्यस्तुनरःपुण्यतरःसदा॥इहवैकामिकंप्राप्यततोगच्छेन्मनोःपदम् ॥ ३८ ॥ द्विजातस्यप्रदानेनतेजसाबुधसन्निभः ॥३९॥ इति
श्रीभविष्येमहापुराणेसप्तमीकल्पेसूर्यमाहात्म्यवर्णनंनामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ छ ॥ वासुदेवउवाच ॥ ॥ नैमित्तिकंततो
वक्ष्येयज्ज्ञात्वाचसमासतः ॥ सप्तम्यांग्रहणेचैवसंक्रांतिषुविशेषतः ॥ १ ॥ शुक्लपक्षस्यसप्तम्यांहविर्भुक्त्वैकदादिवा ॥ सम्यगाचम्यसंध्यायां
वारुणंप्रणिपत्यच ॥ २ ॥ इंद्रियाणिचसंयम्यकृतंध्यात्वास्वपेदधः ॥ दर्भशय्यागतोरात्रौप्रातःस्नातःसुसंयतः ॥ ३ ॥ ततःसंध्यामुपास्या
थपूर्वोक्तंचमनुंजपेत् ॥ जुहुयाच्चतदावह्निंसूर्याग्नौपरिकल्प्यच ॥ ४ ॥ सूर्याग्निकरणंवक्ष्येतर्पणंचसमासतः॥अर्चनागारमुल्लिख्यप्रविश्याचर्य
जनैर्जनम् ॥ ५ ॥ प्रक्षिप्यास्तीर्यदर्भैश्चपात्राद्यालभ्यचक्रमात् ॥ पवित्रंद्विकुशंकृत्वासाग्रंप्रादेशसंमितम् ॥ ६ ॥ तेनपात्राणिसंप्रोक्ष्यसं
शोध्याथविलोक्यच ॥ उदगग्रेस्थितेपात्रेप्रज्वाल्याथोल्मुकेनच ॥ ७ ॥ पर्यग्निकरणंकृत्वातथाज्योत्यवनंत्रिधा ॥ परिमृज्यस्रुवादींश्चद
र्भैःसंप्रोक्षयेत्ततः ॥ ८ ॥ जुहुयात्प्रोक्ष्यतान्वह्नौतत्रार्कंपूर्ववद्व्रजेत् ॥ अभूमौस्थितपात्रेणविष्टरेणतुपाणिना ॥ ९ ॥ दानेनयद्दुशार्दूल
नान्तरिक्षेस्थलेक्वचित् ॥ दक्षिणेनस्रुवंगृह्यजुहुयात्पावकंबुधः ॥ १० ॥ हृदयेनक्रियाःसर्वाःकर्तव्याःपूर्वचोदिताः ॥ अर्कादारभ्यसंज्ञार्थं

दद्यात्तूष्णींहुतिंस्थितः ॥ ११ ॥ वरुणायशतैर्माघेसप्तम्यांवरुणंयजेत् ॥ यथाशक्त्यातुविप्रेभ्यःप्रदद्यात्खंडवेष्टकान् ॥ १२ ॥
दद्याच्चदक्षिणांशक्त्याप्राप्नोतियाचितंफलम् ॥ एवंवैफाल्गुनेसूर्यंचैत्रेवैशाखएवच ॥ १३ ॥ वैशाखेमासिधातारमिंद्रंज्येष्ठेयजेद्र
विम् ॥ आषाढेश्रावणेमासिनभंभाद्रपदेयमम् ॥ १४ ॥ तथाश्वयुजिपर्वण्यंत्वष्टारंकार्तिकेयजेत् ॥ मार्गशीर्षेचमित्रंचपौषेविष्णुंयजेद्यदि
॥ १५ ॥ संवत्सरेणयत्प्रोक्तंफलमिष्टंदिनेदिने ॥ तत्सर्वमाप्नुयात्क्षिप्रंभक्त्याश्रद्धान्वितोव्रती ॥ १६ ॥ एवंसंवत्सरेपूर्णेकृत्वावैकां
चनंरथम् ॥ सप्तभिर्वाजिभिर्युक्तंनानारत्नोपशोभितम् ॥ १७ ॥ आदित्यप्रतिमांमध्येशुद्धहेम्नाकृतांशुभाम् ॥ रत्नैरलंकृतां
कृत्वाहेमपद्मोपरिस्थिताम् ॥ १८ ॥ तस्मिन्रथवरेकृत्वासारथिंचाग्रतःस्थितम् ॥ वृतंद्वादशभिर्विप्रैःक्रमान्मासाधिपात्मभिः
॥ १९ ॥ मध्येकृत्वाग्रमाचार्यंपूजयित्वायथाश्रुति ॥ संचिंत्यादित्यवर्णैर्वस्त्ररत्नादिनार्हयेत् ॥ २० ॥ एवंमासाधिपान्विप्रा
न्संपूज्याथनिवेदयेत् ॥ आचार्यायरथंछत्रंग्रामंगाश्चमहींशुभाम् ॥ २१ ॥ अश्वान्मासाधिपेभ्यस्तुद्वादशभ्योनिवेदयेत् ॥ एवंभ
क्त्याय[1]थाशक्त्याहेमरत्नादिभूषणम् ॥ २२ ॥ दत्वातस्यनमस्कृत्यव्रतंपूर्णंनिवेदयेत् ॥ अतऊर्ध्वंनदोषोऽत्रव्रतस्याकरणेष्वपि॥२३॥
एवमस्त्वितिविप्रेंद्रैःसहाचार्यैःपुनःपुनः ॥ बह्वीश्चैवाशिषोदत्वाप्रवदेत्प्रीयतामिति ॥ २४ ॥ आदित्योयेनकामेनत्वयाआराधितोव्रतैः ॥
तुभ्यंददातुतंकामंसंपूर्णंभवतुव्रतम् ॥२५॥ आचार्यान्विप्ररूपैस्तुप्रविष्टोभास्करःस्वयम् ॥ दास्यत्येवपरंकर्तुमित्युक्तंभानुनास्वयम्॥२६॥
विप्रेभ्योगुणवद्भ्यश्चनिःस्वेभ्यश्चविशेषतः ॥ दीनान्धकृपणेभ्यश्चशक्त्यादत्वाचदक्षिणाम् ॥ २७ ॥ ब्राह्मणान्भोजयित्वाचव्रतमेतत्समा
पयेत् ॥ कृत्वैवंसप्तमीमब्दंराजाभवतिधार्मिकः ॥ २८ ॥ पुरुषःस्त्रीभवेद्राज्ञांतादृशस्याथवल्लभा ॥ शतयोजनविस्तीर्णंनिःसपत्नम
कंटकम् ॥ २९ ॥ निष्पन्नमंडलंभुंक्तेसाग्रंवर्षशतंसुखी ॥ वित्तहीनोऽपियोभक्त्याकृत्वाताम्रमयंरथम् ॥ ३० ॥ दद्याद्व्रतावसानेतु
कृत्वासर्वंयथोदितम् ॥ सोऽशीतियोजनंभुंक्तेविस्तीर्णंमंडलंनृप ॥ ३१ ॥ एवंपिष्टमयंयोऽपिवित्तहीनःकरोतिना ॥ आषष्टियोजनंभुंक्ते

१ यथाशक्त्या–इ०पा० ।

दीर्घायुर्नीरुजःसुखी ॥ ३२ ॥ सूर्यलोकेचकल्पांतंयावत्स्थित्वेदमाप्नुयात् ॥ मनसापिचयोभक्त्यायजेदर्कमतंद्रितः ॥ ३३ ॥ सर्वाव
स्थोपिसोऽप्यत्रव्याधिभिर्मुच्यतेभृशम् ॥ आपदोनस्पृशंत्येनंनीहारइवभास्करम् ॥ ३४ ॥ किंपुनर्व्रतसंपन्नंभक्तंमंत्रैश्चरक्षितम्¹ ॥ यत
एवंततोज्ञात्वाविधानंकल्पचोदितम् ॥ ३५ ॥ सुखेनफलसिद्ध्यर्थंकुर्यात्सर्वमशेषतः² ॥ इत्येतत्कथितंसांबपुरासूर्येणमेशुभम् ॥ ३६॥
कल्पोयंप्रथमेकल्पेसर्वदागोपितोमया ॥ अनेनाविधिनावत्सविशुद्धेनांतरात्मना ॥३७॥ भानुमाराधयेत्क्षिप्रंयदीच्छेत्फलमुत्तमम् ॥ मयास्यै
वप्रसादेनप्राप्ताःपुत्राःसहस्रशः ॥ ३८ ॥ असुरानिर्जिताश्चैवसुराःसर्वेवशीकृताः ॥ त्वयाप्ययंगोपितव्यःकल्पःसूर्यस्यसंमतः ॥ ३९ ॥ प्र
सादादस्यकल्पस्यसदासन्निहितोरविः ॥ चक्रेऽस्मिन्निर्जितायेनसुरासुरनरोरगाः ॥ ४० ॥ यदिनाधिष्ठितंचक्रमिदंसूर्यांशुभिःस्वयम्॥
सततंस्यात्प्रभायुक्तंकथमध्याहतंभवेत् ॥ ४१ ॥ अहमेतंजपन्नित्यंयजन्ध्यायंश्चशक्तितः ॥ जातोस्मिसर्वकामानांपूज्यःश्रेष्ठश्चतेजसा॥४२॥
त्वमभ्यस्यैवमनसावाचावाकर्मणापिवा ॥ कुरुभक्तिमनेनैवविधिनाफलसिद्धये ॥४३॥ शृणुयाद्भक्तियुक्तोयोनरःश्रद्धासमन्वितः ॥ विधानमा
दितःपुत्रसप्तमींकुरुतेचयः ॥ ४४ ॥ ³सेहप्राप्याखिलंकाममारोग्यंचजयंतथा ॥ भार्गव्यापरयायुक्तोगच्छेद्धरोचनंसदः ॥ ४५ ॥ इतिश्री
भविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेरथसप्तमीमाहात्म्यवर्णनंनामपंचाशत्तमोऽध्यायः॥५०॥ छ ॥ वासुदेवउवाच ॥ ॥ माघस्यशुक्लपक्षे
तुपंचम्यांमत्कुलोद्वह ॥ एकभक्तंसदाख्यातंषष्ठ्यांनक्तमुदाहृतम् ॥ १ ॥ सप्तम्यामुपवासंतुकेचिदिच्छंतिसुव्रत ॥ षष्ठ्यांकेचिद्व
दंतीहसप्तम्यांपारणंकिल ॥ २ ॥ कृतोपवासःषष्ठ्यांतुपूजयेद्भास्करंबुधः ॥ रक्तचंदनमिश्रैस्तुकरवीरैश्चसुव्रत ॥ ३ ॥ गुग्गुलेनमहाबा
होसंयावेनचसुव्रत ॥ पूजयेद्देवदेवेशंशंकरं⁴भास्करंरविम् ॥ ४ ॥ एवंहिचतुरोमासान्माघादीन्पूजयेद्रविम् ॥ आत्मनश्चापिशुद्ध्यर्थंप्राशनं
गोमयस्यच ॥ ५ ॥ स्नानंचगोमयेनेहकर्तव्यंचात्मशुद्धये ॥ ब्राह्मणान्दिव्यभौमांश्चभोजयेच्चापिशक्तितः ॥ ६ ॥ ज्येष्ठादिष्वथमासेषुश्वेतचं
दनमुच्यते ॥ श्वेतानिचापिपुष्पाणिशुभगंधान्वितानिवै ॥ ७ ॥ कृष्णागरुस्तथाधूपोनैवेद्यंपायसंस्मृतम् ॥ तेनैवब्राह्मणांस्तुष्टान्भोजये

१ उक्तमंत्रैश्च रक्षितम्–इ०पा० । २ अतंद्रितः–इ०पा० । ३ अत्र पादपूर्त्यर्थं स इत्यस्य सोलोपः । ४ ग्रहेशं शंकरं रविम्–इ०पा० ।

श्चमहामते ॥ ८ ॥ प्राशयेत्पंचगव्यंतुस्नानंतेनैवपुत्रक ॥ कार्तिकादिषुमासेषुअगस्तिकुसुमैःस्मृतम् ॥ ९ ॥ पूजयेन्नरशार्दूलधूपै
श्चैवापराजितैः ॥ नैवेद्यंगुडपूपास्तुतथाचेक्षुरसंस्मृतम् ॥ १० ॥ तेनैवब्राह्मणांस्तातभोजयस्वस्वशक्तितः ॥ कुशोदकंप्राशयेथाःस्नानं
चकुरुशुद्धये ॥ ११ ॥ तृतीयेपारणस्यांतेमाघेमासिमहामते ॥ भोजनंतत्रदानंचद्विगुणंसमुदाहृतम् ॥ १२ ॥ देवदेवस्यपूजाच
कर्तव्याशक्तितोबुधैः ॥ रथस्यचापिदानंतुरथयात्रातुसुव्रत ॥ १३ ॥ व्रतस्यप्राप्तिहेतोर्वैकर्तव्याविभवेसति ॥दानंस्वर्णरथस्येहयथोक्तंविभ
वेसति ॥ इत्येषाकथितापुत्ररथाह्वासप्तमीशुभा ॥ १४ ॥ महासप्तमीविख्यातामहापुण्यामहोदया ॥ यामुपोष्यधनंपुत्रान्कीर्तिंवि
द्यामवाप्नुयात् ॥ १५ ॥ तथाखिलंकुवलयंचांद्रेणचसमोर्चिषा ॥ १६ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेमहासप्तमी
व्रतवर्णनंनामैकपंचाशत्तमोऽध्यायः ॥५१॥छ ॥ ॥सुमंतुरुवाच ॥ ॥ इत्युक्त्वाभगवान्देवःशंखचक्रगदाधरः॥अंतर्धानंगतोवीरसांबस्येहप्रप
श्यतः ॥ १॥ सांबोऽपिकृत्वाविधिवत्सप्तमींरथसप्तमीम् ॥ आधिभिर्व्याधिभिर्मुक्तोजगामाशुस्वमंदिरम् ॥२॥ शतानीकउवाच ॥ ॥ रथया
त्राकथंकार्यारथःकार्यःकथंरवेः ॥ ॥ केनेहमर्त्यलोकेपुरथयात्राप्रवर्तिता ॥ ३ ॥सुमंतुरुवाच ॥ ॥ इममर्थंपुरापृष्टःपद्मयोनिःप्रजापतिः ॥
रुद्रेणकुरुशार्दूलआसीनःकांचनेगिरौ ॥४॥ पद्मासनंपद्मयोनिंसुखासीनंप्रजापतिम् ॥ प्रणम्यशिरसादेवोरुद्रोवाचमुदैरयत् ॥ ५ ॥ श्रीरुद्रउ
वाच ॥ यएषभगवान्देवोभास्करोलोकभास्करः॥ कथमेषभ्रमेद्देवोरथस्थोविमलःसदा ॥ ६ ॥ब्रह्मोवाच ॥ यथादिविभ्रमेत्तातरथारूढोरविः
सदा ॥ तथातेवर्तयिष्येऽहंरथंचास्यात्रिलोचन॥७॥रथेनह्येकचक्रेणपंचारेणत्रिणाभिना॥ हिरण्मयेनकांतेनअष्टबंधैकनेमिना ॥८॥ चक्रेणभा
स्वताचैवदिविसूर्यःप्रसर्पति॥दशयोजनसाहस्रोविस्तारोप्यस्यकथ्यते॥९॥त्रिगुणाचरथोपस्थादीषादंडप्रमाणतः ॥ युगमस्यतुविस्तीर्णम
रुणोयत्रसारथिः ॥ १० ॥ प्रासंगःकांचनोदिव्योयुक्तःपवनगैर्हयैः ॥ छंदोभिर्वाजिरूपैस्तुयतश्चक्रंततःस्थितैः ॥ ११ ॥ येनासौपर्यटेद्द्यो
म्निभास्वतातुदिवस्पतिः ॥ अथैतानितुसूर्यस्यप्रत्यंगानिरथस्यतु ॥ १२ ॥ संवत्सरस्यावयवैःकल्पितानियथाक्रमम् ॥ नोभ्यस्तिस्रस्तु

१ विंशोनमनूरुः-इ०पा० । २ नेमयस्तस्य-इ०पा० ।

चक्रस्यत्रयःकालाःप्रकीर्तिताः ॥ १३ ॥ आराःपंचर्तवस्तस्यनेम्यःषड्टृतवःस्मृताः ॥ रथवेदीस्मृतेतस्यअयनेदाक्षिणोत्तरे ॥ १४ ॥ मुहूर्ता इषवस्तस्यशम्याश्चास्यकलाःस्मृताः ॥ तस्यकाष्ठाःस्मृताःकोणाअक्षदंडःक्षणाःस्मृताः ॥ १५ ॥ निमेषाश्चास्यकर्षाःस्यादीषादंडो लवाःस्मृताः ॥ रात्रिर्वरूथोधर्मोस्यध्वजऊर्ध्वप्रतिष्ठितः ॥ १६ ॥ युगाक्षिकोटीतेतस्यअर्थकामावुभौस्मृतौ ॥ अश्वरूपाणिच्छंदांसि वहंतेवामतोधुरम् ॥ १७ ॥ गायत्रीचैवत्रिष्टुप्चजगत्यनुष्टुबेवच ॥ पंक्तिश्चबृहतीचैवउष्णिगेवतुसप्तमी ॥ १८ ॥ चक्रमक्षनिबद्धंतुध्रुवेचा क्षःसमर्पितः ॥ सहचक्रोभ्रमत्यक्षःसचाक्षोभ्रमतिध्रुवे ॥ १९ ॥ अक्षःसहैवचक्रेणभ्रमतेऽसौध्रुवेस्थितः ॥ एवमक्षवशात्तस्यसंनिवेशोरथ स्यतु ॥ २० ॥ तथासंयोगभावेनसंसिद्धोभास्कररोरथः ॥ तेनचासौरविर्देवोनभःसंसर्पतेसदा ॥ २१ ॥ युगाक्षकोटिसंबद्धेद्वेरश्मीस्यंदन स्यतु ॥ ध्रुवेतेभ्रमतोरश्मीनिचक्रयुगयोस्तुवै ॥२२॥ भ्रमतोमंडलान्यस्यरवेरस्यरथस्यतु ॥ कुलालचक्रवद्यातिमंडलंसर्वतोदिशम् ॥ २३ ॥ युगाक्षकोटीतेतस्यदक्षिणेस्यंदनस्यतु ॥ ऋग्यजुर्भ्यांगृहीतेनाविचक्राश्वेनवैध्रुवे ॥ २४ ॥ ह्रसेतेतस्यरश्मीतुमंडलेषूत्तरायणे ॥ दक्षिणे थसमृद्धेतुभ्रमतोमंडलानितु ॥ २५ ॥ युगाक्षकोटीतेतस्यभ्रमतेस्यंदनस्यतु ॥ सक्तासक्तंचभ्रमतेमंडलंसर्वतोदिशम् ॥ २६ ॥ आकृष्येते ध्रुवेणेहसमंतिष्ठतिसुव्रत ॥ तदासाभ्यंतरंदेवोभ्रमतेमंडलानितु ॥ २७ ॥ ध्रुवेणमुच्यमानेतुपुनाराश्मियुगेनवै ॥ तथैववाह्यतःसूर्योभ्रमते मंडलानितु ॥ २८ ॥ अशीतिमंडलशतंकाष्ठयोरुभयोरपि ॥ सरथोऽधिष्ठितोदेवैर्विभ्रमेदृषिभिःसह ॥ २९ ॥ गंधर्वैरप्सरोभिश्चसर्पग्राम णिराक्षसैः ॥ एतैर्वसतिवैसूर्येमासौद्वौद्वौक्रमेणतु ॥ ३० ॥ धातार्यमापुलस्त्यश्चपुलहश्चप्रजापतिः ॥ खंडकोवासुकिश्चैवसंकर्णोरश्मिरे वच ॥ ३१ ॥ तुंबुरुर्नारदश्चैवगंधर्वौगायतांवरौ ॥ क्रतुस्थलाप्सरश्चैवयाचसापुंजिकस्थला ॥ ३२ ॥ ग्रामणीरथकृत्स्नश्चरथौजाश्वतरा वुभौ ॥ रक्षोहेतिःप्रहेतिश्चयातुधानौचतावुभौ ॥३३॥ मधुमाधवयोरेषगणोवसतिभास्करे ॥ तथाग्रीष्मौतुद्वौमासौमित्रश्चवरुणश्चह ॥३४॥

१ अमर्त बन्ध नंतस्य सावाश्चास्य कलाःस्मृताः–इ०पा०। २ चक्रमस्याञ्जवंशं तु सिन्धदेशे रथस्य तु–इ०पा०। ३ कुलालचक्रवत्तस्य भ्रमंते मंडलानि तु–इ०पा०। ४ रथेनवाह्यतेसूर्यः–इ०पा०।

ऋषिरत्रिर्वसिष्ठश्चतक्षकोनंतएवच ॥ मेनकासहजन्याचगंधर्वौचहहाहूहूः ॥ ३५ ॥ रथस्वनश्चग्रामण्यौरथचित्रश्चतावुभौ ॥
पौरुषेयोवधश्चैवयातुधानौमहाबलौ ॥ ३६ ॥ शुचिशुक्रौतुद्वौमासौवसंत्यतेदिवाकरे ॥ इंद्रश्चैवविवस्वांश्चअंगिराभृगुरेवच ॥ ३७ ॥
एलापर्णस्तथासर्पःशंखपालश्चपन्नगाः ॥ प्रम्लोचादुंदुकाश्चैवगंधर्वौभानुदर्दुरौ ॥ ३८ ॥ यातुधानौतथासर्पस्तपाब्राह्मयश्चतावुभौ ॥ एतेनभो
नभस्यौचनिवसंतिदिवाकरे ॥३९॥ शरद्येतेपुनःशुभ्रानिवसंतिस्मदेवताः ॥ पर्जन्यश्चैवपूषाचभारद्वाजःसगौतमः ॥ ४० ॥ चित्रसेनश्चगंधर्व
स्तथावसुरुचिश्चयः ॥विश्वाचीचघृताचीचतेउभेपुण्यलक्षणे ॥४१॥ नागस्त्वैरावतश्चैवविश्रुतश्चधनंजयः ॥ सेनाजिच्चसुषेणश्चसेनानीर्ग्रामणी
स्तथा॥४२॥ आपोवातश्चद्वावेतौयातुधानौप्रकीर्तितौ॥ वसंत्येतेतुवैसूर्येइषोर्जौकालपर्ययात् ॥४३॥ हैमंतिकौतुद्वौमासौवसंत्येतेदिवाकरे॥
अंशोभगश्चद्वावेतौकश्यपश्चक्रतुस्तथा ॥४४॥ भुजंगश्चमहापद्मःसर्पःकर्कोटकस्तथा॥आपोवातश्चद्वावेतौयातुधानौप्रकीर्तितौ॥४५॥चित्रां
गदश्चगंधर्वोरुणायुश्चैवताउभौ ॥ सहेचैवसहस्येचवसंत्येतेदिवाकरे ॥ ४६ ॥ पूषाजिष्णुर्जमदग्निर्विश्वामित्रस्तथैवच ॥ काद्रवेयौमहानागौकं
बलाश्वतरावुभौ॥४७॥ गन्धर्वोधृतराष्ट्रश्चसूर्यवर्चाश्चतावुभौ॥तिलोत्तमाचरंभाचसर्वलोकेचविश्रुते॥ ४८ ॥ ग्रामणीः[1]सेनजिच्चैवसत्यजिच्चमहा
तपाः ॥ ब्रह्मोपेतश्चवैरक्षोयज्ञोयज्ञस्तथैवच ॥ एतेतपस्तपस्यांतौनिवसंतिदिवाकरे ॥ ४९ ॥ अन्येऽपियेमंदेहाराक्षसाधिपतयोदेवदेवगुह्यत
मस्यरक्षार्थंसकलदेवैरस्मदादिभिःसंनियुक्तास्तान्भवतेकथयामि ॥ ५० ॥ ॥ रुद्रउवाच ॥ ॥ वदब्रह्मन्कथांदिव्यांयामहं
प्रष्टुमागतः ॥ तामेवविस्तरेणैवकथयाशुममप्रभो ॥ ५१ ॥ दिविष्ठंभास्करंद्रष्टुंज्ञानमेतत्केनविधानतः ॥ किंफलंतस्यवादेवसमाप्तेभवति
कर्मणि ॥ ५२ ॥ ॥ ब्रह्मोवाच ॥ ॥ शृणुरुद्रसमासेनभास्करस्यनतिक्रियाम् ॥ यांकृत्वारोगदुःखार्तामुच्यंतेपापसंचयात् ॥ ५३ ॥
स्थंडिलेमंडलंकृत्वाद्वादशांगुलमानतः ॥ सद्योगोमयलिप्तेचतत्रैवावाहयेद्रविम् ॥ ५४ ॥ पूजयित्वागणेशादीन्वासुदेवंचसात्यकिम् ॥ स
त्यभामांतथालक्ष्मीमुमादेवींचशंकरम् ॥५५॥ मंडलस्यसमीपस्थान्पूर्वोक्तान्वेदमंत्रवित् ॥ ततःप्रदक्षिणीकृत्यदंडवत्प्रणमेत्सकृत् ॥५६॥

१ ग्रामणीर्वातजिच्चैव सत्यजिच्च महाबलौ—इ०पा० ।

शतंसहस्रमयुतंलक्षंवानिजपापतः ॥ दृष्ट्वाशक्तिंप्रणम्याथसदासंयतमानसः ॥ ५७ ॥ विप्रायदक्षिणांदद्यान्निरुच्छ्वासःसमाहितः ॥
रक्तिकेचहिरण्यस्यशतमात्रेसहस्रके ॥ ५८ ॥ माषकाणांचतुष्कंचायुतंदशगुणंदिशेत् ॥ दक्षेदशगुणंप्रोक्तंदद्याद्रोगविमुक्तये ॥ ५९ ॥ ए
वंकृतेविरूपाक्षसर्वरोगाद्विमुच्यते ॥ इदंरहस्यंपरमंशृणुयाद्योहिमानवः ॥ ६० ॥ तस्यरोगाविनश्यंतिमार्तंडस्यप्रसादतः ॥ अन्यच्चतेप्रव
क्ष्यामियच्चापृष्टमुमापते ॥ तच्छृणुष्वमयाप्रोक्तंरथयन्तृनियामकम् ॥ ६१ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसूर्यपूजा
वर्णनंनामद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ तत्रारुणोमयापूर्वंसारथ्येसन्नियोजितः ॥ इंद्रेणमाठरोनामवायु
नाकल्मषेणतु ॥१॥ वैनतेयेनतार्क्ष्योपरिविमलोनखतुंडप्रहरणःपुरोगामीनियुक्तइति ॥ कालेनदंडोमहादंडायुधोभवताशेषामहागणाधिपाः
॥२॥ वैशाखेनराज्ञावसुभिदायुधांगारिकौद्वौअग्निनापिंगलः ॥ संयंतामहादंडायुधोभवताशेषोमहागणाधिपः ॥ ३ ॥ हस्तोयमेनपाशहस्तो
बुपतिनासामिन्धनः ॥ अलकाधिपतिनाविष्णुः ॥ ४ ॥ अश्विभ्यांकालोपकालौवाक्षप्रधानकौ ॥ नरनारायणाभ्यांक्षारोधारोधिषणकृष्णौ
॥ ५ ॥ वैराजशंखपालपर्जन्यरजसांदिशासुविदिशासुदिशांपालनंविश्वेदेवादद्दुः ॥६॥ सप्तैतालोकमातरःसर्वमरुतोऽददन् ॥ ओंकारोवषट्
कारोवेदानिस्वनःपिनाकीविनायकःशेषोऽनन्तोवासुकिश्चनागसहस्रेणात्मतुल्येनादित्यस्यरथमनुयांति ॥ ७ ॥ गायत्रीसावित्रीरथेस्थितेउभे
संध्येसदासादेवतायारविमंडलंनोपैति[२] ॥ भगवंतंसहस्रकिरणमवलंबितुम् ॥ ८ ॥ एतद्वैसर्वदैवत्यंमंडलंब्रह्मवादिनंब्रह्मयज्ञवादिनोयज्ञः ॥
भगवद्भक्तानांपरमादित्योयंविष्णुर्माहेश्वराणांमहेश्वरः ॥ ९ ॥ स्थानाभिमानिनोह्येतेसदावैवृषभध्वज ॥ सूर्यमाप्याययंत्येतेतेजसांते
जउत्तमम् ॥ १० ॥ ग्रथितैःस्वैर्वचोभिस्तुस्तुवंतेऋषयोरविम् ॥ गंधर्वाप्सरसश्चैवगीतनृत्यैरुपासते ॥ ११ ॥ वियद्भ्रमणतोरक्षां
कुर्वंतिस्मइषुग्रहम् ॥ सर्पावहंतिवैसूर्यंयातुधानास्तुयांतिच ॥ १२ ॥ वालखिल्यानयंत्येतंपरिचार्योदयाद्रविम् ॥ दिवस्पतिःस्वभूश्चोभौ
अग्रगौयोजनस्यतु ॥ १३ ॥ भगोथदक्षिणेपार्श्वेकंजजोवामतःस्थितः ॥ सर्वेतेपृष्ठगाज्ञेयाग्रहालोकेषुपूजिताः ॥ १४ ॥ उपरागाशि

१ उन्नयन्ति–इ०पा० । २ चोपैति–इ०पा० । ३ नयंत्यस्तम्–इ०पा० ।

र्वीचोभावग्रतोनात्रसंशयः ॥ मनुष्यधर्मादक्षिणतउत्तरेणप्रचेतसः ॥ १५ ॥ संभवंतितथाकृष्णउभावेतौसदाग्रगौ ॥ वामेनवीतिहोत्रस्तु
पृष्ठतस्तुहरिःसदा ॥ १६ ॥ रथपीठेक्षमाज्ञेयाअंतरालेनभस्तथा ॥ आश्रित्यरथजांकांतिंखंदिवःसमयःस्थितः ॥ १७ ॥ ध्वजोदंड
श्चविज्ञेयोध्वजाग्रेवृषएवच ॥ ऋद्धिर्वृद्धिस्तथाश्रीश्चपताकापार्वतीप्रिय ॥ १८ ॥ ध्वजदंडाग्रेगरुडस्तदग्रेवरुणालयः ॥ मैनाकश्छत्रदं
डस्तुहिमवांश्छत्रमुच्यते ॥ १९ ॥ केचिदेवंवदंतीहलोकेचान्येमहामते ॥ छत्रदंडस्तथाक्लेशःक्लेशंछत्रंविदुर्बुधाः ॥ २० ॥ एतेषामेवदे
वानांयथावीर्यंतथातपः ॥ यथायोगंतथासत्वंयथासत्वंतथाबलम् ॥ २१ ॥ तथातपत्यसौसूर्यस्तेषांसिद्धःस्वतेजसा ॥ एतेतपंतिवर्षंति
यांतिविश्वंसृजंतिच ॥ २२ ॥ भूतानामशुभंकर्मव्यपोहंतिचकीर्तिताः ॥ एतेसहैवसूर्येणभ्रमंतेसानुगादिवि ॥ २३ ॥ तपंतश्चजपंतश्च
ह्लादयंतश्चवैद्विजाः ॥ गोपायंतिस्मभूतानिइहतेह्यनुकंपया ॥ २४ ॥ प्राणातिदेवानमृतेनसूर्यःसोमेनसुक्तेनविवर्धयित्वा ॥ शुक्लेनपूर्णां
दिवसक्रमेणतंकृष्णपक्षेविबुधाःपिबंति ॥ २५ ॥ पीतंहिसोमंद्विकलावशेषंकृष्णेतुपक्षेरुचिभिर्ज्वलंतम् ॥ सुधामृतंतंपितरःपिबं
तिऊर्जाश्चसौम्याश्चतथैवकल्पाः ॥ २६ ॥ सूर्येणगोभिश्चसमृद्धिताभिरद्भिःपुनश्चैवसमुज्झिताभिः ॥ तथौषधीभिःसततंपिबंतिअत्यं
तपानेनक्षुधाजयंति ॥ २७ ॥ मासार्धतृप्तिस्तुमताभिरद्भिर्मासेनतृप्तिःस्वधयापितॄणाम् ॥ अनेनशश्वद्दिदधातिमर्त्यंत्वयंजगच्चैवबिवि
भर्तिगोभिः ॥ २८ ॥ अहोरात्रंरथेनासावेकचक्रेणवैभ्रमन् ॥ सप्तद्वीपसमुद्रांतंसप्तभिश्चहयैःसह ॥ २९ ॥ छंदोभिर्वाजिरूपैस्तैर्य
तश्चक्रंततःस्थितैः ॥ कामरूपैःसकृद्युक्तैरंतरस्थैर्मनोजवैः ॥ ३० ॥ हरिभिरव्ययैर्वश्यैःक्षुधाश्रमविवर्जितैः ॥ द्व्यशीतिमंडल
शतमीहंत्यब्देनवैहयाः ॥ ३१ ॥ बाह्यतोभ्यंतरंचैवंमंडलंदिवसक्रमात् ॥ कल्पादौसंप्रयुक्तास्तेवहंत्याभूतसंप्लवम् ॥ ३२ ॥ आवृता
वालखिल्यैस्तैर्भ्रमंतितान्यहानितु ॥ ग्रथितैःस्वैर्वचोभिस्तुस्तूयमानोमहर्षिभिः ॥ ३३ ॥ सेव्यतेनृत्यगीतैश्चगंधर्वैरप्सरोगणैः ॥
पतंगःपतगैरश्वैर्वसतेभ्रमयन्दिवि ॥ ३४ ॥ वीथ्याश्रयाविचरतेनक्षत्राणियथाशशी ॥ मध्यगश्चामरावत्यांयदाभवतिभास्करः ॥ ३५ ॥
वैवस्वतेसंयमनेउत्तिष्ठन्दृश्यतेतदा ॥ सुखायामर्धरात्रंतुविभायामस्तमेतिच ॥ ३६ ॥ वैवस्वतेसंयमनेमध्यमस्तुरविर्य

दा ॥ सुखायामथवारुण्यामुत्तिष्ठन्दृश्यतेतदा ॥३७॥ रात्र्यर्धंचामरावत्यामस्तमेतियमस्यवै ॥ सोमपुर्यांविभायांतुमध्यगश्चार्यमायदा॥३८॥
माहेंद्रस्यामरावत्यामुत्तिष्ठतिदिवाकरः ॥ अर्धरात्रंसंयमनेवारुण्यामस्तमेतिच ॥ ३९ ॥ एवंचतुर्षुपार्श्वेषुमेरोःकुर्वन्प्रदक्षिणम् ॥ उदयास्त
मनेचासावुत्तिष्ठतिपुनःपुनः ॥ ४० ॥ पूर्वाह्णेचापराह्णेचद्वौद्वौदेवालयौपुनः ॥ तपत्येकंतुमध्याह्नेताभिरेवगभस्तिभिः ॥ ४१ ॥ उदितोवर्ध
मानाभिरामध्याह्नात्तपेद्रविः ॥ ततःपरंह्रसंतीभिर्गोभिरस्तंनियच्छति ॥ ४२ ॥ यत्रोद्यन्दृश्यतेसूर्यःसतेषामुदयःस्मृतः ॥ प्रणाशंगच्छतेय
त्रसतेषामस्तमुच्यते ॥ ४३ ॥ एवंपुष्करमध्येनतदासर्पतिभास्करः ॥ त्रिंशद्भागंतुमेदिन्यामुहूर्तेनसगच्छति ॥ ४४ ॥ योजनाग्रेणसंख्यां
तुमुहूर्तस्यनिबोधमे ॥ पूर्णंशतसहस्राणांसहस्रंतुत्रिलोचन ॥ ४५ ॥ पंचाशच्चतथाल्पानिसहस्राण्यधिकानितु ॥ मौहूर्तिकीगतिर्ह्येषासूर्यस्य
तुविधीयते ॥ ४६ ॥ योजनानांसहस्रेद्वेद्वेशतेद्वेचयोजने ॥ निमेषांतरमात्रेणादिविसूर्यःप्रसर्पति ॥ ४७ ॥ सशीघ्रमेवपर्येतिभास्करोऽलातच
क्रवत् ॥ भ्रमन्वैभ्रममाणेषुऋक्षेषुविचरत्यसौ ॥४८॥ इंद्रःपूजयतेसूर्यमुत्तिष्ठंतंदिनेदिने ॥ मध्याह्नेचयमःपश्चादस्तंयांतमपांपतिः ॥ ४९ ॥
सोमस्तथार्धरात्रेतुसदापूजयतेरविम् ॥ विष्णुर्भवानहंरुद्रःपूजयामनिशाक्षये ॥ ५० ॥ एवमग्निर्निर्ऋतिश्चवायुरीशानएवच ॥ पूजयंतिक्रमेणै
वभ्रममाणंदिवाकरम्॥श्रेयोर्थंदेवशार्दूलसर्वेब्रह्मादयःसुराः॥५१॥इति श्रीभविष्येमहापुराणेरथसप्तमीकल्पेसूर्यगतिवर्णनंनामत्रिपंचाशत्तमोऽ
ध्यायः॥५३॥छ॥ ॥रुद्रउवाच॥ ॥अहोहंसस्यमाहात्म्यंवर्णितंभवतेदृशम्॥कथ्यतांपुनरेवेदंमाहात्म्यंभास्करस्यतु॥१॥ब्रह्मोवाच॥आदित्य
मंत्रमखिलंत्रैलोक्यंसचराचरम् ॥ भवत्यस्माज्जगत्सर्वंसदेवासुरमानुषम्॥२॥ रुद्रेंद्रोपेंद्रचंद्राणांविप्रेंद्रत्रिदिवौकसाम् ॥ महाद्युतिमतांकृत्स्नंते
जोयत्सार्वलौकिकम्॥३॥ सर्वात्मासर्वलोकेशोदेवदेवःप्रजापतिः ॥ सूर्यएषत्रिलोकस्यमूलंपरमदैवतम्॥४॥अग्नौप्रास्ताहुतिःसम्यगादित्यमु
पतिष्ठति ॥ आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाः॥५॥सूर्यात्प्रसूयतेसर्वंतत्रचैवप्रलीयते॥भावाभावौहिलोकानामादित्यान्निःसृतौपुरा॥६॥
एतत्तुध्यानिनांध्यानंमोक्षंचाप्येषमोक्षिणाम् ॥ अत्रगच्छंतिनिर्वाणंजायंतेऽस्मात्पुनःप्रजाः ॥ ७॥ क्षणामुहूर्तादिवसानिशाःपक्षाश्चनित्यशः॥

१ संरक्षाम्–इ०पा० । २ त्रिंशच्छतसहस्राणाम्–इ०पा० । ३ पूजयन्ति–इ०, पूजयामः–इ०च पा० । ४ विश्वम्–इ०पा० ।

मासाः संवत्सराश्चैवऋतवोऽथयुगानिच ॥ ८ ॥ सदादित्यादृतेह्येषाकालसंख्यानविद्यते ॥ कालादृतेननियमोनाग्निर्[1]नहवनक्रिया ॥९ ॥ ऋतू[2]
नामविभागाच्चपुष्पमूलफलंकुतः ॥ कुतःसस्यविनिष्पत्तिस्तृ[3]णौषधिगणाःकुतः ॥ १० ॥ अभावोव्यवहाराणांजंतूनांदिविचेहच ॥ जगत्प्र
तपनमृतेभास्करंवारितस्करम् ॥ ११ ॥ नावृष्टयातपतेसूर्योनावृष्टयापरिविझ्यते॥ नावृष्टयाविकृतिंधत्तेवारिणादीप्यतेरविः ॥१२॥ वसंते
कपिलःसूर्योग्रीष्मेकांचनसप्रभः ॥ श्वेतोवर्णेनवर्षासुपांडुःशरदिभास्करः ॥ १३ ॥ हेमंतेताम्रवर्णस्तुशिशिरेलोहितोरविः ॥ इतिवर्णाःसमा
ख्याताःशृणुवर्णफलंहर॥१४॥ कृष्णोभयायजगतस्ताम्रःसेनापतिंविनाशयति॥ पीतोनरेंद्रपुत्रंश्वेतस्तुपुरोहितंहंति॥१५॥चित्रोथवापिधूम्रो
रविरश्मिव्याकुलंकरोत्युच्चैः ॥ तस्करशस्त्रनिपातैर्यदिनसलिलमाशुपातयति॥१६॥ इतिश्रीभविष्येमहापुराणेरथसप्तमीकल्पेसूर्यमाहिमवर्ण
नंनामचतुःपंचाशत्तमोऽध्यायः॥५४॥छ ॥रुद्रउवाच ॥ ॥ रथयात्राकथंकार्याभास्करस्येहमानवैः॥फलंचकिंभवेत्तेषांयात्रांकुर्वंतियेर[4]वेः॥१॥
विधिनाकेनकर्तव्याकस्मिन्कालेसुरोत्तम॥कथंचभ्रामयेद्देवंरथारूढंदिवाकरम्॥२॥देवस्ययेरथंभक्त्याभ्रामयंतिवहंतिच ॥ तेषांचकिंफलंप्रो
क्तंयेचनृत्यकरानराः ॥ ३ ॥ भ्रमंतियेचदेवेननृत्यगीतपरायणाः ॥ प्रजागरंचकुर्वंतिभक्त्याश्रद्धासमन्विताः ॥ ४ ॥ तेषांचकिंफलंप्रोक्तंरथं
य[6]च्छंतियेरवेः ॥ बलिंभक्तंचयेभक्त्यादद्याहायिकभोजनम् ॥ ५ ॥ एतन्मेब्रूहिनिखिलंसुरज्येष्ठसविस्तरम् ॥ लोकानांश्रेयसेदेवपरं[5]कौत
हलंहिमे ॥ ६ ॥ ब्रह्मोवाच ॥ साधुपृष्टोऽस्मिभूतेशगणेशोसित्रिलोचन ॥ शृणुष्वैकमनावच्मियथाप्रश्नंसविस्तरम् ॥ ७ ॥ देवस्यरथयात्रे
यंभास्करस्यमहात्मनः ॥ इंद्रोत्सवंतथारुद्रमयाह्येतौप्रकीर्तितौ ॥ ८ ॥ मर्त्यलोकेशांतिहेतोर्लोकानांलोकपूजित ॥९॥ प्रवर्तितावुभौयस्मि
न्देशेदेवमहोत्सवौ ॥ नतत्रोपद्रवाःसंतिराजतस्करसंभवाः ॥ १० ॥ तस्मात्कार्याविमौभक्त्यादुर्भिक्षस्येहशांतये ॥ शुक्लपक्षेतुसप्तम्यांमा
सिभाद्रपदेहर ॥ ११ ॥ घृतेनाभ्यंगयेद्देवंपंचपूतांगजेनवै ॥ अभ्यंगयेद्रहेशंयःसर्षपैःश्रद्धयान्वितः ॥ १२ ॥ दिनेदिनेजगन्नाथंप्रविष्टंवर्णके

१ नाग्नेर्विहरणक्रिया–इ०पा० । २ ऋतुनामविभागश्च–इ०पा० । ३ स्वापजागरणाःकुतः–इ०पा० ४ नराः–इ०पा० । ५ रविं च नभसि स्थितम्–इ०पा । ६ गच्छांति–इ०पा० ।

रविम् ॥ सगच्छेद्यानमारूढोगैरिकैंकिंकिणीकृतम् ॥ १३ ॥ वैश्वानरपुरंदिव्यंगंधर्वाप्सरशोभितम् ॥ शाल्योदनंखंडमिश्रंवज्रंवज्रसमन्वि
तम् ॥ १४ ॥ वर्णभक्तंप्रयच्छेद्योभास्करायदिनेदिने ॥ आरूढःसविमानंतुज्वालामालाकुलंशुभम् ॥ १५ ॥ गच्छेन्ममपुरंदेवस्तूयमानो
महर्षिभिः ॥ तस्मात्सर्वप्रयत्नेनभास्करायनरैःशिव ॥ १६ ॥ वर्णभक्तंप्रदातव्यंप्रविष्टस्येहवर्णकम् ॥ घृतपूर्णंखंडवेष्टंकासारंमोदकं
पयः ॥ १७ ॥ दध्योदनंपायसंचसंयावंगुडपूपकान् ॥ येप्रयच्छंतिदेवस्यभास्करस्येहवर्णकम् ॥ १८ ॥ तेगच्छंतिनसंदेहोनरावैमंदिरंमम
अहन्यहनियोभक्त्याभास्करायप्रयच्छति ॥ १९ ॥ अभ्यंगायघृतंदेयंसयातिपरमांगतिम् ॥ तथायोवर्णभक्तंचअहन्यहनिभक्तितः ॥ २० ॥
सप्राप्येहशुभान्कामान्गच्छेत्सभवसालयम् ॥ चूर्णमुद्वर्तनायेहयःप्रयच्छेच्छुभंरवेः ॥ २१ ॥ सयातिपरमंस्थानंयत्रदेवोदिवाकरः ॥ तत
स्तंस्नापयेद्देवंपौषेमासिविधानतः ॥ २२ ॥ सप्तम्यांशुक्लपक्षस्यशृणुष्वैकमनास्तथा ॥ तीर्थोदकमुपानीयअन्यद्वाथजलंशुभम् ॥ २३ ॥
वेदोक्तेनविधानेनप्रतिमांस्थापयेद्बुधः ॥ यजेद्धितीर्थनामानिमनसासंस्मरन्बुधः ॥ २४ ॥ प्रयागंपुष्करंदेवंकुरुक्षेत्रंचनैमिषम् ॥ पृथूदकंचंद्र
भागांशोणंगोकर्णमेवच ॥ २५ ॥ ब्रह्मावर्तंकुशावर्तंबिल्वकंनीलपर्वतम् ॥ गंगाद्वारंतथापुण्यंगंगासागरमेवच ॥ २६ ॥ कालप्रियंमित्रवनं
शुंडीरस्वामिनंतथा ॥ चक्रतीर्थंतथापुण्यंरामतीर्थंतथाशिवम् ॥ २७ ॥ वितस्ताहर्षपंथावैतथावेदविकास्मृता ॥ गंगासरस्वतीसिंधुश्चंद्र
भागासनर्मदा ॥ २८ ॥ विपाशायमुनातापीशिवावेत्रवतीतथा ॥ गोदावरीपयोष्णीचकृष्णावेण्यातथानदी ॥ २९ ॥ शतरुद्रापुष्करिणी
कौशिकीसरयूस्तथा ॥ तथान्येसागराश्चैवसांनिध्यंकल्पयंतुवै ॥३०॥ तथाश्रमाःपुण्यतमादिव्यान्यायतनानिच ॥ एवंस्नानविधिंकृत्वाअर्च
यित्वाप्रणम्यच ॥ ३१ ॥ धूपमर्घ्यंप्रदत्वातुप्रतिमामधिवासयेत् ॥ त्रिरात्रंसप्तरात्रंवामासंमासार्धमेवच ॥ ३२ ॥ स्थितंस्नानगृहेदेवंपूजयेद्भ
क्तितोनरः ॥ चत्वरेलेपयेद्धीदेचतुरस्रांशुभेकृताम् ॥ ३३ ॥ चतुर्दिशंश्वेतकुंभैर्वितानवरशोभिताम् ॥ कृष्णपक्षेतुमावस्यसप्तम्यांत्रिपुरां
तक ॥ ३४ ॥ कृत्वाग्निकार्यंविधिवत्कृत्वाब्राह्मणभोजनम् ॥ शंखभेरीनिनादैस्तुब्रह्मघोषैश्चपुष्कलैः ॥ ३५ ॥ पुण्याहघोषैर्विविधैर्ब्राह्मणा
न्स्वस्तिवाच्यच ॥ ततोऽस्यपरयाभक्त्यासूर्यस्यपरमात्मनः ॥३६॥ रथेनदर्शनीयेनकिंकिणीजालमालिना ॥ सूर्यंश्चभ्रामयेद्देवंमहोत्सवपुरः

सरम्॥३७॥शुक्लपक्षेतुमाघस्यरथमारोपयेद्रविम् ॥ कृत्वाग्निहोमंविधिवत्तथाब्राह्मणभोजनम्॥३८॥प्रीणयित्वाजनंसर्वंदक्षिणाभोजनादिना॥ प्रपूज्यब्राह्मणान्दिव्यान्भौमांश्चापिसुवाचकान् ॥ ३९ ॥ इतिहासपुराणाभ्यांवाचकोब्राह्मणोत्तमः ॥ ततोदेवश्चइष्टश्चसंपूज्योयत्नत स्तदा ॥ ४० ॥ माघस्यशुक्लपक्षस्यपंचम्यामेकभक्तकम् ॥ अयाचितंचतुर्थ्यांतुषष्ठ्यांनक्तंप्रकीर्तितम् ॥ ४१ ॥ सप्तम्यामुपवासंतुआ श्रमाद्रोपयेद्रथम् ॥ अग्निकार्यंतुवैकृत्वारथस्यपुरतःशिव ॥ ४२ ॥ षष्ठ्यांचरात्रौभूतेशरथस्येहाधिवासनम् ॥ ब्राह्मणान्भोजयित्वातुदिव्या न्भौमांश्चवाचकान् ॥ ४३ ॥ रथमारोपयेद्देवंसप्तम्यांभूतभावनम् ॥ सितायांमाघमासेतुतस्यदेवालयाग्रतः ॥ ४४ ॥ तत्रस्थस्यैवदेवस्य कुर्याद्रात्रौप्रजागरम् ॥ नानाविधैःप्रेक्षणकैर्दीपवृक्षोपशोभितैः ॥ ४५ ॥ शंखतूर्यनिनादैश्चब्रह्मघोषैश्चपुष्कलैः ॥ कुर्यात्प्रजागरंभक्त्यादेवस्य पुरतोनिशि ॥ ४६ ॥ ततोष्टम्यांचयत्नेनदेवंरथगतंनयेत् ॥ नगरस्योत्तरंद्वारंशंखभेरीनिनादितम् ॥ ४७ ॥ ततःपूर्वंदक्षिणंचद्वारंचापितथा परम् ॥एवंहिक्रियमाणायांयात्रायांवत्सरावधौ॥४८॥मानवाःसुखमेधंतेराजाजयतिचाहितात्॥ नीरुजश्चजनाःसर्वेगवांशांतिर्भवेत्तथा ॥४९॥ कर्तारश्चापियात्रायाःस्वर्गभाजोभवंतिहि॥वोढारश्चतथावत्ससूर्यलोकंव्रजंतिवै ॥५०॥ ॥रुद्रउवाच॥ ॥कथंसंचाल्यतेब्रह्मन्स्थापिताप्रतिमास कृत् ॥ एतन्मेवददेवेशसुमहान्संशयोहिमे ॥ ५१ ॥ ॥ ब्रह्मोवाच ॥ ॥ पूर्वमेवसहस्रांशोर्यानहेतोर्महात्मनः ॥ संवत्सरस्यावयवैः कल्पितोऽस्यरथोमया ॥ ५२ ॥ सर्वेषांतुरथानांवैसरथःप्रथमःस्मृतः ॥ तंदृष्ट्वातुततस्त्वन्येस्यंदनाविश्वकर्मणा ॥५३॥ कल्पिताःसर्वदेवा नांसोमादीनामनेकशः ॥ विश्वकर्मकृतंप्राप्यरथंदेवेनपुत्रक ॥५४॥ पूजार्थमात्मनोदत्तंमनवेसत्कुलोद्वह ॥ मनुनेक्ष्वाकवेदत्तंमर्त्यैःसंपूज्यतां रविः ॥ ५५ ॥ अतस्तुरथयानेनचालनंविहितंरवेः ॥ तस्मान्नचालनेदोषःसवितुश्चलएवसः ॥ ५६ ॥ यस्माद्रथेनपर्येतिभास्करःपृथिवीमि माम् ॥ गच्छन्नदृश्यतेचैतन्मंडलंसवितुस्तथा ॥ ५७ ॥ अदृष्टंचलतेयस्मात्तस्माद्वैपार्वतीप्रिय॥तदेवंरथयात्रासुदृष्टंभानोर्मनीषिभिः ॥५८॥ अन्येषांचालनंनेष्टंदेवानांपार्वतीप्रिय ॥ ब्रह्माविष्णुशिवादीनांस्थापितानांविधानतः ॥ ५९ ॥ तस्माद्रथेनदेवस्ययात्राकार्याविधानतः ॥

१ कथितः—इ०पा० । २ वाहनम्—इ०पा० ।

प्रजानामिहशांत्यर्थंप्रतिसंवत्सरंसदा ॥ ६० ॥ कांचनोवाथरौप्योवादृढदारुमयोऽपिवा ॥ दृढाक्षयुगचक्रश्चरथःकार्यःसुयंत्रितः ॥ ६१ ॥
तस्मिन्नथवरेश्रेष्ठेकल्पितेसुमनोरमे ॥ आरोप्यप्रतिमांयत्नाद्योजयेद्वाजिनःशुभान् ॥ ६२ ॥ हरिल्लक्षणसंपन्नान्सुमुखान्वशवर्तिनः ॥ कुंकुमे
नसमालब्धांश्चामरस्त्रग्विभूषितान्॥६३॥सदश्वान्योजयित्वातुरथस्यार्घंप्रदायच॥विबुधान्पूजयित्वातुधूपमाल्यानुलेपनैः ॥६४॥ आहारैर्वि
विधैश्चापिभोजयित्वाद्विजोत्तमान् ॥ दीनांधकृपणादींश्चसर्वान्संतर्प्यशक्तितः ॥ ६५ ॥ नकंचिद्विमुखंकुर्यादुत्तमाधममध्यमम् ॥ सूर्य
कृतौतुविततेएवमाहुर्मनीषिणः ॥ ६६ ॥ यश्चिंतयातिभग्नाशःक्षुधातावत्प्रपीडितः ॥ अदातुर्हिपितॄंस्तेनस्वर्गस्थानापिपातयेत् ॥ ६७ ॥
यज्ञश्चदक्षिणाहीनःसवितुर्नप्रशस्यते ॥ तस्मान्नानाविधैःकामैर्भक्ष्यलेह्यसमन्वितैः ॥ ६८ ॥ पूजयित्वाजनंसर्वमिमसुच्चारयेन्मनुम् ॥ बलिं
गृह्णंतुमेदेवाआदित्यावसवस्तथा ॥ ६९ ॥ मरुतोथाश्विनौरुद्राःसुपर्णाःपन्नगाग्रहाः ॥ असुरायातुधानाश्चरथस्थायास्तुदेवताः ॥ ७० ॥
दिग्पालालोकपालाश्चयेचविघ्नविनायकाः ॥ जगतःस्वस्तिकुर्वंतुयेचदिव्यामहर्षयः ॥ ७१ ॥ माविघ्नंमाचमेपापंमाचमेपरिपंथिनः ॥ सौम्या
भवंतुतृप्ताश्चदेवाभूतगणास्तथा ॥ ७२ ॥ वामदेव्यैःपवित्रैश्चमानस्तोकरथंतरैः ॥ आकृष्णेनरजसाऋचमेकामुदाहरेत् ॥७३॥ ततःपुण्या
हशब्देनकृतवादित्रनिःस्वनैः ॥ रथक्रमणकंकुर्याद्दत्वर्मनासुसमेनतु ॥ पुरुषैश्चापिवोढव्यःसूर्यभक्तिसमन्वितैः ॥ ७४ ॥ सुकृतैःप्रग्रहैर्दा
तैर्वलीवर्दैस्तथापिवा ॥ यथापर्यटनंचस्याद्विषमेपथिगच्छतः ॥ ७५ ॥ उपवासस्थितैर्विप्रैर्दिव्यैर्भौमैश्चसुव्रतैः ॥ त्रिंशद्भिःषोडशैर्वापिप्रतिमां
भास्करस्यतु ॥ ७६ ॥ स्थानात्प्रचाल्यवैरुद्रंरथमारोपयेच्छनैः ॥ राज्ञींचानिक्षुभारुद्रभार्यंतस्यमहात्मनः ॥ ७७ ॥ शनैरारोपयेद्दृढउभ
योःपार्श्वयोरथे ॥ निक्षुभांदक्षिणेपार्श्वेराज्ञींचाप्युत्तरेतथा ॥ ७८ ॥ द्वावेवब्राह्मणौतस्मिन्दिव्योभौमश्चपार्श्वयोः ॥ ब्रह्मकल्पस्तथाभौमः
कूबरस्योपरिस्थितः ॥ ७९ ॥ गरुडंपृष्ठतश्चास्यवल्गमानंप्रकल्पयेत् ॥ आतपत्रंतथाश्वेतंस्वर्णदंडमनोपमम् ॥ ८० ॥ सुवर्णबिंदुभिश्चि
त्रंमणिमुक्ताफलोज्ज्वलम् ॥ ततास्त्विन्द्रधनुःप्रख्यंस्वर्णदंडमथाव्रणम् ॥८१॥ ध्वजंप्रकल्पयेत्तस्यपताकाभिरलंकृतम् ॥ नानावर्णाभिभूतेश ॥ ७० ॥

१ यत्नतः–इ० पा० । २ प्रीणयित्वा–इ०पा० । ३ यातुधानाद्याः–इ०पा० । ४ सुग्रहैः–इ०पा० ।

हस्यास्यवारोदेवस्यसुव्रत ॥ शस्यः प्रोक्तः प्रियोलोकेख्यातोगोश्रुतिभूषणः॥१ ॥ यस्तुपूजयतेतस्मिन्पतंगंपतगप्रियम् ॥ गंधपुष्पोपहारैस्तुस्र्
यंलोकंसगच्छति ॥ २ ॥ सोपवासोगणश्रेष्ठआदित्यग्रहणेशुचिः ॥ जपमानोमहाश्वेतांखपोषमथवाशिवम् ॥ ३ ॥ पूजयेज्जगतामीशंतमोना
शनमाशुगम् ॥ पूजयित्वाखपोषंतुमहाश्वेतांततोजपेत् ॥ ४ ॥ पूजयित्वामहाश्वेतांरविंदेवंसमर्चयेत् ॥ महाश्वेतांप्रतिष्ठाप्यगंधपुष्पैःसुपू
जिताम् ॥ ५ ॥ तस्याएवबहिः कार्यस्थंडिलंसुसमाहितः ॥ शुचौभूमिविभागेतुवीरसंस्थाप्ययत्नतः ॥ ६ ॥ कुर्याद्धोमंतिलैःस्नातःसर्पिषाच
विशेषतः ॥ आदित्यग्रहवेलायांजपञ्छ्वेतांमहामते ॥ ७ ॥ मुक्तेदिनकरेपश्चात्स्नानंकृत्वासमाहितः ॥ पूजयित्वामहाश्वेतांखगोल्कंचग्रहा
धिपम् ॥ ८ ॥ ब्राह्मणान्वाचयित्वाचततोभुंजीतवाग्यतः ॥ आदित्यग्रहयुक्तेऽस्मिन्वारेत्रिपुरसूदन ॥ ९ ॥ यत्कर्मक्रियतेपुण्यंतत्सर्वंशुभदं
भवेत् ॥ स्नानदानजपादीनांकर्मणांगोवृषध्वज ॥ १० ॥ अनंतंहिफलंतेषांभवत्यस्मिन्नसंशयः ॥ कृतानांतुगणश्रेष्ठभास्करस्यवचो
यथा ॥ ११ ॥ तस्माद्द्विजगणैःकार्यंपुण्यकर्मविचक्षणैः ॥ एकभक्तंचनक्तंचउपवासंगणाधिप ॥ १२ ॥ येवादित्यादिनेकुर्युस्तेयांतिपरमं
पदम् ॥ धर्म्यंपुण्यंयशस्यंचपुत्रीयंकामदंतथा ॥ १३ ॥ तस्मिन्दानमपूपस्यगोदानेनसमंभवेत् ॥ द्वादशैतेमहाबाहोवीरभानोर्म
हात्मनः ॥ १४ ॥ तुष्टिदाःकथितास्तुभ्यंसर्वपापभयापहम् ॥ पठतांशृण्वतांतातकुर्वतांचविशेषतः ॥ १५ ॥ कृत्वैकमेषांविधिवद्वीरवृषभ
वाहन ॥ वृषादित्रितयंप्राप्यचात्रिजामचलांतथा ॥१६॥ ततोयातिपरंलोकंवृषकेतोर्महात्मनः॥तेजसांबुजसंकाशःप्रभयांडजसंनिभः॥ १७॥
पविहेतिसमोवीर्येकांत्याचंद्रसमप्रभः ॥१८॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिआदित्यवारकल्पेमहाश्वेतवारविधिवर्णनंनामद्विनवतितमो
ध्यायः॥९२॥ छ॥ब्रह्मोवाच॥ ॥येषांधर्मक्रियाःसर्वाःसदैवोद्दिश्यभास्करम्॥नकुलेजायतेतेषांदरिद्रोव्याधितोऽपिवा ॥१॥देवायतनभूमेस्तुगो
मयेनोपलेपनम्॥यःकरोतिनरोभक्त्यासद्यःपापात्प्रमुच्यते॥२॥श्वेतयारक्तयावापिपीतमृत्तिकयापिवा ॥उपलेपनकर्तावांछितंलभतेफलम्
॥ ३ ॥ चित्रभानुंविरच्यैवकुसुमैर्यःसुगंधिभिः ॥ पूजयेत्सोपवासस्तुसकामानीप्सिताल्लँभेत् ॥ ४ ॥ घृतेनदीपकंज्वाल्यातिलतैलेनवारवे ॥

१ ततोऽर्हयेत्–इ०पा०। २ पुरःकुर्याद्रविकार्यम्–इ०पा०। ३ रविं देवं समर्चयेत्–इ०पा०। ४ विचित्रैर्यः–इ०पा०।

प्रयातिसूर्यलोकंसदीपकोटिशतैर्वृतः ॥ ५ ॥ दीपतैलप्रदानेननयातिनरकंनरः ॥ दीपतैलंतिलाश्चैवमहापातकनाशनम् ॥ ६ ॥ दीपंददा
तियोनित्यंभास्करायतनेषुच ॥ चतुष्पथेषुतीर्थेषुरूपौजस्वीहजायते ॥ ७ ॥ यस्तुकारयतेदीपंरवेर्भक्तिसमन्वितः ॥ सकामानीप्सितान्प्रा
प्यवृंदारकपुरंव्रजेत् ॥ ८ ॥ यःसमालभतेसूर्यंचंदनागुरुकुंकुमैः ॥ कर्पूरेणविमिश्रैश्चतथाकस्तूरिकान्वितैः ॥ ९ ॥ शुभंकालंकोटिशतंवसे
त्यचभवालये ॥ पुनःसंजायतेभूमौराजराजोनसंशयः ॥ १० ॥ सर्वकामसमृद्धात्मासर्वलोकनमस्कृतः ॥ चंदनोदकमिश्रैश्चदत्त्वार्घ्यंकु
सुमैरवेः ॥ ११ ॥ सपुत्रपौत्रपत्नीकःस्वर्गलोकेमहीयते ॥ सुगंधोदकमिश्रैस्तुदत्त्वार्घ्यंकुसुमैरवेः ॥ १२ ॥ देवलोकेचिरंस्थित्वाराजाभव
तिभूतले ॥ सहिरण्येनचार्घ्येणरक्तोदकयुतेनवा ॥ १३ ॥ कोटीशतंतुवर्षाणांस्वर्गलोकेमहीयते॥पद्मैरभ्यर्चनंकृत्वारवेःस्वर्गगतोनरः ॥१४॥
पद्मंवसतिवर्षाणांस्त्रीपद्मशतसंवृतः ॥ गुग्गुलुंसघृतंदत्त्वारवेर्भक्तिसमन्वितः ॥ १५ ॥ तत्क्षणात्सर्वपापेभ्योमुच्यतेनात्रसंशयः ॥ पक्षंतुगुग्गु
लुंदत्त्वामुच्यतेब्रह्महत्यया ॥१६ ॥ संवत्सरेणलभतेअश्वमेधफलंशिव ॥ धूपेनलभतेस्वर्गंतुरुष्केणसुगंधिना ॥ १७ ॥ कर्पूरागुरुधूपेनराज
सूयफलंलभेत् ॥ पूर्वाह्णेमानवोभक्त्याश्रद्धयायोऽर्चयेद्रविम् ॥ १८ ॥ सततफलमवाप्नोतियद्दत्तेकपिलाशते ॥ मध्याह्नेयोऽर्चयेत्सूर्यंप्रयता
त्माजितेंद्रियः ॥ १९ ॥ लभतेभूमिदानस्यगोशतस्यचतत्फलम् ॥ पश्चिमायांतुसंध्यायांयोऽर्चयेद्भास्करंनरः ॥ २० ॥ शुचिःशुक्लांबरोष्णी
षीगोसहस्रफलंलभेत्॥अर्धरात्रेतुयोहेलिंभक्त्यासंपूजयेन्नरः ॥२१॥ जातिस्मरत्वमाप्नोतिकुलेजातोवृषान्वितः॥प्रदोषरात्रिवेलायांयःपूजयति
भास्करम् ॥२२॥ सगत्वासहसावीरक्रीडेत्सौमनसंक्षयम्॥दंडनायकवेलायांप्रभातसमयेपुनः ॥ २३ ॥ पूजयित्वारविंभक्त्याव्रजेदनिमिषाल
यम्॥एवंवेलासुसर्वासुअवेलासुचमानवः ॥२४ ॥ भक्त्यापूजयतेयोऽर्कमर्कपुष्पैःसमाहितः॥तेजसादित्यसंकाशोह्यर्कलोकेमहीयते ॥ २५ ॥
अयनेतूत्तरेसूर्यमथवादक्षिणायने ॥ पूजयेद्यस्तुवैभक्त्यासगच्छेत्कंजजालयम्॥२६॥तत्रस्थःपूज्यतेर्केशैःसर्वैःसुमनसैस्तथा॥गोपतिःपूज्यते



१ दिनान्येव–इ०पा० । २ देवतायतनेषु–इ०पा० । ३ धारयते–इ०पा० । ४ उषित्वा च–इ०पा० । ५ मम लोके–इ०पा० । ६ भक्त्या समाहितः–इ०पा० । ७ सामरसंक्षयम–इ०पा० । ८ देवैः–इ०पा० ।

यद्वद्गोपतिप्रमुखैःसुरैः॥२७॥विषुवेषूपरागेषुषडशीतिमुखेषुच ॥ पूजयित्वारविंभक्त्यानात्मानंशोचतेनरः ॥ २८॥ विंबुध्यवास्वयंत्रापियो
नमस्कुरुतेरविम् ॥ संतुष्टोभास्करस्तस्यगतिमिष्टांप्रयच्छति ॥ २९ ॥ कृशरापायसापूपपललोन्मिश्रमोदकैः ॥ बलिंकृत्वातुसूर्याय
सर्वकाममवाप्नुते ॥ ३० ॥ मोदकानांप्रदानेनपायसस्यचसुव्रत ॥ मधुमांसरसैश्चापिप्रीयतेऽतीवभास्करः ॥ ३१ ॥ घृतेनतर्पणंकृ
त्वासदास्निग्धोभवेन्नरः ॥ तर्पयित्वातुमांसेनसद्यःपापात्प्रमुच्यते ॥ ३२॥ घृतेनस्नपनंकृत्वाएकाहमुदयेरवेः ॥ गवांशतसहस्रस्यदत्तस्यफ
लमश्नुते ॥ ३३ ॥ गवांक्षीरेणसंतर्प्यपुंडरीकफलंलभेत् ॥ रसेनस्नापयेद्देवमश्वमेधफलंलभेत् ॥ ३४ ॥ सूर्यायतरुणींधेनुंगामेकांयः
प्रयच्छति ॥ कञ्जजामचलांप्राप्यपुनर्लैवपुरंव्रजेत् ॥ ३५ ॥ गोशरीरेतुरोमाणियावन्तित्रिपुरान्तक ॥ सतावद्वर्षकोटीस्तुलेखलो
केमहीयते ॥ ३६॥ गोशतंभानवेदत्वाराजसूयफलंलभेत् ॥ अश्वमेधफलंतस्ययःसहस्रंप्रयच्छति ॥ ३७ ॥ गुग्गुलुंदेवदारुंचदहेन्नित्यं
घृतस्रवम् ॥ आज्यधूमोहिदेवानांप्रकृत्यैवप्रियःसदा ॥ ३८ ॥ भेर्यादीनिचवाद्यानिशंखवेण्वादिकानिच ॥ येप्रयच्छंतिसूर्याययांतितेतद्
समंदिरम् ॥ ३९ ॥ वज्रमाहरतेयस्तुरवेर्भक्तिसमन्वितः ॥ तीर्थोदकमथैवान्यंसयातिविबुधालयम् ॥ ४० ॥ विमानैःस्त्रीशताकीर्णैः
क्रीडयित्वाचिरंनरः ॥ मानुषत्वमनुप्राप्यराजाभवतिधार्मिकः ॥ ४१ ॥ छत्रंध्वजंवितानंचपताकाश्चामराणिच ॥ हेमदंडानिवैदद्याद्रवेर्यो
भक्तिमान्नरः ॥ ४२ ॥ विमानेनसदिव्येनकिंकिणीजालमालिना ॥ सूर्यलोकमतोगत्वाभवत्यप्सरसांपतिः ॥ ४३ ॥ तत्रोष्यसुचि
रंकालंस्वर्गात्प्रत्यागतःपुनः ॥ मानुष्येजायतेराजासर्वराजनमस्कृतः ॥ ४४ ॥ दत्वावासांसिसूर्यायअलंकारांस्तथैवच ॥ क्रीडते
जनलोकस्थोयावदाभूतसंप्लवम् ॥ ४५ ॥ गीतवादित्रनृत्यैश्चकुर्याज्जागरणंरवेः ॥ गंधर्वाप्सरसांमध्येक्रीडतेसुचिरंनरः ॥ ४६ ॥ गंधैःपु
ष्पैस्तथापत्रैःस्तोत्रैर्वाविविधैस्तथा ॥ येस्तुवंतिरविंभक्त्यातेयांतिपतगालयम् ॥ ४७ ॥ उषःस्तुवंतियेसूर्यमुपगायंतितेसदा ॥ पा

---

१बिंबमध्यगतं देवम्-इ०पा० । २ प्रयत्नेन-इ०पा० । ३ मधुमांसातिवर्षेण-इ०पा० । ४ स्नपनं कृत्वा-इ०पा० । ५ तर्पणम्-इ०पा० । ६आज्यधूपः-इ०पा० ।

ठकाश्चारणाश्चैवसर्वेतेस्वर्गगामिनः ॥ ४८ ॥ अश्वयुक्तंयुगैर्युक्तंयोददातिरवेरथम् ॥ कांचनंवापिरौप्यंवामणिरत्नान्वितंशुभम्॥४९॥
सयानेनार्कवर्णेनकिंकिणीजालमालिना ॥ स्वर्गलोकमितोगत्वाक्रीडतेऽप्सरसासह ॥ ५० ॥ यस्तुदारुमयंकुर्याद्रवेरथमनुत्तमम् ॥
सयात्यर्कसवर्णेनविमानेनार्कमंडलम् ॥ ५१ ॥ यात्रांकुर्वीतेयेभानोर्नराःसंवत्सरादपि ॥ षण्मासान्वागणश्रेष्ठतेषांपुण्यफलंशृणु ॥५२॥ ष
ण्मासाद्वागणश्रेष्ठतेषांकर्मफलंशृणु॥ध्यानिनोयोगिनश्चैवप्राप्नुवंतिहियांगतिम्॥५३॥तांगतिंप्रतिपद्यंतेसूर्यवर्त्मावगाहिनः ॥रथंवहंतियेभानो
र्नराभक्तिसमन्विताः ॥ ५४ ॥ अरोगाश्चादरिद्राश्च जातौजातौभवंतिते ॥ कर्तारोरथयात्रायायेनराभास्करस्यतु ॥ ५५ ॥ यात्राभंगं
तुयोमोहात्क्रोधाद्वाकुरुतेनरः ॥ मंदेहास्तेनराज्ञेयाराक्षसाःपापकारिणः ॥ ५६ ॥ धनंधान्यंहिरण्यंवावासांसिविविधानिच ॥ येप्रयच्छं
तिसूर्यायतेयांतिपरमांगतिम् ॥ ५७ ॥ गावोवाथमहिष्योवागजानश्वांश्चशोभनान् ॥ यःप्रयच्छतिसूर्यायतस्यपुण्यफलंशृणु ॥ ५८ ॥
अक्षयंसर्वकामीयमश्वमेधफलंलभेत् ॥ सहस्रगुणितंतच्चदानमस्योपतिष्ठति ॥ ५९ ॥ महींददातियोऽर्कायकृष्टांफलवतींशुभाम् ॥
सतारयतिवैवंश्यान्दशपूर्वान्दशापरान्॥६०॥ विमानेनचदिव्येनगोपुरंगोपतेर्व्रजेत् ॥ क्रीडत्यप्सरसांमध्येकरिवकारिणीष्विव ॥६१॥ ग्रामं
ददातियोभक्त्यासूर्यायमतिमान्नरः ॥ विमानेनार्कवर्णेनसयातिपरमांगतिम् ॥ ६२ ॥ आरामान्येप्रयच्छंतिपत्रपुष्पफलोपगान् ॥
भानवेभक्तियुक्तास्तुतेयांतिपरमांगतिम् ॥ ६३ ॥ मानसंवाचिकंवापिकर्मजंयच्चदुष्कृतम् ॥ सर्वंसूर्यप्रसादेनअशेषंचप्रणश्य
ति ॥ ६४ ॥ आर्तोवाव्याधितोवापिदरिद्रोदुःखितोऽपिवा ॥ आदित्यंशरणंगत्वानात्मानंशोचतेनरः ॥ ६५ ॥ एकाहेनापियद्भा
नोःपूजायाःप्राप्यतेफलम् ॥ तद्वैक्रतुशतैरिष्टैःप्राप्यतेफलमुत्तमम् ॥ ६६ ॥ कृत्वाप्रेक्षणकंभानोर्दिव्यमायतनेशुभम् ॥ अक्षयंसर्व
कामीयंराजसूयफलंलभेत् ॥ ६७ ॥ वेश्याकदंबकंयस्तुदद्यात्सूर्यायभक्तितः ॥ सगच्छेत्परमंस्थानंयत्रातिष्ठतिभानुमान् ॥ ६८ ॥
पुस्तकंभानवेदद्याद्धारतस्यगणाधिप ॥ सर्वपापविमुक्तात्माविष्णुलोकेमहीयते[3] ॥ ६९ ॥ रामायणस्यदत्वातुपुस्तकंत्रिपुरांतक ॥ वाज

१ अंडजलोकस्थः-इ०पा० । २ शुभम्-इ०पा० । ३ विनयं यत्र तिष्ठाति-इ०पा० ।

पेयफलंप्राप्यगोपतेःपुरमाव्रजेत् ॥ ७० ॥ भविष्यंसांबसंज्ञंवादत्वासूर्यायपुस्तकम् ॥ राजसूयाश्वमेधाभ्यांफलंप्राप्नोतिमानवः ॥ ७१ ॥
सर्वान्कामानवाप्नोतियातिसूर्यसलोकताम् ॥ सूर्यलोकेचिरंस्थित्वाब्रह्मलोकंव्रजेत्पुनः ॥ ७२ ॥ स्थित्वाकल्पशतंतत्रराजाभवतिभूतले ॥
भानोरायतनेयस्तुप्रपांकुर्याद्गणाधिप ॥७३॥ सयातिपरमंस्थानंदिव्यंसौमनसंनरः ॥ शीतकालेधनंदद्यान्नराणांशीतनाशनम् ॥७४॥ भानो
रायतनेदेवअश्वमेधफलंलभेत् ॥ इतिहासपुराणाभ्यांपुण्यंपुस्तकवाचनम् ॥ ७५ ॥ अश्वमेधसहस्रंयोनित्यंकर्तुंप्रवर्तते ॥ नतत्फलमवाप्नो
तियदाप्नोत्यस्यकर्मणः॥७६॥तस्मात्सर्वप्रयत्नेनकार्यंपुस्तकवाचनम् ॥ इतिहासपुराणाभ्यांभानोरायतनेशुभम्॥७७॥नान्यत्तुष्टिकरंभानो
स्तथातुष्टिकरंपरम् ॥ पुण्याख्यानकथायास्तुयथाकरणमुत्तमम्॥७८॥इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेभानुमाहिमवर्णनंना
मत्रिनवतितमोऽध्यायः ॥ ९३ ॥ छ ॥ ब्रह्मोवाच ॥ ॥ अत्राख्यानमुशंतीहसंवादंगणपुंगव ॥ पितामहकुमाराभ्यांपुण्यंपापहरंशिवम् ॥१॥
स्रष्टारंसर्वलोकानांसुखासीनंपितामहम् ॥ प्रणम्यशिरसादेवंश्रद्धाभक्तिसमन्वितः ॥२॥ कुमारोदेवशार्दूलइदंवचनमब्रवीत् ॥ गतोऽहमद्यभ
गवन्द्रष्टुंदेवंदिवाकरम् ॥ ३ ॥ कृत्वाप्रदक्षिणंदेवःसमयापूजितोरविः ॥ प्रणम्यशिरसाभक्त्यापरयाश्रद्धयाविभो ॥ ४ ॥ अनुज्ञातस्ततस्ते
नसुखासीनोह्यहंस्थितः ॥ आसीनेनमयातत्रदृष्टमाश्चर्यमद्भुतम् ॥५॥ काञ्चनेनविमानेनकिंकिणीजालमालिना ॥ मणिमुक्ताविचित्रेणवैदूर्य
वरवेदिना ॥ ६ ॥ आगतंपुरुषंतत्रदृष्ट्वादेवोदि[1]वाकरः ॥ ससंभ्रमंसमुत्थायआसनादेवसत्तम ॥ ७ ॥ [2]गृहीत्वादक्षिणेपाणौपुरतःप्राप्यतंनरम्॥
शिरस्याघ्रायदेवेशपूजयामासवैरविः ॥ ८ ॥ उपविष्टंतुतंभानुरिदंवचनमब्रवीत् ॥ सुस्वागतंभद्रसुखकृताप्रीतास्त्वयावयम् ॥ ९ ॥ स
मीपेममतिष्ठत्वंयावदाभूतसंप्लवम् ॥ पुनर्यास्यसितत्स्थानंयत्रब्रह्मास्वयंस्थितः ॥ १० ॥ एतस्मिन्नंतरेचान्योविमानवरमास्थितः ॥ आ
गतःपुरुषोदेवोयत्रातिष्ठतिभास्करः ॥ ११ ॥ सचाप्येवंनरोदेवपूजितोभानुनातदा ॥ सामपूर्वंतथोक्तस्तुप्रश्रयावनतःस्थितः ॥ १२ ॥
तत्रमेकौतुकंजातंदृष्ट्वापूजांकृतांतयोः ॥ भानुनादेवशार्दूलपृष्टोभानुर्मयाततः ॥ १३ ॥ किमनेनकृतंदेवयोऽयंपूर्वमिहागतः ॥ नरस्तव

१ विभावसुः–इ०पा० । २ गृहीत्वा दक्षिणे पादे पुरतः स्थाप्य तं नरम्–इ०पा० ।

सकाशंवैयस्यतुष्टोभवान्भृशम्॥१४॥यदस्यभवतापूजाकृताहिस्वयमेवतु॥अत्रमेकौतुकंजातंविस्मयश्चविशेषतः॥१५॥तथैवास्यकृतापूजा
द्वितीयस्यनरस्यच ॥ सर्वथापुण्यकर्माणाविमौनरवरोत्तमौ ॥१६॥ ब्रह्मविष्णुशिवाद्यैस्तुपूज्यतेभगवान्स्सदा ॥यस्त्वमाभ्यांपरंपूजांकृतवा
न्देवसत्तम ॥ १७ ॥ कथ्यतांममदेवेशाकिमेतौकर्मचक्रतुः ॥ यस्येदृक्परमपुण्यंफलंदिव्यमवापतुः ॥ १८ ॥ श्रुत्वातद्वचनंदेवइदंवचनमब्र
वीत् ॥ सूर्यउवाच ॥ साधुपृष्टोऽस्मिभवताकर्मणोनिर्णयंपरम् ॥ १९ ॥ यदनेनकृतंकर्मनरेणमुनिसत्तम ॥ योऽसौसूर्यमिहायातस्तच्छृणु
ष्वमहामते ॥ २० ॥ येयंमदंशसंभूतैःपार्थिवैःपालितासदा ॥ अयोध्यानामनगरीप्रख्यातापृथिवीतले ॥ २१ ॥ तत्रासौवैश्यजातीयोधनपा
लइतिस्मृतः ॥ तस्यांपुर्यांद्विजश्रेष्ठादेव्यमायतनंव्यधात् ॥२२ ॥ तस्मिन्नायतनेदिव्येह्याम्नायार्थतथाश्रितः ॥ ब्राह्मणानांविशिष्टानांपूजयि
त्वाकदंबकम् ॥ २३ ॥ इतिहासपुराणाभ्यांवाचकंचविशेषतः ॥ पूजयित्वाद्विजश्रेष्ठंमुनिश्रेष्ठंमहामुनिम् ॥ २४ ॥ पुस्तकंचापिसंपूज्यगंध
पुष्पोपहारतः ॥ तस्यविप्रकदंबस्यव्यासस्यचयथाग्रतः ॥ २५ ॥ प्रकल्प्योक्तोद्विजोऽनेनपाठकोवाचकोत्तमः॥ एषतिष्ठतिदेवेशःसहस्राकि
रणोरविः ॥ २६ ॥ चातुर्वर्ण्यमिदंवापिश्रोतुकामंकदंबकम् ॥ तिष्ठचेहद्विजश्रेष्ठकुरुपुस्तकवाचनम् ॥ २७ ॥ येनमेवरदोभानुःसप्तजन्मा
निवैभवेत् ॥ यावत्संवत्सरंविप्रप्रगृह्यवृत्तिमुत्तमाम् ॥ २८ ॥ स्वर्णनिष्कशतंविप्रततोदास्येतथापरम् ॥ पूर्णेवर्षेद्विजश्रेष्ठश्रेयोऽर्थमह
मात्मनः ॥ २९ ॥ एवंप्रवर्ततेतस्मिन्पुण्येपुस्तकवाचनम् ॥ षण्मासागतमात्रेतुकालेमुनिवरोत्तम ॥ ३० ॥ तथैवान्तरतश्चायंकालधर्ममुपे
यिवान् ॥ मयाचास्यविमानंतुप्रेषितंकुर्वतोव्रतम् ॥ ३१ ॥ इत्येषाकर्मणस्तुष्टिःपुण्याख्यानकसंज्ञिता ॥ गंधपुष्पोपहारैस्तुनतथाजायते
मम ॥३२॥ प्रीतिर्द्विजवरश्रेष्ठपुराणश्रवणेयथा ॥ गोसुवर्णहिरण्यानांवस्त्राणांचापिकृत्स्नशः ॥३३॥ ग्रामाणांनगराणांचदानंप्रीतिकरंमम ॥
नतथास्याद्विजश्रेष्ठयथाप्रीतिकरंमुने ॥ ३४ ॥ इतिहासपुराणाभ्यांश्रवणंमुनिसत्तम ॥ श्राद्धंकुर्वंतियेमह्यंभक्ष्यभोज्यैरनेकशः ॥ ३५ ॥
नकुर्वंतितथाप्रीतिर्यथापुस्तकवाचनम् ॥ कर्णश्राद्धेतथाप्रीतिर्ममस्याद्विजसत्तम ॥ ३६ ॥ नतथाजायतेप्रीतिर्भोज्यश्राद्धेतथैवच ॥

१ मम–इ०पा०। २ वाचकः–इ०पा०। ३ देवः–इ०पा०। ४ मुनिश्रेष्ठ–इ०पा०।

अथाकिंबहुनोक्तेननान्यत्प्रीतिकरंमम ॥ ३७ ॥ पुण्याख्यानमृतेविप्रगुह्यमेतत्प्रकीर्तितम् ॥ यश्चायमपरोविप्रइहायातोनरोत्तमः ॥ ३८ ॥
अयमासीद्द्विजश्रेष्ठस्तस्मिन्नेवपुरोत्तमे ॥ एकदातुगतश्चायंधर्मश्रवणमुत्तमम् ॥ ३९ ॥ श्रोतुंभक्त्याद्विजश्रेष्ठश्रद्धयापरयावृतः ॥ श्रुत्वातत्र
त भक्त्यापुण्याख्यानमनुत्तमम् ॥ ४० ॥ कृत्वाप्रदक्षिणंतस्यवाचकस्यमहात्मनः ॥ एषविप्रोद्विजश्रेष्ठदत्तवान्स्वर्णमाषकम् ॥ ४१ ॥
दत्वातुदक्षिणांतस्मैवाचकायामितौजसे ॥ आनंदमगमाद्विप्रःप्रातवान्कांचनांस्तथा ॥ ४२ ॥ एतद्विसफलंचास्यनचान्यत्कृतवानयम् ॥
यदनेनकृतापूजावाचकस्यमहात्मनः ॥ ४३ ॥ फलंहिकर्मणातस्ययन्मयापूजितःस्वयम् ॥ वाचकंपूजयेद्यस्तुश्रद्धाभक्तिसमन्वितः ॥
॥ ४४ ॥ तेनाहंपूजितःस्यांवैकोविष्णुःशंकरस्तथा ॥ वाचकंभोजयेद्यस्तुभक्त्याभोज्यैरनुत्तमैः ॥ ४५ ॥ तेनाहंपूजितःस्यांवैदशवर्षा
णिपंचच ॥ नयमोनयमीचापिनमंदोनमनुस्तथा ॥ ४६ ॥ तपतीनतथान्विष्टोयथेष्टोवाचकोमम ॥ वाचकेसत्कृतेदेवभोजितेमु
निसत्तम ॥ ४७ ॥ तृप्तिर्भवतिमेविप्रसंवत्सरशतद्वयम् ॥ नकेवलंममप्रीतिर्वाचकेभोजितेभवेत् ॥ ४८ ॥ कृत्स्नशोदेवतानांच
इंद्रादीनांतथाभवेत् ॥ ब्रह्मविष्णुशिवादीनांसचेष्टोवाचकोमम ॥ ४९ ॥ प्रीतेतस्मिन्देवताःस्युःसर्वाःप्रीतानसंशयः ॥ इत्येतत्कथितंसर्वमा
भ्यांकर्ममहामुने ॥ ५० ॥ नचान्यच्चक्रतुःकर्मकिमन्यच्छ्रोतुमिच्छसि ॥ एतद्दृष्ट्वाहमाश्चर्यंतवाभ्याशमिहागतः ॥ ५१ ॥ किमत्रत
थ्यंदेवेशकथ्यतांकौतुकंमम ॥ ब्रह्मोवाच ॥ श्रुत्वाकुमारवचनंसर्वलोकपितामहः ॥ ५२ ॥ हंतभोःसाधुपुण्योऽसिनास्तितुल्यस्त्व
यापरः ॥ यद्दृष्टौभवतातौहिसुपुण्यौपुण्यकारिणौ ॥ ५३ ॥ यदुक्तंभानुनावत्सतत्तथानान्यथाभवेत् ॥ यदासीन्मेमुखंपुत्रप्रथमं
लोकपूजितम् ॥ ५४ ॥ तस्मादेतानिसर्वाणिनिर्गतानिसमंततः ॥ इतिहासपुराणानिलोकानांहितकाम्यया ॥ ५५ ॥ यथैतानिममेष्टा
निपुराणानिमहामुने ॥ नतथावैचतुर्वेदीनचांगानिमहामुने ॥ ५६ ॥ शृण्वंत्येतानियेभक्त्यानित्यंश्रद्धासमन्विताः ॥ दत्वानुवाचके
वृत्तिंतेगच्छंतिपरंपदम् ॥ ५७ ॥ धर्मार्थकाममोक्षाणांस्पष्टीकरणमुत्तमम् ॥ इतिहासपुराणानिमयासृष्टानिसुव्रत ॥ ५८ ॥ यएतेच

१ महात्मने–इ०पा० ।

तुरोवेदागूढार्थाःसततंस्मृताः ॥ अतस्त्वेतानिसृष्टानिबोधायैषांमहामुने ॥ ५९ ॥ यस्तुकारयतेनित्यंधर्मश्रवणमुत्तमम् ॥ आदित्याद्भा
स्करंप्राप्ययातितत्परमंपदम् ॥ ६० ॥ दत्वातुदक्षिणांतत्रआदित्यस्यपुरंव्रजेत् ॥ किमाश्चर्यंद्विजश्रेष्ठदानपात्रंहितत्परम् ॥ ६१ ॥ यथा
देववरोलेखस्तथाहोतिपरंपविः ॥ ब्राह्मणानांतथाश्रेष्ठोवाचकोनात्रसंशयः ॥ ६२ ॥ हेतिर्यथातेजसांतुसरसांकलशोयथा ॥ तथासर्वद्वि
जेभ्यस्तुवाचकःप्रवरःस्मृतः ॥ ६३ ॥ वाचकंपूजयेद्यस्तुनरोभक्तिपुरःसरः ॥ पूजितंसकलंतेनजगत्स्यान्नात्रसंशयः ॥ ६४ ॥ सत्यमु
क्तंनसंदेहोभानुनामत्कुलोद्वह ॥ वाचकेनसमंपात्रंनजात्वन्यद्भवेत्कचित् ॥ ६५ ॥ तच्छ्रुत्वाब्रह्मणोवाक्यंकुमारोवाक्यमब्र
वीत् ॥ ६६ ॥ अहोहिधन्यतातस्यपुण्यश्रवणकारिणः ॥ दानंचददतोऽत्यर्थंपुण्यतावाचकायवै ॥ ६७ ॥ ब्रह्मोवाच ॥ इत्थंदिंडेसदा
यस्तुदेवदेवस्यमंदिरे ॥ यःकुर्याद्धर्मश्रवणंसयातिपरमांगतिम् ॥ ६८ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेपुण्यश्रवणमा
हात्म्यवर्णनंनामचतुर्नवतितमोऽध्यायः ॥ ९४ ॥ छ ॥ ब्रह्मोवाच ॥ त्रिभिःप्रदक्षिणांकृत्वायोनमस्कुरुतेरविम् ॥ भूमौगतेनाशिरसा
सयातिपरमांगतिम् ॥ १ ॥ सोपानत्कोदेवगृहमारुहेद्यस्तुमानवः ॥ सयातिनरकंघोरंतामिस्रंनामनामतः ॥ २ ॥ श्लेष्ममूत्रपुरीषा
णिसमुत्सृजतियस्तुवै ॥ देवस्यायतनेभानोःसगच्छेन्नरकंक्रमात् ॥३॥ घृतंमधुपयस्तोयंतथेक्षुरसमुत्तमम्॥स्नपनार्थंतुदेवस्ययेददतिहमा
नवाः ॥ ४ ॥ सर्वकामानवाप्येहतेयांतिहेलिमंडलम् ॥ स्नाप्यमानंरविंभक्त्यायेपश्यंतिवृषध्वजम् ॥ ५ ॥ तेश्वमेधफलंप्राप्यल
यंयांतिवृषध्वजे ॥ स्नपनंयेचकुर्वंतिभानोर्भक्तिसमन्विताः ॥ ६ ॥ लभंतेतत्फलंभीमराजसूयाश्वमेधयोः ॥ यथानलंघये
त्काश्चित्स्नपनंभास्करस्यतु ॥ ७ ॥ तथाकार्यंप्रयत्नेनलंघितंह्यसुखावहम् ॥ तामिस्रंनरकंयातिलंघयेच्चसरौरवान् ॥ ८ ॥
तस्मात्सर्वप्रयत्नेनकार्यंस्नपनमादितः ॥ घृतेनस्नापयेद्देवंकंजमाप्नोतिमानवः ॥ ९ ॥ मधुनाप्रियमायातितोयेनापिघृतौकसम् ॥ इक्षुरसेनसं
स्नाप्यपयसाकंजजध्वजम् ॥ १०॥ एवमेभिःस्नापयेद्यैरविमीहितमाप्नुयात् ॥ ११ ॥ इतिश्रीभविष्येमहापुराणेसप्तमीकल्पेआदित्यालयमाहा
त्म्यवर्णनंनामपंचनवतितमोऽध्यायः ॥ ९५ ॥ छ ॥ दिंडिरुवाच ॥ ॥ यश्चैताःसततसतम्योभवताकथितामम ॥ तासांयाप्रथमादेवकथि

तासासविस्तरा ॥ १ ॥ यास्त्वन्यादेवशार्दूलताःसर्वाःकथयस्वमे ॥ येनोपोष्यततस्तास्तुव्रजेहंहोलिसद्मवै ॥ २ ॥ ब्रह्मोवाच ॥ ॥
शुक्लपक्षस्यसप्तम्यांनक्षत्रंपंचतारकम् ॥ यदास्यात्सातदाज्ञेयाजयानामेतिसप्तमी ॥ ३ ॥ तस्यांदत्तंहुतंजप्तंतर्पणंदेवपूजनम् ॥ सर्वंशत
गुणंप्रोक्तंपूजाचापिदिवाकरे ॥ ४ ॥ भास्करस्यप्रियाह्येषासप्तमीपापनाशिनी ॥ धन्यायशस्यापुत्र्याचकामदाकंजजावहा ॥ ५ ॥ विधि
नानेनकर्तव्यातिथिर्यामसमाविद्यते ॥ तंशृणुष्वविधिंमत्तोयेनकृत्वार्थमश्नुते ॥ ६ ॥ हंसेहंससमारूढेशुक्लेयंसप्तमीपुरा ॥ समुपोष्यचकर्तव्या
विधिनानेनशंकर॥७॥पारणातृतीयाऽहेस्यात्कथितंगोवृषावहम्॥प्रथमंचतुरोमासान्पारणंकथितंबुधैः॥८॥कथितान्यत्रपुष्पाणिकरवीरस्यसु
व्रत ॥ चंदनंचतथारक्तंधूपार्थंगुग्गुलंपरम् ॥९॥ कांसारंतुसुपक्वंचनैवेद्यंभास्करायवै ॥ अनेनाविधिनापूज्यमार्तंडंविबुधाधिपम् ॥१०॥ पूजये
द्ब्राह्मणान्भीमभक्ष्यभोज्यैर्यथाविधि॥कांसारंभोजयेद्विप्रान्पारणेऽस्मिन्विचक्षणः॥११॥स्वयमेवतथाश्नीयात्प्रयतोमौनमाश्रितः॥पंचम्यामेक
भक्तंतुषष्ठ्यांनक्तंप्रवर्तते॥१२॥कृत्वोपवासंसप्तम्यामष्टम्यांपारणंभवेत्॥षष्ठ्यासमेताकर्तव्यानाष्टम्येयंकदाचन ॥१३॥यस्योपवासनायैवष
ष्ठ्यामाहुरुपोषितम् ॥ यथैकादश्यांकुर्वंतिउपवासंमनीषिणः ॥ १४ ॥ उपवासनायद्वादश्यांयथेयंपरिकीर्तिता ॥ सिद्धार्थकैःस्नानमंत्रःप्रा
शनंगोमयस्यतु ॥ १५ ॥ भानुर्मेप्रीयतामत्रदंतकाष्ठंतथार्कजम् ॥ इत्येषकथितस्तातप्रथमेपारणेविधिः ॥ १६ ॥ द्वितीयंश्रूयतांभीमपारणं
गदतोमम ॥ मालतीकुसुमानीहश्रीखण्डंचंदनंतथा ॥१७॥ नैवेद्यंपायसंभानोर्धूपंविजयमादिशेत्॥ब्राह्मणान्भोजयेद्वापितथाश्नीयात्स्वयंवि
भोः ॥ १८ ॥ रविर्मेप्रीयतामत्रनामदेवस्यकीर्तयेत् ॥ प्राशयेत्पंचगव्यंतुखादिरंदंतधावने ॥ १९ ॥ द्वितीयेपारणेवीरविधिरुक्तोमयाधुना ॥
तृतीयेपारणेवापिकथ्यमानंनिबोधमे ॥ २० ॥ अगस्तिकुसुमैरत्रभास्करंपूजयेद्बुधः ॥ समालंभनमत्रोक्तंश्रीखंडंकुसुमंतथा ॥ २१ ॥ सि
ह्लकंधूपमुद्दिष्टंभानोःप्रीतिकरंपरम् ॥ शाल्योदनंतुनैवेद्यंरसालोपरिसंयुतम् ॥ २२ ॥ ब्राह्मणानांतुदातव्यंभक्षयीततथात्मना ॥ कुशोद
कप्राशनंतुवदर्यादंतधावनम् ॥ २३ ॥ विकर्तनःप्रीयतांमेनामदेवस्यकीर्तयेत् ॥ वर्षासुदेवदेवस्यपूजाकार्याविधानतः ॥ २४ ॥ गंधपु
ष्पोपहारैस्तुनानाप्रेक्षणकैस्तथा ॥ गोदानैर्भूमिदानैर्वाब्राह्मणानांचतर्पणैः॥२५॥इत्थंसंपूज्यदेवेशंदेवस्यपुरतःस्थितः ॥ कारयेत्परमंपुण्यं

धन्यंपुस्तकवाचनम् ॥ २६ ॥ वस्त्रैर्गंधैस्तथाधूपैर्वाचकंपूजयेत्ततः ॥ देवस्यपुरतःस्थित्वाततोमंत्रमुदीरयेत् ॥ २७ ॥ देवदेवजगन्नाथसर्व
रोगार्तिनाशन ॥ ग्रहेशलोकनयनविकर्तनतमोऽपह ॥२८॥ कृतेयंदेवदेवेशजयानामेतिसप्तमी ॥ मयातवप्रसादेनधन्यापापहराशिवा॥२९॥
अनेनविधिनावीरयःकुर्यात्सप्तमीमिमाम् ॥ तस्यस्नानादिकंसर्वंभवेच्छतगुणंविभो ॥ ३० ॥ कृत्वेमांसप्तमींवीरपुरुषःप्राप्नुतेयशः ॥ धनं
धान्यंसुवर्णंचपुत्रमायुर्बलंश्रियम् ॥३१॥ प्राप्येहदेवशार्दूलसूर्यलोकंसगच्छति॥तस्मादेत्यपुनर्भूमौराजराजोभवेद्बुधः ॥३२॥इत्येषाकथिता
वीरजयानामेतिसप्तमी ॥ कृतास्मृताश्रुतासातुहेलिलोकप्रदायिनी ॥ ३३ ॥ इतिश्रीभविष्येमहापुराणेसप्तमीकल्पेजयानामसप्तमीमाहात्म्य
वर्णनंनामषण्णवतितमोऽध्यायः ॥ ९६ ॥ छ ॥ ब्रह्मोवाच ॥ ॥ माघस्यशुक्लपक्षेतुसप्तमीयात्रिलोचन ॥ जयंतीनामसाप्रोक्तापुण्यापापहरा
शिवा ॥ १ ॥ सोपोष्यायेनविधिनाशृणुतत्पार्वतीप्रिय ॥ पारणानितुचत्वारिकथितान्यत्रपंडितैः ॥ २ ॥ पंचम्यामेकभक्तंतुषष्ठ्यांनक्तंप्र
कीर्तितम् ॥ उपवासस्तुसप्तम्यामष्टम्यांपारणंभवेत् ॥ ३ ॥ माघेचफाल्गुनेमासितथाचैत्रेचसुव्रत ॥ बकपुष्पाणिरम्याणिकुंकुमंचविलेप
नम् ॥४ ॥ नैवेद्यंमोदकांश्चात्रधूपमाज्यमुदाहृतम् ॥ प्राशनंपंचगव्यंतुपवित्रीकरणंपरम् ॥५॥ मोदकैर्भोजयेद्विप्रान्यथाशक्त्यागणाधिप ॥
शाल्योदनंचभूतेशदद्याच्छक्त्याद्विजेषुवै ॥६ ॥ इत्थंसंपूजयेद्यस्तुभास्करंलोकपूजितम् ॥ सर्वस्मिन्पारणेवीरसोऽश्वमेधफलंलभेत् ॥ ७ ॥
द्वितीयेपारणेपूज्यराजसूयफलंलभेत् ॥ वैशाखाषाढज्येष्ठेषुश्रावणेमासिसुव्रत ॥ ८ ॥ पूजार्थमथभानोर्वैशतपत्राणिसुव्रत ॥ श्वेतंचचंदनं
भीमधूपंगुग्गुलमुच्यते ॥ ९ ॥ नैवेद्यंगुडपूपास्तुप्राशनंगोमयस्यतु ॥ भोजनेचापिविप्राणांगुडपूपाःप्रकीर्तिताः ॥१० ॥ द्वितीयमिदमाख्या
तंपारणंपापनाशनम् ॥ राजसूयाश्वमेधाभ्यांफलदंभास्करप्रियम् ॥ ११॥ तृतीयंशृणुदेवस्यपूजार्थंभास्करस्यतु ॥ मासिभाद्रपदेवीरतथा
चाश्वयुजेविभो ॥१२॥ कार्तिकेचापिमासेतुरक्तचंदनमादिशेत् ॥ मालतीकुसुमानीहधूपंविजयमुच्यते ॥ १३ ॥ नैवेद्यंघृतपूपास्तुभोजनं
चद्विजन्मनाम् ॥ कुशोदकप्राशनंतुकायशुद्धिकरंपरम् ॥१४॥ तृतीयमपिचाख्यातंपारणंपापनाशनम्॥राजसूयाश्वमेधाभ्यांफलदंभास्कर
प्रियम् ॥१५ ॥ चतुर्थमपितेवच्मिपारणंपापनाशनम् ॥ राजसूयाश्वमेधाभ्यांफलदंभास्करप्रियम् ॥ १६ ॥ तदद्यदेवशार्दूलपारणंश्रेयसे

शृणु ॥ मासिमार्गशिरेवीरपौषेमासितथाशिव ॥ १७ ॥ माघेचदेवशार्दूलशृणुपुण्यान्यशेषतः ॥ करवीराणिरक्तानितथारक्तंचचंदनम्
॥ १८ ॥ अमृताख्यंतथाधूपंनैवेद्यंपायसंपरम् ॥ आर्जनीयंतथातक्रंप्राशनंपरमंस्मृतम् ॥ १९ ॥ अगरुंचंदनंमुस्तंसिह्लकंचूषणंतथा ॥
समभागैस्तुकर्तव्यमिदंचामृतमुच्यते ॥ २० ॥ नामानिकथितान्यत्रभास्करस्यमहात्मनः ॥ चित्रभानुस्तथाभानुरादित्योभास्करस्तथा
॥ २१ ॥ प्रीयतामितिसर्वेषुपारणेविधिमादिशेत् ॥ अनेनविधिनायस्तुकुर्यात्पूजांविभावसोः ॥२२॥ तस्यांतिथौदेवदेवसयातिपरमंपदम्॥
कृत्वैवंसप्तमींभीमसर्वकामानवाप्नुते ॥ २३ ॥ पुत्रार्थीलभतेपुत्रान्धनार्थीलभतेधनम् ॥ सरोगोमुच्यतेरोगैः शुभमाप्नोतिपुष्कलम् ॥ २४ ॥
पूर्णेसंवत्सरेभीमकार्यापूजादिवाकरे ॥ गंधपुष्पोपहारैस्तुब्राह्मणानांचतर्पणैः ॥ २५ ॥ नानाविधैः प्रेक्षणकैः पूजयावाचकस्यतु ॥
इत्थंसंपूज्यदेवेशंब्राह्मणांश्चाभिपूज्यच ॥ २६ ॥ वाचकंचद्विजंपूज्यइदंवाक्यमुदीरयेत् ॥ धर्मकार्येषुमेदेवअर्थकार्येषुनित्यशः ॥ २७ ॥
कामकार्येषुसर्वेषुजयोभवतुसर्वदा ॥ ततोविसर्जयेद्विप्रान्वाचकंतुद्विजोत्तमम् ॥ २८ ॥ इत्थंकुर्यादिदंयस्तुसजयंप्राप्नुतेफलम् ॥ सर्व
पापविशुद्धात्मासूर्यलोकंसगच्छति ॥ २९ ॥ विमानवरमारूढःकंजजोद्भवमुत्तमम् ॥ तेजसारविसंकाशःप्रभयापतगोपमः ॥ ३० ॥
इतिश्रीभविष्येमहापुराणेजयंतीकल्पवर्णनंनामसप्तनवतितमोऽध्यायः ॥९७॥ छ ॥ब्रह्मोवाच ॥ मासिभाद्रपदेशुक्लासप्तमीयागणाधिप॥अपरा
जितेतिविख्यातामहापातकनाशिनी ॥ १ ॥ चतुर्थ्यामेकभक्तंतुपंचम्यांनक्तमादिशेत् ॥ उपवासंतथाषष्ठ्यांसप्तम्यांपारणंस्मृतम् ॥ २ ॥
पारणान्यत्रचत्वारिकथितानिमनीषिभिः ॥ पुष्पाणिकरवीरस्यतथारक्तंचचंदनम् ॥ ३ ॥ धूपक्रियागुग्गुलेननैवेद्यंगुडपूपकान् ॥
भाद्रपदादिमासेषुविधिरेषप्रकीर्तितः ॥ ४ ॥ श्वेतानिभीमपुष्पाणितथाश्वेतंचचंदनम् ॥ धूपमाज्यमिहाख्यातंनैवेद्यंपायसंरवेः ॥ ५ ॥
मार्गशीर्षादिमासेषुविधिरेषप्रकीर्तितः ॥ ततोऽगस्त्यस्यपुष्पाणिकुंकुमंचविलेपनम् ॥ ६ ॥ धूपार्थंसिल्हकंप्रोक्तमथवारविवर्णकम् ॥
शाल्योदनंचनैवेद्यंसरसंफाल्गुनादिषु ॥ ७ ॥ रक्तोत्पलानिभूतेशसागुरुंचंदनंतथा ॥ अनंतंधूपमुद्दिष्टंनैवेद्यंखंडपूपकान् ॥ ८ ॥
श्रीखंडंग्रंथिसहितमगुरुंसिल्हकंतथा ॥ मुस्तांतथेंद्रभूतेशशर्करागृह्यतेत्र्यहम् ॥ ९ ॥ इत्येषधूपोऽनंतस्तुकथितोदेवसत्तम ॥ ज्येष्ठा

दिमासेषुतथाविधिरुक्तोमनीषिभिः ॥ १० ॥ शृणुनामानिदेवस्यप्राशनानिचसुव्रत ॥ सुधांशुरर्यमाचैवसवितात्रिपुरांतक ॥ ११ ॥
पारणेष्वेवसर्वेषुप्रीयतामितिकीर्तयेत् ॥ गोमूत्रंपंचगव्यंतुघृतंचोष्णंपयोदधि ॥ १२ ॥ यस्त्वेतांसप्तमींकुर्यादनेनविधिनानरः॥ अपराजितो
भवेत्सोहिसदाशत्रुभिराहवे ॥ १३ ॥ जित्वाशत्रुंलभेच्चापित्रिवर्गंनात्रसंशयः ॥ त्रिवर्गमथसंप्राप्यस्वर्भानोःपुरमश्नुते ॥ १४ ॥
ततःपूर्णेषुमासेषुपूजयेच्छक्तितःखगम् ॥ गंधपुष्पोपहारैस्तुपुराणश्रवणेनच ॥ १५ ॥ अश्वदानेनचविभोर्ब्राह्मणानांच
तर्पणैः ॥ वाचकंपूजयित्वाचभास्करस्यप्रियंसदा ॥ १६ ॥ भास्करायध्वजान्दद्यान्नानारत्नविभूषितान् ॥ यइत्थंकुरुतेवीरस
प्तमींयत्नतःसदा ॥ १७ ॥ सपराजित्यवैशत्रुंयातिहंससलोकताम् ॥ १८ ॥ शुक्लाश्वोद्वययानेनआपगेनपताकिना ॥ आपगाधिपसं
काशआपगानुचरोभवेत् ॥ १९ ॥ इति श्रीभविष्येमहापुराणेसप्तमीकल्पेअपराजितावर्णनंनामाष्टनवतितमोऽध्यायः ॥ ९८ ॥ छ ॥ ब्र
ह्मोवाच ॥ ॥ शुक्लपक्षेतुसप्तम्यांयदासंक्रमतेरविः ॥ महाजयातदासावैसप्तमीभास्करप्रिया ॥ १ ॥ स्नानंदानंजपोहोमःपितृदेवाभिपू
जनम् ॥ सर्वंकोटिगुणंप्रोक्तंभास्करस्यवचोयथा ॥ २ ॥ यस्तस्यांमानवोभक्त्याघृतेनस्नापयेद्रविम् ॥ सोऽश्वमेधफलंप्राप्यस्वर्गलोकमवा
प्नुयात् ॥ ३ ॥ पयसास्नापयेद्यस्तुभास्करंभक्तिमान्नरः ॥ विमुक्तःसर्वपापेभ्योयातिसूर्यसलोकताम् ॥ ४ ॥ कार्पूरेणविमानेनकिंकिणी
जालमालिना ॥ तेजसाहरिसंकाशःकांत्यासूर्यसमस्तथा ॥ ५ ॥ स्थित्वातत्रचिरंकालंराजाभवतिचांजसा ॥महाजयैषाकथितासप्तमीत्रिपुरां
तक ॥ ६ ॥ यामुपोष्यनरोभक्त्याभवतेसूर्यलोकगः ॥ ततोयातिपरंब्रह्मयत्रगत्वानशोचति ॥ ७ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्व
णिसप्तमीकल्पेमहाजयाकल्पवर्णनंनामैकोनशततमोध्यायः ॥ ९९ ॥ छ ॥ ब्रह्मोवाच ॥ यातुमार्गशिरेमासिशुक्लपक्षेतुसप्तमी ॥ नंदासाक
थितावीरसर्वानंदकरीशुभा ॥ १ ॥ पंचम्यामेकभक्तंतुषष्ठ्यांनक्तंप्रकीर्तितम् ॥ सप्तम्यामुपवासंतुकीर्तयंतिमनीषिणः ॥ २ ॥ पारणान्यत्र
वैत्रीणिशंसंतिहमनीषिणः ॥ मालतीकुसुमानीहसुगंधंचंदनंतथा ॥ ३ ॥ कर्पूरागरुसंमिश्रंधूपंचात्रविनिर्दिशेत् ॥ दध्योदनंसखंडंचनैवेद्यं
भास्करप्रियम् ॥ ४ ॥ तमेवदद्याद्विप्रेभ्योऽश्नीयाच्चतदनुस्वयम् ॥ धूपार्थंभास्करस्यैषप्रथमेपारणेविधिः ॥ ५ ॥ पलाशपुष्पाणिविभो

धूपंयच्छक्ययमेवच ॥ कर्पूरंचंदनंकुष्ठमगरुंसिह्लकंतथा ॥ ६ ॥ सग्रंथिवृषणंभीमकुंकुमंगृंजनंतथा ॥ हरीतकीतथाभीमएषपक्षकउ
च्यते ॥ ७ ॥धूपंप्रबोधमादेष्टंनैवेद्यंखंडमंडकान् ॥ कृष्णागरुंसितंकंजवालकंवृषणंतथा ॥ ८ ॥ चंदनंतगरंमुस्तांप्रबोधशर्करान्विताम् ॥
भोजयेद्ब्राह्मणांश्चापिखंडखाद्यैर्गणाधिप ॥ ९ ॥ निंबपत्रंतुसंप्राश्यततोभुंजीतवाग्यतः ॥ पारणस्यद्वितीयस्याविधिरेषप्रकीर्तितः॥१०॥नीलो
त्पलानिशुभ्राणिधूपंगुग्गुलमाहरेत् ॥ नैवेद्यंपायसंदेयंप्रीतयेभास्करस्यतु ॥११॥ विलेपनंचंदनंतुप्राशनेविधिरुच्यते ॥ तृतीयस्यापितेवी
रकथितोविधिरुत्तमः ॥१२॥ शृणुनामानिदेवस्यपावनानिनृणांसदा ॥ विष्णुर्भगस्तथाधाताप्रोक्तामुद्भिरेच्चवै ॥१३॥ अनेनविधिनायस्तु
कुर्यात्प्रयतमानसः ॥ सकामानिहसंप्राप्यनंदतेशाश्वतीःसमाः ॥ १४ ॥ ततःसूर्यसदोगत्वानंदतेनंदवर्धन ॥ एषातुनंदजननीतवाख्याताम
याशिव ॥ १५ ॥ यामुपोष्यततोभुक्त्वानंदतेहंसमाप्यवै ॥ १६ ॥ इतिश्रीभाविष्येमहापुराणेसप्तमीकल्पेनंदानामसप्तमीवर्णनंनामश
ततमोऽध्यायः ॥ १०० ॥छ॥ ॥ब्रह्मोवाच ॥ ॥ शुक्लपक्षेतुसप्तम्यांनक्षत्रंसवितुर्भवेत् ॥ यदाप्रथमताचैवतदावैभद्रतांव्रजेत् ॥ १ ॥
स्नपनंतत्रदेवस्यघृतेनकथितंबुधैः ॥ क्षीरेणचतथावीरपुनरिक्षुरसेनच ॥ २ ॥ स्नापयित्वातुदेवेशंचंदनेनविलेपयेत् ॥ दग्ध्वातुगुग्गुलं
तस्यदद्याद्भद्रंतथाग्रतः ॥ ३ ॥ गोधूमचूर्णनिवपान्विमलंशशिसन्निभम् ॥ सवज्रंसगुडंचैवरक्तपुष्पोपशोभितम् ॥ ४ ॥ यदस्यशृंगमो
शानंतत्रवैमौक्तिकंन्यसेत् ॥ यदाग्नेयंतत्रमाणिक्यंन्यसेद्वालोहितंमणिम् ॥ ५ ॥ नैर्ऋत्येमकरंदद्याद्वायव्येपद्मरागिणम् ॥ गांगेयमंतत
स्तस्यस्वशक्त्याविन्यसेद्बुधः ॥ ६ ॥ चतुर्थ्यामेकभक्तंतुपंचम्यांनक्तमादिशेत् ॥ षष्ठ्यामयाचितंप्रोक्तमुपवासमतःपरम् ॥ ७ ॥ पाषंडि
नोविकर्मस्थान्बैडालव्रतिकांत्यजान् ॥ सप्तम्यांपालयेत्प्राज्ञोदिवास्वापंविवर्जयेत् ॥ ८ ॥ अनेनविधिनायस्तुकुर्याद्वैभद्रसप्तमीम् ॥ तस्य
भद्राणिसर्वाणियच्छंतिऋभवःसदा ॥ ९ ॥ भद्रंददातियस्त्वस्यांभद्रस्तस्यसुतोभवेत् ॥ भद्रमासाद्यभूतेशसदाभद्रेणातिष्ठति ॥ १० ॥
॥ ॥ दिंडिरुवाच ॥ ॥ कोऽयंभद्रइतिप्रोक्तःकथंकार्यंविभूषणम् ॥ दत्त्वाचाकिंफलंविद्याद्विधिनाकेनदीयते ॥ ११ ॥ ॥ ब्रह्मोवाच ॥

१ मुख्यम्-इ०पा०।

व्योमं भद्रइतिप्रोक्तंदेवचिह्नमनूपमम् ॥ यद्धृत्वेहनरःसूर्यंमुच्यतेसर्वकिल्बिषैः ॥ १२ ॥ शालिपिंडमयंकार्यंचतुष्कोणमनूपमम् ॥ गव्ये
नसर्पिषायुक्तंखंडशर्करयान्वितम् ॥ १३ ॥ चातुर्जातकपूर्णंतुद्राक्षाभिश्चविशेषतः ॥ नालिकेरफलैश्चैवसुगंधंचगणाधिप ॥ १४ ॥ मध्ये
द्रनीलंभद्रस्यन्यसेत्प्राज्ञःस्वशक्तितः ॥ पुष्परागंमरकतंपद्मरागंतथैवच ॥ १५ ॥ अनौपम्यंचमाणिक्यंक्रमात्कोणेषुविन्यसेत् ॥ वाच
कायाथवादद्यादथवाभोजकेस्वयम् ॥ १६ ॥ अनेनविधिनायस्तुकृत्वाभद्रंप्रयच्छति ॥ सहभद्राणिसंप्राप्यगच्छेद्गोपतिमंदिरम् ॥ १७ ॥ ब्रह्मलोकंत
तोगच्छेद्यानारूढोनसंशयः ॥ तेजसागोजसंकाशःकांत्यागोजसमस्तथा ॥ १८ ॥ प्रभयागोपतेस्तुल्यऊर्जसागोपरस्यच ॥ तस्मादेत्यपुनर्भू
मौगोपतिःस्यान्नसंशयः ॥ १९ ॥ प्रसादाद्गोपतेर्वीरसर्वज्ञाधिपपूजितः ॥ इत्येषाकथिताभीमभद्रानामेतिसप्तमी ॥ २० ॥ यामुपोष्यन
रोभीमब्रह्मलोकमवाप्नुयात् ॥ शृण्वंतियेपठंतीहकुर्वंतिचगणाधिप ॥ २१ ॥ तेसर्वेभद्रमासाद्ययांतितद्ब्रह्मशाश्वतम् ॥ सुमंतुरुवाच ॥
इत्युक्तवान्पुराब्रह्मादिंडिनेसप्तमीव्रतम् ॥ २२ ॥ मयाप्युक्तंतवविभोयथाज्ञातंयथाश्रुतम् ॥ गृहीत्वासप्तमीकल्पंमानवोयस्तुभूतले ॥ २३ ॥
त्यजेत्कामाद्भयंवापिसज्ञेयःपतितोबुधः ॥ तस्माद्धारयतद्वीरनत्याज्यंसप्तमीव्रतम् ॥ २४ ॥ त्यज्यमानोभवेद्वीरआरूढपतितोनरः ॥
श्रावयेद्यस्तुभक्त्याचसप्तमीकल्पमादितः ॥ सोऽश्वमेधफलंप्राप्यततोयातिपरंपदम् ॥ २५ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेभ
द्राकल्पवर्णनंनामैकाधिकशततमोऽध्यायः ॥ १०१ ॥ छ ॥ सुमंतुरुवाच ॥ एवंयादेवदेवस्यसप्तमीभास्करस्यतु ॥ यथाबहूनांभार्याणांभर्तुः
काचित्प्रियाभवेत् ॥ १ ॥ सर्वाश्चतिथयोह्यस्यप्रियाःसूर्यस्यभारत ॥ तस्मादस्यांनरेणेहपूजनीयोदिवाकरः ॥ २ ॥ शतानीकउवाच ॥ ति
थीनामाधिपःसूर्यःसर्वासांकथितोयदि ॥ सप्तम्यामेवयागोऽस्यकिमर्थंक्रियतेबुधैः ॥ ३ ॥ सुमंतुरुवाच ॥ इदमर्थंपुरापृष्टःसुरज्येष्ठोदि
विस्थितः ॥ विष्णुनाकुरुशार्दूलतेनोक्तंहरयेयथा ॥ ४ ॥ तथातेसर्वमाख्यास्येशृणुष्वैकमनाविभो ॥ सुखासीनंसुरज्येष्ठंपुरादेवं
पितामहम् ॥ ५ ॥ प्रणम्याशिरसादेवकृष्णोवचनमब्रवीत् ॥ यद्येषभानुमान्देवस्तिथीनामाधिपःस्मृतः ॥ ६ ॥ किमर्थंपूजयेद्ब्रह्मन्सप्तम्यां
ब्रूहिमेविभो ॥ एवमुक्तःसुरज्येष्ठोविष्णुनाप्रभविष्णुना ॥ ७ ॥ प्रहस्यभगवान्देवइदंवचनमब्रवीत् ॥ ब्रह्मोवाच ॥ देवेभ्यास्तिथयो

दत्ताभास्करेणमहात्मना ॥ ८ ॥ मुक्त्वैकांसप्तमींसर्वांसम्यगाराधनेनवै ॥ यस्यैवयद्दिनंदत्तंसतस्यैवाधिपःस्मृतः ॥ ९ ॥ स्वदिनेपूजितस्तस्मिन्स्वमंत्रैर्वरदोभवेत् ॥ विष्णुरुवाच ॥ अर्केणकतरत्कस्मैदिनंदत्तंमहात्मना ॥ १० ॥ स्वदिनेपूजितेऽस्मिन्वैस्वमंत्रैर्जायतेध्रुवम् ॥ ब्रह्मोवाच ॥ अग्नयेप्रतिपद्दत्ताद्वितीयाब्रह्मणेतथा ॥ ११ ॥ तृतीयायक्षराजायगणेशायचतुर्थ्यपि ॥ पंचमीनागराजायकार्तिकेयायषष्ठ्यपि ॥ १२ ॥ सप्तमीस्थापितात्मार्थंदत्तारुद्रायचाष्टमी ॥ दुर्गायैनवमीदत्तायमायदशमीस्वयम् ॥ १३ ॥ विश्वेभ्यश्चाथदेवेभ्योदत्ताचैकादशीसदा ॥ द्वादशीविष्णवेदत्तामदनायत्रयोदशी ॥ १४ ॥ चतुर्दशीशंकरायदत्तासोमायपूर्णिमा ॥ पितॄणांभानुनादत्तापुण्यापंचदशीसदा ॥ १५ ॥ तिथ्यःपंचदशैतास्तुसोमस्यपरिकीर्तिताः ॥ पीयतेकृष्णपक्षेतुसुरैरेभिर्यथोदितैः ॥ १६ ॥ शुक्लपक्षेप्रपूर्यतेषोडश्याकलयासह ॥ अक्षयासासदैकैकातत्रसाक्षात्स्थितोरविः ॥ १७ ॥ क्षयवृद्धिकरोह्येवंतेनासौतत्पतिःस्मृतः ॥ ददातिगतिमक्षीणांध्यानमात्रस्थितोरविः[1] ॥१८॥ अन्येपीष्टान्यथाकामान्प्रयच्छंतिसुखेनवै ॥ तथासर्वंप्रवक्ष्यामिकृष्णसंक्षेपतःशृणु ॥१९॥ अग्निमिष्ट्वाचहुत्वाचप्रतिपद्यमृतंघृतम् ॥ हविषासर्वधान्यानिप्राप्नुयादमितंधनम् ॥ २० ॥ ब्रह्माणंचद्वितीयायांसंपूज्यब्रह्मचारिणम् ॥ भोजयित्वाचविद्यानांसर्वासांपारगोभवेत् ॥ २१ ॥ तृतीयायांचवित्तेशंवित्ताढ्योजायतेध्रुवम् ॥ क्रयादिव्यवहारेषुलाभोबहुगुणोभवेत् ॥ २२ ॥ गणेशपूजनंकुर्याच्चतुर्थ्यांसर्वकर्मसु ॥ अविघ्नंविद्विषांविघ्नंकुर्याच्चास्यनसंशयः ॥ २३ ॥ नागानिष्ट्वाचपंचम्यांनविषैराभिभूयते ॥ स्त्रियंचलभतेपुत्रान्परांचश्रियमाप्नुयात् ॥ २४ ॥ संपूज्यकार्तिकेयंतुषष्ठ्यांश्रेष्ठप्रजापते ॥ मेधावीरूपसंपन्नोदीर्घायुःकीर्तिवर्धनः ॥ २५ ॥ सप्तम्यांपूज्यरक्षेशंचित्रभानुंदिवाकरम् ॥ अष्टम्यांपूजितोदेवोगोवृषाभरणोहरः ॥ २६ ॥ ज्ञानंददातिविपुलंकांतिंचविपुलांतथा ॥ मृत्युहाज्ञानदश्चैवपाशहाचप्रपूजितः ॥ २७ ॥ दुर्गांसंपूज्यदुर्गाणिनवम्यांतरतीच्छया ॥ संग्रामेव्यवहारेचसदाविजयमश्नुते ॥ २८ ॥ दशम्यांयममातिष्ठेत्सर्वव्याधिहरोध्रुवम् ॥ नरकादथमृत्योश्चसमुद्धरातेमानवम् ॥ २९ ॥ एकादश्यां

[1] व्योममात्रस्थितः—इ०पा०।

यथोद्दिष्टाविश्वेदेवाःप्रपूजिताः ॥ प्रजांपशुंधनंधान्यंप्रयच्छंतिमहींतथा ॥ ३० ॥ द्वादश्यांविष्णुमिष्ट्वेहसर्वदाविजयीभवेत् ॥
पूज्यश्चसर्वलोकानांयथागोपतिगोकरः ॥ ३१ ॥ कामदेवंत्रयोदश्यांसुरूपोजायतेध्रुवम् ॥ इष्टांरूपवतींभार्यांलभेत्कामांश्चपुष्क
लान् ॥ ३२ ॥ इष्ट्वेश्वरंचतुर्दश्यांसर्वैश्वर्यसमन्वितः ॥ बहुपुत्रोबहुधनस्तथास्यान्नात्रसंशयः ॥ ३३ ॥ पौर्णमास्यांतुयःसोमंपूजयेद्भ
क्तिमान्नरः ॥ स्वाधिपत्यंभवेत्तस्यसंपूर्णंनचहीयते ॥ ३४ ॥ पितरःस्वदिनेदिंडेदृष्टाःकुर्वंतिसर्वदा ॥ प्रजावृद्धिर्धनंरक्षाचायुष्यं
बलमेवच ॥ ३५ ॥ उपवासंविनाप्येतेभवंत्युक्तफलप्रदाः ॥ पूजयाजपहोमैश्चतोषिताभक्तितःसदा ॥ ३६ ॥ मूलमंत्रैश्चसंज्ञा
भिरंशमंत्रैश्चकीर्तिताः ॥ पूर्ववत्पद्ममध्यस्थाःकर्तव्याश्चातिथीश्वराः ॥ ३७ ॥ गंधपुष्पोपहारैश्चयथाशक्त्याविधीयते ॥ पूजाबा
ह्येनविधिनाकृतापिचफलप्रदा ॥ ३८ ॥ आज्यधारासमिद्भिश्चदधिक्षीरान्नमाक्षिकैः ॥ यथोक्तफलदोहोमोजपःशांतेनचेतसा ॥ ३९ ॥
मूलमंत्राश्चसंज्ञाभिरंगमंत्राश्चकीर्तिताः ॥ कृत्वायज्ञान्दशद्वौचफलान्येतानिभक्तितः ॥ ४० ॥ यथोक्तानितथोक्तानिलभेतेहाधिका
न्यपि ॥ इहयस्माद्यथान्यस्मिन्योवसेद्यःसुखीसदा ॥ ४१ ॥ तेषांलोकेषुमंत्रज्ञोयावत्तेषांतिथिःस्थिता ॥ दहेत्तस्मात्तथारिष्टं
तद्रूपोजायतेनरः ॥ ४२ ॥ सुरूपोधर्मसंपन्नोभक्षितारिर्महीपतिः ॥ स्त्रीवानपुंसकोवापिजायतेपुरुषोत्तमः ॥ ४३ ॥ इत्येताः
कथिताःकृष्णतिथयोयामयातव ॥ नक्षत्रदेवताःसर्वानक्षत्रेषुव्यवस्थिताः ॥ ४४ ॥ इष्टान्कामान्प्रयच्छंतियास्तास्तद्ब्रूहिभूधर ॥
चंद्रमायत्रनक्षत्रेमहावृद्ध्यास्थितःसदा ॥ ४५ ॥ उक्तस्तुदेवतायज्ञस्तदासाफलदाभवेत् ॥ देवताश्चप्रवक्ष्यामिनक्षत्राणांयथाक्र
मम् ॥ ४६ ॥ नक्षत्राणिचसर्वाणियज्ञाश्चैवपृथक्पृथक् ॥ अश्विन्यामश्विनाविष्ट्वादीर्घायुर्जायतेनरः ॥ ४७ ॥ व्याधिभिर्मुच्यतेक्षिप्रम
त्यर्थंव्याधिपीडितः ॥ भरण्यांयमउद्दिष्टःकुसुमैरसितैःशुभैः ॥ ४८ ॥ तथागंधादिभिःशुभ्रैरपमृत्योर्विमोचयेत् ॥ अनलः
कृत्तिकायांतुइहसंपूजितःपरः ॥ ४९ ॥ रक्तमाल्यादिभिर्दद्यात्फलंहोमेनचध्रुवम् ॥ पूजांप्रजापतिःप्रीतइष्टोदद्यात्पशूंस्तथा ॥
॥ ५० ॥ रोहिण्यांदेवशार्दूलपूजनादिहगोपतेः ॥ मृगशीर्षेसदासोमोज्ञानमारोग्यमेवच ॥ ५१ ॥ आर्द्रायांतुशिवंपूज्यपश्चाद्द्विज

यमाप्नुयात् ॥ पद्मादिभिःसदिव्यैश्चपूजितःशंप्रयच्छति ॥ ५२ ॥ तथा वस्वादितिःसदासंपूज्यतेदिवि ॥ गुरुणातर्पितश्चैवमातेव
परिरक्षति ॥ ५३ ॥ पुष्येबृहस्पतिर्बुद्धिंददातिविपुलांशुभाम् ॥ गीतैर्गंधादिभिर्नागाआश्लेषायांप्रपूजिताः ॥ ५४ ॥ तर्पिता
श्चयथान्यायंभक्ष्याद्यैर्मधुरैःसितैः ॥ रक्षामिषादिभिस्तैस्तैःप्रीतिंकुर्वंतिमानद ॥ ५५ ॥ मघासुपितरःसर्वेहव्यैःकव्यैश्चपूजिताः ॥
प्रयच्छंतिधनंधान्यंभृत्यान्पुत्रान्पशूंस्तथा ॥ ५६ ॥ फाल्गुन्यामथवैपूषाइष्टःपुष्पादिभिःशुभैः ॥ पूर्वायांविजयंदद्यादुत्तरायांभगं
तथा ॥ ५७ ॥ भर्तारमीप्सितंदद्यात्कन्यायैपुरुषस्यताम् ॥ इहजन्मनियुज्येतरूपद्राविणसंपदा ॥५८॥ पूजितःसावताहस्तेविश्वतेजोनिधिः
सदा ॥ गंधपुष्पादिभिःसर्वंददातिविपुलंधनम् ॥५९॥ राज्यंतुत्वष्टाचित्रायांनिःसपत्नंप्रयच्छति ॥ इष्टःसंतर्पितःप्रीतःस्वात्यांवायुर्बलंपरम्
॥ ६० ॥ इंद्राग्न्येवविशाखायांजातरक्तैःप्रपूज्यच ॥ धनधान्यानिलब्ध्वेहतेजस्वीनिवसेत्सदा ॥ ६१ ॥ रक्तैर्मित्रमनूराधास्वेवंसंपूज्यभ
क्तितः ॥ श्रियोभवंतिसर्वेषांचिरंजीवंतिसर्वदा॥६२॥ ज्येष्ठायांपूर्ववच्छक्रमिष्ट्वापुष्टिमवाप्नुयात् ॥ गुणैर्ज्येष्ठश्चसर्वेषांकर्मणाचधनेनच॥६३॥
मूलेदेवापितॄन्सर्वान्भक्त्यासंपूज्यपूर्ववत् ॥ पूर्ववत्फलमाप्नोतिस्वर्गस्थानेध्रुवोभवेत् ॥ ६४ ॥ पूर्वाषाढेह्यपःपूज्यहुत्वातत्रैवपूर्ववत् ॥
संतापान्मुच्यतेक्षिप्रंशारीरान्मानसात्तथा॥६५॥ आषाढासुतथाविश्वानुत्तराषाढयोगतः ॥ विश्वेशंपूज्यपुष्पाद्यैःसर्वमाप्नोतिमानवः ॥६६॥
श्रवणेतुसितैर्विष्णुंपीतैर्नीलैश्चभक्तितः ॥ संपूज्याश्रियमाप्नोतिपरांविजयमेवच ॥ ६७ ॥ धनिष्ठासुवसूनिष्ट्वानभयंजायतेक्वचित् ॥ महतोऽपि
भयात्त्वेतैर्गंधपुष्पादिभिःशुभैः ॥ ६८ ॥ इंद्रंशतभिषायांचव्याधिभिर्मुच्यतेध्रुवम् ॥ आतुरःपुष्टिमाप्नोतिस्वास्थ्यमैश्वर्यमेवच ॥६९॥ अजं
भाद्रपदायांतुशुद्धस्फटिकसन्निभम् ॥ संपूज्यभक्तिमाप्नोतिपरांविजयमेवच ॥७०॥ उत्तरायामहिर्बुध्न्यंपरांशांतिमवाप्नुयात् ॥ रेवत्यांपूजितः
पूषाददातिसततंशुभम् ॥ ७१ ॥ सितैःपुष्पैःस्थितिंचैवधृतिंविजयमेवच ॥ तवैवैतेसमाख्यातायज्ञाःसंक्षेपतोमया ॥ ७२ ॥ नक्षत्रदेवतानां
चसाधकानांहितायवै ॥ भक्त्यावित्तानुसारेणभवंतिफलदाःसदा ॥ ७३ ॥ गंतुमिच्छेदनंत्यंवाक्रियांप्रारब्धमेवच ॥ नक्षत्रदेवतायज्ञंकृत्वा

१ गुणैः संपूज्य ज्येष्ठायां युज्यते मधुसूदन–इ० पा० । २ शक्त्या–इ० पा० । ३ विभवैः–इ० पा० । ४ नात्र कार्या विचारणा–इ० पा० । ५ पशून्–इ० पा० ।

भ्युक्षणंभानोर्यःकरोतितथाक्षये ॥ ३६ ॥ सगच्छतिनरःकृष्णयत्रास्तेगोपतिःसदा ॥ पुष्पप्रकरमत्यर्थंसुगंधंभास्करालये ॥ ३७ ॥
अनुलिप्तेनरोदद्यात्पुष्पेतरगृहंव्रजेत् ॥ विमानवरमभ्येतिसर्वरत्नमयांदिवि ॥ ३८ ॥ संप्राप्नोतिनरोदत्वादीपकंभास्करालयम् ॥ यस्तुसं
वत्सरंपूर्णंतिलपात्रप्रदोनरः ॥३९॥ ध्वजंचभास्करेदद्यात्सममत्रफलंलभेत् ॥ विधुनोत्यतिवातेनदातुरज्ञानतःकृतम् ॥ ४० ॥ पापंदातु
र्गृहेभानोर्दिवारात्रौनसंशयः ॥ गीतवाद्यादिभिर्देवंयउपास्तेविभावसुम् ॥ ४१ ॥ गंधर्वनृत्यैर्वाद्यैश्चविमानस्थोनिषेव्यते ॥ जातिस्मरत्वं
वृद्धिंचततस्तुपरमांगतिम् ॥ ४२ ॥ प्राप्नोतिहेलेरायतनेपुण्याख्यानकथाकरः ॥ तस्मात्कुर्यात्प्रयत्नेनपूजयेद्वापिवाचकम् ॥
नान्यत्प्रीतिकरंभानोःपुण्याख्यानमृतेक्वचित् ॥ ४३ ॥ एकोऽपिहेलेःसुकृतःप्रणामोदशाश्वमेधावभृथेनतुल्यः ॥ दशाश्वमेधीपुनरेतिज
न्महेलिप्रणामीनपुनर्भवाय ॥४४॥ एवंदेवोश्वरोभक्त्यायेनभानुरुपासितः ॥४५॥ सप्राप्नोतिगतिंश्लाघ्यांयामिच्छतिचचेतसा ॥ तमाराध्य
मयाप्राप्तंब्रह्मत्वंलोकपूजितम् ॥ ४६ ॥ सौरेयैर्थेप्सितंप्राप्तंत्वयातस्मात्पुरानघ ॥ ब्रह्महत्याभिभूतस्तुगोश्रुताभरणोहरः ॥ ४७ ॥ तमा
राध्यरविंभक्त्यामुक्तोऽसौब्रह्महत्यया ॥ देवत्वंमनुजैःकैश्चिद्गंधर्वत्वंतथापरैः ॥ ४८ ॥ विद्याधरत्वमपरैरेवाप्तंहिदिवाकरात् ॥ लेखःक्रतु
शतेनेशमाराध्यैनंदिवाकरम् ॥ ४९ ॥ इंद्रत्वमगमत्तस्मान्नान्यःपूज्योदिवाकरात् ॥ देवेभ्योऽप्यतिपूज्यस्तुस्वगुरुर्ब्रह्मचारिणा ॥ ५० ॥
तस्मात्सयज्ञपुरुषोविवस्वान्पूज्यएवहि ॥ स्त्रियाश्चभर्तारमृतेपूज्योऽत्यंतंविभावसुः ॥५१॥ भर्तुर्गृहस्थस्यसतःपूज्योगोपतिरंशुमान् ॥ वैश्याना
मपिचाराध्यस्तपोभिस्तमनाशनः ॥ ५२ ॥ ध्येयःपरिव्राजकानांसदादेवोविभावसुः ॥ एवंसर्वाश्रमाणांहिचित्रभानुःपरायणम् ॥ ५३ ॥
सर्वेषांचैववर्णानांतमाराध्याप्नुयाद्गतिम् ॥५४॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसूर्यपूजामाहिमवर्णनंनामत्र्यधिकशततमो
ऽध्यायः ॥ १०३ ॥ छ ॥ शृणुष्वसंयतःकाम्यानुपवासांस्तथापरान् ॥ तांस्तानाश्रित्ययान्कामान्कुरुतेप्सितमानसः ॥ १ ॥ सप्तम्यांशु
क्लपक्षेतुफाल्गुनस्येहमानवः ॥ जपन्हेलीतिदेवस्यनामभक्त्यापुनःपुनः ॥ २ ॥ देवार्चनेचाष्टशतंकृत्वैतज्जपेच्छुचिः ॥ स्नातःप्रस्थान



१ शुचि–इ०पा० । २ देवदेवेश्वरः–इ०पा० । ३ पूज्यतमो रवेः–इ०पा० ।

कालेतुउत्थानेस्खलितेक्षुते ॥ ३ ॥ पाखंडान्पतितांश्चैवतथैवान्यायशालिनः ॥ नालपेततथाभानुमर्चयेच्छ्रद्धयान्वितः ॥ ४ ॥ इदंचोदा
हरेद्भानोर्मनःसंधायतत्परः ॥ हंसहंसकृपालुस्त्वमगतीनांगतिर्भव ॥ ५ ॥ संसारार्णवमग्नानांत्राताभवदिवाकर ॥ एवंप्रसाद्योपवासंकृत्वा
नियतमानसः ॥ ६ ॥ पूर्वाह्णएवचसकृत्प्राश्याचाचमनीयकम् ॥ स्नात्वार्चयित्वाहंसेतिपुनर्नामप्रकीर्तयेत् ॥ ७ ॥ वज्रधारात्रयंचैवक्षि
पेत्रिर्देवपादयोः ॥ चैत्रवैशाखयोश्चैवतद्वज्ज्येष्ठेतुपूजयन् ॥ ८ ॥ मर्त्यलोकेगतिंश्रेष्ठांकृष्णप्राप्नोतिवैनरः ॥ उत्क्रांतस्तुव्रजेत्कृष्णदिव्यंहं
सालयंशुभम् ॥९॥ वृषध्वजप्रसादाद्वैसंक्रंदनश्रियावृतः ॥ आषाढेश्रावणेचैवमासिभाद्रपदेतथा ॥१०॥ तथैवाश्वयुजेचैवअनेनविधिनानरः॥
उपोष्यसंपूज्यतथामार्तंडेतिचकीर्तयेत् ॥ ११ ॥ गोमूत्रप्राशनात्पूतोधर्नंधनपुरंव्रजेत् ॥ आराधितस्यजगतामीश्वरस्याव्ययात्मनः ॥
॥ १२ ॥ उत्क्रांतिकालेस्मरणंभास्करस्यतथाप्नुते ॥ क्षीरस्यप्राशनंकृष्णविधिश्चैवयथोदितम्॥१३॥कार्तिकादियथान्यायंकुर्यान्मासचतु
ष्टयम् ॥ तेनैवविधिनाकृष्णभास्करेतिचकीर्तयेत् ॥ १४ ॥ सयातिभानुसालोक्यंभास्करंस्मरतिक्षये ॥ प्रतिमासंद्विजातिभ्योदद्याद्दानं
यथेप्सितम्॥१५॥चतुर्मासेतुसंपूर्णेकृत्वापुस्तकवाचनम्॥कथांतुभास्करस्येहसंगतिकमथापिवा॥१६॥धर्मश्रवणमभीष्टंसदाधर्मध्वजस्यतु॥
वाचकंपूजयित्वातुतस्मात्कार्यंविपश्चिता ॥१७॥ श्राद्धमन्नेनपक्वेनवाचकेनद्विजेनतु॥द्रव्येनचयथायुक्तमभीष्टंभास्करस्यहि ॥१८॥ एवमे
वगतिंश्रेष्ठांदेवानामनुकीर्तनात् ॥ प्राप्नुयात्त्रिविधंकृष्णत्रिलोकाख्यंनरःसदा ॥१९॥ कथितंपारणंयत्तेप्रथमंगोधराधनम् ॥आधिपत्यंतथाभो
गांस्ततःप्राप्नोतिमानुषान्॥२०॥द्वितीयेनतथाभोगान्गोपतेःप्राप्नुयान्नरः॥सूर्यलोकंतृतीयेनपारणेनतथाप्नुयात्॥२१॥एवमेतत्समाख्यातंगति
प्रापकमुत्तमम् ॥ विधानंदेवशार्दूलयदुक्तंसप्तमीव्रते ॥२२॥ यःश्वेतांसप्तमींकुर्यात्सुगतिंश्रद्धयानरः ॥ तथाभक्त्याचवैनारीप्राप्नोतित्रिविधां
गतिम् ॥२३॥ एषाधन्यापापहरातिथिर्नित्यमुपासिता॥आराधनाययस्तेषांयदाभानोर्धराधर ॥२४॥ पठतांशृण्वतांचापिसर्वपापभयापहा॥
तथाधन्याचपुण्याचात्रिवर्गादीष्टदासदा ॥२५॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेत्रिवर्गसप्तमीव्रतानिरूपणंनामचतुरधिकशत
तमोऽध्यायः॥ १०४ ॥ ब्रह्मोवाच ॥ फाल्गुनामलपक्षस्यसप्तम्यांक्ष्माधराव्यय ॥ उपोषितोनरोनारीसमभ्यर्च्यतमोऽपहम् ॥ १ ॥

सूर्यनामजपन्भक्त्यामितभोक्ताजितेंद्रियः ॥ उत्तिष्ठन्प्रस्वपंश्चैवसूर्यमेवाभिकीर्तयेत् ॥ २ ॥ ततोऽन्यदिवसेप्राप्तेत्वष्टम्यांप्रयतोरविम् ॥
स्नात्वादेवंसमभ्यर्च्यदद्याद्विप्रायदक्षिणाम् ॥ ३ ॥ रविमुद्दिश्यवैचाग्नौघृतहोमकृताक्रियः ॥ प्रणिपत्यजगन्नाथमितिवाणीमुदीरयेत् ॥ ४ ॥
यमाराध्यपुरादेवीसावित्रीकामनायवै ॥ समेददातुदेवेशःसर्वान्कामान्विभावसुः ॥ ५ ॥ समभ्यर्च्यइंद्रातेप्राप्तान्कृत्स्नान्कामान्यथेप्सिता
न् ॥ सददात्यखिलान्कामान्प्रसन्नोमेदिवस्पतिः ॥ ६ ॥ भ्रष्टराज्यश्चदेवेन्द्रोयमभ्यर्च्यदिवस्पतिः ॥ कामान्तसमाप्तवान्राज्यंसमेकामंप्र
यच्छतु ॥ ७ ॥ एवमभ्यर्च्यपूजांचनिष्पाद्येहविवस्वतः ॥ भुंजीतप्रयतःसम्यग्वाविष्यंपतगध्वजे ॥ ८ ॥ फाल्गुनेचैत्रवैशाखेज्येष्ठेय
स्यसमापनम् ॥ चतुर्भिःपारणंमासैरेभिर्निष्पादितंभवेत् ॥ ९ ॥ करवीरैश्चतुरोमासोभक्त्यासंपूजयेद्रविम् ॥ कृष्णागुरुंदहेद्धूपंप्राश्यं
गोशृंगजंजलम् ॥ १० ॥ नैवेद्यंखंडवेष्टांस्तुदद्याद्विप्रेभ्यएवच ॥ ततश्चश्रूयतामन्यामाषाढादिषुयाक्रिया ॥ ११ ॥ जातीपुष्पाणिशस्ता
निधूपंगौग्गुलमुच्यते ॥ कूपोदकंसमश्नीयान्नैवेद्यंपायसंमतम् ॥ १२ ॥ स्वयंतदेवचाश्नीयाच्छेषंपूर्ववदाचरेत् ॥ कार्तिकादिषुमासेषुगो
मूत्रंकायशोधनम् ॥ १३ ॥ महांगंधूपमुद्दिष्टंपूजारक्तोत्पलैस्तथा ॥ कांसारंचात्रनैवेद्यंनिवेद्यंभास्करायवै ॥ १४ ॥ प्रतिमासंचविप्राय
दातव्यादक्षिणातथा ॥ कर्पूरंचंदनंमुस्तामगरुंतगरंतथा ॥ १५ ॥ ऊषणंशर्कराकृष्णसुगंधंसिह्लकंतथा ॥ महांगोऽयंस्मृतोधूपःप्रियोदे
वस्यसर्वदा ॥ १६ ॥ प्रीणनंचेष्टयाभानोःपारणेपारणेगते ॥ यथाशक्तियथायोगंवित्तशाठ्यंविवर्जयेत् ॥ १७ ॥ सद्भावेनैवसप्ताश्वःपूजि
तःप्रीयतेयतः ॥ पारणंतेयथाशक्त्यापूजितःस्नापितोरविः ॥ १८ ॥ प्रीणितश्चेप्सितान्कामान्दद्याद्व्याहतंहरेत् ॥ एषापुण्यापापह
रासप्तमीसर्वकामदा ॥ १९ ॥ यथाभिलषितान्कामाँल्लभतेगरुडध्वज ॥ उपोष्यैतांत्रिभुवनंप्राप्तमिंद्रेणवैपुरा ॥ २० ॥ पुत्रमाप्नोतुसा
वित्रीपुत्रांस्तुअदितिस्तथा ॥ यदवःकामनांप्राप्ताधौम्योवेदमवाप्तवान् ॥ २१ ॥ त्वयाप्ताभार्गवीकृष्णशंकरःशुद्धिमाप्तवान् ॥ पितामहत्वं
प्राप्तोऽहंतत्प्रसादाज्जनार्दन ॥ २२ ॥ अन्यैश्चाधिगतंकामंतमाराध्यनसंशयः ॥ ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैर्योषिद्भिरेवच ॥ २३ ॥ यंयं
काममभिध्यायेत्तंतंप्राप्नोत्युपोषणात् ॥ जनःप्राप्नोत्यसंदिग्धंभानोराराधनाद्यतः ॥२४॥ अपुत्रःपुत्रमाप्नोतिरोगतश्चापिमोदते॥रोगाभिभूत

आरोग्यंकन्याविंदतिसत्पतिम् ॥ २५ ॥ समागत्यप्रवासितैरुपोष्यैनदवाप्नुयात् ॥ सर्वान्कामानवाप्नोतिगोगतश्चापिमोदते ॥ २६ ॥ ना
पुत्रोनाधनोवापिनवानिष्टोननिर्घृणः ॥ उपोष्यैतद्व्रतंमर्त्यःस्त्रीजनोवापिजायते ॥ २७ ॥ गोहोलिलोकमासाद्यमोदतेशाश्वतीःसमाः ॥ गौरि
कंयानमारूढस्तेजसारविसन्निभः ॥ २८ ॥ पुनरेत्यमहींकृष्णधनाधनसमोनृप ॥ क्ष्मातलेस्यान्नसंदेहःप्रसादाद्गोपतेर्नरः ॥ २९ ॥ इति
श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेकामदासप्तमीव्रतनिरूपणंनामपंचाधिकशततमोऽध्यायः ॥ १०५ ॥ छ ॥ ब्रह्मोवाच ॥ ॥
पुनश्चैतन्महाभागश्रूयतांगदतोमम ॥ प्रोक्तंखगेनदेवानांतिथिमाहात्म्यमुत्तमम् ॥ १ ॥ ॥ विष्णुरुवाच ॥ ॥ विजयातिजयाचै
वजयंतीचमहातिथिः ॥ त्वत्तःश्रुतासुरश्रेष्ठब्रूहिमेपापनाशिनीम् ॥ २ ॥ तथोत्तरायणंब्रूहिशस्तंयद्भास्कराचने ॥ यत्रसंपू
जितोभानुर्भवेत्सर्वाघनाशनः ॥ ३ ॥ तन्मेकथययत्नेनभक्त्यापृष्टोऽक्षयंफलम् ॥ ॥ ब्रह्मोवाच ॥ ॥ शुक्लपक्षेतुसप्तम्यांयदर्क्षं
तुरवेर्भवेत् ॥ ४ ॥ तदास्यात्सामहापुण्यासप्तमीपापनाशिनी ॥ तस्यांसंपूज्यदेवेशंचित्रभानुंजगद्गुरुम् ॥ ५ ॥ सप्तजन्मकृतात्पापान्मुच्य
तेनात्रसंशयः ॥ यश्चोपवासंकुरुतेतस्यांनियतमानसः ॥ ६ ॥ सर्वपापविमुक्तात्मासूर्यलोकेमहीयते ॥ दानंयद्दीयतेकिंचित्तमुद्दिश्यदिवा
करम् ॥७॥ होमंवाक्रियतेतत्रतत्सर्वंचाक्षयंभवेत् ॥ एकऋग्वेदःपुरतोजतःश्रद्धापरेणतु ॥८॥ ऋग्वेदस्यसमस्तस्ययच्छतेसत्फलंध्रुवम् ॥
सामवेदंफलंसोमयजुर्वेदफलंयजुः ॥ ९ ॥ अथर्वाअथर्वांगिरसोनिखिलंयच्छतेरविः ॥ तारकाइवराजंतेद्योतमानादिवानिशम् ॥ १० ॥
समभ्यर्च्यचसप्तम्यांदेवदेवंदिवाकरम् ॥ यत्रपापमशेषंवैनाशयत्यत्रभास्करः ॥ ११ ॥ कर्तव्यासप्तमींकृष्णतेनोक्तापापनाशिनी ॥ अस्यां
समभ्यर्च्यरविंयातिसौरपुरंनरः ॥१२॥ विमानवरमारुह्यकर्पूरोद्धवमुत्तमम् ॥ तेजसाकविसंकाशप्रभयासूर्यसन्निभः ॥१३॥ कांत्यात्रेयसमः
कृष्णशौर्यैर्हरिसमःसदा॥मोदतेतत्रसुचिरंवृंदारकगणैःसह ॥ १४ ॥ पुनरेत्यभुवंकृष्णभवेद्दक्ष्माधिपाधिपः ॥ १५ ॥ इतिश्रीभविष्येमहापुरा
णेब्राह्मेपर्वणिसप्तमीकल्पेपापनाशिनीव्रतविधिवर्णनंनामषडधिकशततमोऽध्यायः ॥ १०६ ॥ छ ॥ ब्रह्मोवाच ॥ ॥ तथान्यदपिधर्मज्ञशृणु
ष्वगदतोमम ॥ पदद्वयंजगद्धातुर्देवदेवस्यगोपतेः ॥ १ ॥ यदेकपादपीठंहितत्रन्यस्तंपदद्वयम् ॥ स्वयमंशुमताकृष्णलोकानांहितका

म्यया ॥ २ ॥ वामनस्यपदंकृष्णज्ञेयंवैउत्तरायणम् ॥ देवाद्यैःसकलैर्वंद्यंदक्षिणंदक्षिणायनम् ॥ ३ ॥ अहंतंचसदाकृष्णदक्षिणंपादमर्चतः॥
श्रद्धान्वितौभास्करस्यहरिशौवाममर्चतः ॥४॥ तस्मिन्यःप्रत्यहंसम्यग्देवदेवस्यमानवः॥करोत्याराधनंतस्यतुष्टःस्याद्भानुमान्सदा ॥ ५ ॥
विष्णुरुवाच ॥ कथमाराधनंतस्यदेवदेवस्यगोपतेः॥क्रियतेदेवशार्दूलतत्समाख्यातुमर्हसि ॥६॥ ब्रह्मोवाच ॥ उत्तरेत्वयनेकृष्णस्नातोनियत
मानसः॥ घृतक्षीरादिभिर्देवंस्नापयेत्तिमिरापहम् ॥७॥ चारुवस्त्रोपहारैश्चपुष्पधूपानुलेपनैः ॥ समभ्यर्च्यंततःसम्यग्ब्राह्मणानांचतर्पणैः ॥८॥
पदद्वयंव्रतंतस्यगृह्णीयाद्भानुतत्परः ॥ वन्देत्स्नातश्चित्रभानुंततश्चगरुडध्वज ॥ ९ ॥ भुक्त्वान्नंचित्रभानुंतुचित्रभानुंव्रजंस्तथा ॥ स्वपन्वि
बुध्यन्प्रणमन्होमंकुर्वंस्तथार्चयन् ॥ १० ॥ चित्रभानोरनुदिनंकरिष्येनामकीर्तनम् ॥ यावदन्यदिनात्प्राप्तंक्रमशोदक्षिणायनम् ॥ ११ ॥
चलितेहंकृतेचैववेदारंभोपिवासदा ॥ तावद्वक्ष्येचित्रभानुंयावदेवोत्तरायणम् ॥१२॥ यावज्जीवंचयत्किंचिज्ज्ञानतोऽज्ञानतोऽपिवा ॥ करिष्येऽ
हंतथाचैवकीर्तयिष्यामितंप्रभुम् ॥ १३ ॥ यदानृतंकिंचिद्वक्ष्येतदावक्ष्यामितद्वचः ॥ अज्ञानादथवाज्ञानात्कीर्तयिष्यामितंप्रभुम् ॥ १४ ॥
षण्मासमेकमनसाचित्रभानुमयंपरम् ॥ तंस्मरन्मरणेयातियांगतिंसास्तुमेगतिः ॥ १५ ॥ षण्मासाभ्यंतरेमृत्युर्यदितस्मिन्भवेन्मम ॥ तन्म
याभास्करस्येहस्वयमात्मानिवेदितः ॥ १६ ॥ परमात्ममयंब्रह्मचित्रभानुमयंपरम् ॥ यमंतेसंस्मरिष्यामिसमेभानुःपरागतिः ॥ १७ ॥
यदिप्रातस्तथासायंमध्याह्नेवाजपाम्यहम् ॥ षण्मासाभ्यंतरेन्यासःकृतोव्रतमयोमया ॥ १८ ॥ तथाकुरुजगन्नाथस्वर्गलोकपरायणः ॥ चित्र
भानोयथाशक्त्याभवान्भवातिमेगतिः ॥ १९ ॥ एवमुच्चार्यषण्मासंचित्रभानुमयंव्रतम् ॥ तावन्निष्पादयेद्यावत्संपूर्णंदक्षिणायनम् ॥ २० ॥
ततश्चप्रीणनंकुर्याद्यथाशक्त्याविभावसोः ॥ भोजयेद्ब्राह्मणान्दिव्यान्भौमांश्चापिसदक्षिणान् ॥ २१ ॥ पुण्याख्यानकथांकुर्यान्मार्तंडस्यतथा
ग्रतः॥पूजयेद्वाचकंभक्त्यायथाशक्त्याचलेखकम् ॥२२॥ एवंव्रतमिदंकृष्णयोधारयतिमानवः ॥ इहैवदेवशार्दूलमुच्यतेसर्वकिल्बिषैः॥२३॥

१ धराधरसमन्वितः-इ०पा०।

षण्मासाभ्यंतरेचास्यमरणंयदिजायते ॥ प्राप्नोत्यनशनस्योक्तंयत्फलंतदसंशयम् ॥ २४ ॥ पदद्वयंचदेवस्यसम्यक्त्वेनसदार्चितम् ॥
भवत्येतज्जगौभानुःपुराचंद्रायपृच्छते ॥ २५ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेभानुपादद्वयव्रतवर्णनंनामसप्ता
धिकशततमोऽध्यायः ॥ १०७ ॥ छ ॥ ब्रह्मोवाच ॥ ॥ कृष्णपक्षे[1]तुमाघस्यसर्वांतिसप्तमींशृणु ॥ यामुपोष्यसमाप्नोतिसर्वान्कामांस्तथा
परान् ॥ १ ॥ पाखंडादिभिरालापंनकुर्याद्भानुतत्परः ॥ पूजयेत्प्रणतोदेवमेकाग्रमनसाशुभम् ॥ २॥ माघाद्यैःपारणंमासैःषड्भिःसांक्रान्तिकं
स्मृतम् ॥ मार्तंडंप्रथमंनामद्वितीयंकंप्रकीर्तितम् ॥ ३ ॥ तृतीयंचित्रभानुंचविभावसुमतःपरम् ॥ भगेतिपंचमंज्ञेयंषष्ठंहंसमथोच्यते ॥ ४ ॥
पूर्णेषुषट्सुमासेषुपंचगव्यमुदाहृतम् ॥ स्नानेचप्राशनेचैवप्रशस्तंपापनाशनम् ॥५॥ प्रणामंदेवदेवस्यकृत्वापूजांयथाविधि ॥ विप्रायदक्षिणां
दद्याच्छ्रद्धानश्चशक्तितः ॥ ६ ॥ पारणांतेचदेवस्यप्रीणनंभक्तिपूर्वकम् ॥ कुर्वीतभक्त्याविधिवद्विभक्त्यातुगृह्यते ॥ ७ ॥ नक्तभोजी
तथाविष्णोतैलक्षारविवर्जितः ॥ कृष्णजागरणंरात्रौसप्तम्यामथवादिने ॥ ८ ॥ एतामुषित्वाधर्मज्ञहंसप्रीणनतत्परः ॥ सर्वान्कामानवाप्नोति
सर्वपापैःप्रमुच्यते ॥ ९ ॥ यतःसर्वमवाप्नोतियद्यदिच्छतिचेतसा ॥ अतोलोकेषुविख्यातासर्वार्थावाप्तिसप्तमी ॥ १० ॥ कृताभिलषिताह्ये
षाप्रारब्धाधर्मतत्परैः॥पूरयत्यखिलान्कामान्संश्रुताचदिनेदिने॥११॥तमाराधयस्वत्वंवितपाथगरुडध्वज॥यथाराधितवान्भानुर्भगणाधिपतिः
पुरा॥१२॥इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसर्वार्थावाप्तिसप्तमीवर्णनंनामाष्टाधिकशततमोऽध्यायः॥ १०८ ॥छ॥ब्रह्मोवाच ॥
मार्तंडसप्तमींकृष्णयथा[2]न्यांवच्मितेनघ॥शृणुष्वैकमनावीरगदतोमेशुभप्रदाम् ॥१॥ यस्याःसम्यगनुष्ठानात्प्राप्नोत्यभिमतंफलम् ॥ पौषेमासे
सितेपक्षेसप्तम्यांसमुपोषितः ॥ २ ॥ सम्यक्संपूज्यमार्तंडंमार्तंडइतिवैजपेत् ॥ पूजयेत्कुतपंभक्त्याश्रद्धयापरयान्वितः ॥ ३ ॥ धूप
पुष्पोपहाराद्यैरुपवासैःसमाहितः ॥ मार्तंडेतिजपन्नामपुनस्तद्गतमानसः ॥ ४ ॥ विप्रायदक्षिणांदद्याद्यथाशक्त्याखगध्वज ॥ स्वपन्विबु
ध्यन्स्खलितोमार्तंडेतिचकीर्तयेत् ॥ ५ ॥ पाषंडादिविकर्मस्थैरालापंचविवर्जयेत् ॥ गोमूत्रंगोमयंवापिदधिक्षीरमथापिवा ॥ ६ ॥ गोदे

१ शुक्लपक्षे-इ०पा० । २ यथान्यायं च वच्मि ते-इ०पा० ।

हतःसमुद्धृतंप्राश्नीयादात्मशुद्धये ॥ द्वितीयेऽह्निपुनःस्नातस्तथैवाभ्यर्चनंरवेः ॥ ७ ॥ तेनैवनाम्नासंभूयदत्वाविप्रायदक्षिणाम् ॥ ततो
भुंजीतगोदोहसंभूतेनसमन्वितम् ॥ ८ ॥ एवमेवाखिलान्मासानुपोष्यप्रयतःशुचिः ॥ दद्याद्गवादिकंविप्रान्प्रतिमासंस्वशक्तितः ॥ ९ ॥ धा
रिताचेत्पुनर्वर्षेयथाशक्त्यागवादिकम् ॥ दत्त्वापरंरवेर्भूयःशृणुयत्फलमश्नुते ॥ १० ॥ स्वर्णशृंगींचपंचम्यांषष्ठ्यांचवृषभंनरः ॥ प्रति
मासंद्विजातिभ्योयद्दत्त्वाफलमश्नुते ॥ ११ ॥ तत्प्राप्नोत्यखिलंसम्यग्व्रतमेतदुपोषितः ॥ तंचलोकमवाप्नोतिमार्तंडोयत्रतिष्ठति ॥ १२ ॥
शांडिलेयसमःकृष्णतेजसानात्रसंशयः॥मार्तंडसप्तमीमेतामुपोष्यैतेगणादिवि॥१३॥विद्योतमानाद्दृश्यंतेलोकैरद्यापिभूधर॥तस्मात्त्वमादिदेवं
शंग्रहेशंभास्करंरविम्॥अनयार्चयगोविंदगोपतिंगोलसन्निभम् ॥ १४ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेमार्तंडसप्तमीवर्णनं
नामनवाधिकशततमोऽध्यायः ॥ १०९ ॥ ७ ॥ ब्रह्मोवाच ॥ ॥ शुक्लपक्षेतुसप्तम्यांमासिभाद्रपदेऽच्युत॥प्रणम्यशिरसादित्यंपूजयेत्सप्तवाह
नम् ॥ १ ॥ पुष्पधूपादिभिर्वीरकृतपानांचतर्पणैः ॥ पाषंडादिभिरालापमकुर्वन्नियतात्मवान् ॥ २ ॥ विप्रायदक्षिणांदत्वानक्तंभुंजीतवा
ग्यतः ॥ तिष्ठन्व्रजन्प्रस्थितश्चक्षुतप्रस्खलितादिषु ॥ ३ ॥ आदित्यनामस्मरणंकुर्वन्नुच्चारणंतथा ॥ अनेनैवविधानेनमासान्द्वादशवैक्र
मात् ॥ ४ ॥ उपोष्यपारणेपूर्णेसमभ्यर्च्यजगद्गुरुम् ॥ पुण्येनश्रावणेनेहप्रीणयन्पुष्टिमश्नुते ॥ ५ ॥ अनंतंश्रावणेनेहयतःफलमुदाहृतम् ॥
तेनादित्यंसमभ्यर्च्यतद्वलभतेफलम् ॥६॥ एवंयःपुरुषःकुर्यादादित्याराधनंशुचिः॥ प्राप्येहविपुलंभोगंधर्ममर्थंतथाऽव्ययम् ॥७॥ अमुत्रलो
कमायातिदिव्येस्वर्गीतसंयुते॥नारीवास्वर्गमभ्येत्यह्यनंतंफलमश्नुते ॥८॥इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेऽनंतसप्तमीव्रतवर्ण
नंनामदशाधिकशततमोऽध्यायः ॥ ११० ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ ॥ श्रावणेमासिदेवाग्र्यंसप्तम्यांसप्तवाहनम् ॥ शुक्लपक्षेसमभ्यर्च्यपुष्पधू
पादिभिःशुचिः ॥ १ ॥ पाखंडादिभिरालापमकुर्वन्नियतात्मवान् ॥ विप्रायदक्षिणांदत्त्वानक्तंभुंजीतवाग्यतः ॥ २ ॥ अभ्यंगंदेवदेवस्यवर्षे
वर्षेनियोजयेत् ॥ सप्तम्यामन्नमेवाग्र्यंशुभंशुक्लंनवंतथा ॥ ३ ॥ विभवेषुतथान्येषुवादित्राण्येववैविदुः ॥ तथादेवस्यमासेऽस्मिन्नभ्यंगंपरि

१ विद्वान्-इ०पा० ।

गीयते ॥ ४ ॥ यस्तुचाराधयेद्भक्त्याभास्करस्यनरोऽच्युत ॥ अभ्यंगंविधिवच्छक्त्याकृत्वाब्राह्मणभोजनम् ॥ ५ ॥ शंखतूर्यनिनादैश्चब्रह्म
घोषैश्चपुष्कलैः ॥ सदिव्यंयानमारूढोलोकमायातिहेलिनः ॥ ६ ॥ अनेनैवविधानेनमासान्द्वादशवैक्रमात् ॥ उपोष्यपारणेपूर्णेदद्याद्विप्रा
यदक्षिणाम् ॥ ७ ॥ व्रतंयःपुरुषःकुर्यादादित्याराधनंशुचिः ॥ सगच्छेत्परमंलोकंदिव्यंवैवनमालिनः ॥ ८ ॥ इतिश्रीभविष्येमहापुराणे
ब्राह्मेपर्वणिसप्तमीकल्पेऽभ्यंगसप्तमीवर्णनंनामैकादशोत्तरशततमोऽध्यायः॥ १११ ॥छ॥ब्रह्मोवाच॥ ॥एवंकृष्णसदाभानुर्नरैर्भक्त्यायथाविधि॥
फलंददात्यसुलभंसलिलेनापिपूजितः ॥ १ ॥ नभानुर्जीवदानेननपुष्पैर्नफलैस्तथा ॥ आराध्यतेसुशुद्धेनहृदयेनैवकेवलम् ॥ २ ॥
रागादपेतंहृदयंवाग्दुष्टानानृतादिभिः ॥ हिंसाविरहितंकर्मभास्कराराधनत्रयम् ॥ ३ ॥ रागादिदूषितेचित्तेनास्पदीतिमिरापहः ॥
बध्नातितंनरंहंसःकदाचित्कर्दमांभसि ॥ ४ ॥ तमसोनाशनायालंचेंदोलैखाह्यनारतम् ॥ हिंसादिदूषितंकर्मकेशवाराधनेकुतः ॥ ५ ॥
जनाश्चित्ताप्रसादाद्वैनचापातिमिरापहम् ॥ तस्मात्सत्यस्वभावेनसत्यवाक्येनचाच्युत ॥ ६ ॥ अहिंसकेनचादित्योनिसर्गादेवतोषितः ॥
सर्वस्वमपिदेवाययोदद्यात्कुटिलाशयः ॥ ७ ॥ शनैराराध्यतेह्येवंदेवदेवंदिवाकरम् ॥ रागादपेतंहृदयंकुरुत्वंभास्करार्पणम् ॥ ८ ॥
ततःप्राप्स्यसिदुःप्राप्यमयत्नेनैवभास्करम् ॥ ॥ विष्णुरुवाच ॥ देवेशःकथितःसम्यक्काम्योऽयंभास्करोमयि ॥ ९ ॥ आराधन
विधिं सर्वंभूयः पृच्छामितंवद ॥ कुलेजन्मतथारोग्यंधनवृद्धिंचदुर्लभाम् ॥ १० ॥ त्रितयंप्राप्यतेयेनतन्मेवदजगत्पते ॥ ११ ॥
॥ ब्रह्मोवाच ॥ मासेतुमाघेसितसप्तमेऽह्निहस्तर्क्षयोगेजगतःप्रसूतिम् ॥ संपूज्यभानुंविधिनोपवासीसुगंधधूपान्नवरोपहारैः ॥ १२ ॥
गृहीतुपुष्पैःप्रतिपाद्यपूजांदानादियुक्तंव्रतमब्दमेकम् ॥ दद्याच्चदानंमुनिपुंगवेभ्यस्तत्कथ्यमानंविनिबोधधीर ॥ १३ ॥ वस्त्रंतिलान्व्रीहिय
वान्हिरण्यंयवान्नमंभःकरकामुपानहम् ॥ छत्रोपपन्नंगुडफाणिताढ्यंदद्यात्क्रमाद्वस्तुअनुक्रमेण ॥ १४ ॥ यद्येषवर्षैविधिनोदितेनयस्यांतिथौ
लोकगुरुंप्रपूज्य ॥ अश्नंतनान्यात्मविशुद्धेतोः संप्राशनानीहनिबोधतानि ॥ १५ ॥ गोमूत्रमंभश्चरसोतुशाकंदूर्वादधिव्रीहितिलान्य

१ पठेच्च पाद्यम्-इ० पा० ।

वांश्च ॥ सूर्यांशुतप्तंजलमंबुजाक्षक्षीरंचमासैः क्रमशःप्रयुज्य ॥ १६ ॥ कुलेप्रधानेधनधान्यपूर्णेपद्मावृतेह्यस्तसमस्तदुःखे ॥ प्राप्नोति
जन्माऽविकलेंद्रियश्चभवत्यरोगोमतिमान्सुखीच ॥ १७ ॥ तस्मात्त्वमप्येतदमोघवीर्यंदिवाकराराधनमप्रमत्तः ॥ कुरुप्रभावंभगवंतमी
शमाराध्यकामानखिलानुपेहि॥१८॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेतृतीयपदव्रतवर्णनंनामद्वादशोत्तरशततमोऽध्यायः॥
॥ ११२ ॥छ॥ विष्णुरुवाच ॥ ॥ सुरज्येष्ठपुनर्ब्रूहियत्पृच्छाम्यहमादितः ॥ यत्फलंसमवाप्नोतिकारयित्वारवेर्गृहम् ॥ १ ॥ देवार्चांकार
यित्वातुयत्पुण्यंपुरुषोऽश्नुते ॥ पूजयित्वार्चाविधिवदनुलिप्यचयत्फलम् ॥ २ ॥ कानिमाल्यानिशस्तानिकानिनार्हतिभास्करः ॥
केधूपाभानुदयिताः केवर्ज्याश्चजगत्पतेः ॥ ३ ॥ उपचारफलंकिंस्यात्किंफलंगीतवादिते ॥ घृतक्षीरादिनायत्तुस्नापितेभास्करेफलम्
॥ ४ ॥ यथोपलेपनादौचफलमभ्युक्षितेनतु ॥ दिवाकरगृहेतातत्तदशेषंवदस्वमे ॥ ५ ॥ ब्रह्मोवाच ॥ ॥ साधुवत्सयदेतत्त्वंमार्तंडस्ये
हपृच्छसि ॥ शुश्रूषणेविधिंपुण्यंतदिहैकमनाःशृणु ॥ ६ ॥ यस्तुदेवालयंभानोर्दार्वंशैलमथापिवा ॥ कारयेन्मृन्मयंचापितस्यपुण्यफलंशृ
णु ॥ ७ ॥ अहन्यहनियज्ञेनयजतोयन्महत्फलम् ॥ प्राप्नोतितत्फलंभानोर्यःकारयतिमंदिरम् ॥ ८ ॥ कुलानांशतमागामिसमतीतंकुलंश
तम् ॥ कारयेद्भगवद्धामसनयेदर्कलोकताम् ॥ ९ ॥ सप्तजन्मकृतंपापंस्वल्पंवायदिवाबहु ॥ भानोरालयविन्यासप्रारंभादेवनश्यति ॥१०॥
सप्तलोकमयोभानुस्तस्ययःकुरुतेगृहम् ॥ प्रतिष्ठांसमवाप्नोतिसनरःसाप्तलौकिकीम् ॥ ११ ॥ प्रशस्तदेशभूभागेप्रशस्तंभवनंरवेः ॥
कारयेदक्षयाँल्लोकान्सनरःप्रतिपद्यते ॥ १२ ॥ इष्टकाचयविन्यासोयावद्वर्षाणितिष्ठति ॥ तावद्वर्षसहस्राणितत्कर्तुर्दिविसंस्थितिः ॥ १३ ॥
प्रतिमांलक्षणवतींयःकारयतिमानवः ॥ दिवाकरस्यतल्लोकमक्षयंप्रतिपद्यते ॥ १४ ॥ षष्टिर्वर्षसहस्राणांसहस्राणिसमोदते ॥ लोकेसुमनसां
वीरप्रत्येकंमधुसूदन ॥ १५ ॥ प्रतिष्ठाप्यरवेरर्चांसुप्रशस्तेनिवेशने ॥ पुरुषःकृतकृत्योऽस्तिनदोषमलमश्नुते ॥ १६ ॥ येभविष्यंतियेऽतीता
आकल्पंपुरुषाःकुले ॥ तांस्तारयतिसंस्थाप्यदेवस्यप्रतिमांरवेः ॥१७॥ अनुशिष्टाःकिलपुरायमेनयमकिंकराः ॥ पाशदंडकराःकृष्णप्रजा

१ क्षयम्–इ० पा० ।

संयमनोद्यताः ॥ १८ ॥ ॥ यमउवाच ॥ ॥ विहरंतुयथान्यायंनियोगोमेऽनुपाल्यताम् ॥ नाज्ञाभंगंकरिष्यंतिभवतांजंतवःक्वचित् ॥
॥ १९ ॥ केवलंयेजगन्मूलंविवस्वंतमुपाश्रिताः ॥ भवद्भिःपरिहर्तव्यास्तेषांनैवेहसंस्थितिः ॥ २० ॥ येतुवैवस्वतालोकेतच्चित्तास्तत्परा
यणाः ॥ पूजयंतिसदाभानुंतेचत्याज्याःसुदूरतः ॥ २१ ॥ तिष्ठंश्चप्रस्वपन्गच्छन्नुत्तिष्ठन्स्खलितेक्षुते ॥ संकीर्तयतिदेवंयःसनस्त्याज्यःसुदू
रतः ॥ २२ ॥ नित्यनैमित्तिकैर्देवंयेयजंतितुभास्करम् ॥ नचालोक्याभवद्भिस्तेतद्ध्यानंहंतिवोगतिम् ॥ २३ ॥ येपुष्पधूपवासोभिर्भूषणै
श्चापिवल्लभैः ॥ अर्चयंतिनतेग्राह्यामत्पितुस्तेपरिग्रहम् ॥ २४ ॥ उपलेपनकर्तारःकर्तारोमार्जनस्यये ॥ अर्कालयेपरित्याज्यंतेषांत्रि
पुरुषंकुलम् ॥ २५ ॥ येनवायतनंभानोःकारितंतत्कुलोद्भवः ॥ पुमान्सनावलोक्योवैभवद्भिर्दुष्टचक्षुषा ॥ २६ ॥ येनार्चाभगवद्भक्त्याम
त्पितुःकारिताशुभा ॥ नराणांतत्कुलंवीराःसदात्याज्यंसुदूरतः ॥ २७॥ भवतांभ्रमतांयत्रभानुसंश्रयमुद्रया ॥ नचाज्ञाभंगकृत्कश्चिद्भविष्य
तिनरःक्वचित् ॥२८॥ इत्युक्ताःकिंकरास्तेनयमेनसुमहात्मना ॥ अनाश्रित्यवचःकृष्णसत्राजितमथोगताः ॥२९॥तस्यतेतेजसासर्वेभानोर्भ
क्तस्यसुव्रत ॥ मोहिताःपतिताभूमौयथाचविहगानगाः ॥ ३० ॥ एतांमहाफलांयोर्चांभानोःकारयतेनरः ॥ तवाख्यानंमहाबाहोगृहंकारयि
तुश्चयत् ॥ ३१ ॥ यज्ञानराणांपापौघनाशकाःसर्वकामदाः ॥ तथैवेष्टोजगद्भानुःसर्वयज्ञमयोरविः ॥ ३२ ॥ इतिश्रीभविष्येमहापुराणे
ब्राह्मेपर्वणिसप्तमीकल्पेआदित्यालयबन्धनमार्जनादिफलवर्णनंनामत्रयोदशोत्तरशततमोऽध्यायः ॥ ११३॥ छ॥ब्रह्मोवाच ॥स्थापितांप्रतिमां
भानोःसम्यक्संपूज्यमानवः ॥ यंयंप्रार्थयतेकामंतंतंप्राप्नोत्यसंशयम् ॥ १ ॥ यःस्नापयतिदेवस्यघृतेनप्रतिमांरविः ॥ प्रस्थेप्रस्थेद्विजाग्र्या
णांसददातिगवांशतम् ॥ २ ॥ गवांशतस्यविप्राणांयद्दत्तस्यभवेत्फलम् ॥ घृतप्रस्थेनतद्भानोर्भवेत्स्नातकयोगिनाम् ॥ ३ ॥ भूरिद्युम्नेन
संप्राप्तासप्तद्वीपावसुंधरा ॥ घटोदकेनमार्तंडप्रतिमास्नापिताकिल ॥ ४ ॥ प्रतिमामसिताष्टम्यांघृतेनजगतीपतेः ॥ स्नापयित्वासमस्तेभ्यः
पापेभ्यःकृष्णमुच्यते ॥ ५॥ सप्तम्यामथषष्ठ्यांवागव्येनहविषारवेः ॥ स्नपनंतुभवेच्छ्रेष्ठंमहापातकनाशनम् ॥ ६ ॥ ज्ञानतोऽज्ञानतोवापिय
त्पापंकुरुतेनरः॥तत्क्षालयतिसंध्यायांघृतेनस्नपनंरवेः॥७॥सर्वयज्ञमयोभानुर्हव्यानांपरमंघृतम्॥तयोरशेषपापानांक्षालकःसंगमोभवेत् ॥८॥

येषुक्षीरवहानद्योह्रदाःपायसकर्दमाः ॥ मोदंतेतेषुलोकेषुक्षीरस्नानकरोरवेः ॥ ९ ॥ आह्लादंनिर्वृतिस्थानमारोग्यंचारुरूपताम् ॥ सप्त
जन्मान्यवाप्नोतिक्षीरस्नानपरोरवेः॥१०॥दध्यादीनांविकाराणांक्षीरतःसंभवोयथा ॥ यथाचविमलंक्षीरंयथानिर्वृतिकारकम्॥११॥तथाचनिर्म
लंज्ञानंभवत्यपिनसंशयः ॥ ग्रहानुकूलतापुष्टिःप्रियत्वमखिलेजने ॥ १२ ॥ करोतिभगवान्भानुःक्षीरस्नपनतोषितः ॥ सर्वस्यस्निग्धतामेति
दृष्टमात्रेप्रसीदति ॥ १३ ॥ घृतक्षीरेणदेवेशेस्नापितेतिमिरापहे ॥ १४॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेआदित्यस्नापनयो
गवर्णनंनामचतुर्दशोत्तरशततमोऽध्यायः ॥११४॥ ब्रह्मोवाच ॥ प्रशंसंतिमहात्मानःसंवादंभास्कराश्रयम् ॥ गौतम्यासहकौसल्यासुमनायां
सुरालये ॥ १ ॥स्वर्गेऽतिशोभनांदृष्ट्वाकौसल्यांपतिनासह ॥ ब्रह्माणीगौतमीनामपर्यपृच्छतविस्मिता॥२॥गौतम्युवाच ॥ शतशःसंतिकौश
ल्येदेवाःस्वर्गनिवासिनः ॥ देवपत्न्यस्तथैवैताःसिद्धाःसिद्धांगनास्तथा ॥ ३ ॥ नतेषामीदृशोगन्धोनकांतिर्नसुरूपता ॥ नवाससीशोभनेयेय
थातेपतिनासह ॥४॥ नैवाभरणजातानितेषांभ्राजंतिवैतथा ॥ यथातवयथापत्युर्नचस्वर्गनिवासिनाम् ॥ ५ ॥ सुस्नातचैलतश्चैवयुवयोरतिरि
च्यते ॥ लेखाद्यानामपीशानांक्षयातिशयवर्जिताः ॥६॥ तपःप्रभावादानंवाहोमंवाकर्मसंज्ञितम् ॥ युवयोर्यत्समाचक्ष्वतत्सर्वंवरवर्णिनि॥७॥
येनमेविक्रमेबुद्धिर्मनुजायेनसंगताः ॥ ॥ कौशल्योवाच ॥ ॥ यज्ञोयज्ञेश्वरोभानुरावाभ्यांजातुतोषितः ॥ ८ ॥ स्वर्गप्राप्तिरियंतस्य
कर्मणःफलमुत्तमम् ॥ सुरूपताततःप्रीतिःपश्यतांचारुवेषिता ॥ ९ ॥ यत्पृच्छसिमहाभागेतदप्येषांवदामिते ॥ तीर्थोदकैस्तथागंधैःस्ना
पितोयदिवाकरः ॥ १० ॥ तेनकांतिरियंनित्यंदेवांस्त्रिभुवनेश्वरान् ॥ मनःप्रसादःसौम्यत्वंशरीरेयेचनिर्वृताः ॥ ११ ॥ यत्प्रियत्वंचसर्वस्या
त्त्कृतस्नापनात्फलम् ॥ यान्यभीष्टानिवासांसियच्चाभीष्टविभूषणम् ॥ १२ ॥ रत्नानियान्यभीष्टानियत्प्रियंचानुलेपनम् ॥ येधूपायानिमा
ल्यानिदयितान्यभवन्सदा ॥ १३ ॥ ममभर्तुस्तदैवास्यतदाराज्यंप्रशासतः ॥ तानिसर्वाणिसर्वज्ञसर्वपातारिभानुनि ॥ १४ ॥ दत्तानितत्स
मुत्थोऽयंगंधधूपात्मकोगुणः ॥ आहारादयितायेचपवित्राश्चनिवेदिताः ॥ १५ ॥ त्रिलोककर्तुःसवितुस्तृप्तिस्तद्गुणसंभवा ॥ स्वर्गकामेन
मभर्त्रामयाचशुभदर्शने ॥ १६ ॥ कृतमेतत्कृतेनाभूदावयोर्भवसंक्षयः ॥ येत्वकामानराःसम्यक्तत्कुर्वंतिचशोभने ॥ १७ ॥ तेषांददाति
विश्वेशोभगवान्मुक्तिमीश्वरः ॥ ॥ ब्रह्मोवाच ॥ ॥ एवमभ्यर्च्यमार्तंडमर्कंदेवेश्वरंगुरुम् ॥ १८ ॥ प्राप्नोत्यभिमतान्कामान्कृष्णाहंशा

श्वतीःसमाः ॥ चंदनागुरुकर्पूरकुंकुमोशीरपद्मकैः ॥ १९ ॥ अनुलिप्तोनरैर्भक्त्यादंदातिसागरोद्भवाम् ॥ कालेयकंतुरुष्कंचरक्तचंदनमेवच ॥ २० ॥ यान्यात्मनःसदेष्टानितानिशस्यान्यपाकुरु ॥ गंधाश्चापिशुभायेचधूपायेविजयोदयाः ॥ २१ ॥ दिवाकरस्यधर्मज्ञोनिवेद्यात्सर्वदाच्युत ॥ नदद्यात्सल्लकीक्षारंनोमुखेनचसंहृतम् ॥ २२ ॥ दद्यादर्कायधर्मज्ञधूपमाराधनोद्यतः ॥ मालतीमल्लिकाचैवयूथिकाजातिमुक्तिकः ॥ २३ ॥ पाटलाःकरवीरश्चजपासेवंतिरेवच ॥ कुंकुमस्तगरश्चैवकर्णिकारःसकेशरः ॥ २४ ॥ चंपकःकेतकःकुंदोबाणवर्वरमालिका ॥ अशोकस्तिलकोलोध्रस्तथाचैवाटरूषकः ॥ २५ ॥ शतपत्राणिधन्यानिबकाह्वानविशेषतः ॥ अगस्तिंकिंशुकंतद्वत्पूजार्थंभास्करस्यतु ॥ २६ ॥ अमीपुष्पप्रकारास्तुशस्ताभास्करपूजने ॥ बिल्वपत्रंशमीपत्रंपत्रंवाभृंगरस्यच ॥ २७ ॥ तमालपत्रंचहरेःसदैवभगवत्प्रियम् ॥ तुलसीकालतुलसीतथारक्तंचचंदनम् ॥ २८ ॥ केतकीपत्रपुष्पंतुसद्यस्तुष्टिकरंरवेः ॥ पद्मोत्पलसमुत्थानिरक्तंनीलोत्पलंतथा ॥ २९ ॥ सितोत्पलंतुभानोस्तुदयितानिसदाच्युत ॥ कृष्णलोन्मत्तकंकांतंतथैवागिरिमल्लिका ॥ ३० ॥ नकर्णिकारिकापुष्पंभास्करायनिवेदयेत् ॥ कुटजंशाल्मलीपुष्पंतथान्यद्गन्धवर्जितम् ॥ ३१ ॥ निवेदितंभयंरोगंनिस्वतांचप्रयच्छति ॥ येषांनप्रतिषेधोस्तिगंधवर्णान्वितानिच ॥ ३२ ॥ तानिपुष्पाणिदेयानिभानवेलोकभानवे ॥ सुगंधैश्चसुरामांसीकर्पूरागरुचंदनैः ॥ ३३ ॥ तथान्यैश्चशुभैर्द्रव्यैरर्चयेद्वनमालिनम् ॥ दुकूलपट्टकौशेयवार्क्षकार्पासकादिभिः ॥ ३४ ॥ वासोभिःपूजयेद्भानुंयानिचात्मप्रियाणितु ॥ भक्ष्याणियान्यभीष्टानिभोज्यान्यभिमतानिच ॥ ३५ ॥ फलंचवल्लभंयत्स्यात्तत्तेदेयंदिवाकरे ॥ सुवर्णमणिमुक्तानिरजतंचतथाच्युत ॥ ३६ ॥ दक्षिणाविविधाचेहयच्चान्यदपिवल्लभम् ॥ तत्तुदेवाधिदेवायभास्करायनिवेदयेत् ॥ ३७ ॥ आत्मानंभास्करंमत्वायज्ञंतस्मैनिवेदयेत् ॥ तत्तद्व्यक्तरूपायभास्करायनिवेदयेत् ॥ ३८ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पआदित्यमाहात्म्येसूर्यपूजाविधिवर्णनंनामपंचदशोत्तरशततमोऽध्यायः ॥ ११५ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ कृष्णराजामहानासीद्ययातिकुलसंभवः ॥ सत्राजितेतिविख्यातश्चक्रवर्तीमहा

१ ददातिमनसोप्सितान्-इ०पा०।

बलः ॥ १ ॥ प्रभवातेजसाकान्त्याक्षांत्यावलसमन्वितः ॥ धैर्यगांभीर्यसंपन्नोवदान्योयशसान्वितः ॥ २ ॥ बुद्ध्याविक्रमदक्षश्चसंपन्नोब्रा
ह्मणायतः॥कृतीकविस्तथाशूरःषट्पदाख्यैर्नानिर्जितः॥३॥सदापंचसुरक्तश्चवसुमद्भिर्नानिर्जितः॥रुद्रतावसुभिर्जातैःसत्वश्रद्धासमन्वितः॥४॥
अंवुजस्यांडजस्येवआत्रेयस्यतथाच्युत॥अंवुजायास्तथाकृष्णवार्यपात्रंसवैविभो॥५॥ गांगेयबलसंतुल्यःपौलस्त्याचाश्रमोयथा॥गांगेयस्य
तथाकृष्णाधिषणस्यहरेर्यथा ॥ ६ ॥ काम्यश्चद्विजभक्तस्तुतथावाल्मीकिवत्सदा ॥ व्यासस्यदेवशार्दूलजामदग्न्यस्यवाविभोः ॥ ७ ॥
एषांनैकैर्गुणैर्युक्तःसराजाक्ष्मातलेविभो ॥ शशाससमहाबाहुःसप्तद्वीपांवसुंधराम् ॥८॥ यस्मिन्गाथांप्रगायंतियेपुराणविदोजनाः॥ सत्राजिते
महाबाहौकृष्णधात्रींसमाश्रिते॥९॥यावत्सूर्यउदेतिस्मयावच्चप्रतितिष्ठति॥सत्राजितंतुतत्सर्वंक्षेत्रमित्यभिधीयते॥१०॥ससर्वरत्नसंयुक्तांसप्त
द्वीपवतींमहीम्॥शशासधर्मेणपुराचक्रवर्तीमहाबलः॥११॥नान्यायकृन्नचाशक्तोवदान्योबलवत्तरः॥तस्याभूत्पुरुषाराज्ञःसम्यग्धर्मानुशासिन
॥१२॥चत्वारःसचिवास्तस्यराज्ञःसत्राजितस्यतु॥बभूवुरप्रतिहताःसदावातिबलस्यवै॥१३॥तस्यभक्तिरतीवासीन्निसर्गादेवभूपतेः॥दिवाकरे
जगद्धात्रौरक्तचंदनमालिनि॥१४॥तस्योर्ध्वमहिमानंचविलोक्यपृथिवीपतेः॥नकेवलंजनस्यापिह्यभवत्तस्यविस्मयः ॥ १५॥ संचिंतयामास
नृपःसमृद्ध्याविस्मितस्तथा॥कथंस्यात्संपदेषामेपुनरप्यन्यजन्मनि॥१६॥ एवंसबहुशोराजातदाकृष्णमहायशाः ॥ चिंतयन्नापतन्मूलंनचा
सीन्निश्चयान्वितः ॥ १७ ॥ यदानानिश्चयंराजासययौभार्गवीप्रियः ॥ सदापप्रच्छधर्मज्ञान्सविप्रान्समुपागतान् ॥ १८ ॥ सर्वांश्चससुखान्वी
रविविक्रांतःपुरस्थितः ॥ प्रणिपत्यमहाबाहुर्गृहीतुंशासनक्रियाः ॥१९॥ विश्वासानुग्रहाबुद्धिर्भवतांमयिसत्तमाः ॥ तदहंप्रष्टुमिच्छामिकिंचि
त्तद्वक्तुमर्हथ ॥ २० ॥ सद्विद्याखिलविज्ञानसम्यग्धौतांतरात्मभिः ॥ भवद्भिर्यद्यनुग्राह्यःस्यामहंवेदवित्तमाः ॥ २१ ॥ तद्यथावन्मयापृष्टा
भवंतोमत्प्रसादिनः ॥ वक्तुमर्हथविद्वांसःसर्वस्यैवोपकारिणः ॥ २२ ॥ ब्रह्मोवाच ॥ यस्तेमनसिसंदेहस्तंपृच्छाद्यमहीपते ॥ वदिष्यामो
यथान्यायंयत्तेमनसिवर्त्तते ॥ २३ ॥ वयंहिनृपशार्दूलभवतापरितोषिताः ॥ सम्यक्प्रजांपालयित्राददताभोजनंसदा ॥ २४ ॥ संतुष्टाब्राह्म

णोऽश्रीयाच्छ्यिाद्वाधर्मसंशयम् ॥ हितंचोपदिशेद्वर्त्मअहिताद्वानिवर्तयेत् ॥ २५ ॥ विवक्षुमथभूपालंभार्यातस्यैवधीमतः ॥ प्रणिपातेनचा
हेदंविनयात्प्रणयान्वितम् ॥ २६ ॥ नस्त्रीणामवनीपालवक्तुमीदृगिहेष्यते ॥ तथापिभूपतेवक्ष्येसंपदीदृक्सुदुर्लभा ॥ २७ ॥ भूयोऽपिसंशया
न्प्रष्टुमर्ह्मीशोभवानृषीन् ॥ नन्वहंपुरुषव्याघ्रसदांतःपुरचारिणी ॥ २८ ॥ तत्प्रसादंयदिभवान्करोतिममपार्थिव ॥ तन्मदीयमृषीन्प्रष्टुंसंदे
हंपार्थिवार्हसि ॥ २९ ॥ सत्राजितउवाच ॥ ब्रूहिसुभ्रुमतंयत्तेप्रष्टव्यायन्मयाद्विजाः ॥ भूयोऽहमात्मसंदेहंप्रक्ष्याम्येताद्विजोत्तमान् ॥ ३० ॥
विमलवत्युवाच ॥ श्रूयन्तेपृथिवीपालनृपायेतुचिरंतनाः ॥ येषांचसंपद्भूपालयथातेद्यकिलाभवत् ॥ ३१ ॥ तदीदृक्संपदोधा
मतवाशेषक्षितीश्वर ॥ येनकर्मविपाकेनतद्वदंतुमहर्षयः ॥ ३२ ॥ अहंचभवतोभार्यासर्वसीमंतिनीवरा ॥ अतीवकर्मणायेनतद्विज्ञा
नेकुतूहलम् ॥ ३३ ॥ तथासंपत्समृद्धत्वमन्येष्वपिहिविद्यते ॥ निरस्तातिशयत्वेननूनंनाल्पेनकर्मणा ॥ ३४ ॥ तदन्यजन्मच
रितंनरनाथनिजंभवान् ॥ मुनीन्पृच्छत्वयाचाहंयन्मयाचपुराकृतम् ॥ ३५ ॥ ॥ ब्रह्मोवाच ॥ ॥ सतथोक्तस्तयाराजापत्न्या
विस्मितमानसः ॥ मुनीनांपुरतोभार्याप्रशंसन्वाक्यमब्रवीत् ॥३६॥साधुदेविमतंयन्मेत्वयायदिदमीरितम् ॥ सत्यंमुनिवचःपुंसांस्वार्द्धंवैगृहि
णीतथा ॥ ३७॥ सोऽहमेतन्महाभागेपृच्छाम्येतान्महामुनीन् ॥ तेषामविदितंकिंचित्त्रिषुलोकेषुविद्यते ॥ ३८ ॥ एवमुक्त्वाप्रियांराजाप्र
णिपत्यचतानृषीन् ॥ यथावदेतदखिलंपप्रच्छधरणीधरः ॥ ३९ ॥ ॥ राजोवाच ॥ ॥ भगवंतोममाशेषंप्रसादाद्धतचेतसः ॥
कथयंतुयथावृत्तंयन्मयासुकृतंकृतम्॥४०॥कोऽहमासंपुराविप्राःकिंस्वित्कर्ममयाकृतम् ॥ किंवानयातुचार्वङ्ग्याममपत्न्याकृतंद्विजाः ॥४१॥
येनावयोरियंलक्ष्मीर्मर्त्यलोकेसुदुर्लभा ॥ चत्वारश्चाप्रतिहताअमात्याममगच्छतः ॥ ४२ ॥ अशेषाभूभृतोवश्याधनस्यांतोनविद्यते ॥
बलंचैवाप्रतिहतंशरीरारोग्यमेवच ॥ ४३ ॥ प्रतिभातिचमेकांत्याभार्यायामखिलंजगत् ॥ ममापिवपुषस्तेजोनकश्चित्सहतेद्विजाः ॥ ४४ ॥

१ यत्ते सांशयिकं हृदि-इं०पा० ।

सोऽहमिच्छामितज्ज्ञातुंतथैवेयमनिंदिता ॥ निजानुष्ठानमखिलंयस्याशेषमिदंफलम् ॥ ४५ ॥ ॥ ब्रह्मोवाच ॥ ॥ इतिपृष्टानरेंद्रेणसमस्ता
स्तेतपोधनाः ॥ परावसुमथोचुस्तेकथ्यतामस्यभूभृतः ॥ ४६ ॥ चादितःसोऽपिधर्मज्ञैर्महाशूरोमहामतिः ॥ योगमास्थायसुचिरंयथावद्य
तमानसः ॥ ४७ ॥ ज्ञातवान्नृपतेस्तस्यपूर्वदेहविचेष्टितम् ॥ सतमाहमुनिर्भूपंविज्ञानेच्छुंमहामतिम् ॥ ४८ ॥ सत्राजितंमहात्मानंजितशत्रुं
मनस्विनम् ॥ सपत्नीकंमहाबुद्धिंब्राह्मणान्सत्यवादिनः ॥ ४९ ॥ ॥ परावसुरुवाच ॥ ॥ शृणुभूपालसकलंयस्येदंकर्मणःफलम् ॥
तवराज्यादिकंसुभ्रूर्येयंचासीन्महीपते ॥ ५० ॥ त्वमासीःशूद्रजातीयःपरहिंसापरायणः ॥ कुष्ठार्तोदंडपारुष्योनिःस्नेहःसर्वजंतुषु ॥ ५१ ॥
इयंचभवतोभार्यापूर्वमप्यायतेक्षणा ॥ नित्यंबभूवत्वच्चित्ताभवच्छुश्रूषणेरता ॥ ५२ ॥ पतिव्रतामहाभागाभर्त्स्यमानापिनिष्ठुरम् ॥
त्वद्वाक्येषुचसर्वेषुवीरकर्मसुचोद्यता ॥ ५३ ॥ नैश्वर्यादसहायस्यत्यज्यमानस्यबंधुभिः ॥ क्षयंजगामयोर्थोऽभूत्संचितःप्रपितामहैः ॥ ५४ ॥
तस्मिन्क्षीणेकृषिपरस्त्वमासीःपृथिवीपते ॥ सापिकर्मविपाकेनकृषिर्विफलतांगता ॥ ५५ ॥ ततोनिःस्वंपरिक्षीणंपरेषांभृत्यतांगतम् ॥
तत्याजसाध्वीनेयंत्वांत्यज्यमानापिपार्थिव ॥ ५६ ॥ अनयातुसमंसाध्व्याभानोरावसथेत्वया ॥ कृतंशुश्रूषणंवृत्त्याभक्त्यासम्मार्जनादिकम् ॥ ५७ ॥
निःस्नेहःसर्वकामेभ्यस्तन्मयस्त्वंतदर्पणः ॥ अहन्यहनिविस्रंभात्तस्मिन्नावसथेरवेः ॥ ५८ ॥ कान्यकुब्जेपुरेवीरमहाशुश्रूषितंत्वया ॥ दिवा
करालयेनित्यंकृतंतन्मार्जनंत्वया ॥ ५९ ॥ तथैवाभ्युक्षणंभूपनित्यंचैवानुलेपनम् ॥ पत्न्यानयानृपतथायुष्मच्चित्तानुवृत्तया ॥ ६० ॥
कारितंश्रवणंपुण्यमितिहासपुराणयोः ॥ दत्त्वांगुलीयकंराजन्पितृदत्तंतुवाचके ॥ ६१ ॥ अहन्यहनियत्कर्मयुवयोर्नृपकुर्वतोः ॥ तत्रैवतन्म
यत्वेनपापहानिरजायत ॥ ६२ ॥ भानोःकार्यमयाकार्यंपरंशुश्रूषणंतथा ॥ नाप्रभातंप्रभातंवाचिंतेयमभवन्निशि ॥ ६३ ॥ एवमायतनंरम्य
मित्येवंचसुखावहम् ॥ सूर्यवच्चैवमेतत्स्यादित्यासीत्तेमनस्तदा ॥ ६४ ॥ योगिनांसुखदंकर्मतथैवसुखमित्यपि ॥ भवच्चित्तमभूत्तत्रयोगकर्म
ण्यहर्निशम् ॥ ६५ ॥ एवंतन्मनसस्तत्रकृतोद्योगस्यपार्थिव ॥ भूतानुमानिनःसम्यग्यथोक्ताधिककारिणः ॥ ६६ ॥ स्मरतोगोपतिंनित्यं
चित्तेनापिदृढात्मनः ॥ निःशेषमुपशांतंतेपापंसूर्यनिषेवणात् ॥ ६७ ॥ ततोऽधिकंपुरस्तस्मादगारस्यानुलेपनम् ॥ संमार्जनंचबहुशःसपत्नीकेन

यत्कृतम् ॥६८॥ केवलंधर्ममाश्रित्यत्यक्त्वावृत्तिमशेषतः ॥ अनयाश्रवणंपुण्यंकारितंवाचकात्सदा ॥६९॥ नानाधातुविकारैस्तुगोमयेनमृदा
तथा ॥ उपलेपनंकृतंभक्त्यात्वयापूर्वंसुरालये ॥ ७० ॥ अथाजगामवैतत्रकुवलाश्वोमहीपतिः ॥ महासैन्यपरीवारःप्रभूतगजवाहनः ॥७१ ॥
सर्वसंपदुपेतंतंसर्वाभरणभूषितम् ॥ वृतंभार्यासहस्रेणदृष्ट्वासंक्रंदनोद्भलम् ॥ ७२ ॥ स्पृहाकृतात्वयातत्रचारुमौलिनिपार्थिवे ॥ सर्वकामप्र
दंकर्मक्रियतेभास्कराश्रितम् ॥ ७३ ॥ तेनैतदखिलंराज्यमशेषंचातवान्महीम् ॥ तेजश्चैवाधिकंयत्तेतथैवशृणुपार्थिव ॥ ७४ ॥ योगप्रभा
वतोलब्धंकथयाम्यखिलंतव ॥ तत्रैवावसथेदीपःप्रशांतःस्नेहसंक्षयात् ॥ ७५ ॥ निजभोजनतैलेनपुनःप्रज्वालितस्त्वया ॥ अनयाचोत्तरी
येणवीरवर्त्योपबृंहितः ॥ ७६ ॥ तवपत्न्यास्वयंज्वाल्यकांतिरस्यास्ततोऽधिका ॥ तवाप्यखिलभूपालमनःक्षोभकरंपुनः ॥ ७७ ॥ तेजोनरेंद्र
एतस्मात्किमुताराध्यभास्करम् ॥ एवंनरेंद्रःशूद्रत्वाद्भानुकर्मपरायणः ॥ ७८ ॥ तन्मयत्वेनसंप्राप्तोमहिमानमनुत्तमम् ॥ किंपुनर्योनरो
भक्त्यानित्यंशुश्रूषणादृतः ॥ ७९ ॥ करोतिसततंपूजांनिष्कामोनान्यमानसः ॥ सर्वामृद्धिमिमांलब्ध्वासर्वलोकमहेश्वरः ॥ ८० ॥ पूजयि
त्वार्कमीशेशंतमाराध्यनसीदति ॥ पुष्पैर्धूपैस्तथावान्यैर्दीपैर्वस्त्रानुलेपनैः ॥ ८१ ॥ आराधयार्कंतद्वेश्मसदासम्मार्जनादिना ॥ यद्यदि
ष्टतमंकिंचिद्यद्यदन्यत्तुदुर्लभम् ॥ ८२ ॥ तद्दत्वाचजगद्धात्रेभास्करायनसीदति ॥ सुगंधागुरुकर्पूरचंदनागुरुकुंकुमैः ॥ ८३ ॥ वासोभि
र्विविधैर्धूपैःपुष्पैःस्रक्चामरध्वजैः ॥ अन्योपहारैर्विविधैःकृतक्षीराभिषेचनैः ॥ ८४ ॥ गीतवादित्रनृत्याद्यैस्तोषयस्वार्कमादरात् ॥ पु
ण्यरात्रिषुमार्तंडंनृत्यगतिरथोज्ज्वलम् ॥ ८५ ॥ भूपजागरणैर्भक्त्याहोमःकार्यःसदाशुचिः ॥ इतिहासपुराणानांश्रवणेनविशेषतः ॥ ८६ ॥
तथावेदस्वनैःपुण्यैर्ऋक्सामयजुर्भिर्नृप ॥ एवंसंतोष्यतेभक्त्याभगवान्भवभंगकृत् ॥ ८७ ॥ भूयोवैवस्वतेभूत्वाभवद्भद्भास्करोनरैः ॥
तोषितोभगवान्भानुर्ददात्यभिमतंफलम् ॥ ८८ ॥ दैवकर्मसमर्थानांप्राणिनांस्मृतिसंभवैः ॥ तोषितोभगवान्कामान्प्रयच्छातिदिवाकरः ॥
॥ ८९ ॥ नैषवृत्तैर्नरत्नौघैःपुष्पैर्धूपानुलेपनैः ॥ सद्भावेनैवमार्तंडस्तोषमायातिसंस्मृतः ॥ ९० ॥ त्वयैकाग्रमनस्केनगृहसम्मार्जनादिक
म् ॥ कृत्वाल्पमीदृशंप्राप्तंराज्यमन्यत्तुदुर्लभम् ॥९१॥ अनयाश्रवणंपुण्यंकारयित्वागृहेरवेः ॥ ईदृक्प्राप्तासंपदियंपूजांकृत्वातुवाचके॥ ९२ ॥

प्रातोपकरणैर्यस्तमेकाग्रमतिरंडजम् ॥ संतोषयतिनेंद्रोऽपिभवतावैसमःक्वचित् ॥ ९३ ॥ तस्मात्त्वमनयादेव्यासहात्यंतविनीतया ॥ भा
स्कराराधनेयत्नंकुरुधर्मभृतांवर ॥ ९४ ॥ ब्रह्मोवाच ॥ ॥ एतन्मुनेर्वचोवीरनिशम्यसनराधिपः ॥ भार्यासहायःसतदासंप्रहृष्टतनूरुहः ॥
॥ ९५ ॥ कृतकार्यमिवात्मानंमन्यमानस्तदाभवत् ॥ उवाचप्रणतोभूत्वाराजासत्राजितोऽच्युत ॥ ९६ ॥ ॥ सत्राजितउवाच ॥ ॥ य
थामरत्वंसंप्राप्ययथावायुर्बलंपरम् ॥ परंनिर्वाणमाप्नोतितथाहंवचसातव ॥ ९७ ॥ कृतकृत्यःसुखासीनोनिर्वृतिंपरमांगतः ॥ अज्ञानतमसा
च्छन्नेयत्प्रदीपस्त्वयाधृतः ॥ ९८ ॥ अहमेषाचतन्वंगीविभूतिभ्रंशभीरुकः ॥ द्रव्यमापादितंब्रह्मन्निहाद्यवचसातव ॥ ९९ ॥ संपदः
कथितंबीजमावयोर्भवतामुने ॥ त्वद्वक्त्राद्दुद्यतावाचाविज्ञाताहिद्विजोत्तम ॥ १०० ॥ नरत्नैर्नचवित्तौघैर्नचपुष्पानुलेपनैः ॥ आराध्य
श्चजगन्नाथोभावशून्यैर्दिवाकरः ॥ १०१ ॥ बाह्यार्थनिरपेक्षैश्चमनसैवमनोगतिः ॥ निःस्वैराराध्यतेदेवोभानुःसर्वेश्वरेश्वरः ॥ १०२ ॥ सर्व
मेतन्मयाज्ञातंयत्त्वमात्थमहामुने ॥ यत्पृच्छामियन्मेत्वंप्रसादसुमुखोवद ॥ १०३ ॥ कथमाराधितोदेवोनरैःस्त्रीभिश्चभास्करः ॥ तोष
मायातिविप्रेंद्रतद्वदस्वमहामुने ॥ १०४ ॥ रहस्यानिचदेवस्यप्रीतयेयातिथिःसदा ॥ तान्यशेषाणिमेब्रूहिअर्काराधनकांक्षिणः ॥ १०५ ॥
॥ परावसुरुवाच ॥ ॥ शृणुभूपालयैर्भानुर्गृहेष्वाराध्यतेजनैः ॥ नारीभिश्चातिघोरेऽस्मिन्पतिताभिर्भवार्णवे ॥ १०६ ॥ समभ्यर्च्य
जगन्नाथंदेवमर्कंसमाधिना ॥ एकमश्नातियोभक्तंद्वितीयंब्राह्मणार्पणम् ॥ १०७ ॥ करोतिभास्करप्रीत्यैकार्तिकंमासमात्मना ॥ पूर्वेवयसि
यत्नेनजानताऽजानतापिवा ॥ १०८ ॥ पापमाचरितंतस्माद्व्यपैतेनात्रसंशयः ॥ अनेनैवविधानेनमासिमार्गशिरेपुनः ॥ १०९ ॥ समभ्य
र्च्यमरकतंविप्रेभ्योयःप्रयच्छति ॥ भगवत्प्रीणनार्थायफलंतस्यशृणुष्वमे ॥ ११० ॥ मध्येवयसियत्पापंयोषितापुरुषेणवा ॥ कृतमस्मा
न्नतेनोक्तोविमोक्षःपरमात्मना ॥ १११ ॥ तथाचैवैकभक्तंतुयस्तुविप्राययच्छति ॥ दिवाकरंसमभ्यर्च्यपौषेमासिमहीपते ॥ ११२ ॥ त
त्त्वप्रीणयत्यर्कंवार्धिकेनैवयत्कृतम् ॥ सतस्मान्मुच्यतेराजन्पुमान्योषिदथापिवा ॥ ११३ ॥ त्रिमासिकंव्रतमिदंयःकरोतिनरेश्वर ॥ सभानु
प्रीणनात्पापैर्लघुभिःपरिमुच्यते ॥ ११४ ॥ द्वितीयेवत्सरेराजन्मुच्यतेचोपपातकैः ॥ तद्वत्तृतीयेऽपिकृतंमहापातकनाशनम् ॥ ११५ ॥

व्रतमेतन्नरैःस्त्रीभिस्त्रिभिर्मासैरनुष्ठितम् ॥ त्रिभिःसंवत्सरैश्चैवप्रददातिफलंनृणाम् ॥ ११६ ॥ त्रिभिर्मासैर्वयोवस्थात्रिविधात्पातकान्नृप ॥ त्रीणिनामानिदेवस्यमोचयंतिचवार्षिकैः ॥ ११७ ॥ यतस्ततोव्रतमिदंविविधंसमुदाहृतम् ॥ सर्वपापप्रशमनंभास्कराराधनेपरम् ॥ ११८ ॥ ॥ सत्राजितउवाच ॥ ॥ कतमायतुविप्रायदातव्यंभक्तमादरात् ॥ द्वितीयेद्विजशार्दूलकथयस्वाखिलंमम ॥ ११९ ॥ ॥ परावसुरुवाच ॥ पुराणविदुषेदेयंवाचकेब्राह्मणोत्तमे ॥ श्रूयतांचापिवचनंयदुक्तंभास्करेणच ॥ १२० ॥ अरुणायमहाबाहोपृच्छमानायवैपुरा ॥ उदयाचलमारूढंभास्करंतिमिरापहम् ॥ १२१ ॥ प्रणम्याशिरसानूनमिदंवचनमब्रवीत् ॥ कानिप्रियाणितेदेवपूजनेसातिसर्वदा ॥ १२२ ॥ पुष्पादीनांसमस्तानामाराधनविधौसदा ॥ उपरागादिवस्त्रादौब्राह्मणानांतथारवेः ॥ १२३ ॥ भास्करउवाच ॥ पुष्पाणांकरवीराणितथारक्तंचचंदनम् ॥ गुग्गुलंचापिभूतानांनैवेद्यंमोदकाःप्रियाः ॥ १२४ ॥ पूजाकरंभोजकंतुघृतदीपंतथाप्रियम् ॥ दानंप्रियंखगश्रेष्ठवाचकायप्रदीयते ॥१२५॥ मामुद्दिश्यचयद्दानंदीयतेमानवैर्भुवि॥वांचकायतुदातव्यंतन्मप्रीतयेखग ॥ १२६ ॥ इतिहासपुराणाभ्यामभिज्ञोयस्तुवाचकः ॥ ब्राह्मणोवैखगश्रेष्ठसंपूज्यःप्रीतयेमम ॥ १२७ ॥ पूजितेऽस्मिन्सदाविप्रपूजितोहंनसंशयः ॥ भवामिखगशार्दूलयतस्त्विष्टःसमेसदा ॥ १२८ ॥ वेदवीणामृदंगैश्चनातिगंधविलेपनैः ॥ तथामेजायतेप्रीतिर्यथाश्रुत्वाखगोत्तम ॥ १२९ ॥ इतिहासपुराणानिवाच्यमानानिवाचकैः ॥ अतःप्रियोवाचकोमेपूजाकर्ताचभोजकः ॥ १३० ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसत्राजितोपाख्यानेरविपूजाविधिवर्णनंनामषोडशोत्तरशततमोऽध्यायः ॥ ११६ ॥ छ ॥ ॥ अरुणउवाच ॥ किमर्थंभोजकस्तुभ्यंप्रियोदेवेशकथ्यताम् ॥ नान्येविप्रादयोवर्णादेवतायतनेषुवै ॥ १ ॥ कश्चायंभोजकोदेवकस्यपुत्रःकिमात्मकः ॥ वर्णतश्चास्यमेब्रूहिकर्मचास्यसमंततः ॥ २ ॥ ॥ आदित्यउवाच ॥ ॥ साधुपृष्टोस्मिभद्रंतेवैनतेयमहामते ॥३॥ शृणुष्वैकमनाःसर्वंगदतोममखेचर ॥ विप्रादयस्तुयेत्वन्येवर्णाःकश्यपनंदन ॥४॥ तेपूजयंतिमांनित्यंभक्तिश्रद्धासमन्विताः ॥ देवालयेषुयेविप्राःप्रीत्यामांपूजयंतिहि ॥५॥

---

१ लेखकाय-इ०पा० ।

अन्याश्चदेवतावृत्त्यातेस्युर्देवलकाःखग ॥ एतस्मात्कारणान्मह्यंभोजकोदयितःसदा ॥ ६ ॥ वर्णतोब्राह्मणश्चायंस्वानुष्ठानपरोय
दि ॥ अनुष्ठानविहीनोयंनरकंयात्यसंशयम् ॥ ७ ॥ नत्याज्यंभोजकैस्तस्मात्स्वकंकर्मकदाचन ॥ मयासौनिर्मितःपूर्वंतेजसास्वेनवैखग ॥
॥ ८ ॥ पूजार्थमात्मनोनूनंकर्मचास्यप्रकीर्तितम् ॥ प्रियव्रतसुतोराजाशाकद्वीपेमहामतिः ॥ ९ ॥ तेनमेकारितंदिव्यंविमानप्रतिमंगृहम् ॥
तस्मिन्द्वीपेतदात्मीयेदिव्यंशैलमयंमहत् ॥ १० ॥ समदर्चांकारयित्वाकांचनींलक्षणान्विताम् ॥ प्रतिस्थापनायवैतस्याश्चिंतयामाससु
व्रतः ॥ ११ ॥ कृतमायतनंश्रेष्ठंतेनेयंप्रतिमाकृता ॥ कोवैप्रतिस्थापयितादेवमर्कंशुभालये ॥ १२ ॥ एवंसंचिंतयित्वातुजगामशरणंमम ॥
भक्तितस्यचसंचिंत्यखगाहंपार्थिवस्यतु ॥ १३ ॥ गतोऽहंदर्शनंतस्यउक्तश्चापिमयाखग ॥ किंचिन्तयसिराजेन्द्रकुतश्चिंतासमागता ॥ १४ ॥
ब्रूहियत्तेहृदिप्रौढांचिंताकारणमागतम् ॥ संपादयिष्येतत्सर्वंविमनाभवमानृप ॥ १५ ॥ अत्यर्थंदुष्करमपिकरिष्येनात्रसंशयः ॥ इत्युक्तः
समयाराजाइदंवचनमब्रवीत् ॥ १६ ॥ द्वीपेऽस्मिन्देवदेवस्यकृतमायतनंतव ॥ मयाभक्त्याजगन्नाथतथेयंप्रतिमाकृता ॥ १७ ॥ प्रतिष्ठां
कारयेद्यस्तुतवदेवालयेखग ॥ यत्रसंतित्रयोवर्णाद्वीपेस्मिन्क्षत्रियादयः ॥ १८ ॥ तेमयोक्तानकुर्वंतिप्रतिष्ठांतवकृत्स्नशः ॥ नचाप्यर्चांज
गन्नाथब्राह्मणश्चात्रविद्यते ॥ १९ ॥ तेनेयमागताचिंताहृदिशल्यंतयार्पितम् ॥ ततोमयोक्तोराजाऽसौवैनतेयवचःशुभम् ॥ २० ॥ एवमेत
न्नसंदेहोयथात्थत्वंनराधिप ॥ क्षत्रियादित्रयोवर्णाद्वीपेऽस्मिन्नात्रसंशयः ॥ २१ ॥ तेचनार्हंतिमेपूजांनप्रतिष्ठांकदाचन ॥ तस्मात्तेश्रेयसेरा
जन्प्रतिष्ठामात्मनस्तथा ॥ २२ ॥ सृजामिप्रथमंवर्णंभगसंज्ञमनौपमम् ॥ इत्युक्तातमहंवीरराजानंखगसत्तम ॥ २३ ॥ जगामपरमांचिंतांतस्य
कार्यस्यसिद्धये ॥ अथमेचिंतयानस्यस्वशरीराद्विनिःसृताः ॥ २४ ॥ शशिकुंदेंदुसंकाशाःसंख्ययाष्टौमहाबलाः ॥ पठंतिचतुरोवेदान्सांगोप
निषदान्खग ॥ २५ ॥ काषायवाससःसर्वेकरंडांबुजधारिणः ॥ ललाटफलकाद्द्वौतुद्वौचान्यौवक्षसस्तथा ॥ २६ ॥ चरणाभ्यांतथाद्वौतुपादाभ्यांद्वौत
थाखग ॥ अथतेचमहात्मानःसर्वेप्रणतकंधराः ॥ २७ ॥ पितरंमन्यमानामामिदंवचनमब्रुवन् ॥ तातताततमहादेवलोकनाथजगत्पते ॥ २८ ॥
किमर्थंभवतासृष्टावयंदेवस्यदेहतः ॥ ब्रूहिसर्वंकरिष्यामआदे माकंभवान्देवोवयंपुत्रानसंशयः ॥ इत्युक्त

वंतस्तेसर्वेमयोक्तादेवसंभवाः ॥ ३० ॥ प्रियव्रतसुतोयोयमस्यवाक्यंकरिष्यथ ॥ सचाप्युक्तोमयाराजाशाकद्वीपाधिपःखग ॥ ३१ ॥
यएतेमत्सुताराजन्नर्घ्याब्राह्मणसत्तमाः ॥ कारयंतुप्रतिष्ठांमेसर्वैरेभिर्महीपते ॥ ३२ ॥ कारयित्वाप्रतिष्ठांतुममाचार्यांनराधिप ॥ पश्चा
दायतनंसर्वमेषामर्पयपूजने ॥ ३३ ॥ एतेमत्पूजनेयोग्याप्रःतिष्ठासुचसर्वशः ॥ समाप्यनप्रहर्तव्यंभोजकेभ्यःकदाचन ॥ ३४ ॥ सर्वं
मायतनार्थंतुगृहक्षेत्रादिकंचयत् ॥ धनधान्यादिकंराजन्यन्ममायतनेभवेत् ॥ ३५ ॥ तत्सर्वंभोजकेभ्यस्तुदातव्यंनात्रसंशयः ॥
धनधान्यसुवर्णादिगृहक्षेत्रादिकंचयत् ॥ ३६ ॥ यन्मदीयंभवेत्किंचिद्ग्रामंवानगरंक्वचित् ॥ तस्यसर्वस्यराजेंद्रमदीयस्यसमंततः ॥ ३७ ॥
अधिपाभोजकाःसर्वेनान्येविप्रादयोनृप ॥ यथाधिकारीपुत्रस्तुपितृद्रव्यस्यवैभवेत् ॥ ३८ ॥ तथामदीयवित्तस्यभोजकाःस्युर्नसं
शयः ॥ इत्युक्तेनमयाराज्ञातथासर्वंप्रवर्तितम् ॥ ३९ ॥ कारयित्वाप्रतिष्ठांतुदत्त्वासर्वस्वमेवहि ॥ भोजकेभ्यःखगश्रेष्ठततोहर्षमवाप्तवान् ॥
॥ ४० ॥ एवमेतेमयासृष्टाभोजकागरुडाग्रज ॥ अहमात्माततोह्येषांसर्वेसुमनसस्तथा ॥ ४१ ॥ मत्पुत्रेणसमाज्ञेयास्तथाममहिताःसदा ॥
तस्मात्तेभ्यःप्रदातव्यंनहर्तव्यंकदाचन ॥ ४२ ॥ भोजकंचहरेद्यस्तुलोभाद्द्वेषात्तथापिवा ॥ सयातिनरकंघोरंतामिस्रंशाश्वतीः
समाः ॥ ४३ ॥ तस्माद्ग्रामादिकंद्रव्यंयत्किंचिन्ममाविद्यते ॥ तत्सर्वंभोजकस्वंहिपितृपर्यागतंमम ॥ ४४ ॥ भोजकश्चभवेद्याह्
क्तत्तेवच्मिखगेश्वर ॥ ममाज्ञांपालयेद्यस्तुस्वानुष्ठानपरःसदा ॥ ४५ ॥ वेदाधिगमनंपूर्वंदारसंग्रहणंतथा ॥ अभ्यंगधारणं
नित्यंतथात्रिसवनंस्मृतम् ॥ ४६ ॥ पंचकृत्वःसदापूज्योह्यहंरात्रौदिनेतथा ॥ देवब्राह्मणवेदानांनिंदाकार्यानवैक्वचित् ॥ ४७ ॥ नान्यदेव
प्रतिष्ठातुकार्यावैभोजकेनतु ॥ ममापिचनकर्तव्यातेनएकाकिनाक्वचित् ॥४८॥ सर्वमेवानिवेद्यान्नंनाश्नीयाद्भोजकःसदा ॥ नभुंजीतगृहंगत्वा
शूद्रस्यगरुडाग्रज ॥ ४९ ॥ शूद्रोच्छिष्टंप्रयत्नेनसदात्याज्यंहिभोजकैः ॥ येऽश्नंतिभोजकानित्यंशूद्रान्नंशूद्रवेश्मनि ॥ ५० ॥ तेवैपूजाफलं
चात्रकथंप्राप्स्यंतिखेचर ॥ गत्वागृहंतुशूद्रस्यनभोक्तव्यंकदाचन ॥ ५१ ॥ गृहागतंचशूद्रान्नंतच्चत्याज्यंतथैवच ॥ आध्मातव्योम्बुजोनित्यंभो
जकेनाग्रतोमम ॥ ५२ ॥ सकृत्प्रवादितेशंखेममप्रीतिर्हिजायते ॥ षण्मासान्नात्रसंदेहःपुराणश्रवणंतथा ॥ ५३ ॥ तस्माच्छंखःसदावाद्योभो

जकेनप्रयत्नतः॥तस्येयंपरमावृत्तिर्नैवेद्यंयन्मदीयकम् ॥५४ ॥ नाभोज्यंभुंजतेयस्मात्तेनासौभोजकोमतः॥मगंध्यायंतितेयस्मात्तेनतेमगधाः स्मृताः ॥ ५५ ॥ भोजयंतिचमांनित्यंतेनतेभोजकाःस्मृताः ॥ अभ्यंगंचप्रयत्नेनधार्यंशुद्धिकरंपरम् ॥५६॥ अभ्यंगहीनोह्यशुचिर्भोजकःस्यान्नसंशयः ॥ यस्तुमांपूजयेद्वीरअभ्यंगेनविनाखग ॥ ५७ ॥ नतस्यसंततिःस्याद्वैनचाहंप्रीतिमान्भवे ॥ मुंडनंशिरसाकार्यंशिखाधार्याप्रयत्नतः ॥ ५८ ॥ नक्तंचादित्यदिवसेतथाषष्ठ्यांप्रवर्तयेत् ॥ सप्तम्यामुपवासस्तुममसंक्रमणेतथा ॥ ५९ ॥ कर्तव्योभोजकेनैवमत्प्रीत्यैगरुडाग्रज॥त्रिकालंचापिगायत्रींजपेद्वाचापुरोमम॥६०॥मुखमावृत्ययत्नेनपूजनीयोऽहमादरात्॥मौनंचास्यप्रयत्नेनत्यक्त्वाक्रोधंचदूरतः ॥६१ ॥ शूद्रेभ्योयस्तुवैश्येभ्योलोभात्कामात्प्रयच्छति॥निर्माल्यंममवैवत्ससयातिनरकंध्रुवम् ॥६२॥ लोभाद्वैभोजकोयस्तुमत्पुष्पाणिखगाधिप ॥ यच्छतेन्यस्यदुष्टात्मामय्यनारोप्यखेचर ॥ ६३ ॥ सज्ञेयोमेपरःशत्रुःसमामहोनचार्चितुम् ॥ निर्माल्यंममदेयंस्याद्ब्राह्मणादिषुवैनृषु ॥६४॥ नैवेद्यंयन्मदीयंतुतदश्नीयात्सदैवहि ॥ तेनासौशुद्ध्यतेनित्यंहविष्यान्नसमंतथा ॥ ६५ ॥ तत्क्षणादुत्क्षिपेद्यस्तुममांगात्पुष्पमेवहि ॥ नान्यस्यदेयंनैवेद्यंमदीयमुदकेक्षिपेत् ॥ ६६ ॥ पंचगव्यसमंतस्यमन्मतंनात्रसंशयः ॥ ममांगलग्नंयत्किंचिद्गंधंपुष्पमथापिवा ॥ ६७ ॥ दातव्यंनचवैश्यायनशूद्रायकदाचन ॥ आत्मनातद्धृहीतव्यंनविक्रेयंकथंचन ॥ ६८ ॥ यस्तुनारोप्यपुष्पाणिअव्यंगानिममोपरि ॥ यःकश्चिदाहरेल्लोकेसयातिनरकंध्रुवम् ॥ ६९ ॥ स्नपनंममनिर्माल्यंपावकंयस्तुलंघयेत् ॥ सनरोनरकंयातिसरौद्रंरौरवंखग ॥ ७० ॥ भोजकेनसदाकार्यंस्नपनंमेप्रयत्नतः ॥ यथानलंघयेत्कश्चिद्यथाश्वानापिभक्षयेत् ॥ ७१ ॥ यद्ययत्नपरःकुर्याद्भोजकःस्नपनंमम ॥ यथावैलंघितमातेभक्ष्यतांचखगाधिप ॥ ७२ ॥ सयातिनरकंरौद्रंतामिस्रंनामनामतः ॥ एकभक्तंसदाकार्यंस्नानंत्रैकालमेवहि ॥ ७३ ॥ त्रिचैलंपरिवर्तंतभावितव्यंदिनेदिने ॥ पूजाकालेऽर्घकालेचक्रोधस्त्याज्यःप्रयत्नतः ॥ ७४ ॥ अमांगल्यंनवक्तव्यंवक्तव्यंचशुभंतदा ॥ ईदृग्भूतोभोजकोमेप्रियःपूजाकरःसदा ॥ ७५ ॥ संमान्यःपूजनीयश्चविप्रादीनांयथास्म्यहम् ॥ यःकरोत्यवमानंतुवृत्तिरूपंतुभोजके ॥७६ ॥

१ आर्षःप्रथमपुरुष आत्मनेपदी । २ भोजकेनतु—इ०पा० ।

तस्याहंरोषमेत्याशुकुलंहन्मिसमंततः ॥ प्रियोमेभोजकोनित्यंयथात्वंविनतासुत॥७७॥उपलेपनकर्ताचसंमार्जनपरश्चयः॥ ॥परावसुरुवाच॥
इत्युक्त्वाभगवान्भानुर्बभ्रामरथमास्थितः ॥७८॥अरुणोऽपितथाश्रुत्वामुदयापरयानृप॥पूज्यस्तस्मान्महाराजभोजकस्तुमहीपते ॥ ७९ ॥
तस्माद्देयंवाचकायद्वितीयमशनंनरैः॥८०॥॥ब्रह्मोवाच॥ ॥इत्थंश्रुत्वासराजातुकर्मणःफलमात्मनः॥पुरातनंमहाबाहुर्मुदमापमहीपतिः॥८१॥
यद्यदायतनंभानोःपृथिव्यांपश्यतेनृप ॥ तस्मिंस्तस्मिन्कारयतिउपलेपनमादरात् ॥ ८२ ॥ भार्यातस्यापिसुश्रोणिःपुण्यश्रवणमादरात् ॥
वाचकेवेतनंदत्त्वाभानोर्देवस्यमंदिरे ॥ ८३ ॥ इत्थंराजासपत्नीकःपूज्यभक्त्यादिवाकरम् ॥ प्राप्तावुभौपरांप्रीतिंगतिंचानुत्त
मांतथा ॥ ८४ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पउपलेपनस्नापनमाहात्म्यंनामसप्तदशोत्तरशततमोऽध्यायः ॥ ११७ ॥
सत्राजितोपाख्यानंसमाप्तम् ॥ ७ ॥ ब्रह्मोवाच ॥ ॥ दीपंप्रयच्छतिनरोभानोरायतनेतुयः ॥ तेजसारविसंकाशः[1]सर्वयज्ञफलंलभेत् ॥ १ ॥
कार्तिकेतुविशेषेणकौमारेमासिदीपकम् ॥ दत्त्वाफलमवाप्नोतियदन्येननलभ्यते ॥ २ ॥ कृष्णकृष्णात्रतेवच्मिसंवादंपापनाशनम् ॥ भ्रातृ
भिःसहभद्रस्यब्राह्मणस्यमहात्मनः ॥ ३ ॥ जगत्यस्मिन्पुरीरम्यानाम्नामाहिष्मतीपुरी ॥ तस्यामासीद्द्विजःकृष्णनागशर्मेतिविश्रुतः ॥ ४ ॥
तस्यपुत्रशतंजातंप्रसादाद्भास्करस्यच ॥ तेषांकनिष्ठोभद्रस्तुतत्पुत्राणांविचक्षणः ॥ ५ ॥ सचनित्यंजगद्धातुर्देवदेवस्यभास्वतः ॥ दीप
वर्तीपरस्तद्वत्तैलाद्याहरणोद्यतः ॥ ६ ॥ भानोरायतनेतस्यसहस्रंभार्गवीप्रिय ॥ प्रदीपानांतुजज्वालदिवारात्रमनिंदितम् ॥ ७ ॥ तस्यदी
प्त्यापराभूतास्तस्यलावण्यवर्जिताः ॥ सर्वेतेभ्रातरोभद्रंपप्रच्छुरिदमादरात् ॥ ८ ॥ भोभद्रवदवैभ्रातर्भद्रंतेस्तुसदाद्विज ॥ कौतूहलपराःसर्वे
यत्पृच्छामस्तदुच्यताम् ॥ ९ ॥ तेषांतद्वचनंश्रुत्वाभद्रोवचनमब्रवीत् ॥ विषयेसतिवक्तव्यंयन्मयातादिहोच्यताम् ॥ १० ॥ नाहंमत्सरयु
क्तोवैनचरागादिदूषितः ॥ भवंतोममसर्वेवैभ्रातरोगुरवस्तथा ॥ ११ ॥ कथंनकथयाम्येषभवतांपुत्रसम्मितः ॥ तस्माद्भवंतुमांसर्वेभ्रातरो
यद्विवक्षितम् ॥ १२ ॥ भ्रातरऊचुः ॥ नतथापुष्पधूपेषुनतथाद्विजपूजने ॥ सुप्रयत्नंतुपश्यामोभानोरायतनेपरम् ॥ १३ ॥ यथाहानितथा

[1] सर्वज्ञत्वफलंलभेत्–इ०पा० ।

रात्रौयथारात्रौतथाहानि ॥ तवदीपप्रदानायर्यथाभद्रसदोद्यमम् ॥ १४ ॥ तत्त्वंतत्कथयास्माकंहंतकौतूहलंपरम् ॥ यन्नामदीपदानस्यभवता
विदितंफलम् ॥१५॥ तदेतत्कथयास्माकंसविशेषंमहाबल॥एवमुक्तस्ततस्तैस्तुभ्रातृभिश्चोदितोमुदा ॥१६॥ व्याजहारसभ्रातॄणांनाकिंचिद
पिसुव्रत ॥ पुनःपुनरसौतैस्तुभ्रातृभिश्चोदितोमुदा ॥ १७ ॥ दाक्षिण्यसारोभद्रस्तुकथयामासकृत्स्नशः ॥ भवतांकौतुकंचैतदतीवाल्पेऽपि
वस्तुनि ॥ १८ ॥ तदेषकथयाम्यद्ययद्वृत्तंममसुव्रत ॥ इक्ष्वाकुराज्ञस्तुपुरावसिष्ठोऽभूत्पुरोहितः ॥ १९ ॥ तेनचायतनंभानोःकारितंसरयू
तटे ॥ अहन्यहनिशुश्रूषांपुष्पधूपानुलेपनैः ॥ २० ॥ दीपदानादिभिश्चैवचक्रेतत्रसवैद्विजः ॥ कार्तिकेदीपकोभक्त्याप्रदत्तस्तेनवैसदा ॥२१॥
आसीन्निर्वाणएवासौदेवार्चापुरतोनिशि ॥ देवतायतनेचाहमवशंव्यथितोभृशम् ॥ २२ ॥ पूयशोणितनिष्पंदंप्रावहंकायतःसदा ॥ शीर्णघ्रा
णोह्यवरवोदुर्गंधंपतितस्तथा ॥२३॥ दुष्टबुद्ध्यासदायुक्तःसप्ताश्वंप्रतिसुव्रत ॥ यदृच्छयादीपदानंवर्त्यादीनांविभावसौ ॥२४॥ तत्तद्धृत्वा
सदातुष्टिंव्रजामिद्विजसत्तमाः ॥ एकदातुततस्तस्मिन्भानोरायतनेगतः ॥ २५ ॥ रात्रौदृष्टामयातत्रभक्ताजागरणागताः ॥ प्रतिश्रयंप्रार्थि
ताश्चतैश्चदत्तंदयान्वितैः ॥ २६ ॥ व्याधितोऽयंसुदीनश्चइतिकृत्वामतिंशुभाम् ॥ ततोऽहमग्निमाश्रित्यास्थितस्तेषांसमीपतः ॥ २७ ॥ दुष्टां
बुद्धिंसमाश्रित्यहर्तुकामोविवस्वतः ॥ दिव्यमाभरणंभानोश्छिद्रान्वेषीद्विजोत्तमाः ॥ २८ ॥ स्थितोऽहंभोजकाह्यत्रयदिनिद्रांव्रजंतिते ॥ ये
नास्यवैरिवद्भानोर्हराम्याभरणंशुभम् ॥ २९ ॥ अथसुप्ताभोजकास्तेनिद्रयामोहितास्तदा ॥ निर्वाणाश्चापिदीपास्तुततोऽहमुत्थितस्त्वरन् ॥
॥ ३० ॥ मुदापरमयायुक्तोगतोवैश्वानरंप्रति ॥ प्रज्वाल्यपावकंयत्नाद्दीपवर्तिस्ततोमया ॥ ३१ ॥ योजयित्वातुवैदीपेधृतोदीपोऽग्रतोरवेः ॥
हर्तुकामेनाभरणंभानोर्देवस्यसुव्रत ॥ ३२ ॥ अथतेभोजकाःसर्वेबुद्धादेवस्यपुत्रकाः ॥ तैस्तुदृष्टोह्यहंतत्रदीपहस्तोविभावसोः ॥ ३३ ॥ पुरः
स्थितोद्विजश्रेष्ठागृहीतश्चापितैरिह ॥ ततोहंऽतेजसामूढोभास्करस्यमहात्मनः ॥ ३४ ॥ विलपन्करुणंतेषांपादयोरवनिंगतः ॥ तैश्चा
पिकरुणांकृत्वामुक्तोऽहंभोजकैस्तदा ॥ ३५ ॥ गृहीतोराजपुरुषैःपृष्टश्चापिसमंततः ॥ किमिदंभवतारब्धंदेवदेवस्यमंदिरे ॥ ३६ ॥ दीपं
प्रज्वाल्यदुष्टात्मन्कथ्यतांमाचिरंकुरु ॥ इत्युक्त्वातुततस्तैस्तुशस्त्रहस्तैःसमावृतः ॥ ३७ ॥ ततोऽहंव्याधिनाक्लिष्टोभयेनचद्विजोत्तमाः ॥

हित्वाप्राणान्गतोयत्रस्वयंदेवोविभावसुः ॥ ३८ ॥ स्थित्वाकल्पंततस्तत्रयुष्माकंभ्रातृतांगतः ॥ एषप्रभावोदीपस्यकार्तिकेमासिसुव्रताः ॥
॥ ३९ ॥ दत्तस्यार्कस्यभवनेयस्येयंव्युष्टिरुत्तमा ॥ दुष्टबुद्ध्याकृतंयत्तुमयादीपप्रवर्तनम् ॥ ४० ॥ भगायतनदीपस्यतस्येदंभुज्यते
फलम् ॥ क्षुधाभिभूतेनमयादेवदेवस्यभूषणम् ॥ ४१ ॥ दीपश्चदेवपुरतोज्वालितोभास्करस्यतु ॥ ततोजातिस्मृतिर्जन्मप्राप्तं
ब्राह्मणवेश्मनि ॥ ४२ ॥ कुष्ठिनाचापिशूद्रेणप्राप्तंब्राह्मण्यमुत्तमम् ॥ नानाविधानिशास्त्राणिसांगवेदंसमाप्तवान् ॥ ४३ ॥ दुष्ट
बुद्ध्याधृताद्दीपात्फलमेतन्महाद्भुतम् ॥ प्राप्तंमयाद्विजश्रेष्ठाःकिंपुनर्दीपदायिनाम् ॥ ४४ ॥ एतस्मात्कारणाद्दीपानहमेवमहर्निशम् ॥
प्रयच्छामिरवेर्धाम्निज्ञातमस्यहियत्फलम् ॥ ४५ ॥ युष्माकमिदमुक्तंवैस्नेहात्सत्यंनसंशयः ॥ एषप्रभावोदीपस्यकार्तिकेमासिसुव्रताः ॥
॥ ४६ ॥ अर्कायतनदीपस्यभद्रोवाचयथापुरा ॥ दिनेदिनेजपन्नामभास्करस्यसमाहितः ॥४७॥ ददातिकार्तिकेयस्तुभगायतनदीपकम्॥
जातिस्मरत्वंप्रज्ञांचप्राकाश्यंसर्वजंतुषु ॥४८॥ अव्याहतेंद्रियत्वंचसमाप्नोतिनसंशयः ॥ सर्वकालंचचक्षुष्मान्मेधावीदीपदोनरः ॥ ४९ ॥
जायतेनरकंचापितमःसंज्ञंनपश्यति ॥ षष्ठींवासप्तमींवापिप्रतिपक्षंचयोनरः ॥ ५० ॥ दीपंददातियत्नाद्यत्फलंतस्यनिबोधमे ॥ कांचनंमणि
युक्तंचमनोज्ञमतिशोभनम् ॥ ५१ ॥ दीपमालाकुलंदिव्यंविमानमधिरोहति ॥ तस्मादायतनेभानोर्दीपान्दद्यात्सदाच्युत ॥ ५२ ॥ तांश्च
दत्त्वानहिंसेतनचतैलवियोजितान् ॥ कुर्वीतदीपहर्तातुमूषकोंधश्चजायते ॥ ५३ ॥ तस्माद्दद्यान्नाहरेद्वैश्रेयोऽर्थीदीपकंनरः ॥ ५४ ॥ इति
श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेभद्रोपाख्यानेआदित्यायतनदीपदानफलवर्णनंनामाष्टादशोत्तरशततमोऽध्यायः ॥ ११८॥छ॥
॥ ॥ ब्रह्मोवाच ॥ ॥ अंधेतमसिदुष्पारेनरकेपतितान्किल ॥ संक्रोशमानान्संक्षुब्धानुवाचयमकिंकरः ॥ १ ॥ विलापैरलमत्रेतिकिं
वोविलपितेफलम् ॥ यत्प्रमादादिभिःपूर्वमात्मायंसमुपेक्षितः ॥ २ ॥ पूर्वमालोचितंनैतत्कथमंतेभविष्यति ॥ इदानींयातनेभोगःकिंवि
लापंकरिष्यथ ॥ ३ ॥ देहोदिनानिस्वल्पानिविषयाश्चातिदुर्बलाः ॥ एतत्कोनविजानातियेनयूयंप्रमादिनः ॥ ४ ॥ जंतुर्जन्मसहस्रेभ्यए
कस्मिन्मानुषोयदि ॥ सतत्राप्यतिमूढात्माकिंभोगानभिधावति ॥ ५ ॥ पुत्रदारगृहक्षेत्रहितायसततोद्यताः ॥ नजानंतिततोमूढाःस्वल्प

मप्यात्मनोहितम् ॥ ६ ॥ वंचितोऽयंमयालब्धमिदमस्मादुपागतम् ॥ नवेत्तिमोहितःकश्चित्प्रक्रांतनरकोनरः ॥ ७ ॥ नवेत्तिसूर्य
चंद्रादीन्कालमात्मानमेवच ॥ साक्षिभूतानशेषस्यशुभस्येहाशुभस्यच ॥ ८ ॥ जन्मान्यन्यानिजायंतेपुत्रदारादिदेहिनाम् ॥ यदर्थंयत्कृतं
कर्मतस्यजन्मशतानितु ॥ ९ ॥ अहोमोहस्यमाहात्म्यंममत्वंनरकेष्वपि ॥ क्रंदतेमातरंतातंपीड्यमानोऽपियत्स्वयम् ॥ १० ॥ एवमा
कृष्टचित्तानांविषयैःस्वादुतर्पणैः ॥ नृणांनजायतेबुद्धिःपरमार्थविलोकिनी ॥ ११ ॥ तथाचविषयासंगंकरोत्याविरतंमनः ॥ कोहिभारो
रवेर्नाम्निजिह्वायाःपरिकीर्तने ॥ १२ ॥ वर्तितैलेऽल्पमूल्येचयद्वर्त्तिर्लभ्यतेसुधा ॥ अतोवैकतरोलाभःकातश्चिताभवेत्तदा ॥ १३ ॥ येना
यतेषुहस्तेषुस्वातंत्र्येसतिदीपकः ॥ महाफलोभानुगृहेनदत्तोनरकापहः ॥ १४ ॥ नरोविलपतेकिंचिदिदानींदृश्यतेफलम् ॥ अस्वातं
त्र्येविलपतांस्वातंत्र्येसतिमानिनाम् ॥ १५ ॥ अवश्यंपातिनःप्राणाभोक्ताजीवोऽप्यहर्निशम् ॥ दत्तंचलभतेभोक्तुंकामयन्विषयानपि ॥१६॥
एतत्स्थानंदुष्कृतैर्वायुक्तंचाद्यमयेक्षितम् ॥ इदानींकिंविलापेनसहध्वंयदुपागतम् ॥ १७ ॥ यद्येतदनभीष्टंवोयद्दुःखंसमुपस्थितम् ॥ त
दद्भुतमतिःपापेनकर्तव्याकदाचन ॥ १८ ॥ कृतेऽपिपापकेकर्मण्यज्ञानादघनाशनम् ॥ कर्तव्यमनवच्छिन्नंपूजनंसवितुःसदा ॥ १९ ॥
॥ ॥ ब्रह्मोवाच ॥ ॥ नारकास्तद्वचःश्रुत्वातमूचुरतिदुःखिताः ॥ क्षुत्क्षामकंठास्तृट्तापविसंस्फुटितताल्लुकाः ॥ २० ॥ भोभोःसा
धोकृतंकर्मयदस्माभिस्तदुच्यताम् ॥ नरकस्थैर्विपाकोऽयंभुज्यतेयत्सुदारुणः ॥ २१ ॥ ॥ किंकरउवाच ॥ ॥ युष्माभिर्यौवनो
न्मादान्मुदितैरविवेकिभिः ॥ घृतलोभेनमार्तंडगृहाद्दीपःपुराहृतः ॥ २२ ॥ तेनास्मिन्नरकेघोरेक्षुत्तृष्णापरिपीडिताः ॥ भवंतःपतितास्ती
व्रशीतवातविदारिताः ॥ २३ ॥ ॥ ब्रह्मोवाच ॥ ॥ एतत्तेदीपदानस्यप्रदीपहरणस्यच ॥ पुण्यंपापंचकथितंभास्करायतनेऽच्युत ॥
॥ २४ ॥ सर्वत्रैवाहिदीपस्यप्रदानंकृष्णशस्यते ॥ विशेषेणजगद्धातुर्भास्करस्यनिवेशने ॥ २५ ॥ येंधामूकाबधिरानिर्विवेकाहीनास्तैस्तैः
साधनैर्वृष्णिवीर ॥ तैस्तैर्दीपाःसाधुलोकप्रदत्तादेवागारादन्यतःकृष्णनीताः ॥ २६ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेदीप
माहात्म्यवर्णनंनामैकोनविंशोत्तरशततमोऽध्यायः ॥ ११९ ॥ छ ॥ विष्णुरुवाच ॥ ॥ भगवन्प्राणिनःसर्वेविषरोगाद्युपद्रवैः ॥ दुष्टग्रहोप

घातैश्चसर्वकालमुपद्रुताः ॥ १ ॥ आभिचारिककृत्याभिःस्पर्शरोगैश्चदारुणैः ॥ सदासंपीडयमानास्तुतिष्ठंत्यंबुजसंभव ॥ २ ॥
येनकर्मविपाकेनविषरोगाद्युपद्रवाः ॥ प्रभवंतिनृणांतन्मेयथावद्वक्तुमर्हसि ॥ ३ ॥ ब्रह्मोवाच ॥ व्रतोपवासैर्यैर्भानुर्नान्यजन्मनितोषितः ॥
तेनरादेवशार्दूलग्रहरोगादिभोगिनः ॥ ४ ॥ यैर्नतत्प्रवणंचित्तंसर्वदेवनरैःकृतम् ॥ विषग्रहज्वराणांतेमनुष्याःकृष्णभागिनः ॥ ५ ॥ आरोग्यं
परमांवृद्धिंमनसायद्यदिच्छति ॥ तत्तदाप्नोत्यसंदिग्धंपरत्रादित्यतोषणात् ॥ ६ ॥ नाधिन्प्राप्नोतिनव्याधीन्नविषग्रहबंधनम् ॥ कृत्यास्प
र्शभयंवापितोषितेतिमिरापहे॥७॥ सर्वेदुष्टाःसमास्तस्यसौम्यास्तस्यसदाग्रहाः ॥ देवानामपिपूज्योऽसौतुष्टोयस्यादिवाकरः॥८॥यःसमःसर्व
भूतेषुयथात्मनितथाहिते ॥ उपवासादिनायेनतोष्यतेतिमिरापहः ॥ ९ ॥ तोषितेऽस्मिन्प्रजानाथेनराःपूर्णमनोरथाः ॥ अरोगाःसुखिनो
नित्यंबहुधर्मसुखान्विताः ॥१०॥ नतेषांशत्रवोनैवशरीराद्याभिचारकम् ॥ ग्रहरोगादिकंचापिपापकार्युपजायते ॥११॥ अव्याहतानिदेवस्य
धनजालानितंनरम् ॥ रक्षंतिसकलापत्सुयेनश्वेताधिपोऽर्चितः ॥ १२ ॥ विष्णुरुवाच ॥ अनाराधितमार्तंडायेनरादुःखभागिनः ॥ तेकथं
नीरुजःसंतुविज्वरागतकल्मषाः ॥ १३ ॥ ब्रह्मोवाच ॥ आराधयंतुदेवेशंपुष्पैर्नैवमनोपमम् ॥ भास्करंतुजगन्नाथंसर्वदेवगुरुंपरम् ॥ १४ ॥
॥ विष्णुरुवाच ॥ दोषाभिभूतदेहैस्तुकथमाराधनंरवेः ॥ कर्तव्यंवददेवेशभक्त्याश्रेयोऽर्थमात्मनः ॥१५॥अनुग्राह्योऽस्मियदितेममार्यंभक्ति
मानिति ॥ तन्ममोपदिशत्वंचमहदाराधनंरवेः ॥१६॥ अनंतमजरंदेवंदुष्टसंदेहनाशनम् ॥ आराधयितुमिच्छामिभगवंस्त्वदनुज्ञया ॥१७॥
येनाहंत्वत्प्रसादेनभवेयमतिविक्रमः ॥ ब्रह्मोवाच ॥ अनुग्राह्योऽसिदेवस्यनूनमव्यक्तजन्मनः ॥१८॥ आराधनायतेविष्णोयदेतत्प्रवणंमनः॥
यदिदेव पतिंभानुमाराधयितुमिच्छसि ॥ १९ ॥ भगवंतमनाद्यंचभववैवस्वतोऽच्युत ॥ नह्यवैवस्वतैर्भानुर्ज्ञातुंस्तोतुंचशक्यते ॥ २० ॥
द्रष्टुंवाशक्यतेमूढैःप्रवेष्टुंकुतएववतु ॥ तद्भक्तिप्रार्थिताःपूतानरास्तद्भक्तिचेतसः ॥२१ ॥ वैवस्वताभवंत्येवंविवस्वंतंविशंतिच ॥ अनेकजन्मसं
सारचितेपापसमुच्चये ॥ २२ ॥ नाक्षीणेजायतेपुंसांमार्तंडाभिमुखीमतिः॥प्रद्वेषंयातिमार्तंडेद्विजान्वेदांश्चनिंदति ॥ २३ ॥ योनरस्तंविजानी
यादसुरांशसमुद्भवम् ॥ पाषंडेषुरतिःपुंसांहेतुवादानुकूलता ॥ २४ ॥ जायतेदंभमायांभःपतितानांदुरात्मनाम् ॥ यदापापक्षयःपुंसांतदावे

दाढ्जातिषु॥२५॥भानौचयज्ञपुरुषेश्रद्धाभवतिवैतदा ॥ यदास्वल्पावशेषस्तुनराणांपापसंचयः ॥ २६ ॥ तदाभोजकविप्रेषुभानौपूजाप्रकु
र्वते॥भ्रमतामत्रसंसारेनराणांकर्मदुर्गमे ॥२७ ॥ करावलंबनोह्येकोभक्तिप्रीतोदिवाकरः॥सत्वंवैवस्वतोभूत्वासर्वपापहरंहरिम् ॥२८॥ आराध
यसमंभक्त्याप्रीतिमभ्येतिभास्करः ॥ विष्णुरुवाच ॥ किंलक्षणाभवंत्येतेनरावैवस्वतागुणैः ॥ २९ ॥ यच्चवैवस्वतंकार्यंतन्मेकथयकंजज ॥
ब्रह्मोवाच ॥ कर्मणामनसावाचाप्राणिनांयोनाहिंसकः॥३०॥भावभक्तश्चमार्तंडेकृष्णवैवस्वतोऽपिसः॥ योभोजकाद्द्विजान्देवान्नित्यमेवनमस्यति
॥ ३१ ॥ नचभोक्तापरस्वादेर्विष्णोवैवस्वतोहिसः ॥ सर्वान्देवान्नविवेत्तिसर्वांल्लोकांश्चभास्करम् ॥ ३२ ॥ तेभ्यश्चानन्यमात्मानं
कृष्णवैवस्वतोहिसः ॥ देवंमनुष्यमन्यंवापशुपक्षिपिपीलिकाम् ॥ ३३ ॥ तरुपाषाणकाष्ठादिभूम्यंभोधिदिवंतथा ॥ आत्मानंचापिदे
वेशाद्व्यतिरिक्तंदिवाकरात् ॥ ३४ ॥ योनजानातितंविद्यात्कृष्णवैवस्वतंनरम् ॥ सर्वोवैवस्वतोभागोयद्भूतंयद्व्यवस्थितम् ॥ ३५ ॥ इति
वैयोविजानातिसतुवैवस्वतोनरः ॥ भवभीतिंहरत्येषभक्तिभावेनभावितः ॥ ३६ ॥ विवस्वानितिभावोयःसतुवैवस्वतोनरः ॥ भावंनकुरुते
यस्तुसर्वभूतेषुपापकम् ॥ ३७ ॥ कर्मणामनसावाचासचवैवस्वतोनरः ॥ बाह्यार्थनिरपेक्षोयःक्रियांभक्त्याविवस्वतः ॥ ३८ ॥ भावेन
निष्पादयतिज्ञेयोवैवस्वतोहिसः ॥ नार्थोयस्यनचस्निग्धानभेदाधीनवृत्तयः ॥ ३९ ॥ पश्यतेसर्वमेवेदंभानुंवैवस्वतोहिसः ॥ सुत
तेनेहतपसायज्ञैर्वाबहुदक्षिणैः ॥ ४० ॥ तांगतिंचनरायांतियांतुवैवस्वतोगतः ॥ येनसर्वात्मनाभानौभक्त्याभावोनिवेशितः ॥ ४१ ॥
देवश्रेष्ठकृतार्थत्वाच्छ्लाघ्योवैवस्वतोहिसः ॥ अपिनःसकुलेधन्योजायेतकुलपावनः ॥ ४२ ॥ भास्करंभक्तिभावेनयस्तुवैपूजयिष्यति ॥
यःकारयतिदेवार्चांह्रदयालंबनंरवेः ॥ ४३ ॥ सनरोऽर्कमवाप्नोतिधर्मध्वजमनोपमम् ॥ यश्चदेवालयंभक्त्याभानोःकारयतेस्थिरम् ॥
॥ ४४ ॥ ससप्तपुरुषाल्लोकान्भानोर्नयतिमानवः ॥ यावंत्यब्दानिदेवार्चारवेस्तिष्ठतिमंदिरे ॥ ४५ ॥ तावद्वर्षसहस्राणिपुष्पो
त्तरगृहेवसेत् ॥ देवार्चालक्षणोपेतोयद्गृहेसंततोविधिः ॥४६॥ निष्कामंचमनोयस्यसयात्यक्षरसाम्यताम् ॥ पुष्पाण्यतिसुगंधीनिमनो
ज्ञानिचयःपुमान् ॥ ४७ ॥ प्रयच्छतिजगन्नाथेसताइवज्योतिषांपतौ ॥ सयातिपरमंस्थानंयत्रज्योतिःसनातनम् ॥ ४८ ॥

यस्ययस्यविहीनोयोदेशोयद्वर्जितंचयत् ॥ धूपांश्चविविधांस्तांस्तान्गंधाढ्यंसुविलेपनम् ॥ ४९ ॥ दीपवात्योपहारांश्चयच्चाभीष्ट
मथात्मनः॥नरःसोनुदिनंयज्ञान्करोत्याराधनाद्रवेः॥५०॥यज्ञेशोभगवान्भानुर्मखैरपिसतोष्यते॥बहूपकरणायज्ञानानासंभारविस्तराः॥५१॥
संप्राप्यंतेधनयुतैर्मनुष्यैर्नात्यसंचयैः ॥ भक्त्यातुपुरुषैःपूजाकृतादूर्वांकुरैरपि ॥ ५२ ॥ रवेर्ददातिहिफलंसर्वयज्ञैःसुदुर्लभम् ॥ यानिपुष्पाणि
हृद्यानिधूपगंधानुलेपनम् ॥५३॥ दयितंभूषणंयच्चतथारक्तेचवाससी॥यानिचाभ्यवहार्याणिभक्ष्याणिचफलानिच ॥५४॥प्रयच्छतानिमार्तंडे
भवेथाश्चैवतन्मनाः॥आद्यंतंयज्ञपुरुषंयथाभक्त्याप्रसादय॥५५॥आराध्ययातितंदेवंयत्तद्ब्रह्मपरंस्मृतम् ॥पुण्यैस्तीर्थोदकैःपुष्पैर्मधुनासर्पिषा
तथा॥५६॥क्षीरेणस्नापयेद्देवमच्युतंजगतांपतिम् ॥ दधिक्षीरहविर्दान्पुण्यांस्ततोलोकान्मधुच्युतः॥५७॥प्रयास्यसियदुश्रेष्ठानिर्वृतिंचाप्यनश्व
रम्॥स्तोत्रैर्हृद्यैर्यथावाद्यैर्ब्राह्मणानांचतर्पणैः ॥ ५८ ॥ मनसश्चैकतायोगादाराधयदिवाकरम्॥आराध्यतंमहादेवोमहच्छन्दमवाप्तवान्॥५९॥
अहंचापिसमस्तानांलोकानांसृष्टिकारकः ॥ तमाराध्यविवस्वंतंतत्प्रसादाज्जनार्दन ॥ ६० ॥ त्वमप्येतंहृषीकेशतत्प्रसादान्नसंशयः ॥
समर्थोदेवशत्रूणांदैत्यानांनाशनेसदा ॥ ६१ ॥ दाक्षिणंकिरणंतस्ययद्देवस्यविवस्वतः ॥ अहंतस्मात्समुत्पन्नोवेदवेदांगसम्मितः ॥ ६२ ॥
वामंयत्किरणंकृष्णरश्मिमालाकुलंसदा ॥ तस्मादीशःसमुत्पन्नःपार्वतीदयितोऽच्युत ॥ ६३ ॥ वक्षसस्त्वंसमुत्पन्नःशंखचक्रगदाधरः ॥
तथांबुजकरादेवीअंबुजाननवल्लभा ॥ ६४ ॥ तमाराध्यबलंकीर्तिंश्रियंचावाप्तवानहम् ॥ तथात्वमपिराजेंद्रतमाराध्यदिवाकरम् ॥ ६५ ॥
यान्यानिच्छसिकामांस्त्वंतांस्तान्त्सर्वानवाप्स्यसि ॥ यइदंशृणुयान्नित्यंसंवादंविधिकृष्णयोः॥६६॥सोऽपिकामानवाप्याग्र्यांस्ततोलोकमवा
प्नुते॥गैरिकंयानमारूढोयुक्तंकुंजरवाजिभिः ॥ ६७ ॥ तेजसांबुजसंकाशःप्रभयांडजसन्निभः॥कांत्याचंद्रसमोराजन्वृंदारकगणैर्वृतः ॥ ६८ ॥
गंधर्वैर्गीयमानस्तुतथाचाप्सरसांगणैः ॥ ६९ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेआदित्यपूजावर्णनंनामविंशोत्तरशततमोऽ
ध्यायः ॥ १२० ॥छ॥ ॥ शतानीकउवाच ॥ ॥ [1]शरीरलिखनंभानोरुक्तंसंक्षेपतस्त्वया ॥ विस्तराच्छ्रोतुमिच्छामितन्ममाचक्ष्वसुव्रत ॥१॥

१ शरीरालिखनं सूर्ये कथं वै प्रतिपादितम् । दैवतैर्ऋषिभिर्वापि तन्ममाचक्ष्व सुव्रत—इ०पा० ।

॥ सुमंतुरुवाच ॥ ॥ पितुर्गृहंतुयातायांसंज्ञायांकुरुनंदन ॥ भास्करश्चिंतयामाससंज्ञामद्रूपकारिणी ॥ २ ॥ एतस्मिन्नंतरेब्रह्मातत्रागत्य
दिवाकरम् ॥ अब्रवीन्मधुरांवाचंरवेःप्रीतिकरांशुभाम् ॥ ३ ॥ आदिदेवोऽसिदेवानांव्याप्तमेतत्त्वयाजगत् ॥ श्वशुरोविश्वकर्मातेरूपंनिर्वर्त
यिष्यति ॥ ४ ॥ एवमुक्त्वारविंब्रह्माविश्वकर्माणमब्रवीत् ॥ प्रवर्तस्वत्वंमार्तंडस्वरूपंतत्सुशोभनम् ॥५॥ ततोब्रह्मसमादेशाद्भ्रमिमारोप्यभा
स्करम् ॥ रूपंनिर्वर्तयामासविश्वकर्माशनैःशनैः ॥ ६ ॥ ततस्तुष्टावतंब्रह्मासर्वदेवगणैःसह ॥ गुह्यैर्नानाविधैःस्तोत्रैर्वेदवेदांगपारगैः ॥ ७ ॥
स्वस्तितेऽस्तुजगन्नाथघर्मवर्षहिमाकर ॥ शांतिस्तेसर्वलोकानांदेवदेवदिवाकर ॥ ८ ॥ ततोरुद्रश्चविष्ण्वाद्याःस्तुवंतस्तंदिवाकरम् ॥
तेजस्तेवर्धतांदेवलिख्यतेऽपिदिवस्पते ॥ ९ ॥ इंद्रश्चागत्यतंदेवंलिख्यमानमथास्तुवत् ॥ जयदेवजयस्वेतितत्त्वदोऽसिजगत्पते ॥ १० ॥
ऋषयस्तुततःसप्तविश्वामित्रपुरोगमाः ॥ तुष्टुवुर्विविधैःस्तोत्रैःस्वस्तिस्वस्तीतिवादिनः ॥ ११ ॥ वेदोक्ताभिरथाशीर्भिर्वालखिल्याश्च
तुष्टुवुः ॥ त्वंनाथमोक्षिणांमोक्षोध्येयस्त्वंध्यानिनामपि ॥ १२ ॥ त्वंगतिःसर्वभूतानांत्वयिसर्वंप्रतिष्ठितम् ॥ प्रजाभ्यश्चैवदेवेशशं
नोऽस्तुजगतःपते ॥ १३ ॥ त्वत्तोभवतिवैनित्यंजगत्संलीयतेत्वयि ॥ त्वमेकस्त्वंद्विधाचैवत्रिधाचत्वंनसंशयः ॥ १४ ॥
त्वयैकेनजगत्सृष्टंत्वयैकेनप्रबोधितम् ॥ ततोविद्याधरगणायक्षराक्षसपन्नगाः ॥ १५ ॥ कृतांजलिपुटाःसर्वेशिरोभिःप्रणतारविम् ॥
ऊचुरेवंविधावाचोमनःश्रोत्रसुखप्रदाः ॥ १६ ॥ सह्यंभवतुतेतेजोभूतानांभूतभावन ॥ हाहाहूहूस्ततश्चैवतुंबुरुर्नारदस्तथा ॥
॥ १७ ॥ उपगातुंसमारब्धागामुच्चैःकुशलारविम् ॥ षड्जमध्यमगांधारग्रामत्रयविशारदाः ॥ १८ ॥ मूर्च्छनाभिस्ततश्चैवतथाधैवतपं
चमैः ॥ नानानुभावमंद्रैश्चअर्धमंद्रैस्तथैवच ॥ १९ ॥ त्रिःसाधनैःप्रकारैस्तुवाद्यतालसमन्वितैः ॥ विश्वाचीचघृताचीचउर्वशीचतिलो
त्तमा ॥ २० ॥ मेनकासहजन्याचरंभाचाप्सरसांवरा ॥ हावभावविलासैश्चकुर्वन्त्योऽभिनयान्बहून् ॥ २१ ॥ ततोऽतीवकलंगेयंमधुरंचप्रव
र्तते ॥ सर्वेषांदेवसंघानांमनःश्रोत्रसुखप्रदम् ॥ २२ ॥ प्रवाद्यंतुततस्तत्रवीणावंशादिसुव्रत ॥ पणवाःपुष्कराश्चैवमृदंगाःपटहास्तथा ॥ २३ ॥

देवदुंदुभयःशंखाःशतशोऽथसहस्रशः ॥ गायद्भिश्चैवगंधर्वैर्नृत्यद्भिश्चाप्सरोगणैः ॥ २४ ॥ तूर्यवादित्रघोषैश्चसर्वंकोलाहलीकृतम् ॥ ततः कृतैःकरपुटैःपद्मकुड्मलसन्निभैः ॥ २५ ॥ ललाटोपरिविन्यस्तैःप्रणेमुःसर्वदेवताः ॥ ततःकोलाहलेतस्मिन्त्सर्वदेवसमागमे ॥ २६ ॥ तेजसःशातनंचक्रेविश्वकर्माशनैःशनैः ॥ २७ ॥ इतिहिमजलघर्मकालहेतोर्हरकमलासनविष्णुसंस्तुतस्य ॥ तदुपरिलिखनंनिशम्यभानोर्व्रजतिदिवाकरलोकमायुषोंते ॥२८॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेविश्वकर्मकृतसूर्यतेजःशातनंनामैकविंशोत्तरशततमोऽध्यायः॥१२१॥छ॥ शतानीकउवाच ॥ ॥ तस्मिन्कालेसमारूढोलिख्यमानोदिवस्पतिः॥ब्रह्मादिभिःस्तुतोदेवैर्यथावैतद्वदस्वमे ॥१॥ सुमंतुरुवाच॥ ॥शृणुष्वैकमनाराजन्यथादेवोदिवस्पतिः॥ब्रह्मादिभिःस्तुतोदेवैर्ऋषिभिश्चपुरानघ ॥२॥ प्रयत्नतःप्रणतहितानुकंपिनेस्वरूपतोलोकविभाविनेनमः ॥ दिवस्पतेकमलकुलावबोधिनेनमस्तमःपटलपटावपाटिने ॥ ३ ॥ पावनातिशयपुण्यकर्मणेनैककामविभवप्रदायिने ॥ भासुरामलमयूखमालिनेसर्वलोकहितकारिणेनमः ॥ ४ ॥ अजायलोकत्रयभावनायभूतात्मनेगोपतयेप्रियाय ॥ नमोमहाकारुणिकोत्तमायसूर्यायलोकत्रयभावनाय ॥ ५ ॥ विवस्वतेज्ञानकृतांतरात्मनेजगत्प्रतिष्ठायजगद्धितैषिणे ॥ स्वयंभुवेलोकसमस्तचक्षुषेसुरोत्तमायामिततेजसेनमः ॥ ६ ॥ क्षयमुदयायमौलिमणेसुरगणजगस्त्वमहितैस्त्वमूरुमयूखसहस्रतपः ॥जगतिविभोवतमासितुदंवनातिमिरासवपावनमदाद्भवतिविलोहिताविग्रहतातिमिरविनाशिनमुग्रसुतरांत्रिभुवनभावनभाप्रकारैः (?) ॥७॥ रथमारुह्यसमामयंभ्रमासिसदाजगतोहितदा॥इत्येवंसंस्तुतोदेवोभास्करोवेधसापुरा ॥ ८ ॥ दैवतैश्चमहाबाहोशिवविश्वादिभिर्नृप ॥ ९ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेआदित्यस्तवोनामद्वाविंशोत्तरशततमोऽध्यायः ॥ १२२ ॥छ॥ शतानीकउवाच ॥ भूयोऽपिकथयस्वेमांकथांसूर्यसमाश्रिताम् ॥ नतृप्तिमधिगच्छामिशृण्वन्नेतांकथांमुने ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ भास्करस्यकथांपुण्यांसर्वपापप्रणाशिनीम् ॥ वक्ष्यामिकथितांपूर्वंब्रह्मणालोककर्तृणां[1] ॥२॥ ऋषयःपरिपृच्छंतिब्रह्मलोकपितामहम् ॥ तापिताःसूर्यकिरणैस्तेजसासंप्रमोहिताः ॥ ३ ॥ ॥ ऋषयऊचुः ॥ ॥

---

१ आर्षो नाभावः ।

कोऽयंदीप्तोमहातेजाहविराशिसमप्रभः ॥ एतद्वेदितुमिच्छामःप्रभावोऽस्यकुतःप्रभो ॥ ४ ॥ ब्रह्मोवाच ॥ ॥ तमोभूतेषुलोकेषु
नष्टेस्थावरजंगमे ॥ प्रवृत्तेगुणहेतुत्वेपूर्वंबुद्धिरजायत ॥ ५ ॥ अहंकारस्ततोजातोमहाभूतप्रवर्तकः ॥ वाय्वग्निरापःखंभूमिस्ततस्त्वंडमजा
यत ॥ ६ ॥ तस्मिन्नंडइमेलोकाःसप्तवैसंप्रतिष्ठिताः ॥ पृथ्वीचसप्तभिर्द्वीपैःसमुद्रैश्चापिसप्तभिः ॥ ७ ॥ तत्रैवावस्थितोह्यासमहंविष्णुर्महे
श्वरः ॥ प्रमूढास्तमसासर्वेप्रध्याताईश्वरंपरम् ॥ ८ ॥ ततोभिद्यमहातेजःप्रादुर्भूतंतमोनुदम् ॥ ध्यानयोगेनचास्माभिर्विज्ञातुंसवितुस्त
था ॥ ९ ॥ ज्ञात्वाचपरमात्मानंसर्वएवपृथक्पृथक् ॥ दिव्याभिःस्तुतिभिर्देवंसंस्तोतुमुपचक्रमुः ॥ १० ॥ आदिदेवोऽसिदेवानामीश्वराणां
त्वमीश्वरः ॥ आदिकर्तासिभूतानांदेवदेवसनातन ॥ ११ ॥ जीवनंसर्वसत्वानांदेवगंधर्वरक्षसाम् ॥ मुनिकिंनरसिद्धानांतथैवोरगपक्षिणाम्
॥ १२ ॥ त्वंब्रह्मात्वंमहादेवस्त्वंविष्णुस्त्वंप्रजापतिः ॥ वायुरिंद्रश्चसोमश्चविवस्वान्वरुणस्तथा ॥ १३ ॥ त्वंकालःसृष्टिकर्ताचहर्ताकर्ताप्रभु
स्तथा ॥ सरितःसागराःशैलाविद्युदिंद्रधनूंषिच ॥१४ ॥ प्रलयःप्रभवश्चैवव्यक्ताव्यक्तःसनातनः ॥ ईश्वरात्परतोविद्याविद्यायाःपरतःशिवः ॥
॥ १५ ॥ शिवात्परतरोदेवस्त्वमेवपरमेश्वर ॥ सर्वतःपाणिपादस्त्वंसर्वतोऽक्षिशिरोमुखः ॥ १६ ॥ सहस्रांशुस्त्वंसदादेवसहस्रकिरणस्त
था ॥ भूरादिर्भूर्भुवःस्वश्चमहर्जनस्तपस्तथा ॥ १७॥ प्रदीप्तंदीप्तिमन्नित्यंसर्वलोकप्रकाशकम् ॥ दुर्निरीक्ष्यंसुरेंद्राणांयद्रूपंतस्यतेनमः॥१८॥
सुरसिद्धगणैर्जुष्टंभृग्वत्रिपुलहादिभिः ॥ शुभंपरममव्यग्रंयद्रूपंतस्यतेनमः ॥ १९ ॥ पंचातीतास्थितंतद्वैदशैकादशएवच ॥ अर्धमासम
तिक्रम्यस्थितंतत्सूर्यमंडले ॥ २० ॥ तस्मैरूपायतेदेवप्रणेमुःसर्वदेवताः ॥ विश्वकृद्विश्वभूतंचविश्वानरसुरार्चितम् ॥ २१ ॥ विश्वस्थि
तमचिंत्यंचयद्रूपंतस्यतेनमः ॥ परंयज्ञात्परंदेवात्परंलोकात्परंदिवः ॥ २२ ॥ दुरतिक्रमेतियःख्यातस्तस्मादपिपरंपरात् ॥ परमात्मेति
विख्यातंयद्रूपंतस्यतेनमः ॥ २३ ॥ अविज्ञेयमचिंत्यंचअध्यात्मगतमव्ययम् ॥ अनादिनिधनंदेवंयद्रूपंतस्यतेनमः ॥ २४ ॥ नमोनमः
कारणकारणायनमोनमःपापविनाशनाय ॥ नमोनमोवंदितवंदनायनमोनमोरोगविनाशनाय ॥ २५ ॥ नमोनमःसर्ववरप्रदायनमोनमःसर्व
बलप्रदाय ॥ नमोनमोज्ञाननिधेसदैवनमोनमःपंचदशात्मकाय ॥ २६ ॥ स्तुतःसभगवानेवंतेजसारूपमास्थितः ॥ उवाचवाचंकल्याणीं

कोवरोवःप्रदीयताम् ॥ २७ ॥ तवातितेजसारूपंनकश्चित्सहतेविभो ॥ सहनीयंभवत्वेतद्धितायजगतःप्रभो ॥ २८ ॥ एवमस्त्वितिगामु
क्त्वाभगवान्सर्वकृत्स्वयम् ॥ लोकानांकार्यसिद्ध्यर्थंघर्मवर्षाहिमप्रदः ॥ २९ ॥ अतःसांख्याश्चयोगाश्चयेचान्येमोक्षकांक्षिणः ॥ ध्यायन्ति
ध्यानिनोनित्यंहृदयस्थंदिवाकरम् ॥ ३० ॥ सर्वलक्षणहीनोऽपियुक्तोवासर्वपातकैः ॥ सर्वंतरतिवैपापंदेवकर्मसमाश्रितः ॥ ३१ ॥ अग्नि
होत्रंचवेदाश्चयज्ञाश्चबहुदक्षिणाः ॥ भानोर्भक्तिर्नमस्कारकलांनार्हंतिषोडशीम् ॥ ३२ ॥ तीर्थानांपरमंतीर्थंमंगलानांचमंगलम् ॥ पवित्रंच
पवित्राणांतंप्रपद्येदिवाकरम् ॥ ३३ ॥ ब्रह्माद्यैःसंस्तुतंदेवैर्येप्रपद्यंतिभास्करम् ॥ निर्मुक्ताःकिल्बिषैःसर्वैस्तेयान्तिरविमन्दिरम् ॥ ३४ ॥
उपचर्यादिभिःसाध्योयथावेदेदिवस्पतिः ॥ लोकानामिहसर्वेषांतथादेवोदिवाकरः ॥ ३५ ॥ ॥ शतानीकउवाच ॥ ॥ शरीरलिखनं
सूर्येकथंवैप्रतिपादितम् ॥ देवैःसऋषिभिर्वापितन्ममाचक्ष्वसुव्रत ॥ ३६ ॥ ॥ सुमंतुरुवाच ॥ ॥ ब्रह्मलोकेसुखासीनंब्रह्माणंतेसुरा
सुराः ॥ ऋषयः[2]समुपागम्यइदमूचुःसमाहिताः ॥ ३७ ॥ भगवन्दैवतैःपुत्रोयएषदिविराजते ॥ तेनांधकारोनिकृतःसोयंजाज्वलितीतिहि ॥
॥ ३८ ॥ अस्यतेजोभिरखिलंजगत्स्थावरजंगमम् ॥ नाशमायातिदेवेशयथाक्लिन्नंनदीतटम् ॥ ३९ ॥ वयंचपीडिताःसर्वेतेजसातस्यमो
हिताः ॥ पद्मश्चायंयथाम्लानोयोयंयोनिस्तवप्रभो ॥ ४० ॥ दिविभुव्यंतरिक्षेचशर्मनोपलभामहे ॥ तथाकुरुसुरज्येष्ठयथातेजःप्रशाम्यति ॥
॥ ४१ ॥ एवमुक्तःसभगवान्पद्मयोनिःप्रजापतिः ॥ उवाचभगवान्ब्रह्मादेवान्[3]विष्णुपुरोगमान् ॥४२॥ महादेवेनसहितानिंद्रेणचमहात्मना ॥
तमेवशरणंदेवंगच्छामःसहितावयम् ॥ ४३ ॥ ततस्तेसहिताःसर्वेब्रह्मविष्ण्वादयःसुराः ॥ गत्वातेशरणंसर्वेभास्करंलोकभास्करम् ॥ ४४॥
स्तोतुंप्रचक्रमुःसर्वेभक्तिनम्राःसमंततः ॥ केशादिदेवताःसर्वेभक्तिभावसमन्विताः ॥ ४५ ॥ ॥ ब्रह्मविष्ण्वीशाऊचुः ॥ ॥ नमोनमःसुर
वरतिग्मतेजसेनमोनमःसुरवरसंस्तुतायवै ॥ जडांधमूकान्बधिरान्सकुष्ठान्साश्वित्रिणोऽधान्विविधव्रणावृतान् ॥ ४६ ॥ करोषितानेवपु
नर्नवान्सदाअतोमहाकारुणिकायतेनमः ॥ यदौदरंज्योतिरतित्वरन्महद्यदल्पतेजोयदपीहचक्षुषाम् ॥ ४७ ॥ यदत्रयज्ञेष्वपनीतमाहितं

१ नमस्यंति-इ०पा० । २ तम्-इ०पा० । ३ वैलक्षमानसान्-इ०पा० ।

तवैवतद्रूपमनेकतःस्थितम् ॥ सुरद्विषःसागरतोयवासिनःप्रचंडपाशासिपरश्वधायुधाः ॥ ४८ ॥ समुच्छ्रितास्तेभुविपापचेतसःप्रयांतिनाशं तवदेवदर्शनात् ॥ यतोभवांस्तीर्थफलंसमस्तंयज्ञेषुनित्यंभगवानवस्थितः ॥ ४९ ॥ नमोभवन्नत्रविचारणास्तिसदासमःशांतिकरोनराणाम् ॥ यच्चापिलोकेतपउच्यतेबुधैस्तत्तेमहातेजउशांतिपंडिताः ॥ ५० ॥ स्तुतःसभगवानेवंप्रजापतिमुखैःसुरैः ॥ अवधानंततश्चक्रेश्रवणाभ्यांमहीपते ॥ ५१ ॥ स्तुवंतितेततोभूयःशिवविष्णुपुरोगमाः ॥ कृत्वामांपुरतःसर्वेभक्तिनम्राःसमंततः ॥ ५२ ॥ नमोनमस्त्रिभुवनभूतिदायिनेक्रतुक्रियासत्फलसंप्रदायिने ॥ नमोनमःप्रतिदिनकर्मसाक्षिणेसहस्रसंदीधितयेनमोनमः ॥ ५३ ॥ प्रसक्तसत्त्वश्युजिक्षयायध्रुवैकराशिमग्राथिनेनमोनमः ॥ सवालखिल्याप्सरकिंनरोरगैःससिद्धगंधर्वपिशाचमानुषैः ॥ ५४ ॥ सयक्षरक्षोगणगुह्यकोत्तमैःस्तुतःसदादेवनमोनमस्ते॥यतोरसान्संक्षिपसेशरीरिणांगभस्तिभिर्हिमजलघर्मनिस्रवैः ॥ ५५ ॥ जगच्चसंशोषयसेसदेवअतोसिलोकेजगतोविशोषणम् ॥ ब्रह्मोवाच ॥ ॥ ज्ञात्वातेषामभिप्रायमुवाचभगवान्वचः ॥५६॥ लब्ध्वानुज्ञांततःसर्वेसुराःसंहृष्टचेतसः ॥ त्वष्टारंपूजयामासुर्मनोवाक्कायकर्मभिः ॥ ५७ ॥ विश्वकर्मातवादेशात्करोतुतवसौम्यताम् ॥ ततस्तुतेजसोराशिंसर्वकर्मविधानवित् ॥ ५८ ॥ भ्रमिमारोपयामासविश्वकर्माविभावसुम् ॥ अमृतेनाभिषिक्तस्यतदासूर्यस्यवैविभोः ॥ ५९ ॥ तेजसःशातनंचक्रेविश्वकर्माशनैःशनैः॥आजानुलिखितश्चासौससुरासुरपूजितः ॥ ६० ॥ नाभ्यनंदत्ततोदेवउल्लेखनमतःपरम् ॥ ततःप्रभृतिदेवस्यचरणौनित्यसंवृतौ ॥ ६१ ॥ तापयन्ग्लापयंश्चैवयुक्ततेजोऽभवत्तदा ॥ यच्चास्यशातितंतेजस्तेनचक्रंविनिर्मितम् ॥ ६२ ॥ येनविष्णुर्जघानोग्रान्सदावैदैत्यदानवान् ॥ शूलशक्तिगदावज्रशरासनपरश्वधान् ॥ ६३ ॥ देवतानांददौकृत्वाविश्वकर्मामहामतिः ॥ त्रिदेवनिर्मितंस्तोत्रंसंध्ययोरुभयोर्जपन् ॥ ६४ ॥ कुलंपुनातिपुरुषोव्याधिभिर्नचपीड्यते ॥ प्रजावान्सिद्धकर्माचजीवेत्साग्रंशरच्छतम्॥६५॥पुत्रवान्धनवांश्चैवसर्वत्रचापराजितः ॥हित्वापुरंभूतमयंगच्छेत्सूर्यमयंपुरम् ॥ ६६ ॥ भूयोऽपितुष्टुवुर्देवास्तथादेवर्षयोरविम् ॥ वाग्भिरित्थमशेषस्यत्रैलोक्यस्यसमागताः ॥ ६७ ॥ देवाऊचुः ॥ [3]नमस्तेरवि



१ त्रिभुवनभूरिदायिने–इ०पा०। २ वदतां वरः–इ०पा०। ३ नमस्ते रुद्ररूपाय सामरूपाय वै नमः–इ०पा०।

रूपायसोमरूपायतेनमः ॥ नमोयजुःस्वरूपायाथर्वा[1]यांगिरसेनमः ॥ ६८ ॥ [2]ज्ञानैकधामभूतायनिर्धूततमसेनमः ॥ शुद्धज्योतिःस्वरूपायनि
स्तत्वायामलात्मने ॥ ६९॥ नमोखिलजगद्व्यापिस्वरूपायात्ममूर्तये ॥ सर्वकारणभूतायनिष्ठायैज्ञानचेतसाम् ॥७०॥ नमो[3]ऽस्तुज्ञेयरूपाय
प्रकाशेलक्षरूपिणे ॥ भास्करायनमस्तुभ्यंतथाशब्दकृतेनमः ॥७१॥ [4]संसारहेतवेचैवसंध्याज्योत्स्नाकृतेनमः॥त्वंसर्वमेतद्भगवाञ्जगद्भ्रमति
त्वया ॥ ७२ ॥ भ्रमत्वाविद्धमखिलंब्रह्माण्डंसचराचरम् ॥ त्वदंशुभिरिदंसर्वंसंस्पृष्टंजायतेशुचि ॥ ७३ ॥ क्रियतेत्वत्करस्पर्शाज्जलादीनांप
वित्रता ॥ होमदानादिकोधर्मोनोपकारायजायते ॥ ७४ ॥ तावद्यावन्नसंयोगीजगत्यत्रभवाञ्छुचिः ॥ प्रातर्होमंप्रशस्तंहिउदितेत्वयि
जायते ॥ ७५ ॥ ऋचोऽथसकलाह्येतायजूंषित्वंजगत्पते ॥ सकलानिचसामानितपत्येवंजगत्सदा ॥ ७६ ॥ ऋङ्मयस्त्वंजगन्नाथत्वमेवचय
जुर्मयः ॥ तथासाममयश्चैवततोनाथत्रयीमयः ॥ ७७ ॥ त्वमेवब्रह्मणोरूपंपरंचापरमेवच ॥ मूर्तोऽमूर्तस्तथासूक्ष्मःस्थूलरूपतयास्थितः ॥
॥ ७८ ॥ निमेषकाष्ठादिमयःकालरूपक्षयात्मकः ॥ प्रसीदस्वेच्छयारूपंस्वतेजोमयमादिश ॥ ७९ ॥ इत्थंसंस्तूयमानस्तुदेवैर्देवर्षि
भिस्तथा ॥ मुमोचस्वंतदातेजस्तेजसांराशिरव्ययः ॥ ८० ॥ यत्तस्यऋङ्मयंतेजोभवितातेनमेदिनी ॥ यजुर्मयेनापिदिवंस्वयंसाममयो
रविः ॥ ८१ ॥ शातितास्तेजसोभागायेचस्युर्दशपंचच ॥ तस्यैवतेनशर्वस्यकृतंशूलंमहात्मना ॥ ८२ ॥ चक्रंविष्णोर्वसूनांचशंकरस्य
चदारुणम् ॥ षण्मुखस्यतथाशक्तिःशिबिकाधनदस्यच ॥ ८३ ॥ अन्येषांचसुरारीणांशस्त्राण्युग्राणियानिवै ॥ यक्षविद्याधराणांचतानिचक्रे
सविश्वकृत् ॥ ८४ ॥ ततश्चषोडशंभागंबिभर्तिभगवान्रविः ॥ तत्ते[6]जसःपंचदशशातिताविश्वकर्मणा ॥ ८५ ॥ ततःसुरूपदृग्भानुरुत्तरा
नगमत्कुरून् ॥ ददर्शतत्रसंज्ञांचवडवारूपधारिणीम्॥८६॥इत्येतन्निखिलंभानोःकथितमृषिसत्तमाः ॥ शृणुयाद्योनरोभक्त्याअश्वमेधफलं
लभेत्॥८७॥इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेब्रह्मर्षिसंवादेपरिलेखवर्णनंनामत्रयोविंशत्युत्तरशततमोऽध्यायः ॥१२३ ॥छ॥

१ अथर्वाशिरसेनमः–इ०पा० । २ ज्ञानैकपादरूपाय–इ०पा० । ३ सूर्यस्वरूपाय–इ०पा० । ४ सर्वस्य हेतवे–इ०पा० । ५ अपिदेवैर्दिवाकरः–इ०पा०
५ आर्षं पुंस्त्वम् ।

॥ ब्रह्मोवाच ॥ ॥ वक्ष्याम्यहंतेपुनरेवदिंडेसूर्यस्यसर्वप्रवरप्रधानम् ॥ व्योम्नःपरंतिष्ठतियस्तुमग्नःसमुच्यतेरुद्रइहापिदिंडी ॥ १ ॥ स्थित्वा
पुराब्रह्मशिरःकिलासौप्रगृह्यततस्याशिरःकपालम् ॥ ततोह्यसावाश्रममुत्तमंशिवोम्बहूदकैःपुष्पफलैःसमृद्धम् ॥ २ ॥ नग्नोयदादारुवनमृ
षीणांदृष्ट्वाचतंभैक्ष्यचरंसुरेशम् ॥ योषित्सुताःसंक्षुभितास्तुसर्वाजग्मुर्हरंतमृषयःसुतुष्टाः ॥ ३ ॥ सहन्यमानोऋषिमुख्यसंघैर्गृहीतलोष्टैरप
पिदंडकाष्ठैः ॥ विहायदिंडिःसतुतान्सुरर्षीस्ततोरवेर्लोकमथाजगाम ॥ ४ ॥ आगच्छमानंप्रमथास्तमूचुर्देवेशनित्यंभ्रमसेकिमर्थम् ॥
सप्राहतान्पापविमोचनार्थमटामितीर्थानिसुरालयांश्च ॥ ५ ॥ तेभूयऊचुःप्रमथास्तमेवमत्रैवतिष्ठस्वरवेःपुरस्तात् ॥ शुद्धिंतवैषप्रकरिष्य
तीतिशुद्धस्ततोयास्यसिरुद्रलोकम् ॥ ६ ॥ इत्येवमुक्तःप्रमथैस्तुरुद्रस्तत्रैवतस्थौरवितोषणाय ॥ नग्नोजटीमुष्टिकपालपाणीरूपेणचैवाप्र
तिमस्त्रिलोकम् ॥ ७ ॥ उक्तःसतुष्टेनततःसवित्राप्रीतोस्मिदेवागमनात्तवाहम् ॥ मद्दर्शनादेवभवान्विशुद्धोदिंडीतिनाम्नाभवितासि
लोके ॥ ८ ॥ अष्टादशैतेप्रथमास्तुभानोश्चतुर्दशान्येतुरवेरथस्थाः ॥ द्वौदेवतेद्वौचऋषिप्रधानौगंधर्वसर्पावपितावदेव ॥ ९ ॥ यक्षौचासिद्धौ
चनिशाचरौचादित्यात्मजावप्सरसांप्रधानौ ॥ वसंतितेह्यस्तमुषश्चसूर्येतेषामशीतिश्चतुरोत्तरासा ॥ १० ॥ इत्यादिदेवप्रवरास्तुसर्वेधात्व
र्थशब्दैश्चभवंतिसिद्धाः ॥ ११ ॥ ऋषयऊचुः ॥ ॥ विस्तराद्ब्रूहिमेब्रह्मन्प्रवरान्धातुशब्दजन् ॥ यतश्चकौतुकंब्रह्मन्नस्माकमिहजायते ॥१२॥
॥ ब्रह्मोवाच॥ ॥ भूयस्तवप्रवक्ष्यामिदंडनायकपिंगलौ ॥ राज्ञस्त्रौषादयश्चान्योदिग्देवादिंडिनासह ॥ १३ ॥ मयासहसमागम्यपुरादेवैर्विचा
रितम् ॥ एषकारुणिकःसूर्योयुध्यतेदानवैःसह ॥ १४ ॥ तेतुलब्धवराभूत्वाअमात्याद्याह्यभीक्ष्णशः ॥ आदित्यंमन्यमानास्तेतपंतंहंतुमु
द्यताः ॥ १५ ॥ तस्मात्तेषांविघातार्थंप्रवराश्चभवामहे ॥ अस्माभिःप्रतिरुद्धास्तेनद्रक्ष्यंतिदिवाकरम् ॥ १६ ॥ संमंत्र्यैवंततःस्कंदोवाम
पार्श्वेरवेःस्थितः ॥ दंडनायकसंज्ञस्तुसर्वलोकस्यसप्रभुः॥१७॥ उक्तश्चसतदार्केणत्वंप्रजादंडनायकः॥दंडनीतिकरोयस्मात्तस्मात्त्वंदंडनाय
कः ॥ १८ ॥ लिखतेयःप्रजानांचसुकृतंयच्चदुष्कृतम् ॥ अग्निर्दक्षिणपार्श्वेतुपिंगलत्वात्सपिंगलः ॥१९॥ अश्विनौवापिसूर्यस्यपार्श्वयोरुभयोः
स्थितौ ॥ अश्वरूपात्समुपन्नौतेनतावश्विनौसुरौ ॥२०॥ द्वारपालौस्मृतौतस्यराज्ञःश्रेष्ठौमहाबलौ ॥ कार्तिकेयःस्मृतोराज्ञःश्रेष्ठश्चापिहरःस्मृ

तः॥२१॥राजृदीप्तौस्मृतोधातुर्नकारस्तस्यप्रत्ययः॥सुरसेनापतित्वेनसयस्माद्दीप्यतेसदा॥२२॥तस्मात्सकार्तिकेयस्तुनाम्नराज्ञइतिस्मृतः॥
स्रुगतौचस्मृतोधातुर्यस्यसप्रत्ययःस्मृतः ॥ २३ ॥ गच्छतीतिरहस्तस्मात्पर्यायात्स्रौषउच्यते ॥ प्रथमंयद्द्रवेद्वारंधर्मार्थाभ्यांसमाश्रि
तम् ॥ २४ ॥ तत्रैतौसंस्थितौदेवौलोकपूज्यौद्विजोत्तमाः ॥ द्वितीयायांतुकक्षायामप्रधृष्टौव्यवस्थितौ ॥ २५ ॥ पक्षिप्रेताधिपौनाम्नास्मृतौक
ल्माषपक्षिणौ ॥ वर्णस्यशबलत्वाच्चयमःकल्माषउच्यते ॥ २६ ॥ पक्षावस्येतियःपक्षीगरुडःपरिकीर्तितः ॥ स्थितोदक्षिणतस्तस्यदंडहस्त
समन्वितः ॥ २७ ॥ उत्तरेणस्थितोऽर्कस्यकुबेरश्चविनायकः ॥ कुबेरोधनदोज्ञेयोहस्तिरूपोविनायकः ॥ २८ ॥ कुत्सयाकुप्यताशतंकुश
रीरमजायत ॥ कुबेरःकुशरीरत्वात्सनाम्नाधनदःस्मृतः ॥ २९ ॥ नायकःसर्वसत्त्वानांतेननायकउच्यते ॥ विविधंनयतेयस्मात्सतुतस्मा
द्विनायकः ॥ ३० ॥ रैवतश्चैवदिंडिश्चतौरवेःपूर्वतःस्थितौ ॥ ततोदिंडिःस्मृतोरुद्रोरैवतस्तनयोरवेः ॥ ३१ ॥ प्लुतंगच्छत्यसौयस्मा
त्सर्वलोकनमस्कृतः ॥ रेवृप्लवगतौधातूरेवतस्तेनसस्मृतः ॥ ३२ ॥ डीङ्गतावस्यवैधातोर्दिंडिशब्दोनिपात्यते ॥ डयतेऽसौसदादिंडीतेन
दिंडीप्रकीर्तितः ॥३३॥इत्येतेप्रवराःप्रोक्ताधात्वर्थानैगमैःशुभैः ॥ एषांसंक्षेपतोभूयःसंख्यावोनिगदामिवै॥३४॥अश्विनौतौततोज्ञेयौदंडनायक
पिंगलौ ॥ तौसूर्यद्वारपौज्ञेयौराज्ञस्रौषौततःस्मृतौ ॥ ३५ ॥ रेवतश्चैवदिंडिश्चइत्येतेप्रवरामया ॥ अष्टादशसमाख्याताःसंक्षेपात्संख्यामया
॥ ३६ ॥ इत्येभिर्नामभिस्त्वन्येदानवानांजिघांसया ॥ परिवार्यस्थिताःसूर्यंनानाप्रहरणायुधाः ॥ ३७ ॥ सरूपाश्चान्यरूपाश्चविरूपाःकामरू
पिणः ॥ परिवार्यस्थिताःसूर्यंगरुडश्चमहाबलः ॥ ३८ ॥ धातुर्दिवितिवैप्रोक्तोक्रीडायांसतुउच्यते ॥ क्रीडंतेदिविवैयस्मात्तस्मात्तेदेवताः
स्मृताः ॥ ३९ ॥ ऋचोयजूंषिसामानियान्युक्तानीहवैमया ॥ नानारूपैःस्थितान्येवरवेस्तानिसमंततः ॥ ४० ॥ ॥सुमंतुरुवाच ॥ ॥इत्ये
वमुक्तवान्ब्रह्माऋषीणांपृच्छतांपुरा ॥ तेश्रुत्वाराध्यदेवेशंसंसिद्धादिविसंस्थिताः ॥ ४१ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पे
ब्रह्मर्षिसंवादेप्रवरवर्णनंनामचतुर्विंशत्युत्तरशततमोऽध्यायः॥ १२४ ॥ ७ ॥ शतानीकउवाच ॥ ॥ यदेतद्दृश्यतेव्योमसूर्यस्यपुरतोद्विज॥

१ ऋगतावस्य वै धातुः–इ०पा०। २ ऋच्छतीति–इ०पा०।

तदुच्यतेकिमात्माचकथंभूतश्चकथ्यताम् ॥ १ ॥ सुमंतुरुवाच ॥ हंतव्योमप्रवक्ष्यामिसूर्यप्रहरणंशुभम् ॥ यदात्मकंहियत्प्रोक्तंयथावसंतिदे
वताः ॥२॥ पुरस्ताच्चचतुःशृंगंतद्व्योमायतनंरवेः ॥ व्योमशब्दंचतुःशृंगंसर्वदेवमयंचयत् ॥३॥ गैरिकार्णवसंभूतंयदंतर्गर्भमाश्रितम् ॥ तत्रोत्पन्न
मिदंव्योमकलेव्योममहीस्मृता ॥ ४ ॥ वरुणस्ययथापाशोहुंकारोवैवसोयथा ॥ विष्णोश्चापियथाचक्रंत्रिशूलंत्र्यंबकस्यच ॥५॥ इंद्रस्यचयथा
वज्रंरविव्योमरवेःस्मृतम् ॥ तस्मिन्व्योम्नित्रयस्त्रिंशत्कोटिंतोयाज्ञियाःसुराः ॥ ६ ॥ हरश्चबर्षशुद्धश्चत्र्यंबकश्चापराजितः ॥ वृषाकपिश्चशंभुश्च
कपर्दीरैवतस्तथा ॥ ७ ॥ ईश्वरोभुवनश्चैतेरुद्राएकादशस्मृताः ॥ आदित्यानांचनामानिविष्णोश्चक्रस्यशीयताम् ॥ ८ ॥ अर्यमाचतथामि
त्रोभगोऽथवरुणस्यच ॥ विवस्वान्त्सविताचैवपूषात्वष्टातथैवच ॥ ९ ॥ अंशोभगश्चातितेजाआदित्याद्वादशस्मृताः ॥ ध्रुवोधरश्च
सोमश्चआपश्चैवाऽनिलोनलः ॥ १० ॥ प्रत्यूषश्चप्रभासश्चवसवोऽष्टौप्रकीर्तिताः ॥ नासत्यश्चैवदस्रश्चस्मृतौद्वावश्विनावुभौ ॥ ११ ॥ विश्वे
देवान्प्रवक्ष्यामिनामतस्तान्निबोधत ॥ क्रतुर्दक्षोवसुःसत्यकालकामौधृतिःकुरुः ॥ १२ ॥ शंकुमात्रोवामनश्चविश्वेदेवादशस्मृताः ॥ वर्तमा
नाइमेदेवाभविष्यानंतरेशृणु ॥ १३ ॥ यमाश्चतुषिताश्चैवसर्वावशवर्तिनः ॥ सत्याश्चभूतरजसःसाध्याश्चतदनंतराः ॥ १४ ॥ षट्सुमन्वं
तरेष्वेवंदेवाद्वादशद्वादश ॥ पारावतास्तथाचान्येतेह्यासंस्तुषितैःसह ॥ १५ ॥ साध्यान्देवान्प्रवक्ष्यामिनामतस्तान्निबोधमे ॥ मनोऽनुमेता
प्राणश्चनरोनारायणस्तथा ॥ १६ ॥ वृत्तिर्लवोमनुश्चैवसमोरमश्चवीर्यवान् ॥ वित्तस्वामीप्रभुश्चैवसाध्याद्वादशकीर्तिताः ॥ १७ ॥ एतेयज्ञ
भुजोदेवाःसर्वलोकेषुपूजिताः ॥ अदित्यामेवतेधीरकश्यपस्यात्मजाःस्मृताः ॥ १८ ॥ विश्वेचवसवःसाध्याविज्ञेयाधर्मसूनवः ॥ एवं
धर्मसुतःसोमस्तृतीयोवसुरिष्यते ॥ १९ ॥ धर्मोपिब्रह्मणःपुत्रःपुराणेनिश्चयंगतः ॥ अथचेंद्रान्वसूंश्चैवनामाभिश्चनिबोधमे ॥ २० ॥
स्वायंभुवोमनुःपूर्वंततःस्वारोचिषःस्मृतः ॥ उत्तमस्तामसश्चैवरैवतश्चाक्षुषस्तथा ॥ २१ ॥ इत्येतेषडतिक्रांताःसप्तमःसांप्रतोमनुः ॥
वैवस्वतेतिविज्ञेयोभविष्याःसप्तचापरे ॥ २२ ॥ एषामाद्योर्कसावर्णिर्ब्रह्मसावर्णिरेवच ॥ तस्माच्चभवसावर्णिर्धर्मसावर्णिरित्युत ॥ २३ ॥

१ तत्-इ०पा०। २ रुषिताश्चैव-इ०पा०। ३ तथैव वशवर्तिनः-इ०पा०। ४ वै स्मृताः-इ०पा०। ५ हंसो धर्मश्च-इ०पा०।

पंचमोदक्षसावर्णिः सावर्णिः[1] पंचकीर्तिताः ॥ रौच्योभौत्यश्चद्वावन्यावित्येतेमनवःस्मृताः ॥ २४ ॥ इंद्रस्तुविष्णुभुग्ज्ञेयोविद्युतिस्तद
नंतरम् ॥ विभुःप्रभुश्चैवशिखीतथैवचमनोजवः ॥ २५ ॥ ओजस्वीसांप्रतस्त्विद्रोबलिर्भाव्यस्ततःपरम् ॥ अद्भुतस्त्रिदिवश्चैवदशम
स्त्विद्रउच्यते ॥ २६ ॥ सुसात्विकश्च[2] कीर्तिश्चशतधामादिवस्पतिः ॥ इतिभूताभविष्याश्चइंद्राज्ञेयाश्चतुर्दश ॥ २७ ॥ कश्यपोऽ
त्रिर्वसिष्ठश्चभरद्वाजश्चगौतमः ॥ विश्वामित्रोजमदग्निःसप्तैतेऋषयःस्मृताः ॥ २८ ॥ अतःपरंप्रवक्ष्यामिमरुतोऽग्निपरिग्रहान् ॥ प्रवहो
थावहश्चैवउद्वहःसंवहस्तथा ॥ २९ ॥ विवहोनिवहश्चैवपरिवाहस्तथैवच ॥ अंतरिक्षचरा[4]ह्येतेपृथङ्मार्गविसारिणः ॥ ३० ॥
सूर्योऽग्निश्चशुचिर्नाम्नावैद्युतःपावकःस्मृतः ॥ निर्मथपवमानोऽग्निस्त्रयःप्रोक्ताइमेग्नयः ॥ ३१ ॥ अग्नीनांपुत्रपौत्रास्तुचत्वारिंशत्तथै
वतु ॥ मरुतामपिसर्वेषांविज्ञेयाःसप्तसप्तकाः ॥ ३२ ॥ ऋतुःसंवत्सरोह्यग्निर्ऋतवस्तस्यजज्ञिरे ॥ ऋतुपुत्राश्चवैपंचइतिसर्गः
सनातनः ॥ ३३ ॥ संवत्सरस्तुप्रथमोद्वितीयःपरिवत्सरः ॥ इद्वत्सरस्तृतीयस्तुचतुर्थस्त्वनुवत्सरः ॥ ३४ ॥ पंचमोवत्सरस्तेषा
मित्येवंपंचतेस्मृताः ॥ तेषुसंवत्सरोह्यग्निःसूर्यस्तुपरिवत्सरः ॥ ३५ ॥ सोमइद्वत्सरस्तेषांवायुश्चैवानुवत्सरः ॥ रुद्रस्तुवत्सरोज्ञेयः पंचैता[5]
युगदेवताः ॥ ३६ ॥ आर्तवाःपितरोज्ञेयायेजाताःऋतुसूनवः ॥ पितामहास्तुविज्ञेयाःपंचाब्दाब्रह्मणःसुताः ॥ ३७ ॥ सौम्याबर्हिषदश्चैवअ
ग्निष्वात्ताश्चयेत्रयः ॥ एतेवैपितरस्तेषांयेजीवात्पितृकानराः ॥ ३८ ॥ आदित्यश्चैवसोमश्चलोहितांगोबुधस्तथा ॥ बृहस्पतिश्चशुक्रश्चतथाहेलिसु
तश्चयः ॥ ३९ ॥ उपरागःशिखीचोभौनवैतेनुग्रहाःस्मृताः ॥ त्रैलोक्यस्यात्विमेनित्यंभावाभावनिवेदकाः ॥ ४० ॥ आदित्यश्चैवसोमश्चद्वावेतौ
मंडलग्रहौ ॥ राहुश्छायाग्रहस्तेषांशेषास्ताराग्रहाःस्मृताः ॥ ४१ ॥ नक्षत्राधिपतिःसोमोग्रहराजोदिवाकरः ॥ पच्यतेचाग्निरादित्यउदक
श्चंद्रमाःस्मृतः ॥ ४२ ॥ आदित्यःपच्यतेब्रह्माविष्णुस्तेषांतुचंद्रमाः ॥ महेश्वरस्तुविज्ञेयस्तृतीयस्तारकग्रहः ॥ ४३ ॥ कश्यपस्य
सुतःसूर्यःसोमोधर्मसुतःस्मृतः ॥ देवासुरगुरूद्वौतुनामतस्तौमहाग्रहौ ॥ ४४ ॥ प्रजापतिसुतावेतावुभौशुक्रबृहस्पती ॥ बुधः

१ एकवचनमार्षम् । २ सुशांतिश्च सुकीर्तिश्च–इ०पा० । ३ यातुधानो–इ०पा० । ४ अंतरिक्षवहाः–इ०पा० । ५ पंचाब्दा ये युगात्मकाः–इ०पा० ।

सोमात्मजःश्रीमाञ्छनीरविसुतःस्मृतः ॥ ४५ ॥ सिंहिकायाःसुतोराहुःकेतुस्तुब्रह्मणःसुतः ॥ सर्वेषांचग्रहाणांहिअधस्ताच्चरतेरविः ॥ ४६॥
ततोदूरंस्मृतंतावाद्विधोर्नक्षत्रमण्डलम् ॥ नक्षत्रेभ्यःकुजबुधौश्वेताह्वस्तदनंतरम् ॥ ४७ ॥ तस्मान्माहेश्वरश्चोर्द्ध्वंधिषणस्तदनन्तरम् ॥ कृष्ण
श्चोर्ध्वंततस्तस्मादथचित्रशिखंडिजः ॥ ४८ ॥ एषामेवक्रमःप्रोक्तश्चासक्तास्त्रिदिवंधुवे ॥ आदित्यनिलयोराहुःकदाचित्सोममार्गगः॥४९॥
सूर्यमंडलसंस्थस्तुशिखीसर्पतिसर्वदा ॥ नवयोजनसाहस्रोविस्तारोभार्गवस्यतु ॥ ५० ॥ द्विगुणःसूर्यविस्ताराद्विस्तारःशनिनःस्मृतः ॥
त्रिगुणंमंडलंज्ञेयंनाक्षत्रंविस्तराद्विधोः ॥ ५१ ॥ नक्षत्रमंडलात्तत्रपादहीनोबृहस्पतिः ॥ बृहस्पतेःपादहीनःशुक्रोंगारकएवहि ॥ ५२ ॥
विस्तारोमंडलानांतुपादहीनस्तयोर्बुधः॥बुधतुल्यानऋक्षाणिसर्वऋक्षाणियानितु ॥५३॥ योजनान्यर्धमात्राणितेभ्योह्रस्वंनविद्यते ॥ राहुः
सूर्यप्रमाणश्चकदाचित्सोमसंनिभः ॥ ५४ ॥ नक्षत्रग्रहमानस्तुकेतुस्त्वनियतःस्मृतः॥ अविज्ञातगतिश्चैवचंचलत्वान्नराधिप ॥ ५५ ॥ तथा
लक्षितरूपस्तुबहुरूपधरोहिसः ॥ भूर्लोकःपृथिवीभोक्ताअंतरिक्षंभुवःस्मृतम् ॥ ५६ ॥ स्वर्लोकस्त्रिदिवंज्ञेयंशेषादूर्ध्वंयथाक्रमम् ॥ भूपति
स्तुसदात्वग्निस्तेनासौभूपतिःस्मृतः ॥ ५७ ॥ वायुर्नभस्पतिस्तेनतथासूर्योदिवस्पतिः ॥ गंधर्वाप्सरसश्चैवगुह्यकाःसिद्धराक्षसाः ॥ ५८ ॥
भूर्लोकवासिनःसर्वेअंतरिक्षचराञ्छृणु ॥ मरुतःसतमस्कंधेरुद्रास्तत्रैवचाश्विनौ ॥ ५९ ॥ आदित्यावसवःसर्वेतथैवचगणांगणाः ॥ चतुर्थे
तुमहर्लोकेवसंतेकल्पवासिनः ॥ ६० ॥ प्रजानांपतिभिःसर्वैःसहिताःकुरुनंदन ॥ जनलोकेपंचमेचवसंतेभूमिदाःसदा ॥ ६१ ॥ ऋतुःसनत्कु
माराद्यावैराजश्चतथाश्रयाः ॥ सत्यस्तुसप्तमेलोकेह्यपुनर्मार्गगामिनाम् ॥ ६२ ॥ ब्रह्मलोकःसमाख्यातोह्यप्रतीघातलक्षणः ॥ इतिहासविदो
यत्रक्रीडंतेकुलनंदन ॥ ६३ ॥ शृण्वंतिचपुराणानियेसदाभीमनंदन ॥ महीतलात्सहस्राणांशतादूर्ध्वंदिवाकरः ॥ ६४ ॥ शतयोजनकोट्य
स्तुभूमेरूर्ध्वंध्रुवःस्थितः ॥ ततोविंशतिलक्षस्तुत्रैलोक्योत्सेधउच्यते ॥ ६५ ॥ द्विगुणैस्तुसहस्रैस्तुयोजनानांशतेषुच ॥ लोकांतरमथो
चैवंध्रुवादूर्ध्वंविधीयते ॥ ६६ ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ भूताविद्याधराश्चैवअष्टौतेदेवयोनयः ॥ ६७ ॥ यस्मिन्व्योम्नित्विमेलो

१ सोमभंडल–इ०पा० । २ ब्राह्मणस्यतु–इ०पा० । ३ द्विगुणम्–इ०पा० । ४ तस्माद्ग्रहणमात्रं तु–इ०पा० । ५ सप्तयोजन–इ०पा० ।

काःसप्तवैसंप्रतिष्ठिताः ॥ मरुतःपितरोह्येतेतस्मिन्नेवाग्नयोग्रहाः ॥ ६८ ॥ यास्त्वप्येताःसमाख्यातामयाष्टौदेवयोनयः ॥ मूर्ताश्चामूर्तयश्चैवसर्वास्ताव्योम्निसंस्थिताः ॥ ६९ ॥ एवंविधमिदंव्योमसर्वव्योममयंस्मृतम् ॥ सर्वदेवमयंचैवसर्वग्रहमयंतथा ॥ ७० ॥ तस्माद्योऽर्चयेद्व्योमतेनसर्वेऽर्चिताःसुराः ॥ तस्मात्सर्वप्रयत्नेनशुभार्थीव्योममर्चयेत् ॥ ७१ ॥ यस्त्वर्चतेसदाव्योमभक्त्याश्रद्धासमन्वितः ॥ वृषध्वजसदो राजन्सगच्छेन्नात्रसंशयः ॥ ७२ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेव्योममाहात्म्येभुवनकोशवर्णनंनामपंचविंशत्युत्तरशततमोऽध्यायः ॥ १२५ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ आकाशंखंदिशोव्योमअंतरिक्षंनभोऽम्बरम् ॥ पुष्करंगगनंमेरुर्विपुलंचबिलंतथा ॥ १ ॥ आपोछिद्रंतथाशून्यंतमोवैरोदसीतथा ॥ नामान्येनानितेव्योम्नःकीर्तितानिमहीपते ॥ २ ॥ लवणक्षीरदध्यम्लघृतमाध्विक्षवस्तथा ॥ स्वादूदकश्चसप्तैतेसमुद्राःपरिकीर्तिताः ॥ ३ ॥ हिमवान्हेमकूटश्चनिषधोनीलएवच ॥ श्वेतश्चशृंगवांश्चैवषडेतेवर्षपर्वताः ॥ ४ ॥ मध्यसंस्थस्तथैतेषांमहाराजतपर्वतः ॥ माहेन्द्रीचाप्यथाग्नेयीयाम्याचनैर्ऋतीतथा ॥ ५ ॥ वारुणीचाथवायव्यासौम्यैशानीतथैवच ॥ एताःपुर्यस्तुदेवानांतथोपरिसमाश्रिताः ॥ ६ ॥ पृथिव्यांतुस्थितोवीरलोकालोकस्तुपर्वतः ॥ ततश्चांडकपालंतुतस्मात्तत्परतस्तुयः ॥ ७ ॥ ततोऽग्निर्वायुराकाशंततोभूतादिरुच्यते ॥ ततोमहानहंकारःप्रकृतिःपुरुषस्ततः ॥ ८ ॥ पुरुषादीश्वरोज्ञेयईश्वरेणावृतंजगत् ॥ ईश्वरोभगवान्भानुस्तेनेदंपूरितंजगत् ॥ ९ ॥ सहस्रांशुर्महातेजाश्चतुर्बाहुर्महाबलः ॥ ऊर्ध्वमप्यथलोकास्तुप्राङ्मयायेप्रकीर्तिताः ॥ १० ॥ भूयस्तान्संप्रवक्ष्याम्यंडावरणकारकान् ॥ भूर्लोकस्तुभुवर्लोकस्तृतीयःपरिकीर्तितः ॥ ११ ॥ महर्जनस्तपःसत्यःसप्तलोकाःप्रकीर्तिताः ॥ ततस्त्वंडकपालंतुतस्मात्परतस्तपः[1] ॥ १२ ॥ ततोऽग्निर्वायुराकाशंततोभूतादिरुच्यते ॥ ततोमहान्प्रधानश्चप्रकृतिःपुरुषस्ततः ॥ १३ ॥ पुरुषादीश्वरोज्ञेयईश्वरेणावृतंजगत् ॥ भूमेरधस्तात्सप्तैवलोकानभिमताञ्छृणु ॥ १४ ॥ तलःसुतलस्पातालःतलातलस्तथातलः ॥ वितलश्चकुरुश्रेष्ठसप्तमश्चरसातलः ॥ १५ ॥ ततोऽग्निर्वायुराकाशंततोभूतादिरुच्यते ॥ ततोमहान्प्रधानश्चप्रकृतिःपुरुषस्ततः ॥ १६ ॥ पुरुषादीश्वरो

१ अंडकटाहं तु–इ०पा०।

ज्ञेयईश्वरेणावृतंजगत् ॥ एवंमेरोःप्रमाणंतुसर्वमेतत्प्रकीर्तितम् ॥ १७ ॥ चतुरस्रश्चतुःशृंगःसमेरुःकांचनःशुभः ॥ पृथिव्यांसंस्थितोमध्येसि
द्धगंधर्वसेवितः ॥ १८ ॥ चतुर्भिःकांचनैःशृंगैर्दिव्यैर्दिवमिवोल्लिखन् ॥ योजनानांसहस्राणिचतुराशीतिरुच्छ्रितः ॥ १९ ॥ प्रविष्टःषोडशा
धस्तादष्टाविंशतिविस्तृतः ॥ विस्तारास्त्रिगुणश्चास्यपरिणाहस्ततःस्मृतः ॥ २० ॥ तस्यसौमनसंनामशृंगमेकंतुकांचनम् ॥ द्वितीयंपद्मरागा
भंज्योतिष्कंनामनामतः ॥ २१ ॥ तृतीयंनामतश्चित्रंसर्वदेवमयंशुभम् ॥ चतुर्थंराजतंशुक्लंचंद्रौजसमितिस्मृतम् ॥ २२ ॥ यत्तुसौमनसं
नामशृंगंगांगेयमुच्यते ॥ तदेवचोदयंनाम्नायत्रोद्यन्दृश्यतेरविः ॥ २३ ॥ उत्तरेणपरिक्रम्यजंबूद्वीपंदिवाकरः ॥ दृश्योभवतिभूतानांशिखरं
चसमास्थितः ॥२४॥ कांचनस्यचशैलस्यतेजसार्कस्यचाहृते ॥ उभेसंध्येप्रकाशेतेआताम्रेपूर्वपश्चिमे ॥२५॥ शृंगेसौमनसेसूर्यउत्तिष्ठत्युत्त
रायणे ॥ ज्योतिषेदक्षिणेचापिविषुवेमध्यतस्तयोः ॥२६॥ ईशेंद्रोद्रिश्चईशान्यांतथाग्निःपूर्वदक्षिणे ॥ नैर्ऋतेऽपिततोज्ञेयावायव्येमरुतस्तथा
॥ २७ ॥ मध्येतुकंजजःसाक्षाद्ब्रह्माज्योतींषिचैवहि ॥ आदित्यस्तेनरूपेणतस्मिन्व्योम्निप्रतिष्ठितः ॥ २८ ॥ इदंदेवमयंव्योमतथालोकमयं
स्मृतम् ॥ पूर्वकोणस्थितेशृंगेस्थितःशुक्रोमहीपते ॥२९॥ हेलिजश्चापरेज्ञेयोधननाथस्तथापरे ॥ सोमश्चापिचतुर्थेतुस्थितःशृंगेजनाधिप ॥
॥ ३० ॥ मध्येकेशास्थितोराजन्हुंकारश्चापिनाकिनः ॥ शृंगेपूर्वोत्तरेराजन्स्थितोदेवोविधुक्षये ॥ ३१ ॥ ततःस्थितोमहादेवोगोपतिर्लोकपू
जितः ॥पूर्वाग्नेयीस्थितेशृंगेस्थितोवैशांडिलःसुतः ॥३२॥ततःस्थितोमहातेजाःकीनाशोहेलिनंदनः ॥स्थितोवैनैर्ऋतेशृंगेविरूपाक्षोमहाबलः ॥
॥३३॥ तस्मादनंतरोदेवःस्थितोवैयादसांपतिः ॥ततःस्थितोमहातेजावीरमित्रोमहाबलः ॥३४॥वायव्यंशृंगमाश्रित्यसर्वदेवनमस्कृतम् ॥ततः
स्थितोदशबलोनरमारुह्यभारत ॥ ३५ ॥ ब्रह्मामध्येस्थितोदेवोअनंतश्चाधएवहि ॥ उपेंद्रशंकरौदेवौब्रह्मणोंतेसमास्थितौ ॥ ३६ ॥ एषमे
रुस्तथाव्योमएषधर्मश्चपठ्यते ॥ सर्वदेवमयश्चायंमेरुर्व्योमइतिस्मृतः ॥३७॥ तथावेदमयश्चापिपठ्यतेनात्रसंशयः ॥शृंगाणिचतुरोवेदाःपूर्व
शृंगादयोविदुः ॥३८॥इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेव्योममाहात्म्यवर्णनंनामषड्विंशत्युत्तरशततमोऽध्यायः ॥१२६॥छ॥

१ तस्मिन्सौमनसे शृंगे--इ०पा० । २ विधुक्षयः--इ०पा० ।

॥ ॥ शतानीकउवाच ॥ ॥ कथमाराधितःसूर्यःसांबेनामिततेजसा ॥ विमुक्तस्तुकथंरोगैर्ब्रूहिमेद्विजसत्तम ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥
साधुपृष्टोऽस्मिराजेंद्रशृणुसांबकथांपुरा ॥ विस्तराद्वच्मितेसर्वांकथांपापविमोहिनीम् ॥ २ ॥ पुरासंश्रुत्यमाहात्म्यंभास्करस्यसनारदात् ॥
विनयादुपसंगम्यपितरंवचनमब्रवीत् ॥ ३ ॥ कश्मलेनाभिभूतोऽस्मिमलेनव्याधिनाच्युत ॥ वैद्यैरोषधिभिश्चापिनशांतिममविद्यते ॥ ४ ॥
वनंगच्छामिभगवन्ननुज्ञांदातुमर्हसि ॥ शिवेनपुंडरीकाक्षध्यायस्वपुरुषोत्तम ॥ ५ ॥ अनुज्ञातःसकृष्णेनसिंधोरुत्तरकूलतः ॥ गत्वा
संतारयामासचंद्रभागांमहानदीम् ॥ ६ ॥ ततोमित्रवनंगत्वातीर्थंत्रैलोक्यविश्रुतम् ॥ उपवासपरःसांबःशुष्कोधमनिसंततः ॥ ७ ॥ आरा
धनार्थंसूर्यस्यगुह्यंस्तोत्रं[1]जजापह ॥ वेदैश्चतुर्भिःसमितंपुराणाश्रयबृंहितम् ॥ ८ ॥ यदेतन्मंडलंशुक्लंदिव्यंह्यजरमव्ययम् ॥ युक्तंमनोजवै
रश्वैर्हरीतैर्ब्रह्म[2]वादिभिः ॥ ९ ॥ [3]आदिरेषहिभूतानामादित्यइतिसंज्ञितः ॥ त्रैलोक्यचक्षुरेवात्रपरमात्माप्रजापतिः ॥ १० ॥ एषवैमंडले
ह्यस्मिन्पुरुषोदीप्यतेमहान् ॥ एषविष्णुरचिंत्यात्माब्रह्मावैषपितामहः ॥ ११ ॥ रुद्रोमहेंद्रोवरुणआकाशंपृथिवीजलम् ॥ वायुःशशांकः
पर्जन्योधनाध्यक्षोविभावसुः ॥ १२ ॥ यएषमंडलेह्यस्मिन्पुरुषोदीप्यतेमहान् ॥ एकःसाक्षान्महादेवोवृत्रमंडनिभःसदा ॥ १३ ॥ कालोह्ये
षमहाबाहुर्निबोधोत्पत्तिलक्षणः ॥ यएषमंडलेह्यस्मिंस्तेजोभिःपूरयन्महीम् ॥ १४ ॥ भ्रम्यतेह्यव्यवच्छिन्नोवातैर्योऽमृतलक्षणः ॥ नातःपर
तरंकिंचित्तेजसाविद्यतेक्वचित् ॥ १५ ॥ पुष्णातिसर्वभूतानिएषएवसुधामृतैः ॥ अंतस्थान्म्लेच्छजातीयांतिर्यग्योनिगतानपि ॥ १६ ॥
कारुण्यात्सर्वभूतानिपासित्वंचविभावसो ॥ श्वित्रकुष्ठ्यंधबधिरान्पंगूंश्चापितथाविभो ॥ १७ ॥ प्रपन्नवत्सलोदेवकुरुतेनीरुजोभवान् ॥ चक्र
मंडलमग्नांश्चनिर्धनाल्पायुषस्तथा ॥ १८ ॥ प्रत्यक्षदर्शीत्वंदेवसमुद्धरसिलीलया ॥ कामेशक्तिःस्तवैःस्तोतुमातोऽहंरोगपीडितः ॥ १९ ॥
स्तूयसेत्वंसदादेवैर्ब्रह्मविष्णुशिवादिभिः ॥ महेंद्रसिद्धगंधर्वैरप्सरोभिःसगुह्यकैः ॥२०॥ स्तुतिभिःकिंपवित्रैर्वातवदेवसमीरितैः ॥ यस्यतेऋग्य
जुःसाम्नांत्रितयंमंडलस्थितम् ॥ २१ ॥ ध्यानिनांत्वंपरंध्यानंमोक्षद्वारंचमोक्षिणाम् ॥ अनंततेजसाक्षोभ्योनचिंत्याव्यक्तनिष्कलः ॥ २२ ॥

१ मंत्रम्–इ०पा० । २ ब्राह्मणादिभिः–इ०पा० । ३ अनादिरेष भूतानामाद्योऽर्क इति संज्ञितः–इ०पा० ।

यदयंव्याहृतःकिंचित्स्तोत्रेस्मिञ्जगतःपतिः ॥ आर्तिंभक्तिंचविज्ञायतत्सर्वंज्ञातुमर्हसि ॥ २३ ॥ तमुवाचततःसूर्यःप्रीत्यैजांबवतीसुतम् ॥
प्रीतोऽस्मितपसावत्सब्रूहितन्मेयदिच्छसि ॥ २४ ॥ ॥ सांबउवाच ॥ ॥ यदिप्रसन्नोभगवानेषएववरोमम ॥ भक्तिर्भवतुमेऽत्यर्थंत्वयि
देवसनातन ॥ २५ ॥ ॥ श्रीसूर्यउवाच ॥ ॥ भूयस्तुष्टोऽस्मिभद्रंतेवरंवरयसुव्रत ॥ सद्वितीयंवरंवव्रेतदेववरदंविभुम् ॥ २६ ॥ मलः
शरीरसंस्थोमेत्वत्प्रसादात्प्रणश्यतु ॥ येनमेदेहमखिलंशुद्धंभवतिगोपते ॥ २७ ॥ ॥ सुमंतुरुवाच ॥ ॥ सतथास्त्वितितेनोक्तोभा
स्करेणमहात्मना ॥ तांमुमोचरुजंसांबोदेहात्त्वचमिवोरगः ॥ २८ ॥ ततोरूपेणदिव्येनरूपस्वीचाभवत्पुनः ॥ प्रणम्यशिरसादेवंपुरतो
ऽवस्थितोऽभवत् ॥ २९ ॥ ॥ श्रीसूर्यउवाच ॥ ॥ भूयश्चशृणुमेसांबतुष्टोहंयद्ब्रवीमिते ॥ अद्यप्रभृतित्वंनाम्नाममस्थानानिसुव्रत॥३०॥
क्षितौयेस्थापयिष्यंतितेषांलोकाःसनातनाः ॥ स्थापयस्वैवमामस्मिंश्चंद्रभागातटेशुभे ॥ ३१ ॥ तवनाम्नाचसांबेदंपराख्यातिंगमिष्य
ति ॥ कीर्तिस्तवाक्षयालोकेख्यातिंयास्यातिसुव्रत ॥ ३२ ॥ भूयश्चतेप्रदास्यामिप्रत्यहंस्वप्नदर्शनम् ॥ ॥ सुमंतुरुवाच ॥ ॥ एवंद
त्त्वावरंतस्मैवृष्णिसिंहायचापरम् ॥ ३३ ॥ प्रत्यक्षदर्शनंदत्वातत्रैवांतरधीयत ॥ यइदंपठतेस्तोत्रंत्रिकालंभक्तिमान्नरः ॥ ३४ ॥ त्रिः
सप्तशतमावर्त्यहोमंवासप्तरात्रिकम् ॥ राज्यकामोलभेद्राज्यंधनकामोलभेद्धनम् ॥ ३५ ॥ रोगार्तोमुच्यतेरोगाद्यथासांबस्तथैवसः ॥ सूर्य
लोकंव्रजेच्चापिभक्त्यापूज्यदिवाकरम् ॥ ३६ ॥ रमतेचतथातस्मिन्देवैश्चपरिवारितः ॥ ३७ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिस
प्तमीकल्पेसांबोपाख्यानेसूर्यप्रसादवर्णनंनामसप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७ ॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ अस्तावीच्चततःसांबः
कृशोधमनिसंततः ॥ राजन्नामसहस्रेणसहस्रांशुंदिवाकरम् ॥ १ ॥ खिद्यमानंततोदृष्ट्वासूर्यःकृष्णात्मजंतदा ॥ स्वप्नेस्यदर्शनंदृष्ट्वापुनर्व
चनमब्रवीत् ॥ २ ॥ ॥ श्रीसूर्यउवाच ॥ ॥ सांबसांबमहाबाहोशृणुजांबवतीसुत ॥ अलंनामसहस्रेणपठचेमंशुभंस्तवम् ॥ ३ ॥ या
निगुह्यानिनामानिपवित्राणिशुभानिच ॥ तानितेकीर्तयिष्यामिप्रयत्नादवधारय ॥ ४ ॥ वैकर्तनोविवस्वांश्चमार्तंडोभास्करोरविः ॥ लोकप्र
काशकःश्रीमाँल्लोकचक्षुर्ग्रहेश्वरः॥५॥लोकसाक्षीत्रिलोकेशःकर्ताहर्तातमिस्रहा ॥ तपनस्तापनश्चैवशुचिःसप्ताश्ववाहनः ॥६॥ गभस्तिहस्तो

ब्रह्माचसर्वदेवनमस्कृतः ॥ एकविंशतिरित्येषस्तवइष्टस्सदामम ॥ ७ ॥ शरीरारोग्यदश्चैवधनवृद्धियशस्करः ॥ स्तवराजइतिख्यातस्त्रिषु लोकेषुविश्रुतः ॥८ ॥ यएतेनमहाबाहोद्वेसंध्येऽस्तमनोदये ॥ स्तौतिमांप्रणतोभूत्वासर्वपापैःप्रमुच्यते ॥ ९ ॥ मानसंवाचिकंवापिकायिकंय च्चदुष्कृतम् ॥ एकजाप्येनतत्सर्वंप्रणश्यतिममाग्रतः ॥ १० ॥ एषजप्यश्चहोमश्चसंध्योपासनमेवच ॥ बलिमंत्रोऽर्घमंत्रोथधूपमंत्रस्तथै वच ॥ ११ ॥ अन्नप्रदानेस्नानेचप्रणिपातेप्रदक्षिणे ॥ पूजितोऽयंमहामंत्रःसर्वपापहरःशुभः ॥ १२ ॥ एवमुक्त्वासभगवान्भास्करोजगतां पतिः॥आमंत्र्यकृष्णतनयंतत्रैवांतरधीयत ॥ १३ ॥ सांबोपिस्तवराजेनस्तुत्वासप्ताश्ववाहनम् ॥ प्रीतात्मानीरुजःश्रीमांस्तस्माद्रोगाद्विमु क्तवान् ॥ १४ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबस्तववर्णनंनामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥१२८॥ ॥ सुमंतु रुवाच ॥ ॥ अथलब्धवरःसांबोवरंप्राप्यपुरातनम् ॥ मन्यमानस्तदाश्चर्यंप्रहृष्टेनांतरात्मना ॥१॥ पूर्वाभ्यासेनतेनैवसार्धमन्यैस्तपस्विभिः ॥ स्नापनार्थंनातिदूरंचंद्रभागांनदींययौ ॥ २ ॥ कृत्वात्ममंडलाकारंश्रद्दधानोदिनेदिने ॥ सस्नौसंचिंतयामासकिंरूपंस्थापयाम्यहम् ॥ ३ ॥ सस्नातःसहसैवाथप्रणम्य[1]तुप्रभावतीम् ॥ ऊह्यमानांजलौघेनप्रतिमांसंमुखींरवेः ॥ ४ ॥ तांदृष्ट्वातस्यवीरस्यसमुत्पन्नमिदंयथा ॥ देवेनय त्तदाज्ञप्तंतद्दिनंनात्रसंशयः ॥ ५ ॥ सतामुत्तीर्यसलिलादानायित्वामहीपते ॥ तस्मिन्मित्रवनोद्देशेस्थापयामासतांतदा ॥ ६ ॥ निधायप्रति माँल्लोकेसांबस्तस्यमहात्मनः ॥ मित्रंमित्रवनेरम्येस्थापयित्वाविधानतः ॥ ७ ॥ ततस्तामेवपप्रच्छप्रणम्यप्रतिमांरवेः ॥ केनेयंनि र्मितानाथभवतोह्याकृतिःशुभा ॥ ८ ॥ प्रतिमातमुवाचाथशृणुसांबवदेस्वयम् ॥ निर्मितायेनचाप्येषामदीयापुरुषाकृतिः ॥ ९ ॥ ममातितेजसाविष्टंरूपमासीत्पुरातनम् ॥ असह्यंसर्वभूतानांततोऽस्म्यभ्यर्चितःसुरैः ॥ १० ॥ सह्यंभवतुतंरूपंसर्वप्राणभृता मिति ॥ ततोमयासमादिष्टोविश्वकर्मामहातपाः ॥ ११ ॥ तेजसांशातनंकुर्वन्रूपंनिर्वर्तयस्वमे ॥ ततस्तुमत्समादेशात्तेनैवानिपुणं तदा ॥ १२ ॥ शाकद्वीपेभ्रमिंकृत्वारूपंनिर्वर्तितंमम ॥ प्रीत्यातेषांप्रपंचोऽयंसमयाकारितःपुनः ॥ १३ ॥ तेनेयंकल्पवृक्षात्तुनिर्मिताविश्वक र्मणा ॥ कृत्वाहिमवतःपृष्ठेपुरासिद्धनिषेविते ॥ १४ ॥ त्वदर्थंचंद्रभागायांततस्तेनप्रतारिता ॥ भवतस्तारणार्थंहिततःस्थानमिदं

१ प्रापश्यत—इ०पा० ।

मम ॥ १५ ॥ रुचिरंसर्वदासांबसान्निध्यंमेभविष्यति ॥ सान्निध्यंममपूर्वाह्णेसुतीरेद्रक्ष्यतेजनः ॥ १६ ॥ कालप्रियेचमध्याह्नेपराह्णेचात्र
नित्यशः ॥ पूर्वाह्णेपूजयेद्ब्रह्मामध्याह्नेचक्रधृक्सदा ॥ १७ ॥ शंकरश्चापराह्णेतुमांपूजयतिसर्वदा ॥ इत्युक्तोसौभगवताभास्करेणसया
दवः ॥१८॥ हर्षमापमहाबाहोभास्करोंतर्दधेततः ॥ १९ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानंनामैकोनात्रिंशदु
त्तरशततमोऽध्यायः ॥१२९॥ शतानीकउवाच ॥ ॥ कथंसांबेनविप्रेंद्रप्रतिष्ठाकारितारवेः ॥ कस्यवावचनात्तेनप्रासादःकारितोरवेः ॥ १ ॥
सुमंतुरुवाच॥अत्रतेवच्मिराजेंद्रयथासांबेनधीमता ॥ प्रतिष्ठाकारिताभानोःप्रासादश्चमहीपते ॥ २ ॥ सलब्ध्वाप्रतिमांभानोश्चिंतयामासनार
दम् ॥ सचापिचिंतितश्चागाद्यत्रजांबवतीसुतः ॥ ३ ॥ तमागतमभिप्रेक्ष्यनारदमृषिसत्तमम् ॥ संपूज्यविधिवत्सांबोनारदंवाक्यमब्रवीत्॥४॥
प्रासादंकारयेद्यस्तुभास्करस्यनरोद्विज ॥ किंफलंतस्यदेवर्षेप्रतिष्ठांयश्चकारयेत्॥५॥ ॥ नारदउवाच ॥ ॥ प्रासादंशोभनेदेशेयस्तुकारयते
रवेः ॥ सयातिनरशार्दूलसूर्यलोकंनसंशयः ॥ ६ ॥ सांबउवाच ॥ ॥ कथंकुर्यादायतनंकस्मिन्देशेद्विजोत्तम ॥ कीदृक्छस्तंचायतनंदे
वंदेवस्यवैद्विज ॥ ७ ॥ नारदउवाच ॥ ॥ यत्रप्रभूतंसलिलमागमेचविनाशने ॥ देवतायतनंकुर्याद्यशोधर्मविवृद्धये ॥ ८ ॥ इष्टापूर्तेनलभ्यं
तेलोकांस्तांश्चविभूषितान् ॥ देवानामालयंकार्यंद्वयंयत्रचदृश्यते ॥ ९ ॥ सलिलाद्यंचआरामःकृतेष्वायतनेषुच ॥ स्थानेष्वेतेषुसान्निध्यमु
पगच्छंतिदेवताः ॥ १० ॥ सरःसुनलिनीच्छन्नंनिरस्तरविरश्मिषु ॥ हंससंक्षिप्तकल्हारवीथीविमलवारिषु ॥ ११ ॥ हंसकारंडवक्रौंचचक्र
वाकविराविषु ॥ पर्यन्तविमलच्छायाविश्रांतजनचारिषु ॥ १२ ॥ क्रौंचकांचीविलापाश्चकलहंसकलस्वनाः ॥ नद्यस्तोयांशुकायत्रशफरी
कृतमेखलाः ॥ १३ ॥ फुल्लद्रुमोत्तमावासाःसंगमश्रोणिमंडलाः ॥ पुलिनाद्युन्नतोरस्कारसहासाश्चनिम्नगाः ॥ १४ ॥ वनोपांतनदीशैलसं
स्कारोपान्तभूमिषु ॥ रमतेदेवतानित्यंपुरेषूद्यानवस्तुषु ॥ १५ ॥ भूमयोब्राह्मणादीनांयाःप्रोक्तावास्तुकर्मणि ॥ ताएवतेषांशस्यंतेदे
वतायतनेष्वपि ॥ १६ ॥ चतुःषष्टिपदंकुर्याद्देवतायतनंसदा ॥ द्वारंचमध्यमंतस्मिन्समादिक्संप्रशस्यते ॥ १७ ॥ योविस्तारोभवेत्तस्याद्वि



१ कस्मिन्देशेद्विजोत्तम–इ०पा० । २ लोकांस्तांस्तान्स्वभक्तितः–इ०पा० ।

गुणातत्समुन्नतिः ॥ उच्छ्रायस्तुतृतीयोथतेनतुल्याकटिर्भवेत् ॥ १८ ॥ विस्ताराधंभवेद्गर्भोभित्तयोन्याःसमंततः ॥ गर्भपादोनविस्तीर्णंद्वारंद्विगुणमुच्छ्रितम् ॥ १९ ॥ उच्छ्रयात्पादविस्तीर्णाशाखातद्वदुदुंबरी ॥ विस्तरात्पादप्रतिमाद्वाहुल्यंशेषयोःस्मृतम् ॥ २० ॥ नृपंचसप्तनवभिःशाखाभिस्तत्प्रशस्यते ॥ अथशाखाचतुर्भागेप्रतिहारौनिवेशयेत् ॥ २१ ॥ शैलमंगल्यविहगःश्रीवृक्षःस्वस्तिकैर्घटैः ॥ मानाष्टमेनभागेनप्रतिमास्यात्सपिंडिका ॥ २२ ॥ द्वौभागौप्रतिमातत्रतृतीयोभागःपिंडिका ॥ पूर्वंमेरुर्महाबाहोकैलासश्चतथापरे ॥ २३ ॥ भवंतिचापरेवीरविमानच्छदनंतथा ॥ समुद्रपद्मगरुडनंदिवर्द्धनकुञ्जराः ॥ २४ ॥ गृहराजोवृषोहंसःसर्वतोभद्रकोघटः ॥ सिंहोवृषश्चतुष्कोणःषोडशाष्टाश्रयस्तथा ॥ २५ ॥ इत्येतेविंशतिःप्रोक्ताःप्रासादायदुनंदन ॥ यथोक्तानुक्रमेणैवलक्षणानिवदामिते ॥ २६ ॥ नवत्रिंशदुच्छ्रितमेरुर्द्वादशभौमोविविधकुहरश्च॥द्वारैर्युतश्चतुर्भिर्द्वात्रिंशद्धस्तविस्तीर्णः॥२७॥त्रिंशद्धस्तायामोदशभौमोमंदरःसप्त ॥ शिखरयुतःकैलासोऽपिशिखरवानष्टाविंशोष्टभौमश्च ॥ २८ ॥ जालगवाक्षैर्युक्तोविमानसंज्ञस्त्रिसप्तकायामः ॥ नंदनइतिवैभौमोद्वात्रिंशत्षोडशांगयुतः ॥ २९ ॥ वृत्तःसमुद्रनामापद्माकृतिरथंचाष्टौ॥शृंगेनैकेनभवेदेकेनचभूमिकातस्य ॥ ३० ॥ गरुडाकृतिश्चगरुडोनंदीवैषष्टिविस्तीर्णः ॥ कायश्चसप्तभौमोविभूषितोऽगैश्चसप्तविंशतिभिः ॥ ३१ ॥ कुंजरइतिगजपृष्ठःषोडशहस्तोच्छ्रितोमध्ये ॥ गृहराजःषोडशकस्त्रिचक्रशालाभवेद्वलभी ॥ ३२ ॥ वृषएवभूमिशृंगोद्वादशहस्तःसमुन्नतोवृत्तः ॥ हंसोहंसाकारोघटोऽष्टसहस्रकलशरूपः ॥ ३३ ॥ द्वारैर्युतश्चतुर्भिर्बहुशिखरोभवतिसर्वतोभद्रः ॥ बहुरुचिरचन्द्रशालःषड्विंशद्भागभूमिश्च ॥ ३४ ॥ सिंहःसिंहाकारोद्वादशकोणोऽष्टहस्तश्च ॥३५॥ सहस्रत्रितयंचैवकथितंविश्वकर्मणा ॥ प्राहुःस्थापयतश्चात्रमतमेकंविपश्चितः ॥ ३६ ॥ कपोतपालिनियुक्तमतोगच्छतितुल्यताम् ॥ ॥ सांबउवाच ॥ ॥ यएतेकथिताविप्रप्रासादाविंशतिस्त्वया ॥ ३७ ॥ तेषांसूर्यस्यकःकार्यःप्रासादोभास्करस्यतु ॥ स्थानानियानिचोक्तानिप्रासादस्याद्विजोत्तम ॥ ३८ ॥ तेषांत्वयोक्तंहिपुरंव्ययवद्भिर्नरैर्युतम् ॥ तस्मिन्प्रदेशेवैकार्यंभानोर्मंदिरमुत्तमम् ॥ ३९ ॥ दिशांभागेचकतमेब्रूहिशेषंद्वि

१ मिथुनैर्द्वारमारब्धे भागेन स्यात्सुपिंडिका–इ०पा० । २ निबोध मे–इ०पा० । ३ सिंहाक्रान्तः–इ०पा० ।

जोत्तम ॥ ॥ नारदउवाच ॥ ॥ पुरमध्यंसमाश्रित्यकुर्यादायतनंरवेः ॥ ४० ॥ दिशांभागेऽथवापूर्वेपूर्वद्वारसमीपतः ॥ भूमिंपरीक्ष्यपूर्वंतु
कुर्यादायतनंततः ॥ ४१ ॥ इष्टगंधरसोपेतानिम्नाभूमिःप्रशस्यते ॥ शर्करातुषकेशास्थिक्षारांगारविवर्जिता ॥ ४२॥ मेघदुंदुभिनिर्घोषासर्व
बीजप्ररोहिणी ॥ शुक्लारक्तातथापीताकृष्णाचकथिताक्षितिः ॥ ४३ ॥ द्विजराजन्यवैश्यानांशूद्राणांचयथाक्रमम् ॥ परीक्षितायांतस्यांतुम
ध्येतस्याःप्रमाणतः ॥ ४४ ॥ उपलिप्यचतुर्हस्तंचतुरस्रंसमंततः ॥ हस्तमात्रमधःकृत्वामध्येतस्यादशांगुलम् ॥ ४५ ॥ गर्तमुत्कीर्यतेनैव
पांसुनाप्रतिपूरयेत् ॥ समेसमगुणाज्ञेयाहीनेहीनगुणाभवेत् ॥ ४६ ॥ वर्धमानेतुवैपांसौभवेद्वृद्धिकरीक्षितिः ॥ नित्यंसंमुखमर्कस्यकदाचि
त्पश्चिमामुखम् ॥४७॥ स्थापनीयंगृहंसम्यक्प्राङ्मुखस्थानकल्पनात्॥भवनाद्दक्षिणेपार्श्वेरवेःस्नानगृहंभवेत् ॥४८॥ अग्निहोत्रगृहंकार्यंरवेरु
त्तरतःशुभम् ॥ उदङ्मुखंभवेच्छंभोर्मातृणांगृहमेवच ॥ ४९ ॥ ब्रह्मापश्चिमतःस्थाप्योविष्णुरुत्तरतस्तथा ॥ निंबस्तुदक्षिणेपार्श्वेवामेराज्ञी
प्रकीर्तिता ॥५०॥ पिंगलोदक्षिणेभानोर्वामतोदंडनायकः ॥ श्रीमहाश्वेतयोःस्थानंपुरतस्त्वंशुमालिनः ॥ ५१ ॥ ततःस्थाप्याश्विनोःस्थानं
पूर्वेदेवगृहाद्बहिः ॥ द्वितीयायांतुकक्षायांराज्ञास्रोषौव्यवस्थितौ ॥ ५२ ॥ तृतीयायांतुकक्षायांस्थितौकल्माषपक्षिणौ ॥ जंडकामचरौस्था
प्यौदक्षिणांदिशमाश्रितौ ॥ ५३ ॥ उदीच्यांस्थापनीयस्तुकुबेरोलोकपूजितः ॥ उत्तरेणततस्तस्यरेवंतःसविनायकः ॥ ५४ ॥ यत्रवाविद्य
तेस्थानंदिक्षुसर्वागृहादयः ॥ द्वेमंडलेऽर्घदानार्थंकार्येसव्यापसव्यतः॥५५॥दद्यादुदयवेलायामर्घंसूर्यायदक्षिणे ॥ उत्तरेमंडलेदद्यादर्घ्यमस्त
मनेरवेः ॥ ५६ ॥ चक्राकृतांतथान्यस्मिन्देवस्यप्रतिमांरवेः ॥ स्थापयेद्विधिवद्वीरचतुर्भिःकलशैःशुभैः ॥५७॥ नानातूर्यनिनादैश्चशंखशब्दै
श्चपुष्कलैः ॥ तृतीयेमंडलेह्येवंपूजनीयोदिवाकरः ॥ ५८ ॥ चतुरस्रंचतुःशृंगंव्योमदेवगृहाग्रतः ॥ प्रतिमायास्तुसूत्रेणकार्यंमध्येऽस्यमंडलम्
॥ ५९ ॥ दिंडीस्थाप्यःपुरस्तस्मादादित्याभिमुखःस्थितः ॥ यदेतत्कथितंव्योमसर्वदेवमयंमया ॥ ६० ॥ मध्याह्नेतस्यदातव्यमर्घ्यम

१ महत्–इ०पा० । २ त्रिधा–इ०पा० । ३ हस्तमात्रम्–इ०पा० । ४ परिपूरयेत्–इ०पा० । ५ तथा–इ०पा० । ६ निंबं श्रीपर्णवृक्षश्च वामेरा ज्ञी प्रवर्तिता–इ०पा० । ७ पार्श्वे–इ०पा० । ८ जानुकामाचरौ–इ०पा० । ९ सह–इ०पा० । १० गीतशब्दैः–इ०पा० । ११ अत्र–इ०पा० ।

त्रयदूत्तम ॥ अथवामंडलंचान्यत्तृतीयंचक्र[1]संमितम् ॥६१॥ स्थापयित्वातुदेवेशंदातव्योऽर्घःसुपण्डितैः ॥देवस्यपुरतःकार्यंव्योमस्थानंसमी
पतः ॥६२॥ पुस्तकवाचनस्थानमथवायत्ररोचते ॥ एषस्थानविधिःप्रोक्तोदेवतानांयथाक्रमम् ॥ ६३ ॥ गृहराज्ञोथरुद्रस्तुद्वावेतौभास्कर
प्रियौ ॥६४॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेप्रासादलक्षणवर्णनंनामत्रिंशदुत्तरशततमोऽध्यायः॥१३०॥छ॥
नारदउवाच ॥ ॥ अथतेसंप्रवक्ष्यामिप्रथिमाविधिविस्तरम् ॥ सर्वेषामेवदेवानामादित्यस्यविशेषतः ॥ १ ॥ अर्चा[2]सप्तविधाप्रोक्ताभक्तानां
शुद्धवृद्धये ॥ कांचनीराजतीताम्रीपार्थिवीशैलजास्मृता॥२॥वार्क्षीचालेख्यकाचेतिमूर्तिस्थानानिसप्तवै ॥ वार्क्षीविधानंतेवीरवर्तयिष्याम्यशे
षतः ॥ ३ ॥ कर्तुरनुकूलेदिवसेसंवत्सरविशोधिते ॥ शुभनिमित्तेमंगलशकुनैःप्रस्थानकैश्ववनंसंप्रविशेत् ॥ ४ ॥ क्षीरिणोवर्जिताःसर्वेदुर्बला
स्तेस्वभावतः ॥ चतुष्पथेषुनग्राह्यायेचपुत्र[3]कवृक्षकाः॥५॥देवतायतनस्थायेतथावल्मीकसंभवाः ॥ उत्कीर्णदेवतायेषुचैत्यवृक्षाश्चयेस्मृताः
॥ ६ ॥ श्मशानभूमिजायेचपक्षिणांनिलयाश्चये ॥ सकोटराश्चयेवृक्षाःशुष्काग्रायेचपादपाः ॥७॥ शस्त्रेणनिहतायेचकुंजराशास्तथाकृताः ॥
सामाद्याःसरुजोऽधश्चव्याधिनश्चतथैवच ॥ ८ ॥ अकालेपुष्पितायेचकालेतेचविवर्जिताः ॥ शीर्णपर्णाश्चतरवोरक्षोध्वांक्षनिषेविताः ॥ ९ ॥
एकशाखातिशाखाश्चत्रिशाखाश्चतथाधमाः ॥ मधुकोदेवदारुश्चवृक्षराजश्चचंदनः ॥ १० ॥ बिल्वश्चाम्रातकश्चैवखादिरोथांजनस्तथा ॥
निम्बःश्रीपर्णवृक्षश्चपनसःसरलोर्ज्जुनः ॥ ११ ॥ रक्तचंदनपर्यन्ताःश्रेष्ठाःस्युःप्रतिमाद्रुमाः ॥ वर्णानामानुपूर्व्येणद्वौद्वौवृक्षौप्रकीर्तितौ ॥१२॥
निंबाद्याःसर्ववर्णानांवृक्षाःसाधारणाःस्मृताः ॥ कथ्यमानाविशेषेणशृणुवीरतथापरान् ॥ १३ ॥ सुरदारुःशमीचैवमधूकश्चंदनस्तथा ॥
एतेवैतरवस्तातब्राह्मणानांशुभाःस्मृताः ॥ १४ ॥ क्षत्रस्यचतथारिष्टःखदिरस्तिंदुकस्तथा॥अश्वत्थश्चतथासांबद्रुमःकरकतःशुभः ॥ १५ ॥
वैश्यानांतद्वद्देवस्युःखादिरश्चंदनस्तथा ॥ पुण्याश्चतरवश्चैतेशुभदास्तुतथैवच ॥ १६ ॥ केसरःसर्जकश्चाम्रःशालवृक्षस्तथेतरः ॥
एतेवैतरवःपुण्याःशूद्राणांशुभदायकाः ॥ १७ ॥ लिंगंचप्रतिमांचैवमवस्थाप्ययथाविधि ॥ वृक्षंचाभिमतंगत्वापूजयेद्बलिपुष्पकैः ॥ १८ ॥

१ चक्रसंज्ञितम्-इ०पा०। २ प्रतिमा सप्तधा प्रोक्ता-इ०पा०। ३ पुत्रकवृक्षकाः-नवविरूढाः-बालवृक्षा इत्यर्थः।

शुचौदेशेविविक्तेचकेशांगारविवर्जिते ॥ प्रागुदक्सूचकेदेशेलोककष्टविवर्जिते ॥ १९ ॥ विस्तीर्णस्कंधविटपःपत्रवानृजुवृद्धिगः ॥ आतंक
हीनोऽविवशःसत्वक्पर्णःशुभस्तथा॥२०॥स्वेनैवपतितायेचहस्तिभिःपातितास्तथा ॥ शुष्काश्चवह्निदग्धाश्चपक्षिभिश्चापिवर्जिताः ॥ २१ ॥
तरवोवर्जनीयाश्चगृहीतव्याःशुभाद्रुमाः ॥ स्निग्धरूपाःसपर्णाश्चसपुष्पाःसफलास्तथा ॥ २२ ॥ तेषांतुग्रहणंचाष्टमासेषुकार्तिकादिषु ॥
कृत्वाशुभदिनेचैवसोपवासोधिवासयेत् ॥२३॥ समन्तादुपलिप्याथतस्याधस्ताद्वसुंधराम् ॥ गायत्र्यापरिपूतेनपरितःप्रोक्ष्यवारिणा ॥२४॥
शुक्ले¹चपरिधूतेचपरिधायचवाससी ॥ पूजयेद्गंधमाल्यैश्चसधूपबलिकर्मभिः ॥ २५ ॥ ततःकुशैःपरिस्तीर्णैर्हुत्वाग्निस्तस्यचांतिके ॥ देवदा
रुसमिद्भिश्चमंत्रेणानेनतत्ववित् ॥ २६ ॥ ॐभूर्भुवःसुवरितिततोवृक्षंचपूजयेत् ॥ ॐप्रजापतयेसत्यसदायनित्यंश्रेष्ठांतरात्मन्सचराचरा
त्मन् ॥ सान्निध्यमस्मिन्कुरुदेववृक्षेसूर्यावृतंमंडलमाविशेश्चनमः ॥ २७ ॥ ॥ नारदउवाच ॥ ॥ एवंसंपूजयित्वातुवाक्यैस्तंपरिसां
त्वयन् ॥ वृक्षलोकस्यशांत्यर्थंगच्छदेवालयंशुभम् ॥ २८ ॥ देवत्वंयास्यसेतत्रच्छेददाहविवर्जितः ॥ कालेधूपप्रदानेनसपुष्पैर्बलिकर्म
भिः ॥ २९ ॥ लोकास्त्वांपूजयिष्यंतिततोयास्यसिनिर्वृतिम् ॥ वृक्षमूलेकुठारंतुधूपमाल्यैःप्रपूज्यच ॥ ३० ॥ पूर्वतस्तुशिरःकृत्वास्था
पनीयःप्रयत्नतः ॥ परमान्नमोदकौदनपलपूपिकादिभिर्भक्ष्यैः ॥ ३१ ॥ मद्यैःकुसुमैर्धूपैर्गंधैश्चतरुंसमभ्यर्च्य ॥ सुरपितृपिशाचराक्षसभु
जंगसुरगणविनायकाद्यानाम् ॥ ३२ ॥ कृत्वापूजांरात्रौवृक्षंसंस्पृश्यचब्रूयात् ॥ अर्चासुदेवदेवत्वंदैवैश्चपरिकल्पितः ॥ ३३ ॥
नमस्तेवृक्षपूजेयंविधिवत्परिगृह्यताम् ॥ ३४ ॥ यानीहभूतानिवसंतितानिबलिंगृहीत्वाविधिवत्प्रयुक्तम् ॥ अन्यत्रवासंपरिकल्पयं
तुक्षमंतुतेचाद्यनमोऽस्तुतेभ्यः ॥ ३५ ॥ प्रभातायांतुशर्वर्यांपुनःसंपूज्यतंनगम् ॥ ब्राह्मणेभ्यस्ततोदत्वाभोजकेभ्यश्चदक्षिणाम् ॥
॥ ३६ ॥ छिंद्याद्वनस्पतींस्तज्ज्ञैस्तैःकृतस्वस्तिवाचनैः ॥ पूर्वस्यांदिशिपातोऽस्यईशान्यांचापियोभवेत् ॥ ३७ ॥ अथवाउत्तरस्यां
तुतथाछिंद्यात्तुनान्यथा ॥ पूर्वैशान्यामुदक्यांतुत्रिषुलोकेषुचोत्तमः ॥ नैर्ऋत्यांग्नेययाम्यासुदिक्षुपातश्चशोभने ॥ ३८ ॥ वायव्यांवारुणीयां

१ चापरिभुक्ते च–इ०पा० । २ तुंगं यथा तथा–इ०पा० ।

तुतस्यपातकमध्यमे ॥ यस्यबाह्यास्थिताशाखादिक्षुनष्टाचतसृषु ॥३९॥ वास्तुपूर्वंततःस्थित्वाततःपश्चादवास्थिते ॥ अविलग्नमशब्दंतुपत
नंतुप्रशस्यते ॥ ४० ॥ उत्पत्स्येद्विदलंयस्यद्रावंचमधुरंचतत् ॥ सर्पिस्तैलंक्षरेद्यस्यपादपंतंविवर्जयेत् ॥ ४१ ॥ शुभदोयदुशार्दूल
शृणुष्वकथयेशुचिः ॥ वृक्षंप्रभातेसलिलेसिक्तंपूर्वोत्तरस्यांदिशि ॥ ४२ ॥ संनिकृत्यमध्वाज्यदिग्धेनकुठारकेणप्रदक्षिणंशेषमाभिप्रहन्यात् ॥
॥ ४३ ॥ पूर्वोत्तरेप्युदक्यातोयदावृद्धिकरस्तदास्यात् ॥ ४४ ॥ आग्नेयकोणक्रमशोऽग्निदाहउग्रोग्ररोगासुधनक्षयश्च ॥ ४५ ॥ गरुडवर्णे
तुपाषाणःकपोतोगृहतोधिका ॥ क्षितवर्णेजलंज्ञेयमंगुष्ठाभंभवेत्कृमिः ॥ ४६ ॥ दोषैरेतैर्विनिर्मुक्तंमृदागोष्ठंसमुद्धरेत् ॥४७॥ इतिश्रीभवि
ष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेदारुपरीक्षावर्णनंनामैकत्रिंशदुत्तरशततमोऽध्यायः ॥१३१॥ नारदउवाच ॥ हंततेसर्वदेवानांप्रतिमालक्ष
णंपरम्॥वच्मितेयदुशार्दूलआदित्यस्यविशेषतः॥१॥एकहस्ताद्विहस्तावात्रिहस्तावाप्रमाणतः ॥ तथासर्वात्रिहस्ताचसवितुःप्रतिमाशुभा ॥
प्रासादाद्वारतोवापिप्रमाणंचप्रकल्पितम् ॥२॥ तद्वत्प्रमाणंकर्तव्यंसततंशुभमिच्छता ॥ एकहस्ताभवेत्सौम्याद्विहस्ताधनधान्यदा ॥ ३ ॥
त्रिहस्ताप्रतिमाभानोःसर्वकामप्रदास्मृता ॥ सार्धहस्ततृतीयातुसुभिक्षक्षेमकारिणी ॥ ४ ॥ अग्रेमध्येचमूलेचप्रतिमासर्वतःसमा ॥ गांधर्वी
सातुविज्ञेयाधनधान्यावहास्मृता ॥ ५ ॥ देवागारस्ययद्द्वारंतस्मादष्टांशमुद्यता ॥ त्रिभागैःपिंडिकाकार्याद्वौभागौप्रतिमाभवेत् ॥६॥ अंगु
लैश्चतथामूर्तिश्चतुरशीतिसंमितैः ॥ विस्तारायामतःकार्यंवदनंद्वादशांगुलम् ॥ ७ ॥ मुखंत्रिभागैश्चिबुकंललाटंनासिकातथा ॥ कर्णौना
सिकयातुल्यौपादौचानियतौतयोः ॥ ८ ॥ नयनंद्व्यंगुलेस्यात्तुत्रिभागातारकाभवेत् ॥ तृतीयतारकाभागात्कुर्याद्दृष्टिंविचक्षणः ॥ ९ ॥
ललाटमस्तकोत्सेधंकुर्यात्तत्सममेवच ॥ परिणाहस्तुशिरसोभवेद्द्वाविंशदंगुलः॥१०॥तुल्यानासिकयाग्रीवामुखेनहृदयांतरम् ॥ मुखमात्रा
भवेन्नाभिस्ततोमेढ्रमनन्तरम् ॥ मुखविस्तारणसुरोततोर्ध्वंतुकटिःस्मृता ॥ ११ ॥ बाहूप्रवाहतुल्यौतुऊरूजंघेचतत्समे ॥ गुल्फाधस्तात्तुपा
दःस्यादुच्छ्रितश्चतुरंगुलः ॥ १२ ॥ षडंगुलसुविस्तारस्तस्यांगुष्ठांगुलत्रयम् ॥ प्रदेशिनीचतत्तुल्याहीनाशेषानखानखम् ॥ १३ ॥ चतु
र्दशांगुलःपादआयामात्परिकीर्तितः ॥ एवंलक्षणसंयुक्ताअर्च्यापूज्याभवेत्सदा ॥ १४ ॥ असौहरेस्तथैवोरुललाटंचसनासिकम् ॥ नियते

नयनेगंडौमूर्तेःकुर्यात्समुन्नतेः॥ १५॥ विशालधवलावामपक्ष्मलायतलोचने ॥ सास्मिताननपद्मस्यचारुबिंबाधरस्तथा॥१६॥ रत्नप्रोद्भासि
मुकुटकटकांगदहारवान् ॥ अव्यंगपदमध्यादिसमायोगोऽपिशोभितः ॥ १७ ॥ सुप्रभोमंडलश्चारुर्वीचित्रमणिकुंडलः ॥ कराभ्यांकांचनीं
मालांप्रोद्वहन्ससरोरुहाम् ॥ १८ ॥ एवंलक्षणसंयुक्तांकारयेदीहितप्रदाम् ॥ प्रजाभ्यश्चसदाभानुःशिवारोग्याभयप्रदः ॥१९॥ अल्पांगायां
नृपभयंहीनांगायामकल्पता ॥ खातोदर्यांचक्षुपीडाकृशायांतुदारिद्रता ॥ २० ॥ सक्षतायांभयंशस्त्रात्स्फुटितामृत्युकारिणी ॥ दक्षिणा
वनतायांतुशश्वदायुःक्षयोभवेत् ॥ २१॥ उत्तरावनतायांतुवियोगोभवतिध्रुवम् ॥ नालोक्यानाप्यनालोक्यारक्ष्यामूर्तिःप्रशस्यते ॥ २२ ॥
तस्माद्भास्करभक्तेनलोकद्वयहितैषिणा ॥ तन्मूर्तेश्चादरःकार्यस्तदधीनास्तुसंपदः ॥ २३ ॥ शिरोरुगंडवदनैःसर्वांगावयवैस्तथा ॥ एवंल
क्षणसंपूर्णाप्रतिमाभवतेशुभा ॥ २४ ॥ नासाललाटजंघोरुदंडवक्षोभिरन्विता ॥ कुर्यादादित्यवेषंतुगूढपादोदरंतथा ॥ २५ ॥ कमलो
दरकांतिनिभःकंचुकगुप्तःप्रसन्नमुखः ॥रक्तोत्पलप्रभामंडलश्चकर्तुःशुभंकरोत्यर्कः॥२६॥कुंडलभूषितवदनःप्रलंबहारोऽपिगूहवृत्तः ॥ नृपाति
भयंव्यंगायांहीनांगायामकल्पनाकर्तुः ॥ २७ ॥ खातोदर्यांक्षुद्भयमर्थविनाशःकृशांगायाम् ॥ मरणंतुसक्षतायांशस्त्रनिपातेननिर्दिशेत्कर्तुः
॥ २८ ॥ वामोन्नतातुपत्नींदक्षिणावनताहिनस्त्यायुः ॥ अंधत्वमूर्द्धदृष्टिःकरोतिचिंतामधोमुखीदृष्टिः ॥२९॥ सर्वप्रतिमास्त्वेवंशुभाशुभं
भास्करेणोक्तम् ॥ ब्रह्माकमंडलुकरश्चतुर्मुखःपंकजस्थश्च ॥ ३० ॥ स्कंदःकुमाररूपःशक्तिधरोबर्हिकेतुश्च ॥ शुक्लश्चतुर्विषाणोद्विपोम
हेंद्रस्यवज्रपाणित्वम् ॥ ३१ ॥ तिर्यगूर्ध्वललाटसंस्थंतृतीयमपिलोचनंचिह्नम् ॥ ३२ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमी
कल्पेसांबोपाख्यानेश्रीसूर्यप्रतिमालक्षणवर्णनंनामद्वात्रिंशदुत्तरशततमोऽध्यायः ॥ १३२ ॥छ॥ ॥ ॥ नारदउवाच॥ ततोधिवासनंकुर्या
द्विधिदृष्टेनकर्मणा ॥ ऐशान्यांदिशिवैकुर्यादाधिवासनमंडपम् ॥ १ ॥ चतुस्तोरणसंपन्नंसर्वाभरणसंयुतम् ॥ दिशासुविदिशास्वेवपताका
भिस्तुभूषितम् ॥ २ ॥ आग्नेय्यांदिशिरक्ताःस्युःकृष्णाःस्युर्याम्यनैर्ऋते ॥ श्वेतादिश्यपरस्यांतुवायव्यामेवपांडुरा ॥ ३ ॥ चित्राचो
त्तरपार्श्वेतुपीतापूर्वोत्तरेतथा ॥ श्रियमायुर्जयंचैवबलंयशोयदूत्तम ॥ ४॥ ददातिसावीरकृतासंपदर्थैनसंशयः ॥ हितायसर्वलोकानांमृन्मयी

प्रतिमाभवेत् ॥ ५ ॥ सुभिक्षंक्षेमदानित्यंसर्वामणिमयीकृता ॥ गांगेयापुष्टिदास्याद्वैरौप्याकीर्तिप्रवर्तिनी॥६॥प्रजावृद्धिंताम्रमयीकुर्यान्नित्य मसंशयः ॥ भूमेर्लाभंतुविपुलंकुर्याद्दृश्ममयीसदा ॥ ७ ॥ प्रधानपुरुषंहंतिसंकुलोपहतासदा ॥ सर्वदेवमयस्यैवमर्चांकुर्यात्प्रयत्नतः ॥ ८ ॥ ॥ ॥ सांबउवाच ॥ ॥ सर्वदेवमयत्वंहिब्रूहिमेभास्करस्यतु ॥ सर्वदेवमयोह्येषकथंनारदकथ्यते ॥ ९ ॥ ॥ नारदउवाच ॥ ॥ साधुसांबमहाबाहोशृणुमेपरमंवचः ॥ बुधसोमौस्मृतौनेत्रेललाटेचेश्वरःस्थितः ॥ १० ॥ सुरज्येष्ठःशिरस्तस्यकपालेऽस्यबृहस्पतिः ॥ एकादशतथारुद्राःकंठमस्यसमाश्रिताः ॥ ११ ॥ नक्षत्राणिग्रहाश्चैवदशनेषुसमाश्रिताः ॥ धर्माधर्मौचदेवस्यओष्ठसंपुटकेस्थितौ ॥ १२ ॥ सर्वशास्त्रमयीदेवीजिह्वायांचसरस्वती ॥ दिशश्चविदिशश्चैवसर्वाःश्रोत्रेषुसंस्थिताः ॥ १३ ॥ ब्रह्मेन्द्रौतालुदेशेतुस्थितौदेवैश्चपूजितौ ॥ आदित्याद्वादशविभोर्भ्रुवोर्मध्येसमाश्रिताः ॥ १४ ॥ ऋषयोरोमकूपेषुसमुद्राजठरेस्थिताः ॥ यक्षकिन्नरगंधर्वाःपिशाचादानवास्तथा ॥ १५ ॥ राक्षसाश्चगणाःसर्वेहृदयेस्याःस्थितारवेः ॥ नद्योबाहुगताश्चैवनगाःकक्षांतरेस्थिताः ॥ १६ ॥ पृष्ठमध्येस्थितोमेरुःस्तनयोरंतरेकुजः ॥ तस्यपुत्रोधर्मराजःस्थितोवैनाभिमंडले ॥ १७ ॥ कटिदेशेपृथिव्याद्यालिंगेसृष्टिःसमाश्रिता ॥ जानुनीचाश्विनीदेवावूरूतस्याचलाःस्मृताः॥१८॥ सप्तपाताललोकास्तुनखमध्येसमाश्रिताः ॥ ससागरवनापृथ्वीपादमस्यप्रवर्तिता ॥ १९ ॥ देवःकालाग्निरुद्रोयोदन्तान्तेषुसमाश्रितः ॥ सर्वदेवमयोभानुःसर्वदेवात्मकस्तथा ॥ २० ॥ व्यंगेषुवायवश्चैवलोकालोकंचराचरम् ॥ व्याप्तंकर्मशरीरेणवायुनातस्यवैविभोः ॥ २१ ॥ सएषभगवानर्कोभूतानुग्रहणेस्थितः ॥ एतत्तेपरमंज्ञानमेतत्तेपरमंपदम् ॥ २२ ॥ तस्यस्थानविभागेनप्रतिमास्थापनंयथा॥तत्तेसर्वंप्रवक्ष्यामियथोक्तंब्रह्मणापुरा ॥ २३ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेप्रतिमाप्रतिष्ठाकल्पेविश्वरूपवर्णनंनामत्रयस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३३ ॥ छ ॥ नारदउवाच ॥ प्रतिपच्चद्वितीयाचचतुर्थीपंचमीतथा ॥ दशमीत्रयोदशीचैवपौर्णमासीचकीर्तिता ॥ १ ॥ सोमोबृहस्पतिश्चैवशुक्रश्चैवबुधस्तथा ॥ एतेसौम्याग्रहाःप्रोक्ताःप्रतिष्ठायज्ञकर्मणि ॥ २ ॥ तिस्रोत्तरासुरेवत्याअश्विनीरोहिणी

१ कण्ठमध्ये–इ०पा० ।

तथा ॥ हस्तःपुनर्वसुश्चापिधनिष्ठाश्रवणेनवा ॥३॥ भरण्यांचैवनक्षत्रेभानोःस्थापनमुत्तमम् ॥ शोधयित्वातुवैभूमिंतुषकेशविवर्जिताम् ॥४॥ वालुकांगारपाषाणास्थिविहीनांविशोध्यतु ॥ चतुर्हस्तसमायुक्तावेदीविस्तरतोरवेः ॥ ५ ॥ मंडपस्तुप्रमाणेनदशहस्तःसमंततः ॥ मंडलंवृक्षशाखाभिःकारयेद्विधिपूर्वकम् ॥ ६ ॥ नदीसंगमतीरोत्थांमृत्तिकांचसमानयेत् ॥ उपलिप्यततोभूमिंकारयेत्कुंडमुत्तमम् ॥ ७ ॥ चतुरस्रांश्रियायुक्तंपूर्वेकुंडंतुकारयेत् ॥ दक्षिणेचार्धचंद्रंस्याद्वारुण्यांदिशिवर्तुलम् ॥ ८ ॥ पद्माकारंतुवैकुर्यादुत्तरेचविचक्षणः ॥ तोरणानि ततःकुर्यात्पंचहस्तानिसुव्रत ॥ ९ ॥ न्यग्रोधोदुंबरश्चैवबिल्वपालाशमेवच ॥ अश्वत्थश्चशमीचैवचंदनश्चेतिकीर्तिताः ॥१०॥ शुक्लवस्त्रसमायुक्ताश्चित्रपट्टसमन्विताः ॥ जलमालान्विताःकुर्यात्तोरणानिविचक्षणः ॥११॥ अग्निमीळेतिमंत्रेणइज्याद्वैपूर्वतोरणम् ॥ इषेत्वोर्जेतिमंत्रेणइज्याद्दक्षिणतोरणम्॥१२॥अग्नआयाहीतिमंत्रेणपश्चिमंतुनिवेशयेत्॥शंनोदेवीतिमंत्रेणइज्यादुत्तरतोरणम् ॥१३॥ कलशांस्तुसमादायहेमगर्भसमन्वितान् ॥ श्वेतचन्दनपंकेनकण्ठस्वस्तिकभूषणान् ॥ १४ ॥ यवशालिशरावान्नवस्त्रालंकारविग्रहान् ॥ आजिघ्रेतिचमंत्रेणकलशांस्तुनिवेशयेत् ॥ १५ ॥ दुकूलैश्चित्रपट्टैश्चवेष्टयेत्स्तंभमालिकाम् ॥ ध्वजादर्शपताकाभिश्चामरैस्तुवितानकैः ॥ १६ ॥ शंखघंटानिनादैश्चगेयमंगलवाचनैः ॥ तूर्यभेरीनिनादैश्चवेदध्वनिसमन्वितैः ॥ १७ ॥ पुण्यैश्चजयशब्दैश्चकारयीतमहोत्सवम् ॥ पताकाभिर्विचित्राभिःपूजामाल्योपशोभितम् ॥ १८ ॥ विचित्रस्रग्वितानाढ्यंप्रकीर्णकुसुमांकुरम् ॥ तन्मध्येतुकुशास्तीर्णेदेवार्चांस्थापयेद्बुधः ॥ १९ ॥ पताकांपीतवर्णांतुपूर्वेणेंद्रायदापयेत् ॥ आग्नेय्यांरक्तवर्णाभांकृष्णवर्णांयमायच ॥ २० ॥ नीलांजनसमप्रख्यांनैर्ऋत्यांचप्रदापयेत् ॥ वारुण्यांसितवर्णांचकृष्णांवायव्यगोचरे ॥ २१ ॥ हरितांयक्षराजायऐशान्यांसर्ववर्णिकाम् ॥ श्वेतरक्तकचूर्णेनपद्ममालिखयेत्ततः ॥ २२ ॥ वेद्यावेदीतिमंत्रेणवेद्याआलभनंभवेत्॥पूर्वाग्रानुत्तराग्रांश्चकुशानास्तीर्ययत्नतः ॥ २३ ॥ योगेयोगेतिमंत्रेणकुशैश्चास्तरणंभवेत्॥शय्यातत्रैवकर्तव्यादिव्या



१ पुष्येण--इ०पा०। २ रवेः--इ०पा०। ३ भवेत्--इ०पा०। ४ वालुकां च--इ०पा०। ५ उत्तरेण--इ०पा०। ६ तान्सुमङ्गलम्--इ०पा०। ७ याम्यायां यमसंनिभाम्--इ०पा०।

स्तरणसंमिता ॥ २४ ॥ गड्डुकेद्वेविचित्रेतुतन्मध्येस्थापयेद्बुधः ॥ विचित्रदीपमालाभिर्भक्ष्यभोज्यान्नपानकैः ॥ २५ ॥ पूपकान्सुविचित्रा
न्वैमोदकांश्चप्रदापयेत् ॥ पायसंकृसरंचैवदध्योदनसमन्वितम् ॥ २६ ॥ दधिचन्द्रसमप्रख्यंशु[1]भवृत्तंचविन्यसेत् ॥ २७ ॥ इतिश्रीभविष्येम
हापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेसूर्यप्रतिष्ठायांमंडलविधिवर्णनंनामचतुस्त्रिंशदुत्तरशततमोऽध्यायः ॥१३४॥छ॥नारदउवाच॥
अतःपरंप्रवक्ष्यामिस्नानकर्मविधिंतव ॥ स्नापकस्तुमहाप्राज्ञोब्राह्मणोवेदपारगः ॥ १ ॥ अभिज्ञःसौरशास्त्राणामरुणोर्य[2]दुसत्तम ॥ भोज
कोभोजकैश्चान्यैर्ब्राह्मणैश्चतथावृतः ॥ २ ॥ दिशाभागेमंडलस्यईशान्येवैयथाक्रमम् ॥ हस्तमात्रप्रमाणंतुभद्रपीठंतुविन्यसेत् ॥ ३ ॥
हस्तिनाशकटेनापिभक्त्याब्रह्मरथेनच ॥ मंगलैर्ब्रह्मघोषैश्चदेवंप्रासादमानयेत् ॥ ४ ॥ भद्रपीठंसमादायभद्रंकर्णेतिमंत्रतः ॥ सूत्रधारस्तथा
प्रोक्तःशुक्लांबरधरःशुचिः ॥ ५ ॥ स्नापयेत्कलशंगृह्यदेवदेवंविभावसुम् ॥ सामुद्रंतोयमाहृत्यजाह्नव्यंयामुनंतथा ॥ ६ ॥
सारस्वतंजलंपुण्यंचांद्रभागंससैंधवम् ॥ पुष्करस्यजलंश्रेष्ठंगिरिप्रस्रवणोदकम् ॥ ७ ॥ अन्यद्वापिशुचितोयंनदीनदतडागजम् ॥
यथाशक्त्याउपाहृत्यकलशैःकांचनादिभिः ॥ ८ ॥ भोजकाश्चाष्टभिःसूर्यंकलशैःस्नापयंतिवै॥ततस्तुमणिरत्नानिसर्वबीजौषधीस्तथा ॥९॥
सुगंधीनिचमाल्यानिस्थलजान्यंबुजानिच ॥ चंदनानिचमुख्यानिगंधाश्चविविधास्तथा ॥ १० ॥ ब्राह्मीसुवर्चलामुस्ताविष्णुक्रान्ताशता
वरी ॥ दूर्वाचाशिविपुष्पीचाप्रियंगूरजनीवचा ॥ ११ ॥ संभृत्यैतांस्तुसंभारान्स्नानकर्मविभागवित् ॥ बलाश्वत्थशिरीषाणांपल्लवैःकुशसंयु
तैः ॥ १२ ॥ कलशोपरिविन्यस्यदद्यादर्घ्यंरवेःसदा ॥ कांचनैराजतैस्ताम्रैर्मृन्मयैःकलशैस्तथा ॥ १३ ॥ साक्षतैःसहिरण्यैश्चसर्वौषधिसम
न्वितैः ॥ गायत्र्यापरिपूतैस्तुषोडशैःस्नापयेद्रविम्॥१४॥[3]कुशोत्तरांततःकृत्वावेदिंपक्वेष्टकामयीम् ॥ तस्यांवेद्यांसमारोप्यपरिधाप्यचवाससी
॥ १५ ॥ प्रतिमामभिषिंचेच्चसोपवासःप्रयत्नतः ॥ मूर्ध्निसर्वौषधींकृत्वातथैवामलकानिच ॥ १६ ॥ मंत्रेणमृत्तिकांचापिमंत्रतश्चजलंतथा ॥
त्वंदेवीवंदितादेवैःसकलैर्दैत्यदानवैः ॥ १७ ॥ तेनसंस्थापितामूर्ध्निमयादेवस्यशुद्धये ॥ आदिस्त्वंसर्वभूतानांदेवतानांचसर्वथा ॥ १८ ॥

१ शुभच्छत्रं च--इ०पा० । २ यदि सुव्रत--इ०पा । ३ चतुरस्राम्--इ०पा० ।

रसानांपतयेतुभ्यमाह्वानंचकृतंमया ॥ इत्थंपौराणिकैर्मंत्रैर्वैदिकैश्चविशेषतः ॥ १९ ॥ कार्यंहिवारुणंस्नानंदेवस्ययदुनंदन ॥ इत्थमु
च्चारयेद्वाचंकुर्यात्स्नानंविचक्षणः ॥ २० ॥ देवास्त्वामभिषिंचंतुब्रह्मविष्णुशिवादयः ॥ व्योमगंगाचपूर्णेनद्वितीयेकलशेनतु ॥ २१ ॥
सारस्वतस्यपूर्णेनकलशेनसुरोत्तम ॥ शक्रादयोभिषिंचंतुलोकपालाःसुरोत्तमाः ॥ २२ ॥ सागरोदकपूर्णेनचतुर्थकलशेनतु ॥ वारिणाप
रिपूर्णेनपद्मपत्रसुगंधिना ॥ २३ ॥ पंचमेनाभिषिंचंतुनागाश्वकलशेनतु ॥ हिमवद्धेमकूटाद्याश्चाभिषिंचंतुवारिणा ॥ २४ ॥ नैर्ऋतो
दकपूर्णेनषष्ठेनकलशेनतु ॥ सर्वतीर्थांबुपूर्णेनपद्मरेणुसुवासिना ॥२५॥ सप्तमेनाभिषिंचंतुऋषयःसप्तयेवराः ॥ वसवश्चाभिषिंचंतुकलशेनाष्ट
मेनवै॥२६॥अष्टमंगलयुक्तेनदेवदेवनमोऽस्तुते ॥ ततोवैकलशैर्दिव्यैःस्नानकर्मसपारभेत ॥ २७ ॥ समुद्रंगच्छयत्प्रोक्तंमंत्रमेवमुदीरयेत् ॥
हिरण्यगर्भेतिचयन्मंत्रमेवमुदीरयेत् ॥ २८ ॥ समुद्रज्येष्ठेतिमंत्रेणक्षालयेन्मृत्तिकान्वितम् ॥ सिनीवालीतिमंत्रेणदद्याद्वल्मीकमृत्तिकाम् ॥
॥ २९ ॥ शम्युदुंबरमश्वत्थंन्यग्रोधंचपलाशकम् ॥ यज्ञंयज्ञेतिमंत्रेणदद्यात्पंचकषायिकम् ॥ ३० ॥ पंचगव्यपवित्रंचआहरेत्ताम्रभा
जने ॥ गायत्र्याचैवगोमूत्रंगंधद्वारेतिगोमयम् ॥ ३१ ॥ आप्यायस्वेतिचक्षीरंदधिक्राव्णेतिवैदधि ॥ तेजोऽसीतिघृतंतद्वद्देवस्यत्वाकु
शोदकम् ॥ ३२ ॥ एवमादिविधियुतंपंचगव्यंप्रकीर्तितम् ॥ याओषधीतिमंत्रेणस्नानमोषधिभिःक्रमात् ॥३३॥द्रुपदाभिःपुनस्तस्यकुर्या
च्चोद्वर्तनंबुधः ॥ शिरःस्नानंततोदद्यान्मानस्तोकाभिमंत्रितम् ॥ ३४ ॥ विष्णोरराटमंत्रेणदद्याद्गंधोदकंशुभम् ॥ ततोनद्युद्भवेनैवक्षाल
येच्छुद्धवारिणा ॥ ३५ ॥ जातवेदसमुच्चार्यवस्त्रपूतेनवारिणा ॥ ततआवाहयेद्देवंरक्तमाल्यांबरंशुभम् ॥ ३६ ॥ एह्येहिभगवन्भानोलोका
नुग्रहकारक ॥ यज्ञभागंप्रगृह्णार्वमर्कदेवनमोऽस्तुते ॥ ३७ ॥ हिरण्येनतुपात्रेणदेवायार्घ्यंप्रदापयेत् ॥ इदंविष्णुर्विचक्रमेमंत्रेणार्घ्यंसमर्प
येत् ॥ ३८ ॥ पार्थिवैःप्रथमंकलशैःस्नापयेद्भास्करंबुधः ॥ ततस्त्वौदुंबरैर्वीरराजतैस्तदनंतरम् ॥ ३९ ॥ ततस्तुकांचनैर्देवंस्नापयेद्यदुनंदन॥
सर्वतीर्थजलैर्युक्तंसर्वौषधिसमन्वितम् ॥ ४० ॥ शंखमादायदेवस्यततोमूर्धनिशंकरः ॥ दत्वापुष्पाणिदेवस्यमूर्ध्नियत्नाद्विचक्षणः ॥ ४१ ॥

१ आपोहिष्ठेति त्र्यृचा--इ०पा० । २ चरणोपरि देवस्य--इ०पा० ।

तो[1]यमुत्क्षिप्ययत्नेनततःस्नपनमालभेत् ॥ प्रथमंस्नापयेद्देवंवारिणायदुनंदन ॥ ४२ ॥ ततस्तुपयसाराजन्पायसेनततस्तुवै ॥ घृतेनमधुना वापितथाइक्षुरसेनच ॥ ४३ ॥ अग्निष्टोमस्ययज्ञस्य[2]गोमेधस्यचसुव्रत ॥ ज्योतिष्टोमस्यराजेन्द्रवाजपेयस्यवैविभो ॥ ४४ ॥ राजसूयाश्वमे धाभ्यांघृताद्यैर्लभतेफलम् ॥ यस्तुकारयतेस्नानंयस्तुभक्त्या[3]प्रपश्याति ॥४५॥ क्रियमाणंतुदेवस्यस्नानंयदुकुलोद्वह ॥ यएतेकथितायज्ञा एतेषांक्रमशःफलम् ॥४६॥ अर्चांचकुरुशार्दूलदृष्ट्वावैलभतेफलम् ॥ स्नानंतुयत्नतःकार्यंदेवदेवस्यसुव्रत ॥ ४७ ॥ यथानलंघयेत्कश्चिद्दे वस्यस्नपनंविभोः ॥ नप्राश्नंतियथाकाकास्तीर्थलोकविगर्हिताः ॥४८॥ स्नानोदकंतुदेवस्यअथवापयएवहि ॥ भूमौगतंयथाचैवप्राश्नातियदु नंदन ॥ ४९ ॥ रागंप्राप्नोतिकर्तावैदुःखंकारयितातथा ॥ तस्माद्यत्नेनकर्तव्यंदेवस्यस्नपनंविभोः ॥ ५० ॥ स्नापयित्वाक्रमेणेत्थंस्नान कर्मविधानवित् ॥ ततोवर्धनिकांगृह्यवारिधारांसमुत्सृजेत् ॥ ५१ ॥ तिस्रस्तुपुरतोऽर्कस्यआचमस्वेतिचब्रुवन् ॥ वेदोसीतिचमंत्रेणउप वीतंप्रदापयेत् ॥ ५२ ॥ बृहस्पतेतिमंत्रेणवस्त्रयुग्मंप्रदापयेत् ॥ यत्नक्रमंप्रकुर्वाणःपुष्पमालांप्रदापयेत् ॥ ५३ ॥ धूरसीतिचमंत्रेणधूपंद द्यात्सगुग्गुलम् ॥ समिद्धोंजनमंत्रेणअंजनंतुप्रदापयेत् ॥५४॥ युंजानीतिचमंत्रेणरोचनांतस्यदापयेत् ॥ आरात्रिकंचवैकुर्याद्दीर्घायुष्ट्वायवचंसे ॥ ५५ ॥ स्नानकर्मइदंप्रोक्तंभास्करस्यमहात्मनः ॥ भोजकाब्राह्मणाश्चैवाक्रियांकुर्युःप्रयत्नतः ॥ ५६ ॥ बह्वृचोऽथर्वणश्चैवछंदोगोध्वर्युरेवच ॥ स्नापकस्यचचिह्नानियेचमूर्तिधरास्तथा ॥ ५७ ॥ तेषांप्रवक्ष्यामिविभोशृणुष्वैकमनाःकिल ॥ संपूर्णगात्रोमतिमाञ्छास्त्रज्ञःप्रियदर्शनः ॥ ५८ ॥ कुलीनःश्रद्दधानश्चआर्यदेशसमुद्भवः ॥ नस्थूलोनकृशोदीर्घःसौरशास्त्रविशारदः ॥५९॥ यश्चयुक्तोजितात्माचगुरुभक्तोजितेन्द्रि यः ॥ पंचविंशतितत्त्वज्ञःस्थापकःसमुदाहृतः ॥ ६० ॥ वर्जनीयांश्चवक्ष्यामियैस्तुकर्मनकारयेत् ॥ हीनांगश्चाधिकांगश्चवामनोविकटस्त था ॥ ६१ ॥ नातिगौरोनकृष्णश्चस्नापनायप्रयोजयेत् ॥ चार्वाकोयाजकश्चैवनित्यंगोमुखदंभकः ॥ ६२ ॥ अशुचिव्रणसंयुक्तःश्यामदंतोऽ थमत्सरी ॥ [6]कोपनोदुष्टशीलश्चयुवावावृद्धएवच ॥ ६३ ॥ श्वित्रीकुष्ठीचरोगीचकाणोदुर्मतिरेवच ॥ संकीर्णजातिहीनश्चतथाचवृषली

१ धूपम्–इ०पा० । २ गोशतस्य–इ०पा० । ३ प्रणम्यति–इ०पा० । ४ प्रयत्नतः–इ०पा० । ५ मन्युमान्–इ०पा० । ६ रोगयुक्तोऽथ वै बालः–इ०पा० ।

पातिः॥६४॥कुब्जश्चांधस्तथाऽव्यंगःखल्वाटोविकलेन्द्रियः॥अविनीतोदुरात्माचाविकलःपंगुरेवच ॥६५॥ तिथिनक्षत्रयोगानांवाराणांचतथावि
भो॥सूचकोजीवितार्थीहियश्चमूल्येनपाठयेत्॥६६॥ईदृशान्स्नापकान्सर्वान्वर्जयीतप्रयत्नतः॥तस्मात्सर्वप्रयत्नेनपरीक्ष्याःस्नापकाबुधैः६७॥
इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेसूर्यप्रतिष्ठास्नानविधिवर्णनंनामपंचत्रिंशदुत्तरशततमोऽध्यायः॥ १३५ ॥छ॥
नारदउवाच ॥ ॥ अतःपरंप्रवक्ष्यामिअधिवासनमुत्तमम् ॥ सहस्रशीर्षापुरुषोमंडपंयत्नतोविशेत् ॥ १ ॥ ततोन्येचशुचौदेशेअसंस्पृष्टोप
लेपने ॥ मंडलंपंचवर्णैस्तुआलिखेच्चतुरस्रकम् ॥२॥ पताकातोरणच्छत्रध्वजमाल्याद्यलंकृतम्॥विचित्रसुवितानाढ्यंप्रकीर्णकुसुमोत्करैः॥३॥
तस्यमध्येकुशास्तीर्णेमूर्तिःस्थाप्याविवस्वतः ॥ तत्रास्यावाहनंकृत्वादद्यादर्घ्यंविवस्वतः ॥ ४ ॥ सुवर्णमधुपर्कादिकृत्वातत्रविधानतः॥देवं[3]
स्यदर्शयेद्गांचसवत्सांरोहिणींशुभाम् ॥ ५ ॥ नमोगोपतयेतुभ्यंसहस्रांशोप्रसीदमे ॥ एवमर्घ्येणसंपूज्यपरिधायचवाससी ॥६॥ यज्ञोपवीतमा
तिथ्यंतथाभ्यंगंतथैवच ॥ वत्सरेवत्सरेतस्यनवमव्यंगमाहरेत् ॥ ७ ॥ श्रावणेमासिराजेंद्रपवित्रंतस्यतद्धिवै ॥ ब्राह्मणान्भोजयित्वातुवर्षेव
र्षेप्रयोजयेत् ॥८॥ अव्यंगंयदुशार्दूलश्रावणेमासिभास्करम् ॥ सर्वगंधैःसमालभ्यचंदनागुरुकुंकुमैः ॥९ ॥ अलंकारैरलंकृत्यकुसुमैश्चसुगंधि
भिः ॥ मालाभिश्चविचित्राभिरावद्धाभिरनेकशः॥ १० ॥ततोधूपंनिवेद्याशुप्रतिमाग्रेप्रयत्नतः ॥ सहस्रशीर्षापुरुषोमंडपंचप्रवेशयेत् ॥११॥
नमःशंभवेतिमंत्रेणशय्यायांविनिवेशयेत् ॥ विश्वतश्चक्षुरित्येवकुर्यात्कमलनिष्कलम् ॥ १२ ॥ पुनरेवचवक्ष्यामिसंकलीकरणंशुभम् ॥
स्नापनेतुयदाकार्यंस्वदेहेन्यासमुत्तमम् ॥१३॥ प्रतिमायांतथाकार्यंयथाचालंभनंबुधः ॥ ॐखषोल्कायनमोमूलमंत्रःप्रकीर्तितः॥१४॥ आदि
त्योऽयंस्वयंदेवअक्षरेणोपबृंहितः ॥ ॐकारंविन्यसेन्मूर्ध्निहंकारंनासिकोपरि ॥ १५ ॥ खकारंचललाटेतुषकारंवदनेन्यसेत् ॥ लकारंचैवकं
ठेतुककारंहृदयेन्यसेत् ॥ १६ ॥ यकारंतुभुजेवामेनकारंदक्षिणेभुजे ॥ मकारंवामकुक्षौचहकारंदक्षिणेन्यसेत् ॥ १७ ॥ ॐकारंतुसदा
ध्यायेज्ज्वालामालासमाकुलम् ॥ हुंकारंशुद्धवर्णाभंप्रसवंतमलंशुभम् ॥ १८ ॥ खकारंचिंतयेत्प्राज्ञोभिन्नांजनसमप्रभम् ॥ तरुणादित्यवर्णा

१ भृतकोऽर्थी च दुष्टं तत्र न याजयेत्-इ०पा० । २ सुमनोधूपदीपकैः-इ०पा० । ३ दद्यादत्र प्रयत्नेन-इ०पा० ।

भंवकारंचिंतयेद्बुधः ॥ १९ ॥ षोकारंतुमहाबाहोहेमवर्णंविचिंतयेत् ॥ शुक्लपद्मनिभाकारमकारंचिंतयेद्बुधः ॥ २० ॥ जातीकुसुमसंकाशं
ह्रींकारंसर्ववर्णकम् ॥ क्षीरवर्णसकारंतुचिंतयेत्सततंबुधः ॥ २१ ॥ नकारंहिमकुंदाभंमकारममृताक्षरम् ॥ ह्रींकारंविद्युत्संकाशंह्रींकारंस
र्ववर्णकम् ॥ २२ ॥ क्षीरवर्णसकारंतुचिन्तयेत्सततंबुधः ॥ नकारंस्वर्णवर्णाभंमकारंकनकप्रभम् ॥ २३ ॥ ततोदेवंमहात्मानंसहस्रकिरणं
रविम् ॥ प्रसादाभिमुखेदेवेशयनीयेनिवेदयेत् ॥ २४ ॥ अग्निकार्यंततःकुर्युरग्निकुंडेषुवैद्विजाः ॥ ततोऽरण्यांसमुत्थाप्यअग्निंलौकिकमेववा
॥ २५ ॥ प्रज्वाल्याग्निंविधानेनकुर्याद्धोमंविचक्षणः ॥ बह्वृचःपूर्वकांडेषुयाम्यांमध्यंदिनस्तथा ॥ २६ ॥ पश्चिमेचैवच्छंदोगउत्तरेऽथर्वणोम
तः ॥ मध्येचभोजकःकुर्याद्धोमंयज्ञेयदूत्तम ॥ २७ ॥ शमीपालाशोदुंबर्याअपामार्गंतथैवच ॥ द्वादशतुसहस्राणिअष्टौचत्वारिएवच ॥२८॥
द्वौत्रीणिचसहस्राणिअथवाएकएवाहि ॥ अग्निर्मूर्धेतिमंत्रेणकुंडस्यालंभनंभवेत् ॥ २९ ॥ उल्लिख्याभ्युक्ष्यतेनैवआग्निंदूतमितिस्मृतः ॥
सबुध्यग्निंचमंत्रेणगर्भाधानंतुकारयेत् ॥ ३० ॥ सीमंतेतिपुनस्तत्रमहामंत्रेणहोमयेत् ॥ जातकर्मतथाप्रोक्तंप्राणायामंविदुर्बुधाः ॥ ३१ ॥
नमःस्वाहेतिमंत्रेणनामकरणमेवच ॥ अन्नप्राशनमंत्रेणअन्नप्राशनमादिशेत् ॥ ३२ ॥ ज्येष्ठमग्रेतिमंत्रेणतेनचूडोपकर्मणि ॥ व्रतबंधस्यमंत्रेण
व्रतबंधंसमादिशेत् ॥ ३३ ॥ समावर्तनमित्येवआकृष्णेतिचहोमयेत्॥पत्नीसंयोजनंचैवस्वयमेवप्रकल्पयेत् ॥ ३४ ॥ अग्निहोमादिकंक
र्मयज्ञकर्माणियानिच ॥ महाव्याहृतिमंत्रेणहोतव्यानिसमंततः ॥ ३५ ॥ मातॄणांयज्ञभूतानांबलिकर्मप्रदापयेत् ॥ सर्वकामसमृद्ध्यर्थंकार
येदधिवासनम् ॥ ३६ ॥ त्रिरात्रंपंचरात्रंचअहोरात्रमथापिवा ॥ ततःस्वलंकृतांस्नातांमणिरत्नैर्विभूषिताम् ॥३७॥ कृतरक्षांप्रयत्नेनप्रति
मामधिवासयेत् ॥ देवागारादथैशानेदिग्भागेदिव्यमंदिरम् ॥ ३८ ॥ कृत्वाकुशपरिस्तीर्णेवरास्तरणसंवृते ॥ पूर्वशीर्षांतथाशय्यांशुक्लशु
क्लांबरोत्तराम् ॥ ३९ ॥ तस्यामावेशयेत्सम्यङ्महाश्वेतामुपाहरेत् ॥ निक्षु[1]भादक्षिणेपार्श्वेवामेराज्ञीचकीर्तिता ॥ ४० ॥ दंडपिंगलकौचा
स्यास्थितौपादप्रवेशितौ ॥ तस्यांसंवेशितायांतुशर्वर्यांप्रतिमांरवेः ॥ ४१ ॥ वसेत्तांरजनींतत्रस्तूयमानश्चतुर्दिशम् ॥ ब्राह्मणैर्वेदिभिश्चापिगी

१ निक्षुभी-इ०पा० ।

तन्नैश्चारणैस्तथा ॥ ४२ ॥ कुर्याज्जागरणंतत्रसूर्यभक्तिसमन्वितैः ॥ प्रभातायांतुशर्वर्यांबोधयेद्दग्विधानतः ॥ ४३ ॥ हविष्य
भोज्यकामांस्तुब्राह्मणान्भोजकांस्तथा ॥ दक्षिणाभिश्चसंपूज्यतैःकृतस्वास्तिवाचनः ॥ ४४ ॥ ततोगर्भगृहस्याथमध्येकृत्वातुपिंडिकाम् ॥
विधिवत्तत्रसौवर्णंन्यसेत्सप्तहयंरथम् ॥ ४५ ॥ सर्वबीजौषधैश्चैवतत्रदत्त्वाविधानवित् ॥ दत्त्वार्घ्यंस्थापयेत्तत्रयजमानःसहायवान् ॥ ४६ ॥
शंखदुंदुभिनिर्घोषैर्जलधारासहाक्षतैः ॥ कृत्वापुण्याहशब्दंतुआलयस्यप्रदक्षिणाम् ॥ ४७ ॥ शुभलग्नेदिनेऋक्षेपूर्वाह्णेभानवेक्षणे ॥
मुहूर्तेचशुभेभानोःप्रतिमांस्थापयेद्बुधः ॥ ४८ ॥ नाधोमुखींनोर्ध्वमुखींनपार्श्वावनतांतथा ॥ समामभिमुखींचेमांप्रतिमांतुनिवेशयेत् ॥४९॥
पत्न्यौचास्यततःसम्यक्पार्श्वयोर्विनिवेशयेत् ॥ निक्षुभादक्षिणेपार्श्वेरवेराज्ञीतुवामतः ॥ ५० ॥ ततस्तदुपहारार्थंसंभारैःप्राक्समाहृतैः
॥ मोदकापूपिकापूपशष्कुलीभूतशीर्षकैः ॥ ५१ ॥ कृसरैःपायसोन्मिश्रैःसर्वदिक्षुक्षिपेद्बलिम् ॥ इंद्रायदेवपतयेबलिनेवज्रपाणिने ॥ ५२ ॥
शतयज्ञाधिपतयेतस्मैइंद्रायतेनमः ॥ त्रातारमिंद्रमंत्रेणइंद्रस्यावाहनंभवेत् ॥ ५३ ॥ अग्नयेरक्तनेत्रायज्वालामालार्चितायवै ॥ शक्तिह
स्तायतीव्रायतथाचैवाजवाहिने ॥ ५४ ॥ आग्नेय्यामग्निमंत्रेणवन्हेरावाहनंस्मृतम् ॥ दंडहस्तायकृष्णायमहिषोत्तमवाहिने ॥ ५५ ॥
सूर्यपुत्रायदेवायधर्मराजायवैनमः ॥ यमायत्वेतिमंत्रेणमुद्रास्तस्यैवकीर्तिताः ॥ ५६ ॥ नैर्ऋतेखड्गहस्तायनीललोहितकायच ॥ सर्वबा
ह्याधिपतयेविरूपाख्यायवैनमः ॥ ५७ ॥ आयंगौरितिमंत्रेणनैर्ऋत्यांतुप्रकल्पयेत् ॥ वारुण्यांपाशहस्तायवरुणायेतिकल्पयेत् ॥ ५८ ॥
मंत्रेणावाहनंविद्यात्पंचनद्यःसरस्वतीम् ॥ प्राणात्मकायधूपायअव्यंगायानिलायच ॥ ५९ ॥ ध्वजहस्तायभीमायनमोगंधवहायच ॥ तस्या
प्यावाहनंविद्याद्देवादेवहेडनम् ॥ ६० ॥ गदाहस्तायसोमायशुष्मिणेनृगतायच ॥ गदापट्टिशहस्तायसोमराजायवैनमः ॥ ६१ ॥ ईशा
वास्यंचगुह्यावैसोममंत्रःप्रकीर्तितः ॥ चतुर्मुखायदेवायपद्मासनगतायच ॥ ६२ ॥ कृष्णाजिननिषण्णायनमोलंबोदरायच ॥ गणाधिपतये
देवनीलकंठायशूलिने ॥ ६३ ॥ विरूपाक्षायरुद्रायत्रैलोक्याधिपतेनमः ॥ अभित्वाशूरनोमंत्रईशानायप्रकल्पयेत् ॥ ६४ ॥ सर्वनागाधि
राजायश्वेतवर्णायभोगिने ॥ सहस्रफणिनेनित्यमनंतायनमोनमः ॥ ६५ ॥ नमोऽस्तुसर्पेभ्यइतिमंत्रश्चैवप्रकीर्तितः ॥ पंचरात्रादिभिर्न्यासम

गन्यासःप्रयुज्यते ॥ ६६ ॥ तथोपक्षीरपानैश्चस्तुतिस्तोत्रैश्चभास्करम् ॥ विप्रेभ्योभोजकेभ्यश्चततोदद्याच्चदक्षिणाम् ॥ ६७ ॥ सूर्यक्रतुं
महापुण्यंनैवकुर्याददक्षिणम् ॥ स्थाप्यतेऽनेनविधिनातद्भक्तैःप्रतिमाचया ॥ ६८ ॥ सातुवृद्धिकरानित्यंसांनिध्याच्चसदाभवेत् ॥ सप्तज
न्मसुतेषांतुनरोगाःसंभवंतिहि ॥ ६९ ॥ त्रिरात्रेयेह्युपासंतेभानोर्यात्राभिशासने ॥ गंधमाल्योपहारैस्तुतेयांतिभुवनंरवेः ॥ ७० ॥ आत्मीयं
परकीयंवाप्रतिमास्थापनंरवेः ॥ यःपश्यतिपुमान्भक्त्यासस्वर्लोकमवाप्नुते ॥ ७१ ॥ दशानामश्वमेधानांवाजपेयशतस्यच ॥ फलंप्राप्नो
तिपुरुषःप्रतिष्ठाप्यदिवाकरम् ॥ ७२ ॥ यावत्कीर्तिःपुण्यकृताभानोःस्थानेनिवेशिते ॥ तावत्सतुयदुश्रेष्ठसूर्यलोकेमहीयते ॥ ७३ ॥ स्था
पनेचास्यवैमंत्रःप्रोक्तोलोकेषुपूजितः ॥ ध्रुवाद्यौश्चध्रुवापृथ्वीध्रुवंविश्वमिदंजगत् ॥ ७४ ॥ श्रेयसेयजमानस्यतथात्वंध्रुवतांव्रज ॥ स्थाप
यित्वारविंभक्त्याविधिदृष्टेनकर्मणा ॥ ७५ ॥ मासेमासेक्रतुफलंलभतेनात्रसंशयः ॥ एकाहेनापियद्भानोःपूजयाप्राप्यतेफलम् ॥ ७६ ॥ न
तुक्रतुशतैर्वीरप्राप्यतेमानवैर्भुवि ॥ कृत्वापिसुमहत्पापंयःपश्चात्सेवतेरविम् ॥ ७७ ॥ सयातिसूर्यलोकंतुनरोविगतकल्मषः ॥ नभवेदिष्ट
कायांचद्रवणंभूमिसंमितिः ॥ ७८ ॥ स्वर्गेमहीयतेतावत्कारकोदेववेश्मनः ॥ खंडस्फुटितसंस्कारंकृत्वायत्फलमाप्यते ॥ ७९ ॥ नतुक्रतु
सहस्रैस्तुप्राप्यतेफलमुत्तमम् ॥ सिकतायामपिगृहंयस्तुकुर्याद्विभावसोः ॥ ८० ॥ गोपतेःसप्रियसदःप्रगच्छेद्गोपतेर्वरम् ॥ ८१ ॥ इत्येवंसु
रवरस्तुतस्यभानोर्भूतानांस्थितिनिलयप्रसूतिहेतोः ॥ श्रीभागीभवतिनरोनिकेतकारीकल्पानांवसतिशतंससूर्यलोके ॥ ८२ ॥ इति
श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेसूर्यप्रतिष्ठावर्णनंनामषट्त्रिंशदुत्तरशततमोध्यायः ॥ १३६ ॥ छ ॥ ॥ नारदउ
वाच ॥ ॥ यःप्रासादंरचयतिपुमान्देवतानांप्रयत्नात्तत्रप्रीत्यासपदिकुरुतेस्थापनांभानुभक्तः ॥ दिव्यान्भोगाँल्लभतिचसदाकामत
श्चाप्रमेयांस्तान्भुक्त्वासौपुनरपिभवेच्चक्रवर्तीपृथिव्याम् ॥ १ ॥ येमानवास्त्रिदशमूर्तिनिकेतनानिकुर्वंतिसाधुजनदृष्टिमनोहराणि ॥ तेषां
मृतेप्यपरमार्थमयेशरीरेलोकेपरिभ्रमतिकीर्तिमयंशरीरम् ॥ २ ॥ इतितेकथितामिदंदेवपूज्यस्यसवितुःस्थापनामिवाधानम् ॥ साधारणवि
धानंशृणुदेवानांप्रतिष्ठापनेवीर ॥ ३ ॥ स्नातोभुक्तोवस्त्रालंकृतकुसुमैर्गंधैःप्रतिमायाआस्तीर्णायांशय्यायांस्थापनंकुर्यात् ॥ सुप्तायांतुस

नृत्यगीतैर्जागरणैःसम्यगेवाधिवास्यदैवज्ञेनप्रतिदिष्टकालेसंस्थापनंकुर्यात् ॥ अभ्यर्च्यकुसुमगंधानुलेपनैःशंखतूर्यनिर्घोषैःप्रादक्षिण्येननयेदा
यतनस्यप्रयत्नेनकृत्वाबलिंप्रतिमामभ्यर्च्यब्राह्मणांश्चसाधून्दत्वाहिरण्यकलशंविधिनानिक्षिपेत्पिंडिकामध्येसुश्वभ्रेस्थापकदैवज्ञाद्विजान्सम्य
ग्विशेषतोऽभ्यर्च्यकल्पान्तंभोगीभवतीहपरत्रसुखी ॥४॥ विष्णोर्भागवतामगाश्चसवितुःशंभोःसभस्माद्विजामातॄणामपिमातृमंडलविदोविप्रा
विदुर्ब्राह्मणाः ॥ सर्वैयस्यविमुक्तशुक्लवसनाबुद्धस्यरक्तांबरायेयंदेवमुपाश्रितास्सुविधिनातैस्तस्यकार्याक्रिया ॥ ५ ॥ सामान्यमिदंदेवानां
मधिवासनंभवतिमयाकथितम् ॥ क्रियमाणमिदंदृष्ट्वादेवानांप्रतिष्ठापनम् ॥ ६ ॥ नरोभक्त्याइहकामानवाप्यसर्वान्परत्रस्वर्गभाजनंभवति॥
इदंतेकथितंराजन्प्रतिष्ठापनमादितः॥७॥यत्कृत्वासवितुःस्थानंनरोयातिमनोगतिम्॥ इत्थंकृत्वानरोभक्त्यासवितुःस्थापनंबुधः ॥ ८॥कारये
त्पुरतोभक्त्यासवितुःस्थापनंबुधः ॥ इतिहासपुराणस्यश्रवणंपापनाशनम् ॥९॥ताभ्यांहिश्रवणाद्वीरसान्निध्यंयातिभास्करः ॥ कृतेत्वायतने
तस्मिन्येचान्येचापिदेवताः॥१०॥तस्मात्कार्यंबुधैर्नित्यंधर्मश्रवणमादितः॥ वाचकंपूजयित्वातुब्राह्मणानुपपूज्यच ॥ ११॥ कारयेद्वाचनंवीर
पुस्तकस्याग्रतोरवेः ॥ सर्वस्वंस्थापकेदद्याद्यत्किंचिद्गृहमागतम् ॥ १२ ॥ गोदानमथवादद्यात्तस्यचित्तंप्रसादयेत् ॥ इत्येषकथितोवीर
प्रतिष्ठाकल्पआदितः ॥ १३ ॥ कृत्वादृष्ट्वाचश्रुत्वाचयंनरोऽर्कमवाप्नुयात् ॥ १४ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबो
पाख्यानेप्रतिष्ठापनविधिवर्णनंनामसप्तत्रिंशदुत्तरशततमोऽध्यायः ॥ १३७ ॥ ७ ॥ नारदउवाच ॥ ॥ हंततेकथयिष्यामिध्वजारोपणमुत्त
मम् ॥ यदुक्तंब्रह्मणापूर्वमृषभाधिपतेःपुरः ॥ १ ॥ पुरादेवासुरेयुद्धेयानिदेवैर्जयेप्सुभिः ॥ कृतान्युपरिचिह्नानिवाहनानिध्वजानितु ॥ २ ॥
लक्ष्माचिह्नध्वजंकेतुरितिपर्यायनामभिः ॥ कीर्तितःसचतस्येहप्रमाणंगदतःशृणु ॥ ३ ॥ ध्वजोवंशस्यकर्तव्यस्त्वविद्धऋजुरव्रणः ॥ प्रासा
दव्यासतुल्यस्तुध्वजवंशप्रमाणतः ॥ ४ ॥ देवागारस्ययेप्रोक्तामंजरीकलशादयः ॥ अथवातत्प्रमाणस्तुध्वजदंडःप्रकीर्तितः ॥ ५ ॥
अंतर्गृहस्ययावेदीसूत्रतः परिकल्पिता ॥ तस्याव्यासोभवेद्वंशःप्रासादस्ययदूत्तम ॥ ६ ॥ अथवामूलसूत्रेणयोव्यासोऽन्तर्गृहस्यतु ॥ प्रासा
दव्यासइतिसप्रोक्तश्चेहनसंशयः ॥ ७ ॥ केतुर्भवेद्वरोवंशोननिम्नोनऋजुस्तथा ॥ पत्रंध्वजोयुगंचैवनलिकापुरुषस्तथा ॥ ८ ॥ चतुर्हस्ताभव

न्त्येतेप्रशस्ताःकृष्णनन्दन ॥ अष्टहस्तप्रमाणस्तुविंशार्ध[1]स्यप्रमाणतः ॥ ९ ॥ सामान्योध्वजदंडस्तुसर्वसाधारणोमतः ॥ दंडपाणिध्वजोय
स्तुस्मृतोहस्तांस्तुषोडश ॥१० ॥ विंशद्धस्तात्परोदंडोनकार्यः[2]सर्वथारवे: ॥ युग्महस्तस्तुकर्तव्योध्वजदंडोमनीषिभिः ॥ ११॥ चतुरंगुल
विस्तीर्णःसुवृतोव्यंगुलोपरि ॥ नातिसूक्ष्मोनचस्थूलोनकार्योनतपर्वणः ॥ १२ ॥ समपर्वस्तुकर्तव्यःसुदृढःसूक्ष्मएवहि ॥ [3]वक्रःपुत्रविनाशा
यसव्रणोऽर्थविनाशनः ॥ १३ ॥ रागदोयुग्महस्तस्तुभिन्नोदुःखमनंतकम् ॥ करोतिहानिंधर्मस्यहीनोयस्तुप्रमाणतः ॥ १४ ॥ वैषम्यमसमप
र्वाद्द्यात्कृच्छ्रमधोन्नतः ॥ जयोजयंतो[4]जैत्रेयःशत्रुहंताजयावहः ॥ १५ ॥ नंदोपनंदनश्चैवइंद्रोपेंद्रस्तथैवच ॥ दशैतेकीर्तिताभेदाध्वजस्या
नन्दसंमिताः ॥ १६ ॥ द्विहस्तस्तुजयोदंडोजयंतोद्विगुणोमतः ॥ द्वादशहस्तस्तुजैत्रेयःशत्रुहंताकलान्वितः ॥ १७ ॥ जयावहस्तुविंशार्धो
नन्दआदित्यसन्निभः ॥ चतुर्दशोपनंदस्तुइंद्रःषोडशउच्यते ॥ १८ ॥ उपेंद्रोष्टादशप्रोक्तस्तथेंद्रोविंशतिःस्मृतः ॥ भिन्नोवक्रोऽसाधितश्च
नकार्योदंडएवहि ॥ १९ ॥ मूलमंत्रेणकर्तव्योव्यासतोऽन्तर्गृहस्यतु ॥ ध्वजदंडोमहाबाहोअथवावास्तुमानतः ॥ २० ॥ मंजरीमानतोवा
पितदर्धेनाथवाविभो ॥ पताकावैशुभाकार्याध्वजवंशावलम्बिनी ॥ २१ ॥ देवागारस्यशिखरात्रिभागपरिमार्जनी ॥ साप्रोक्तादशधावीरमान
तोमानतस्तथा ॥ २२ ॥ अंकुरःपल्लवश्चैवस्कंधःशाखातथैवच ॥ पताकाकदलीवीरकेतुर्लक्ष्यजयस्तथा ॥ २३ ॥ ध्वजश्चदशमःप्रोक्तःसर्व
देवमयोव्ययः॥ अंकुरोद्व्यंगुलःप्रोक्तःपल्लवश्चतुरंगुलः॥२४॥स्कंधःषडंगुलःप्रोक्तःशाखाचाष्टांगुलामता॥एकादशपताकातुकदलीचचतुर्दश॥
॥ २५ ॥ केतुस्तुषोडशःप्रोक्तोलक्ष्याष्टादशमुच्यते ॥ जयाविंशतिर्वैप्रोक्ताएतावत्त्वंगुलानितु ॥ २६ ॥ देवागारस्यकुंभस्यप्रसन्नासाप्रमा
र्जनी ॥ अंकुरेतिपताकासाविज्ञेयायदुनंदन ॥ २७ ॥ पल्लवेतिद्वितीयस्यमार्जनीपरिकीर्तिता ॥ त्रिभागमार्जनीस्कंधःशाखावैपंचम
स्यतु ॥ २८ ॥ षष्ठस्योक्तापताकातुकदलीसप्तमस्यतु ॥ अष्टमस्यतथाकेतुर्लक्ष्मचनवमस्यतु ॥ २९ ॥ ततस्तुदशमःप्रोक्तोजयंतो
यदुनंदन ॥ वृषस्थानावमार्जीतुध्वजस्तुपरिकीर्तितः ॥ ३० ॥ गजोमेषोऽथमहिषःकबंधस्तुवृषस्तथा ॥ हरिणोऽथनरश्चैवनर

१ दण्डं कृत्वा तु यत्नतः–इ०पा० । २ इन्द्रकेतुनः–इ०पा० । ३ रौद्रः–इ०पा० । ४ राजेन्द्रः–इ०पा० ।

श्चनरसत्तम ॥ ३१ ॥ स्थानान्येतानि भूयोऽथप्रयुक्तस्यध्वजस्यतु ॥ दिशाभागेतुपूर्वात्तुक्रमेणपरिकल्पयेत् ॥ ३२ ॥ एवंदशविधाप्रोक्ता पताकातत्वदर्शिभिः ॥ कर्तव्यासायथापूर्वंतच्छृणुष्वनराधिप ॥ ३३ ॥ शुक्लवस्त्रमयीचित्रासघंटासुमनोहरा ॥ नानाचामरसंपन्नाकिंकिणी जालमंडिता ॥ ३४ ॥ ध्वजाग्रेचैवकर्तव्योदेवतालिंगसूचकः ॥ कांचनोवाथरौप्योवामाणिरत्नमयोऽपिवा ॥ ३५ ॥ रंगकैर्लिख्यतेवापित द्वाहनसमाकृतिः ॥ ध्वजदंडोऽत्रविन्यस्तःकर्तव्योयदुनंदन ॥३६ ॥ गरुत्मांस्तुध्वजोविष्णोरीश्वरस्यध्वजोवृषः ॥ ब्रह्मणःपंकजंकार्यंरवेर्धर्मः स्मृतोध्वजः ॥ ३७ ॥ हंसोजालाधिपस्योक्तःसोमस्यतुनरोध्वजः ॥ बलदेवस्यतालस्तुकामस्यमकरध्वजः ॥ ३८ ॥ सिंहोध्वजस्तुदुर्गा याःकीर्तितोयदुनंदन ॥ गोधाचापिउमादेव्यारैवतस्यहयःस्मृतः ॥ ३९ ॥ कच्छपोवरुणस्योक्तोवातस्यहरिणोमतः ॥ पावकस्यतथा मेषआखुर्गणपतेर्मतः ॥ ४० ॥ ब्रह्मर्षीणांकुशःप्रोक्तइत्येषाध्वजकल्पना ॥ यस्ययोवाहनःप्रोक्तःसतस्यध्वजउच्यते ॥ ४१ ॥ विष्णो र्ध्वजेतुसौवर्णंदंडंकुर्याद्विचक्षणः॥ पताकाचापिपीतास्याद्गरुडस्यसमीपगा ॥४२॥ईश्वरस्यध्वजेदंडोराजतोयदुनंदन ॥ पताका चापिशुक्ला स्याद्वृषभस्यसमीपगा॥४३॥पितामहध्वजेदंडःस्मृतस्ताम्रमयोबुधैः॥पद्मवर्णपताकास्यात्पङ्कजस्यसमीपगा ॥ ४४ ॥ आदित्यस्यचसौव र्णोध्वजेदंडःप्रकीर्तितः॥पंचवर्णापताकास्याद्धर्मस्याधोगतानृप ॥४५॥ किंकिणीजालसंपन्नानानाबुद्बुदसन्निभा॥पुष्पमालोपसंपन्नानानावादि भिरावृता ॥ ४६ ॥ इंद्रध्वजस्यदंडोक्तःकांचनोयदुनंदन ॥ पताकाबहुवर्णास्यात्कुंजरस्यसमीपगा ॥ ४७ ॥ आयसश्चापिदंडोक्तोयमाचिह्नं विचक्षणैः ॥ पताकावर्णतःकृष्णामहिषस्यसमीपगा ॥ ४८ ॥ जलाधिपध्वजोदंडोराजतःपरिकीर्तितः ॥ पताकासर्वतःश्वेताविचित्रासाचक थ्यते ॥ ४९ ॥ ध्वजेचापिकुबेरस्यदण्डोमणिमयःस्मृतः ॥ पताकाचापिरक्तास्यान्नरपादसमीपगा ॥ ५० ॥ बलदेवध्वजेदण्डोराजतोयदुनं दन ॥ पताकावर्णतःशुक्लातालस्याधोगतास्मृता ॥ ५१ ॥ कामध्वजेत्रिलोहःस्याद्दण्डोयदुकुलोद्वह ॥ पताकारोहिणीतत्रमकरस्यसमीप गा ॥ ५२ ॥ मयूरंकार्तिकेयस्यचिह्नंलोकेषुगीयते ॥ त्रिलोहदंडमारूढंबहुरत्नविभूषितम् ॥ ५३ ॥ बहुवर्णकचित्रातुपताकाकथिताबुधैः॥



१ भूमौ तु–इ०पा० । २ सिंहोजलाधिपस्प–इ–पा० ।

हस्तिदंतभवंदण्डंकुर्याद्गणपतेर्नृप ॥ ५४ ॥ ताम्रदंडंसमारूढंसंशुद्धंसंप्रतिष्ठितम् ॥ शुक्लापताकाकर्तव्यासुप्रमाणामहीपते ॥ ५५ ॥
मातॄणांचापिकर्तव्योनैकरूपोध्वजोबुधैः ॥ पताकाभिरनेकाभिर्बहुरत्नाभिरन्वितः ॥ ५६ ॥ रेवंतस्यापिकर्तव्योध्वजोवाजीनराधिप ॥
रक्तापताकातत्रापिकर्तव्यायदुनंदन ॥ ५७ ॥ चामुंडामंदिरेकार्यःशिरोमालाध्वजाकुला ॥ नीलपताकाकर्तव्यादंडोलोहमयस्तथा॥५८॥
रीतीमयश्चमातॄणांरेवंतस्यचकारयेत् ॥ गौर्याध्वजस्ताम्रमयःपताकागोपसन्निभा ॥ ५९ ॥ स्वर्णदंडस्तुवीरस्यध्वजोमेषसमन्वितः ॥
पताकाबहुरत्नाढ्याकर्तव्यायदुनंदन[1] ॥ ६० ॥ अश्मसारमयोदंडोध्वजोवातस्यउच्यते ॥ पताकाकृष्णवर्णातुहरिणस्यसमीपगा ॥ ६१ ॥
भगवत्याध्वजोदंडःसर्वरत्नमयःस्मृतः ॥ पताकास्यत्रिवर्णास्यात्सिंहस्याधोगतानृप ॥ ६२ ॥ एवंविधमिदंकृत्वाध्वजंलक्षणलक्षितम् ॥
अधिवास्यततोराजंस्ततआरोपयेद्बुधः ॥ ६३ ॥ ततःसर्वौषधीभिश्चस्नापयित्वाप्रयत्नतः ॥ समालभ्यचबध्नीयान्मध्येप्रतिसरान्नृप ॥ ६४ ॥
कल्पयित्वाशुभांवेदिंकलशैरुपशोभिताम् ॥ तस्यांवेद्यांसमारोप्यतांरात्रिमधिवासयेत् ॥ ६५ ॥ नानाकुसुमचित्रांचस्रजंतस्यानुलंबयेत् ॥
समभ्यर्च्यप्रयत्नेनधूपमस्यनिवेदयेत् ॥ ६६ ॥ बलिकर्मततःकृत्वाकृसरापूपकादिभिः ॥ पलालापूपिकाभिश्चदधिपायससूपकैः[2] ॥ ६७ ॥
उद्दिश्यलोकपालेभ्योबलिंदद्याच्चवायसैः ॥ ब्राह्मणान्स्वस्तिवाच्याथकृत्वापुण्याहमंगलम् ॥ ६८॥ वादित्रकृतनिर्घोषंजलंसंस्कारसंयुतम्[3] ॥
नानाबुद्बुदसंपन्नंवेष्टितंनववाससा ॥ ६९ ॥ शुभेलग्नेदिनेऋक्षेध्वजंचारोपयेद्बुधः ॥ विन्यस्यस्वर्णकलशंश्वभ्रराजंध्वजस्यतु ॥ ७० ॥
एवमारोपयेद्यस्तुध्वजंदेवालयोपरि ॥ सश्रियावर्धतेनित्यंप्राप्नोतिपरमांगतिम् ॥ ७१ ॥ असुरावासमिच्छंतिध्वजहीनेसुरालये ॥
तस्माद्देवालयंप्राज्ञोध्वजहीनंनकारयेत् ॥ ७२ ॥ मंत्रश्चस्थापनेप्रोक्तोविधानज्ञैर्ध्वजस्यतु ॥ एह्येहिभगवन्देवदेववाहनवैखग ॥ ७३ ॥
श्रीकरश्रीनिवासश्चजैत्रजैत्रोपशोभित ॥ व्योमरूपमहारूपधर्मात्मंस्त्वंचवैगते ॥ ७४ ॥ सान्निध्यंकुरुदंडेऽस्मिन्साक्षीचध्रुवतांव्रज ॥
कुरुवृद्धिंसदाकर्तुंप्रासादस्यार्कवल्लभ ॥ ७५ ॥ ॐएह्येहिभगवानीश्वरविनिर्मितउपरिचरवायुमार्गानुसारिञ्छ्रीनिवासरिपुध्वंसयशानिलय

१ बहुवर्णा च-इ०पा० । २ दधिपायसपूर्वकैः-इ०पा० । ३ जनफूत्कारसंकुलम्-इ०पा० ।

सर्वदेवप्रियंकुरुसान्निध्यंशांतिंस्वस्त्ययनंचमेभयंसर्वविघ्नाव्यपसरंतु ॥ ७६ ॥ मंत्रेणानेनराजेन्द्रध्वजंप्रदंडेनिवेशयेत् ॥ पताकांपूर्वमंत्रेण
स्थित्वापूर्वमुखोनृप ॥ ७७ ॥ क्षिपेदूर्ध्वमथाकाशंप्रासादशिखराद्विभोः ॥ यजमानस्ततःपश्येत्पताकांयदुनंदन ॥ ७८ ॥ प्रासादपुरतो
वरिपताकांपातयेद्यदि ॥ इंद्रलोकंतदाकर्ताविशेद्वैयदुनंदन ॥ ७९ ॥ आग्नेय्यामग्निलोकंतुयाम्यांयमसदोभवेत् ॥ नैर्ऋत्यांनैर्ऋतंलोकंवारु
ण्यांवारुणंव्रजेत् ॥ ८० ॥ यस्यदेवस्ययद्वेश्मकृतंयदुकुलोद्वह ॥ तस्यलोकमवाप्नोतिवृषस्थानगतोयदि ॥ ८१ ॥ वायव्येवायुमाप्नोतिसौ
म्यायांसोममाप्नुते ॥ ऐशान्यामीशमाप्नोतिकर्तावैदेववेश्मनः ॥ ८२ ॥ यएवंकारयेद्भक्त्याध्वजस्यारोपणंरवेः ॥ सहिभुक्त्वापरान्भोगान्सूर्य
लोकेमहीयते ॥ ८३ ॥ तेजसांबुजसंकाशःकांत्याचांबुजसन्निभः ॥ द्विजातितुल्यःप्रभयाविक्रमेणचगोपतेः ॥ ८४ ॥ इतिश्रीभविष्येमहा
पुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेध्वजारोपणविधिवर्णनंनामाष्टत्रिंशदुत्तरशततमोऽध्यायः ॥ १३८ ॥ छ ॥ सांबउवाच ॥ ॥ त्व
त्प्रसादान्मयाप्राप्तंरूपमेतत्पुरातनम् ॥ प्रत्यक्षदर्शनंचापिभास्करस्यमहात्मनः ॥ १ ॥ सर्वमेतत्तुसंप्राप्यपुनश्चिंताकुलंमनः ॥ देवस्यपरि
चर्यायाःपालनंकःकरिष्यति ॥ २ ॥ गुणयुक्तंद्विजंकिंचित्समर्थंपरिपालने ॥ ममैवानुग्रहंब्रह्मन्द्विजंव्याख्यातुमर्हसि ॥ ३ ॥ एवमुक्तस्तुसां
बेननारदःप्रत्युवाचतम् ॥ नाद्विजाःपरिगृण्हंतिदेवस्यस्वीकृतंधनम् ॥ ४ ॥ विद्यतेहिधनंह्यत्रगुरुश्चायंप्रतिग्रहः ॥ देवचर्यागतैर्द्रव्यैःक्रियाब्राह्मी
नविद्यते ॥ ५ ॥ अवज्ञयाचकुर्वंतियेक्रियांलोभमोहिताः ॥ अपांक्तेयाभवंतीहतेवैदेवलकाद्विजाः ॥ ६ ॥ देवस्वंब्राह्मणस्वंचयोलोभादुप
जीवति ॥ सपापात्मानरोलोकेगृध्रोच्छिष्टेनजीवति ॥ ७ ॥ ततोनब्राह्मणःकश्चिद्देवचर्यांकरिष्यति ॥ विधिज्ञंज्ञानवंतंचपरिचर्याक्ष
मंतथा ॥ ८ ॥ देवएवतदाख्यातुंतस्मात्तंशरणंव्रज ॥ अथवायदुशार्दूलउग्रसेनपुरोहितम् ॥ ९ ॥ गत्वागौरमुखंपृच्छसतेकामं
विधास्यति ॥ नारदेनैवमुक्तस्तुसांबोजांबवतीसुतः ॥ १० ॥ सुखासीनंगृहेवीरउग्रसेनपुरोहितम् ॥ कृतपूर्वाह्निकंवीरविप्रंगौरमु
खंनृप ॥ ११ ॥ विनयेनोपसंगम्यसांबोवाक्यमथाब्रवीत् ॥ मयाभानोःप्रसादेनकारितंविपुलंगृहम् ॥ १२ ॥ सपत्नीकंससै

१ गत्वा ब्रूहि महाबाहो यद्यसौ कुरुतेऽनघ ॥ ततः स गत्वासांबस्तु प्रणिपत्य महामुनिम् –इ०पा० ।

न्यंचपृथिव्यांसारवत्स्थितम् ॥ सर्वंतस्मिन्मयादत्तंकृतंमूर्तैश्चमंडलम् ॥ १३ ॥ तस्मादिष्टाविशिष्टेभ्योदेयंदानंमनोगतम् ॥ तत्सर्वं
ममसंप्रीत्यागृहाणत्वंमहामुने ॥ १४ ॥ सांबवाक्यमिदंश्रुत्वाप्रत्युवाचमहामुनिः ॥ ॥ गौरमुखउवाच ॥ ॥ ब्रवीम्यहमशेषेण
यथावदनुपूर्वशः ॥ १५ ॥ अहंविप्रोभवान्राजासचदेवपरिग्रहः ॥ अपरस्परमेवंतुग्रहणंमेविरुध्यते ॥ १६ ॥ ब्रह्मविद्याप्रणीतानिस्वकर्मा
णिद्विजातयः ॥ कुर्वाणानप्रहीयन्तेअन्यथाभिन्नवृत्तयः ॥ १७ ॥ क्षांतिर[1]ध्यापनंजापःसत्यंचयदुनंदन ॥ एतानिविप्रकर्माणिनदेवार्थ[2]परिग्रहः
॥ १८ ॥ यदिदेवा[3]र्थदानंस्यात्ततोदेवलकाद्विजाः ॥ देवद्रव्याभिलाषश्चब्राह्मण्यंतुविमुंचाति ॥ १९ ॥ देवद्वारेचयद्दानंब्राह्मणायप्रयच्छाति ॥
द्वावेतौपापकर्तारावात्मदोषेणमानवौ ॥ २० ॥ देवा[4]र्थदानंवार्ष्णेययद्गृहीत्वाचयोद्विजः ॥ श्राद्धेवायदिवासत्रेतज्जुहोतिददातिवा ॥ २१ ॥
भिन्नवृत्तोद्विजःपापोराक्षसःसोऽभिजायते ॥ द्विजोदेवलकोयत्रपंक्त्यांभुंक्तेमहीपते ॥ २२ ॥ अन्नान्युपस्पृशेन्नीचासापंक्तिःपापमाचरेत् ॥
द्विजोदेवलकोयस्यसंस्कारंसंप्रयच्छति ॥२३॥ सोऽधोमुखान्पितॄन्त्सर्वानाक्रम्यविनिपातयेत् ॥ आत्मानंपातयेद्यस्तुसोन्यानुद्धरतेकथम् ॥
॥ २४ ॥ उद्धरिष्यातिचात्मानमित्येषाकल्पनाधमा ॥ योहठाञ्च[5]भयाच्चैवकुरुतेरविवेश्मनि ॥ २५ ॥ विद्यतेनापिविप्रेभ्यःपततेविप्रदूषकः
॥ सप्रतिग्रहमंत्रेणद्विजोश्नातिपरिग्रहम् ॥ २६ ॥ देवप्रतिग्रहार्थेषुवेदवाक्यंनविद्यते ॥ तस्माद्राजानदेवार्थंविप्रेदद्यात्कथंचन ॥ २७ ॥
ब्रह्मसूत्रमहंछित्त्वागमिष्यामीतिगम्यताम् ॥ ॥ सांबउवाच ॥ ॥ अग्राह्यंचेद्विजातिभ्यःकस्मैदेयमिदंमया ॥ २८ ॥ श्रुतंवादृष्टपूर्वं
वातन्मेव्याख्यातुमर्हसि ॥ ॥ गौरमुखउवाच ॥ ॥ मगायसंप्रयच्छत्वंपुरमेतच्छुभंविभो॥२९॥ तस्याधिकारोदेवान्नेदेवतानांचपूजने ॥
॥ ॥ सांबउवाच ॥ ॥ कोयंमगेतितेप्रोक्तःक्ववासौवसतेविभो ॥ ३० ॥ कस्यपुत्रोद्विजश्रेष्ठकिमाचारःकिमाकृतिः ॥ ॥ गौरमुख
उवाच ॥ ॥ योऽयंमगेतिवैप्रोक्तोमगोदिव्योद्विजोत्तमः ॥ ३१ ॥ निक्षुभा[6]र्यांसुतोवीरआदित्यात्मजउच्यते ॥ ॥ सांबउवाच ॥ ॥

१ अध्ययनम्-इ०पा० । २ देवान्नपरिग्रहः-इ०पा० । ३ देवान्नदानम्-इ०पा० । ४ देवान्नदानम्-इ०पा० । ५ लोभाच्च-इ०पा० । ६ निक्षुभाग्निसुतः-इ०पा० ।

कथंसानिक्षुभापुत्रःकथंवीरसुतस्तथा ॥ ३२ ॥ कथंचादित्यतनयोमगोऽसावुच्यतेनघ ॥ ॥ गौरमुखउवाच ॥ ॥ मानुषत्वंगतादेवी
निक्षुभाकिलयादव ॥ ३३ ॥ गताशापमवाप्येहभास्कराल्लोकपूजिता ॥ गोत्रंमिहिरमित्याहुस्तस्मैब्राह्मण्यमुत्तमम् ॥ ३४ ॥ सुजिह्वो
नामधर्मात्माऋषिपुत्रःपुरानघ ॥ तस्यात्मजासमुत्पन्नानिक्षुभासावरांगना ॥ ३५ ॥ रूपेणाप्रतिमालोकेहारलीलामतातुसा ॥ पितुर्नियो
गात्साकन्याविहरेज्जातवेदसम् ॥ ३६ ॥ विहरन्त्यायथान्यायंसमिद्धःपावकस्तथा ॥ अथतांदेवदेवेशोह्यंशुमालीददर्शह ॥ ३७ ॥ रूपयौ
वनसंपन्नांततःकामवशंगतः ॥ चिंतयामासदेवेशःकथंतांवैभजाम्यहम् ॥ ३८ ॥ अनयावह्नितोयोऽयंपावकोदेवपूजितः ॥ वनमाविश्यत
न्वंगींभजेयंलोकपूजिताम् ॥ ३९ ॥ इतिसंचिंत्यदेवेशःसहस्रांशुर्दिवस्पतिः ॥ विवेशपावकंवीरतत्पुत्रश्चाभवत्तदा ॥ ४० ॥ ततोविलास
लावण्यरूपयौवनशालिनी ॥ समिद्धंलंघयित्वाग्निंजगामायतलोचना ॥ ४१ ॥ क्रुद्धःस्वरूपमास्थायदृष्ट्वाकन्यांसपीडितः ॥ करंकरेणसंगृ
ह्यततस्तांहव्यवाहनः ॥ ४२ ॥ उवाचयदुशार्दूलनोदितोभास्करेणतु ॥ वेदोक्तंविधिमुत्सृज्ययथाहंलंघितस्त्वया ॥ ४३ ॥ तस्मान्मत्तः
समुत्पन्नोनचपुत्रोभविष्यति ॥ जरशब्दइतिख्यातोवंशकीर्तिविवर्धनः ॥ ४४ ॥ अग्निजात्यामगाःप्रोक्ताःसोमजात्याद्विजातयः ॥ भोजका
दित्यजात्याहिदिव्यास्तेपरिकीर्तिताः ॥४५॥तामेवमुक्त्वाभगवानादित्योऽन्तरधीयत॥अथोत्पन्नांप्रजांज्ञात्वाध्यानयोगेनवैऋषिः ॥ ४६ ॥
पतितःस्यान्महातेजाऋजिह्वःसुमहामतिः ॥ शापमुद्यम्यतेजस्वीऋजिह्वावाक्यमब्रवीत् ॥ ४७ ॥ आत्मापराधात्कामिन्यायथागर्भोनला
वृतः ॥ संभूतस्तेमहाभागेअपूज्योऽयंभविष्यति ॥ ४८ ॥ पुत्रशोकाभिसंतप्तावाल्यपर्याकुलेक्षणा ॥ चिंतयामासदुःखार्तातमेकंज्वलना
कृतिम् ॥ ४९ ॥ ततोदेववरिष्ठस्यममयोनिसमुद्भवः ॥ अयंदत्तोमहाशापःपूज्यतांकर्तुमर्हसि ॥ ५० ॥ भवेत्पूज्योहिमेपुत्रोदेवेश्वरतथाकु
रु ॥ एवंचिंतयमानस्तुभगवानर्यमाकिल ॥ ५१ ॥ आग्नेयंरूपमाश्रित्यचेदंवचनमब्रवीत् ॥ स्निग्धोगंभीरानिर्घोषःशांतोज्वरविवर्जितः॥५२॥
ऋजिह्वःसुमहातेजाधर्मंचरातिसुव्रत ॥ तेनोत्सृष्टंमहाशापंनान्यथाकर्तुमुत्सहे ॥ ५३ ॥ किंतुकार्यंगरीयस्त्वादात्मनोयोग्यमुत्तमम् ॥तवपुत्रं
विधास्यामिचापूज्यंवेदपारगम् ॥५४॥ वंशश्चसुमहांस्तस्यनिवासिष्यतिभूतले ॥ ममांगानिमहात्मानोवसिष्ठाब्रह्मवादिनः ॥५५॥ मद्रायना

मद्यजनामद्भक्तामत्परायणाः ॥ ममशुश्रूषकाश्चैवममचव्रतचारिणः ॥ ५६ ॥ त्वांचमांचयथान्यायंवेदतत्त्वार्थदर्शिनः ॥ पूजयिष्यंतिनिरताः
सदामद्भावभाविताः ॥५७॥ मत्कर्मणांमदंगानांमद्भावविनिवेशनात् ॥ विरजामत्प्रसादेनमामेवैष्यंत्यसंशयम् ॥५८॥ जटाश्मश्रुधरानित्यं
सदामयिपरायणाः ॥ पंचकालविधानज्ञावीरकालस्ययाज्विनः ॥५९॥ पूर्णैकदक्षिणेपाणौवर्मवामेनधारयन् ॥ पतिदानेनवदनंप्रच्छाद्यानियतः
शुचिः ॥ ६० ॥ प्राणंहिमहतांकृत्वाततोभुंजीतवाग्यतः ॥ अयमाद्याप्रसादाच्चव्याकुलेंद्रियचेतसा ॥ ६१ ॥ विधिहीनंमंत्रहीनंयेयजिष्यंति
मामतः ॥ तेपिस्वर्गाच्च्युताःक्षांतारमंतेसूर्यसान्निधौ ॥ ६२ ॥ एवंविधास्तवसुताभविष्यन्तिमहीतले ॥ मगवंशेमहात्मानोवेदवेदांगपारगाः
॥ ६३ ॥ एवमाश्वास्यतांदेवींभास्करोवारितस्करः ॥ अंतर्दधेमहातेजाःसाचहर्षमवापह ॥६४॥ एवमेतेसमुत्पन्नाभोजकाःकृष्णनंदन ॥
विष्णुभास्तेतथादित्याउत्पन्नालोकपूजिताः ॥ ६५ ॥ तेषामेतत्पुरंदेहिपर्याप्तस्तेप्रतिग्रहः ॥ त्वदीयस्यास्यमेवीरतथाभास्करपूजने
॥ ६६ ॥ तस्यगौरमुखस्यैवंवाक्यंश्रुत्वासयादवः ॥ सांबोजांबवतीपुत्रःप्रणम्याशिरसोक्तवान् ॥६७॥ क्ववसंतेमहात्मानएतेभास्करपुत्रकाः
॥ भोजकाद्विजशार्दूलयेनतानानयाम्यहम् ॥६८॥ गौरमुखउवाच ॥ ॥ नाहंजानेमहाबाहोवसंतेयत्रवैमगाः ॥ रविस्ताञ्जानतेवीरतस्मात्त्वं
शरणंव्रज ॥ ६९ ॥ ब्राह्मणेनैवमुक्तस्तुप्रणम्याशिरसारविम् ॥ जगादभास्करंसांबःकस्तेपूजांकरिष्यति ॥ ७० ॥ विज्ञप्तस्त्वेवसांबेनप्र
तिमातमुवाचह ॥ नयोग्याःपरिचर्यायांजंबूद्वीपेममानघ ॥ ७१ ॥ ममपूजाकरंगत्वाशाकद्वीपादिहानय ॥ लवणोदात्परेपारेक्षीरोदेनसमा
वृतम् ॥ ७२ ॥ जंबूद्वीपात्परंयस्माच्छाकद्वीपइतिस्मृतम् ॥ तत्रपुण्याजनपदाश्चतुर्वर्णसमन्विताः॥७३॥मगाश्चमगगाश्चैवगानगामंदगास्त
था ॥ मगाब्राह्मणभूयिष्ठामगगाःक्षत्रियाःस्मृताः ॥ ७४ ॥ वैश्यास्तुगानगाज्ञेयाःशूद्रास्तेषांतुमंदगाः ॥ नतेषांशंकरःकश्चिद्धर्माश्रयकृते
क्वचित् ॥ ७५ ॥ धर्मस्यास्यविचारंवाह्येकतः सुखिनःप्रजाः ॥ तेजसस्तेमदीयस्यनिर्मिताविश्वकर्मणा ॥ ७६ ॥ तेभ्योवेदास्तुचत्वारः
सरहस्यामयोदिताः॥वेदोक्तैर्विविधैःस्तोत्रैःपरैर्गुह्यैर्मयाकृतैः ॥ ७७ ॥ मामेवतेचध्यायन्तेयजंतेमांचनित्यशः ॥ मन्मानसामद्यजनामद्भक्ता

१ मानसाः–इ०पा० ।

मत्परायणाः ॥ ७८ ॥ ममशुश्रूषकाश्चैवममचव्रतचारिणः ॥ अव्यंगधारिणश्चैवविधिदृष्टेनकर्मणा ॥ ७९ ॥ कुर्वंतितेसदाभद्रंममपूजां
ममानुगाः॥तथादेवाःसगंधर्वाःसिद्धाश्चसहचारणैः ॥८०॥ विहरंतेरमंतेचदृश्यमानाश्चतैःसह ॥ जंबूद्वीपेत्वहंविष्णुर्वेदवेदांगपूजितः ॥८१॥
शक्रोऽहंशाल्मलेद्वीपेक्रौंचद्वीपेत्वहंभगः ॥ प्लक्षद्वीपेत्वहंभानुःशाकद्वीपेदिवाकरः ॥ ८२ ॥ पुष्करेचस्मृतोब्रह्मातत्राहंमहेश्वरः ॥ तान्म
गान्ममपूजार्थंशाकद्वीपादिहानय ॥ ८३ ॥ आरुह्यगरुडंसांबशीघ्रंगत्वाविचारयन् ॥ तथेतिगृह्यतामाज्ञांरवेर्जांबवतीसुतः ॥ ८४ ॥ पुन
र्द्वारवतींगत्वाकान्त्यातीवसमन्वितः ॥ आख्यातवान्पितुःसर्वंस्वकीयंदेवदर्शनम् ॥८५॥ तस्माच्चगरुडंलब्ध्वाययौसांबोभिरुह्यतम्॥शाक
द्वीपमनुप्राप्यसंप्रहृष्टतनूरुहः ॥ ८६ ॥ तत्रापश्यद्ययोद्दिष्टान्सांबस्तेजस्विनोमगान् ॥ विवस्वंतंपूजयंतोधूपदीपादिभिःशुभैः ॥ ८७ ॥
सोऽभिवाद्यचतान्पूर्वंकृत्वाप्येषांप्रदक्षिणाम् ॥ पृष्ट्वाचानामयंतेषांप्रशंसासामपूर्वकम् ॥ ८८ ॥ यूयंहिपुण्यकर्माणोद्रष्टव्याथंशुभार्थिना ॥
येरतार्कस्यपूजायांयेषांचैववरप्रदः ॥ ८९ ॥ तनयंवित्तमांविष्णोःसांबनाम्नाचविश्रुतम् ॥ चंद्रभागातटेचापिमयासूर्योनिवेशितः ॥ ९० ॥
तेनाहंप्रेषितश्चात्रउत्तिष्ठध्वंव्रजामहे ॥ तेतमूचुस्ततःसांबमेवमेतन्नसंशयः ॥ ९१ ॥ अस्माकमपिदेवेनव्याख्यातंपूर्वमेवाहि ॥ अष्टादश
कुलानीहमगानांवेदवादिनाम् ॥ ९२ ॥ यास्यंतियेत्वयासार्धंयथादेवेनभाषितम् ॥ ततस्तानिदशाष्टौचकुलानीहसमंततः ॥ ९३ ॥
आरोप्यगरुडंसांबस्त्वरितःपुनरभ्यगात् ॥ सोऽल्पेनैवतुकालेनप्राप्तोमित्रवनंततः ॥ ९४ ॥ कृत्वाज्ञांतुरवेःसांबःकृत्स्नंत्वेवंन्यवेदयत् ॥
रविःशोभनमित्युक्त्वाप्रसन्नःसांबमब्रवीत् ॥९५॥ ममपूजाकराह्येतेप्रजानांशांतिकारकाः ॥ ममपूजांकरिष्यंतिविधानोक्तांयदूत्तम ॥९६॥
तत्कृतेनपुनःश्वेतातवकाचिद्भविष्यति॥९७॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेभोजकानयनंनामैकोनचत्वारिं
शदुत्तरशततमोऽध्यायः ॥ १३९ ॥ छ ॥ ॥ सुमन्तुरुवाच ॥ ॥ एवंसआनयित्वातुमगान्सांबोमहीपते ॥ समहात्मापुरासांबश्चंद्रभागास
रित्तटे ॥ १ ॥ पुरंनिवेशयामासस्थापयित्वादिवाकरम् ॥ कृत्वाधनसमृद्धंतुभोजकानांसमार्पयत् ॥ २ ॥ तत्पुरंसवितुःपुण्यंत्रिषुलोके



१ शिवः-इ०पा० ।

षुविश्रुतम् ॥ सांबेनकारितंयस्मात्तस्मात्सांबपुरंस्मृतम् ॥ ३ ॥ तस्मिन्प्रतिष्ठितोदेवःपुरमध्येदिवाकरः ॥ सत्कृत्यस्थापिताःसर्वेआत्म
नामांकितेपुरे ॥ ४ ॥ मगानांतुसदाचारोदृष्टाचारकुलोचितः ॥ देवशुश्रूषणंगीतंवेदप्रोक्तेनकर्मणा ॥ ५ ॥ कृतकृत्यस्तदासांबोवरं
लब्ध्वापुनर्युवा ॥ आदिदेवंसुरज्येष्ठमादित्यंप्रणिपत्यसः ॥ ६ ॥ अनंतरंमगान्सर्वान्प्रणिपत्याभिवाद्यच ॥ प्रास्थतोनिर्मलःसांबःपुरीं
द्वारवतींतदा ॥ ७ ॥ मगानांकारणार्थेनप्रार्थिताभोजवंशजाः ॥ वसुदेवस्यपौत्रेणगोत्रजेनमहात्मना ॥ ८ ॥ कन्यादानंकृतंतेषां
मगानांभोजकोत्तमैः ॥ सर्वास्ताःसहिताःकन्याःप्रवालमणिभूषिताः ॥ ९ ॥ अर्चयित्वातुताःसर्वाःप्रेषिताःसवितुर्गृहम् ॥ पुनर्गत्वातु
सांबेनपृष्टोदेवोदिवाकरः ॥ १० ॥ मगानांज्ञानमाख्याहिवेदानव्यंगमेवच ॥ सांबस्यवचनंश्रुत्वाभास्करोवाक्यमब्रवीत् ॥ ११ ॥ पृच्छ
त्वंनारदंगत्वासतेसर्वंवदिष्यति ॥ एवमुक्तोऽथवैसांबोगतवान्नारदंप्रति ॥ १२ ॥ गत्वाकृत्स्नमिदंसर्वंतस्मैतेननिवेदितम् ॥ सचाप्याहत
तःसांबंनजानेज्ञानमुत्तमम् ॥ १३ ॥ भोजकानांयदुश्रेष्ठज्ञानंव्यासोमहामुनिः ॥ तंगत्वापरिपृच्छत्वंप्रणम्याशिरसामुनिम् ॥ १४ ॥ कृष्णोप
रोधात्तेसर्वंसवक्ष्यतिनसंशयः॥ नारदेनैवमुक्तस्तुसांबोजांबवतीसुतः ॥१५॥ व्यासाश्रमंसगत्वातुप्रणम्यशिरसामुनिम् ॥कृतांजलिपुटोभूत्वा
इदंवचनमब्रवीत् ॥ १६ ॥ शाकद्वीपंमयागत्वाआनीतामगपुंगवाः ॥ बालायौवनसंपन्नाःसंनिविष्टामगोत्तमाः ॥ १७ ॥ सत्कृत्यपूजयित्वा
तुपुरंतेषांसमर्पितम् ॥ संप्राप्यतुपुरंतेवैज्येष्ठमध्यकनीयसः ॥ १८ ॥ भोजवंशसमुत्पन्नाःकन्यकाःसमलंकृताः ॥ वरयित्वाकृतंतेषांविप्र
प्रणयनंशुभम् ॥ १९ ॥ अहोसभाग्याःश्लाघ्याश्चकृतपुण्याश्चतेसदा ॥ पूजायांयेरताभानोर्येषांचैववरप्रदः ॥ २० ॥ पर्याप्तंसर्वमेतेषामिह
चामुष्मिकंफलम् ॥ अनित्येसातेमानुष्येदेवपूजारताहिये ॥ २१ ॥ किंतुचिन्तयतःसूर्यंचिंतयित्वातुभोजकान् ॥ ज्ञानंप्रतितथाचैषांहृद
येसंशयोमम ॥२२॥ कथंपूजाकराह्येतेकिंमगाःकिंचभोजकाः ॥ ज्ञानंकिंपरमंतेषांज्ञेयस्तेषांकएवतु ॥ २३ ॥ दिव्यातितेकथंप्रोक्ताःकिमर्थं
कूर्चधारणम् ॥ सौरव्रतंकिमर्थंतुवाचकास्तेकथंस्मृताः ॥ २४ ॥ किमर्थंतेजसावेदान्गायन्तश्चैवतेकथम् ॥ अथाहिकंचुकस्यांगंकिंप्रमाणंच

१ वेदसाध्यं हि-इ०पा०।

कस्यवै ॥ २५ ॥ कस्यवैकासमाख्यातायदुत्पन्नंकथंस्मृतम् ॥ कथंदेवांश्चगायंतियज्ञंकुर्वंतितेकथम् ॥ २६ ॥ अग्निहोत्रंचकिंतेषांपंच
दोलाश्चकाःस्मृताः ॥ एतत्सर्वंसमाख्याहिभोजकानांविचेष्टितम् ॥ २७ ॥ सांबस्यवचनंश्रुत्वाकृष्णद्वैपायनोमुनिः ॥ कालीसुतोमहाते
जाउवाचपरमंवचः ॥ २८ ॥ साधुसाधुयदुश्रेष्ठसाधुपृष्टोऽस्मिसुव्रत ॥ दुर्ज्ञेयंचेष्टितंकिंचिद्भोजकानांनसंशयः ॥ २९ ॥ भास्करस्य
प्रसादेनममापिस्मृतिमागतम् ॥ यथाख्यातंवासिष्ठेनतथातेवच्मिकृत्स्नशः ॥ ३० ॥ मगानांचरितंश्रेष्ठंशृणुत्वंकृष्णनंदन ॥ ज्ञानवेदिनएवै
तेकर्मयोगंसमाश्रिताः ॥ ३१ ॥ श्रूयन्तेऋषयःसर्वेमौनेननियमस्थिताः ॥ भुंजतेचापिमौनेनसर्वेवैपरमर्षयः ॥ ३२ ॥ मुनिचर्याकृतस्तेपि
शाकद्वीपनिवासिनः ॥ तस्मान्मौनेनभोक्तव्यमगुणत्वमनिच्छता ॥ ३३ ॥ वचःसूर्यसमाख्यातंकारणंचवरंतथा ॥ अर्चयंतेचतांनित्यमर्च
यन्तश्चतेस्मृताः ॥ ३४ ॥ भोजकन्यासुजातत्वाद्भोजकास्तेनतेस्मृताः ॥ ब्राह्मणानांयथाप्रोक्तावेदाश्चत्वारएवतु ॥ ३५ ॥ ऋग्वेदोऽथयजु
र्वेदःसामवेदस्त्वथर्वणः ॥ ब्राह्मणोक्तास्तथावेदामगानामपिसुव्रत ॥ ३६ ॥ तएवविपरीतास्तु तेषांवेदाःप्रकीर्तिताः ॥ वेदोविश्वमदश्चैवावि
द्वद्वाङ्गिरसस्तथा ॥ ३७ ॥ वेदाह्येतेमगानांतुपुरोवाचप्रजापतिः ॥ मगावेदमधीयंतेवेदांगास्तेनतेस्मृताः ॥ ३८ ॥ शेषोनाममहाभागःस
र्वसत्वसुखावहः ॥ ससूर्यरथमासाद्यरथिभिःसहवर्षति ॥ ३९ ॥ यस्तस्यतुपुनर्मोकंसरवोहिंमहानकः ॥ वंदितव्योमगानांतुअस्त्रमंत्रेणनित्य
शः ॥ ४० ॥ यथास्त्रजोद्विजानांतुपूजाकालेप्रमीयते ॥ सर्वसंस्कारयज्ञेषुयथादर्भोद्विजातिषु ॥ ४१ ॥ पवित्राःकीर्तितास्तेषांतथाधर्मोम
गस्यतु ॥ एभिर्जयन्तिभूयिष्ठंतस्मिन्द्वीपेमगाधिपाः॥४२॥ विद्यावंतःकुलश्रेष्ठाःशौचाचारसमन्विताः॥यज्ञावमक्ताभक्ताश्चजपंतेमंत्रमादितः
॥४३॥ प्रियास्तुयदुशार्दूलभोजकायदुनंदन ॥ अस्त्रमिववैमंत्रोवेदस्यपरिपठ्यते ॥ ४४॥ सर्वेषांब्राह्मणानांतुसावित्रीपरिकल्प्यते॥अस्माकं
तुयदुश्रेष्ठमहाव्याहृतिपूर्विका ॥ ४५ ॥ अमोहकेनाथविमानभुंजीमौनेनचैवापियथाह्युक्तम् ॥ नचापिकिंचेत्स्मृतिकंस्पृशेच्चतच्चापिनात्रै
वचसंस्पृशेद्धि ॥ ४६ ॥ श्वसंत्यनिच्छंस्तुपरीक्षिपेत्तुस्त्वाभीष्टसूर्यंतुनमेत्सदैव॥यथायज्ञांहिमंत्रेणवेदप्रोक्तेनकर्मणा ॥ ४७ ॥ तत्त्वमन्यन्मगा



१ भक्ता मंत्रं जपंते च आदितः पुरुषोत्तम-इ०पा० ।

नांतुविधिमंत्रपुरस्कृतम् ॥ हविःसंपद्यतेयस्मात्तेनतेयज्विनःस्मृताः॥४८॥ यथाग्निहोत्रंप्रथितंद्विजानांतथाध्वहोत्रंविहितंमगानाम् ॥ अच्छं
चनामेतितदध्वरस्यमुनेर्वचोनात्रविचारणास्ति ॥४९॥पंचधूपाःप्रदातव्याःसिद्धिरस्येहसर्वदा॥दंडनायकवेलेद्वेत्रिसंध्यंभास्करस्यतु ॥५०॥
इतिश्रीभाविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेभोजकोत्पत्तिवर्णनंनामचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४० ॥ छ ॥
सांबउवाच॥भोजकानांयत्त्वयोक्तमव्यंगोदेहशोधकः ॥ व्रतबंधस्त्वसौप्रोक्तस्तेषांजातिश्चकास्मृता ॥ १ ॥ व्यासउवाच॥ तेपृष्टाभवतासर्वे
भोजकानांकुमारकाः ॥ किमाख्यातंततस्तैस्तुतदेवाचक्ष्वकृत्स्नशः ॥ २ ॥ सांबउवाच ॥ संनिवेशामयाप्रोक्ताभोजकानांसमंततः ॥
ममैवब्रूततत्वंतद्वर्णःकोऽत्रकथंस्थितः ॥३ ॥ ततस्तुभगवान्प्राहवाक्यंवाक्यविशारदः ॥ येत्वयोक्ताःश्रुताःसांबभोजकानांकुमारकाः॥ ४ ॥
ममैवैतेमगाज्ञेयाअष्टौशूद्रामदंगजाः ॥ एतद्बुद्धातुवचनंप्रणम्यशिरसारविम् ॥ ५ ॥ दत्ताभोजकुलोत्पन्नादशभ्योदशकन्यकाः ॥ ततस्तुमं
दकेभ्योपिदत्ताश्चाष्टौहिकन्यकाः ॥६॥ ततोनिवेशितंतेषांमयासांबपुरंस्मर ॥ दासकन्यास्तुयाश्चाष्टौभोजकन्याश्चयादश ॥ ७॥ एतास्तेषां
कुमाराणांज्ञेयास्तादशचाष्टच ॥ तत्रतेभोजकन्यासुद्विजैरुत्पादिताःसुताः ॥ ८ ॥ भोजकास्तान्गणान्प्राहुर्ब्राह्मणान्दिव्यसंज्ञितान् ॥
दासकन्यासुयेजातामंदगैरन्त्यसंज्ञितैः ॥ ९ ॥ मंदगानामतेज्ञेयाःसवितुःपरिचारकाः ॥ तेचविप्रपुरेतस्मिन्पुत्रदारशुभैर्वृताः ॥ १० ॥
स्वधर्मैर्यष्टुमारब्धैःशाकद्वीपेर्चितोरविः ॥ नानाविधैर्वैदिकैस्तुमंत्रैर्मुनिवरोत्तमाः ॥ ११ ॥ अव्यंगधारिणोमर्त्याःपूजयंतेदिवस्पतिम् ॥
दृष्ट्वाव्यंगंतुवैतेषांकौतूहलसमन्वितः ॥ १२ ॥ सांबःप्राहनमस्कृत्यभूयःसत्यवतीसुतम् ॥ कथंवरोऽयमव्यंगःकथितोमुनिसत्तम ॥ १३ ॥
कुतएषसमुत्पन्नःकस्माच्चसशुचिःस्मृतः ॥ बंधनीयःकदाचायंकिमर्थंचैवधार्यते ॥ १४ ॥ किंप्रमाणंचभगवन्व्यंगश्चायंकिमुच्यते ॥ ॥ सुमं
तुरुवाच ॥ ॥ श्रुत्वैवंवचनंव्यासोजांबवत्याःसुतस्यच ॥ १५ ॥ उवाचकुरुशार्दूलसाम्बंकालीसुतःसतु ॥ ॥ व्यासउवाच ॥
एतच्चमेयथोक्तस्त्वंजातिरेषांनसंशयः ॥ १६ ॥ अव्यंगस्यापितेवच्मिलक्षणंगदतःशृणु ॥ १७ ॥ इतिश्रीभाविष्येमहापुराणेब्राह्मेपर्वणिस
प्तमीकल्पेसांबोपाख्यानेभोजकजातिवर्णनंनामैकचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४१ ॥ ॥ छ ॥ ॥ व्यासउवाच ॥ देवताऋषयो

नागगंधर्वाप्सरसांगणाः ॥ यक्षरक्षांसिवैभानौनिवसंतिऋतुक्रमात् ॥ १ ॥ तत्रतुवासुकिर्व्यंदमुद्यत्सूर्यरथंजवात् ॥ स्वस्थानमाजगामाशुन
मस्कृत्यदिवाकरम् ॥ २ ॥ अव्यंगमेवसूर्यायप्रीत्यर्थैवैसमार्पयत् ॥ गांगेयभूषितंदिव्यंनातिरक्तासितंशुभम् ॥३॥बबंधतंचतत्प्रीत्यैमध्यभागे
तमात्मनः ॥ नागराजांगसंभूतोधृतोयस्माच्चभानुना ॥ ४ ॥ तत्तस्माद्धार्यतेसूर्यप्रीत्यैतद्भक्तिमिच्छता ॥ विधानेनचतत्त्वेनशुचिर्भवतिभो
जकः ॥ ५ ॥ नित्यंचधरणात्तस्यभवेत्प्रीतोदिवाकरः ॥ नधारयंतियेत्वेवंभोजकाःपूजकारवेः ॥ ६ ॥ सौरहीनानतेयाज्याउच्छिष्टानात्र
संशयः ॥ स्मृत्याचारेतेहिभग्नारविंनार्हातेपूजितुम् ॥ ७ ॥ पूजयंतोरविंतेहिनरकंयांतिरौरवम् ॥ नवैहसेत्रउत्तिष्ठेद्यावदर्चालभंतिते ॥ ८ ॥
इत्थंज्ञात्वानसंदेहोह्यव्यंगेनाविनारविः ॥ नागराजस्यसंस्पृष्टोह्यासुरस्तेनसंस्मृतः ॥ ९ ॥ एकवर्णःसकर्तव्यःकार्यसिद्धिकरस्तथा ॥
प्रमाणेनांगुलानांतुशताद्द्विशतमुत्तरम् ॥ १० ॥ उत्कृष्टोऽयंप्रमाणेनमध्यमोविंशदुत्तरः ॥ शतमष्टोत्तरंह्रस्वोनतुह्रस्वतरस्ततः ॥ ११ ॥
तदाकृतिःकृतश्चैषनिर्मितोविश्वकर्मणा ॥ मध्यमेभोजकानांतुपरःशतउदाहृतः ॥ १२ ॥ संस्कृतोऽपिविनातेनशुचिर्नैवभवत्युत ॥
तेनास्यधारणाद्वीरशुचिरेवतदाभवेत् ॥१३॥ हविर्होमादिकाःसर्वाभवंत्यस्याक्रियाःशुभाः ॥ अव्यंगःपतितांगश्चअव्यंगोऽथमहीपते ॥१४॥
एषसारश्चसारस्यावैज्ञेयाजयनामभिः ॥ अहेरंगात्समुत्पन्नोह्यव्यंगस्तुततःस्मृतः ॥१५॥ यस्मादस्मादहेरंगमव्यंगस्तेनचोच्यते ॥ अर्हतिपूजा
यांधातोःप्रत्ययोण्वुलततःस्मृतः ॥ १६ ॥ पूजितश्चपवित्रश्चयस्मात्तेनार्हकःस्मृतः ॥ सारसार्तःस्मृतंरूपंप्रधानंसारउच्यते ॥ १७ ॥
षणभक्तौस्मृतोधातुस्तस्मात्सारसनःस्मृतः ॥ यस्मादर्चितमेवंतुसुवर्णमणिमौक्तिकैः ॥ १८ ॥ सज्ञेयःपतितांगस्तुनित्ययज्ञैरुदाहृतः ॥
इत्येतेकथितावीरअव्यंगाव्यंगभोजकाः ॥ १९ ॥ ऋद्धिवृद्धिकरोनित्यंकायशुद्धिकरस्तथा ॥ सर्ववेदमयश्चायंसर्वदेवमयस्तथा ॥ २० ॥
सर्वभूतमयःसांबसर्वलोकमयस्तथा ॥ मध्येऽस्यसंस्थितोब्रह्मामूलेविष्णुर्महामते ॥ २१ ॥ शशांकमौलिरन्त्येतुसंस्थितोयदुनंदन ॥
ऋग्वेदोऽस्यास्थितोमूलेयजुर्वेदोऽस्यमध्यगः ॥ २२ ॥अग्रेस्थितःसामवेदोग्रंथिर्मागिरसोनघ ॥ पृथिवीमूलमाश्रित्यास्थिताचयदुसत्तम॥२३॥
मूलाशनास्त्वपःसांबमध्येदेवोविभावसुः ॥ तासामनंतरंवातआकाशोऽग्रेसमास्थितः ॥ २४ ॥ मूलेस्थितस्तुभूर्लोकोभुवर्लोकस्तुमध्यगः ॥

स्वर्लोकश्चाग्रमाश्रित्यस्थितोऽव्यंगस्ययावता ॥ २५ ॥ एवंदेवमयःसांबएवंलोकमयस्तथा ॥ धारणीयोमहान्भक्त्यापूजकैःप्रीतयेरवेः॥२६॥
पूजयंतिरविंयेवैविनानेनयदूत्तम ॥ पूजाफलंनतेषांस्यान्नरकंचव्रजंतिहि ॥ २७ ॥ तथातेषांभवेन्नित्यमव्यंगोभोजकःसदा ॥ अन्यकाले
यदुश्रेष्ठइत्येतत्कथितंतव ॥ २८ ॥ बंधनेकारणंवीरभूषणानिचसुव्रत ॥ २९ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपा
ख्यानेव्यंगोत्पत्तिर्नामद्विचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४२ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ श्रुत्वैवमेवसांबेनव्यासात्सत्यवतीसुता
त् ॥ अव्यंगस्यचउत्पत्तिंपुनरागान्महामतिः ॥१॥ अथागत्यमहातेजाःसांबोगत्वाश्रमंपुनः ॥२॥ नारदस्यमहाबाहोर्नारदंवाक्यमब्रवीत् ॥
कथमुत्क्षिप्यवैधूपंभोजकैःसवितुर्मुने ॥ ३ ॥ स्नानमाचमनंचैवमर्घदानंमहात्मने ॥ सांबस्यवचनंश्रुत्वानारदोऋषिसत्तमः ॥ ४ ॥ उवाचकु
रुशार्दूलसांबंजांबवतीसुतम् ॥ हंततेकथयिष्यामिरवेर्धूपविधिक्रमम् ॥ ५ ॥ स्नानमाचमनंचैवस्वर्णदानंतथैवच ॥ आचांतस्त्रिस्त
तःस्नात्वावाससीनिर्मलेशुभे ॥ ६ ॥ अनार्द्रेसवसेच्चैवपवित्रेपरिधायच ॥ प्राङ्मुखोदङ्मुखोवापिआचामेच्चप्रयत्नतः ॥ ७ ॥ जलेजलस्थो
नाचामेज्जलादुत्तीर्ययत्नतः ॥ अप्सुसूर्यस्तथाग्निश्चमातादेवीसरस्वती ॥ ८ ॥ तस्मादुत्तीर्यचाचामेन्नाचामेत्तुजलाशये ॥ उपविश्यशुचौ
देशेप्रयतःप्रागुदङ्मुखः ॥९॥पादौप्रक्षाल्यहस्तौचअंतर्जानुस्तथाचमेत्॥प्रसन्नास्त्रिःपिबेदापःप्रयतःसुसमाहितः ॥१०॥ संमार्जनंतुद्विःकुर्या
त्रिभिरभ्युक्षणंपुनः ॥ मूर्धानंखानिचात्मानमुपस्पृश्यानुपूर्वशः ॥ ११ ॥ आचांतोऽर्कंनमस्कृत्यशौचेषुशुचितामियात् ॥ क्रियांयःकुरुते
मोहादनाचम्येहनास्तिकः ॥ १२ ॥ भवंतीहक्रियाःसर्वावृथातस्यनसंशयः ॥ शुचिकामाहिवैदेवावेदैरेवमुदाहृताः ॥ १३ ॥ इनोपास्या
कृतश्चैवसर्वैर्देवाःप्रयत्नतः ॥ शौचमेवप्रशंसंतिशौचांगानिविधीयते ॥ १४ ॥ आचांतोमौनमास्थायदेवागारंततोव्रजेत् ॥ श्वासरोधनिमि
त्तंतुप्राणमाच्छाद्यवाससा ॥ १५ ॥ शिरःप्रावृत्ययत्नेनकेशोदकनिवृत्तये ॥ ततःपूजांरवेःकुर्यात्पुष्पैर्नानाविधैःशुभैः ॥ १६ ॥ गायत्रींस
शिरस्कांचयजमानःप्रयत्नतः ॥ धूपंततोग्रेदद्यात्प्रथमंगुग्गुलाहुतिम् ॥ १७ ॥ पुष्पांजलिंततोगृह्यतच्छिखायांप्रयत्नतः ॥ रवेर्मूर्धनि
तंदद्याद्देवमंत्रमुदाहरन् ॥ १८ ॥ ॐव्रतेनयद्व्रातिनोवर्जयंतिदेवामनुष्याःपितरश्चसर्वे ॥ तस्यादित्यंप्रसरंचमनामहेयस्तेजसाप्रथमंना

विभाति ॥ १९ ॥ धूपवेलाःस्मृताःपंचधूपेष्वेवतुपंचसु ॥ हवनाद्याःक्रियाःपंचरक्षिष्येहंतथापुनः ॥ २० ॥ दंडनायकवेलातुप्रत्यृक्षे
ऋक्षदर्शनात् ॥ नाज्ञावेलाप्रदोषंतुतत्वकार्यविजानता ॥ २१ ॥ त्रिकालंतुरवेःपूजाकर्तव्यासूर्यदर्शनात् ॥ अधोदितस्तुपूर्वाह्णेततोर्द्धस्तुर
विर्विभुः ॥ २२ ॥ हेलयेतिचपूर्वाह्णेमध्याह्नेज्वलनायच ॥ तथैवमंडलेदेयंनीचाह्नेज्वलनायच ॥ २३ ॥ चंदनोदकमिश्राणिगंधोदकयुतानि
च ॥ पद्मानिकरवीराणितथारक्तोत्पलानिच ॥ २४ ॥ कुसुमोदकमिश्राणिकुरुंटकसुमंतथा ॥ गंधादीनिचदिव्यानिकृत्वावैताम्रभाजने ॥
॥ २५ ॥ धूपंदत्वाग्रयेवीरप्रयत्नाद्गुग्गुलाहुतिम् ॥ अर्घ्यपात्रंतदागृह्यकुर्यादावाहनंरवेः ॥ २६ ॥ एहिसूर्यसहस्रांशोतेजोराशेजगत्पते ॥
अनुकंपांहिमांकृत्वागृहाणार्घ्यंदिवाकर ॥ २७ ॥ अनेनावाहनंकृत्वाजानुभ्यामवनींगतः ॥ रवेर्निवेदयेदर्घ्यमादित्यहृदयेगतः ॥ २८ ॥
ॐनमोभगवतेआदित्यायविश्वायखेशायब्रह्मणेलोककर्तृणे ॥ ईशानायपुराणायसहस्राक्षायतेनमः ॥२९॥ ॐसोमायऋग्यजुरथर्वाय ॐभूर्भु
वःस्वः ॐमहःॐजनःॐतपःॐसत्यंब्रह्मणेमुंडेमध्येपुरतः ॥ आदित्यायनमः ॥ ३० ॥ ॥ नारदउवाच ॥ ॥ सावित्र्याश्वपरेतंत्रैत्रैलोक्य
कारिणेहिततःपरम् ॥ परितःपरिगृह्याथधूपभाजनमुत्क्षिपेत् ॥ ३१ ॥ निवेदयेत्ततोधूपंवाचमेतामुदीरयेत् ॥ त्वमेकएवरुद्राणांवसूनांच
पुरातनम् ॥ ३२ ॥ देवानांगीर्भिरभितःसंस्तुतःशाश्वतोदिवि ॥ पूर्वाह्णेचतथातेनमध्याह्नेचापरेणतु ॥ ३३ ॥ ॐनमोभगवतेज्ञानात्म
नेत्वांच ॥ विष्णोस्तत्परमंपदंसदापश्यंतिसूरयः ॥ ३४ ॥ दिवाकरस्तुसायाह्नेमंत्रेणार्घ्यंनिवेदयेत् ॥ ॐनमोवरुणायशंभवे ॥ ३५ ॥ ॐ
आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ३६ ॥ अनेनविधिनादत्वाधूपं
सूर्यायभोजकः ॥ उत्क्षिपेच्चैवधूपेनाविशेद्गर्भगृहंततः ॥ ३७ ॥ ततःप्रविश्यधूपंतुप्रतिमायैनिवेदयेत् ॥ मंत्रेणमिहिरायेतिनिक्षुभायेति
नित्यशः ॥ ३८ ॥ ततोराज्ञ्यैनमश्चेतिनिक्षुभायैततोनमः ॥ दंडनायकसंज्ञायपिंगलायचवैनमः ॥ ३९ ॥ तथाराज्ञायस्त्रोषायतथेशाय
गरुत्मते ॥ ततःप्रदक्षिणंकुर्वन्दिग्देवेभ्योनिवेदयेत् ॥ ४० ॥ दिंडिनेतुततोदद्याद्धेमंतायथदूत्तम ॥ महेश्वरायततोदद्यात्तथा
व्योमाययादव ॥ ४१ ॥ विश्वेभ्योदेवेभ्योनमः ॥ रुद्रेभ्योनमः ॥ ॐब्रह्मणेमुंडपतयेआदित्यायपुरुषेश्वरायसूर्यायनमोनमः ॥ ४२ ॥

ॐअनेककांतयेनत्वाशेषायवासुकितक्षककर्कोटकायपद्मशंखकुलिकेभ्योनागराजेभ्योनमः ॥ ४३ ॥ तलसुतलपातालआशालविशालरसातलादिभ्योदैत्यदानवपिशाचेभ्योनमः ॥ ततःप्रदक्षिणंकुर्यान्मातृकेभ्योनमोनमः ॥ ॐग्रहेभ्योनमः ॥ ४४ ॥ ॐदंडनायकायनमः ॥ ॐमार्तंडायनमः ॥ ॐविनायकायनमः ॥ ४५ ॥ एवमुद्दिश्यनामानिधूपंदत्त्वावरानन ॥ उत्क्षिप्तोयत्रवैधूपोमुक्त्वातत्रैवतंपुनः ॥ ४६ ॥ सूर्यंगुप्तैरभिष्टूयएवंविज्ञायतेततः ॥ अर्चितस्त्वंतथाशक्त्यामयाभक्त्याविभावसो ॥ ४७ ॥ ऐहिकामुष्मिकींनाथकार्यसिद्धिंददस्वमे ॥ एवंत्रिषवणंस्नात्वायोऽर्चयेत्प्रणतोरविम् ॥ ४८ ॥ विधिनातुयथोक्तेनसोऽश्वमेधफलंलभेत् ॥ यश्चैवंकुरुतेनित्यंयथोक्तंधूपविस्तरम् ॥ ४९ ॥ सपुत्रवानरोगीचमृतःसंलीयतेरवौ ॥ विधिनातुयथोक्तेनक्रियमाणानियत्नतः ॥ ५० ॥ सर्वकार्याणिसिद्ध्यंतिसफलानिभवंतिच ॥ पुष्पंश्रेष्ठंयदानस्यात्पत्राणिसमुपाहरेत् ॥ ५१ ॥ पत्रंनस्यात्ततोधूपंधूपंनस्यात्ततोजलम् ॥ सर्वंनस्याद्यदाचैवप्रणिपातेनपूजयेत्॥५२॥अशक्तःप्रणिपातस्यमनसापूजयेद्रविम्॥ असंभवेतुद्रव्याणांविधिरेषप्रकीर्तितः ॥५३॥ द्रव्याणांसंभवेचैवसर्वमेवोपहारयेत् ॥ मंत्रात्कर्मयुतोयस्तुमित्रेधूपंनिवेदयेत् ॥५४॥ उच्चारणाच्चवैतेषांधूपप्रीतोभवेद्रविः ॥ शिरोनासामुखंचैवभृशमावृत्ययत्नतः ॥५५॥ पूजयेद्भास्करंवीरशिथिलंतुनकारयेत् ॥ नलिनेनतुराजेंद्रनरोयातिदिवाकरम् ॥ ५६ ॥ तस्माद्युक्तंसदाकार्यंपूज्यंतेचादिवाकरम् ॥ तेऽश्वमेधफलंप्राप्यसूर्यलोकंव्रजंतिहि ॥५७॥ धूपेनपूज्यमानेतुनराःपश्यंतियादव ॥ यांतितेपरमंस्थानंयत्रपश्यंतिसूरयः ॥ ५८ ॥ क्रियमाणंतथार्कंचभक्त्यापश्यंतियेनराः ॥ सर्वान्कामानिहप्राप्यतेयांतिपरमंपदम् ॥ ५९ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेधूपादिविविधविधिवर्णनंनामत्रयश्चत्वारिंशदुत्तरशततमोऽध्यायः॥ १४३ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ अथाजगामभगवान्व्यासोद्वारवतींपुरीम् ॥ द्रष्टुंनारायणंदेवंशंखचक्रगदाधरम् ॥ १ ॥ तमागतमृषिंदृष्ट्वावासुदेवोविशांपते ॥ अभ्युत्थायमहातेजाःपूजयामासभारत ॥ २ ॥ स्वयमेवासनंदत्त्वापाद्यमर्घ्यंतथैवच ॥ पप्रच्छप्रयतोभूत्वाव्यासंसत्यवतीसुतम् ॥ ३ ॥ यएतेभोजकाविप्राआनीतामत्सुतेनवै ॥ शाकद्वी

१ विवृतामिति पाठः ।

पमितोगत्वाज्ञानिनोमोक्षगामिनः ॥ ४ ॥ तान्दृष्ट्वारूपतोविप्रप्रवेशात्कर्मतस्तथा ॥ कौतूहलंसमुत्पन्नंहर्षश्चपरमोमम ॥ ५ ॥ कथमेतेक्षण
मपितिष्ठंतेपृथिवीतले ॥ येषांरविःसदापूज्योयेषांमुक्तिःसदावसेत् ॥ ६ ॥ नागत्वाभोजकत्वंहिमोक्षमाप्नोतिकश्चन ॥ इदंमेमनसोब्रह्मन्सदासं
प्रतिभातिवै ॥ ७ ॥ व्यासउवाच ॥ ॥ एवमेवयथात्थत्वंशंखचक्रगदाधर ॥ धन्याएतेमहात्मानोभोजकानात्रसंशयः ॥ ८ ॥ येपूजयंति
सततंभानुमंतंदिवाकरम् ॥ ज्ञानिनःकर्मनिष्ठाश्चसदामोक्षगतिंगताः ॥ ९ ॥ यजंतेसततंभानुंबलिपुष्पफलैस्तथा ॥ अन्नेनौषधिभिश्चैव
आज्यहोमैश्चकृत्स्नशः ॥ १० ॥ होमंचशाश्वतंकृत्वापरंहोमंततःश्रिताः ॥ परहोमस्यकरणात्पूतात्मानोह्यकल्मषाः ॥ ११ ॥ विशंतिपर
मांदिव्यांभास्करींतैजसींकलाम् ॥ कर्मणःसाधनेचैकातत्रचाग्नौप्रतिष्ठिता ॥ १२ ॥ वायुमार्गेस्थिताव्योम्निद्वितीयांतःप्रकाशिका ॥ ततः
परंतृतीयातुतत्स्मृतंसूर्यमंडले ॥ १३ ॥ मंडलंतच्चसवितुर्दिव्यंह्यजरमव्ययम् ॥ तस्याऽसौपुरुषोमध्येयोऽसौसदसदात्मकः ॥ १४ ॥ क्षरा
क्षरस्तुविज्ञेयोमहासूर्यस्तथैवच ॥ निष्कलःसकलश्चापिद्वौचतस्यप्रकल्पितौ ॥ १५ ॥ अक्षरःसकलश्चैवसर्वभूतव्यवस्थितः ॥ सतत्त्वःस
कलःप्रोक्तस्तत्त्वहीनस्तुनिष्कलः ॥ १६ ॥ तृणगुल्मलतावृक्षमृकसिंहद्विजाधिपान् ॥ सुरसिद्धमनुष्यांश्चस्थलजाञ्जलजान्हरेत् ॥ १७ ॥
व्यवस्थितःससर्वत्रसर्वेषामंतरात्मनि ॥ यदाकलपात्मकश्चैरद्वितीयांतनुमाश्रितः ॥ १८ ॥ निष्कलस्तुसदाज्ञेयःसंस्थितस्तैजसींकलाम् ॥
हिमंघर्मंचवर्षंचत्रैलोक्येकुरुतेसदा ॥ १९ ॥ द्वितीयायातनुस्तस्यअक्षरंतत्परंपदम् ॥ देवयानंतुपंथानंकर्मयोगेनसंस्थिताः ॥ २० ॥ आ
दित्यासिद्धांतरिताःसांख्ययोगाविदश्चये ॥ तेऽभिगच्छन्तितत्स्थानंसमोक्षःपरिकीर्तितः ॥ २१ ॥ निर्द्वंद्वोनिर्गमश्चैवतत्रगत्वानशोचति ॥
वेदेषुब्रह्मवदंतिध्यायंतेतत्ववेदिनः ॥ २२ ॥ ॐकारंतत्त्वतश्चापिध्यायंतेपुरुषोत्तम ॥ त्र्यक्षरंचतमोंकारंसार्धमात्रात्रयेस्थितम ॥ २३ ॥
वदंतिचार्धमात्रस्थंमकारंव्यंजनात्मकम् ॥ ध्यायंतियेमकारंयंज्ञानंतेहिसदात्मकम् ॥ २४ ॥ मकारोभगवान्देवोभास्करःपरिकीर्तितः ॥ मकार
ध्यानयोगाच्चमगाह्येतेप्रकीर्तिताः ॥ २५ ॥ धूपमाल्यैर्यतश्चापिउपहारैस्तथैवच ॥ भोजयंतिसहस्रांशुंतेनतेभोजकाःस्मृताः ॥ २६ ॥ इतिश्रीभविष्ये
महापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेभोजकस्योत्पत्तिवर्णनंनामचतुश्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४४ ॥ छ ॥ ॥ छ ॥

॥ वासुदेवउवाच ॥ ॥ ज्ञानोपलब्धिंविप्रेंद्रभोजकानांमहामुने ॥ ब्रूहितत्त्वंद्विजश्रेष्ठकौतुकंपरमंमम ॥ १ ॥ ॥ व्यासउवाच ॥
इमांज्ञानोपलब्धिंतुनिबोधगदतोमम ॥ अस्थिस्थूलंस्नायुयुतंमांसशोणितलेपनम् ॥ २ ॥ चर्मावनद्धंदुर्गंधिपूर्णंमूत्रपुरीषयोः ॥ जराशोक
समाविष्टंरोगायतनमातुरम् ॥ ३ ॥ रजस्वलमनित्यंचभूतावासमिमंत्यजेत् ॥ कपालंवृक्षमूलानिकुचैलमसहायता ॥ ४ ॥ समतासर्व
भूतेषुएवंमुक्तस्यलक्षणम् ॥ तिलेतैलंगविक्षीरंकाष्ठेपावकसन्ततिः ॥५॥ उपायंचिंतयेदस्याधियाधीरःसमाहितः ॥ प्रमाथिचप्रयत्नेनमनः
संयम्यचंचलम् ॥ ६ ॥ बुद्धींद्रियाणिसंयम्यशकुनानिवपंजरे ॥ इंद्रियैर्नियतैर्देहीधराभिरिवतृप्यते ॥ ७ ॥ सततममृतस्यैवजनार्दनमहा
मते ॥ प्राणायामैर्दहेद्दोषान्धारणाभिश्चकिल्बिषम् ॥ ८ ॥ प्रत्याहारेणसंसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ध्यायमानस्यदह्यंतेचांतिदोषैर्यथा
ग्निना ॥ ९ ॥ तथेंद्रियकृतादोषादह्यंतेप्राणनिग्रहात् ॥ चित्तंचित्तेनसंशोध्यभावंभावेनशोधयेत् ॥१०॥ मनस्तुमनसाशोध्यबुद्धिंबुद्ध्या
तुशोधयेत् ॥ चित्तस्यातिप्रसादेनभातिकर्मशुभाशुभम् ॥ ११ ॥ शुभाशुभविनिर्मुक्तोनिर्द्वंद्वोनिष्परिग्रहः ॥ निर्ममोनिरहंकारस्ततो
यातिपरांगतिम् ॥ १२ ॥ पूर्वाह्णेलोहितंरूपंप्रथममृङ्मयंस्मृतम् ॥ यजुर्मयंद्वितीयंतुश्वेतंमाध्याह्निकंस्मृतम् ॥ १३ ॥ कृष्णंतृतीयंसा
याह्नेसाम्नोरूपंतुतत्स्मृतम्॥प्रथमंराजसंदेवद्वितीयंसात्त्विकंस्मृतम् ॥ १४ ॥ तृतीयंतामसंरूपंत्रैगुण्यंतस्यकल्पितम् ॥ त्रयाणांव्यतिरेके
णचतुर्थंसूर्यमंडलम् ॥ १५ ॥ ज्योतिष्प्रकाशकंसूक्ष्मंप्रोक्तंदेवानिरंजनम् ॥ चतुर्थंतुवेदाविदःसूर्यासिद्धांतवेदिनः ॥ १६ ॥ ॐकारप्रणवैर्युक्ता
ध्याननिर्धूतकल्मषाः ॥ स्थिताःपद्मासनेवीरानाभिसंन्यस्तपाणयः॥१७॥सुषुम्नानाडिकामार्गंकुंभरेचकपूरकैः ॥ त्रिभिःसंशोध्यतापंचमरु
तोदेहमध्यगान् ॥ १८ ॥ पदांगुष्ठान्वितःस्विन्नमूर्ध्वमुत्क्षेपयेत्क्रमात् ॥ नाभिदेशेतुतंदृष्ट्वादेवमग्निमनामयम् ॥ १९ ॥ सोमंचहृदयेदृष्ट्वा
मूर्ध्निवाग्निशिखांततः ॥ वातरश्मिभिरासाद्यतांभित्त्वामंडलंपरम् ॥ २० ॥ ततःपरंतुयोगच्छेद्व्योमस्थःसूर्यमंडलम्॥तत्रगत्वानशोचंतितत्सौ
रंपरमंपदम् ॥ २१ ॥ देवार्चनंमहाबाहोकीर्तितंकेशिसूदन ॥ प्रथमंहृदयंस्थानंद्वितीयंचाग्निमाश्रितम् ॥ २२ ॥ तृतीयंनामसंस्थंचचतुर्थं
सूर्यमंडलम् ॥२३॥ स्थानंपरंवैपरमात्मसंस्थभानोःसुरेशस्यवदंतितज्ज्ञाः ॥ ज्ञेयःसमोक्षश्चनृणांसएवसंसारविच्छित्तिकरंपदंततः ॥ २४ ॥

१ वायुना चापि किल्बिषम्–इ०पा० ।

इदममृतसमंपरस्यवेद्यंकिरणसहस्रभृतोहितंजनानाम् ॥ ऋषिचरितमवेत्यतत्त्वसारंव्यपगतमोहाधियःप्रयांतिमोक्षम् ॥ २५ ॥ इदंमगान
चरितंमयातेप्रख्यापितंयानवरेणयुक्तम् ॥ ज्ञात्वात्विमंमोक्षविदोवदंतिसिद्धाश्चतत्स्थानमवाप्नुवंति ॥ २६ ॥ यन्मत्प्रोक्तमिदंज्ञानंदेयंश्रद्धा
वतांनृणाम् ॥ नास्तिकानामबुद्धीनांनदेयंभूतिमिच्छता ॥ २७ ॥ ॥ सुमंतुरुवाच ॥ इत्युक्त्वाभगवान्व्यासोभोजकज्ञानमुत्त
मम् ॥ नारायणंमहाबाहोजगामायतनंहरेः ॥ २८ ॥ ख्यातंयत्रिषुलोकेषुगंगयापरिशोभितम् ॥ बदर्यामंडितंवीरनरनारायणाश्रमम् ॥२९॥
इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेभोजकज्ञानवर्णनंनामपंचचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४५ ॥ ॥ छ ॥ ॥ शता
नीकउवाच ॥ ॥ यएतेभोजकाःप्रोक्तादेवदेवस्यपूजकाः ॥ नान्नंभोज्यमथैतेषांब्राह्मणैश्चकदाचन ॥ १ ॥ भास्करस्यप्रियाह्येतेपूज्यत्वं
चतथागताः ॥ दिव्याश्चैतेस्मृताविप्राआदित्यांगसमुद्भवाः ॥ २ ॥ अभोज्यत्वंकथंयाताभोजकास्तद्वदस्वमे ॥ किंकुर्वाणास्तथाकर्मभोज्य
तांयांतिमेवद ॥ ३ ॥ ॥ सुमंतुरुवाच ॥ ॥ इममर्थंपुरापृष्टोवासुदेवोमहीपते ॥ कृतवर्मणापुराराजंस्तथासांबोमहाबलः ॥ ४ ॥
गतौसांबपुरींवीरतथानारदपर्वतौ ॥ भुक्तवंतोगृहेसर्वेभोजकस्यमहात्मनः ॥ ५ ॥ आदित्यकर्मणोलोकेदेवान्नख्यातिमागताः ॥ तेनतेपूजि
ताःसर्वेभक्त्याभोज्यैरनेकशः ॥ ६ ॥ आगतास्तेपुरींवीरपुण्यांद्वारवतींविभोः ॥ तावृषीदिवमारूढौराजन्नारदपर्वतौ ॥ ७ ॥ वासुदेवंम
हातेजाहार्दिक्योवाक्यमब्रवित् ॥ यएतेभोजकाविप्रपूजकाभास्करस्यतु ॥ ८ ॥ अन्नमेषांकथंविप्राभुक्तवंतोजनार्दन ॥ तावृषीदिव्यमा
ख्यातौयातौनारदपर्वतौ ॥ ९ ॥ अभोज्याःकिलएतेवैब्राह्मणानांजनार्दन ॥ ॥ वासुदेवउवाच ॥ ॥ नतेभोज्यामहाबाहोभोज्याभो
जाश्चसर्वदा ॥ १० ॥ अभिवाद्यप्रयत्नेनयथादित्योमहामते ॥ आचरंतश्चतत्कर्मभोज्यत्वंप्रव्रजंतिते ॥ ११ ॥ तच्छ्रूयतांयदुश्रेष्ठयत्का
र्यंचापितैर्विभो ॥ यतमानैर्महाबाहोतादिहैकमनाःशृणु ॥ १२ ॥ वृषलीयस्यवैभार्यायश्चाव्यंगंनधारयेत् ॥ अभोज्यःसतुविज्ञेयोभोजको
नात्रसंशयः ॥ १३ ॥ अस्नातःपूजयेद्यस्तुतथाव्यंगविवर्जितः ॥ आदित्यंयदुशार्दूलतथाचाविधिनाविभो ॥ १४ ॥ सेवकोभोजकोयस्तु
शूद्रान्नंयेनभुज्यते ॥ कृषिंचकुरुतेयस्तुदेवार्चामपिवर्जयेत् ॥ १५ ॥ जातकर्मादयोयस्यनसंस्काराःकृताविभो ॥ आरुणेयैश्चमंत्रैश्चसावित्रीं

॥१४६॥

नचवैपठेत् ॥ १६ ॥ तस्यगेहेद्विजोभुक्त्वाकृच्छ्रपादेनशुध्यति ॥ पितृदेवमनुष्याणांभूतानांभास्करस्यतु ॥ १७ ॥ अकृत्वाविधिवत्पूजां यस्तुभुंक्तेसधर्महा ॥ अव्यंगेनविहीनोयःशंखहीनस्तथैवच ॥ १८ ॥ शिरसाधारयेत्केशान्सज्ञेयोभोजकाधमः ॥ देवार्चनंतथाहोमंस्नानं तर्पणमेवच ॥ १९ ॥ दानंब्राह्मणपूजांचकुर्वतोभोजकस्यतु ॥ अव्यंगेनविहीनस्यसर्वंभवतिनिष्फलम् ॥ २० ॥ सर्वदेवमयोह्येषसर्ववेदम यस्तथा ॥ अव्यंगोयदुशार्दूलपवित्रंपरमंस्मृतम् ॥ २१ ॥ भोजकानांयदुश्रेष्ठतस्यमूलेस्थितोहरिः ॥ मध्येब्रह्मामहातेजाअग्रेगोश्रुतिभूषणः ॥ २२ ॥ ऋग्वेदोयस्यमूलस्थोमध्येसामानिकृत्स्नशः ॥ यजुर्वेदस्तथाश्रेष्ठश्चाथर्वसहितःस्थितः ॥ २३ ॥ त्रयोऽग्नयस्तथाराजंस्त्रयोलो काःस्थिताःक्रमात् ॥ एवमेषपवित्रस्तुअव्यंगोभोजकस्यतु ॥ २४ ॥ यस्त्वनेनविहीनस्तुभोजकोभोजकाधमः ॥ अभोज्यःसतुविज्ञेयः सोऽशुचिर्नात्रसंशयः ॥ २५ ॥ निर्माल्यमथनैवेद्यंकुंकुमंदेवहेलिना ॥ येप्रयच्छंतिशूद्राणांविक्रीणंतिचभोजकाः ॥ २६ ॥ तेऽधमाभोजका ज्ञेयायेचदेवस्वहारिणः ॥ नपूजयंतिदेवेशंदेवस्वंक्षपयंतिच ॥२७॥ नतेदेवप्रियास्तातविज्ञेयाभोजकाधमाः ॥ अभुक्त्वायस्यनैवेद्यंभोजको ऽश्नातिमानद ॥ २८ ॥ तदन्नंभुंजतस्तस्यनरकायनशांतये ॥ नैवेद्यंभोजयेत्तस्माद्भास्करस्यनरःसदा ॥ २९ ॥ प्रथमंयदुशार्दूलसचदेहेवि शोधनम् ॥ ब्राह्मणानांयथावीरपुरोडाशंकायशोधनम् ॥ ३० ॥ भोजकानांतथावीरनैवेद्यंकायशोधनम् ॥ ३१ ॥ इति श्रीभविष्यमहापुराणे ब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेभोजकवर्णनंनामषट्चत्वारिंशदुत्तरशततमोऽध्यायः ॥१४६॥छ॥ वासुदेवउवाच ॥ ॥ अत्रपृष्टोयथा देवोभास्करोदेवपूजितः ॥ अरुणेनमहाबाहोकेप्रियाभोजकास्तथा ॥ १ ॥ पूजायांतवकेयोग्याःकेनयोग्याभवंतिच ॥ इतिपृष्टःसभगवा नरुणेनदिवाकरः ॥ २ ॥ यदुवाचमहाबाहोतादिहैकमनाःशृणु ॥ ॥ भास्करउवाच ॥ ॥ परदारान्परद्रव्यंयेनहिंसंतिभोजकाः ॥ ३ ॥ तेप्रियाममवैनित्यंयेननिंदंतिदेवतान् ॥ वाणिज्यंकृषिसेवांतुवेदानांनिन्दनंचये ॥ ४ ॥ कुर्वंतिभोजकाज्ञेयाःसर्वेतेममवैरिणः ॥ येषांभार्यासंग्रहणंकर्षणंयेप्रकुर्वते ॥ ५ ॥ नृपसेवांखगश्रेष्ठविज्ञेयाःपतितास्तुते ॥ भुंजतेयेचशूद्रान्नंज्ञेयास्तेशत्रवोमम ॥ ६ ॥ पूजाकृतातु यातैस्तुतथार्घ्यंचखगोत्तम ॥ पूजांतामथचाप्यर्घ्यंनाहंगृह्णामिखेचर ॥ ७ ॥ यंएतेकथितावीरयेचशंखविवर्जिताः ॥ निर्माल्यंयेमदीयं

१ ये वाव्यंगविहीनास्तु ये च सत्यविवर्जिताः—इ०पा० ।

तुनैवेद्यंकुंकुमंतथा ॥ ८ ॥ शूद्राययेप्रयच्छंतिविक्रीणंतिचयेखग ॥ यच्छंतियेचवैश्यायभोजकामेनतेप्रियाः ॥ ९ ॥ यजंतेयेचमांवित्रींमहा
श्वेतांचगोपतेः ॥ येनजानंतिमेमुद्रांकिंकराणांचनामतः ॥ १० ॥ यएतेकथितावीरभोजकास्तेमयाखग ॥ नैतेपूजयितुंशक्तायेप्रियाममभो
जकाः ॥११॥ तांच्छृणुष्वखगश्रेष्ठभूत्वाचैकाग्रमानसः ॥ देवद्विजमनुष्याणांपितॄणांचापिपूजकाः ॥१२॥ तेप्रियाममवैनित्यंशक्ताःपूजयितुंर
विम् ॥ येषांमुंडंशिरोनित्यंयेचाव्यंगसमन्विताः ॥ १३ ॥ वादयंतिचयेशंखंदिव्यास्तेभोजकामताः ॥ त्रिकालंयेचमांनित्यंसुस्नाताःक्रोधव
र्जिताः ॥ १४ ॥ पूजयंतिखगश्रेष्ठतेप्रियाममभोजकाः ॥ वारेमदीयेनक्तंतुषष्ठ्यांयेचप्रकुर्वते ॥ १५ ॥ सतम्यामुपवासस्तुतथासंक्रमणेम
म ॥ दिव्यास्तेब्राह्मणाज्ञेयाभोजकाममपूजकाः ॥ १६ ॥ पूजयंतिचयेविप्रान्मद्भक्तामत्परायणाः ॥ तेप्रियाःससतंमह्यंभोजकागरुडा
ग्रज ॥१७॥ मयिभक्तिंनकुर्वंतिब्राह्मणान्पूजयंतिनो ॥ नतेपूज्यानवंद्याश्चयेद्विषंतिचमांसदा ॥१८॥ येकुर्वंतिमहायज्ञान्भोजकागरुडाग्रज॥
पितृदेवमनुष्याणांपूजार्थंसंततंखग ॥ १९ ॥ प्रियास्तेसततंवीरभोजकानांतथोत्तमाः ॥ तस्मात्सर्वप्रयत्नेनपंचयज्ञान्प्रवर्तयेत् ॥ २० ॥
एकभक्तेनयेनित्यंवर्ततेकश्यपात्मज ॥ भुंजतेनचयेरात्रौभोजकास्तेप्रियामम ॥ २१ ॥ ममवारेचयोवीरतथाषष्ठ्यांचकेशव ॥ नरात्रौभुंजते
प्राज्ञामात्प्रियास्तेमगाःखग ॥२२॥ प्रतिसंवत्सरंयेतुभोजकागरुडाग्रज ॥ नयच्छंतिपितुर्मातुर्दिवसेतेनमेप्रियाः ॥२३॥ इत्थंभूताभोजकाये
माघमासेचसप्तमी ॥ पुष्पाणांकरवीराणितथारक्तंचचंदनम् ॥ २४ ॥ वाचकंब्राह्मणानांतुनैवेद्यंमोदकास्तथा ॥ घृताहुत्योगुग्गुलश्चक्षीरे
णस्नपनंतथा ॥२५॥ वाद्यानांशंखशब्दंचनृत्यंनाट्यंमतंमम ॥ पंचवर्णाःपताकास्तुश्वेतंछत्रंचमेप्रियम् ॥ २६ ॥ नान्यवर्णैःकृतापूजातथाप्री
णातिमांखग ॥ यथाकृताभोजकेनपूजाप्रीणातिमांसदा ॥ २७ ॥ नान्यदेवप्रतिष्ठातुकर्तव्याभोजकेनतु ॥ ॥ वासुदेवउवाच ॥ ॥ इत्यु
क्त्वाभगवान्देवश्चारुणायपुरानघ ॥२८॥ लक्षणंभोजकानांतुततोमेरुमथाक्रमत् ॥ एवंभोज्याभोजकास्तुनचाभोज्याःकदाचन ॥ २९ ॥
अनुष्ठानविहीनायेनतेभोज्यास्तुभोजकाः ॥ भौमास्तुब्राह्मणायेतुअनुष्ठानविवर्जिताः ॥ ३० ॥ तेऽप्यभोज्याभवंतीहविकर्मस्थाविशेष
तः ॥ नास्तिपूज्यतमंकिंचिन्मांगल्यंपावनंतथा ॥ ३१ ॥ चतुर्णामिहवर्णानांमुक्त्वाभोजकमुत्तमम् ॥ पूजितेभोजकेवीरआदित्यःपूजितोभ

वेत् ॥ ३२ ॥ यस्यभुंजंतिवैगेहेभोजकायदुनंदन ॥ तस्यभुंक्तेस्वयंभानुर्ब्रह्माविष्णुस्तथाशिवः ॥ ३३ ॥ यथेहसर्वसत्वानांप्रधानत्वेस्थितो
रविः ॥ तथेहसर्वभूतानांभोजकःपूज्यउच्यते ॥ ३४ ॥ तीर्थानांतुकुरुक्षेत्रंसरसांसागरोयथा ॥ तथापूज्यतमोज्ञेयःपूज्यानांभोजकोविभे
॥ ३५ ॥ विशेषेणचसौराणांभोजकःपूज्यउच्यते ॥ भर्तापूज्योयथास्त्रीणांशिष्याणांचयथागुरुः ॥ ३६ ॥ भोजकस्तुतथापूज्यःसौराणांहृ
दिकात्मज ॥ यस्यभुंक्तेभोजकस्तुगंधपुष्पादिनार्चितः ॥ ३७ ॥ तस्यभुंक्तेस्वयंभानुःपितरोदेवतास्तथा ॥ एवंपूज्यास्तथाभोज्याभो
जकाहृदिकात्मज ॥ ३८ ॥ येसौराभोजकस्यान्नंभुंजतेनिर्विकल्पतः ॥ तेसर्वेपापनिर्मुक्तायांतिसूर्यसलोकताम् ॥ ३९ ॥ कथितोयत्रयो
भोज्योयथाभोज्यःसवार्जितः ॥ अथाकेंबहुनोक्तेनश्रूयतांवचनंमम ॥ ४० ॥ नास्तिवेदात्परंशास्त्रंनास्तिगंगासमासरित् ॥ अश्वमेधसमंपुण्यं
नास्तिपुत्रसमंसुखम् ॥४१॥ नास्तिभानुसमोदेवोनास्तिमातृसमागतिः ॥ यथैतानिसमस्तानिउत्तमानियदूत्तम ॥४२॥ तथोत्तमोभोजक
स्तुसंप्रोक्तोभास्करेणतु ॥४३॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेभोजकलक्षणवर्णनंनामसप्तचत्वारिंदुत्तरशत
तमोऽध्यायः ॥ १४७ ॥ छ ॥ सुमंतुरुवाच ॥ ॥ अथसांबोमहातेजादृष्ट्वाचक्रंपितुःकरे ॥ ज्वालामालाकरालंतुमहतातेजसान्वितम् ॥१॥
पप्रच्छापितरंसांबोभक्त्याश्रद्धासमन्वितः ॥ कुतस्तातत्वयाप्राप्तंचक्रमादित्यसन्निभम् ॥ २ ॥ किमर्थंवहसेदेवदिव्यमायुधमुत्तमम् ॥ एत
दाख्याहिमेसर्वंश्रोतुकामस्थकौतुकात्[1] ॥ ३ ॥ वासुदेवउवाच ॥ ॥ साधुसाधुमहाबाहोसाधुपृष्टोऽस्म्यहंत्वया ॥ शृणुष्वैकमनाःपुत्रचक्रस्य
विधिनिर्णयम् ॥ ४ ॥ दिव्यंवर्षसहस्रंतुभानुमाराध्यश्रद्धया ॥ प्राप्तंचक्रंमयातस्माद्भास्कराल्लोकपूजितात् ॥ ५ ॥ नभोगःपंचकारूढःस्थि
तःसाक्षाद्दिवाकरः ॥ ग्रहाःसोमादयोयत्रसंस्थितानाभिमंडले ॥६॥ आदित्याद्वादशसमा अरेषुक्रमशस्तथा ॥ प्रोक्तंपार्थिषुतत्त्वानिपृथिव्या
दीनियानिवै ॥ ७ ॥ एतैस्तत्त्वैःपरिज्ञ्यातंचक्रंकालात्मकंपरम् ॥ संक्षेपात्तेमयाख्यातंदत्तंचक्रमिवापरम् ॥ ८ ॥ सांबउवाच[2] ॥ कथंकाल
मयंदेवचक्रंकमलमुच्यते ॥ इदंतावन्ममाचक्ष्वज्ञातुमिच्छामितत्त्वतः ॥९॥ वासुदेवउवाच ॥ ॥ कमलंहृतुभिःषड्भिःषड्दलंचाक्षयाश्रितम्[3] ॥

१श्रोतुकामश्चते मुखात्–इ०पा०। २ वत्स–इ०पा०। ३ अयनादि तथैव हि–इ०पा०।

पुरुषाधिष्ठितंताद्धितत्रसांगोरविःस्थितः ॥ १० ॥ यच्चकालत्रयंलोकेतन्नाभित्रयमुच्यते ॥ मासाआरामहाबाहोपक्षश्चप्रधयःस्मृताः॥११॥
नेमीचैवपरेप्रोक्तेअयनेदक्षिणोत्तरे ॥ पथिनाभिषुयोगेचयोगाख्यास्तपनादिभिः ॥ १२ ॥ नक्षत्राणिग्रहाश्चैवसदाचात्रास्थितास्स्मृताः ॥ एतै
र्व्याप्तमिदंचक्रंस्थूलसूक्ष्मप्रभेदतः ॥ १३ ॥ अत्रोद्दिष्टेषुकालेषुयेनोद्दिष्टामयातव ॥ युगादिकल्पपर्यंतास्तेऽपिचात्रस्थिताःक्रमात् ॥
॥ १४ ॥ यत्तेकालात्मकंचक्रमिदंसंक्षेपतोमया ॥ कथितंतद्धिनिष्क्रान्तंप्रदोषात्सूर्यमंडलात् ॥ १५ ॥ असुराणांवधायेदंमयालब्धंदि
वाकरात् ॥ आराध्यतपसासूर्यंपुराकल्पेजगद्गुरुम् ॥ १६ ॥ अतःसंपूजयाम्येनंग्रहैस्तत्त्वैर्वृतंसदा ॥ अर्कभक्तोहिचक्रस्थंयःपूजयति
भक्तिमान् ॥ १७ ॥ तेजसारविसंकाशःपुष्पोत्तरपुरंव्रजेत् ॥ तस्मात्तंमत्कुलानंदंमित्रंसंपूजयाम्यहम् ॥ १८ ॥ ग्रहैस्तत्त्वैर्वृतंभक्त्यास्व
मंत्रैःसततंविभुम् ॥ सप्तम्यांचक्रमालिख्ययेयजंतिदिवाकरम् ॥ १९ ॥ रक्तचंदनपूर्णेनकुंकुमेनसुगंधिना ॥ पिष्टगंधादिभिर्वापिरक्तवर्ण
कामिश्रकैः ॥ २० ॥ रक्तैश्चकमलैःशुद्धैःकरवीरैःसुगंधिभिः ॥ अन्यैर्वाकुसुमैर्वन्यैःप्रत्यग्रैर्जंतुवर्जितैः ॥ २१ ॥ अपर्युषितनिश्छिद्रैःशुभ
धन्यैर्दलैरपि ॥ फलैःपक्वैरोषधिभिस्तथादूर्वांकुरैःकुशैः ॥ २२ ॥ धूपैश्चविविधैर्गंधैस्तथावस्त्रैश्चभूषणैः ॥ भक्ष्यैर्भोज्यैश्चपेयैश्चचोष्यैर्लेह्यैश्च
शक्तितः ॥ २३ ॥ वितानशोभासिकतैःपताकैरुपशोभितैः ॥ छत्रचामरघंटाभिर्भूषणैर्दर्पणादिभिः ॥ २४ ॥ नृत्यवादित्रगीतैश्चवेदैः
पुण्यकथास्वनैः ॥ सर्वत्रजयघोषैश्चसंपूर्णंपूजयंतिये ॥ २५ ॥ संपूर्णान्विविधान्कामान्निर्विघ्नान्प्राप्नुवंतिते ॥ स्वचक्रंचापिनिर्विघ्नंवृद्धि
मायातिसुव्रत ॥२६॥ हन्यतेपरचक्रंचयत्रेदंपूज्यतेसकृत् ॥ संक्रांतौग्रहणेचापिलिखित्वायोजपेदिदम् ॥२७॥ भवंतिनियताःसांवतस्यसा
नुग्रहाग्रहाः ॥ सर्वरोगविहीनस्तुसर्वदुःखविवर्जितः॥२८॥चिरंजीवतिधर्मात्मासर्वैश्वर्यसमन्वितः॥एषवैकथितोवत्सचक्रयोगोमयातव॥२९॥
अर्कस्यसर्वयज्ञानांश्रेष्ठःसिद्धिप्रदोभृशम् ॥पुण्योधर्म्यस्तथापुष्ट्यःशत्रुघ्नश्चविशेषतः॥३०॥श्वेतोरक्तोथपीतश्चकृष्णश्चापिविभागशः॥३१॥
इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेकालचक्रवर्णनंनामाष्टाचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४८ ॥ छ ॥

॥ सांबउवाच ॥ किंप्रमाणंलिखेच्चक्रंतत्रपद्मंचकिंभवेत् ॥ नेमिप्रध्यारनाभीनांविभागःक्रियतेकथम् ॥ १ ॥ वासुदेवउवाच ॥
चतुःषष्ट्यंगुलंचक्रंकृत्वावृत्तंप्रमाणतः ॥ अष्टांगुलाभवेन्नेमिःसेयंविभावतःसदा ॥ २ ॥ नाभिक्षेत्रंतथैवस्यात्पद्मंतत्रिगुणंभवेत् ॥ आर
क्षेत्रंचपद्मस्यकर्णिकाकेसराणिच ॥ ३ ॥ केसरस्यचपादेनशेषपत्राणिकल्पयेत् ॥ पत्रसंधिश्चपादांगंक्रमात्तत्रापिभिद्यते ॥ ४ ॥ उन्नतंक
मलंतत्तुकुर्यान्नाभ्यानसंशयः ॥ आकीर्णाःसंविभक्ताश्चकर्तव्याःप्रधयःक्रमात् ॥ ५ ॥ अंगुलस्थूलमूलंस्यादाराग्रंत्रिगुणंततः ॥ भूमिःपीता
बहिर्ज्ञेयाकार्णिकाकेसराणिच ॥ ६ ॥ सितंनाभिस्थलंतत्रद्वाराणिपरिकल्पयेत् ॥ हस्तमात्रंभवेत्तस्यतन्मानंद्वारसंनिभम् ॥ ७ ॥ शेषं
रक्तंसमुद्दिष्टंसंहताःपत्रसंधयः ॥ नाभिनेम्यन्तरेलेखाःसिताश्चांगुलमानतः ॥ ८ ॥ सितरक्तासिताभिश्चसमंतादुपशोभितम् ॥ कपोलं
द्वारपद्मंचद्वारकोणेप्रकल्पयेत् ॥ ९ ॥ चतुर्द्वारंभवेदेवमैंद्रद्वारंप्रकल्पयेत् ॥ अपराण्हेऽथपूर्वाण्हेवरुणमावहेत्सदा ॥ १० ॥ द्वाराण्येता
निसंवृत्ययथोक्ताविधिनायजेत् ॥ यथोक्तादेवताःसर्वाःस्वमंत्रैरेवभक्तितः ॥ ११ ॥ चक्रमेवंसमुद्दिष्टंयजनार्थंमयातव ॥ यज्ञेनानेनसंबद्धोदी
क्षितश्चार्कमंडले ॥१२॥ इत्थंमेभानुनापूर्वमिदमुक्तंवरानन ॥ सांबउवाच ॥ ॥ केमंत्राश्चक्रयज्ञेऽस्मिन्देवतानांप्रकीर्तिताः ॥ १३ ॥ यज्ञ
क्रमश्चकःप्रोक्तोरूपंकिंचपृथक्पृथक् ॥ वासुदेवउवाच ॥ खषोल्कंहृदयाध्यक्षंपूर्वोक्तेकमलेयजेत् ॥ १४ ॥ कर्णिकायांदलेष्वेवमंगानिहृद
यादिच॥नाममंत्राश्चतुर्थ्यंतास्तेषांपूर्वोक्तकोटयः ॥ १५ ॥ नमस्कारश्चसर्वत्रएषएवविधिःस्मृतः ॥ स्वाहांताहोमकालेचकर्मस्वन्येषुतेपु
नः ॥ यथाकर्मावसानाश्चप्रयोक्तव्याःसमासतः ॥ १६ ॥ ॐखषोल्कायविद्महेदिवाकरायधीमहि ॥ तंनःसूर्यःप्रचोदयात् ॥ १७ ॥
सावित्रीचमहाबाहोचतुर्विंशाक्षरामता ॥ सर्वतत्त्वमयीपुण्याब्रह्मगोत्रार्कवल्लभा ॥ १८ ॥ एवंमंत्राःप्रयोक्तव्याःसर्वकर्मस्वतंद्रितैः ॥
अन्यथाविफलंकर्मभवेदिहपरत्रच ॥१९॥ तस्मात्सर्वप्रयत्नेनमंत्राञ्ज्ञात्वाविधिंतथा ॥ यथावत्कर्मतत्कृत्वासाधयेदीप्सितंफलम् ॥ २० ॥
॥ सांबउवाच ॥ ॥ आदित्यमंडलेदीक्षाकस्यकार्याकथंचसा ॥ कदाकेनाकिमर्थंचकथयेदंममाखिलम् ॥ २१ ॥ ॥ वासुदेवउवाच ॥
ब्राह्मणंक्षत्रियंवैश्यंकुलीनंशूद्रमेवच ॥ पुरुषंवास्त्रियंवापिदीक्षयेत्सूर्यमंडले ॥ २२ ॥ स्वयंभक्त्योपपन्नश्चप्रणिपत्यगुरुंतथा ॥ गुरुस्तंदी

क्षयेद्विप्रः कल्पज्ञः सत्यवाक्छुचिः ॥ २३ ॥ षष्ठ्यामग्निंसमाधायपूर्वोक्तविधिनाक्रमात् ॥ संपूज्यार्कतथावह्नौहुत्वावैहविषारविम् ॥ २४ ॥
शिष्यंस्नातमथाचांतंखषोल्काकृतिविग्रहम् ॥ स्वांगैरालभ्यचांगेषुदर्भवाद्भिस्तथाक्षतैः ॥ २५ ॥ पुष्पैःसंपूज्यचांगानिदद्यादर्कं
बलिस्तथा ॥ आदित्योवरुणोऽर्कोऽग्निःसाधितोहृदयेनच ॥ २६ ॥ भवेद्घृतगुडक्षीरैस्तंदुलैश्चप्रमाणतः ॥ त्रिभिरंजलिभिर्हुत्वादेवायाग्नौ
हुतंपुनः ॥ २७ ॥ दत्त्वाशिष्टायमुक्त्वैवंदत्त्वातिदंतधावनम् ॥ वृक्षक्षीरोद्भवंतस्मैद्वादशांगुलसन्निभम् ॥ २८ ॥ दंताश्लिष्टेऽपनीतेचतेनप्रा
च्यांक्षिपेत्ततः ॥ दंतधावनमास्यंचतदातस्योपरिक्षिपेत् ॥ २९ ॥ मैत्रावरुणमीशानंवक्रंसौम्यासमाश्रितम् ॥ प्रशस्तंदंतकाष्ठस्यमुखम
न्यत्रनिंदितम् ॥ ३० ॥ यांदिशंदंतकाष्ठस्यमुखंपश्यतितत्पतिम् ॥ अर्चयेत्तेनशांतिःस्यादित्युक्तंभानुनास्वयम् ॥ ३१ ॥ पुनस्त
द्वचनंश्रुत्वाअंगैरालभ्यचक्रमात् ॥ संपूज्यलोचनेतत्रसंचिंत्यपरिजप्यच ॥३२॥ कारयित्वाचसंकल्पंतथाचेंद्रियसंयमम् ॥ स्वापयेतस्वयं
चापिवरंश्रुत्वासमाहितः ॥ ३३ ॥ आचम्यकृतरक्षस्तुकृतद्रव्याधिवासनः ॥ हृदयेननमेत्प्रातःस्नात्वाहुत्वाहुताशनम् ॥ ३४ ॥ स्वप्नंपृच्छे
द्यथादिष्टंशुभंसंवादयेच्चतम् ॥ हृदयेनाशुभेदृष्टेशतहोमंसमाचरेत् ॥३५॥ स्वप्नेपश्यतिहर्म्याणिदेवतानांहुताशनम् ॥ नद्योयानानिरम्या
णिउद्यानोपवनानिच ॥ ३६ ॥ पत्रपुष्पफलाढ्यानिकमलानिचराजतम् ॥ संपश्यतियदिस्वप्नेब्राह्मणंवेदपारगम् ॥ ३७ ॥ राजानंशौर्य
संपन्नंधनाढ्यंक्षत्रियोत्तरम् ॥ शुश्रूषणपरंशूद्रंयदितत्त्वार्थमादिशेत् ॥ ३८ ॥ प्रशस्तंभाषणंचैवयथासंभवतोमतम् ॥ एतैःस्पर्शनमेतेषां
श्रेष्ठमारोहणंततः ॥ ३९ ॥ वाहनानिप्रशस्तानिप्रासादंनावमेवच ॥ पर्वतंचसमारुह्यविपुलाभार्गवभिवेत् ॥ ४० ॥ पीत्वासुरांसमुद्रंचद
ध्याज्यंक्षीरमेवच ॥ सोमंमांसंहविर्भुक्त्वासोत्रेयींलभतेनरः ॥ ४१ ॥ लब्ध्वावस्त्राणिरत्नानिविविधाभरणानिच ॥ वाहनानिमहीगावोधान्यो
पकरणानिच ॥ ४२ ॥ समृद्धिमाप्नुयात्किंचित्स्वप्नानांदर्शनंशुभम् ॥ शुभकर्मानुगंयच्चतत्सर्वंशुभमुच्यते ॥ ४३ ॥ तस्मादन्यदनिष्टं
स्यात्तस्माद्युक्ताप्रतिक्रिया ॥ सप्तम्यांचक्रमाल्लिख्यतत्रसंपूज्यभास्करम् ॥ ४४ ॥ तर्पयित्वादिवाशिष्टानालभ्यपूर्ववद्गुरुम् ॥ सृष्टि

१ दधिघृतक्षीरैः-इ०पा०।

क्रमेणभूत्यर्थंमुक्त्यर्थंनान्यथाभवेत् ॥ ४५ ॥ दिवाकरंसमालभ्यपुरुषोथयथाक्रमम् ॥ सर्वग्रहेषुतत्त्वेषुयथावर्त्ता प्रयोजयेत् ॥ ४६ ॥
विशुद्धेषुविशुद्धंतंध्यात्वाचादित्यवत्क्रमात् ॥ वियोजयेत्पृथिव्याश्चततःप्रभृतिसर्वशः ॥ ४७ ॥ आदित्यमंडलंशुद्धंसर्वमुक्तंनियोजयेत् ॥
एवंतुमनसाध्यात्वाजुहुयाच्चैवतंशतम् ॥ ४८ ॥ सर्वैर्मंत्रैःक्रमादेवंदीक्षाप्रोक्तावरापरा ॥ कृत्वैवपुष्पपातंतुतस्मिन्नादित्यमंडले ॥ ४९ ॥
बद्धास्यमंजलौपुष्पंकृत्वादत्त्वाचमंत्रितम् ॥ क्षिपेद्वैकुलशुद्धयर्थंनामार्थंचविशेषतः ॥ ५० ॥ यत्रतत्पातितंपुष्पंतस्यतत्कुलमादिशेत् ॥
नामचादित्यसंयुक्तमित्युक्तंभानुनास्वयम् ॥ ५१ ॥ संपूज्यश्रावयेत्तत्रसमयानर्कभाषितान् ॥ प्रातःसायंचमध्याह्नेरवेरभिमुखस्थितः
॥ ५२ ॥ उपस्थानंसदाकुर्यादर्चनंचसदानरः ॥ अदृष्ट्वार्कंनभोक्तव्यंदिवारात्रौहुताशनम् ॥ ५३ ॥ दृष्ट्वाभोक्तव्यमर्काख्यंनभोक्तव्यंकदा
चन ॥ नचपद्भ्यांस्पृशेत्तद्वन्नासनंपरिवर्जयेत् ॥ ५४ ॥ नलंघ्याप्रतिमाछायानलंघ्यास्तिथयःक्वचित् ॥ नक्षत्राणिग्रहायोगामासा
मासाधिपाश्चये ॥ ५५ ॥ अयनेऋतवःपक्षास्तथैवादिवसानिच ॥ कालःसंवत्सरश्चापियःकश्चित्कालउच्यते ॥ ५६ ॥ अभिवं
द्यःससर्वोऽपिनमस्यःपूज्यएवच ॥ तस्मात्कालाधिपःसूर्यःस्वयंकालश्चपठ्यते ॥ ५७ ॥ ज्योतिर्गणस्यसर्वस्यस्थावरास्थावरस्यच ॥
चेतनाचेतनस्यापिसर्वात्मायःप्रकीर्तितः ॥ ५८ ॥ स्तुत्योवंद्यःसदापूज्यस्त्वयायंसर्वथानृप ॥ मनसाकर्मणावाचादेवनिंदांपरित्य
जेत् ॥ ५९ ॥ प्रेषयित्वाचनिर्माल्यंतदश्वेभ्योनिवेदयेत्[1] ॥ प्रक्षाल्यहस्तपादौचनमस्कुर्याद्दिवाकरम् ॥ ६० ॥ इत्येषापरमादीक्षा
तवसंक्षेपतोमया ॥ भुक्तिमुक्तिकरीचापिकथिताप्रविभागतः ॥ ६१ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्याने
सूर्यदीक्षावर्णनंनामैकोनपंचाशदुत्तरशततमोऽध्यायः ॥ १४९ ॥ छ ॥ वासुदेवउवाच ॥ ॥ अतःपरंप्रवक्ष्यामियथापूज्योदिवाकरः ॥
स्थंडिलेयदुशार्दूलनिबोधैकाग्रमानसः ॥ १ ॥ मंडलैरष्टभिःकार्यंचक्रंकालात्मकंशुभम् ॥ मध्येपद्माकृतंचक्रमारैर्द्वादशभिर्युतम् ॥ २ ॥
तन्मध्येकमलंप्रोक्तंपत्राष्टकसमन्वितम् ॥ सर्वात्मासकलोदेवःखषोल्कःकिरणोज्ज्वलः ॥ ३ ॥ पूजनीयःसदामध्येसहस्रकिरणायुधः ॥ प्र

१ लंघयित्वा च निर्माल्यं तदात्मानं निवेदयेत्–इ०पा० ।

णवेनमहाबाहोचतुर्बाहु॒ ... न्वितः ॥ ४ ॥ अरुणंपूजयेत्प्राज्ञःसदादेवाग्रजंशुभम् ॥ दक्षिणेपूजयेद्देवींनिक्षुभांभास्करस्यतु ॥५॥ रेवंतंदक्षिणे
पार्श्वेउत्तरेपिंगलंसदा ॥ संज्ञां १ दुशार्दूलश्रेयसेसततंबुधः ॥ ६ ॥ आग्नेय्यांलेखकंवीरनैर्ऋत्यामश्विनौतथा ॥ वायव्यांपूजयेद्देवंमनुंवैव
स्वतंविभुम् ॥ ७ ॥ ऐशान्यांपूजयेद्देवींयमुनांलोकपावनीम् ॥ द्वितीयावरणेवीरपूर्वतःपूजयेद्दियत् ॥ ८ ॥ दक्षिणेचततोदेवींपश्चिमे
गरुडंतथा ॥ उत्तरेनागराजानंपुत्रमैरावतंशुभम् ॥ ९ ॥ आग्नेय्यांपूजयेद्दिंडिंप्रहेलिंनैर्ऋतेतथा ॥ वायव्यामुर्वशींदेवीमीशानेविनतांतथा ॥
॥ १० ॥ तृतीयावरणेपूर्वेपूजयेद्गुरुमादरात् ॥ पश्चिमेत्वर्कपुत्रंतुउत्तरेधिषणंतथा ॥ ११ ॥ ऐशानेशशिपुत्रंतुसोममाग्नेयमंडले ॥ पूजये
द्दक्षिणेकोणेनैर्ऋतेराहुमादरात् ॥ १२ ॥ वायव्येविकचंवीरपूजयेत्सततंबुधः ॥ चतुर्थावरणेदेवंपूजयेल्लेखमादरात् ॥ १३ ॥ आग्नेये
शांडिलीपुत्रंदक्षिणेदक्षिणाधिपम् ॥ विरूपाक्षंनैर्ऋतेदेवंजलेशंपश्चिमेतथा ॥ १४ ॥ वायुंपुत्रंचवायव्यांसततंपूजयेन्नरः ॥ ईशानेदेवमी
शानंपूजयेत्सततंबुधः ॥ १५ ॥ उत्तरेयक्षराजानंकुबेरंपूजयेद्बुधः ॥ पंचमेपूजयेद्वीरसदास्वावरणेद्विजाः ॥ १६ ॥ पूर्वतःपरमांदेवींमहा
श्वेतांमहामतिः ॥ श्रियमृद्धिंविभूतिंचधृतिंचैवोन्नतिंतथा ॥ १७ ॥ पृथिवींयदुशार्दूलमहाकीर्तिंतथैवच ॥ इंद्रंविष्णुंतथार्यम्णंभगंपर्जन्य
मेवच ॥ १८ ॥ विवस्वंतंतथार्कंचत्वष्टारंकिरणोज्ज्वलम्॥पूजयेद्वरुणंषष्ठेचैवमेतान्दिवाकरान् ॥१९॥ शिरोनेत्रेतथावर्मअस्त्रंचयदुसत्तम ॥
अरुणंसरथंवीरसप्तमंपूजयेद्बुधः ॥ २० ॥ तथाश्वान्यदुशार्दूलसदाचावरणेबुधः ॥ यक्षरक्षांसिगंधर्वान्मासान्पक्षानहानितु ॥ २१ ॥ संव
त्सरंतथापुत्रह्येतान्संपूजयेत्पुरा ॥ यएवंपूजयेद्देवंभास्करंसततंनरः ॥ २२ ॥ सगच्छेत्परमंस्थानंयत्रगत्वानशोचति ॥ २३ ॥ ॐखषो
ल्कायनमः ॥ मूलमंत्राक्षराणीहचांगानिपरिचक्षते ॥ अनेनविधिनायस्तुपूजयेत्सततंरविम् ॥ २४ ॥ नित्यमुभयसप्तम्यांसगच्छेत्परमंप
दम् ॥ इत्युक्त्वाभगवान्देवोजगामाशुगृहंरविः ॥ २५ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसांबोपाख्यानेआदित्यपूजाविधि
वर्णनंनामपंचाशदुत्तरशततमोऽध्यायः ॥ १५० ॥ छ ॥ सूतउवाच ॥ ॥ अथराजामहातेजाःशतानीकोद्विजोत्तमम् ॥ प्रणम्याशि

१ वरुणम्–इ०पा० । २ सदा वेदानुगं शुभम्–इ०पा० । ३ वासुदेवम्–इ०पा० ।

रसाभक्त्यासुमंतुंवाक्यमब्रवीत् ॥ १ ॥ अहोदेवस्यमाहात्म्यंभास्करस्यामितौजसः ॥ कीर्तितंभवतामह्यंसर्वपापप्रणाशनम् ॥ २ ॥ त
स्मान्नार्कसमंदेवंलोकेपश्यामिसुव्रत ॥ नचाप्यस्यस्थितोविप्रगतिर्लोकेषुविद्यते ॥ ३ ॥ प्रवर्तितेजगद्विप्रसर्गकालेदिवाकरात् ॥ स्थितौपा
ल्यतेचासौत्किल्पांतेसंहरेत्पुनः ॥ ४ ॥ श्रुत्वैवंदेवमाहात्म्यंभास्करस्यामितौजसः ॥ कीर्तितंभवतामह्यमश्वमेधशताद्वरम् ॥ ५ ॥ किंतुमे
संशयोब्रह्मन्सुमहान्हृदिवर्तते ॥ केनोपायेनविप्रेंद्रमुच्यतेसंभवार्णवात् ॥ ६ ॥ दिवाकरप्रसादाद्वैसुप्रसन्नाद्वृषध्वजात् ॥ कथंतुष्येत्सदा
देवोधर्मेणकतरेणतु ॥ ७ ॥ श्रुत्वामेबहवोधर्माःश्रुतिस्मृत्युदितास्तथा ॥ वैष्णवाःशैवधर्माश्चतथापौराणिकाःश्रुताः ॥ ८ ॥ श्रोतुकामोह्यहं
विप्रसौरंधर्ममनौपमम् ॥ भगवन्त्सर्वधन्यास्तेसौरधर्मपरायणाः ॥ ९ ॥ ब्रूहिमेदेवदेवस्यभानोर्धर्ममनौपमम् ॥ शृण्वतोनास्तिमेतृप्तिरमृतस्यै
वमेवच ॥ १० ॥ अश्वमेधादयोयज्ञाबहुसंभारविस्तराः ॥ नशक्यास्तेयतःकर्तुमल्पमेतैर्द्विजातिभिः ॥ ११ ॥ सुखोपायमतोब्रूहिधर्मंका
मार्थसाधकम् ॥ हितायसर्वमर्त्यानांसर्वपापभयापहम् ॥ १२ ॥ सौरधर्मपरंपुण्यंपवित्रंपापनाशनम् ॥ श्रुत्वातुवचनंराज्ञोव्यासशिष्यो
महामुनिः ॥ १३ ॥ प्रणम्याशिरसाव्यासमिदंवचनमब्रवीत् ॥ ॥ सुमंतुरुवाच ॥ ॥ श्रूयतामभिधास्यामिसुखोपायंमहाफलम् ॥ १४ ॥
परमंसर्वधर्माणांसर्वधर्ममनौपमम् ॥ रविणाकथितंपूर्वमरुणस्यविशांपते ॥ १५ ॥ कृष्णस्यब्रह्मणोवीरशंकरस्यनविद्यते ॥ संसारार्णव
मग्नानांसर्वेषांप्राणिनामयम् ॥ १६ ॥ सौरधर्मतमःश्रीमान्हितायजगतोदितः ॥ यैरयंशांतमनसैःसूर्यभक्तैर्भगार्थिभिः ॥ १७ ॥
संसेव्यतेपरोधर्मस्तेसौरानात्रसंशयः ॥ एककालंद्विकालंवात्रिकालंनित्यमेवच ॥ १८ ॥ येस्मरंतिरविंभक्त्यासकृद्वापिभारत ॥
सर्वपापैर्विमुच्यंतेसप्तजन्मकृतैरपि ॥ १९ ॥ स्तुवंतियेसदाभानुंनतेप्रकृतिमानुषाः ॥ स्वर्गलोकात्परिभ्रष्टास्तेज्ञेयाभास्कराभु
वि ॥ २० ॥ नानर्कःस्मरतेर्कंवैनानर्कोर्कंसमर्चयेत् ॥ नानर्कःकीर्तयेदर्कंनानर्कोर्कमवाप्नुते ॥ २१ ॥ सौरधर्मस्यसारोयंसूर्य
भक्तिःसुनिश्चला ॥ षोडशांगाचसाप्रोक्तारविणेहादिवौकसाम् ॥ २२ ॥ प्रातःस्नानंजपोहोमस्तथादेवार्चनंनृप ॥ द्विजानांपूजनं

भक्त्यापूजागोश्वत्थयोस्तथा ॥ २३ ॥ इतिहासपुराणेभ्योभक्तिश्रद्धापुरस्कृतम् ॥ श्रवणंराजशार्दूलवेदाभ्यासस्तथैवच ॥ २४ ॥
मद्भक्त्याजनवात्सल्यंपूजायांचानुमोदनम् ॥ स्वयमभ्यर्चयेद्भक्त्याममाग्रेवाचकंपरम् ॥ २५ ॥ पुस्तकस्यसदाश्रेष्ठममातीवाप्रियंसुराः ॥
मत्कथाश्रवणंनित्यंस्वरनेत्रांगविक्रिया ॥ २६ ॥ ममानुस्मरणंनित्यंभक्त्याश्रद्धापुरस्कृतम् ॥ षोडशांगाभक्तिरियंयस्मिन्म्लेच्छेपिवर्तते
॥ २७ ॥ विप्रेंद्रःसमुनिःश्रीमान्सजात्यःसचपंडितः ॥ नमेपृथक्चतुर्वेदामद्भक्तःश्वपचोपियः ॥ २८ ॥ तस्मैदेयंततोग्राह्यंसचपूज्योयथाह्य
हम् ॥ पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति ॥ २९ ॥ तस्याहंनप्रणश्यामिसचमेनप्रणश्यति ॥ योमांसर्वगतंपश्येत्सर्वंचमयिसंस्थितम् ॥
॥ ३० ॥ तस्याहंनित्यमास्थायसचनित्यंमयिस्थितः ॥ अष्टादशार्धकक्षायोऽपरंचाष्टाभिरुद्भवैः ॥ ३१ ॥ रोधयित्वामहाबाहोतथाज्ञानतरे
णतु ॥ दुर्गपालंविजित्याशुभास्कराधंतुदुर्जया ॥ ३२ ॥ जित्वाचपुरराजानंमहातेजमनौपमम् ॥ मनसाचलतेभक्त्यायोमांध्यायतिमा
नवः ॥३३॥ अहंतमेवांचितामिआत्मवत्सततंनरम् ॥ ३४ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मवर्णनंनामैकपंचाशदु
त्तरशततमोऽध्यायः ॥ १५१ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ सूरेचदुर्लभाभक्तिर्दुर्लभंसूरपूजनम् ॥ सूरायदुर्लभंदानंसूरहोमश्चदुर्ल
भः ॥ १ ॥ सुदुर्लभंरवेर्ज्ञानंतदभ्यासोपिदुर्लभः ॥ सुदुर्लभतरंज्ञेयंखषोल्कज्ञानमुत्तमम् ॥ २ ॥ सुदुर्लभतरंज्ञानंसदावैभास्करस्यतु ॥
प्रदक्षिणांचक्रतुर्वैपादौभक्त्याऽर्कमंदिरे ॥ ३ ॥ तौकरौश्लाघ्यतांप्राप्तौयौपूजांचक्रतूरवेः ॥ सैवैकारसनाधन्यास्तोत्रंयाकुरुतेरवेः ॥
॥ ४ ॥ तन्मनःपुण्यतांप्राप्तंयद्धित्वाविषयंनृप ॥ निश्चलाचरवेर्लीलानिर्भीकाक्रोधवर्जिता ॥ ५ ॥ ॥ शतानीकउवाच ॥ ॥ सूर्यार्चन
विधिंकुर्वञ्छ्रोतुमिच्छामितत्त्वतः ॥ त्वत्प्रसादाद्द्विजश्रेष्ठकौतूहलमतीवमे ॥ ६ ॥ यत्पुण्यंस्थापितेसूर्येकृतेसूर्यालयेचयत् ॥ सम्मार्जनेचय
त्पुण्यंयत्पुण्यमुपलेपने ॥ ७ ॥ स्थानेकृतेचयत्पुण्यंतथानीराजनेकृते ॥ नीलौषधिप्रवापेननृत्यमंगलवादितैः ॥ ८ ॥ अर्घ्यदानेनयत्पुण्यं
तोयस्नानेनयद्भवेत् ॥ पंचामृतमयस्नानेदधिस्नानेचयत्फलम् ॥ ९ ॥ चक्राभ्यंगेचयत्प्रोक्तंवज्रस्नानेचयत्फलम् ॥ मधुस्नानेपयःस्नानेस्नानइ
क्षुरसस्यतु ॥ १० ॥ उद्वर्तनंशुचिस्थानेकुशपुष्पोदकेनतु ॥ सुवर्णरत्नतोयैश्चगंधचंदनवारिभिः ॥ ११ ॥ कर्पूरागुरुतोयेनस्वच्छतो

येनयत्फलम् ॥ विलेपनैश्चगंधाढ्यैर्विलेपनफलंलभेत् ॥ १२ ॥ तालपत्रप्रदानेतुप्रदानेचामरस्यतु ॥ रक्तपुष्पार्चनेयच्चदामाभिःपूजनेनच ॥ १३ ॥ शुभानांमंडपेयच्चपुष्पमालावलंबनात् ॥ पूजाभक्तिविशेषैश्चगृहमालाविलंबने ॥ १४ ॥ पुष्पदानविशेषेणधूपदीपैश्चयत्फलम् ॥ वस्त्रालंकारदानेतुपुण्यश्रवणकीर्तने ॥ १५ ॥ ब्रह्मश्रवस्यदानेतुअव्यंगस्यचगोपते ॥ मगानांमत्प्रसादेनअभिवादनपूजने ॥ १६ ॥ व्योमपूजाफलंयच्चअरुणस्यचपूजनम् ॥ तथान्यदपियत्प्रोक्तमज्ञानाद्ब्राह्मणोत्तम ॥ १७ ॥ तत्सर्वंब्रूहिमेब्रह्मन्भक्तानामनुकंपया ॥ १८ ॥ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसूरधर्मेषुप्रश्नवर्णनंनामद्विपंचाशदुत्तरशततमोऽध्यायः ॥ १५२ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ स्वमतिश्चरवेर्भक्तपांडवेयमहामते ॥ अतस्तेनिखिलंवच्मिशृणुष्वैकमनानृप ॥ १ ॥ कल्पादौसृजतेवीरब्रह्माचाविविधाःप्रजाः ॥ अहंकारोमहानासीन्नास्तिलोकोममोत्तमः ॥ २ ॥ तथापालयतेवीरकेशवःपृथिवीपते ॥ ३ ॥ चिंतयंतोथतेदेवाःकेशवस्यनराधिप ॥ मिथस्तेस्पर्धयायुक्ताःपरस्परविरोधिनः ॥ ४ ॥ विवादस्तुमहानासीत्कंजजांबुनगौकसाम् ॥ परस्परंमहाबाहोमनसाश्रित्यकेवलम् ॥ ५ ॥ अहंकर्ताविकर्ताहंपालकोहंजगत्प्रभुः ॥ इत्याहभगवान्ब्रह्माकृष्णभीमौसमर्चितौ ॥ ६ ॥ तथैत्यशंकरःक्रुद्धःकःशक्तोमहतेभुवि ॥ संहर्तुंजगदेतद्धिस्रष्टुंपालयितुंतथा ॥ ७ ॥ नारायणोप्येवमेवमनाक्क्रोधसमन्वितः ॥ नवाशक्तोजगत्स्रष्टुंसंहर्तुंरक्षितुंतथा ॥ ८ ॥ एवंतेषांप्रवदतांक्रुद्धानांचपरस्परम् ॥ समाविशत्तदाऽज्ञानंतमोमोहात्मकंविभोः ॥ ९ ॥ तेविक्रांताधियःसर्वेनपश्यंतिपरस्परम् ॥ अत्यर्थंमोहमापन्नानजानंतीहकिंचन ॥ १० ॥ अपश्यंतोमिथस्तेतुनिषण्णाःक्ष्मातलेविभोः ॥ आरामांतिहियेचान्येतेदिवाकरमास्थिताः ॥ ११ ॥ तमसामोहिताःसर्वेनिद्रावत्क्रांतचेतसः ॥ मनाग्ज्ञानेनचाक्रांताःकिंकुर्यामेतिमोहिताः ॥ १२ ॥ अथ भूताधिपोदेवोगोश्रुताभरणोज्ज्वलः ॥ चंद्रार्धकृतशोभस्तुशीतलांशुविशोधितः ॥ १३ ॥ आर्तिमेत्यपरांवीरमोहितस्तमसाविभो ॥ अपश्यन्नब्रवीद्देवंमाधवंभूधरंहरिम् ॥ १४ ॥ महादेवउवाच ॥ कृष्णकृष्णमहाबाहोक्कगतस्त्वंमहामते ॥ ब्रह्माचक्कगतोवीरनाहंपश्यामिवांक्कचित् ॥ १५ ॥ मोहेनमहताहंवैमनसाचविमोहितः ॥ किंकरोमिक्कगच्छामिक्कचाहमधुनास्थितः ॥ १६ ॥ क्ष्मामाधरंपृथिवींवृक्षान्देवगंधर्व

दानवान् ॥ विपुलंसागरंधन्योनाहंपश्यामिकिंचन ॥ १७ ॥ केनोपायेनपश्येथंजगत्स्थावरजंगमम् ॥ ब्रूहिमेदेवशार्दूलक्रीडामेऽतिवजाय
ते ॥ १८ ॥ शंकरस्यवचःश्रुत्वाहरिर्वचनमब्रवीत्॥शोकगद्गदयावाचातमसामोहितोनृप ॥ १९ ॥ विष्णुरुवाच ॥ भीमभीमनजानेहंक्वभवा
न्वर्ततेधुना ॥ ममापिमोहितंचेतस्तमसातीवशंकर ॥ २० ॥ क्वगच्छामिक्वतिष्ठामिकथंतत्स्वस्थतांव्रजेत् ॥ तमसापूरितंसर्वंजगद्धिपरमे
श्वर ॥ २१ ॥ यत्रासौदृश्यतेदेवःसुरज्येष्ठोंबुजोद्भवः ॥ पृच्छावस्तंमहात्मानंयदितेरोचतेहर ॥ २२ ॥ हित्वादर्पमहंकारंसममास्थायकेव
लम् ॥ पद्माननंपद्मयोनिंपद्मपत्रनिभेक्षणम् ॥ २३ ॥ इत्येवंगदतोवाक्यंविष्णोरमिततेजसः ॥ श्रुत्वोवाचविभोब्रह्मागंगाधरमहीधरौ ॥२४॥
कृष्णकृष्णमहाबाहोभीमभीममहामते ॥ क्वभवंतौब्रूतकिंचकिंयुवामूचथुर्मिथः ॥ २५ ॥ ममातीवमनोबुद्धीतमसावशमागते ॥ नशृणोमिन
पश्यामिनिद्रामोहवशंगतः ॥ २६ ॥ अहोबतजगत्सर्वंसदेवासुरमानुषम् ॥ तमसाव्याहृतंदेवौनजानेक्वगतंमहः ॥ २७ ॥ अथतेषांप्रवदतां
ब्रह्मादीनांदिवौकसाम् ॥ दर्पक्रोधभयार्तानांतमसाक्रांतचेतसाम् ॥ २८ ॥ तेषांदर्पापहारायप्रबोधार्थंचगोपतेः ॥ तेजोरूपंसमुद्भूतमष्टशृंग
मनौपमम् ॥ २९ ॥ अलक्ष्यपापतमसामहद्व्योमनराधिप ॥ ज्वालामालावृतंवीरबहुरूपंचभासते ॥ ३० ॥ शतयोजनविस्तीर्णंगतमूर्ध्वंभ्र
मंतथा॥गोमध्यतोमहाराजकर्णिकेवांबुजस्यतु ॥३१॥ प्रकाशंतेजसातस्यजगत्सर्वमिदंनृप ॥ पुरेष्वंतर्यथावीरअंबुजस्यार्चिभिःसदा॥३२॥
दृष्ट्वापरस्परंसर्वेहुंकारादिविकारिणः ॥ तेजसामोहितास्तस्यजगत्सर्वमिदंनृप ॥ ३३ ॥ तेजसामोहितंतस्यमहद्व्योम्नेनराधिप ॥ ततोवि
स्मयमासीनादृष्टगोपतयोनृप ॥ ३४ ॥ पश्यमानामहोव्योम्निमिथोवचनमब्रुवन् ॥ अहोतेजःसमुद्भूतमस्माकंश्रेयसेनृप ॥ ३५ ॥ प्रकाशाय
चलोकानांसर्वेपश्यामकिंन्विदम् ॥ ज्ञानायोर्ध्वंगतोब्रह्माचाधस्तात्त्रिपुरांतकः ॥ ३६ ॥ तिर्यक्जगामदेवेशश्चक्रांबुजगदाधरः ॥ अलब्ध्वा
तस्यतेसर्वेप्रमाणंगौरिकाधिपाः ॥ ३७ ॥ विस्मयोत्फुल्लनयनाःसमागम्यपरस्परम् ॥ सर्वेकंजादिकादेवाइदंवचनमब्रुवन् ॥ ३८ ॥
कोऽयंकिमात्मकश्चायंकिमिदंतेजसांनिधिः ॥ अहोऽस्यदर्शनात्सर्वेसंजाताज्ञानिनोवयम् ॥ ३९ ॥ तस्मात्सर्वेप्रणम्यैनंस्तवामोऽद्भुतदर्श
नम् ॥ कृतांजलिपुटाःसर्वेचास्तुवंस्त्रिदिवौकसः ॥ ४० ॥ स्तुवतामप्यथैतेषांसहस्रकिरणोरविः ॥ आत्मानंदर्शयामासकृपया

परयावृतः ॥ ४१ ॥ ज्ञात्वाभक्तिंमहाबाहोब्रह्मादीनांमहोपमाम् ॥ अथतेव्योम्निदेवेशंददृशुःपरमेश्वरम् ॥ ४२ ॥ खषो
ल्कलोकनाथेशंसहस्राकिरणोज्ज्वलम् ॥ कृत्तिकाभिरसंस्पृष्टंयद्यातत्कार्तिकास्थितम् ॥ ४३ ॥ दुर्जयंकृत्तिकानांतुतथैकेनवि
वर्जितम् ॥ तथाहस्तविहीनंचसप्तर्षिरहितंतथा ॥ ४४ ॥ वर्षाद्वारहितंदेवसप्तस्वरविवर्जितम् ॥ सबलंनिष्कलंचैवसदैकाकाररूपिणम् ॥
॥ ४५ ॥ तद्दृष्ट्वानेकशिरसमनेकचरणंतथा ॥ अनेकोदरबाहुंसमनेकाभरणान्वितम् ॥ ४६ ॥ अनेकाननमक्षीवंसहस्राक्षमनोपमम् ॥
अनेकवर्णरूपंच अनेकमुकुटोज्ज्वलम् ॥ ४७ ॥ दृष्ट्वैवंदेवदेवस्यरूपंभानोर्महात्मनः ॥ विस्मयोत्फुल्लनयनास्तुष्टुवुस्तेदिवाकरम् ॥
॥ ४८ ॥ कृतांजलिपुटोभूत्वाब्रह्मास्तोतुंप्रचक्रमे ॥ प्रणम्याशिरसाभानुमिदंवचनमब्रवीत् ॥ ४९ ॥ ॥ ब्रह्मोवाच ॥ ॥ नमस्तेदे
वदेवेशसहस्राकिरणोज्ज्वल ॥ लोकदीपनमस्तेऽस्तुनमस्तेकोणवल्लभ ॥ ५० ॥ भास्करायनमोनित्यंखषोल्कायनमोनमः ॥ विष्णवेका
लचक्रायसोमायामिततेजसे ॥ ५१ ॥ नमस्तेपंचकालायइंद्रायवसुरेतसे ॥ खगायलोकनाथायएकचक्ररथायच ॥ ५२ ॥ जगद्धितायदे
वायशिवायामिततेजसे ॥ तमोघ्नायसुरूपायतेजसांनिधयेनमः ॥ ५३ ॥ अर्थायकामरूपायधर्मायामिततेजसे ॥ मोक्षायमोक्षरूपायसूर्याय
चनमोनमः ॥ ५४ ॥ क्रोधलोभविहीनायलोकानांस्थितिहेतवे ॥ शुभायशुभरूपायशुभदायशुभात्मने ॥५५॥ शांतायशांतरूपायशांतये
स्मासुवैनमः ॥ नमस्तेब्रह्मरूपायब्राह्मणायनमोनमः ॥ ५६ ॥ ब्रह्मदेवायब्रह्मरूपायब्रह्मणेपरमात्मने ॥ ब्रह्मणेचप्रसादंवैकुरुदेवजगत्पते
॥५७॥एवंस्तुत्वारविंब्रह्माश्रद्धयापरयाविभो॥तूष्णीमासमहाभागप्रहृष्टेनांतरात्मना॥५८॥ब्रह्मणोऽनंतरंरुद्रःस्तोत्रंचक्रेविभावसोः ॥ त्रिपुरा
रिर्महातेजाःप्रणम्याशिरसारविम्॥५९॥ महादेवउवाच॥जयभावजयाजेयजयहंसदिवाकर॥जयशंभोमहाबाहोखगगोचरभूधर ॥६०॥जयलो
कप्रदीपनजयभानोजगत्पते॥जयकालजयानंतसंवत्सरशुभानन ॥६१॥ जयदेवादितेःपुत्रकश्यपानंदवर्धन॥तमोघ्नजयसप्तेशजयसप्ताश्ववा
हन ॥ ६२ ॥ ग्रहेशजयकांतीशजयकालेशशंकर ॥ अर्थकामेशधर्मेशजयमोक्षेशशर्मद ॥ ६३ ॥ जयवेदांगरूपायग्रहरूपायवैगतः ॥ सत्या
यसत्यरूपायसुरूपायशुभायच ॥ ६४ ॥ क्रोधलोभविनाशायकामनाशायवैजय ॥ कल्माषपक्षिरूपाययतिरूपायशंभवे ॥ ६५ ॥

विश्वायविश्वरूपायविश्वकर्मायवैजय ॥ जयोंकारवषट्कारस्वाहाकारस्वधायच ॥ ६६ ॥ जयाश्वमेधरूपायचाग्निरूपार्यमायच ॥ संसा
रार्णवपीतायमोक्षद्वारप्रदायच ॥ ६७ ॥ संसारार्णवमग्नस्यममदेवजगत्पते ॥ हस्तावलंबनोदेवभवत्वंगोपतेद्भुत ॥ ६८ ॥ ईशोप्येवमही
नांगंस्तुत्वाभानुंप्रयत्नतः ॥ विरराजमहाराजप्रणम्याशिरसारविम् ॥ ६९ ॥ अथविष्णुर्महातेजाःकृतांजलिपुटोरविम् ॥ उवाचराजशार्दू
लभक्त्याश्रद्धासमन्वितः ॥ ७० ॥ विष्णुरुवाच ॥ नमामिदेवदेवेशंभूतभावनमव्ययम् ॥ दिवाकरंरविंभानुंमार्तंडभास्करंभगम् ॥ ७१ ॥
इंद्रंविष्णुंहरिंहंसमर्कंलोकगुरुंविभुम् ॥ त्रिनेत्रंत्र्यक्षरंत्र्यंगंत्रिमूर्तिंत्रिगतिंशुभम् ॥ ७२ ॥ षण्मुखायनमोनित्यंत्रिनेत्रायनमोनमः ॥ चतुर्विंश
तिपादायनमोद्वादशपाणिने ॥ ७३ ॥ नमस्तेभूतपतयेलोकानांपतयेनमः ॥ देवानांपतयेनित्यंवर्णानांपतयेनमः ॥ ७४ ॥ त्वंब्रह्मात्वं
जगन्नाथोरुद्रस्त्वंचप्रजापतिः ॥ त्वंसोमस्त्वंतथादित्यस्त्वमोंकारकएवहि ॥ ७५ ॥ बृहस्पतिर्बुधस्त्वंहित्वंशुक्रस्त्वंविभावसुः ॥
यमस्त्वंवरुणस्त्वंहिनमस्तेकश्यपात्मज ॥ ७६ ॥ त्वयाततमिदंसर्वंजगत्स्थावरजंगमम् ॥ त्वत्तएवसमुत्पन्नंसदेवासुरमानुषम् ॥
॥ ७७ ॥ ब्रह्माचाहंचरुद्रश्चसमुत्पन्नाजगत्पते ॥ कल्पादौतुपुरादेवस्थितयेजगतोनघ ॥ ७८ ॥ नमस्तेवेदरूपायअन्हरूपायवैनमः ॥
नमस्तेज्ञानरूपाययज्ञायचनमोनमः ॥ ७९ ॥ प्रसीदास्मासुदेवेशभूतेशकिरणोज्ज्वल ॥ संसारार्णवमग्नानांप्रसादंकुरुगोपते ॥ ८० ॥ वे
दांतायनमोनित्यंनमोयज्ञकलायच ॥ सुमंतुरुवाच ॥ स्तुत्वैवंभास्करंभक्त्याविष्णुर्भरतसत्तम ॥ ८१ ॥ प्रदध्यौनृपशार्दूलरविंतद्गतमा
नसः ॥ एवंतेनरशार्दूलदेवाब्रह्मादयोऽनघ ॥ ८२ ॥ स्तुवंतितंमहात्मानंसहस्राकिरणंरविम् ॥ इत्येवंस्तुवतांतेषांरविंभक्त्यामहात्म
नाम् ॥ ८३ ॥ अथतुष्टोरविस्तेषांब्रह्मादीनांजगत्पतिः ॥ विज्ञायभक्तिंपरमांश्रद्धांचपरमांविभुः ॥ ८४ ॥ उवाचसमहातेजाः
प्रहृष्टेनांतरात्मना ॥ ८५ ॥ ग्रहेशोव्योमआरूढस्तेजसाप्रज्वलन्दिशः ॥ ब्रह्माणंविष्णुमीशानमामंत्र्यैतान्विशांपते ॥ ८६ ॥ दृष्ट्वा
तान्प्रणतान्सर्वाञ्छिरोभिरवनिंगतान् ॥ तुष्टोऽस्मितेसुरज्येष्ठचतुर्मुखजगत्पते ॥ ८७ ॥ वरंवरयभद्रंतेमनसात्वंयमिच्छसि ॥
श्रुत्वातुवचनंभानोर्ब्रह्मालोकगुरुर्नृप ॥ ८८ ॥ जगामाशिरसाभूमावुवाचसकृतांजलिः ॥ ब्रह्मोवाच ॥ कृतकृत्योऽस्मिदेवेशपूतश्चास्मिख

गाधिप ॥ ८९ ॥ धन्योऽस्म्यनुगृहीतोऽस्मिगतोऽस्मिपरमांगतिम् ॥ सहस्रकिरणैर्यन्मेभवान्दर्शनमागतः ॥ ९० ॥ अपश्यतश्चदेवेशमूढ
मासीन्मनोमम ॥ भगवन्संप्रसीदत्वंममोपरिविभावसो ॥ ९१ ॥ प्रयच्छत्वंबलंभक्तिमात्मनोममगोपते ॥ गत्वाशिरोभिरवनिमष्टांगपाति
तस्यच ॥ ९२ ॥ भक्त्याविज्ञातिमाकर्ण्यप्रसादंकुरुगोपते ॥ ब्रह्मणोवचनंश्रुत्वापूषादेवोजगत्पतिः ॥ ९३ ॥ तथेत्याहमहाराजवीरंचिंश्रश्रया
न्वितम् ॥ ब्रह्मणेचवरंदत्त्वाराजन्देवोदिवाकरः ॥ ९४ ॥ उवाचत्र्यंबकंदेवंशशांककृतशेखरम् ॥ वरंवरयभूतेशभूभुजादायितानघ ॥ ९५ ॥
यमिच्छसिमहादेववच्म्यहंतदशेषतः ॥ भास्करस्यवचःश्रुत्वाईश्वरस्त्रिपुरांतकः ॥ ९६ ॥ गत्वातुशिरसाभूमौप्रणम्योवाचभास्करम् ॥
महादेवउवाच ॥ ॥ पुण्योऽहंपुण्यकर्माहंनास्तिधर्मीतरोमया ॥ ९७ ॥ गतोऽहंपरमांसिद्धिंगतश्चपरमांगतिम् ॥ नाप्राप्यमस्तिदेवेश
नासाध्यंममकिंचन ॥ ९८ ॥ यस्यमेभगवान्देवःप्रसादप्रवणःस्थितः ॥ त्वयाततमिदंसर्वंजगत्स्थावरजंगमम् ॥ ९९ ॥ त्वत्तएवसमुत्पन्नं
लयंचत्वयियास्यति ॥ यदितुष्टोममविभोअनुग्राह्योऽस्मितेयदि॥१००॥ अचलांदेहिमेभक्तिमात्मनश्चरणंनय ॥ व्योमकेशवचःश्रुत्वापूषा
देवोदिवाकरः ॥ १०१ ॥ तथेत्याहहरंवीरततोहरिमुवाचह ॥ नारायणमहाबाहोवरंवरयगोधर ॥ १०२ ॥ परितुष्टोऽस्मितेदेवयमिच्छसिम
हाबल ॥ श्रुत्वातुभास्करवचःकीलालजनकोहरिः ॥ १०३ ॥ उवाचपरयाभक्त्यानत्वाचशिरसारविम् ॥ ॥ नारायणउवाच ॥ ॥ जय
देवजगन्नाथजयदेवगुरोरवे ॥ १०४ ॥ प्रसीदममदेवेशभक्तिंयच्छात्मनोरवे ॥ येनाहंसर्वदेवानामुत्तमःस्यांजगत्पते ॥ १०५ ॥ अजेयश्चत
थादेवदैत्यदानवरक्षसाम् ॥ त्वद्भक्त्याबृंहितबलस्तेजसामहतान्वितः ॥ १०६ ॥ ततोमयामहत्कर्मकर्तव्यंतवशासनात् ॥ प्रजानांपालनंदेव
देवानांचग्रहाधिप ॥ १०७ ॥ वर्णानामाश्रमाणांचवर्णधर्मस्यवाविभो ॥ दुष्टदैत्यविनाशायलोकानांपालनायच ॥ १०८ ॥ सृज्येऽहंभ
वतापूर्वंकल्पादौचकृतोऽनघ ॥ यस्यरुष्टोभवान्स्याद्वैकथंचित्पुरुषस्यतु ॥ १०९ ॥ व्याधिर्दुःखमनारोग्यंदारिद्र्यंसंततिक्षयः ॥ तस्यै
तानिभवंतीहआधयोविविधास्तथा ॥ ११० ॥ तस्मात्त्वंचततोदेवसंस्तव्यःसततंबुधैः ॥ एवंत्वांगोपतेदेवभक्त्याश्रद्धासमान्वितः॥१११॥
अहमार्चितुमिच्छामितस्मान्ममकृपांकुरु॥११२॥इतिश्रीभविष्यमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेसूर्यतेजोवर्णनंनामात्रिपंचाशदुत्तर
शततमोऽध्यायः॥१५३॥ ॥सुमंतुरुवाच ॥छ॥ ॥श्रुत्वातुवचनंभानुर्विष्णोरमिततेजसः ॥ उवाचकुरुशार्दूलआदित्यःकृपयान्वितः ॥१॥

विश्वायविश्वरूपायविश्वकर्मायवैजय ॥ जयोंकारवषट्कारस्वाहाकारस्वधायच ॥ ६६ ॥ जयाश्वमेधरूपायचाग्निरूपार्यमायच ॥ संसा
राणवपीतायमोक्षद्वारप्रदायच ॥ ६७ ॥ संसारार्णवमग्नस्यममदेवजगत्पते ॥ हस्तावलंबनोदेवभवत्वंगोपतेद्भुत ॥ ६८ ॥ ईशोप्येवमही
नांगस्तुत्वाभानुंप्रयत्नतः ॥ विरराजमहाराजप्रणम्याशिरसारविम् ॥ ६९ ॥ अथविष्णुर्महातेजाःकृतांजलिपुटोरविम् ॥ उवाचराजशार्दू
लभक्त्याश्रद्धासमन्वितः ॥ ७० ॥ विष्णुरुवाच ॥ नमामिदेवदेवेशंभूतभावनमव्ययम् ॥ दिवाकररविंभानुंमार्तंडंभास्करंभगम् ॥ ७१ ॥
इंद्रंविष्णुंहरिंहंसमर्कंलोकगुरुंविभुम् ॥ त्रिनेत्रंत्र्यक्षरंत्र्यंगंत्रिमूर्तिंत्रिगतिंशुभम् ॥ ७२ ॥ षण्मुखायनमोनित्यंत्रिनेत्रायनमोनमः ॥ चतुर्विंश
तिपादायनमोद्वादशपाणिने ॥ ७३ ॥ नमस्तेभूतपतयेलोकानांपतयेनमः ॥ देवानांपतयेनित्यंवर्णानांपतयेनमः ॥ ७४ ॥ त्वंब्रह्मात्वं
जगन्नाथोरुद्रस्त्वंचप्रजापतिः ॥ त्वंसोमस्त्वंतथादित्यस्त्वमोंकारकएवहि ॥ ७५ ॥ बृहस्पतिर्बुधस्त्वंहित्वंशुक्रस्त्वंविभावसुः ॥
यमस्त्वंवरुणस्त्वंहिनमस्तेकश्यपात्मज ॥ ७६ ॥ त्वयाततमिदंसर्वंजगत्स्थावरजंगमम् ॥ त्वत्तएवसमुत्पन्नंसदेवासुरमानुषम् ॥
॥ ७७ ॥ ब्रह्माचाहंचरुद्रश्चसमुत्पन्नाजगत्पते ॥ कल्पादौतुपुरादेवस्थितयेजगतोनघ ॥ ७८ ॥ नमस्तेवेदरूपायअन्हरूपायवैनमः ॥
नमस्तेज्ञानरूपाययज्ञायचनमोनमः ॥ ७९ ॥ प्रसीदास्मासुदेवेशभूतेशकिरणोज्ज्वल ॥ संसारार्णवमग्नानांप्रसादंकुरुगोपते ॥ ८० ॥ वे
दांतायनमोनित्यंनमोयज्ञकलायच ॥ सुमंतुरुवाच ॥ स्तुत्वैवंभास्करंभक्त्याविष्णुर्भरतसत्तम ॥ ८१ ॥ प्रदध्यौनृपशार्दूलरविंतद्गतमा
नसः ॥ एवंतेनरशार्दूलदेवाब्रह्मादयोऽनघ ॥ ८२ ॥ स्तुवंतितंमहात्मानंसहस्रकिरणंरविम् ॥ इत्येवंस्तुवतांतेषांरविंभक्त्यामहात्म
नाम् ॥ ८३ ॥ अथतुष्टोरविस्तेषांब्रह्मादीनांजगत्पतिः ॥ विज्ञायभक्तिंपरमांश्रद्धांचपरमांविभुः ॥ ८४ ॥ उवाचसमहातेजाः
प्रहृष्टेनांतरात्मना ॥ ८५ ॥ ग्रहेशोव्योमआरूढस्तेजसाप्रज्वलन्दिशः ॥ ब्रह्माणंविष्णुमीशानमामंत्र्यैतान्विशांपते ॥ ८६ ॥ दृष्ट्वा
तान्प्रणतान्सर्वाञ्छिरोभिरवनिंगतान् ॥ तुष्टोऽस्मितेसुरज्येष्ठचतुर्मुखजगत्पते ॥ ८७ ॥ वरंवरयभद्रंतेमनसात्वंयमिच्छसि ॥
श्रुत्वातुवचनंभानोर्ब्रह्मालोकगुरुर्नृप ॥ ८८ ॥ जगामाशिरसाभूमावुवाचसकृतांजलिः ॥ ब्रह्मोवाच ॥ कृतकृत्योऽस्मिदेवेशपूतश्चास्मिख

गाधिप ॥ ८९ ॥ धन्योऽस्म्यनुगृहीतोऽस्मिगतोऽस्मिपरमांगतिम् ॥ सहस्रकिरणैर्यन्मेभवान्दर्शनमागतः ॥ ९० ॥ अपश्यतश्चदेवेशमूढ
मासीन्मनोमम ॥ भगवन्संप्रसीदत्वंममोपरिविभावसो ॥ ९१ ॥ प्रयच्छत्वंबलंभक्तिमात्मनोममगोपते ॥ गत्वाशिरोभिरवनिमष्टांगपात
तस्यच ॥ ९२ ॥ भक्त्याविज्ञातिमाकर्ण्यप्रसादंकुरुगोपते ॥ ब्रह्मणोवचनंश्रुत्वापूषादेवोजगत्पतिः ॥ ९३ ॥ तथेत्याहमहाराजाविरंचिंप्रश्रया
न्वितम् ॥ ब्रह्मणेचवरंदत्त्वाराजन्देवोदिवाकरः ॥ ९४ ॥ उवाचत्र्यंबकंदेवंशशांककृतशेखरम् ॥ वरंवरयभूतेशभूभुजादयितानघ ॥ ९५ ॥
यमिच्छसिमहादेववच्म्यहंतदशेषतः ॥ भास्करस्यवचःश्रुत्वाईश्वरस्त्रिपुरांतकः ॥ ९६ ॥ गत्वातुशिरसाभूमौप्रणम्योवाचभास्करम् ॥
महादेवउवाच ॥ ॥ पुण्योऽहंपुण्यकर्माहंनास्तिधर्मितरोमया ॥ ९७ ॥ गतोऽहंपरमांसिद्धिंगतश्चपरमांगतिम् ॥ नाप्राप्यमस्तिदेवेश
नासाध्यंममकिंचन ॥ ९८ ॥ यस्यमेभगवान्देवःप्रसादप्रवणःस्थितः ॥ त्वयाततमिदंसर्वंजगत्स्थावरजंगमम् ॥ ९९ ॥ त्वत्तएवसमुत्पन्नं
लयंचत्वयियास्यति ॥ यदितुष्टोममविभोअनुग्राह्योऽस्मितेयदि॥१००॥ अचलांदेहिमेभक्तिमात्मनश्चरणंनय ॥ व्योमकेशवचःश्रुत्वापूषा
देवोदिवाकरः ॥ १०१ ॥ तथेत्याहहरंवीरततोहरिमुवाचह ॥ नारायणमहाबाहोवरंवरयगोधर ॥ १०२ ॥ परितुष्टोऽस्मितेदेवयमिच्छसिम
हाबल ॥ श्रुत्वातुभास्करवचःकलिलजनकोहरिः ॥ १०३ ॥ उवाचपरयाभक्त्यानत्वाचशिरसारविम् ॥ ॥ नारायणउवाच ॥ ॥ जय
देवजगन्नाथजयदेवगुरोरवे ॥ १०४ ॥ प्रसीदममदेवेशभक्तिंयच्छात्मनोरवे ॥ येनाहंसर्वदेवानामुत्तमःस्यांजगत्पते ॥ १०५ ॥ अजेयश्चत
थादेवदैत्यदानवरक्षसाम् ॥ त्वद्भक्त्याबृंहितबलस्तेजसामहतान्वितः ॥ १०६ ॥ ततोमयामहत्कर्मकर्तव्यंतवशासनात् ॥ प्रजानांपालनंदेव
देवानांचग्रहाधिप ॥ १०७ ॥ वर्णानामाश्रमाणांचवर्णधर्मस्यवाविभो ॥ दुष्टदैत्यविनाशायलोकानांपालनायच ॥ १०८ ॥ सृज्येऽहंभ
वतापूर्वंकल्पादौचकृतोऽनघ ॥ यस्यरुष्टोभवान्तस्याद्वैकथंचित्पुरुषस्यतु ॥ १०९ ॥ व्याधिर्दुःखमनारोग्यंदारिद्र्यंसंततिक्षयः ॥ तस्यै
तानिभवंतीहआधयोविविधास्तथा ॥ ११० ॥ तस्मात्त्वंचततोदेवसंस्तव्यःसततंबुधैः ॥ एवंत्वांगोपतेदेवभक्त्याश्रद्धासमन्वितः॥१११ ॥
अहमार्चितुमिच्छामितस्मान्ममकृपांकुरु॥११२॥इतिश्रीभविष्यमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेसूर्यतेजोवर्णनंनामत्रिपंचाशदुत्तर
शततमोऽध्यायः॥१५३॥ ॥सुमंतुरुवाच ॥छ॥ ॥ श्रुत्वातुवचनंभानुर्विष्णोरमिततेजसः ॥ उवाचकुरुशार्दूलआदित्यःकृपयान्वितः ॥१॥

॥ आदित्यउवाच ॥ कृष्णकृष्णमहाबाहोशृणुमेपरमंवचः ॥ यदर्थंप्रार्थितःकृष्णतत्सर्वंतेभविष्यति ॥ २ ॥ देवदानवयक्षाणांगंधर्वोरगर
क्षसाम् ॥ अजेयस्त्वंमहाबाहोभविष्यसिनसंशयः ॥३॥ जगत्पालयितुंसर्वंसमर्थश्चभविष्यसि ॥ अचलातवभक्तिश्चभविष्यतिममोपरि ॥४॥
ब्रह्मापिसततंशक्तोजगत्स्रष्टुंभविष्यति ॥ संहर्तुंशंकरश्चापिमत्प्रसादाद्भविष्यति ॥५॥ भवंतोमत्प्रसादेनज्ञानिनामुत्तमंपदम् ॥ गमिष्यंतिनसं
देहोममपूजाप्रसादतः ॥ ६ ॥ रवेर्वचनमाकर्ण्यगोश्रुताभरणाविभो ॥ उवाचगोपतिर्गोगोपतेगोवृषध्वजः ॥ ७ ॥ त्वामाराध्यभविष्यामोवयं
सर्वेसुरोत्तमाः ॥ कथमाराधयामोहिभवंतंश्रद्धयान्विताः ॥८॥ श्रेयसेसततंदेवब्रूहिनस्तत्त्वमात्मनः ॥भवतोहिनपश्यामोमूर्तिंपरमपूजिताम् ॥
॥ ९ ॥ पश्यामःकेवलंतेजोह्यब्धेस्तोयमिवोज्झितम् ॥ ज्वालामालाकुलंसर्वमनेकाकृतिमद्भुतम् ॥ १० ॥ नचाकारविहीनंतुचेतसोलंबनं
भवेत् ॥ आलंबनमृतेदेवनाचित्तरमणंक्वचित् ॥ ११ ॥चेतसोऽरमणेभक्तिर्नपुंसांजायतेक्वचित् ॥ भक्तिंविनापूजयितुंनशक्यंतेदिवौकसः ॥१२॥
त्वत्पूजनेहिप्राप्यंतेदेवधर्मादयोनरैः ॥ तस्माद्दर्शयतांमूर्तिमात्मनोयापरामता ॥ १३ ॥ येनत्वांपूजयित्वातुवयंसिद्धाभवामहे॥सूर्यउवाच ॥
साधुसाधुमहादेवसाधुपृष्टोऽस्मिसुव्रत ॥ १४ ॥ शृणुष्वैकमनाःकृत्स्नंगदतोममशानद ॥ चतुर्मूर्तिरहंदेवजगद्व्याप्यव्यवस्थितः ॥ १५ ॥
श्रेयसेसर्वलोकानामादिमध्यांतकृत्सदा ॥ एकामेराजसीमूर्तिर्ब्रह्मेतिपरिकीर्तिता ॥ १६ ॥ सृष्टिंकरोतिसानित्यंकल्पादौजगतांविभो ॥
द्वितीयासात्त्विकीप्रोक्तायापरापरिकीर्तिता ॥ १७ ॥ जगत्सापालयेन्नित्यंदुष्टदैत्यविनाशिनी ॥ तृतीयातामसीज्ञेयाईशेतिपरिकीर्तिता ॥
॥ १८ ॥ त्रैलोक्यंसंहरेत्सातुकल्पांतेशूलपाणिनी ॥ चतुर्थीतुगुणैर्हीनासत्यादिभिरनुत्तमा ॥ १९ ॥ साचाशक्याक्वचिद्द्रष्टुंस्थितासाचाभ
वत्सदा॥तयाततमिदंसर्वंयच्चोद्दीथंतुमेगतिः ॥ २० ॥ निष्कलासकलासातुसुरूपारूपवर्जिता॥अंतर्गताचलोकानांनचकर्मफलंगता ॥२१॥
तिष्ठमानाप्यलिप्तासापद्मपत्रमिवांभसा ॥ अस्पृष्टाचसदाषड्भिःसप्तातीत्यव्यवस्थिता॥२२॥चतुस्तनाचसाषड्भ्यस्तुरीयाख्यासुपूजिता॥न
सास्रष्टुंत्वयाशक्याहरिणाब्रह्मणानच ॥ २३ ॥ मामनाराध्यभूतेशव्योमरूपंकदाचन ॥ यदेतद्भवतांदेवप्रबोधार्थमुपस्थितम् ॥ २४ ॥ अ
हंकारविमूढानांतमसाचत्रिलोचन ॥ प्रकाशायचलोकानांज्वालामालासमाकुलम् ॥ २५ ॥ कर्णिकेवस्थितंदेवभूपद्मस्याखिलस्यच ॥

यस्यसंदर्शनादेवयूयंसर्वेप्रबोधिताः ॥२६॥ प्रकाशमभवद्रापिजगत्सर्वमथार्चिभिः ॥ तस्मादाराधयस्वैनमस्पृष्टंगमनोपमम् ॥ २७ ॥ मन्मू
र्तियेनतांदिव्यांद्रक्ष्यसित्वंत्रिलोचन॥यत्त्वाद्यमीश्वरंजज्ञे तद्व्योमपरिकीर्तितम्॥२८॥कल्पांतेह्यत्रवैव्योम्निलीयंतेसर्वदेवताः ॥दक्षिणेलीयतेब्र
ह्मावामेतस्यजनार्दनः॥२९॥त्वंसदाकचदेशेतुलीयसेत्रिपुरांतक ॥ गायत्रीलीयतेतस्यहृदयेलोकमातरः ॥३०॥लीयंतेमूर्ध्निवैवेदाःसषडंगपद
क्रमः ॥ जठरेलीयतेसर्वंजगत्स्थावरजंगमम् ॥ ३१ ॥ पुनरुत्पद्यतेह्यस्माद्ब्रह्माद्यंसचराचरम् ॥ आकाशंव्योमइत्याहुःपृथिवीनिक्षुभामता ॥
॥ ३२ ॥ भूतश्रेयोहमाकाशोनिक्षुभादयितामम ॥ मयानिक्षुभयासर्वं जगद्व्याप्तंत्रिलोचन ॥ ३३ ॥ तस्मादाराधयव्योमत्वंब्रह्माकेशवस्तथा॥
तन्मेरूपंमहद्व्योमपूजयित्वात्रिलोचनम् ॥ ३४ ॥ दिव्यंवर्षसहस्रंहिगिरौत्वंगंधमादने ॥ ततोयास्यासिसंसिद्धिंषडंगांपरमांशुभाम् ॥ ३५ ॥
कलापग्राममाश्रित्यशंखचक्रगदाधरः ॥ आराधयतुमांभक्त्याव्योमरूपंजनार्दनम् ॥ ३६ ॥ अंतरिक्षगतंतीर्थंपुष्करंलोकपावनम् ॥ तत्र
गत्वाविरिंचोमेव्योमरूपंसदार्चतु ॥ ३७ ॥ एवंमांसततंयूयंसमाराध्यजगत्पतिम् ॥ समानांचसुदिव्यानांसहस्रत्रयमादरात् ॥ ३८ ॥ ततोद्र
क्ष्यथमेमूर्तिपरमांयांविदुर्बुधाः ॥ कदंबगोलकाकारांरश्मिमालाकुलांपराम् ॥ ३९ ॥ अथनारायणोदेवःप्रणम्याशिरसारविम् ॥ कृतांजलिपु
टोभूत्वाइदंवचनमब्रवीत् ॥ ४० ॥ ॥ विष्णुरुवाच ॥ ॥ यदितेपरमंरूपंमतंव्योमह्यनौपमम् ॥ तमाराध्यवयंसर्वेयास्यामःसिद्धिमुत्त
माम् ॥ ४१ ॥ कीदृग्व्योमत्वहंब्रह्माहरश्चत्रिपुरांतकः ॥ आराधयन्महादेवभक्त्याश्रेयोर्थमात्मनः ॥ ४२ ॥ येनगच्छामहेसिद्धिंतमाराध्य
दिवाकरम् ॥ तस्मान्नोलक्षणंब्रूहिव्योम्नःपरमपूजितम् ॥४३॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषत्र्युपाख्यानेचतुः
पंचाशदुत्तरशततमोऽध्यायः ॥ १५४ ॥छ॥ आदित्यउवाच ॥ ॥ साधुसाधुसुरश्रेष्ठसाधुपृष्टोऽस्मिभूधर ॥ शृणुष्वैकमनाःकृष्णगदतो
निखिलंमम ॥ १ ॥ आराधयत्वयंदेवोममरूपमनौपमम् ॥ चतुष्कोणंपरंव्योमअद्भुतंगैरिकोज्ज्वलम् ॥ २ ॥ त्वामाराध्यचचक्रांकंशंक
रोवृत्तमादरात् ॥ शब्दादौसततंब्रह्मसगरादौत्रिलोचनः ॥ ३ ॥ मध्याह्नेत्वंसदादेवभक्त्यामामर्चयस्ववै ॥ यथेष्टम्प्रभवःसर्वेभक्त्यामांपूजयं
तुवै ॥ ४ ॥ ततोब्रह्मादयोदेवाःश्रुत्वावाक्यंविभावसोः ॥ प्रणम्याशिरसासर्वइदंवचनमब्रुवन् ॥ ५ ॥ धन्यादेववयंसर्वेकृतकृत्यास्तथैवच ॥

अस्माभिर्भगवान्पृष्टस्तेजसाप्रज्वलंतिच ॥ ६ ॥ संभूताज्ज्ञानिनःसर्वेभवतोदर्शनाद्वयम् ॥ तमोमोहात्तथातंद्रीसर्वमेकपदेगतम् ॥ ७ ॥ वयंत्व
न्मूर्तयःसर्वेतेजसातवसंवृताः ॥ उत्पत्तिस्थितिनाशायलोकानांतवशासनात् ॥ ८ ॥ स्थिताःसर्वेसुरज्येष्ठलोकपालाश्चकृत्स्नशः ॥ अधुनासा
धयामेहव्योम्नःपूजांव्रजामहे ॥ ९ ॥ इत्थंतेषांवचःश्रुत्वाभास्करोवारितस्करः ॥ उवाचब्रह्मविष्ण्वीशान्सामपूर्वमिदंवचः ॥ १० ॥ आदि
त्यउवाच ॥ ॥ एवमेतन्नसंदेहोयदावदथसुव्रताः ॥ यूयंमन्मूर्तयःसर्वेयुष्माकमहमेवहि ॥ ११ ॥ यदेतद्दर्शनंदेवाःप्रमाणंचयदुत्तमम् ॥
ज्वालामालाकुलंशुभ्रंशांडिलेयमिवोज्झितम् ॥ १२ ॥ युष्माकंदेवशार्दूलास्तन्निबोधतकारणम् ॥ अहंकारविमूढानांमिथःकलहिनांतथा ॥ १३ ॥
प्रबोधार्थंहियुष्माकंतमसोनाशनायच ॥ प्रवर्तनायसर्वेषांकर्मणांचप्रदर्शितम् ॥ १४ ॥ तस्माद्देवाविदित्वातुनाहंकारःकदाचन ॥ कर्तव्यो
भूतिमिच्छद्भिःसततंदेवसत्तमाः ॥ १५ ॥ मानंदर्पमहंकारंपूर्वंत्यक्त्वासुदूरतः ॥ आराधयतमांभक्त्यासततंश्रद्धयान्विताः ॥ १६ ॥ ततोद्र
क्ष्यथमेरूपंसकलंनिष्कलंचयत् ॥ यस्यसंदर्शनाद्देवसर्वेसिद्धिमवाप्स्यथ ॥ १७ ॥ एवमुक्त्वामहाराजसहस्रकिरणोविभुः ॥ जगामदर्शनं
तेषांपश्यतामेवभारत ॥ १८ ॥ अथतेविस्मिताःसर्वेब्रह्मविष्णुपिनाकिनः ॥ तेजसातस्यदेवस्यभास्करस्यमहौजसः ॥ १९ ॥ परस्परम
थोचुस्तेविस्मयेनतदानृप ॥ अहोमहात्मादेवोऽयंदितिपुत्रोदिवस्पतिः ॥ २० ॥ बृहद्भानुर्महातेजालोकदीपोविभावसुः ॥ येनसर्वेवयंत्राता
निघ्नताविपुलंतमः ॥ २१ ॥ आराधयामस्तंसर्वेगत्वास्थानानिकृत्स्नशः ॥ येनसर्वेवयंतस्यप्रसादात्सिद्धिमाप्नुहे ॥ २२ ॥ तद्व्योमपूजयित्वा
तुपरयाश्रद्धयाविभोः ॥ आमंत्र्यतेमिथःसर्वेगताःपूजार्थमादरात् ॥ २३ ॥ जगामपुष्करंब्रह्माशालिग्रामंजनार्दनः ॥ वृषध्वजोगतोवीरपर्व
तंगंधमादनम् ॥ २४ ॥ त्यक्त्वामानमहंकारंकुर्वंतस्तपउत्तमम् ॥ आराधयंतितंदेवंभास्करंवारितस्करम् ॥ २५ ॥ व्योमेकृत्वाचतुष्कोणंब्र
ह्मानित्यमपूजयत् ॥ चक्रांकितंहरिर्नित्यंसम्यग्व्योममपूजयत् ॥ २६ ॥ हरोऽपिसततंवीरतेजसावह्निसन्निभम् ॥ अपूजयत्सदावृत्तंव्यो
मंभक्त्यासमन्वितः ॥ २७ ॥ दिव्यवर्षसहस्रांतेपूजयंतोदिवाकरम् ॥ गंधमाल्योपहारैस्तुनृत्यगीतप्रवादितैः ॥ २८ ॥ अतोषयन्महात्मा
नंकुर्वाणस्तपउत्तमम् ॥ भक्त्याचलेनमनसाविवस्वंतमनुत्तमम् ॥ २९ ॥ अथतेषांमहाराजप्रसन्नोभुवनाधिपः ॥ दर्शयामासलोकात्मा

युगपद्वैविभावसुः ॥ ३० ॥ कृष्णात्माचमहातेजाश्चतुर्धायोगतोनघ ॥ गत्वैकेनसुरश्रेष्ठंसोब्रवीत्परमंवचः ॥ ३१ ॥ अन्येनशंकरमन्येअ
न्येनगरुडध्वजम् ॥ सततापतथान्येनरथारूढोदिवंसदा ॥ ३२ ॥ एवंयोगबलाद्भानुःकृतवान्महदद्भुतम् ॥ उग्रेतपसिवर्ततंदृष्ट्वाचैनंच
तुर्मुखम् ॥ ३३ ॥ पूजयंतंमहद्व्योमभूगतैर्मुखपंकजैः ॥ उवाचतंमहाराजभास्करश्चतुराननम् ॥ ३४ ॥ पश्यपश्यसुरज्येष्ठवरदंमामुपाग
तम् ॥ श्रुत्वैवंवचनंभानोर्विरिंचस्तमपश्यत ॥ ३५ ॥ दृष्ट्वाजगामप्रणतोअवनिंमुखपंकजैः ॥ हर्षादुत्फुल्लनयनःपुनरुत्थायभास्करम् ॥
॥ ३६ ॥ उवाचपरमंवाक्यंकृतांजलिपुटःस्थितः ॥ ॥ ब्रह्मोवाच ॥ ॥ नमस्तेदेवदेवेशनमस्तेतिमिरापह ॥ ३७ ॥ नमस्तेभूतभव्ये
शभूतादिर्भूतभावनः ॥ प्रसादंकुरुमेदेवप्रसन्नोऽथदिवाकरः ॥ ३८ ॥ गतिरन्यानमेदेवविद्यतेत्वामृतेविभो ॥ ॥ आदित्यउवाच ॥ ॥
एवमेवयथार्थंत्वंनास्तितत्रविचारणा ॥ ३९ ॥ त्वंमेप्रथमजःपुत्रःसंभूतःकारणात्पुरा ॥ वरंवरयभद्रंतेवरदोस्मितवाग्रतः ॥ ४० ॥ यमि
च्छसिसुरज्येष्ठमात्वंशंकांकुरुप्रभो ॥ ॥ ब्रह्मोवाच ॥ ॥ यदिमेभगवांस्तुष्टोददातिवरमुत्तमम् ॥ ४१ ॥ कर्तुंशक्नोमिसृष्टिंचप्रसा
दात्तवगोपते ॥ कृताकृताहिमेदेवसृष्टिर्नैहप्रसिद्ध्यति ॥ ४२ ॥ ॥ आदित्यउवाच ॥ ॥ नपुत्रत्वमहंप्राप्तस्तवदेवचतुर्मुख ॥ तवान्व
येगमिष्यामिपुत्रत्वंहिमरीचये ॥ ४३ ॥ ततोयास्यतितेसिद्धिंकृत्स्नासृष्टिश्चतुर्मुख ॥ भवितैवंनसंदेहोमत्प्रसादाज्जगत्पते ॥ ४४ ॥ एव
मुक्तोविरिंचिस्तुरविणापृथिवीपते ॥ तंवैव्योढंविवस्वंतंलोकनाथंजगत्पतिम् ॥ ४५ ॥ पुनराहसुरज्येष्ठःप्रणम्यशिरसारविम् ॥ क्कमेवासो
जगन्नाथभविष्यतिदिवस्पते ॥ ४६ ॥ ॥ आदित्यउवाच ॥ ॥ यन्मेरूपंमहद्व्योमपृष्ठशृंगमनुत्तमम् ॥ तत्रदेवकदंबैस्तुभवान्नित्यंव
सिष्यति ॥ ४७ ॥ इंद्रःपूर्वेदिशोभागेआग्नेयांशांडिलीसुतः ॥ दक्षिणस्यांयमोनित्यंनैर्ऋत्यामथनिर्ऋतिः ॥ ४८ ॥ पश्चिमायांतुवरुणो
वायव्यांतुसदागतिः ॥ उत्तरेतुदिशोभागेनिवसेद्धनदस्ततः ॥ ४९ ॥ ईशान्यांशंकरोदेवोमध्येत्वंविष्णुनासह ॥ श्रुत्वैवंवचनंभानोर्वेधाः
प्रीत्यातमब्रवीत् ॥ ५० ॥ कृतकृत्यंतथात्मानंमन्यतेचनराधिप ॥ चकारचतथासर्वंभास्करोक्तमशेषतः ॥ ५१ ॥ सचसिद्धिंगतोवीर
प्रसादाद्भास्करस्यतु ॥ आदित्योपिवरंदत्वाब्रह्मण्योब्रह्मणेऽनघ ॥ ५२ ॥ जगामसहदेवेनपर्वतंगंधमादनम् ॥ ददर्शतत्रभूतेशंतपस्तीव्रंसमा

श्रितम् ॥८३॥ कपर्दिनंशूलधरंचंद्रार्ककृतशेखरम् ॥ पूजयंतंपरंव्योमसुव्रतंतेजसान्वितम् ॥८४॥ गंधमाल्योपहारैश्चनृत्यगीतप्रवादितैः ॥
मुखवाद्यैश्चबहुभिःप्रणवस्तोत्रगीतिभिः॥ ५५ ॥ पूज्यैवतंमहद्व्योमजगामशिरसामहीम् ॥ दृष्ट्वैवंपूजयंतंचभास्करस्त्रिपुरांतकम् ॥ ५६ ॥
तुष्टोवाचमहातेजागोशुभाभरणंहरम् ॥ भीमतुष्टोऽस्मितेवत्सवरंमत्तोवृणुष्ववै ॥ ५७ ॥ तवांतिकमहंप्राप्तोवरदोभूभृतालयम् ॥ श्रुत्वैवंव
चनंभानोर्महादेवोमहीपते ॥ ५८ ॥ ददर्शलोकनाथंतंप्रज्वलंतमनुत्तमम् ॥ उवाचप्रणतोभूत्वाअष्टांगोभूतलंगतः ॥ ५९ ॥ नमोनमस्ते
देवेशप्रभाकरदिवाकर ॥ शुभालयशुभाधारविकर्तनशुभानन ॥ ६० ॥ प्रसादंकुरुदेवेशप्रसन्नस्यविकर्तन ॥ संसारार्णवमग्नस्यभवपोतो
जगत्पते ॥ ६१ ॥ तवांगसंभवोदेवपुत्रोहंवल्लभस्तव ॥ यत्करोतिमहादेवपितापुत्रस्यतत्कुरु ॥ ६२ ॥ ॥ आदित्यउवाच ॥ ॥ ए
वमेतन्नसंदेहोयथावदसिशंकर ॥ ललाटात्त्वंसमुत्पन्नःपुत्रःपुत्रवतांवर ॥ ६३ ॥ वरंवरयभद्रंतेमनसात्वंयमिच्छसि ॥ दुर्देयंचापितेदास्येत्रि
पुरांतकसुन्दर ॥ ६४ ॥ ॥ महादेवउवाच ॥ ॥ यदितुष्टोऽसिमेदेवअनुग्राह्योस्मितेयदि ॥ प्रयच्छमेवरंभानोदेहिभक्तिंममाचलाम्॥
॥ ६५ ॥ देवदानवगंधर्वयक्षरक्षोगणास्तथा ॥ निर्जित्याहंयथादेवयुगांतेसंहरेप्रजाम् ॥ ६६ ॥ तथाप्रयच्छमेदेवस्थानंचपरमंविभो ॥ ये
नाहंहेतिसर्वंचजयेदेवजगत्प्रभो ॥ ६७ ॥ ॥ आदित्यउवाच ॥ ॥ देवदानवगंधर्वयक्षराक्षसपन्नगान् ॥ हरिष्यसिजगच्चापियुगांतेत्रि
पुरांतक ॥ ६८ ॥ यदेतत्पूजितंनित्यंमद्रूपंव्योमसुत्तमम् ॥ एतत्त्रिशूलंपरमंतवशस्त्रंभविष्यति ॥ ६९ ॥ ईशानंचतथाभागेव्योम्नो
वासभविष्यति ॥ महादेवउवाच ॥ एवंभवतुमेदेवयःप्रसादस्त्वयाकृतः ॥ ७० ॥ कृतकृत्योऽस्मिदेवेशयन्मेदेवोवरप्रदः ॥ ७१ ॥
इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मनिरूपणंनामपञ्चपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५५ ॥ छ ॥ सुमंतुरुवाच ॥
इत्थंदत्वावरंभानुरीश्वरस्यविशांपते ॥ शालग्रामंजगामाशुवरंदातुंहरेर्नृप ॥ १ ॥ ददर्शसहरिंतत्रतपंतंपरमंतपः ॥ कृष्णा
जिनधरंशांतंप्रज्वलंतंस्वतेजसा ॥ २ ॥ पूजयंतंमहद्व्योमचक्राकारमनौपमम् ॥ गंधमाल्योपहारैश्चनृत्यगीतप्रवादितैः ॥ ३ ॥ एवंसं
पूज्यतंव्योमभक्त्याश्रद्धासमन्वितः ॥ जगामाशिरसाभूमिंहृदिध्यायन्दिवाकरम् ॥ ४ ॥ विष्णुंतंप्रणतंदृष्ट्वातुष्टोदेवोविभावसुः ॥ उवाच

विष्णुमामंत्र्यपश्यमामागतंहरे ॥ ५ ॥ तद्वाक्यंकेशवःश्रुत्वाशिरसाचमहींगतः ॥ नमस्तेसर्वदेवेशनमस्तेगगनेचर ॥ ६ ॥ जगत्पतेनम
स्तेऽस्तुग्रहाणांपतयेनमः ॥ दारिद्र्यव्याधिदुःखघ्ननमस्तेभवनाशन ॥ ७ ॥ आदित्यार्करवेभानोभगपूर्णदिवाकर ॥ नमस्तेसर्वतत्वज्ञ
सर्वपापविवर्जित ॥ ८ ॥ प्रसीदमेजगन्नाथहंसानघदिवस्पते ॥ संसारार्णवमग्नानांत्राहिदेववृषध्वज ॥ ९ ॥ पुत्रोऽहंतवदेवेशद्वितीयोब्रा
ह्मणोऽनघ ॥ पितेवपुत्रस्यरवेदेहिकामाञ्जगत्पते ॥ १० ॥ विष्णोर्वचनमाकर्ण्यहर्षमाप्यादिवाकरः ॥ उवाचकुरुशार्दूलहर्षगद्गदयागिरा
॥ ११ ॥ साधुकृष्णमहाबाहोतुष्टोऽहंतवकेशव ॥ निशम्यतेपराभक्तिःश्रद्धाचपुरुषोत्तम ॥ १२ ॥ वरंवरयतस्मात्त्वंवत्सयन्मनसेच्छसि
॥ वरदोऽहमनुप्राप्तोभक्त्याक्रांतस्तवानघ ॥ १३ ॥ निशम्यवचनंभानोर्विष्णुर्भक्त्यासमन्वितः ॥ कृतांजलिपुटोभूत्वाइदंवचनमब्रवीत्
॥ १४ ॥ कृतकृत्योऽस्मिदेवेशनास्तिधन्यतरोमम ॥ यस्यमेभगवंस्तुष्टोवरदस्त्वंगतःस्वयम् ॥ १५ ॥ यदितुष्टोममाविभुर्भक्त्याक्रीतो
मयायदि ॥ प्रयच्छत्वचलांभक्तिंयथाशत्रुपराजयम् ॥ १६ ॥ तथाममवरंदेहिसर्वारातिविनाशनम् ॥ ममस्थानंचपरमंसर्वलोकनमस्कृ
तम् ॥ १७ ॥ लोकानांपालनेयुक्तिंबलंवीर्यंयशःसुखम् ॥ एवमुक्तोरविर्भक्त्याविष्णुनावाक्यमुत्तमम् ॥ १८ ॥ उवाचकुरुशार्दूलजगत्सन्ना
दयन्निव ॥ साधुसाधुमहाबाहोब्रह्मणस्त्वंजघन्यजः ॥ १९ ॥ हरस्यअग्रजश्चापिसर्वदेवनमस्कृतः ॥ भक्तश्चापिममात्यंतंब्रह्मण्यश्चसदानघ ॥ २० ॥
तस्मात्तवाचलाभक्तिर्भविष्यतिममोपरि ॥ एतदेवमहद्व्योमचक्रंतेप्रभविष्यति ॥ २१ ॥ सर्वायुधवरंवीरसर्वारातिविनाशनम् ॥ तथास्था
नंचपरमंसर्वलोकनमस्कृतम् ॥ २२ ॥ इत्थंभानोर्वरंप्राप्यहरिर्देवोजगत्पतिः ॥ महाप्रसादमित्युक्त्वाजगामशिरसामहीम् ॥ २३ ॥ भा
स्करोऽपिवरंदत्वाकेशवस्यामितौजसः ॥ जगामाशुमहाराजस्वपुरंविबुधाधिपः ॥ २४ ॥ लोकानांपालनेशक्तिंबलंवीर्यंयशःसुखम् ॥
दत्वाकृष्णस्यदेवेशस्तथान्यमपिकांक्षितम् ॥ २५ ॥ एवंब्रह्मादयोदेवाःपूजयित्वादिवाकरम् ॥ शक्तिमंतोबभूवुस्तेसर्गादीनांप्रवर्तने ॥ २६ ॥
इतितेकथितंपुण्यमाख्यानंपापनाशनम् ॥ त्रिदैवत्यमुपाख्यानंत्रैसुरंलोकपूजितम् ॥ २७ ॥ स्तोत्रत्रयसमायुक्तंधर्मकामार्थसाधनम् ॥
धर्म्यंस्वर्ग्यंतथापुण्यमारोग्यंधनधान्यदम् ॥ २८ ॥ यइदंशृणुयान्नित्यंपठेत्स्तोत्रत्रयंचयः ॥ सोऽग्र्यंयानमारूढोयातिभानोःपरंपदम् ॥ २९ ॥

अपुत्रोलभतेपुत्रमधनोधनमश्नुते ॥ विद्यार्थीलभतेविद्यांप्रसादाद्भास्करस्यतु ॥ ३० ॥ तेजसारविसंकाशंप्रभयापृश्निसन्निभम् ॥ मोदते
सुचिरंकालंज्ञानिनासुत्तमोभवेत् ॥ ३१ ॥ इति श्रीभाविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेत्रैसुरोपाख्यानवर्णनंनामषट्पंचाशदु
त्तरशततमोऽध्यायः ॥१५६॥ छ ॥ ॥ शतानीकउवाच ॥ एतन्मेकौतुकंब्रह्मन्यद्वरंब्रह्मणेरविः ॥ दत्तवांस्तवपुत्रत्वमन्वयेकश्यपस्यतु ॥
॥ १ ॥ यास्यामिद्विजशार्दूलप्रपन्नातिमिरापह ॥ एतन्मेमहदाश्चर्यंशंसभूमिंकथंव्रजेत् ॥ २ ॥ देवादीनांप्रणेतायोयोभुविप्रसवोविभुः ॥ सक
थंभूतलेव्योमजन्यभावंगमिष्याति ॥ ३ ॥ किमर्थंदिव्यमात्मानंजन्मनेसानियोक्ष्यसि ॥ यश्चक्रंवर्तयत्येकोब्रह्मादीनांमनोरमम् ॥ ४ ॥
सजन्मानिकथंपुण्यांबुद्धिंचक्रेविदांवर ॥ गोपायनंयत्कुरुतेजगतःसर्वलौकिकम् ॥ ५ ॥ गोभिःपालयतेकृत्स्नमात्मनोयःस्वयंरविः ॥
महाभूतानिभूतात्मायश्चकारदधारच ॥ ६ ॥ अगर्भःसकथंगर्भमुदरेयाचतेविभुः ॥ येनगोभिःसमाक्रांताविप्रलोकाश्चतुर्दश ॥
॥ ७ ॥ स्थापिताजगतोमार्गास्त्रिवर्गप्रवरास्त्रयः ॥ योऽतकालेजगत्पीत्वाकृत्वावज्रमयंवपुः ॥ ८ ॥ लोकमेकार्णवंचक्रेदृश्य
तेस्वेनकर्मणा ॥ यःपुराणेपुराणात्मातेजसांरूपमास्थितः ॥ ९ ॥ अपिसृष्ट्वाद्विजश्रेष्ठयःससर्जवसुंधराम् ॥ चकारचपुरायश्चत्रैलो
क्यमिदमव्ययः ॥ १० ॥ ददौकृत्वावसुमतींसुराणांसुरसत्तमः ॥ यःस्थितोह्यनलंपीत्वासंवत्सरमयश्चयः ॥ ११ ॥ पातालस्थो
र्णवरसंमध्यतोयमयंहविः ॥ सहस्राशिरसंदेवंसहस्राक्षंसहस्रशः ॥ १२ ॥ सहस्रचरणंब्रह्मन्यमाहुर्वैयुगेयुगे ॥ मुखाद्यस्यसमुत्पन्नोवेधालोक
पितामहः ॥ १३ ॥ हरिश्चवक्षसोयस्यललाटाद्यस्यशंकरः ॥ येनतेनिहतादैत्यामंदेहानामनामतः ॥ १४ ॥ ब्रह्मादीनांदुराधर्षोयःसदा
विघ्ननाशनः ॥ सर्वदेवमयंकृत्वासर्वायुधधरंवपुः ॥ १५ ॥ एकचक्ररथारूढोगरुडाग्रजसारथिः ॥ करांतेयोजगत्सर्वंसदानवसराक्षसम्
॥ १६ ॥ प्रकाशतमसस्पृष्टंवपुर्यस्यसदाद्विज ॥ पूर्वांदिशंगतोनित्यमुदयाचलमक्रमम् ॥ १७ ॥ नाशयेद्यस्तुसततंतमोलोकस्यशांतये ॥
नाशयित्वातमोयस्तुक्रियाःसर्वाःप्रवर्तयेत् ॥१८॥ योक्राणिदक्षिणादीक्ष्यमुशलोलूखलानिच ॥ गार्हपत्येनविधिनातद्धार्येणकर्मणा॥१९॥
अग्निमाहवनीयंचैववेदिंचैवकुशंस्रुचम् ॥ प्रोक्षणीयव्रतंचैवअवभृथंतथैवच ॥ २० ॥ सर्वानिमांश्चयश्चक्रेहव्यभागप्रदान्सुखे ॥ हव्यादांश्चसु

रान्यज्ञेक्रव्यादांश्वपितॄनपि ॥ २१ ॥ भागार्थंमधुधानायचक्रेयोयज्ञकर्मणि ॥ पूषणंचसुतंसोमंपवित्रामरणोमपि ॥ २२ ॥ यज्ञियानिच
द्रव्याणियज्ञांश्चापिसऋत्विजः ॥ सदस्यान्यजमानांश्चमेधाविनस्तथोत्तमान् ॥ २३ ॥ विभ्रभाजपुरासर्वैपारमेष्ठ्येनकर्मणा ॥ युगानुरूपो
यःकृत्वालोकाननुवरंक्रमात् ॥ २४॥ क्षणान्कलाश्चकाष्ठाश्चकालवैकल्यमेवच ॥ मुहूर्तास्तिथयोमासाःपक्षाःसंवत्सरास्तथा ॥ २५ ॥ ऋत
वःकालयोगाश्चप्रमाणंविविधंनृषु ॥ आयुःक्षेत्राण्यपचयोपचर्याश्चैवयोऽकरोत् ॥ २६ ॥ सृष्टालोकास्त्रयोनंतायेनज्ञानेनवर्त्मना ॥ सर्वभूत
गणाःसृष्टाःसर्वभूतात्मनासदा ॥ २७ ॥ प्रणामत्रयपूर्वेणयोगेनरमतेचयः ॥ योगतागतिपोतेनत्रातास्तिजगदीश्वरः ॥ २८ ॥ योगतिर्वृषयु
क्तानांगतिर्योऽपापकर्मणाम् ॥ चातुर्वर्ण्यप्रभावश्चवपुर्होत्रस्यरक्षिता ॥ २९ ॥ धातुर्वेद्यस्ययोवेत्ताचतुराश्रमसंश्रयः ॥ दिगंबरानुभूतश्चवायु
र्वायुविभावनः ॥ ३० ॥ अग्नीषोमात्मकंज्योतिर्योगीशक्षणदांतकः ॥ यःपरंश्रूयतेज्योतिर्यःपरंश्रूयतेतपः ॥ ३१ ॥ यंपरंपरमंप्राहुःपरमा
त्मानमच्युतम् ॥ ब्रह्मादिभिःस्तुतोदेवोयश्चदैत्यांतकृद्विभुः ॥ ३२ ॥ युगांतेष्वंतकोयस्तुयश्चलोकांतकोत्तमः ॥ सेतुर्योलोकसेतूनांमध्ये
योमध्यकर्मणाम् ॥३३॥ वेत्तायोवेदविदुषांप्रभुर्यःप्रभुविष्णुनाम् ॥ सौम्यभूतस्तुसौम्यानामग्निभूतोग्निवर्चसाम् ॥ ३४॥ मानुषाणांमनोभूत
स्तपोभूतस्तपस्विनाम् ॥ विनयोनयवृत्तीनांतेजस्तेजस्विनामपि ॥ ३५ ॥ विग्रहोविग्रहाणांचगतिर्गतिमतामपि ॥ आकाशप्रसवोवायु
र्वायुःप्राणोहुताशनः ॥ ३६ ॥ देवाहुतिप्रदानोद्यत्प्राणाग्निस्तमनाशनः ॥ रसाद्धिशोणितंभवतिशोणितान्मांसमुच्यते ॥ ३७ ॥ मांसान्म
ज्जावसोर्जन्ममज्जनोस्थीनिजन्मतः ॥ अस्थिमज्ज्ञःसमभवत्ततोवैशुक्रमादिशेत् ॥ ३८ ॥ शुक्राद्गर्भसमभवद्रसमूलेनकर्मणा ॥ तत्रापः
प्रथमोभागःससौम्योराशिरुच्यते ॥ ३९ ॥ ततःक्ष्मासंभवाज्ञेयाद्वितीयाराशिरुच्यते ॥ शुक्रंसोमात्मकंविद्यादात्मरूपंयदात्मकम् ॥४०॥
भवोरसात्मकस्तेषांवीर्यंचशशिपावकम् ॥ कफवर्गेभवेच्छुक्रंपित्तवर्गेचशोणितम् ॥ ४१ ॥ कफस्यपृथिवीस्थानंपित्तंनाभौप्रतिष्ठितम् ॥
देवस्यमध्यहृदयंस्थानंतुमनसःस्मृतम् ॥ ४२ ॥ नाभिकोष्ठांतरस्थंतुतत्रदेवोदिवाकरः ॥ मनःप्रजापतिर्ज्ञेयःकफःसोमोविभाव्यते॥४३॥
पित्तमग्निःस्मृतोयस्मादग्नीषोमात्मकंजगत् ॥ एवंप्रवर्तितेगर्भेवर्धतेऽर्बुदसन्निभे ॥ ४४ ॥ वायुप्रवेशंसंचक्रेसंगतःपरमात्मना ॥ ततोंऽगा

निविसृजतेविभातिपरिवर्तयन् ॥ ४५ ॥ प्राणोऽपानःसमानश्चउदानोव्यानएवच ॥ प्राणस्यप्रथमंस्थानंवर्धयन्परिवर्तते ॥ ४६ ॥ अपानंप
श्चिमेकायउदानोर्ध्वंशरीरगः ॥ व्यानोऽथव्यापकोदेहेसमानःसन्निवर्तते ॥ ४७ ॥ भूतावाप्तिस्ततस्तस्यजायतेंद्रियगोचरा ॥ पृथिवीवायुरा
काशआपोज्योतिश्चपंचमः ॥ ४८ ॥ तस्येंद्रियाणिपिष्टानिस्वंस्वंयोगंप्रचक्रमे ॥ पार्थिवंदेहमाहुस्तुप्राणात्मानंचमारुतम् ॥ ४९ ॥ निद्रा
ह्याकाशयोनिश्चजलाश्रयेप्रवर्तते ॥ ज्योतिश्चक्षुषितज्जन्मतदंशस्तामसःस्मृतः ॥५० ॥ ग्रामाश्चाविषयश्चैवयस्यवीर्यंप्रवर्तितम् ॥ एवंयोसृज
तेलोकान्सदेवासुरमानवान् ॥५१॥ सकथंदेवदेवेशोगर्भमेष्यातिचांशुमान् ॥ यथोदरमादित्यास्तुयःस्वयंचाविशत्पुरा ॥५२॥ एवंमेसंशयो
ब्रह्मन्नेषमेविस्मयोमहान् ॥ कथंरविर्ययौगर्भभावंद्विजवरेतिमे ॥ ५३ ॥ आश्चर्यंपरमंपृच्छेत्वामहंभास्करस्यवै ॥ भानोरुत्पत्तिमाश्चर्यंह्र
दिमेपरिवर्तते ॥ ५४ ॥ एतदाश्चर्यमाख्यानंकथयस्वमहामुने ॥ प्रत्याख्याहिबलंवीर्यंभानोरमिततेजसः ॥ ५५ ॥ इतिश्रीभविष्येमहापु
राणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेसूर्यावतारकथाप्रस्तावववर्णनंनामसप्तपंचाशदुत्तरशततमोऽध्यायः ॥ १५७ ॥ छ ॥ सुमंतुरुवाच ॥
प्रश्नभारोमहांस्ताततत्वयोक्तोरश्मिमालिनि ॥ यथाशक्तितुवक्ष्यामिश्रूयतांभानवंयशः ॥ १ ॥ भानोःप्रभावश्रवणेयस्यतेमतिरुत्थिता ॥
हंतभानोःप्रवृत्तिंचशृणुदिव्यांमयेरिताम् ॥ २ ॥ सहस्राक्षंसहस्राक्षंसहस्रकिरणंचयत् ॥ सहस्रशिरसंदेवंसहस्रकरमव्ययम् ॥ ३ ॥ सहस्राजि
ह्वंभास्वंतंसहस्रमुकुटंप्रभुम् ॥ सहस्रदंसहस्रारिंसहस्रभुजमव्ययम् ॥ ४ ॥ सवनंभवनंचैवहव्यंहोतारमेवच ॥ पात्राणिसमतीतानिवेददीक्षा
चरुंशुभम् ॥५॥ श्रोत्रियंशूर्पमुशलंप्रोक्षणंदक्षिणायनम् ॥ अध्वर्युंसामगंविप्रंसदस्यसदनंतथा ॥ ६ ॥ यूपंसमित्स्रुवंदर्वींमुसलोलूखलानिच॥
प्राग्वासंजयभूतिंचहोतारंचयनंचयत् ॥ ७ ॥ रहस्यानिप्रमाणानिस्थावराणिचराणिच ॥ प्रतिष्ठितानिदार्ढ्यंचस्थंडिलानिकुशांस्तथा ॥८॥
मंत्रयज्ञवहंवह्निभागंभार्गवमेवच ॥ अग्रेभुजीसोमभुजांयच्चत्रिषुउदाहृतम्॥९॥ आयुर्वेदविदोविप्रायजंतेशाश्वतंविभुम् ॥ तस्यभानोःसुरेश
स्यवीरिचंदनमालिनः ॥१०॥ प्रादुर्भावसहस्राणिसमतीतान्यनेकशः ॥ भूयश्चैवभविष्यंतिविनश्यंतिदिनेदिने ॥ ११ ॥ यत्पृच्छसिमहाराजपु
ण्यांदिव्यांकथांशुभाम् ॥ यदर्थंभगवान्भानुःकश्यपस्यसुतोऽभवत् ॥ १२ ॥ तत्तेऽहंसंप्रवक्ष्यामिशृणुसर्वमशेषतः ॥ हितार्थंसर्वमर्त्यानां

लोकानांप्रभवायच ॥ १३ ॥ बहुशःसर्वभूतात्मास्वयंसमभिजायते ॥ तथासमभवद्देवःकश्यपस्यादितेःसुतः ॥ १४ ॥ तुष्टोदत्वापरं
वीरविरंचस्यमहात्मनः ॥ यंयंजनयतेपुत्रमदितिःकश्यपाद्विभोः ॥ १५ ॥ ससयातिविनाशंवैतत्क्षणादेवभारत ॥ दृष्ट्वासुतान्नश्यमा
नान्पुत्रशोकान्विताऽदितिः ॥ १६ ॥ जगामकश्यपाभ्याशेशोकव्याकुलितेक्षणा ॥ सापश्यत्तंचमारीचंमुनिंदीप्तंतपोनिधिम् ॥ १७ ॥
आद्यंदेवगुरुंविप्रंदिव्यंत्रिषवणांबुभिः ॥ तेजसावह्निसंकाशंसौरंवृकसमप्रभम् ॥ १८ ॥ न्यस्तदंडाश्रियायुक्तंबद्धकृष्णाजिनांबरम् ॥ वल्क
लाजिनसवीतंप्रदीप्तंब्रह्मवर्चसम् ॥१९॥ हुताशमिवदीप्यंतंतपंतमिवभास्करम् ॥ अथादितिर्दृष्ट्वैवंभर्तारममितौजसम् ॥ २० ॥ शोकगद्गद
यावाचाइदंवचनमब्रवीत् ॥ किमर्थंभगवान्देवोनिरुद्योगस्तुतिष्ठति ॥ २१ ॥ जातोजातोहिमेपुत्रःसद्यएवविनश्यति ॥ श्रुत्वातुवचनंतस्याः
कश्यपोऋषिसत्तमः ॥२२ ॥ चकारगमनेबुद्धिंब्रह्मलोकगतिंप्रति ॥ सगत्वाब्रह्मभवनंनानाभावसमान्वितम् ॥२३॥ तद्वाक्यमुक्तंतंसर्वंयदुक्तं
तस्यजायया ॥ कश्यपस्यवचःश्रुत्वाकंजजोवाक्यमब्रवीत् ॥ २४ ॥ पुत्रगच्छामसदनंभानोःपरमदुर्लभम् ॥ इत्युक्त्वायानमारुह्यआग्रे
यंपद्मलोचनः ॥ २५ ॥ वेधाजगामभवनमादित्यस्यमहात्मनः ॥ अदितिःकश्यपोब्रह्माजग्मुर्विपुलमाश्रिताः ॥ २६ ॥ तेमुहूर्ते
नसंप्राप्ताःसूर्यलोकंसुवर्चसम् ॥ दिव्यकामगमैर्यानैर्यथाहंकुरुनंदन ॥ २७ ॥ आदित्यंप्रष्टुमिच्छंतितेजसांराशिमुत्तमम् ॥
गच्छंतस्तेचविस्तीर्णामादित्यस्यपरांसभाम् ॥ २८ ॥ षट्पदोद्गीतनिनदांसामगैस्तुसमीरिताम् ॥ क्रतवोबहृचमुखाःप्रोक्ताःपुण्यवदक्ष
राः ॥ २९ ॥ तुष्टुवुःपुरुषव्याघ्रंविततेषुचकर्मसु ॥ यज्ञसंधौवेदविदांपदक्रमविदांतथा ॥ ३० ॥ घोषेणपरमर्षीणांसर्वंतत्रानिनादितम् ॥
यज्ञसंस्तवविद्भिश्चशिक्षावाद्भिस्तथाद्विजैः ॥३१॥ अष्टादशपुराणज्ञैःसर्वविद्याविशारदैः॥मीमांसाहेतुवादज्ञैःसर्ववादविशारदैः ॥३२॥ लोका
यतिकमुख्यैश्चतुष्टुवुःसूर्यमीरितम् ॥ तत्रतत्रचविप्रेंद्रानियताःशंसितव्रताः ॥ ३३ ॥ जपहोमपरान्योग्यान्ददृशुःकश्यपादयः ॥ तस्यांसभा
यामास्तेसरश्मिमालीदिवाकरः ॥ ३४ ॥ सुरासुरगुरुःश्रीमाञ्छुशुभेवीरमायया ॥ उपासतेचतत्रैवप्रजानांपतिमीश्वरम् ॥ ३५ ॥ दक्षःप्रचे
ताःपुलहोमरीचिश्चद्विजोत्तमः ॥ भृगुरत्रिर्वसिष्ठश्चगौतमोनारदस्तथा ॥ ३६ ॥ दिव्यआत्मांतरिक्षंचवायुस्तेजोबलंमही ॥ शब्दःस्पर्शः

स्वरूपंचरसगंधैस्तथैवच ॥ ३७ ॥ प्रकृतिश्चविकाराश्चयच्चान्यत्कारणंमहत् ॥ सांगोपांगाश्चचत्वारोवेदालोकपतेतथा ॥ ३८ ॥ लवाश्च
ऋतवश्चैवसंकल्पप्रणवास्तथा ॥ एतेचान्येचबहवोभानुमंतउपासते ॥ ३९ ॥ अर्थोधर्मश्चकामश्चमोक्षश्चसविशेषतः ॥ द्वेषोहर्षश्चमोहश्चम
त्सरोमानएवच ॥ ४० ॥ वृकोविष्णुसुतःपुत्रःपुष्पजोधिषणस्तथा ॥ माहेश्वरस्तथासौरोविटपोविकचस्तथा ॥ ४१ ॥ मारुतोविश्व
कर्माचअश्विनावन्यवाहनौ ॥ एवमुक्तःसुवचनैर्भानुनाप्रभविष्णुना ॥ ४२ ॥ जगामकश्यपोवीरसहादित्यास्वमाश्रमम् ॥ अदितिर्देवमा
ताचतंगर्भंनिर्दधेस्वयम् ॥ ४३ ॥ भूतात्मानंमहात्मानंदिव्यंवर्षसहस्रकम् ॥ पूर्णेवर्षसहस्रेतुप्रवृत्तोगर्भउत्तमः ॥ ४४ ॥ सुराणांशर
णंदेवश्चासुराणांविनाशनः ॥ गर्भस्थेनतुतेनैवपरित्रातःसुतस्तथा ॥ ४५ ॥ आददानस्तुतेजांसित्रैलोक्यस्यनराधिप ॥ तस्मिञ्जातेतुदेवेशे
त्रैलोक्यस्यसुखावहे ॥ ४६॥ प्रसार्यदैत्यसंघांश्चसुराणांनादवर्धने ॥ अभवत्परमानन्दःसर्वेषांतत्रतस्थुषाम् ॥४७॥ इतिश्रीभविष्येमहापुरा
णेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषुसूर्योत्पत्तिर्नामाष्टपंचाशदुत्तरशततमोऽध्यायः ॥ १५८ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ दक्षःप्रजापति
श्चैवनमस्कारंचकारह ॥ विद्योतमानवपुषासर्वाभरणभूषितः ॥ १ ॥ उपातिष्ठतदेवेशंभानुंचार्षिगणैःसह ॥ ततोगंधर्वमुख्येषुप्रणदत्सुविहा
यसि ॥ २ ॥ बहुभिःसहगंधर्वैःप्रगायत्सुमहीपते ॥ एवंतेदेवगंधर्वाउपागायंतभक्तितः ॥ ३ ॥ उत्पन्नंद्वादशात्मानंभास्करंवारितस्करम् ॥
इंद्रोविवस्वान्पूषाचत्वष्टाचसवितातथा ॥ ४ ॥ भगोंऽशुमानर्यमार्कःपृश्निर्मार्तंडएवच ॥ इत्येकादशएवैतेद्वादशोविष्णुरुच्यते ॥ ५ ॥ एवं
द्वादशधाजातमंशुमंतंमहाद्भुतम् ॥ स्तुवंतिदेवताःसर्वेगताश्चतरसामहीम् ॥ ६ ॥ मृगव्याधश्चसर्वश्चमृगांकांकोमहायशाः ॥ अजैकपादहि
र्बुध्न्यःपीतःकांचःपरंतपः ॥ ७ ॥ दमनश्चेश्वरश्चैवकपालीचविशांपते ॥ स्थाणुर्भगश्चभगवान्रुद्रश्चैतेऽवतस्थिरे ॥ ८ ॥ अश्विनौवसवश्चाष्टौ
गरुडश्चमहाबलः ॥ विश्वेदेवाश्चसाध्याश्चतस्थुःप्रांजलयोनृप ॥ ९ ॥ नागराजोमहाराजवासुकिःप्रांजलिःस्थितः ॥ अन्येचबहवोनागाराक्षसा
श्चमहाबलाः ॥ १० ॥ तार्क्ष्यश्चारिष्टनेमिश्चगरुडश्चमहाबलः ॥ अरुणश्चारुणिश्चैवतत्रप्रांजलयःस्थिताः ॥११॥पितामहश्चभगवान्स्वयमाग
म्यलोककृत् ॥ प्राहदेवगुरुःश्रीमान्सुरैःसर्वैर्महर्षिभिः ॥१२॥ यस्मात्प्रेक्षयतेसर्वंप्रभविष्णुःसनातनः॥तस्माल्लोकेश्वरःश्रीमान्विवस्वांश्चभव

त्विति॥१३॥देवदानवयक्षाणांगंधर्वोरगरक्षसाम्॥यस्मादयमादिदेवस्तस्मादादित्यएवहि॥१४॥ एवमुक्त्वातुभगवान्सार्धंदेवर्षिभिःप्रभुः ॥
नमस्कृत्वासुसंपूज्यययौतत्सदनंप्रति॥१५॥यागतिर्यज्ञशीलानांयागतिःपुण्यकर्मिणाम्॥यागतिःसिद्धयोगानांयागतिश्चमहात्मनाम् ॥१६॥
यस्याष्टगुणमैश्वर्यंसमभूद्देवसत्तमम् ॥ यंप्राप्यशाश्वतंविप्रानावर्ततंभवार्णवे ॥ १७ ॥ वालखिल्यादयोयेचसर्वाश्रमनिवासिनः ॥
सेवंतेयंयतात्मानोदुश्चरंव्रतमास्थिताः ॥ १८ ॥ योऽनंतइवनागेषुयस्यतेसर्वयोगिनः ॥ सहस्रमूर्धारक्ताक्षःशेषादिभिरनुत्तमैः ॥१९॥योय
ज्ञइतिविप्रेंद्रैरर्च्यतेसुखमीप्सुभिः ॥ सर्वेचयंयतप्राणाध्यायन्तिब्रह्मरूपिणम् ॥ २० ॥ यंवेदवेदागायंतिवेत्तारंयज्ञदायिनम् ॥ तंपुत्रंद्वाद
शात्मानंकश्यपःप्राप्यसत्तमम् ॥ २१ ॥ मुदंलेभेसहादित्यासुखंचपरमंविभो ॥ लोकश्चमुमुदेसर्वोराक्षसाभयमाप्नुवन् ॥ २२ ॥ मधुपिंग
लोमहाबाहुःकंबुग्रीवोहसन्निव ॥ इंगुदीबद्धमुकुटोदिशःप्रज्वलयन्निव ॥ २३ ॥ सउवाचमहातेजाःकश्यपंचर्षिसत्तमम् ॥ एषोहंतवपुत्रत्वं
गतोगर्भस्यसिद्धये ॥ २४ ॥ दत्वावरंपुराविप्रविरंचस्यमहात्मनः ॥ तस्मात्त्वमृषिशार्दूलकुरुसृष्टिमनौपमाम् ॥ २५ ॥ एवमाराध्यदेवे
शंब्रह्मासृष्टिमवाप्तवान् ॥ आराध्यकश्यपश्चापिभास्करंसुतमाप्तवान् ॥ २६ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेउभयसप्तमी
माहात्म्येसूर्यावतारवर्णनंनामैकोनषष्ट्युत्तरशततमोऽध्यायः ॥ १५९ ॥छ॥ ॥ शतानीकउवाच ॥ ॥ अहोदेवस्यचरितंभास्करस्यत्वयो
दितम् ॥ ब्रह्मादयोऽपियेनित्यंपूजयंतिविधानतः ॥ १ ॥ ब्रह्माविष्णुःसुराब्रह्मंस्तमाराध्यादिवाकरम् ॥ ददृशुस्तस्यकिंभूतंरूपंयत्तन्म
हाद्भुतम् ॥२॥ सुमंतुरुवाच॥ ॥आराध्यदेवमीशानंभास्करंसूतिवाचकम् ॥ कविष्णूकुरुशार्दूलजग्मतुस्तौहिमाचलम् ॥३॥ गोपतेरांति
कंवीरप्रहृष्टौविभुदर्शने ॥ कुदेंदुसंनिभंद्रष्टुंकंजजश्चाच्युतश्चतौ ॥ ४ ॥ ददृशतुर्महात्मानंचंद्रार्धकृतशेखरम् ॥ पूजयंतंविवस्वंतंभास्व
रंवीरवन्नृप ॥ ५ ॥ अर्च्योचतुर्महात्मानंकविष्णूतंत्रिलोचनम् ॥ भोभोभीमसुरज्येष्ठपश्यावामिहचागतौ ॥ ६ ॥ श्रुत्वोवाचतयोर्वाक्यं
कंजजस्याच्युतस्यच ॥ प्रणम्यशिरसाभूमौकृतापूजाविधानतः ॥७॥ उवाचमधुरंवाक्यंशिक्षाक्षरसमन्वितम् ॥ हर्षगद्गदयावाचादिशःसन्ना
दयन्निव॥८॥ किमाराध्यरविंप्राप्तौसर्वदेववरंविभुम् ॥ कथ्यतांनिखिलंदेवौपरमंकौतुकंमम॥९॥दृष्टवंतौपरांकिंचिद्रूपंदेवस्यशंकरम्॥अव्यय

स्याप्रमेयस्यभानोरमिततेजसः ॥१०॥ निशम्यवचनंवीरशंकरस्यमहात्मनः ॥ ऊचतुस्तौमहात्मानौकविष्णूदेवसत्तमौ ॥ ११ ॥ नतत्प
श्यावहेरूपंयत्तत्परममद्भुतम् ॥ आराधयितुमेवापित्वागतौतेऽतिकंचतम् ॥१२॥तस्मादाराधयामोहिएकीभूयविभावसुम् ॥ गत्वोदयागि
रिंपुण्यंपर्वतंकनकोज्ज्वलम् ॥१३॥ श्रुत्वातुवचनंवीरकंजजाच्युतयोर्हरः ॥तथेत्याहमहाबाहोहर्षादुत्फुल्ललोचनः ॥१४॥ अथतेराजशार्दूल
विवेगोगतयोनृप ॥ जग्मुस्तेपर्वतश्रेष्ठमुदयाचलमाशुवै ॥ १५ ॥ तमासाद्यनगंपुण्यंशृंगैस्त्रिभिरलंकृतम् ॥ नानाधातुपिनद्धांगंनानाधातु
विभूषितम् ॥ १६ ॥ आराधनायविधिवद्यत्नंचक्रुर्विभावसोः ॥ स्तुवन्तस्तेसमर्चंतोध्यायंतश्चविभावसुम् ॥१७॥ दिव्यवर्षसहस्रांतेतपंतः
संस्थितानगे ॥ पद्मासनगतोब्रह्माध्यायमानोदिवाकरम् ॥ १८ ॥ स्थाणुवत्संस्थितोभूमावूर्ध्वबाहुस्त्रिलोचनः ॥ पंचाग्निभजमानस्तुस्थि
तोविष्णुरवाक्छिराः ॥ १९ ॥ एवंवर्षसहस्रांतेतपश्चक्रुःसुदारुणम् ॥ आराधयंतोविधिवद्गोपतिंपुत्रमालिनम् ॥ २० ॥ अथब्रह्मेशविष्णूनां
कुर्वतांतपउत्तमम् ॥ तुतोषभगवान्भानुरुवाचचमहीपते ॥ २१ ॥ ब्रह्मञ्छंभोहरेब्रूतमत्तःकिमभिवांछथ ॥ तुष्टोहंभवतांदातुमिहायातोवरं
स्वयम् ॥ २२ ॥ सुमंतुरुवाच ॥ ॥ निशम्यवचनंभानोःशांतंहृद्यंमनोरमम् ॥ प्रणम्याशिरसाऽकेशाइदंवचनमब्रुवन् ॥२३॥ कृतकृत्याव
यंसर्वेप्रसादात्तवगोपते ॥ त्वामाराध्यपुरादेवत्वत्तःप्राप्यवरंशुभम् ॥ २४ ॥ उत्पत्तिस्थितिनाशानांवयंसर्वेदिवाकर ॥ संभूयेहसमर्थावैत्व
त्प्रसादान्नसंशयः ॥ २५ ॥ किंत्वेकंदेवदेवेशवरमिच्छामहेविभोः ॥ यत्तेपरमकंरूपंदुर्लभंदुर्दर्शंतथा ॥ २६ ॥ तस्मादस्माज्जगन्नाथरूपं
दर्शयतेऽच्युतम् ॥ सर्वदेवमयंयत्तेयत्त्वयोक्तंपुरानघ ॥ २७ ॥ तेषांतद्वचनंश्रुत्वाब्रह्मविष्ण्वीशभाषितम् ॥ दर्शयामासतद्रूपमद्भुतंलोकपूजि
तम् ॥२८॥ अनेकवक्त्रशिरसमनेकाद्भुतदर्शनम् ॥ सर्वदेवमयंदिव्यंसर्वलोकमयंतथा ॥ २९ ॥ भूःपादौद्यौःशिरश्चापितत्राग्नीलोचनेमते ॥
पादांगुल्यःपिशाचाश्चहस्तांगुल्यश्चगुह्यकाः ॥ ३० ॥ विश्वेदेवाःस्मृतास्तस्याजंघासंधाःसुरोत्तमाः ॥ यक्षाःकुक्षिषुसंलीनाःकेशा
श्चाप्सरसांगणाः ॥ ३१ ॥ दृष्टिधृष्टचश्चविपुलाःकेशावीरांशवःस्मृताः ॥ तारकारोमरूपाणिरोमाणिचमहर्षयः ॥ ३२ ॥ बाहवोविदिश
स्तस्यदिशःश्रोत्रेनराधिप ॥ अश्विनौश्रवणेचास्यनासावायुर्महाबलः ॥ ३३ ॥ प्रसादश्चक्षमाचैवमनोधर्मस्तथैवच ॥ सत्यमस्याभवद्वा

णीजिह्वादेवीसरस्वती ॥ ३४ ॥ ग्रीवादितिर्महादेवीतालूरुद्रश्चवीर्यवान् ॥ द्वारंस्वर्गस्यनाभिर्वैमित्रस्त्वष्टापिचंडकम् ॥ ३५ ॥ मुखं
वैश्वानरश्चास्यवृषणौचभगस्तदा ॥ हृदयंभगवान्ब्रह्माह्युदरंकश्यपोमुनिः ॥ ३६ ॥ पृष्ठेऽस्यवसवोदेवामरुतःसर्वसंधिषु ॥ सर्वच्छंदांसिद
शनाज्योतींषिविमलाप्रभा ॥ ३७ ॥ प्राणोरुद्रोमहादेवःकुक्षौचास्यमहार्णवाः ॥ उदरेचास्यगंधर्वाभुजंगाश्चमहाबलाः ॥ ३८ ॥ लक्ष्मीर्मे
धाधृतिःकांतिःसर्वाविद्याश्चवैकटौ ॥ ललाटमस्यपरमंवयःस्थानंपरात्मनः ॥ ३९ ॥ सर्वज्योतींषिजानीहितपश्चक्रश्चदेवराट् ॥ तदेतदा
दिदेवस्यतनौह्याहुर्महात्मनः ॥ ४० ॥ स्तनौकुक्षौचवेदाश्चतेष्टौचास्यमखाःस्मृताः ॥ यष्टव्यपशुबंधाश्चद्विजानांवेष्टितानिच ॥ ४१ ॥
सर्वदेवमयंदृष्ट्वारूपमर्कस्यतेनृप ॥ ब्रह्माहरोहरिर्देवाःपरंविस्मयमागताः ॥ ४२ ॥ प्रणम्याशिरसादेवंवेपमानाधरांगताः ॥ भयगद्गदया
वाचाइदंवचनमब्रुवन् ॥ ४३ ॥ यदेतत्परमंपुण्यमद्भुतंलोकभावनम् ॥ दृष्टंभवद्भिर्देवेंद्राममसर्वजगन्मयम् ॥ ४४ ॥ एतन्मयाप्रसन्नेन
युष्माकंश्रेयसेऽनघाः ॥ दर्शितंपूजितेनेहयोगिनांयन्महालयम् ॥ ४५ ॥ ॥ ब्रह्मेशाच्युताऊचुः ॥ ॥ एवमेतन्नसंदेहोयथात्थत्वंदिव
स्पते ॥ योगिनामपिदेवेशदर्शनंह्यस्यदुर्लभम् ॥ ४६ ॥ त्वामाराध्यजगन्नाथंनाप्राप्यमिहविद्यते ॥ तस्मात्पूज्यतमोलोकेनान्योदेवेषुवि
द्यते ॥ ४७ ॥ एवमुक्त्वाऽदितेःपुत्रोजगामादर्शनंरविः ॥ ब्रह्मादयोपितेहर्षंपरमार्थस्यदर्शनात् ॥ ४८ ॥ एवंब्रह्मादयोदेवाःपूजयित्वादिवा
करम् ॥ गतास्तेपरमांसिद्धिंगंधर्वाऋषयस्तथा ॥ ४९ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमकिल्पेसौरधर्मेषुब्रह्मादीनांसूर्यरूपद
र्शनवर्णनंनामषष्ट्युत्तरशततमोऽध्यायः ॥ १६० ॥ ॥ ७ ॥ ॥ शतानीकउवाच ॥ ॥ एवमेतद्यथात्थत्वंभास्करोदैवतंपरम् ॥ नास्त्या
दित्यसमोदेवोनास्त्यादित्यसमागतिः ॥ १ ॥ आदित्यमूलमखिलंत्रैलोक्यंनात्रसंशयः ॥ भवत्यस्माज्जगत्सर्वंसदेवासुरमानुष
म् ॥ २ ॥ रुद्रेंद्रोपेंद्रकेंद्राणीविप्रेंद्रत्रिदिवौकसाम् ॥ द्युतिर्द्युतिमतांकृत्स्नातेजोऽयंसार्वलौकिकम् ॥ ३ ॥ सर्वात्मासर्वलोकेशोमहादेवःप्र
जापतिः ॥ सूर्यएवत्रिलोकस्यमूलंपरमदैवतम् ॥ ४ ॥ ततःसंजायतेसर्वंतत्रैवप्रविलीयते ॥ भावाभावौहिलोकानामादित्यान्निःसृतौपुरा ॥
॥ ५ ॥ जगज्ज्येष्ठोग्रहोविप्रप्रदीप्तःप्रभवोरविः ॥ तत्रगच्छंतिनिधनंजायंतेचपुनःपुनः ॥ ६ ॥ क्षणामुहूर्तादिवसारात्रिपक्षाश्चकृत्स्नशः ॥

मासाःसंवत्सराश्चैवऋतवश्चयुगानिच ॥ ७ ॥ सएपकालश्चाग्निश्चद्वादशात्माप्रजापतिः ॥ प्रभासयतिविप्रेंद्रत्रैलोक्यंसचराचरम्॥८॥तस्माद
स्यादिद्विजश्रेष्ठपूजनेयत्फलंभवेत् ॥ तन्मेब्रूहिप्रयत्नेनप्रसादप्रवणोभव ॥ ९ ॥ इतिश्रीभविष्येमहापुराणेसप्तमीकल्पेब्राह्मेपर्वणिसौरधर्मेसूर्य
पूजाफलप्रश्नवर्णनंनामैकषष्ट्युत्तरशततमोऽध्यायः ॥ १६१ ॥ ॥छ ॥ ॥ सुमंतुरुवाच ॥ ॥ भानुंप्रतिष्ठाप्यनरःसर्वदेवमयं
विभुम् ॥ प्राप्नोत्यमरतांवीरतेजसारविसन्निभः ॥ १ ॥ योभानुंद्वेष्टिसंमोहात्सर्वदेवनमस्कृतम् ॥ नरोनरकगामीस्यात्तस्यसंभाषणाद
पि ॥ २ ॥ भानुमिष्टंप्रतिष्ठाप्यसर्वयत्नैर्विधानतः ॥ यत्पुण्यफलमाप्नोतितदेकाग्रमनाःशृणु ॥ ३॥ सर्वयज्ञतपोदानतीर्थदेवेषुयत्फलम् ॥
तत्फलंकोटिगुणितंस्थाप्यभानुंलभेन्नरः ॥ ४ ॥ योभानुंस्थापयेद्भक्त्याविधिपूर्वंनराधिप ॥ सर्वांगमुदितंपुण्यंलभेत्कोटिगुणंनरः ॥ ५ ॥
मातृजान्पितृजांश्चैवयत्रचोद्वहतोस्त्रियम् ॥ कुलत्रयंसमुद्धृत्यशक्रलोकेमहीयते ॥ ६ ॥ भुक्त्वातुविपुलान्भोगान्प्रलयेसमुपस्थिते ॥
ज्ञानयोगंसमासाद्यतत्रैवप्रविमुच्यते ॥ ७ ॥ अथवाराज्यमाकांक्षेज्जायतेसंभवांतरे ॥ सप्तद्वीपसमुद्रायाःक्षितेरधिपतिर्भवेत् ॥ ८ ॥
यत्कृत्वापार्थिवंव्योम्निअर्चयेत्सर्वदेवकम् ॥ समूलमखिलंतेनत्रैलोक्यंपूजितंभवेत् ॥ ९ ॥ इहैवधनवाञ्छ्रीमान्सोंतेऽर्कत्व
मवाप्नुयात् ॥ त्रिसंध्यंकीर्तयेद्व्योमकृत्वाबिंबेनपार्थिवम् ॥ १० ॥ शतैकादशकंयावत्तस्यपुण्यफलंशृणु ॥ अनेनसहदेहेनभानुः
संतिष्ठतेक्षितौ ॥११॥ पापहासर्वमर्त्यानांदर्शनात्स्पर्शनादपि ॥ उद्धारयेच्चसंस्थाप्यकुलानामेकविंशतिः ॥ १२ ॥ गीर्वाणैःसहितो
नित्यंमोदतेदिविसूर्यवत् ॥ योऽपिपृष्ठमयंव्योमसर्वगंधोपशोभितम् ॥ १३ ॥ कुसुमैःसुसुगंधैश्चफलैश्चविविधैर्नृप ॥ भक्ष्यलेह्यरसैश्चै
वघृतदीपैरलंकृतैः ॥ १४ ॥ नानारत्नसमायुक्तंनानागंधसमन्वितम् ॥ तस्यदक्षिणपार्श्वेतुविन्यसेद्गुरुंबुधः ॥ १५ ॥ दद्याद्वैपश्चिमे
भागेश्रीखंडंचंदनंशुभम् ॥ उत्तरेचंदनंदद्याद्रक्तंदद्याच्चपूर्वतः ॥ १६ ॥ एवंवित्तानुसारेणकृत्वाविभवैर्विस्तरम् ॥ कृष्णपक्षेतुसप्तम्यां
भास्करस्यनिवेदयेत् ॥ १७ ॥ सकृदेवतुयःकुर्याद्व्योमंभरतसत्तम ॥ यत्फलंहिभवेत्तस्यतन्मेनिगदतःशृणु ॥ १८ ॥ सर्वपापविनिर्मुक्तः
सर्वदुःखविवर्जितः ॥ निष्कलःसर्वगोभूत्वाप्रविशेत्परमव्ययम् ॥ १९ ॥ तेजसारविसंकाशःप्रभयार्कसमप्रभः ॥ पांसुनाक्रीडमानो

यःकुर्याद्व्योममकार्यतः ॥ २० ॥ सराजन्भवतेराजापर्वतेषुसमंततः ॥ सर्वेषामेवपात्राणांपरंपात्रंविभावसुः ॥ २१ ॥ एतत्संतार
येद्यस्मादतीवनरकार्णवात् ॥ तस्यपात्रस्यमाहात्म्यंध्रुवमक्षयमादिशेत् ॥ २२ ॥ तस्मात्तस्यसदादेयमप्रमेयफलार्थिभिः ॥ रवौदत्तंहुतंज
तंपूजाबलिंनिवेदयेत् ॥ २३ ॥ अनंतफलमादिष्टंब्रह्मादिभिःसुरोत्तमैः ॥ भक्त्यावित्तानुसारेणयःकुर्यादालयंरवेः ॥ २४ ॥ सोग्र्येयंयानमारु
ह्यमोदतेसहभानुना ॥ महाविभवसारोपियःकुर्याद्भक्तिवर्जितम् ॥ २५ ॥ अल्पेमहतिवातुल्यंफलमाढ्यदरिद्रयोः ॥ वित्तशाठ्येनयःकुर्याद्दि
त्तवानपिमानवः ॥ २६ ॥ नसफलमवाप्नोतिप्रलोभाक्रांतमानसः ॥ तस्मात्रिभागंवित्तस्यजीवनायप्रकल्पयेत् ॥ २७ ॥ भागद्वयंचधर्मा
र्थेअनित्यंजीवनंयतः ॥ भक्त्याप्रचोदितंकुर्यादल्पवित्तेऽपियोनरः ॥ २८ ॥ महाविभवसारोऽपिनकुर्याद्भक्तिवर्जितः ॥ सर्वस्वमपियोदद्या
दर्केभक्तिविवर्जितः ॥ २९ ॥ नतेनधर्मभागीस्याद्भक्तिरेवात्रकारणम् ॥ नतपोभिर्विभोरुग्रैर्नचसर्वैर्महामखैः ॥ ३० ॥ गच्छेदेकंपुरंदिव्य
मर्केभक्तियुतोनृप ॥ रुचिरंशुभशैलोत्थंकुर्याद्यस्तुरवेर्गृहम् ॥३१॥ त्रिसप्तकुलसंयुक्तःसूर्यलोकमवाप्नुयात् ॥ यन्मयाकोटिगुणितंकृतंस्या
दिष्टकाम्यया ॥ ३२ ॥ द्विपरार्धगुणंपुण्यंशैलजेऽपिविदुर्बुधाः ॥ मृच्छैलेनसमंज्ञेयंपुण्यमाढ्यदरिद्रयोः ॥ ३३ ॥ यत्रतत्रगतःकुर्याद्भक्त्या
पुण्यंभगालयम्॥शैलोत्थमिष्टकाभिर्वादृढदारुमयंशुभम् ॥ ३४ ॥ सगच्छेत्परमंस्थानंभानोरमिततेजसः ॥ गैरिकंयानमारुह्ययःकुर्याद्धृत
भूषणः ॥ ३५ ॥ क्रीडमानोऽपियःकुर्याद्बालभावेऽर्कमंदिरम् ॥ सोऽर्कलोकमवाप्नोतिविमानवरमास्थितः ॥३६॥ पुष्पमालाकुलंदिव्यंधूप
गंधादिवासितम्॥अप्सरोगणसंकीर्णंसर्वकामसुखप्रदम् ॥ ३७ ॥ तत्ररूढोमहाराजवत्सरंवृंदमुत्तमम् ॥ उषित्वाभास्करपुरेपूज्यमानस्तुदैव
तैः॥३८॥क्रमादागत्यलोकेऽस्मिन्राजाभवतिधार्मिकः ॥ धर्मार्थकामसंपन्नोयशसाचनराधिप ॥ ३९ ॥ पश्यन्परिहरञ्जंतून्मार्जन्यामृदुसूक्ष्म
या॥शनैःसंमार्जनंकुर्याच्चांद्रायणफलंभवेत् ॥४०॥ अन्यार्थेदेहजीर्णायवंध्यायाश्चविशेषतः ॥ रोगार्तेनचभूतानामारोग्यार्थंप्रपूजयेत्॥४१॥गृ
हीत्वागोमयंस्वच्छंस्थानेचपातितंशुभे ॥ उपर्युपरिसंत्यज्यप्रत्यग्रंजंतुवर्जितम् ॥ ४२ ॥ वस्त्रपूतगोमयेनयःकुर्यादुपलेपनम् ॥ पश्येत्तुसु
खिताञ्जंतूंश्चांद्रायणशतंलभेत् ॥ ४३ ॥ यःकुर्यात्सर्वकार्याणिवस्त्रपूतेनवारिणा ॥ समुनिःसमहासाधुःसगच्छेत्परमांगतिम् ॥ ४४

क्षरंतिसर्वदानानियज्ञहोमबलिक्रियाः ॥ अक्षरंतुमहादानंसुखदंसर्वदेहिनाम् ॥४५॥ नैरंतर्येणयःकुर्यात्पक्षंसंमार्जनार्चनम् ॥वर्षमेकंशतंदिव्यं सुरलोकेमहीयते ॥ ४६ ॥ तस्यांतेचचतुर्वेदसुरूपंप्रियदर्शनम् ॥ आद्यःसर्वगुणोपेतोराजाभवतिधार्मिकः ॥ ४७ ॥ संपर्केणापियःकुर्यान्नरः कर्मभगालये ॥ सोपिसौमनसंगत्वापुरंक्रीडातिनित्यशः ॥ ४८ ॥ तावद्भ्रमंतिसंसारेदुःखशोकपरिप्लुताः ॥ नभवंतिरवौभक्त्यायावत्सर्वेऽपिदेहिनः ॥ ४९ ॥ समासक्तंतथाचित्तंजंतोर्विषयगोचरे ॥ यद्यर्केऽपिभवेदेवंकोमुच्येतैवबंधनात् ॥ ५० ॥ यःकुर्यात्कुट्टिमांभूमिं दर्पणोदरसन्निभाम् ॥ नानावर्णविचित्रांचविचित्रकुसुमोज्ज्वलाम् ॥ ५१ ॥ क्वचित्कलशविन्यस्तांपंकजैरुपशोभिताम् ॥ रम्यांमनोरमांसौम्यामर्कायतनसंसादि ॥ ५२ ॥ यावद्दंडाभवेद्भूमिःसमंताच्चसुशोभना ॥ तावद्युगसहस्राणिसूरलोकेमहीयते ॥ ५३ ॥ कारयेच्चित्रशास्त्रज्ञैश्चित्रकर्मार्कमंदिरे ॥ विचित्रंयानमारुह्यचित्रभानोर्गृहंव्रजेत् ॥ ५४ ॥ यावत्सदेवरूपाणिग्रहरूपाणिलेखयेत् ॥ तावद्युगसहस्राणिस्वर्गलोके महीयते ॥ ५५ ॥ भवेद्भूमिःसमंताच्चयःकुर्यादर्कमंदिरे ॥ आरामावसथादीनांलभेदामूलकंफलम् ॥ ५६ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मवर्णनंनामद्विषष्ट्युत्तरशततमोऽध्यायः ॥ १६२ ॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ भास्करस्यमहाबाहोभानोरमिततेजसः ॥ स्नानकालेप्रकुर्वीतजयशब्दादिमंगलम् ॥ १ ॥ पद्मस्वस्तिकशंखंतुश्रीवत्संद्विजसत्तम ॥ हेमरूपादिपात्रेषुकल्पितेगोमयादिभिः ॥ २ ॥ नानावर्णकसंयुक्तैरक्षतैस्तिलतंदुलैः ॥ स्वच्छैश्चदधिसंमिश्रैर्यथाशोभंप्रपूरितैः ॥ ३ ॥ द्रव्यपीठप्रदीपाश्चभूताश्वत्थादिपल्लवैः ॥ औषधीभिश्चमेध्याभिःसर्वबीजैर्यवादिभिः ॥ ४ ॥ सप्तम्यादिषुसर्वेषुषष्ठ्यादिषुविशेषतः ॥ शंखभेर्यादिभिःकुर्याद्वाद्यघोषंसुशोभनम् ॥ ५ ॥ त्रिसंध्यंवेदनिर्घोषंकुर्वीतफलमुत्तमम् ॥ कुर्यान्नीराजनंचैवशंखवादित्रमंगलैः ॥ ६ ॥ यावन्नीराजनंकुर्यात्पर्वाणिविधिवद्रवौ ॥ तावद्युगसहस्राणिसूरलोकेमहीयते ॥ ७ ॥ कापिलापंचगव्येनकुशवारियुतेनवै ॥ स्नापयेन्मंत्रपूतेनब्रह्मस्नानंहितत्स्मृतम् ॥ ८ ॥ यस्त्वेकमपिसर्वेऽब्देब्रह्मस्नानंप्रयच्छति ॥ समुक्तःसर्वपापैस्तुसूर्यलोकेमहीयते ॥ ९ ॥ कापिलापंचयज्ञेनदधिक्षीरयुतेनच ॥ स्नानंदशगुणज्ञेयंमहत्पुण्यंनराधिप॥१०॥ऋभवोवीरमुद्दिश्यदेहशुद्धिंचशाश्वतीम् ॥ कापिलामाहरेन्नित्यंमुनिर्देवाग्निनिर्मिताम्॥११॥कापिलंयःपिबेच्छू

द्रोदेवकार्यार्थंनिर्मितम् ॥ सपच्यतेमहाघोरेसुचिरंनरकार्णवे ॥ १२ ॥ वर्षकोटिसहस्रेणयत्पापंसमुपार्जितम् ॥ घृताभ्यंगेनसूर्यस्यदहेत्सर्वं
नसंशयः ॥ १३ ॥ कल्पकोटिसहस्रैस्तुयत्पापंसमुपार्जितम् ॥ वज्रस्नानेनतत्सर्वंदहत्यग्निरिवेंधनम् ॥ १४ ॥ सप्तम्यांचकृतस्नानःकृत्वा
सूर्येसकृन्नरः ॥ कुलान्युद्धृत्यसतेहसूर्यलोकेमहीयते ॥ १५ ॥ वसुहेमादियुक्तंचक्षीरस्नानस्यतत्समम् ॥ सकृदाढकेनपयसायोभानुंस्नाप
येन्नरः ॥ १६ ॥ राजतेनाविमानेनसोऽर्कलोकेमहीयते ॥ स्नाप्यदध्नासकृद्भानुंसात्रिलोकेमहीयते ॥ १७ ॥ मधुनास्नापयित्वातुशुक्रलोके
महीयते ॥ उद्धृत्यशालिपिष्टेनवायुलोकेषुपूज्यते ॥ १८ ॥ स्नानमिक्षुरसेनेहयःसूर्येसकृदाचरेत् ॥ सगोपतिपुरंगच्छेत्सर्वकामसमन्वितः ॥
॥ १९ ॥ फलोदकेनयोभानुंसकृत्स्नापयतेनरः ॥ उत्सृज्यपापकलिलंपितृलोकेमहीयते ॥ २० ॥ श्रीखंडवारिणास्नाप्यसकृद्भानुंनराधि
प ॥ चंद्रांशुनिर्मलःश्रीमांश्चरेदात्रेयमंदिरे ॥ २१ ॥ वस्त्रपूतेनतोयेनयदर्कंस्नापयेत्सकृत् ॥ ससर्वकामतृप्तात्माराकाधिपपुरंव्रजेत् ॥२२॥
आपोहिष्ठेतिजप्येनगंगातोयेनभारत ॥ गैरिकेणविमानेनब्रह्मलोकेमहीयते ॥ २३ ॥ कर्पूरागुरुतोयेनयोऽर्कंस्नापयतेसकृत् ॥ स्नाप्यभानुं
सकृन्मंत्रैःसप्तम्यांसमुपोषितः ॥ २४ ॥ सकुलानेकविंशेहउत्तार्यरविमाव्रजेत् ॥ पितॄनुद्दिश्ययोभानुंस्नापयेच्छीतवारिणा ॥ २५ ॥ तृप्ताः
स्वर्गंव्रजंत्याशुपितरोनरकादपि ॥ भानुंशीतांबुनास्नाप्यधारोष्णपयसासह ॥ २६ ॥ स्नाप्यपश्चाद्घृतेनेशमग्निलोकेमहीयते ॥ एत
त्स्नानत्रयंकृत्वापूजयित्वातुभारत ॥ २७ ॥ अश्वमेधसहस्रस्यफलंप्राप्नोतिमानवः ॥ मृत्कुंभताम्रकुंभेषुस्नानंशतगुणंमतम् ॥ २८॥ रौप्ये
पादोत्तरंपुण्यंदर्शनात्स्पर्शनंपरम् ॥ स्पर्शनादर्चनंश्रेष्ठंघृतस्नानमतःपरम् ॥ २९ ॥ इहामुत्रकृतंपापंघृतस्नानेननश्यति ॥ सप्तजन्मकृतं
पापंपुराणश्रवणेनतु ॥ ३० ॥ दशापराधांस्तोयेनक्षीरेणतुशतंक्षमेत् ॥ सहस्रंक्षमतेदध्नाघृतेनाप्ययुतंक्षमेत् ॥ ३१ ॥ नैरंतर्येणयो
मासंघृतस्नानंसमाचरेत् ॥ दशैकादशकुलानीहनयेत्सूर्यस्यमंदिरम् ॥ ३२ ॥ स्नानंपलशतंज्ञेयमभ्यंगंपंचविंशतिः ॥ पलानां
द्विसहस्रेणमहास्नानमितिश्रुतिः ॥ ३३ ॥ घृताभ्यंगंघृतस्नानंभानुंयत्नाद्द्विजोत्तम ॥ येचगोधूमचूर्णैस्तुकषायैर्गर्भसंमितैः ॥ ३४ ॥
दशधेनुसहस्राणियदत्वालभतेफलम् ॥ तत्फलंलभतेसर्वमर्कस्योद्वर्तनेकृते ॥ ३५ ॥ अर्घ्यपुष्पफलोपेतंयस्त्वकार्यंनिवेदयेत् ॥ सपूज्यः

सर्वलोकेषुअर्कवन्मोदतेदिवि ॥ ३६ ॥ गंधतोयेनसंमिश्रमुदकाद्वादशोत्तरम् ॥ पंचगव्यसमायुक्तमर्घ्यंशतगुणंनृप ॥ ३७ ॥ योष्टांगग
मेमापूर्यभानोर्मूर्ध्निनिवेदयेत् ॥ दशवर्षसहस्राणिरमतेचार्कमंदिरे ॥ ३८ ॥ आपःक्षीरंकुशाग्राणिघृतंदधिमधुस्तथा ॥ रक्तानिकरवीरा
णितथारक्तंचचंदनम् ॥ ३९ ॥ अष्टांगएषअर्घोवैब्रह्मणापरिकीर्तितः ॥ सततंप्रीतिजननोभास्करस्यनराधिप ॥ ४० ॥ दारुवैणवपा
त्रेणदत्वार्घ्यंयत्फलंलभेत् ॥ तस्माच्छतगुणंपुण्यंमृत्पात्रेणनराधिप ॥ ४१ ॥ ताम्रार्घ्यपात्रदानेनपुण्यंशतगुणंमतम् ॥ पालाशपद्मप
त्राभ्यांताम्रपात्रेफलंलभेत् ॥ ४२ ॥ रौप्यपात्रेणविज्ञेयंलक्षार्घ्यंनात्रसंशयः ॥ सुवर्णपात्रविन्यस्तमर्घ्यंकोटिगुणंभवेत् ॥ ४३ ॥ एवंस्ना
नार्घ्यनैवेद्यबलिधूपादिषुक्रमात् ॥ पात्रांतरविशेषेणतत्फलंतूत्तरोत्तरम् ॥ ४४ ॥ रौप्यपात्रप्रदानेनयत्पुण्यंवेदपारगे ॥ ताम्रपात्रप्रदाने
नतस्माच्छतगुणंरवौ ॥ ४५ ॥ फलकोटिसुवर्णस्ययोदद्याद्वेदपारगे॥सूर्यायरूप्यपात्रंतुततःपुण्यंततोऽधिकम् ॥ ४६ ॥ सुवर्णपात्रंयोदद्या
द्भास्करायमहीपते ॥ नशक्यंतस्यतद्वक्तुंपुण्यंपात्रविशेषतः ॥ ४७ ॥ तुल्यमेवफलंप्रोक्तंसर्वमाढ्यदरिद्रयोः ॥ तयोरभ्यधिकंतस्ययस्त्व
र्कभावनाधिकः॥४८॥विभवेसतियोमोहान्नकुर्याद्विधिविस्तरम् ॥ नैवतत्फलमाप्नोतिप्रलोभाक्रांतमानसः ॥४९॥ तस्मान्मंत्रैःफलैस्तोयैश्चं
दनाद्यैश्चयत्नतः ॥ तदनंतफलंज्ञेयंभक्तिरेवात्रकारणम् ॥ ५० ॥ वर्षकोटिशतंदिव्यंसूर्यलोकेमहीयते ॥ गंधानुलेपनंपुण्यंद्विगुणंचंदन
स्यतु ॥ ५१ ॥ गंधाच्चतुर्गुणंज्ञेयंपुष्पमष्टगुणंनृप ॥ कृष्णागुरुविशेषेणाद्विगुणंफलमादिशेत् ॥ ५२ ॥ तस्माच्छतगुणंपुण्यंकुंकुमस्यवि
धीयते ॥ चंदनागुरुकर्पूरैःश्लक्ष्णपिष्टैःसकुंकुमैः ॥ ५३ ॥ भानुंपर्याप्तमालिप्यकल्पकोटिवसेद्दिवि ॥ सदीव्येत्सुरवृंदेनपुण्यगंधैःप्रलेप
नम्॥५४॥दशवर्षसहस्राणिवीरामित्रपुरेवसेत् ॥ भक्त्यानिवेद्यअर्कायतालवृंतंनराधिप ॥५५॥ दशवर्षसहस्राणिवीरलोकेमहीयते॥ मायूरंव्य
जनंदत्वासूर्यायातिवशोभनम् ॥५६॥ वर्षकोटिशतंपूर्णंप्रभंजनपुरेवसेत् ॥ पुष्पैरारण्यसंभूतैःपत्रैर्वागिरिसंभवैः ॥५७॥ अपर्युषितानिश्छिद्रैः
प्रोक्षितैर्जंतुवर्जितैः ॥ आत्मारामभवैश्चैवपुष्पैःसंपूजयेद्रविम् ॥ ५८ ॥ पुष्पजातिविशेषेणभवेत्पुण्यंततोऽधिकम् ॥ तपःशीलगुणोपेतइति
हासविदेद्विजे ॥ ५९ ॥ दत्त्वादशसुवर्णस्यनिष्कान्यल्लभतेफलम् ॥ करवीरस्यकुसुममर्कायविनिवेदयेत् ॥ ६० ॥ लभतेतत्फलंवीरयथाह

भगवान्रविः ॥ एवंपुष्पविशेषेणफलंतदधिकंभवेत् ॥ ६१ ॥ ज्ञेयंपुण्यंरसज्ञेनयथास्यात्तन्निबोधमे ॥ तदापुष्पसहस्रेभ्यःकरवीरंविशि
ष्यते ॥ ६२ ॥ बिल्वपत्रसहस्रेभ्यःपद्ममेकंनराधिप ॥ वीरपुष्पसहस्रेभ्योबकपुष्पंविशिष्यते॥६३॥ बकपुष्पसहस्रेभ्योमुद्गरंपरमुच्यते ॥
कुशपुष्पसहस्रेभ्यःशमीपत्रंविशिष्यते ॥६४॥ शमीपुष्पसहस्रेभ्योनृपनीलोत्पलंपरम् ॥ सर्वासांपुष्पजातीनांप्रवरंनीलमुत्पलम् ॥ ६५ ॥
रक्तोत्पलसहस्रेणनीलोत्पलशतेनच ॥ रक्तैश्चकरवीरैश्चयस्तुपूजयतेरविम्॥६६॥कल्पकोटिसहस्राणिकल्पकोटिशतानिच ॥ वसेदर्कपुरे
श्रीमान्सूर्यतुल्यपराक्रमः॥६७॥शेषाणांपुष्पजातीनांयत्फलंपरिकीर्तितम् ॥ तत्फलस्यानुसारेणसूर्यलोकेमहीयते॥६८॥शमीपुष्पंबृहत्या
श्चकुसुमंतुल्यमुच्यते ॥ करवीरसमाज्ञेयाजातीविषयपाटला॥६९॥श्वेतमंदारकुसुमंसितपुष्पंचतत्समम् ॥ नागचंपकपुन्नागमुद्गरस्यसमाः
स्मृताः॥७०॥गंधवंत्यपवित्राणिकुसुमानिविवर्जयेत् ॥ गंधहीनमपिग्राह्यंपवित्रंयत्कुशादिकम् ॥७१॥ सात्त्विकंतद्धिकुसुममपवित्रंचता
मसम् ॥ मुद्गराणिकदंबानिरात्रौदेयानित्वर्यमे ॥७२॥ दिवाशेषाणिपुष्पाणित्यजेदुपहतानिच ॥ मुकुलेनार्चयेद्भानुमपक्वंननिवेदयेत्॥७३॥
फलंक्वथितविद्धंचयत्नात्पक्वमपित्यजेत् ॥ अलाभेवतपुष्पाणांपत्राण्यपिनिवेदयेत् ॥ ७४ ॥ पत्राणामप्यलाभेतुफलान्यपिनिवेदयेत् ॥
फलानामप्यलाभेनतृणगुल्मौषधीन्यपि ॥ ७५ ॥ औषधीनामभावेतुभक्त्याभवतिपूजितः ॥ प्रत्येकंमुक्तपुष्पेणदशसौवर्णिकंफलम्॥७६॥
यःसुगंधैर्मुक्तपुष्पैःसम्यग्भानुंप्रपूजयेत् ॥ माघासितेऽपिसुमनाःसोऽनंतफलमश्नुते॥७७॥करवीरैर्महाराजसंयतोभानुमर्चयेत् ॥ सर्वपापवि
निर्मुक्तःसूर्यलोकेमहीयते ॥ ७८ ॥ अगस्त्यकुसुमैर्भक्त्यायःसकृद्भानुमर्चयेत् ॥ गवांप्रयुतदानस्यफलंप्राप्यादिवंव्रजेत् ॥ ७९ ॥ मल्लिको
त्पलपद्मैश्चजातीपुन्नागचंपकैः ॥ अशोकश्वेतमंदारकार्णिकारांधुकैस्तथा ॥ ८० ॥ करवीरार्ककह्लारशमीतगरकेशरैः ॥ अगस्तिबकपु
ष्पैस्तुशतपत्रैर्नराधिप ॥ ८१ ॥ पुष्पैरेतैर्यथालाभंयोनरःपूजयेद्रविम् ॥ सतत्फलमवाप्नोतितदेकाग्रमनाःशृणु ॥ ८२ ॥ सूर्यकोटिप्रती
काशैर्विमानैःसर्वकामिभिः ॥ पुष्पमालापरिक्षिप्तैर्गीतवादित्रनादितैः ॥ ८३ ॥ तंत्रीमधुरवाद्यैश्चस्वच्छंदगमनैर्नृप ॥ सूर्यकन्यासमाकीर्णै
र्देवानांचसुदुर्लभैः ॥८४॥ दोधूयमानश्चमरैःस्तूयमानःसुरासुरैः ॥ गच्छेदर्कपुरींदिव्यांपत्रचारुचितोभवेत् ॥ ८५ ॥ यैस्तैश्चवापिकुसुमै

जलजैःस्थलजैर्नृप॥संपूज्यश्रद्धयाभानुमर्कलोकेमहीयते॥८६॥सूर्यस्योपरियःकुर्याच्छोभनंपुष्पमंडलम्॥शोभितंपुष्पस्रग्दामैरापीठांतप्रलं
बितैः॥८७॥अत्याश्चर्यमहायानैर्दिव्यपुष्पोपशोभितैः॥सर्वेषामुपरिष्टाच्चसदेर्कपुरेसुखी॥८८॥अनेकरविविन्यस्तैःसुगंधैःकुसुमैर्गृहम्॥ यःकुर्या
त्पर्वकालेतुविचित्रकुसुमोज्ज्वलम्॥८९॥सपुष्पकविमानेनपुष्पमालाकुलेनतु॥पुष्पेतरपुरंदिव्यंगच्छतेनात्रसंशयः॥९०॥अक्षयंमोदतेकाल
मतिरस्कृतशासनः॥सौरादिसर्वलोकेषुयत्रेष्टंतत्रयातिसः ॥९१॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषुपुष्पपूजावर्णनं
नामात्रिषष्ट्युत्तरशततमोध्यायः॥१६३॥छ॥शतानीकउवाच॥पुनर्मेदेवदेवस्यभास्करस्यमहौजसः॥पूजनेयत्फलंप्रोक्तंतन्मेब्रूहिद्विजोत्तम१।
सुमंतुरुवाच ॥शृणुत्वंहिमहाराजन्सर्वंदंलोकपूजितम् ॥ ब्रह्मेशोपेंद्रदेवानांत्रयाणामपिभारत ॥ २ ॥ सुखासीनंसुरज्येष्ठंमनोवत्यांचतुर्मु
खम्॥ प्रणम्याशिरसाभूमौविष्णवीशौवाक्यमूचतुः ॥३॥ यएषभगवान्देवःसहस्रकिरणोरविः॥ अस्ययत्पूजनेपुण्यंप्राप्यतेतद्वदस्वनौ ॥ ४ ॥
॥ ब्रह्मोवाच॥ साधुसाधुजगन्नाथसाधुपृष्टोऽस्मिवामिह ॥ तस्माच्छृणुतएकाग्रौगदतोनिखिलंमम ॥ ५॥ स्वयमुत्पाद्यपुष्पाणियःसूर्यंपूजये
त्स्वयम् ॥ तानिसाक्षात्प्रगृण्हातितद्भक्त्यासततंरविः ॥ ६ ॥ यस्त्वारामंरवेःकुर्यादाम्रबिल्वादिशोभितम् ॥ जातीविजयराजार्कंकरवीरस
कुंकुमैः ॥७॥ पुन्नागनागबकुलैरशोकतिलचंपकैः ॥ अगस्तिकदलीखंडैस्तस्यपुण्यफलंशृणु ॥८॥ यावद्धिपत्रंकुसुमंबीजंसूतफलानिच ॥
तावद्वर्षसहस्राणिसूरलोकेमहीयते ॥९ ॥ सघृतंगुग्गुलंदद्याद्राराजन्कंदुरुंतथा॥चतुर्वेदिगृहेजन्मप्राप्नोतिसततंसुखी॥१०॥कृष्णागुरुंचकर्पूर
धूपंदत्वादिवाकरम् ॥ नैरंतर्येणयस्तस्यतस्यपुण्यफलंशृणु ॥ ११॥ कल्पकोटिसहस्राणिकल्पकोटिशतानिच ॥ भुक्त्वासूर्यपुरेभोगांस्त
स्यांतेक्ष्माधिपोभवेत् ॥ १२ ॥ गुग्गुलंघृतसंयुक्तंयक्षोगृण्हातिशब्दकृत् ॥ यक्षाह्वयस्यदानेनतस्यलोकेमहीयते ॥ १३ ॥ कृष्णशौक्ल
पक्षसप्तम्यांयःसाज्यंगुग्गुलंदहेत् ॥ सचासौसौरमासाद्यवर्षाणांचदशदश ॥ १४ ॥ देवदारुंनमेरुंचश्रीवासंकुंदुरुंतथा ॥ श्रीफलंचास्यसंयुक्तं
दग्ध्वाश्रममवाप्नुते ॥ १५ ॥ एवंसौगंधिकंरूपंषट्सहस्रगुणोत्तरम् ॥ अगुरुंदशसाहस्रंसघृतंद्विगुणंभवेत् ॥ १६ ॥ अनंतफलदंदेवंसदाकुं
दुरुकामुकम् ॥ द्विसहस्रपलानांतुमहिषाक्षस्यगुग्गुलोः ॥ १७ ॥ दग्ध्वार्धमविमिश्रस्यसूर्यतुल्यःप्रजायते ॥ शोधयेत्पापसंयुक्तंपुरुषंनात्र

संशयः॥१८॥ कृष्णागुरुभवंधूपंतुपाग्निरिवकांचनम्॥योंतःपुरगृहंगंधैःसुगंधैःप्रविलेपयेत् ॥१९॥ कपाटद्वारकुड्यादितिर्यगूर्ध्वंसवेदिकम् ॥
वासयेत्पुष्पमालाभिर्धूपैश्चापिसुगंधिभिः ॥२०॥ तस्यपुण्यंयथावत्तुशृणुवयोर्वच्मिकृत्स्नशः ॥ आपूरयन्दिशःसर्वानानागंधसमन्वितैः ॥२१॥
कल्पकोटिशतंदिव्यंतेजसावह्निसन्निभः॥शक्रवत्प्रज्वलन्देवःसूर्यलोकेमहीयते॥ २२॥ तस्यांतेधर्मशेषेणत्रैलोक्याधिपतिर्भवेत् ॥ शतावृतं
तुयःकुर्यादेवगंधैर्भगालयम् ॥२३॥ ससर्वैशर्मसंयुक्तःसूर्यतुल्यपराक्रमः॥सूर्यलोकेवसेद्देवोयुवाभ्यांसंप्रपूजितः ॥२४॥ तद्वच्छुक्लैश्चसंवीतंपट्ट
सूत्रैर्विनिर्मितम् ॥ दत्वोपवीतंसूर्यायभवेद्वेदांगपारगः ॥ २५ ॥ वासांसिसुविचित्राणिसूरलोकेमहीयते ॥ त्रुटिमात्रंतुयोदद्यादूर्णावस्त्रंसपंक
जम् ॥ २६ ॥ भास्करस्योत्तमांगेषुतस्यपुण्यंब्रवीम्यहम् ॥ इंद्रस्यार्धासनेतिष्ठेद्यावदिंद्राश्चतुर्दश ॥ २७ ॥ एवंवित्तानुसारेणएवंज्ञेयंसमा
सतः ॥ सर्वेषांहेमपात्राणांमुकुटानांचसर्वशः ॥ २८ ॥ अर्कपत्रपुटंचूर्णमधुपर्णसमन्वितम् ॥ योनिवेदयतेऽर्कायसोऽश्वमेधफलंलभेत् ॥२९॥
शालितंडुलप्रस्थस्यकुर्यादन्नंसुसंस्कृतम् ॥ सूर्यायचचरुंदत्वासप्तम्यांचविशेषतः ॥ ३० ॥ संयावंकृशरंपूपंपायसंयावकंतथा ॥ दध्यो
दनरसालान्नमोदकान्गुडपूपकान् ॥ ३१ ॥ यावंतस्तंडुलास्तस्मिन्नैवेद्यंपरिसंख्यया ॥ तावद्वर्षसहस्राणिसूरलोकेमहीयते ॥ ३२ ॥ गुड
खंडकृतानांचभक्ष्याणांविनिवेदने ॥ घृतेनप्लावितानांचदत्वाशतगुणंलभेत् ॥ ३३ ॥ रसालाखाद्यकाद्यानांभक्ष्याणांफलमिष्यते ॥ तदर्थं
सलिलस्यापिवासितस्यनिवेदयेत् ॥ ३४ ॥ यथान्यमर्पितच्छ्रेष्ठंभक्ष्याणिविविधानिच ॥ निवेद्यार्कायपरमंस्थानंप्राप्नोतिपूजनात् ॥
॥ ३५ ॥ प्रज्वाल्यघृतदीपंतुभास्करस्यालयेशुभम् ॥ आग्नेयंयानमारुह्यगच्छेत्सौमनसंपुरम् ॥ ३६ ॥ यःकुर्यात्कार्तिकेमासिशोभनां
दीपमालिकाम् ॥ सप्तम्यामथषष्ठ्यांवाअमावास्यामथापिवा ॥ ३७ ॥ भास्करायुतसंकाशतेजसाभासयन्दिशः ॥ दिव्याभरणसंपन्नाः
कुलमुद्धृत्यसर्वशः ॥ ३८ ॥ यावत्प्रदीपसंख्यानंघृतेनापूर्यबोधितम् ॥ तावद्वर्षसहस्राणिसूर्यलोकेमहीयते ॥३९ ॥ दीपवृक्षमथोद्बोध्यप
र्वस्वायतनेषुवै ॥ पूर्वस्माद्द्विगुणंपुण्यंलभतेनात्रसंशयः ॥ ४० ॥ दीपवृक्षंसमुद्बोध्यभास्करायतनेषुभोः ॥ सर्वलोहमयंवीररविलोकेमही
यते ॥ ४१ ॥ शिरसाधारयेद्दीपंभास्करस्याग्रतोनिशि ॥ ललाटेचैवहस्ताभ्यांसमुद्युक्तस्तथोरसि ॥ ४२ ॥ भास्करायुतसंकाशोनिमा

नैरर्कसन्निभैः ॥ कल्पायुतशतंचैवसूर्यलोकेमहीयते ॥ ४३ ॥ अन्नदातातुयोवीरवरिलोकेमहीयते ॥ भास्करस्याग्रतोदत्वादर्पणंनिर्मलं
शुभम् ॥ ४४ ॥ पर्यंकेशोभितंकृत्वाश्वेतमाल्यैःसचंदनैः ॥ वृकार्कनिर्मलःश्रीमान्दिव्याभरणरूपधृक् ॥ ४५ ॥ कल्पायुतसहस्राणि
सूरलोकेमहीयते ॥ कृत्वाप्रदक्षिणंभक्त्याश्रद्दधानोरवेर्नरः ॥ ४६ ॥ अश्वमेधसहस्रस्यसुखेनलभतेफलम् ॥ कृत्वाप्रदक्षिणंयस्तुनमस्का
रंप्रयोजयेत् ॥ ४७ ॥ राजसूयाश्वमेधाभ्यांसकलंविंदतेफलम् ॥ नमस्कारःस्मृतोयज्ञःसर्वयज्ञोत्तमोत्तमः ॥ ४८ ॥ नमस्कृत्वासहस्रांशु
मश्वमेधफलंलभेत् ॥ प्रणम्यदंडवद्भूमौनमस्कारेणयोऽर्चयेत् ॥ ४९ ॥ सयांगतिमवाप्नोतिनतांक्रतुशतैरपि ॥ सर्वयज्ञोपवासेषुसर्वतीर्थे
षुयत्फलम् ॥ ५० ॥ अभिज्ञाप्योपहारेणपूजयाफलमश्नुते ॥ श्वेतंमहाध्वजंकृत्वाकृत्वाचापंचरंगिकम् ॥ ५१ ॥ किंकिणीजालनिर्घोषं
मयूरच्छत्रभूषितम् ॥ यस्त्वर्यम्णेनरोदद्याच्छ्रद्धयापरयान्वितः ॥ ५२ ॥ सशतेनविमानानांसर्वदेवनमस्कृतः ॥ मन्वंतरशतंदेवोमोदते
दिविदेववत् ॥ ५३ ॥ ध्वजमालाकुलंकुर्याद्यःप्रांतेषुभगालयम् ॥ महाध्वजाष्टकंचापिदिग्विदिक्षुनिवेदयेत् ॥ ५४ ॥ सविमानसहस्रेण
ध्वजमालाकुलेनतु ॥ कल्पायुतशतंदिव्यंमोदतेदिविसूरवत् ॥ ५५ ॥ शतचंद्रांशुविमलांमुक्तादामोपशोभिताम् ॥ मणिदंडमयंछत्रं
दद्याद्वाकांचनादिकम् ॥ ५६ ॥ सधार्यमाणच्छत्रेणहेमदंडोपशोभिना ॥ मोदतेसूर्यलोकेतुविमानवरमास्थितः ॥ ५७ ॥ ततस्तस्माच्च्यु
तोलोकान्निसर्गाद्भुवमागतः ॥ भुंक्तेसमुद्रपर्यंतामेकच्छत्रांवसुंधराम् ॥ ५८ ॥ यःशृंखलासमायुक्तांमहाघंटांमहास्वनाम् ॥
कांस्यलोहमयींवापिनिवद्धींयाद्भगालये ॥ ५९ ॥ शोभनःस्यान्नरःश्रीमान्भगस्यातीववल्लभः ॥ सूर्यतुल्यबलोभूत्वासूर्यलो
केमहीयते ॥ ६० ॥ भेरीमृदंगपटहझर्झरीलारजादिकम् ॥ दंशकांस्यादिवादित्रंयोभगायानिवेदयेत् ॥ ६१ ॥ सविमा
नैर्महाभागैर्वंशवीणायुतस्वनैः ॥ युगांतकशतंदिव्यंभगलोकेमहीयते ॥ ६२ ॥ सुसंगीतकदानेनसवाद्येनविशेषतः ॥ यथेष्टंभा
स्करेलोकेमोदतेकालमक्षयम् ॥ ६३ ॥ महामहास्वनंदत्वाशंखयुग्मंभगालये ॥ युगकोटिशतंदिव्यंभगलोकेमहीयते ॥ ६४ ॥
विमानंवहुवर्णाभंमध्येपंकजभूषितम् ॥ विचित्रमेकवर्णंवासनवस्त्रोपकल्पितम् ॥ ६५ ॥ किंकिणीजालसंपन्नंवर्णकैश्चोपशोभि

तम् ॥ पुष्पमालाप्रभंवापिघंटाचामरभूषितम् ॥ ६६ ॥ भगस्योपरियोदद्यात्सर्वरत्नोपशोभितम् ॥ दुकूलपट्टदेवांगैर्वस्त्रैर्वावर्णका
ग्वितैः ॥ ६७ ॥ पट्टादिवस्त्रतंतूनांपरिसंख्यातुयाभवेत् ॥ तावद्युगसहस्राणिसूरलोकेमहीयते ॥ ६८ ॥ भगाहुत्याजगत्सर्वंसृष्टिद्वारेणधा
र्यते ॥ अग्निवर्त्मावचस्युक्तोह्याग्निरस्यात्मजःसदा ॥ ६९ ॥ यस्त्वग्निकार्यंविधिवत्कुर्यान्नित्यंभगालये ॥ भगमुद्दिश्यराजेंद्रसयातिपरमां
गतिम् ॥ ७० ॥ सर्वान्नंपावकोपेतंयस्तुनित्यांविधिहरेत् ॥ पुष्पधूपजलोपेतंकालेकालेविशेषतः ॥ ७१ ॥ महाश्वेतादिमातॄणांत्रिकल्पानांच
सर्वशः ॥ यःकृत्वासकृदप्येवंसर्वदिक्षुबलिंहरेत् ॥ ७२ ॥ सनरश्चसहस्राणिशांडिलेयपुरेवसेत् ॥ सौरीसंध्याबलिंकृत्वादिनांतेसततं
रवेः ॥ ७३ ॥ वर्षायुतशतंसाग्रंभगलोकेमहीयते ॥ दध्योदनपयोभिर्यःपूरितंपात्रमावृतम् ॥ ७४ ॥ पुष्पधूपार्चितंचैववितानोपरिशो
भितम् ॥ शिरसाधारयेत्पात्रंशनैर्गच्छेत्प्रदक्षिणम् ॥ ७५ ॥ रव्यायतनपर्यंतेशंखमेघादिनिस्वनैः ॥ दर्पणंधूपमालाभिर्गेयनृत्यादिशो
भितम् ॥ ७६ ॥ भानोर्हिस्मृतिशीलश्चतस्यपुण्यफलंशृणु ॥ दिव्यंवर्षसहस्रंतुदिव्यंवर्षशतंतथा ॥ ७७ ॥ तपस्ततंमहत्तेनभवेदेवंनसं
शयः ॥ भगभक्तिप्रसक्तात्मायद्यपिस्यात्सपापकृत् ॥ ७८ ॥ भगलोकेवसेन्नित्यंभगानुचरतांगतः ॥ कृष्णांतुषष्ठींनक्तेनयश्चकृष्णांसरस्व
तीम् ॥ ७९ ॥ इहभोगानवाप्नोतिपरत्रचशुभांगतिम् ॥ योब्दमेकंतुकुर्वीतनक्तंभगदिनेनरः ॥ ८० ॥ ब्रह्मचारीजितक्रोधोभगार्चनपरोनरः ॥
अयाचितात्परंनक्तंतस्मान्नक्तेनवर्तयेत् ॥ ८१ ॥ देवैस्तुभुक्तंमध्याह्नेपूर्वाह्णेऋषिभिस्तथा ॥ अपराह्णेतुपितृभिःसंध्यायांगुह्यकादिभिः ॥ ८२ ॥
सर्वांवेलाह्यतिक्रम्यसौराणांभोजनंपरम् ॥ भुंजानोनक्तकालेतुसूर्यभक्तिपरायणः ॥ ८३ ॥ भगलोकमवाप्नोतिसुमनाःसुमनोव्रतः ॥ भुक्त्वा
सौमनसाँल्लोकान्राजाभवतिभूतले ॥ ८४ ॥ हविष्यभोजनंस्नानमाहारस्यचलाघवम् ॥ अग्निकार्यमधःशय्यांनक्तभोजीसमाचरेत् ॥ ८५ ॥
कृष्णषष्ठ्यांप्रयत्नेनकृत्वानक्तंविधानतः ॥ नरोमार्गशिरेमासिअंशुमानितिपूजयेत् ॥ ८६ ॥ विधिवत्प्राश्यगोमूत्रमनाहारोनिशिस्वपेत् ॥
अतिरात्रस्ययज्ञस्यफलमाप्नोतिमानवः ॥ ८७ ॥ पुष्येप्येवंसहस्रांशुंभानुमंतसुशंतिच ॥ वाजपेयफलंप्राप्यघृतंप्राश्यलभेन्नरः ॥ ८८ ॥
माघेदिवाकरंनामकृष्णषष्ठ्यांनरोत्तम ॥ निशिपीत्वातुगोक्षीरंगोमेधफलमाप्नुयात् ॥ ८९ ॥ मार्तंडंफाल्गुनेमासिपूजयित्वागवांपयः ॥

पिबेत्ततःसूर्यलोकेमोदतेसोऽयुतायुतम् ॥९०॥ चैत्रेमासिविवस्वंतंपूजयित्वासुभक्तिमान् ॥ हविष्याशीसूर्यलोकेऽप्सरोभिःसहमोदते॥९१॥
वैशाखेचण्डकिरणंपूजयेच्चपयोव्रतः॥वर्षाणामयुतंसाग्रंमोदतेसूर्यसंनिधौ ॥९२॥ ज्येष्ठेदेवस्पातिंपूज्यगवांशृंगोदकंपिबेत् ॥ गवांकोटिप्रदान
स्यानिखिलंफलमाप्नुते ॥ ९३ ॥ आषाढेत्वर्कनामानंद्दष्ट्वाप्राश्यचगोमयम् ॥ प्रयात्यर्कसलोकंतुवर्षाणांचशतंशतम् ॥ ९४ ॥ श्रावणेऽर्य
मनामानंपूजयित्वापयःपिबेत् ॥ वर्षाणामयुतंसाग्रंमोदतेभास्करालये ॥ ९५ ॥ मासिभाद्रपदेषष्ठ्यांभास्करंनामपूजयेत् ॥ भास्करंपं
चगव्यस्यसर्वमेधफलंलभेत् ॥ ९६ ॥ मासिचाश्वयुजेषष्ठ्यांभगाख्यंनामपूजयेत् ॥ गोमूत्रफलभुक्चैवअश्वमेधफलंलभेत् ॥ ९७ ॥
मासेतुकार्तिकेषष्ठ्यांशक्राख्यंनामपूजयेत् ॥ दूर्वांकुरंसकृत्प्राश्यराजसूयफलंलभेत् ॥ ९८ ॥ वर्षांतेभोजयेद्विप्रान्सूर्यभक्तिपरायणान् ॥
शक्त्याहिरण्यवासांसिभक्त्यातेभ्योनिवेदयेत् ॥ निवेदयेच्चसूर्यायकृष्णांगांचपय
पायसंमधुसंयुक्तंवस्त्रेणचपरिप्लुतम् ॥ ९९ ॥
स्विनीम् ॥ १०० ॥ वर्षमेकंचदेवेवैनैरंतर्यैणयोनयेत् ॥ कृष्णषष्ठीव्रतंभक्त्यातस्यपुण्यफलंशृणु ॥ १०१ ॥ सर्वपापविनिर्मुक्तःसर्व
कामसमन्वितः ॥ मोदतेसूर्यलोकेतुसनरःशाश्वतीःसमाः ॥ १०२ ॥ पुण्येष्वहःसुसर्वेषुविषुवद्ग्रहणादिषु ॥ दानोपवासहोमाद्यैरक्षयं
स्वर्गजायते ॥ १०३ ॥ सुमंतुरुवाच ॥ ॥ इत्युक्तवान्पुराभानुररुणायविशांपते ॥ कृष्णषष्ठीव्रतंपुण्यंसर्वपापभयापहम् ॥ १०४ ॥
कृत्वेदंपुरुषोभक्त्याभास्करस्यमहात्मनः ॥ प्रयातिपरमंस्थानंभानोरमिततेजसः ॥ १०५ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमी
कल्पेसूर्यषष्ठीव्रतवर्णनंनामचतुःषष्ट्युत्तरशततमोऽध्यायः ॥१६४॥ छ॥ ॥ सुमंतुरुवाच ॥ ॥ अहंतेसंप्रवक्ष्यामिसूर्यस्यव्रतमुत्तमम् ॥
धर्मकामार्थमोक्षाणांप्रतिपादनमुत्तमम् ॥ १ ॥ पौषमासेतुसंप्राप्तेयःकुर्यान्नक्तभोजनम् ॥ जितेंद्रियःसत्यवादीशालिगोधूमगोरसैः ॥ २ ॥
पक्षयोःसप्तमीयत्नादुपवासेनयापयेत् ॥ त्रिसंध्यमर्चयेद्भानुंशांडिलेयंचसुव्रत ॥ ३ ॥ अधःशायीभवेन्नित्यंसर्वभोगविवर्जितः ॥ मासिपूर्णेतु
सप्तम्यांघृतादिभिररिंदम ॥ ४ ॥ कृत्वास्नानंमहापूजांसूर्यदेवस्यभारत ॥ नैवेद्यंमोदकप्रस्थंक्षीरंसिद्धंनिवेदयेत् ॥ ५ ॥ भोजयेच्चद्विजान
ष्टौभगार्चांशुभलक्षणाम् ॥ गांचदत्वामहाराजकपिलांभास्करस्यतु ॥ ६ ॥ यएवंकुरुतेपुण्यंसूर्यस्यव्रतमुत्तमम् ॥ तस्यपुण्यफलंवच्मिस

वंकामसमन्वितम् ॥ ७ ॥ सूर्यकोटिप्रतीकाशैर्विमानैःसार्वकामिकैः॥अप्सरोगणसंकीर्णैर्महाविभवसंयुतैः ॥८॥ संगीतनृत्यवाद्याद्यैर्गंधर्वगण
शोभितैः ॥ दोधूयमानश्चमरैःस्तूयमानःसुरासुरैः ॥ ९ ॥ सहस्रकिरणाभासःसौरैःसूर्यसमन्वितैः ॥ सयातिपरमंस्थानंयत्रास्तेरविरंशुमान्
॥१० ॥ रोमसंख्यातुयातस्यास्तत्प्रसूतिकुलेषुच ॥ तावद्युगसहस्राणिसूरलोकेमहीयते ॥ ११ ॥ त्रिःसप्तकुलजैःसार्धंभोगान्भुक्त्वायथेप्सि
तान् ॥ ज्ञानयोगंसमासाद्यपुनरेवप्रमुच्यते ॥ १२ ॥ योगाद्दुःखांतमाप्नोतिज्ञानयोगंप्रवर्तते ॥ सौरधर्माद्भवेज्ज्ञानंसौरधर्माद्गार्चनात्॥१३॥
इत्येवंतेसमाख्यातंभवार्णवव्यपोहनम् ॥ सौरमोक्षक्रमोपायंसूराश्रयनिषेवणम् ॥ १४ ॥ माघमासेतुसंप्राप्तेयःकुर्यान्नक्तभोजनम् ॥ पिण्या
कंघृतसंयुक्तंभुंजानःसजितेंद्रियः ॥ १५ ॥ सोपवासश्चसप्तम्यांभवेदुभयपक्षयोः ॥ घृताभिषेकमष्टम्यांकुर्याद्भानोर्नराधिपः ॥ १६ ॥ गांच
दद्याद्दिनेशायतरुणींनीलसंनिभाम् ॥ इंद्रनीलप्रतीकाशैर्विमानैःशिखिसंयुतैः ॥ १७ ॥ गत्वादित्यपुरंरम्यंभोगान्भुंक्तेयथेप्सितान् ॥ राजेंद्र
फाल्गुनेमासियःकुर्यान्नक्तभोजनम् ॥ १८ ॥ श्यामाकक्षीरनीवारैर्जितक्रोधोजितेंद्रियः ॥ षष्ठ्यांवाप्यथसप्तम्यामुपवासपरोनरः ॥ १९ ॥
अष्टम्यांतुमहास्नानंपंचगव्यघृतादिभिः ॥ वल्मीकाद्यादिमृद्भिश्चगोमूत्रशकृदादिभिः ॥ २० ॥ त्वग्भिश्चक्षीरवृक्षाणांस्नापयित्वाप्रमार्जयेत्॥
सौरभेयींततोदद्याद्रक्ताभांरक्तमालिने ॥ २१ ॥ पद्मरागप्रतीकाशैर्विमानैर्हस्तिसंयुतैः ॥ गत्वादित्यपुरंरम्यंमोदतेशाश्वतीःसमाः ॥ २२ ॥
मासिचैत्रेतुसंप्राप्तेयःकुर्यान्नक्तभोजनम् ॥ शाल्यन्नंपायसंयुक्तंभुंजानश्चजितेंद्रियः ॥ २३ ॥ भानवेपाटलांदद्याद्वैष्णवींतरुणींनृप ॥ पुष्प
रागप्रभैर्यानैर्नानाहंसादियायिभिः ॥ २४ ॥ गच्छेत्सूर्यपुरंरम्यंमोदतेशाश्वतीःसमाः ॥ वैशाखेवीरमासेतुयःकुर्यान्नक्तभोजनम् ॥ २५ ॥
सूर्यैखंडाज्यसंमिश्रंसक्तुदद्यान्निवेदनम् ॥ गांचदद्यान्महाराजभास्करायशुभानन ॥२६॥ सामान्यंचविधिंकुर्यात्प्रयुक्तंयन्मयातव ॥ शुद्धस्फ
टिकसंकाशैर्यानैर्बर्हणवाहनैः ॥ २७ ॥ अणिमादिगुणैर्युक्तःसूर्यवद्विचरेद्दिवि ॥ संप्राप्तेश्रावणेमासियःकुर्यान्नक्तभोजनम् ॥ २८ ॥ क्षीरप
ष्टिकभक्तेनसर्वसत्वहितेरतः ॥ पीतवर्णांचगांदद्याद्भास्करायमहात्मने ॥ २९ ॥ सामान्यमखिलंकुर्याद्विधानंयत्प्रकीर्तितम् ॥ सविचि
त्रैर्महायानैर्हंससारसगामिभिः ॥ ३० ॥ गत्वादित्यपुरेश्रीमान्पूर्वोक्तंलभतेफलम् ॥ वीरभाद्रपदेमासियःकुर्यान्नक्तभोजनम् ॥ ३१ ॥ हुत

शेपहविष्याशीवृक्षमूलमुपाश्रितः ॥ स्वपेदायतनेरात्रौसर्वभूतानुकंपकः ॥ ३२ ॥ दद्याद्गांरोहिणींश्रेष्ठांभास्करायमहात्मने ॥ निशाकरक
रप्रख्यैर्वज्रवैडूर्यसन्निभैः ॥३३॥ चक्रवाकसमायुक्तैर्विमानैःसार्वकामिकैः॥ गत्वादित्यपुरंरम्यंसुरासुरसुवंदितम् ॥ ३४ ॥ मोदतेसमहाभागो
यावदाभूतसंप्लवम्॥ श्रीमानश्वयुजेमासियःकुर्यान्नक्तभोजनम् ॥३५॥मिताशनंप्रभुंजानोजितक्रोधोजितेंद्रियः॥दद्याद्गांपद्मवर्णाभांभानोरमि
ततेजसः॥३६॥दिव्याभरणसंपन्नांतरुणींचपयस्विनीम् ॥ स्वस्तिमौक्तिकसंकाशैरिंद्रनीलोपशोभितैः ॥३७॥जीवंजीवकसंयुक्तविमानैःसार्व
कामिकः॥गच्छेद्भानुसलोकत्वंभुंजानःसजितेंद्रियः॥३८॥दिवाकरायगांदद्याज्ज्वलनार्कसमप्रभाम्॥पूर्वोक्तंचविधिंकुर्यात्सूर्यतुल्योभवेन्नरः॥
॥३९॥कालानलशिखप्रख्यैर्महायानैर्नगोपमैः ॥ महासिंहकृताकोपैःसूर्यवन्मोदतेसुखी॥४०॥ मार्गशीर्षेशुभेमासियःकुर्यान्नक्तभोजनम् ॥
यच्चान्नंपयसायुक्तंभुंजानःसजितेंद्रियः ॥ ४१ ॥ प्रयच्छेद्गांतथारक्तांनानालंकारभूषिताम् ॥ सूर्यायकुरुशार्दूलविधिंचापिसमाचरेत् ॥४२॥
सितपद्मनिभैर्यानैःश्वेताश्वरथसंयुतैः ॥ गत्वातत्रपुरेरम्येप्रभयापरयान्वितः ॥ ४३ ॥ अहिंसासत्यवचनमस्तेयंक्षांतिमार्जवम् ॥ त्रिषव
णाग्निहवनंभूशय्यानक्तभोजनम् ॥४४॥पक्षयोरुभयोर्मार्गेसप्तम्यांकुरुनंदन ॥ एतान्गुणान्समाश्रित्यकुर्वाणोव्रतमुत्तमम् ॥४५॥सप्तम्योभय
विख्यातंसर्वपापभयापहम् ॥ सर्वरोगप्रशमनंसर्वकामफलप्रदम् ॥४६॥इत्येवमादीन्नियमांश्चरेत्सूर्यव्रतीसदा ॥ यइच्छेद्विपुलंस्थानंभानोर
मिततेजसः॥४७॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेउभयसप्तमीवर्णनंनामपंचषष्ट्युत्तरशततमोऽध्यायः ॥ १६५ ॥ छ ॥
॥ सुमंतुरुवाच ॥ ॥ सूर्यभक्तातुयानारीध्रुवंसापुरुषोभवेत् ॥ स्त्रीपुत्रमुत्तमंसाचेत्कांक्षतेशृणुतद्व्रतम् ॥ १ ॥ निक्षुभार्काख्यमाख्यातं
सदाप्रीतिविवर्धनम् ॥ अवियोगकरंवीरधर्मकामार्थसाधकम् ॥ २ ॥ सप्तम्यामथषष्ठ्यांवासंक्रांतौचरवेर्दिने ॥ हविष्याहारोहोमैंतुसोपवासःस
माचरेत् ॥ ३ ॥ निक्षुभांकांस्यनिष्पन्नांकृत्वास्वर्णमयींशुभाम् ॥ राजतींवाथवावर्षेस्नापयेच्चघृतादिभिः ॥ ४ ॥ गंधमाल्यैरलंकृत्यवस्त्रयु
ग्मैश्चशोभनैः ॥ भक्ष्यभोज्यैरशेषैश्चवितानध्वजचामरैः ॥ ५ ॥ भोजयेत्सूर्यभक्तांश्चशुक्लवस्त्रावगुंठितम् ॥ कृत्वायतनमध्येतुप्रतिमासु
पकल्पयेत् ॥ ६ ॥ कृत्वाशिरसितत्पात्रंवितानच्छत्रशोभितम् ॥ ध्वजशंखादिविभवैर्भगस्यायतनंनयेत् ॥ ७ ॥ निक्षुभार्कदिनेशस्यव्रत

मेतान्निवेदयेत् ॥ तांश्चपञ्चांस्थापयेत्पात्रमुपशोभासमन्वितम् ॥ ८ ॥ प्रदक्षिणीकृत्यरविंप्रणिपत्यक्षमापयेत् ॥ समाप्यतद्व्रतंपुण्यंशृणुया
त्फलमश्नुते ॥ ९ ॥ द्वादशादित्यसंकाशैर्महायानैर्नगोपमैः ॥ यथेष्टंभानवेलोकेसौरैःसार्धंप्रमोदते ॥ १० ॥ वर्षकोटिसहस्राणिवर्षकोटिश
तानिच ॥ नंदतेऽसौमहाभागविष्णुलोकेमहीयते॥११॥ततःकर्मविशेषेणसर्वकामसमन्वितम् ॥ ब्रह्मलोकंसमासाद्यपरंसुखमवाप्नुते ॥१२ ॥
ब्रह्मलोकात्परिभ्रष्टःश्रीमान्सुरप्रपूजितः ॥ प्रजापतिमवाप्नोतिसुरासुरनमस्कृतः ॥ १३ ॥ लोकानिहचिरंभुक्त्वासोमलोकेमहीयते ॥
सोमादैंद्रंपुनर्लोकमासाद्येंद्रपतिर्भवेत्॥१४॥इंद्रलोकाच्चगंधर्वलोकंप्राप्यसमोदते॥ततस्तद्धर्मशेषेणभवत्यादित्यभावितः ॥ १५ ॥ स्वकर्म
भावनायोगात्पुनःप्रारभतेशुभम् ॥ शुभाच्चपुनरेत्येहसयात्यातिसहस्रशः ॥१६॥ यावन्नाप्नोतिमरणंतावद्भ्रमतिकर्मणा ॥ सुनिर्वेदात्सुवैराग्यंवै
राग्याज्ज्ञानसंभवः ॥१७॥ ज्ञानात्प्रवर्ततेयोगोयोगाद्दुःखांतमाप्नुयात् ॥ १८ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेनिक्षु
भाव्रतवर्णनंनामषट्षष्ट्युत्तरशततमोऽध्यायः ॥ १६६ ॥छ॥ सुमंतुरुवाच ॥ ॥ षष्ठ्यांचाप्यथसप्तम्यांनियताब्रह्मचारिणी ॥ वर्षमेकंनभुं
क्तेयामहाभागजिगीषया ॥१॥वर्षांतेप्रतिमांकृत्वानिक्षुभांकीर्तिविश्रुताम् ॥ स्नानाद्यंचविधिंकृत्वापूर्वोक्तंलभतेगुणम्॥२॥जांबूनदमयैर्यानैश्च
तुर्द्वारैरलंकृते ॥ गत्वादित्यपुरेरम्येअशेषंविंदतेफलम् ॥ ३ ॥ सौरादिसर्वलोकेषुभोगान्भुक्त्वायथेप्सितान् ॥ क्रमादागत्यलोकेऽस्मिन्रा
जानंपतिमाप्नुते ॥ ४ ॥ यानार्युपवसेदेवंकृष्णामेकांतुसप्तमीम् ॥ सागच्छेत्परमंस्थानंभानोरमिततेजसः ॥ ५ ॥ वर्षांतेप्रतिमांकृत्वाशा
लिपिष्टमयींशुभाम् ॥ पीतानुलेपनैर्माल्यैःपीतवस्त्रैश्चपूजयेत् ॥ ६ ॥ पूर्वोक्तमखिलंकृत्वाभास्करायनिवेदयेत् ॥ सप्तभूमौमहायानैर्दंतिचा
मीकरप्रभैः ॥७॥ वर्षकोटिशतंसाग्रंसूर्यलोकेमहीयते ॥ सौरलोकादिलोकेषुभुक्त्वाभोगान्नराधिप॥८॥क्रमादागत्यलोकेऽस्मिन्यथेष्टंविंदते
पतिम् ॥ सर्वलक्षणसंपन्नंधनधान्यसमन्वितम् ॥ ९ ॥ कृष्णपक्षेतुसप्तम्यांयानारीतुदृढव्रता ॥ वर्षमेकमुपवसेत्सर्वभोगविवर्जिता ॥१० ॥
वर्षांतेसर्वगंधाढ्यांनिक्षुभांकांनिवेदयेत् ॥ सुवर्णमणिमुक्ताभ्यांभोजयित्वामगांगनाम् ॥११॥ सुविचित्रैर्महायानैर्दिव्यगंधर्वशोभितैः ॥ सावै
युगसहस्राणिसूरलोकेनराधिपः ॥१२॥ यथेष्टंभानवेलोकेभोगान्भुक्त्वातुकृत्स्नशः ॥ क्रमादागत्यलोकेस्मिन्राजानंविंदतेपतिम् ॥ १३ ॥

याएवंकुरुतेराजन्व्रतंपापभयापहम् ॥ निक्षुभार्कमिदंपुण्यंसायातिपरमंपदम् ॥ १४ ॥ वर्षमेकंमहाबाहोश्रद्धयापरयान्वितः ॥ वर्षा
तेभोजयेद्वीरदांपत्यंभोजकेषुवै ॥ १५ ॥ भोजयित्वातुदांपत्यंभोजकानांमहाबलैः ॥ पूजयेद्गंधमाल्यैस्तुवासोभिःकुरुनंदन ॥ १६ ॥
कृत्वाताम्रमयेपात्रेवस्त्रपूर्णैरलंकृतम् ॥ निक्षुभार्कंतुसौवर्णंदत्वाताभ्यांतुशक्तितः ॥ १७ ॥ निक्षुभाभोजकीज्ञेयाभोजकोऽर्कःप्रकीर्तितः ॥ त
स्मात्तौपूजयेत्सौरीस्वरवच्छ्रद्धयान्वितः॥१८॥इति श्रीभविष्येमहापुराणेसौरधर्मेषुनिक्षुभार्कव्रतंनामसप्तषष्ट्युत्तरशततमोऽध्यायः॥१६७॥
सुमंतुरुवाच ॥ एकभक्तेनयानारीकार्तिकंक्षपयेन्नृप ॥ क्षमाहिंसादिनियमैःसंयताब्रह्मचारिणी ॥ १ ॥ गुडाज्यमिश्रंशाल्यन्नंभास्करायनिवे
दयेत् ॥ पक्षयोरुभयोस्तातश्रद्धयापरयान्विता ॥ २ ॥ पुष्पाणांकरवीराणांगुग्गुलंसाज्यमादिशेत् ॥ सप्तम्यांतातषष्ठ्यांवैउपवासरतिर्भ
वेत् ॥ ३ ॥ इंद्रनीलप्रतीकाशैर्विमानैःसार्वकामिकैः ॥ वर्षायुतशतंसाग्रंसूरलोकेमहीयते ॥ ४ ॥ तथाचसर्वलोकेषुभोगमासाद्ययत्नतः ॥
क्रमादागत्यलोकेऽस्मिन्यथेष्टंविंदतेपतिम् ॥ ५ ॥ इत्येवंसर्वयज्ञेषुविधिस्तुल्यःप्रकीर्तितः ॥ एकभक्तोपवासस्यफलंचसदृशंभवेत् ॥ ६ ॥
क्षमासत्यंदयादानंशौचमिंद्रियनिग्रहः ॥ सूर्यपूजाग्निहवनंसंतोषःस्तेयवर्जनम् ॥ ७ ॥ सर्वव्रतेष्वयंधर्मःसामान्योदशधास्मृतः ॥ निःशेषमहं
वक्ष्यामिमासामासव्रतंप्रति ॥८॥ मार्गशीर्षेशुभेमासिव्योमपृष्ठेविनिर्मितम् ॥ गंधमाल्यैरलंकृत्यशुभाननमनौपमम् ॥ ९ ॥ ताम्रपात्रादिकै
श्चैवाप्यप्सरोगणसेवितैः॥सुमेरौदशसाहस्रेसूर्यलोकेमहीयते॥१०॥सर्वदेवकदंबेषुसंप्राप्याविमलांश्रियम्॥क्रमादागत्यलोकेऽस्मिन्राजानंपति
माप्नुते ॥ ११ ॥ पुष्पैरसुमलंकृत्वाभानवेविनिवेदयेत् ॥ गंधमाल्यैरलंकृत्यशुभाननमनौपमम् ॥ १२ ॥ ताम्रपात्रादिकांस्यंवाकृत्वातत्र
निवेदयेत् ॥ महापुष्पकयानेनदिव्यगंधप्रवाहिना ॥ १३ ॥ सुमेरौदशसाहस्रंसूर्यलोकेमहीयते ॥ भुक्त्वातुविपुलान्भोगान्सर्वलोकेषुभार
त ॥ १४ ॥ संप्राप्यैनंक्रमाल्लोकेयथेष्टंविंदतेपतिम् ॥ माघेरथमश्वयुक्तंदीपमालयाविभूषितम् ॥ १५ ॥ पिष्टसानुसमायुक्तंकृत्वायतनमान
येत् ॥ महारथोपमैर्यानैःश्वेताश्ववरसंयुतैः ॥१६॥ वर्षायुतशतंसाग्रंसूर्यलोकेमहीयते ॥ सर्वामराणांलोकेषुप्राप्यभोगान्यथेप्सितान् ॥१७॥
क्रमादागत्यलोकेऽस्मिन्यथेष्टंपतिमाप्नुते ॥ प्रतिमांफाल्गुनेमासिकृत्वापिष्टमयींरवेः ॥ १८ ॥ गंधमाल्यैरलंकृत्यस्थापयेद्भास्करालये ॥

यानैरप्रतिमैर्दिव्यैर्गीतनादसमाकुलैः ॥१९॥ सुमेरौदशसाहस्रंसूर्यलोकेमहीयते ॥ सर्वाभिमतलोकेऽस्मिन्प्राप्यभोगान्यथेप्सितान् ॥ २० ॥
पुनरेत्यइमंलोकंयथेष्टंविंदतेपतिम् ॥ कृत्वारुणंतथाचैत्रेगंधमाल्योपशोभितम् ॥२१॥ स्थाप्यपात्रेयथोक्तेतुभास्करायनिवेदयेत् ॥ शरदिं
दुप्रतीकाशैर्विमानैःसार्वकामिकैः ॥ २२ ॥ वर्षायुतशतंसाग्रंसूर्यलोकेमहीयते ॥ कर्मक्षयादिहागत्यपुत्रपौत्रसमन्वितम् ॥ २३ ॥ अभी
ष्टंपतिमासाद्यलभेद्भोगान्सुदुर्लभान् ॥ तंदुलाढकपिष्टेनकृत्वावैमेरुपर्वतम् ॥ २४ ॥ निक्षुभार्कसमायुक्तंसर्वधातुविभूषितम् ॥ नानालंकार
संपन्नंनानामाल्यविभूषितम् ॥ २५ ॥ सर्वरत्नसमायुक्तंस्थापयेद्भास्करालये ॥ महद्व्योमव्रतंह्येतद्वैशाखेयःसमाचरेत् ॥ २६ ॥ नानाविधै
श्चयानैस्तुसूर्यलोकेमहीयते ॥ सौरादिसर्वलोकेषुभुक्त्वाभोगानशेषतः ॥ २७ ॥ क्रमादागत्यलोकेऽस्मिन्राजानंपतिमाप्नुते ॥ द्वि
तीयंचतथापद्ममाषाढेपिष्टमुत्तमम् ॥ २८ ॥ सर्वबीजरसैःपूर्णंकृत्वातुशुभलक्षणम् ॥ नानाकेशरगंधाढ्यंसर्वरत्नविभूषितम् ॥ २९ ॥
एतैर्वाहैर्मभियानैःसर्वभोगान्वितैर्नृप ॥ वर्षकोटिशतंसाग्रंसूर्यलोकेमहीयते ॥ ३० ॥ भुक्त्वातुविपुलान्भोगान्सर्वलोकेष्वनुक्रमात् ॥
प्राप्तातुसर्वभोगाढ्यंतरुणंविंदतेपतिम् ॥ ३१ ॥ सर्वधातुसमाकीर्णंविचित्रध्वजशोभितम् ॥ निवेदयीतसूर्यायश्रावणेति
लपर्वतम् ॥ ३२ ॥ स्वच्छंदगाभिभियानैर्नानावर्णविभूषितैः ॥ वर्षकोटिशतंसाग्रंसूर्यलोकेमहीयते ॥ ३३ ॥ संप्राप्यविविधान्भोगान्म
हाश्चर्यसमन्वितान् ॥ क्रमाल्लोकमिमंप्राप्यराजानंविंदतेपतिम् ॥ ३४ ॥ कृत्वाभाद्रपदेमासिव्योमशालिमयंनृप ॥ वितानध्वजछत्राढ्यं
नानामालाविभूषितम् ॥ ३५ ॥ शब्दातुरकरप्रख्यैर्महायानैःसुशोभनैः ॥ वर्षकोटिसहस्राणिसूर्यलोकेमहीयते ॥ ३६ ॥ संप्राप्य
विविधान्भोगान्सर्वान्निमिषसंभवान् ॥ क्रमादागत्यलोकेऽस्मिन्राजानंविंदतेपतिम् ॥ ३७ ॥ कृत्वाचाश्वयुजेमासिविपुलंधान्यपर्व
तम् ॥ सुवर्णवस्त्रगंधाढ्यंभास्करायनिवेदयेत् ॥ ३८ ॥ सावित्रैश्चमहायानैर्वरभोगसमन्वितैः ॥ वर्षकोटिसहस्राणिसूर्यलोकेमहीयते ॥३९॥
सूर्यलोकादिलोकेषुभुक्त्वाभोगान्यथेप्सितान् ॥ अस्मिँल्लोकेचसंप्राप्ताराजानंविंदतेपतिम् ॥४०॥ हाविर्दंतवृक्षाणांतुकांतितेजःप्रभान्वितम् ॥
यंयंकामंसमुद्दिश्यनरनारीनपुंसकाः ॥४१॥ पूजयंतिरविंभक्त्यातत्सर्वंप्राप्नुवंतिहि ॥४२॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौ
रधर्मेषुकामप्रदव्रतवर्णनंनामाष्टषष्ट्युत्तरशततमोऽध्यायः ॥१६८॥ छ॥ सुमंतुरुवाच ॥ ॥ मृन्मयंदारुजंशैलंपक्वेष्टकमथापिवा ॥ कृत्वा

मठंगृहंवापियथाविभवसंभवात् ॥१॥ सर्वोपकरणोपेतंसर्वधान्यसमन्वितम् ॥ सूर्यायेत्थंगृहंदद्यात्सर्वान्कामानवाप्नुते ॥ २ ॥ कृत्वैकभक्तंहे
मंतेमाघमासमतंद्रितः ॥ मासांतेनरथंकुर्याच्चित्रवस्त्रोपशोभितम् ॥ ३ ॥ श्वेतैश्चतुर्भिःसंयुक्तंतुरगैःसमलंकृतम् ॥ श्वेतध्वजपताकाभिश्छत्र
चामरदर्पणैः ॥ ४ ॥ तंदुलाढकपिष्टेनकृत्वाभानुंनराधिप ॥ विन्यस्यतंरथोपस्थेसंज्ञयासहभूपते ॥ ५ ॥ तंरात्रौराजमार्गेणशंखभेर्यादि
निस्वनैः ॥ भ्रामयित्वाशनैःपश्चात्सूर्यायतनमाविशेत् ॥ ६ ॥ तत्रजागरपूजाभिःप्रदीपिकोपशोभितैः ॥ प्रेक्षणीयैःप्रदानैश्चक्षपयित्वाशनैः
क्षपाम् ॥ ७ ॥ प्रभातेस्नापनंकृत्वामधुक्षीरघृतेनच ॥ दीनांधकृपणान्नाद्यंयथाशक्त्याचदक्षिणाम् ॥ ८ ॥ रथंसंवाहनोपेतंभास्करायनिवेद
येत् ॥ भुक्त्वाचबांधवैःसार्धंप्रणम्यार्कंगृहंव्रजेत् ॥ ९ ॥ सर्वव्रतानांप्रवरंमंत्रधर्मान्वितःसदा ॥ व्रतंसूर्यव्रतंनामसर्वकामार्थसिद्धये ॥ १० ॥
सर्वव्रतेषुयत्पुण्यंसर्वयज्ञेषुयत्फलम् ॥ सर्वंसूर्यरथेनेहतत्पुण्यंलभतेनृप ॥ ११ ॥ सूर्यायनप्रतीकाशैर्विमानैःसार्वकामिकैः ॥ त्रिसप्तकुलजैः
सार्धंसूर्यलोकेमहीयते ॥ १२ ॥ भुक्त्वातुविपुलान्भोगान्सर्वलोकेष्वनुक्रमात् ॥ कल्पायुतशतंसाग्रंततोराजाभवेत्क्षितौ ॥ १३ ॥ पंचव
लिसमायुक्तंमृदुपड्वास्तुकल्पितम् ॥ सर्वोपकरणोपेतंसूर्यसंज्ञांप्रकल्पयेत् ॥१४॥ संज्ञादेवीसमायुक्तंपेष्टांशाब्यंनिवेदयेत् ॥ सौरज्ञानार्थ
तत्त्वज्ञमाचार्यमुदयान्वितम् ॥ १५ ॥ संपूज्यगंधपुष्पाद्यैर्वस्त्रालंकारचामरैः ॥ भक्ष्यभोज्यैरशेषैश्चततःशय्यांनिवेदयेत् ॥ १६ ॥ तदूर्णातू
लवस्त्राणांपरिसंख्यातुयावती ॥ तावद्वर्षसहस्राणिसूर्यलोकेमहीयते ॥ १७ ॥ सुरादिसर्वलोकेषुभुक्त्वाभोगानशेषतः ॥ कामादागत्य
लोकेऽस्मिन्राजाभवतिधार्मिकः ॥ १८ ॥ दशगाभिःसहवृषंतावृषैकादशाःस्मृताः ॥ सूर्यायविनिवेद्येहयत्फलंलभतेशृणु ॥ १९ ॥
द्वादशादित्यतुल्यात्माअणिमादिगुणैर्युतः ॥ सर्वत्रमोदतेराजन्सूर्यस्यानुचरोभवेत् ॥ २० ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमी
कल्पेसूर्यव्रतवर्णनंनामैकोनसप्तत्युत्तरशततमोऽध्यायः ॥ १६९ ॥ ७ ॥ ॥ सुमंतुरुवाच ॥ सवृषंगोशतंदत्त्वाभास्करायनराधिप ॥
त्रिःसप्तकुलजैःसार्धंशृणुयत्फलमाप्नुते ॥ १ ॥ वरकोटिप्रतीकाशैःसर्वकामसमन्वितैः ॥ महायानैरसंख्येयैरमरासुरपूजितैः ॥ २ ॥ द्वादशा
दित्यसंकाशोदिवाकरइवापरः ॥ गत्वादित्यपुरंरम्यंक्रीडतेसूर्यमंडपे ॥ ३ ॥ भुक्त्वातुविपुलान्भोगान्प्रलयेसर्वदेहिनाम् ॥

मोहकंचुकमुत्सृज्यविशत्यादित्यमंडले ॥ ४ ॥ सर्वज्ञःसूरपरमःशुद्धःस्वात्मन्यवस्थितः ॥ सर्वगःपरिपूर्णत्वात्सूर्यवद्दीतिमा
न्भवेत् ॥ ५ ॥ योदद्यादुभयमुखींसौरभेयींदिवाकरे ॥ सप्तद्वीपांमहींदत्त्वायत्फलंतदवाप्नुते ॥ ६ ॥ पादद्वयंशिरोऽर्धंचसशैलवनका
नना ॥ ७ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेगोदानवर्णनंनामसप्तत्युत्तरशततमोऽध्यायः ॥१७०॥छ॥ शतानीकउवाच ॥
मगानांब्रूहिमेधर्मंसमासव्यासयोगतः ॥ फलंचकिंभवेद्ब्रह्मन्मगधर्मनिषेवणात् ॥ १ ॥ सुमंतुरुवाच ॥ ॥ यएषधर्मःसूर्योतितवाख्यातोमया
नघ ॥ मगधर्मःसएवोक्तःसर्वपापभयापहः ॥ २ ॥ सर्वेषामेववर्णानांमगधर्मनिषेवणम् ॥ मगधर्मश्चसंप्रोक्तएतेषांभवमुक्तये ॥ ३ ॥
ब्राह्मणाःक्षत्रियावैश्याःस्त्रीशूद्रोवामगाश्रमी॥ यःपूजयतिमार्तंडंसयातिपरमांगतिम्॥४॥त्रिसंध्यमर्चयेद्भानुमग्निकार्यंचशक्तितः ॥ कुर्यान्मगो
महाबाहोमुखमावृत्ययत्नतः ॥ ५ ॥ त्रिसंध्यमेककालंवापूजयेच्छ्रद्धयारविम् ॥ असंपूज्यरविंमोहान्नभुंजीतकदाचन ॥ ६ ॥ एषधर्मःपरो
ज्ञेयःशेषोभवतिमानवः ॥ अपूजयित्वाभुंजानोविष्ठांभुंजतिवैमगः ॥ ७ ॥ देवंसमाश्रितैःपूजाकर्तव्येयंत्रिभिःसदा ॥ मनसापूजयेद्योगीपु
ष्पैश्चारण्यसंभवैः ॥ ८ ॥ देवार्थपुष्पहिंसायांनभवेत्तस्यहिंसकः ॥ यद्यल्पमपिचान्नाद्यंकिंसतेहिंसतःसदा ॥ ९ ॥ मगश्चाग्निपरोनित्यंतद्भ
क्तोऽतिथिपूजकः ॥ मगीमैथुनवर्ज्यःस्याच्छ्रीन्मान्गृहमगाश्रमी ॥१०॥ देवाग्निस्वातिथीभक्तंपचंतेचात्मकारणात् ॥ आत्मार्थेयःपचेन्मोहा
त्समगोनरकंव्रजेत् ॥ ११ ॥ देवार्थेपचनंयेषांसंतानार्थंतुमैथुनम् ॥ अर्थदानार्थमुद्दिष्टंनरकंहिविपर्ययात्॥१२॥ जीवत्तृतीयभागेपि
नप्रकुर्वीतवार्चनम् ॥ वित्तार्जनेतदर्धंनयतोनित्यंहिजीवितम् ॥ १३ ॥ न्यायोपार्जितवित्तःस्यादन्यायंपरिवर्जयेत् ॥ अन्यायार्जितवित्तै
स्तुकुर्वन्नरकमाप्नुते ॥१४॥ वाचार्थैब्रह्मचारीयःसूर्यपूजाग्नितत्परः ॥ भवेज्जितेंद्रियःशांतोनैष्ठिकोभौतिकोऽपिवा ॥ १५ ॥ सर्वगंधविनिर्मु
क्तःकंदमूलफलाशनः ॥ ममवैखानसोज्ञेयःसूर्यपूजाग्नितत्परः ॥ १६ ॥ निवृत्तःसंगमेभ्यस्तुसूर्यध्यानरतःसदा ॥ ज्ञेयःसौरयतींद्रायपूजा
निष्ठोजितेंद्रियः ॥ १७ ॥ मुंडोपनयनोव्यंगीशुक्लवासःसमन्वितः ॥ ज्ञेयंतदर्चनस्थानमेतत्कार्यंप्रयत्नतः ॥ १८ ॥ अथाव्यंगोमहारा
जधारयेद्यस्तुभोजकः ॥ अगम्यंसर्वसत्वानांसूर्यलोकंसगच्छति ॥ १९ ॥ ध्वंसनंसर्वदुष्टानांसर्वपापभयापहम् ॥ भावशुद्धेनसततमर्चनीयो

दिवाकरः ॥ २० ॥ गंधलेपविहीनोऽपिभावशुद्धोनदुष्यति ॥ भावेषुचचरेच्छौचंवस्त्रपूतंजलंपिबेत् ॥ २१ ॥ दृष्टिपूतंन्यसेत्पादंसत्यपूतं
वचोवदेत् ॥ सौरध्यानरताःशांताःसौरधर्मपरायणाः ॥ २२ ॥ सर्वएवाश्रमाज्ञेयाभास्करांगसमुद्भवाः ॥ भोजकाष्टव्रतंधार्यरविणोक्तमनो
पमम् ॥ २३ ॥ सर्वव्रतानांपरमंधर्मालयमनुत्तमम् ॥ सौरभक्तेसदाक्षांतिरहिंसासर्वदाशमः ॥२४॥ संतोषःसत्यमस्तेयंब्रह्मचर्यंतथाष्टमम्॥
यथासंभवपूजाभिःकर्मणामनसागिरा ॥२५॥ सौरभक्तिःसदाकार्याभोजकेषुविशेषतः ॥ स्वदेहान्निर्विशेषंहिभोजकान्पालयेद्बुधः ॥ २६ ॥
भयदारिद्र्यरोगेभ्यस्तेषांकुर्यात्प्रियाणिवै ॥ सूर्यस्यपरिपूर्णस्याकिंनामाक्रियतेनरैः ॥ २७ ॥ यत्कृतंभोजकानांवैतत्कृतंस्याद्रवेर्नृप ॥
सुदूरमपिगंतव्यंमगानांयत्रवैगणः ॥ २८ ॥ सचप्रयत्नाद्द्रष्टव्यस्तत्रसन्निहितोरविः ॥ भोजकस्यतुभक्तस्यसूर्यपूजारतस्यच ॥ २९ ॥
आज्ञांकृत्वायथान्यायमश्वमेधफलंलभेत् ॥ देवाश्रमगतोभक्त्यादेवार्चांपूजयेन्नृप ॥३० ॥ स्वागतासनपाद्यार्घ्यमधुपर्काद्यनुक्रमात् ॥ भो
जयित्वायथान्यायंसूर्यलोकेमहीयते ॥ ३१ ॥ प्रतिश्रयप्रदानेनराजाभवतिभारत ॥ दत्वास्थानंतथाशौचंवरुणलोकमाप्नुयात् ॥ ३२ ॥
श्वेतबिंदुपरीतांगंध्यानश्रमविकर्शितम् ॥ संवीज्यतालवृंतेनवायुलोकेमहीयते ॥ ३३ ॥ क्षुत्पिपासातुरंश्रांतंमलिनंरोगिणंतथा ॥ पालयि
त्वायथाशक्त्यासर्वान्कामानवाप्नुते ॥ ३४ ॥ पतिताशस्तसंकीर्णचंडालादीनांपक्षिणाम् ॥ कारुण्यात्सर्वभूतानांदेयमन्नंस्वशक्तितः॥ ३५॥
अत्यल्पमपिकारुण्याद्दत्तंभवतिचाक्षयम् ॥ तस्मात्सर्वेषुभूतेषुदेवकारुण्यमुच्यते ॥ ३६ ॥ अभावेतृणभूम्यन्नंपत्रंधनफलानिच ॥ दत्वा
ऽऽगतायप्रणतःस्वर्गंयातिप्रियेणवा ॥ ३७ ॥ नहीदृक्स्वर्गयानाययथालोकेप्रियंवचः ॥ इहामुत्रसुखंतेषांवाग्येषांमधुराभवेत् ॥३८॥ अमृत
स्यंदिनीवाचाचंदनस्पर्शशीतला ॥ धर्माविरोधिनीमुक्त्वासुखमक्षय्यमाप्नुते ॥ ३९ ॥ अलंदानेनराजेंद्रपूजनाध्यापनेनवा ॥ इदंस्वर्गस्य
सोपानमचलंयत्प्रियंवचः ॥ ४० ॥ पूजाभिभाषणंदृष्टिःप्रत्येकंस्वर्गहेतवः ॥ संपृच्छेदागतंभक्त्याकुशलंप्रश्नमादरात् ॥ ४१ ॥ गमनेत
स्यवक्तव्यंपंथानःसंतुतेशिवाः ॥ सुखंभवतुतेनित्यंसर्वकार्यकरंभृशम् ॥ ४२ ॥ आशीर्वादमिदंवाक्यंसर्वकालेषुसर्वदा ॥ नमस्कारा
दिवाक्येषुस्वस्तिमंगलवादने ॥ ४३ ॥ शिवंभवतुतेनित्यंतंब्रूयात्सर्वकर्मसु ॥ एवमादिचवाचारमनुष्ठायसदाश्रमी ॥ ४४ ॥ अशेषपाप

निर्मुक्तः सूर्यलोकेमहीयते ॥ सूर्यभक्तेतुयाभक्तिःसद्भक्तैःक्रियतेनरैः ॥४५॥ सूर्येभक्तिसमानित्यंभक्तेभक्तिरनुष्ठिता ॥ आक्रुष्टेताडितेवापि
योनाक्रोशंनताडयेत् ॥ ४६ ॥ वाक्यादधिकृतःस्वस्थःसदुःखात्परिमुच्यते ॥ सर्वेषामेवतीर्थानांक्षांतिःपरमपूजिता ॥ ४७ ॥ तस्मा
त्पूर्वंप्रयत्नेनक्षांतिःकार्याक्रियासुवै ॥ ज्ञानयोगतपोयस्ययज्ञदानानिसत्क्रिया ॥४८॥ क्रोधनस्यवृथायस्मात्तस्मात्क्रोधंविवर्जयेत् ॥ मर्मा
स्थिप्राणहृदयंनिर्दहेदप्रियंवचः ॥ ४९ ॥ नवचोह्यप्रियंतस्माद्भोजकेषुविशेषतः ॥ क्षमादानंत्विषःसत्यंक्षमाहिंसार्कसंभवाः ॥ ५० ॥
नशक्याविस्तराद्वक्तुमपिवर्षशतैरपि ॥ ५१ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेभोजकभोजनानुष्ठानवर्णनं
नामैकसप्तत्युत्तरशततमोऽध्यायः ॥ १७१ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ पुनःशृणुमहाराजधर्ममादित्यसंमतम् ॥ सौरप्रियंसदासौरं
पवित्रंपापनाशनम् ॥ १ ॥ क्वचिद्गच्छन्यदापश्येत्सूर्यार्चासंप्रपूजनम् ॥ यत्रपूजाततोगच्छन्त्ससूर्योनात्रसंशयः ॥ २ ॥ स्नान
नैवेद्यवस्त्रैश्चनानालंकारभूषणैः ॥ यथाविभवमाश्रित्यनमस्कारादिसंस्तवैः ॥ ३ ॥ दृष्ट्वायतनमाक्रम्यनमस्कृत्यरविंव्रजेत् ॥ क्वचित्पथ
नदीशैलंगच्छमानंचभोजकम् ॥ ४ ॥ उपश्रुत्वाविनिर्गत्वाभोजकंपूजयेद्बुधः ॥ रथाश्वगजयानेभ्योह्यवतीर्यमगान्नृप ॥ ५ ॥ मगानांभोजनंभ
क्त्याशक्त्यादानंप्रकल्पयेत् ॥ दशपूर्वान्दशपरानात्मनासहभारत ॥ ६ ॥ समादायव्रजेत्स्थानंरवेरमिततेजसः ॥ देवपर्वोत्सवेश्राद्धेपुण्येषु
दिवसेषुच ॥ ७ ॥ भानुंसंपूज्यविधिवद्भोजकान्भोजयेत्ततः ॥ पितरःसर्वदेवानांसूर्यमाश्रित्यसंस्थिताः ॥ ८ ॥ प्रीतेसूर्येतुतेसर्वेप्रीताःस्युर्ना
त्रसंशयः ॥ यदाचश्रद्धयायुक्तंप्रसक्तंरविपूजनम् ॥ ९ ॥ भोजयेद्भोजकंभक्त्याश्राद्धेषुविधिवन्नृप ॥ भोजकस्यमहाराजादिवसेनापियत्फ
लम् ॥१०॥ नतच्छक्यमिदंतेनप्राप्तुंवर्षशतैरपि ॥ यःपश्यतिप्रसन्नात्मायोनेद्राष्टिनकांक्षति ॥ ११ ॥ शब्दादीनांतुसंभोगंसविज्ञेयोजितें
द्रियः ॥ ज्ञानविज्ञानसंपन्नःसूर्यभक्त्यासमन्वितः ॥ १२ ॥ पाषंडयोगयुक्तस्यसवैभोजकउच्यते ॥ सूर्यधर्माद्भवेज्ज्ञानंज्ञानाद्वैराग्यसं
भवः ॥ १३ ॥ ज्ञानवैराग्ययुक्तस्यसूर्ययोगःप्रवर्तते ॥ सूर्ययोगाच्चसर्वज्ञःपरिपूर्णःसुनिर्वृतः ॥ १४ ॥ आत्मन्यवस्थितःशुद्धःसूर्यवद्दिवि
मोदते ॥ सर्वेषामेवभूतानामुत्तमःपुरुषःस्मृतः ॥ १५ ॥ पुरुषेभ्योद्विजश्रेष्ठोद्विजेभ्योग्रंथपारगः ॥ ग्रंथिभ्योवेदविद्वांसस्तेभ्यस्तत्त्वार्थ

चिंतकाः ॥ १६ ॥ अर्थविद्धयश्चज्ञानार्थप्रतिबुद्धोविशिष्यते ॥ ज्ञानार्थकोटिकोटिभ्योवरिष्ठायोगिनोमताः ॥ १७ ॥ योगिनांकोटिकोटि
भ्योभोजकश्चोत्तमोभवेत् ॥ योगज्ञायोगनिष्ठाश्चापितरोयोगसंभवाः ॥ १८ ॥ भोजितेभोजकेसर्वेप्रीताःस्युस्तेनसंशयः ॥ सर्वज्ञानतपो
दानैःकृतैर्दत्तैश्चयत्फलम् ॥ १९ ॥ तत्फलंलभतेसर्वंविधिवद्भोज्यभोजकम् ॥ यश्चद्रव्यकलापात्मादक्षिणाहविऋत्विजः ॥ २० ॥ ऋग्य
जुःसामयोगैश्चदेवयज्ञःप्रकीर्तितः ॥ ब्रह्मचर्यंतपोमौनंक्षांतिराहारलाघवम् ॥ २१ ॥ इत्येतेतपसांरूपंसुघोरंपंचलक्षणम् ॥ यच्चदिष्टंविशि
ष्टंचन्यायप्राप्तंयद्भवेत् ॥ २२ ॥ तत्तद्गुणवतेदेयमित्येतद्दानलक्षणम् ॥ विवर्धनंसहस्राणांसर्वसस्यप्ररोहिणीम् ॥ २३ ॥ दद्याद्भूमिंजलोपे
तांभूमिदानंतदुच्यते ॥ एकच्छत्रांमहींकृत्वाद्विजेभ्यःप्रतिपादयेत् ॥ २४ ॥ संपूर्णांपर्वतारण्यैर्भूमिदानंतदुच्यते ॥ कन्यामलंकृतांदद्या
द्धनायनराधिपः ॥ २५ ॥ द्विजायवेदविदुषेकन्यादानंतदुच्यते ॥ सर्वदोषविनिर्मुक्तांकुलयोग्यामलंकृताम् ॥ २६ ॥ मध्यमोत्तमवस्त्राणां
योदद्यादहतानिच ॥ एतत्समासतोज्ञेयंवस्त्रदानस्यलक्षणम् ॥ २७ ॥ ब्रह्मविष्णुसमाधिक्यकांतिशीलपरायणः ॥ अहोरात्रं
नभुंजीयादुपवासस्यलक्षणम् ॥ २८ ॥ चत्वारिंशत्समायुक्तंपिंडानांहिशतद्वयम् ॥ मासेद्याद्यथाकाममिदंचांद्रायणंस्मृतम् ॥ २९ ॥
ऋषिभिःसर्वशास्त्रज्ञैस्तपोनिष्ठैर्जितेंद्रियैः ॥ देवैश्चसेवितंतोयंक्षितौतत्तीर्थमुच्यते ॥ ३० ॥ सूर्यावांतरस्थनानिपुण्यक्षेत्राणिनिर्दिशेत् ॥
मृतानांतेषुसूर्यत्वंसौरक्षेत्रेषुदेहिनाम् ॥ ३१ ॥ दानान्यावसथंकुर्याद्उद्यानंदेवतागृहम् ॥ तीर्थेष्वेतानियःकुर्यात्सोऽक्षयंलभतेफलम् ॥ ३२ ॥
क्षान्त्यस्पृहातथासत्यंदानंशीलंतपःश्रुतम् ॥ एतदष्टांगमुद्दिष्टंपरंपात्रस्यलक्षणम् ॥ ३३ ॥ यज्ञोपवासदानानितपस्तीर्थफलानिच ॥ संपूर्णं
लभतेभक्त्याभोजयित्वातुभोजकान् ॥ ३४ ॥ सूरेभक्तिःक्षमासत्यंदशेंद्रियविनिग्रहः ॥ सुखितेषुचमैत्रीचसूर्यधर्मस्यलक्षणम् ॥ ३५ ॥
सूर्यभक्तिंद्विजंभक्त्यायःश्राद्धेषुचभोजयेत् ॥ कुलसप्तकमुद्धृत्यसूर्यलोकेमहीयते ॥ ३६ ॥ बहुनात्रकिमुक्तेनसूर्यभक्तंतुभोजयेत् ॥ सूर्य
भक्तेनयद्भुक्तंभानुनामाश्रयंनृप ॥ ३७ ॥ नवेदविदुषांकोट्यालभ्यतेचेहतत्फलम् ॥ तत्फलंलभतेराजन्भोजंभोज्यविधानतः
॥ ३८ ॥ तस्माच्छ्राद्धेविशेषेणपुण्येषुदिवसेषुच ॥ सूर्यमुद्दिश्यविप्रेंद्रंभोजंसंभोजयेन्नृप ॥ ३९ ॥ असंयतःसंयतोवासर्वावस्थांगतो

ऽपिवा ॥ यश्चासौरविभक्तःस्यात्सूर्यवत्पूज्यएवहि ॥ ४० ॥ संसर्गाद्वापिवालोभाद्भोजकंयस्तुभोजयेत् ॥ सोऽपियांगतिमाप्नोतिनतांयज्ञश
तैरपि ॥ ४१ ॥ तस्मान्मान्यश्चपूज्यश्चरक्षणीयश्चसर्वदा ॥ भोजकःकुरुशार्दूलसौरेणगतिमिच्छता ॥ ४२ ॥ नाममात्रप्रयत्नोऽपियदि
स्याद्भोजकोरवेः ॥ सूर्यवत्सहिद्रष्टव्यःपूजनीयश्चभारत ॥ ४३ ॥ गृहेश्राद्धस्ययत्पुण्यमरण्येतच्छताधिकम् ॥ सौराश्रमेषुविज्ञेयंतत्पु
ण्यमयुताधिकम् ॥ ४४ ॥ दत्वातुभोजकेसौम्यंह्यासनंसपरिच्छदम् ॥ धातुदंतमयंचापिराजाभवतिभूतले ॥ ४५ ॥ विमलेवाससी
दत्वाभोजकायमहीपते ॥ उद्धृत्यशतसाहस्रंसूर्यलोकेमहीयते ॥ ४६ ॥ दत्वातुलोमशांराजन्भोजकायशुभांबृहत् ॥ रोम्णिरोम्णिसुवर्ण
स्यदत्तस्यफलमाप्नुयात् ॥ ४७ ॥ शंखंददातियोभक्त्यातथादिव्येचपादुके ॥ सूर्यलोकमवाप्नोतितेजसारविसन्निभः ॥ ४८ ॥ लिखाप
यतियोभक्त्यापुराणेनतुपुस्तकम् ॥ युगकोटिशतंदिव्यंसूर्यलोकेमहीयते ॥ ४९ ॥ भवेदिहागतःश्रीमान्सुखाढ्योवेदपारगः ॥ यःकरोति
गृहंभानोस्तत्स्थानंचोत्तमंभवेत् ॥ ५० ॥ तत्सूर्योभोजकःसोत्रभोजकःसूर्यएवहि ॥ तेनभोजकविप्रेषुदानमक्षय्यमित्यपि ॥ ५१ ॥
यद्यद्यस्योपयुज्येतदेयंतत्तस्ययत्नतः ॥ उपयोगपरोनित्यंसूर्यस्तदुभयोरपि ॥ ५२ ॥ व्याख्यानेसौरधर्मस्यकृत्वाआमलकंमहत् ॥
शोभितंपुष्पपत्राद्यैर्न्यसेत्तत्रासनेसुराः ॥ ५३ ॥ शोभितंमाल्यगंधैस्तुसूर्यस्यसाधनंमहत् ॥ पुरस्तात्तस्यसंस्थाप्यआचार्यंपूजयेत्सदा ॥
॥ ५४ ॥ सूर्यवत्सौरधर्मेचतुल्यमेतद्द्वयंवचः ॥ यएवंन्यायतोवक्तिसौरधर्मंशृणोतिच ॥ ५५ ॥ आयुर्विद्यांयशःकीर्तिमलब्ध्वातंरविंज
पेत् ॥ वदंत्यन्येपिबंत्यन्येसर्वेतेफलभागिनः ॥ ५६ ॥ तस्मादेवंविधोधर्मोवाचकैश्चविदुर्बुधाः ॥ तस्यान्तेपूजयेद्भक्त्यायइच्छेद्विपुलंयशः ॥
॥ ५७ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मोद्विसप्तत्युत्तरशततमोऽध्यायः ॥ १७२ ॥ छ ॥ शतानीकउवाच ॥ ॥
पुनर्मेब्रूहिविप्रेंद्रसौरंधर्ममनुत्तमम् ॥ समासात्कथितंब्रह्मन्विस्तरेणप्रकीर्तितम् ॥ १ ॥ साधुसाधुमहाबाहोसाधुपृष्टोऽस्मिभारत ॥ त्वत्स
मोनास्तिलोकेऽस्मिन्सौरःपार्थिवसत्तम ॥ २ ॥ कीर्तयाम्यद्यतंपुण्यंसंवादंपापनाशनम् ॥ गरुडारुणयोराजन्पुरावृत्तंनराधिप ॥ ३ ॥
सुखासीनंपुराराजन्नरुणंसूर्यसारथिम् ॥ उपगम्यमहाबाहोगरुडोवाक्यमब्रवीत् ॥ ४ ॥ धर्माणामुत्तमंधर्मंसर्वपापप्रणाशनम् ॥ सौरधर्मं

खगश्रेष्ठब्रूहिमेकृत्स्नशोनघ ॥ ५ ॥ ॥ अरुणउवाच ॥ ॥ साधुवत्समहात्मासिधन्यस्त्वंपापवर्जितः ॥ श्रोतुकामोऽसियत्पुत्रसौर
धर्ममनुत्तमम् ॥ ६ ॥ शृणुत्वंकीर्तयाम्येषसुखोपायंमहत्फलम् ॥ परमंसर्वधर्माणांसौरधर्ममनुत्तमम् ॥ ७ ॥ अज्ञानार्णवमग्नानांसर्वेषां
प्राणिनामयम् ॥ सौरधर्मोह्ययंश्रीमान्परतीरप्रदोयतः ॥ ८ ॥ येस्मरंतिरविंभक्त्याकीर्तयंतिचयेखग ॥ पूजयंतिचयोनित्यंतेगताःपरमंपदम्
॥ ९ ॥ आत्मद्रोहःकृतस्तेनजातेनेहखगाधिप ॥ नार्चितोयेनदेवेशःसहस्रकिरणोरविः ॥ १० ॥ सुचिरंसंभ्रमत्यस्मिन्दुःखदेचभवार्णवे ॥
जराभूतमहाग्राहेतृष्णावेलाकुलापरे ॥ ११ ॥ मानुष्यंदुर्लभंप्राप्ययेऽर्चयंतिदिवाकरम् ॥ तेषांहिसफलंजन्मकृतार्थास्तेनरोत्तमाः ॥ १२ ॥
सूर्यभक्तिपरायेचयेचतद्गतमानसाः ॥ येस्मरंतिसदासूर्यंनतेदुःखस्यभागिनः ॥ १३ ॥ विविधानिमनोज्ञानिविविधाभरणाःस्त्रियः ॥
धनंवाहष्टपर्यंतंसूर्यपूजाविधेःफलम् ॥ १४ ॥ येवांछंतिमहाभोगान्राज्यंवात्रिदशालय ॥ सौभाग्यंकांतिमतुलांभोगंत्यागंयशः
श्रियम् ॥ १५ ॥ सौंदर्यंजगतःख्यातिंकीर्तिंधर्मादयःस्मृताः ॥ फलान्येतानिवैपुत्रसूर्यभक्तिविधेर्बुधः ॥ १६ ॥ तस्मात्संपूजयेत्सूर्यंसर्व
देवगणार्चितम् ॥ दुर्लभाभास्करेभक्तिदुर्लभंचतदर्चनम् ॥ १७ ॥ दानंचदुर्लभंतस्मैतद्धोमश्चसुदुर्लभः ॥ दुर्लभंतस्यविज्ञानंतदभ्यासो
ऽपिदुर्लभः ॥ १८ ॥ सुदुर्लभतरंज्ञेयंतदाराधनमुत्तमम् ॥ लोभस्तेषांमनुष्याणांयेरविंशरणंगताः ॥ १९ ॥ येषामिहेश्वरेभानौनित्यंसूर्ये
गतंमनः ॥ नमस्कारादिसंयुक्तंरविरित्यक्षरद्वयम् ॥ २० ॥ जिह्वाग्रेवर्ततेयस्यसफलंतस्यजीवितम् ॥ यएवंपूजयेद्भानुंश्रद्धयापरयान्वितः
॥ २१ ॥ मुच्यतेसर्वपापेभ्यःसनरोनात्रसंशयः ॥ डाकिन्योविविधाकाराराक्षसाःसपिशाचकाः ॥ २२ ॥ नतस्यपीडांकुर्वंतितथान्याश्च
विभीषणाः ॥ शत्रवोनाशमायांतिसंग्रामेजयमाप्नुते ॥ २३ ॥ नरोगैःपीड्यतेवीरआपदोनस्पृशंतितम् ॥ धनमायुर्यशोविद्यांप्रभावमतुलं
तथा ॥ २४ ॥ शुभेनोपचयंयांतिनित्यंपूर्णमनोरथाः ॥२५॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेगरुडारुणसंवादेसौरधर्मवर्णनं
नामात्रिसप्तत्युत्तरशततमोऽध्यायः ॥ १७३ ॥छ॥ अरुणउवाच ॥ ॥ पूजयित्वारविंभक्त्याब्रह्माब्रह्मत्वमागतः ॥ विष्णुत्वंचापिदेवेशोविष्णु
रापतदर्चनात् ॥ १ ॥ शंकरोऽपिजगन्नाथःपूजयित्वादिवाकरम् ॥ महादेवत्वमगमत्तत्प्रसादात्खगाधिप ॥ २ ॥ सहस्राक्षोऽपिदेवेशइन्द्रो

भानुंतमोपहम् ॥ इंद्रत्वमगमद्देवंपूजयित्वादिवाकरम् ॥ ३ ॥ मातरोदेवगंधर्वाःपिशाचोरगराक्षसाः ॥ पूजयंतिसदाभानुमीशानंसुरनाय
कम् ॥ ४ ॥ सर्वमेतज्जगन्नित्यंभानौदेवेप्रतिष्ठितम् ॥ तस्मात्संपूजयेद्भानुंयइच्छेत्स्वर्गमक्षयम् ॥५॥ योनपूजयतेसूर्यंभास्करंतमसूदनम् ॥
धर्मार्थकाममोक्षाणांननरोभाजनंभवेत् ॥ ६ ॥ तस्मात्कार्यंहितद्ध्यानंयावज्जीवंप्रतिज्ञया ॥ अर्चयेतसदाभानुमापन्नोऽपिसदाखग ॥ ७ ॥
यस्तुसंतिष्ठतेनित्यंविनासूर्यस्यपूजनात् ॥ वरंप्राणपरित्यागःशिरसोवाथछेदनम् ॥८॥ सूर्यंसंपूज्यभुंजीयात्रिदशेशंदिवाकरम् ॥ इत्थंनिर्वह
तेयस्ययावज्जीवंतदर्चनम् ॥ ९ ॥ मनुष्यचर्मणानद्धःसरविर्नात्रसंशयः ॥ नहिअर्कार्चनादन्यत्पुण्यमप्यधिकंभवेत् ॥ १० ॥ इतिविज्ञा
ययत्नेनपूजयस्वदिवाकरम् ॥ सूर्यभक्तागमाश्चैवसूर्यार्चनपरायणाः ॥ ११ ॥ संयताधर्मसंपन्नाधर्मादीन्साधयन्तिते ॥ सर्वद्वंद्वसहावीरानी
तिविध्युक्तचेतसः ॥ १२ ॥ परोपकारनिरतागुरुशुश्रूषणेरताः ॥ अमानिनोबुद्धिमंतोव्यक्तस्पर्धागतस्पृहाः ॥ १३ ॥ शांताःस्वांतगता
भद्रानित्यंस्वागतवादिनः ॥ स्वल्पवाचःसुमनसःशूराःशास्त्रविशारदाः ॥ १४ ॥ शौचाचारसुसंपन्नादयादाक्षिण्यगोचराः ॥ दंभमत्सर
निर्मुक्तास्तृष्णालोभविवर्जिताः ॥ १५ ॥ संविभागपराःप्रोक्तानशठाश्चाप्यकुत्सिताः ॥ विषयेष्वपिनिर्लेपाःपद्मपत्रमिवांभसा ॥ १६॥ नदी
नामानिनश्चैवनचरोगवशानुगाः ॥ भवंतिभावितात्मानःसुस्निग्धाःसाधुसेविताः ॥ १७ ॥ नपाणिपादवाक्चक्षुःश्रोत्रशिश्नोदरेरताः ॥
चपलानिनकुर्वंतिसर्वव्यासंगवर्जिताः ॥ १८ ॥ सूर्यासनरताःशांताःषडक्षरमनोगताः ॥ इत्याचारसमायुक्ताभवंतिभुविमानवाः ॥ १९ ॥
एकांतभक्तिमास्थायधर्मकामार्थसिद्धये ॥ पूजनीयोरविर्नित्यंगुणेष्वेतेषुवर्तते ॥ २० ॥ सर्वेषामेवपात्राणामतिपात्रंदिवाकरः ॥
पतन्तंत्रायतेयस्मादतीवनरकार्णवात् ॥ २१ ॥ तस्यपात्रातिपात्रस्यमाहात्म्यंदानमण्वपि ॥ अनेनफलमादिष्टमिहलोकेपरत्रच ॥ २२ ॥
द्रव्येणापिहियःकुर्यान्नरःकर्मतदालये ॥ सोऽपिदेहक्षयाज्जातंप्राप्यशांतिमवाप्नुते ॥ २३ ॥ सर्वद्विजकदंबेषुकश्चिज्ज्ञानमवाप्नुयात् ॥
कश्चिदेतत्तुमेदिव्यंलब्ध्वाज्ञानंविमुंचति ॥ २४ ॥ तावद्भ्रमंतिसंसारेदुःखशोकपरिप्लुताः ॥ नभवंतिरवेर्भक्तायावत्सर्वेपिदेहिनः ॥
॥ २५ ॥ सूर्यस्यालेपनंपुण्यंद्विगुणंचंदनस्यतु ॥ चंदनादगुरोर्ज्ञेयंपुण्यमष्टगुणोत्तरम् ॥ २६ ॥ कृष्णागुरौविशेषेणद्विगुणंफलमिष्यते ॥

तस्माच्छतगुणंपुण्यंकुंकुमस्यविधीयते ॥ २७ ॥ सूर्ययज्ञोपकरणंकृत्वाल्पंयदिवाबहु ॥ भावाद्वित्तानुसारेणसूर्यलोकेमहीयते ॥ २८ ॥
यदपीष्टमनिष्टंचन्यायेनोभयमागतम् ॥ तत्सूर्यायनिवेद्यंसद्भक्त्यनंतफलार्थिना ॥२९॥ कर्मशाठ्येनयःकुर्याद्दुःखेनापितदर्चनम् ॥ सोऽपिद्वि
जोदिवंयातिकर्मणापापवर्जितः ॥ ३० ॥ सर्वमन्यत्परित्यज्यसूर्येचैकमनाःसदा ॥ सूर्यपूजाविधिंकुर्याद्यइच्छेच्छ्रेयआत्मनः ॥३१॥ त्वरितं
जीवितंयातित्वरितंयौवनंतथा ॥ त्वरितंव्याधिरप्येतितस्मान्नित्यंरविंव्रजेत् ॥ ३२ ॥ यावन्नाभ्येतिमरणंयावन्नाक्रमतेजरा ॥ यावन्ने
न्द्रियवैकल्यंतावदर्चेद्दिवाकरम् ॥ ३३ ॥ नसूर्यार्चनतुल्योपिनधर्मोन्योजगद्द्विज ॥ इत्थंविज्ञायदेवेशंपूजयस्वदिवाकरम् ॥ ३४ ॥
येभक्त्यादेवदेवेशंसूर्यंशांतमजंप्रभुम् ॥ इहलोकेसुखंप्राप्यतेगताःपरमंपदम् ॥ ३५ ॥ गोपतिंपूजयित्वातुप्रहृष्टेनांतरात्मना ॥ कृतांजलि
पुटोभूत्वापुराब्रह्माब्रवीदिदम् ॥ ३६ ॥ ॥ ब्रह्मोवाच ॥ ॥ भगवन्तंभगकरंशांतचित्तमनुत्तमम् ॥ देवमार्गप्रणेतारंप्रणतोऽस्मिरविंस
दा ॥ ३७ ॥ शाश्वतंशोभनंशुद्धंचित्रभानुंदिवस्पतिम् ॥ देवदेवेशमीशेशंप्रणतोऽस्मिदिवाकरम् ॥ ३८ ॥ सर्वदुःखहरंदेवंसर्वदुःखहरंरवि
म् ॥ वराननंवरांगंचवरस्थानंवरप्रदम् ॥ ३९ ॥ वरेण्यंवरदंनित्यंप्रणतोऽस्मिविभावसुम् ॥ अर्कमर्यमणंचेंद्रंविष्णुमीशंदिवाकरम् ॥४०॥
देवेश्वरंदेवरतंप्रणतोऽस्मिविभावसुम् ॥ यइदंशृणुयान्नित्यंब्रह्मणोक्तंस्तवंपरम् ॥ ४१ ॥ सहिकीर्तिंपरांप्राप्यपुनःसूर्यपुरंव्रजेत् ॥ ४२ ॥
इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमेकल्पेगरुडारुणसंवादेसूर्यस्तुतिनामचतुःसप्तत्युत्तरशततमोऽध्यायः ॥ १७४ ॥छ॥गरुडउवाच॥
सर्वरोगहतायेतुआधिव्याधिसमन्विताः ॥ ग्रहोपघातैर्विविधैरर्दितायेचमानवाः ॥ १ ॥ अरिभिःपीडितायेचविनायकहताश्चये ॥ कर्तव्यंकिं
भवेत्तेषामात्मनःश्रेयसेऽनघ ॥ २ ॥ ॥ अरुणउवाच ॥ ॥ नानारोगहतानांतुअर्दितानांतथारिभिः॥आदित्याराधनंमुक्त्वानान्यच्छ्रेय
स्करंपरम् ॥ ३ ॥ तस्मादाराधयेन्नित्यंसर्वरोगविनाशनम् ॥ ग्रहोपघातहंतारंराजोपद्रवनाशनम् ॥ ४ ॥ ॥ गरुडउवाच ॥ ॥ सर्वपत्र
विहीनंमेसर्वरोगविवर्जितम् ॥ शापेनब्रह्मवादिन्याःपश्यांगंद्विजसत्तम ॥ ५ ॥ एवंमत्तस्यमेतातकिंकार्यमवशिष्यते ॥ येनाहंकर्मणाकल्पोभ
वेयंपत्रवान्पुनः ॥ ६ ॥ तन्मेब्रूहिखगश्रेष्ठप्रसन्नस्यखगाधिप ॥ यत्कृत्वाकल्पतांप्राप्यपूजयामिदिवाकरम् ॥ ७॥ ॥अरुणउवाच॥ ॥

पूजयस्वजगन्नाथंभास्करंतिमिरापहम् ॥ सूर्याग्निकार्यंसततंशुद्धचित्तःसमाचर ॥८॥ महाशांतिकरंख्यातंसर्वोपद्रवनाशनम् ॥ ग्रहोपघातहं
तारंशुभकार्यंकरंपरम् ॥ ९ ॥ गरुडउवाच ॥ नाहंशक्तोस्मिवैकर्तुंपूजांदिनकरस्यच ॥ नचाग्निकार्यंशक्तोमिकर्तुंविकलतांगतः ॥ १० ॥
तस्मान्मेकुरुशांत्यर्थमग्निकार्यंखगाधिप ॥ महाशांतिरितिख्यातंशांतयेममसुव्रत ॥ ११ ॥ अरुणउवाच ॥ ॥ एवमेवयदात्थत्वंवैनतेय
खगाधिप ॥ अकल्पस्त्वंनशक्नोषिमहाव्याधिप्रपीडितः॥१२॥अहंकरोमितेपुत्रशांतयेपावकार्चनम् ॥यत्कृतंममचार्केणपुराशांतिदमादरा
त् ॥ १३ ॥ सर्वपापहरंपुण्यंमहाविघ्नविनाशनम् ॥ महोदयंशांतिकरंलक्षहोमाविधिस्मृतम् ॥ १४ ॥ अपमृत्युहरंवीरसर्वव्याधिहरंपरम् ॥
परचक्रप्रमथनंसदाविजयवर्धनम् ॥ १५ ॥ तृप्तिदंसर्वदेवानांभास्करप्रियमुत्तमम् ॥ आग्नेय्यांदिशिलिप्याथस्थंडिलंगोमयेनतु ॥ १६ ॥
देवालयस्यविधिवत्कुर्यादग्निप्रबोधनम् ॥ महाव्याहृतिभिर्वीरलक्षहोमंसमाचरेत् ॥ १७ ॥ भूर्भुवःस्वरितिस्वाहाप्रणवेनसमन्वितम् ॥
आरक्तदेहरूपायरक्ताक्षायमहात्मने ॥१८॥ धराधरायशांतायसहस्राक्षिशिरसायच ॥ १९ ॥ अधोमुखायश्वेतायस्वाहापूर्वाहुतिंसृजेत् ॥
चतुर्मुखायशांतायपद्मासनगतायच ॥ २० ॥ पद्मवर्णायवेधायकमंडलुधरायच ॥ द्वितीयोर्ध्वमुखायेहस्वाहाकाराहुतिंसृजेत् ॥ २१ ॥
हेमवर्णायदेहायऐरावतगतायच ॥ सहस्राक्षशरीरायपूर्वादिश्यङ्मुखायच ॥२२॥ देवाधिपायचेंद्रायविहस्तायशुभायच ॥ स्वाहाकारंचोत्सृ
जेद्देवतृतीयवदनायच ॥ २३ ॥ दीप्तायव्यक्तदेहायज्वालामालाकुलायच ॥ इंद्रनीलाभदेहायसर्वारोग्यकरायच ॥ २४ ॥ यमायधर्मरा
जायदक्षिणार्धमुखायच ॥ कृष्णांबरधरायेहस्वाहाहुतिमनुसृजेत् ॥ २५ ॥ नीलजीमूतवर्णायरक्तांबरधरायच ॥ मुक्ताफलशरीरायपिंगा
क्षायमहात्मने ॥ २६ ॥ शुक्लवस्त्रायपीतायदिव्यपाशधरायच ॥ स्वाहाकारायचतथापश्चिमाभिमुखायच ॥ २७ ॥ कृष्णपिंगलनेत्रा
यवायव्याभिमुखायच ॥नीलध्वजायवीरायतथाचेंद्रायवेधसे ॥ २८ ॥ स्वाहेतिपवनायेहआहुतिंचोत्सृजेद्बुधः ॥ गदाहस्तायसूर्यायाचित्रस्र
ग्भूषणायच ॥ २९ ॥ महोदरायशांतायस्वाहाधिपतयेतथा ॥ उत्तराभिमुखायेहमहादेवप्रियायच ॥ ३० ॥ श्वेतायश्वेतवर्णायाचित्राक्षाय
महात्मने ॥ शांतायशांतरूपायापिनाकवरधारिणे ॥ ३१ ॥ ईशान्याभिमुखायेहदद्यादीशायचाहुतिम् ॥ विसृजेत्खगशार्दूल

विधिवच्छ्रेयसेनघ ॥ ३२ ॥ एवंदेवंमहात्मानंपावकंविधिवत्खग ॥ एवंकृत्वातुकार्यंतुसौरंखगवरोत्तम ॥ ३३ ॥ लक्षहो
मंचविधिवत्ततःशांतिकमारभेत् ॥ भूर्भुवःस्वरितिस्वाहालक्षहोमविधिःस्मृतः ॥ ३४ ॥ महाहोमेचवैसौरएषएवविधिःपरः ॥
कृत्वैवमग्निकार्यंतुभोजकोभास्करायवै ॥ ३५ ॥ शांत्यर्थंसर्वलोकानांततःशांतिकमारभेत् ॥ सिंदूरासनरक्ताभःपद्मरक्ताभलो
चनः ॥ ३६ ॥ सहस्रकिरणोदेवःसप्ताश्वरथवाहनः ॥ गभस्तिमालीभगवान्सर्वदेवनमस्कृतः ॥ ३७ ॥ करोतुतेमहाशांतिंग्रहपीडानिवारि
णीम् ॥ त्रिचक्ररथमारूढअपांसारमयंतुयः ॥ ३८ ॥ दशाश्ववाहनोदेवआत्रेयश्चामृतस्रवः ॥ शीतांशुरमृतात्माचक्षयवृद्धिसमन्वितः ॥३९॥
सोमःसौम्येनभावेनग्रहपीडांव्यपोहतु ॥ पद्मरागनिभोभौमोमधुपिंगललोचनः ॥ ४० ॥ अंगारकोऽग्निसदृशोग्रहपीडांव्यपोहतु ॥ पुष्पराग
निभेनेहदेहेनपरिपिंगलः ॥ ४१ ॥ पीतमाल्यांबरधरोबुधःपीडांव्यपोहतु ॥ तप्तगैरिकसंकाशःसर्वशास्त्रविशारदः ॥ ४२ ॥ सर्वदेवगुरु
र्विप्रअथर्वणवरोमुनिः ॥ बृहस्पतिरितिख्यातअर्थशास्त्रपरश्चयः ॥ ४३ ॥ शांतेनचेतसासोपिपरेणसुसमाहितः ॥ ग्रहपीडांविनिर्जित्यक
रोतुतवशांतिकम् ॥ ४४ ॥ सूर्यार्चनपरोनित्यंप्रसादाद्भास्करस्यतु ॥ हिमकुंदेंदुवर्णाभोदैत्यदानवपूजितः ॥ ४५ ॥ महेश्वरस्ततोधीमा
न्महासौरोमहामतिः ॥ सूर्यार्चनपरोनित्यंशुक्रःशुक्लनिभस्तदा ॥ ४६ ॥ नीतिशास्त्रपरोनित्यंग्रहपीडांव्यपोहतु ॥ नानारूपधरोव्यक्तअ
विज्ञातगतिश्चयः ॥ ४७ ॥ नोत्पत्तिर्जायतेयस्यनोदयंपीडितैरपि ॥ एकचूलोद्विचूलश्चत्रिशिखःपंचचूलकः ॥ ४८ ॥ सहस्रशिररूपस्तुचंद्र
केतुरिवस्थितः ॥ सूर्यपुत्रोग्निपुत्रस्तुब्रह्मविष्णुशिवात्मकः ॥४९॥ अनेकशिखरःकेतुःसतेपीडांव्यपोहतु ॥ एतेग्रहामहात्मानःसूर्यार्चनपराः
सदा ॥५०॥ शांतिंकुर्वंतुतेहृष्टाःसदाकालंहितेक्षणाः ॥५१॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषुसूर्याग्निकर्मणिपंचसप्त
त्युत्तरशततमोऽध्यायः ॥१७५॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ पद्मासनःपद्मवर्णःपद्मपत्रनिभेक्षणः ॥ कमंडलुधरःश्रीमान्देवगंधर्वपूजितः ॥१॥
चतुर्मुखोदेवपतिःसूर्यार्चनपरःसदा ॥ सुरज्येष्ठोमहातेजाःसर्वलोकप्रजापतिः ॥ २ ॥ ब्रह्मशब्देनदिव्येनब्रह्माशांतिंकरोतुते ॥ पीतांबरधरोदे
वआत्रेयीदयितःसदा ॥ ३ ॥ शंखचक्रगदापाणिःश्यामवर्णश्चतुर्भुजः ॥ यज्ञदेहःक्रमोदेवआत्रेयीदयितःसदा ॥ ४ ॥ शंखचक्रगदापाणिर्मा

धवोमधुसूदनः ॥ सूर्यभक्तान्वितोनित्यंविगतिर्विगतत्रयः ॥ ५ ॥ सूर्यध्यानपरोनित्यंविष्णुःशांतिंकरोतुते ॥ शशिकुंदेंदुसंकाशोविश्रुता
भरणैरिह ॥ ६ ॥ चतुर्भुजोमहातेजाःपुष्पार्धकृतशेखरः ॥ चतुर्मुखोभस्मधरःश्मशाननिलयःसदा ॥ ७ ॥ गोत्रारिर्विश्वनिलयस्तथाचक्रतु
दूषणः ॥ वरोवरेण्योवरदोदेवदेवोमहेश्वरः ॥८॥ आदित्यदेहसंभूतःसतेशांतिंकरोतुवै ॥९॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पे
सौरधर्मेषुषट्सप्तत्युत्तरशततमोऽध्यायः ॥१७६॥छ॥अरुणउवाच ॥ पद्मरागप्रभादेवीचतुर्वदनपंकजा ॥ अक्षमालार्पितकराकमंडलुधराशु
भा ॥१॥ ब्रह्माणीसौम्यवदनाआदित्याराधनेरता॥शांतिंकरोतुसुप्रीताआशीर्वादपराखग ॥२॥ महाश्वेतेतिविख्याताआदित्यदयितासदा ॥
हिमकुंदेंदुसदृशामहावृषभवाहिनी ॥ ३ ॥ त्रिशूलहस्तावरणाविश्रुताभरणासती ॥ चतुर्भुजाचतुर्वक्त्रात्रिनेत्रापापनाशिनी ॥ ४ ॥ वृषध्व
जार्चनरतारुद्राणीशांतिदाभवेत् ॥ मयूरवाहनादेवीसिंदूरारुणविग्रहा ॥५॥ शक्तिहस्तामहाकायासर्वालंकारभूषिता ॥ सूर्यभक्तामहावीर्या
सूर्यार्चनरतासदा ॥ ६ ॥ कौमारीवरदादेवीशांतिमाशुकरोतुते ॥ गदाचक्रधराश्यामापीतांबरधराखग ॥७॥ चतुर्भुजाहिसादेवीवैष्णवी
सुरपूजिता ॥ सूर्यार्चनपरानित्यंसूर्यैकगतमानसा ॥ ८ ॥ शांतिंकरोतुतेनित्यंसर्वासुरविमर्दिनी ॥ ऐरावतगजारूढावज्रहस्तामहा
बला ॥ ९ ॥ सर्वत्रलोचनादेवीवर्णतःकर्बुरारुणा ॥ सिद्धगंधर्वनमितासर्वालंकारभूषिता ॥ १० ॥ इंद्राणीतेसदादेवीशांतिमाशुकरोतुवै ॥
वराहघोराविकटावराहवरवाहिनी ॥ ११ ॥ श्यामावदातायादेवीशंखचक्रगदाधरा ॥ तेजयंतीतुनिमिषान्पूजयंतीसदारविम् ॥१२॥ वाराही
वरदादेवीतवशांतिंकरोतुवै ॥ अर्धकोशाकटीक्षामानिर्मांसास्नायुबंधनात् ॥ १३ ॥ करालवदनाघोराखड्गघंटोद्गतासती ॥ कपालमालिनी
क्रूराखट्वांगवरधारिणी ॥ १४ ॥ आरक्तपिंगनयनागजचर्मावगुंठिता ॥ गोश्रुताभरणादेवीप्रेतस्थाननिवासिनी ॥ १५ ॥ शिवारूपेणघोरे
णशिवरूपभयंकरी ॥ चामुंडाचंडरूपेणसदाशांतिंकरोतुते ॥ १६ ॥ चंडमुंडकरादेवीमुंडदेहगतासती ॥ कपालमालिनीक्रूराखट्वांगवरधा
रिणी ॥ १७ ॥ आकाशमातरोदेव्यस्तथान्यालोकमातरः ॥ भूतानांमातरःसर्वास्तथान्याःपितृमातरः ॥ १८ ॥ वृद्धिश्राद्धेषु
पूज्यंतेयास्तुदेव्योमनीषिभिः ॥ मात्रेप्रमात्रेतन्मात्रेइतिमातृमुखास्तथा ॥ १९ ॥ पितामहीतुतन्मातावृद्धायाचापितामही ॥ इत्येतास्तुपि

तामद्यः शांतिंतेपितृमातरः ॥ २० ॥ सर्वामातृमहादेव्यःस्वायुधाव्यग्रपाणयः ॥ जगद्व्याप्यप्रतिष्ठंत्योबलिकामामहोदयाः ॥ २१ ॥ शांतिं
कुर्वंतुतेनित्यमादित्याराधनेरताः ॥ शांतेनचेतसाशांत्यःशांतयेतवशांतिदाः ॥ २२ ॥ सर्वावयवमुख्येनगात्रेणचसुमध्यमा ॥ पीतश्यामा
तिसौम्येनास्निग्धवर्णेनशोभना ॥ २३ ॥ ललाटतिलकोपेताचंद्ररेखार्धधारिणी ॥ चित्रांबरधरादेवीसर्वाभरणभूषिता ॥ २४ ॥ वरास्त्रीमयरू
पाणांशोभागुणमहास्पदा ॥ भावनामात्रसंतुष्टाउमादेवीवरप्रदा ॥ २५ ॥ साक्षादागत्यरूपेणशांतेनामिततेजसा ॥ शांतिंकरोतुतेप्रीताआदित्या
राधनेरता ॥ २६ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषुदशमुखेअग्निकार्यविधौसप्तसप्तत्युत्तरशततमोध्यायः ॥ १७७ ॥
॥ अरुणउवाच ॥ ॥ अबलोबालरूपेणखड्गांगशिखिवाहनः ॥ पूर्वेणवदनःश्रीमांस्त्रिशिखःशक्तिसंयुतः ॥ १ ॥ कृत्तिकायाश्चरुद्रस्य
चांगोद्भूतः सुरार्चितः ॥ कार्तिकेयोमहातेजाआदित्यवरदर्पितः ॥ २ ॥ शांतिंकरोतुतेनित्यंबलंसौख्यंचतेजसा ॥ आत्रेयीबलवान्देवआरोग्यं
चखगाधिप ॥ ३ ॥ श्वेतवस्त्रपरीधानरूयक्षःकनकसुप्रभः ॥ शूलहस्तोमहाप्राज्ञोनंदीशोरविभावितः ॥ ४ ॥ शांतिंकरोतुतेशान्तोधर्मेचमतिः
मुत्तमाम् ॥ धर्मेतरावुभौनित्यमचलःसंप्रयच्छतु ॥ ५ ॥ महोदरोमहाकायःस्निग्धांजनसमप्रभः ॥ एकदंष्ट्रोत्कटोदेवोगजवक्त्रोमहाबल
॥ ६ ॥ नागयज्ञोपवीतेननानाभरणभूषितः ॥ सर्वार्थसंपदोद्धारोगणाध्यक्षोवरप्रदः ॥ ७ ॥ भीमस्यतनयोदेवोनायकोथविनायकः ॥ करोतुते
महाशांतिंभास्कराचर्नतत्परः ॥ ८ ॥ इंद्रनीलनिभरूयक्षोदीप्तशूलायुधोद्यतः ॥ रक्तांबरधरः श्रीमान्कृष्णांगोनामभूषणः ॥ ९ ॥ पापापनो
दमतुलमलक्ष्योमलनाशनः ॥ करोतुतेमहाशांतिंप्रीतःप्रीतेनचेतसा ॥ १० ॥ वरांबरधराकन्यानानालंकारभूषिता ॥ त्रिदशानांचजननीपुण्या
लोकनमस्कृता ॥ ११ ॥ सर्वसिद्धिकरादेवीप्रसादपरमास्पदा ॥ शांतिंकरोतुतेमाताभुवनस्यखगाधिप ॥ १२ ॥ स्निग्धश्यामेन
वर्णेनमहामहिषमर्दनी ॥ धनुश्चक्रप्रहरणाखड्गपट्टिशधारिणी ॥ १३ ॥ आतर्जन्यायतकरासर्वोपद्रवनाशिनी ॥ शांतिंकरोतुतेदुर्गाभवानी
चाशिवातथा ॥ १४ ॥ अतिसूक्ष्मोह्यतिक्रोधरूयक्षोभृंगिरिटिर्महान् ॥ सूर्यात्मकोमहावीरःसूर्यैकगतमानसः ॥ १५ ॥ सूर्यभक्तिकरो
नित्यंशिवंतेसंप्रयच्छतु ॥ प्रचंडगणसैन्येशोमहाघंटाक्षधारकः ॥ १६ ॥ अक्षमालार्पितकरश्चाक्षचंडेश्वरोवरः ॥ चंडपापहरोनित्यंब्रह्महत्या

विनाशनः ॥ १७ ॥ शांतिंकरोतुतेनित्यमादित्याराधनेरत ॥ करोतिचमहायोगीकल्याणानांपरंपराम् ॥ १८ ॥ आकाशमातरोदिव्यास्त
थान्यादेवमातरः ॥ सूर्यायनपरादेव्योजगद्व्याप्यव्यवस्थिताः ॥ १९ ॥ शांतिंकुर्वंतुमेनित्यंमातरःसुरपूजिताः ॥ येरौद्रारौद्रकर्माणोरौद्र
स्थाननिवासिनः ॥ २० ॥ मातरोरुद्ररूपाश्चगणानामधिपाश्चये ॥ विघ्नभूतास्तथाचान्येदिक्षुदिक्षुसमाश्रिताः ॥ २१ ॥ सर्वेतेप्रीतमनसः
प्रतिगृण्हंतुमेबलिम् ॥ सिद्धिंकुर्वंतुतेनित्यंभयेभ्यःपांतुसर्वतः ॥ २२ ॥ ऐंद्रादयोगणायेतुवज्रहस्तामहाबलाः ॥ हिमकुंदेंदुसदृशानीलकृ
ष्णांगलोहिताः ॥ २३ ॥ दिव्यांतरिक्षाभौमाश्चपातालतलवासिनः ॥ ऐंद्राःशांतिंप्रकुर्वंतुभद्राणिचपुनःपुनः ॥ २४ ॥ आग्नेय्यांयेभूताःसर्वे
ध्रुवहत्यानुषंगिणः ॥ सूर्यानुरक्तारक्ताभाजपासुमनिभास्तथा ॥ २५ ॥ वैरक्तलोहितादिव्याआग्नेय्यांभास्करादयः ॥ आदित्याराधनपरा
आदित्यगतमानसाः ॥२६॥ शांतिंकुर्वंतुतेनित्यंप्रयच्छंतुबलिंमम ॥ भयाऽऽदित्यसमायेतुसततंदंडपाणयः ॥ २७ ॥ आदित्याराधनपराः
कंप्रयच्छंतुतेसदा ॥ ईशान्यांसंस्थितायेतुप्रशांताःशूलपाणयः ॥ २८ ॥ भस्मोद्धूलितदेहाश्चनीलकंठाविमोहिताः ॥ दिव्यांतरिक्षाभौ
माश्चपातालतलवासिनः ॥ २९ ॥ सूर्यपूजाकरानित्यंपूजयित्वातुमालिनम् ॥ ततःसुप्रीतमनसोलोकपालैःसमन्विताः ॥ ३० ॥ शांतिं
कुर्वंतुमेनित्यंकंप्रयच्छंतुपूजिताः ॥ अमरावतीपुरीनामपूर्वभागेव्यवस्थिता ॥ ३१ ॥ विद्याधरगणाकीर्णासिद्धगंधर्वसेविता ॥ रत्नप्राकार
रुचिरामहारत्नोपशोभिता ॥ ३२ ॥ तत्रदेवपतिःश्रीमान्वज्रपाणिर्महाबलः ॥ गोपतिर्गोसहस्रेणशोभमानेनशोभते ॥ ३३ ॥ ऐराव
तगजारूढोगैरिकाभोमहाद्युतिः ॥ देवेंद्रःसततंहृष्टआदित्याराधनेरतः ॥ ३४ ॥ सूर्यज्ञानैकपरमःसूर्यभक्तिसमन्वितः ॥ सूर्यप्रणामःपरमां
शांतिंतेशीघ्रमृच्छतु ॥ ३५ ॥ आग्नेयदिग्विभागेतुपुरीतेजस्वतीशुभा ॥ नानादेवगणाकीर्णानानारत्नोपशोभिता ॥ ३६ ॥ तत्रज्वा
लासमाकीर्णोदीप्तांगारसमद्युतिः ॥ पुरगोदहनोदेवोज्वलनः पापनाशनः ॥ ३७ ॥ आदित्याराधनरतआदित्यगतमानसः ॥
शांतिंकरोतुतेदेवस्तथापापपरिक्षयम् ॥ ३८ ॥ वैवस्वतीपुरीरम्यादक्षिणेनमहात्मनः ॥ सुरासुरशताकीर्णानानारत्नोपशोभिता ॥
॥ ३९ ॥ तत्रकुंदेंदुसंकाशोहारिपिंगललोचनः ॥ महामहिषमारूढःकृष्णस्रग्वस्त्रभूषणः ॥ ४० ॥ अंतकोऽथमहातेजाःसूर्यधर्म

परायणः ॥ आदित्याराधनपरःक्षेमारोग्यंददातुते ॥ ४१ ॥ नैर्ऋतेतुदिशाभागेपुरीकृष्णेतिविश्रुता ॥ मोहरक्षोगणाशौचापिशाचप्रेतसंकु
ला ॥ ४२ ॥ तत्रकुंदनिभोदेवोरक्तस्रग्वस्त्रभूषणः ॥ खड्गपाणिर्महातेजाःकरालवदनोज्ज्वलः ॥ ४३ ॥ रक्षेंद्रोवसतोनित्यमादित्याराधनेरतः॥
करोतुमेसदाशांतिंधनंधान्यंप्रयच्छतु ॥ ४४ ॥ पश्चिमेतुदिशाभागेपुरीशुद्धवतीसदा ॥ नानाभोगसमाकीर्णानानाकिन्नरसेविता ॥४५॥
तत्रकुंदेंदुसंकाशोहरिपिंगललोचनः ॥ शांतिंकरोतुमेप्रीतःशांतःशांतिनचेतसा ॥४६॥ यशोवतीपुरीरम्याऐशानींदिशमाश्रिता ॥ नानागण
समाकीर्णानानाकृतशुभालया ॥ ४७ ॥ तेजःप्राकारपर्यंताअनौपम्यसदोज्ज्वला ॥तत्रकुंदेंदुसंकाशश्चांबुजाक्षोविभूषितः ॥ ४८ ॥ त्रिनेत्रः
शांतरूपात्माअक्षमालाधराधरः ॥ ईशानःपरमोदेवःसदातेशांतिमृच्छतु ॥ ४९ ॥ भूलोकेतुभुवर्लोकेनिवसंतिचयेसदा ॥ देवादेवशुभायु
क्ताःशांतिंकुर्वंतुतेसदा ॥ ५० ॥ महर्लोकेजनोलोकेपरलोकेगताश्चये ॥ तेसर्वेमुदितादेवाःशांतिंकुर्वंतुतेसदा ॥ ५१ ॥ सरस्वतीसूर्यभक्ता
शांतिदाविदधातुमे ॥ चारुचामीकरस्थायासरोजकरपल्लवा ॥ ५२ ॥ सूर्यभक्त्याश्रितादेवीविभूतिंतेप्रयच्छतु ॥ हरेणसुविचित्रेणभास्वत्क
नकमेखला ॥ ५३ ॥ अपराजितासूर्यभक्ताकरोतुविजयंतव ॥ ५४ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मवर्णनंनामाष्ट
सप्तत्युत्तरशततमोऽध्यायः ॥ १७८ ॥ ॥ छ ॥ ॥ अरुणउवाच ॥ ॥ कृत्तिकापरमादेवीरोहिणीचवरानना ॥ श्रीमन्मृगशिरोभद्रा
आर्द्राचाप्यपराज्वला ॥१॥ पुनर्वसुस्तथापुष्यआश्लेषाचतथाधिप ॥ सूर्यार्चनरतानित्यंसूर्यभावानुभाविताः ॥ २ ॥ अर्चयंतिसदादेवमा
दित्यंसुरतेसदा ॥ नक्षत्रमातरोह्येताःप्रभामालाविभूषिताः ॥ ३ ॥ मघासर्वगुणोपेतापूर्वाचैवतुफाल्गुनी ॥ स्वातीविशाखावरदादक्षिणां
दिशमाश्रिताः ॥ ४ ॥ अर्चयंतिसदादेवमादित्यंसुरपूजितम् ॥ तवापिशांतिकंद्योतंकुर्वंतुगगनोदिताः ॥ ५ ॥ अनुराधातथाज्येष्ठामूलं
सूर्यपुरःसरा ॥ पूर्वाषाढामहावीर्याआषाढाचोत्तरातथा ॥ ६ ॥ अभिजिन्नामनक्षत्रंश्रवणंचबहुश्रुतम् ॥ एताःपश्चिमतोदीप्ताराजंतेचानुमू ॥१७८॥
र्तयः ॥ ७ ॥ भास्करंपूजयंत्येताःसर्वकालंसुभाविताः ॥ शांतिंकुर्वंतुतेनित्यंविभूतिंचमहार्द्धिकाम् ॥८ ॥ धनिष्ठाशतभीषातुपूर्वाभाद्रपदा
स्तथा ॥ ९ ॥ उत्तराभाद्ररेवत्यश्चाश्विनीचमहामते ॥ भरणीचमहादेवीनित्यमुत्तरतःस्थिताः ॥ १० ॥ सूर्यार्चनरतानित्यमादित्यगतमा

नसाः ॥ शांतिंकुर्वंतुतेनित्यंविभूतिंचमहर्द्धिकाम् ॥ ११ ॥ मेषोमृगाधिपःसिंहोधनुर्दीप्तिमतांवराः ॥ पूर्वेणभासयंत्येतेसूर्ययोगपराःशुभाः
॥ १२ ॥ शांतिंकुर्वंतुतेनित्यंभक्त्यासूर्यपदांबुजे ॥ वृषःकन्याचपरमामकरश्चापिबुद्धिमान् ॥ १३ ॥ एतेदक्षिणभागेतुपूजयंतिरविंसदा ॥
भक्त्यापरमयानित्यंशांतिंकुर्वंतुतेसदा ॥ १४ ॥ मिथुनंतुलकुंभश्चपश्चिमेचव्यवस्थिताः ॥ जपंत्येतेसदाकालमादित्यंग्रहनायकम् ॥ १५ ॥
शांतिंकुर्वंतुतेनित्यंखषोल्काज्ञानतत्पराः ॥ सतपोदत्तपुष्पाभ्यांयेस्मृताःसततंबुधैः ॥ १६ ॥ ऋषयःसप्तविख्याताध्रुवांताःपरमोज्ज्वलाः ॥
भानुप्रसादात्संपन्नाःशांतिंकुर्वंतुतेसदा ॥ १७ ॥ कश्यपोगालवोगार्ग्योविश्वामित्रोमहामुनिः ॥ मुनिर्दक्षोवसिष्ठश्चमार्कंडःपुलहःक्रतुः
॥ १८ ॥ नारदोभृगुरात्रेयोभारद्वाजश्चवैमुनिः ॥ वाल्मीकःकौशिकोवात्स्यःशाकल्योऽथपुनर्वसुः ॥ १९ ॥ शालंकायनइत्येतेऋष
योऽथमहातपाः ॥ सूर्यध्यानैकपरमाःशांतिंकुर्वंतुतेसदा ॥ २० ॥ ऋषिकन्यामहाभागाऋषिकन्याःकुमारिकाः ॥ सूर्यार्चनरतानित्यंशांतिं
कुर्वंतुतेसदा ॥ २१ ॥ सिद्धाःसमृद्धतपसोयेचान्येवैमहातपाः ॥ विद्याधरामहात्मानोगरुडश्चत्वयासह ॥ २२ ॥ आदित्यपरमाह्येतेआदि
त्याराधनेरताः ॥ सिद्धिंतेसंप्रयच्छंतुआशीर्वादपरायणाः ॥ २३ ॥ नमुचिर्दैत्यराजेंद्रःशंकुकर्णोमहाबलः ॥ महानाथोऽथविख्यातो
दैत्यःपरमवीर्यवान् ॥ २४ ॥ ग्रहाधिपस्यदेवस्यानित्यंपूजापरायणाः ॥ बलंवीर्यंचतेऋद्धिमारोग्यंविवदंतुते ॥ २५ ॥ महाढ्यो
योहयग्रीवःप्रह्लादःप्रभयान्वितः ॥ तानैकाग्निमुखोदैत्यःकालनेमिर्महाबलः ॥ २६ ॥ एतेदैत्यामहात्मानःसूर्यभावेनभाविताः ॥
तुष्टिंबलंतथाऽऽरोग्यंप्रयच्छंतुसुरादयः ॥ २७ ॥ वैरोचनोहिरण्याक्षस्तुर्वसुश्चसुलोचनः ॥ मुचकुंदोमुकुंदश्चदैत्योरैवतकस्तथा ॥ २८ ॥
भावेनपरमेणेमंयजंतेसततंरविम् ॥ सततंचशुभात्मानःपुष्टिंकुर्वंतुतेसदा ॥ २९ ॥ दैत्यपत्न्योमहाभागादैत्यानांकन्यकाः
शुभाः ॥ कुमारायेचदैत्यानांशांतिंकुर्वंतुतेसदा ॥ ३० ॥ आरक्तेनशरीरेणरक्तांतायतलोचनाः ॥ महाभागाःकृताटोप
शंखाद्याःकृतलक्षणाः ॥ ३१ ॥ अनंतोनागराजेंद्रआदित्याराधनेरतः ॥ महापापविषंहत्वाशांतिमाशुकरोतुते ॥ ३२ ॥ अतिपीतेन
देहेनविस्फुरद्भोगसंपदा ॥ तेजसाचातिदीप्तेनकृतस्वस्तिकलांछनः ॥ ३३ ॥ नागराट्तक्षकःश्रीमान्नामकोट्यासमन्वितः ॥ करो

तुतेमहाशांतिंसर्वदोषविषापहाम् ॥ ३४ ॥ अतिकृष्णेनवर्णेनस्फुटाधिकटमस्तकः ॥ कंठरेखात्रयोपेतोघोरदंष्ट्रायुधोद्यतः ॥ ३५ ॥ कर्कोटकोमहानागोविषदर्पबलान्वितः ॥ विषशस्त्राग्निसंतापंहत्वाशांतिंकरोतुते ॥ ३६ ॥ पद्मवर्णःपद्मकान्तिःफुल्लपद्मायतेक्षणः ॥ ख्यातःपद्मोमहानागोनित्यंभास्करपूजकः ॥ ३७ ॥ सतेशांतिंशुभंशीघ्रमचलंसंप्रयच्छतु ॥ श्यामेनदेहभारेणश्रीमत्कमललोचनः ॥ ३८ ॥ विषदर्पबलोन्मत्तोग्रीवायांरेखयान्वितः ॥ शंखपालश्रियादीप्तःसूर्यपादाब्जपूजकः ॥ ३९ ॥ महाविषंगरश्रेष्ठंहत्वाशांतिंकरोतुते ॥ अतिगौरेणदेहेनचंद्रार्धकृतशेखरः ॥ ४० ॥ दीपभागेकृताटोपशुभलक्षणलक्षितः ॥ कुलिकोनामनागेंद्रोनित्यंसूर्यपरायणः ॥ ४१ ॥ अपहृत्यविषंघोरंकरोतुतवशांतिकम् ॥ अंतरिक्षेचयेनागायेनागाःस्वर्गसंस्थिताः ॥ ४२ ॥ गिरिकंदरदुर्गेषुयेनागाभुविसंस्थिताः ॥ पातालेयेस्थितानागाःसर्वेयत्रसमाहिताः ॥ ४३ ॥ सूर्यपादार्चनासक्ताःशांतिंकुर्वंतुतेसदा ॥ नागिन्योनागकन्याश्चतथानागकुमारकाः ॥ ४४ ॥ सूर्यभक्ताःसुमनसःशांतिंकुर्वंतुतेसदा ॥ यइदंनामसंस्थानंकीर्तयेच्छृणुयात्तथा ॥ ४५ ॥ नतस्यसर्पाहिंसंतिनविषंक्रमतेसदा ॥ ४६ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मवर्णनंनामैकोनाशीत्युत्तरशततमोऽध्यायः ॥१७९॥

गंगापुण्यामहादेवीयमुनानर्मदानदी ॥ गौतमीचापिकावेरीवरणादिविकास्तथा ॥ सर्वग्रहपतिंदेवंलोकेशंलोकनायकम् ॥ १ ॥ पूजयंतिसदानद्यःसूर्यसद्भावभाविताः ॥ शांतिंकुर्वंतुतेनित्यंसूर्यध्यानैकमानसः ॥ २ ॥ निरंजनानामनदीशोणश्चापिमहानदः ॥ मंदाकिनीचपरमातथासान्निहिताशुभा ॥ ३ ॥ एताश्चान्याश्चबहवोभुविदिव्यंतरिक्षके ॥ सूर्यार्चनरतानद्यःकुर्वंतुतवशांतिकम् ॥ ४ ॥ महावैश्रवणोदेवोयक्षराजामहर्षिकः ॥ यक्षकोटीपरीवारोयक्षःसंख्येयसंयुतः ॥ ५ ॥ महाविभवसंपन्नःसूर्यपादार्चनेरतः ॥ सूर्यध्यानैकपरमःसूर्यभावेनभावितः ॥ ६ ॥ शांतिंकरोतुतेप्रीतःपद्मपत्रायतेक्षणः ॥ मणिपत्रोमहायक्षोमणिरत्नविभूषितः ॥ ७ ॥ मनोहरेणहारेणकंठलग्नेनराजते ॥ यक्षिणीयक्षकन्याभिःपरिवारितविग्रहः ॥ ८ ॥ सूर्यार्चनसमासक्तःकरोतुतवशांतिकम् ॥ सुचिरोनामयक्षेंद्रोमणिकुंडलभूषितः ॥ ९ ॥ ललाटेहेमपटलप्रबद्धेनविराजते ॥ बहुपक्षसमाकीर्णोयक्षैर्नामितविग्रहः ॥ १० ॥ सूर्यपूजापरोयुक्तःकरोतुतवशांतिकम् ॥

पांचिकोनामयक्षेंद्रःकंठाभरणभूषितः ॥ ११ ॥ कुक्कुटेनविचित्रेणबहुरत्नान्वितेनतु ॥ यक्षवृंदसमाकीर्णोयक्षकोटिसमन्वितः ॥ १२ ॥
सूर्यार्चनकरःश्रीमान्करोतुतवशांतिकम् ॥ धृतराष्ट्रोमहातेजानानायक्षाधिपःखग ॥ १३ ॥ दिव्यपट्टःशुक्लच्छत्रोमणिकांचनभूषितः ॥
सूर्यभक्तःसूर्यरतःसूर्यपूजापरायणः ॥ १४ ॥ सूर्यप्रसादसंपन्नःकरोतुतवशांतिकम् ॥ विरूपाक्षश्चयक्षेंद्रःश्वेतवासामहाद्युतिः ॥ १५ ॥ ना
नाकांचनमालाभिरुपशोभितकंधरः ॥ सूर्यपूजापरोभक्तःकंजाक्षःकंजसन्निभः ॥ १६ ॥ तेजसादित्यसंकाशःकरोतुतवशांतिकम् ॥ अंत
रिक्षगतायक्षायेयक्षाःस्वर्गगामिनः ॥ १७ ॥ नानारूपधरायक्षाःसूर्यभक्तादृढव्रताः ॥ तद्भक्तास्तत्रमनसःसूर्यपूजासमुत्सुकाः ॥ १८ ॥
शांतिंकुर्वंतुतेहृष्टाःशांताःशांतिपरायणाः ॥ यक्षिण्योविविधाकारास्तथायक्षकुमारकाः ॥ १९ ॥ यक्षकन्यामहाभागाःसूर्याराधनतत्प
राः ॥ शांतिंस्वस्त्ययनंक्षेमंबलंकल्याणमुत्तमम् ॥ २० ॥ सिद्धिंचाशुप्रयच्छंतुनित्यंचसुसमाहिताः ॥ पर्वताःसर्वतःसर्वेवृक्षाश्चैवमहर्द्धि
काः ॥ २१ ॥ सूर्यभक्ताःसदासर्वेशांतिंकुर्वंतुतेसदा ॥ सागराःसर्वतःसर्वेगृहारण्यानिकृत्स्नशः ॥ २२ ॥ सूर्यस्याराधनपराःकुर्वंतुतवशां
तिकम् ॥ राक्षसाःसर्वतःसर्वेघोररूपामहाबलाः ॥ २३ ॥ स्थलजाराक्षसायेतुअंतरिक्षगताश्चये ॥ पातालेराक्षसायेतुनित्यंसूर्यार्चनेरताः ॥
॥ २४ ॥ शांतिंकुर्वंतुतेसर्वेतेजसानित्यदीपिताः ॥ प्रेताःप्रेतगणाःसर्वेयेप्रेताःसर्वतोमुखाः ॥ २५ ॥ अतिदीप्ताश्चयेप्रेतायेप्रेतारुधिराशनाः ॥
अंतरिक्षेचयेप्रेतास्तथायेस्वर्गवासिनः ॥ २६ ॥ पातालेभूतलेवापियेप्रेताःकामरूपिणः ॥ एकचक्रोरथोयस्ययस्तुदेवोवृषध्वजः ॥ २७ ॥
तेजसातस्यदेवस्यशांतिंकुर्वंतुतेसदा ॥ येपिशाचामहावीर्यावृद्धिमंतोमहाबलाः ॥ २८ ॥ नानारूपधराःसर्वेसर्वेचगुणवत्तराः ॥ अंतरिक्षे
पिशाचायेस्वर्गेयेचमहाबलाः ॥ २९ ॥ पातालेभूतलेयेचबहुरूपामनोजवाः ॥ यस्याहंसारथिर्वीरयस्यत्वंतुरगःसदा ॥ ३० ॥ तेजसातस्यदेव
स्यशांतिंकुर्वंतुतेजसा ॥ अपस्मारग्रहाःसर्वेसर्वेचापिज्वरग्रहाः ॥ ३१ ॥ येचस्वर्गस्थिताःसर्वेभूमिगायेग्रहोत्तमाः ॥ पातालेतुग्रहायेचयेग्रहाःसर्वतो
गताः ॥ ३२ ॥ दक्षिणेकिरणेयस्यसूर्यस्यचास्थितोहरिः ॥ हरोयस्यसदावामेललाटेकंजजःस्थितः ॥ ३३ ॥ तेजसातस्यदेवस्यशांतिंकुर्वंतुतेसदा ॥
इतिदेवादयःसर्वेसूर्ययज्ञविधायिनः ॥ ३४ ॥ कुर्वंतुजगतःशांतिंसूर्यभक्तेषुसर्वदा ॥ जयसूर्यायदेवायतमोहंत्रेविवस्वते ॥ ३५ ॥ जयप्रदाय

सूर्यायभास्करायनमोस्तुते॥ग्रहोत्तमायदेवायजयकल्याणकारिणे॥३६॥जयपद्मविकाशायबुधरूपायतेनमः ॥ जयदीप्तिविधानायजयशांति
विधायिने॥३७॥तमोघ्नायजयायैवअजितायनमोनमः॥जयार्कजयदीप्तिशसहस्रकिरणोज्ज्वल॥३८॥जयनिर्मितलोकस्त्वमजितायनमोनमः॥
गायत्रीदेहरूपायसावित्रीदयितायच ॥ ३९ ॥ धराधरायसूर्यायमार्तंडायनमोनमः ॥ ॥ सुमंतुरुवाच ॥ ॥एवंहिकुर्वतःशांतिमरुणस्यम
हीपते ॥४० ॥ श्रेयसेवैनतेयस्यगरुडस्यमहात्मनः ॥ एतस्मिन्नेवकालेतुसुपर्णःपत्रवानभूत् ॥४१॥ तेजसाबुधसंकाशोबलेनहरिणासमः ॥
संपूर्णावयवोराजन्यथापूर्वंतथाभवत् ॥ ४२ ॥ प्रसादाद्देवदेवस्यभास्करस्यमहात्मनः ॥ एवमन्येऽपिराजेंद्रमानवायेसरोगिणः ॥ ४३ ॥
अस्मिन्कृतेऽग्निकार्येतुविरुजास्तेभवंतिहि ॥ तस्माद्यत्नेनकर्तव्यमग्निकार्यंविधानतः ॥ ४४ ॥ करणीयंचराजेंद्रमानवैश्चसरोगिभिः ॥ अ
स्मिन्कृतेअग्निकार्येविरुजास्तेभवंतिहि ॥ ४५ ॥ ग्रहोपघातेदुर्भिक्षेउत्पातेषुचकृत्स्नशः ॥ अवर्षमाणेपर्जन्येलक्षहोमसमन्वितः ॥ ४६ ॥
पूजयित्वाप्रसूक्तंतुध्यात्वावीरंप्रयत्नतः ॥ वारुणैश्चतथासूक्तैर्होमंकुर्याद्विचक्षणः ॥ ४७ ॥ चेतसासुप्रसन्नेनसार्पिषामधुनासह ॥ तिलैर्यवैश्च
सहितैःपायसंमधुनातथा ॥ ४८ ॥ इदंचशांतिकंकुर्याद्बलिंदद्यात्प्रयत्नतः ॥ एवंकृतेश्रियंदेवावर्षतःकामनानृणाम् ॥ ४९ ॥ इत्येवं
शांतिकाध्यायंयःपठेच्छृणुयादपि॥विधिनासर्वलोकस्तुध्यायमानोदिवाकरम् ॥५०॥सविजित्यरणेशत्रुंमानंचपरमंलभेत्॥ अक्षयंमोदतेका
लमतिरस्कृत्यशासनात् ॥ ५१ ॥ व्याधिभिर्नाभिभूयेतपुत्रपौत्रैःप्रतिष्ठितः ॥ भवेदादित्यसदृशस्तेजसाप्रभयातथा ॥ ५२ ॥ यमुद्दिश्य
पठेद्वीरवाचकंमानवंभुवि ॥ नपीड्यतेचतैरोगैर्वातपित्तकफात्मजैः ॥ ५३ ॥ नाकालेमरणंतस्यनसर्पैश्चापिदश्यते ॥ नाविषंक्रमतेदेहेन
जडांध्यंनमूकता ॥ ५४ ॥ नचोत्पत्तिभयंतस्यनाभिचारकजंभवेत् ॥ येरोगायेमहोत्पातायेऽहयश्चमहाविषाः ॥ ५५ ॥ तेसर्वेप्रशमंयांति
श्रवणादस्यभारत ॥ यत्पुण्यंसर्वतीर्थानांगंगादीनांविशेषतः ॥ ५६ ॥ तत्पुण्यंकोटिगुणितंप्राप्नोतिश्रवणादिभिः ॥ दशानांराजसूयाना
मन्येषांचविशेषतः ॥ ५७ ॥ जीवेद्वर्षशतंसाग्रंवर्षंव्याधिविवर्जितः ॥ गोघ्नश्चैवकृतघ्नश्चब्रह्महागुरुतल्पगः ॥ ५८ ॥ शरणागतदीनार्तमि
त्रविश्रंभघातकः ॥ दुष्टःपापसमाचारःपितृहामातृहातथा ॥५९॥ श्रवणादस्य पापेभ्योमुच्यतेनात्रसंशयः ॥ इतिहासमिदंपुण्यमग्निकार्य

मनुत्तमम् ॥६०॥नदेयंकस्यचिद्वीरमूर्खस्येदमनुत्तमम् ॥ सूर्यभक्तेसदादेयंसूर्येणकथितंपुरा ॥६१॥ अरुणस्यमहाबाहोगरुडस्यारुणेनच॥
गरुडेनपुराप्रोक्तंभोजकानांमहात्मनाम्॥ ६२ ॥ सूर्यशर्मसुखादीनांशाकद्वीपेमहीपते ॥ तैश्चापिकथितंपुण्यंमुनेर्व्यासस्यधीमतः॥ ६३ ॥
तेनापिकथितंपुण्यंसर्वपापभयापहम् ॥ ६४ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेगरुडारुणसंवादेशांतिकवर्णनंनामा
शीत्युत्तरशततमोऽध्यायः ॥ १८० ॥ छ ॥ शतानीक उवाच ॥ पंचप्रकारंधर्ममेवदस्मातेयथाक्रमम् ॥ कौतुकंपृच्छतेब्रह्मन्समा
सव्यासयोगतः ॥ १ ॥ सुमंतुरुवाच ॥ पंचधावर्णितंधर्मंशृणुराजन्समासतः ॥ यथोक्तंभास्करेणेहअरुणस्यमहात्मनः ॥ २ ॥ सहस्र
किरणंभानुमुदयस्थंदिवाकरम् ॥ प्रणम्यशिरसादेवमुवाचगरुडाग्रजः ॥३॥ भगवन्देवदेवेशसहस्राकिरणोज्ज्वल ॥ स्मृतिधर्मान्यथातत्त्वंवक्तु
मर्हसिएवच ॥४॥ एवंपृष्टस्तुभगवानरुणेनखगाधिपः ॥ उवाचपरयाप्रीत्यापूजयित्वामहीपते ॥ ५ ॥ भास्करउवाच ॥ स्मृतिधर्मंवदेन्मूलं
शृणुत्वंगरुडाग्रज ॥ पूर्वानुभूतंयद्ध्यानमथतत्स्मरणंस्मृतिः ॥ ६ ॥ धर्मःक्रियात्मानिर्दिष्टःश्रेयोभ्युदयलक्षणः ॥ सएवचविधःप्रोक्तो
वेदमूलःसनातनः ॥ ७ ॥ अस्यशब्दस्यानुष्ठानात्स्वर्गोमोक्षश्चजायते ॥ इहलोकेसुखैश्वर्यमतुलंयच्चखगाधिप ॥ ८ ॥ अनूरुरुवाच ॥ क
थंपंचविधोह्येषप्रोक्तोधर्मःसनातनः ॥ कस्यभेदास्तुतेपंचब्रूहिमेदेवसत्तम ॥ ९ ॥ भास्करउवाच॥वेदधर्मःस्मृतस्त्वेकआश्रमाणांसतत्परः॥
वर्णाश्रमस्तृतीयस्तुगुणनैमित्तिकोयथा ॥ १० ॥ वर्णत्वमेकमाश्रित्यअधिकारेप्रवर्तते ॥ सवर्णाश्रमदंडस्तुभिक्षादंडादिकोयथा ॥ ११ ॥
वर्णाश्रमाश्रमत्वंचयोधिकृत्यप्रवर्तते ॥ सवर्णाश्रमधर्मस्तुदंडाद्यामेखलायथा ॥ १२ ॥ योगुणेनप्रवर्तेतसगुणोधर्मउच्यते ॥ यथामूर्धाभि
षिक्तस्यप्रजानांपालनंपरम् ॥ १३ ॥ निमित्तमेकमाश्रित्ययोधर्मःसप्रवर्तते ॥ नैमित्तिकःसविज्ञेयोजातिद्रव्यगुणाश्रयः ॥ १४ ॥
एषतुद्विविधःप्रोक्तःसमासादविशेषतः ॥ नैमित्तिकःसविज्ञेयःप्रायश्चित्तविधिर्यथा ॥ १५ ॥ सचतुर्धानिरूप्यस्तुस्वरूपफलसाधनैः ॥
प्रमाणतस्तुप्रत्येकंसमस्तैश्चयथाक्रमम् ॥ १६ ॥ श्रुत्यासहविरोधेतुबाध्यतेविषयंविना ॥ व्यवस्थयाविरोधेनकार्योयत्नःपरीक्ष्यते ॥१७॥
स्मृत्यासहविरोधेनचार्थशास्त्रस्यसाधनम् ॥ परस्परविरोधेतुअर्थशास्त्रस्यसाधनम् ॥ १८ ॥ अदृष्टार्थेविकल्पस्तुव्यवस्थासंभवेसति ॥

स्मृतिशास्त्रविकल्पस्तुआकांक्षापूरणेसति ॥१९॥ वेदमूलेस्थितंत्वेतदनुष्ठानंक्रियासती ॥ एवंशक्यविधानंतुन्यायोह्येवंव्यवस्थितः ॥२०॥
निषेधविधिरूपंतुद्विधाशास्त्रंखगाधिप ॥ एकरूपंवदंत्यन्येबहुरूपमथापरे ॥ २१ ॥ पंचप्रकाराःस्मृतयएवंशिष्यव्यवस्थिताः ॥ त्रिधाचतु
र्धाद्वेधावाएकधाबहुधाखग ॥ २२ ॥ दृष्टार्थातुस्मृतिःकाचिददृष्टार्थातथापरा ॥ अनुवादस्मृतिस्त्वन्यादृष्टादृष्टातुपंचमी ॥ २३ ॥
सर्वाएतावेदमूलाःस्मृतावैऋषिभिःस्वयम् ॥ अरुणउवाच ॥ याएताभवताप्रोक्ताःस्मृतयःपर्वगोपने ॥ २४ ॥ एतासांलक्षणंब्रूहिसमासादेव
सत्तम ॥ दृष्टार्थाकामतादेवअदृष्टार्थाचकाभवेत् ॥ २५ ॥ दृष्टादृष्टस्वरूपाकान्यायमूलाकथंभवेत् ॥ अनुवादस्मृतिःकास्यादृष्टादृष्टानु
काभवेत् ॥ २६ ॥ एवमुक्तोमहातेजाभास्करोवारितस्करः ॥ उवाचतंखगंवीरंप्रणतंविनयान्वितम् ॥ २७ ॥ ॥ आदित्यउवाच ॥ ॥
षड्गुणस्यस्वरूपंतुप्रयोगात्कार्यगौरवात् ॥ समयानामुपायानांयोगोव्याससमासतः ॥ २८ ॥ अध्यक्षाणांचनिक्षेपःकरणानांनिरूपणम् ॥
दृष्टार्थेयंस्मृतिःप्रोक्ताऋषिभिर्गरुडाग्रज ॥ २९ ॥ संध्योपास्तिस्तथाकार्याशुनोमांसंनभक्षयेत् ॥ अदृष्टार्थास्मृतिःप्रोक्तामनुनाविनतात्मज
॥ ३० ॥ पालाशंधारयेद्दंडमभयार्थाविदुर्बुधाः ॥ विरोधेतुविकल्पःस्याद्यागोहोमस्ततोयथा ॥ ३१ ॥ श्रुतौदृष्टंयथाकार्यंस्मृतौतत्तादृशंय
दि ॥ उक्तानुवादिनीसातुपारिव्राज्यंतथागृहात् ॥ ३२ ॥ उक्तोधर्मश्चसंक्षेपात्परिभाषाचतद्गता ॥ तत्साधनंचदेशादिइत्थमित्यब्रवीद्रविः
॥ ३३ ॥ ब्रह्मावर्तःपरोदेशऋषिशस्तस्त्वनंतरः ॥ मध्यदेशस्ततोऽप्यन्यआर्यावर्तस्त्वनंतरः ॥ ३४ ॥ कृष्णसारस्तुविचरेन्मृगोयत्रस्वभा
वतः ॥ याज्ञियःसतुदेशःस्यान्म्लेच्छदेशस्ततःपरः ॥ ३५ ॥ ब्रह्मादीनांचदेवानांब्राह्मणादेस्तथैवच ॥ भूतग्रामस्यकृत्स्नस्यत्रयंकृत्स्नस्यखेचर
॥ ३६ ॥ साधनत्वंमनुःप्राहवेदमूलंसनातनम् ॥ प्रकाशयज्ञसंसिद्ध्यैयदशब्दस्यएवतु ॥ ३७ ॥ उपलभ्ययथातत्त्वंसचदर्शितवानृषिः ॥
सम्यक्संसाधनंधर्मकर्तव्यमधिकारिणा ॥ ३८ ॥ निष्कामेनसदावीरकाम्यंरूपान्वितेनच॥आचारयुक्तःश्रद्धालुर्वेदज्ञोऽध्यात्मचिंतकः॥३९॥
कर्मणांफलमाप्नोतिन्यायार्जितधनस्यसः ॥ ॥ अरुणउवाच ॥ ॥ ब्रह्मावर्तादिदेशानांसमस्तानांविभावसो ॥ ४० ॥ विभागंब्रूहिदेवेंद्र
संमानयग्रहाधिप ॥ ॥ आदित्यउवाच ॥ ॥ सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम् ॥ ४१ ॥ तंदेवनिर्मितंदेशंब्रह्मावर्तंप्रचक्षते ॥ हिमव

द्विंध्यशैलस्ययदंतरमुदाहृतम् ॥ ४२ ॥ प्रत्यगेवप्रयागाच्चमध्यदेशःप्रकीर्तितः ॥ आसमुद्रात्तुवैपूर्वादासमुद्रात्तुपाश्चिमात् ॥ ४३ ॥ तयोरेवां
तरंगिर्योरार्यावर्तंविदुर्बुधाः ॥ एतान्विज्ञायसंदेशान्संश्रयेतप्रयत्नतः ॥ ४४ ॥ शूद्रस्तुतस्मिंस्तस्मिन्वानिवसेद्वृत्तिकर्शितः ॥ एषाधर्मस्यवै
ज्योतिःसमासात्कथितातव ॥ ४५ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषुअरुणादित्यसंवादेस्मृतिभेदवर्णनंनामैका
शीत्युत्तरशततमोऽध्यायः ॥ १८१ ॥छ॥ ॥ आदित्यउवाच ॥ ॥ उक्तंधर्मस्यरूपंतुसाधिकारंसनातनम् ॥ अतःपरंप्रवक्ष्यामिधर्ममाश्रमि
णांखग ॥ १ ॥ ब्रह्मचारीगृहस्थश्चवनस्थोभिक्षुरेवच ॥ चत्वारआश्रमाःप्रोक्ताएकएवचतुर्विधः ॥ २ ॥ गायत्रोब्रह्मचारीतुप्राजापत्यो
द्वितीयकः ॥ देवव्रतस्तृतीयस्तुनैष्ठिकस्तुचतुर्थकः ॥ ३ ॥ चत्वारआश्रमाःप्रोक्ताःसवेदाःसमधर्मकाः ॥ अतःपरंप्रवक्ष्यामिसंस्कारंधर्मसिद्ध
ये ॥४॥ गर्भाधानमृतौकार्यंदृष्टयोस्तुसमंत्रकम् ॥ कार्यमित्रवनंमातृतृतीयेमासिसंयुतैः ॥ ५ ॥ सीमंतंसप्तमेगर्भेषष्ठेवासप्तमेऽपिवा ॥ पात्र
संस्कारकाइष्टागर्भाधानादयस्त्रयः ॥ ६ ॥ जातकर्मादयःसर्वेसंस्काराःपुरुषस्यतु ॥ जातस्यप्राशनंयत्रस्वर्णादीनांसमंत्रकम् ॥ ७ ॥जातक
र्मेतितत्प्रोक्तंगुह्यंनामतदेवतु ॥ प्राकाशंनामकर्तव्यंदिनेत्वेकादशेर्थवत् ॥ ८ ॥ धर्मशास्त्रादिसंयुक्तंषष्ठेऽन्नप्राशनंखग ॥ प्रथमेब्देतृतीये
वाचूडाकर्मविधीयते ॥ ९ ॥ अष्टमेदशमेवापिब्राह्मणस्योपनायनम् ॥ पुरुषस्यतथाचान्यजातीयानांविशेषतः ॥ १० ॥ एकादशेद्वादशे
वाकार्यंक्षत्रियवैश्ययोः ॥ वेदसंस्कारकंवच्मिमन्यंतेत्वौपनायनम् ॥ ११ ॥ पुरुषस्यतथाचान्येउभयोश्चब्रवीम्यहम् ॥ सावित्रंवैदिकं
चैवमहानाम्नीमहाव्रतम् ॥ १२ ॥ तथौपनिषदंचान्दंगोदानंचसुवर्णकम् ॥ व्रतानिग्रहणार्थानिवेदस्येतिमनोर्मतम् ॥ १३ ॥
वेदैकदेशपाठस्यउक्तंगृह्येप्रपंचकम् ॥ उक्तागुरोस्तुशुश्रूषादृष्टादृष्टार्थसाधनम् ॥ १४ ॥ उभयोर्वातथाचान्यायथान्यायंयथाश्रु
तम् ॥ गुरोरप्येवतंविद्यात्तद्ध्यानंत्रिविधंस्मृतम् ॥ १५ ॥ तोषःपरस्परस्येतिएतावान्धर्मसंग्रहः ॥ कृत्स्नोवेदोऽधिगंतव्यःस्वधर्म
मनुतिष्ठता ॥ १६ ॥ ज्ञात्वावेदंब्रह्मचारीग्रंथार्थान्यान्यथाविधि ॥ नैष्ठिकस्यविधानंतुयावज्जीवंविधीयते ॥ १७ ॥ विद्यांतेऽ
भीष्टदानंचअनुज्ञातोगृहीभवेत् ॥ निष्काशनंगुरुगृहाद्गृहस्थस्ययथाभवेत् ॥ १८ ॥ नैष्ठिकश्चसदास्थानंकुर्यात्सम्यग्यथाविधि ॥

उद्वहेद्वैततोभार्यांसवर्णांलक्षणान्विताम् ॥ १९ ॥ अविप्लुतब्रह्मचर्यश्चाधिकारीखगोत्तम ॥ स्वतंत्रमन्यमिच्छंतिअधिकारंद्विजोत्तमाः ॥ २० ॥
सप्तमींपंचमींचैवकन्यकांपितृमातृतः ॥ उद्वहेतद्विजोभार्यामसमानार्षगोत्रजाम् ॥ २१ ॥ संख्याविधिविवाहेषुगोत्रार्थेविधिवार्जितम् ॥
विकल्पेनैवमंतव्यमृषीणांविविधाश्रुतिः ॥ २२ ॥ अष्टौविवाहावर्णानांसंस्काराख्याइतिश्रुतिः ॥ यस्तुदोषवतींकन्यामनाख्यायप्रयच्छति॥
॥ २३ ॥ तस्यकुर्यान्नृपोदंडंस्वयंषण्णवतिंपणान् ॥ पितुर्गृहेतुयाकन्यारजःपश्यत्यसंस्कृता ॥ २४ ॥ पतंतिपितरस्तस्यकन्याचवृषलीभ
वेत्॥यस्तुतांवरयेत्कन्यांब्राह्मणोज्ञानदुर्बलः॥२५॥ अश्राद्धेयमपांक्तेयंतंविद्याद्वृषलीपतिम् ॥ सर्वदोषान्विविख्याप्यस्त्रियावापुरुषस्यवा ॥
॥२६॥उभयोरपिविख्याप्यततःसंबंधमाचरेत् ॥ गौरीकन्याप्रधानावैमध्यमाकन्यकास्मृता॥२७॥ रोहिणीतत्समाज्ञेयाअधमातुरजस्वला ॥
॥ अनूरुरुवाच ॥ गौरीतुकामगाकन्यारोहिणीचजगत्पते ॥ २८ ॥ रजस्वलानग्निकाचदेवकन्याचकाभवेत् ॥ भास्करउवाच ॥ अप्राप्तर
जसागौरीप्राप्तेरजसिरोहिणी ॥ २९ ॥ अव्यंजनकृताकन्याकुचहीनाचनग्निका ॥ सप्तवर्षाभवेद्गौरीदशवर्षातुनग्निका ॥ ३० ॥ द्वादशेतुभ
वेत्कन्याअतऊर्ध्वंरजस्वला ॥ व्यंजनेनसमोपेतांसोमोभुंजतिकन्यकाम् ॥ ३१ ॥ पयोधरेषुगंधर्वारजस्यग्निःप्रकीर्तितः ॥ व्यंजनैर्हंतपुत्रा
न्कुलंहन्यात्पयोधरैः ॥ ३२ ॥ गतिमिष्टांतथालोकान्हन्यात्तुरजसापितुः ॥ तस्माद्व्यंजनोपेतामरजस्कापयोधराम् ॥ ३३ ॥ नान्योप
भुक्तांसोमाद्यैर्दद्याद्दुहितरंपिता ॥ अन्नंतस्यनभोक्तव्यंवृथापाकोहिसस्मृतः ॥ ३४ ॥ वृथापाकस्यभुक्त्वान्नंप्रायश्चित्तंसमाचरेत् ॥ प्राणाया
मंत्रिरभ्यस्यघृतंप्राश्यविशुद्ध्यति ॥३५॥ विवाहयेदेकगोत्रांसमानप्रवरांखग॥कृत्वातस्यसमुत्सर्गमतिकृच्छ्रोविशोधनम् ॥ ३६ ॥ उद्वाह
येत्सगोत्रांचदुहितांमातुलस्यच ॥ ऋषिभिश्चैवतुल्योयोद्विजश्चांद्रायणंचरेत् ॥ ३७ ॥ असपिंडातुयामातुरसगोत्राचयापितुः ॥ साप्रशस्ता
द्विजातीनांदारकर्मणिमैथुने ॥ ३८ ॥ अरुणउवाच ॥ दारकर्मकिमुक्तंवैयदुक्तंभवताइदम् ॥ साप्रशस्ताद्विजातीनांदारकर्मणिमैथुने॥ ३९॥
आदित्यउवाच ॥ अग्निहोत्रादियत्कर्मवैदिकंविनतात्मज ॥ तदुक्तंदारकर्मेतिद्वाभ्यांयोगात्तुमैथुनम् ॥ ४० ॥ नोवहेत्कपिलांकन्यांनाधिकां
गींनरोगिणीम् ॥ नालोमिकांनातिलोमांनचाकूटांनपिंगलाम् ॥ ४१ ॥ ऋक्षवृक्षनदीनाम्नींनान्यपर्वतनामिकाम् ॥ नयक्षाभिप्रेष्यनाम्नींचा

तिभीषणनाभिकाम् ॥ ४२ ॥ यस्यास्तुनभवेद्भ्रातानविज्ञायेतवैपिता ॥ नोपगच्छेततांप्राज्ञःपुत्रिकाधर्मशंकया ॥ ४३ ॥ हंसस्वरामेकवर्णां
मधुपिंगललोचनाम् ॥ तादृशींवरयेत्कन्यांगृहार्थीखगसत्तम ॥ ४४ ॥ दाराग्निहोत्रसंयोगंकुरुतेयोऽग्रजेस्थिते ॥ परिवेत्तासविज्ञेयःपरि
वित्तिस्तुपूर्वजः ॥ ४५ ॥ परिवित्तिःपरिवेत्ताचययासपरिविद्यते ॥ सर्वेतेनरकंयांतिदातृयाजकपंचमाः ॥ ४६ ॥ क्लीबेदेशांतरस्थेवाप
तितेव्रजितेतथा ॥ योगशास्त्राभियुक्तेचनदोषःपरिविंदने ॥ ४७ ॥ खंजवामनकुब्जेषुगद्गदेषुजडेषुच ॥ जात्यंधेबधिरेमूकेनदोषःपरि
विंदने ॥ ४८ ॥ नश्राद्धंतुकनिष्ठस्यविकुलायचकन्यका ॥ वरश्चकुलशीलाभ्यांनशुद्ध्येतकदाचन ॥ ४९ ॥ नमंत्राःकारणंतत्रनचकन्या
वृताभवेत् ॥ उद्वाहितातुयाकन्यानचप्राप्तातुमैथुनम् ॥५०॥ पुनरभ्येत्यभर्तारंयथाकन्यातथैवसा ॥ समाक्षिप्यमतांकन्यांपिताअक्षतयोनि
नीम् ॥ ५१ ॥ कुलशीलवतेदद्यान्नस्यादोषःखगाधिप ॥ अनूरुरुवाच ॥ येतेऽष्टौप्रभवाःप्रोक्ताविवाहायेजगत्पते ॥ ५२ ॥ लक्षणंब्रूहिचैते
षांसमासात्तिमिरापह ॥ आदित्यउवाच ॥ शुभांलक्षणसंपन्नांकुलशीलगुणान्विताम् ॥ ५३ ॥ अलंकृत्यार्हतेदानंविवाहोब्राह्मउच्यते ॥
सहधर्मकृपाहेतोर्दानंसमयवंदनात् ॥ ५४ ॥ अलंकृत्यैवकन्यायाःप्राजापत्यःसउच्यते ॥ प्रदानंयत्रकन्यायाःसहगोमिथुनेनतु ॥ ५५ ॥
सपत्नायाःसगोत्रायास्तमार्षमृषयोविदुः ॥ अंतर्वेद्यांसमानीयकन्यांकनकमंडिताम् ॥ ५६ ॥ ऋत्विजेचैवयद्दानंविवाहोदैवसंज्ञकः ॥ एते
विवाहाश्चत्वारोधर्मकामार्थदायकाः ॥ ५७ ॥ अशुल्काब्रह्मणाप्रोक्तास्तारयंतिकुलद्वयम् ॥ चतुर्ष्वेतेषुदत्तायामुत्पन्नोयःसुतःस्त्रियाम् ॥
॥ ५८ ॥ दातुःप्रतिग्रहीतुश्चपुनात्यासप्तमान्पितॄन् ॥ विविक्तेस्वयमन्योऽन्यंस्त्रीपुंसोर्यःसमागमः ॥ ५९ ॥ प्रीतिहेतुःसगांधर्वोविवाहः
पंचमोमतः ॥ ६० ॥ हत्वाच्छित्त्वाचभित्त्वाचक्रोशंतींरुदतींगृहात् ॥ प्रसह्यकन्याहरणंराक्षसोविधिरुच्यते ॥ ६१ ॥ शुल्कंप्रदा
यकन्यायाहरणंव्यसनादपि ॥ प्रसादहेतुरुक्तोयमासुरःसप्तमस्तथा ॥ ६२ ॥ सुप्तांमत्तांप्रमत्तांवारहोयत्रोपगच्छति ॥ सपापिष्ठोविवाहानां
पैशाचश्चाष्टमोऽधमः ॥ ६३ ॥ एतान्सशुल्कान्सामान्यान्विवाहांश्चतुरोविदुः ॥ केवलंक्षात्रियस्यैववीर्यंछित्त्वाहिराक्षसः ॥ ६४ ॥
प्रातेपूर्वविवाहेतुविधिर्वैवाहिकःशिवः ॥ कर्तव्यस्तुत्रिभिर्वर्णैःसमयेनाग्निसाक्षिकः ॥ ६५ ॥ दोषवत्याःफलंदानेदातुःषण्णवतिर्दमः ॥

स्यात्तुशुल्कप्रदानेचकन्यायाश्चापवर्जनम् ॥ ६६ ॥ मोक्षोपवर्तनंद्वेषःस्त्रीधनस्यनिवर्तनम् ॥ आकांक्षातीर्थसंरोधस्त्यागहेतुश्च
वक्ष्यते ॥ ६७ ॥ परस्परस्यसंबंधान्मोक्षःस्त्रीपुंसयोःस्मृतः ॥ नस्यादन्यतरःप्रीतारोषात्संप्रतिकादपि ॥ ६८ ॥ बाधतेचेत्पतिर्भार्यांस
तुद्वेषइतिस्मृतः ॥ वृत्तिराभरणंशुल्कंलाभश्चस्त्रीधनंभवेत् ॥ ६९ ॥ भोक्तुस्तुस्वयमेवेदंपतिनाहननादपि ॥ वृथामोक्षेणभोगेनस्त्रियैद
द्यात्सवृद्धिकम् ॥ ७० ॥ सुपुत्रान्तसंहरावोहिस्त्रीधनंभोक्तुमर्हसि ॥ आकांक्षेताष्टवर्षाणिभर्तापिप्रसवंस्त्रियाः ॥ ७१ ॥ दशवंध्यानिबंधानिद
शस्त्रीपूरुषानपि ॥ ततोविंदेतपुत्रार्थीधर्मतःकुलजांस्त्रियम् ॥७२॥ पुत्रलाभात्परंलोकेनास्तिहिप्रसवार्थिनः ॥ एतांशुल्कस्यतांमुक्त्वाअन्या
लब्धुंयदीच्छति ॥ ७३ ॥ समस्तास्तोषयित्वाथैःसूर्योढांपरमांवरेत् ॥ एकाशूद्रस्यवैश्यस्यद्वेतिस्रःक्षत्रियस्यतु ॥ ७४ ॥ चतस्रोब्राह्मण
स्यस्युर्भार्याराज्ञोयथेष्टतः ॥७५॥ अतीर्थगमनात्पुंसस्तीर्थसंगूहनात्स्त्रियाः ॥ उभयोर्धर्मलोपःस्यात्स्वेष्वेवतुविशेषतः ॥७६ ॥ यौगपद्येतु
तीर्थानांविवाहक्रमशोव्रजेत् ॥ तत्साम्यंजविपुत्रावाग्रहणक्रमशोपिवा ॥ ७७ ॥ ब्राह्मादिभिर्विवाहैस्तुसंस्कृतौतौखगाधिप ॥ अष्टौवि
वाहावर्णानांवैनतेयउशंतुवै ॥७८॥ ब्राह्मोदैवस्तथार्षश्चप्राजापत्यःखगाधिप ॥ गांधर्वश्चासुरोरक्षःपैशाचस्त्वष्टमोऽधमः ॥ ७९ ॥ प्रशस्ताः
क्षत्रियादीनांविप्रादीनांतुमानसः ॥ प्रतिग्रहादयोबद्धाविवाहाब्राह्मणस्यतु ॥ ८० ॥ क्षत्रियस्यापिदेयातुप्रतिग्रहविवर्जिता ॥ प्रवृत्तिंकेचिदि
च्छंतिदानमित्यपरेस्थिताः ॥ ८१ ॥ पावनंपुरुषाणांतुविवाहंपरिचक्षते ॥ ८२ ॥ इतिश्रीभविष्येमहापुराणेसप्तमीकल्पेब्राह्मेपर्वणिसूर्या
नूरुसंवादेविवाहविधिवर्णनंनामद्व्यशीत्युत्तरशततमोऽध्यायः ॥१८२॥ ॥भास्करउवाच ॥ कुर्यात्पंचमहायज्ञानाधिकारोद्विजस्यसः ॥ भूत
पित्रमरब्रह्ममनुष्याणांयथाविधि ॥ १ ॥ सदासदानकृत्यानांफलार्थमपरेस्थिताः ॥ नित्यानित्यमितिप्राहुरनुषंगात्फलंपरे ॥ २ ॥ अ
तिथेःपरितोषायपरिचर्याविधीयते ॥ अदृष्टनियमादृष्टआरोग्यानांचवर्जनम् ॥३॥ तिस्रोष्टकास्तुकर्तव्यामध्यावर्तचतुर्थिका ॥ शाकपाय
सपूपैस्तुमांसेनतुचतुर्थिका ॥ ४ ॥ प्रतिपदिक्रियतेयस्तुचतुःपार्वणउच्यते ॥ स्वगृह्योक्तविधानेनपक्षादिःसतुकीर्त्यते ॥ ५ ॥ नित्यंनैमित्ति
कंकाम्यंवृद्धिश्राद्धंसपिंडनम् ॥ पार्वणंचेतिविज्ञानंगोष्ठशुद्धयर्थमुत्तमम् ॥ कर्मांगंनवमंप्रोक्तंवैदिकंदशमंस्मृतम् ॥६॥ अनूरुरुवाच ॥ यदे

तद्भवताप्रोक्तंश्राद्धंद्वादशधाविभोः ॥ तस्यसर्वस्यमेब्रूहिलक्षणंवैपृथक्पृथक् ॥ ७ ॥ नित्यंकिमुच्यतेश्राद्धंकिंवानैमित्तिकंभवेत् ॥ काम्या
दिदेवादेवेशएतेषांलक्षणंवद ॥ ८ ॥ आदित्यउवाच ॥ अहन्यहनियच्छ्राद्धंतन्नित्यंखगकीर्तितम् ॥ वैश्वदेवविहीनंतुअशक्तावुदकेनतु॥९॥
एकोद्दिष्टंतुयच्छ्राद्धंतन्नैमित्तिकमुच्यते ॥ तत्सदैवप्रकर्तव्यमयुग्मान्भोजयेद्द्विजान् ॥ १० ॥ कामयुक्तंहितत्काम्यमभिप्रेतार्थसिद्धये ॥
पार्वणेनविधानेनतदप्युक्तंखगाधिप ॥११॥ वृद्धौयत्क्रियतेश्राद्धंवृद्धिश्राद्धंतदुच्यते ॥ सर्वंप्रदक्षिणंकार्यंपूर्वाह्णेतूपवीतिना ॥ १२ ॥ गंधोदक
तिलैर्युक्तंकुर्यात्पात्रचतुष्टयम् ॥ अर्घार्थंपितृपात्रेषुप्रेतपात्रंप्रमोचयेत् ॥ १३ ॥ येसमानाइतिद्वाभ्यामेतज्ज्ञेयंसपिंडनम् ॥ नित्येनतुल्यंशेषं
स्यादेकोद्दिष्टंस्त्रियाअपि ॥ १४ ॥ दर्शेवैक्रियतेयत्तुतत्पार्वणमुदाहृतम् ॥ पर्वणिक्रियतेयत्तत्तत्पार्वणमितीरिताः ॥ १५ ॥ गोभ्य
श्चक्रियतेश्राद्धंतद्गोष्ठीश्राद्धमुच्यते ॥ बहूनां विदुषांसंपत्सुखार्थंपितृतृप्तये ॥ १६ ॥ क्रियतेशुद्धयेयद्वैब्राह्मणानांचभोजनम् ॥ शुद्ध्यर्थमि
तितत्प्रोक्तंवैनतेयमनीषिभिः ॥ १७ ॥ निषेककालेसोमेचसीमंतोन्नयनेतथा ॥ ज्ञेयंपुंसवनेश्राद्धंतच्चकर्मांगमेवच ॥ १८ ॥ क्रियतेदेवमुद्दि
श्यसप्तम्यादिषुयत्नतः ॥ गच्छेद्देशांतरेयस्तुश्राद्धंकुर्यात्तुसर्पिषा ॥ १९ ॥ तद्यत्नार्थमितिप्रोक्तंप्रविशेच्चनसंशयः ॥ शरीरोपचयेश्राद्धमर्थवृद्ध्यर्थ
मेवच ॥२०॥ पुष्ट्यर्थमेतद्विज्ञेयमौपचारिकमुच्यते ॥ सर्वेषामेवश्राद्धानांश्रेष्ठंसांवत्सरंमतम् ॥ २१ ॥ क्रियतेयत्खगश्रेष्ठमृतेहनिबुधैःसह ॥
मृतेऽहनिपुनर्यस्तुनकुर्याच्छ्राद्धमादरात् ॥ २२ ॥ मातुश्चखगशार्दूलवत्सरांतेमृतेऽहनि ॥ नाहंतस्यखगश्रेष्ठपूजांगृह्णामिनोहरिः ॥ २३ ॥
नब्रह्मानचवैरुद्रोनचान्येदेवतागणाः ॥ तस्माद्यत्नेनकर्तव्यंवर्षेवर्षेमृतेऽहनि ॥ २४ ॥ नरेणखगशार्दूलभोजकेनविशेषतः ॥ भोजकोयस्तु
वैश्राद्धंनकरोतिखगाधिप ॥२५॥ मातापितृभ्यांसततंवर्षेवर्षेमृतेऽहनि ॥ सयातिनरकंघोरंतामिस्रंनामनामतः ॥२६॥ ततोभवतिदुष्टात्मान
गरेसूकरःखग ॥ अनूरुरुवाच ॥ ॥ नजानातिदिनंयस्तुनमासंविबुधाधिप ॥ २७ ॥ मृतौयत्रमहाप्राज्ञपितरौसकथंनरः ॥ श्राद्धंकरोतुवैता
भ्यांविधिवद्वत्सरात्मकम् ॥२८॥ ॥ आदित्यउवाच ॥ ॥ नजानातिनरोयस्तुमृतानांविनतात्मज ॥ मासंदिनंमृतानांतुपितॄणांखगसत्तम ॥२९॥
यथाकुर्यात्खगश्रेष्ठशृणुकृत्स्नंसमासतः ॥ मृताहंयोनजानातिमानवोविनतात्मज ॥ ३० ॥ तेनकार्यममावस्यांश्राद्धंसांवत्सरंखग ॥ मासेमा

॥ विशेषतोभोजनेनयोमांपूजयतेसदा ॥ प्रीतयेममवैतेनसंपूज्याःपितरःसदा ॥ ३२ ॥ ममेष्टाःपितरो
गौशिरेवीरमावेवाविधिवत्खग ॥ ३१ ॥ ॥ ३३ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेश्राद्ध
नित्यंगावोविप्राश्चसुव्रत ॥ तस्माच्चतेसदापूज्यामद्भक्तेनविशेषतः ॥ ॥ यजनेऽध्यापनेवादेषाड्विधोवेदावि
विधिकथनंनामत्र्यशीत्युत्तरशततमोऽध्यायः ॥ १८३ ॥ प्रख्यातेप्रत्ययेनैवप्रश्नपूर्वप्रतिग्रहः ॥ २ ॥ अनुयोगेनयोदद्याद्ब्राह्मणायप्रति
क्रयः ॥ १ ॥ वेदविक्रयनिर्दिष्टंस्त्रियाचावर्जितंधनम् ॥ नदेयंपितृदेवेभ्योयच्चक्लीबात्खगाधिप ॥ तावत्योभ्रूणहत्यावैवेदविक्रयमाप्नुयात् ॥४॥
ग्रहम् ॥ सपूर्वंनरकंयातिब्राह्मणास्तदनंतरम् ॥३॥वेदाक्षराणियावंतिनियुज्यन्तेर्थकारणात् ॥ ॥ कुलंवाऽश्रोत्रि
वैश्वदेवेनयोहीनआदित्यस्यचकर्मणा ॥ सर्वेतेवृषलाज्ञेयाःप्राप्तवेदाश्चब्राह्मणाः ॥५॥ येषामध्ययनंनास्तियेचकेचिदनग्नयः ॥७॥ प्रियोवायादिवाद्वेष्यो
यंयेषांसर्वेतेशूद्रधर्मिणः ॥ ६ ॥ अकृत्वावैश्वदेवंतुयोभुनक्त्यबुधःखग ॥ वृथातेनान्नपाकेनयमयोनिंव्रजेत्तुसः ॥ आचिंत्योभ्यागतोयस्मात्तस्मा
मूर्खःपंडितएववा॥वैश्वदेवेतुसंप्राप्तेसोऽतिथिःस्वर्गसंक्रमः ॥ ८ ॥ नैकग्रामीणमतिथिंविप्रसांगतिकंतथा ॥ ॥ १० ॥ यावच्चप्राप्नुतेह्यन्नंकृताशीः
दतिथिरुच्यते ॥ ९ ॥ अचिंत्यःसतुवैनाम्नावैश्वदेवउपागतः ॥ अतिथिंतंविजानीयान्नपुनःपूर्वमागतः ॥ पुष्कलानिचचत्वारिहंतका
स्नातकोद्विजः ॥ तस्यान्नस्यचतुर्भागंहंतकारंविदुःखग ॥ ११ ॥ ग्रासमात्राभवेद्भिक्षाचतुष्कालंचतुर्गुणम् ॥ ॥ आरूढपतितापत्योब्राह्म
रोविधीयते ॥ १२ ॥ आरूढोनैष्ठिकंधर्मंयस्तुप्रच्यवतेपुनः ॥ चांद्रायणंचरेन्मासमितिविद्धिखगाधिप ॥ १३ ॥ अन्यस्यविशतेगेहेब्राह्मण
णोवृषलेनच ॥ द्वावेतौविद्धिचांडालौवेदित्राद्यश्चजायते ॥ १४ ॥ ब्राह्मणीकुलटानित्यंस्वकंत्यक्त्वापतिंखग ॥ ॥ यस्तुप्रव्रजितोभूत्वा
स्यखगाधिप ॥ १५ ॥ उत्पद्यतेतुयस्तस्याब्राह्मणेनमहामते ॥ सचांडालोमहान्प्रोक्तोमहाचांडालइत्युत ॥ १६ ॥ अभोज्यंब्राह्मणस्या
पुनःसेवतिमैथुनम् ॥ षष्टिवर्षसहस्राणिविष्ठायांजायतेक्रिमिः ॥ १७ ॥ पंचगव्येनशुद्धिःस्यादित्याहममदेहकृत् ॥ ॥ उभावेतावभो
न्नंवृषलेनानिमंत्रितम् ॥ १८ ॥ तथैववृषलस्यान्नंब्राह्मणेननिमंत्रितम् ॥ ब्राह्मणान्नंददच्छूद्रःशूद्रान्नंब्राह्मणोददत् ॥ १९ ॥ शूद्रान्नंशूद्रसंपर्कंशूद्रेण
ज्यान्नौभुक्त्वाचांद्रायणंचरेत् ॥ उपानिक्षेपधर्मेणशूद्रान्नंचपचेद्विजः ॥ २० ॥ अभोज्यंतद्भवेदन्नंसचविप्रःपुरोहितः ॥

सहवासनम्॥२१॥शूद्रोज्ञानगमःकश्चिज्ज्वलंतमपिपातयेत् ॥ शूद्रान्नापहताविप्राविह्वलारतिलालसाः ॥ २२ ॥ कुपिताःकिंकरिष्यंतीति
विषाइवपन्नगाः ॥ हस्तदत्तास्तुयेस्नेहाल्लवणव्यंजनादयः ॥२३॥ दातारंनापितिष्ठंतिभोक्ताभुंजातिकिल्बिषम् ॥ आयसेनतुपात्रेणयदन्नमुप
दीयते ॥ २४ ॥ भोक्ताविष्ठाशनंभुंक्तेदातातुनरकंव्रजेत् ॥ अंगुल्यादंतकाष्ठंयत्प्रत्यक्षलवणंचयत् ॥२५ ॥ मृत्तिकाभक्षणंचैवतुल्यंगोमांस
भक्षणम् ॥ मुखेपर्युषितेनित्यंभवत्यप्रयतोद्विजः ॥ २६ ॥ तस्माच्छुष्कमथार्द्रंवाभक्षयेद्दंतधावनम् ॥ पुष्पालंकारवस्त्राणिगंधमाल्यानुलेप
नम् ॥ २७ ॥ उपवासेनदुष्यंतिदंतधावनमंजनम् ॥ गृहांतेवसतेमूर्खोदूरेचास्यगुणान्वितः ॥ २८ ॥ गुणान्वितेचदातव्यंनास्तिमूर्खे
व्यतिक्रमः ॥ ब्राह्मणातिक्रमोनास्तिविप्रेवेदविवर्जिते ॥ २९ ॥ ज्वलंतमग्निमुत्सृज्यनहिभस्मनिहूयते ॥ सन्निकृष्टमधीयानंब्राह्मणंयोव्य
तिक्रमेत् ॥ ३० ॥ भोजनेनैवदानेनदहत्यासप्तमंकुलम् ॥ अनूरुरुवाच ॥ एवमेवजगन्नाथदेवदेवजगत्पते ॥ ३१ ॥ किंतुयत्तेपुरादेवश्रुतं
वाक्यंमहात्मनः ॥ गदतोनारदस्यैवशृणुत्वंविबुधाधिप ॥ ३२ ॥ गदतोमेसुरश्रेष्ठधर्म्यमर्थंसुखावहम् ॥ सत्यनिष्ठंद्विजंयस्तुशुक्लजा
तिंप्रियंवदम् ॥ ३३ ॥ मूर्खंपाखंडिनंवापिवृत्तिहीनमथापिवा ॥ अतिक्रम्यनरोघोरंनरकंपातयेत्खग ॥ ३४ ॥ सप्तपरान्त्सप्तपूर्वान्पुरुषा
नात्मनासह ॥ तस्मान्नातिक्रमेद्राजाब्राह्मणंप्रातिवेशिकम् ॥ ३५ ॥ संबंधतस्तथासन्नंदौहित्रंविद्पतेतथा ॥ भागिनेयंविशेषेण
तथाबंधुंग्रहाधिप ॥ ३६ ॥ नातिक्रमेन्नरस्त्वेतान्सुमूर्खानपिगोपते ॥ अतिक्रम्यमहद्रौद्रंरौरवंनरकंव्रजेत् ॥ ३७ ॥ आदित्यउवाच ॥ ए
वमेतन्नसंदेहोयथावदसिखेचर ॥ ममाप्येवंगतंवीरब्राह्मणंनपरीक्षयेत् ॥ ३८ ॥ सर्वदेवमयंविप्रंसर्वलोकमयंतथा ॥ तस्मात्संपूजयेदेनंन
गुणांस्तस्यचिंतयेत् ॥ ३९ ॥ केवलंचिंतयेज्जातिंनगुणान्विनतात्मज ॥ तस्मादामंत्रयेत्पूर्वमासन्नंब्राह्मणंबुधः ॥ ४० ॥ यस्त्वासन्नमतिक्र
म्यब्राह्मणंपतिताद्दते॥दूरस्थान्पूजयेन्मूढोगुणाढ्यान्नरकंव्रजेत्॥४१॥ देवकर्मविनाशेनब्रह्मस्वहरणेनच॥देवद्रव्यंद्विजान्नंचब्रह्मस्वंब्राह्मणार्जि
तम् ॥ ४२ ॥ वियोन्यांक्षिपतेयस्तुवियोनिमधिगच्छति ॥ माददस्वेतियोब्रूयाद्गवाग्निब्राह्मणेषुवै ॥ ४३ ॥ तिर्यग्योनिशतंगत्वाचांडालेष्व
भिजायते ॥ यत्तुवाचाप्रतिज्ञातंकर्मणानोपपादितम् ॥ ४४ ॥ तद्दणंधर्मसंयुक्तमिहलोकेपरत्रच॥वेदविद्याव्रतस्नातेश्रोत्रियेगृहमागते॥४५॥

क्रीडंत्योषधयःसर्वायास्यामःपरमांगतिम् ॥ मधुमांससुरांसोमंलाक्षांचलवणंतथा ॥ ४६ ॥ विक्रीयान्यतमंतेषांद्विजश्चांद्रायणंचरेत् ॥ गुडंतिलंतथानीलंकेशान्गोधूमकान्यवान् ॥ ४७ ॥ विक्रीयब्राह्मणोगांचकृच्छ्रंसांतपनंचरेत् ॥ उष्ट्रमाविकक्षीरंचअन्नंमृतकसूतके ॥ ४८ ॥ चौरस्यान्नंमृतश्राद्धेभुक्त्वाचांद्रायणंचरेत् ॥ गवांशृंगोदकेस्नातोमहानद्याश्चसंगमे ॥ ४९ ॥ समुद्रदर्शनाद्वापिशुनादष्टःशुचिर्भवेत् ॥ वेदविद्याव्रतस्नातःशुनादष्टोद्विजःखग ॥ ५० ॥ हिरण्योदकमिश्रंतुघृतंप्राश्यविशुद्ध्यति ॥ तिष्ठन्वाप्यथवागच्छञ्छुनादष्टोद्विजःखग ॥ ५१ ॥ वज्रंप्राश्यशुचिःस्याद्वैयथाहभगवान्मनुः ॥ व्रतिनश्चापिदष्टस्यत्रिरात्रंक्षपणंस्मृतम् ॥ ५२ ॥ सघृतंचततोभुक्त्वाव्रतशेषंसमाचरेत् ॥ ब्राह्मणीतुशुनादष्टासोमेदृष्टंसमाचरेत् ॥ ५३ ॥ यदानदृश्यतेसोमःप्रायश्चित्तंकथंभवेत् ॥ यांदिशंव्रजतेसोमस्तांदिशंचावलोकयेत् ॥ ५४ ॥ सोममार्गेणसापूर्वापंचपूतेनशुध्यति ॥ ब्राह्मणस्यब्रह्मद्वारेपूयशोणितसंभवे ॥ ५५ ॥ क्रिमिभिर्दश्यतेयश्चानिष्कृतिंतस्यवच्मिते ॥ गवांतत्रपुरीषेणत्रिकालंस्नानमाचरेत् ॥ ५६ ॥ दधिक्षीरंघृतंपीत्वाक्रिमिदष्टोविशुद्ध्यति ॥ अथनाभ्यांप्रदष्टस्यआपादाद्विनतात्मज ॥ ५७ ॥ एतद्धिनिर्दिशेत्प्राज्ञःप्रायश्चित्तंखगाधिप ॥ नाभिकंठांतरेवीरयथाउत्पद्यतेक्रिमिः ॥ ५८ ॥ षड्रात्रंतुतदाप्रोक्तंप्रायश्चित्तंमनीषिभिः ॥ यदादृश्यंतिशिरसिक्रिमयोविनतात्मज ॥ ५९ ॥ कृच्छ्रंतदाचरेत्प्राज्ञःशुद्ध्यैकश्यपात्मज ॥ मृतान्नंमधुमांसंचयस्तुभुंजीतब्राह्मणः ॥ ६० ॥ सत्रीण्यहान्युपवसेदेकाहंचोदकेवसेत् ॥ ६१ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेऽनूर्वादित्यसंवादेब्राह्मणधर्मवर्णनंनामचतुरशीत्युत्तरशततमोऽध्यायः ॥ १८४ ॥ छ ॥ आदित्यउवाच ॥ रात्रौश्राद्धंनकुर्वीतराक्षसीकीर्तिताहिसा ॥ संध्ययोरुभयोर्वीरसूर्येचैवाभिरोहिते ॥ १ ॥ अकृत्वामातृयज्ञंतुयःश्राद्धंपरिवेषयेत् ॥ तातस्यक्रोधसंयुक्तांहिंसामिच्छंतिदारुणाम् ॥ २ ॥ अनूरुरुवाच ॥ मातृश्राद्धंकथंकार्यंकाश्चतामातरःस्मृताः ॥ नांदीमुखाश्चपितरःकथंपूजामवाप्नुयुः ॥ ३ ॥ आदित्यउवाच ॥ हंततेसंप्रवक्ष्यामिमातृश्राद्धविधिंखग ॥ शृणुत्वंखगशार्दूलगदतोममकृत्स्नशः ॥ ४ ॥ पूर्वाह्णेभोजयेद्विप्रानष्टौसर्वान्प्रदक्षिणान् ॥ तथान्यंनवमंविप्रंचतुरश्चखगाधिप ॥ ५ ॥ ऋजून्वैकुतपान्दत्त्वासत्येनविधिवत्खग ॥ कृत्वायवैस्तिलार्थंतुदधिमिश्रंक्रमेणच ॥ ६ ॥ गंधपुष्पादिकंसर्वंकुर्याद्विप्रप्रदक्षिणाम् ॥ ब्राह्मणेभ्यस्ततोदद्यान्मधुरं

भोजनंखग ॥ ७ ॥ गुडमिश्रंखगश्रेष्ठसवस्त्रमोदनंपरम् ॥ रसानांमोदकांश्चैवनचास्तांकटुकास्तथा ॥ ८ ॥ एवंभुक्तेषुविप्रेषुदद्यात्पिंडा
न्समाहितः ॥ दध्यक्षतविमिश्रांस्तुवरदैश्चखगाधिप ॥ ९ ॥ कृत्वातुमंडपंवीरचतुरस्त्रंप्रदक्षिणम् ॥ पूर्वाग्रांश्चकुशान्दत्त्वापुष्पाणांप्रक
रंतथा ॥ १० ॥ सव्येनपाणिनावीरविधिवत्खगसत्तम ॥ मात्रेप्रमात्रेतन्मात्रेनिर्वपेत्पूर्वतोमुखः ॥ ११ ॥ पितुर्मात्रेतुतन्मात्रेनिर्वपेद्विधि
वत्खग ॥ वृद्धायैप्रपितामह्यैतथान्यंनिर्वपेद्बुधः ॥ १२ ॥ एवमुद्दिश्यवैमातृःषट्पिंडान्निर्वपेत्खग ॥ भोजयाष्टौद्विजान्वीरमातृश्राद्धेखगा
धिप ॥ १३ ॥ नवमंसर्वदैवत्यंभोजयेद्विधिवत्खग ॥ नांदीमुखांस्ततोद्दिश्यपितॄन्पंचद्विजोत्तमान् ॥ १४ ॥ भोजयेद्विधिवच्छ्राद्धेवृद्धि
श्राद्धेप्रदक्षिणम् ॥ इत्थंश्राद्धद्वयंकुर्याद्वृद्धौकश्यपनंदन ॥ १५ ॥ तथान्यमपितेवच्मिपरंश्राद्धविधिंतव ॥ अथैवंभोजयेच्छ्राद्धेतत्पूर्वं
तुप्रवर्तयेत् ॥ १६ ॥ अन्यथातत्रलुंपंतिसदेवासुरमानुषाः ॥ अग्न्यभावेतुविप्रस्यपाणावेवोपपादयेत् ॥ १७ ॥ योह्यग्निःसद्विजोविप्रोमं
त्रदर्शितमुच्यते ॥ पूर्वपात्रेचयच्चान्नंयच्चान्नमुपकल्पितम् ॥ १८ ॥ तेनैवसहभोक्तव्यंपृथग्भावोनविद्यते ॥ द्वौदैवेऽथर्वणौविप्रौप्राङ्मु
खावुपवेशयेत् ॥ १९ ॥ त्रीन्पैत्रोदङ्मुखान्वीरवृद्धौचाध्वर्युसंगमान् ॥२०॥ त्रीणिश्राद्धेपवित्राणिदौहित्रंकुतुपास्तिलाः ॥ त्रीणिचात्रप्रशं
संतिशौचमक्रोधमत्वरम् ॥ २१ ॥ दौहित्रंखंडमित्युक्तंललाटायप्रजापते ॥ तत्रशृंगस्ययत्पात्रंतद्दौहित्रमितिस्मृतम् ॥ २२ ॥ सव्यादंसा
त्परिभ्रष्टंनाभिदेशेव्यवस्थितम् ॥ एकवस्त्रंतुतंविद्याद्दैवेपित्र्येचवर्जयेत् ॥ २३ ॥ पितृदेवमनुष्याणांपूजनंभोजनंतथा ॥ नोत्तरीयंविना
कार्यंकृतंस्यान्निष्फलंयतः ॥ २४ ॥ परिधानकृतेस्कंधेगृहस्थोयोऽर्चयेत्पितॄन् ॥ नसतत्फलमाप्नोतियथायोगपटावृतः ॥ २५॥ वनस्थानां
खगश्रेष्ठयतीनांचमहामते ॥ सिद्धयेकर्मणिवीरयोगपट्टकमुच्यते ॥ २६ ॥ हस्तौप्रक्षाल्यगंडूषंयःपिबेदविचक्षणः ॥ सतुदैवंचपित्र्यं
चआत्मानंचोपघातयेत् ॥ २७ ॥ भोजनेष्ववतिष्ठंतिस्वस्तिकुर्वंतियेद्विजाः ॥ आसुरंतद्भवेच्छ्राद्धंपितॄणांनोपतिष्ठति ॥ २८ ॥ दातारो
नोभिवर्धंतांवेदाःसंततिरेवच ॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोऽस्त्विति ॥२९॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेअ
रुणादित्यसंवादेमातृश्राद्धविधिवर्णनंनामपंचाशीत्युत्तरशततमोऽध्यायः ॥ १८५॥छ॥ भास्करउवाच ॥ श्रावण्यांतुबलिःकार्यःसर्पाणांमंत्र

पूर्वकम् ॥ शयनारोहणेचैवकार्येंसुखमभीप्सता ॥ १ ॥ कार्यःप्रत्यवरोहस्तुमार्गेशीर्ष्यानसंशयः ॥ फलंविनात्वनुष्ठानंनित्यानामिष्यते
स्फुटम् ॥ २ ॥ काम्यानांसफलार्थंतुदोषप्राप्त्यर्थमेवच ॥ नैमित्तिकानांकरणंत्रिविधंकर्मणांफलम् ॥ ३ ॥ फलंकेचिदुपात्तस्यदुरितस्य
प्रचक्षते ॥ अनुत्पत्तिस्तथाचान्येप्रत्येत्याभ्युपमंत्र्यच ॥ ४ ॥ नित्यक्रियंतथाचान्येअनुषंगात्फलंश्रुतिः ॥ अग्न्याधेयंतथादर्शपूर्णमासांद्विती
यकम् ॥ ५ ॥ चातुर्मास्यमग्निहोत्रंपशुबंधोनिरूढकाः ॥ सौत्रामणीचसंस्थाःस्युर्हविषःश्रुतिनोदिताः ॥ ६ ॥ अग्निष्टोमोऽत्यग्निष्टोमउक्थ्यः
संषोडशीतथा ॥ वाजपेयातिरात्रश्चआप्तोर्यामःश्रुतौश्रुतः ॥ ७ ॥ दयास्यात्सर्वभूतेषुअनसूयाथमंगलम् ॥ क्षांतिर्दयात्वनायासःशौचमस्पृह
ताव्रतम् ॥ ८ ॥ सम्यगुक्तास्तुसंस्काराब्रह्मप्राप्तिनिमित्तकाः ॥ अनंतरंप्रवक्ष्यामिविप्राणांवृत्तयःशुभाः ॥ ९ ॥ ऋतामृतेचविप्राणामृतंप्रमृ
तमेवच ॥ प्रतिग्रहावाणिज्यादिश्रेयसीनोत्तरोत्तरा ॥ १० ॥ आजीविकावृत्तयस्तुइत्याद्याःसंप्रवर्तिताः ॥ तासांकयापिजीवेतअनुतिष्ठेद्यथा
विधि ॥ ११ ॥ नित्यंशुचिसुगंधश्चस्नानशीलःप्रियंवदः ॥ पूज्यश्चपूजयेद्देवान्कार्याणिस्वयमाचरेत् ॥१२ ॥ नेक्षेतार्कंननग्नांस्त्रींनचसंस्पृष्ट
मैथुनम् ॥ नाप्सुमूत्रंपुरीषंवानाशुचीरात्रितारका ॥ शास्त्रोक्तायंत्रणायातुनानुक्तानिव्रतानिच ॥ १३ ॥ स्वर्गार्थंसाधयेत्ताभिःशक्तिमान्मन
सातथा ॥ नित्यानिकेचिदिच्छंतिकाम्यानिचतथापरे ॥ १४ ॥ काम्याप्रवृत्तौसंगेचप्रायश्चित्तंविधीयते ॥ व्रतानिमनसात्विष्टसंकल्पइतिमा
नसः ॥१५ ॥ अंतरानुफलंयत्तद्दृषिवादाःप्रकीर्तिताः ॥ अनाध्यायंस्वयंसम्यग्वर्जयेत्फलसाधनम् ॥ १६ ॥ आत्माशुद्धस्तथादेशोह्यसुहारः
प्रजापदः ॥ अशुभानिनिमित्तानिउत्पातांविकृतंतथा ॥ १७ ॥ पर्वाणिमनसोऽशुद्धिरनध्यायइतिस्मृतः ॥ अनध्यायाश्चदृष्टार्थाअदृष्टा
र्थास्तथापरे ॥ १८॥ वेदाध्ययनमेवेतित्रिधामद्ध्यानदर्शनम् ॥ अभक्ष्यंसर्ववर्णानांशावाशौचंखगाधिप ॥ १९ ॥ द्रव्यशुद्धिस्तथैवस्यादन्य
थात्वसमंजसम् ॥ जातिदुष्टंक्रियादुष्टंकालदुष्टंविभूषितम् ॥ २०॥ संसर्गाश्रयदुष्टंचसहृल्लेखंस्वभावतः ॥ लशुनंगृंजनंचैवपलांडुंकटुकानिच
॥ २१ ॥ वार्ताकंनालिकेरंतुमूलकंजातिदुष्टकम् ॥ नोभक्षेतक्रियादुष्टंदुष्टंचपंतितैःपृथक् ॥ २२ ॥ कामदुष्टंतुविज्ञेयंहासदंचिरसंस्थितम् ॥
दधिभक्ष्याविकारांश्चमधुवर्जंतादिष्यते ॥ २३ ॥ सुरालशुनसंस्पृष्टंपेयूषादिसमन्वितम् ॥ संसर्गदुष्टमेतद्धिशुनोच्छिष्टंखगेश्वर ॥ २४ ॥ शूद्र

सत्कंखंडसत्कंज्ञेयमाश्रयदूषकम् ॥ विचिकित्सातुहृदयेअन्येयस्मिन्नसुजायते ॥ २५ ॥ सह्लेखंतुतज्ज्ञेयंपुरीषंतुस्वभावतः ॥ रसदुष्टंवि
कारोऽपिरसस्येतिप्रदर्शितम् ॥२६॥पायसंक्षीरपाकादितस्मिन्नेवादिनेतथा ॥ यथाशास्त्रंखगश्रेष्ठभक्ष्याभक्ष्यंनिरूपयेत् ॥२७॥ प्राणात्ययेप्रो
क्षितंचश्राद्धेचद्विजकाम्यया ॥ पितॄन्देवांश्चार्पयित्वाभुंजन्मांसंनदोषभाक् ॥ २८ ॥ प्रेतशुद्धिःसपिंडानांतस्मिन्नेवमृतेसति ॥ दशाहंद्वाद
शाहंवापक्षंमासंत्वशुद्धता ॥ २९ ॥ दशाहादित्रिकेभागेवर्णशोनभवंतिहि ॥ दशाहेनतुभोज्याःस्युःसूतकाशौचयोस्तथा ॥ ३० ॥ ऊर्ध्वंद
शाहादेकाहश्रवणेसतिजायते ॥ संवत्सरेव्यतीतेतुस्नानादेवविशुद्ध्यति ॥ ३१ ॥ समानोदकताप्रोक्ताजन्मनाम्नोरपर्यये ॥ सपिंडाःसप्तपुरु
षाःश्रुतावेतन्निदर्शनम् ॥ ३२ ॥ आदंतजन्मनःसद्यआचूडान्नैष्ठिकीस्मृता ॥ त्रिरात्रमाव्रतादेशात्सपिंडेषुमृतेषुच ॥ ३३ ॥ तेषामपितदेकं
स्याद्वयोवस्थाप्यपेक्षते ॥ समानोदकात्रिरात्रेणशुध्येद्वैमृत्युजन्मनोः ॥ ३४ ॥ गर्भस्रावेत्रिरात्रेणउदक्याशुध्यतेतथा ॥ अनंतजन्ममरणे
तच्छेषेणविशुद्ध्यति ॥ ३५ ॥ द्विजानांत्वेवमेवस्यात्पित्रर्थंमातुरेववा ॥ अग्निहोत्रार्थंविज्ञेयंसद्यःशौचमितिस्थितिः ॥ ३६ ॥ असपिंडेतु
निर्हारात्रिरात्रमपिमानवः ॥ तस्यैवानुगतोज्ञेयंसद्यःशौचंखगाधिप ॥ ३७ ॥ शुध्येद्द्विजोदशाहेनजन्महानौद्वियोनिषु ॥ षड्भिस्त्रिभिरहे
केनक्षत्रविट्शूद्रयोनिषु ॥ ३८ ॥ उक्तशौचंयथान्यायंशारीरंतत्वदर्शिभिः ॥ द्रव्यशुद्धिविधानंतुयथावदभिधीयते ॥ ३९ ॥
तैजसंमार्तिकंवीरवारिशुद्धिःस्मृतातथा ॥ निर्लेपंक्षालनेनैवस्पर्शेतुप्रोक्षणेनवै ॥ ४० ॥ अशुद्धेनैवकिंचिद्धिद्रव्यमस्तीतिखेचर ॥
वचनाच्छुद्धचशुद्धीतुद्रव्यनामानिखेचर॥४१॥ स्नानंशौचंचकर्तव्यंद्रव्यशौचादनंतरम् ॥ प्रातःस्नानंतुनित्यंस्याद्ग्रहणेकाम्यमेवच॥४२॥
नैमित्तिकंक्षुराशौचंतेनपापाद्विशुध्यति ॥ उक्तंतुशौचंविज्ञेयंदोषक्षयकरंखग ॥ ४३ ॥ कर्मांगंचेतिविज्ञेयंषट्प्रकाराःसमासतः ॥
एवमाचमनंविद्याद्विशिष्टंतुद्विजन्मनाम्॥४४॥तदामृतानांतद्वत्स्यादन्येषांतुयथासुखम् ॥ कन्यानिवृत्तिपुत्रैस्तुयथान्यायंसमाचरेत्॥४५॥
कलाशिल्पानिसर्वाणिगृह्णीयात्परितुष्टये ॥ ४६ ॥ शुश्रूषयेत्पतिंभार्यापरितोषंयथाव्रजेत् ॥ गुरूणांपरितोषश्चधर्मस्त्रीणांसमासतः ॥
वृद्धाऽपुत्रायदिमृतातदभावेनृपस्यतु ॥ ४७ ॥ मृतापत्याप्यगर्भाचवृद्धापत्यापतिव्रता ॥ कुर्यादनिर्वृतंभर्तुर्गतेसन्निहितेपिवा ॥ ४८ ॥

पंडितोऽपिसमूर्खःस्याच्छक्तियुक्तोऽप्यशक्तितः ॥ यःसंसाराच्चमाहात्म्यमुच्चारयितुमक्षमः ॥ ४३ ॥ तस्मात्सपंडितःशक्तःसतपस्वीजि
तेंद्रियः ॥ यःसौरज्ञानसद्भावमालोचयितुमुद्यतः ॥ ४४ ॥ यःप्रदद्यान्नृपःकृत्स्नांक्ष्मांधनंकांचनंतथा ॥ सर्वमन्यायतःपृच्छेन्नतस्योपादिशे
द्गुरुः ॥ ४५ ॥ यःशृणोतिरवेर्धर्मन्यायतःसचवक्तिच ॥ ततोगच्छतिसुस्थानंनरकंतद्विपर्यये ॥ ४६ ॥ दत्तगोदोहसंभूतःषडक्षरविधानतः॥
रविःसंपूजितःशीघ्रंनराणांतुल्यताभृशम् ॥४७॥ सुरासुरैर्मथ्यमानात्क्षीरोदात्सागरात्पुरा ॥ पंचगावःसमुत्पन्नाःसर्वलोकस्यमातरः ॥४८॥
नंदासुभद्रासुरभिसुमनाशोभनावती ॥ गावःसूर्यसमाभासाउत्पन्नाःकृतिमागताः ॥ ४९ ॥ सर्वलोकोपकारार्थंदेवानांतर्पणायच ॥ मामा
श्रित्यास्थितागावःस्नानार्थंभास्करस्यतु ॥५०॥तासामंगानिपुण्यानिषड्रसाःखगसत्तम॥खगादिषुचसर्वेषुस्थिराणीत्युपधारय ॥५१॥ गोमयं
रोचनंमूत्रंक्षीरंदधिघृतंगवाम्॥ षडंगानिपवित्राणिसर्वसिद्धिकराणिच॥५२॥गोमयादुत्थितःश्रीमान्बिल्ववृक्षोऽर्कवल्लभः॥ तत्रास्तेपद्महस्ता
श्रीर्वृक्षस्तेनचसस्मृतः ॥५३॥ पंकान्युत्पलपद्मानिपुनर्जातानिगोमयात् ॥ गोरोचनंचमंगल्यंपवित्रंसर्वकामदम् ॥ ५४ ॥ गोमूत्राद्गुग्गुलु
र्जातःसुगंधःप्रियदर्शनः ॥ आहारःसर्वदेवानांभास्करस्यविशेषतः ॥ ५५ ॥ यद्बीजंजगतःकिंचित्तज्ज्ञेयंक्षीरसंभवम् ॥ दध्नःसर्वाणिजाता
निमांगल्यान्यर्थसिद्धये ॥ ५६ ॥ घृतादमृतमुत्पन्नममराणामतिप्रियम् ॥ तस्माद्घृतेनपयसादध्नायःस्नापयेद्रविम् ॥ ५७ ॥ तदंतेचोष्ण
तोयेनकषायैश्चात्रिरूषयेत् ॥ स्नाप्यशीतांबुनापश्चाद्द्रानुरोचनयालभेत् ॥ ५८ ॥ पूजयेद्बिल्वपत्रैश्चपद्मैर्नीलोत्पलैस्तथा ॥ अर्घ्यंदद्यात्त
तःपश्चात्सवज्रंगुग्गुलुंखग ॥ ५९ ॥ पायसंदधिभक्तंचवज्रंचमधुनासह ॥ निवेदयेच्चसद्भक्त्याभक्ष्याणिविविधानिच ॥ ६० ॥ कृत्वाप्रदक्षि
णंपश्चात्प्रणिपत्यक्षमापयेत् ॥ अनेनविधिनाभानुंषडंगेनदिवस्पतिम् ॥ ६१ ॥ इहलोकेपरेचैवसर्वान्कामान्समगच्छति ॥ षडंगविधिनातं
चपूज्यैवंसुमनारविम् ॥ ६२ ॥ स्वर्गंनयेत्सधीमांस्तुकुलानामेकविंशतिम् ॥ स्वर्गेस्थाप्यस्वयंगच्छेज्ज्योतिषंनामतत्पदम् ॥ ६३ ॥ अंशे
नभोजकावीरदेवकार्येनियोजिताः ॥ प्रयांतिस्वामिनासार्धंश्रीमद्भानुंपरंमहत् ॥ ६४ ॥ भुक्त्वाभोगांस्तुविपुलान्भोजकोभोगसंमितः ॥
कालात्पुनरिहायातःपृथिव्यामेकराड्भवेत् ॥ ६५ ॥ पुष्पंपत्रंफलंतोयंयद्दत्तंभास्करार्चने ॥ सौरागावश्चगच्छंतिसूर्यलोकंनसंशयः ॥६६॥

यःपिबेद्भोजनेधेनोरदत्वाभानवेपयः ॥ सगच्छेन्नरकंघोरमकुर्वंस्तपनंरवेः ॥६७॥ एककालंपिबेत्क्षीरंधेनूनांभास्करस्यतु ॥ अनेनस्नापयेद्देवं
क्षीरेणखगसत्तम ॥ ६८ ॥ प्रत्यूषेयद्भवेत्क्षीरंधेनूनांभास्करस्यतु ॥ स्नापयेत्तेनवैभानुंकृत्स्नेनगरुडध्वज ॥ ६९ ॥ यस्तुलोकोभजेत्सर्वंनदे
वायानिवेदयेत् ॥ यावंतिरोमकूपाणिगवांदेहेखगाधिप ॥ ७० ॥ तावद्वर्षसहस्राणिनरकेपच्यतेखग ॥ पूजितंपूज्यमानंवायःकश्चिच्छ्रद्धयार
विम् ॥ ७१ ॥ श्रुत्वानुमोदतेयस्तुसयज्ञफलमश्नुते ॥ भास्करंपूजितंदृष्ट्वासर्वपापैःप्रमुच्यते ॥ ७२ ॥ हर्षात्प्रणम्ययःसैभानुंत
स्यलोकेमहीयते ॥ पूज्यमानंरविंभक्त्यायःपश्येन्मानवःखग ॥ ७३ ॥ सोऽपियज्ञफलंकृत्स्नंप्राप्नुयान्नात्रसंशयः ॥ श्रुत्वानुमो
दतेयस्तुपूज्यमानंदिवाकरम् ॥ ७४ ॥ तत्सर्वंफलमाप्नोतिप्रसादाद्भास्करस्यतु ॥ एकजन्मानुगंदानंभक्त्यायच्चनिवेदितम् ॥ ७५ ॥
जपयज्ञादियुक्तेभ्यःसहस्रभाविकंस्मृतम् ॥ आभूतसंप्लवस्थायिप्रदानंजयजीविनाम् ॥ ७६ ॥ अत्यल्पमपियद्दत्तंवाचकायखगाधिप ॥ त
न्महाप्रलयंयावद्दातुर्भोगायकल्पते ॥ ७७ ॥ नदानमल्पंबहुधाकिंचिदस्तिविजानताम् ॥ देशकालविधिश्रद्धापात्रयुक्तंतदक्षयम् ॥७८॥
पात्रेदेशेचकालेचाविधिनाश्रद्धयाचयत् ॥ दत्तंहुतंकृतंचैवतदनंतफलंभवेत् ॥ ७९ ॥ तिलार्धमपियद्वीरदीयतेश्रद्धयाद्विज ॥ सत्पात्रेवि
धिवद्भक्त्यातद्भवेत्सर्वकामिकम् ॥ ८० ॥ यत्स्नातंज्ञानसलिलैःशीलभस्मप्रमार्जितम् ॥ तत्पात्रंसर्वपात्रेभ्यउत्तमंपरिकीर्तितम् ॥ ८१ ॥
जपोदमोयमःपुंसांत्रातासंसारसागरात् ॥ अज्ञानांपापनेत्राणांतत्पात्रंपरमंस्मृतम् ॥ ८२ ॥ ज्ञानप्लवेनचोपेतंशास्त्रंपापमहार्णवात् ॥ अ
ज्ञान्संतारयेन्नूनंकिंशिलातारयेच्छिलाम् ॥ ८३ ॥ द्विजानांवेदविदुषांकोटिसंभोगियत्फलम् ॥ हंतकारप्रदानेनतत्फलंजयजीविने ॥ ८४ ॥
जीवोयस्यैत्यचगृहेगृहेभुनक्तिसत्कृतः ॥ कुलमुत्तारयेत्तस्यनरकार्णवसंस्थितम् ॥ ८५ ॥ यज्ञाग्निहोमतीर्थेषुयत्फलंपरिकीर्तितम् ॥ ज
यिनामन्नदानेनतत्समग्रंफलंलभेत् ॥ ८६ ॥ भोजकेशांतचित्तायपरिध्यानरतायच ॥ श्रद्धयान्नंसकृद्दत्वासर्वपापैःप्रमुच्यते ॥ ८७ ॥ जा
पकाञ्छांतिसंयुक्तानादित्यार्पितचेतसान् ॥ भोजयित्वासकृद्भक्त्यासर्वान्कामानवाप्नुते ॥ ८८ ॥ ध्यायमानोरवेःसूक्तंभोजयेत्सततंचयः ॥
ततःसाक्षादनेनैवतद्भुक्तमशनंभवेत् ॥ ८९ ॥ पितृनुद्दिश्ययःश्राद्धेभोजयेद्भोजकोनरः ॥ संस्थानंसमवाप्नोतिभानवीयमसंशयः ॥ ९० ॥
इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेधेनुमाहात्म्यवर्णनंनामसप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥ ७ ॥ ॥

सनाश्वउवाच॥ ॥सूर्यायसर्वपाकान्नंनिवेद्याग्नौचहोमयेत्॥हुत्वाग्नौप्रक्षिपेद्धीरबलिंदिक्षुसमंततः॥१॥सूर्याग्निगुरुविप्राणांसर्वपाकान्नमन्वहम्॥
योनिवेद्यात्मनाभुंक्तेसभुंक्तेकिल्बिषंनरः॥२॥ कृषिपाल्येचवाणिज्येक्रोधसत्यक्षयादिभिः ॥ पुंसांपापानिवर्धंतेसूनादोषैश्चपंचभिः॥ ३ ॥
कंडनीपेषणीचुल्लीउदकुंभःप्रमार्जनी ॥ पंचसूनागृहस्थस्यतेनस्वर्गंनगच्छति ॥ ४ ॥ सूर्याग्निगुरुपूजाभिःपापैरेतैर्नलिप्यते ॥ अन्यैश्च
पातकैर्घोरैस्तस्मात्संपूजयेत्सदा॥ ५ ॥ सूर्याग्निगुरुनैवेद्यंयावच्छक्त्यानसंख्यया ॥ तावद्वर्षसहस्राणिदातासूर्यपुरेवसेत्॥ ६ ॥ घृतपूप
युतैःसिक्तैःपुण्यंदशगुणोत्तरम् ॥ अवदंशगुणैर्युक्तंपुण्यंशतगुणंखग ॥ ७ ॥ षष्टिकौदननैवेद्यंसहस्रगुणितंफलम्॥ सुगंधशालिनैवेद्यंवि
ज्ञेयमयुतोत्तरम्॥ ८ ॥ भक्ष्यान्नपानदानानितत्फलानितथातथा ॥ यद्वातद्वासदादेयंसूर्याग्निगुरुसाधुषु ॥ ९ ॥ भक्षान्निवेद्यपूर्वोक्तम
क्षयंलभतेफलम्॥ एवंयःकुरुतेभक्तिंदेवदेवेदिवाकरे ॥ १० ॥ सपितृन्तसर्वपापेभ्यःसमुद्धृत्यदिवंनयेत् ॥ गंगास्नानमिदंपुण्यंदर्शना
त्प्राप्नुयाद्रवेः ॥ ११ ॥ सर्वतीर्थाभिषेकंचप्रणामाद्विंदतेखग॥ मुच्यतेसर्वपापेभ्यःप्रणम्यशिरसारविम्॥ १२ ॥ शुश्रूषयीतसंध्यायांसूर्य
लोकेमहीयते॥ युगपत्पूजितास्तेनब्रह्मविष्णुमहेश्वराः ॥ १३ ॥ पितरःसर्वदेवाश्चभवेयुःपूजितारवौ॥ तुष्यंतिपितरस्तस्यसुकृष्टेनेवक
र्षुकाः॥ १४ ॥ यःश्राद्धेभोजयेद्भक्त्याब्राह्मणंजयजीविनम् ॥ अपिनःसकुलेकंचिदुद्धरेत्किंखगेश्वर ॥ १५ ॥ यःसंपूज्यरविंश्राद्धेभो
जयेज्जयजीवनम्॥ तृप्यंतिपितरस्तस्यगायंतिचापितामहाः ॥ १६ ॥ अद्यनःसकलप्राज्ञोवाचकंभोजयिष्यति ॥ पुराणविदमायांतंदृष्ट्वैव
सहसंस्थिताः॥ १७ ॥ क्रीडंत्योषधयःसर्वायास्यामःस्वर्गमक्षयम्॥ अनुग्रहायलोकानांश्रद्धायाश्चपरीक्षणे ॥ १८ ॥ चरंत्यतिथिरूपे
णपितरोदेवतास्तथा॥ तस्मादतिथिमायांतमग्रेगच्छेत्कृतांजलिः ॥ १९ ॥ स्वागतासनपाद्यार्घ्यस्नानान्नशयनादिभिः॥ रूपान्वितंवि
रूपंवामलिनंमलिनांबरम्॥ २० ॥ वेलायामतिथिंप्राप्तंपंडितोनविचारयेत् ॥ भोजकानांशरीरेषुनित्यंसन्निहितोरविः॥ २१ ॥ येभो
जकंत्यजंत्यन्येसर्वपापेष्ववस्थिताः॥ अधोमुखार्द्धपादास्तेपतंतिनरकाग्निषु ॥ २२ ॥ कृमिभिर्भिन्नवदनास्ताप्यमानाश्चवह्निना ॥ पी
ड्यंतेचायुधैर्घोरैर्यावदिंद्राश्चतुर्दश॥ २३ ॥ येचापवादंशृण्वंतिविमूढाब्राह्मणेषुवै ॥ तेविशेषेणपच्यंतेनरकेषुमदिच्छया॥ २४ ॥ सर्वे

षामेवपात्राणांसत्पात्रंजयदंपरम् ॥ तस्मात्सर्वप्रयत्नेनपूजयेत्सुसमाहितः ॥ २९ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरे
धर्मेषुभोजकसत्कारवर्णनंनामाष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ छ ॥ ॥ सप्ताश्वतिलकउवाच ॥ ॥ आमपात्ररसा
यद्वन्नश्यंतेनश्यभाजनम् ॥ जपोपेक्षेतथादानंसहपात्रेणनश्यति ॥ १ ॥ सद्बीजमूषरेयद्वद्वापितंनिष्फलंभवेत् ॥ भस्मनीवहुतंहव्यंयथा
हेतुमतःफलम् ॥ २ ॥ जपेनरहितेविप्रेतथादानंनिरर्थकम् ॥ यथाषंढोऽफलःस्त्रीषुयथागौर्गवेचाफला ॥ ३ ॥ ब्राह्मणस्यतथाजन्मजपही
नस्यनिष्फलम् ॥ लोहोडुपेनप्रतरन्निमज्जत्युदकेयथा ॥ ४ ॥ तथादाताग्रहीताचपतत्यंधेतमस्यथ ॥ कारुण्यात्सर्वभूतेषुश्रद्धयायत्प्रदी
यते ॥५॥ दानंतद्वैखगज्ञेयंसर्वकामिकमुत्तमम् ॥ दीनांधकृपणानांचबालवृद्धातुरेषुच ॥ ६ ॥ यद्दीयतेखगश्रेष्ठतस्यानंतफलंलभेत् ॥ नहि
स्वार्थंसमुद्दिश्यप्रतिगृण्हंतिसाधवः ॥ ७ ॥ दातुरेवोपकारायजगृहुःश्रावणादयः ॥ दातुरेवोपकारायवदत्यर्थींददस्वमे ॥ ८ ॥ यस्माद्दाता
प्रयात्यूर्ध्वमधस्तिष्ठेत्प्रतिग्रही ॥ देहीत्यवददत्यर्थीधनंबोधयतीवसः ॥ ९ ॥ यदहंकृतमर्थित्वंप्रगेदानफलंहितत् ॥ बोधयंतिचयाचंतिदे
हीतिकृपणाजनाः॥१०॥अवस्थेयमदानस्ययद्याचंतेगृहेगृहे ॥आयात्यर्थीगृहंयातुकस्तेनप्रतिपूजयेत्॥ कोयमर्थीनपूज्यःस्याद्याचमानोदिने
दिने ॥ ११ ॥ यद्बलादप्यनिच्छंतंयोजयंतिनराश्रयान् ॥ अहन्यहनियाचंतेदातुस्तेदर्शयंतिहि ॥ १२ ॥ एकस्तिष्ठेतिचाधस्तादन्यश्चोपरि
तिष्ठति॥दातृयाचकयोर्भेदःकराभ्यामेवसूचितः॥१३॥यःप्राप्तमर्थिनंदानंत्यक्त्वापात्रमुदीक्षते॥सर्वकर्मसुयुक्तत्वान्नदातापारमार्थिकः॥१४॥
यद्यर्थिनोनरानस्युर्दानधर्मःकथंभवेत् ॥ तदर्थिषुभवेद्दानंस्वागतंस्वागतंप्रियम् ॥ १५ ॥ पादोदकमनुव्रज्यात्स्वर्गसोपानसप्तकम् ॥ चिंता
चिंतानुरूपेणकदाकस्यविनेष्यति ॥ १६ ॥ ग्रासादर्धमपिग्रासंयुक्तंदातुंसदार्थिनाम् ॥ दानंप्रियविनिर्मुक्तंनष्टमाहुर्मनीषिणः ॥ १७ ॥
तस्मात्सत्कृत्यदातव्यमनंतफलमिच्छता ॥ प्रेत्याख्यानमपिश्रेयःप्रियानुनयपेशलम् ॥ १८ ॥ नतद्दानमसत्कारपारुष्यमलिनीकृतम् ॥
वरंनदत्तमर्थिभ्यःसंक्रुद्धेनांतरात्मना ॥ १९ ॥ नतद्धनंनचप्रीतिर्नधर्मःप्रियवर्जितः ॥ दानप्रदाननियमयज्ञध्यानंहुतंतपः ॥ २० ॥ यत्ने
नापिकृतंसर्वंक्रोधोऽस्यनिष्फलंखग ॥ यःश्रद्धयार्चितंदद्यात्प्रतिगृह्णातिचार्चितम् ॥ २१ ॥ तावुभौगच्छतःस्वर्गंनरकंतद्विपर्ययात् ॥

औदार्यंस्वागतंमैत्रीमनुकंपाममत्सरम् ॥ २२ ॥ पंचभिस्तुगुरौदानंदातुर्दानंमहाफलम् ॥ वाराणसीकुरुक्षेत्रंप्रयागंपुष्कराणिच ॥ २३ ॥
गंगातटंसमुद्रंचनैमिषारण्यमेवच ॥ मूलस्थानंमहापुण्यंपुंडीरस्वामिनंतथा ॥ २४ ॥ कालप्रियंखगश्रेष्ठक्षीरिकावासमेवच ॥ इत्येतेकीर्ति
तादेशाःसुरसिद्धनिषेविताः ॥ २५ ॥ सर्वेसूर्याश्रमाःपुण्याःसर्वानद्यःसपर्वताः ॥ गोसिद्धमुनिवासाश्चदेशाःपुण्याःप्रकीर्तिताः ॥ २६ ॥
सूर्यायतनसंस्थानांयद्यदल्पंतुदीयते ॥ तदनंतफलंज्ञेयंवचःक्षेत्रानुभावतः ॥ २७ ॥ ग्रहणंचंद्रसूर्याभ्यामुत्तरायणमुत्तमम् ॥ विषुवंसव्य
तीपातंषडशीतिमुखंतथा ॥ २८ ॥ दिनच्छिद्राणिसंक्रांतिःपुण्यंविषुपदंखग ॥ इतिकालःसमाख्यातःपुंसांपुण्यविवर्धनः ॥ २९ ॥ भक्ति
भावपराप्रीतिर्धर्मेधर्मैकभावनः ॥ प्रतिपत्तिरितिज्ञेयंश्रद्धापर्यायपंचकम् ॥ ३० ॥ श्रद्धयाविधिवत्पात्रेप्रतिपादितमुत्तमम् ॥ तस्माच्छ्रद्धां
समास्थायदेयमक्षयमिच्छता ॥ ३१ ॥ यद्दानंश्रद्धयापात्रेविधिवत्प्रतिपादितम् ॥ तदनंतफलंज्ञेयमपिवाभारमात्रकम् ॥ ३२ ॥ आर्ते
षुदीनेषुगुणान्वितेषुयच्छ्रद्धयास्वल्पमपिप्रदत्तम् ॥ यःसर्वकामान्समुपैतिलोकाञ्छ्रद्धैवदानंप्रवदंतितज्ज्ञाः ॥ ३३ ॥ श्रद्धादानंपरंज्ञेयं
श्रद्धाएवतपःपरा ॥ श्रद्धांयज्ञमुशंतीहश्रद्धापरमुपोषितम् ॥३४॥ अथाहिंसाक्षमासत्यंह्रीःश्रद्धेंद्रियसंयमः ॥ दानमिष्टंतपोध्यानंदशकंधर्म
साधनम् ॥ ३५ ॥ हंत व्यस्तैःसमस्तैर्वासूर्यधर्मैरनुष्ठितैः ॥ सूर्यौकःस्थानसंप्राप्तिर्गतिरर्कैःप्रकीर्तिता ॥ ३६ ॥ यथाभूःसर्वभूतानांशं
तेरतिशयःस्मृतः ॥ कुर्यात्पुण्यंमहत्तस्मान्ममलोकेप्सयासुधीः ॥३७॥ परस्त्रीद्रव्यसंकल्पंयःसापेक्षंकरोतिच ॥ गुरुमार्तमशक्तंवाविदेशेप्रस्थितं
तथा ॥ ३८ ॥ अरिभिःपरिभूतंचसंत्यजेच्चैवपापकृत् ॥ तद्भार्यामित्रपुत्रेषुयश्चावज्ञांकरोतिच ॥ ३९ ॥ इत्येतत्पातकंज्ञेयंगुरुनिंदासमंभ
वेत् ॥ ब्रह्मघ्नश्चसुरापीचस्तेयीचगुरुतल्पगः ॥४०॥ महापातकिनस्त्वेतेतत्संयोगीचपंचमः ॥ क्रोधाद्द्वेषाद्भयाल्लोभाद्ब्राह्मणस्यवदेतयः ॥४१॥
प्राणांतिकंमहादोषंब्रह्महासउदाहृतः ॥ ब्राह्मणंचसमाहूययाचमानमकिंचनम् ॥४२॥ यन्नास्तीतिचयोब्रूयात्सचाण्डालउदाहृतः ॥ देवद्विजगवां
भूमिंपूर्वदत्तांहरेतयः ॥ ४३ ॥ प्रणष्टामपिकालेतुतमाहुर्ब्रह्मघातकम् ॥ अधीत्ययोरवेर्ज्ञानंपरित्यजतिमंदधीः ॥४४॥ सुरापेनसमंज्ञेयंतस्य
पापंचसुव्रत ॥ अग्निहोत्रपरित्यागंपंचयज्ञियकर्मणाम् ॥४५॥ मातापितृपरित्यागंकूटसाक्ष्यंसुहृद्वधः ॥ अप्रियंसूर्यभक्तानामभक्ष्यस्यचभ

क्षणम् ॥ ४६ ॥ एवंनिरपराधानांप्राणिनांचप्रमारणम् ॥ सर्वाधिपत्यमेतेषांनास्तिदेवपुरोत्तमे ॥ ४७ ॥ आत्माभोगाधिपत्यंस्याद्भानुः
सर्वजगत्पतिः ॥ केचिदत्रैवमुच्यंतेज्ञानयोगपरानराः ॥ ४८ ॥ आवर्ततेपुनश्चान्येसंसारेभोगतत्पराः ॥ तस्माद्विमोक्षमन्विच्छन्भोगा
सक्तिंविवर्जयेत् ॥४९ ॥ विरक्तःशांतचित्तात्मासौरलोकेमवाप्नुते ॥ येचाप्यसकृद्धृदयाजपंतीमंप्रसंगतः ॥ ५०॥ तेषामपिवदत्येकःस्वानु
भावानुरूपतः ॥ तन्नार्चयंतियेभानुंसकृदुच्छिष्टदेहिनः ॥ ५१ ॥ तेषांपिशाचलोकेतुभोगान्भानुःप्रयच्छति ॥ द्विजपंतिचयेभानुंक्रूराः
संक्रुद्धलोचनाः ॥ ५२ ॥ रक्षोलोकेरविस्तेषांमहाभाग्यंप्रयच्छति ॥ त्रिरर्चयंतियेभानुंमद्यमांसरतानराः ॥ ५३ ॥ ऋषिलोकेरविस्तेषां
भोगान्दिव्यान्प्रयच्छति ॥ येनृत्यगीतंकुर्वीतित्रिचतुर्थायदृच्छया ॥ ५४ ॥ सूर्यस्याग्रेतुतेयांतिगंधर्वभवनंखग ॥ लोकाःख्यातिंसमुद्दिश्य
पूजयंतिचगोपतिम्॥५५॥तस्येंद्रभवनेभानुःकामान्सर्वान्प्रयच्छति॥कामासक्तेनचित्तेनयःषडर्चयतेरविम् ॥५६॥ प्राजापत्येरविस्तस्यलो
केभोगान्प्रयच्छति ॥ नवकृत्वोर्चयेद्यस्तुचित्रभानुंखगाधिप ॥ ५७ ॥ सयातिविष्णुसालोक्यंविष्णुनाचसहासते ॥ तस्मादपिपरंस्थानंय
द्भूतानांमनोहरम् ॥५८ ॥ अप्रमेयगुणैर्दिव्यैर्विमानैःसर्वकामिकैः ॥ असंख्यैर्वस्तुभिर्व्याप्तंगैरिकैरक्तचित्रकैः ॥ ५९ ॥ नानागृहसमाकीर्णं
सूर्यकोटिसमप्रभम् ॥ तत्स्थानंतेप्रयच्छंतिअर्चयंतिचयेद्विजान् ॥६०॥तत्रलोकेखगश्रेष्ठवसंतिचरमंतिच ॥ तस्मादपिपरंस्थानंज्योतिष्कं
सौरमुच्यते ॥ ६१ ॥ एवंसूर्यानुभावेननिकृष्टेनापिकर्मणा ॥ नरैःस्थानान्यवाप्यंतेश्रद्धाभावानुरूपतः ॥६२॥ इति श्रीभविष्येमहापुराणे
ब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषुसप्ताश्वानूरुसंवादएकोननवत्यधिकशततमोऽध्यायः॥१८९॥ ॥ सप्ताश्वतिलकउवाच ॥ तारारूपविमा
नानामिमाःसंतिचकोटयः ॥ यःकुर्यात्तुनमस्कारंनतस्यैवफलंभवेत् ॥१॥ इत्येतागतयःप्रोक्तामहत्यःसौरधर्मिणाम्॥ तस्मात्सौरःसदाधर्मः
कर्तव्यःसुखमिच्छता॥२॥ इदानींपापनिचयाःस्थूलानरकहेतवः ॥ तेसमासेनकथ्यंतेमनोवाक्कायसाधनैः ॥३ ॥ गवांमार्गेवनेचाग्निपुरग्रामे
चखेचर ॥ इत्येतानीहपापानिसुरापानसमानिच ॥ ४ ॥ वनेसर्वस्वहरणंनरस्त्रीगजवाजिनाम् ॥ गोभूसमीपजातानामोषधीनांचखेचर ॥५॥
चंदनागुरुकर्पूरकस्तूरीपट्टवाससाम् ॥ हस्तन्यासापहरणंरुक्मस्तेयसमंस्मृतम् ॥ ६ ॥ कन्यानांवरयोग्यानामाकर्षणमसंगतः ॥ पुत्रामि

त्रकलत्रेषुगमनंभगिनीषुच ॥ ७ ॥ कुमारीसाहसंघोरमंत्यजस्त्रीनिषेवणम् ॥ सवर्णयोश्चगमनंगुरुतल्पसमंस्मृतम् ॥ ८ ॥ महापातक
तुल्यानिपापान्युक्तानियानितु ॥ तानिपातकसंज्ञानिनपुनंत्युपपातकम् ॥ ९ ॥ द्विजायार्थंपरिश्रुत्यनप्रयच्छतियोद्विज ॥ सद्भार्याणांचसं
त्यागःसाधुबंधुतपस्विनाम् ॥ १० ॥ गोभूहिरण्यवस्त्राणामपहारःप्रयत्नतः ॥ ईश्वरार्पितबुद्धीनांपीडनंसुमहत्कृतम् ॥ ११ ॥ यःपीडा
माश्रमस्थानआचरेत्कलिपिकामपि ॥ तद्भृत्यपरिभूतस्यपशुधान्यधनस्यच ॥१२॥ कूपधान्यपशुस्तेयमयाज्यानांचयाजनम् ॥ यज्ञाराम
तडागानांदारापत्यस्यविक्रयम् ॥ १३ ॥ तीर्थयात्रोपवासानांव्रतेचजपकर्मणि ॥ स्त्रीधनान्यपकुर्वंतियेजनाःपापकर्मणा ॥ १४ ॥ अरक्षणं
चनारीणांमद्यपस्त्रीनिषेवणम् ॥ ऋषीणामप्रदानंचधान्यवृद्ध्यचपसेवनम् ॥ १५॥ देवाग्निसाधुसाध्वीनांनिंदागोब्राह्मणस्यच ॥ प्रत्यक्षंवापरो
क्षंवाराजमांडलिकानापि ॥ १६ ॥ उत्सन्नपितृदेवाश्चस्वकर्मत्यागिनश्चये ॥ दुःशीलानास्तिकाःपापाःसदसच्छून्यवादिनः ॥ १७ ॥ एवंका
लेप्रवृत्तेतुवियोनौपशुयोनिषु ॥ रजस्वलास्वयोनौतुमैथुनंयःसमाचरेत् ॥ १८ ॥ स्त्रीपुत्रमित्रसंप्रीतेरारामोच्छेदकाश्चये ॥ जनस्याप्रिय
वक्तारोजनाभिप्रायभेदिनः ॥ १९ ॥ भेत्तातडागवप्राणांसंक्रमाणांरसस्यच ॥ एकपंक्तिस्थितानांचपंक्तिभेदंकरोतियः ॥ २० ॥
इत्येतेतुनराःपापैरुपपातकिनःस्मृताः ॥ २१ ॥ इतिश्रीभविष्येमहापुराणेसप्तमीकल्पेसौरधर्मेषुसूर्यानूरुसंवादेनवत्यधिकशततमोऽ
ध्यायः ॥ १९० ॥ छ ॥ ॥ सत्राश्वातिलकउवाच ॥ येगोब्राह्मणसस्यानांसाधूनांतुतपस्विनाम् ॥ दूषकाश्चैववर्ततेनरानरकगामिनः ॥ १ ॥
परिश्रमेणतप्यंतेयेऽपरेतस्यसूचकाः ॥ परदाररतानांचकन्यायादूषकाश्चये ॥ २ ॥ गोष्ठाग्निजलरम्यासुतरुच्छायानगेषुच ॥ त्यजंतिये
पुरीषाणिआरामायतनेषुच ॥ ३ ॥ मद्यपानरतानित्यंगीतवाद्यरतानराः ॥ कामक्रोधमदाविष्टारंध्रान्वेषणतत्पराः ॥ ४ ॥
पाखंडमतसंयुक्तावृथासंलापकौतुकाः ॥ येमार्गानुपरुंधंतिपरसीमांहरंतिच ॥ ५ ॥ कूटशासनकर्तारःकूटकर्मकृतोनराः ॥ धनुषःशि
लिपशस्त्राणांयःकर्तायश्चविक्रयी ॥ ६ ॥ निर्दयोतीवभृत्येषुपशूनांदमकश्चयः ॥ मिथ्याप्रवदतोवाचमाकर्णयतियःशनैः ॥ ७ ॥ स्वामि
मित्रगुरुद्रोहीमायावीचपलःशठः ॥ येभार्यापुत्रमित्राणिबालवृद्धकृशातुरान् ॥ ८ ॥ भृत्यानतिथिबंधूंश्चत्यजंतिचबुभुक्षितम् ॥ यःस्वयं

पक्कमश्नातिविप्रायान्नंनयच्छति ॥ ९ ॥ वृथापाकःसविज्ञेयोब्रह्मवादिषुगर्हितः ॥ नियमंस्त्वयमादाययेत्यजंतिजितेंद्रियाः ॥ १० ॥
प्रव्रज्यावसितायेचरहस्यानांतुभेदकाः ॥ येताडयंतिगांमूढात्रासयंतिमुहुर्मुहुः ॥ ११ ॥ दुर्बलंनचपुष्णंतिप्रनष्टांनान्विषंतिच ॥
पीडयंत्यतिभारेणअक्षयंवाहयंतिच ॥ १२ ॥ वृषाणांवृषणान्यन्येपापिष्ठागालयंतीह ॥ वाहयंतिचगांवंध्यांतेपापिष्ठानराधमाः
॥ १३ ॥ अनर्थंविकलंहीनंबालवृद्धकृशानुगम् ॥ नानुकंपंतियेमूढास्तेयांतिनरकंनराः ॥ १४ ॥ अजाविकोमाहिषकाःसवित्रोवृषलीप
तिः ॥ क्षत्रविट्शूद्रवृद्धाश्चस्वधर्मविहताःसदा ॥ १५ ॥ शिल्पिनःकारुकावेश्याःक्षेमकारनृपध्वजाः ॥ नर्तकग्राज्योतिषिहताःसर्वेनरकगा
मिनः ॥११६॥ घृततैलानुपानानिमधुमांसरसासवम् ॥ गुडेक्षुक्षीरशाकानिदधिमूलफलानिच ॥१७॥ तृणानिकाष्ठपुष्पाणिबीजौषधिमनुत्त
मम् ॥ उपानत्क्षत्रशकटमासनंशयनंमृदा ॥ १८॥ ताम्रंसीसंत्रपुंकांस्यंशंखाद्यंचजलोद्भवम् ॥ वार्क्षंवावैणवंवापिगृहोपकरणानिच ॥ १९ ॥
ऊर्णकार्पासकौशेयभंगपट्टोद्भवानिच ॥ स्थूलसूक्ष्माणिसंमूढायेचलोकाहरंतिच ॥ २० ॥ एवमादीनिचान्य निद्रव्याणिविविधानिच ॥
नरकेषुध्रुवंगच्छेद्योह्यत्रविहितःपुरा ॥२१॥ यद्वातद्वातुपारोक्ष्यमपिसर्षपमात्रकम्॥अपहृत्यनरोयातिनरकंनात्रसंशयः ॥२२॥एवमाद्यैर्नरैः
पापैरुत्क्रांतिसमनंतरम् ॥ शरीरयातनार्थंयत्पूर्वंकारमवाप्नुते ॥ २३ ॥ यमलोकेव्रजेदेवंशरीरेणयमाज्ञया ॥ यमदूतैर्महाघोरैर्नीयमानःसदुः
खितः ॥ २४ ॥ देवमानुषजीवानामधर्मनिरतात्मनाम् ॥ धर्मराजःस्मृतःशास्तासुघोरैर्विविधैर्वधैः ॥ २५ ॥ विनयाभावयुक्तानांप्रमादात्
तस्खलितात्मनाम् ॥ प्रायश्चित्तैर्बहुविधैःपातकंनष्टतामियात् ॥ २६ ॥ पारदारिकचोराणामन्यायव्यवहारिणाम् ॥ शास्ताक्षितिपतिःप्रो
क्तःप्रच्छन्नानांचधर्मराट् ॥ २७ ॥ तस्मात्कृतस्यपापस्यप्रायश्चित्तंसमाचरेत् ॥ नाभुक्तस्यान्यथानाथःकल्पकोटिशतैरपि ॥ २८ ॥
यःकरोतिस्वयंकर्मकारयेदनुमोदयेत् ॥ कायेनमनसावाचासर्वंह्यदुत्तमंसुखम् ॥२९ ॥ इति संक्षेपतःप्रोक्तापापभेदात्त्रिधागतिः ॥ तथान्या
गतयश्चित्राःकथ्यंतेकर्मभेदतः ॥ ३० ॥ इति श्रीभविष्येमहापुराणेसप्तमीकल्पेसौरधर्मेसत्ताश्वातिलकारुणसंवादएकनवत्याधिकशततमोऽ
ध्यायः ॥१९१॥ छ॥ सत्ताश्वातिलकउवाच ॥ संत्रासजननंघोरंपापानांपापकारिणाम् ॥ गर्भस्थैर्जायमानैश्चबालैस्तरुणमध्यमैः॥१॥स्त्रीपुंन

पुंसकैर्वृद्धैर्गंतव्यंसर्वजंतुषु ॥ शुभाशुभफलंतत्रभोक्तव्यंदेहिभिस्तथा ॥२॥ चित्रगुप्तादिभिःसर्वैर्धर्मस्थैःसत्यवादिभिः ॥ प्रोक्तंवैधर्मराजस्य
निकटेयच्छुभाशुभम् ॥ ३ ॥ अवश्यंहिकृतंकर्मभोक्तव्यंतद्विचारितम् ॥ तत्रयेशुभकर्माणःसौम्यचित्तादयान्विताः ॥ ४ ॥ तेनरायांतिसौ
म्येनयथायमनिकेतनम् ॥ यःप्रदद्याद्द्विजेंद्राणामुपानत्काष्ठछत्रकान् ॥ ५ ॥ सचधर्मेणमहतासुखंयातियथालयम् ॥ सोपानत्कोनरोयस्तु
देवायतनमाविशेत् ॥ ६ ॥ विशेषतोगर्भगृहंससंत्राससमुपाश्नुते ॥ सोपानत्कानिदानानितथान्नंतुविशेषतः ॥ ७॥ एवंदानविशेषेणधर्मराज
पुरंनरः ॥ तस्माद्यातिसुखेनैवतस्माद्धर्मंसमाचर ॥ ८ ॥ येपुनःक्रूरकर्माणोनराःपापरताःखग ॥ तेघोरेणतथायांतिदक्षिणेनयमालयम्
॥ ९ ॥ षडशीतिसहस्राणियोजनानामशीतिच ॥ वैवस्वतपुरंज्ञेयंनानारूपमितिस्थितम् ॥ १० ॥ समीपस्थमिवाभातिनराणांशुभचारि
णाम् ॥ पापानामतिदूरस्थंपथारौद्रेणगच्छताम् ॥ ११ ॥ तीक्ष्णकंटकयुक्तेनशर्करानिचितेनच ॥ क्षुरधारातैनिस्त्रिंशैःपाषाणैश्चातितेन
च ॥१२॥ क्वचितांकेनमहतादुरंतैश्चैवखातकैः ॥ लोहशंकुभिःसंच्छिन्नास्तथावज्रैःसमन्वितैः ॥१३॥ ततःपतंतिविमलैःपर्वतैर्वृक्षसंकुलैः ॥
प्रेतप्राकारयुक्तेनयांतिमार्गेणदुःखिताः ॥ १४ ॥ क्वचिद्विषमगर्ताभिःक्वचलोष्ठैःसपिच्छलैः ॥ सुतप्तवालुकाभिश्चतथातीक्ष्णैश्चशंकुभिः
॥ १५ ॥ अनेकशाखारचितैर्व्याप्तैर्वंशवनैःक्वचित् ॥ कष्टेनतमसामार्गेअनालंबेसुदारुणे ॥ १६ ॥ अथशृंगाटकैर्व्याप्तैःक्वचिद्दावाग्निना
पुनः ॥ क्वचित्तप्तशिलाभिश्चक्वचिद्व्याप्तंहिमेनतु ॥ १७ ॥ क्वचिद्वालुकयाव्याप्तमाकंठांतंप्रवेशयेत् ॥ क्वचिद्दुष्टांबुनाव्याप्तंक्वचिच्चकरीषाग्नि
ना ॥ १८ ॥ क्वचित्सिंहैःक्वचिद्व्याघ्रैर्दंशैःकीटैश्चदारुणैः ॥ क्वचिन्महाजलौकाभिःक्वचिदाजगरैःपुनः ॥ १९ ॥ मक्षिकाभिश्चरौद्राभिः
क्वचित्सर्पैर्विषोल्बणैः ॥ महागजेंद्रयूथैश्चबलोन्मत्तैःप्रमाथिभिः ॥ २० ॥ पंथानमुल्लिखद्भिश्चतीक्ष्णशृंगैर्महावृषैः ॥ महाशृंगैश्चम
हिषैरुष्ट्रैर्मत्तैर्मदातुरैः ॥ २१ ॥ डाकिनीभिश्चरौद्राभिर्विकरालैश्चराक्षसैः ॥ व्याधिभिश्चमहाघोरैःपीड्यमानाव्रजंतिहि ॥ २२ ॥
महापाशविमिश्रेणमहाचंडेनवायुना ॥ महापाषाणवर्षेणहन्यमानानिराश्रयाः ॥ २३ ॥ क्वचिद्विद्युत्प्रपातेनदार्यमाणाव्रजंतिहि ॥ पत
द्भिर्वज्रसंघातैरुल्कापातैश्चदारुणैः ॥ २४ ॥ प्रदीप्तांगारवर्षेणदह्यमानाव्रजंतिहि ॥ महांधकारगुरुकेणपीड्यमानाव्रजंतिहि ॥ २५ ॥

महामेघरवैर्घोरैर्वित्रास्यंतेमुहुर्मुहुः॥तीक्ष्णपाषाणयुक्तेनपूर्यमाणाःसमंततः ॥ २६ ॥ महाक्षुरांबुधाराभिःसेव्यमानाव्रजंतिहि ॥ महामेघरवै
र्घोरैर्वित्रास्यंतेमुहुर्मुहुः ॥२७॥ भृशंशीतेनतीक्ष्णेनरूपेणमरुतेनच ॥ इत्थंमार्गेणरौद्रेणपाथेयरहितेनच ॥ २८ ॥ निरालंबेनदुर्गेणनिर्जनेनस
मंततः ॥ अविश्रामेणमहताविगतापायदुर्धरैः ॥ २९ ॥ नीयंतेदेहिनःसर्वेयेमूढाःपापकारिणः ॥ इतिज्ञात्वानरःकुर्यात्पुण्यंपापंचवर्ज
येत् ॥ ३० ॥ पुण्येनयातिदेवत्वंपापेननरकंव्रजेत् ॥ यैर्मनागपिदेवेशोमनसापूजितोरविः ॥ ३१ ॥ तेकदापिनपश्यंतियमस्यवदनंखग ॥
किंतुपापैर्महाघोरैःकिंचित्कालंतवाज्ञया ॥ ३२ ॥ भवंतिप्रेतराजानस्ततोयांतिरवेःपुरम् ॥ येपुनःसर्वभावेनप्रकाशंभुविभास्करम् ॥ ३३ ॥
नतेलिप्यंतिपापेनपद्मपत्रमिवांभसा ॥ तस्मात्प्रकुर्याद्भक्तिंवैभास्करेणसमंततः ॥ ३४ ॥ श्रद्धयापूजयेद्भानुंयइच्छेद्विपुलंधनम् ॥ ३५ ॥
इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेसप्ताश्वतिलकानूरुसंवादेद्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥छ॥ सप्ताश्वतिल
कउवाच ॥ अयनेविषुवेवारेसंक्रांतौग्रहणेतथा ॥ पूजयेत्सततंभानुंसप्तम्यांतुविशेषतः ॥ १ ॥ वैनतेयनिबोधत्वंविधानंसप्तमीव्रते ॥ एतद्धि
परमंगुह्यंरवेराराधनंपरम् ॥ २ ॥ सिद्धार्थकैस्तुप्रथमाद्वितीयाचार्कसंपुटैः ॥ तृतीयामारिचैःकार्याचतुर्थीतिचसप्तमी ॥ ३ ॥ सप्तम्यानोदने
वीरसप्तमीपरिकीर्तिता ॥ इत्येताःसप्तसप्तम्यःकर्तव्याभूतिमिच्छता ॥ ४ ॥ तथाचानुक्रमेतासांलक्षणंकथयाम्यहम् ॥ माघेवामार्गशीर्षेवा
कार्याशुक्लातुसप्तमी ॥ ५ ॥ आर्तस्यतुनानियमःपक्षमासकृतोभवेत् ॥ अर्धप्रहरशेषेतुकुर्याद्वैदंतधावनम् ॥ ६ ॥ पंचम्यांतत्रयेवृक्षाःकामि
कांस्तान्वदाम्यहम् ॥ मधुकेपुत्रलाभःस्याद्दुःखहाभार्गवस्यच ॥ ७ ॥ बदर्यांचबृहत्याचाक्षिप्रंरोगात्प्रमुच्यते ॥ ऐश्वर्यंचभवेद्बिल्वैःखादिरेण
चसंचयः ॥ ८ ॥ शत्रुक्षयंकदंबेषुअर्थलाभोतिमुक्तके ॥ गुरुतांयातिसर्वत्रआटरूषकसंभवैः ॥ ९ ॥ ज्ञातिप्रधानतांयातिअश्वत्थेयच्छते
यशः ॥ करवीरात्परिज्ञानमचलंस्यान्नसंशयः ॥ १० ॥ श्रियंप्राप्नोतिविपुलांशिरीषस्यानिवेशने ॥ प्रियंगुसेव्यमानस्यसौभाग्यंपरमं
भवेत् ॥ ११ ॥ अभीप्सितार्थसिद्ध्यर्थंसुखासीनोथवाग्यतः ॥ कामंयथेष्टंहृदयेकृत्वासमभिमंत्र्यच ॥ १२ ॥ मंत्रेणानेनमतिमानश्रीयाद्दं
तधावनम् ॥ वरंदत्वाभिजानासिकामदंचवनस्पते ॥ १३ ॥ सिद्धिंप्रयच्छमेनित्यंदंतकाष्ठनमोस्तुते ॥ त्रीन्वारान्परिजप्यैवंभक्षयेद्दंतधा

वनम् ॥ १४ ॥ पश्चात्प्रक्षाल्यकाष्ठंतुशुचौदेशेविनिक्षिपेत् ॥ ऊर्ध्वेनिपतितेसिद्धिस्तथाचाभिमुखेस्थिते ॥ १५ ॥ अतोन्यथातुपतितेआ
नीयात्पुनरुत्सृजेत् ॥ पराङ्मुखंयदिभवेत्रीन्वारान्दंतधावनम् ॥ १६ ॥ असिद्धांतुविजानीयान्नग्राह्यासातुसप्तमी ॥ ब्रह्मचारीतुतांरात्रींस्व
पेन्मंगलसेवया ॥ १७ ॥ विप्रद्वासोतुपहतंशुचिराचारसंयुतः ॥ तस्यांरात्र्यांव्यतीतायांप्रातरुत्थायवैखग ॥ १८ ॥ प्रक्षालयेन्मुखंधीमा
नश्नीयाद्दंतधावनम् ॥ उपविश्यशुचिर्भूत्वाप्रणम्याशिरसारविम् ॥ १९ ॥ जपंयथेष्टंकृत्वातुजुहुयाच्चहुताशनम् ॥ ततोपराह्णसमयेस्नात्वा
मृद्गोमयांबुभिः ॥ २० ॥ विधिवन्नियमंकृत्वामौनीशुक्लांबरःशुचिः ॥ पूजयित्वाविधिंभक्त्यादेवदेवंदिवाकरम् ॥ २१ ॥ स्वपेद्देवस्यपुरतो
गायत्रीजपतत्परः ॥ २२ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेदन्तकाष्ठविधिवर्णनंनामत्रिनवत्यधिकशततमोऽ
ध्यायः ॥ १९३ ॥छ॥ सप्ताश्वतिलकउवाच ॥ अतःपरंप्रवक्ष्यामियैर्यैर्यत्फलमश्नुते ॥ स्वप्नेदृष्टेतुसप्तम्यांपुरुषोनियतव्रतः॥१॥समाप्यविधि
वत्सर्वंजपहोमादिकांक्रियाम् ॥ भूमौशय्यांसमास्थायदेवदेवंविचिंतयेत् ॥ २ ॥ हंतसुप्तोयादिनरःपश्येत्स्वप्नेदिवाकरम् ॥ शक्रध्वजंवाचंद्रं
वातस्यसर्वाःसमृद्धयः ॥ ३ ॥ भृंगारचमरादर्शकनकाभरणानिच ॥ रुधिरस्यस्रुतिःकेशपातमैश्वर्यकारकम् ॥ स्वप्नेवृक्षाधिरोहंचक्षिप्रमै
श्वर्यमाहवे ॥ ४ ॥ दोहनंमहिषीसिंहीगोधेनूनांकरेस्वके ॥ बंधश्चासांराज्यलाभोनाभेःस्पर्शंतुदुर्मतिः ॥ ५ ॥ आविंहत्वास्वयंखादे
त्सिंहमंबुजमेवच ॥ स्वांगमस्थिहुताशंचसुरापानंखगाधिप ॥ ६ ॥ हैमेवाराजतेवापियोभुंक्तेपायसंनरः ॥ पात्रेतुपद्मपात्रेवातस्यै
श्वर्यंसमंभवेत् ॥ ७ ॥ द्यूतेचवाथवायुद्धेविजयोहिसुखावहः ॥ गायत्र्यस्यप्रज्वलनंशिरोबंधंचभूतये ॥ ८ ॥ माल्यांबराणांशुक्लानांहयानां
पशुपक्षिणाम् ॥ सदालाभंप्रशंसंतिविष्ठानांचानुलेपनम् ॥ ९ ॥ हययानेभवेत्क्षिप्रंरथयानेप्रजागमः ॥ नानाशिरोबाहुनाचगृहस्थांकुरुते
श्रियम् ॥ १० ॥ अगम्यागमनंधन्यंवेदाध्ययनमुत्तमम् ॥ देवद्विजश्रेष्ठवीरगुरुवृद्धतपस्विनः ॥ ११ ॥ यद्वदंतिनरंस्वप्नेसत्यमेवेतितद्वि
दुः ॥ प्रशस्तंदर्शनंचैषामाशीर्वादःखगाधिप ॥ १२ ॥ राज्यंस्यात्स्वशिरश्छेदेधनंबहुवधेभवेत् ॥ रुदितंभक्ष्यसंप्राप्तौराज्यंनिगडबंधने ॥
॥ १३ ॥ पर्वतंतुरगंसिंहंवृषभंगजमेवहि ॥ महदैश्वर्यमाप्नोतियोधिरुह्याधिरोहति ॥ १४ ॥ ग्रहमानोग्रहांस्तारांमरीचंपरिवर्तयेत् ॥

उन्मूलयतिपर्वतांश्वराजाभवतिभूतले ॥ १५ ॥ देहान्निष्क्रांतिरंत्राणांसर्वेषांचखगाधिप ॥ पानंसमुद्रसरितामैश्वर्यंसुखकारकम् ॥ १६ ॥
बलंचांबुनिधिंवापितीर्थपारंप्रयातियः ॥ तस्यापत्यंभवेद्वीरअचलंचखगाधिप ॥ १७ ॥ भवत्यथागमःशीघ्रंक्रमिर्वायदिभक्षयेत् ॥ अंगा
नांचसुरूपाणांलाभोदर्शनमेवच ॥ १८ ॥ संयोगश्चैवमांगल्यैरारोग्यंधनमेवच ॥ ऐश्वर्यराज्यलाभंचयास्मिन्स्वप्नेउदाहृतम् ॥ १९ ॥ त
त्तस्यान्नात्रसंदेहश्चतुर्भिःश्रुतमुत्तमम् ॥ पंचभिःपुत्रबाहुल्यंषड्भिरायुःसुताधनम् ॥ २० ॥ सप्तभिर्विविधान्कामानष्टाभिर्विविधंयशः ॥
॥ २१ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसूर्यारुणसंवादेस्वप्नवर्णनंनामचतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥ छ ॥
॥ ॥ अनूरुरुवाच ॥ ॥ भगवञ्छ्रोतुमिच्छामिसप्तमीनांपरंविधिम् ॥ सर्वासामनुरूपाणांकथयस्वमहामुने ॥ १ ॥ ॥ सप्ताश्वतिल
कउवाच ॥ ॥ शृणुवीरखगश्रेष्ठसप्तमीनांपरंविधिम् ॥ कीर्तयिष्यामितेसर्वंयथावत्परिपृच्छते ॥ २ ॥ तुल्यंकिलखगश्रेष्ठयथाख्यातं
विवस्वता ॥ शुक्लपक्षेरविदिनेप्रवृत्तेचोत्तरायणे ॥ ३ ॥ पुत्रदारधनक्षेत्रेगृह्णीयात्सप्तमीव्रतम् ॥ ऋषिभिर्ज्ञानसंपन्नैःसर्वकामफलप्रदैः ॥ ४ ॥
सप्तम्यःसप्तआख्यातास्तासांनामानिमेशृणु ॥ अर्कसंपुटकैरेकाद्वितीयामरिचैस्तथा ॥ ५ ॥ तृतीयानिंबपत्रैश्चचतुर्थीफलसप्तमी ॥ सप्त
मीकामिकानामाविधिमासांन्निबोधमे ॥ ६ ॥ पंचम्यामेकभक्तंतुकुर्यान्नियतमानसः ॥ अल्पाहारंनकुर्वीतमैथुनंदूरतस्त्यजेत् ॥ ७ ॥ वर्जये
न्मधुमांसंचअत्यम्लंचखगाधिप ॥ प्रभातेचैवषष्ठ्यांतुएकैकंपर्णसंपुटम् ॥ ८ ॥ घृतशाल्योदनंकृत्वाभक्षयेत्तुविधानतः ॥ अन्यदन्नमभुं
जानःसप्तम्यांभोजनंभवेत् ॥ ९ ॥ एकैकवृद्ध्याभियुक्तैर्यावत्सप्तखगेश्वर ॥ अन्यत्रमरिचंभक्षेन्निंबपत्राण्यतःपरम् ॥ १० ॥ एवंलब्धफ
लानीहपक्षयोरुभयोरपि ॥ अन्नाद्यैरहितायत्नादनोदनइतिस्मृतः ॥ ११ ॥ आचरेद्विधिवद्भक्त्यापूजयित्वाविभावसुम् ॥ अहोरात्रंवायुभ
क्षःकुर्य द्विजयसप्तमीम् ॥ १२ ॥ एकैकंसप्तसप्तमीरात्रेवंविधिवच्चरेत् ॥ प्रलेख्यतासांनामानिपत्रकेषुपृथक्पृथक् ॥ १३ ॥ तानिसर्वाणि
नामानिविलेख्यसुसमाहितः ॥ श्वेतचंदनदिग्धांगेमाल्यदामोपशोभिते ॥ १४ ॥ सप्तधान्यहिरण्याढ्येशशिकुंदेंदु सन्निभे ॥ अश्वत्थाशोक
पत्राढ्येदध्योदनसमन्विते ॥ १५ ॥ तदर्थंपूजयेद्भक्त्यातैस्तैर्दृष्टैर्नरा ग्रयः ॥ दृष्ट्वातुशोभनंस्वप्नंनभूयःशयनंस्वपेत् ॥ १६ ॥ प्रातश्चकी

तंयेत्स्वप्नंयथादृष्टंखगाधिप ॥ प्राज्ञभोजकविप्रेभ्यःसुहृद्भ्यश्चखगाधिप ॥ १७ ॥ ततोमध्याह्नसमयेस्नातःप्रयतमानसः ॥ तंचैवदेवंविधि
वत्पूजयित्वादिवाकरम् ॥ १८ ॥ सम्यक्कृतजपोमौनीनरोहुतहुताशनः ॥ निष्क्रम्यदेवायतनाद्भोजकायनिवेदयेत् ॥ १९ ॥ भवेदला
भोयंदिभोजकानांविप्रास्तमर्हंतिपुराणविज्ञाः ॥ येमंत्रवेदावयवेषुनिश्चिताविभुंसमभ्यर्च्यदिवंव्रजेयुः ॥ २० ॥ कृत्वैवंसप्तसप्तम्योनरोभ
क्तिसमन्वितः ॥ श्रद्दधानोपिसूर्यस्यसकथंनाप्नुतेफलम् ॥ २१ ॥ दशानामश्वमेधानांकृतानांयत्फलंभवेत् ॥ तत्फलंसप्तसप्तम्यःकृत्वा
भक्तिसमन्वितः ॥ २२ ॥ दुष्पापंनास्तितद्वीरसप्तम्यांयन्नदह्यते ॥ नचरोगोऽस्त्यसौलोकेयएताभिर्नशाम्यति ॥ २३ ॥ कुष्ठानियानिरौद्रा
णिदुश्छेद्यानिचकथ्यते ॥ गम्यंतेतानिसर्वाणिगरुडेनेवपन्नगाः ॥ २४ ॥ सकलविबुधमान्यंस्वप्रकाशंजनानामभिमतफलदानेदीक्षितंतंसु
पूज्यम् ॥ श्रुतधनकुलभोगैःसौख्यपुण्यैरुपेतोव्रजतिचसुतनुंकांशाश्वतांतिग्मरश्मेः॥२५॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पे
सौरधर्मेसूर्यारुणसंवादेस्वप्नवर्णनंनामपंचनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ छ ॥ ॥ सप्ताश्वतिलकउवाच ॥ ॥ अतीत्य
सप्तम्यांनस्पृशेत्तैलंनैलंवस्त्रंनधारयेत् ॥ नशयीतास्त्रियासा
र्धंनसेवेतदुरोदरम् ॥ २ ॥ नरोदेदश्रुपातेननचवाध्यात्पिशाचिकान् ॥ आकृष्येन्नशिरोयूकानवृथावादमाचरेत् ॥ ३ ॥
परस्यानिष्टकथनमतिवादंचवर्जयेत् ॥ नकंचित्ताडयेज्जंतुंनविशेतकदाचन ॥ ४ ॥ ब्रह्महत्यामवाप्नोतिविशमानोरवेर्गृहम् ॥
इत्येतेसमयाःप्रोक्ताःसौराणांगरुडाग्रज ॥ ५ ॥ भोजकानांविशेषेणपुरामेभानुनानघ ॥ भोजकःखगशार्दूलयोलोभाद्द्रव्यमुत्सृ
जेत् ॥ ६ ॥ वृद्ध्यातुसततंवीरसगच्छेन्नरकंध्रुवम् ॥ विशेषेचाल्पकशतेकामयानेखगाधिप ॥ ७ ॥ प्रयुज्यमानोभोजकस्तुपं
चकेनशतेनवै ॥ प्रायश्चित्तीभवेद्वीरनचार्हःपूजनेरवेः ॥ ८ ॥ कृत्वासांतपनंकृच्छ्रंततःसंपूजयेद्रविम् ॥ नान्यदेवप्रतिष्ठातुकर्तव्या
भोजकेनतु ॥ ९ ॥ कृत्वातुतांखगश्रेष्ठप्रायश्चित्तीयतेनरः ॥ तस्मात्तुतांनकुर्याद्वैभोजकःखगसत्तम ॥ १० ॥ मुक्त्वातुभास्करं
देवंनान्यंदेवंनिवेदयेत् ॥ कृत्वाग्निवेशंदेवानांब्रह्मादीनांखगाधिप ॥ ११ ॥ भोजकोनस्पृशेद्वातुंकुर्यात्कृच्छ्रंचशुद्धये ॥ कृत्वातुकृ

च्छ्रंविधिवच्छुद्धेहेतुंखगाधिप ॥ १२ ॥ ततःपूजयितुंभानुमधिकारीभवेन्मम ॥ नविज्ञातंप्रदातव्यंनस्नानंनचदूषितम् ॥ १३ ॥ नचपर्युषि
तंमाल्यंदातव्यमृद्धिमिच्छता ॥ देवमुल्लोचयेद्यस्तुसखलःपुष्पलोभतः ॥ १४ ॥ पुष्पाणिचसुगंधानिभोजकोनेतराणिच ॥ ब्रह्महत्यामवा
प्नोतिभोजकोलोभमोहितः ॥ १५ ॥ महारौरवमासाद्यपच्यतेशाश्वतीःसमाः ॥ हंततेकीर्तयिष्यामिधूपदानविधिंपरम् ॥ १६ ॥ प्रदानेदेवदेव
स्ययेनधूपेनयत्फलम् ॥ सदाचंदनधूपेनसान्निध्यंकुरुतेरविः ॥ १७ ॥ प्रदद्यान्मानसेचैवयद्यदिच्छतिमानवः ॥ तथैवागुरुधूपेनवरंदद्यादभी
प्सितम् ॥ १८ ॥ आरोग्यंवास्त्रियंवार्थीनित्यदागुग्गुलंदहेत् ॥ मंगलंधूपदानेनसदातुष्यतिभानुमान् ॥ १९ ॥ आरोग्यंचास्त्रियंदद्यात्सौख्यं
चपरमंभवेत् ॥ सदाकुंकुमधूपेनसौभाग्यंलभतेनरः ॥ २० ॥ श्रीवासकस्यधूपेनवाणिज्यंसफलंभवेत् ॥ रसंसर्वरसोपेतंददतोर्थागमोध्रुवम्
॥ २१ ॥ देवदारुंचदहतोभवत्यन्नमथाक्षयम् ॥ विलेपनंकुंकुमेनसर्वकामफलप्रदम् ॥ २२ ॥ इहलोकेसुखीभूत्वादातास्वर्गमवाप्नुते ॥
चंदनस्यप्रदानेनश्रियमायुश्चविंदति ॥ २३ ॥ रक्तचंदनदानेनसर्वंदद्याद्दिवाकरः ॥ अपिरोगशतैर्ग्रस्तःक्षिप्रारोग्यमवाप्नुयात् ॥ २४ ॥
वर्तिगंधैश्चसौगंध्यंपरमंविंदतेनरः ॥ कस्तूरिकामलनकैरैश्वर्यमतुलंलभेत् ॥ २५ ॥ कर्पूरसंयुतैर्गंधैःक्ष्माधिपाधिपतिर्भवेत् ॥ चतुःसमेनगंधे
नकिंतुल्यंप्राप्नुयान्नरः ॥ २६ ॥ देवागारंतुसन्मन्येभक्त्यायउपलेपयेत् ॥ सरोगान्मुच्यतेक्षिप्रंपुरुषोभोगवान्भवेत् ॥ २७ ॥ अष्टादशेहकु
ष्ठानियेचान्येव्याधयोनृणाम् ॥ प्रलयंयांतितेसर्वेमृदायद्युपलेपयेत् ॥ २८ ॥ प्रलेपनानांसर्वेषांरक्तचंदनमुत्तमम् ॥ नातःपरतरंकिंचि
द्भानोस्तुष्टिकरंपरम् ॥ २९ ॥ किंतस्यनभवेल्लोकोयोह्यनेनप्रलेपयेत् ॥ सर्वकामसमृद्धोऽसौसूर्यलोकेमहीयते ॥ ३० ॥ उपलिप्यरवेर्गेहंकु
र्याद्वैमंडलंपुनः ॥ एकेनाथसमाप्नोतिभाग्यमारोग्यमुत्तमम् ॥ ३१ ॥ त्रिभिःसप्तभिरच्छिन्नाबालोवान्योपियोनरः ॥ तेनप्रदापयेद्देवान्कुर्या
तान्नानिवारयेत् ॥ ३२ ॥ अनेनविधिनाकुर्याद्यावत्सप्तैवसप्तमीः ॥ एतावैसप्तसप्तम्योयथाप्रोक्ताविवस्वते ॥ ३३ ॥ कुर्वीतयोनरोभक्त्यासर्व
पापैःप्रमुच्यते ॥ अर्कसंपुटकैर्वित्तंमरचैःप्रियसंगमम् ॥ ३४ ॥ निंबपत्रैरोगनाशंफलैःपुत्रान्यथेप्सितान् ॥ धनंधान्यंसुवर्णंचततोदद्याद्विव
स्वते ॥ ३५ ॥ जयंप्राप्नोतिविजयंकृत्वासर्वत्रखेचर ॥ सर्वान्कामान्कामिकस्तुप्राप्नुयान्नात्रसंशयः ॥ ३६ ॥ नरोवायदिवानारीयथोक्तंसप्त

मीव्रतम् ॥ यःकरोतिखगश्रेष्ठसयातिपरमंपदम् ॥ ३७ ॥ नतेषांत्रिषुलोकेषुकिंचिदस्तीतिदुर्लभम् ॥ येभक्त्यालोकनाथस्यव्रतिनःसंयते
न्द्रियाः ॥ ३८ ॥ सर्वयज्ञफलंतेषांतथावेदफलंभवेत् ॥ ब्रह्मेंद्राविष्णवस्तेनपूजितानात्रसंशयः ॥ ३९ ॥ नांधोनकुष्ठीनक्लीबोनव्यंगोनचानिर्ध
नः ॥ कदापिचभवेत्कश्चिद्यश्चरेत्सप्तमीव्रतम् ॥ ४० ॥ पुत्रार्थीश्रुतिसंपन्नाल्लँभेत्पुत्रांश्चिरायुषान् ॥ नतेषांत्रिषुलोकेषुकिंचिदस्तीतिदुर्लभ
म् ॥ ४१ ॥ भोगार्थीलभतेभोगान्व्रतेनानेनसुव्रत ॥ क्रोधात्प्रमादाल्लोभाच्चव्रतभंगोयदाभवेत् ॥ ४२ ॥ प्रायश्चित्तमिदंकृत्वापुनरेवव्रतीभ
त् ॥ सप्तैवयावत्सप्तम्यःसंप्राप्तागुरुणाखग ॥ ४३॥ अभ्यर्च्यसूर्यंसप्तम्यांमाल्यधूपादिभिर्नरः ॥ भोजयित्वाद्विजाञ्छक्त्याप्राप्नुयात्स्वर्ग
मक्षयम् ॥४४॥ सप्तम्यांविप्रमुख्येभ्योयोऽन्नंदद्यात्खगेश्वर॥तदक्षयंभवेत्तस्यसचसूर्यगृहंव्रजेत्॥४५॥ इतितेकीर्तितंवीरसप्तमीव्रतमुत्तमम् ॥
भूयएवाभिधास्यामिशृणुतेवदतोनघ॥४६॥येनव्रतप्रभावेणकामिकंफलमश्नुते॥सप्तमींखगशार्दूलशुक्लांद्वादशनामिकाम् ॥४७॥ गोमूत्रगोम
याहारःषड्वृताहारएवच ॥ अथवायावकाहारःशीर्णपर्णाशनोपिवा ॥ ४८ ॥ क्षीराशीचैवभक्तंवासिक्ताहारोथवापुनः ॥ जलाहारो
थवाविद्वान्पूजयित्वादिवाकरम् ॥ ४९ ॥ पुष्पोपहारैर्विविधैःपद्मसौगंधिकोत्पलैः ॥ नानाप्रकारैर्गंधैश्चधूपैर्गुग्गुलुचंदनैः ॥ ५० ॥ कृशरैःपा
यसान्नैर्वाविविधैश्चविभूषणैः ॥ अर्चयित्वाद्विजश्रेष्ठभक्ष्यवस्त्रादिभूषणैः ॥ ५१ ॥ सर्वपक्षफलंप्राप्यसूर्यलोकंततोव्रजेत् ॥ तपसोंतेततो
वीरकुलेमहतिजायते ॥५२॥यथाक्रमंप्रयत्नेननामानिपरिकीर्तयेत्॥माघेचफाल्गुनेमासिचैत्रेचगरुडाग्रज ॥५३॥ वैशाखेत्वथज्येष्ठेतुआषाढे
श्रावणेतथा॥मासिभाद्रपदेवीरतथाचाश्वयुजेखग ॥५४॥ मार्गशीर्षेतथापौषेपूजयेत्सततंरविम्॥विभावसुंविवस्वंतंभास्करंपक्षिसत्तम ॥५५॥
विकर्तनंपतंगंचसहस्रांशुंखगाधिप ॥ एतानिदेवनामानिमासेष्वेतेषुखेचर ॥ ५६ ॥ पूजयेद्देवदेवेशंदेवानामपिदुर्लभम् ॥ एवंक्रमेणतीक्ष्णां
शुंनामभिःपरिपूजयेत् ॥५७॥ इत्येवंतेसमाख्यातंमयागुह्यमिदंखग॥अभक्तायनदातव्यंनाशिष्यायकथंचन ॥५८॥ नचपापकृतेवीरदातव्यं 
विनतात्मज ॥ व्याधेस्तुनाशनार्थायदेयंविप्रायसुव्रत ॥ ५९ ॥ दत्वास्वर्गमवाप्नोतिश्रुत्वाचविधिवत्खग ॥६०॥ इति श्रीभविष्येमहापुराणे
ब्राह्मेपर्वणिसौरधर्मेसप्तमीकल्पेनामपूजाविधिवर्णनंनामषण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ छ ॥ सप्ताश्वतिलकउवाच ॥ अतःप

रंप्रवक्ष्यामिपुष्पधूपादिकामिकम् ॥ येनयेनतुदानेनतत्तत्फलमवाप्नुते ॥१॥ मालतीकुसुमैःपूजाभवेत्सान्निध्यकारका ॥ आरोग्यंकरवीरैस्तु
भवत्यर्थश्चशाश्वतः ॥ २ ॥ ऐश्वर्यमतुलंचैवयशश्चविपुलंतथा ॥ मल्लिकायाश्चकुसुमैर्भगवत्सम्मुखोभवेत् ॥ ३ ॥ सौभाग्यंपुंडरीकात्तुपरमै
श्वर्यमाप्नुते॥कमलोत्पलकुंदैस्तुयशोविद्याबलंभवेत् ॥४॥ नानाविधैःसुकुसुमैःक्षिप्रंरोगात्प्रमुच्यते ॥ भवत्यक्षयमन्नंचानित्यमर्चयतोरविम् ॥
॥५॥मंदारकुसुमैःपूजासर्वकुष्ठनिवारिणी ॥ बिल्वस्यपत्रकुसुमैर्महतींश्रियमाप्नुते ॥६॥ अर्कस्रजाभवत्यर्कःसर्वदावरदःप्रभुः ॥ प्रदद्याद्रूपिणीं
कन्यामार्चितोबकुलस्रजैः ॥७॥ किंशुकैःपूजितोदेवोनपीडयतिभास्करः ॥ अगस्तिकुसुमैःसिद्धिःसानुकूल्यंप्रयच्छति ॥८॥ स्वयंरूपवतीं
दद्यात्पूजितश्चंपकस्रजैः ॥ निरुद्वेगोभवेन्नित्यंपूजितःपुष्पमालया ॥ ९ ॥ अशोककुसुमैर्देवमर्चयेद्योदिवाकरम् ॥ आम्रातकस्यकुसुमंनिर्मा
ल्यामिवदृश्यते ॥१०॥ अप्रत्यग्रंबहिर्यस्मात्तस्मात्तंपरिवर्जयेत् ॥ नवभिस्त्वचलांकीर्तिंदशभिःसुखमुत्तमम् ॥११॥ भोगानेकादशेनेहप्राप्नु
यान्नात्रसंशयः ॥ द्वादशेनाचलंराज्यंद्वादशाख्यमवाप्नुते ॥ १२ ॥ प्रथमंपूजयेद्भक्त्याभूरूपंप्रणमेत्सदा ॥ भुवर्नमोद्वितीयंचतृ
तीयंस्वर्नमेन्नरः ॥ १३ ॥ महर्नमश्चतुर्थंतुपंचमंतुजनर्नमः ॥ तपोनमस्तथाषष्ठंनमःसत्यंतुसप्तमम् ॥ १४ ॥ अष्टमंभूर्भुवश्चेतिनवमंखगस
त्तम ॥ दशमंषडतोवीरनमोल्कायतथापरम् ॥ १५ ॥ द्वादशंतुखषोल्कोतिॐनमःपूजयेत्खग ॥ एवंमंडलकारीतुक्रमादेवफलंलभेत्
॥ १६ ॥ घृतदीपप्रदानेनचक्षुष्माञ्जायतेनरः ॥ कटुतैलस्यदीपेनशत्रूणांसंक्षयोभवेत् ॥ १७ ॥ मधुकानांतुतैलेनसौभाग्यंपरमंलभेत् ॥
संपूज्यविधिवद्देवंपुष्पधूपादिभिर्नरः ॥ १८ ॥ यथाशक्त्याततःपश्चान्नैवेद्यंतुप्रकल्पयेत् ॥ पुष्पाणांप्रवराजातीधूपानांचैवचंदनम् ॥ १९ ॥
गंधानांकुंकुमंश्रेष्ठंमोदकांश्चनिवेदने ॥ एतैस्तुष्यतिदेवेशःसान्निध्यंचाधिगच्छति ॥ २० ॥ ददातिप्रवरान्निष्टान्दातुश्चस्वर्गंततथा ॥ ए
वंसंपूज्याविधिवत्कृत्वाचापिप्रदक्षिणाम् ॥२१॥ प्रणम्याशिरसादेवंभास्करंतिमिरापहम् ॥ आरुह्यसुविमानंसयातिभानोःसलोकताम् ॥२२॥
पुनःसंपूज्यदेवेशंजपंकुर्याद्यथेष्टकम् ॥ हुताशनंचजुहुयाद्विधिदृष्टेनकर्मणा ॥ २३ ॥ एवमेकैकशःकार्याःसप्तम्यःसततसर्वदा ॥ उदकप्रसृतिं
पीत्वाक्रियतेयातुसप्तमी ॥ २४ ॥ साज्ञेयासुखदावीरसदैवोदकसप्तमी ॥ याकिंचित्सप्तमीप्रोक्तातांतेवक्ष्यामिसर्वदा ॥ २५ ॥ वराटिका

क्रमेणाप्तंयत्किंचित्प्रतिभक्षयेत् ॥ अनेनदेहमूल्येनयल्लब्धंतत्प्रभक्षयेत् ॥२६॥ अभक्ष्यंचापिभक्ष्यंवानात्रकार्याविचारणा ॥२७॥ इतिश्री
भविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषुवराटिकावर्णनंनामसप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥ छ ॥ शतानीकउवाच ॥
किमिदंदैवतंलोकेकिंवाप्येकंपरायणम् ॥ स्तुवन्तःकंकमर्चंतःप्राप्नुयुर्मानवाःशुभम् ॥१॥ कोधर्मःसर्वधर्माणांकश्चपूज्योमतस्तव ॥ ब्रह्मादयः
कमर्चंतिकश्चादिस्त्रिदिवौकसाम् ॥२॥ सुमंतुरुवाच ॥ अत्राहंतेप्रवक्ष्यामिसंवादंपापनाशनम् ॥ भीष्मस्यनरशार्दूलव्यासस्यचमहात्मनः ॥३॥
सुखासीनंमहाव्यासंगंगाकूलेद्विजोत्तम ॥ तंदृष्ट्वासुमहातेजाज्वलंतमिवपावकम् ॥४॥ साक्षान्नारायणंदेवंतेजसादित्यसन्निभम् ॥ प्रणम्यशिरसा
वीरंसर्वशास्त्रालयंपरम् ॥५॥ महाभारतकर्तारंवेदार्थानिकषंपरम् ॥ आचार्यंपरमर्षीणांराजर्षीणांचभारतम् ॥६॥ कर्तारंकुरुवंशस्यदैवतंपरमं
मम ॥ पप्रच्छकुरुशार्दूलोद्विजभक्त्यासमन्वितः ॥ ७ ॥ देवदेवस्यमाहात्म्यंचित्तस्थंभास्करस्यतु ॥ समहात्मामहातेजाभीष्मःपूर्वंमु
निंतथा ॥८॥ भीष्मउवाच ॥ भगवन्द्विजशार्दूलपाराशर्यमहामते ॥ ममाख्यातंत्वयासर्वंवाङ्मयंसचराचरम् ॥ ९ ॥ भास्करस्यमुनिश्रेष्ठसं
शयोद्यापिवर्तते ॥ आदौतस्यनमस्कारमन्येषांतदनंतरम् ॥ १० ॥ ब्रह्मादीनांतुरुद्राद्यैर्ब्रूहितत्त्वेनहेतुना ॥ कएषभास्करोब्रह्मन्कुतोजातः
किमुच्यते ॥११॥ कीर्तयस्वयथान्यायंकौतुकंहिपरंमम ॥ कुशलोहिभवाँल्लोकेतस्मात्त्वंवक्तुमर्हसि ॥१२॥ व्यासउवाच ॥ अहोतवमहत्कष्टं
प्रमूढोसिनसंशयः ॥ स्तुवंतश्चतमर्चाभिःसिद्धाब्रह्मादयःसुराः ॥१३॥ सर्वेषामेवदेवानामादिरादित्यउच्यते ॥ सहंतितिमिरंसर्वंदिग्विदिक्षुव्यव
स्थितम् ॥१४॥ सधर्मःसर्वधर्माणांसचपूज्यतमोमतः ॥ ब्रह्मादयस्तमर्चंतिसचादिःसर्वदेवताः ॥ १५ ॥ अदितिःकश्यपसतीआदित्यस्तेनचो
च्यते ॥ आदिकर्ताथवायस्मात्तस्मादादित्यउच्यते ॥१६॥ तस्मादेतज्जगत्सर्वमादित्यात्संप्रवर्तते ॥ सदेवासुरगंधर्वाःसयक्षोरगराक्षसाः ॥१७॥
रुद्रोपेंद्रस्तथेंद्रश्चब्रह्मादक्षोथकश्यपः ॥ आदित्यदेवताःसर्वेतथान्येदेवदानवाः ॥ १८ ॥ मुखाद्भूतोविरिंचिस्तुरुद्रोवक्षस्थलात्ततः ॥ उपें
द्रोदक्षिणाद्धस्ताद्धातावामकरात्तथा ॥१९॥ वामपादतलाद्दक्षोदक्षिणात्कश्यपस्तथा ॥ इत्युत्पन्नास्तथाचान्येदेवासुरनराःखगाः ॥ २० ॥
तेनासौदेवआदित्यःसर्वदेवेषुपूजितः ॥ यदीत्थंगीयतेवीरदिग्विदिक्षुसमागतम् ॥ २१ ॥ यदितस्यप्रभावोयंपाराशर्यजगत्पतेः ॥ साकिमर्थं

त्रिसंध्यंतुराक्षसैःपरिभूयते ॥२२॥ द्विजैःसरक्ष्यतेभूयश्चक्रवद्भ्रमतेपुनः ॥ राहुणागृह्यतेऽग्राह्यंतत्किमर्थंद्विजोत्तम ॥ २३ ॥ व्यासउवाच ॥
पिशाचोरगरक्षांसिडाकिनीदानवांस्तथा ॥ दक्षिणान्निर्दहेत्क्रोधात्तामाक्रामतिभास्करः ॥ २४ ॥ त्रिसंध्यंतुत्रयोदेवाःसान्निध्यंरविमंडले ॥
मुहूर्तस्यप्रभावोयमसाध्येदृष्टकेतथा ॥ २५ ॥ तमेकमेवमुद्दिश्यलोकेधर्मःप्रवर्तते ॥ नमस्कृतेस्तुतेतस्मिन्सर्वेदेवानमस्कृताः ॥ २६ ॥
तिस्रःसंध्यास्तुभूदेवैर्भास्करोपिप्रणम्यते ॥ राहुरादित्यबिंबस्यास्थितोधस्तान्नसंशयः ॥ २७ ॥ अमृतार्थीविमानस्थोयावत्संस्रवतेमृतम् ॥
विमानांतरितंबिंबमादिशेद्ग्रहणंततः ॥ २८ ॥ नकश्चिद्धर्षितुंशक्त आदित्योदहतेध्रुवम् ॥ दिवारात्रिमुहूर्तानांतदर्थंभ्रमतेरविः ॥ २९ ॥
नादित्येनविनारात्रिर्नदिनंनचतर्पणम् ॥ नाधर्मोवाथवाधर्मस्तेनदृष्टंचराचरम् ॥३०॥ आदित्यःपातिवैसर्वमादित्यःसृजतेसदा ॥ एतत्स
र्वंसमाख्यातंयत्पृष्टंभवतामम ॥३१॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेव्यासभीष्मसंवादेऽष्टनवत्यधिकशततमोऽ
ध्यायः ॥ १९८ ॥ छ ॥ भीष्मउवाच सआदित्योभवेद्येनअचिरात्तुवरप्रदः ॥ तदहंश्रोतुमिच्छामिविप्रमांब्रूहितत्त्वतः ॥१॥ व्यासउवाच ॥
पूजयाजपहोमेनध्यानधारणयासह ॥ सकलंमंडलंकृत्वातद्दीक्षांसमयंतथा ॥ २ ॥ लब्ध्वाराधयतेयस्तुभक्त्यातद्गतमानसः ॥ तस्यभानुर्भवे
द्वीरअचिरात्तुवरप्रदः ॥ ३ ॥ बलसिद्धिंमहद्वीर्यंपादलेपोरसायनम् ॥ धनंधान्यंसुवर्णंचरूपंसौभाग्यसंपदम् ॥ ४ ॥ आयुरारोग्यकीर्तिंचय
शःपुत्रांश्चमानद ॥ ददतेनात्रसंदेहोयस्यतुष्टोदिवाकरः ॥ ५ ॥ धर्ममर्थंतथाकामंविद्यामोक्षाश्रियंतथा ॥ ददतेभास्करस्तुष्टोनराणांनात्र
संशयः ॥ ६ ॥ सौरेणविधिनाताततपूजयित्वादिवाकरम् ॥ सर्वान्कामानवाप्नोतितथादित्यालयंनृप ॥ ७ ॥ भीष्मउवाच ॥ सौरस्नानविधिं
ब्रूहिसरहस्यंमहामते ॥ येनस्नातोऽमलोयातिनरःपूजयितुंरविम् ॥८॥ व्यासउवाच ॥ हंततेसंप्रवक्ष्यामिस्नानंपापप्रणाशनम्॥शुचौमनोरमे
स्थानेसंगृह्यास्त्रेणमृत्तिकाम् ॥ ९ ॥ संधिसंयोहकारस्तुटरेफोफसमन्विते ॥ अनेनास्त्रेणसंगृह्यततःस्नानंसमाचरेत् ॥ १० ॥ मलस्नानं
ततःपश्चाच्छेषार्धेनतुकारयेत् ॥ भागत्रयंतुसार्धंतुतृणपाषाणवर्जितम् ॥ ११ ॥ एकमस्त्रेणचालभ्यतथान्यंभास्करेणतु ॥ अंगेचैवतृती
यंतुअभिमंत्र्यसकृत्सकृत् ॥ १२ ॥ जप्त्वास्त्रेणाक्षिपेद्दिक्षुनिर्विघ्नंतुजलंभवेत् ॥ सूर्यंतीर्थेद्वितीयेनअभिमंत्र्यसकृत्सकृत् ॥ १३ ॥ गुंडयि

त्वाततःस्नायादितितीर्थेनमानवः ॥ तूर्यशंखनिनादेनध्यात्वादेवंदिवाकरम् ॥ १४ ॥ स्नात्वाराजोपचारेणपुनराचम्ययत्नतः ॥ स्नानं
कृत्वाततोभीष्ममंत्रराजेनसंयुतम् ॥ १५ ॥ हरेफोबिंदुयुक्तश्चतथान्योदीर्घयासह ॥ मात्रयारेफसंयुक्तोहकारोबिंदुनासह ॥ १६ ॥ सकारः
सविसर्गस्तुमंत्रराजोयमुच्यते॥ततस्तुतर्पयेन्मंत्रान्सर्वांस्तांस्तुकराग्रजैः ॥१७॥ पर्वणामूर्ध्वतोदेवान्स्तव्येनमुनयस्तथा॥पितरश्चापसव्येन
तद्बीजेनप्रतर्पयेत् ॥ १८ ॥ यद्बीतंप्रवरंलोकेअक्षराणांमनीषिभिः ॥ तद्बिंदुसहितंप्रोक्तंहृद्बीजंनात्रसंशयः ॥ १९ ॥ कृत्वावामकरेहस्ता
द्ध्यात्वाप्राज्ञोविधानवित् ॥ एवंस्नात्वाविधानेनसंध्यांवंदेद्विधानतः ॥ २० ॥ ततोविद्वान्क्षिपेत्पश्चाद्भास्करायोदकांजलिम् ॥ जपेच्चत्र्य
क्षरंमंत्रंषण्मुखंवायदिच्छया ॥ २१ ॥ मंत्रराजेतियःपूर्वंतवाख्यातोमयानृप ॥ पश्चात्तीर्थेतुमंत्रांस्तुसंहृत्यहृदयंन्यसेत् ॥ २२ ॥ मंत्रैरात्मा
सहैकत्रकृत्वाह्यर्घ्यंप्रदापयेत् ॥ रक्तचंदनगंधैस्तुशुचिस्नातोमहीतले ॥२३॥ कृत्वामंडलकंवित्तमेकचित्तोव्यवास्थितः ॥ गृहीत्वाकरवीराणि
संस्थाप्यताम्रभाजने ॥ २४ ॥ तिलतंदुलसंयुक्तंकुशगंधोदकेनतु ॥ रक्तचंदनधूपेनयुक्तमर्घप्रसाध्यतम् ॥२५॥ कृत्वाशिरसितत्पात्रंजानु
भ्यामवनींगतः ॥ पूर्वमंत्रेणसंयुक्तमर्घ्यंदत्वातुभानवे ॥ २६ ॥ मुच्यतेसर्वपापैस्तुयोह्येवंविनिवेदयेत् ॥ यद्युगादिसहस्रेणव्यतीपातशते
नच ॥ २७ ॥ अयनानांसहस्रेणचंद्रस्यग्रहणेतथा ॥ गवांशतसहस्रेणयत्फलंज्येष्ठपुष्करे ॥ २८ ॥ दत्तेकुरुकुलश्रेष्ठतदर्घ्येणफलंलभेत्॥
दीक्षामंत्रविहीनोऽपिभक्त्यासंवत्सरेणतु ॥ २९ ॥ फलमर्घ्येणवैवीरलभतेनात्रसंशयः ॥ यःपुनर्दीक्षितोविद्वान्विधिनार्घंनिवेदयेत् ॥ ३० ॥
नासौसंसरतेभूमौसलयंयातिभास्करे ॥ इहजन्मनिसौभाग्यमायुरारोग्यसंपदाम् ॥ ३१ ॥ अचिराद्भवतेवीरसभार्यासुखभाजनः ॥ एषस्नान
विधिःप्रोक्तोमयासंक्षेपतस्तव ॥ ३२ ॥ हितायमानवेंद्राणांसर्वपापप्रणाशनः ॥ ३३ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौ
रधर्मेषुभीष्मव्याससंवादएकोनद्विशततमोऽध्यायः ॥ १९९ ॥ ॥ छ ॥ ॥ भीष्मउवाच ॥ ॥ कथितस्तेस्नानविधिर्ब्रह्मन्सर्वपाप
हारकः ॥ सम्यग्ब्रूह्यर्चनविधिंपूजयिष्यामियेनवै ॥ १ ॥ ॥ व्यासउवाच ॥ ॥ हंततेसंप्रवक्ष्यामिविधिमादित्यपूजने ॥ विविक्तेविजयस्था
नेसुप्रसन्नेसुशोभने ॥ २ ॥ पूजयेद्भास्करंमंत्रीसरलीकृतविग्रहः ॥ भद्रासनसमारूढःप्राङ्मुखःसाधकोत्तमः ॥ ३ ॥ अस्त्रबीजेनमं

त्रेणनरःस्वांगानिविन्यसेत् ॥ अंगुष्ठमादितःकृत्वाकनिष्ठान्तंसुविन्यसेत् ॥ ४ ॥ हृदयादीन्फडन्तांस्तान्विन्यसेत्क्रमतःसदा ॥ नेत्रपाणितलेवीरन्यस्यमघ्यादिमंत्रवित् ॥५॥ यवर्गेयचतुर्थंतुकर्णबिंदुसमान्वितम् ॥ नेत्रबीजमितिप्रोक्तंज्योतीरूपंनसंशयः ॥ ६ ॥ पश्चात्तुत्र्यक्षरंसूर्यंकवचंविन्यसेद्बुधः ॥ कथितंतन्मयावीरमंत्रराजेतिपृष्ठतः ॥७॥ प्राणायामंततःकुर्यात्प्रथमंवीरमुद्गिरम् ॥ शेषक्रमेणहुत्वायांविरजेभोष्मशक्तितः ॥ ८ ॥ त्रिभिरेवततोघोरैरात्मशुद्धिःकृताभवेत् ॥ इतिसंशोध्यचात्मानंसूर्यंसर्वांतिकंन्यसेत् ॥ ९ ॥ हृदयेहृदयंन्यस्यशिरःशिरसिविन्यसेत् ॥ एकविंशतिमातृकायाअक्षरंयत्प्रकीर्तितम् ॥ १० ॥ हृद्बीजमितिविख्यातंब्रह्मस्थानमनौपमम् ॥ शिरसार्कस्यपूजातुलोकेकैःप्रतिकथ्यते ॥ ११ ॥ शिखायांतुशिखान्यासाच्छरीरेकवचंन्यसेत् ॥ नेत्रयोर्विन्यसेन्नेत्रंकरयोरस्त्रमेवच ॥ १२ ॥ महाव्याहृतयोराजंस्तथारज्वालिनीशिखा ॥ हकारश्चरकारश्चकुकारोबिंदुनासह ॥ १३ ॥ एतेषांसमयाश्चैवकवचंपरिकथ्यते ॥ नेत्रयोर्विन्यसेन्नेत्रंकरयोरस्त्रमेवच॥१४॥एवमंगानिविन्यस्यनासौकेनापिबाध्यते ॥ शत्रवोमित्रतांयांतिअलाभेलाभमाप्नुयात् ॥१५॥ आत्मानंभास्करंज्ञात्वायथोक्तंतत्वदर्शिभिः ॥ ततस्तुपूजयेद्भानुंस्थंडिलेविधिवत्पुनः ॥ १६ ॥ कृत्वातुदक्षिणेपार्श्वेदेव्यपुष्पकरंडकम् ॥ कृत्वासुशोभितेवामेताम्रपूर्णेनवारिणा ॥ १७ ॥ अस्त्रेणक्षालितांपूर्णांशेषमंत्रैर्जलैस्तथा ॥ अभिमंत्र्यततःस्थाप्यकवचेनावगुंठिता ॥ १८ ॥ स्थंडिलेचैवद्रव्याणिपूजार्थंकाल्पतानितु ॥ सर्वाणिप्रोक्षयेद्विद्वानर्घ्यपात्रंजलेनतु ॥ १९ ॥ ततोमंत्रंजपेत्पश्चादेकचित्तेनमंत्रवित् ॥ ॥ भीष्मउवाच ॥ ॥ पुराणसहितोमंत्रैर्योविधिःकथितोबुधैः ॥ २० ॥ समयाविदितःकृत्स्नःकथितोनैकशोद्विजैः ॥ वेदोक्तैर्विविधैर्मंत्रैर्यथासंपूज्यतेरविः ॥ २१ ॥ यथामेब्रूहिसकलंवैदिकंविधिसत्तमम् ॥ २२ ॥ इतिश्रीभविष्येमहापुराणेसप्तमीकल्पेसौरधर्मेद्विशततमोऽध्यायः ॥ २०० ॥ ॥ छ ॥

॥ व्यासउवाच ॥ ॥ सुरज्येष्ठस्यदेवस्यकेशवस्यचभारत ॥ मनोवत्यांसुरज्येष्ठंसुखासीनंचतुर्मुखम् ॥ प्रणम्यशिरसाविष्णुरिदंवचनमब्रवीत् ॥ १ ॥ ॥ विष्णुरुवाच ॥ ॥ भगवन्देवदेवेशसुरज्येष्ठचतुर्मुख ॥ आराधनाविधिंब्रूहिभास्करस्यमहात्मनः ॥ २ ॥ कथमाराधयेद्भानुंमंडलस्थंदिवस्पतिम् ॥ ब्रूहिमेऽत्रगणंदेवंयेनाहंपूजयेविभुम् ॥ ३ ॥ साधुसाधुमहाबाहोसाधुपृष्टोऽस्मिभूधर ॥

श्रृणुष्वैकमनादेवभास्कराराधनेविधिम् ॥ ४ ॥ खषोल्कंनिर्मलंदेवंपूजयित्वाविभावसुम् ॥ पूर्वमध्येतथाग्नेय्यांविरूपाक्षेप्रभंजने ॥ ५ ॥
क्रमेणयावदीशानींहृदिबीजेनविन्यसेत् ॥ खषोल्कासनमेतत्तुविन्यस्तंमानवोत्तमैः ॥ ६ ॥ ततस्तस्योपरिष्टात्तुहृदयेनतुकंचुकम् ॥
सप्तावरणसंयुक्तमष्टपत्रंसकर्णिकम् ॥ ७ ॥ केसरालंबदेवत्वंपंचवर्णमहाद्भुतम् ॥ परीक्षाभूमेविधिवच्छास्त्रोक्तविधिनाकृतम् ॥ ८ ॥
दीप्तादिपूर्वादारभ्ययावदीशानगोचरम् ॥ न्यसेच्छक्त्यष्टकंमंत्रीमध्यतःसर्वतोमुखीम् ॥ ९ ॥ दीप्तासूक्ष्माजयाभद्राविभूतिर्विमलातथा ॥
अमोघाविद्युताचैवनवमीसर्वतोमुखी ॥ १० ॥ ततआवाहयेद्भानुंस्थापयेत्कर्णिकोपरि ॥ उपस्थानंतुवैकृत्वामंत्रेणानेनसुव्रत ॥ ११ ॥
उदुत्यंजातवेदसमितिमंत्रःप्रकीर्तितः ॥ अग्निंदूतेनमंत्रेणअनेनविश्वसुव्रत ॥ १२ ॥ आकृष्णेनरजसामंत्रेणानेनचार्चयेत् ॥ हंसःशुचिषदिति
चमंत्रेणार्कंप्रपूजयेत् ॥ १३ ॥ अपत्येतारकंदेवींदीप्तानेनप्रपूजयेत् ॥ अदृश्रमस्यकेतवःसूक्ष्मांदेवींसमर्चयेत् ॥ १४ ॥ तरणिर्विश्वदर्शतेअने
नसततंजयम् ॥ प्रत्यङ्देवानांविशेतिभद्रांदेवींसमर्चयेत्॥१५॥विभूतिमर्चयेन्नित्यंयेनापावकचक्षसा ॥ विद्यामेषीतिमंत्रेणह्यनेनविमलांसदा
॥१६॥अमोघांपूजयेन्नित्यंमंत्रेणानेनसुव्रत॥नवमींपूजयेद्देवींसततंसर्वतोमुखीम् ॥१७ ॥ मंत्रेणानेनकृष्णस्यउद्वयंतामितीहच ॥ उद्यन्नद्यमित्र
होमंप्रथममक्षरंव्रजेत् ॥ १८ ॥ द्वितीयंपूजयेत्कृष्णंशुक्रेषुहरिमाहवे ॥ उदगादयमादित्योअनेनापितृतीयकम् ॥ १९ ॥ तत्सवितुर्वरेण्यं
तिचतुर्थंपरिकीर्तितम् ॥ महितोमाहितोयेतिपंचमंपरिकीर्तयेत् ॥ २० ॥ हिरण्यगर्भःसमवर्ततांषष्ठींवाजंप्रकीर्तितम् ॥ सवितापश्चा
तात्पुरस्तात्सप्तमंदेवसत्तमम् ॥ २१ ॥ एवंबीजानिविन्यस्यआदित्यंस्थापयेद्द्विज ॥ आदित्यंस्थापयेद्व्यानेसर्वेषांपूजयेद्बुधः ॥ २२ ॥
बाह्यतोदेवशार्दूलइंद्रादीनांसमंततः ॥ रक्तवर्णमहातेजंसितपद्मोपरिस्थितम् ॥ २३ ॥ सर्वलक्षणसंयुक्तंसर्वाभरणभूषितम् ॥ द्विभुजंचै
कचक्रंचसौम्यंपद्मधनुःकरम् ॥ २४ ॥ वर्तुलंतेनबिंबेनमध्यस्थमतितेजसम् ॥ आदित्यस्यात्विदंरूपंसर्वलोकेषुपूजितम् ॥ २५ ॥ ध्यात्वा
संपूजयेन्नित्यंस्थंडिलंमंडलाश्रितम् ॥ २६ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषुसूर्यमण्डलदेवतार्चनविधिवर्णनं
नामैकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥ छ ॥ ॥ विष्णुरुवाच ॥ ॥ मंडलस्थंसुरश्रेष्ठविधिनायेनभास्करम् ॥ पूजयेन्मानवो

भक्त्यासविधिःकथ्यतांमम ॥ १ ॥ पूजयेद्विधिनायेनभास्करंपद्मसंभवम् ॥ मूर्तिस्थंसर्वगंदेवंपूजितंससुरासुरैः ॥ २ ॥ ॥ ब्रह्मोवाच ॥
साधुकृष्णमहाबाहोसाधुपृष्टोऽस्मिसुव्रत ॥ शृणुष्वैकमनाःपूर्वंमूर्तिस्थंयेनपूजयेत् ॥ ३ ॥ इषेत्वेतिचमंत्रेणउत्तमांगंसदार्चयेत् ॥ अग्नि
मीळेतेमंत्रेणपूजयेद्दक्षिणेकरे ॥ ४ ॥ अग्नआयाहिमंत्रेणपादौदेवस्यपूजयेत् ॥ आजिघ्रेतिचमंत्रेणपूजयेत्पुष्पमालया ॥ ५ ॥ योगेयोगे
तिमंत्रेणमुक्तपुष्पांजलिंक्षिपेत् ॥ समुद्रंगच्छयत्प्रोक्तमनेनस्नापयेद्रविम् ॥ ६ ॥ इमंमेगंगेतियत्प्रोक्तमनेनापिचभूधरम् ॥ समुद्रज्येति
मंत्रेणकषायैःपरिरूषयेत् ॥ ७ ॥ स्नापयेत्पयसाकृत्स्नाआप्यायस्वेतिमंत्रतः ॥ दधिक्राव्णेतिवैदध्नास्नापयेद्दधिवद्रविम् ॥ ८ ॥ तेजो
ऽसिशुक्रमितिचघृतेनस्नपनंपरम् ॥ याओषधीतिमंत्रेणस्नानमोषधिभिःस्मृतम् ॥ ९ ॥ उद्वर्तयेत्ततोभानुंद्विपदाभिःसुराधिप ॥ मान
स्तोकेतिमंत्रेणयुगपत्स्नानमाचरेत् ॥ १० ॥ विष्णोरराटमंत्रेणस्नापयेद्गंधवारिणा ॥ सौवर्णेनतुमंत्रेणअर्घ्यंपाद्यंनिवेदयेत् ॥ ११ ॥ इदं
विष्णुर्विचक्रमेमंत्रेणार्घ्यंप्रदापयेत् ॥ वेदोऽसीतिहिमंत्रेणउपवीतंप्रदापयेत् ॥ १२ ॥ बृहस्पतेतिमंत्रेणदद्याद्वस्त्राणिभानवे ॥ येनश्रि
यंप्रकुर्वाणांपुष्पमालांप्रयोजयेत् ॥ १३ ॥ धूरसीतिचमंत्रेणधूपंदद्यात्सगुग्गुलम् ॥ समिद्धोऽजनमंत्रेणअंजनंतुप्रयच्छति ॥ १४ ॥ युंजा
नीतिचमंत्रेणभानुंरोचनयार्चयेत् ॥ आरक्तकंचवैकुर्याद्दीर्घायुत्वायवैबुधः ॥ १५ ॥ सहस्रशीर्षापुरुषोरविंसरसिपूजयेत् ॥ संभावयेति
मंत्रेणसर्वनेत्रेपरामृशेत् ॥ १६ ॥ विश्वतश्चक्षुरित्येवंभानोर्देहंसमालभेत् ॥ श्रीश्चतेलक्ष्मीश्चेतिमंत्रेणानेनपूजयेत् ॥ १७ ॥ इतिश्रीभविष्ये
महापुराणेसप्तमिकल्पेसौरधर्मआदित्यपूजाविधिवर्णनंनामद्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ छ ॥ ॥ विष्णुरुवाच ॥ ॥
व्योमपूजाविधिंब्रूहिसमासाच्चतुरानन ॥ अष्टशृंगंकथंव्योमपूजयेद्भास्करस्यतु ॥ १ ॥ ब्रह्मोवाच ॥ ॥ व्योमपूजाविधिंकृष्णनिबोधगदतो
मम ॥ अष्टशृंगंयथाव्योमपूजयंतिमनीषिणः ॥ २ ॥ सौवर्णंराजतंताम्रंकृत्वाचाश्ममयंतथा ॥ अष्टशृंगंमहाबाहोअनेनविधिनार्चयेत् ॥ ३ ॥
प्रथमंपूजयेद्भानुंमध्येमंत्रेणसुव्रत ॥ महिषावोमहायेतिनानापुष्पकदंबकैः ॥४॥ त्रातारमिंद्रंमंत्रेणसर्वशृंगंसदार्चयेत्॥उदीरतामवरइत्यथवाने
नपूजयेत् ॥५॥ आयंगौरितिमंत्रेणनैर्ऋतंशृंगमर्चयेत् ॥रक्षोहणंवाजिनंवापूजयेदसुरांतकम् ॥६॥ इंद्रसोमांतपतयेह्यथवानेनपूजयेत् ॥ अभि

त्वाशूरनोनुमएशानंशृंगमर्चयेत् ॥ ७ ॥ एवंभानुंचपरितःपूजयंतिसदाच्युत ॥ येनेदंभूतमितिवैअथवानेनपूजयेत् ॥ ८ ॥ नमोऽस्तुसर्व
पापेभ्योव्योमपीठंसदार्चयेत् ॥ तेनराःसततंकामान्प्राप्नुवंतिनसंशयः ॥ ९ ॥ त्वमेकोरुद्राणांवसूनांपूर्वाण्हेतेनपूजयेत् ॥ तद्विष्णोःपरमंपदं
हंसःशुचिषदितिवैअपराह्णेसदार्चयेत् ॥ १० ॥ एवंभानुंग्रहैःसार्धंपूजयंतिसदस्पते ॥ तेसर्वान्विविरान्कामान्प्राप्नुवंतिनसंशयः ॥ ११ ॥
विमलेवाससीदत्वागुरवेसपवित्रके ॥ उपानहौतथाकृत्स्नसौवर्णमंगुलीयकम् ॥ १२ ॥ गंधपुष्पाणिचित्राणिभक्ष्यभोज्यान्यनेकशः ॥ अनेन
विधिनायस्तुसोपवासोर्चयेद्रविम् ॥ १३ ॥ बहुपुत्रोबहुधनःसनरःश्रेयवान्भवेत् ॥ उत्तरेचायनेयस्तुसोपवासोर्चयेद्रविम् ॥ १४ ॥ सोश्वमे
धफलंविंद्याद्बहुपुत्रश्चजायते ॥ कृत्वोपवासंविषुवेयस्तुपूजयतेरविम् ॥ १५ ॥ बहुपुत्रोबहुधनोकीर्तिमांश्चापिजायते ॥ कृत्वोपवासंग्रहणे
विधिवच्चंद्रसूर्ययोः ॥ १६ ॥ पूजयेद्भास्करंभक्त्याब्रह्मलोकंसगच्छति ॥ इतितेकथितंविष्णोभास्कराराधनेविधिम् ॥ १७ ॥ यःश्रुत्वा
पुरुषोभक्त्याममलोकेमहीयते ॥ पुनरेत्यमहींकृष्णराजाभवतिभूतले ॥ १८॥ बहुपुत्रोबहुधनाःसमरेष्वपराजितः ॥ १९ ॥ इतिश्रीभविष्ये
महापुराणेब्राह्मेपर्वणिसप्तमकिल्पेसौरधर्मैभास्कराराधनाविधिवर्णनंनामत्र्यधिकाद्विशततमोऽध्यायः ॥ २०३ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥
अतःपरंप्रवक्ष्यामिविधिंपरमपूजितम् ॥ रत्नव्योमप्रतिष्ठायांयथाभानुंप्रपूजयेत् ॥ १ ॥ अर्चयित्वातुप्रकृतिंगंधपुष्पाक्षतैर्विभो ॥
सहोदकेनांजलिनासहपुष्पाक्षतेनवा ॥ २ ॥ आवाहयेन्महादेवंखषोल्कंभास्करंविभुम् ॥ मंत्रेणकुरुशार्दूलप्रत्यक्षाकिरणायवै ॥ ३ ॥
ॐखषोल्कायावाहयामिॐभूर्भुवःस्वरोंआदित्याराधनेमंत्रः ॥ ४ ॥ अभिमंत्र्यभुवेमात्रंसावित्र्याचऋचाविभो ॥ आपोहिष्ठेतियाप्रो
क्तापृथासूर्यस्यसर्वदा॥५॥ यथान्यायंतुसंक्षाल्यपूरयेच्चान्यतोयतः ॥हिरण्यगर्भःसमवर्ततेत्यनयाक्षालयेद्बुधः ॥६ ॥ सवितापश्चातात्सविता
ह्यनयापूरयेद्बुधः ॥ इत्येवंपूरयित्वातुवारिपुष्पाक्षतैर्बुधः ॥ ७ ॥ पात्रमौदुंबरंगृह्यकृत्स्नंसूर्यस्यदर्शयेत् ॥ उदुत्यंजातवेदसमनयाव्यो
म्निनिक्षिपेत् ॥ ८ ॥ हंसःशुचिषदितिपाद्यंदद्याद्विचक्षणः ॥ निर्वापयेच्चपयसाखषोल्कंस्नापयेत्ततः ॥ ९ ॥ अग्निस्तुसप्तभिर्वीरकीर्तिता ॥१९६॥
स्ताश्चकृत्स्नशः ॥ आपोहिष्ठेतिचक्रमात्तिसृभिःकुरुनंदन ॥ १० ॥ हिरण्यवर्णेतिक्रमाच्चतुर्भिश्चनराधिप ॥ अभिमंत्र्योदकमृग्भिस्तिसृभि

र्निक्षिपेन्नृप ॥ ११ ॥ भानोःप्रदक्षिणंकृत्वाकृणुष्वपाजइत्यपि ॥ त्यमूषुवाजिनंगिरःप्रथमापरिकीर्तिता ॥१२॥ पातिमिंद्रस्तवाचामाद्वितीया
परिकीर्तिता ॥ पातिमिंद्रस्तुशुद्धोनआगहितृतीयापरिकीर्तिता ॥ १३ ॥ सिध्येवृत्राणिजिघ्नेशगंधैर्भानुंप्रपूजयेत् ॥ अस्यवामस्येत्यनयाअ
क्षतैःपूजयेद्रविम् ॥ १४ ॥ सप्तयुंजंतिरथमनयापूजयेद्रविम् ॥ पुष्पैर्भरतशार्दूलसततंतमनाशनम् ॥ १५ ॥ कोददर्शप्रथममनयाधूप
मादिशेत् ॥ पाकःपृच्छाम्यनयाचंदनंप्रतिपादयेत् ॥ १६ ॥ उद्दीप्यस्वेत्यनयादीपंदद्याद्विभावसोः ॥ अर्चित्वाकुंकुमंचैवशीर्षक्षीरं
तुमंडलम् ॥ १७ ॥ युक्तामातासीत्यनयानैवेद्यंप्रतिपादयेत् ॥ गौरीर्मिमायेतिदद्यात्तथाशुक्लेचवाससी ॥ १८ ॥ तस्याःसमुद्रेत्यनया
उपवीतंनिवेदयेत् ॥ इतिसंपूज्यदेवेशंततःकुर्यात्परांस्तुतिम् ॥ १९ ॥ ऋग्भिर्वैपंचभिस्तातशृणुष्वैकमनाहतः ॥ उक्षाणंपृश्निरितिच
प्रथमापरिकीर्तिता ॥ २० ॥ चत्वारिवागितिभवेद्वितीयापरिकीर्तिता ॥ इंद्रंमित्रंतृतीयातुवराधिक्येप्रकीर्तिता ॥ २१ ॥ कृष्णंनियानं
हितथाचतुर्थीपरिकीर्तिता ॥ योरत्नवाहीत्यनयाकिरीटंयोजयेद्रविम् ॥ २२ ॥ गतेहनामित्यनयाअव्यंगंभास्करंन्यसेत् ॥ इयमददाद्र
भसमृणच्युतामितिऋगादितः ॥ २३ ॥ कृत्वापूजांततश्चाग्भिरष्टाभिरितिच च्युत ॥ देवस्यशक्तयोऽष्टौचपूजयेद्विधिवक्रमात् ॥ २४ ॥
इत्येषतेमयाख्यातःप्रतिमापूजनेविधिः ॥ यःपुरोक्तोमहाबाहोब्रह्मणाविष्णवेतथा ॥ २५ ॥ अनेनाविधिनायस्तुसततंपूजयेद्रविम् ॥ सप्राप्नोत्य
खिलाँल्लोकानिहलोकेपरत्रच ॥ २६ ॥ पुत्रार्थीलभतेपुत्रान्धनार्थीलभतेधनम् ॥ कन्यार्थीलभतेकन्यांवेदार्थीवेदविद्भवेत् ॥ २७ ॥ नि
ष्कामःपूजयेद्यस्तुसमोक्षंप्राप्नुयान्नरः ॥ अनेनविधिनापूज्यगतःसिद्धिंसवैष्णवः ॥ २८ ॥ ब्रह्मादयस्तथादेवपूजयित्वाविभावसुम् ॥ अनेन
विधिनापूज्यसंतःसिद्धिंपरांगताः॥२९॥इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेव्योमार्चनाविधिवर्णनंनामचतुराधिकद्विशततमोऽध्या
यः ॥ २०४ ॥ छ॥ व्यासउवाच ॥ ॥ पुनर्निबोधमेभीष्मगदतःपरमंविधिम् ॥ येनपूजयतेनित्यंमहादेवंदिवाकरम् ॥ १ ॥ प्रभूतंनिर्म
लंतेजआराध्यपरमंसुखम् ॥ पूर्वमंतस्तथाग्नेय्यांनैर्ऋत्यांपवनालये ॥ २ ॥ क्रमेणयावदीशानंहृदिबीजंचविन्यसेत् ॥ भास्करासनमेतत्तु
न्यस्तव्यंतत्त्वदर्शिभिः ॥ ३ ॥ उपरिष्टाततस्तस्यहृदयेनतुपंकजम् ॥ अष्टपत्रंकेशरालंपंचवर्णसकेसरम् ॥ ४ ॥ दीप्तादिपूर्वमारभ्य

आमहादेवगोचरम् ॥ शक्त्यष्टकंन्यसेन्मंत्रैरादितःसर्वतोमुखीम् ॥ ५ ॥ अबीजैःकेसराग्रेषुक्रमेणैवचपूजयेत् ॥ ततस्त्वावाहयेद्भानुंस्थाप
येत्कर्णिकोपरि ॥ ६ ॥ तस्योपहृत्यतंचान्यंवेदितव्यंखपुष्करम् ॥ तेनैवावाहनंचार्घ्यंस्थापनंचार्घमेवच ॥ ७ ॥ पाद्यमाचमनंस्थानं
वस्त्रगंधादिभूषणम् ॥ विधिनावीरपुष्पाणिनैवेद्यंधूपमेवच ॥ ८ ॥ कर्तव्यंश्रद्धयाभक्त्याएवंतुष्यतिभास्करः ॥ महापातकिनोऽप्याशुल
भंतेचिंतितंफलम् ॥ ९ ॥ आदित्यंपूजयित्वातुपश्चादंगानिपूजयेत् ॥ दीतायांहृदयंन्यस्यभवान्यांतुशिरोन्यसेत् ॥ १० ॥ दिग्विदिक्षु
न्यसेदस्त्रमिंद्रादिशोत्तरांतिकम् ॥ कर्णिकायांन्यसेन्नेत्रंस्वबीजेनतुवाचने ॥ ११ ॥ पुष्पैर्गंधैश्चधूपैश्चहृदयानिक्रमेणतु ॥ पूजयित्वातुविधि
वद्भर्भपश्चात्तुमंत्रवित् ॥ १२ ॥ बाह्यतःपूर्वतोमंदंदक्षिणेनबुधंतथा ॥ विषाणंपश्चिमेपूज्यउत्तरेणतुभार्गवम् ॥ १३ ॥ आग्नेय्यांचकुजंपूज्य
नैर्ऋत्यांभानुदेहजम् ॥ वायव्यांपूजयेत्कृष्णमैशान्यांविकचंनृप ॥ १४ ॥ इन्द्रादिलोकपालांश्चततोऽर्चांपूजयेद्बुधः ॥ सुगंधैर्विविधैःपुष्पै
र्धूपैश्चैवमनोरमैः ॥ १५ ॥ क्रमेणपूजयेद्भानुंलोकपालैर्ग्रहैःसह ॥ मंत्रैःकुरुकुलश्रेष्ठयइच्छेच्छ्रेयआत्मनः ॥ १६ ॥ अनेनविधिनायत्रदेवः
संपूज्यतेरविः ॥ नचौराग्निभयंतत्रनचापिनरकाद्भयम् ॥ १७ ॥ यज्ञोपलविषादिभ्योभयंतत्रनविद्यते ॥ सुखमारोग्यमानंदंसुभिक्षम
चलांश्रियम् ॥ १८ ॥ तेजोबिंबांतमध्यस्थमादित्यंपरमार्थतः ॥ यष्टव्यंसाधकैर्नित्यंनरथोनचवाजिनः ॥ १९ ॥ इत्येपविधिराख्यातो
मयाभीष्मतवाखिलः ॥ येनपूजयतेनित्यंमहादेवोदिवाकरम् ॥ २० ॥ इत्थंपूज्यविवस्वन्तंहृद्बीजेनविसर्जयेत् ॥ यएवंपूजयेद्भानुंसया
तिपरमांगतिम् ॥ २१ ॥ इतिश्रीभविष्येमहापुराणेसप्तमीकल्पेसौरधर्मेभीष्मव्याससंवादेमहादेवार्चनविधिवर्णनंनामपंचाधिकद्विशतत
मोऽध्यायः ॥ २०५ ॥ छ ॥ ॥ भीष्मउवाच ॥ ॥ मंत्रोद्धारंपरंब्रूहिमुद्राशक्तिसमन्वितम् ॥ रूपवर्णसमंचैवपौराणिकमनुत्तमम् ॥ १ ॥
॥ व्यासउवाच ॥ शृणुभीष्ममहाबाहोयथावक्ष्यामितेनघ ॥ पौराणिकानांमंत्राणामुद्धारंवैदिकादृते ॥ २ ॥ वर्णंरेफसमायुक्तंविद्रुमेनै
वभूषितम् ॥ अंतस्थानांहिअंत्यंवैब्रह्मदैवत्यमुच्यते ॥ ३ ॥ विंदुरेफसमायुक्तंदीर्घयामात्रयातथा ॥ दीक्षाक्षरसमुद्दिष्टंद्वितीयंविष्णुदै
वतम् ॥ ४ ॥ तृतीयंतुतथाप्रोक्तंसविसर्गंजनाधिप ॥ सतृतीयोबुधैःप्रोक्तोरुद्रदैवतएवहि ॥ ५ ॥ भास्करोयंमहान्साक्षान्मंत्रमूर्तिस्त्रि

रक्षरः ॥ दुर्लभःपरमोगुह्यस्त्रिदेवोदेवपूजितः ॥ ६ ॥ यस्त्विदंजपतेभक्त्यासयातिपरमांगतिम् ॥ ततश्चमुद्रांवक्ष्यामिसान्निध्यंकारणं
परम् ॥ ७ ॥ पद्माकारौकरौकृत्वामध्येश्लिष्टेतुमध्यमे ॥ अंगुलिंक्षारयतेतास्मिन्विमुद्रेतिचसोच्यते ॥ ८ ॥ अनयाबद्धयाराजन्भा
स्करस्याप्रियोभवेत् ॥ महाभयेषुसर्वेषुमातृवत्परिरक्षति ॥ ९ ॥ हृदयंतस्यविज्ञेयंयदक्षरवरंस्मृतम् ॥ विद्रुमोपरिसंछन्नंहृद्गतं
तद्गतंसदा ॥ १० ॥ शिरस्यकेमितिप्रोक्तंदेवदेवस्यभारत ॥ महाव्याहृतयस्तिस्रस्तथारज्वालिनीशिखा ॥ ११ ॥ अष्टाक्षरातुविद्धे
यमादित्यस्यमहात्मनः ॥ यःस्मरेत्साधकस्त्वेनंनासौकेनापिबाध्यते ॥ १२ ॥ अकारेणसमायुक्तंबिंदुरेफसमन्वितम् ॥
हकारमग्निदैवत्यंकवचंभास्करप्रियम् ॥ १३ ॥ एकाक्षरमिदंप्रोक्तमभेद्यंयःस्मरेदिदम् ॥ दुष्टानांचैवविघ्नानांनाशनंनात्रसंशयः ॥ १४ ॥
सविसर्गोरेफइतिअस्त्रमेकाक्षरंस्मृतम् ॥ नाशयेद्दुष्टकर्माणिसाधकस्यनसंशयः ॥ १५ ॥ संमुखौतौकरौकृत्वाश्लिष्टौतुग्रंथितांगुली ॥ क
निष्ठानामिकायोज्यातर्जन्यौमध्यमेतथा ॥ १६ ॥ हृच्छिरःसशिखाचर्मामुद्रेयंव्योमसंज्ञिता ॥ मुष्टिवक्रोच्छ्रितंकुर्यात्सव्यहस्तस्यत
र्जनी ॥ १७ ॥ मालशब्दकृतादिस्तुमुद्राह्यस्त्रस्यकीर्तिता ॥ त्रासनीनामविख्यातासर्वविघ्नभयंकरी ॥ १८ ॥ कर्णबिंदुसमायुक्तंयंचतुर्थं
महामते ॥ भास्करस्यत्विदंनेत्रमग्निदैवतमुच्यते ॥ १९ ॥ स्मरःस्यात्साधकेंद्राणांदुरंतोनाशनेध्रुवम् ॥ मध्यमातर्जनीचैवसव्यहस्तस्यचो
च्छ्रितम् ॥ २० ॥ कनिष्ठानामिकेकुंच्यअंगुष्ठेनततःक्रमेत् ॥ नेत्राभ्यांस्पर्शयेदेनांनेत्रमुद्राप्रकीर्तिता ॥ २१ ॥ गोवृषानामविख्याता
दर्शयेद्दिव्यगोचरम् ॥ रांदीप्तारिंततःसूक्ष्मारींजयाभीष्मउच्यते ॥ २२ ॥ उभाह्वारूंविभूतिश्चविमलारैंप्रकीर्तिता ॥ अघहाचमहाबाहो
विद्युतारौंप्रकीर्तिता ॥ २३ ॥ गोवृषानामरंसर्ववीरभद्रकरीतथा ॥ इत्येताबीजरूपास्तुकथिताश्चैवशक्तयः ॥ २४ ॥ उत्तानौतुकरौकृत्वास
व्याकुंच्यततांगुली ॥ कुर्यादुपरिचांगुष्ठौचालयीतपुनःपुनः ॥२५॥ सर्वासांचैवशक्तीनामेतामुद्रांप्रदर्शयेत् ॥ नाम्नाचविद्युताचैवनवमीसर्व
तोमुखी॥२६॥नामान्येतानिशक्तीनांसमासात्कथितानितु॥सबीजानिमहाबाहोमयास्नेहेनभारत॥२७॥ग्रहाणांशृणुबीजानिरूपंचगदतोमम॥
सर्वत्रभंतथाखंचकंजकूतुहलोद्वह ॥ २८ ॥ ॐकारादीपिताःसर्वेनमस्कारांतयोजिताः ॥ पूजाकालेप्रयोक्तव्याजपकालेतथैवच ॥२९॥ होम

॥ एतामुद्राः
कालेतुस्वाहांतंमंत्रंषट्कारसंयुतम् ॥सर्वेविंदुयुताभीष्मशिखाबिंदुविभूषिताः ॥३०॥ सोमाद्याःकेतुपर्यंताग्रहाह्येवंप्रकीर्तिताः ॥ एतामुद्राः
प्रवक्ष्यामिसर्वसिद्धिप्रदायिकः॥३१॥सुमुखौतुकरौकृत्वाश्लिष्टौचैवप्रसारितौ ॥ इदंमुद्रानमस्कारंग्रहसान्निध्यकामिका ॥३२॥ मंत्रोद्धारस्तवा
ख्यातोरहस्योदुर्लभोनृप ॥ शृणुष्वरूपंदेवानांध्यानकालेह्युपस्थिते ॥३३॥ जपावर्णमहातेजंश्वेतपद्मोपरिस्थितम् ॥ सर्वलक्षणसंपन्नंसर्वाभ
रणभूषितम् ॥ ३४ ॥ तथैकवक्रंद्विभुजंसोमपंकजकंधरम् ॥ मंडलेनचरूपंतुमध्यस्थंरक्तवाससम् ॥ ३५ ॥ मार्तंडस्यइदंरूपंशुचिःस्ना
तोजितेंद्रियः ॥ त्रिकालंयःस्मरेद्धीमएकचित्तोव्यवस्थितः ॥ ३६ ॥ सोऽचिराद्भवतेलोकेवित्तेनधनदोपमः ॥ मुच्यतेसर्वभोगैस्तुतेजस्वी
बलवान्भवेत् ॥ ३७ ॥ हृदयंचोत्तमांगंचशिखावैवक्रमेवच ॥ रक्तवर्णाइमेश्यामाःसर्वाभरणभूषिताः ॥ ३८ ॥ वरदाऽभयहस्ताश्च
ध्यातव्याःसाधकेनतु ॥ तडित्पुंजनिभंशस्त्रंरौद्रंचंद्राकरालिनम् ॥ ३९ ॥ विशेषःकथितोह्येषकामरूपस्वभावतः ॥ दीताशीताशिखा
काराध्यातव्याममशक्तयः ॥ ४० ॥ श्वेतवर्णंस्मरेत्सोमंरक्तवर्णंकुजंस्मरेत् ॥ सौम्यमष्टापदाभंचगुरुंचपतिवर्णकम् ॥ ४१ ॥ शंखक्षी
रनिभंश्वेतंकाणंचांजनसंनिभम् ॥ रजावर्तनिभंराहुंधूम्रंचविकचंस्मरेत् ॥ ४२ ॥ वामहस्तौकटिन्यस्तौदक्षिणाचाभयप्रदौ ॥
रक्तभ्रूरक्तनेत्रास्येअर्धकायकृतांजलिः ॥ ४३ ॥ इतिभानुग्रहैःसार्धंयेध्यायंतिनृपोत्तम ॥ लभंतेतेमहासिद्धिमचिरान्नात्रसंशयः ॥ ४४ ॥
तवाख्यातमिदंवक्त्रंग्रहाणांभीष्मकृत्स्नशः ॥ यंश्रुत्वासर्वेपापेभ्योमुच्यंतेभुविमानवाः ॥ ४५ ॥ अनेनविधिनाभीष्मसदादेवंदिवाकरम् ॥
त्रिकालंपूजयेद्भक्त्यावीरश्रद्धासमन्वितः ॥ ४६ ॥ इत्थंपूजयमानस्तुसर्वेदेवंदिवाकरम् ॥ ब्रह्महत्याविनिर्मुक्तोमहादेवत्वमाप्नुयात् ॥ ४७ ॥
इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषुसूर्यपूजामाहात्म्यवर्णनंनामषड्डुत्तरद्विशततमोऽध्यायः ॥२०६॥ भीष्मउवाच ॥
अहोदेवस्यमाहात्म्यंभास्करस्यत्वयोदितम् ॥ पूजयंतिसदाह्येनंब्रह्मविष्णुशिवादयः ॥ १ ॥ व्यासउवाच ॥ एवमेतन्नसंदेहोयथावद
सिभारत ॥ नास्तिसूर्यसमोदेवोनास्तिसूर्यसमागतिः ॥२॥ नास्तिसूर्यसमंब्रह्मनास्तिसूर्यसमंहुतम् ॥ नास्तिसूर्यसमोधर्मोनास्तिसूर्यसमं
धनम्॥३नास्तिसूर्यमृतेकामंनास्तिसूर्यमृतेपदम्॥नास्तिसूर्यसमोबंधुर्नास्तिसूर्यसमःसुहृत् ४॥नास्तिसूर्यसमामातानास्तिसूर्यसमोगुरुः॥

नास्तिसूर्यसमंतीर्थंनपवित्रंततःपरम् ॥ ५ ॥ तमेकंदैवतंविद्यान्नैवाप्यर्कपरायणम् ॥ लोकानांदेवतानांचपितॄणांचापिभारत ॥ ६ ॥
तमर्चंतःस्तुवंतश्चप्राप्नुवंतिपरांगतिम् ॥ तेप्रपन्नास्तुयेभक्त्यामुक्तास्तेभवसागरात् ॥ ७ ॥ राजाचोराग्रहाःसर्पादारिद्र्यंदुःखसंपदः ॥ नैते
पीडयितुंशक्ताःप्रसन्नेभास्करेसति ॥ ८ ॥ व्यासउवाच ॥ एवंतातमहाबाहोदेवोभास्करतत्परः ॥ सपूज्यःसनमस्कार्यःसहिध्यातव्य
एवच ॥ ९ ॥ प्रत्यक्षदेवताह्येषादेवदेवोयमादरात् ॥ अथकिंबहुनोक्तेनयद्वक्ष्यामिनिबोधमे ॥ १० ॥ पूजयेत्तेनयःपापीतथादित्यदिने
रपि ॥ पूजयंतिनरायेवैतेयांतिपरमांगतिम् ॥ ११ ॥ प्राप्तेसूर्यदिनेभक्त्याभानुंसंपूज्यश्रद्धया ॥ नर्कंकरोतिपुरुषःसयात्यमरलोक
ताम् ॥ १२ ॥ यस्तुपूर्वैरवेर्भक्त्यापंचरत्नसमन्वितम् ॥ निवेदयतिमंत्रेणसयात्यमरलोकताम् ॥ १३ ॥ मार्तंडप्रीतयेयस्तुकुर्याच्छ्रा
द्धंविधानतः ॥ संक्रांतावयनेवीरसूर्यलोकंसगच्छति ॥ १४ ॥ कृत्वोपवासंषष्ठ्यांतुसप्तम्यांयस्तुमानवः ॥ करोतिविधिवच्छ्राद्धंभास्करः
प्रीयतामिति ॥ १५ ॥ सर्वदोषविनिर्मुक्तःसूर्यलोकेमहीयते ॥ मानवोयस्तुसप्तम्यांयोषिताचदिवाकरम् ॥ १६ ॥ प्रपूज्यविधिवद्भानुं
सर्वान्कामानवाप्नुते ॥ विशेषतस्तस्यदिनेग्रहणेचनराधिप ॥ १७ ॥ इतिभीष्मविजानीहिनदेवोभास्करात्प्रियः ॥ आदित्यमेकंपरमंदेवदेवे
षुपूजितम् ॥ १८ ॥ रत्नपर्वतमारुह्ययथाप्नुविनराधिपाः ॥ सत्वानुरूपंगच्छंतिरत्नभागानशेषतः ॥ १९ ॥ तथाभानुंसमाराध्यप्राप्नुवंति
नराःफलम् ॥ धनार्थीप्राप्नुयादर्थंपुत्रार्थीप्राप्नुयात्सुतम् ॥ २० ॥ मोक्षार्थीमोक्षमाप्नोतिचाथवामरतांव्रजेत् ॥ अथकिंबहुनोक्तेनशृणुष्व
वचनंमम ॥ २१ ॥ ब्रह्मादयोदेवगणाभानुमाराध्यभारत ॥ मनोहराणिदिव्यानिदिविस्थानान्यवाप्नुवन् ॥ २२ ॥ अचलानिमहाया
ससर्वपापहराणिच ॥ समंतुरुवाच ॥ इत्युक्त्वाभगवान्व्यासस्तत्रैवांतरधीयत ॥ २३ ॥ भीष्मोऽपिपूजयामासभक्त्याभानुंविधानतः ॥
तथात्वमपिराजेंद्रपूजयेमंदिवाकरम् ॥ २४ ॥ पूजयित्वारविंभक्त्यास्थानंयास्यसिशाश्वतम् ॥ यथागतःसभगवान्व्यासोभीष्मश्चमान
द ॥२५ ॥ सकृत्प्रपूज्यसप्तम्यांभक्त्यादेवंदिवाकरम् ॥ इति श्रीभविष्येमहापुराणेव्यासभीष्मसंवादेआदित्यपूजामाहात्म्यवर्णनंनामसप्ता
धिकद्विशततमोऽध्यायः ॥ २०७ ॥ छ ॥ शतानीकउवाच ॥ पुनर्मेब्रूहिसप्तम्यांप्रीतयेभास्करस्यतु ॥ उपोषितोभवतीहनरोयस्तुद्विजो

त्तम ॥ १ ॥ सुमंतुरुवाच ॥ कथिताःसप्तसप्तम्यःपुनरस्मिन्महामते ॥ बह्वःकुरुशार्दूलभूयस्त्वेताःशृणुष्वमे ॥ २ ॥ स्वयंयाः
कथिताःपूर्वमादित्येनखगाधिप ॥ अरुणस्यमहाबाहोसप्तम्यःसप्तपूजिताः ॥ ३ ॥ अर्कसंपुटकैरेकाद्वितीयामरिचैस्तथा ॥ तृतीयानिं
बपत्रैश्चचतुर्थीफलसप्तमी ॥ ४ ॥ अनोदनापंचमीस्यात्षष्ठीविजयसप्तमी ॥ सप्तमीकामिकाज्ञेयाविधितासांनिबोधमे ॥ ५ ॥ शुक्लपक्षे
रविदिनेदक्षिणेचोत्तरायणे ॥ ग्रहणेसूर्यनक्षत्रेगृह्णीयात्सप्तसप्तमीः ॥ ६ ॥ सतांसब्रह्मचारीस्याच्छौचयुक्तोजितेन्द्रियः ॥ सूर्यार्चनरतोदांतो
जपहोमपरस्तथा ॥ ७ ॥ पंचम्यामेवपुरुषःकुर्यान्नित्यमनात्मकम् ॥ षष्ठ्यांनमैथुनंगच्छेन्मधुमांसंचवर्जयेत् ॥ ८ ॥ अर्कसं
पुटकैरेकांतथान्यांमरिचैर्नयेत् ॥ तथापरांनिंबपत्रैःफलाख्यायांफलंचरेत् ॥ ९ ॥ अनोदनामन्नरहितउपासीतयथाविधि ॥ अहोरात्रंवा
युभक्षःकुर्याद्विजयसप्तमीम् ॥ १० ॥ तथैकांसप्तमींकृत्वाप्रतिमासंविचक्षणः ॥ कुर्याद्यथाविधिवच्चततःकुर्वीतकामिकाम् ॥ ११ ॥
आसांलिखित्वानामानिपत्रकेषुपृथक्पृथक् ॥ तानिसर्वाणिपत्राणिप्रक्षिपेदाभिनवेघटे ॥ १२ ॥ तदर्थेयोनजानातिलोकवान्योपिवा
नरः ॥ तेनह्युद्धारयेदेकंनकुर्यान्नविचारयेत् ॥ १३ ॥ तेनैवविधिनायस्तुप्रतिमासंचतंतपः ॥ सप्तैवयावत्सप्तम्योविज्ञेयासातुका
मिका ॥ १४ ॥ इत्येताःसप्तसप्तम्यःस्वयंप्रोक्ताविवस्वता ॥ कुर्वीतयोनरोभक्त्यासयात्यर्कसदोनृप ॥ १५ ॥ अर्कसंपुटकैर्विस्त
मचलंसप्तपौरुषम् ॥ मरीचैःसंगमःस्याद्धिप्रियैःपुत्रादिभिःसदा ॥ १६ ॥ सर्वरोगाःप्रणश्यंतिनिंबपत्रैर्नसंशयः ॥ फलैस्तुपुत्र
पौत्रंचदौहित्रंचापिपुष्कलम् ॥ १७ ॥ अतोधनाधनंधान्यंसुवर्णरजतंतथा ॥ तथापशुहिरण्यंचआरोग्यंसततंनृप ॥ १८ ॥ उपोष्याविज
यांशत्रून्राजन्भ्राजातिनित्यशः ॥ साधयेत्कामदान्कामान्विधिवत्समुपासिते ॥ १९ ॥ पुत्रकामोलभेत्पुत्रमर्थकामोर्थमक्षयम् ॥ विद्या
कामोलभेद्विद्यांराज्यार्थीकाममाप्नुयात् ॥ २० ॥ कृष्णाकामांददात्येषा कामदाकुरुनंदन ॥ नरोवायदिवानारीयथोक्तंसप्तमीव्रतम् ॥ २१ ॥
करोतिनियतात्मावैसयातिपरमांगतिम् ॥ नतेषांत्रिषुलोकेषुकिंचिदस्तीतिदुर्लभम् ॥ २२ ॥ येभक्त्यालोकनाथस्यव्रतिनःसंशितव्र
ताः ॥ व्रतैस्तुविविधैर्वीरतपोवापिसुदुष्करैः ॥२३॥ नतत्फलमवाप्नोतियज्ञैर्वाबहुदक्षिणैः ॥ तीर्थाभिषंजनैर्वापिदानहोमार्चनैस्तथा ॥२४॥

यत्फलंचपूजयितुंसतम्यांप्राप्यमोक्षदम् ॥ मोक्षार्थीपार्थिवश्रेष्ठयथाहभगवान्रविः ॥ २५ ॥ कृत्वादित्यदिनेनक्तंभक्त्यासंपूजयेद्र
विम् ॥ अचलंस्थानमाप्नोतिमानवःश्रद्धयान्वितः ॥ २६ ॥ सूर्यलोकेचनियतंतस्यवासोनसंशयः ॥ यस्तुपूजयतेभक्त्यासतम्यांभा
स्करंनरः ॥ २७ ॥ ब्रह्मेंद्ररुद्रलोकेषुतस्याप्रतिहतागतिः ॥ नांधोनकुष्ठीनक्लीबोनव्यंगोनचानिर्धनः ॥ २८ ॥ कुलेतस्यभवेद्वीरयश्चरे
त्सतमीव्रतम् ॥ विद्यार्थीलभतेविद्यांधनार्थीधनमाप्नुयात् ॥ २९ ॥ भार्यार्थीरूपसंपन्नांस्त्रियंपुत्रांश्चभारत ॥ लोभात्प्रमादान्मोहाच्चव्रतभं
गोयदाभवेत् ॥ ३० ॥ तदात्रिरात्रंनाश्नीयात्कुर्याद्वाकेशमुंडनम् ॥ प्रायश्चित्तमिदंकृत्वापुनरेवव्रतीभवेत् ॥ ३१ ॥ सप्तैवयावत्सतम्यो
भवंतिचखगेश्वर ॥ अभ्यर्च्यसूर्यंसप्तम्यांमाल्यधूपादिभिर्नरः ॥ ३२ ॥ भोजयित्वाद्विजाञ्छक्त्याप्राप्नुयात्स्वर्गमक्षयम् ॥ सतम्यांविप्र
मुख्येभ्योहिरण्यंयःप्रयच्छति ॥ ३३ ॥ सतदक्षय्यमाप्नोतिसूर्यलोकंचगच्छति ॥ इतीदंकीर्तितंवीरसतमीव्रतमुत्तमम् ॥ ३४ ॥ भूय
एवाभिधास्यामिशृणुष्वैकमनानृप ॥ ३५ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेसूर्यारुणसंवादेसप्तासतमीव्रतवर्णनं
नामाष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ यःक्षिपेद्धोमयाहारःशुक्लद्वादशसतमीः ॥ अथवायावकाहा
रःशीर्णपर्णाशनोऽपिवा ॥ १ ॥ क्षीराशीचैकभक्तोवाभिक्षाहारोथवापुनः ॥ जलाहारोपिवाविद्वान्पूजयित्वादिवाकरम् ॥ २ ॥ पुष्पोपहारै
र्विविधैःपद्मसौगन्धिकोत्पलैः ॥ नानाप्रकारैर्गंधैश्चधूपैर्गुग्गुलुचंदनैः ॥ ३ ॥ कृष्णगंधपायसाद्यैर्विचित्रैःसुविभूषणैः ॥ अर्चयित्वाद्विजा
ञ्छ्रेष्ठान्हिरण्यान्नादिभिर्नरः ॥ ४ ॥ सतत्फलमवाप्नोतिक्रतुभिर्भूरिदक्षिणैः ॥ यदेहतप्यतेवीरप्राप्यतेकेवलंरवेः ॥ ५ ॥ विमानवरमारू
ढःसूर्यलोकेमहीयते ॥ ततःपुण्यक्षयाद्राजन्कुलेमहतिजायते ॥ ६ ॥ एवंभक्त्याविवस्वंतंप्रतिमासंसमाहितः ॥ पूजयेद्विधिवद्भक्त्याना
मानिपरिकीर्तयेत् ॥ ७ ॥ माधवेमासिविष्णुरितिमाधवेचार्यमेवेति ॥ शुक्रेविवस्वान्मासेतुशुचौमासेदिवाकरः ॥ ८ ॥ पर्जन्यःश्रावणे
मासिनभस्येवरुणस्तथा ॥ मार्तंडेतिचविज्ञेयःकार्तिकेभार्गवःपुनः ॥ ९ ॥ मार्गशीर्षेतिमित्रस्तुकीर्तितंसततंबुधैः ॥ पूषापौषेतुवैमासेपू
जनीयःप्रयत्नतः ॥ १० ॥ माघेभगेतिविज्ञेयस्त्वष्टाचैवाथफाल्गुने ॥ एवंक्रमेणनामानिकीर्तयेत्प्रीतयेरवेः ॥ ११ ॥ धूपार्चनविधिमिमं

सप्तम्यांसुसमाहितः ॥ यःकरोतिनरोभक्त्यासयातिपरमांगतिम् ॥ १२ ॥ ततस्तेसर्वमाख्यातंयथागुह्यतमंविभोः ॥ नैवदेयमशिष्याय नाभक्तायकदाचन ॥ १३ ॥ नचपापकृतेदेयंनदेयंनास्तिकायवा ॥ कृतघ्नेनास्तिकेवीरनदेयंक्रूरकर्मणे ॥ १४ ॥ यइदंशृणुयान्नित्यंसप्तमीव्रतमुत्तमम् ॥ पठेद्वचापिनियतःश्रद्धयापरयान्वितः ॥ १५ ॥ इहलोकेसुखंप्राप्यसूर्यलोकेमहीयते ॥ पुण्यक्षयादिहागत्यराजाभवति भूतले॥१६॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसूर्यारुणसंवादेमाससप्तमीव्रतवर्णनंनामनवाधिकद्विशततमोऽध्यायः ॥२०९॥ ॥ ॥ सुमंतुरुवाच ॥ ॥ इत्येषसप्तमीकल्पःसमासात्कथितस्तव ॥ विस्तरात्तेपुनर्वच्मिशृणुष्वैकमनाविभो ॥ १ ॥ फाल्गुनामलपक्षस्यषष्ठ्यांचसमुपोषितः ॥ पूजयेद्भास्करंस्नात्वागंधपुष्पविलेपनैः ॥ २ ॥ अर्कपुष्पैर्महाबाहोगुग्गुलेनसुगंधिना ॥ श्वेतेनकरवीरेणचंदनेनादिवाकरम् ॥ ३ ॥ गुडोदकेननैवेद्यंनिवेद्यंप्रीतयेरवेः ॥ एवंसंपूज्यदिवाभानुंरात्रौतस्याग्रतःस्वपेत् ॥ ४ ॥ जपन्भौमंपरंजाप्यंविनिद्रःसततंबुधः ॥ ॥ शतानीकउवाच ॥ ॥ किंतत्परंभगवतःप्रियंजाप्यमनुत्तमम् ॥ ५ ॥ जप्तव्यंयत्परंभक्त्याभानुस्तस्याग्रतोनरैः ॥ तन्मेब्रूहितथामंत्रान्धूपदीपान्विशेषतः ॥ ६ ॥ येनाहंतंजपञ्जप्यपूजयामिदिवाकरम् ॥ ॥ सुमंतुरुवाच ॥ ॥ वच्मितेभरतश्रेष्ठसमासान्नतुविस्तरात् ॥ ७ ॥ षडक्षरेणमंत्रेणकुर्यात्सर्वंसमाहितः ॥ जपंहोमंतथापूजांशतजप्तेनसर्वदा ॥ ८ ॥ सावित्र्याचजपंपूर्वंकृत्वाशतसहस्रशः ॥ पश्चात्सर्वंप्रकुर्वीतजपादेकमनाकुलम् ॥ ९ ॥ ॐभोःसावित्रीभास्करायसहस्ररश्मिंधीमहि ॥ तेनसूर्यःप्रचोदयात् ॥ १० ॥ जपएषपरःप्रोक्तःसप्तम्यांभानुनास्वयम् ॥ जप्त्वासकृद्भवेत्पूतोमानवोनात्रसंशयः ॥ ११ ॥ प्रभातेत्वथसप्तम्यांजपन्नियतमानसः ॥ पूजयेद्भास्करंभक्त्यापूर्वोक्तविधिनानृप ॥ १२ ॥ श्रद्धयाभोजयेच्चापिब्राह्मणाञ्छक्तितोनृप ॥ दिव्यान्भोगांश्वविधिवद्भक्ष्यभोज्यैरनेकशः ॥ १३ ॥ वित्तशाठ्यंनकुर्वीतभोजकांश्चप्रभोजयेत् ॥ नभोजयेत्तथाऽसौरान्सौरान्यत्नेनभोजयेत् ॥ १४ ॥ शतानीकउवाच ॥ केभोज्याःकेनवाभोज्याब्राह्मणाब्रह्मवित्तम ॥ केषुचित्तेषुसप्तम्यांदेवदेवोदिवाकरः ॥ १५॥ सुमंतुरुवाच ॥ षटीभोज्योभवेद्विप्रःसप्तमींकुरुते चयः ॥ सौरभिन्नेष्वभोज्योयोयश्चसुक्तोदिवाकरे ॥ १६ ॥ एतेभोज्याद्विजाराजन्नादित्येनसमासतः ॥ प्रोक्तोगुरुकुलश्रेष्ठतथाऽभोज्या

च्छृणुष्ववै ॥१७॥ सभार्यःसपतिर्यस्तुकुष्ठरोगैर्हतश्चयः॥यश्चान्यदेवताभक्तस्तथानक्षत्रसूचकः ॥१८॥ परापवादनिरतोयश्चदेवलकस्तथा॥ एतेऽभोज्याःसाविप्रास्तुस्वयंदेवेनचिंतिताः ॥ १९ ॥ शतानीकउवाच ॥ येभोज्याब्राह्मणाःप्रोक्तायेचाभोज्याद्विजोत्तमाः ॥ एतेषांलक्षणंब्रूहिसर्वेषांवैसमाहितः ॥ २० ॥ सुमंतुरुवाच ॥ साधुपृष्टोऽस्मिराजेंद्रकीर्तयाम्येषकृत्स्नशः ॥ पठतांतुत्रयीविद्यांब्राह्मणानांकदंबकम् ॥ २१ ॥ घटेत्युक्तातुसाराजन्स्वयंदेवेनभानुना ॥ सोवटोविद्यतेयस्यसघटीत्युच्यतेद्विजः ॥ २२ ॥ ब्रह्मक्षत्रविशांवीरशूद्राणांचकदंबकः ॥ शृण्वतांविधिवत्पुण्यंभक्त्यापुस्तकवाचनम् ॥ २३ ॥ इतिमासेनिबद्धस्यहोमस्येतिचभानुना ॥ कथिताकुरुशार्दूलव्ययमाकाशगामिनः॥२४॥ यस्याःकर्ताभवेद्यस्तुममस्यात्करकोमतः ॥ सविप्रोराजशार्दूलसदेष्टोभास्करस्यतु ॥ २५ ॥ जयोपजीवीव्यासश्चसमःस्याज्जीवकस्तथा ॥ यान्येतानिपुराणानिसेतिहासानिभारत ॥ २६ ॥ जयेतिकथितानीहस्वयंदेवेनभास्वता ॥ एकंनिवासयन्यस्तुब्राह्मणंतूपजीवति ॥ २७ ॥ जयोपजीवीसज्ञेयोवाचकश्चतथानृप ॥ आरुणेयादिशास्त्राणिसप्ताश्वतिलकस्तथा ॥ २८ ॥ यस्तुजानातिसौराणिविप्रःसौरस्यतत्त्ववित् ॥ पूजयेत्सततंयस्तुभास्करंनृपसत्तम ॥ २९ ॥ भोजकांश्चतथाराजन्यथादेवंदिवाकरम् ॥ सज्ञेयोभास्करेभक्तोभोजनीयःप्रयत्नतः ॥ ३० ॥ भोज्यानांलक्षणंह्येतदभोज्यानांशृणुष्वमे ॥ वृषलीयस्यवैभार्याब्राह्मणीतुविशेषतः ॥ ३१ ॥ परभार्यापतिरसौब्राह्मणोब्राह्मणाधमः ॥ दैवेननिहतःकुष्ठीब्राह्मणो ब्रह्मघातकः ॥ ३२ ॥ भोजकोविंदतेयस्तुनचतंपूजयेत्तथा ॥ ज्ञेयोन्यदेवभक्तोसौसविप्रःकुरुनंदन ॥ ३३ ॥ आदित्यंभोजकंविद्याद्भानोर्देहसमुद्भवम् ॥ नादित्यंपूजयेद्यस्तुसभोज्योनकदाचन॥३४॥ मुंडोव्यंगधरोगौरःशंखपुष्पधरस्तथा ॥ यस्ययातिगृहेराजन्भोजकोमानवस्यतु ॥ ३५ ॥ तस्ययांतिगृहेदेवाःपितरोभास्करस्यतु ॥ रक्षोभूतपिशाचाश्चयोगिन्योपिपलायिताः ॥ ३६ ॥ सकृद्भुंक्तेगृहेयस्यभोजकोगृहधर्मिणः ॥ सप्तसंवत्सरंयावत्तृप्तोभवतिभास्करः ॥ ३७ ॥ तस्यातांभोजयेद्दिव्यांभोजकंसततंबुधैः॥ यस्तुतांनिंदतेविप्रःसनभोज्यःकदाचन॥ ३८ ॥ निजंभर्तारमुत्सृज्यस्वैरंयान्यस्यगच्छति ॥ स्वैरिणसातुवैप्रोक्तापापिष्ठाकुलदूषिणी ॥ ३९ ॥ प्रच्छन्नंरोचतेराजन्यानारीभवदोषतः ॥ ज्ञेयासास्वैरिणीराजन्कुलेभवतिनाशिनी ॥ ४० ॥

योस्यांरतोभवेद्विप्रःसज्ञेयःस्वैरिणीरतः ॥ रंगोपजीविकथकोयश्चप्राकृतनर्तकः ॥ ४१ ॥ रंगोपजीवीराजेंद्रतथाचबहुयाचकः ॥ द्वेएते नामनीराजन्कथकस्यप्रकीर्तिते ॥ ४२ ॥ कृतेनानेनयाद्दक्चउद्धृतःकुरुनंदन ॥ यस्तुतिंगायतेविप्रःप्राचैस्तुजनसंसदि ॥ ४३ ॥ रंगोपजीवीप्रोक्तोयंद्वितीयःपरिकीर्तितः ॥ सूचकंकथनंप्रोक्तंसर्वशास्त्रेषुभारत॥४४॥ सूचयेद्यस्तुऋक्षाणिसवैनक्षत्रसूचकः॥४५॥शतानीकउवाच ॥ अहोबतमहत्कष्टंभवतोयद्द्विजान्प्रति ॥ वेदांगज्योतिःशास्त्रंतुषष्ठंप्रोक्तंमनीषिभिः ॥ ४६ ॥ षडंगानभवेत्तेनपातितेनाद्विजेनच ॥ अभोज्यःपठनात्तस्ययद्वत्स्याद्ब्राह्मणोद्विज ॥ ४७ ॥ भोज्योऽखंडंययाविप्रोऽनर्थकेनत्वनर्थकम् ॥ विमृश्यकथ्यतांविप्रअत्रमेसंशयोमहान् ॥ ॥ ४८ ॥ सुमंतुरुवाच ॥ ॥ साधुपृष्टोस्मिभवताश्रूयतामत्रनिर्णयम् ॥ यस्यजीव्यामिदंज्ञेयमंगंविप्रस्यवैभवेत् ॥ ४९ ॥ सांवत्सरेणज्योतिषाज्ञाननक्षत्रसूचकः ॥ नसभोज्योभवेद्राजन्यस्येयंजीविकाभवेत् ॥ ५० ॥ निष्कारणंपराणांचपरोक्षंदोषकीर्तनम् ॥ गुणानांचयथाग्रुतिःपरिवादपरस्तुसः ॥ ५१ ॥ ब्राह्मणोयस्तुराजेंद्रवृत्त्याकर्मकरोतिवै ॥ देवतायतनेचेहदेवानांपूजनंतथा ॥ ५२ ॥ आधिपत्यंभक्षणंचनैवेद्यस्यपरंतप ॥ सज्ञेयोदेवलोराजन्ब्राह्मणोब्राह्मणाधमः ॥ ५३ ॥ नाधिकारस्तुविप्राणांभौमानांदेवपूजने ॥ वृत्त्याभारतशार्दूलआधिपत्येविशेषतः ॥ ५४ ॥ यस्तुपूजयतेदेवींब्राह्मणोद्रव्यलोभतः ॥ वृत्त्याकुरुकुलश्रेष्ठसयातिनरकंध्रुवम् ॥ ५५॥ देवालयेषुसर्वेषुअग्निकार्यंचसुव्रत ॥ यःकुर्याद्द्रव्यलोभेनअधोगतिमवाप्नुयात् ॥ ५६ ॥ देवालयेषुसर्वेषुवर्जयित्वाशिवालयम् ॥ देवानांपूजनेराजन्नग्निकार्येषुवाविभोः ॥ ५७ ॥ अधिकारःस्मृतोराजन्भोजकानांनसंशयः ॥ पूजयंतस्तुदेवानांप्राप्नुवंतिपरांगतिम् ॥ ५८ ॥ नैवेद्यंभुंजतेयस्माद्भोजयंतिचभास्करम् ॥ पूजयंतिचदेवानांदिव्यतंत्रेणतेगताः ॥ ५९ ॥ पूजयित्वातुवैदेवान्नैवेद्यंभक्ष्यचप्रभोः ॥ यांतितेपरमंस्थानंयत्रदेवोदिवाकरः ॥ ६० ॥ब्राह्मणश्चापितंब्रूयात्तीक्ष्णेसातिमहामते ॥ एवंकारिष्येश्रेयोर्थेनात्मनस्तववाविभो ॥ ६१ ॥ इत्यामंत्र्यततोगच्छेत्स्वगृहंकुरुनंदन ॥ तथापरेऽह्निसंपूज्यदेवंभक्त्यादिवाकरम् ॥ ६२ ॥ कृत्वाचपावकंराजन्ब्राह्मणान्भोजयेत्ततः ॥ शाल्योदनंतथामुद्गंसुगंधंमुद्गमेवहि ॥ ६३ ॥ अपूपान्गुडपूपांश्चपयोदधितथानृप ॥ एतैस्तुतृप्तिमायातिभास्करोनरसत्तम ॥ ६४ ॥ वर्षाणिभरतश्रेष्ठनात्रकार्याविचारणा ॥ कुलित्थ

कान्मसूरांश्चनिष्पावादींस्तथैवच ॥ ६५ ॥ सिग्रुकंचतथान्यच्चराजमाषांस्तथैवच ॥ नैतानिभास्करेदद्याद्यइच्छेच्छ्रेयआत्मनः ॥ ६६ ॥
दुर्गंधंयच्चकटुकमत्यल्पंभास्करस्यतु ॥ विमिश्रांस्तंडुलांश्चापिनदद्याद्भास्करायवै ॥ ६७ ॥ इत्थंभोज्याद्विजंराजन्प्राशयेदर्कसंपुटम् ॥
प्रणम्यशिरसादेवमुदकेनसमन्वितम् ॥ ६८ ॥ गृहीत्वाऽर्कतनंयस्तुभजतेऽन्यत्रलोकतः ॥ नाश्नंतिपितरस्तस्यनदेवानचमानवाः ॥ ६९ ॥
निष्क्राम्यनगराद्राजन्गत्वापूर्वोत्तरांदिशम् ॥ नात्युच्चेनातिनीचेचशुचौदेशेऽर्कमुत्तमम् ॥ ७० ॥ जातंदृष्ट्वामहाबाहोपूजयित्वाखगोत्तम ॥
पूर्वोत्तरागताश्चैवतस्यशाखादिसन्नृप ॥ ७१ ॥ शाखायाअग्रतःपात्रेसुसूक्ष्मेपल्लवाश्रिते ॥ सुश्लिष्टेनपृथग्भूतेसंपूज्यगृहमाव्रजेत् ॥ ७२ ॥
स्नातःपूज्यविवस्वंतमर्कपुष्पैःखगोत्तम ॥ ब्राह्मणान्भोजयित्वातुअर्कोमेप्रीयतामिति ॥ ७३ ॥ प्राश्यमंत्रेणार्कपुटंततोभुंजीतवाग्यतः ॥
देवस्यपुरतोवीरअस्पृशन्दशनैःपुटम् ॥ ७४ ॥ ॐअर्कसंपुटभद्रंतेभद्रंतेऽर्कसदास्तुवै ॥ ममापिकुरुभद्रंचप्राशयाश्चित्तदोभव ॥ ७५ ॥
इमंमंत्रंजपन्राजन्स्मरन्नर्कंमहामते ॥ स्थित्वापूर्वमुखोब्रह्मचारिणासहितंनृप ॥७६॥ प्राश्यमुंकेचयोराजन्सयातिपरमांगतिम् ॥ दंतैरस्पृश्य
हेवीरतत्पुटंचार्कसंज्ञितम् ॥७७॥ अनेनविधिनाभक्त्याकर्तव्यासप्तमीसदा ॥ वर्षंयावन्महाबाहोप्रीतयेऽर्कस्यश्रद्धया॥७८॥ यश्चेमांसप्तमीं
कुर्याद्भास्करंप्रीणयन्नरः ॥ तस्याक्षयंभवेद्वित्तमचलंसाप्तपौरुषम् ॥ ७९ ॥ सुवर्णंरजतंताम्रंहिरण्यंचतथाक्षयम् ॥ कृत्वेमांसिद्धिमा
यातःकौथुमिःसहसागतः ॥ ८० ॥ कुष्ठरोगाच्चवैमुक्तोजयस्तोमोमहीपतिः ॥ बृहद्बलध्वजःकोपीयाज्ञकल्क्योऽथकृष्णजः ॥ ८१ ॥
अर्कंचैवसमाराध्यततोह्येत्यर्कसाम्यताम् ॥ इयंधन्यतमापुण्यासप्तमीपापनाशिनी ॥ ८२ ॥ पठतांशृण्वतांराजन्कुर्वतांचविशेषतः ॥
तस्मादेषासदाकार्याविधिवच्छ्रेयसेऽनघ ॥ ८३ ॥ ॥ शतानीकउवाच ॥ ॥ जनकाद्ययथासिद्धिंगताभानुंप्रपूज्यच ॥ श्रुतंमयातुब
हुशोनश्रुतंकौथुमिर्यथा ॥८४॥ सिद्धिंगतोऽर्कमाराध्यकुष्ठान्मुक्तश्चसुव्रत ॥ कश्चासौकौथुमिर्विप्रःकथंकुष्ठमवाप्तवान् ॥८५॥ कथमाराधया
मासभानुंदेवपतिंद्विज॥एतन्मेब्रूह्यखिलंचकीर्तयस्वसमासतः ॥ ८६॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेषुसूर्यपूजादि
वर्णनंनामदशाधिकद्विशततमोऽध्यायः ॥ २१० ॥ ॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ साधुपृष्टोऽस्मिराजेंद्रशृणुष्वगदतोमम ॥ आसीत्पुरामहा

विद्वान्ब्राह्मणःस्थानगोत्तमः॥ १ ॥ सगतःपुत्रसहितोजनकस्याश्रमंद्विजः ॥ तत्रवादोऽभवत्तेषांविप्रैरन्यैर्नृपोत्तम ॥ २ ॥ क्रोधाविष्टेनवैत
त्रहतःकौथुमिनाद्विजः ॥ तेनदृष्ट्वाहतंविप्रंत्यक्तःपित्रासकौथुमिः ॥ ३ ॥ भ्रातृभिश्चमहाबाहोतथाशिष्टैश्चकृत्स्नशः ॥ प्रत्युक्तःसचसर्वैस्तु
शोकदुःखसमन्वितः ॥ ४ ॥ तीर्थानिसजगामाथदिव्यान्यायतनानिच ॥ नचमुक्तस्त्वसौविप्रःसहसाब्रह्महत्यया ॥ ५ ॥ अ
मुक्तःसतयाविप्राःपरोव्याधिरजायत ॥ कर्णनासाविहीनस्तुपूयशोणितविस्रवः ॥ ६ ॥ पृथिवींपर्यटन्सर्वांपुनरागात्पितुर्गृहम् ॥
दुःखोपहतचित्तस्तुपितरंवाक्यमब्रवीत् ॥ ७ ॥ गतःपितातत्तीर्थानिपुण्यान्यायतनानिच ॥ मुक्तोऽस्मिनानयाताकरूरयाब्रह्महत्यया ॥
॥ ८ ॥ कृतेपिहिपरेतातप्रायश्चित्तेतुमेऽनघ ॥ किंकरोमिक्वगच्छामितातातविरुजोमम ॥ ९ ॥ कृतेनकर्मणायेनअल्पायासे
नमेविभो ॥ नश्येतब्रह्महत्येयंव्याधिश्चायंपरंतप ॥ १० ॥ कथ्यतांमाचिरंतातकुरुनिःश्रेयसंमम ॥ हिरण्यनाभोविप्रस्तुश्रुत्वा
वाक्यंसुतस्यतु ॥ ११ ॥ शोकदुःखाभिभूतस्तुवाक्यंपुत्रमुवाचह ॥ ज्ञातंपुत्रतवक्लेशंप्राप्तंयत्त्वटतामहीम् ॥ १२ ॥ तीर्थानि
चत्वयावत्सप्रायश्चित्तानिकुर्वता ॥ नचापिब्रह्महत्यात्वांमुंचतेमत्कुलोद्वह ॥ १३ ॥ उपायमेकंवक्ष्यामियेनत्वंमोक्षमाप्स्यसे ॥ अल्पायासे
नवैपुत्रशृणुष्वगदतोमम ॥ १४ ॥ ॥ कौथुमिरुवाच ॥ ॥ आराधयामिकंदेवंब्रह्मादीनांकथंविभो ॥ शरीरेणविहीनोस्मिहेतुनासर्वकर्म
णाम् ॥ १५ ॥ सिद्धिसंततियुक्तेनकर्मणातुष्टिमाप्नुयुः ॥ देवैरपिसुपूज्योऽयमुपलेपनमार्जनैः ॥ १६ ॥ भानुरेकोद्विजश्रेष्ठऊचुरेवंमनी
षिणः ॥ ब्रह्माविष्णुर्महादेवोजलेशोधनदस्तथा ॥ १७ ॥ भानुमाश्रित्यसर्वेतेमोदंतेदिविपुत्रक ॥ तस्माद्भानोःसमंदेवंनाहंपश्यामिकंचन ॥
॥ १८ ॥ एवंभानुंसर्वमान्यमधुनाखिलकामदम् ॥ पितरंमातरंताततनराणांनात्रसंशयः ॥ १९ ॥ तमाराधयवैभक्त्याजपन्मंत्रमनुत्तमम् ॥
इतिहासपुराणानिशृणुश्रद्धासमन्वितः ॥ २० ॥ आराधयन्रविंभक्त्याजपन्साममहामते ॥ पुराणानिततोलोकेमोक्षंप्राप्स्यसिपुत्रक ॥२१॥

ज्येष्ठंतुदशमंसामवेधसेप्रियमुत्तमम् ॥ एतेषांतातसाम्नांवैकंठेजाप्यंपरंमतम् ॥ २५ ॥ जपित्वातुअहंशक्त्यागच्छामिपरमंपदम् ॥
॥ हिरण्यनाभउवाच ॥ ॥ साधुपुत्रकुलंपूतंत्वत्पुत्रेणसमेनच ॥ २६ ॥ एवंगतस्यापिहितेजातापुत्रविधेःस्मृतिः ॥ एवंतातनसंदेहःसामा
न्येतानिपुत्रक ॥ २७ ॥ प्रवराणिहिसाम्नांवैब्रह्मणाकथितानिह ॥ एषामपिपरंप्रोक्तंसामद्वयमनुत्तमम् ॥ २८ ॥ तस्मादेकंपरंजाप्यंसर्व
पापभयापहम् ॥ ॥ कैथुमिरुवाच ॥ ॥ कथ्यतांताततच्छीघ्रंयत्तुसामद्वयंपरम् ॥ २९ ॥ एतेषांतातसाम्नांतुनान्यंजाप्यंचयद्भवेत् ॥
हिरण्यनाभउवाच ॥ ॥ ज्येष्ठसामपरंपूर्वंद्वितीयंगदतःशृणु ॥ ३० ॥ ततःश्राव्यंतृतीयंतुजप्तव्यंमुक्तिमिच्छता ॥ ततश्चपरमंप्रोक्तंस्वयं
देवेनभानुना ॥ ३१ ॥ स्वयंदैवतमादिष्टंछंदसामुत्तमंव्रतम् ॥ प्रियंहिरण्यगर्भस्यप्रियंसूर्यस्यसर्वदा ॥ ३२ ॥ जपश्चाविनियोगोपिलक्षणंच
निबोधमे ॥ सत्येनस्वरलीनस्तुशूकरादिस्मृतंबुधैः ॥ ३३ ॥ ऋतुर्भावस्तथाधर्मोविधर्मःसत्यकृत्तथा ॥ धर्माधर्मौतथाकार्यौधर्मवेदनमे
वच ॥ ३४ ॥ यदेभिर्गीयतेशब्दैरुचिरंसमयैर्द्विजैः ॥ जाप्यंतत्परमंप्रोक्तंस्वयंदेवेनभानुना ॥ ३५ ॥ एतद्वैजपमानस्तुपुनरावर्ततेनतु ॥
सर्वरोगविनिर्मुक्तोमुच्यतेब्रह्महत्यया ॥ ३६ ॥ एतज्जाप्यंतुसंजप्यआराधयदिवाकरम् ॥ गायन्सामतवप्रोक्तंशृणुपौराणिकंसुत ॥ ३७ ॥
जेष्ठसाम्नोऽपितेपुत्रलक्षणंकथयामिहि ॥ आद्यायादाज्यदोहेतिजेष्ठसाम्नोपिलक्षणम् ॥ ३८ ॥ तवश्राव्यंजपंपुत्रज्येष्ठागायरविःसदा ॥ समा
राधयशृण्वन्वैपुत्राणामिवपुत्रक ॥ ३९ ॥ एवमाराध्यदेवेशंततोदुःखंप्रहास्यति ॥ ॥ सुमंतुरुवाच ॥ ॥ ततःस्तुत्वापितुर्वाक्यंसामगःकौ
थुमिस्तथा ॥ ४० ॥ आराधयामासरविंभक्त्याश्रद्धासमन्वितः ॥ ततःश्राव्यंजपन्राजंस्त्रिकालेपुरतोरवेः ॥ ४१ ॥ शृण्वतस्तुपुराणानि
ब्रह्महत्यागतासदा ॥ व्याधिश्चकुरुशार्दूलफलमेतच्छ्रुतस्यवै ॥ ४२ ॥ जपतायत्फलंतेनदेवंपूजयतानृप ॥ सोपिप्रातोरविंराजञ्छृणुष्वैक
मनानृप ॥ ४३ ॥ सगतोमूर्तिमान्विप्रःप्रसादाद्भास्करस्यतु ॥ प्रविश्यमंडलंभानोःपदंयत्परमंविभोः ॥ ४४ ॥ आवर्ततेनचाद्यापिगतोसौ
परमंपदम् ॥ इतितेकथितंराजन्गतःसिद्धिंमहाद्विजः ॥ ४५ ॥ उपोष्येमांभवेद्वीरःसप्तमींयातिभास्करम् ॥ कौथुमिर्नरशार्दूलप्रसादाद्भास्क
रस्यतु ॥४६॥जपमानस्तुवैसोपिपुराणश्रवणस्तथा ॥ इत्येषाकथिताराजन्प्रथमासप्तमीतथा ॥४७॥ अर्कस्यपुटिकापुण्यावित्तदायाप्रिया
रवेः ॥ ४८॥ इतिश्रीभविष्येमहापुराणेसप्तमीकल्पेसौरधर्मेऽर्कसंपुटिकानामसप्तमीव्रतवर्णनंनामैकादशाधिकद्विशततमोऽध्यायः॥ १११॥

॥ सुमंतुरुवाच ॥ ॥ इत्येषाकथितावीरअर्कसंपुटिकातव ॥ द्वितीयामरिचैर्यातुशृणुष्वगदतोमम ॥ १ ॥ शुक्लपक्षेतुचैत्रस्यषष्ठ्यांसम्य
गुपोषितः ॥ पूजयेद्भास्करंभक्त्यासौरधर्मविधानतः ॥ २ ॥ ॥ शतानीकउवाच ॥ ॥ ब्रूहिसर्वान्ममब्रह्मन्मंत्रान्पुण्यान्विशेषतः ॥ सू
र्यादिहृदयंचापिशिरोन्यासयुतांस्तथा ॥ ३ ॥ ॥ सुमंतुरुवाच ॥ ॥ अहंतेकथयिष्यामिरहस्यंपरमंविभो ॥ यदुक्तंब्रह्मणापूर्वंभक्त्या
भानोर्महात्मनः ॥ ४ ॥ सर्वपापक्षयार्थायतच्छृणुष्वमहामते ॥ सर्वपापहरंपुण्यमादित्यंलोकपूजितम् ॥ ५ ॥ शिखादामसमायुक्तंवकारा
मृतमुत्तमम् ॥ ॐवंफट् ॥ ॐएषसूर्यःस्वयंतातमंत्रमूर्तिर्महाबलः ॥ ६ ॥ अस्यानुस्मरणान्मंत्रीनित्यंमधुरभोजनः ॥ संवत्सरेणदेवेशंसा
क्षाद्धातुंप्रपश्यति ॥ ७ ॥ व्याधिमृत्योश्चनिर्मुक्तःसूर्यलोकंसगच्छति ॥ सततंजपमानस्तुराजन्मंत्रविदांवर ॥ ८ ॥ मनसाकर्म
णावाचाशापानुग्रहतोपिवा ॥ क्षीराशीमौनमाश्रित्यविविक्तेनियतेंद्रियः ॥ ९ ॥ जपित्वाद्वादशलक्षंवैसशरीरोदिवंव्रजेत् ॥
त्रैलोक्यंचरतेराजंश्चिंतामणिरिवेच्छया ॥ १० ॥ अथेदंपरमंवामंसूर्यस्यहृदयंशृणु ॥ स्मर्तव्यंशुचिनानित्यंसर्वपापभयापहम् ॥
॥ ११ ॥ वियुक्तंचंद्रसंयुक्तमृकारेणचभारत ॥ ॐकारदीपितंचैवहृदयंपरिकीर्तितम् ॥ १२ ॥ यकारबिंदुसंयुक्तंवैशाखः
कथितोबुधैः ॥ यकारश्चवकारश्चमात्राबिंदुस्तथानृप ॥ १३ ॥ इष्टंकवचमादिष्टमस्त्रंवक्ष्योनिबोधमे ॥ प्रणवादिंदुकारं
चस्वादुस्वारंकटस्तथा ॥ १४ ॥ इदमस्त्रंस्मृतंराजन्नमृतंचनिबोधमे ॥ बिंदुचंद्रसंयुक्तंवकारममृतंस्मृतम् ॥ १५ ॥ ॐब्रह्म
न्नस्त्रममृतंगायत्रींचापितेरोरांधेनुवैपरिकीर्तितम् ॥ यकारश्चवकारश्चारिरोवेत्रमादिशेत् ॥ १६ ॥ व्यनेत्रएतान्यंगानिसूर्यस्या
मिततेजसः ॥ आदित्यंमूर्ध्निविन्यस्यहृदयेहृदयंन्यसेत् ॥ १७ ॥ सावित्रींकंठदेशेतुअशेषंमूर्ध्निचिंतयेत् ॥ अर्कन्यासो
मयाख्यातोविद्वान्न्यासंप्रकल्पयेत् ॥ १८ ॥ एकाक्षरस्यसूर्यस्यशृण्वर्चनविधिंपरम् ॥ प्रथमांकिंकिणीमुद्रांबद्धानुहृदयेनृप ॥
॥ १९ ॥ प्राणायामेनचतथापरिवीरसमन्वितम् ॥ एकाक्षरंसमावेत्तिआत्मशुद्ध्यर्थमादरात् ॥ २० ॥ पुनस्त्वामेवबध्यंतुवकारे
णात्मनालभेत् ॥ २१ ॥ एतत्कृत्वादित्यसमोभवतीतिनसंशयः ॥ कृत्वाचमुद्रांप्रासादेअस्त्रंयोज्यमहीपते ॥ २२ ॥ प्रासादशो

भनंस्याद्वैकृत्वातद्भरतर्षभ ॥ कवचेनार्कवाच्छत्रुंश्चालयेद्धर्मनीतथा ॥ २३ ॥ ततोर्घपात्रंपुष्पैश्चपूजयेद्विधिवन्नृप ॥ हृदिनास्नापयेद्देवंत
तःपूजांसमाचरेत् ॥ २४ ॥ पद्ममुद्रापुष्पगर्भांदेवंशिरसिविन्यसेत् ॥ आवाहितोभवेद्देवंदेवदेवोदिवाकरः ॥ २५ ॥ हृदयेनार्घ्यसंयुक्तां
पूजांबध्नीतभारत ॥ हृदयेनचनैवेद्यंदातव्यंशक्तिनाविभोः ॥ २६ ॥ यथाशक्त्याजपंकुर्यात्सुव्रतीवाग्यतेंद्रियः ॥ अनेनविधिनाराजन्सर्व
कार्याणिसाधयेत् ॥ २७ ॥ नकश्चित्प्रतिघातःस्यान्नचापिदुरितंभवेत् ॥ व्योममुद्रांपरांबद्ध्वाकृत्वाचापिप्रदक्षिणम् ॥ २८ ॥ देवंविसर्जयेत्प
श्चाद्धृदयेनमहीपते ॥ २९ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेसौरार्चनविधिवर्णनंनामैकादशाधिकद्विशततमोऽ
ध्यायः ॥ २११ ॥ छ ॥ सुमंतुरुवाच ॥ ॥ दृष्ट्वातुपावकंदेवंपावकस्थंदिवाकरम् ॥ अग्न्यात्तुसपरीवारंवुकारंपरिकीर्तयेत् ॥ १ ॥ एवं
कृतेशोधनंस्यात्पावकस्यनसंशयः ॥ पद्मगर्भाततोवाथहृदयाग्नौसमाक्षिपेत् ॥ २ ॥ आवाहितोभवेद्देवदेवःसाक्षान्नसंशयः ॥ ओंकारेणा
हुतिशतंनेत्रांजनसमाधिना ॥ ३ ॥ पंचाहुतीस्ततोदद्यादंगानांप्रीतयेनृप ॥ विसर्जनंततःकुर्याद्धृदयेनविचक्षणः ॥ ४ ॥ इति श्रीभ
विष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेसौरार्चनविधौहोमविधिवर्णनंनामद्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥ छ ॥ सुमंतुरुवाच ॥
पद्मिनीचतथान्यातुमध्यमानामनीतथा ॥ अर्किणीज्वालिनीचैवतेजनीचगभस्तिनी ॥ १ ॥ शंखमुद्राचदशमीसूर्यवक्त्रातथापरा ॥ सहस्रकिर
णाचैवमुद्राद्वादशकीर्तिताः ॥ २ ॥ दद्यादर्घ्यंतुपद्मिन्याव्योमवध्वाजपेद्बुधः ॥ उदयाश्रयःसमाकर्षमध्यमाव्याधिनाशिनी ॥ ३ ॥ अर्किण्याप
श्यतेसूर्यंविधिस्थस्तुभवेद्यदि ॥ ज्वालिनीमुपसंगंतुंबद्ध्वासूर्यमुखोजपेत् ॥ ४ ॥ सप्ताहाद्दृश्यतेसूर्यःसिद्ध्यतेचततःस्वयम् ॥ अवतीर्य
पद्मखंडंसूर्याद्भिमुखोनरः ॥ ५ ॥ जपञ्छतसहस्रंहिअक्षयंलभतेनिधिम् ॥ शंखमुद्रादिभिरयंसूर्यचक्राविधिंशृणु ॥ ६ ॥ अहोरात्रोषितो
भूत्वाबद्ध्वासूर्यमुखोनरः ॥ स्थितःपद्मासनेराजञ्जपंश्चाप्ययुतंमनुम् ॥ ७ ॥ पश्यतेतुत्र्यहात्सूर्यंभवेत्सिद्धिश्चमानसी ॥ सहस्रकिरणं
बद्ध्वानाभिमात्रजलेस्थितः ॥ ८ ॥ जपेदयुतमात्रंतुभवेत्तद्गतमानसः ॥ सहस्रकिरणंदेवंपरंरश्मिभिरावृतम् ॥ ९ ॥ सपश्यतिपरंधामभवेत्सि
द्धिश्चपुष्कला ॥ शापानुग्रहकर्तासौसर्वेषांप्राणिनांभवेत् ॥ १० ॥ सर्वतःकंचुकंमुक्त्वाभवेद्वैविगतज्वरः ॥ ११ ॥ परौगुल्फौकरौकृत्वासं

लग्नौचपरस्परम् ॥ वामानामिकयाक्रम्यदक्षिणंतुकनीयसी ॥ १२ ॥ वामादक्षिणयाचैवदक्षिणावामयातथा ॥ मुद्रैषाहिमहापुण्याव्योममुद्रा
प्रकीर्तिता ॥ १३ ॥ बद्धयाचानयासद्योहीयंतेव्याधयोनृणाम् ॥ नानयारहितःकश्चित्सिद्धिंप्राप्नोतिसाधकः ॥ १४ ॥ सर्वत्रैवोत्तमाह्येषामं
त्रमुष्टिरितिस्मृता ॥ सूर्यस्यहृदयंसेयमर्कमुद्रेतिविश्रुता ॥ १५ ॥ बध्नीयात्सततंमंत्रैरायुरारोग्यवृद्धये ॥ सूर्यमंडलमभ्यग्रेमंत्रीसूर्योदये
स्थितः ॥ १६ ॥ ससूर्याभिमुखोभूत्वाजपेन्मंत्रंतुसाधकः ॥ दिनत्रयेणपश्येतध्यानीजपपरायणः ॥ १७ ॥ तंदृष्ट्वानाप्नुतेमृत्युंदुःखीनचनसं
शयः ॥ प्राप्नोतिचपरंस्थानंयत्रदेवोदिवाकरः ॥ १८ ॥ उत्तानौतुकरौकृत्वापृष्ठलग्नौपरस्परम् ॥ बद्धात्वंगुलयःसर्वाःसुप्रकीर्णानसं
शयः ॥ १९ ॥ आक्रम्यचांगुलीमूलमंगुष्ठाभ्यांयथाक्रमम् ॥ उदयानाममुद्रैषाबध्नीयादुदयेरवेः ॥ २० ॥ द्वादशात्पश्यतेसूर्यंदिनात्साहि
नसंशयः ॥ सर्वपापहरीचैवसर्वपापविनाशिनी ॥२१॥ उदयाचविनावाममंमध्यतश्चैवतांक्षिपेत् ॥ मध्यमानामविख्यातासूर्यमध्येतुचिंतयेत् ॥
॥ २२ ॥ मध्यमाविधिनातेनबद्धामुद्रांतुसाधकः॥अंगुल्योःपरमंगुष्ठौविधिनाताबुभौग्रथेत् ॥ २३ ॥ मुद्रासास्तमनीह्येषासर्वतंत्रेश्वरीशुभा॥
सूर्यस्यास्तमनेमुद्रांबद्धाजपंसमारभेत् ॥२४॥ सहस्रंहिशतंवापिमुद्रांबद्धाजपेद्बुधः॥ सर्वपातकसंयुक्तंसताहादतुशोभनम्॥२५॥करौपरस्प
रंलग्नावंगुष्ठौचोर्ध्वसंस्थितौ॥उभौचांगुष्ठकौचोर्ध्वौसंलग्नौमूर्ध्निसंस्थितौ ॥२६॥ मुद्रानुमालिनीचैवनिर्दहेत्पापपंजरम्॥ब्रह्महत्यादियत्पापंयो
जितासातुमूर्धनि ॥ २७ ॥ विदभ्यांगुलयःसर्वाईषन्मध्यस्तथाग्रतः ॥ ऊर्ध्वास्थितौतथांगुष्ठौमुद्रेयंतर्जनीस्मृता ॥ २८ ॥ सर्वव्याधिहरीदेवी
सर्वशत्रुविनाशिनी ॥ एतांबद्धामहापुण्यांसर्वान्स्तंभयतेरिपून् ॥ २९ ॥ उभौप्रसार्यवैहस्तौमध्येसार्धेनसंस्थितौ ॥ शेषानाम्याततश्चै
वअंगुष्ठाग्रंतथाक्रमात् ॥३०॥ मुद्रागभस्तिनीनामसूर्यस्यहृदयंपरम् ॥ मृत्युंनाशयतेह्येषाबद्धासूर्योदयेशुभम् ॥ ३१ ॥ अर्घकालेतुबध्नी
यादर्चयाग्निंप्रपूजयेत् ॥ जपकालेचबध्नीयान्मंत्राणांनात्रसंशयः ॥ ३२ ॥ विदक्षिणकानिष्ठिक्यांतर्जनीभ्यांतथाभवेत् ॥ तर्जनीभ्यांतथां
गुष्ठौसंलग्नौतुपरस्परम् ॥ ३३ ॥ जपोयःक्रियतेनित्यंत्रिभिर्मासैर्विशुद्ध्यति ॥ करौतुसंपुटंकृत्वातर्जन्यौद्वौचकुंचयेत् ॥ ३४ ॥ सहस्र

किरणाद्येषासर्वमुद्रेश्वरेश्वरी ॥ त्रिसंध्यमेतांबध्नीयात्साधकोमंत्रमूर्धनि ॥ ३५ ॥ नाशयेत्सर्वपापानितमोराशिमिवांभसा ॥ मुद्रामुद्रककुं
भेतिबद्धापश्चात्तुमंत्रयेत् ॥ ३६ ॥ मासेननाशयेत्कुष्ठांत्रिभिर्मासैर्नसंशयः ॥ इतिमुद्रांगसहितंसूर्यंपूजयतेतुयः ॥ ३७ ॥ अनेनविधिनारा
जन्ब्रह्मापूजयतेरविम् ॥ तस्मात्त्वमपिराजेंद्रपूजयानेनभास्करम् ॥ ३८ ॥ ततःसूर्यमवाप्येहसूर्यलोकंसगच्छति ॥ अनेनविधिनायस्तु
पूजयेत्सततंरविम् ॥ ३९ ॥ सयातिपरमंस्थानंयत्रदेवोदिवाकरः ॥ इत्थंपूज्यचदेवेशमनेनविधिनानृप ॥ ४० ॥ भोजयित्वायथाशक्त्या
ब्राह्मणांश्चविधानतः ॥ सप्तम्यांप्राशयेद्रापिमरिचंमंत्रतस्तथा ॥ ४१ ॥ गृहीत्वामंत्रमेकंतुअव्रणंचदृढंपरम् ॥ सजलंप्राशयेद्राजन्मित्रेचा
नेनवास्मृतम् ॥ ४२ ॥ यथोक्तेनविधानेनपूजयित्वादिवाकरम् ॥ इतिसंप्राश्यमरिचंततोभुंजीतवाग्यतः ॥ ४३ ॥ प्रियसंगमवाप्नोति
तत्क्षणादेवनान्यथा ॥ इतीयंसप्तमीपुण्याप्रियसंगमदायिनी ॥ ४४ ॥ कुर्यादेकेनकामांस्तुवत्सरेणसगच्छति ॥ पुत्रादिभिर्वरश्रे
ष्ठपुत्रादिभिरभाषत ॥ ४५ ॥ कुरुतस्मान्महाबाहोत्वमेवाप्रियदायिनीम् ॥ उपोष्यइंद्रोविधिवत्सुरामरिचसप्तमीम् ॥ ४६ ॥ संयो
गंकृतवान्वीरसाशिलपादिविधानतः ॥ उपोष्यैनांनलश्चापिदमयन्त्यामहाबलः ॥ ४७ ॥ रामोयःसीतयासार्धमुपोष्यैनांनराधिप ॥
॥ ४८ ॥ इति श्रीभविष्येमहापुराणेब्राह्मेपर्वणिसप्तमीकल्पेमरीचिसप्तमीव्रतवर्णनंनामत्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥ छ ॥
॥ ॥ सुमंतुरुवाच ॥ ॥ तृतीयांसप्तमींवीरशृणुष्वगदतोमम ॥ निंबपत्रैःस्मृतायातुपरमारोगनाशिनी ॥ १ ॥ यथार्चनविधिर्वान्यो
येनपूजयतेरविम् ॥ देवदेवोगदापाणिःशंखचक्रगदाधरः ॥ २ ॥ अथार्चनविधिंवच्मिमंत्रोद्धारंनिबोधमे ॥ ३ ॥ ॐखषोल्कायनमः ॥ मू
लमंत्रः ॥ ॐविटि २ शिरः ॥ ॐसहस्ररश्मये अस्त्रम् ॥ ॐसहस्रकिरणाय २०० ऊर्ध्वबंधः ॥ ॐघनायभूतभाविनेनमः इतिभूतबंधः ॥ ॐज्व
ल २ प्रज्वल २ अग्निप्रकर ॥ ४ ॥ ॐआदित्यायविद्महेविश्वभागायधीमहि ॥ तंनःसूर्यःप्रचोदयात् ॥ ५ ॥ गायत्रीसंकलीकरणमिद
म् ॥ ॐधर्मात्मनेनमः ॥ ईशान्याम् ॥ ॐदक्षिणायनमःआग्नेयाम् ॥ ॐवज्रपाणयेऽनंतायनमः उत्तरतः ॥ ॐश्यामपिंगलायनमः ईशा
न्याम् ॥ ॐअमृतायनमःआग्नेय्याम् ॥ ॐबुधायसोमसुतायनमोदक्षिणतः ॥ ॐवागीश्वरायसर्वविद्याधिपतये नैर्ऋत्याम् ॥ ॐशुक्रायमहर्षये

भूतायपश्चिमतः॥ ॐईश्वरायसूर्यात्मनेनमोवायव्याम् ॥ ॐकृतवतेनमः उत्तरतः ॥ ॐराहवेनमः ईशान्याम् ॥ ॐअंतरायसूर्यात्मनेनमःपू
र्वतः ॥ ॐध्रुवायनमईशान्याम् ॥ ॐभगवतेपूषामालिसकलजगत्पतेसप्ताश्ववाहनभूभुजपरमसिद्धिशिरसिगतंगृह्णतेजोग्ररूपअनंतज्वा
ल २ ॥ आवाहनमंत्रः ॥ ॐनमोभगवतेआदित्यायसहस्रकिरणाययथासुखंपुनरागमनायइति ॥ ६ ॥ इतिश्रीभविष्येमहापुराणेब्राह्मेपर्व
णिसप्तमीकल्पेसौरधर्मेसूर्यमंत्रोद्धारवर्णनंनामचतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥ ७॥ ॥ सुमंतुरुवाच ॥ ॥ शृणुष्वार्चा
विधिंराजन्मंत्रपूतेनवारिणा ॥ प्रोक्षणीयांप्रयत्नेनकिमर्थंसुसमाहितः ॥ १ ॥ हृदयादितथांगेषुमंत्रंविन्यस्यमंत्रवित् ॥ आत्मानंभास्करं
ध्यात्वापरिचारसमन्विते ॥ २ ॥ कुर्यात्संमार्जनींमुद्रांदिशांचप्रतिबोधनम् ॥ पातालेभूशोधनंचैवनभसश्चतथामतम् ॥ ३ ॥ अर्चनस्य
प्रकारोऽयंसर्वेषामीप्सितप्रदः ॥ सर्वैरपिबुधैर्वीरपद्ममेतत्प्रकीर्तितम् ॥ ४ ॥ अष्टपत्रंलिखेत्पद्मंशुचौदेशेसकर्णिकम् ॥ आवाहनींततोब
द्ध्वामुद्रामावाहयेद्रविम् ॥ ५ ॥ खषोल्कंस्नापयेत्तत्रस्वरूपंलोभदायकम् ॥ स्थापयेत्स्नापयेच्चैवमंत्रंमंत्रशरीरिणा ॥ ६ ॥ आग्नेय्यांदि
शिदेवस्यहृदयंस्थापयेन्नरः ॥ ईशान्यांतुशिरःस्थाप्यनैर्ऋत्यांविन्यसेच्छिखाम् ॥ ७ ॥ पौरंदर्यांन्यसेन्नेत्रमेकाग्रहृदयस्तुसः ॥ आवाह्यचै
कंकवचंवारुण्यांवस्त्रमेवच ॥ ८ ॥ ईशान्यांस्थापयेत्सोमंपौरंदर्यांतुलोहितम् ॥ आग्नेय्यांसोमतपनंयाम्यांचैवबृहस्पतिम् ॥ ९ ॥ नैर्ऋ
त्यांदानवंशुक्रंवारुण्यांचशनैश्चरम् ॥ वायव्यांचतथाकेतुंकौबेर्यांराहुमेवच ॥ १० ॥ द्वितीयायांतुकक्षायांदेवतेजःसमुद्भवान् ॥ स्थापये
द्वादशादित्यान्काश्यपेयान्महाबलान् ॥ ११ ॥ भगःसूर्योयमश्चैवमित्रोवरुणएवच ॥ सविताचैवधाताचविवस्वांश्चमहाबलः ॥१२॥त्वष्टापू
षातथाचंद्रोद्वादशोविष्णुरुच्यते ॥पूर्वेचंद्रायदक्षिणेयमायपश्चिमेवरुणायउत्तरेकुबेरायईशान्यामीश्वरायआग्नेय्यामग्निदेवतायैनैर्ऋत्यांपितृदे
वेभ्योवायव्यांवायवे॥जयाचविजयाचैवजयंतीचापराजिता॥शेषश्चवासुकिश्चैवरेवंतीचाविनायकः॥महाश्वेतामहादेवीराज्ञीचैवसुवर्चला॥१३॥
तथान्योवापिदेवानांसमूहस्तत्रतत्रह ॥ तथान्येलोकविख्यातोयोगःप्रोक्तश्चदक्षिणे ॥ १४ ॥ पुरस्ताद्वासुरस्थानेस्थापनीयाविजानता ॥ सि
द्धिर्वृद्धिःस्मृतिर्देवीश्रीश्चैवोत्पलमालिनी ॥ १५ ॥ स्थाप्यासुदक्षिणेपार्श्वेलोकपूज्यासमंततः ॥ प्राज्ञावतीक्षुधावीरहारीताबुद्धिरेवच ॥१६॥

स्थाप्यबुद्धिमतींनित्यंश्रीकामोवाविवस्वतः ॥ ऋद्धिश्चैवविसृष्टिश्चपौर्णमासीविभावसौ ॥ १७ ॥ स्थाप्यासुचोत्तरेपार्श्वेइत्येतादेवशक्तयः ॥
दीपमन्नमलंकारोवासःपुष्पाणिमंत्रतः ॥ १८ ॥ देयानिदेवदेवस्यसानुगस्यसमूर्तये ॥ विधिनानेनसततंसदायोर्चतिभास्करम् ॥ १९ ॥
संप्राप्यपरमान्कामांस्ततोभानुसदोव्रजेत् ॥ अनेनविधिनायस्तुभोजयेद्भास्करंनृप ॥ २० ॥ केनिंबकटुकात्मासिआदित्यनिलयस्तथा ॥
सर्वरोगहरःशांतोभवेन्मेप्राशनंसदा ॥ २१ ॥ इत्थंप्राप्यजपेद्धीमौदेवस्यपुरतोनृप ॥ ब्राह्मणान्भोजयित्वातुशक्त्यादत्वातुदक्षिणाम् ॥२२॥
भुंजीतवाग्यतःपश्चान्मधुरंक्षारवर्जितम् ॥ इत्येषावत्सरंयावत्कर्तव्याचैवसप्तमी ॥ २३ ॥ कुर्वाणःसप्तमीमेतांसर्वरोगैःप्रमुच्यते ॥ सर्वरोगवि
निर्मुक्तःसूर्यलोकंसगच्छति ॥ २४ ॥ ॥ सुमंतुरुवाच ॥ ॥ अथभाद्रपदेमासिसितेपक्षेमहीयते ॥ कृत्वोपवासंसप्तम्यांविधिवत्पूजये
द्रविम् ॥ २५ ॥ महेश्वरेणविधिनापूजयेदत्रभास्करम् ॥ अष्टम्यांतुपुनःस्नातःपूजयित्वादिवाकरम् ॥ २६ ॥ दद्यात्फलानिविप्रेभ्योमार्तंडः
प्रीयतामिति ॥ खर्जूरंनालिकेरंचमातुलिंगफलानिच ॥ २७ ॥ देवस्यपुरतोदत्वातथाचाम्रफलानिच ॥ इतितेकथितंराजन्सप्तमीफलमा
दितः ॥ २८ ॥ महातपोमहाश्रेष्ठंभास्करस्यविशाम्पते ॥ यच्छ्रुत्वामानवोराजन्मुच्यतेब्रह्महत्यया ॥ २९ ॥ तथेदंपरमंपर्वकथितंब्रह्मसंज्ञि
तम् ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यंतेमानवानृप ॥३०॥ अश्वमेधसहस्रस्यवाजपेयशतस्यच॥ सर्वतीर्थाभिगमनेवेदाभ्यासेचयत्फलम्॥३१॥
यत्फलंपृथिवीदानेतत्सर्वंप्राप्नुयान्नरः ॥ राजसूयसहस्रस्यवाजपेयशतस्यच ॥ ३२ ॥ सहस्रशतदानस्यफलंविंदतिमानवः ॥ लेखत्वं
ब्राह्मणोगच्छेत्क्षत्रियोविप्रतांव्रजेत् ॥३३॥ वैश्योऽपिक्षत्रतांयातिशूद्रोवैश्यत्वमेवच ॥ सूतमागधवंद्याद्यायेचान्येसंकरोद्भवाः ॥३४॥ तेऽपि
यांत्युत्तमंस्थानंपुराणश्रवणाद्विभो ॥ इतिहासपुराणाभ्यांनत्वन्यत्पावनंनृणाम् ॥ ३५ ॥ येषांश्रवणमात्रेणमुच्यतेसर्वकिल्बिषैः ॥ विधिना
राजशार्दूलशृण्वतांयत्फलंकिल ॥ यथोक्तंनात्रसंदेहःपठतांचविशांपते ॥ ३६ ॥ ॥ शतानीकउवाच ॥ ॥ भगवन्केनविधिना
श्रोतव्यंभारतंनरैः ॥ चरितंरामभद्रस्यपुराणानिविशेषतः ॥ ३७ ॥ कथंतुवैष्णवाधर्माःशिवधर्माअशेषतः ॥ सौराणांचापिविप्रेंद्रउच्यतां
श्रवणेविधिः ॥ ३८ ॥ वाचनीयंकथंचापिवाचकोद्विजसत्तम ॥ लक्षणंचास्यमेब्रूहिवाचकस्यमहात्मनः ॥ ३९ ॥ स्वरूपंचास्यमेब्रूहिख

षोल्कस्यमहात्मनः ॥ फलंचपूजितेकिंस्याद्वाचकेविधिवद्द्विज ॥ ४० ॥ पारणेपारणेपूज्योवाचकःश्रावकैःकथम् ॥ समाप्तेभगवन्किंकिंदे
यंपर्वणिवाचके ॥ ४१ ॥ नचकिंकार्यसिद्धंयत्सिद्धंपर्वणिपर्वणि ॥ सम्यक्पृष्टोऽस्मिराजेंद्रइतिहासपुराणयोः ॥ ४२ ॥ श्रवणेतुमहाबाहो
श्रूयतांयन्मयापुरा ॥ पृष्टोवाचमहातेजाविरिंचोभगवान्गुरुः ॥ ४३ ॥ हंततेकथयाम्येषपुराणश्रवणेविधिम् ॥ इतिहासपुराणानिश्रुत्वा
भक्त्याविशेषतः ॥४४॥ मुच्यतेसर्वपापेभ्योब्रह्महत्यादिभिर्विभो ॥ सायंप्रातस्तथारात्रौशुचिर्भूत्वाशृणोतियः ॥ ४५ ॥ तस्यविष्णुस्तथा
ब्रह्मातुष्यतेशंकरस्तथा ॥ प्रत्यूषेभगवान्ब्रह्मादिनांतेतुष्यतेहरिः॥४६॥ महादेवस्तथारात्रौशृण्वतांतुष्यतेविभुः ॥पारणानिदशाहेषुएकेकुर्व
तितान्विभो॥४७॥ भवेद्वैराजशार्दूलशृणुतेषांचयत्फलम् ॥ विधानंवाचकस्येहशृण्वतांचविशांपते ॥ ४८ ॥ शुद्धवासागृहादेत्यस्थानंयत्स
मयान्वितम् ॥ प्रदक्षिणंततोगत्वायस्तास्मिन्देवएवहि ॥ ४९ ॥ नात्युच्चंनातिनीचंचआसनंभजतेततः ॥ आसनंतस्यवैराजन्बोधकस्यसदा
नृप ॥ ५० ॥ वंदनीयंप्रपूज्यंचश्रोतृभिःकुरुनंदन ॥ व्यासपीठंतुतत्प्रोक्तंगुरोरासनमादिशेत् ॥ ५१ ॥ नस्थेयंश्रावकैस्तस्माद्वाचकस्यास
नंनृप ॥ राजासनंयथाभृत्यैर्यथापुत्रैःपितुर्नृप ॥५२॥ यथाशिशुर्गुरोर्वीरसतेषांहिगुरुर्मतः ॥ देवार्चामग्रतःकृत्वाब्राह्मणार्चाविशेषतः ॥५३॥
उपविश्यततःपश्चाच्छ्रावकःशृणुयान्नृप ॥ समस्तानागतान्कृत्वाततःपुस्तकमाददेत्॥५४॥प्रणम्यशिरसातस्यपुस्तकस्यविशांपते ॥ग्रंथिं
चाशिथिलांकुर्याद्वाचकःकुरुनंदन ॥ ५५ ॥ पुनर्बध्नीततत्सूत्रंतन्मुक्त्वावाचयेत्क्वचित् ॥ त्रिविधंपुस्तकंविद्यात्सूत्रंवासुकिरुच्यते ॥५६॥
पत्राणिभगवान्ब्रह्माअक्षराणिजनार्दनः ॥ शंकरश्चतथासूत्रंपंक्तयःसर्वदेवताः ॥ ५७ ॥ पावकस्यतथासूत्रेमध्येभानुःसमाश्रितः ॥ अग्रेस्थि
ताग्रहाःसर्वेदिशोवापितथाविभो ॥ ५८ ॥ स्मृतोमेरुः सदाशंकुश्छिद्रमाकाशमुच्यते ॥ यंत्रद्वयंकाष्ठमयमधोर्ध्वंयदुदाहृतम् ॥ ५९ ॥
द्यावापृथिव्योश्चशंखस्तथाचंद्रउदाहृतः ॥ इत्थंदेवमयोह्येषपुस्तकोदेवपूजकः ॥ ६० ॥ नमस्यःपूजनीयश्चगृहेस्थाप्योविभूतये ॥ योऽ
स्यसूत्रंबृहत्कृत्वाप्रयच्छतिनरोत्तमः ॥ ६१ ॥ सयातिपरमंस्थानंयत्रदेवोदिवाकरः ॥ निरूप्यपात्रंराजेंद्रकराभ्यांगृह्यवाचकः ॥ ६२ ॥
प्रणम्यशिरसासर्वान्ब्रह्मादीन्व्यासमेवच ॥ वाल्मीकिंचतथाराजन्विधिंविष्णुंशिवंरविम् ॥ ६३ ॥ नमस्कारमथैषांतुपठित्वाकुरुनन्दन ॥

ततोसौवाचयेद्विप्रान्वाचकः श्रद्धयान्वितः ॥ ६४ ॥ अलंबितमनास्तद्वदद्भुतंवीरमूर्जितम् ॥ असंसक्ताक्षरपदंरसभावसमन्वितम् ॥ ६५ ॥
सप्तस्वरसमायुक्तंकालेकालेविशांपते ॥ प्रदर्शयन्नसान्तसर्वान्वाचकोवाचयेन्नृप ॥ ६६ ॥ ईदृशाद्वाचकाद्विप्राच्छ्रुत्वाश्रद्धासमन्वितः ॥
इतिहासपुराणानिरामस्यचरितंतथा ॥ ६७ ॥ नियमस्थः शुचिः श्रोताशृणुयात्फलमश्नुते ॥ ब्राह्मणःक्षत्रियोवैश्यः शूद्रश्चापिविशेषतः
॥ ६८ ॥ अश्वमेधमवाप्नोतिसर्वान्कामानवाप्नुते ॥ रोगैश्चमुच्यतेसर्वैर्महत्पुण्यंचविंदाते ॥ ६९ ॥ गच्छेद्वापिपरंस्थानंदेवस्याद्भुतमु
त्तमम् ॥ समागम्यगृहादेतेस्नातास्तद्वाचकस्यतु ॥ ७० ॥ प्रणम्यशिरसाविप्रंवाचकंश्रद्धयानृप ॥ आसनंचसमाश्रित्यस्थातव्यंवाचक
स्यतु ॥ ७१ ॥ संमुखंराजशार्दूलवाग्यतैः सुसमाहितैः ॥ वाचकेननमस्कारेकृतेव्यासस्यभूपते ॥ ७२ ॥ नवक्तव्यंमहाबाहोश्रावकैः
संशयादृते ॥ संशयेसतिप्रष्टव्योवाचकःसंप्रसाद्यतु ॥ ७३ ॥ यतश्चसगुरुस्तेषांधर्मतोबंधुरुच्यते ॥ वाचकेनापिवक्तव्यंसम्यक्तेषांनिबोध
येत् ॥७४॥ अनुग्रहायसर्वेषामशेषागुरवोनृप ॥ नमस्कारादथोश्राव्यंशिवमस्त्वितिवाग्यतः ॥ ७५ ॥ वाग्यतैर्नृपशार्दूलवर्णैःसर्वैर्महीपते॥
शूद्राणांपुरतोवैश्यावैश्यानांक्षत्रिणस्तथा ॥ ७६ ॥ मध्यस्थितोऽथसर्वेषांवाचकोवाचयेन्नृप॥ येचसंकरजाराजन्नरास्तेशूद्रपृष्ठतः ॥ ७७ ॥
ब्राह्मणंवाचकंविद्यान्नान्यवर्णजमादरेत् ॥ श्रुत्वान्यवर्णजाद्वाचंवाचकान्नरकंव्रजेत् ॥ ७८ ॥ इत्थंहिशृण्वतांतेषांवर्णानामनुपूर्वशः ॥ मासि
मासिभवेद्राजन्पारणंकुरुनंदन ॥ ७९ ॥ श्रेयोऽर्थमात्मनोराजन्पूजयेद्वाचकंबुधः ॥ मासिपूर्णेद्विजश्रेष्ठेदातव्यंस्वर्णमाषकम् ॥ ८० ॥
ब्राह्मणेनमहाबाहोद्वौदेयौक्षत्रियस्यतु ॥ वाचकस्याद्विजश्रेष्ठवैश्येनापित्रयंतथा ॥ ८१ ॥ शूद्रेणेवचचत्वारोदातव्याः स्वर्णमाषकाः ॥ मा
सिमासिद्विजश्रेष्ठश्रद्धयावाचकस्यतु ॥ ८२ ॥ प्रथमेपारणेराजन्वाचकंपूज्यशक्तितः ॥ अग्निष्टोमस्ययज्ञस्यफलंविंदतिमानवः ॥ ८३ ॥
कार्तिकादिमहाबाहोकार्तिकंयावदच्युत ॥ अग्निष्टोमंगोसवंचज्योतिष्टोमंतथानृप ॥ ८४ ॥ सौत्रामणिंवाजपेयंवैष्णवंचतथाविभो ॥ माहे
श्वरंतथाब्राह्मंपुंडरीकंचभूपते ॥ ८५ ॥ आदित्ययज्ञस्यतथाराजसूयाश्वमेधयोः ॥ फलंप्राप्नोतिराजेंद्रमासैर्द्वादशभिःक्रमात् ॥ ८६ ॥
इत्थंयज्ञफलंप्राप्ययातिलोकांस्तथोत्तमान् ॥ वज्रवेदिकसंपन्नंमणिरत्नविभूषितम् ॥ ८७ ॥ विमानमास्थितोराजन्मोदते शक्रमंदिरे ॥

ततश्चंद्रस्यभवनेवारुणेभवनेततः ॥ ८८ ॥ शोचिर्गृहेचगत्वातुगच्छेच्चैलविलेगृहे ॥ धिषणस्यगृहंगत्वाततश्चित्रशिखंडिनः ॥ ८९ ॥ वृद्ध
श्रवसमासाद्यगच्छेत्कंजजमंदिरे ॥ एवमेवनृपश्रेष्ठनात्रकार्याविचारणा ॥ ९० ॥ फलमेतत्समुद्दिष्टंशृण्वतांसततंनृणाम् ॥ एतत्फलंवत्सरे
णशृण्वतोविधितोनृप ॥ ९१ ॥ एतानिपरिणामानिवत्सरेणभवंतिवै ॥ शृण्वतांनृपशार्दूलददतांवाचकायवै ॥ ९२ ॥ एकंचद्वौतथात्रीणि
चत्वारश्चविशांपते ॥ दातव्यावाचकस्येहमासिमासिनराधिप ॥९३॥ ब्राह्मणाद्यैर्नृपश्रेष्ठसर्ववर्णविभागशः ॥ समाप्तेपर्वणितथावाचकंपूजये
न्नृप ॥९४॥ वाचकंब्राह्मणंचैवसर्वकामैःप्रपूजयेत् ॥ गंधमाल्यानिदिव्यानिवस्त्राणिविविधानिच ॥९५॥वाचकायप्रदत्त्वातुततोविप्रान्प्रपूजये
त् ॥ हिरण्यंरजतंरुक्मंगावःकांस्योपदोहनाः ॥ ९६ ॥ दत्त्वाचवाचकायेहश्रुतस्यप्राप्यतेफलम् ॥ यथासदक्षिणंचात्रश्राद्धकालेप्रकीर्ति
तम् ॥ तथाश्रुतंनृपश्रेष्ठसदक्षिणमुदाहृतम् ॥ ९७ ॥ वाचकंपूजयेद्यस्मात्पश्चाल्लेखकपूजनम् ॥ समाप्तेपर्वणिविभोविशेषेणैवचार्च
येत् ॥ वाचकःपूजितोयेनपूजितास्तेनदेवताः ॥ ९८ ॥ वाचकेपरितुष्टेचममप्रीतिरनुत्तमा ॥ इतिवेधाःसदाप्राहदेवानांपुरतःपुरा ॥ ९९ ॥
तस्मिंस्तुष्टेजगत्सर्वंतुष्टंभवतिनित्यशः ॥ तस्मात्प्रपूजयेद्विप्रंवाचकंनृपसत्तम ॥ १०० ॥ नतुल्यंवाचकेनेहपात्रंदानस्यविद्यते ॥
तिष्ठंतियस्यशास्त्राणिजिह्वाग्रेपृथिवीपते ॥ १०१ ॥ दृष्टश्चगोचरस्तातकस्तेनसदृशोद्विजः ॥ नतुल्यंविद्यतेतेनभुविपात्रंनरेषुवै ॥
॥ १०२ ॥ तस्मादन्नंसदापूर्वंतस्यदेयंविदुर्बुधाः ॥ श्राद्धेयस्यद्विजोभुंक्तेवाचकःश्रद्धयान्वितः ॥ १०३ ॥ भवंतिपितरस्तस्यतृप्ता
वर्षशतंनृप ॥ यथेहसर्वदेवानांभास्करःप्रवरःस्मृतः ॥ १०४ ॥ विस्पष्टमद्रुतंशांतंस्पष्टाक्षरपदंतथा ॥ कलस्वरसमायुक्तंरसभा
वसमन्वितम् ॥ १०५ ॥ बुध्यमानःसदात्यर्थंग्रंथार्थंकृत्स्नशोनृप ॥ ब्राह्मणादिषुवर्णेषुग्रंथार्थंवाचयेन्नृप ॥ १०६ ॥ यएवंवाचये
द्राजन्सविप्रोव्यासउच्यते ॥ अतोऽन्यथावाचयिताज्ञेयोऽसौपितृनामकः ॥ १०७ ॥ इत्थंभूतोवसेद्यस्मिन्वाचकोव्याससन्नि
भः ॥ देशेऽथपत्तनेराजन्सदेशःप्रवरःस्मृतः ॥ १०८ ॥ तेधन्यास्तेमहात्मानस्तेकृतार्थानसंशयः ॥ वसंतियत्रनतोयस्मिन्सदेशःप्रवरः



१ पुष्यस्य भवने ततः–इ०पा० । २ ततो विष्णुगृहं व्रजेत्–इ०पा० ।

स्मृतः ॥ १०९ ॥ नशोभतेपुरंवीरव्यासहीनंकदाचन ॥ यथार्कहीनंहिदिनंचंद्रहीनायथानिशा ॥ ११० ॥ नराजतेसरोयद्वत्पद्मिनीरहितं
नृप ॥ तथाव्यासविहीनंतुनरराजपुरंक्वचित् ॥ १११ ॥ प्रणम्यवाचकंभक्त्यायत्फलंप्राप्यतेनरैः ॥ नतत्क्रतुसहस्रेणप्राप्यतेकुरुनंदन ॥
॥ ११२ ॥ यथैकतोग्रहाःसर्वेएकतस्तुदिवाकरः ॥ तथैकतोद्विजाःसर्वेएकतस्तुसवाचकः ॥ ११३ ॥ यथावेदसमोनास्तिआगमोभुविक
श्चन ॥ तथाव्याससमोनास्तिब्राह्मणोभुविकश्चन ॥ ११४ ॥ कुरुक्षेत्रसमंतीर्थंनाद्वितीयंप्रचक्षते ॥ ननदीगंगयातुल्यानदेवोभास्कराद्वरः ॥
॥ ११५ ॥ नाश्वमेधसमंपुण्यंनपापंब्रह्महत्यया ॥ पुत्रजन्मसुखात्तुल्यंनसुखंविद्यतेयथा ॥ ११६ ॥ तथाव्याससमोविप्रोनक्वचित्प्राप्यते
नृप ॥ दैवेकर्मणिपित्र्येचपावनंपरमंनृणाम् ॥ ११७ ॥ नास्तिव्याससमंश्रेष्ठमितीयंवैदिकीश्रुतिः ॥ अथविप्रसहस्राणांविप्रोऽयंश्रेष्ठईरितः ॥
॥११८॥ उपविष्टोयदाभुंक्तेव्यासोवैविप्रमंडले ॥ श्राद्धेतातपवित्राणिकथितानिपुरामया ॥११९॥ब्रह्मणाराजशार्दूलशृणुतानियथाविधि ॥
मधुपायसंकालशाकंतिलांश्चकुतपांस्तथा ॥१२०॥ राजतंचापिपात्रेषुब्राह्मणेष्वथवाचकः ॥ दैवेकर्मणिपित्र्येचसज्ञेयःपंक्तिपावनः ॥१२१॥
वाचकश्चयतिश्चैवतथायश्चषडंगवित् ॥ एतेसर्वेनृपश्रेष्ठाविज्ञेयाःपंक्तिपावनाः ॥ १२२ ॥ नामनीवाचकस्यैतेशृणुष्वार्थमथैतयोः ॥ इतिहास
पुराणानिजयेतिविदितानिवै ॥ १२३ ॥ उपजीवातियस्माद्वैवाचयानोद्विजोनृप ॥ जयोपजीवितेनासौगतःख्यातिंतुवाचकः ॥ १२४ ॥
विस्पष्टमद्रुतंशांतंस्पष्टाक्षरमिदंतथा ॥ कलस्वरसमायुक्तंरसभावसमन्वितम् ॥ १२५ ॥ बुध्यमानमनात्यर्थंग्रंथार्थंकृत्स्नशोनृप ॥ ब्रा
ह्मणादिषुवर्णेषुग्रंथार्थंचार्पयेत्तथा ॥१२६॥ यएवंवाचयेद्राजन्सविप्रोव्यासउच्यते ॥ अतोऽन्यथावाचयितानगच्छेद्व्यासतांक्वचित् ॥१२७॥
त्रिविधंवाचकंविद्यात्सदागुणविभेदतः ॥ श्रावकंचमहाबाहोत्रिविधंगुणभेदतः ॥ १२८ ॥ द्वावेतौकथ्यमानौतुनिबोधगदतोमम ॥ अभि
द्रुतंतथास्पष्टंविस्तरंस्वरवर्जितम् ॥ १२९ ॥ पदच्छेदविहीनंचतथाभावविवर्जितम् ॥ अबुध्यमानोग्रंथार्थमभीष्टोत्साहवर्जितम् ॥ १३० ॥
ईदृशंवाचयेद्यस्तुवाचकःक्ष्माधिपेश्वर ॥ क्रोधनोऽप्रियवादीचअज्ञानाद्ग्रंथदूषकः ॥ १३१ ॥ नचबुध्यातिकष्टाच्चसज्ञेयोवाचकाधमः ॥ विस्प
ष्टमद्रुतंशांतंरसभावसमन्वितम् ॥ १३२ ॥ अबुध्यमानोग्रंथार्थंवाचयेद्यस्तुवाचकः ॥ सज्ञेयोराजसोराजन्निदानींसात्विकंशृणु ॥ १३३ ॥

विरूपष्टमद्रुतंशांतंस्पष्टाक्षरपदंतथा ॥ कलस्वरसमायुक्तंरसभावसमन्वितम् ॥ १३४ ॥ ग्रंथार्थंबुध्यमानस्तुग्रंथार्थंकृत्स्नशोनृप ॥ ब्राह्म
णादिषुवर्णेषुआचार्योविधिवन्नृप ॥ १३५ ॥ यएवंवाचयेद्राजन्सज्ञेयःसात्त्विकोबुधैः ॥ श्रद्धाभक्तिविहीनोयोलोभिष्ठःकटुकोयथा ॥ १३६ ॥
हेतुवादपरोराजंस्तथासूयासमन्वितः ॥ नित्यांनैमित्तिकांकाम्यामददद्दक्षिणांनृप ॥ १३७ ॥ वाचकायमहाबाहोशृणुयाद्यस्तुमानवः ॥
सज्ञेयस्तामसोराजञ्छ्रावकोमानवोऽपिसः ॥१३८॥ नतस्यपुरतोवीरवाचयेत्प्राज्ञएवाहि॥प्रसंगाच्छृणुयाद्यस्तुश्रद्धाभक्तिविवर्जितः॥१३९॥
राजन्कौतुकपात्रंतुसज्ञेयोराजसोभवेत् ॥ संत्यज्यसर्वकार्याणिभक्त्याश्रद्धासमन्वितः ॥ १४० ॥ सततंपूजयेद्यस्तुवाचकंश्रद्धयासदा ॥
नित्यनैमित्तिकेकाम्येगुरवोदेवतास्तथा ॥ १४१ ॥ यएवंशृणुयाद्वीरसज्ञेयःसात्त्विकोबुधैः ॥ व्यासःपूज्यःश्रावकाणांयथाव्यासवचोनृप ॥
॥ १४२ ॥ तस्मात्पूज्यतमोनान्यःश्रावकाणांनृपोत्तम ॥ यतःसर्वेगुरुस्तेषांज्ञानदातासदानृप ॥ १४३ ॥ चतुर्णामिहवर्णानांनान्योबंधुःप्र
चक्षते ॥ व्यासाद्दतेनृपश्रेष्ठइतीयंवैदिकीश्रुतिः ॥ १४४ ॥ तस्मात्सर्वप्रयत्नेनपूजयेद्वाचकंसदा ॥ सगुरुःसपितामातासबंधुःससुहृत्तथा ॥
॥ १४५ ॥ वाचकोनृपशार्दूलविप्रादीनामशेषतः ॥ इत्थंव्यासोगुरुर्ज्ञेयःपूज्योमान्योद्विजातिभिः ॥ १४६ ॥ शृण्वंतियेनराराजन्सतेषां
गुरुरुच्यते ॥ पूजार्थंतस्यसमयःश्रावकाणामुदाहृतः ॥ १४७ ॥ येशृण्वंतिनृपश्रेष्ठमासिमासिददंतिते ॥ स्वर्णमाषकमेकस्मैवाचकायपृ
थक्पृथक् ॥ १४८ ॥ द्वादश्यांचामावास्यायामथवारविसंक्रमे ॥ सानित्यादक्षिणातस्यांयाचश्रेयोऽर्थमात्मनः ॥ १४९ ॥ अयनेविषुवे
चैवचंद्रसूर्यग्रहेतथा ॥ प्राप्तेवापरपक्षेचदानंतस्मैस्वशक्तितः ॥ १५० ॥ देयंस्याच्छ्रावकैस्तावत्तंमुक्त्वानान्यतोनृप ॥ प्रथमंतस्यदातव्यं
श्रेयोऽर्थंश्रावकैःसदा ॥ १५१ ॥ अदत्त्वातस्ययेन्यस्मैसंप्रयच्छंतिश्रावकाः ॥ अवमानःकृतस्तैस्तुवाचकस्यभवेन्नृप ॥ १५२ ॥ कृत्वाच
मानमथतैःप्राप्यतेयत्फलंनृप ॥ ब्राह्मणाद्यैःसमस्तैश्चतच्छृणुष्ववरानन ॥ १५३ ॥ शूद्रत्वंब्राह्मणोयातिक्षत्रियोयातिकाकताम् ॥ जायते
चतथावैश्यःशूद्रश्चांडालतांव्रजेत् ॥ १५४ ॥ तस्मात्पूज्योनृपश्रेष्ठप्रथमंवाचकोबुधैः ॥ आपत्कालेचवृद्धौचयतश्चासौगुरुःस्मृतः ॥१५५॥
वैशाख्यामयनेवीरतृतीयायांचसुव्रत ॥ कार्त्तिक्यामथमाघ्यांचसंपूज्यःप्रथमंभवेत् ॥१५६॥ पर्वस्वन्येषुचाविभोसंपूज्योधर्मतःस्मृतः ॥ हिर

ण्यंचसुवर्णंचधनंधान्यंनथैवच ॥ १५७ ॥ अन्नंचापितथापक्कंमांसंचकुरुनंदन ॥ दातव्यंप्रथमंतस्मैश्रावकैर्नृपसत्तम ॥ १५८ ॥ वाचक
स्तुयथानित्यंमुख्यमास्तेनराधिप ॥ नपीडयेयथार्द्धदंडैस्तथाकार्यंवगणन ॥ १५९ ॥ हेमंतेलोमशंदेयाच्छत्रंप्राग्रीष्मसत्तम ॥ उपानहौका
लयोग्येकालेचैवानुलोमशः ॥ १६० ॥ इत्थंदंडविनिर्मुक्तःमयेपांवाचकोनृप ॥ नेयन्याःश्रावकालोकेनेगनाःपरमंपदम् ॥ १६१ ॥ आत्मा
नस्तुकथंवाग्मुखमिच्छेद्विचक्षणः ॥ विषमस्थेगुरौराजन्यनश्चमगुरुःस्मृतः ॥ १६२ ॥ वाचकश्रावकाणांचतस्माद्दंडंविवानयेत् ॥ यत्नः
कार्यःश्रावकैश्चवाचकस्यजनाधिप ॥ १६३ ॥ इत्थंपूज्यःसदाव्यासःश्रेयोऽर्थंप्रथमंनृप ॥ भर्तापूज्योयथास्त्रीणांसर्वासांवैयथानृप ॥ १६४ ॥
श्रावकाणांतथाराजन्वाचकःपूज्यउच्यते ॥ उपाध्यायस्तुशिष्याणांयथाभगवतोहरिः ॥ १६५ ॥ सौराणांचयथाभानुःशैवानांशंकरो
यथा ॥ वाचकस्तुतथापूज्यःश्रावकाणांनराधिप ॥ १६६ ॥ दक्षिणांददतानित्यंश्रोतव्यंभूतिमिच्छता ॥ पूर्वोक्तमापकंतस्यवाचक
स्यजनाधिप ॥ १६७ ॥ यदादातुंनशक्नोतिमापकंकांचनस्यतु ॥ रजतस्यतदादेयंमापकंश्रेयसेनृप ॥ १६८ ॥ तदभावेहिरण्यंचवित्तशा
ठ्यविवर्जितम् ॥ मृत्तिकापिहिदातव्याप्राप्तानिसत्फलंशुभम् ॥ १६९ ॥ इत्येषादक्षिणानित्यामासिमासिभवेन्नृप ॥ नैमित्तिका
भवेद्राजन्ग्रहणादिषुपर्वसु ॥ १७० ॥ अमलेवाममीराजन्गंधमाल्यविभूषणे ॥ समाप्तेपर्वणिविभोदातव्यंभूतिमिच्छता ॥ १७१ ॥ ज्ञा
त्वासर्वंसमाप्तिंनृपूजयेद्वाचकोविधिम् ॥ आत्मानमपिविक्रीययइच्छेत्सफलंश्रुतम् ॥ १७२ ॥ नैमित्तिकाचनित्याचदक्षिणाददतेनृप ॥
शृणोतिचसदातांतुनस्यतन्निष्फलंश्रुतम् ॥ १७३ ॥ यथाचदक्षिणाहीनायज्ञान्नफलमश्नुते ॥ तथाश्रुतंचराजेंद्रदक्षिणारहितंस्मृतम् ॥
॥ १७४ ॥ चतुर्गुणाभवेद्राजन्यानित्यादक्षिणाविभो ॥ समाप्तेपर्वणिविभोइत्याहभगवाञ्छिवः ॥ १७५ ॥ इत्येषकथितोराजन्पुराण
श्रवणेविधिः ॥ यतश्चविधिहीनंतुनकर्मफलंविद्यते ॥ १७६ ॥ स्नानंदानंजपोहोमःपितृदेवाभिपूजनम् ॥ विधिपूर्वंस्मृतंज्ञेयंयथेहकुरुनंद
न ॥ १७७ ॥ फलदंनृपशार्दूलपुराणश्रवणंतथा ॥ यथार्थंकथितंतुभ्यंविधिनाश्रवणंमया ॥ १७८ ॥ यथोक्तंतुतथाजीवंयथोक्तंब्रह्मवादि
नः ॥ सब्राह्मणोमहाराजन्सर्वलोकेषुपूजितः ॥ १७९ ॥ यथाश्रुतंमहाबाहोतथेदंकथितंतव ॥ भास्करस्यतुमाहात्म्यंमाहात्म्यंवाचक

स्यतु ॥ १८० ॥ तथाचसप्तमीकल्पःसर्वपापभयापहः ॥ अनेनविधिनायस्तुपूजयेत्सततंनरः ॥ १८१ ॥ भगलोकंसमासाद्यत्रिषुलोकेषु गीयते ॥ ततोऽर्कलोकमासाद्यगच्छेच्चित्रशिखंडिनः ॥१८२॥ तस्मादपिमहाबाहोगच्छेल्लोकंदिवाकरम् ॥ अर्कलोकेततोयातस्ततोगोलोकमश्नुते ॥ १८३ ॥ ऋतस्यचततोगच्छेत्कंजजस्यततःपरम् ॥ दशानांराजसूयानामग्निष्टोमशतस्यच ॥ १८४ ॥ श्रवणात्फलमाप्नोतिपितामहवचोयथा ॥ १८५ ॥ इतिश्रीभविष्येमहापुराणेशतसाहस्रार्धसंहितायांब्राह्मेपर्वणिसप्तमीकल्पेसौरधर्मेआदित्यमाहात्म्यवाचकमाहात्म्यपुराणविधिवर्णनंनामपंचदशाधिकाद्विशततमोऽध्यायः ॥२१५॥ पूर्वार्धःसमाप्तोऽयम् ॥ छ ॥ ॥ श्रीनारायणार्पणमस्तु ॥ ॥

इति प्रथमं ब्राह्मपर्व समाप्तम् ॥ १ ॥

इदं भविष्यमहापुराणान्तर्गतं प्रथमं ब्राह्मपर्व खेमराजश्रीकृष्णदास इत्यनेन मुम्बय्यां
स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशितम् । संवत् १९५३,
शके १८१८, सन् १८९६.

॥ इति श्रीभविष्ये महापुराणे प्रथमं ब्राह्मपर्व समाप्तम् ॥

॥ श्रीगणेशायनमः ॥ ॐनमःकमलदलनयनाभिरामायश्रीरामचंद्रायनमः ॥ स्वच्छंचंद्रावदातंकविकरमकरक्षोभसंजातफेनंब्रह्मोद्भूतिप्रसू
क्तैर्व्रतनियमपरैःसेवितंविप्रमुख्यैः ॥ ॐकारालंकृतेनत्रिभुवनगुरुणाब्रह्मणादृष्टपूतंसंभोगाभोगगम्यंजनमशुभहरंपौष्करंवःपुनातु ॥ १ ॥
जयतिभुवनदीपोभास्करोलोककर्ताजयतिचाशितिदेहःशार्ङ्गधन्वामुरारिः ॥ जयतिचशशिमौलीरुद्रनामाभिधेयोजयतिसकलमौलिर्भानु
मांश्चित्रभानुः ॥ २ ॥ नमस्कृत्याप्रमेयायदेवायब्रह्मरूपिणे ॥ पुराणंसंप्रवक्ष्यामियदुक्तंब्रह्मयोगिना ॥ ३ ॥ पुराणसंहितांपुण्यांपप्रच्छूरौ
महर्षिणिम् ॥वक्तुमर्हसिचास्माकंपुराणार्थविशारद॥४॥मुनीनांवचनंश्रुत्वासूतःपौराणिकोत्तमः ॥ प्रणम्यमनसाप्राहगुरुंसत्यवतीसुतम्॥५॥
॥ ॥ सूतउवाच ॥ ॥ नमस्कृत्यजगद्योनिंब्रह्मरूपधरंहरिम् ॥ वक्ष्येपौराणिकींदिव्यांकथांपापप्रणाशिनीम् ॥ ६ ॥ यच्छ्रुत्वापापक
र्माणिसगच्छेत्परमांगतिम् ॥ पुण्यंपवित्रमायुष्यमिदानींशृणुतद्विजाः ॥ ७ ॥ भविष्यपुराणमखिलंयज्जगादगदाधरः ॥ मध्यपर्वह्यथोव
क्ष्येप्रतिष्ठादिविनिर्णयम् ॥ ८ ॥ धर्मप्रशंसनंचात्रब्राह्मणादिप्रशंसनम् ॥ आपद्धर्मस्यकथनंविद्यामाहात्म्यवर्धनम् ॥ ९ ॥ प्रतिमाकरणं
चैवस्थापनाचित्रलक्षणम् ॥ कालव्यवस्थासर्गादिप्रतिसर्गादिलक्षणम् ॥ १० ॥ पुराणलक्षणंचैवभूगोलस्यचनिर्णयम् ॥ निरूपणंतिथी
नांचश्राद्धसंकल्पमन्तरम् ॥ ११ ॥ मुमूर्षोरपियत्कर्मदानमाहात्म्यमेवच ॥ भूतंभव्यंभविष्यंचयुगधर्मानुशासनम् ॥ १२ ॥ उच्चावचा
वधानंचप्रायश्चित्तादिकंचयत् ॥ षष्ट्याधिकाष्टसाहस्रंनवश्लोकशतोद्भवम् ॥ १३ ॥ पंचतंत्रसमायुक्तंप्रतितंत्रेचविंशतिः ॥ पंचोत्तरंतथा
ध्यायाःपुराणेऽस्मिन्द्विजोत्तमाः ॥ १४ ॥ त्रयाणामाश्रमाणांचगृहस्थोयोनिरुच्यते ॥ अन्येऽपिसूपजीवन्तितस्माच्छ्रेष्ठोगृहाश्रमी ॥ १५॥
एकाश्रमंगृहस्थस्यत्रयाणांसूतिदर्शनम् ॥ तस्माद्गार्हस्थ्यमेवैकंविज्ञेयंधर्मशासनम् ॥ १६ ॥ परित्यजेदर्थकामौयौस्यातांधर्मवर्जितौ ॥
सर्वलोकविरुद्धंचधर्ममप्याचरेन्नतु ॥ १७ ॥ तडागस्यचसान्निध्येतडागंपरिवर्जयेत् ॥ प्रपास्थानेप्रपावर्ज्यामठस्थानेमठंत्यजेत् ॥ १८ ॥
धर्मात्संजायतेह्यर्थोधर्मात्कामोऽभिजायते ॥ धर्ममेवापवर्गोऽयंतस्माद्धर्मंसमाश्रयेत् ॥ १९ ॥ धर्मंचार्थंचकामंचात्रिवर्गस्त्रिगुणोमतः ॥

१ भक्ताय-इ०पा० । २ सूतिदर्शवत्-इ०पा० ।

सत्वंरजस्तमश्चेतितस्माद्धर्मंसमाश्रयेत् ॥ २० ॥ ऊर्ध्वंगच्छंतिसत्वस्थामध्येतिष्ठंतिराजसाः ॥ जघन्यगुणवृत्तिस्थाअधोगच्छंतितामसाः
॥ २१ ॥ यस्मिन्धर्मःसमायुक्तोह्यर्थकामौव्यवस्थितौ ॥ इहलोकेसुखीभूत्वाप्रेत्यानंत्यायकल्पते ॥ २२ ॥ तस्मादर्थंचकामंचयुक्त्वा
धर्मंसमाश्रयेत् ॥ धर्मात्संजायतेकामोधर्मादर्थोभिजायते ॥ २३ ॥ एवंधर्मस्यमध्येऽयंचतुर्वर्गःप्रदर्शितः ॥ एवंचधर्मकामार्थमोक्षस्यापिच
मानवः ॥ २४ ॥ माहात्म्यंवानुतिष्ठेच्चसचानंत्यायकल्पते ॥ तस्मादर्थंचकामंचमुक्त्वाधर्मंसमाचरेत् ॥ २५ ॥ धर्मात्संजायतेसर्वमित्या
हुर्ब्रह्मवादिनः ॥ धर्मेणधार्यतेसर्वंजगत्स्थावरजंगमम् ॥ २६ ॥ अनादिनिधनाशक्तिर्नैषाब्राह्मीद्विजोत्तम ॥ कर्मणाप्राप्यतेधर्मोज्ञानेनचनसं
शयः ॥ २७ ॥ तस्माज्ज्ञानेनसहितंकर्मयोगंसमाचरेत् ॥ प्रवृत्तिश्चनिवृत्तिश्चद्विविधंकर्मवैदिकम् ॥ २८ ॥ ज्ञानपूर्वानिवृत्तिःस्यात्प्रवृत्ति
र्वर्ततेऽन्यथा ॥ निवृत्तिंसेवमानस्तुयातितत्परमंपदम् ॥ २९ ॥ तस्मान्निवृत्तंसंसेव्यमन्यथासंसरेत्पुनः ॥ शमोदमोदयादानमलोभस्त्या
गएवच ॥ ३० ॥ आर्जवंचानसूयाचतीर्थानुसरणंतथा ॥ सत्यंसंतोषआस्तिक्यंश्रद्धाचेन्द्रियनिग्रहः ॥ ३१ ॥ देवताभ्यर्चनंपूजाब्राह्मणा
नांविशेषतः ॥ अहिंसासत्यवादित्वमपैशुन्यमकल्पता ॥ ३२ ॥ शौचाचारश्चानुकंपासर्ववर्णेऽब्रवीन्मुनिः ॥ श्रद्धापूर्वाःस्मृताधर्माःश्रद्धा
मध्येतुसंस्थिताः ॥ ३३ ॥ श्रद्धानिष्ठाःप्रतिष्ठाश्चधर्माःश्रद्धैवकीर्तिताः ॥ प्राजापत्यंब्राह्मणानांश्रुतंस्थानंक्रियावताम् ॥ ३४ ॥ स्थानमैन्द्रं
क्षत्रियाणांसंग्रामेष्वपलायिनाम् ॥ वैश्यानाममृतंस्थानंस्वधर्ममनुवर्तताम् ॥ ३५ ॥ गांधर्वंशूद्रजीवानांपरिचारेणवर्तताम् ॥ अष्टाशीति
सहस्राणांमुनीनामूर्ध्वरेतसाम् ॥ ३६ ॥ स्मृतंस्थानंतुयत्स्थानंतदेवगुरुवासिनाम् ॥ सप्तर्षीणांतुयत्स्थानंश्रुतंतद्वैवनौकसाम् ॥ ३७ ॥
प्राजापत्यंगृहस्थानांस्थानमुक्तंस्वयंभुवा ॥ यतीनांयतचित्तानांतदेववनवासिनाम् ॥ ३८ ॥ हिरण्यगर्भंयत्स्थानंतस्मान्नावर्ततेपुनः ॥ यो
गिनाममृतंस्थानंव्योमाख्यंपरमाकरम् ॥ ३९ ॥ आनंदमैश्वरंनामसाकाष्ठापरमागतिः ॥ ४० ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणि ॥ १ ॥
प्रथमभागेप्रथमोऽध्यायः ॥ १ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ इदानींविस्तरंचैवविभागंरूपमैश्वरम् ॥ वक्ष्येकल्पानुसारेणमन्वंतरश्च

१ शुभ्रजीवानाम्-इ० पा०।

तानुगम् ॥ २ ॥ आसीत्तमोमयंसर्वमप्रज्ञानमलक्षणम् ॥ तत्रचैकोमहानासीद्रुद्रःपरमकारणम् ॥ ३ ॥ आत्मनास्वयमात्मानंसंचिन्त्य
भगवान्विभुः ॥ मनःसंसृजतेपूर्वमहंकारंचपृष्ठतः ॥ ४ ॥ अहंकारात्प्रजानातिमहाभूतानिपंचच ॥ अष्टौप्रकृतयःप्रोक्ताविकाराश्चैवषो
डश ॥ ५ ॥ शब्दःस्पर्शश्चरूपंचरसोगंधस्तथैवच ॥ प्राणोऽपानःसमानश्चोदानव्यानौतथैवच ॥ ६ ॥ सत्वंरजस्तमश्चैवगुणाःप्रोक्तास्तुते
त्रयः ॥ तस्माद्भगवतोब्रह्मातस्माद्विष्णुरजायत ॥ ७ ॥ ब्रह्माविष्णुमोहनार्थंततःशंभुस्तुतेजसा ॥ अशरीरोवासुदेवोह्यनुत्पत्तिरयोनिजः ॥
॥ ८ ॥ व्यामोहयित्वातत्सर्वंतेजसामोहयज्जगत् ॥ तस्मात्परतरंनास्तितस्मात्परतरंनहि ॥ ९ ॥ ब्रह्माविष्णुश्चद्वावेतावुद्भूतौभगवत्सुतौ
॥ कल्पेकल्पेतुतत्सर्वंसृजतेऽसौजनंजगत् ॥ १० ॥ उपसंहरतेचैवनानाभूतानिसर्वशः ॥ द्वासप्ततियुगान्येवमन्वंतरइतिस्मृतः ॥ ११ ॥
चतुर्दशतुतान्येवंकल्पमेवंविधीयते ॥ दिनैकंब्रह्मणःप्रोक्तंनिशिकल्पस्तथोच्यते ॥ १२ ॥ एवंमासंचवर्षंचतथाचाष्टशतंद्विजाः ॥ एवं
बुद्धीन्द्रियस्यास्यविष्णोश्चनिमिषःस्मृतः ॥ १३ ॥ ब्रह्मादिस्तंबपर्यंतंनिमेषश्चध्रुवस्यवै ॥ निमेषजीवनंसर्वंसर्वलोकचराचरम् ॥ १४ ॥
भूर्लोकोऽथभुवर्लोकःस्वर्लोकश्चप्रकीर्तितः ॥ जनस्तपश्चसत्यंचब्रह्मलोकश्चसप्तमः ॥ १५ ॥ पातालाद्वितलंताद्विअतलंतलमेवच ॥ पंच
मंविद्धिसुतलमतलंसप्तकंस्मृतम् ॥ १६ ॥ एतेषुसप्तविख्याताअधःपातालवासिनः ॥ तेषामादौचमध्येचअंतेरुद्रःप्रकीर्तितः ॥ १७ ॥
ग्रसतेजायतेलोकान्क्रीडार्थंतुमहेश्वरः ॥ ब्रह्मलोकपरीप्सूनांगतिरूर्ध्वंप्रकीर्तिता ॥ १८ ॥ पृथिवींचांतरिक्षंचदिशश्चविदिशस्तथा ॥
समुद्राणांगिरीणांचअधस्तिर्यक्प्रसंख्यया ॥ १९ ॥ समुद्राणांचविस्तारंप्रमाणंचततःशृणु ॥ स्थावराणांचशैलानांदेवानांच
दिवौकसाम् ॥ २० ॥ चतुष्पदानांद्विपदांतथाधर्मैकभाषिणाम् ॥ सहस्रगुणमाख्यातंस्थावराणांप्रकीर्तितम् ॥ २१ ॥ सहस्र
गुणशीलाश्चइत्याहभगवान्मुनिः ॥ ऋषिस्तुप्रथमंकुर्वन्प्रकीर्तनामनामतः ॥ २२ ॥ तस्याब्रह्माप्रकृत्यास्तुउत्पन्नःसहविष्णुना ॥
तस्माद्बुद्ध्याप्रकुरुतेसृष्टिंनैमित्तिकींद्विजाः ॥ २३ ॥ तस्मात्स्वयंभुवोब्रह्माब्राह्मणान्समकल्पयत् ॥ पादहीनान्क्षत्रियांश्चतस्मा
द्धीनांस्तुवैश्यकान् ॥ २४ ॥ चतुर्थपादहीनांश्चआचारेषुबहिष्कृतान् ॥ पृथिवींचांतरिक्षंचदिशश्चैवाप्यकल्पयत् ॥ २५ ॥

लोकालोकस्यसंस्थाचद्वीपानामुदधेस्तथा ॥ सरितांसागराणांचतीर्थान्यायतनानिच ॥ २६ ॥ मेवस्तानितानिघोषरोहितेंद्रधनूंषिच ॥
उल्कानिर्घातकेतूंश्चज्योतींष्यायतनानिच ॥ २७ ॥ उत्पन्नंतस्यदेहेषुभूयःकालेनपीडयेत् ॥ २८ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणि
प्रथमभागेद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ध्रुवादूर्ध्वंमहर्लोकःकोटियोजनविस्तरः ॥ कल्पाधिकरणंतस्यसंस्थिताद्वि
जपुंगवाः ॥ १ ॥ जनलोकोमहर्लोकात्तथाकोटिद्वयात्मकः ॥ सनंदनादयस्तत्रसंस्थिताब्रह्मणःसुताः ॥ २ ॥ जनलोकात्तपोलोकःकोटित्रय
समन्वितः ॥ विराजंतेतुदेवावैस्थितादाहविवर्जिताः ॥ ३ ॥ प्राजापत्यात्तुभूर्लोकःकोटिषट्केनसंयुतः ॥ सनत्कुमारकस्तत्रब्रह्मलोकस्तुसं
स्मृतः ॥ ४ ॥ तत्रलोकेगुरुर्ब्रह्माविश्वात्माविश्वतोमुखः ॥ आस्तेयद्योगिभिःपीत्वायोगंमृत्योःपरंगतम् ॥ ५ ॥ गायंतियतयोगाथाह्यास्ति
काब्रह्मवादिनः ॥ योगिनस्तापकाःसिद्धाजापकाःपरमेष्ठिनम् ॥ ६ ॥ द्वारंतुयोगिनामेकंगच्छतांपरमंपदम् ॥ तत्रगत्वानशोचंतिसविष्णुः
सचशंकरः ॥ ७ ॥ सूर्यकोटिप्रतीकाशंपुरंतस्यदुरापदम् ॥ नमेवर्णयितुंशक्यंज्वालामालासमाकुलम् ॥ ८ ॥ तत्रनारायणस्यापिभवनं
ब्रह्मणःपुरे ॥ शेषेतस्यहरिःश्रीमान्मायासहचरःपरः ॥ ९ ॥ सविष्णुर्लोककथितःपुनरावृत्तिवर्जितः ॥ प्रयांतिचमहात्मानोयेप्रपन्नाजनार्दनम्
॥ १० ॥ ऊर्ध्वंब्रह्मासनात्पूर्वंपरंज्योतिर्मयंशुभम् ॥ वह्निनाउपरिक्षिप्तंतत्रास्तेभगवान्भवः ॥ ११ ॥ देव्यासहमहादेवोश्चिंत्यमानोमनीषि
भिः ॥ योगिभिःशतसाहस्रैर्वृतैकस्तैश्चसंवृतः ॥ १२ ॥ तत्रतेयांतिनियताद्विजावैब्रह्मवादिनः ॥ महादेवपरेशानास्तापसाब्रह्मवादिनः ॥ १३ ॥ निर्म
मानिरहंकाराःकामक्रोधविवर्जिताः ॥ द्रक्ष्यंतिब्रह्मणायुक्तारुद्रलोकःसवैस्मृतः ॥ १४ ॥ एतेसप्तमहर्लोकाःपृथिव्यांपरिकीर्तिताः ॥ महात
लादयश्चाधःपातालाः संतिवैद्विजाः ॥ १५ ॥ महातलंहैमतलंसर्ववर्णोपशोभितम् ॥ प्रासादैर्विविधैःशुभ्रैर्देवतायतनैर्युतम् ॥ १६ ॥
अनंतेनसमायुक्तंमुचुकुंदेनधीमता ॥ नृपेणबलिनाचैवपातालंस्वर्गवासिना ॥ १७ ॥ शैलंरसातलंविप्राःशांकरंहिरसातलम् ॥ पीतंसुतल
मित्युक्तंवितलंविद्रुमप्रभम् ॥ १८ ॥ सितंहिवितलंप्रोक्तंतलंचैवसितेतरम् ॥ सुवर्णेनमुनिश्रेष्ठास्तथावासुकिनाशुभम् ॥ १९ ॥ रसातल
मितिख्यातंसर्वशोभासमन्वितम् ॥ वैनतेयादिभिश्चैवकालनेमिपुरोगमैः ॥ २० ॥ शंकुकर्णेनसंभिन्नंतथानमुचिपूर्वकम् ॥ तथान्यैर्विवि

धैर्नागैस्तलंचैवसुशोभनम् ॥ २१ ॥ तेषामधस्तान्नरकारौरवाद्याश्चकोटयः ॥ पापिनस्तेषुपात्यंतेनतेऽवनमितुंक्षमाः ॥ २२ ॥ पातालाना
मधश्चांतेशेषाख्यावैष्णवीतनुः ॥ कालाग्निरुद्रयोगात्मानारसिंहोऽपिमाधवः ॥ २३ ॥ योऽनंतःपठ्यतेदेवोनागरूपीजनार्दनः ॥ तथाधा
रमिदंसर्वंसकलाग्निमुपाश्रितः ॥ २४ ॥ तमाविश्यमहायोगीकालस्तद्वदनानलः ॥ विषज्वालासमोऽनंतोजगत्संहरतिस्वयम् ॥ २५ ॥
तामसीशांभवीमूर्तिःकालात्मापरमेश्वरः ॥ सएवगर्भमाश्रित्यप्रकाशयतिनित्यशः ॥ २६ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिप्रथम
भागेपातालवर्णननामतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ एतद्ब्रह्मांडमाख्यातंचतुर्विधविधंमहत् ॥ अतःपरंप्रवक्ष्यामि
भूर्लोकस्यविनिर्णयम् ॥ १ ॥ तद्वीपप्रधानोजंबुःप्लक्षःशाल्मलएवच ॥ कुशःक्रौंचश्चशाकश्चपुष्करश्चैवसप्तमः ॥ २ ॥ एतेसप्तमहाद्वीपाः
समुद्रैःसप्तभिर्वृताः ॥ द्वीपाद्वीपोमहान्युक्तःसागरादपिसागरः ॥ ३ ॥ क्षीरोदेक्षुरसोदश्चक्षारोदश्चघृतोदकः ॥ दध्योदःक्षीरसलिलोजलोद
श्चेतिसागराः ॥ ४ ॥ पंचाशत्कोटिविस्तीर्णासमुद्रवलयास्मृता ॥ द्वीपैश्चसप्तभिर्युक्तायोजनानांसमानतः ॥ ५ ॥ जंबुद्वीपःसमंतानांद्वीपा
नांमध्यतःशुभः ॥ तस्यमध्येमहामेरुर्विश्रुतःकनकप्रभः ॥ ६ ॥ चतुराशीतिसाहस्रयोजनैरस्यचोच्छ्रयः ॥ प्रविष्टःषोडशाधस्ताद्द्वात्रिंशन्मू
र्ध्निविष्कृतः ॥ ७ ॥ मूलेषोडशसाहस्रंविस्तारस्तस्यसर्वतः ॥ भूप्रमुख्यश्चशैलोऽसौकलिकात्वेनसंस्थितः ॥ ८ ॥ हिमवान्हिमकूटश्चनिषधस्त
स्यदक्षिणे ॥ नीलःश्वेतश्चशृंगीचउत्तरेवर्षपर्वतः ॥ ९ ॥ लक्षप्रमाणौद्वौमध्येदशहीनास्तथापरे ॥ सहस्राद्वेतयंदीर्घास्तावद्विस्तारिणश्चते
॥ १० ॥ भारतंदक्षिणंवर्षंततःकिंपुरुषंस्मृतम् ॥ हरिवर्षंतथैवान्यन्मेरोर्दक्षिणतोद्विजाः ॥ ११ ॥ चंपकंचोत्तरंवर्षंतथैवाश्वाहिरण्मयम् ॥
उत्तराःकुरवश्चैवयथैतेभारतास्तथा ॥ १२ ॥ नवसाहस्रमेकैकमेतेषांद्विजसत्तमाः ॥ इलावृतश्चतन्मध्येतन्मध्येमेरुरुच्छ्रितः ॥ १३ ॥ मेरो
श्चतुर्दिशस्तत्रनवसाहस्रविष्कृतम् ॥ इलावृतंमहाभागाश्चत्वारस्तत्रपर्वताः ॥ १४ ॥ विष्कंभारचितामेरोर्योजनायुतमुच्छ्रिताः ॥ पूर्वेणमं
दरोनामदक्षिणेगंधमादनः ॥ १५ ॥ विपुलःपश्चिमेभागेसुपार्श्वश्चोत्तरेस्थितः ॥ कदंबेष्वेषुनद्यश्चपिप्पलोवटएवच ॥ १६ ॥ जंबूद्वीपस्य
साजंबूर्नामहेतोर्महर्षयः ॥ महागजप्रमाणानिजंबून्यस्यफलानिच ॥ १७ ॥ पतंतिभूभृतःपृष्ठेशीर्यमाणानिसर्वशः ॥ रसेनचैवप्रख्यातातस्यजं

बुनदीइति ॥ १८ ॥ सरित्तुवर्ततेसापिपीयतेतत्रवासिभिः ॥ नखेदोनचदौर्गंध्यंनजरानेंद्रियक्षयः ॥ १९ ॥ उत्पन्नाःस्वच्छमनसोनरास्तत्र
भवन्तिवै ॥ तीरसूत्रंसमंप्राप्यवायुनाचविशोषितम् ॥ २० ॥ जांबूनदाख्यंभवतिसुवर्णंसिद्धभूषणम् ॥ भद्राह्वःपार्श्वतोमेरोःकेतुमालश्च
पश्चिमे ॥ २१ ॥ वर्षेद्वेतुमुनिश्रेष्ठास्तयोर्मध्येइलावृतम् ॥ मेरोरुपरिविप्रेंद्राब्रह्मणःस्थानमुत्तमम् ॥ २२ ॥ तदूर्ध्वंवासवस्थानंतदूर्ध्वंशंक
रस्यच॥तदूर्ध्वंवैष्णवंलोकंदुर्गालोकंतदूर्ध्वतः ॥ २३ ॥ ज्योतिर्मयंपरंस्थानंनिराकारंहिरण्मयम् ॥ भक्तस्थानंतदूर्ध्वंचदेवोहिभगवान्रविः
॥ २४ ॥ ज्योतिश्चक्रस्थितःशुद्धोनिश्चलःपरमेश्वरः ॥ राशिचक्रेचभ्रमतिमेरोरुपरिसत्तमाः ॥ २५ ॥ बिंबषट्कोद्विनाभौचरथचक्रंदिवानि
शम् ॥ वातरज्जुनिबंधेनध्रुवाधारेप्रतिष्ठितः ॥ २६ ॥ दिक्पालाद्याग्रहास्तत्रदक्षिणादुत्तरायणम् ॥ प्रतिमासंगतःपंथाह्रासवृद्धिर्दिनक्ष
यः ॥ २७ ॥ रविणालंघितोमासश्चांद्रःख्यातोमलिम्लुचः ॥ द्वादशेभगवान्सूर्यःप्रत्यहंभक्तसेवके ॥ २८ ॥ कृत्वात्रिषुत्वहोरात्रं
तारामयगतंविभुम् ॥ यामेयामेचोदयश्चदेशेदेशेचशर्वरी ॥ २९ ॥ दिवाचरतियःसूर्योरात्रौचरतिचन्द्रमाः ॥ नक्षत्राणिदिवारात्रौ
सूर्यचक्रेप्रतिष्ठितम् ॥ ३० ॥ देशान्नंचावगमनंयत्रतस्मादिवाभवत् ॥ यत्रचंद्रक्षयोभवतियत्रसूर्यःप्रवर्तते ॥ ३१ ॥
दिवारात्रिंविजानीयाज्ज्योतिश्चक्रेप्रतिष्ठितम् ॥ उदयास्तमनंनास्तिनक्षत्राणांविशेषतः ॥ ३२ ॥ यन्नक्षत्रेचयोदेशःसतेषामुदयः
स्मृतः ॥ तत्रास्तोजीवशुक्राणांसूर्यादीनांचसर्वशः ॥ ३३ ॥ तदाकालेनियोक्तव्याभार्गवास्तादिकीक्रिया ॥ सूर्यःसोमोबुधश्चंद्रोभार्गवश्चैव
शीघ्रकः ॥ ३४ ॥ दक्षिणायनमास्थाययदाचरतिरश्मिमान् ॥ तदासर्वग्रहाणांससूर्योधस्तात्प्रसर्पति ॥ ३५ ॥ विस्तीर्णमंडलंकृत्वात
स्योर्ध्वंचरतेशशी ॥ नक्षत्रमंडलंकृत्स्नंसोमादूर्ध्वंप्रसर्पति ॥ ३६ ॥ नक्षत्रेभ्योबुधश्चोर्ध्वंबुधादूर्ध्वंतुभार्गवः ॥ चंद्रस्तुभार्गवादूर्ध्वंचन्द्रादूर्ध्वं
शनैश्चरः ॥ ३७ ॥ तस्माच्छनैश्चरादूर्ध्वंततःसप्तर्षिमंडलम् ॥ ऋषीणांचैवसप्तानांध्रुवश्चोर्ध्वंव्यवस्थितः ॥ ३८ ॥ कालचक्रमयेचक्रेसूर्यो
भवतिसर्वदा ॥ राश्यर्द्धेषुगतिर्यत्रातिथीनांचतिथौस्मृता ॥ ३९ ॥ स्तंभतेचरतेशीघ्रंह्रासेचापिदिनक्षयः ॥ पादास्तंचापिशुक्रस्यमहास्तं
तत्रदृश्यते ॥ ४० ॥ पादास्तेपक्षमात्रंस्यान्महास्तेयाममात्रकम् ॥ चक्रेपक्षार्धमासःस्यादतिचारोऽष्टवासरान् ॥ ४१ ॥ नगण्यतेदेशभे

देनक्षत्रेणचगण्यते ॥ बालवृद्धस्तुशुक्रस्यदेशस्थेवागणस्यच ॥ ४२ ॥ बालवृद्धौक्षात्रियस्यनगण्येतेसदाबुधैः ॥ पादादूर्ध्वंमहास्तस्यवै
श्यस्याद्विजसत्तमाः ॥ ४३ ॥ शेषार्धभार्गवास्तस्यशूद्राणामथगर्हितम् ॥ अभिचारेचचक्रेचनशूद्रस्यविधीयते ॥ ४४ ॥ वर्जयेद्दासरान्स
तइतिचाथर्वणीश्रुतिः ॥ ४५ ॥ इति श्रीभविष्येमहापुराणेमध्यमपर्वणिप्रथमभागेज्योतिश्चक्रेचतुर्थोऽध्यायः ॥ ४ ॥ छ ॥ ॥ सूतउवाच ॥
त्रयाणामेववर्णानांजन्मतोब्राह्मणःप्रभुः ॥ संसृष्टाब्राह्मणाःपूर्वंतपस्तप्त्वाद्विजोत्तमाः ॥ १ ॥ हव्यानामिहकव्यानांसर्वस्यापिचगुप्तये ॥ अ
श्नंतिचमुखेनास्यहव्यानित्रिदिवौकसः ॥२॥ कव्यानिचैवपितरःकिंभूतमाधिकंततः॥जन्मनाचोत्तमोऽयंचसर्वार्चाब्राह्मणोऽर्हति ॥३॥ स्वको
यंब्राह्मणोभुंक्तेविदधातिद्विजोत्तमाः ॥ त्रयाणामिहवर्णानांभावाभावायवैद्विजः ॥ ४ ॥ भवेद्विप्रानसंदेहस्तुष्टोभावायवैभवेत् ॥ अभावायभवे
त्क्रुद्धस्तस्मात्पूज्यःसदाहिसः ॥ ५ ॥ गर्भाधानादिनाचेहसंस्कारायस्यसत्तमाः ॥ चत्वारिंशत्तथाचाष्टौनिवृत्ताःशास्त्रतोद्विजाः ॥ ६ ॥
सयातिब्रह्मणःस्थानंब्राह्मणत्वेनसंशयः ॥ संस्कारपूतंप्रथमंवेदपूतंद्वितीयकम् ॥ ७ ॥ विद्यापूतंतृतीयंस्यात्तीर्थपूतमनंतरम् ॥ क्षेत्रपूतंप्र
विज्ञाप्याविपूतंपूजयेद्द्विजाः ॥ ८ ॥ स्वर्गापवर्गफलदमन्यथाश्रमतामियात् ॥ पूतानांपरमःपूतोगुरूणांपरमोगुरुः ॥ ९ ॥ सर्वसत्वान्वितो
विप्रोनिर्मितोब्रह्मणापुरा ॥ पूजयित्वाद्विजान्देवाःस्वर्गंभुजंतिचाक्षयम् ॥१०॥ मनुष्याश्चापिदेवत्वंस्वंस्वंराज्यंसमंजसाः ॥ यस्यविप्राःप्रसी
दंतितस्यविष्णुःप्रसीदति ॥ ११ ॥ तस्माद्ब्राह्मणपूजायांविष्णुस्तुष्यतितत्क्षणात् ॥ तस्माद्विष्णुमुखाद्विप्रःसमुद्भूतःपुराद्विजाः ॥ १२ ॥
वेदास्तत्रैवसंजाताःसृष्टिसंसारहेतवे ॥ तस्माद्विप्रमुखेवेदाश्चार्पिताःपुरुषेणहि ॥ १३ ॥ पूजार्थंब्रह्मलोकानांसर्वज्ञानार्थतोध्रुवम् ॥ पितृय
ज्ञविवाहेषुवह्निकार्येषुशांतिषु ॥ १४ ॥ प्रशस्ताब्राह्मणानित्यंसर्वस्वस्त्ययनेषुच ॥ देवाभुंजंतिहव्यानिबलिप्रेतादयोऽसुराः ॥ १५ ॥
पितरोहव्यकव्यानिविप्रस्यैवमुखाद्ध्रुवम् ॥ देवेभ्यश्चपितृभ्यश्चयोदद्याद्यज्ञकर्मसु ॥ १६ ॥ दानंहोमंबलिंचैवविनाविप्रेणनिष्फलम् ॥ वि
नाविप्रंचयद्धर्मंप्रयासफलमात्रकम् ॥ १७ ॥ भुंजतेचासुरास्तत्रप्रेताभूताश्चराक्षसाः ॥ तस्माद्ब्राह्मणमाहूयतेषुपूजांचकारयेत् ॥ १८ ॥
कालेदेशेचपात्रेचलक्षकोटिगुणंभवेत् ॥ श्रद्धयाचद्विजंदृष्ट्वाप्रकुर्यादाभिवादनम् ॥ १९ ॥ दीर्घायुस्तस्यवाक्येनचिरजीवीभवेन्नरः ॥ अन

भिवादिनांविप्रेंद्रेषादश्रद्धयापिच ॥ २० ॥ आयुःक्षीणंभवेत्पुंसांभूमिनाशश्चदुर्गतिः ॥ आयुर्वृद्धिर्यशोवृद्धिर्वृद्धिर्विद्याधनस्यच ॥ २१ ॥
पूजयित्वाद्विजश्रेष्ठान्भवेन्नास्त्यत्रसंशयः ॥ नविप्रपादोदककर्दमानिनवेदशास्त्रप्रतिघोषितानि ॥ २२ ॥ स्वाहास्वधास्वस्तिविवर्जि
तानिश्मशानतुल्यानिगृहाणितानि ॥ षड्विंशतिदोषमाहुर्नरानरकभैरवः ॥ २३ ॥ विमुक्त्वैववसेत्तीर्थेग्रामेवापत्तनेवसेत् ॥ तेस्व
र्गेपितृलोकेचब्रह्मलोकेष्ववस्थिताः ॥ २४ ॥ अन्यथानवसेद्वासस्तस्मात्स्तेयीनपालयेत् ॥ अधमोविषमश्चैवपशुश्चापिशुनस्तथा ॥२५॥
पापिष्ठोनष्टकष्टश्चरुष्टोदुष्टश्चदुष्टकः ॥ हृष्टःकुंठश्चअंधश्चकाणश्चैवतथापरः ॥ २६ ॥ चंडःखंडश्चवक्ताचदत्तस्यापहरस्तथा ॥ नीचः
खलश्चवाचालःकदर्यश्चपलस्तथा ॥ २७ ॥ मलीमसश्चतेदोषाःषड्विंशतिरमीमताः ॥ एतेषांचापिविप्रेंद्राःपंचाशीतिर्निगद्यते ॥ २८ ॥
शृणुध्वंद्विजशार्दूलाःशास्त्रेस्मिन्ब्रुवतःक्रमात् ॥ अधमोऽत्रत्रिधाविद्याद्विषमःस्याद्विधोचितः ॥ २९ ॥ पशुश्चतुर्विधश्चैवकृपणोपिहिवै
द्विधा ॥ द्विधाचापिचपापिष्ठोनष्टःसप्तविधःस्मृतः ॥ ३० ॥ कष्टःस्यात्पंचधाज्ञेयोरुष्टोपिस्याद्विधाभवेत् ॥ दुष्टःस्यात्षड्विधोज्ञेयः
पुष्टश्चैवभवेद्विधा ॥ ३१ ॥ हृष्टश्चाष्टविधःप्रोक्तःकुंठश्चैवात्रिधोदितः ॥ अंधःकाणश्चतौद्वौद्वौस्याद्वैचसगुणोऽगुणः ॥ ३२ ॥ द्वौचंडौचप
लश्चैकाखंडचंडौद्विगुर्भवेत् ॥ दंडपंडौतथाज्ञेयौखलनीचौचतुर्द्वयम् ॥ ३३ ॥ वाचालश्चकदर्यश्चक्रमात्त्रिभिरुदाहृतः ॥ कदर्यश्चपलश्चैवत
थाज्ञेयोमलीमसः ॥ ३४ ॥ द्वावेकौचतुरश्चैवस्तेयीचैकविधोभवेत् ॥ पृथग्लक्षणमेतेषांशृणुध्वंद्विजसत्तमाः ॥ ३५ ॥ सम्यग्यस्यपरि
ज्ञानंनरोदेवत्वमाप्नुयात् ॥ उपानहच्छत्रधारीगुरुदेवाग्रतश्चरन् ॥ ३६ ॥ उच्चासनंगुरोरग्रेतीर्थयात्रांकरोतियः ॥ यानमारुह्यविप्रेंद्राःसो
प्येकत्राधमोमतः ॥ ३७ ॥ निमज्ज्यतीर्थेविधिवद्ग्राम्यधर्मेणवर्तयन् ॥ द्वितीयश्चाधमःप्रोक्तोनिंदितःपरिकीर्तितः ॥ ३८ ॥ वाक्चैवमधुरा
श्लक्ष्णाहृदिहालाहलंविषम् ॥ वदत्यन्यत्करोत्यन्यद्द्वावेतौविषमौस्मृतौ ॥ ३९ ॥ मोक्षचिंतामतिक्रम्ययोऽन्यचिंतापरिश्रमः ॥ हरिसेवा
विहीनोयःसपशुर्योनितःपशुः ॥ ४० ॥ प्रयागेविद्यमानेऽपियोऽन्यत्रस्नानमाचरेत् ॥ हृष्टंदेवंपरित्यज्यअदृष्टंभजतेतुयः ॥ ४१ ॥ आयुष

१ कुब्जः-इ०पा०।

स्तुक्षयार्थाय शास्त्रेयमृषिसंमतः ॥ योगाभ्यासंततोहित्वातृतीयश्चाधमःपशुः ॥ ४२ ॥ बहूनिपुस्तकानीहशास्त्राणिविविधानिच ॥ तस्य
सारंनजानातिसएवजंबुकःपशुः ॥ ४३ ॥ बलेनच्छलछद्मेनउपायेनप्रबंधनम् ॥ सोऽपिस्यात्पिशुनःख्यातःप्रणयाद्वाद्वितीयकः ॥ ४४ ॥
मधुरान्नंप्रतिष्ठाप्यदैवेपित्र्येचकर्मणि ॥ ग्लानंचापिचातिक्तान्नंयःप्रयच्छतिदुर्मतिः ॥ ४५ ॥ कृपणःसतुविज्ञेयोनस्वर्गीनचमोक्षभाक् ॥ कु
दाताचसुदाहीनःसक्रोधेनयजेत्तुयः ॥ ४६ ॥ सएवकृपणःख्यातःसर्वधर्मबहिष्कृतः ॥ अदोषेणशुभत्यागीशुभकायोपविक्रयी ॥ ४७ ॥
पितृमातृगुरुत्यागीशौचाचारविवर्जितः॥पित्रोरग्रेसमश्नातिसपापिष्ठतमःस्मृतः॥४८॥जीवत्पितृपरित्यक्तंसुतंसेवन्नवाक्वचित् ॥द्वितीयस्तुस
पापिष्ठोहोमलोपीतृतीयकः॥४९॥साध्वाचारंचप्रच्छाद्यसेवनंचापिदर्शयेत्॥सनष्टइतिविज्ञेयःक्रयक्रीतंचमैथुनम् ॥५०॥जीवेद्देवलवृत्तिःस्या
द्भार्याविपणजीवकः ॥ कन्याशुल्केनजीवेद्वास्त्रीधनेनचवाक्वचित् ॥ ५१ ॥ षडेवनष्टाःशास्त्रेचनस्वर्गमोक्षभागिनः ॥ सदाक्रुद्धंमनोयस्यहीनं
दृष्ट्वाप्रकोपवान् ॥ ५२ ॥ भृकुटीकुटिलःक्रुद्धोरुष्टःपंचविधोदितः ॥ अकार्येभ्रमतेनित्यंधर्मार्थेनव्यवस्थितः ॥ ५३ ॥ निद्रालुर्व्यसनास
क्तोमद्यपःस्त्रीनिषेवकः ॥ दुष्टैःसहसदालापःसदुष्टःसप्तधास्मृतः ॥ ५४ ॥ एकाकीमिष्टमश्नातिवंचकःसाधुनिंदकः ॥ यथासूकरःपुष्टःस्या
त्तथापुष्टःप्रकीर्तितः ॥ ५५ ॥ निगमागमतंत्राणिनाध्यापयतियोद्विजः ॥ नशृणोतिचपापात्मासदुष्टइतिचोच्यते ॥ ५६ ॥ श्रुतिःस्मृतिश्च
विप्राणांनयनेद्वेविनिर्मिते ॥ एकेनविकलःकाणोद्वाभ्यामंधःप्रकीर्तितः ॥ ५७ ॥ विवादःसोदरैःसार्धंपित्रोरप्रियकृद्वदेत् ॥ द्विजाधमःसवि
ज्ञेयःसचंडःशास्त्रनिंदितः ॥ ५८ ॥ पिशुनोराजगामीचशूद्रसेवकएवच ॥ शूद्रांगनागमोविप्रःसचंडश्चद्विजाधमः ॥ ५९ ॥ पक्वान्नंशूद्रगेहे
चयोभुंक्तेसकृदेववा ॥ पंचरात्रंशूद्रगेहेनिवासीचंडउच्यते ॥ ६० ॥ अष्टकुष्ठान्वितःकुष्ठीत्रिकुष्ठीशास्त्रनिंदितः ॥ एतैःसहसदालापःसभ
वेत्तत्समोऽधमः ॥ ६१ ॥ कीटवद्भ्रमणंयस्यकुव्यापारीकुपंडितः ॥ अज्ञानाच्चवदेद्धर्ममग्रवृत्तिःप्रधावति ॥ ६२ ॥ अविमुक्तंपरित्यज्य
योऽन्यदेशेवसेच्चिरम् ॥ सद्विधाशूकरपशुर्निंदितःसिद्धसंमतः ॥ ६३ ॥ कपोलेनहिसंयुक्तोभ्रुकुटीकुटिलाननः ॥ नृपवद्दंडयेद्यस्तुसदंडःस
मुदाहृतः ॥ ६४ ॥ ब्रह्मस्वहरणंकृत्वानृपदेवस्वमेवच ॥ धनेनतेनइतरंदेवंवाब्राह्मणानपि ॥ ६५ ॥ संतर्पयतियोऽश्नातियःप्रयच्छतिवाक्व

चित् ॥ सखरश्चपशुश्रेष्ठःसर्ववेदेषुनिंदितः ॥ ६६ ॥ अक्षराभ्यासनिरतःपठ्यतेनचबुध्यते ॥ पदशास्त्रपरित्यक्तःसपशुःस्यान्नसंशयः॥६७॥
वदत्यन्यत्करोत्यन्यद्गुरुदेवाग्रतोयतः ॥ सनीचइतिविज्ञेयोह्यनाचारस्तथापरः ॥ ६८ ॥ षड्गुणालंकृतेःसाधोर्दोषान्मृगयतेखलः ॥ वनेपुष्प
फलाकीर्णेशलभःकंटकानिव ॥ ६९ ॥ दैवेनचविहीनोयःकुसंभाषांवदेत्तुयः ॥ सवाचालइतिख्यातोह्यनपत्रपसंयुतः ॥ ७० ॥ चांडालैः
सहआलापःपक्षिणांपोषणेरतः ॥ मार्जारैश्चापिसंभुंक्तेयत्कृत्यंमर्कटोदितम् ॥ ७१ ॥ तृणच्छेदीलोष्टमर्दीवृथामांसाशनश्चयः ॥ चपलः
सतुविज्ञेयःपरभार्यस्तथापरः ॥ ७२ ॥ स्नेहोद्वर्तनहीनोयोगंधचंदनवर्जितः ॥ नित्यक्रियासुमेधावीनित्यंसचमलीमसः ॥ ७३ ॥ अन्याये
नगृहंविद्यादन्यायेनगृहंधनम् ॥ शास्त्रादन्यद्गृहंमंत्रंसस्तेयीब्रह्मघातकः ॥ ७४ ॥ देवपुस्तकरत्नानांमणिमुक्ताश्वमेवच ॥ गोभूमिस्वर्णह
रणःसस्तेयीतिनिगद्यते ॥ ७५ ॥ देवोऽपिभावयेत्पश्चान्मानुषोऽपिनसंशयः ॥ अन्योन्यभावनाकार्यासस्तेयीयोनभावयेत् ॥ ७६ ॥ गुरोः
प्रसादाज्जयतिपित्रोश्चापिप्रसादतः ॥ करोतिचयथार्हंचसचस्वर्गेमहीयते ॥ ७७ ॥ नपोषयतिदुष्टात्मासस्तेयीचापरःस्मृतः ॥ उपकारि
जनंप्राप्यनकरोतिपरिष्क्रियाम् ॥ ७८ ॥ सतस्यनरकेशेतेशोणितेचपतत्यधः ॥ सर्वेषांचसवर्णानांधर्मतोब्राह्मणःप्रभुः ॥ ७९ ॥ पृथिवी
पालकोराजाधर्मचक्षुरुदाहृतः ॥ प्रजापतेर्मुखोद्भूतोहोरातंत्रंयथोदितः ॥ ८० ॥ तद्विदोगणनाभिज्ञाअन्यविप्राःप्रचक्षते ॥ गंगाहीनंहतंदेशं
विप्रहीनायथाक्रिया ॥ ८१ ॥ होराज्ञतिविहीनोयोदेशोऽसौविप्लवप्लवः ॥ अप्रदीपायथारात्रिरनादित्यंयथानभः ॥ ८२ ॥ तथाऽसांवत्सरो
राजाभ्रमत्यंधइवाध्वनि ॥ स्थापयेद्धर्मतोविप्रंभावयेत्कर्मवृद्धये ॥ ८३ ॥ श्मश्रुयुक्तोद्विजःपूज्यःसूर्योविप्रस्तुश्मश्रुलः ॥ प्रत्यक्षप्रदर्शना
त्पुण्यंत्रिदिनंकल्मषापहम् ॥ ८४ ॥ दर्शनेव्रात्यविप्रस्यसूर्यंदृष्ट्वाविशुध्यति ॥ नव्रात्यत्वंसूर्यविप्रेपूजयेद्यज्ञसिद्धये ॥ ८५ ॥ ज्योतिर्वेद
स्याधिकारःसूर्यविप्रस्यवैद्विजाः ॥ जातिभेदाश्चचत्वारोभोजकःकथितस्तथा ॥ ८६ ॥ शिवविप्रःसूर्यविप्रश्चतुर्धापरिपठ्यते ॥ कथितो
मध्यमस्तेषांसूर्यविप्रस्तथोत्तमः ॥ ८७ ॥ शिवलिंगार्चनरतःशिवविप्रस्तुनिंदितः ॥ सूर्यविप्रस्यविप्रस्यवैद्यस्यचनृपस्यच ॥ ८८ ॥ प्रवा
सयेदक्षतेनसपुत्रपशुबांधवः ॥ अवध्यःसर्वलोकेषुराजाराज्येनपालयेत् ॥ ८९ ॥ वसुभिर्वस्त्रगंधाद्यैर्माल्यैश्चविविधैरपि ॥ देशचक्रविदः

पूज्याहोराचक्रविदः पराः ॥ १० ॥ सूर्यचक्रविदः पूज्या नावमन्येत्कथंचन ॥ सिद्धयृद्धिंचधनर्द्धिंचयइच्छेदायुषासमम् ॥ ११ ॥ गणविप्र
समः पूज्योदैवज्ञः समुदाहृतः ॥ जातेबालेनिरूप्येचलग्नग्रहनिरूपणम् ॥ १२ ॥ संस्थानंसूर्यविप्रोयःसूर्यविप्रस्यसत्तमाः ॥ द्विमात्रिकांसम
भ्यस्यसर्ववेदफलंलभेत् ॥ १३ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिप्रथमभागेपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ सूतउवाच ॥ ॥
चतुर्णामपिवर्णानांनान्योबंधुःप्रचक्षते ॥ पित्राहतेद्विजश्रेष्ठाइतीयंनैगमीस्मृतिः ॥१॥ त्रयोऽपिगुरवःश्रेष्ठास्तस्मान्मातापरोगुरुः ॥ येसोदरा
ज्येष्ठश्रेष्ठाउत्तरोत्तरतोगुरुः ॥ २ ॥ द्वादश्यांतुअमावास्यामथवारविसंक्रमे ॥ वासांसिदक्षिणादेयामणिमुक्तायथारुचि ॥ ३ ॥ अयनेविषु
वेचैवचंद्रसूर्यग्रहेतथा ॥ प्राप्तेचापरपक्षेतुभोजयेच्चापिशक्तितः ॥ ४ ॥ पश्चात्प्रबंधयेत्पादौमंत्रेणानेनसत्तमाः ॥ विधिवद्वंदनादेवसर्वतीर्थ
फलंलभेत् ॥ ५ ॥ स्वर्गापवर्गप्रदमेकमाद्यंब्रह्मस्वरूपंपितरंनमामि ॥ यतोजगत्पश्यतिचारुरूपंतंतर्पयामःसलिलैस्तिलैर्युतम् ॥ ६ ॥
पितरोजनयंतीहपितरःपालयंतिच ॥ पितरोब्रह्मरूपाहितेभ्योनित्यंनमोनमः ॥ ७ ॥ यस्माद्द्विजयतेलोकस्तस्माद्धर्मःप्रवर्तते ॥ नमस्तु
भ्यंपितःसाक्षाद्ब्रह्मरूपनमोऽस्तुते ॥ ८ ॥ याकुक्षिविवरेकृत्वास्वयंरक्षतिसर्वतः ॥ नमामिजननींदेवींपरांप्रकृतिरूपिणीम् ॥ ९ ॥ कृच्छ्रे
णमहतादेवीधारितोऽहंपयोदधि ॥ त्वत्प्रसादाज्जगद्दृष्टंमातर्नित्यंनमोऽस्तुते ॥ १० ॥ पृथिव्यांयानितीर्थानिसागरादीनिसर्वशः ॥ वसंतित
त्रतांनौमिमातरंभूतिहेतवे ॥ ११ ॥ गुरुदेवप्रसादेनलब्धविद्यंयशस्करम् ॥ शिवरूपनमस्तस्मैसंसारार्णवसेतवे ॥ १२ ॥ वेदवेदांग
शास्त्राणांतत्त्वंयत्रप्रतिष्ठितम् ॥ आधारःसर्वभूतानामग्रजन्मन्नमोऽस्तुते ॥१३॥ ब्राह्मणोजगतांतीर्थंपावनंपरमंयतः ॥ भूदेवहरमेपापंविष्णु
रूपिन्नमोऽस्तुते ॥ १४ ॥ पितामहंचप्रणमेत्सर्वादौमातरंगुरुम् ॥ मातामहंचतदनुआचार्यमथऋत्विजम् ॥ १५ ॥ मातृमंत्रैश्चप्रथमंप्रणमेद्भ
क्तिभावतः ॥ तथाग्रजस्तथाज्येष्ठःपितृव्योऽपिद्विजोत्तमाः ॥१६॥ दृष्टादृष्टेचसगुरुर्गुरुर्मातातथागुरुः ॥ दृष्टादृष्टस्तृतीयःस्यात्सूर्योऽग्निश्चंद्र
एवच ॥१७॥ मंत्रदातागुरुःख्यातःसप्तमःपरिकीर्तितः ॥ कभोजनगुरुःश्रेष्ठःस्वर्गापवर्गहेतुकः ॥१८॥ दृष्टदेवंचयोहित्वाअदृष्टंचानिषेवते ॥ पापा
त्मापरमःसैकस्तिर्यग्योनिंचगच्छति ॥१९॥ यथापिताज्येष्ठपिताकनीयांश्चतथाद्विजाः ॥ ज्येष्ठोभ्रातापितृतुल्योमान्यःसत्कारभाग्यतः ॥२०॥

आचार्योब्रह्मणोमूर्तिःपितामूर्तिःप्रजापतेः॥मातापृथिवीमूर्तिश्चभ्रातरोमूर्तिरात्मनः ॥२१॥ पितामेरुर्वसिष्ठःस्याद्धर्ममूर्तिःसनातनः ॥सचापि
दृष्टदेवःस्यात्तदाज्ञांपरिपालयेत् ॥ २२ ॥ पितामहंचापित्रग्रेहव्यकव्यैश्चतर्पयेत् ॥ सयातिब्रह्मणःस्थानंयस्मान्नावर्ततेपुनः ॥ २३ ॥
तस्यपादोदकस्नानाद्गंगानार्हतिकेवलम् ॥ तथावलोकनात्तस्यज्योतिर्लिंगशतैश्चकिम् ॥ २४ ॥ द्वात्रिंशत्कुंडकाशिलास्पर्शनेयाद्दशंफ
लम् ॥ तादृशंकोटिगुणितंपितामहप्रदक्षिणे ॥ २५ ॥ शतमातृवरिष्ठाश्चपितामह्याश्चपोषणे ॥ गुणास्तद्दर्शनेविप्राःसंसारेनपुनर्विशेत् ॥
॥२६॥ इति श्रीभविष्येमहापुराणेमध्यमपर्वणिप्रथमभागेगुरुगुणवर्णनंनामषष्ठोध्यायः॥ ६ ॥ ॥ सूतउवाच ॥ समाख्यामीहविप्रेंद्राइतिहा
संपुरातनम् ॥ श्रवणेपिचधर्मात्माश्रूयतांयन्मयापुरा ॥ १ ॥ पृष्टोवाचमहातेजाविरिंचोभगवान्प्रभुः ॥ हंततेकथयाम्येषपुराणश्रवणे
विधिम् ॥२॥ इतिहासपुराणानिश्रुत्वाभक्त्याद्विजोत्तमाः ॥ मुच्यतेसर्वपापेभ्योब्रह्महत्याशतंचयत् ॥३ ॥ सायंप्रातस्तथारात्रौशुचिर्भूत्वा
शृणोतियः ॥ तस्यविष्णुस्तथाब्रह्मातुष्यतेशंकरस्तथा ॥ ४ ॥ प्रत्यूषेभगवान्ब्रह्मादिनांतेतुष्यतेहरिः ॥ महादेवस्तथारात्रौशृण्वतांपठतां
नृणाम् ॥ ५ ॥ शुक्लवस्त्रधरश्चैवचैलाजिनकुशोत्तरः ॥ प्रदक्षिणत्रयंकुर्याद्यस्तस्मिन्देवतागुरौ ॥ ६ ॥ नात्युच्छ्रितंनातिनीचंस्वासनंभजते
ततः ॥ दिक्पतिभ्योनमस्कृत्यॐकाराधिष्ठितानपि ॥७॥ पुस्तकंधर्मशास्त्रस्यधर्माधिष्ठानशाश्वतम् ॥ आगमानांशिवोदेवस्तंत्रादीनांच
शारदा ॥८॥ जामलानांगणपतिर्डामराणांशतक्रतुः ॥ नारायणोभारतस्यतथारामायणस्यच ॥९॥ वासुदेवोभवेद्देवःसप्तानांशृणुसत्तमाः ॥
आदित्योवासुदेवश्चमाधवोरामकेशवौ ॥ १० ॥ वनमालीमहादेवः सप्तानांसप्तपर्वणि ॥ विष्णुधर्मादिकानांचशिवोज्ञेयः सनातनः
॥ ११ ॥ अथचादिपुराणस्याविरिंचिः परिकीर्तितः ॥ शुद्धौदनंयवक्षीरंचपायसंकृसरंतथा ॥ १२॥ कृसरान्नंचवादद्यात्क्रमाद्बलिगणंविदुः ॥
शालिभक्तंसगोधूमंतिलाक्षतविमिश्रितम् ॥ १३ ॥ गव्यंचसफलंचैवदेवायास्यमिदंबलिः ॥ पृथक्पृथक्चैवकांस्येविन्यसेद्दिक्षुमध्यतः
॥ १४ ॥ पठेच्चापिविधानेनसयागः षाण्मयःपरः ॥शीतोदकंमधुक्षीरंसितेक्ष्वोश्चरसंगुडम् ॥ १५ ॥ सगर्भश्चपरोज्ञेयःषाण्मयश्चापरोबलिः॥
शालितंडुलप्रस्थंतुतदर्धंवातदर्धकम् ॥१६॥ क्षीरेणापिचसंभक्तंयवक्षीरमिदंस्मृतम् ॥ क्षीरंभागाष्टकंग्राह्यंसप्तभागेनसंस्थितिः ॥ १७ ॥

हैमंतिकंसिताख्यंचतांडुलंप्रपचेच्चरुम् ॥ अशीतिपलमानेनसिद्धमासादयेत्ततः ॥ १८ ॥ भागार्धेनददेत्पश्चान्माक्षिकंवासितामपि ॥
गुडमिश्रेणयोदद्यात्संपर्कोजायतेक्वचित् ॥ १९ ॥ संपर्कोमाक्षिकस्यापिदद्यादिक्षुरसंबुधः ॥ गृहीत्वायाचकः शुद्धःशृणुतद्द्विज
सत्तमाः ॥ २० ॥ शृणुतेवाधीयानोयोदद्याद्धस्तेचपुस्तकम् ॥ समुत्थायचगृह्णीयात्प्रणम्यविनिवेदयेत् ॥ २१ ॥ पूर्वस्थःश्रावकोविप्रो
विख्यातस्तस्यदक्षिणे ॥ पश्चिमाशामुखेनैवतर्जन्यांगुष्ठयासह ॥ २२ ॥ प्रस्तरेणापिहस्तेनविन्यासः पंडितैः सदा ॥ इतोन्यथानकर्तव्यः
कृत्वान्यासमथाप्नुयात् ॥ २३ ॥ असकृद्विन्यसेद्विप्राः पावमानींजलेजपेत् ॥ वेदांतागमवेदांतविधिरेषस्मृतोबुधैः ॥ २४ ॥ यमदिक्सं
मुखेश्रोतावाचकश्चोत्तरामुखः ॥ पुराणभारताख्यानएषवैकथितोविधिः ॥ २५ ॥ वैपरीत्येनविधिनाविज्ञेयाद्विजसत्तमाः ॥ रामायणेधर्म
शास्त्रेहरिवंशेचसत्तमाः ॥ २६ ॥ इतोऽन्यथायातुधानाः प्रलुंपंतिफलंयतः ॥ तस्माद्विधिविधानेनशृणुयादथवापठेत् ॥ २७ ॥ श्रुत्वाप्रति
पुण्यविद्यांयोऽश्नीयान्मांसमेवतु ॥ सयातिगार्दभींयोनिंयदिमैथुनिनः क्वचित् ॥ २८ ॥ यदिदेवालयेतीर्थेवाचयेच्छृणुयादथ ॥ यस्यदेवगृ
हेतस्यतस्यतीर्थस्यवर्णनम् ॥२९॥ माहात्म्यश्रवणादेवगोदानस्यफलंलभेत्॥महागुरोश्चमाहात्म्यंपित्रोरग्रेनचस्मरेत् ॥३०॥ पितुर्माहात्म्यं
यत्पुत्रैर्वाच्यंसंसदिपर्वणि ॥ वासुदेवाग्रतश्चापिरुद्रमाहात्म्यवर्णनम् ॥ ३१ ॥ रुद्राग्रेवासुदेवस्यकीर्तनंपुण्यवर्धनम् ॥ दुर्गाग्रेशिवसूर्यस्य
वैष्णवाख्यानमेवच ॥ ३२ ॥ यः करोतिविमूढात्मागार्दभींयोनिमाविशेत् ॥ गुरोरनुज्ञयापित्रोःप्रकुर्यादभिवादनम् ॥ ३३ ॥ अनुज्ञ
यातथापित्रोर्हरेः कुर्यात्प्रदक्षिणम् ॥ नविष्णुर्नचब्रह्माचनचरुद्रःशचीपतिः ॥ ३४ ॥ सर्ववेदेनतत्तुल्यंसर्वधर्मपरायणम् ॥ सर्वज्ञानमयंचै
वसर्वज्ञेनचतत्समम् ॥ ३५ ॥ तस्माद्विजन्मन्पित्रोर्हिसेवनाद्ब्रह्मशाश्वतम् ॥ गुरुभ्योवंदनंव्यर्थंपितरंयोनतर्पयेत् ॥ ३६ ॥ जीवन्नतर्पये
न्मुख्यंगंगायांमरणेपिच॥उभयोस्तर्पणंनास्तिजीवन्नपिनजीवति ॥ ३७ ॥ पुराणश्रवणंपुण्यंशून्यंभागवतंयदि ॥ व्यर्थंभागवतंविप्रानारसिंह
विहीनकम् ॥ ३८ ॥ आदिपर्वणिहीनेतुभारताख्यंनधारयेत् ॥ विनाश्वमेधिकंविप्राविनायज्ञाननंविना ॥ ३९ ॥ दानकर्मविहीनंचमोक्ष
धर्मंनधारयेत् ॥ भारतंचादिवारोहधारणादौवरंव्रजेत् ॥ ४० ॥ वायुपुराणमश्रुत्वाशास्त्रंचयौगिकंविना ॥ वायुहीनंदेहिकुलंवृथातस्यनधार

कम् ॥ ४१ ॥ तथावायुपुराणंयद्विहीनंश्रव्यमन्यकम् ॥ यथासुंदरकांडेनआरण्यंचनधारयेत् ॥ ४२ ॥ लंकांविनाचादिकांडंतल्लि
खित्वानधारयेत् ॥ ४३ ॥ पाराशरंविनाव्यासंयाज्ञवल्क्यंविनामखम् ॥ ४४ ॥ दक्षंविनानशंखंचशंखहीनंबृहस्पतिम् ॥ वह्नीयंश्रवणाद्ये
ननचयुक्तिमथापयेत् ॥ ४५ ॥ संस्थापनादेवविनानचकिमपिराक्षसैः ॥ नदद्देत्प्रार्थकादिभ्योनविक्रीयेत्कथंचन ॥ ४६ ॥ नहरेत्पुस्तकं
चापिनहरेदक्षराणिषट् ॥ ब्रह्माक्षरस्यहरणाद्रौरवान्ननिवर्तते ॥ ४७ ॥ आद्याक्षरस्यहरणात्ताम्रकुष्ठीभवेदिह ॥ मुखवृत्तस्यहरणाद्यावदाचं
द्रतारकम् ॥ ४८ ॥ कुवलेआसिपत्रेचपततीहनसंशयः ॥ स्वाक्षरस्यहरणेस्वमातृहरणेऽपियत् ॥ ४९ ॥ तस्मात्पुस्तकमात्रंयोहरेन्नरकमाप्नु
यात् ॥ यद्भारतंयत्पुराणंस्तोत्ररूपाणितानिच ॥५०॥ तानिवेदागमादीनिपुस्तकेष्वपिवाचयेत् ॥ वेदानांपुस्तकंयच्चालिखित्वातन्नवाचयेत्
॥ ५१ ॥ तथातंत्रोदितान्मंत्राँल्लिखित्वातन्नवाचयेत् ॥ पुस्तकंनिगमानांचमंत्रव्याख्यानसंग्रहम् ॥ ५२ ॥ स्फुटंकृत्वापुरः स्थाप्ययाव
त्कालंप्रवर्तते ॥ तावत्सनरकेघोरेप्रेतत्वंजन्मजन्मनि ॥ ५३ ॥ नवाचयेच्चव्याख्यातावाचकोऽपिप्रवाचयेत् ॥ पौष्करेचश्लोकपा
दमश्वमेधंपदेपदे ॥ ५४ ॥ वेदार्थंवाचयेद्यस्माद्विपरीतोऽपवाचकः ॥ तावुभौपतितौज्ञेयौपावमानीशतंजपेत् ॥ ५५ ॥ आदिम
ध्यावसानेचमंत्रेचप्रणवंदिशेत् ॥ वलिभिर्गंधपुष्पैश्चपुस्तकंदेवनिर्मितम् ॥ ५६ ॥ त्रिदेवंपुस्तकंविद्यात्सूत्रंवासुकिरुच्यते ॥ अमा
नकरणेदोषस्तस्मात्तच्चनहापयेत् ॥ ५७ ॥ पत्राणिभगवान्ब्रह्माऊर्ध्वंदीर्घाणियानिच ॥ जनार्दनश्चाक्षराणिमात्राप्रकृतिरव्यया ॥ ५८ ॥
लिपीभंगीमहेशः स्यात्तस्यामात्रासरस्वती ॥ एकरेखाचएकात्मापादाच्चपादविच्युतिः ॥ ५९ ॥ चतुष्पादांतरेयुग्मंमध्यमोंऽतेयुगं
युगम् ॥ विपत्करंयुग्मपंक्तावयुग्मेस्वर्गसाधनम् ॥ ६० ॥ भारतेचेतिहासेचपुराणेद्विजसत्तमाः ॥ अयुग्मपंक्तौस्वर्गःस्याद्युग्मेनरक
माविशेत् ॥ ६१ ॥ वक्रनामाक्षरैर्युक्तंपंक्तिभेदेनसत्तमाः ॥ उपन्यस्तस्ययन्नामतत्कलौमात्रयासह ॥ ६२ ॥ आत्मासंशुद्धिसंशु 
द्ध्याधारयेद्धर्मसंहिताम् ॥ इतोऽन्यथाभवेद्दोषस्तस्मात्तत्परिवर्जयेत् ॥ ६३ ॥ रिपुः सूर्यस्तथारामोयक्षोऽनंतः सरस्वती ॥ ब्राह्मी
चयाक्षिणीचैवगायत्रीनवमीस्मृता ॥ ६४ ॥ विष्ण्वंतेचभवेन्मुक्तिःसूर्यांऽतेपादविच्युतिः ॥ रिपुंकरंभवेत्तस्ययक्षेदुर्गतिमादिशेत् ॥ ६५ ॥

अनंतेविपुलाकीर्तिःसरस्वत्यांधनागमः ॥ ब्राह्मीब्रह्मत्वमाप्नोतियक्षिणीयक्षमंदिरम् ॥ ६६ ॥ मुक्तिमाप्नोतिगायत्रीइतिपंक्तिफलोदयः ॥
चतुर्धाप्रतिभक्तिःस्यात्पुस्तकंधर्मनिर्मितम् ॥ ६७ ॥ ब्रह्मेंद्रंवैष्णवंशैवंशाक्तिकंचमहेश्वरी ॥ ब्रह्मरूपंचेतिहासमैंद्रंरामायणात्मकम् ॥
॥ ६८ ॥ वैष्णवंपरमंदैवंयच्छैवंतल्ललाटकम् ॥ पावकोऽस्यतथामूलेमध्येभागेशतक्रतुः ॥ ६९ ॥ अग्रेस्थिताग्रहाःसर्वेदिशामीशास्तथा
द्विजाः ॥ मेरुःसुमेरुरुद्दिष्टःसंगवान्कामउच्यते ॥ ७० ॥ द्यावापृथिव्यौपातालंतस्यांतःसमुदाहृतम् ॥ पौराणिककथायुक्तपुस्तकोदेव
पूजितः ॥ ७१ ॥ नशस्यःपूजनीयश्चगृहेस्थाप्येतमानवः ॥ योयस्मैशूद्रोविप्रायवृत्तिंदद्याच्चमानवः ॥ ७२ ॥ सयातिब्रह्मसदनंमणिवत्र्मा
दिकुट्टिमम् ॥ नशस्यःपूजनीयश्चगृहेस्थाप्येतमानवः ॥ ७३ ॥ पत्राणामग्रभागेतुवेधंकुर्यात्स्ववर्तुलम् ॥ श्रवणात्तत्रमात्रेणतत्रपद्मंचवर्तु
लम् ॥ ७४ ॥ संहितागमतंत्रेषुप्रतिवेधेचसंकुलम् ॥ प्रकुर्याच्चित्ततापेननततःशक्रपुरंव्रजेत् ॥ ७५ ॥ मध्यंतस्यहरेदायुःपार्श्ववेधःशिवंहरे
त् ॥ युग्मवेधेजयंदद्यादेकवेधेबलिर्भवेत् ॥ ७६ ॥ परमंप्रकृतेर्गुह्यंस्थानंदैवैर्विनिर्मितम् ॥ पूरयेत्ताम्रलिंगेनअथरैत्यमयेनवा ॥ ७७ ॥
अशक्तोबिल्वकाष्ठस्यतथाश्रीपर्णिकस्यच ॥ नकाष्ठस्यनवंशस्यंनलोहंयोजयेत्क्वचित् ॥ ७८ ॥ प्रागारंभश्लोकशतंधर्मशास्त्रस्यवैलिखेत्
॥ संहितायांपुराणायांयुग्मकल्पंतदर्धकम् ॥ ७९ ॥ ब्रह्मचर्येणविलिखेन्नमोहाद्ब्राह्मणःक्वचित् ॥ तथापिचाखिलव्यासलिखनात्संतति
क्षयः ॥ ८० ॥ अनामात्वेहेमयुतांबलाकंचित्तमेवच ॥ नलिखेत्खिलभागंचहरिवंशस्यसत्तमाः ॥ ८१ ॥ गारुडस्यचस्कांदस्यनलिखे
न्मध्यतंत्रकम् ॥ लिखनंहरिवंशस्यव्रतस्थोनियमैर्युतः ॥ ८२ ॥ गृहस्थोनलिखेद्ग्रंथंलिखेच्चमथुरांविना ॥ लिखनेपारिजातस्यमत्स्य
मांसाशिनंलिखेत् ॥ ८३ ॥ वाल्मीकिसंहितायाश्चलिखनेचतथाक्वचित् ॥ स्तोत्रमात्रंलिखेद्विप्राअव्रतीनलिखेत्क्वचित् ॥ ८४ ॥ अब्राह्म
णेनलिखितंनिष्फलंपरिकीर्तितम् ॥ पतितैरपिपाखंडैर्नस्त्रीविलिखतिक्वचित् ॥ ८५ ॥ दुर्विचारोदुष्टभार्योदुर्मतिश्चापिलेखकः ॥ नलिखे
द्धर्मशास्त्रंचपुराणंस्तोत्रसंहितम् ॥ ८६ ॥ तच्चप्राप्नुवन्कर्तव्यंसुवर्णरजतस्यच ॥ कज्जलैर्मलिनंकुर्यान्मंत्रीनिर्यासमंत्रितैः ॥ ८७ ॥ जी
वंत्याश्चरसैर्युक्तैर्माणिकर्दमलोलुपैः ॥ वंशुन्यान्मुख्यायुतेर्वापिपीतस्वेचैरथापिवा ॥८८॥ कृष्णेवायुप्रदंबिंबात्पीतेवायुक्षयोभवेत् ॥ रक्तेपुष्टिं

मवाप्नोतिकृष्णेचसंपदागमः ॥ ८९ ॥ इतिहासपुराणानांविलि[illegible]न्मुखाच्छृणु ॥ वायव्यादिमुखेनैवकाष्ठवेदंचसंलिखेत् ॥ ९० ॥ पूर्वा
मुखेचार्थहानिरुत्तरेचमुखंश्रियः ॥ मरणंदक्षिणास्येतुपाश्चिमास्येधनक्षयः ॥ ९१ ॥ पितृमेधेभुवःकंपेनलिखेज्जन्मवासरे ॥ अशौचेमृतके
सूतावमायांरविसंक्रमे ॥ ९२ ॥ अत्रलेखाद्दारिद्र्यःस्यात्तथापुत्रविनाशनम् ॥ बलंधर्मंक्षयंचैवतस्माद्यत्नेनवर्जयेत् ॥ ९३ ॥ पितृश्राद्धदिने
लेखःकुलक्षयकरोभवेत् ॥ एकरात्रंभुवःकंपेतास्मिँल्लेखेधनक्षयः ॥ ९४ ॥ अशौचेऽपिदरिद्रःस्याज्जन्माहेचायुषःक्षयः ॥ लिपिच्छंदःपद
ज्ञश्वयुवाधीमाञ्जिताक्षरः ॥९५॥ द्रुतलेखीचतेजस्वीयोलेखयतिलेखकः ॥ असंवलितभावेनऊर्ध्वोर्ध्वंस्यात्समाक्षरम् ॥ ९६ ॥ लिपियुक्तः
समायुक्तःसएवागमलेखकः ॥ नांदीनागरकैर्वर्णैःशुद्धनागरकैरपि ॥ ९७ ॥ कामरूपाक्षरैर्वापियावत्त्संहितागणः ॥ अचेतनेनालिखितं
यावत्कालंप्रवर्तते ॥ ९८ ॥ यावदक्षरसंस्थानंतावत्स्वर्गेमहीयते ॥ अनुक्तोवाचयेद्यस्तुधर्मशास्त्रस्यवेतनम् ॥ ९९ ॥ लिखित्वायस्तु
पापात्मायावदक्षरसंख्यया ॥ तावत्कालंतुनरकेपच्यतेनात्रसंशयः ॥ १०० ॥ कुटुंबभरणार्थंतुगृह्णीयाद्वापिवेतनम् ॥ नजीवातिसदुष्टा
त्माधनवस्त्रफलान्वितः ॥ १०१ ॥ पतितैरंत्यजैर्म्लेच्छैरोगीकुष्ठीक्षयीतथा ॥ रोगीशिलीपदैश्चैवमूकोऽपिधर्मसंहतः ॥ १०२ ॥ एतैर्वि
लिखितंयच्चधारयेन्नगृहाश्रमी ॥ अनायुष्यकरंयस्मात्तस्मात्तत्परिवर्जयेत् ॥ १०३ ॥ हीनांगाप्रतिमाचैवपुस्तकंमानहीनकम् ॥ नकलौ
धारयेद्देहअनायुष्यकरंभवेत् ॥ १०४ ॥ द्वात्रिंशदंगुलैर्युक्तंकर्तव्यंपुस्तकोत्तमम् ॥ सवैनारायणःख्यातोधारणाच्चकुतोऽप्यलम् ॥ १०५ ॥
चतुर्विंशांगुलंयच्चतद्वैस्वधनमुच्यते ॥ शंकरःसतुविज्ञेयोधर्मकामफलप्रदः ॥ १०६ ॥ अष्टांगुलंभवेद्यच्चतत्कनिष्ठमिहोच्यते ॥ तस्मा
द्ब्रह्ममयंज्ञेयंत्रिवर्गफलदायकम् ॥ १०७ ॥ ताडिताजलपत्रेचअथवाचागुरुत्वचि ॥ एत्याःपत्रकृतेमानंभूर्जेमानंनविद्यते ॥ १०८ ॥ द्वा
दशांगुलकंयच्चभूर्जतैडादिनिर्मितम् ॥ अंगुलानांप्रमाणंयत्तेनापिज्ञानपुस्तकम् ॥ १०९ ॥ हस्तसंस्थापितेतस्यतेनायुष्यकरंभवेत् ॥
धर्मशास्त्रस्यसाहस्रेधर्मशास्त्रस्यवेतनम् ॥ ११० ॥ स्वर्गमार्गस्यगमनेभारतेचतदर्धकम् ॥ हरिवंशेस्वर्णमानेकृतेमूल्यसहस्रके ॥ १११ ॥
युगेयुगेपादहीनंधर्मंकुर्याद्यथारुचि ॥ प्रणम्यशिरसासर्वान्व्यासादीन्संहिताश्रुतान् ॥ ११२ ॥ जैमिनिंचततोव्यासंशंकरंचतथाहरिम् ॥

नमस्कारमथैषांतुआदिमध्यावसानके ॥ ११३ ॥ ततःप्रवाचयेद्विप्रोधर्मशास्त्रार्थकोविदः ॥ अलक्षितमनास्तद्वद्यद्रूपंस्पष्टमुच्चरन् ॥
॥ ११४ ॥ असंयुक्ताक्षरपदंस्पष्टभागसमन्वितम् ॥ सप्तस्वरसमायुक्तंसप्तनादविभूषितम् ॥ ११५ ॥ सामगाथाःसमाश्रित्यरागयुक्तां
तरंपठेत् ॥ मणिवारोधनंयत्स्याद्गौरांधासंतिकस्तथा ॥ ११६ ॥ श्रीरागश्चैवहिल्लोलरागोवाजाविकस्तथा ॥ एवंप्रक्रममाणेनशृणुयाद्ध
र्मसंस्थितः ॥ ११७ ॥ ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चापिविशेषतः ॥ अश्वमेधमवाप्नोतिसर्वान्कामानवाप्नुयात् ॥ ११८ ॥ पापैःप्रमुच्यते
सर्वैर्महापुण्यंचविंदति ॥ शूद्राणांपुरतोवैश्योवैश्यानांक्षत्रियःपरः ॥ ११९ ॥ क्षत्रियात्तेतथाविप्राःशृण्वतांचाग्रतःसदा ॥ नशूद्रोवाच
येद्धर्मास्तपसाध्यापनंतथा ॥ १२० ॥ नैहिकत्वंपरत्वंचनशुभंनपरांगतिम् ॥ शूद्रेणाधिगतंनास्तिविशेषाच्छब्दलक्षणम् ॥ १२१ ॥ य
द्विजस्यकृतोदासोब्रह्मणाऽव्यक्तयोनिना ॥ श्वशृगालखरीक्षीरमपेयंहियथाभवेत् ॥ १२२ ॥ एवंशूद्रमुखाद्धर्मानग्राह्याःशब्दसंस्कृताः ॥
अमेध्यंशुद्ध्यतेतोयैःशूद्रःश्रोताहिशुध्यति ॥ १२३ ॥ एवंशूद्रोऽप्यशुचिःस्याद्यादिव्याकरणार्थवित् ॥ यःशूद्रउद्दिशेद्धर्मंतथाचागम
वैदिकम् ॥ १२४ ॥ सवैवध्योनरेंद्रेणजिह्वांचक्रेणच्छेदयेत् ॥ बुध्यमानःसदाह्यर्थंग्रंथार्थंकृत्स्नमेवच ॥ १२५ ॥ यएवंवाचयेत्सम्य
क्सविप्रोव्यासउच्यते ॥ देशेसपत्तनेग्रामेपुण्येदेशेप्रकीर्तितः ॥ १२६ ॥ तेधन्यास्तेकृतात्मानस्तेकृतार्थानसंशयः ॥ वसं
तिपत्तनेतास्मिन्व्याख्यातायत्रसंवसेत् ॥ १२७ ॥ यथार्कहीनंदिवसंचंद्रहीनायथानिशा ॥ नरराजसभातद्वत्स्वनीतिरहिताद्विजाः
॥ १२८ ॥ यद्वद्व्हैनवशिशवोनरराजपुरंक्वचित् ॥ अथैकतोग्रहाःसर्वेएकतस्तुदिवाकरः ॥ १२९ ॥ तथैवसोदरेगेहेदृष्ट्वापुष्करदर्श
नम् ॥ १३० ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिप्रथमभागेसप्तमोऽध्यायः ॥ ७ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ शृणुध्वंविप्रसंघाताः
पुराणंदेवसंमतम् ॥ यच्छ्रुत्वामुच्यतेपापात्पुरुषोब्रह्महत्यया ॥ १ ॥ तृतीयंशैवमाख्यातंततोभागवतंपरम् ॥ पंचमंचतथा
मात्स्यंभविष्यंषष्ठमुच्यते ॥ २ ॥ असामर्थ्यैचमात्स्योक्तंवैष्णवंचभविष्यकम् ॥ भारतेचापिपर्वंचशांतिभैष्मीयकंतथा ॥ ३ ॥
पराशरमतंगृह्यंगोभिलोक्तानियानिच ॥ कात्यायनोक्तमपरमभ्यसेन्निगमादितः ॥ ४ ॥ अंतरेणागतेमत्यैःशास्त्रंनाध्यापयेत्क्वचित् ॥

एकरात्रंगतेमर्त्यैस्त्रिरात्रमजमेषयोः ॥ ५ ॥ मंडूकेपंचरात्रंतुसर्पैरात्रिचतुष्टयम् ॥ संवत्सरंतुतुरगेगजेद्वादशवत्सरान् ॥ ६ ॥ मासमेकंखरेका
केस्थानत्यागान्नकुत्रचित् ॥ केरवेवारवेचैवअहोरात्रंप्रचक्षते ॥ ७ ॥ त्रिरात्रमपिमार्जारेनकुलेमूषकेखरे ॥ हंसेदिनमनध्यायंक्षुद्रजंतौनदूषण
म् ॥ ८ ॥ अध्यापयेद्गुरोःपुत्रंज्ञानिनंधार्मिकंशुचिम् ॥ भक्तंशांतंवैष्णवंचजितक्रोधंजितेंद्रियम् ॥ ९ ॥ अध्यात्माध्यापयेदेभ्यःशठंपापहरं
द्विषम् ॥ अन्यायेनैवयच्छंतमभयंदांभिकंद्विषम् ॥ १० ॥ निरर्थकंमंथरंचाविशुश्रूषुमयाजकम् ॥ षण्डंचैवानृजुंक्रुद्धंकृपणंव्यसनार्थिनम्
॥ ११ ॥ निंदकंचाविधिज्ञंचदूरतःपरिवर्जयेत् ॥ अप्रच्छन्ननतंब्रूयात्पुत्रपौत्रादिकादृते ॥ १२ ॥ विद्ययासहमर्तव्यंनदद्याच्चपृथग्जने ॥
अतोविद्यावदत्येवंपाठयंतंद्विजोत्तमम् ॥ १३ ॥ माद्द्याद्भक्तिहीनायदुर्जनायदुरात्मने ॥ अप्रमादायविप्रायशुचयेब्रह्मचारिणे ॥ १४ ॥
सार्थकायविधिज्ञायसाधवेदेहिसत्तम ॥ दद्याद्यादिनिषिद्धायविद्याधनमनुत्तमम् ॥ १५ ॥ तयोरेकतरोगच्छेदाचिरेणयमक्षयम् ॥ अन्यायेन
ग्रहंविद्यामन्यंपाठयतेसुखात् ॥ १६ ॥ सयातिनरकंघोरंविद्यावर्ज्यःसउच्यते ॥ आध्यात्मिकंवैदिकंचालौकिकंवाथयोवदेत् ॥ १७ ॥
मानमादौप्रणम्याथततोऽधीयेतसुव्रतः ॥ कर्मकांडंज्योतिषस्यतद्दिनानसमभ्यसेत् ॥ १८ ॥ चूतभोगसमभ्यासाद्दरिद्रश्चाभिजायते ॥
वादभागसमभ्यासाद्धननाशायजायते ॥१९॥ निधिभागसमभ्यासाज्जायतेनरकेकुले ॥ यान्यनुक्तानिशास्त्राणिमाननीयानियानिच ॥२०॥
म्लेच्छोक्तानिमहिम्नानिनाभ्यसेद्दूरतस्त्यजेत् ॥ लोकानांज्ञानवृद्ध्यर्थंयःकुर्याद्धर्मसंग्रहम् ॥ २१ ॥ प्रवर्तयित्वासगुरुर्भवेज्ज्ञानप्रदःपिता ॥
ज्ञानदाताचलोकानांतेषुधर्मःप्रवर्तते ॥ २२ ॥ निगमानांज्योतिषाणांवेदानांनाटकस्यच ॥व्याख्यानसंग्रहंकृत्वाकलौनाशमवाप्नुयात्॥२३॥
देवानांधर्मशास्त्राणांपुराणानांतथैवच ॥ मीमांसाज्योतिषांचैवनाटकानांविरंचिनी ॥ २४ ॥ भागावसानेकथितःपुराणाध्यायएवच ॥
पुष्पकश्चपरिच्छेदःखंडश्चप्रतिखंडकः ॥ २५ ॥ व्यवहारश्चार्थशास्त्रमश्वशास्त्रस्यचैवहि ॥ यस्यभागावसानेतुप्रयोक्तव्यःसएवहि ॥ २६ ॥
सततसंग्रहेपिकविनानियोक्तव्यःसएवहि ॥यस्यनाम्नोपदेशेतुप्रवर्तयातिसंग्रहः ॥२७॥ तत्तदक्षरसंख्यानांब्रह्मलोकान्नतच्च्युतिः ॥ नसंग्रहस्त
त्रमंत्रेवेदमंत्रेचवर्जयेत् ॥ २८ ॥ मोहात्कृत्वाहोमधेनुंदत्वाशुद्धिर्भविष्यति ॥ कृत्वाचाख्यायिकाग्रंथस्वरूपान्सादिवंव्रजेत् ॥ २९ ॥

धर्मशास्त्रस्यगम्यस्यव्यवहारस्यचैवहि ॥ कलौयःसंग्रहंकुर्यात्प्रसुप्तेचैवकेशवे ॥ ३० ॥ यावत्प्रवर्ततेलोकस्तावत्स्वर्गेमहीयते ॥ सिंहेपौ
षेचचैत्रेचनकुर्यात्संग्रहंक्वचित् ॥ ३१ ॥ प्रातःकालेनकुर्वीततथामध्यंदिनेद्विजाः ॥ पक्षांतेभूमिदाहेचभुवःकंपेदिनक्षये ॥ ३२ ॥ मलमासे
विशेषेणसंध्ययोश्चविवर्जने ॥ अमेध्याक्तंचपत्रंचलिप्यक्षरविभूषितम् ॥ ३३ ॥ पूतंस्यात्तत्क्षणाद्विप्राश्चतुःपंचाक्षरेणवा ॥ नारसिंहस्यवि
न्यासेपूतोभवतितत्क्षणात् ॥ ३४ ॥ मायाविभवविन्यस्तेमहापापकलेवरे ॥ मुहूर्तार्धेनपूतत्वंप्रभोर्यातिपरांगतिम् ॥ ३५ ॥ स्त्रियोवानिं
दितोवापिम्लेच्छोयातिपरांगतिम् ॥ योमूढोमन्यतेदोषंतस्यशौचंसमाचरेत् ॥ ३६ ॥ सगर्दभीखरीयोनिंप्रविशेन्नात्रसंशयः ॥ एकमेवात्म
कंब्रह्मतत्प्रकृत्यात्मकंद्वयम् ॥३७॥ नवात्मकंभैरवंचदशमंचजनार्दनम् ॥ रुद्रमेकादशंचैवअर्कार्कंचापिद्वादशम् ॥३८॥त्रयोविंशेचभूतात्मा
षड्विंशेमनुरीरितः ॥ तिथ्यात्मकंपंचदशेषोडशाख्याकलापरा ॥ ३९ ॥ वातात्मकंसप्तदशंमंत्रंसमनुवर्तते ॥ अष्टादशाक्षरंमंत्रंपुराणात्म
कमेवच ॥ ४० ॥ ऊनविंशश्चंद्रमाःस्याद्विंशोनारायणोवपुः ॥ ज्योतिर्मयश्चैकविंशेद्वाविंशेकेशवार्चनम् ॥ ४१ ॥ नक्षत्राणित्रयोविंशेचतु
र्विंशेचतानकम् ॥ पंचविंशेचतीर्थानिषड्विंशेचात्रियंबकः ॥ ४२ ॥ अष्टाविंशेधनेशश्चऊनविंशेसरस्वती ॥ त्रिंशद्योगेशिवःप्रोक्तःपातालमे
कत्रिंशके ॥ ४३ ॥ अहोरात्रश्चद्वात्रिंशेचतुस्त्रिंशेचजाह्नवी ॥ पंचत्रिंशेतदंतःस्याच्छतपूर्णेदिवाकरः ॥ ४४ ॥ सहस्रेचशिवोज्ञेयश्चायु
तेमेरुरुच्यते ॥ लक्षेब्रह्मातथाकोट्यांदेवोनारायणःपरः ॥ ४५ ॥ पुंप्रकृत्यात्मकंचान्यच्छारदालिपिमातृका ॥ शुद्धब्रह्ममयंनित्यंज्ञानरूपं
परंमहत् ॥ ४६ ॥ यस्मिन्नव्यसनादेवशुचौचाप्यशुचिस्थले ॥ क्षणेब्रह्ममयंयातिइत्याहभगवान्मनुः ॥ ४७ ॥ इतिश्रीभविष्येमहापुराणे
मध्यमपर्वणिप्रथमभागेऽकमाहात्म्यकथनंनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ अंतर्वेदिंप्रवक्ष्यामिब्रह्मणोक्तंयुगांत
रे ॥ बहिर्वेदंतथैवोक्तंशस्तंस्याद्द्वापरेकलौ ॥ १ ॥ ज्ञानसाध्यंतुयत्कर्मअंतर्वेदीतिकथ्यते ॥ देवतास्थापनंपूजाबहिर्वेदिरुदाहृता ॥ २ ॥
प्रपापूर्तादिकंचैवब्राह्मणानांचतोषणम् ॥ गुरुभ्यःपरिचर्याचबहिर्वेदीद्विधामता ॥ ३ ॥ अकामेनकृतंकर्मकर्मचव्यसनादिकम् ॥ अंतर्वेदीतदे
वोक्तंबहिर्वेदीविपर्ययः ॥४॥धर्मस्यकारणंराजाधर्ममेतद्भवेन्नृपः ॥ तस्मान्नृपंसमाश्रित्यबहिर्वेदीततोभवेत् ॥५॥सप्ताशीतिर्बहिर्वेदीसारमेषांतृती

यकम् ॥ देवतास्थापनंचैवप्रासादकरणंतथा ॥ ६ ॥ तडागकरणंचैवतृतीयंनचतुर्थकम् ॥ पंचमंपितृपूजाचगुरुपूजापुरःसरम् ॥ ७ ॥ अधि
वासःप्रतिष्ठाचदेवतानामविक्रिया ॥ प्रतिमाकरणंचैववृक्षाणामथरोपणम् ॥ ८ ॥ त्रिविधासाविनिर्दिष्टाउत्तमंचाथमध्यमम् ॥ कनिष्ठंशेष
कल्पंचसर्वकार्येष्वयंविधिः ॥ ९ ॥ त्रिधाभवतिसर्वत्रप्रतिष्ठादिविधिर्मतः ॥ पूजाहोमादिभिर्दानैर्मानतश्चत्रिभागतः ॥ १० ॥ त्र्यहसाध्यविधा
नेनअष्टाविंशतिदेवताः ॥ त्रिधाभवतिसर्वत्रप्रतिष्ठादिविधिर्मतः ॥ ११ ॥ प्रत्यहंपूजयेत्तत्रजापकास्तत्रषोडश ॥ उत्तमोऽसौविधिःकृत्स्न
अश्वमेधफलप्रदः ॥ १२ ॥ चत्वारोयाजकास्तत्रत्रयोविंशतिदेवताः ॥ ग्रहादिक्पालवारुण्यंपृथिवींचाशिवंतथा ॥ १३ ॥ एकाहेनैवपूजा
चमध्यमःकथितोविधिः ॥ गणेशग्रहदिक्पालान्वरुणंचाशिवंतथा ॥ १४ ॥ संपूज्यपूज्यतेयत्रकनिष्ठोऽसौविधिःस्मृतः ॥ एकवृक्षश्चैकरूपैः
प्रतिमाक्षुद्रदेवताः ॥ १५ ॥ नलिनीदीर्घिकागर्तवापीमलप्रपादिकम् ॥ एषांसंस्कारकार्येषुप्रतिमानांपरिष्क्रिया ॥ १६ ॥ अग्निकार्यंततः
कृत्वानकुर्याद्विधिविस्तरम् ॥ गणेशग्रहदिक्पालान्पूजयेदुपचारतः ॥ १७ ॥ वाप्यादेःपुष्करिण्याश्चक्षिपेद्गंगाजलंततः ॥ उद्
खलद्वयेनापिजीर्णानांतुकदाचन ॥ १८ ॥ सेतुप्रासादवापीनांप्रतिष्ठांनैवकारयेत् ॥ प्रासादःसेतवश्चैवतडागाद्यास्तथैवच ॥ १९ ॥
त्रिभिर्वर्णैःप्रतिष्ठार्हाजीर्णानांतुसमुद्धताः ॥ मुनयोमानमिच्छंतिअमानंनहिदृश्यते ॥ २० ॥ तस्मान्मानंप्रवक्ष्यामियन्मानंयादृशंफलम् ॥
षष्टिहस्तप्रमाणेनतदुक्तंवारणोदितम् ॥ २१ ॥ एकषष्टिहस्तमितंप्रासादंचोत्तमंविदुः ॥ मध्यंतदर्धंविज्ञेयंकनिष्ठंतत्परंस्मृतम् ॥ २२ ॥
अथवादेवमानेनकर्तव्याभूतिमिच्छता ॥ यस्तडागंनवंकृत्वाजीर्णंवानवतांनयेत् ॥ २३ ॥ सर्वंकुलंसमुद्धृत्यस्वर्गलोकेमहीयते ॥
वापीकूपतडागानिउद्यानप्रवहानिच ॥ २४ ॥ पुनःपुनश्चसंस्कार्यालभतेमौक्तिकंफलम् ॥ गुणानांचप्रमाणेनप्रतिमानंविभागतः ॥ २५ ॥
द्विशतेनशतेनापिप्रासादस्यैषनिश्चयः ॥ सहस्तहस्ताविस्तारंदैर्घ्येणाष्टादिकंभवेत् ॥ २६ ॥ तडागंतंविजानीयात्प्रथमंमानमीरितम् ॥
मध्यंचतुःशतेनापिप्रस्तावेदशहीनकम् ॥ २७ ॥ कनिष्ठंत्रिशतंचैवप्रस्थेस्याद्दशहीनकम् ॥ तदर्धेनकलौज्ञेयंतदर्धेनतदर्धकम् ॥ २८ ॥
तडागमानंविज्ञेयंत्रिवर्गफलदायकम् ॥ अथपुष्करिणीपक्षेद्विशतेमानमुत्तमम् ॥ २९ ॥ तडागेद्विगुणानेमीमानार्धेगर्तमीरितम् ॥ तत्क्षेत्रं

वारुणंस्थानंत्रैदशंतद्बहिःस्मृतम् ॥३०॥ चतुर्थंचैवगांधर्वंपैशाचंपंचमंविदुः ॥ यक्षस्थानमिताभागेएवंसर्वक्रमाणिहि ॥३१॥ अशीतिहस्त
मानेननलिन्यामणिरुच्यते ॥ पंचहीनंचप्रस्तावेएवंमानविदोविदुः ॥ ३२ ॥ षष्टिहस्तेननलिनीप्रस्तावेतूर्यहीनकम् ॥ चतुःषष्टीहस्त
मितादीर्घिकाचप्रकीर्तिता ॥ ३३ ॥ तुर्यहीनंचप्रस्तावेगतेमानंनविद्यते ॥ ३४ ॥ अग्नौरोगंबंधुनाशश्चयाम्यांमृत्युश्चोग्रःप्राप्यतेराक्षसेच ॥
भीतिश्चोग्राप्राप्यतेवायवीयेतस्मादेतावर्जनीयाःप्रयत्नात् ॥ ३५ ॥ विप्रादीनांदेवतानांसमाजेमेरुस्थानेयत्रतत्रैवकुर्यात् ॥ नद्यास्तीरेवर्ज
येद्वास्मशानेतडागाद्वैआश्रमादीञ्जनानाम् ॥३६॥ यदाप्रतिष्ठांनकरोतिमूढःप्रासादवाप्यादिषुपापचेताः ॥ भयंसमाप्नोतिचपापमुग्रंपदेऽहि
नावैवधभागितांव्रजेत् ॥ ३७ ॥ यदातुदीर्घासरसीतडागप्रासादकूपादिषुनिर्मितानि ॥ कुर्वंतिचान्यानियदामखानिभवंतितान्यल्पफलप्रदा
नि ॥३८॥ यदप्रतिष्ठेषुनिपानकेषुप्रासादकूपेषुवनादिकेषु॥प्रतिष्ठितेयत्फलमाप्नुवंतिफलंतदाल्पाल्पकमाहुरस्य ॥३९ ॥ तस्मात्प्रतिष्ठांवि
धिनाजलादेःकुर्याद्यथेष्टंप्रयतोमनुष्यः ॥ पुण्यार्जनेनैवधनेनकालेस्ववित्तसाध्येनशुभाशयेन॥४०॥प्रासादेमृन्मयेपुण्यंमयैतत्कथितंद्विजाः ॥
तस्माच्चतुर्गुणंप्रोक्तंतृणकाष्ठमयेतथा ॥ ४१ ॥ तृणमयेशतमयंतदर्धेनववल्कले ॥ तस्माद्दशगुणंप्रोक्तंकृतेदारुमयेभवेत् ॥ ४२॥ ततोदश
गुणंप्रोक्तमिष्टिकारचितेशुभे ॥ तस्माच्छतगुणंशैलसहस्रंताम्ररौप्यके ॥ ४३ ॥ ततश्चशतसाहस्रंसौपर्णेद्विजसत्तमाः ॥ अनंतफलमाप्नो
तिरत्नादिरचितेतथा ॥ ४४ ॥ यदतीतंभविष्यंचकुलानामयुतंनरः ॥ विष्णुलोकंनयत्याशुकारयित्वाहरेर्गृहम् ॥ ४५ ॥ कनिष्ठंमध्य
मंश्रेष्ठंकारयित्वाहरेर्गृहम् ॥ अर्धंचवैष्णवंलोकंमोक्षंचलभतेक्रमात् ॥ ४६ ॥ हस्तानांषोडशैर्यावत्प्रस्थेस्यात्करहीनकम् ॥ तृणवंशमयेमा
नंमध्यंचार्ककरंभवेत् ॥४७॥ कनिष्ठंतारहस्तंस्यादुत्तमंपंचविंशतिम् ॥ सर्वोत्तमंचद्वात्रिंशच्चतुष्कोणेमहाफलम् ॥४८॥ पुरद्वारंचकर्तव्यं
चतुरस्रंसमंभवेत् ॥ अष्टकोणंनकर्तव्यंत्रिपुरंचकलौयुगे ॥ ४९ ॥ सुरवेश्मनियावंतोद्विजेन्द्राःपरमाणवः ॥ तावद्वर्षसहस्राणिस्वर्गलोकेमही
यते ॥ ५० ॥ कर्तुर्दशगुणंप्रोक्तमापानपरिपालकः ॥ पतितान्युद्धरेद्यस्तुससर्वंफलमश्नुते ॥ ५१ ॥ पतितंपतमानंचतथार्द्धस्फाटितंतथा॥
समुद्धृत्यहरेर्वेश्मद्विगुणंफलमाप्नुयात् ॥ ५२ ॥ पतितस्यतुयःकर्तापतमानस्यरक्षिता ॥ विष्णोराधितलस्यैवमानवःस्वर्गभाग्भवेत् ॥५३॥

यःकुर्याद्विष्णुप्रासादंज्योतिर्लिंगस्यवाक्वचित् ॥ सूर्यस्यापिविरिंचेश्चदुर्गायाःश्रीधरस्यच ॥ ५४ ॥ स्वयंस्वकुलमुद्धृत्यकल्पकोटिंवसेद्दि
वि ॥ स्वर्गाद्भ्रष्टोभवेद्राजाधनीपूज्यतमोपिवा ॥५५॥ देवीलिंगेषुयोनौवाकृत्वादेवकुलंनरः॥स्मरत्वंप्राप्नुयाल्लोकेपूजितोदिविसर्वदा ॥५६॥
प्रावृट्कालंस्थितंतोयमग्निष्टोमफलंलभेत् ॥ शरत्कालस्थितंतोयंयज्ञतोयाद्विशिष्यते ॥ ५७ ॥ निदाघकालेपानीयंयस्यातिष्ठतिवापिनः ॥
स्वर्गंगच्छेत्सनरकंनकदाचिदवाप्नुयात् ॥ ५८ ॥ एकाहंतुस्थितंतोयंपृथिव्यांद्विजसत्तमाः ॥ कुलानितारयेत्तस्यसप्तसप्तपराणिच ॥ ५९ ॥
पूर्वापितृकुलेसप्ततद्वन्मातृकुलेद्विजाः ॥ चतुर्दशमिदंज्ञेयंशतलेखंततःशृणु ॥ ६० ॥ पितुरूर्ध्वंकुलंविंशंमातुरूर्ध्वंकुलंतथा ॥ तद्वत्परंवि
जानीयाद्भार्यायाःपंचएवच ॥ ६१ ॥ पंचवैमातृतश्चास्यापितुर्मातामहेकुले ॥ पंचपंचविजानीयान्मातुर्मातामहस्यच ॥ ६२ ॥ गुरोःपितृ
कुलेपंचतस्यमातृकुलेतथा ॥ आचार्यस्यकुलेद्वंद्वंदशराजकुलस्यच ॥ ६३ ॥ राज्ञोमातामहकुलेपंचचैवप्रकीर्तिताः ॥ एकोत्तरंशतकुलं
परिसंख्यातमेवच ॥ ६४ ॥ आत्मनासहविप्रेंद्राउद्धारःसंमतःस्मृतः ॥ कुर्याद्देवार्चनंतीर्थेस्वाविमुक्तेदशार्णवे ॥ ६५ ॥ समुद्धरेत्कुलश
तंशृणुविंशकुलंद्विज ॥ पंचपंचचपित्रोश्चापितुर्मातामहस्यच ॥ ६६ ॥ मातुर्मातामहस्यैवजातिद्वंद्वमुदाहृतम् ॥ गुरोःसंतानकेद्वंद्वंतद्व
द्यादवसात्वतौ ॥ ६७ ॥ परपक्षस्यचैकंस्यादेकविंशंकुलंक्रमात् ॥ पानीयमेतत्सकलंत्रैलोक्यंसचराचरम् ॥ ६८ ॥ पानीयेनविनावृत्ति
र्लोकेनास्तीतिकर्हिचित् ॥ वारस्वस्थंपुष्पखंडंतोयेपततियावति ॥ ६९ ॥ तावत्कालंवसेत्स्वर्गेअंतेब्रह्मत्वमाप्नुयात् ॥ तस्मात्तोयोपरि
गृहंप्रासादोपरिवर्जयेत् ॥ ७० ॥ सूर्यरश्मियुतंयद्वैतत्तोयंतुविनिंदितम् ॥ चंद्ररश्मिविहीनंयन्नामृतत्वायकल्पते ॥ ७१ ॥ तस्माद्दशगुणं
कुंडेतस्माद्दशगुणंह्रदे ॥ देवानांस्थापनंकुर्यादविमुक्तफलंशुभम् ॥ ७२ ॥ सुस्थितंदुःस्थितंवापिशिवलिंगंनचालयेत् ॥ चालनाद्रौरवंया
तिनस्वर्गंनचस्वर्गभाक् ॥ ७३ ॥ उच्छन्ननगरग्रामेस्थानत्यागेचाविप्लवे ॥ पुनःसंसारधर्मेणस्थापयेदविचारयन् ॥७४॥ बाहुदंतादिप्रतिमावि
ष्णोश्चान्यस्यसत्तमाः ॥ नचालयेत्स्थापितेचाविप्रवृक्षंनचालयेत् ॥ ७५ ॥ केशवंहरिवृक्षंचमधूकंकिंशुकंतथा ॥ नाकालेस्थापयेज्ज्ञातु
चालनाद्ब्रह्महाभवेत् ॥ ७६ ॥ देवालयस्यपुरतःकुर्यात्पुष्करिणींद्विजाः ॥ ब्राह्मणानांसमाजेचराजद्वारेचतुष्पथे ॥७७॥ देवार्थेब्राह्मणार्थेच

सुखंकुर्याच्चसर्वतः ॥ पश्चिमेपुष्टिकामंतुउत्तरेसर्वकामदम् ॥ ७८ ॥ याम्येस्वार्थंनकुर्वीतकोणेतुनरकंभवेत् ॥ मुखंप्रकल्पयेन्मध्येकोचि
दुत्तरलंघनम् ॥ ७९ ॥ कुर्याद्दक्षिणपूर्वेतुअर्कहस्तप्रमाणतः ॥ तडागेतुफलाहस्तंहस्तिकंन्हासयेत्क्रमात् ॥ ८० ॥ तृप्येहस्तंनालिन्या
दावतोहीनंनकारयेत् ॥ गर्ततृणंकलाहस्तंतडागेऽत्रप्रचक्ष्यते ॥ ८१ ॥ हीनेहीनतरंकुर्याद्धस्तमानेनह्रासयेत् ॥ यूपस्तथाखादि
रएवकार्यःश्रैपर्णिकाधात्रिसमुद्भवश्च ॥ मानस्तथाषोडशहस्तसम्मितोरत्नात्सगंडीयुगकामयोजितैः ॥ ८२ ॥ आनाहभग्नेचभवेच्चतस्य
विंशांगुलोद्विगुणोमध्यगंच ॥ मध्येंऽगुलैश्चहीनःकार्यःशुभदःसर्वदास्यात् ॥ ८३ ॥ एवंविधश्चैवतडागयूपोमध्येतथाषोडशहस्तसंमितः
॥ ८४ ॥ कूपेचयूपोप्यथहस्तमात्रस्ततश्चतुर्हस्तमितःप्रकीर्तितः ॥ आरामयोगेऽप्यथमंडपेचकार्यश्चतुर्हस्तमितोऽथयूपः ॥ ८५ ॥
संपूर्णमानेकथितंप्रमाणंहीनेतुहीनंप्रवदंतितज्ज्ञाः ॥ हस्तद्वयंप्रापितव्यस्तडागोहस्तंसार्धंपुष्करिण्यांप्ररोपः ॥ ८६ ॥ प्रादेशंवैहस्तमा
नंकूपयूपस्यरोपतः ॥ नकुर्याज्जलमग्नंचयूपंसर्वत्रसत्तमाः ॥ ८७ ॥ तडागेचापिआरामेस्थापयेच्चजलोपरि ॥ हस्तमर्धंतदर्धंस्यान्माने
नानेनदापयेत् ॥ ८८ ॥ वाप्यांगतेंपुष्करिण्यांप्रकुर्याज्जलसंमितम् ॥ यावत्प्रतोलीगतरेणुसंघसंख्यागणोनोजरतामुपैति ॥ ८९ ॥
तावत्सुरेशःसुरलोकवासीप्रासादकृज्जातुनजायतेहि ॥ किंवावाच्यःपुष्करिण्याभावःकर्तायःस्याद्वारुणाब्रह्मलोकात् ॥ ९० ॥ यावत्कालो
बाहुमात्रोद्धतास्याद्दृष्टिप्रोक्तानानिवर्तेत्कदाचित् ॥ लक्षैकमाराममयोत्तमःस्यान्मध्यंतदर्धंचकनिष्ठमानम् ॥ ९१ ॥ तदर्धंवाप्रशस्तंतदनन्यं
मुनयोवदंति ॥ विनार्जुनैर्बदरैःशैलुकैश्चहीनंकुर्याच्छानलैःपातिलैश्च ॥ ९२ ॥ ॥ इति श्रीभविष्येमहापुराणेमध्यमपर्वणिप्रथमभागेपूर्तनिर्ण
योनामनवमोऽध्यायः ॥ ९ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ शोधयेत्प्रथमंभूमिंमितांकृत्वाततोद्विजाः ॥ दशहस्तेनदंडेनपंचहस्तेनवापुनः ॥ १ ॥
वाहयेत्सदावृषभैस्तडागार्थेऽपिभूमिकाम् ॥ देवागारस्ययाभूमिःश्वेतैश्चवृषभैरपि ॥ २ ॥ याभूमिर्ग्रहयागार्थेतन्नवाहैरपिस्पृशेत् ॥ आरा
मार्थेकृष्णवृषैःकूपार्थखननैरपि ॥ ३ ॥ वाहयेत्रिदिनंविप्राःपंचव्रीहींश्चवापयेत् ॥ देवपक्षेसतगुणमारामकरणेगुणम् ॥ ४ ॥ मुद्गमाषौधा
न्यतिलाःश्यामाकश्चेतिपंचमः ॥ मसूरश्चकलायश्चसप्तव्रीहिगणःस्मृतः ॥ ५ ॥ सर्षपश्चकलायश्चमुद्गोमाषश्चतुर्थकम् ॥ व्रीहित्रयंमाषमुद्गौ

श्यामाकमहिषोगणः ॥ ६ ॥ सुवर्णमृत्तिकाग्राह्यावर्णानामनुपूर्वशः ॥ बिल्ववृक्षैरियंकुर्याद्यूपशूनध्वजेदिने ॥७॥ अरत्निमात्रंविज्ञेयंप्रशस्तं
यष्टिहस्तकम् ॥ ऊर्णासूत्रमयींमूर्तिंकृत्वाकुर्याच्चतुष्टयम् ॥ ८ ॥ क्षीरदारुगर्तयुतंद्वादशांगुलमेवच ॥ ज्वालयेत्तिलतैलेनतथाकेशरजेन
वा ॥ ९ ॥ पूर्वादिक्प्रणवेसिद्धिःपश्चिमाशागतिःशुभा ॥ मरणेदक्षिणायांचहानिःस्यादुत्तरेस्थिते ॥ १० ॥ कल्पेविपत्करंविद्यात्तथाचैव
चदिग्गते ॥ नारसिंहेनमनुनाचाग्निंप्रज्वाल्यदापयेत् ॥ ११ ॥ मासेवटेतथामासेकुर्याद्भूमिपरिग्रहम् ॥ सूत्रयेत्कीलयेत्पश्चान्महामानेद्वि
जोत्तमाः ॥ १२ ॥ ततोवास्तुबलिंदद्यात्खनित्रंपरिपूजयेत् ॥ आब्रह्मन्नितिमंत्रेणखनयेन्मध्यदेशतः ॥ १३ ॥ आज्येनमधुयुक्तेनगात्रमेकं
प्रलेपयेत् ॥ स्वर्णतोयैस्तथारत्नतोयैःस्नात्वाप्रलेपयेत् ॥ १४ ॥ ईशानाभिमुखेनैवकूपपक्षेविदुर्बुधाः ॥ अकृत्वावास्तुयागंचयस्तडागंस
मुत्सृजेत् ॥ १५ ॥ तस्यवैवस्वतोराजाधर्मस्यार्धंनिकृंतति ॥ प्रासादेचतथारामेमहाकूपेतथैवच ॥ १६ ॥ गृहारंभेचविप्रेंद्राद्दद्याद्वास्तुब
लिंततः ॥ शालैश्चखादिरैश्चैवपलाशैःकेशरस्यच ॥ १७ ॥ बिल्वस्यबकुलस्यैवकलौयूपःप्रशस्यते ॥ शुनाचक्रोदरकृतंतत्पार्श्वेतुध्वजद्व
यम् ॥ १८ ॥ सर्पाकारतडागेचकूपेकुंभाकृतिर्भवेत् ॥ आरामेपद्मपुष्पाभंछत्राकारंतुमंडले ॥ १९ ॥ कुर्याच्छुनाकृतिंसेतौविष्णुगेहेगदा
कृतिम् ॥ अश्वाकारंचाश्वमेधेनरमेधेनराकृतिः ॥ २० ॥ गोयागेचवृषाकारंगृहयागेध्वजाकृतिः ॥ स्मशानगोप्रचारार्थंचैत्यवृक्षालयोत्तमाः
॥ २१ ॥ चक्राकारंलक्षहोमेकोटिहोमेहलाकृतिः ॥ नक्षत्राणितथामूलंशस्यतेद्रुमरोपणे ॥ २२ ॥ एवंशस्योदितांभूमिंशुद्धांपूर्वप्लवान्वि
ताम् ॥ परिगृह्ययजेद्देवंवनपालंशिखिध्वजम् ॥ २३ ॥ सोमंचनागराजानंततोबीजंसुशोधयेत् ॥ आनयेद्धारयेत्पश्चाद्रौद्रतापेनतापयेत् ॥
॥ २४ ॥ दिनद्वयांतरेचैवमंत्रैश्चपरिमंत्रयेत् ॥ गर्भाधानंततःकुर्याद्विष्णुमंत्रंजपंस्त्रिधा ॥ २५ ॥ एवमस्येतिमंत्रेणत्रिधाजप्त्वाविमार्जयेत् ॥
दोहिमेतिचमंत्रेणसंप्रोक्ष्यदशवारिणा ॥ २६ ॥ इत्यगृहीतमनुनापंचधापरिमंत्रितम् ॥ त्र्यंबकेनेतिमंत्रेणबीजमारोपयेत्ततः ॥ २७ ॥ भार्या
मृतुमतींस्नात्वापंचमेऽहनिसत्तमाः ॥ उत्संगेस्थापयित्वाचचुंबयेन्मंत्रयेत्ततः ॥ २८ ॥ एवंवृक्षस्यसंस्कारमध्येऽपित्वनुगच्छति ॥ तेनपुत्र
त्वमाप्नोतिनात्रकार्याविचारणा ॥ २९ ॥ तुलस्याबीजमादायवैष्णवर्क्षेद्विजोऽहनि ॥ खानयेदपिगोमूत्रबिंदुतोयैःप्रसेचयेत् ॥ ३० ॥ एषा

तुस्वर्गमाप्नोतिशितकुंभेनिपातयेत् ॥ एकरात्रंपरिस्थाप्यततआरोपयेद्भुवि ॥ ३१ ॥ अविधौकूपवाप्यादौखननेसूयतेक्वचित् ॥ कुर्वीति
सहकारादिरोपणंयेनराधमाः ॥ ३२ ॥ लभंतेनफलंतेषामिहचाभ्येत्यधोगतिम् ॥ नदीतीरेस्मशानेचस्वगृहस्यचदक्षिणे ॥ ३३ ॥ तुल
सीरोपणंकृत्वायातिकर्तायमालयम् ॥ पत्रपुष्पफलानांचरजोरेणुसमागमाः ॥ ३४ ॥ पोषयंतिचपितरंप्रत्यहंप्रतिकर्माणि ॥ यस्तुवृक्षंप्र
कुरुतेछायापुष्पफलोपगम् ॥ ३५ ॥ पथिदेवालयेचापिपापात्तारयतेपितॄन् ॥ कीर्तिश्चमानुषेलोकेप्रत्यभ्येतिशुभंफलम् ॥ ३६ ॥ अती
तानागतश्चांतःपितॄणांस्वर्गतोद्विजाः ॥ तारयेद्वृक्षरोपीचतस्माद्वृक्षंप्ररोपयेत् ॥ ३७ ॥ अपुत्रस्यपुत्रवत्त्वंपादपाइवकुर्वते ॥ यत्नेनापिच
विप्रेंद्राअश्वत्थारोपणंकुरु ॥ ३८ ॥ शतैःपुत्रसहस्राणामेकएवाविशिष्यते ॥ कोनरोपयेद्विप्राएकद्वित्रिप्रसंख्यया ॥ ३९ ॥ मुक्तिहेतुः
सहस्राणांलक्षकोटीनियानिच ॥ धनीचाश्वत्थवृक्षेचअशोकःशोकनाशनः ॥ ४० ॥ प्लक्षोभार्याप्रदश्चैवबिल्वआयुःप्रदःस्मृतः ॥ धनप्रदो
जंबुवृक्षोब्रह्मदःप्लक्षवृक्षकः ॥ ४१ ॥ तिंदुकःकुलवृद्धिःस्याद्दाडिमीकामिनीप्रदः ॥ बकुलोवंजुलश्चैवपापहाबलबुद्धिवान् ॥ ४२ ॥ स्वर्ग
प्रदाधातकीस्याद्वटोमोक्षप्रदायकः ॥ सहकारःकामप्रदोगुवाकःसिद्धिमादिशेत् ॥ ४३ ॥ सर्वशस्यंबलवलेमधुकेचार्जुनेतथा ॥ कदंबे
विपुलाकीर्तिस्तिंतिडीधर्मदूषकः ॥ ४४ ॥ जीवंतीरोगशांतिःस्यात्केशरःशत्रुमर्दनः ॥ धनप्रदश्चैववटोवटःश्वेतवटस्तथा ॥ ४५ ॥ पनसे
मंदबुद्धिःस्यात्कलिवृक्षःश्रियंहरेत् ॥ कलिवृक्षंचशाकोटमुदारावर्तकंतथा ॥४६॥ पर्कटींचतथानीपरोपणात्संतातिक्षयः ॥ शिंशपांचार्जुनं
चैवजयंतीहयमारकान् ॥ ४७ ॥ श्रीवृक्षंकिंशुकंचैवरोपणात्स्वर्गमादिशेत् ॥ नपूर्वारोपयेद्यातुसमिधंकंटकीद्रुमम् ॥ ४८ ॥ कुशंपद्मंजल
जानांरोपणाद्दुर्गतिंव्रजेत् ॥ मंदारेकुलहानिःस्याच्छाल्मलेशुक्रबुद्धिमान् ॥ ४९ ॥ निंबेपशुविनाशःस्याच्छत्राकेकुलपांसलः ॥ उत्पन्नेकु
लपातःस्यात्पशुरेवक्षयोभवेत् ॥ ५० ॥ शत्रुवृद्धिःकाकनादेवलपूगेहताश्रियः ॥ विनाकृतौविरुद्धश्चनसिंहंद्विजसत्तमाः ॥ ५१ ॥ कृतौहि
स्याद्विरुद्धश्चप्राप्नुयान्नरकाकृतिम् ॥ सहकारसहस्रंतुवरिष्ठंधातकीद्वयम् ॥ ५२ ॥ तस्माच्चैवसहस्राद्धिपाटलैकाविशिष्यते ॥ पाटलानां
शतंपश्चादेकरक्तवटंभवेत् ॥ ५३ ॥ वटानांद्विसहस्राणिपंचकंनागकेसरम् ॥ तस्माद्वरिष्ठःश्रीवृक्षोजम्बुवृक्षःप्रशस्यते ॥ ५४ ॥ तस्माद्धिम

वतोज्ञेयःश्रीपर्णीवृक्षउत्तमः॥तिंदुकस्यत्रयश्चैवजंबुवृक्षस्यपंचकम् ॥५५॥ कदंबार्जुनवृक्षस्यनारिकेरस्यचत्रयम्॥ एवमुक्त्वासधर्मात्माकार
यत्कीदृशंबलम् ॥५६॥ कल्पकोटिसहस्राणिकल्पकोटिशतानिच ॥ स्वर्गभोगंसमश्नातिविधिवद्द्रुमरोपणे ॥५७॥ जन्मत्रयादिकंपापंविना
श्यस्वर्गमादिशेत् ॥ शतरोपीचब्रह्मत्वंविष्णुत्वंचसहस्रके ॥५८॥ तुलसीरोपणाच्चैत्रआधिव्याधियुतोभवेत् ॥ वैशाखेकीर्तिमाप्नोतिज्येष्ठेतु
मरणंभवेत्॥५९॥आषाढेकीर्तिमाप्नोतिश्रावणेपरमांगतिम्॥ भाद्रेधनागमश्चैवआश्विनेकार्तिकेक्षयः॥६०॥तुलसीत्रिविधालोकेकृतेश्वेताप्रश
स्यते ॥ किंचिच्छेदंचयःकुर्यादश्वत्थस्यवटस्यच॥६१॥श्रीवृक्षस्यचविप्रेंद्राःसभवेद्ब्रह्मघातकः॥मूलच्छेदेनविप्रेंद्राःकुलपातोभवेदनु ॥६२॥
वृक्षच्छेदीभवेन्मूकआधिव्याधिशतंभवेत्॥सायंप्रातश्चधर्मातेशीतकालेदिनांतरे ॥६३॥ फलमामकुलत्थश्चमाषोमुद्गास्तिलायवाः॥नृत्यगीत
पयःकेशफलपुष्पप्रदोभवेत्॥६४॥अविकाकसक्तुच्चूर्णयवचूर्णानियानिच॥गोमांसमुदकंचैवसप्तरात्रंनिधापयेत् ॥६५॥तमेकंसर्ववृक्षाणांफल
पुष्पादिवृद्धिदम्॥रोहिमत्स्यस्यपित्तानिधन्याकंतत्रस्थापयेत् ॥ ६६ ॥ तेनोदकादिसेकश्चकृतोवैवृद्धिमादिशेत् ॥ तित्तिडीबीजमादायइक्षु
दंडेनमर्दयेत्॥६७॥तेनाशोकेप्रसेकःस्यात्सहकारस्यवृद्धिमान्॥नालिकेरोदकंचैवमाक्षिकैःसहसेचयेत् ॥६८॥ दोहदंसर्ववृक्षाणांपूगादीनांवि
शेषतः॥दशशिराबीजयुतादभिषेकाच्चजीवति॥६९॥प्राक्प्रसूतिर्गवादीनांछागादिमहिषस्यच॥जरासुतोयंवृक्षाग्रेस्थापयेदविचारयन् ॥७०॥
परस्यसहकारस्यफलंस्यान्नात्रसंशयः ॥ मेषस्यचवितालस्ययवागूंचसमाहरेत् ॥ ७१ ॥ तत्रमासैःसर्षपैश्चपूरयेन्मर्दयेत्ततः ॥ गुवाकवृ
क्षकंदेववर्षयेन्मर्दयेत्त्रिभिः ॥ ७२ ॥ मृतोऽपिजीवयेच्छीघ्रंम्रियमाणोऽपिजीवति ॥ निंबपत्रंयोगपत्रंशतावरिपुनर्नवाम् ॥ ७३ ॥ क्षीरिका
ताम्रकैःपत्रैर्धूमंदद्याद्दिनत्रयम् ॥ सहकारस्यमूलेनकीटरोधोनजायते ॥ ७४ ॥ ततःप्राधान्यतोवक्ष्येद्द्रुमाणांदोहदोऽन्यथा ॥ मत्स्योदके
नासिक्तेनआम्राणांवृद्धिरिष्यते ॥ ७५ ॥ पक्कांब्रंरुधिरंचैवदाडिमानांप्रशस्यते ॥ यवोदकंसगोमांसंकेतकीनांप्रशस्यते ॥ ७६ ॥ क्षीरकेवल
वृद्धिःस्यात्तिंदुकःकरमर्दकः ॥ मांसपूतिरसामज्जाशोकतालेगुवाकके ॥ ७७ ॥ सपूतिमांसंसघृतंनालिकेरस्यरोहितम् ॥ मधुयष्ट्युदकैः
सेकात्सामान्यंनिहितंभवेत्॥७८॥ कपित्थबिल्वयोःसेकंगुडतोयेनसेचयेत् ॥ जातीनांमल्लिकानांचकुंदरंतिकस्यच ॥ ७९॥ गंधतोयासेत

करंसर्पनिर्मोकधूपकम् ॥ कूर्ममांसमन्नरसंविडंगस्यचपुष्पकम् ॥ ८०॥ रथ्यावृक्षेप्रतिष्ठाप्यफलवाञ्जायतेततः ॥ वातसर्पस्यनिर्मोकंतगरा
जगवस्यच ॥ ८१ ॥ दद्याद्धूपंधान्यमध्येधान्यवृद्धिश्चजायते ॥ मयूरपत्रमादायच्छागरोमाणिसत्तमै ॥ ८२ ॥ एरंडतैलयोगेनदद्याद्धूपं
निशागमे ॥ हिंगुकुसुमसंयोगान्मूषिकाणांपरिन्यसेत् ॥ ८३ ॥ करिविष्ठामृच्छविष्ठांकृत्तिकायांसमाहरेत् ॥ निशातोयेप्रसेकःस्यात्तत्क्षा
त्रमूलकंहरेत् ॥ ८४ ॥ अश्वत्थमूलेदशहस्तमात्रंक्षेत्रंपवित्रंपुरुषोत्तमस्य ॥ अश्वत्थछायासलिलस्यमध्येविशेषतोवैत्रिपथैवगंगा ॥८५ ॥
बाहुविंशांतरेरोपेत्सहकारंसधर्मवित् ॥ कलाहस्तांतरंधात्रींवकुलंवंजुलंतथा ॥ ८६ ॥ श्रीपर्णिकंचपुन्नाटंश्रीवृक्षंद्विगुणंतरौ ॥ हस्तेशै
लमयेचैवउत्तमंमानमीरितम् ॥ ८७ ॥ शैलेष्टकादिरचितेचतुर्हस्तेतुसंमिते ॥ वाप्यादीनांतुकूपानामेकवृक्षादिकस्यच ॥ ८८ ॥ श्रीवि
ष्णोर्वृक्षपक्षेचवरुणेष्टंचकूपके ॥ गणेशंपूजयेत्कुंभंदिक्पालांश्चविशेषतः ॥ ८९ ॥ अग्निकार्यंविनाकुर्यात्प्रकुर्याच्चसतांगतिम् ॥ श्रुत्वा
कृतिंविधानेनअन्येषांवातथोद्भवम् ॥ ९० ॥ अन्येषांचैववृक्षेचतथाचतुलसीवने ॥ कुंभेवनस्पतिःस्थाप्यःपूजयेद्धोमयेत्ततः ॥ ९१ ॥
वृक्षान्वानेनसंस्कृत्यवासोभिरभिवेष्टयेत् ॥ शुच्यमानमिदंज्ञेयमन्येषांवातथोद्भवम् ॥ ९२ ॥ तुलस्याःसहकारस्यब्रह्मवृक्षस्यचैवहि ॥
अश्वत्थस्यवटस्यैवस्वर्णताप्यथवेधयेत् ॥ ९३ ॥ इति श्रीभविष्येमहापुराणेमध्यमपर्वणिप्रथमभागेदशमोऽध्यायः ॥ १० ॥ ॥ छ ॥
॥ सूतउवाच ॥ ॥ अथतंत्रविधिंवक्ष्येपुराणेष्वपिगीयते ॥ तंत्रेचैवप्रतिष्ठांचकुर्यात्पुण्यतमेऽहनि ॥ १ ॥ शतवृक्षक्षुद्रवृक्षेदशद्वाद
शवृक्षके ॥ दृष्टिमात्रांतरेसेतौकूपयागेसमुत्सृजेत् ॥ २ ॥ नकूपमुत्सृजेज्जातुवृक्षयागेकथंचन ॥ तुलसीवनयागेतुनचान्यंयागमाच
रेत् ॥ ३ ॥ तडागयागेसेत्वादीन्नचारामेकदाचन ॥ नसेतुर्देवयागेतुतडागंनसमुत्सृजेत् ॥ ४ ॥ तंत्रेश्राद्धंपृथङ्नास्तिकर्तुर्भेदे
पृथग्भवेत् ॥ शिवलिंगस्थापनेचनचान्यदेवस्थापनम् ॥ ५ ॥ स्वदेशेवर्जयेत्तंतंस्वतंत्रेणविधीयते ॥ विपरीतेकृतेचापिआयुःक्षयइ
तिस्मृतिः ॥ ६ ॥ तडागेपुष्करिण्यांवाआरामेऽपिद्विजोत्तमाः ॥ मानहीनेमानपूर्णेदशहस्तेनदूषणम् ॥ ७ ॥ द्विसहस्राधिकं
यत्रतत्प्रतिष्ठांसमाचरेत् ॥ दशद्वादशवृक्षेचआरामेपूर्ववद्द्विजाः ॥ ८ ॥ प्रतिष्ठांबिल्ववृक्षेचअन्यथाकर्णवेधनम् ॥ कुर्याद्दोहददानं

चतत्रिनिर्मथनादिकम् ॥ ९ ॥ अनंतरंप्रदातव्यंलाजान्मूर्ध्र्यक्षतादिकम् ॥ १० ॥ इतिश्रीभाविष्येमहापुराणेमध्यमपर्वणिपूर्वभागेएकादशोऽध्यायः ॥ ११ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ प्रतिमालक्षणंवक्ष्येयथाशास्त्रमतंद्विजाः ॥ प्रतिमांलक्षणैर्हीनांगृहीतांनैवपूजयेत् ॥ ॥ १ ॥ शैलजादारुजाताम्रीमृद्भवासर्वकामदा ॥ एकहस्ताद्विहस्तावासार्धहस्तातथापिवा ॥ २ ॥ प्रासादमानमथवाअथवासर्वलक्षणम् ॥ अष्टांगुलोत्सेधकंचनतुगेहेर्चयेत्कृती ॥ ३ ॥ देवागारस्ययद्द्वारंतस्मादष्टांगुलेनतु ॥ त्रिभागंपिंडिकाकार्याद्वौभागौप्रतिमाभवेत् ॥ ॥ ४ ॥ अंगुलंवैभवेद्वृद्धिरशीतिश्चतुरुत्तरा ॥ विस्तारमानतःकार्यंवदनंद्वादशांगुलम् ॥ ५ ॥ मुखत्रिभागेचिबुकंललाटंनासिकांतथा ॥ कर्णौनासिकयाग्रीवातुल्यौवानियतौतुयौ ॥ ६ ॥ नयनेद्व्यंगुलेस्यातांत्रिभागंतारकाभवेत् ॥ तृतीयतारकाभागेशुभदृष्टिंविचक्षणः ॥ ७ ॥ ललाटमस्तकग्रीवांकुर्यात्तत्सममेवतु ॥ परिणाहस्तुशिरसोभवेद्द्वात्रिंशदंगुलः ॥ ८ ॥ तल्पौनासिकयाग्रीवामुखेनहृदयांतरम् ॥ अथविस्तारपंक्तिस्तुततोऽर्धंतुकटिःसदा ॥ ९ ॥ बाहूचबाहुतुल्यौचऊरूजंघेचजावनम् ॥ गुल्फावम्थस्तुपादःस्याद्घाटितश्चतुरंगुलः ॥ षडंगुलस्तुविस्तारस्तुल्यांगुष्ठोंऽगुलत्रयम् ॥ १० ॥ प्रदेशिनीचतत्तुल्याहीनाशेषान्नखानखम् ॥ चतुर्दशांगुलःपादस्यायामःपरिकीर्तितः ॥ ॥ ११ ॥ एवंलक्षणसंयुक्तासापूज्याप्रतिमाशुभा ॥ अधरोष्ठस्तथैवोरुभ्रूललाटमनीषिकम् ॥ १२ ॥ गंडंचनियतंमूर्तौकुर्यादंगसमुन्नतेः ॥ विशालनयनस्ताम्रपदोवायतलोचनः ॥ १३ ॥ सवितानलपत्रस्यचारुविद्याधरस्तथा ॥ वत्सप्रोक्तोऽतिमुकुटःकटकांगदहारवान् ॥ १४ ॥ अभ्यंगपदबंधादिसमायोन्योपशोभिच ॥ सुप्रभामंडलाचारुविचित्रमणिकुंडला ॥ १५ ॥ कराभ्यांकांचनींमालांप्रोद्वहंतांशेगेरुहान् ॥ एवंलक्षणसंपन्नांकारयेद्धितप्रदाम् ॥ १६ ॥ सुस्निग्धांवरदांसौम्यांद्वितीयाश्रमिणामिमाम् ॥ नवतालोभवेद्विष्णुर्वासुदेवास्त्रितालकम् ॥ ॥ १७ ॥ नृसिंहःपंचतालःस्याद्धयग्रीवस्तुपंचमः ॥ नारायणश्चाष्टतालोमहेशस्तालपंचमः ॥ १८ ॥ नवतालाभवेद्दुर्गालक्ष्मीस्तालत्रयं ततः ॥ वाणींतालत्रयंविद्यात्सवितासप्ततालकः ॥ १९ ॥ दक्षिणेवासुदेवस्यकरेचक्रंप्रतिष्ठितम् ॥ शंखंभवेच्चतदधोवामार्धेतस्यवैगदा ॥ ॥ २० ॥ तदधश्चभवेत्पद्मंश्रीवत्सेनोपशोभितम् ॥ सव्येऽर्धेतारकास्यंचात्रिनेत्रमुभयात्मकम् ॥ २१ ॥ पार्श्वेनलिनींसिंहौद्वौसुभद्रांदक्षिणे

न्यसेत् ॥ रुक्मिणींवामभागेचतदधस्ताद्विवींद्रकम् ॥ २२ ॥ कृतांजलिपुटस्थश्चनारदःकपिलस्तथा ॥ धर्माधर्मावुभौपार्श्वेकर्तव्यौस्त्रग्वि
णांवरौ ॥ २३ ॥ यद्युग्रंवासुदेवस्यतथानारायणस्यच ॥ वैपरीत्यंविजानीयान्माधवानांतथैवच ॥ २४ ॥ तीर्थेगिरौतडागेचसमीपेस्थाप
येत्सुधीः ॥ नगरग्राममध्येवाब्राह्मणानांचसंसदि ॥ २५ ॥ अविमुक्तेविशेषेणसिद्धक्षेत्रेदशार्णके ॥ त्रीण्युत्तरसहस्राणिपंचपंचोत्तराणिषट् ॥
॥ २६ ॥ कुलानिपूर्वविप्रेंद्राःसमुद्धरतिनान्यथा ॥ कलौदारुमयःकार्योह्यशक्तौमृन्मयेनवा ॥ २७ ॥ चंदनागुरुभिःकुर्याद्बिल्वश्रीपर्णिक
स्यच ॥ पद्मकाष्ठमयश्चैववाममस्यतथैवहि ॥ २८ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिप्रथमभागेद्वादशोऽध्यायः ॥ १२ ॥ छ ॥
॥ ॥ सूतउवाच ॥ ॥ अतःपरंप्रवक्ष्यामिकुंडानामथनिर्णयम् ॥ तस्योद्धारंचसंस्कारंशृणुध्वंद्विजसत्तमाः ॥ १ ॥ चतुरस्रंचवृत्तंचपा
दार्धंचार्धचंद्रकम् ॥ योन्याकारंचंद्रकंचअष्टार्धमथपंचमम् ॥ २ ॥ सप्तार्धंचनवार्धंचकुंडंदशकमीरितम् ॥ भूमिंसंशोध्यविधिवत्तुषकेशा
दिवर्जिताम् ॥ ३ ॥ भ्रामयेच्चोर्ध्वतस्तस्याभस्मांगाराणियत्नतः ॥ अंकुरार्पणकंकुर्यात्सप्ताहादेवबुद्धिमान् ॥ ४ ॥ स्थानंविमर्दनंकुर्या
त्खनित्वासेचयेज्जलैः ॥ पुष्टिहस्तोच्छ्रायमितंप्रकुर्यात्परिसूत्रयेत् ॥ ५ ॥ अर्काङ्गुलमितंसूत्रंचतुरस्रंप्रकल्पयेत् ॥ अष्टादशांगकेक्षेत्रेन्य
सेदेकंबहिस्ततः ॥ ६ ॥ मापयेत्तेनमानेनत्रिवृतंकुंडमुज्ज्वलम् ॥ पूर्ववद्विभजेत्क्षेत्रंभागैकंपुरतोन्यसेत् ॥ ७ ॥ वृत्तानिकालिकादीनि
बहिस्त्रीणिविवर्जयेत् ॥ पद्मकुंडमिदंप्रोक्तंविलोचनमनोहरम् ॥ ८ ॥ दशधाभेदयेत्क्षेत्रेऊर्ध्वाधोर्ध्वांगुलद्वयम् ॥ संपरिपातयेत्सूत्रंपाटये
त्तत्प्रमाणतः ॥ ९ ॥ पंचधाभेदितेक्षेत्रेकामंवाविभजेत्सुधीः ॥ न्यसेत्पुरस्तादेवांगंकोणार्धार्धप्रमाणतः ॥ १० ॥ योनिस्थानंप्रतिष्ठाप्य
अश्वत्थस्यदलाकृति ॥ सूत्रद्वयंततोदद्यात्कुंडंपरिमितंभवेत् ॥ ११ ॥ चतुरस्रंसमुद्धृत्यसूत्रंसंकल्पयोगतः ॥ दिशंप्रतियथान्यायंपातये
च्चद्विजोत्तमाः ॥ १२ ॥ शृंगाटकंयुग्मपुटंषडस्रंकुंडत्रयंबुधाः ॥ जलाशयारामकूपेनित्येगृहमयेयथा ॥ १३ ॥ चतुरस्रंभवेत्कुंडंद्विज
संस्कारकर्मणि ॥ देवप्रतिष्ठायागेचगृहवास्तौचतुर्थकम् ॥ १४ ॥ वसुंधरायोगभेदेप्रपंचेवर्तमादिशेत् ॥ सोमेष्टौपंकजंप्रोक्तंनरमेधा
श्वमेधयोः ॥ १५ ॥ अंकुरार्पणयागेचवैष्णवेयागकर्मणि ॥ शिवदेव्योश्चजन्मादावष्टम्यांचार्धचंद्रकम् ॥ १६ ॥ मार्जारपौष्टिकेवैरंस्येच

चक्रवताग्राह्यारथेतिथ्यादेरपिच ॥ त्रिसंध्यव्यापिनीयातुपरमेकंपरेदिने ॥ ४६ ॥ अपरेऽपिचसर्वत्रहलानांवाहनंत्यजेत् ॥ शुक्लैकादश्यमा
वास्यासंक्रान्त्यांश्राद्धवासरे ॥ ४७ ॥ नराश्वगोगजादीनांवाहनात्पातकीभवेत् ॥ कर्तुर्गोमहिषादीनांगर्दभोष्ट्रखरस्यच ॥ ४८ ॥ नवाहये
द्दासदासींवाहनेनास्तिदूषणम् ॥ बहुकालिकयज्ञेचयज्ञश्राद्धेतथैवच ॥ ४९ ॥ ग्रामांतरेनदोषःस्याद्दिविनद्यंतरेऽपिच ॥ नित्यश्राद्धेऽप्य
म्बुघटेयच्छ्राद्धंमासिकस्यच ॥ ५० ॥ तत्रगोमहिषादीनांवाहनेनास्तिदूषणम् ॥ कुर्यादम्बुघटश्राद्धंनकालनियमःक्वचित् ॥ ५१ ॥ नचान्न
नियमंकुर्यादश्मपात्रंचवर्जयेत् ॥ तैजसैर्निर्मितंकुंभमथवावृक्षपत्रजम् ॥ ५२॥ नयोजयेन्मृन्मयंचशूद्राणांमृन्मयेविधिः ॥ निवेदयेच्चमासांते
मृन्मयंवृक्षमूलके ॥ ५३॥ आस्फालयेत्परेणैवनवस्त्रंतुकथंचन ॥ पर्वश्राद्धेदैवलकंतथारण्डाश्रमंत्यजेत् ॥५४॥ मातापितृपरित्यागीतैलह
व्यादिविक्रयी ॥ चत्वारिंशद्गुत्सवानांसाष्टानांचचरेद्यदि ॥५५॥ स्त्रियाविमुच्यतेकश्चित्सतुरण्डाश्रमीमतः ॥ अष्टचत्वारिंशदब्दंवयोयावन्न
पूर्यते ॥ ५६ ॥ पुत्रभार्यावियुक्तस्यनास्तियज्ञाधिकारिता ॥ यांतिथिंसमनुप्राप्यसमुदेतिदिवाकरः ॥ ५७ ॥ स्नानाध्ययनदानेषुसाति
थिः सकलास्मृता ॥ ययास्तंसवितायातिकृष्णपक्षेतुसातिथिः ॥ ५८ ॥ पितॄणांसकलाज्ञेयास्नानदानादिकर्मसु ॥ सप्तमीशुक्लपक्षेयायाव
दिच्छेच्चखंडिता ॥ ५९ ॥ आद्यभागेरवेः षष्ठ्यांपरादौयाष्टमीयुता ॥ यद्यखण्डाभवेत्सैवतदाज्ञेयाभवात्मिका ॥ ६० ॥ माघमासे
नसाप्येवंपूर्वेणरवितोषिणी ॥ मन्वंतरापरेणैवस्नानदानादिकर्मसु ॥ ६१ ॥ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेसप्तमो
ऽध्यायः ॥ ७ ॥छ॥ ॥ सूतउवाच ॥ ॥ तिथीनांप्रवरायस्माद्ब्रह्मणासमुदाहृता ॥ प्रतिपादितापरेपूर्वेप्रतिपाद्यनबोध्यते ॥ १ ॥ कार्तिका
श्वयुजेचैत्रेमाघेचापिविशेषतः॥स्नानंदानंदशगुणंशिवविष्णवोश्चपूजनम् ॥ २ ॥ अग्निमिष्ट्वाचकृत्वाचप्रतिपद्यामितिस्मृतम् ॥ हविषासर्वधा
न्यानिप्राप्नुयादीप्सितंधनम् ॥ ३ ॥ बृहस्पतौद्वितीयायांशुक्लायांविधिपूजनम् ॥ कृत्वानक्तंसमश्नीयाल्लभतेभूतिमीप्सिताम् ॥ ४ ॥ मिथु
नेकर्कटेचैवगोविप्रदमनांतरम् ॥ द्वितीयायातुविप्रेन्द्रास्तामुपोष्यहरिंयजेत् ॥ ५ ॥ यामुपोष्यनवैधव्यंप्रयातिस्त्रीनसंशयः ॥ अमूल्यशय
नंमासंदंपतीप्रतिपूजयेत् ॥ ६ ॥ वासोभिर्गंधपुष्पैश्चनानाभक्ष्यैः पृथग्विधैः ॥ वैशाखेशुक्लपक्षेतुतृतीयायांतथैवच ॥ ७ ॥ गंगातोयेनरः

स्नात्वामुच्यतेसर्वकिल्बिषैः ॥ स्वातियुक्ततृतीयायांवैशाखेतुविशेषतः॥८॥ माघेतुरोहिणीयुक्तावृषेचाश्वयुजेतथा ॥ तस्यांयद्दीयतेकिञ्चि
त्तदक्षयमुदाहृतम् ॥ ९ ॥ विशेषतोहविष्यान्नंमोदकादिसमायुतम् ॥ तोयदानंविशेषेणप्रशंसंतिमनीषिणः ॥ १० ॥ गुडकर्पूरसंयुक्तंब्रह्म
लोकेमहीयते ॥ बुधश्रवणसंयुक्तातृतीयायदिलभ्यते ॥ ११ ॥ तस्यांस्नानोपवासाद्यमक्षयंपरिकीर्तितम् ॥ चतुर्थीभरणीयोगे
भवेच्चरादिनंयदा ॥ १२ ॥ तदाभ्यर्च्ययमंदेवंमुच्यतेसर्वकिल्बिषैः ॥ शिवाशांतासुखाचैवचतुर्थीत्रिविधास्मृता ॥ १३ ॥ सापिभाद्रपदेशुक्ला
शिवलोकेसुपूजिता ॥ कार्तिकेतुभवेच्छायातथामाघेतुकीर्त्यते ॥ १४ ॥ तस्यांस्नानंतपोदानमुपवासोजपस्तथा ॥ भवेत्सहस्रगुणितंश्राद्धं
भवतिचाक्षयम् ॥ १५ ॥ गणेशंकारयेत्पूजांमोदकादिभिरादरात् ॥ चतुर्थ्यांविघ्ननाशायसर्वकामप्रसिद्धये ॥ १६ ॥ श्रावणेमासिपञ्चम्यां
शुक्लपक्षेविशेषतः ॥ स्नापयेन्नवनागांश्चगन्धतोयैःसुगन्धिभिः ॥ १७ ॥ तेषांकुलेप्रयच्छंतिअभयंप्राणरक्षणम् ॥ द्वादश्योभयलेखेचगोमये
नविशेषतः ॥ १८ ॥ पूजयेद्दधिदुग्धाद्यैःसिंदूरैरपिभक्तितः ॥ सुप्तेजनार्दनेकृष्णपंचम्यांभवनाङ्गणे ॥ १९ ॥ पूजयेन्मनसादेवींवामास्नुही
तिसंश्रयाम् ॥ पिचुमंदस्यपत्राणिस्थापयेद्भवनोदरे ॥ २० ॥ पूजयित्वानरोदेवींनसर्पभयमाप्नुयात् ॥ येयंभाद्रपदेषष्ठीषष्ठीचाद्विजसत्तम ॥
॥ २१ ॥ स्नानदानादिकंसर्वंसर्वमक्षयमुच्यते ॥ षष्ठ्यांफलाशनोविप्राविशेषान्माघकार्तिके ॥ २२ ॥ इहचामुत्रमुख्यांचलभतेख्यातिमु
त्तमाम् ॥ शुक्लपक्षेचसप्तम्यांयदासंक्रमतेरविः ॥ २३ ॥ महाजयातदास्याद्वैसप्तमीभास्करप्रिया ॥ अपराजितातुभाद्रस्यमहापातकना
शिनी ॥ २४ ॥ ललिताकेवलाज्ञेयापुत्रपौत्रविवर्द्धिनी ॥ शुक्लावायादिवाकृष्णाषष्ठीवासप्तमीतुवा ॥ २५ ॥ रविवारेणसंयुक्तातिथिःपुण्यत
मास्मृता ॥ आश्विनस्यसिताष्टम्यामष्टादशभुजांयजेत् ॥ २६ ॥ कार्तिकेशुक्लपक्षेवामहाविभवविस्तरैः ॥ आषाढेश्रावणेमासिशुक्लाष्टम्यां
चचंडिकाम् ॥२७॥ प्रातः स्नात्वार्चयेद्भक्त्यारात्रौसंस्नापयेद्द्विजाः ॥ चैत्रमासिसिताष्टम्यामशोककुसुमैर्द्विजाः ॥२८॥अर्चयेन्मृन्मयींदेवी
मशोकार्थंचसर्वदा ॥ सत्यष्टमसुहूर्तेवारोहिणीसहिताष्टमी ॥ २९ ॥ श्रावणेमासिसिंहार्केक्वचित्सापिचशस्यते ॥ एकादशीनांकोटीनांव्रतै
श्चलभतेफलम् ॥३०॥ अतोदशगुणंप्रोक्तंकृत्वैतत्फलमाप्नुयात् ॥ अशक्तोऽन्यांक्रियांकर्तुमुपवासंतुकेवलम् ॥ ३१ ॥ कृत्वाविमुच्यतेपापा

त्सप्तकृत्यकृतांवरः ॥नकालनियमस्तत्रनवारानियमःक्वचित् ॥ ३२ ॥ नापिनक्षत्रदोषोऽस्तिवारदोषोनगण्यते ॥ त्रिकालंपूजयेद्देवंदिवारा
त्रौविशेषतः ॥ ३३ ॥ अर्धरात्रेविशेषेणपुष्पैर्नानाविधैरपि ॥ दिवातिथेरलाभेतुनकुर्याद्विधिवद्व्रतम् ॥ ३४ ॥ रात्रिस्पर्शेयदिपरंरजन्याम
पिचाष्टमी॥सप्तमीसार्धयामंचरोहिणीवानसंस्पृशेत्॥३५॥व्रतीसंकल्पयेत्तत्रनचरात्रौकदाचन॥प्रागारंभंप्रकुर्वीतअधिमात्राधिकेव्रती ॥३६॥
विश्वनाथादिदेवानांदर्शनंप्राग्विवर्जयेत् ॥ यत्रतत्रोपवासीस्याद्यामाष्टकव्रतंचरेत् ॥ ३७ ॥ यामार्धंतत्परंयामेपारणंविचरेद्व्रती ॥ तत्परेचा
ऽन्नजन्यंवानकुर्यात्पारणंगृही ॥ ३८ ॥ नक्षत्रयोगेग्रहणेपूजयेत्परमेश्वरम् ॥ जपहोमादिकंकुर्याद्गृहीनोपवसेत्क्वचित् ॥ ३९ ॥ दिवाष्ट
म्यांमुहूर्तेवाप्राजापत्येनसंयुतम् ॥ तथापिचादिवाकृत्यंसमाप्यचव्रतंचरेत् ॥ ४० ॥ मुहूर्तांतेचमासांतेअष्टम्यामपिरोहिणी ॥ उपवासे
चयोदोषःपूजाहोमःप्रशस्यते ॥ ४१ ॥ नवम्यांचसदापूज्याःप्रतिमासेऽच्युताद्द्विजाः ॥ गृह्णीयान्नियमंचैवयथाकर्मफलप्रदम् ॥ ४२ ॥
कार्तिकस्यतुमासस्यदशमीशुक्लपक्षिका ॥ तस्यांयुक्ताशनाविप्राब्रह्मलोकमवाप्नुयुः ॥ ४३ ॥ दशमीज्येष्ठमासस्यसाचेद्दशहरास्मृता ॥
आश्विनस्यमहापुण्याकार्तिकेविजयास्मृता ॥ ४४ ॥ एकादशीव्रतपरासर्वपापप्रणाशिनी ॥ सर्वपापविनिर्मुक्तायथाकुर्वंतिमानवाः ॥
॥ ४५ ॥ दशम्यामेकभक्तस्तुसंयतःस्याज्जितेन्द्रियः ॥ एकादश्यामुपोष्याथद्वादश्यांपारणंचरेत् ॥ ४६ ॥ द्वादशद्वादशीर्हन्तितस्मा
त्तथाचरेद्बुधः ॥ पूर्वेद्युरेकादशीपूर्णापरेहनिचवर्धते ॥ ४७ ॥ नवर्धतेद्वादशीतुतदात्वेवंव्यवस्थितिः ॥ वनवासीपरांकुर्यात्पूर्वांकुर्याद्गृहा
श्रमी ॥ ४८ ॥ पूर्वैरेकादशीत्याज्यावर्धतेचेत्तिथिद्वयम् ॥ एकादशीद्वादशीतुतदोपोष्यापरातिथिः ॥ ४९ ॥ यदातुपारणायोग्याद्वा
दशीनोपतिष्ठते ॥ तदापूर्वैवसाग्राह्यात्याज्यावृद्धापरेऽहनि ॥ ५० ॥ एकादशीकलायुक्तासकलाद्वादशीयदि ॥ तत्रक्रतुसमंपुण्यंत्रयो
दश्यांतुपारणम् ॥ ५१ ॥ एकादशीद्वादशीचपरेऽहनिनलभ्यते ॥ नोपोष्यासामहादोषापुत्रपौत्रधनक्षयात् ॥ ५२ ॥ एकादशीदशावि
द्धाद्वादश्यांलितिकायदा ॥ द्वादशीपारणायोग्यावर्धतेचापरेऽहनि ॥ ५३ ॥ तदादिनद्वयेत्याज्यापारणंचानियोगतः ॥ षोडशीग्रहणं
दृष्ट्वाद्वादशीलुप्तपारणा ॥ ५४ ॥ चण्डातिथौव्रतंचैवहंतिपुण्यंपुराकृतम् ॥ त्रयोदश्यांयद्विहितंपारणंनतुपुण्यदम् ॥ ५५ ॥ ग्रहाश्रमी

नकुर्याद्द्वादशमीद्वादशीक्षयात् ॥ यदिरुद्राद्दशमित्रापरेऽन्हिरविसंक्रमः ॥ ५६ ॥ तथापिसंपरित्यज्यद्वादश्यांसमुपावसेत् ॥ वज्रालो
कनमात्रंतुदशमीसंविशेद्यदि ॥५७॥ एकादशीनभोक्तव्यापराह्येकादशीतदा ॥ तदाचेद्दशमीविद्धासमुपोष्यानदूषणम् ॥५८॥ द्वादश्यामु
पवासंतुयःकरोतिनरोत्तमः ॥ सयातिपरमंस्थानंयत्रविष्णुरनामयः ॥५९॥ उपोष्यदशमीमित्रांमोहादेकादशींनरः ॥ निरयंयातिसप्रेत्यधर्म
संततिसंक्षयात् ॥६०॥ रविवारेशुक्रवारेसंक्रान्त्यांतुदिनक्षये ॥ उपवासंप्रकुर्वीतपारणंतुविवर्जयेत् ॥ ६१ ॥ शुक्लांवायदिवाकृष्णांपूर्वसंक
ल्पितामपि ॥ एकादशींसदाकुर्यान्नवैकृष्णेतरांक्वचित् ॥ ६२ ॥ नकेनवर्तयेत्कृष्णामितिशास्त्रविनिश्चयः ॥ मासेचैकादशीयत्रलभ्यतेशुक्ल
पक्षके ॥६३॥ तत्रकुर्यात्कृष्णपक्षेपरातिथिर्नगृह्यते ॥ श्रावणीद्वादशीशुक्लाचांद्रभद्रेयदाहरौ॥६४॥तत्रोपोष्याहृषीकेशंपूजयेद्विधिवन्नरः॥
श्रावणेचाश्विनेचैवलभ्यतेद्वादशीदिने ॥ ६५ ॥ श्रवणेनसमायुक्तामहतीसाप्रकीर्तिता ॥ पुष्येणद्वादशीयुक्ताफाल्गुनेविजयास्मृता॥६६॥
कार्तिकेचेत्परित्याज्यामाघेतुनरकंभवेत् ॥ याभाद्रेविजयाप्रोक्ताश्रवणेनसमायुता ॥ ६७ ॥ विशेषःकथ्यतेतत्रयथावद्व्रतमाचरेत् ॥ एका
दश्यामुत्तरतोद्वादशीचदिवान्विता ॥ ६८ ॥ निशिपूर्णाद्वादशीचश्रवणेनापिसंयुता ॥ सफलाद्वादशीज्ञेयाउपोष्यैषामहाफला ॥ ६९॥
द्वादश्यांविष्णुविद्धायांवासुदेवंप्रपूजयेत् ॥ कृष्णायांतुव्रतंकुर्याद्बहुदुःखंसमाचरेत् ॥ ७० ॥ द्वादशीकामविद्धाचेन्मन्यतेनाप्युपोषणम् ॥
हन्यात्पुराकृतंपुण्यंत्रयोदश्यामुपोषणम् ॥ ७१ ॥ प्रहरेप्रहरेस्नानंशर्वर्यांचविधीयते ॥ पूजनंचाग्निकार्यंचषट्सुकार्यंव्रतीचरेत् ॥ ७२ ॥
एकादशींद्वादशींचप्राप्नोतिश्रवणेयदि ॥ एकादश्यामुपोष्याथद्वादश्यामप्युपावसेत् ॥ ७३ ॥ पारणंतुत्रयोदश्यांद्वादशीचेन्नलभ्यते ॥
आमिषान्नंनभुञ्जीतहविष्यान्नेनपारणम् ॥७४॥ यदातुपारणायोग्यालभ्यतेद्वादशीतदा ॥ तस्यांनातिक्रमोयुक्तस्तदभावेत्रयोदशी॥७५॥
एकादशीद्वादशीचश्रवणर्क्षेणसंयुता ॥ विष्णुशृंखलकोनामबुधवारेविशिष्यते ॥ ७६ ॥ दशम्यांसंयतोभूत्वाप्रातरेकादशीदिने ॥
कृत्वातुसङ्गमेस्नानंप्रहरेप्रहरेद्विजाः ॥ ७७ ॥ अनेनविधिनाकृत्वाविजयायांव्रतोत्तमम् ॥ सर्वपापक्षयंनीत्वाविष्णुलोकेवसेन्नरः ॥ ७८ ॥
चतुर्युगानांदिव्यानांयावत्स्याद्विष्णुरूपधृक् ॥ तावदेवहिसर्वत्रसार्वभौमोभवेन्नरः ॥ ७९ ॥ त्रेतायांदशजन्मानिमध्यदेशेषुभोद्विजाः ॥

ततश्चभारतेवर्षेवेदवेदांतसारवित् ॥ ८० ॥ पुत्रपौत्रधनैर्युक्तोलक्षदोनृपसन्निभः ॥ जायतेदशजन्मानित्रेतायांब्राह्मणोत्तमः ॥ ८१ ॥
सपत्नीकश्चदीर्घायुर्धर्मकर्मसुपूजितः ॥ भाद्रेमासिसितेपक्षेद्वादश्यांपृथिवीपतिम् ॥ ८२ ॥ शत्रुमुत्थापयेत्प्राह्णेशुभलग्नेशुभक्षणे ॥
शल्यशाल्मलियस्यापिसप्तपर्णीयकस्यच ॥ ८३ ॥ एषामन्यतमंवृक्षंचंपकस्यार्जुनस्यवा ॥ बृहत्कदंबवृक्षस्याद्विचत्वारिंशदङ्गुलैः ॥
॥ ८४ ॥ द्वात्रिंशदङ्गुलैर्वापिमानद्वयकथंचवा ॥ त्रिंशायामंचप्रथमंद्वाविंशैर्हस्तमेववा ॥ ८५ ॥ हस्तःषोडशवारस्यगृहस्थस्यविशिष्य
ते ॥ हस्तत्रयेणविप्रस्यद्वादशक्षत्रियस्यतु ॥ ८६ ॥ अष्टहस्तंतुवैश्यस्यशूद्रस्यपञ्चहस्तकम् ॥ अग्रतःश्वेतच्छत्रंस्यात्पताकंचपुरेपुरे ॥
॥ ८७ ॥ घनसारसमायुक्तांकर्पूरमंडितान्विताम् ॥ रक्तवस्त्रपरिच्छन्नांपुष्पमाल्यैरलङ्कृताम् ॥ ८८ ॥ मञ्चस्थांकारयेत्पूजांभक्त्याचसुदृढो
नरः ॥ सप्तरात्रंचरेत्पूजामैन्द्रमन्त्रेणमन्त्रवित् ॥ ८९ ॥ काकाद्यैर्नस्पृशेद्यातुवैरपक्षेविशेषतः ॥ पताकायानिपातेतुराष्ट्रहानिंसमादिशेत्॥
॥९०॥ पताकेनिस्सृतेभग्नेमहिषाणांविनाशनम् ॥ स्थूणापातेचभग्नेवाचाश्वहानिंसमादिशेत् ॥ ९१ ॥तस्करश्चकुलेतस्यप्रायश्चित्तंसमाच
रेत् ॥ तद्विष्णोरितिमन्त्रेणशतपञ्चसमन्वितम् ॥ ९२ ॥ विष्णुमुद्दिश्यजुहुयादयुतंपिप्पलस्यच ॥ ग्रहाणांचात्रिभागेनचायुतंजुहुया
द्बुधः ॥ ९३ ॥ आदित्यस्याद्भुतमिदंद्विजपातेतुभोद्विजाः ॥ कपोतपातेशुक्रस्यकाकादौभौममादिशेत् ॥ ९४ ॥ भूकंपेजायतेविष्टंगुरो
रद्भुतमादिशेत् ॥ कीटविद्धेकृतेविप्राश्चन्द्रस्याद्भुतमादिशेत् ॥ ९५ ॥ पताकेनिस्सृतेभग्नेराहोरद्भुतमादिशेत् ॥ शिवारुवंतिचान्द्रस्य
वानरोवास्पृशेत्क्वचित् ॥ ९६ ॥ केतोरद्भुतमुद्दिष्टंभूमिकंपेतुतोद्विजाः ॥ त्रयोदशींसितांप्राप्यपुष्पैर्नानाविधैरपि ॥ ९७ ॥ काम
देवंसमभ्यर्च्यगन्धाद्यैःसुमनोहरैः ॥ चैत्रेमासिसिताष्टम्यांशनौशतभिषायदि ॥ ९८ ॥ गंगायांयदिलभ्येतसूर्यग्रहशतैःसमाः ॥ सेयं
महावारुणीतिख्याताकृष्णत्रयोदशी ॥ ९९ ॥ अस्यांस्नानंचदानंचश्राद्धंवाक्षयमुच्यते ॥ मधुमासेसितेपक्षेदम्भभञ्जीचतुर्दशी ॥ १०० ॥
तस्यांमदनमूलेचअक्षरःकाममर्चयेत् ॥ सयातिपरमंस्थानंमदनस्यप्रभावतः ॥ १०१ ॥ जुगुप्सितवचोभिस्तुसम्यक्तुष्टोमनोभवः ॥ अन
न्तस्यव्रतंवक्ष्येसर्वपापप्रणाशनम् ॥ १०२ ॥ अनन्तंसुखमाप्नोतियःकुर्याद्भक्तिमान्नरः ॥ द्वादश्यांपूजितेशक्रेध्वजकेवास्तुयष्टिषु ॥१०३॥

ततःशुक्लचतुर्दश्यामनन्तंपूजयेद्धरिम् ॥ कृत्वादर्भमयानन्तंवारिधान्यान्वितंतथा ॥ १०४ ॥ पूजयेच्चन्दनैर्गन्धैर्नैवेद्यैर्विविधैरपि ॥ चतु
र्दशफलैर्मूलैर्जलजैःकुसुमैरपि ॥ १०५ ॥ यवगोधूमशालीनांचूर्णैर्नैकतमस्यच ॥ कृत्वापूपाह्वयंतस्मैदद्यादेकंश्रुतोक्षितम् ॥ १०६ ॥
स्वयमेकंतुभुञ्जीतदद्यात्सूत्रस्यदोरकम् ॥ चतुर्दशग्रंथियुतंकुंकुमेनविलेपितम् ॥ १०७ ॥ चतुर्दशसूत्रमयंसूत्रंकार्पासमेवच ॥ १०८ ॥
अतःप्रेतचतुर्दश्यांभोजयित्वातपोधनान् ॥ दानंदत्त्वाद्विजेभ्यश्चयमलोकंनगच्छति ॥ १०९ ॥ ततःप्रेतकथांश्रुत्वाशाकैर्नक्तंसमाचरेत् ॥
चतुर्दशंद्वादशंवासप्तमंवापिपञ्चमम् ॥ ११० ॥ मानमात्रादिकंकृत्वासर्वपापैःप्रमुच्यते ॥ माघेमासिवटाशयःकस्यपापंपुनीमहे ॥ १११ ॥
स्नात्वातत्रचतुर्दश्यांसमयेतारकामये ॥ संभवेत्फाल्गुनेमासियाचकृष्णाचतुर्दशी ॥ ११२ ॥ शिवरात्रिरितिख्यातासाजगत्सर्वकामदा ॥
दिवापूजामलाभेतुरात्रियोगेव्रतंचरेत् ॥ ११३ ॥ चतुर्दशीअमाविद्धातद्व्रतंपरिवर्जयेत् ॥ तिथियोगेचशर्वर्यांसंपूर्णेव्रतमाचरेत् ॥ ११४ ॥
कामविद्धासाचपूज्यारात्रियोगेचरेद्व्रती ॥ प्रहरेप्रहरेस्नानंस्वयंस्नात्वाशिवस्यच ॥ ११५ ॥ कारयेद्विधिवद्भक्त्याहोमंकुर्याद्यथार्चितः ॥ अथवक्ष्या
मिचैत्रादिमासेतुपूर्णिमायथा ॥ ११६ ॥ चित्रानक्षत्रसंयुक्तागुरुपूर्णोविधुर्यदि ॥ महाचैत्रीतिसाज्ञेयापूर्णिमाक्षयपुण्यदा ॥ ११७ ॥ विशाखादि
षुभेदेषुपूर्णचन्द्रोगुरुश्चरेत् ॥ महावैशाखिकाद्यास्तुपूर्णिमाद्वादशस्मृताः ॥ ११८ ॥ महाज्येष्ठीविशेषोऽयंप्राजापत्येयथारविः ॥ गुरुपूर्ण
चन्द्रोज्येष्ठायांमहाज्यैष्ठीतिसास्मृता ॥ ११९ ॥ विनापिगुरुणाचन्द्रःकृत्तिकापौर्णिमातथा ॥ तथामहाकार्तिकीसातिथिःपुण्यतमाभवेत् ॥
॥ १२० ॥ रोहिण्यांतुस्थितश्चन्द्रःपौर्णमास्यांतुकार्तिके ॥ महाकार्तिकीतथापिस्यात्स्वर्गलोकेऽपिदुर्लभा ॥ १२१ ॥ चित्रावायदिवापूर्णा
यदास्यात्पूर्णिमातिथिः ॥ महाचैत्रीतथापिस्यादश्वमेधफलप्रदा ॥ १२२ ॥ रविणाकृत्तिकायोगाद्रविवारेचपूर्णिमा ॥ महाचैत्रीतथापिस्या
द्दत्तस्याक्षयकारिका ॥ १२३ ॥ एवंगुरौगुरोर्योगेमहाचैत्रीप्रकीर्तिता ॥ तत्रस्नानंचदानंचजपोनियमएवच ॥ १२४ ॥ सर्वमक्षयतांयाति
फलंचैवाश्वमेधिकम् ॥ पितरस्तर्पितायांतिवैष्णवंलोकमक्षयम् ॥ १२५ ॥ भरण्यांकार्तिकेमासियदिस्यात्पूर्णिमातिथिः ॥ गंगाद्वारेतुमह
तीवैशाखीपुण्यदास्मृता ॥ १२६ ॥ शालिग्रामेमहाचैत्रीकृतपुण्यामहातिथिः ॥ गंगाद्वारेतुमहतीवैशाखपुण्यदास्मृता ॥ १२७ ॥

पुरुषोत्तमेमहाज्येष्ठीमहाषाढीतुशृंखले ॥ महाश्रावणीकेदारेमहापुण्यतमामता ॥१२८॥ महाभाद्रीवदर्यांचकुजोऽपिस्यान्नरस्तथा॥महाका
र्तिकीपुष्करेचकन्यकुब्जेतथोत्तरे ॥ १२९ ॥ महतीमार्गशीर्षेस्यादयोध्यायांतथोत्तरे ॥ महापौषीपुण्यतमामहामाघीप्रयागतः ॥ १३० ॥
महाफाल्गुनीनैमिषेचनिर्दिष्टाःस्युर्महाफलाः ॥ अत्रस्मविहितंकर्मशुभंवायदिवाशुभम् ॥१३१॥ सर्वमक्षयतांयातिवर्द्धतेचाधिकंफलम् ॥
आश्विनेपौर्णमासीतुकौमुदीतिप्रकीर्तिता ॥ १३२ ॥ अस्यांचन्द्रोदयेलक्ष्मींपूजयेद्विधिवन्नरः ॥ ननिर्वपतियच्छ्राद्धंप्रभातपितृकोद्विजः ॥
॥ १३३ ॥ इन्दुक्षयेमासिमासिप्रायश्चित्तीयतेतुसः ॥ चन्द्राश्विनेतुकृष्णायांपञ्चदश्यांयथाविधि ॥ १३४ ॥ कृत्वास्नानादिकंकर्मसोपवा
सोदिनंनयेत् ॥ प्रदोषसमयेलक्ष्मींपूजयित्वायथाविधि ॥ १३५ ॥ दीपवृक्षान्यथावृक्षाँल्लक्ष्मीप्रीत्यासमुत्सृजेत् ॥ नदीतीरेगिरौगोष्ठेश्म
शानेवृक्षमूलतः ॥ १३६ ॥ चतुष्पथेनिजागारेचत्वरेतान्निधापयेत् ॥ द्विभोंजनममावास्यांनकर्तव्यंकदाचन ॥ १३७ ॥ शर्वर्यांचविशेषेण
माघफाल्गुनयोर्नरैः ॥ १३८ ॥ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेऽष्टमोऽध्यायः ॥ ८ ॥ छ ॥ ॥ सूतउवाच ॥
वक्ष्येप्रवरसंतानंयथाक्रममितिद्विजाः ॥ यद्विनाव्यत्यययोस्माात्स्माच्छास्त्रानुसारतः ॥ १ ॥ प्रवरत्रयंकाश्यपस्यकाश्यपाशावनैर्ध्रुवम् ॥
पञ्चाश्वगौतमस्याद्यगौतमश्चोयएवच ॥ २ ॥ च्यवनोजामदग्न्यश्चआप्लवायनमेवच ॥ मोकुन्यांगिरसभास्याज्जामदग्न्याप्लवायनम् ॥ ३ ॥
शांडिल्यासितादैवलाःप्रवरत्रयमेवच ॥ पराशरस्यचतथास्वयंशांववासिष्ठकम् ॥ ४ ॥ आत्रेयमार्चायणस्याबालप्रवरमेवहि ॥ वात्स्यवा
स्यायनौचैवउरुकंटकएवच ॥ ५ ॥ अर्थक्षीरमित्रावरुणपञ्चमंपरिकीर्तितम् ॥ औतथ्यस्यत्रयंविद्याद्वाल्मीकोऽवरमेवहि ॥ ६ ॥ औतथ्य
स्यचवासिष्ठमैन्द्रेचक्रेंचक्रौञ्चायनंतथा ॥ औतथ्येतिसमाख्यातंमाहिष्यंच्यवनंतथा ॥ ७ ॥ उरुकंटत्रयंविद्यात्कौशिकस्यत्रयंतथा ॥
उद्दालोदेवराट्ख्यातःकुशिकाद्याश्चभोद्विजाः ॥ ८ ॥ विश्वामित्रोदेवराट्चस्वयंचैवत्रयंमतम् ॥ घृतकौशिकस्यकुशिकाविश्वामित्राघमर्ष
णम् ॥ ९ ॥ चण्डकौशिकस्यचतथादेवराट्देवरातकम् ॥ विश्वामित्रेतुविख्यातःसुमंतोरेवएवहि ॥ १० ॥ तरुंकशाकटायनःस्वयमेव
प्रवरत्रयम् ॥ श्रमद्वयंजैमिनेश्चस्वयंवासिष्ठमेवच ॥ ११ ॥ शंखमांगिरसच्यवनंशंखभस्यत्रयंमतम् ॥ वात्स्यस्यच्यवनोनामआप्लवायनक

स्तथा ॥ १२ ॥ सावर्णस्यतुसावर्ण्यंच्यवनजामदग्निभार्गवम् ॥ आप्नुवायनेतिपाठीनेएकएवतुसत्तमाः ॥ १३ ॥ कृष्णाजिनस्यकृष्णाजि
नंविश्वामित्रस्यजैमिनम् ॥ कात्यायनस्यकात्यायनगार्ग्यायणत्रयंतथा ॥ १४ ॥ वात्स्यायनेतिविख्यातंकुशिकस्यचपंचमम् ॥ अमुंच
विश्वामित्रंचजामदग्न्याप्नुवायनम् ॥ १५ ॥ गार्ग्यस्यगार्ग्यसामुंचतथांगिरसएवच ॥ बार्हस्पत्यभरद्वाजइतिपंचप्रकीर्तितम् ॥ १६ ॥ वसि
ष्ठस्यचवासिष्ठंचतथांगिरसएवच ॥ मित्रावरुणसंयुक्तंतावत्तस्यप्रकीर्तितम् ॥ १७ ॥ जाह्नकर्णभवकर्णौप्रवरौपरिकीर्तितौ ॥ उपमन्युरुपम
न्योस्तथेन्द्रःसहएवच ॥ १८ ॥ तदुक्तमेतित्रितयंमित्रावरुणस्यचत्रयम् ॥ आत्रेयगौतमांगिरसप्रवरत्रयमेवहि ॥ १९ ॥ कमंडलोत्पलमित्रा
मित्रावरुणएवच ॥ कमंडलुश्चेतित्रितयंप्रवरत्रयमेवच ॥ २० ॥ च्यवनस्यतथाज्ञेयमूर्वंच्यवनाप्लवायनम् ॥ अथसकस्यांगिरसबार्हस्पत्य
एवत्रयम् ॥ २१ ॥ आगस्त्यस्यअगस्तिश्चमाहश्चच्यवनेतिच ॥ विश्वामित्रेदेवरातऔतथ्येतिचतथैवच ॥ २२ ॥ येनोक्तायेऽप्यवि
ज्ञातास्तेप्रोक्ताःकाश्यपाज्जगत् ॥ २३ ॥ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेनवमोऽध्यायः ॥ ९ ॥ छ ॥ सूतउवाच ॥
वास्तुयागमथोवक्ष्येबलिमण्डलपूर्वकम् ॥ अंकुरार्पणकंकृत्वामध्येकुर्याच्चमंडलम् ॥ १ ॥ त्रिहस्तांपिंडिकीकार्याचतुरस्राउदक्प्लवा ॥ प्रादे
शमात्रउत्साधोदर्पणांतर्निभोभवेत् ॥ २ ॥ मध्येसंमार्जयेद्विद्वान्पादान्नवयथाक्रमात् ॥ कोणेचतुष्पदंज्ञेयंदिक्षुत्रिपदकंक्रमात् ॥ ३ ॥
पञ्चकंयुग्मपादेनचतुर्दिक्षुततः परम् ॥ कोणेचतुष्पदंस्थाप्यंचतुष्कोणेविभावयेत् ॥ ४ ॥ चतुष्कोणंबहिःकुर्यात्कोणेचापिचतुष्टयम् ॥द्वा
त्रिंशच्चभवेद्वाह्येचातश्चापित्रयोदश॥५॥चत्वारिंशत्पञ्चयुतामिलित्वावास्तुदेवताः॥शिखीचैवाथपर्जन्योजयंतःकुलिशायुधः ॥ ६ ॥ सूर्यः
सत्योवृषश्चैवआकाशंवायुरेवच ॥ पूषाचवितथश्चैवगृहान्यश्चयमस्तथा ॥७॥ गन्धर्वोमृगराजस्तुमृगाःपितृगणास्तथा॥दौवारिकोऽथसुग्रीवः
पुष्पदंतोजलाधिपः ॥ ८ ॥ असुरः पशुपाशौचरोगोहिमोक्षएवच ॥ भल्लाटः सोमसर्पौचआदितिश्चदितिस्तथा ॥ ९ ॥ बहिर्द्वादशइत्ये
ताईशानादीन्यथाक्रमम् ॥ ईशानादिचतुष्कोणंसंस्थितान्पूजयेद्बुधः ॥ १० ॥ आपश्चैवाथसावित्रोजयोरुद्रस्तथैवच ॥ अर्यमासविताचैव
विवस्वान्विबुधाधिपः ॥ ११ ॥ मित्रोऽथराजयक्ष्माचसप्तमःपृथिवीधरः ॥ अष्टमस्त्वापवत्सस्तुपरिधौब्रह्मणः स्मृतः ॥ १२ ॥ पूर्वादिषुत

थापूज्यागन्धपुष्पैः पृथग्विधैः ॥ पञ्चचत्वारिंशदेतच्चरक्याचचतुर्थकम् ॥ १३ ॥ मिलित्वाऊनपञ्चाशदुत्तमावास्तुदेवताः ॥ नान्यत्रयो
जयेद्विप्राः प्रासादेचविशेषतः ॥ १४ ॥ बहिः कोणेचरक्यादिचरकंचविदारिकाम् ॥ पूतनांचततः पश्चाद्दायव्येपापराक्षसीम् ॥ १५ ॥
स्वैः स्वैर्मंत्रैश्चगंधाद्यैः पूजयेत्कुसुमादिना ॥ यथोक्तेनबलिंदद्यात्पायसान्नेनवापुनः ॥ १६ ॥ रेषाः सर्वत्रशुक्लेनपद्मंरक्तेनभावयेत् ॥ रञ्ज
येद्देववर्णेनबहिष्पञ्चरजेनतु ॥ १७ ॥ देववर्णानथोवक्ष्येयथावदनुवर्णिताः ॥ रक्तोगौरस्तथाशोणः सितरक्तः सितस्तथा ॥ १८ ॥ पीतःशु
क्लश्चधर्मश्चपूषारक्तः प्रकीर्तितः ॥ श्यामः शुक्लश्चकृष्णश्चपीतः शुक्लोयथाक्रमम् ॥ १९ ॥ पीतोभृंगः पुनः शुक्लःकृष्णः शुक्लस्तथैवच ॥
रक्तः शुक्लश्चशोणश्चकृष्णरक्तस्तथैवच ॥ २० ॥ धूम्रपीतोरक्तपीतः शुक्लः कृष्णश्चश्यामकः ॥ रक्तवर्णंनद्वात्रिंशदशवर्णाः प्रकीर्तिताः ॥
॥ २१ ॥ शुक्लशोणंपुनः श्वेतंसिंदूराभंप्रकीर्तितम् ॥ पांडवंकुंकुमाभंचरक्तंज्ञेयंचपीतकम् ॥ २२ ॥ शुक्लपीतंचश्वेतंचगौरंचेत्यष्टवर्णकम् ॥
पीतंरक्तंचश्यामंचगौरंचेतिचतुष्टयम् ॥२३॥ धरणीमदनंवायेशंभुवर्णादिप्रक्रमात् ॥ शुक्लेनरञ्जयेद्द्वारान्पुरद्वारंचमध्यमे॥२४॥मध्येतेऊनप
ञ्चाशत्सर्वेचवास्तुकर्मणि ॥ चत्वारिंशद्द्वारयुतंगृहदेवकुलेऽपिच ॥ २५ ॥ महाकूपेतथाश्वेतोअन्यत्रापिप्रशस्यते ॥ सुलिप्तेचशुचौदेशेसा
र्धहस्तप्रमाणतः ॥ २६ ॥ दशपूर्वायतारेखादशवैचोत्तरायताः ॥ एकादशीपदंकुर्याद्रेखाभिः पदकेनतु ॥ २७ ॥ सर्ववास्तुविभागेनविज्ञेया
नवकानव ॥ पदस्थान्पूजयेद्देवांस्त्रिंशत्पञ्चाशदेवतु ॥ २८ ॥ द्वात्रिंशद्बाह्यतः पूज्याःपूज्यागारेत्रयोदश ॥ मध्येनवपदेब्रह्मातस्याप्यष्टौ
समीपगाः ॥२९॥ चतुर्दिक्षुषट्पदंतुत्रिपदंतुचतुष्पदम्॥पदैकंतुचतुष्कोणेएतद्वास्तुविनिर्णयम्॥चरक्यादिततोहित्वाचत्वारिंशच्चपञ्चकम्
॥ ३० ॥ अपरंमण्डलंवक्ष्येयथावदनुपूर्वशः ॥ नवरेखाप्रयोगेणनवकोष्ठान्प्रकल्पयेत् ॥ ३१ ॥ द्विचतुष्कोष्टकैर्दिक्षुयजेतार्यमणंततः ॥
विवस्वंतंततोमित्रंमहीधरमतःपरम् ॥ ३२ ॥ कोणेषुकोष्टद्वंद्वेषुबाह्यादिपरिकीर्तितम् ॥ सावित्रंसवितारंचशक्रमिन्द्रंजयंपुनः ॥ ३३ ॥
रुद्रंरुद्रजयंचैववायुंजंभकमेवच ॥ पिलिपिच्छंचमेधावीविदारींपूतनांतथा ॥ ३४ ॥ क्रमादीशानपर्यंताजयंतः शक्रभास्करौ ॥ सत्यो
वृषांतरिक्षौचदिशिप्राच्यामवस्थिताः ॥ ३५ अग्निःपूषाचवितथोयमश्चगृहरक्षकः ॥ गंधर्वोभृंगराजश्चमृगोदक्षिणमाश्रिताः ॥ ३६ ॥ नैर्ऋ

तिर्दौवारिकश्चसुग्रीववरुणौततः ॥ पुष्पदंतस्त्वरौशोषरोगौप्रत्यग्दिशिस्थिताः ॥ ३७ ॥ ग्राणवायुश्चनागश्चसोमोभल्लाटएवच ॥ मुद्ग
लाख्योदित्यादितीकुबेरस्यादिशिस्थिताः ॥ ३८ ॥ मिलित्वाचात्रपञ्चाशत्तेभ्यःपूर्वंबलिंहरेत् ॥ पिण्याकैःपरमान्नैर्वापूर्वोक्तैर्वायथाक्रमा
त् ॥ ३९ ॥ रक्तमर्यमणंध्यायेच्चतुर्भिर्बहुभिर्वृतम् ॥ श्वेताश्ववाहनंदिव्यंकिरीटैः स्वैर्विभूषितम् ॥ ४० ॥ आकृष्णेनेतिमन्त्रस्यस्वर्णऋषिर्ज
गतीछन्दः सवित्रार्यमप्रीतयेविनियोगः ॥ ४१ ॥ विवस्वंतंपीतवर्णंपीताम्बरधरंशुभम् ॥ मेषस्थंचमहाकायंदेवगन्धर्वसेवितम् ॥ ४२ ॥
एतावविषंतीतिमंत्रस्यकर्दमऋषिः पंक्तिश्छन्दः कमलादेवताविवस्वत्प्रीतयेविनियोगः ॥ ४३ ॥ मित्रंध्यायेच्छुक्लवर्णंश्वेतहंसो
परिस्थितम् ॥ त्रिनेत्रंद्विभुजंचैवश्वेतांबरधरंशुभम् ॥ ४४ ॥ कयानश्चीतिमंत्रस्यजयंतऋषिर्गायत्रीछन्दःशङ्करोदेवतामित्रप्रीतयेविनियोगः
॥ ४५ ॥ प्रीतंमहीधरंध्यायेद्वृषभोपरिसंस्थितम् ॥ द्विभुजंपद्महस्तंचव्यालयज्ञोपवीतिनम् ॥ ४६ ॥ त्र्यम्बकमितिमंत्रस्यगर्गऋषिस्त्रिष्टुप्
छन्दोहरोदेवतामहीधरप्रीतयेविनियोगः ॥ ४७ ॥ सावित्रींश्वेतवर्णांचसर्वलक्षणसंयुताम् ॥ द्विभुजांपीतवस्त्रांचश्वेतसिंहासनेस्थिताम्
॥ ४८ ॥ रक्ताम्बरधरांरक्तांरक्तमालोपशोभिताम् ॥ ४९ ॥ तद्वर्षइतिमंत्रस्यगौतमऋषिर्विराट्छन्दः सूर्योदेवतासवितृप्रीतयेविनियो
गः ॥ ५० ॥ शक्रंध्यायेत्पीतवर्णंशुक्लमैरावतस्थितम् ॥ सर्वदेवैःस्तूयमानंद्विभुजंपीतवाससम् ॥ ५१ ॥ त्रातारमितिमंत्रस्यभार्गवऋषिस्त्रि
ष्टुप्छन्दोनरसिंहोदेवताइन्द्रजयप्रीतयेविनियोगः ॥ ५२ ॥ रुद्रंध्यायेच्छ्वेतवर्णंवृषभारूढविग्रहम् ॥ नागयज्ञोपवीतंचसर्वलक्षणसंयुतम् ॥
॥ ५३ ॥ नमस्तेरुद्रेतिमंत्रस्यगायत्रीछन्दस्त्र्यंबकोदेवतारुद्रप्रीतयेविनियोगः ॥ ५४ ॥ रक्तंरुद्रंजयंध्यायेद्रक्तपद्मोपरिस्थितम् ॥ रक्तश्या
मांबरधरंद्विभुजंरक्तवाससम् ॥५५॥त्र्यंबकमितिमन्त्रस्यगायत्रीच्छन्दोमहेशोदेवतारुद्रजयप्रीतयेविनियोगः ॥५६॥ आपिश्वेतंततोध्यायेद्वरा
भयकरंपरम् ॥ सर्वलक्षणसंपन्नंश्वेतपद्मोपरिस्थितम् ॥५७॥ ईशानइतिमंत्रस्यमरीचिर्ऋषिः पंक्तिश्छन्दोवायुर्देवताअपांप्रीतयेविनियोगः॥
आपवत्संपीतवर्णंमेषारूढंचतुर्भुजम्॥५८॥पद्मशङ्खधरंवामेवराभयकरंपरम् ॥ ५९ ॥ वरुडश्चोत्तमंनभस्तीतिमन्त्रस्यनरोत्तमऋषिर्विराट्छं
न्दोवरुणोदेवताआवयःप्रीतयेविनियोगः॥६०॥कोणसूत्रस्योभयतःश्वेतकोष्ठद्वयेपुनः॥शर्वंध्यायेद्रक्तवर्णंवृषभोपरिसंस्थितम् ॥६१॥ द्विभुजं

चत्रिनेत्रंचजटाभारोपशोभितम् ॥ ६२ ॥ मालास्वाहेतिमंत्रस्यभार्गवऋषिर्गायत्रीछन्दोमहादेवोदेवताशर्वप्रीतयेविनियोगः ॥ ६३ ॥
गृहंध्यायेत्पीतवर्णंपीतंपद्मासनास्थितम् ॥ नानाभरणशोभाढ्यंकुण्डलाद्यैरलङ्कृतम् ॥ ६४ ॥ सबोधइतिमन्त्रस्यअगस्तिर्ऋषिर्गायत्री
छन्दोहरोदेवतागुहप्रीतयेविनियोगः ॥ ६५ ॥ अर्यम्णंद्विभुजंरक्तंरक्तमाल्योपशोभितम् ॥ रक्तपद्मासनस्थंचदेवगन्धर्वसेवितम् ॥ ६६ ॥
वातोवारेतिमंत्रस्यकाश्यपऋषिरनुष्टुप्छन्दोवायुर्देवताअर्यमप्रीतयेविनियोगः ॥ ६७ ॥ ध्यायेच्चजम्भकंश्वेतंद्विभुजंकुटिलाननम् ॥ करा
लवदनंघोरंवराहोपरिसंस्थितम् ॥ ६८ ॥ कुविदोगवयइतिमन्त्रस्यविश्वामित्रऋषिर्जगतीछन्दःसोमोदेवताजंभकप्रीतयेविनियोगः ॥ ६९ ॥
पिलपिच्छंरक्तवर्णंरक्तमाल्यैरलङ्कृतम् ॥ रक्तपद्मासनस्थंचरक्ताभरणशोभितम् ॥ ७० ॥ देवस्यहेतिमन्त्रस्यपंक्तिश्छंदःशचीदेवतापिल
पिच्छप्रीतयेविनियोगः ॥ ७१ ॥ पीतांचचरकींध्यायेद्रक्तमाल्यैरलंकृताम् ॥ सुचारुवदनांभव्यांगुञ्जाहारोपशोभिताम् ॥ ७२ ॥ तद्वर्षइति
मन्त्रस्यजटिलऋषिर्बृहतीछन्दोभवोदेवताचरकीप्रीतयेविनियोगः ॥ ७३ ॥ श्यामांविदारिकांध्यायेत्त्रिनेत्रांचचतुर्भुजाम् ॥ नानागण
युतांदेवींपङ्कजद्वयधारिणीम् ॥ ७४ ॥ श्रीश्चतेइतिमन्त्रस्यवरुणऋषिर्नृसिंहोदेवताविदारिकाप्रीतयेविनियोगः ॥ ७५ ॥ रक्तांचपूतनां
ध्यायेत्पङ्कजस्थांसुशोभनाम् ॥ सर्वाभरणसंपन्नांसर्वालंकारशोभिताम् ॥७६॥ मयिगृह्णामीतिमंत्रस्यविवस्वानृषिर्नारायणोदेवतापूतनाप्री
तयेविनियोगः ॥ ७७ ॥ पूर्वादिदिक्षुसर्वासुसाधीयंतपदेषुच ॥ ईशानंजटिलंश्वेतंशूलहस्तंमहाभुजम् ॥ ७८ ॥ त्रिनेत्रंवृषभारूढंनागहारो
पशोभितम् ॥ ७९ ॥ आयुःशीर्षाणइतिमंत्रस्यवामदेवऋषिर्बृहतीछन्दोधरणीधरोदेवताईशानप्रीतयेविनियोगः ॥ ८० ॥ रक्तंध्याये
च्चपर्जन्यंद्विभुजंपीतवाससम् ॥ दक्षिणेपरशुंध्यायदोंकारंचतथापरे ॥ ८१ ॥ कयानश्चेतिमन्त्रस्यधर्मऋषिर्बृहतीछन्दोभवोदेवतापर्जन्यप्री
तयेविनियोगः ॥८२॥ जयंतंश्वेतंश्वेतवृषभारूढंध्यात्वा ॥मानस्तोकेतिमन्त्रस्यशक्त्यृषिस्त्रिष्टुप्छन्दःशङ्करोदेवताजयंतप्रीतयेविनियोगः ॥
॥८३॥शुक्लंपतिंद्विभुजमैरावतस्थंवज्रधरंध्यात्वामूलबीजेनस्थापयेत्॥८४॥भास्करंरक्तंद्विभुजंरक्ताश्वस्थंध्यात्वामायाबीजेनपूजयेत् ८५॥
सत्यंचाद्विभुजंश्वेतंत्रिनेत्रंपीतवाससंमन्दकुंदबीजेनपूजयेत् ॥ वृषंपीतंवृषभारूढमाकाशबीजेनपूजयेत् ॥ ८६ ॥ ऋक्षंनीलंचतुर्भुजंमहिषा

रूढम् ॥ आच्छीमइतिमन्त्रस्यहोतायक्षऋषिस्त्रिष्टुप्छन्दःशंकरोदेवताऋक्षप्रीतयेविनियोगः ॥ ८७ ॥ अग्निमारभ्यपूजयेत् ॥ अग्निंरक्तंस
प्तजिह्वंरक्तवाससंपिङ्गाक्षंध्यात्वा ॥ अग्निंदूतमितिमंत्रस्यभरद्वाजऋषिस्त्रिष्टुप्छन्दःशंकरोदेवताअग्निप्रीतयेविनियोगः ॥८८॥वितथंरक्तमज
वाहनंद्विभुजंध्यात्वागायत्र्यापूजयेत् ॥ ८९ ॥ गायत्र्याविश्वामित्रऋषिर्गायत्रीछन्दःसवितादेवतावितथप्रीतयेविनियोगः॥ ९० ॥ यमंकृष्ण
महिषारूढंदण्डहस्तंध्यायेत् ॥ अच्छियइतिमन्त्रस्यत्रिष्टुप्छन्दोभवानीदेवतायमप्रीतयेविनियोगः ॥ ९१ ॥ गृहक्षेत्रंरक्तमूर्ध्वकेशंमहाभुजं
रक्तवाससंध्यात्वावह्निबीजेनपूजयेत् ॥ ९२ ॥ गन्धर्वंश्वेतंद्विभुजंपद्मासनस्थंध्यात्वायमबीजेनपूजयेत् ॥ ९३ ॥ भृङ्गराजंरक्तंसिंहासनारूढं
दिव्ययज्ञोपवीतिनंध्यायेत् ॥ ९४ ॥ होतायस्केतिमन्त्रस्यभार्गवऋषिर्गायत्रीछन्दोयशोदेवताभृंगराजप्रीतयेविनियोगः ॥ ९५ ॥ मृगंपी
तंमृगारूढंपीतवाससंध्यात्वा ॥ कदाचनेतिमन्त्रस्यवामदेवऋषिर्बृहतीछन्दोवामदेवोदेवतामृगप्रीतयेविनियोगः ॥९६॥ नैर्ऋतार्द्धपदेषुच ॥
निर्ऋतिंपीतंश्वेतंपद्मासनस्थंध्यात्वा ॥ कैदाचनेतिमन्त्रस्यपंक्तिश्छन्दःसवितादेवतानिर्ऋतिप्रीतयेविनियोगः ॥ ९७ ॥ नैर्ऋतार्धपदेषुचदौ
वारिकंश्वेतशरभारूढंत्रिनेत्रंसर्वाभरणभूषितंध्यात्वा ॥ होतस्वेतिमन्त्रस्यनरसिंहऋषिर्बृहतीछन्दोगणेशोदेवतादौवारिकप्रीतयेविनियो
गः ॥ ९८ ॥ श्यामंसुग्रीवंकृष्णमेषारूढंपीतवाससंध्यात्वा ॥ स्वादित्येतिमन्त्रस्यत्रिष्टुप्छन्दोवामनोदेवतासुग्रीवप्रीतयेविनियोगः ॥९९॥
सुमित्रियानइतिमन्त्रस्यकन्दर्पऋषिःपंक्तिश्छन्दःसूर्योदेवतावरुणप्रीतयेविनियोगः ॥१००॥ पुष्पदंतंपीतंमेषारूढंपीतवाससंध्यात्वा ॥ या
ओषधीरितिमन्त्रस्यमन्मथऋषिर्जगतीछन्दोवायुर्देवतापुष्पदंतप्रीतयेविनियोगः ॥ १०१ ॥ असुरंकृष्णंकृष्णमाल्यैरलंकृतंकृत्वा ॥ आकृ
ष्णेतिमन्त्रस्यहिरण्यवर्णऋषिर्जगतीछन्दःसवितादेवताअसुरप्रीतयेविनियोगः ॥ १०२ ॥ असुरंकृष्णंनागहारान्वितंपद्मासनस्थंध्यात्वा ॥
आब्रह्मन्निातिमंत्रस्यनालिनऋषिस्त्रिष्टुप्छन्दोभवानीदेवताश्वेसोमप्रीतयेविनियोगः ॥१०३॥ रोगंकृष्णंनीलेन्दीवरधरंश्वेतवृषभारूढंध्यात्वा ॥
नमस्तेरुद्रइतिमन्त्रस्यनारदऋषिःपंक्तिश्छन्दःश्रीर्देवतारोगप्रीतयेविनियोगः ॥ १०४ ॥ वायुकोणादारभ्यपूजयेत् ॥ वायुंधूम्रवर्णंध्वजह
स्तंमृगारूढंध्यात्वा ॥ देवाइतिमन्त्रस्यबृहतीछन्दोयमोदेवतानागप्रीतयेविनियोगः ॥ १०५ ॥ श्वेतंसोमंश्वेतवर्णासनस्थंध्यात्वाभद्र

बीजेनपूजयेत् ॥ १०६ ॥ रक्तंभल्लाटंपीतवाससंध्यात्वावह्निबीजेनपूजयेत् ॥ पीतवाससमजवाहंनहारेकयूरान्वितंवायुबीजेनमंदराद्यैःपू
जयेत् ॥१०७॥ रक्तांदितिंनागहारान्वितांरक्तपद्मासनस्थांध्यात्वा मानार्यइतिमन्त्रस्येतिपूजयेत् ॥१०८॥ मानोत्वाइतिमंत्रस्यभार्गवऋ
षिःपंक्तिश्छन्दःपृथिवीदेवतादितिप्रीतयेविनियोगः ॥ १०९ ॥ अदितिंपीतवर्णांसिंहारूढांपीतांबरधरांध्यात्वा ॥ हिरण्यवर्णइतिमंत्रस्य
जनार्दनऋषिर्बृहतीछन्दःसोमोदेवताअदितिप्रीतयेविनियोगः ॥ १०० ॥ एवंयथाविधायाथहोमंकुर्याद्यथाविधि ॥ होमांतेदक्षिणांदद्या
त्काञ्चनंहेमसंयुतम् ॥ १११ ॥ तडागयागपक्षेतुसुवर्णंचार्धमेववा ॥ ११२ ॥ इति श्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागे
दशमोध्यायः ॥ १० ॥ छ ॥ ॥ सूतउवाच ॥ ॥ अथपूजाक्रमंवक्ष्येपुराणस्मृतिचोदितम् ॥ उत्तरेपश्चिमेवाथपूर्वेचापिसमाच
रेत् ॥ १ ॥ नदीतीरेनेमिप्रांतेदशद्वादशसंख्यया ॥ मंडलंरचयेद्विप्राश्चरुकद्वयसंयुतम् ॥ २ ॥ त्रिभागंविभजेत्क्षेत्रंमध्यभागद्वयेनतु ॥
त्रिहस्तवेदिकांकुर्यात्तालोत्सेधामुदक्प्लवाम् ॥३ ॥ उत्तराशेदक्षिणेचारत्निहस्तांतरेऽपिच ॥ त्रिमेखलांहस्तमात्रांगुणवेदसमन्विताम् ॥४॥
मूलेसार्धंचशुक्लांचमेखलांतुतथैवच ॥ चतुरंगुलिकांवेदिंमध्योन्नतांप्रकल्पयेत् ॥५॥ षट्सप्तांगुलिकांयोनिंपश्चिमेमेखलोपरि ॥ विन्यसे
न्नाभिसंयुक्तमेवंकुंडंप्रकल्पयेत् ॥ ६ ॥ श्राद्धंवृद्धयात्मकंकुर्यात्संकल्पंमानसंचरेत् ॥ श्राद्धार्थंनैवसंकल्पेत्तथावैदेवदर्शने ॥ ७ ॥ गया
श्राद्धार्थकंचाष्टतीर्थंश्राद्धार्थमेवच ॥ ऐशान्यांकलशेदेवंपूजयेद्गणनायकम् ॥ ८ ॥ मध्येकुण्डेमहांश्चैवविष्णुदेवंदिगीश्वरान् ॥ ब्रह्माणंचा
ग्निकुंडेतुस्वैःस्वैर्मन्त्रैःप्रपूजयेत् ॥ ९ ॥ प्राणायामंविधायाथभूतशुद्धिंसमाचरेत् ॥ ध्यायेद्भाटवशिपुरुषंसर्वलक्षणसंयुतम् ॥ १० ॥ श्वेतं
चतुर्भुजंशांतंकुण्डलाद्यैरलङ्कृतम् ॥ पुस्तकंचाक्षमालांचवराभयकरंपरम् ॥ ११ ॥ पितृवैश्वानरोपेतंकुटिलभ्रूपशोभितम् ॥ करालवद
नंचैवआजानुकरलंबितम् ॥ १२ ॥ मूर्धन्यग्निंसमाविश्यमुखेवायुःसमाहितः ॥ पृथ्वीधरोर्यमाचैवतथाष्टवनेष्टितौ ॥ १३ ॥ वक्षस्थले
चापरांसंध्यायजेच्चैवयथाविधि ॥ नेत्रयोर्दितिपर्जन्यौश्रोत्रेदितीज्यपुत्रकौ ॥ १४ ॥ सर्पेन्द्रावासनस्थौचवामेदक्षेविभावयेत् ॥ सत्यसोमाग्न
यस्तत्राहोःपंचचपंचच ॥ १५ ॥ रुद्रश्चराजयक्ष्माचवामहस्तेव्यवस्थितौ ॥ पार्श्वेतुदक्षिणेतद्वाद्विरथश्चमहर्क्षकः ॥ १६ ॥ उभौज्ञेयौत

थाजान्वोरुभौगन्धर्वपुष्पकौ ॥ जंघयोर्भृंगसुग्रीवौस्फिचोर्दौवारिकोगणः ॥ १७ ॥ जयशक्रौतथामेढ्रेपदयोःपितरस्तथा ॥ एवंध्यात्वा न्यसेत्पुष्पंसोमेनैवंविचिंतयेत् ॥ १८ ॥ मन्दरंदीर्घयुक्तेनपडङ्गानिसमाचरेत् ॥ तावद्वीर्यततःकृत्वाप्रणवंब्रह्मणेतिच ॥ १९ ॥ वास्त्वी शायविद्महेतितन्नोविष्णुःप्रचोदयात् ॥ अनेनस्नापनंकुर्यात्पूजाद्रव्याणिप्रोक्षयेत् ॥ २० ॥ आसनंपूजयेत्पूर्वंधर्मेणापिस्वशक्तितः ॥ आ दौतुभास्करंसूर्यंशचीनाथंगणाधिपम् ॥ २१ ॥ आधारशक्तिंपृथिवींपूजयेत्तत्रपङ्कजम् ॥ वंदीशासनमित्युक्तंपूजयेदासनंततः ॥ २२ ॥ सितचन्दनयुक्तेनश्वेतपुष्पंप्रगृह्यच ॥ हरेर्ध्यानंततोध्यायेत्स्थापयेन्मध्यमण्डले ॥ २३ ॥ आवाह्यचासनंदद्यात्ततःपाद्यादिकंत्रयम् ॥ मधु पर्कंततोदद्याद्वास्तोष्पतिमथेश्वरम् ॥ २४ ॥ अस्यमन्त्रस्यचऋषिश्छन्दोगायत्रमीरितम् ॥ देवताचभवेद्ब्रह्मायोजयेदश्वमेधकम् ॥ २५ ॥ मंदरंविज यंसोमंमहादेवंचमाधवम् ॥ रुद्रंहरंजयंभंचपूर्वादिदलमूलके ॥ २६ ॥ जयाचविजयाचैवसत्यामायाशिवांबिका ॥ हासिनीकामिनीचैतादल मूलेषुभावयेत् ॥ २७ ॥ पुष्पाञ्जलित्रयंदद्याद्वास्तोष्पतयइत्यपि ॥ अर्घ्यमंत्रेणगंधाद्यैःपूजयेद्भूतिमिच्छता ॥ २८ ॥ वास्तोष्पतेभवमतेइतिध्या त्वाऋतंचेतिमंत्रेणपूजयेत् ॥ ऋषिर्नारायणश्छन्दोगायत्रीपरिकीर्तितम् ॥ २९ ॥ सूर्यश्चदेवताख्यातःप्रीणितःकुलिशायुधः ॥ सूर्यंरक्तासनारू ढंद्विभुजंरक्तवाससम् ॥ ३० ॥ रक्तपद्मद्वयधरंकुंडलाद्यैःसुशोभितम् ॥ एवंध्यात्वातुमतिमान्हंसंसमंत्रमीश्वरम् ॥ ३१ ॥ हंसस्यइतिमंत्रस्यऋषि रौतथ्यईरितः ॥ पाङ्क्तिश्छन्दःस्वयंदेवोविनियोगस्तुप्रीतये ॥ ३२ ॥ नीलोत्पलद्वयधरंसत्यंमृत्यूपरिस्थितम् ॥ स्वच्छश्वेतांबरधरंवरदंभक्तवत्सलम् ॥ ३३ ॥ स्वंमदात्वमितिमंत्रेणश्वेतचन्दनपुष्पकैः ॥ पूजयेत्परयाभक्त्यावस्त्रालंकारभूषणैः ॥ ३४ ॥ उद्धर्षणइतिमंत्रेणकृष्णपुष्पैस्तथार्चयेत् ॥ सत्य व्रतऋषिश्चास्यत्रिष्टुप्छंदोऽस्यदेवता ॥ ३५ ॥ सविताचैवविज्ञेयःप्रीतयेचवृषस्यच ॥ शुक्लवर्णंतथाकाशमृषिसंवैश्वसंस्तुतम् ॥ ३६ ॥ घटस्थं द्विभुजंध्यायेद्गदापद्मविधारिणम् ॥ शन्नोदेवीतिपठनाद्गन्धपुष्पादिभिर्यजेत् ॥ ३७ ॥ ऋषिःस्यात्कर्दमोविप्राश्छन्दोजागतिकातथा ॥ देवताचभवेच्चाग्निराकाशप्रीतयेन्यसेत् ॥ ३८ ॥ ध्वजहस्तंमहाबाहुंमरुद्भिश्चोपसेवितम् ॥ द्विभुजंधूम्रवर्णंचवायुंध्यात्वाप्रपूजयेत् ॥ ३९ ॥ राजानइतिमंत्रेणपूजयेत्सिततंडुलैः ॥ ऋषिर्नारायणश्छन्दोगायत्रीदेवताद्विजाः ॥ ४० ॥ देवताचभवेद्वायुःप्रीतयेतस्ययोजयेत् ॥ पूषा

रक्तश्चद्विभुजोरक्तपद्मासनस्थितः ॥ ४१ ॥ राजानइतिचऋचापूजयेद्गन्धचन्दनैः ॥ गोभिलात्यऋषिःपङ्क्तिश्छन्दोऽस्यजगतीस्मृतम् ॥
॥ ४२ ॥ देवताचभवेद्वायुःप्रीतयेविनियोजयेत् ॥ वितथंश्यामवर्णंचचतुर्भिर्बाहुभिर्वृतम् ॥ ४३ ॥ मृगाक्षपाशखट्वाङ्गशूलंचदधतंकरैः ॥
मेषारूढंविशालाक्षंराजानोमह्यमीरयन् ॥ ४४ ॥ गृहक्षतंतथाशुक्लंचतुर्भिर्गदर्भैर्वृतम् ॥ शूलंदंडंचखट्वाङ्गधारिणंवृषवाहनम् ॥ ४५ ॥
पीतवस्त्रधरंदेवंजटामुकुटसंयुतम् ॥ आशुःशिशानइतिमन्त्रेणपूजयेद्गन्धचन्दनैः ॥ ४६ ॥ पुष्पदंतऋषिस्त्रिष्टुप्छन्दश्चपरिकीर्तितम् ॥
ईश्वरस्यदेवतायाःप्रीतयेविनियोजयेत् ॥ ४७ ॥ यमंध्यायेत्कृष्णवर्णंमहिषस्थंद्विबाहुकम् ॥ दण्डपाशधरंचैवकेयूराद्यैर्विभूषितम् ॥
॥ ४८ ॥ ईशानेतिचमंत्रेणपूजयेत्कुसुमादिना ॥ वामदेवऋषिःपंक्तिश्छन्दःकालोस्यदेवता ॥ ४९ ॥ षडाननंचगंधर्वंपीतंध्यायेच्चतुर्भु
जम् ॥ पीतांबरधरंचैवनानाभरणभूषितम् ॥ ५० ॥ यद्देवइतिमन्त्रेणपूजयेत्कुसुमादिना ॥ हारितोष्यइतिप्रोक्तोजगतीछन्दईरितम् ॥
॥ ५१ ॥ हिरण्यगर्भोदेवतास्यप्रीतयेविनियोजयेत् ॥ भृङ्गराजंजटारूढंस्वच्छंपीतांबरंशुभम् ॥ ५२ ॥ चक्षुःपीतेतिमंत्रेणपूजयेद्गन्ध
चन्दनैः ॥ ऋषिश्चागस्तिराख्यातस्त्रिष्टुप्छन्दःप्रकीर्तितम् ॥ ५३ ॥ विश्वेदेवादेवताचभृङ्गराजस्यप्रीतये ॥ पीतंमृगंमृगारूढंजटामुकुट
मंडितम् ॥ ५४ ॥ परोदेवाइतिमंत्रेणपूजयेद्बलिपायसैः ॥ कपिलश्चऋषिःप्रोक्तोगायत्रीछन्दईरितम् ॥ ५५ ॥ वरुणोदेवताचास्यप्रीतये
विनियोजयेत् ॥ ध्यायेत्पितृगणंशुक्लंचतुर्भिर्बाहुभिर्वृतम् ॥ ५६ ॥ पितृभ्यइतिमंत्रेणपूजयेत्कुसुमादिना ॥ शुनःशेपऋषिश्चास्यात्रिष्टुप्छ
न्दश्चदेवता ॥ ५७ ॥ विश्वेदेवाःसमायाताःपितृमेधेनपूजयेत् ॥ दौवारिकंचाष्टभुजंकृष्णवर्णंविचिन्तयेत् ॥ ५८ ॥ रक्तवासंपिङ्गलाक्षं
कृष्णव्याघ्रोपरिस्थितम् ॥ योनःपितेतिमंत्रेणपूजयेद्भक्तितत्परः ॥ ५९ ॥ वैश्वानरऋषिश्चास्यगायत्रीछन्दईरितम् ॥ देवताचभवेच्छक्ति
र्विनियोगश्चपूजने ॥ ६० ॥ शंखाभंचैवसुग्रीवंद्विभुजंचक्रधारिणम् ॥ हंसारूढंमहाकायंबलिविज्ञानकारणम् ॥ ६१ ॥ शंखपद्मधरंचैव
महिषस्थंविचिन्तयेत् ॥ सइषुहस्तेतिमंत्रेणपूजयेद्रक्तभूषणैः ॥ ६२ ॥ ऋषिःशंखस्तथाच्छन्दःपंक्तिःसोमोऽथदेवता ॥ श्वेतंजलाधिपंध्या
येद्गन्धवाद्यैश्चवेष्टितम् ॥ ६३ ॥ ऋष्यासनगतंध्यायेच्छ्वेतगंधेनचार्चयेत् ॥ बृहस्पतेपरिदीयाइतिमंत्रेणभक्तितः ॥ ६४ ॥ त्र्यंबकोऽस्य

ऋषिस्त्रिष्टुप्छन्दोदेवोजलाधिपः ॥ ध्यायेच्चअसुरंरक्तंकरालंनरवाहनम् ॥ ६५ ॥ दशभिर्बाहुभिर्युक्तंकृष्णवस्त्रानुलेपनम् ॥ शन्नोदेवीतिम
न्त्रेणकृष्णपुष्पैःप्रपूजयेत् ॥ ६६ ॥ ऋषिर्वैश्वानरश्छन्दोविराडित्यभिधीयते ॥ वैश्वानरोत्तरोदेवःप्रीतयेतस्ययोजयेत् ॥ ६७ ॥ शेषं
षडाननंध्यायेत्कृष्णंचमधुपिंगलम् ॥ मेषस्थंकुंडलोपेतंनागयज्ञोपवीतिनम् ॥ ६८ ॥ उद्बुध्यस्वेतिमंत्रेणपूजयेद्भूतिमिच्छता ॥ पापंरक्तं
त्रिनेत्रंचरक्तंप्रांतेविचिंतयेत् ॥ ६९ ॥ रक्तश्मश्रुधरंचैववरहस्तंविचिन्तयेत् ॥ सिद्धोवीरेतिमंत्रेणकृष्णपुष्पैरथार्चयेत् ॥ ७० ॥ यमंचक्रक
राक्षंचआकुञ्चन्मूर्धजंद्विजाः ॥ कपिलोऽस्यऋषिश्छन्दोऽनुष्टुप्चैवप्रकीर्तितम् ॥ ७१ ॥ देवताचयशःख्यातंप्रीतयेविनियोजयेत् ॥
यमंचक्रकराक्षंचक्षमाकुञ्चितमूर्धजम् ॥ ७२ ॥ खरस्थंद्विभुजंध्यायेदिमंमंत्रमुदीरयेत् ॥ वासुकिःस्यादृषिश्चास्यपंक्तिश्छन्दश्चदेवता ॥
॥ ७३ ॥ हिरण्यगर्भइत्युक्तःप्रीतयेऽस्यनियोजयेत् ॥ अर्धपीतंचद्विभुजंरक्ताक्षंधूम्रमेववा ॥ ७४ ॥ देवताभिश्चसंपन्नंवातोवारेतिरेवच ॥
ऋषिर्वायुश्चगायत्रीछंदोवायुश्चदेवता ॥ ७५ ॥ मुग्धरक्तंशङ्खचक्रगदापद्मधरंतथा ॥ पीतवस्त्रंपन्नगस्थंहारकेयूरमंडितम् ॥ ७६ ॥ अव
सृष्टापरापतइतिमंत्रेणपरिपूजयेत् ॥ अग्निश्चास्यऋषिःप्रोक्तश्छन्दःसोमश्चदेवता ॥ ७७ ॥ पीतंभल्लाटकंध्यायेत्पद्मस्थंरक्तभूषणम् ॥
द्विभुजंपद्महस्तंचदेवमेवंविचिन्तयेत् ॥ ७८ ॥ यन्मातुरितिमंत्रेणपूजयेत्सिततंदुलैः ॥ जम्भकोऽस्यऋषिश्छन्दोगायत्रीसमुदाहृता ॥
॥ ७९ ॥ देवताचभवेत्कुंभःप्रीतयेविनियोगतः ॥ सोमंध्यायेच्छ्यामरूपंपद्मासनगतंपरम् ॥ ८० ॥ नानाभरणसंपन्नंकिरीटवरधारि
णम् ॥ मर्माणितेतिमंत्रेणगन्धाद्यैरपिपूजयेत् ॥ ८१ ॥ ऋषिःस्वार्थोवेदश्छन्दोजगतीत्यभिधीयते ॥ देवताचभवेत्सोमःप्रीतयेविनियोज
येत् ॥ ८२ ॥ दर्पंध्यायेत्कृष्णवर्णंकृष्णाम्बरधरंतथा ॥ नागयज्ञोपवीतिंचशिखिस्तंभंद्विजोत्तमाः ॥ ८३ ॥ पञ्चदीशेतिमन्त्रेणगन्धाद्यैःपरि
पूजयेत् ॥ मंत्रश्चास्यऋषिश्चास्यपञ्चायतनमीरितम् ॥ ८४ ॥ पंक्तिश्छन्दस्तथाप्रोक्तंदेवःपञ्चाननःस्मृतः ॥ श्यामवर्णादितिंध्यायेद्द्वि
भुजांपीतविग्रहाम् ॥ ८५ ॥ सर्वलक्षणसंपन्नांसर्वालङ्कारशोभिताम् ॥ सुपर्णोऽसीतिमन्त्रेणपूजयेत्पीतचन्दनैः ॥ ८६ ॥ ऋषिर्नारायणश्छ
न्दोजगतीपरिकीर्त्यते ॥ भवेद्देवोभार्गवश्चइष्टार्थेपरिपूजयेत् ॥ ८७ ॥ रक्ताभामादितिंध्यायेत्सर्वालङ्कारभूषिताम् ॥ शुक्रांभारितिमन्त्रे

णगन्धाद्यैरभिपूजयेत् ॥ ८८ ॥ वामदेवऋषिश्चास्यगन्धाद्यैरभिपूजयेत् ॥ देवःशुक्रःसमाख्यातःस्तुतौचविनियोजयेत् ॥८९॥ ईशानादि
कोणगतान्पूजयेत्सुसमाहितः ॥ आपंध्यायेच्छुक्लवर्णंकुण्डलाद्यैर्विभूषितम् ॥ ९० ॥ इदंविष्णुरितिमंत्रेणात्रिगन्धेनसमर्चयेत् ॥ ऋषिःस्यात्क
र्दमश्छन्दोविराडित्यभिधीयते ॥ ९१ ॥ देवःसोमःसमाख्यातःप्रीतयेविनियोजयेत्॥सरितंद्विभुजंरक्तंरक्तश्वेतांबरान्वितम् ॥९२॥ हरिचन्दन
लिप्ताङ्गंवरदंतंविचिन्तयेत्॥पयसाशुक्रइतिमन्त्रेणपूजयेत्कमलादिना॥९३॥नारायणऋषिश्चास्यपंक्तिश्छन्दःप्रकीर्त्यते॥नारायणःस्वयंदेवः
प्रीतयेविनियोजयेत् ॥ ९४ ॥ जयंध्यायेत्पीतवर्णंद्विभुजंवरहस्तकम् ॥ देवंकिरीटसम्पन्नंसर्वालंकारभूषितम् ॥ ९५ ॥ दृष्ट्वापारिश्रुतइतिम
न्त्रेणानेनपूजयेत् ॥ ऋषिर्नारायणश्छन्दःपंक्तिःसोमोऽथदेवता ॥ ९६ ॥ रुद्रंध्यायेद्रक्तवर्णंशीतांशुकृतशेखरम् ॥ द्विभुजंशूलहस्तंचड
मरुंचपराभवेत्॥९७॥दिवोमूर्धन्निातमंत्रेणऋषयःसमुदाहृताः॥ऋषिःस्यात्काशपश्छन्दोविराडित्यभिधीयते॥९८॥स्वयंदेवोविनियोगःस्तु
तौचविनियोजयेत्॥द्विभुजंरक्तपद्मस्थंपंकजद्वयधारिणम् ॥९९॥ अस्यकिरीटइतिमन्त्रेणरक्तस्रक्चन्दनादिभिः॥पूजयेत्परयाभक्त्याऋषिर्नी
लउदाहृतः ॥ १०० ॥ त्रिष्टुप्छन्दोदेवतास्याद्रुद्रोपिपरिकीर्तितः ॥ सवितारंतथाध्यायेत्पद्मस्थंद्विभुजंप्रभुम् ॥ १०१ ॥ नानाभरणशोभा
ढ्यंसप्ताश्वरथमंडितम् ॥ यद्देवाइतिमन्त्रेणगन्धाद्यैःपरिपूजयेत् ॥ १०२ ॥ ऋषिरौतथ्यआख्यातःप्रीतयेविनियोजयेत् ॥ ध्यायेद्रक्तंवि
वस्वंतंद्विभुजंपद्मविग्रहम्॥ १०३ ॥ अविद्याइतिमंत्रेणपूजयेद्गन्धचन्दनैः ॥ ऋषिर्गन्धःसमाख्यातास्त्रिष्टुप्छन्दश्चईरितः॥१०४॥देवताचभवे
त्सोमःस्तुतौचविनियोजयेत् ॥ विबुधाधिपंततोध्यायेत्पीतंवृषभवाहनम्॥१०५॥चतुर्भुजंयष्टिहस्तमक्षमालैकहस्तकम् ॥त्रिनेत्रंरक्तवस्त्रंचमु
कुटाद्यैरलङ्कृतम्॥१०६॥ ऋषिर्हारितइत्युक्तोजगतीच्छन्दईरितम्॥देवताचभवेच्छक्तिःप्रीतयेविनियोजयेत् ॥ १०७॥ मित्रंध्यायेच्छुक्लवर्णं
वराभयकरंपरम्॥मेषस्थंचत्रिनेत्रंचकिरीटवरमंडितम्॥१०८॥ धनाकरास्त्वितिमंत्रेणपूजयेद्दधिपायसैः ॥ ऋषिरौतथ्यइत्युक्तोजगतीछन्दई
रितम् ॥ १०९ ॥ देवताचभवेद्यक्ष्माप्रीतयेविनियोजयेत् ॥ पीतंस्याद्राजयक्ष्माणंकरालंचविचिन्तयेत् ॥ ११० ॥ यशोरूपमितिमन्त्रेण
गंधाद्यैःपरिपूजयेत् ॥ दध्यङ्ङाथर्वणऋषिर्गायत्रीछन्दईरितम् ॥ १११ ॥ यक्ष्माचदेवताचैवस्तुतौचविनियोजयेत् ॥ शुक्लाम्बरधरंध्या

योद्विभुजंशिखिवाहनम् ॥११२॥ यमंविनेतिमंत्रेणपूजयेद्भक्तितत्परः ॥ ऋषिःस्यान्नारदःप्रोक्तश्छन्दोनुष्टुप्प्रकीर्तितम् ॥११३॥ विवस्वान्दे
वताचैवक्रतौचविनियोजयेत् ॥ एवंध्यात्वाविवस्वंतंमहाकायंमहोदरम् ॥ ११४ ॥ आभिन्नरूपमंत्रेणगंधाद्यैःपरिपूजयेत् ॥ काश्यपोस्यऋ
षिश्छंदस्त्रिष्टुब्देवःशचीपतिः ॥ ११५॥ बहिरीशानकोणेषुदेवादीन्परिपूजयेत् ॥ कूष्माण्डैर्वरणापुष्पैःक्षौरकैर्वासमर्चयेत् ॥११६॥ पीतां
करालिकांध्यायेच्चरकींवरवर्णिनीम् ॥ स्वब्जस्थांद्विभुजांचैवगुञ्जाहारोपशोभिताम् ॥ ११७ ॥ पीतिन्यरूपमन्त्रेणपूजयेद्भूतिमिच्छुकः ॥
बलदेवऋषिश्चास्यछन्दोगौरीचदेवता ॥ ११८ ॥ ध्यायेद्विदारिकांरक्तांनवयौवनसंयुताम् ॥ पवित्रेणपुनीहीतिमंत्रेणानेनपूजयेत् ॥११९॥
ऋषिर्गर्गःसमाख्यातस्त्रिष्टुप्छंदोस्यदेवता ॥ रुद्रोपिचसमाख्यातःस्तुतौचविनियोजयेत् ॥ १२० ॥ पापादिराक्षसींध्यायेत्सौरभेयोपरि
स्थिताम् ॥ कयानइतिमंत्रेणपूजयेद्गन्धचन्दनैः ॥ १२१ ॥ ऋषिःसुवर्णआख्यातःपाङ्क्तिश्छन्दःप्रकीर्तितम् ॥ देवताचमहादेवइष्टार्थेविनियो
जयेत् ॥१२२॥ कुंडवेद्याअंतरेचस्थापयेद्विधिवद्बुधः ॥ पर्वभाग्रंमृदंचैवगजदंतमृदंतथा ॥१२३ ॥ वल्मीकेसंगमेचैवराजद्वारचतुष्पथात् ॥
कुशमूलमृदंचैवयज्ञियस्यवनस्पतेः ॥ १२४ ॥ इन्द्रवल्लीतथाक्रांतअमृतीत्रपुषस्यच ॥ मालतीचंपकंचैवतथाउर्वारुकस्यच ॥ १२५ ॥
पारिभद्रस्यपत्रैश्चपरितःपरिवेष्टनम् ॥ पञ्चतुङ्गस्यपरितोमुखेकुर्यात्फणान्वितम् ॥१२६॥ श्रीफलंबीजपूरंचनालिकेरंचदाडिमम् ॥ धात्रीजंबु
फलंचैवअन्यथादोषमादिशेत् ॥ १२७ ॥ पञ्चरत्नंसुवर्णंचनिक्षिपेद्वरुणंयजेत् ॥ पञ्चोपचारैर्विधिवद्गन्धपुष्पादिभिर्यजेत् ॥ १२८ ॥
उद्वर्तनइतिमंत्रेणवरुणंचपुनर्यजेत् ॥ अस्यमंत्रस्यचऋषिर्विष्णुश्छन्दउदाहृतम् ॥ १२९ ॥ गायत्रीदेवतापाशीतस्यप्रीतयेविनियोजयेत् ॥
पञ्चगन्धान्विनिक्षिप्यहस्तंदत्वापठेत्ततः ॥ १३० ॥ सर्वेसमुद्राःसरितःसरांसिचमहाह्रदाः ॥ आयांतुसर्वपापघ्नाःसर्वलोकसुखावहाः
॥ १३१ ॥ गङ्गाद्याःसरितःसर्वास्तीर्थानिजलदानदाः ॥ आयांतुयजमानस्यदुरितक्षयकारकाः ॥ १३२ ॥ अघोराज्यष्टकंकृतावास्तोष्पत
यइत्यपि ॥ शतंवाचाष्टसंयुक्तंसहस्रंवाविशेषतः ॥ १३३ ॥ शतार्धंवाहुनोद्विप्रास्तिलैर्वातंडुलैःसह ॥ पालाशैर्वापिप्पलैर्वौदुंबरैर्वासमाचरेत् ॥
॥ १३४ ॥ पयोदध्यादिभिर्वापिमध्वाज्यैर्वाविशिष्यते ॥ अन्येषांचव्रतेनैवएकैकामथवाहुतिम् ॥ १३५ ॥ अष्टाविंशतिभिश्चान्यैर

ष्टाष्टौपंचपंचवा ॥ १३६ ॥ चरक्यादींश्चासनैश्चपिष्टकैर्वटकेनवा ॥ रक्तपुष्पेणपत्रेणत्रिमध्वक्तेनयत्नतः ॥ १३७ ॥ वास्तोष्पतेहृदंनश्च
यजेद्वास्तुपातिंयदा ॥ पंचोपचारैर्विधिवत्सांगोपांगैरनंतरम् ॥ १३८ ॥ बलिमासादयेत्पश्चाद्दद्यादेकैकशःक्रमात् ॥ ब्राह्मणेश्चैवदद्याच्चसदा
आज्यंसमाक्षिकम् ॥ १३९ ॥ शाल्यन्नंशिखिनेदद्यात्तथानीलोत्पलानिच ॥ ओदनंसोत्पलंदद्यात्पर्जन्यायाविचक्षणः ॥ १४०॥ जयायपिष्ट
कंकार्यमिन्द्रायघृतमोदकम् ॥ सूर्यायपिष्टकान्नंचसत्यायययवपूलिकाम्॥१४१॥ भ्रमायमत्स्यमांसान्नंशष्कुलीमथपिष्टकम्॥वायव्येचतथास
क्तून्पूष्णेअपूपमेवच ॥ १४२ ॥ वितथायकलायान्नंगृहर्क्षायसमाक्षिकम् ॥ पूष्णेथकृसरान्नंचशाल्यन्नंचनिवेदयेत् ॥ १४३ ॥ गन्धर्वायक
स्तूरिकान्नंकृसरंभृङ्गराजके ॥ मृगाययावकान्नंचपितृभ्योमुद्गपायसम् ॥ १४४ ॥ दौवारिकायकृशराननडुहेचपूपकम् ॥ पायसंपुष्प
दंतायवरुणायचापिष्टकम् ॥ १४५ ॥ असुरायमोदकांश्चैवदद्यादापिक्षयेसुरा ॥ घृतौदनंचसोमायकणान्नंयक्ष्मणेददेत् ॥ १४६ ॥ रोगाय
घृतलड्डूकसपायसगुडौदनम् ॥ अक्षायाविविधान्नंचभल्लाटायतथैवच ॥१४७॥ सोमायमधुशाल्यन्नंनागायगुडपिष्टकम् ॥ अदित्यैचापिशो
धूमंघृतपक्वंनिवेदयेत् ॥ १४८ ॥ दित्यैदद्यात्तथाक्षीरंसितशर्करयासह ॥ क्षीरान्नंचैवपूष्णेचआपवत्सायवैदधि ॥ १४९ ॥ सावित्र्यै
लड्डुकान्नंचसवित्रेचगुडौदनम् ॥ जयायघृतमन्नंचमिष्टान्नंचविवस्वते ॥ १५० ॥ विरूपायचतद्दद्याद्धरिद्रान्नंतथैवच ॥ घृतौदनंचचित्रायरु
द्रायघृतपायसम् ॥ १५१ ॥ मांसौदनंयक्ष्मणेचकृसरंवरुणायच ॥ अर्यम्णेशर्करापूपंबाहिर्दद्याच्चतुष्टयम् ॥ १५२ ॥ चित्रौदनंसमांसंचम
त्स्यान्नंगुडपिष्टकम् ॥ प्रतिदेवोपरिक्षीरंघृतक्षीरसमन्वितम् ॥ १५३ ॥ तीर्थतोयसमायुक्तंसुगंधेनसमन्वितम् ॥ पताकादेववर्णेनदद्याद्ब्र
ह्मादितिक्रमात् ॥ १५४ ॥ मंत्रंजपेत्स्वसामर्थ्यात्स्वसामर्थ्यंस्तुतिंपठेत् ॥ पुरुषस्तवस्यसूर्यऋषिर्जगतीछन्दः सवितादेवतासोमपाके
स्तुतौविनियोगः ॥१५५॥ शंकरउवाच ॥ विष्णुर्जिष्णुर्विभुर्यज्ञोयज्ञियोयज्ञपालकः ॥ नारायणोनरोहंसोविष्वक्सेनोहुताशनः ॥ १५६ ॥
यज्ञेशःपुण्डरीकाक्षःकृष्णःसूर्यःसुरार्चितः ॥ आदिदेवोजगत्कर्तामण्डलेशोमहीधरः ॥ १५७ ॥ पद्मनाभोहृषीकेशोदातादामोदरोहरिः ॥
त्रिविक्रमस्त्रिलोकेशोब्रह्मणःप्रीतिवर्द्धनः ॥ १५८ ॥ भक्तप्रियोऽच्युतःसत्यःसत्यवाक्योध्रुवःशुचिः ॥ संन्यासीशास्त्रतत्त्वज्ञस्त्रिपंचाश

द्रुणात्मकः ॥ १५९ ॥ विदारीविनयः शांतस्तपस्वीविद्युतप्रभः ॥ यज्ञस्त्वंहिवषट्कारस्त्वमोङ्कारस्त्वमग्नयः ॥ १६० ॥ त्वंस्वधात्वंहि
स्वाहात्वंस्वधाचपुरुषोत्तमः ॥ नमोदेवादिदेवायविष्णवेशाश्वतायच ॥ १६१ ॥ अनंतायाप्रमेयायनमस्तेगरुडध्वज ॥ ब्रह्मस्तवमिदंप्रो
क्तंमहादेवेनभाषितम् ॥ १६२ ॥ प्रयत्नाद्यःपठेन्नित्यममृतत्वंसगच्छति ॥ १६३ ॥ ध्यायंतियेनित्यमनंतमच्युतंहृत्पद्ममध्येस्वयमा
व्यवस्थितम्॥उपासकानांप्रभुमेकमीश्वरंतेयांतिसिद्धंपरमंतुवैष्णवम् ॥१६४ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेद्वादशोऽ
ध्यायः॥१२॥ ७॥ सूतउवाच ॥ ततोभेर्यादिघोषेणयजमानउदङ्मुखः॥कनकतोयेनगन्धेनमुद्गलाग्रेणलेपयेत् ॥१॥ ऐशान्यांमध्यभागेवा
यजेद्वासुसमाहितः ॥ वर्तुलाकारयेद्यस्मान्मनइच्छतिसंजपन् ॥ २ ॥ ऋषिःकंठोथगायत्रीछन्दइत्याभिधीयते ॥ देवतापृथिवीचैवस्तु
तौचविनियोजयेत् ॥ ३ ॥ विवरेपूजयेत्कर्मब्रह्माणंचधराधरम् ॥ पृथिवीगन्धपुष्पाद्यैर्नैवेद्यैर्विविधैरपि ॥ ४ ॥ अग्रतोऽष्टदलंलेख्यं
स्थापयेत्कलशंततः ॥ मुखेविधायकनकंराजतेनविनिर्मितम् ॥ ५ ॥ शुक्तिशङ्खसमंवापिविश्वामित्रसमुद्भवम् ॥ पूजयेत्तीर्थतोये
नगन्धपुष्पाक्षतादिना ॥ ६ ॥ विष्णुक्रांतावचाकुष्ठचन्दनेनविलोडितम् ॥ क्षीरंचमातुलिङ्गंचसावित्रंचसदूर्वया ॥ ७ ॥ दध्यक्षतंमधुयुत
मेवमर्घ्यंचसादयेत् ॥ सितचन्दनवस्त्राद्यैः शाल्यैश्चविविधैरपि ॥ ८ ॥ अव्रणंकलशंकृत्वापञ्चवर्णसमन्वितम् ॥ आवाहयेत्तोयनिधिं
मंत्रेणानेनभक्तितः ॥ ९ ॥ आयाहिभगवन्देवतोयमूर्तेजलेश्वर ॥ हृद्गृणार्घ्यंमयादत्तंपरितोषायतेनमः ॥ १० ॥ गृहेभ्यश्चैवसोमायत्वष्ट्रेचैव
चशूलिने ॥ इमंमेवरुणेत्यादिप्रत्येकंस्याद्धतित्रयम् ॥ ११ ॥ ततोर्घ्यदानंविधिवत्क्षीरेणहविषामधु ॥ यजमानःसपत्नीकःकुंभंकुक्षौनिधा
यच ॥ १२ ॥ हिरण्यगर्भेतिमंत्रस्यभरद्वाजऋषिःस्मृतः ॥ छन्दश्चजगतीख्यातोदेवताचजलाधिपः ॥ १३ ॥ वरुणस्योत्तंभनेतिमंत्रस्य
जलकुंभंनिवेदयेत् ॥ अस्यमन्त्रस्यचऋषिर्नारदःपरिकीर्तितः ॥ १४ ॥ विराट्छन्दश्चईशानोदेवतासमुदाहृता ॥ मोचयेन्मीनयुग्मंचमे 
षयुग्मंतथैवच ॥ १५ ॥ संभवेपक्षियुग्मंचआडीवाचक्रवाककम् ॥ मोचयेन्नागयुग्मंचआयुर्वृद्धेश्चहेतवे ॥ १६ ॥ दिक्षुजीवांतिकांदद्याद्रा
क्षसेभ्योबलिंहरेत् ॥ निर्मितंमाषभक्तेनरक्तपुष्पैरलंकृतम् ॥ १७ ॥ क्षात्रकोलक्ष्मणश्चैवमाणिभद्रोगणेश्वरः ॥ सबिंदुकेनहंतेनदिक्षुमध्येय

थाक्रमात् ॥ १८ ॥ येभवाभाविनोभूतायेचतेषुमयासिनः ॥ आहरंतुबलिंतुष्ट्याप्रयच्छंतुशुभंमम ॥ १९ ॥ इत्युक्त्वाचबलिंदद्यान्नमस्कु
र्यादनंतरम् ॥ दद्यात्पयास्विनींगांचआचार्यायविशेषतः ॥ २० ॥ अन्येषांहिहिरण्यंचगांचदद्याद्द्विजन्मने ॥ व्याहृतित्रितयंचैवततोवारु
णपंचकम् ॥ २१ ॥ प्राजापत्यंस्विष्टकृच्चजुहुयात्तदनंतरम् ॥ घृतैःस्विष्टकृतंनास्तितथारसविसारकैः ॥ २२ ॥ पद्मोत्पलंमातुलिङ्गंपण
सेमातुलुंगके ॥ मधुकेविश्वपुष्पेचआम्रातकेचकाशके ॥ २३ ॥ अभिषेकंततःकुर्यात्सुवास्त्वितिचवैजपन् ॥ दद्यात्पूर्णांचाविधिवत्सूर्या
याऽर्घ्यंनिवेदयेत् ॥ २४ ॥ पञ्चदोषंपुरस्कृत्वाब्राह्मणानुमतेनच ॥ गृहंप्रविश्यचततोब्राह्मणानथभोजयेत् ॥ २५ ॥ दीनांधकृपणेचैवदद्या
द्वित्तानुसारतः ॥ ज्ञातिभिःसहभुञ्जीतदधिक्षीरामिषंविना ॥ २६ ॥ नक्षीरंचकषायंचभर्जितंशाकमेवच ॥ नकाण्डंचनपुष्पंचकरीरंच
कदाचन ॥ २७ ॥ शाल्यन्नंमूलकंचैवपनसाम्रफलानिच ॥ मस्तंमधुघृतगुडंमातुलिंगंससैंधवम् ॥ २८ ॥ बदरंधातकिफलंकुन्दपुष्पंतथा
तिलम् ॥ एतत्प्रशस्तंजानीयान्मरीचानिविशेषतः ॥ २९ ॥ त्रिरात्रमथसप्ताहंपरित्यज्यखलेततः ॥ पञ्चाङ्कंततःकुर्यात्स्थापयेन्नेति
युग्मकम् ॥ ३० ॥ प्रथमाचार्कहस्तेनद्वितीयादशहस्तकम् ॥ वितस्तेतुभवेच्छतंद्विगुणंतदनंतरम् ॥ ३१॥ शतार्धंचततःपश्चात्षष्टिहस्त
मनंतरम् ॥ ३२ ॥ इति श्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेऽर्घ्यदानविधौत्रयोदशोऽध्यायः ॥ १३ ॥ ७ ॥ ॥ सूतउवाच ॥ ॥
स्वगृह्याग्निविधिंवक्ष्येयोगभेदेषुसत्तमाः ॥ नपरोक्तंविधानेनभयदंकीर्तिध्वंसनम् ॥ १ ॥ पुत्रमेवचकन्याश्चजनिष्याश्चापरेसुताः ॥ गृह्या
इतिसमाख्यातायजमानस्यदायदाः ॥ २ ॥ तेषांसंस्कारयागेषुशान्तिकर्मक्रियासुच ॥ आचार्यविहितःकल्पस्तस्माच्चक्षइतिस्मृतः ॥ ३ ॥
त्रिकुशंपरिगृह्णातिततश्चकुरुतेदृढम् ॥ ऋषिर्दक्षश्चजगतीछन्दोविष्णुश्चदेवता ॥ ४ ॥ कश्यपस्तृप्यतामितिभूरसीतिचशोधनम् ॥
ऋषिःसुवर्णगायत्रीजगतीछन्दइष्यते ॥ ५ ॥ देवताचभवेत्सूर्यःपृथिवीशोधनेन्यसेत् ॥ ऐशान्यादिक्रमेणैवप्रादक्षिण्येनयत्नतः ॥
॥ ६ ॥ यत्पवित्रेतिमंत्रेणतर्जन्यंगुष्ठयोरपि ॥ कुशगर्भत्रयेणापिभ्रामयेद्दलयाकृति ॥ ७ ॥ परिसमूहनमित्युक्तंस्नपनंशृणु
सत्तमाः ॥ ईशानादींश्चसंस्कारंकुर्यात्परिसमूहनम् ॥ ८ ॥ प्रतिष्ठायांचरेत्यादिनैऋंत्यादिग्रहंमखे ॥ परिसमूहनमैन्द्र
स्यपर्वतोऽस्यऋषिःस्मृतः ॥ ९ ॥ पंक्तिश्छन्दःसमुद्दिष्टमिन्द्राणीचाथदेवता ॥ गोमयंचात्रिगंधंचपंचमूर्तिकयापिच ॥ १० ॥ क

निष्ठंगुह्यकंत्यक्त्वादेवतार्थैनलेपयेत् ॥ मानस्तोकेनेतिऋचाविश्वेदेवश्चपूज्यताम् ॥ ११ ॥ ऋषिःस्यात्काश्यपश्छन्दोविश्वेदेवःप्रकीर्तितः ॥ योजयेल्लेपयेद्विद्वान्घटमाद्यसत्तमाः ॥१२॥ मध्यमातर्जनीभ्यांचकुशमारभ्यदक्षिणम् ॥ चतुरस्रीकृतंक्षेत्रंहस्तमानंतथाननम्॥१३॥ यज्वाभिरितिमन्त्रेणसूर्यःप्रीणातिसत्तमाः ॥ दक्षेसार्धांगुलंत्यक्त्वापश्चिमेनपरित्यजेत् ॥ १४ ॥ उत्तराग्रांलिखेद्रेखामन्यथामङ्गलंभवेत् ॥ आप्यायस्वेतिमन्त्रस्यधन्वंतरऋषिःस्मृतः ॥१५ ॥ त्रिष्टुप्छन्दःसमाख्यातःसविताचात्रदेवता ॥ तल्लग्नंदक्षिणेचैकंपूर्वार्द्धद्वादशाङ्गुलम् ॥१६॥ अन्यांगुलांतरंचैकंततःसप्तांगुलंभवेत् ॥ कुशमूलेनस्वर्णेनप्रतिष्ठायांचराजते ॥ १७ ॥ अङ्गुष्ठानामिकाभ्यांचसंज्योतीतिचसंजपन् ॥ संस्मरेन्मित्रावरुणौऋषिरीतथ्यसंज्ञकः ॥ १८ ॥ पंक्तिश्छन्दःशिवोदेवोरेखामथचयोजयेत् ॥ तेनैवोर्द्धंकरौकुर्याद्दक्षवामेसकृत्सकृत् ॥ १९ ॥ भास्वरायक्षिपेदग्नौततऊर्ध्वंरणंस्मृतम् ॥ सदसंपद्दषिःकर्णौविराडितिउदाहृतः ॥ २० ॥ छन्दइन्द्रोदेवताचपृथिव्यादेवताभवेत् ॥ कुशपुष्पोदकेनापिदेवतीर्थेनसत्तमाः ॥ २१ ॥ पञ्चगव्येनमतिमान्पञ्चरत्नोदकेनच ॥ पञ्चपल्लवतोयेनमहायोगेविशेषतः ॥ २२ ॥ अथोनस्यचमन्त्रेणवसिष्ठःपरिकीर्तितः ॥ छन्दोऽथदेवीगायत्रीदेवतागणनायकः ॥ २३ ॥ कीशादग्निंसमादायमेगृह्णामीतिसंपठन् ॥ मेगृह्णामीतिमंत्रस्यऋषिगौतमईरितः ॥ २४ ॥ छन्दोनुष्टुप्समाख्यातंवामदेवोऽथदेवता ॥ क्रव्यादग्निंपरित्यज्यक्रव्यादंमग्निमरियन् ॥ २५ ॥ मन्त्रेणानेनमतिमान्दाक्षिणस्यांविनिक्षिपेत् ॥ अस्यमन्त्रस्यहारीतऋषिःस्याच्छन्दइष्यते ॥२६॥ देवतावामदेवोऽपिदाहेपिविनियोजयेत् ॥ आवाहनंततःकुर्यात्संसरक्षेतिसंजपन् ॥ २७ ॥ संसरक्षेतिमंत्रस्यऋषिर्नीलउदाहृतः ॥ विराट्छन्दोऽथविज्ञेयोदेवताचशतक्रतुः ॥ २८ ॥ वैश्वानरइतिऋचाअग्निस्थापनमीरितम् ॥ मंत्रमाचातिप्रीणातिऋषिःस्यात्काश्यपःस्मृतः ॥ २९ ॥ अनुष्टुप्चभवेच्छन्दोदेवताहव्यवाहनः ॥ वध्नासीतिचमंत्रेणअग्निंकुर्यात्प्रदक्षिणम् ॥ ३० ॥ ऋषिःस्वयंभूराख्यातोविराट्छन्दउदाहृतम् ॥ देवतापरमात्माचनमस्कारेणयोजयेत् ॥ ३१ ॥ ततोग्निंदक्षिणेभागेप्रागग्रकुशकुञ्जके ॥ द्विहस्तेभवतश्चैवहस्तपानासनेअथ ॥ ३२ ॥ ब्रह्मन्निहोपवेश्यतामितिब्रह्माणंविनिवेशयेत् ॥ ब्रह्मयज्ञानृचादोग्ध्रीधेनुरितित्वृचः ॥ ३३ ॥ द्वाभ्यामितिचमन्त्राभ्यामितिब्रह्मप्रवेशनम् ॥ शक्रोऽस्यत्रायतामेतिशृणुऋभां

ऋषिर्द्विजाः ॥ ३४ ॥ प्रजापतिर्ऋषिश्छन्दस्त्रिष्टुब्देवोऽथशंकरः ॥ नारदश्चऋषिश्छन्दस्त्रिष्टुब्देवःशचीपतिः ॥ ३५ ॥ अग्नेरुत्तरभागेचहस्त
मात्रांतरेपिच॥प्रणीतास्थापनंकुर्यादिनएहीतिसंजपन्॥३६॥मंत्रस्यचऋषिश्छन्दोवामदेवःप्रकीर्तितः॥जगतीचभवेच्छन्दोदेवताचशतक्रतुः
॥३७॥श्रीपर्णींसहकारोत्थंवरुणस्यविशेषतः॥षडंगुलेचविस्तारंविंशत्यंगुलकेनच॥३८॥दैर्घ्येणचचतुःरूयातमङ्गुलंचप्रमाणतः॥द्व्यंगुलेच
रकाकायामासासन्देवकर्मणि॥३९॥अभिचारेभवेत्काइयंताम्रंस्याच्छांतिकर्मणि॥प्रतिष्ठायांमृन्मयंचअष्टांगुलमथापिवा॥४०॥द्वादशांगुलप्र
स्तारंतैजसेमानवर्जितम् ॥ इमंमेवरुणेनचाप्रणीतामथपूरयेत् ॥४१॥ सागराअथप्रीयंतामित्थमाध्यानमाचरेत् ॥ सकृदच्छिन्नदर्भेणदिग्वि
दिक्षुपरिस्तरेत् ॥ ४२ ॥ नैर्ऋतेदिक्षुसीतःस्याद्वैश्वदेवतथैवच ॥ कयानाश्चित्रइत्यृचानागःप्रीणातिसत्तमाः ॥ ४३ ॥ अस्यमंत्रस्यच
ऋषिर्भरद्वाजउदाहृतः ॥ छन्दोऽनुष्टुब्देवताचईशानःपरिकीर्तितः ॥ ४४ ॥ प्रयोजनादिकंद्रव्यंततआसादयेत्क्रमात् ॥ दक्षिणादिउ
त्तरांतंध्रुवासइत्यृचापिच ॥ ४५ ॥ ऋषिःस्यान्नारदश्छन्दोनुष्टुप्चैवाथदेवता ॥ शतक्रतुश्चप्रणीतियोजयेदथसादरात् ॥ ४६ ॥ काष्ठं
चपश्चिमेकुर्यात्प्रयच्छन्पश्चिमेनतु ॥ पुरतोऽन्नंपञ्चव्रीहितिलाश्चशरसर्षपाः ॥ ४७ ॥ दक्षिणेचैवआपूपंभृंगराजंतथैवच ॥ फलपत्रंवाम
भागेपिष्टकंदधिदुग्धकम् ॥ ४८ ॥ पनसंनारिकेलंचमोदकंलड्डुकंतथा ॥ प्रणीतांचादिग्विदिक्षुस्थापयेदाविचारयन् ॥ ४९ ॥ प्रणी
तानस्पृशेद्यावत्तुहोमकालेकथंचन ॥ स्नानकुंभंचभोविप्रायावद्यागंप्रवर्तते ॥ ५० ॥ उशीरकंमातुलिंगंदूर्वाधात्रीफलानिच ॥ तुलसीमाल
तीजातीजलजानिविशेषतः ॥ ५१ ॥ ऐशान्यांस्थापयेत्सर्वंयच्चवैकंकतीमयम् ॥ नैर्ऋत्यांतिविशेषोयंयच्चवैकंकतीशमी ॥ ५२ ॥ यथा
योगेनतत्सर्वंग्राह्यंतत्पत्रमेवच ॥ क्षीरपाकेतुक्षीरांतेचरुस्थालीमथानयेत् ॥ ५३ ॥ पवित्रच्छेदनकुशैश्छिद्यात्प्रादेशिकंपुनः ॥ छित्त्वा
पवित्रंप्रोक्षण्यांस्थापयेद्दलभिदाग्रकम् ॥ ५४ ॥ विष्णोरराटमंत्रेणछेदयेदप्रमाणतः ॥ पायसेनकाठिनेनप्रमन्थीयात्कदाचन ॥ ५५ ॥
नरसेननकाष्णेननदद्धेनकदाचन ॥ ताम्रेणभस्मनाचाथशुक्तिशंखेनवाग्यतः ॥ ५६ ॥ छेदयेत्पिञ्जुलींचापिपवित्रमथदेशिकः ॥ विष्णो
रराटमंत्रस्यहारीतश्चऋषिःस्मृतः ॥ ५७ ॥ पंक्तिश्छंदोभवेद्देवःसंस्कारेविनियोजयेत् ॥ प्रणीताभाजनंगृह्यप्रोक्षणींपूरयेत्त्रिभिः ॥ ५८ ॥

कायतीर्थेनतत्कुर्याद्देवतीर्थेनचेत्यपि ॥ वामहस्ततलेपश्चात्स्थापयेत्प्रोक्षणीयकम् ॥ ५९ ॥ मध्यमामध्यमांगुष्ठअपामार्गेणमंत्रिभिः ॥
उत्तानंतत्पवित्रंचपवित्रंतेतिसंजपन् ॥ ६० ॥ ऋषिःस्याद्गौतमश्छन्दोधर्मराजोऽथदेवता ॥ अथस्थापितद्रव्याणिप्रोक्षयेत्स्थापयेत्क्रमा
त् ॥ ६१ ॥ सकृद्द्रव्येत्रिभिःकाष्ठैस्त्रिवारंमंत्रपुष्पकैः ॥ स्थिरस्थानेतुसंप्राप्तप्रणीतायाश्चदक्षिणे ॥ ६२ ॥ प्रादेशांतरतश्चैवआज्यस्था
लीमथार्पयेत् ॥ अग्रतोमण्डलंकृत्वावह्निविप्रेतुस्थापयेत् ॥ ६३ ॥ घृतंनिःसारयेत्तत्तन्निरूप्याशुक्रमेणतु ॥ ईशानेतिचमंत्रेणअधिश्र
पणमीरितम् ॥ ६४॥ ऋषिर्नारायणश्छन्दःपंक्तिरीशोऽथदेवता ॥ पर्यग्निकरणंकुर्यादादराद्द्वयमप्यथ ॥ ६५ ॥ अवेक्ष्यईशमारभ्यदक्षि
णावर्तकेनतु ॥ कुलायनीतिमंत्रेणऋषिच्छन्दादिकंस्मरन् ॥ ६६ ॥ परिवेष्याज्यस्थालींचत्रिःसकृद्वासमाहितः ॥ पितरस्तृप्यंतामिति
संस्कारेमातरःस्मृताः ॥ ६७ ॥ ऋषिःस्याज्जमदग्निश्चगायत्रीछन्दईरयन् ॥ देवताचपिनाकीस्यादग्निष्टोमेचयोजयेत् ॥ ६८ ॥ घृतस्य
चतथात्वंनोब्रह्मावैतृप्यतामिति ॥ षडंगुलंस्रुवंपश्चाद्गृहीत्वाग्नौप्रतप्यच ॥ ६९ ॥ त्रिरात्रंतुमहायोगेसकृदन्यत्रसत्तमाः ॥ संमार्जयेत्कुशे
नापिमूलादग्रंतुसेचयेत् ॥ ७० ॥ अग्रान्मूलंपुनःकुर्यात्संपूज्यचपुनःपुनः ॥ त्रिभिस्त्रिभिःप्रणीतोदक्प्रोक्षयेत्तदनंतरम् ॥ ७१ ॥ स्रुवं
पुनःप्रतप्याथप्रोक्षण्युत्तरतोन्यसेत् ॥ आज्यपात्रंपुरस्कृत्यपवित्रंचसमाहरेत् ॥ ७२ ॥ अंगुष्ठेद्वेअनामेतुगृह्णीयात्तत्पवित्रकम् ॥ अष्टां
गुलंमध्यकृत्वोघृतंत्रिःपवनंचरेत् ॥७३॥ पातालेत्रिस्तथाकाशेअवेक्ष्याज्यंततस्त्रिभिः ॥ प्रोक्षण्यांचतथाकुर्यादधःसंप्रोक्ष्यदेशिकः ॥ ७४ ॥
ततःपायसमादायउत्थायचसमंत्रकम् ॥ तूष्णींदद्यात्तथाचाग्नौसन्निवेशेनतत्ततः ॥ ७५ ॥ सपवित्रंदक्षकरेगृहीत्वाप्रोक्षणीयकम् ॥ अष्टां
गुलेमूलभागेतज्जलेनईशादितः ॥ ७६ ॥ अग्निंपर्युक्षयेत्पश्चाद्दक्षिणावर्तकेनच ॥ पवित्रंचप्रणीतायांविधायप्रोक्षणीयकम् ॥ ७७ ॥
संयावार्थंचभोविप्राअग्निवत्तत्वदेशिकः ॥ ध्यायेदग्निंरक्तवर्णंस्रुवहस्तंत्रिबाहुकम् ॥ ७८ ॥ कमंडलुंपरेहस्तेततोदक्षकरेणतु ॥ स्रुवंगृही
त्वाजुहुयात्तूष्णीमेवसमाहितः ॥ ७९ ॥ अंतंचदेवतोद्देशंप्राजापत्यंसमीरयन् ॥ प्रणवांतेनजुहुयात्सर्वत्रद्विजसत्तमाः ॥ ८० ॥ वायुकोणं
समारभ्यवह्निकोणान्तकेनतु ॥ अच्छिन्नायांघृतेनैवइन्द्रायतदनंतरम् ॥ ८१ ॥ अग्नीषोमात्मकंचैवजुहुयाद्राक्षसादितः ॥ ऐशान्यांको

णपर्यंतंततोनैमित्तिकंचरेत् ॥ ८२ ॥ पश्चात्स्विष्टंततोदद्याद्द्याच्चमतिभिस्तथा ॥ वारुणंपञ्चकंचैवकृत्वापूर्णांततोलभेत् ॥८३ ॥ उद्वाहइतिमंत्रस्यअथर्वणऋषिः स्मृतः ॥ छंदोदेवीचगायत्रीदेवताचापिवारुणम् ॥ ८४ ॥ प्रकृतेयोजयेन्मन्त्रीस्तुतौचापिनियोजयेत् ॥ त्वन्नोग्नइतिमंत्रस्यऋषिर्वासिष्ठसंज्ञकः ॥ ८५ ॥ छंदश्चबृहतीख्यातोदेवताग्निः प्रकीर्तितः ॥ इडोगतमितिमन्त्रस्यऋषिःकोगुह्यसंज्ञकः ॥८६॥ छन्दश्चजगतीख्यातोदेवोविष्णुःप्रकीर्तितः ॥ उद्वर्तनइतिमंत्रस्यऋषिःकोनुप्रकीर्तितः ॥८७॥ छन्दोदेवीचगायत्रीवरुणश्चाधिदेवता ॥८८॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेचतुर्दशोऽध्यायः ॥ १४ ॥ छ ॥ सूतउवाच ॥ सर्वत्रमखब्रह्माणमृत्विजंवरयेदथ ॥ कुशंडिकांस्वगृह्येनकृत्वाग्निंचार्चयेत्ततः ॥ १ ॥ आघाराराज्यभागेतुमहाव्याहृतयस्त्रयः ॥ सर्वप्रायश्चित्तसंज्ञकंप्राजापत्यंचस्विष्टकृत् ॥ २ ॥ एतन्नित्यंहिसर्वत्रहोमेकर्मणिनिर्दिशेत् ॥ प्राजापत्येचइन्द्रायएतावाघारसंज्ञकौ ॥ ३ ॥ अग्नयेचैवसोमायआज्यभागौप्रकीर्तितौ ॥ भूर्भुवःस्वस्त्रयश्चैवमहाव्याहृतयःस्मृताः ॥ ४ ॥ अयाश्चाग्नेइतितथायेतेशतमनुत्तमम् ॥ सर्वप्रायश्चित्तसंज्ञाएतेवैपञ्चमंत्रकाः ॥ ॥ ५ ॥ प्राजापत्याहुतिश्चैकास्विष्टकृच्चापरास्मृता ॥ चतुर्दशैताःकृतयोहोतव्यानित्यसंज्ञकाः ॥ ६ ॥ कृत्वासकृद्देवतोद्देशंहोमंपश्चात्समाचरेत् ॥ सोमपायेचगोयागेनरमेधाश्वमेधके ॥ ७ ॥ अन्यत्रविपरीतेनस्वाहांतेनहुनेद्बुधः ॥ नैमित्तिकंविनानित्यंविफलंयातिनान्यथा ॥ ॥ ८ ॥ नित्यंवर्ज्यंशताधैर्नवैश्वदेवेतथैवच ॥ त्र्यहसाध्यादियागेषुयन्निदेशंशृणुद्विजाः ॥ ९ ॥ एकाहेवाघारराज्यौकृत्वानैमित्तिकाकृतिः ॥ समास्विष्टकृतंविद्यादाकृत्याद्यास्ततःपरम् ॥ १० ॥ विशेषतस्त्र्यहादौतुअघाराराज्यपूर्वकम् ॥ पश्चान्नैमित्तिकंकुर्यात्समाप्तिदिवसेप्यथ ॥ ॥ ११ ॥आघाराराज्यपूर्वेणततोनैमित्तिकंचरेत् ॥ स्विष्टकृद्व्याहृतिश्चैववारुणाद्यास्तथाहिषट् ॥ १२ ॥द्विजातिःपतितोयत्रद्वित्रिकंचचतुश्चतुः ॥एकस्मिन्दिवसेकुर्यात्सोमयागेचशैशवे ॥ १३ ॥ द्विजातीनांविवाहेतुनैत्यिकंप्रथमंभवेत् ॥ एकस्मिन्दिवसेकुर्यादग्निकार्यंपृथक्पृथक् ॥ ॥ १४ ॥दद्यादेकंचनित्यंचपृथङ्नित्यंनचाचरेत् ॥द्विजातिःपतितोयत्रद्वित्रिकंचचतुश्चतुः ॥ १५ ॥एकस्मिन्दिवसेकुर्यात्तत्रापिनैत्यकंत्यजेत् ॥ होमेब्रह्मस्तुतेविष्णुःस्रुवेचैवमहेश्वरः ॥ १६ ॥ अजस्यानियमेचेन्द्रोऽधिश्रयणंविवस्वतः ॥ पर्यग्निकरणेचैवउद्वाहेमातरःस्मृताः ॥ १७ ॥

चन्द्रादित्यौचोत्पदनेवीक्षणेचादेशस्तथा ॥ प्रोक्षण्यांस्थापनेदुर्गाइमेलक्ष्मीप्रतिष्ठिताः ॥ १८ ॥ होमंकुर्याद्द्विजश्रेष्ठाविधिंकुर्यात्समा
हितः ॥ एतेषुदेवताःप्रोक्ताद्विजातीनांहितायच ॥ १९ ॥ यजेत्सुपशुबद्धेषुसंस्कारेचैवपर्वणि ॥ देवताःसर्वाज्ञातव्याएतायज्ञेसमाहितैः ॥
॥ २० ॥ अधिदैवेनजानीयात्करवल्यांपंचफलंयतः ॥ तस्मात्सर्वप्रयत्नेनदेवतामथविन्यसेत् ॥ २१ ॥ ॥ इतिश्रीभविष्येमहापुराणेम
ध्यमपर्वणिद्वितीयभागेपञ्चदशोऽध्याय ॥ १५ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ अथवक्ष्यामिसर्वेषांदेवानांध्यानमुत्तमम् ॥ अस्ययज्ञेप
रिज्ञानाज्जिह्वासम्यक्फलप्रदा ॥ १ ॥ हिरण्यवर्णांप्रथमांवह्निजिह्वांमहाद्युतिम् ॥ बवान्धककरंदेवींहिरण्याख्येष्टसिद्धये ॥ २ ॥ कनकाद्रिभु
जांशुक्लांहस्ताभ्यांदर्भसंयुताम् ॥ कमंडलुंचबिभ्राणानमःसाधकसिद्धिदा ॥ ३ ॥ उद्यदिन्दुनिभांरक्तांचतुर्भिर्भुजपल्लवैः ॥ शंखचक्राभय
वरान्दधतींप्रणमाम्यहम् ॥ ४ ॥ भिन्नांजनचयप्रख्यांस्वर्णकुंभंतुवामतः ॥ दक्षिणेनवरारक्तांधारयंतींनमाम्यहम् ॥५॥ सुप्रभामण्डलाभाव
कराभ्यांतत्कृताञ्जलिः ॥ पद्मासनस्थाकौशेयवसनामांप्रसीदतु ॥ ६ ॥ जपाकुसुमसंकाशाबहुरूपासखेमम ॥ शुभदास्याद्भुजैःशुभ्रासह
स्रंदधतीपराम् ॥ ७ ॥ नीलोत्पलनिभेदेविवह्निवर्णपराभवे ॥ जपापुष्पधरेनित्यंसतीरूपेप्रसीदमे ॥ ८ ॥ मूलेनवीक्षयेत्स्थानंमंत्रेणखननं
मतम् ॥ त्रिसूत्रीकरणंकुर्याच्चतुःसूत्रंनिपातयेत् ॥ ९ ॥ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेषोडशोऽध्यायः ॥ १६ ॥
सूतउवाच ॥ ॥ प्रतिष्ठायाःपूर्वदिनेकुर्याद्देवाधिवासनम् ॥ धान्यप्रतिष्ठांतस्यैवयूपंचापियथाविधि ॥ १ ॥ रात्रौमूलाग्रेचवटंस्थापये
द्गणनायकम् ॥ संपूज्यचविधानेनदिगीशांश्चतथाग्रहान् ॥ २ ॥ ब्रह्माणंचतडागेषुवरुणंसंतुयागके ॥ सोमंचमंडलेसूर्यंपादेविष्णुंतथैवच ॥
॥ ३ ॥ शैवेशैवंतथाप्रोक्तंप्रपायामथवारुणम् ॥ आरामेचैवब्रह्माणंपाद्याद्यैरपिचार्चयेत् ॥ ४ ॥ द्रुपदादीतिमन्त्रेणस्नापयेत्प्रथमंबुधः ॥ गा
यत्र्याचततःपश्चाद्गन्धद्वारेतितैलकम् ॥ ५ ॥ सुनाभेतिचमंत्रेणद्वाभ्यामेवविशिष्यते ॥ श्रीश्चतेइतिकुसुमंफालिनीतिचवैफलम् ॥ ६ ॥
कांडादितिचमंत्रेणदद्याद्दूर्वाक्षतंततः ॥ सिंदोरिवेतिसिंदूरंविश्वामितिचमार्जनम् ॥ ७ ॥ समिच्छेत्यञ्जनंदद्याद्धुस्थंसुरासुराजपन् ॥ चन्दनं
यज्वभिर्जप्त्वामानस्तोकेतिचन्दनम् ॥ ८ ॥ यूपेचैवविशेषोयमुत्तराग्रंप्रविन्यसेत् ॥ अद्यैवतेनमंत्रेणस्थापयेदथवारिणा ॥९॥ गायत्र्याप्रथ

गंचैवआपोहिष्ठेतिवैजपन् ॥ शन्नोदेवीतिद्रुपदांस्नापयेत्तदनंतरम् ॥ १० ॥ अभिमंत्र्याथब्रह्मेतित्रिरात्रंमंत्रमीरयन् ॥ योगंयोगहढंजप्त्वाप
वित्रंविन्यसेत्ततः ॥ ११ ॥ त्वंगंधर्वेतिमंत्रेणतथासुभाभइत्यापि ॥ द्राभ्यांतैलगंधयुतंश्रीसूक्तेनापिपुष्पकम् ॥ १२ ॥ भूरसीतिचतथा
धूपमास्रज्योतिर्भिर्दीपकम् ॥ अनुर्मामिहतातिदद्याद्दूर्वाक्षतंततः ॥ १३ ॥ विश्वामोतिचानिम्न्यंतकांडादितितथाक्षतम् ॥ सिंदोरिवेति
सिंदूरंसमिधेतितथाञ्जनम् ॥ १४ ॥ पादोऽस्येत्यथभुक्तंस्याद्याःफलिनीतिपुनःफलम् ॥ रूपंनेतिदहेद्रूपंनसोचितिचपूजनम् ॥ १५ ॥
युवासुवासेतिवस्त्रं नागगंधेतिचन्दनम् ॥ ततोयमगृहाद्वाह्येमंडपांतरमाश्रितः ॥ १६ ॥ सुनातेतिवचोदद्यात्ततश्चावाहयेत्प्रभुम् ॥ तत्राधि
वासनंकुर्याद्रक्षयेच्चसुरक्षिभिः ॥ १७ ॥ आचार्ययजमानंचऋत्विग्भोजनमाचरेत् ॥ अक्षारलवणान्यासीदधिविश्वंतिलांस्त्यजेत् ॥ १८ ॥
आधारणंचाधिवासंवक्ष्येतत्रानुसारतः ॥ सुनातेतिवचोदद्यात्तैलंचैवाशिवेत्रिभिः ॥ १९ ॥ पंचभिर्ब्राह्मणैःसार्धंगन्धर्वाइतिविस्मरन् ॥ दद्या
द्गन्धंतैलयुतंगंधद्वारेत्यृचापुनः ॥ २० ॥ याःफलिनीतिचफलंपूगतानामवर्जनम् ॥ कौशिकीरुत्तमोसीतिदद्यात्खड्गंसुतीक्ष्णकम् ॥ २१ ॥
रूपेनवेतिमन्त्रेणमुद्गरंचनिवेदयेत् ॥ श्रीश्चतेइतिकुसुमंविश्वानीतिचसंपठन् ॥ २२ ॥ निर्मंथनंततःकार्यमितिसाधारणोविधिः ॥ ततो
धिवासकल्पेतुप्रदेशेतुसमाचेत् ॥ २३ ॥ विनाधिवासनंविप्राःप्रतिष्ठानंसमाचरेत् ॥ नतत्फलमवाप्नोतिविवाहेशरणंदिशेत् ॥ २४ ॥ ततः
प्रयत्नतःकार्यंपूर्वाह्णेरात्रियोगतः ॥ नित्यैनैमित्तिकेकाम्येकारयेत्कुण्डमण्डपम् ॥ २५ ॥ स्थंडिलेहस्तमात्रेणवालुकानिर्मितेऽपिच ॥
त्रयोदशांगुलेहस्तेद्विहस्तेचापिवर्द्धते ॥ २६ ॥ एकैकांगुलकोविप्राःपीठेनास्तिविचारणा ॥ नवपंचककुंडेचलक्षादावपिशंकया ॥ २७ ॥
ततोदशांगुलेपक्षेदशांगंशृणुतद्विजाः ॥ काष्ठपत्रंचपुष्पंचमोदकंपिष्टकंतथा ॥ २८ ॥ अन्नंचपरमान्नंचह्यवेक्ष्यंतिलमेवच ॥ एतद्वैगृहपक्षेच
विष्णुपक्षेतिलादतः ॥ २९ ॥ शैवेयवादितःकार्याशाक्तेपुष्पादितोभवेत् ॥ सूर्यैपक्षेपिष्टकादिगोपालेकृसरादितः ॥ ३० ॥ कृष्णेचकरवीरा
दिश्रीफलानिचत्रैपुरे ॥ सारस्वतेचश्रीवृक्षेमोक्षकामेनिगद्यते ॥ ३१ ॥ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेसप्तदशोऽ
ध्यायः ॥ १७ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ अष्टौहोतारोद्वारपालास्तथाष्टौअष्टौकार्याब्राह्मणायाजकाश्च ॥ सर्वेशुद्धालक्षितालक्षणाढ्यैरे

कःकार्योजापकोस्मिन्महात्मा ॥ १ ॥ दिव्यैर्गंधैर्गंधमाल्यैःसुवर्णैस्तैलंकार्यंब्राह्मणाःपंचविंशाः ॥ आवाप्यैस्तुद्विगुणैर्वचलीयोदिव्यैर्वस्त्रै
रर्हणादक्षिणाभिः ॥ २ ॥ नार्हयित्वायथोक्तेनकश्चित्पात्रंनिवेशयेत् ॥ अनर्हितेषुविप्रेषुनसम्यक्फलमाप्नुयात् ॥ ४ ॥ प्रतिष्ठादिषुसर्वेषुस
म्यग्विप्रानथार्हयेत् ॥ कुशद्विजंतुसर्वत्रअर्घ्यंविष्टरमात्रकम् ॥ ५ ॥ प्रदद्यादर्हणंसम्यक्पश्चात्पात्रंनिवेदयेत् ॥ विनार्हणंकृतेतस्मिन्नरकेप
रिपच्यते ॥ ६ ॥ प्रत्येकंब्राह्मणान्यज्ञेवेदमन्त्रेषुपारगाः ॥ आचार्योयादिकार्येषुवरयेद्दशगोत्रजान् ॥ ७ ॥ विशिष्टानामभावेऽपिकुर्यात्कुश
मयान्द्विजान् ॥ कुशप्रतिकृतौचापिस्वगोत्रंस्वंद्विजंविना ॥ ८ ॥ नकुर्याच्चरणोद्देशंतथाप्रहरसंहतिः ॥ गोत्रादिकीर्तनंतेषुस्वनामोद्देशमी
रयन् ॥ ९ ॥ तुलापुरुषदानेचतथाचहाटकाचले ॥ कन्यादानेतथोत्सर्गेकीर्तयेत्प्रवरादिकम् ॥ १० ॥ नपात्रंप्रतिकृत्यर्थंनचालंसोदरं
तथा ॥ मृतभार्य्योह्यभार्यश्चअपुत्रोमृतपुत्रकः ॥ ११ ॥ शूद्रसंस्कारकश्चैवकृपणोगणयाजकः ॥ प्रायश्चित्तगृहीतश्चराज
याजकपैशुनः ॥ १२ ॥ शूद्रगेहनिवासीचशूद्रप्रेरकएवच ॥ स्वल्पकंठोवामनश्चवृषलीपतिरेवच ॥ १३ ॥ बंधुद्वेषीगुरुद्वेषीभार्या
द्वेषीतथैवच ॥ हीनांगश्चैववृद्धांगोभग्नदंतश्चदांभिकः ॥ १४ ॥ प्रतिग्राहीचकुनखःपारदारिकएवच ॥ श्वित्रीकुष्ठीकुलोद्भूतोनिद्रा
लुर्व्यसनार्थकः ॥ १५ ॥ अदीक्षितःकदर्यश्चचंडरोगीगलद्व्रणः ॥ महाव्रणीचउदरीयज्ञपात्रंनकारयेत् ॥ १६ ॥ वरणांतेतुपा
त्राणांपूजामन्त्राञ्छृणुद्विज ॥ प्रतिमंत्रेणगन्धाद्यैरर्चयेन्मंत्रवित्तमः ॥ १७ ॥ ब्रह्ममूर्तिस्त्वमाचार्यसंसारात्त्राहिमांविभो ॥ त्वत्प्रसादाद्ध
रोयज्ञंप्राप्तोस्मियन्मयेप्सितम् ॥ १८ ॥ चिरंमेशाश्वतीकीर्तिर्यावल्लोकाश्चराचराः ॥ प्रसीदत्वंमहेशानप्रतिष्ठाकर्मसिद्धये ॥ १९ ॥ त्वमादिः
सर्वभूतानांसंसारार्णवतारकः ॥ ज्ञानामृतप्रदाचार्योयजुर्वेदनमोऽस्तुते ॥ २० ॥ ब्रह्मणैवसमुद्भूतप्रकाशितदिगंतर ॥ शुद्धजांबूनदप्र
ख्ययजुर्वेदनमोऽस्तुते ॥ २१ ॥ प्रतप्तकनकाभासभासितद्युतिभूतले ॥ मंत्रप्रख्यानसंस्थानयजुर्वेदनमोऽस्तुते ॥ २२ ॥ प्रफुल्लकनकाभा
सभास्वरासुरभूषित ॥ प्रकीर्णमंत्रसंभारविधिज्ञप्रणतोऽस्मिते ॥ २३ ॥ षडंगवेदवेदज्ञऋत्विङ्मोक्षप्रदोभव ॥ प्रविश्यमंडलंविप्राःस्वस्था
नेस्थापयेत्क्रमात् ॥ २४ ॥ वेद्याःपश्चिमभागेतुआचार्यस्थापयेद्बुधः ॥ कुंडस्याग्नौतुब्रह्माणंमंडलस्यैवपश्चिमे ॥ २५ ॥ होतारंस्थापये

त्त्रविधिज्ञमथचोत्तरे ॥ द्वौद्वौकृत्वाज्ञापकौचखड्गधारकएवच ॥ २६ ॥ द्वारिद्वारिप्रयत्नेनद्वारपालाननुक्रमात् ॥ वक्ष्यमाणेनमंत्रे
णप्रत्येकमथस्थापयेत् ॥ २७ ॥ पूजयेद्गन्धपुष्पाद्यैर्वासोभिर्युगलेनतु ॥ यज्ञेषुविततेयोऽसौपूज्यतेपुरुषःसदा ॥ २८ ॥ नारायणस्वरू
पेणयज्ञंमेसफलंकुरु ॥ यज्ञेषुसाक्षीसर्वेषुयजुर्वेदार्थतत्त्ववित् ॥ २९ ॥ ऋग्वेदार्थस्यतत्त्वज्ञइन्द्ररूपनमोऽस्तुते ॥ मखश्रेष्ठेषुसर्वेषुयेन
मंत्राःसुविस्तृताः ॥ ३० ॥ यजुर्वेदार्थतत्त्वज्ञब्रह्मरूपनमोऽस्तुते ॥ मखश्रेष्ठेषुसर्वेषुएषएवविधिःस्मृतः ॥ ३१ ॥ माङ्गल्यंकर्मणांनित्यं
सर्वज्ञंज्ञानरूपिणम् ॥ सिद्ध्येममयज्ञस्यनमामिशिवरूपिणम् ॥ ३२ ॥ पालयत्वंदिशःसर्वाविदिशश्चतथाइमम् ॥ दिक्पालरूपिणंविप्रं
यज्ञसिद्ध्यैनमाम्यहम् ॥ नसंकल्पंचरेद्यागंव्रतंदेवार्चनंतथा ॥ ३३ ॥ संकल्पमूलःकामोवैयज्ञाःसंकल्पसंभवाः ॥ संकल्पेनविनाविप्रय
त्किञ्चित्कुरुतेनरः ॥ ३४ ॥ फलंचाल्पाल्पकंतस्यधर्मस्यार्द्धक्षयोभवेत् ॥ तस्मात्सर्वप्रयत्नेनयागंसंकल्पयेत्सुधीः ॥ ३५ ॥ कामात्प
रोनैवभवेन्निष्कामोऽपिनशोभनः ॥ तस्मात्काममयंधर्मंविनामोक्षंनचाचरेत् ॥ ३६ ॥ संकल्पेनविनायस्तुधर्मंचरतिमानवः ॥ नतस्यफल
माप्नोतिनित्यनैमित्तिकस्यच ॥ ३७ ॥ नकुर्यात्स्थापनेचैवकुर्याद्वैमंडलांतरे ॥ गृहीत्वौदुंबरंपात्रंवारिपूर्णंगुणान्वितम् ॥ ३८ ॥ ज
लाशयारामकूपसंकल्पेपूर्वदिङ्मुखः ॥ साधारणेचोत्तरास्योग्रहयज्ञेतुसंमुखः ॥ ३९ ॥ महाव्रतेप्रतिष्ठायांपात्रंताम्रंहिरण्मयम् ॥ राजता
श्ममयंसांगंयोयज्ञेषुप्रशस्यते ॥ ४० ॥ यज्ञीयपात्रपुटकंहस्तंस्नानेप्रकीर्तितम् ॥ ऐशान्यांनिक्षिपेत्तोयंप्रतिष्ठायांचपूर्वतः ॥ ४१ ॥ आ
काशेनिक्षिपेद्यागेव्रतेईशोपिनित्यके ॥ पितृमेधेचगोयागेनरमेधेचदाक्षिणे ॥ ४२ ॥ शुक्तिकांस्यादिहस्तैश्चताम्ररौप्यादिभिस्तथा ॥ संक
ल्पोनैवकर्तव्योमृन्मयेचकदाचन ॥ ४३ ॥ प्रणवंपूर्वमुच्चार्ययजेद्यज्ञेश्वरंस्मरेत् ॥ गङ्गाचादित्यचंद्रौचद्यौर्भूमिरहरात्रिके ॥ ४४ ॥ सूर्यः
सोमोयमःकालेमहाभूतानिपंचच ॥ एतेशुभाशुभस्येहकर्मणोनवशाखिनः ॥ ४५ ॥ इत्युच्चार्यन्यसेद्धर्मंध्यात्वापुष्पाञ्जलिंसृजेत् ॥ अमृतं
कृत्यपात्रेचॐतत्सदितिनिर्दिशेत् ॥ ४६ ॥ धर्मःशुभ्रवपुःसितांबरधरःकार्योर्ध्वदेशेवृषोहस्ताभ्यामभयंवरंचसततंरूपंपरंयोदधत् ॥ सर्व
प्राणिसुखावहःकृतधियांमोक्षैकहेतुःसदासोयंपातुजगंतिचैवसततंभूयात्सतांभूतये ॥ ४७ ॥ यज्ञसंबंधिविप्रांश्चएकाहेनैवयोजयेत् ॥ हविर्द्र

व्याणियानिस्युरष्टयागांतरेपिच ॥४८॥ पुनःपुनर्नियोज्यानिब्राह्मणाहविरग्रयः ॥४९ ॥ इति श्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागे ऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ माघादिमासेष्वपिषट्सुकार्यायोगप्रतिष्ठाऋषिभिःप्रणीता ॥ देवादिसंस्थापनमाहुरत्रयावन्नसुप्तोमधुसूदनश्च ॥ १ ॥ वारेभृगोर्देवगुरोर्बुधस्यसोमस्यसर्वाःशुभदाभवंति ॥ लग्नेशुभस्थेशुभवीक्षितेवाकार्याप्रतिष्ठाचजलाशयानाम् ॥ २ ॥ शुद्धाद्वितीयाचतथातृतीयात्रयोदशीचापितथैवविप्राः ॥ तथापिसप्तम्यपिपौर्णमासीदशम्यसौचाप्यथपंचमीच ॥ ३ ॥ प्राणप्रतिष्ठाचजलाशयादेरेताःप्रशस्तास्तिथयोभवंति ॥ अप्राप्यचैतानिशुभानियानिकार्याप्रतिष्ठाविषुवद्वयेच ॥ ४ ॥ षडशीतिलोकाप्ययनद्वयेनयुगादिकेपुण्यदिनेशुभेच ॥ कार्यास्तडागादिजलाशयस्यप्राच्यांप्रतिष्ठामथचोत्तरेवा ॥ ५ ॥ सुचारुईषत्प्रवणेचदेशेसुवर्तुलःषोडशहस्तमंडपः ॥ द्वारैश्चतुर्भिःप्रथितैरुपेतश्चतुर्मुखश्चापिभवेत्सुरेताः ॥ ६ ॥ पूर्वादिद्वारेषुचतुष्टयेषुप्लक्षादिभिस्तोरणकैःसुरेशः ॥ प्लक्षस्तथोदुंबरपिप्पलौचन्यग्रोधकंचापियथाक्रमेण ॥ ७॥ ऊर्ध्वंचहस्तानमितानियानिविचित्रमाल्यांबरभूषितानि ॥ भूमौयथाप्रीतिचहस्तकानिभवंतिचैतान्यपितोरणानि ॥ ८ ॥ सर्वस्ययागेपिहिमंडपस्यकार्याध्वजादिक्षुविदिक्षुशुभ्राः ॥ दिक्पालवर्णाभपताकयुक्तामध्येचवैनीलपताकयुक्ताः ॥ ९ ॥ ध्वजाश्चयस्मिन्दशहस्तसम्मितास्तस्मिन्पताकाअपिहस्तपंच ॥ अरत्निमात्रायदिमूलभागेपंचांगुलाग्रेविनिबद्धगूढाः ॥१०॥ द्वारेचतस्मिंश्चनिरूपितंवारंभासुपुष्पासुखशाङ्गलाश्च ॥ वचाभिवृक्षोत्तरपंचहस्ताःसपंचशाखाअपितोरणानि ॥११॥ मुंजोद्भवैर्बर्हिःसमुद्भवैर्वासुरंजितश्चैत्रितपद्मपल्लवैः॥पुष्टद्वयेसूत्रितवेष्टयेच्चतथेक्षुकाण्डैरथयागमण्डपम् ॥१२॥वेदिस्तथामंडपमध्यभागेकार्याचकोणेस्थितुषादिहीना ॥ हस्ताश्रितारेखवतीसुरेषापरिष्कृताहस्तचतुष्टयेन ॥ १३ ॥ वेद्यांपरित्यज्यदशांगुलानिऐशान्यतस्त्रीणितथापराणि ॥ कुंडायदद्याच्चतुरस्रमेकमवस्थितंत्र्यंगुलमेखलोज्ज्वलत् ॥ १४ ॥ प्रासादेचतडागेचमहारामेतथैवच ॥ मण्डलंसर्वतोभद्रंप्रयतेनैवकारयेत् ॥ १५ ॥ कुंडंचापिप्रकुर्वीतयथाभ्यन्तरमेखलम् ॥ वहिर्योनिगतंऊर्ध्वतंनिश्चित्रंसमसूत्रकम् ॥ १६ ॥ कुंडानिकुर्यान्नवकुंडपक्षेवेद्यास्तथोच्चैरविदिक्षुचैव॥सर्वाणिसर्वत्रचमेखलानिषडस्रपंचास्रसमेखलानि॥१७॥अष्टास्रजान्यब्जत्रिकोणकानितथार्द्धचन्द्रंचतुरस्रकंच॥

कुंडस्यपूर्वोत्तरादिग्विभागेस्थाप्योघटश्चन्दनचारुलिप्तः ॥ १८ ॥ माल्याम्बराच्छादितपूर्णकुम्भःसवृत्तपत्रश्चसुवर्णगर्भः ॥ १९ ॥ इति
श्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ सूतउवाच ॥ ॥ गतोयागगृहादन्यन्मण्डलांतरमा
श्रितः ॥ यजमानस्तथानित्यंकर्मकृत्वायथाविधि ॥१॥ पंचदेवान्नमस्कृत्यतथायज्ञेश्वरंहरिम् ॥ संकल्पंचततःकृत्वाब्राह्मणानामनुज्ञया ॥२॥
एतस्मिन्पुण्यदेशेतुफलंगोत्रश्चवैयमः ॥ वेदव्यासादिप्रणीतंयथाशास्त्रनिदर्शनम् ॥३॥ यथाययथास्वतंत्रोक्तंपुण्यारण्याभिधायकम् ॥ जलाशय
प्रतिष्ठायांकरिष्येविधिवद्द्विजाः ॥४॥ यथाययथाचकल्पोक्तंयथाकुंडंविधानतः ॥ साधिवासंयथैवैकःपुण्यारण्यविधायकः ॥५॥ जलाशयप्रति
ष्ठांचकरिष्येविधिवद्द्विजाः ॥ संकल्पमेवंकृत्वातुवृद्धिश्राद्धंसमाचरेत् ॥ ६ ॥ मातृयागंपुरस्कृत्यवृद्धिश्राद्धंसमापयेत् ॥ ७ ॥ भेर्यादिघोषेण
सुमंगलेनपद्यंलिखेदत्रसषोडशाक्षरम् ॥ इन्द्रादिदिक्पालवरायुधानिसमुल्लिखेद्देवादिशिस्थितानि ॥ ८ ॥ ब्रह्मेशान्वरयेत्सर्वानाचा
र्यंतुविशेषतः ॥ स्वर्णकुंडलयुग्मेनतथाताम्राद्भिभाजनैः ॥ ९ ॥ नानारत्नैश्चवस्त्रैश्चआचार्यंवरयेद्बुधः ॥ हेमालंकारयुग्मैश्चवासोभिर्विवि
धैरपि ॥ १० ॥ यथामानंयथाशक्तियथाभिवृणुयाद्बुधः ॥ रचितायजमानेनध्रुवंस्वस्त्यस्तुतेऽद्यते ॥ ११ ॥ ततःसर्वौषधीभिश्चयजमानः
सपत्निकः ॥ आपोहिष्ठेतिमंत्रेणस्नापयामासुरप्रजाः ॥ १२ ॥ यवगोधूमनीवारातिलश्यामाकशालयः ॥ प्रियंगुव्रीहयश्चाष्टौसर्वौषधिगणः
स्मृतः ॥ १३ ॥ ततःशुक्लाम्बरधरःशुक्लमाल्यानुलेपनः ॥ सर्वौषध्युदकस्नातःस्नापितोवेदपुङ्गवैः ॥ १४ ॥ ब्राह्मणैरभ्यनुज्ञातःपुरो
हितपुरःसरः ॥ नानामंगलघोषेणभेरीपटहनिस्वनैः ॥ १५ ॥ यजमानःसपत्नीकःपुत्रपौत्रसमन्वितः ॥ पश्चिमंद्वारमासाद्यप्रविशेद्यागम
ण्डपम् ॥ १६ ॥ चरकेपूजयेद्विघ्नंगंगांचयमुनांतथा ॥ पार्श्वयोश्चार्धतोलक्ष्मींप्रतिहारमनुक्रमात् ॥ १७ ॥ वेदिंप्रदक्षिणीकृत्यनमस्कुर्या
द्यथाविधि ॥ उपविश्यततस्तस्मिन्ब्राह्मणानुमतेस्थितः ॥ १८ ॥ स्वस्तिवाच्यंततःकृत्वापञ्चदेवान्प्रपूजयेत् ॥ भूतोत्सादंततःकृत्वावि
किरान्विकिरेद्भुवि ॥ १९ ॥ अपक्रमंतुयेभूतायेचास्मिन्विघ्नकारकाः ॥ यस्मान्नोनाभिवर्तंतेयज्ञमात्रंप्रवर्तताम् ॥ २० ॥ पूजयेदासनंपश्चा
त्स्वकीयंपुष्पचन्दनैः ॥ नमोनंतासनायेतितथापद्मासनायच ॥ २१॥ विमलासनायचनमोनमःसारासनायच ॥ योगासनायचनमःपृथिव्यै

नमइत्यपि ॥ २२ ॥ ततोभूमितलेवामहस्तंदत्वापठेन्नरः ॥ पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ २३ ॥ त्वंचधारयमांनित्यं
पवित्रमासनंकुरु ॥ सूर्यायार्घ्यंततोदत्वागुरुंनत्वाकृताञ्जलिः ॥२४॥ देवंहृत्पद्मकेनीत्वाप्राणायामत्रयंचरेत् ॥ ततोर्चयेद्द्विघ्नराजमैशान्यां
घटोपरि ॥ २५ ॥ गन्धपुष्पैस्तथावस्त्रैर्नैवेद्यैर्विविधैरपि ॥ गणानांत्वेतिमंत्रेणब्राह्मणंतदनंतरम् ॥ २६ ॥ आब्रह्मन्नितिऋचातद्विष्णो
रितिसंस्मरन् ॥ वासुदेवंततःपश्चाद्बलिभिर्गन्धचन्दनैः ॥ २७ ॥ ततोदेवशरीरंतुनवमासाद्यत्रिंशतम् ॥ वेद्याश्चपरितःसर्वान्स्वेस्वेस्थाने
यथाक्रमम् ॥ २८ ॥ ततोराजाधिराजेनभूतशुद्धिंसमाचरेत् ॥ ततोबुद्बुदमध्येतुश्वेतपद्मासनास्थि तम् ॥ २९ ॥ शुद्धस्फटिकसंकाशंशं
खकुन्देन्दुसप्रभम् ॥ किरीटकुंडलयुतंसितंपंकजधारिणम् ॥ ३० ॥ शुक्लमाल्यांबरंशुक्लंशुक्लगंधानुलेपनम् ॥ अहितुंडासनस्थंचपाश
हस्तंमहाबलम् ॥ ३१ ॥ स्तूयमानंसुरगणैःसिद्धगंधर्वसेवितम् ॥ सुचारुवदनंदेवंपद्ममालोपशोभितम् ॥ ३२ ॥ राजीवलोचनंनित्यं
नागलोकोपशोभितम् ॥ मकरग्राहकूर्माद्यैर्नानाजलचरैर्वृतम् ॥ ३३ ॥ जलाशयगतंदेवंचिंतयेज्जलशायिनम् ॥ ततोन्यासंप्रकुर्वीतप
श्चाङ्गत्वावशोभितम् ॥ ३४ ॥ अर्घ्यपात्रंततःकृत्वात्रिभागजलपूरितम् ॥ अष्टधामूलमंत्रंचजप्त्वातेनोदकेनच ॥ ३५ ॥ आसनंयागव
स्तूनिप्रोक्षयेत्तेनवारिणा ॥ अरुणायविद्महेतमोघ्नायचधीमहि ॥ ३६ ॥ तन्नोअरुणःप्रचोदयादितिस्नानंसमाचरेत् ॥ ततोगणेशमैशा
न्यामाग्नेय्यांगुरुपादकान् ॥ ३७ ॥ धर्माधर्मादिकान्सर्वान्सत्वादीनथचार्चयेत् ॥ सूर्यसोमजलादीनांमंडलानियथाक्रमम् ॥ ३८ ॥
मध्येशक्तिंचक्षीरोदमनंतंपृथिवींतथा ॥ कूर्मंचाधारशक्तिंचसुमेरुंमन्दरंतथा ॥ ३९ ॥ पञ्चतत्वंसमभ्यर्च्यसांगोपाङ्गमनंतरम् ॥ ततः
श्वेतंचकुसुमंसाक्षतंयोगमायया ॥ ४० ॥ गृहीत्वापूर्ववद्देशेस्थापयेत्कलशोपरि ॥ आवाहनंततःकृत्वामन्त्रेणानेनमंत्रवित् ॥ ४१ ॥ एह्ये
हिभगवन्वरुणएषयज्ञःप्रवर्तते ॥ यज्ञभागंगृहाणेदंत्वामेवावाहयाम्यहम् ॥ ४२ ॥ एवमावाह्यलोकेशमष्टौमुद्राःप्रदर्शयेत् ॥ गायत्र्यास्ना
पयित्वातुदद्यात्पाद्यादिकंत्रयम् ॥४३॥ पुष्पाञ्जलिंततोदत्त्वामूलमंत्रेणदेशिकः ॥ पूर्वादिपत्रमूलेषुधर्मादीन्पूजयेद्बुधः ॥ ४४ ॥ सत्वाद्याः
पूजयेत्तत्रतेषामेवपराङ्गनाः ॥ ज्ञानंधर्मंचसोमंचरजःसत्वंतमस्तथा ॥ ४५ ॥ पूर्वादिपत्रमध्येतुग्रहानष्टौप्रपूजयेत् ॥ पत्राग्रेलोकपालाना

मत्स्यादीनायुधांस्तथा ॥ ४६ ॥ कर्णिकादक्षिणेपूर्वेवामेचापिशचीपतिम् ॥ पूर्वपत्रेतुब्रह्माणंपूजयेत्सितपङ्कजैः ॥ ४७ ॥ नैर्ऋत्येवरुण
स्याथमध्येनंतंप्रपूजयेत् ॥ पीठमन्त्रेषुपूर्वादिब्रह्माणंचशिवंतथा ॥ ४८ ॥ विष्णुंचापिगणेशंचपृथिवींगंधचन्दनैः ॥ जपेन्मन्त्रंसाष्टशतं
सहस्रंविजपेद्बुधः ॥ ४९ ॥ जानुभ्यामवनींगत्वाविजयाख्यस्तवंपठेत् ॥ ईशानादिपीठकोणेषुकमलांबिकांतथा ॥ ५० ॥ नैर्ऋत्यांवि
श्वकर्माणंवायव्येतुसरस्वतीम् ॥ पूर्वादिद्वारदेशेतुमरुतंचावहादिकम् ॥ ५१ ॥ आवहंप्रवहंचैवतथैवोद्वहसंवहौ ॥ विन्यसेत्पश्चिमेद्वारिनि
वहंचपरीवहम् ॥ ५२ ॥ विन्यसेदुत्तरद्वारिमहतंचपराभवम् ॥ आग्नेयादिषुकोणेषुबहिःपीठंततोयजेत् ॥ ५३ ॥ पिशाचान्राक्षसान्भूता
न्वेतालांश्चतथाक्रमात् ॥ क्षोभकःकामरूपश्चसौभद्रोमरुतस्तथा ॥ ५४ ॥ गोमुखोनन्दभद्रश्चद्विजिह्वोमलिनस्तथा ॥ हस्तिकर्णोवि
शालाख्यःसप्तरक्षोगणःस्मृतः ॥ ५५ ॥ भूमिदोवरदश्चैवजयंतःक्षोभकस्तथा ॥ विवस्वंतःसुदंतश्चएतेभूतगणाःस्मृताः ॥ ५६ ॥ अंगदो
नीलकर्णौसौवसंतोयावकस्तथा ॥ घोररूपामहाकायावेतालाश्चप्रकीर्तिताः ॥ ५७ ॥ गंधपुष्पाक्षतैर्भक्त्यासर्वेदेवाग्रहादयः ॥ ध्यानवर्णा
नुरूपेणपूजनीयाःप्रयत्नतः ॥ ५८ ॥ ध्यायेदादित्यमारक्तंरक्तपद्मासनस्थितम् ॥ रक्तांबरधरंरक्तंरक्तमाल्यानुलेपनम् ॥ ५९ ॥ यव
विद्रुमसंकाशंसिंदूरारुणसप्रभम् ॥ आकृष्णेनेतिमंत्रेणस्थापयेत्कलशोपरि ॥ ६० ॥ इहागच्छेतिचावाह्यपाद्यार्घ्यैश्चपृथग्विधैः ॥
गंधपुष्पादिभिर्भक्त्यापूजयेत्तंयथाविधि ॥ ६१ ॥ बलिंचलोहितंदद्यात्पायसंदधिखंडकम् ॥ घृतलिप्तंचशाल्यन्नंपताकांरक्तव
र्णिकाम् ॥ ६२ ॥ श्वेतांबरधरंश्वेतंशुक्लगंधानुलेपनम् ॥ द्विभुजंवरदंदेवंगदाहस्तंमहाबलम् ॥ ६३ ॥ नानाभरणसंपन्नं
सिद्धगंधर्वसेवितम् ॥ शुक्लपद्मासनस्थंचदद्यादश्वंश्वेतभूषितम् ॥ ६४ ॥ इमंदेवाइतिमंत्रेणस्थापयेत्पूर्वादिग्दले ॥ सितवस्त्रै
श्चपुष्पैश्चशुक्लमाल्यानुलेपनैः ॥ ६५ ॥ पायसैःश्वेतबलिभिर्दधिभक्तंनिवेदयेत् ॥ धूपैःश्वेतपताकाभिर्नैवेद्यैर्विविधैरपि ॥ ६६ ॥
रक्तमाल्यांबरंदेवंरक्ताभरणभूषितम् ॥ सुचारुनयनंरक्तंरक्तपद्मासनस्थितम् ॥ ६७ ॥ किरीटकुंडलधरंमेषकंठंचतुर्भुजम् ॥ वरदंय

ज्ञनाशंचशूलशक्तिगदाधरम् ॥ ६८ ॥ सर्वकामप्रदंदेवंसिद्धगंधर्वसेवितम् ॥ चिंतयेत्परयाभक्त्यामंगलंधरणीसुतम् ॥ ६९ ॥
अग्निमीळेतिमंत्रेणस्थापयेदाग्निदिग्दले ॥ पूजयेद्रक्तपुष्पैश्चरक्तमाल्यानुलेपनैः ॥ ७० ॥ धूपैरक्तपताकाभिर्गुडभक्तनिवेदनैः ॥ अतसीपुष्प
संकाशंकर्णिकारसमप्रभम् ॥ ७१ ॥ रौहिणेयंमहाकायंनीलनीरजलोचनम् ॥ प्रशांतवदनंदेवंपीतवासंचतुर्भुजम् ॥ ७२ ॥ खड्गचर्मधरं
तद्वद्गदापरशुधारिणम् ॥ पद्मासनगतंदेवंपीतपद्मासनस्थितम् ॥ ७३ ॥ नानाभरणसंपूर्णमृगेन्द्रवरवाहनम् ॥ उद्बुध्यस्वेतिमंत्रेणयाम्यां
तुस्थापयेद्बुधः ॥ ७४ ॥ पूजयेद्गन्धपुष्पाद्यैः पीतगन्धानुलेपनैः ॥ वस्त्रैः पीतपताकाभिर्बलिभिः कृशरान्वितैः ॥ ७५ ॥ पीतवर्णंगुरुंध्या
येत्पीतपद्मासनस्थितम् ॥ पीताभरणसंपन्नंपीतवस्त्रंचतुर्भुजम् ॥७६॥वरदंदंडहस्तंचसाक्षसूत्रकमंडलुम् ॥ पूज्यमानंसुगंधर्वैःसेन्द्रैर्देवगणै
रपि ॥ ७७ ॥ बृहस्पतयइतिमंत्रेणनैर्ऋत्यांदिशिसंस्थितम् ॥ पीतचन्दनगंधैश्चपीतवस्त्रादिभूषणैः ॥ ७८ ॥ धूपैःपीतपताकाभिःपीतोदक
निवेदनैः ॥ पूजयेत्परयाभक्त्यापुरंदरपुरोहितम् ॥ ७९ ॥ ध्यायेच्छुक्रंभृगुसुतंश्वेतपद्मासनस्थितम् ॥ चतुर्भुजंमहाकायंवरदंदंडधारिणम्
॥ ८० ॥ महाबाहुंविशालाक्षंसाक्षसूत्रकमंडलुम् ॥ स्तूयमानंमुनिश्रेष्ठैःसेवितंदैत्यपुङ्गवैः ॥ ८१ ॥ सिंहासनगतंदेवंनीलेन्दीवरलोचनम् ॥
विलसत्पुण्डरीकस्यमालाभिरुपशोभितम् ॥ ८२ ॥ नानादैत्येन्द्रपुत्रांश्चसमायांतंमुहुर्मुहुः ॥ नानाशस्त्रास्त्रचतुरंनानाशास्त्रविशारदम्
॥ ८३ ॥ एवंध्यात्वाभृगुश्रेष्ठंजपन्नन्नात्परिस्रुतम् ॥ मनसाभक्तियुक्तेनस्थापयेत्पश्चिमेदले ॥ ८४ ॥ सितचंदनवस्त्रैश्चधूपमाल्यानुलेपनैः॥
धूपैः श्वेतपताकाभिःसक्तुभिः क्षीरसंयुतैः ॥ ८५ ॥ पूजयेत्परयाभक्त्यापुंडरीकाक्षतैरपि ॥ ध्यायेत्सौरिंचतुर्बाहुंशूलहस्तंवरप्रदम् ॥
॥ ८६ ॥ इन्द्रनीलनिभंश्यामंदिव्यबाणधनुर्धरम् ॥ इन्दीवरावरस्थंचसरोजवरसप्रभम् ॥ ८७ ॥ नीलांबरधरंनीलपद्ममालोपशोभितम् ॥
घोररूपंमहाकायंछायाहृदयनन्दनम् ॥ ८८ ॥ शन्नोदेवीतिमंत्रेणवायव्यांदिशिविन्यसेत् ॥ कृष्णचंदनवस्त्रैश्चकृष्णमाल्यानुलेपनैः ॥
॥ ८९ ॥ धूपैर्नीलपताकाभिर्बलिभिर्माषमिश्रितैः ॥ धूम्रवर्णंसदाकेतुंगदाहस्तंवरप्रदम् ॥ ९० ॥ द्विभुजंभमिकायंचधूम्राक्षंधूम्रवाससम् ॥
केतुंकृण्वन्नितिमन्त्रेणऐशान्यांस्थापयेद्दिवि ॥ ९१॥ धूम्रवर्णैश्चमाल्यैश्चधूम्रगंधानुलेपनैः ॥ धूम्रधूम्रपताकाभिर्बलिभिर्माषमिश्रितैः॥९२॥

पूजयेत्परयाभक्त्याकेतुंसर्वार्थसिद्धिदम् ॥ लोकपालानहंवक्ष्येसर्वसिद्धिप्रदायकान् ॥ ९३ ॥ येषुपूजितमात्रेषुनालभ्यंविद्यते
क्वचित् ॥ देवराजंततोध्यायेत्पुष्पबाणचयप्रभम् ॥ द्विभुजंपीतसंकाशंनीलेन्दीवरलोचनम् ॥ ९४ ॥ रक्तोत्पलधरंतद्वत्पीतवासःसमन्वि
तम् ॥ चामराहस्तशक्रैश्चकन्यारत्नैश्चशोभितम् ॥ ९५ ॥ इन्द्राणींचिंतयेद्वामेउत्पलद्वयधारिणीम् ॥ एवंसंपूजयेद्भक्त्यासुररा
जंजगत्प्रभुम् ॥ त्रातारमितिमन्त्रेणस्थापयेत्कर्णिकोत्तरे ॥ ९६ ॥ पूजयेत्परयाभक्त्याधूपगंधानुलेपनैः ॥ नानाविधोपहारैश्चपताकाभि
र्ध्वजैरपि ॥ ९७ ॥ बलिक्षीरान्वितंदद्यान्मोदकंसितशर्कराम् ॥ उत्तप्तस्वर्णसंकाशंवीतिहोत्रंचतुर्भुजम् ॥ ९८ ॥ अर्धचन्द्रसमस्थंचअ
जवाहनमुत्तमम् ॥ ज्वालावितानसंरक्तंमूर्ध्निसप्तशिखान्वितम् ॥ ९९ ॥ वरदंविभयंमालांदक्षेसूत्रकमंडलुम् ॥ त्रिनेत्रंरक्तनयनंजटाम
कुटमंडितम् ॥ १०० ॥ नानाभरणसंपन्नंसिद्धगन्धर्वसेवितम् ॥ अग्निर्जिह्वेतिमंत्रेणस्नापयेदग्निदिग्दले ॥ १०१ ॥ पूजयेद्रक्तपुष्पै
श्चरक्तमाल्यानुलेपनैः ॥ धूपैरक्तपताकाभिर्बलिभिःपायसैरपि ॥ १०२ ॥ नीलाञ्जनचयप्रख्यंनीलसिंहासनस्थितम् ॥ महामाहिषमारूढं
दंडपाशधरंविभुम् ॥ १०३ ॥ करालवदनंभीमंज्वालाघूर्णितलोचनम् ॥ घोरदंष्ट्राकरालैश्चाकिंकराणांगणैर्वृतम् ॥ महिषींचिंतयेद्वा
मेचित्रगुप्तंचदक्षिणे ॥ १०४ ॥ अच्छीयसइतिमंत्रेणस्थापयेद्यमदिग्दले ॥ पूजयेत्परयाभक्त्याधर्मराजंजगद्गुरुम् ॥ राक्षसेन्द्रंमहाकायं
कृष्णवर्णंद्विबाहुकम् ॥ १०५ ॥ नानाभरणसंपन्नंखड्गहस्तंमहाबलम् ॥ वरमुक्ताविमानस्थंघोररूपंजलेश्वरम् ॥ १०६ ॥ एषतइतिमंत्रेणनै
ऋत्यांस्थापयेद्दिशि ॥ कृष्णचन्दनवस्त्रैश्चकृष्णमाल्यानुलेपनैः ॥ १०७ ॥ धूपैःकृष्णपताकाभिर्बलिभिर्माषमिश्रितैः ॥ शुद्धस्फटिकसंका
शंशंखकुन्देन्दुसप्रभम् ॥ १०८ ॥ द्विभुजंपाशहस्तंचसुन्दराङ्गंवरप्रदम् ॥ वरुणस्येतिमंत्रेणस्थापयेत्पश्चिमेदले ॥ १०९ ॥ सितचन्दन
धूपैश्चपताकाभिर्ध्वजैरपि ॥ ११० ॥ समीरणंकुंजरवर्णतन्निभंमृगाधिरूढंद्विभुजंद्विनेत्रम् ॥ ध्वजांबरंचापिदधानमेकंनीलांबरंमेघगणै
र्वृतंच ॥ १११ ॥ नीलचन्दनवस्त्रैश्चनीलमाल्यानुलेपनैः ॥ पूजयेत्परयाभक्त्यापताकाभिर्ध्वजैरपि ॥ ११२ ॥ धूपैर्नीलपताकाभिर्बलि
भिःपायसैरपि ॥ ११३ ॥ ध्यायेद्द्विनेत्रंद्विभुजंधनेशंपीतांबरंवैनरवाहनंच ॥ गदाधरंभक्तवरप्रदंचआवाहयेदुत्तरपद्मपत्रके ॥ ११४ ॥ गंधचं

दनवस्त्रैश्चपीतमाल्यानुलेपनैः ॥११५॥ धूपैःपीतपताकाभिर्बलिभिःपायसैरपि ॥११६॥स्निग्धकर्पूरसंकाशंतुषारकिरणप्रभम् ॥ त्रिशूलतुं
बुरधरंतथाभयवरप्रदम् ॥११७॥ उत्तुङ्गवृषभारूढंत्रिनेत्रंभस्मभूषितम् ॥ कपालमालिनंतद्वत्खण्डेन्दुकृतशेखरम्॥११८॥ एवंध्यात्वामहे
शानंस्थापयेद्दिशिदिग्दले॥११९॥पूजयेत्परयाभक्त्याभक्ष्यभोज्यैरनेकशः ॥१२०॥ सितध्वजपताकैश्चबलिभिःपायसादिभिः॥त्वमीशानइ
तिमंत्रेणऋषिश्छन्दः समीरयन् ॥ १२१ ॥ ब्रह्माणंरक्तगौराङ्गंशोणपद्मसमप्रभम् ॥ राजीवलोचनंतद्वत्पद्मगर्भासनप्रभम् ॥ १२२ ॥ पद्मा
सनस्थितंतद्वच्छ्वेतवासंचतुर्भुजम् ॥ चतुर्मुखंसुरश्रेष्ठंमेघगंभीरनिस्वनम् ॥ १२३ ॥ राजहंससमायुक्तंविमानवरसंस्थितम् ॥ स्रुचस्रुवौदक्षिणे
चवामेदण्डकमंडलुम् ॥ १२४ ॥ कुर्वाणमिवलोकांस्त्रीन्सिद्धगन्धर्वसेवितान्॥आज्यस्थालींतथैवाग्रेकूर्पांश्चसमिधंतथा ॥ १२५ ॥ वामपा
र्श्वेतुसावित्रींदक्षिणेतुसरस्वतीम् ॥ आब्रह्मन्निति मंत्रेणस्थापयेत्पूर्वदिग्दले ॥१२६॥ नानाभक्ष्योपचारैश्चपूजयेद्गंधचन्दनैः॥धूपैःश्वेतपताका
भिर्बलिभिश्चाज्यपायसैः ॥ १२७ ॥ अनंतंशुक्लवर्णाभंपीतवासंचतुर्भुजम् ॥ शङ्खचक्रगदापद्मधारिणंजगदीश्वरम् ॥ १२८ ॥ आधारभूतं
जगतांस्वर्णयज्ञोपवीतिनम् ॥ नानाभरणसंपन्नंफणासतफणान्वितम् ॥ १२९॥ ॐनमोस्त्वितिमंत्रेणस्थापयेद्वरुणांतरे ॥ पूजयेद्भक्ष्यभो
ज्यैश्चदीपगन्धानुलेपनैः ॥ १३० ॥ धूपैःश्वेतपताकाभिर्बलिभिश्चैवनिर्मितैः॥ततोमंडलपूर्वेतुब्रह्माणंपीतवाससम्॥१३१॥ चतुर्भुजंचतुर्वक्त्रं
स्रुवहस्तंवरप्रदम् ॥ बिभ्रतंचस्रुतंतद्वत्तथादंडकमंडलू ॥ १३२ ॥ आब्रह्मन्नितिमन्त्रेणपूजयेद्गन्धचन्दनैः ॥ दक्षिणेत्र्यंबकंध्यायेच्छू
लखट्वाङ्गधारिणम् ॥ १३३ ॥ वरदंतमुरुधरंनागयज्ञोपवीतिनम् ॥ निबद्धजूटचन्द्रार्धंशुद्धस्फाटिकसन्निभम् ॥१३४॥ कपालमालिनंदेवंभु
जंगाभरणान्वितम्॥त्रिनेत्रंकुन्दसंकाशंभूतप्रेतगणैर्वृतम्॥१३५॥त्र्यंबकंचेतिमंत्रेणपूजयेन्मधुपायसैः ॥ अतसीपुष्पसंकाशंहारकेयूरभूषितम्
॥१३६॥नानाभरणसंपन्नंपीतवासंचतुर्भुजम् ॥ दक्षिणेचगदाचक्रंवामेशङ्खंसपद्मकम् ॥१३७॥ श्रियादक्षिणतोवामेसरस्वत्यासमन्विताम् ॥
ताद्विष्णोरितिमंत्रेणस्थापयेत्पश्चिमेततः ॥ १३८ ॥ पूजयेद्गन्धपुष्पाद्यैःपायसेनघृतेनच ॥ गणेशंतुचतुर्बाहुंव्यालयज्ञोपवीतिनम् ॥१३९ ॥
गजेन्द्रवदनंदेवंश्वेतवासंचतुर्भुजम् ॥ पर्शुंलड्डुकंतथावामेदक्षिणेदंडमुत्पलम् ॥ १४० ॥ मूषकस्थंमहाकायंशङ्खकुन्देन्दुसप्रभम् ॥ युक्तंबु

द्धिकुबुद्धिभ्यामेकदन्तंभयापहम् ॥ १४१ ॥ नानाभरणसंपन्नंसर्वविपद्विनाशनम् ॥ गणानान्त्विवतिमन्त्रेणविन्यसेदुत्तरेध्रुवम् ॥ १४२ ॥
उत्तप्तजांबूनदहेमसन्निभांलक्ष्मींसरोजासनसंस्थितांशुभाम् ॥ वामेसरोजंदधतींतथैवहस्तेचदक्षेधृतचामरांच ॥ १४३॥ श्रीश्चतेतिचमन्त्रेण
ऐशान्यांमंडलाद्बहिः ॥ स्थापयेत्पूजयेद्भक्त्यासितचन्दनपंकजैः ॥ १४४ ॥ मोदकंपरमान्नंचयवक्षीरंनिवेदयेत् ॥ १४५ ॥ ततोदेवीमं
बिकांदिव्यरूपांब्रह्मेंद्राद्यैःस्तूयमानांत्रिनेत्राम् ॥ सिंहेशस्थांतप्तजांबूनदाभांचंद्रार्द्धेनाबद्धमौलिंजटाभिः ॥१४६ ॥ दिव्यैर्वस्त्रैर्बाहुभिःसायलं
बैर्दिव्यैर्वस्त्रैर्भूषणैःस्वैरुपेताम् ॥ ब्रह्मेन्द्राद्यैर्दुर्जयंमाहिषास्यंतीक्ष्णैरस्त्रैर्शनवंमर्दयंतीम् ॥ १४७ ॥ शूलंचतीक्ष्णबाणंचशक्तिंखड्गंतीक्ष्णं
बिभ्रतींदक्षिणेन ॥ चापंपाशंखेटकंचांकुशंचघंटांवामेबिभ्रतींवाकुठारम् ॥१४८॥ शिरश्छेदाद्दर्शजातंक्रव्यंखड्गंतीक्ष्णंबिभ्रतींदैत्यराजम् ॥
नागैःपाशैर्वेष्टयित्वासमंताच्छूलेनैनंनिघ्नतींदेहमध्ये ॥ १४९ ॥ सेन्द्रैर्देवैःस्तूयमानांसुरेणौगंधर्वाद्यैःसिद्धसंघैश्चसेव्याम् ॥ नानावस्त्रैर्भूषणै
र्दीप्यमानांध्यायेद्देवीमंबिकामुज्ज्वलंतीम् ॥ १५० ॥ वस्त्रैर्माल्यैर्यैर्धूपैर्वितानैर्भक्ष्यैर्भोज्यैर्मोदकैःपायसैश्च ॥ मांसैःपिष्टैश्छागलाद्यैरशेषैः
पूज्यादेवीचंडिकाभीष्टदाच ॥ १५१ ॥ श्यामांचपृथिवींध्यायेत्पङ्कजद्वयधारिणीम् ॥ १५२ ॥ मंडूकस्थांद्विभुजांस्योनापृथिवीतिचार्च
येत् ॥ नैर्ऋत्यांविश्वकर्माणंद्विभुजंटंकधारिणम्॥१५३॥ उत्पलंदक्षिणेहस्तेपद्मस्थंपीतवाससम् ॥ एवंध्यात्वाततोब्रह्मन्निरितिमंत्रेणपूजयेत् ॥
॥ १५४ ॥ स्वस्थांसरस्वतींध्यायेद्वरदाभयदायिनीम् ॥ पीतवस्त्रांसुमुकुटांदेवगन्धर्वसेविताम् ॥ १५५ ॥ यामधाइतिमंत्रेणपूजयेत्सितच
न्दनैः ॥ बलिंश्वेतचरुंदद्यात्कृसरंयावकंतथा ॥ १५६ ॥ स्थापयेद्वामदिग्भागेकुंदपुष्पैःप्रपूजयेत् ॥ पूर्वादिद्वारदेशेतुपूजयेच्चमरुद्गणैः ॥
॥ १५७ ॥ अग्न्यादिषुचकोणेषुबहिर्भूतान्समाचरेत् ॥ पिशाचाराक्षसाभूतावेतालक्रपिजातयः ॥ १५८ ॥ निर्मांसाश्चैवतेसर्वेरौद्राविकृ
तरूपिणः ॥ ततोमंडलमध्येतुवारुणंपूर्ववत्मना ॥ १५९ ॥ पूरयेत्कलशेतत्रसुवर्णादिविनिर्मितम् ॥ कूर्मंकूर्माकृतिंकुर्याच्छुद्धस्वर्णेनस
त्तमाः ॥ १६० ॥ बृहत्पर्वप्रमाणेनराजतस्यचदुर्लभम् ॥ पादंपादेनमानेनअंगुलंपरिमंडलम् ॥ १६१ ॥ प्रौष्ठोमत्स्यंतथाकुर्यात्कुलीरं
ताम्रनिर्मितम् ॥ तेनैकस्यविनिर्माणंद्व्यंगुलायामविस्तृतम् ॥ १६२ ॥ तथामानेनमंडूकंताभूमिंमुनिसत्तमाः ॥ शिशुमारंचयत्सम्यक्तोल

कद्वयनिर्मितम् ॥ १६३ ॥ अंगुलत्रयदीर्घेणयस्यतस्याकृतिर्भवेत् ॥ सितचंदनवस्त्रैश्चपूजनीयासमंततः ॥ १६४ ॥ यावकांश्चविशेषे
णबहुमंत्रविशारदान् ॥ बह्वृचौपूर्वमत्स्यार्थेदक्षिणेतुयजुर्विदौ ॥ १६५ ॥ सामगौपश्चिमेनाथउत्तरेथर्वणौस्मृतौ ॥ जयध्वमितितान्ब्रूया
द्धोतृकान्पुनरेवहि ॥ १६६ ॥ स्थापयित्वापृथक्सूत्रेसर्पंचमातरुदीपमेवच ॥ पश्चाङ्गंशिवसूक्तंचयथाविष्णोर्हरस्यच ॥ १६७ ॥ जया
ग्रतःपुरुषसूक्तमद्भ्यःसंभूतमेवच ॥ आशुःशिशानमारभ्यवयंमोषांगरुद्रके ॥ १६८ ॥ यज्जाग्रतश्चाग्नेश्चविष्णोरराटमेवच ॥ समस्ता
ध्यायरुद्रेणशतरुद्राख्यमीरितम् ॥ १६९ ॥ पञ्चाङ्गरुद्रस्यपुष्पदंतऋषिर्गायत्रीछंदोवेदाहमेतद्बीजम् ॥ श्रीश्चतेइतिशक्तिर्नमस्तेरुद्रइति
नायकः ॥ १७० ॥ परमरुद्रोदेवतापरमस्तुतौविनियोगः ॥ १७१ ॥ सप्तांगरुद्रस्यपुष्पदंतऋषिःपंक्तिश्छन्दरुयंबकमितिअङ्गुष्ठाभ्यांन
मः ॥ १७२ ॥ त्रिपादूर्ध्वमितितर्जनीभ्यांस्वाहा ॥१७३॥ वेदाहमितिमध्यमाभ्यांवषट् ॥ अमीषांचित्रामितिमध्यमाभ्यांहूम् ॥ १७४ ॥ य
वागूंसोमइतिकनिष्ठिकाभ्यांवौषट् ॥ परितोयेतुमितिकरतलकरपृष्ठयोः ॥१७५॥ श्रीश्चतेइतिअस्त्रायफडिति ॥ चतुर्दिक्षुछोटिकादानम् ॥
॥ १७६ ॥ यज्जाग्रतइतिहृदयायनमः ॥ सहस्रशीर्षेतिशिरसेस्वाहा ॥ १७७ ॥ अद्भ्यःसंभूतइतिशिखायैवषट् ॥ आशुःशिशानइतिक
वचाभ्यांहूं ॥ नमस्तेरुद्रइतिनेत्राभ्यांवौषट् ॥ १७८ ॥ रूढंअस्त्रेतिअस्त्रायफट् ॥ सर्वांगेषु ॥ होमेप्रवर्तमानेतुसूक्तानन्यांश्चवैजपेत् ॥
॥ १७९ ॥ प्रजपेद्वारणंसूक्तंतथाचपालसूक्तकम् ॥ रात्रिसूक्तंचरौद्रंचपावमानंसमुज्ज्वलम् ॥ १८० ॥ जपेच्चपौरुषंसूक्तंसर्वतोवरतंपृथक् ॥
शाक्तंरौद्रंचसौम्यंचकूष्माण्डंजातवेदसम् ॥ १८१ ॥ सौरसूक्तंचयजतोदक्षिणेनयजुर्विदः ॥ वैराजंपौरुषंसूक्तंसौवर्णंरुद्रसंहितम् ॥ १८२ ॥
शैशवंपञ्चनिरयंगायत्रंज्येष्ठसामच ॥ वामदेव्यंबृहत्सामतथाचैवरथंतरम् ॥ १८३ ॥ गोव्रतंचविकर्णंचरक्षोघ्नंपावनंस्मृतम् ॥ गायंतंब्रा
ह्मणायेचपूर्वादिद्वारदेशतः ॥ १८४ ॥ अन्नात्परिस्रुतइतिपंचपूर्वंसौरसूक्तकम् ॥ रुद्राध्यायंचपश्चाङ्गंरौद्रइत्यभिधीयते ॥ १८५ ॥
आप्यायस्वेतिचचतुःसौम्यंसूक्तंप्रचक्षते ॥ ईशावेत्यादिस्वांगंचकौष्मांडंदशमंस्मृतम् ॥ १८६ ॥ अग्नेबृहन्नितिनवसूक्तंवैजातवेदसम् ॥ षो
डशंतुविभ्राड्बृहत्सौरंसूक्तंप्रकीर्तितम् ॥१८७॥ सौरसूक्तंध्रुवोसीतिइषवोमंगलंस्मृतम् ॥ रात्रिसूक्तंहियज्वाग्नेरक्षोघ्नंशैवसूक्तकम् ॥ १८८ ॥

गणानान्त्वेतिपञ्च आपोहिष्ठेतिचत्रयम् ॥ पवमानंतुतद्विद्धिपावमानंतुषोडश ॥ १८९ ॥ समस्तंदेवयागेषुतद्रात्रौतुतदूर्ध्वकम् ॥ तदर्द्धार्द्धंच
आरामेकूपेत्वेकऋचंजपेत् ॥ १९० ॥ स्वगृह्योक्तविधानेनप्रतिकुण्डेषुहोमयेत् ॥ संस्कुर्यादीक्षणाद्यैश्चसंपूज्यचपरस्परम् ॥ १९१ ॥ प्र
ज्वाल्याग्निंचविधिवद्धोमंकुर्यादनंतरम् ॥ वागीश्वरंसमभ्यर्च्यवागीश्वर्यासमन्वितम् ॥ १९२ ॥ यस्यदेवस्ययोयागःप्रतिष्ठायस्यकस्य
चित् ॥ प्रागेवतस्यजुहुयात्सहस्रंचशतंतथा ॥ १९३ ॥ तिलाज्यैःपायसैर्वाथपत्रपुष्पाक्षतेनच ॥ ग्रहेभ्योविधिवत्सर्वंतथेन्द्रायेश्वरायच ॥
॥ १९४ ॥ मरुद्भ्योलोकपालेभ्योविधिवद्विश्वकर्मणे ॥ ऊर्जेनसमिधाकुर्यादष्टाष्टौस्वगृहेष्वपि ॥ १९५ ॥ इन्द्रेश्वरमरुतानांतिलाज्येन
घृतेनवा ॥ एकैकामाहुतिंदद्यात्स्वैःस्वैर्मंत्रैर्यथाक्रमात् ॥ १९६ ॥ दिगीशानांचप्रत्येकमष्टाष्टौचविशेषतः ॥ विश्वकर्मन्निति मंत्रेणकृत्वा
आज्याहुतित्रयम् ॥ १९७ ॥ समित्रयंपलाशस्यअथवाश्वत्थसंभवम् ॥ एकैकामाहुतिंदद्यादाज्येनचविशेषतः ॥ १९८ ॥ शिवंप्रजाप
तिंविष्णुंदुर्गांचकमलामपि ॥ सरस्वतींचविधिवत्पृथिव्याइतिपावकैः ॥ १९९ ॥ भूतेभ्योप्याहुतिंदद्यादेवंमासद्वयंक्रमात् ॥ अन्येषां
मधुराक्तेनतिललाजैर्यथाक्रमम् ॥ २०० ॥ विष्णुंचैवंतुवायव्येदुर्गायाश्चतथोत्तरे ॥ कमलायाश्चऐशानेईशानस्यसभूतकम् ॥ २०१ ॥
एककुंडेतुएकस्मिन्होमंकुर्याद्यथाविधि ॥ पक्षेवैपंचकुंडेतुपूर्वादीनांक्रमेणतु ॥ २०२ ॥ एककुंडेग्रहान्कृत्वाकृत्वाबलभिदासह ॥
दक्षिणेक्रमतश्चैवंलोकेशंचतथैवच ॥ २०३ ॥ पश्चिमेयस्ययागस्यदुर्गायाश्चोत्तरेदिशि ॥ ईशानेभूतयक्ष्माचजुहुयाद्देशिकोत्त
मः ॥ २०४ ॥ विष्णवादिदेवतानांचअग्रकुंडेविधीयते ॥ प्रथमेदिवसेकुर्याद्देवतानांचस्थापनम् ॥ द्वितीयेपूजनंकुर्याद्धोमंकुर्याद्यथा
विधि ॥ २०५ ॥ बलिदानंतृतीयेतुचतुर्थीकंचतुर्थके ॥ नीराजनंपंचमेतुपञ्चाहसाध्यकोविधिः ॥ त्र्यहसाध्येतृतीयेतुनवाहेत्वथपंचमे ॥ २०६ ॥
प्राङ्मुखोदङ्मुखोवापिऐशान्यादिक्रमेणतु ॥ प्रादक्षिण्येनयज्ञंतुमंत्रैःपरिसमूहनम् ॥ मंत्रपूर्वंसाग्निकानांनिरग्नेस्तुष्टिकेनतु ॥ २०७ ॥
त्रिकुशेनमहायागेविवाहादौद्विपत्रकम् ॥ वैश्वदेवेत्वेकपत्रमितिसाधारणोविधिः ॥ दिग्विदिक्षुपरिस्तीर्यमहायागेषुसर्वदा ॥ २०८ ॥ दिक्षु
मात्रंनित्यकेचविश्वदेवेतथैवच ॥ अकृत्वाचैवनित्यंचवृथानैमित्तिकंहियत् ॥ २०९ ॥ तस्मात्फलाद्यैरपितत्कृत्वानैमित्तिकंचरेत् ॥

प्रायश्चित्तेवैश्वदेवेसायंप्रातःप्रतीषुच ॥ २१० ॥ मारणोच्चारहोमेषुतथासंकलिपताकृती ॥ प्रत्यवायकुलेकापितत्रनित्याकृतिंविना ॥
॥ २११ ॥ शतार्द्धंजुहुयाद्यत्रतत्रानित्यंविवर्जयेत् ॥ तूर्यहोमंततःकृत्वातूष्णीमेवजितेन्द्रियः ॥ २१२ ॥ प्रजपेदिन्द्रमाग्नेवसोमायचय
थाक्रमम् ॥ ततस्तुसमिधाहोमंव्याहृतिस्तदनंतरम् ॥ २१३ ॥ भूर्भुवःस्वाहेतितथात्वन्नइत्यादिपंचकम् ॥ अंतेस्विष्टकृतंदद्याद्विधानंतस्य
भोःशृणु ॥ २१४ ॥ घृताहुतीःस्विष्टकृच्चद्विजसंस्कारकर्मसु ॥ घृतैःस्विष्टकृतंदद्यादन्यागादौपरिवर्जयेत् ॥ २१५ ॥ सर्वौषध्युदकस्नानं
करिदंतोत्थमुष्णया ॥ रथ्यावल्मीकगोष्ठस्यतथाश्वस्यसुरस्यच ॥ २१६ ॥ त्रिगंधंचत्रिशीतंचकुशमूलस्यमृत्तिका ॥ निक्षिपेत्स्नानकुंभे
षुआचार्यादींस्तुस्थापयेत् ॥ २१७ ॥ यजमानःपुरःकृत्वादंतकाष्ठपुरःसरम् ॥ रात्रौचभक्ष्यभोज्याद्यैःपरितोष्ययवाक्षतम् ॥ २१८ ॥
कृत्वायथोक्तकालेनपूजयेत्तैलधारया ॥ ततःप्रभातेविमलेस्नानंकुर्याद्यथाविधि ॥ २१९ ॥ स्नानमाब्दैवतैर्मंत्रैःसूक्तेनपुरुषेणतु ॥ वारुणेन
चसूक्तेनसुरास्त्वादियथाक्रमम् ॥ २२० ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणःप्रभुः ॥ २२१ ॥
आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ २२२ ॥ ब्रह्मणासहितःशेषोदिक्पालाःपांतुतेसदा ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ २२३ ॥ बुद्धिर्लज्जावपुःशांतिस्तुष्टिःकांतिश्चमातरः ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यः
समाहिताः ॥ २२४ ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः ॥ २२५ ॥ देवदानवगंधर्वा
यक्षराक्षसपन्नगाः ॥ ऋषयोमनवोदेवादेवमातरएवच ॥ २२६ ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ अस्त्राणिसर्वशस्त्राणिराजा
नोवाहनानिच ॥ २२७ ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ २२८ ॥ एतेत्वामभि
षिंचंतुसर्वकामार्थसिद्धये ॥ स्नानंसमाप्यविधिवत्स्वगणेनानुलेपयेत् ॥ २२९ ॥ गवामष्टोत्तरशतंतदर्धंचाथविंशतिः ॥ आचार्यायाभिरूपा
यप्रदद्यादभिपूजयन् ॥ २३० ॥ ततःप्रभातेविमलेजलेसमवतारयेत् ॥ शुद्धांचकपिलांदोग्ध्रींघंटाचामरवर्जिताम् ॥ २३१ ॥ सामगाय
ततोदद्यात्सुवर्णदक्षिणान्विताम् ॥ यूपमादायसंस्थाप्यस्नापयेद्वारुणंजपन् ॥ २३२ ॥ अच्छेवतेनमंत्रेणगायत्र्यातदनंतरम् ॥ रोचनांच

त्रिरत्नेनतथाकुंभोदकेनच ॥ २३३ ॥ पर्वताग्रमृदातोयनागवल्मीकमेवच ॥ गजदंतमृदाचैवकूलमूलमृदातदा ॥ २३४ ॥ पुष्पोदकेन
संख्येनतथारत्नोदकेनच ॥ दध्यक्षतेनदुग्धेनघटेनशतधारया ॥ २३५ ॥ सुगंधेनत्रिशोतेनविलिप्यचसमाहितः ॥ दापयेत्कांस्यमूलंचद
द्याल्लोहमयंचवा ॥ २३६ ॥ माल्यवस्त्रैरलंकृत्यपूजयेद्गन्धचन्दनैः ॥ ईशावाइतिमंत्रेणदद्यात्पुष्पाञ्जलित्रयम् ॥ २३७ ॥ पुनस्त्वादीति
मंत्रेणपुनःपुष्पंसमुत्सृजेत् ॥ प्रादेशमात्रंविस्तारंमध्येवृत्तंषडंगुले ॥ २३८ ॥ कांस्यचक्रस्यमानंतुऊर्ध्वेयद्वादशांगुलम् ॥ तदूर्ध्वेविलि
खेच्छूलंचतुरंगुलमानतः ॥ २३९ ॥ अंगुष्ठहीनेलोहस्यतत्रशूलंनकारयेत् ॥ ततोमंगलपूर्वंतुद्विजातीनांमतेनच ॥ २४० ॥ समुत्सृजेच्च
प्रासादंतडागंचाविशेषतः ॥ चतुर्दर्भंगृहीत्वातुईशानाभिमुखेनतु ॥ २४१ ॥ समुत्सृजेत्ततःपश्चाद्वाक्यमेतदुदीरयेत् ॥ २४२ ॥ ओ
मित्यादिश्रीकृष्णद्वैपायनाभिधानवेदव्यासप्रणीतभविष्यपुराणोक्तफलप्राप्तिकामश्चतुष्कोणावच्छिन्नमत्कारितपुष्करिणीजनमेतदूर्जितं
गंधपुष्पाद्यर्चितंवरुणदैवतंसर्वसत्वेभ्यःस्नानावगाहनार्थमहमुत्सृजे ॥ २४३ ॥ ततोवरुणसूक्तेनवरुणंनागसंयुतम् ॥ मकरंकच्छपंचैवतो
येषुपरिनिक्षिपेत् ॥ २४४ ॥ पूजयेद्वरुणंदेवमर्घ्यंदद्याद्विशेषतः ॥ तेनोदकेनसंस्नाप्यगजदंतोत्थमृत्तिका ॥ २४५ ॥ इमेताश्वसुरसंभूतं
श्रीश्चतेतिचसंजपन् ॥ आप्यायस्वेतिमंत्रेणमृदंचतुष्पथोद्भवाम् ॥ २४६ ॥ तद्विष्णोरितिमंत्रेणकुशमूलेनस्थापयेत् ॥ तीर्थतोयेनगंधेनत
थापञ्चामृतेनच ॥ २४७ ॥ गायत्र्यास्नापयेद्देवंरत्नतोयेनसाधकः ॥ आप्यायस्वेतिमंत्रेणक्षीरेणतदनंतरम् ॥ २४८ ॥ दधिक्राव्णेतिद
ध्नाचमधुवातेतिवैमधु ॥ सरस्वत्यांतेतिजातिपुष्पतोयेनस्नापयेत् ॥ २४९ ॥ वरुणोत्तमितिमंत्रस्यनारायणऋषिः गायत्रीछंदःवरुणो
देवतावरुणप्रीतयेविनियोगः ॥ २५० ॥ श्रीश्चतेइतिमंत्रस्यकर्दमऋषिःपंक्तिश्छंदः सरितादेवताअश्वखुरमृदास्नानेविनियोगः ॥ २५१ ॥
आप्यायस्वेतिमंत्रस्यपर्वतऋषिःउष्णिक्छन्दः सरस्वतीदेवतावरुणप्रीतयेचतुष्पथमृदास्नानेविनियोगः ॥ २५२ ॥ तद्विष्णोरितिमंत्र
स्यमैनाकऋषिस्त्रिष्टुप्छन्दः सरस्वतीदेवतावरुणप्रीतयेकुशमृदास्नानेविनियोगः ॥ २५३ ॥ कयानेतिमंत्रस्यवसिष्ठऋषिरनुष्टुप्छन्दः
सोमोदेवतावरुणप्रीतयेनागगंधस्नानेविनियोगः ॥ २५४ ॥ तेजोसीतिमंत्रस्यगर्गऋषिस्त्रिष्टुप्छन्दः वासवोदेवतावरुणप्रीतयेविनि

योगः ॥ २५५ ॥ सरस्वत्यैभैषज्येनेतिमंत्रस्यवामदेवऋषिःपंक्तिश्छंदोविष्णुर्देवतावरुणप्रीतयेविनियोगः ॥ २५६ ॥ पुष्पोदकस्नाने
अग्नआयाहीतिमंत्रस्यजनार्दनऋषिः जगतीच्छन्दऐन्द्रीदेवतावरुणप्रीतयेविनियोगः ॥ २५७ ॥ प्रक्षिपेत्पञ्चव्रीहींश्चइयञ्चेतिचसंपठन् ॥
पश्चान्नीराजनंकुर्यात्पञ्चघोषपुरःसरम् ॥ २५८ ॥ शिरीषपुष्पसंभूतंदर्पणंकांस्यसंभवम् ॥ गोपीचन्दनसंभूतंगंगामृत्तिकयाथवा ॥२५९ ॥
कृष्णागौर्गोमयंवापिस्वस्तिकंशंखमेवच ॥ कारयेत्पदकंवापियवगोधूमकस्यवा ॥ २६०॥ उत्पन्नस्वर्गसंभूतंकलशंमाषसंभवम् ॥ श्रीरसंपु
ष्पसंभूतंदर्पणंकांस्यसंभवम् ॥ २६१ ॥ नन्द्यावर्तैर्मलयजेततोनिर्मलयेत्सुधीः ॥ एकैकंप्रतिमंत्रेणप्रत्येकंतुजलोपरि ॥ २६२ ॥ ध्रुवप्राति
कृतैर्मंत्रैरष्टभिश्चयथाक्रमम् ॥ पूर्वाक्षतंमाषभक्तबलिंदद्याद्विधानतः ॥ २६३ ॥ ततोनारायणसूक्तेनदेवंनारायणंव्रजेत् ॥ अन्येषांचैवदेवा
नांप्रदद्यात्त्रिंशतंबलिम् ॥ २६४ ॥ ततआचमनीयंचवस्त्रयुग्मंनिवेदयेत् ॥ वक्ष्यमाणेनमंत्रेणक्रमेणापिविधानतः ॥ २६५ ॥
पृथक्पृथक्ततोदद्यात्तावत्येनापिभोद्विजाः ॥ देवसूत्रसमायुक्तेयज्ञसूत्रसमन्विते ॥ २६६ ॥ सर्ववर्णप्रभेदेनवासांसिप्रतिगृह्यताम् ॥ शरी
रंतेनजानामिचेष्टांनैवचनैवच ॥ २६७॥ मयानिवेदितान्गन्धान्प्रगृह्यचविलिप्यताम् ॥ अष्टोत्तरशतान्दीपान्परितःस्थापयेत्क्रमात्॥२६८॥
तदर्धंवापञ्चविंशंमंत्रेणप्रयजेत्सुधीः ॥ त्वंसूर्यचन्द्रज्योतींषिविषादस्त्वंतथैवच ॥ २६९ ॥ त्वमेवसर्वज्योतींषिदीपोयंप्रतिगृह्यताम् ॥ प्रद
क्षिणंततःकुर्यात्पञ्चधासप्तधाथवा ॥ २७०॥ वक्ष्यमाणेनमंत्रेणदद्याद्धूपंदशांगकम् ॥ वनस्पतिरसोदिव्योगंधाढ्यःसुरभिःशुचिः ॥२७१ ॥
मयानिवेदितोभक्त्याधूपोऽयंप्रतिगृह्यताम् ॥ अलंकारंचगंधंचपीतवस्त्रंतथैवच ॥ २७२ ॥ दूर्वाक्षतचमाल्यंचयुक्तंपुष्पेणपूजयेत् ॥ द
द्यात्पश्चाञ्जलिंपश्चाद्विष्णुसूक्तंपुनर्जपेत् ॥२७३॥ ततःसुशोभनेस्नानेमण्डपंनिर्मायदेशिकः ॥ वरुणंविन्यसेत्तत्रतथापुष्करिणीमपि॥२७४॥
विवाहोक्तेनविधिनाकुर्यान्निर्मंछनादिकम् ॥ गंधपुष्पंततोदद्याद्गांचदद्यात्सदक्षिणाम् ॥२७५ ॥ चामरंव्यजनंछत्रंकांस्यलोहंतथैवच ॥ कु
र्यात्पुष्करिणींरम्यांराजतींचात्रिपादिकाम्॥२७६॥चतुष्कोणांचसुषमाद्यङ्गुष्ठपरिमंडलाम्॥सुवर्णप्रतिमांकुर्याद्वालेनैकेनभोद्विजाः॥२७७॥
अथवास्वर्णपत्रेचकुंकुमेनतलेलिखेत् ॥ बाणशक्तिप्रमाणेनस्वर्णपत्रंतुद्व्यंगुलम् ॥२७८ ॥ कारयेच्चतुरस्रंचपीठोपरिन्यसेद्बुधः ॥ नीराजनांते

विप्रेंद्राःसंस्मरेदमृतंतरेत् ॥ २७९ ॥ अशक्तेनतथैवैकाकाष्ठेवापिपिप्पलच्छदे ॥ ताम्रपट्टेलिखेद्वापिअलक्तेनयथाविधि ॥ २८० ॥ प्राण
प्रतिष्ठांकुर्यात्तुवरुणायनिवेदयेत् ॥ महंतुवत्सरंकुर्याद्वेदघोषपुरःसरम् ॥२८१॥ अशोकंखदिरंशालमश्वत्थंबिल्वकंतथा ॥ धात्रीकुरुबकं
चैवबहुलंनागकेसरम् ॥ २८२ ॥ एषामेवकाष्ठयूपंयजमानप्रमाणकम् ॥ समादायचसंस्थाप्यवस्त्राद्यैःप्रतिगृह्यच ॥ २८३ ॥ यूपरक्षे
तिमंत्रेणखनित्वाचप्रदापयेत् ॥ स्थिरोभवेतिमन्त्रेणहस्तंदत्वापठेत्ततः ॥ २८४ ॥ तडागस्यतथैशान्यांतथाप्रासादकस्यच ॥ प्रापयेद्द
क्षिणेभागेआवासस्यचमध्यके ॥ २८५ ॥ नौकांगत्वाततःपश्चाद्यूपमादायवाग्यतः ॥ मध्यदेशेतडागस्यसमुल्लंघ्यतथोत्तरम् ॥ २८६॥
गंतव्यंप्रकल्प्यतत्रैवआप्यायस्वेतिवैऋचा ॥ शिलायांहोमयेत्तत्रहुनेन्नौकाहुतित्रयम् ॥२८७॥ अंगदायस्वाहेतिभौमायनमइत्यतः ॥ ला
जाशक्तौदधिमधौवासनेप्रतिहोमयेत् ॥ २८८ ॥ कूर्मायनमइत्युक्त्वापृथिव्यैनमइत्युत॥ स्वाहेत्यनंतमंत्रेणदद्यादर्घ्यमनंतरम् ॥२८९॥प
श्चरत्नेनगन्धेनशंखेनार्घ्यंप्रदापयेत् ॥ चतुरस्रंसमाकीर्णंचतुर्दिक्ष्वधृतैर्जनैः ॥ २९० ॥ कल्पयेद्वापयेत्तत्रहस्तंदत्वापठेदिदम् ॥ स्थिरो
भवेतिमंत्रेणगंधपुष्पैःप्रपूजयेत् ॥ २९१ ॥ चक्रंसदर्पणंदद्यान्नागदंडशिरोगतः ॥ विद्युदत्रचकर्तारंग्रहदुखहारिप्रियम् ॥ २९२ ॥ एवंच
क्रंपूजयित्वाशूलंनागांश्चपूजयेत् ॥ उच्चैर्ध्वजंततःकृत्वाननागेतिचसंपठेत् ॥ २९३ ॥ गायत्रेस्वेतिमंत्रेणपठेद्द्वारद्वयंततः ॥ दिक्पा
लेभ्योबलिंदद्यान्माषभक्तंगुडौदनम् ॥ २९४ ॥ रक्तपुष्पान्वितंकृत्वाप्रणिपत्यप्रसादयेत् ॥ सहस्रंवाधनंदद्याद्ब्राह्मणायकुटुंबिने ॥ २९५ ॥
ततोभोज्यंचसर्पिष्मत्सहिरण्यंयथाविधि ॥ इक्षुस्वस्तीतिकांदद्याज्जलेमातॄश्चपूजयेत् ॥२९६॥ मंथरांवशुतांकांतांराक्षसींचपिशाचिकाम् ॥
नागिन्योनागपुत्रांश्चमध्येसंपूजयेत्ततः ॥ २९७ ॥ पूर्णांतेचपृथग्दद्याल्लाजाद्यैर्गुडामिश्रितैः ॥ इन्द्रोबलवतीस्वाहायशोबलवतामपि॥२९८॥
बृहत्पक्षाविशेषोयंमध्यमेचकनीयके ॥ बृहस्पतेचइंद्रायतवदेवलतामिति ॥ २९९ ॥ स्वाहेतिजुहुयात्पश्चात्प्रणीतांचालयेत्ततः ॥
कनिष्ठपक्षेप्रासादेतथाचैवजलाशये ॥ ३०० ॥ मन्दरेतोरणस्यैवविष्वक्सेनंप्रकल्पयेत् ॥ आरामेचतथासेतौविशेषःपञ्चमोद्विजाः॥३०१॥
पूजांतरेणयःकस्यजपेन्मन्त्रसहस्रकम् ॥ स्तुतिंसमाप्यविधिवदिमंमंत्रमुदाहरेत् ॥ ३०२ ॥ सर्वसत्वेभ्यउच्छिष्टमर्पितज्जलमुद्धृतम् ॥

इतिपठित्वापुष्करिणीजलंहस्तेगृहीत्वाजलेक्षिपेत् ॥ ३०३ ॥ ततोजलमातृभ्योनमइतिजलमातॄःप्रपूजयेत् ॥ त्रैलोक्येयानिस्थानानि
स्थावराणिचराणिच ॥ ३०४ ॥ तेषामाप्यायनायैतज्जलमुत्सृज्यतेमया ॥ मात्रेतुकृतमेतत्तेजगदानंदकारकः ॥ ३०५ ॥ शिवायसर्वभूता
नांयत्सपाहिजलाशयम् ॥ पिबंतोह्यवगाहंतःसुखिनःसर्वजंतवः ॥ ३०६ ॥ जलंविश्वायकारायकृतमेतन्मयासदा ॥ कीर्तिस्तिष्ठतुमेदेवा
श्चिरायधरणीधर ॥ ३०७ ॥ त्वत्प्रसादान्महाभागनागराजनमोऽस्तुते ॥ येऽत्रकेचिद्विपद्यंतेस्वकर्मफलभोजनाः ॥ ३०८ ॥ तेषांदोषैर्नलि
प्येहंस्वंस्वंशममवाप्नुयात् ॥ नारायणोजगत्प्राणःसर्वकामप्रदायकः ॥ ३०९ ॥ आपेयामातरःसंतुजगतांवृक्षयोनयः ॥ अपांपतेरसायात्र
यादसामीश्वरप्रभो ॥ ३१० ॥ वरुणास्यासनेकीर्तिंसनातननमोस्तुते ॥ ततोऽर्घ्यंनिधिवद्दद्याद्दक्षिणार्थीद्विजन्मने ॥ ३११ ॥ सुवर्णंरजतं
दद्यादनड्वाहंपयस्विनीम् ॥ दद्याद्धेनुद्वयंपश्चात्कुर्याद्ब्राह्मणतर्पणम् ॥ ३१२ ॥ वह्निपूजांपुरस्कृत्यमन्त्रेणप्राशयेत्ततः ॥ पितॄणांदापयेदर्घ्यंततो
देवंप्रसादयेत् ॥ ३१३ ॥ बिंबमुद्रांपद्ममुद्रांनागमुद्रांप्रदर्शयेत् ॥ वैश्वानराइतिऋचापूजांकृत्वाविवर्जयेत् ॥ ३१४ ॥ यस्तेप्राणाञ्जप
न्पश्चात्प्रकुर्यादथचन्दनम् ॥ प्रदक्षिणंततःपश्चात्तडागस्यशृणुद्विजाः ॥ ३१५ ॥ ब्राह्मणान्पुरतःकृत्वावेदघोषंसमुच्चरन् ॥ महामङ्गल
पूर्वेणप्रविशेद्भवनंसुधीः ॥ ३१६ ॥ ततोगृहार्चनंकुर्याद्ब्राह्मणानथभोजनम् ॥ दीनानांकृपणानांचसर्वित्रेर्घ्यंनिवेदयेत् ॥ ३१७ ॥
इति श्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेविंशोऽध्यायः ॥ २० ॥ छ ॥ सूतउवाच ॥ ॥ सप्ताग्निष्टोमकोनामह्युत्तमःकथितो
विधिः ॥ मध्यमेमध्यमफलंकनिष्ठेतुकनिष्ठकम् ॥ १ ॥ अधुनामध्यमंवक्ष्येविधिंशास्त्रानुसारतः ॥ यथाविभवयोगेनयत्कर्तव्यंनरेणवै ॥ २ ॥
सद्योधिवासकल्पेनयूपादीन्विधिवास्यच ॥ पूर्वस्मिन्नेवदिवसेदैवज्ञकथितेशुभे ॥ ३ ॥ मुहूर्तेकलशंस्थाप्यसंगृह्यगणनायकम् ॥ स्थापये
त्प्रथमंयूपमापोहिष्ठेतिमंत्रकैः ॥ ४ ॥ शन्नोदेव्यास्ततःपश्चाद्गन्धद्वारेतिगंधकम् ॥ श्रीसूक्तेनततोदद्यात्पुष्पंदूर्वाक्षतंततः ॥ ५ ॥ का
ण्डादितिचमंत्रेणततोधूपंनिवेदयेत् ॥ येगृह्णामीतिचऋचापूजायांस्थापयेत्ततः ॥ ६ ॥ विवाहविधिनासर्वकार्यंचैवाधिवासनम् ॥ ७ ॥ स
र्वमेवप्रयुंजीततडागादिषुपंडितः ॥ अधिवास्यतडागादीनाचार्यादींश्चसर्वशः ॥ ८ ॥ संगृह्यगंधपुष्पाद्यैर्धूपैर्दीपैःसुशोभनैः ॥ ततःप्रभातेसम

येनित्यंनिर्वर्त्यशास्त्रतः ॥ ९ ॥ वृद्धिश्राद्धंततःकुर्यान्मातृपूजापुरःसरम् ॥ अलंकृत्ययथाशक्तिआचार्यादींश्चरेद्बुधः ॥ १० ॥ शृणुयात्प
श्चिमेभागेमंडपस्यसमीपतः ॥ मध्येदेशेसमुद्भूतंयज्ञपात्रंप्रशस्यते ॥ ११ ॥ अथवातत्रदेशीयंगुरुंवाश्रोत्रियोद्भवम् ॥ यज्ञेप्रधानाद्वितीयमृ
त्विगाचार्यमेवहि ॥ १२ ॥ वैतानकल्पेसंपन्नंशक्तिकल्पपरायणम् ॥ निगमज्ञानसंपन्नंयज्ञेपात्रंप्रशस्यते ॥ १३ ॥ पत्नीहीनमपुत्रंचश्यावदंतमदंतकम् ॥ गणानांयाजकंषंडंस्वगोत्रंपरिवर्जयेत् ॥ १४ ॥ अप्रधानेषुयज्ञेषुदानयज्ञेषुसत्तमाः ॥ नियोजयेत्स्वगोत्रंचहोमेनास्तिविचारणा ॥ १५ ॥ कुशप्रतिकृतौचापिततःस्वर्गंसगच्छति ॥ धनपादौचसंशोध्यततोयज्ञंसमाचरेत् ॥ १६ ॥ अयाज्ययाजनोद्भूतंपल्लवंव्यवहारके ॥ कूटसाक्ष्येणपल्लवेस्थाप्यहारकमेवच ॥ १७ ॥ देवस्वंब्राह्मणस्वंचलोहविक्रयणंधनम् ॥ हविर्विक्रयणंकृत्वापुत्रभार्यादिविक्रयी ॥ १८ ॥ निंदितानिपुराणेषुयत्कृतंतत्रतत्फलम् ॥ यज्ञसत्रनिविप्रांश्चनश्राद्धंभोजयेत्क्वचित् ॥ १९ ॥ नदद्यात्तस्यदानंचयावन्नैवसमापयेत् ॥ ब्रह्मन्नाचार्यमुख्योसिसंसारात्राहिमांविभो ॥ २० ॥ त्वत्प्रसादाद्गुरोयज्ञेप्राप्नुयान्मानसेप्सितम् ॥ चिरंमेशाश्वतींकीर्तिर्यावल्लोकाश्चराचराः ॥ २१ ॥ प्रसीदत्वंमहेशानप्रतिष्ठाकर्मसिद्धये ॥ त्वमादिःसर्वभूतानांसंसारार्णवतारक ॥ २२ ॥ ज्ञानामृतप्रदाचार्यविष्णुरूपनमोऽस्तुते ॥ ब्रह्मासनसमुद्भूतंप्रकाशितादिगंतरम् ॥ २३ ॥ त्वंचजांबूनदप्रख्ययजुर्वेदनमोस्तुते ॥ प्रफुल्लकमलोद्भासिभास्वरांबरभूषितः ॥ २४ ॥ प्रकीर्णशास्त्रसंभारविधिज्ञप्रणतोस्मिते ॥ ज्वलद्वैश्वानरप्रख्यधूमश्यामलितानन ॥ २५ ॥ षडंगवेदतत्त्वज्ञऋत्विङ्मोक्षंसमाचरन् ॥ ततस्तूर्यादिघोषेणपुरस्कृत्यद्विजोत्तमान् ॥ २६ ॥ यजमानःसपत्नीकःप्रविशेद्यागमंडपम् ॥ स्वस्थानेस्थापयेत्पुत्रन्मखेधर्मंयथाक्रमम् ॥ २७ ॥ पूजयेद्गन्धमाल्याद्यैर्गंधाद्यैःसुमनोहरैः ॥ यज्ञेषुविततेयोसौपूज्यतेपुरुषःसदा ॥ २८ ॥ नारायणस्वरूपोसौयज्ञंमेसफलंकुरु ॥ मखश्रेष्ठेषुसर्वेषुयेनमंत्राःसुविस्तृताः ॥ २९ ॥ यजुर्वेदार्थतत्वज्ञब्रह्मरूपनमोस्तुते ॥ यज्ञेषुशाखीसर्वेषुवेदवेदार्थतत्ववित् ॥ ३० ॥ ऋग्वेदज्ञमहाप्राज्ञविश्वरूपनमोस्तुते ॥ मांगल्यंकर्मणांनित्यंसात्वतंब्रह्मरूपिणम् ॥ ३१ ॥ सिद्धयेममयज्ञस्यनमामिशिवरूपिणम् ॥ पालयंतिदिशःसर्वाविदिशश्चतथाइमाः ॥ ३२ ॥ दिक्पालरूपिणंविप्रंयज्ञसिद्ध्यैनमाम्यहम् ॥

पातयेद्दक्षिणंजानुविकिरान्विकिरेत्ततः ॥ ३३ ॥ त्रैलोक्येयानिभूतानिस्थावराणिचराणिच ॥ ब्रह्मविष्णुशिवाःसर्वैरक्षांकुर्वंतुतानिवै ॥
॥ ३४ ॥ वेद्यावेदीतिमंत्रेणपठेद्वेदींप्रणम्यच ॥ संपूज्यगन्धपुष्पाद्यैरिमंमंत्रमुदाहरेत् ॥ ३५ ॥ याजनंयजमानंचश्रेयसातत्रयाजकः ॥
अयमर्घ्यइदंपाद्यंधूपोयंप्रतिगृह्यताम् ॥ ३६ ॥ ऐशान्यांकलशेदेवंसंपूज्यगणनायकम् ॥ ब्रह्माणंवासुदेवंचद्वितीयकलशेयजेत् ॥ ३७ ॥
मंडलंचैवविष्णुर्वैद्वारकारूपमास्थितः ॥ तेनत्वांपूजयाम्यद्यस्वर्गप्राप्तिंकुरुष्वमे ॥ ३८ ॥ पूर्वादिक्षुचकलशान्संस्थाप्यचत्रयंत्रयम् ॥
अर्धपादसवर्णेननिर्मितंतारणंबुधः ॥ ३९ ॥ गंगामृत्तिकयायुक्तेपल्लवेसंनिवेदयेत् ॥ मंदरंकल्पयित्वातुगोपीनांचकुलेनवा ॥ ४० ॥ क
लशोपरिसंस्थाप्यमंदरंसंप्रपूजयेत् ॥ स्योनापृथिवीतिमंत्रेणगंधपुष्पैःपृथग्विधैः ॥ ४१ ॥ स्योनापृथिवीतिमन्त्रस्यसुमंतऋषिर्जगती
छन्दोहरोदेवतामंदरप्रीतयेविनियोगः ॥ ४२ ॥ एवंदक्षिणदिग्भागेनवतोलकानिर्मितम् ॥ प्रादेशमात्रलोहेतुरौप्येणगंधमादने ॥ ४३ ॥
मृदासंघटनेपश्चात्कदाचनऋचायजेत् ॥ कदाचनेतिमंत्रस्यसूर्यऋषिस्त्रिष्टुप्छन्दःसूर्योदेवतागंधमादनप्रीतयेविनियोगः ॥ ४४ ॥ उत्तरेतो
रणतोद्रेरंगुष्ठद्वयमानके ॥ तोलकद्वयमानेनयवानांपिष्टकोपरि ॥ ४५ ॥ आप्यायस्वेतिमंत्रस्यकर्दमऋषिर्जगतीछन्दःशचीदेवतासुपा
र्श्वप्रीतयेविनियोगः ॥ ४६ ॥ पूजयेत्पार्श्वकलशेधात्रादीन्पूर्वदिक्क्रमात् ॥ श्रीसूक्तेनैवमन्त्रेणयजेद्विजयसप्तकम् ॥ ४७ ॥ पूजयेत्पर
याभक्त्यागंधपुष्पाक्षतादिना ॥ ४८ ॥ अंबाअंबिकेतिमंत्रस्यनलिनऋषिर्गायत्रीछन्दःशंभुर्देवताजयप्रीतयेविनियोगः ॥ ४९ ॥ गायत्र्या
पूजयेद्दक्षेपश्चिमंकलशद्वयम् ॥ गायत्र्याविश्वामित्रऋषिःसवितादेवताविजयप्रीतयेविनियोगः ॥ ५० ॥ भद्रंचैवसुभद्रंचप्रयतःसंयजे
द्बुधः ॥ ५१ ॥ उत्तरेयुग्मकलशेमनोन्नाइतिमंत्रस्यअंतकऋषिर्बृहतीछंदोनिर्ऋतिर्देवताभूतप्रीतयेविनियोगः ॥ ५२ ॥ भूतशुद्धिंततः
कृत्वान्यासंकृत्वाविधानतः ॥ विधायार्घ्यादिकंचैवधर्मादीन्मण्डलेयजेत् ॥ ५३ ॥ मध्येआधारशक्त्यादीन्वरुणंमध्यतोयजेत् ॥ पूर्वादि
क्रमतश्चैवइन्द्रादीन्कुलदेवताः ॥ ५४ ॥ पार्श्वद्वयेकर्णिकायाब्रह्माणंचाप्यनन्तकम् ॥ स्वैःस्वैर्मंत्रैर्यथोक्तेनबलिभिर्गन्धपुष्पकैः ॥ ५५ ॥
इन्द्राभिषेकमंत्रस्यवाद्यंगांधाररागकम् ॥ अग्नेस्तेजोसीतिवाद्यंरागंचैववराटकम् ॥ ५६ ॥ घनकंटकमस्यापिवाच्यंरागंतुगुर्जरी ॥ रक्षो

धिपस्यसंग्रामेवैतालंवाद्यमुच्यते ॥ ५७ ॥ नाटकाख्यंतथारागंवरुणस्यापिमेशृणु ॥ वाद्यंराजाभिषेकाख्यंरागोत्रसंतसंज्ञकः ॥ ५८ ॥
ईशस्यनंदिघोषाख्योवाद्यंरागोथकामदः ॥ सुवर्णंदुंदुभिर्वाद्यंब्रह्मणःकथितोबुधैः ॥ ५९ ॥ रागोदेवीवसंतश्चअनंतस्यनिबोधमे ॥ वाद्य
गांधारताराख्यंरागश्चाङ्गारवातकः ॥ ६० ॥ सोमेवोषेभवेद्वाद्यंजलेशस्यमहात्मनः ॥ मालवाख्योभवेद्रागःपत्राग्रेषुमहानपि ॥ ६१ ॥
स्वैःस्वैर्धर्मैश्चसंगृह्यदक्षिणेपृथिवींयजेत् ॥ स्योनापृथिवीतिमंत्रेणउपचारैःपृथग्विधैः ॥ ६२ ॥ मण्डपस्योत्तरेभागेमहादेवंप्रपूजयेत् ॥
नमोवृक्षेभ्यइत्यादिनैवेद्यैश्चपृथग्विधैः ॥ ६३ ॥ महादेवंद्विभुजंतमुरुशूलधरमुमासहितंध्यात्वा ॥ नमोवृक्षेभ्यइतिमन्त्रस्यब्रह्मऋषिर्गाय
त्रीछंदःश्चन्द्रोदेवताचन्द्रप्रीतयेविनियोगः ॥ ६४ ॥ गंधपुष्पादिभिर्भक्त्याभूतानिपरितोयजेत् ॥ ६५ ॥ वेतालाश्चपिशाचाश्चराक्षसा
श्चसरीसृपाः ॥ अस्मात्प्रयांतुमेस्थानाद्येचान्येविघ्नकारकाः ॥ ६६ ॥ मधुयुक्तंपायसान्नंवरुणायनिवेदयेत् ॥ पीतंचालोहितंकृष्णंशुक्लं
कृष्णंचधूम्रकम् ॥ ६७ ॥ पीतंशुक्लंतथाचित्रंश्वेतमन्नंयथाक्रमम् ॥ बलयस्तुदिगीशानांग्रहाणामपितच्छृणु ॥ ६८ ॥ क्षीरौदनंग्रहेशाय
शुक्लान्नंशशिनःस्मृतम् ॥ लोहितान्नंचभौमस्यबुधस्यक्षीरषाष्टिकम् ॥ ६९ ॥ पीतमन्नंदेवगुरोःशुक्रस्यासिततंदुलम् ॥ मांसौदनंशनेश्चैयं
राहोश्चकृष्णभक्तकम् ॥ ७० ॥ धूम्रवर्णंतुताम्रंतुभौमस्यक्षीरषाष्टिकम् ॥ पिष्टकान्नंशिवस्योक्तंभूतानांमाषभक्तकम् ॥ ७१ ॥ एवंबलिंविधाय
थअग्रेकुंभंनिवेशयेत् ॥ प्रादेशद्व्यङ्गुलंनामअष्टोत्तरसहस्रकम् ॥ ७२ ॥ बह्वंगुलकंविन्यस्याविन्यस्यकलशोपरि ॥ निशावांछितसूत्रैश्चसंवे
ष्ट्यचपिहितंतथा॥७३॥शरावंचपुनर्दद्याद्धनींप्रतिपूजयेत्॥अस्त्रायफडितिमंत्रेणध्यात्वादेवंजलेश्वरम्॥७४॥सूक्तंयजेद्यथाशक्तिशतमष्टोत्तरं
यजेत् ॥ कुंडेषुविन्यसेन्नागानष्टौपूर्वादिषुक्रमात् ॥७५॥ अनंतंपूजयेत्पूर्वमानेनांगुलमात्रकम्॥निर्मितंकांचनेनैवसप्तवर्तिकयासुधीः ॥७६॥
राजतंवासुकिनागंयजेत्पत्रांतरेपुनः॥ पादमात्रेपिचांगुष्ठमात्रंताम्रस्यभक्ष्यकम् ॥ ७७ ॥ पंचांगुलंतोलिकयालौहंकर्कोटकंपुनः ॥ वर्तिका
भिःषोडशभिर्बृहत्पर्वप्रमाणकम् ॥ ७८ ॥ शंखपालंकुशमयमर्धपादेननिर्मितम् ॥ अंगुष्ठमात्रंरक्तेननागंतालकमात्रकम् ॥ ७९ ॥ अंगुष्ठे
तोलकंपश्चात्पद्मनागंपुनर्यजेत् ॥ तोलकार्धप्रमाणेनअंगुलंपरिमाणतः ॥ ८० ॥ कुर्याच्छैलमयंसम्यग्यथावल्लक्षणान्वितम् ॥ महापद्मस्य

वैतस्यपूर्वमानेननिर्मितम् ॥ ८१ ॥ ध्यात्वानंतंचतुर्बाहुंशुक्लसप्तफणान्वितम् ॥ दक्षिणोर्ध्वकरेशंखंअधिचक्रंप्रतिष्ठितम् ॥ ८२ ॥ वामो
र्ध्वेतुगदापद्ममध्यस्थानेव्यवस्थितम् ॥ सर्वालंकारसंयुक्तमेवंध्यात्वायथाविधि ॥ ८३ ॥ सहस्रशीर्षेतिमंत्रेणपूजयित्वाबलिंददेत् ॥ लाजा
भिस्तिलसंमिश्रैःक्षीरयुक्तंपृथग्विधैः ॥ ८४ ॥ चतुर्विधंतथाश्वेतंसर्वालंकारसंयुतम् ॥ स्वकीयंप्रजपेत्तत्रआप्यायस्वेतिवैऋचा ॥ ८५ ॥
पिण्याकंनागजिह्वांचतथासर्जरसान्दधि ॥ बलयस्तस्यनिर्दिष्टास्तक्षकंलोहितंयजेत् ॥ ८६ ॥ पद्मटंकंदधानांचभुजाभ्यांनागसत्तमम् ॥ मनो
न्नाइतिमंत्रेणआज्यंसोमोबलिर्भवेत् ॥ ८७ ॥ कर्कोटकंचद्विभुजंपीतवस्त्रधरंयजेत् ॥ पञ्चनद्यइतिऋचाविष्णुक्रांताबलिर्भवेत् ॥ ८८ ॥
पीतवस्त्रंचकुलिशंयाजयेच्चचतुर्भुजम् ॥ भुजाभ्यामूर्ध्वभागेतुरक्तपद्मधरंहरिम् ॥ ८९ ॥ शर्कराकुष्ठकंचैवबलिस्तस्यप्रकीर्तितः ॥ द्वि
भुजंशंखपालंचशंखाभंशंखधारिणम् ॥ ९० ॥ पद्मासनस्थंपद्माभ्यांहस्ताभ्यांचवरंविभुम् ॥ ध्रुवक्षितिध्रुवोसीतिमंत्राभ्यांपूजयेत्पृथक् ॥
॥ ९१ ॥ घटौदनंभृङ्गराजंपद्मंचबलयस्तयोः ॥ स्वगृह्योक्तेनविधिनासंस्थाप्याग्निंकुशंडिकाम् ॥ ९२ ॥ कृत्वाआज्यस्यसंस्कारंवारुणं
श्रपयेच्चरुम् ॥ जुहुयादष्टबिल्वादिदिग्गीशानांघृतेनवै ॥ ९३ ॥ एकैकामाहुतिंदद्याद्ग्रहाणांचत्रयंत्रयम् ॥ सुसमिद्भिर्घृतमधुपयोभिर्मिश्रितैः
पृथक् ॥ ९४ ॥ पलाशसमिधंपश्चात्प्रतिष्ठामाहुतित्रयम् ॥ शिवस्यपरमान्नेनजुहुयादष्टसंख्यया ॥ ९५ ॥ मध्वाज्यगुडमिश्राभिर्लाजा
भिर्जुहुयात्पृथक् ॥ लाजान्यथोक्तंवितरेदेकैकामाहुतिंक्रमात् ॥ ९६ ॥ स्थालीपाकस्यजुहुयादेकैकामाहुतिंपुनः ॥ वरुणंचसमुद्दिश्य
रुद्रंसर्वंपृथक्पृथक् ॥ ९७ ॥ वास्तोष्पतयइतिमंत्रेणपञ्चगव्येभवेत्ततः ॥ स्योनापृथिवीतिमंत्रेणव्रीहिमृत्तिकयापुनः ॥ ९८ ॥ वृषान्न
इतिमन्त्रेणकयानइतिवैपुनः ॥ कुशमूलमृदाचैवचतुष्पथमृदातथा ॥ ९९ ॥ इमारुद्रेतिमंत्रेणश्रीश्चतेतिऋचापुनः ॥ पद्मखण्डस्यचमृदा
स्नापयेत्सुसमाहितः ॥ १०० ॥ तद्विष्णोरितिमंत्रेणतथापुष्पोदकेनच ॥ तीर्थोदकेनकृष्णेनात्रिरक्तेनात्रिशीतकैः ॥ १०१ ॥ पञ्चरक्तेन
रक्तानांमृदाकैश्चकुशोदकैः ॥ स्वर्णतोयैश्चकलशैरष्टोत्तरशतेनतु ॥ १०२ ॥ तैजसैर्मृत्तिकैश्चापिअष्टाविंशतिभिस्तथा ॥ यथाशक्तितुसं
स्थाप्यकुंकुमैश्चन्दनैरपि ॥ १०३ ॥ अन्नंलिप्यततोमूर्द्धिर्दद्याच्चैवपराक्रमम् ॥ सुरासुरेतिचऋचावस्त्रयुग्मेनवेष्टयेत् ॥ १०४ ॥ ध्वजंच

धनुनागेतिगंधद्वारेतिगोमयम् ॥ धूरसीतिततोधूपंहोत्रेचाहुतिदीपकम् ॥ १०५ ॥ सिंधोसीतिचासिंदूरंस्वभावेरक्तकंतथा ॥ मालतीकु
सुमैःकृत्यैर्नागान्संस्थापयेत्ततः ॥ १०६ ॥ धाराभिःशतपुष्पाभिर्गन्धतोयादिभिस्तथा ॥ अथवाश्वत्थपत्रेषुवटपत्रेषुवासुधीः ॥१०७॥
रोचनाकुंकुमैर्वापिसंलिख्यतत्रपूजयेत् ॥ प्रक्षिपेत्तत्रमुक्ताहिकलशेषुविनिक्षिपेत् ॥ १०८ ॥ मंडपस्योत्तरेदेशेशय्यांनिर्माययशोभनाम् ॥
राजतंवारुणंतस्यांपादमात्रेणनिर्मिताम् ॥ १०९ ॥ अंगुष्ठमात्रंसंस्थाप्यततःपुष्करिणीमपि ॥ स्वर्णपादेनघटितांचतुरस्रांसुशोभनाम् ॥
॥ ११० ॥ अंगुष्ठमात्रंसंपूज्यवरुणायनिवेदयेत् ॥ यथाशक्तिततोगांचसंभवेपञ्चविंशतिः ॥ १११ ॥ सुवर्णराजतंचैवधान्यंवासोपराट
कम् ॥११२॥ नागयष्टिंसमादायकिंचिदुत्तरगंतथा ॥ ११३ ॥ ततोक्षतायभौमायकृत्वाचाज्याहुतित्रयम् ॥ लाजादधिसमायुक्तंघृतंमधुगुडं
तथा ॥ ११४ ॥ क्षीरंचपिष्टकंचैवशष्कुलीगन्धपुष्पकम् ॥ पञ्चामृतंपञ्चरत्नंगर्भेदद्यात्समाहितः ॥ ११५ ॥ आचार्योयजमानेनसुसन्नद्धै
श्चभृत्यकैः ॥ गङ्गाजलशयोर्मध्येपञ्चघोषपुरःसरम् ॥ ११६ ॥ अवाप्यचततोयष्टिंस्थिरोभवतिवैरिवा ॥ ध्रुवंध्रुवेतिमंत्रेणयष्टिमामंत्रये
त्ततः ॥ ११७ ॥ यज्ञप्रियासिदेवित्वंसर्वविघ्नविनाशिना ॥ त्राहिमांसर्वपापेभ्यआत्मनात्वंस्थिरीभव ॥ ११८ ॥ इत्यामंत्र्यजपेच्चैवगाय
त्रींचपठेत्ततः ॥ वनस्पतेतिविडवामितिमंत्रेणजपेत्पुनः ॥११९॥ पुनरागत्यतांवेदिंनिर्मथ्यवरुणंप्रभुम् ॥ तथापुष्करिणींचैववर्धनींकलशो
दरैः ॥ १२० ॥ अनिष्टंमार्जयेन्नागानुद्धृत्यकलशंतथा ॥ पाषाणाभ्यंतरंकृत्वागोमयोपरिलिप्यच ॥ १२१ ॥ वरुणंपुष्करिण्यांचजलमध्ये
विनिक्षिपेत् ॥ नमोस्त्वितिचमन्त्रेणबलिंदद्याच्चपायसम् ॥ १२२ ॥ निर्मथ्यात्तत्रयोनागःस्थापयेत्तुयथाविधि ॥ श्रावयेत्तमिमंमंत्रमत्र
संनिहितोभव ॥ १२३ ॥ अत्रस्वामीभवान्नागरक्षणीयंत्वयाजनम् ॥ गायत्रेणत्वाछंदसामीमंत्रंसंश्रावयेत्पुनः ॥ १२४ ॥ संपूज्यगंधपुष्पा
द्यैःपुरतोनिक्षिपेद्दिशि ॥ पिधायनागराजानमृचाभ्यांपरिसूत्रकैः ॥ १२५ ॥ सन्निरुद्ध्याशुसंस्थाप्यबलिंदद्याद्विधानतः ॥ लाजौदनंमन
स्तस्ययज्जाग्रतऋचाजपेत् ॥ १२६ ॥ एवंभूरितिमंत्रैःस्वैःस्वैरेवतुपृथग्विधैः ॥ स्वासुदिक्षुचसंस्थाप्यपूजयेच्चप्रयत्नतः ॥ १२७ ॥ पूर्वभा
गेपुष्करिणांहरिताभंसवज्रकम् ॥ हलग्रहीतभंत्रेणन्यस्यलाजाहुतिंकुले ॥ १२८ ॥ त्रातारमितिमंत्रेणअग्नौविन्यस्यमौक्तिकम् ॥ मनःशि

लंप्रवालंचअग्निमीडेतिसंपठेत् ॥ १२९ ॥ वैश्वानरेणमन्त्रेणपठल्लाँजाहुतिंपुनः ॥ दद्याद्येतेशतमन्त्रेणपाश्चिमेकाटिकंन्यसेत् ॥ १३० ॥
शालिबीजेनसहितंकयानइतिमंत्रकम् ॥ वरुणस्योइतिमंत्रेणदद्यादष्टौदशाहुतिम् ॥ १३१ ॥ उत्तरेरोचनांकन्यांतथैवगौरसर्षपम् ॥ कुंकु
मेनसमायुक्तंकुविदंडमृचापठन् ॥ १३२ ॥ विन्यस्यतेनमंत्रेणप्रदद्यादाहुतिंपुनः ॥ ऐशान्यांमंद्रकंरंगमीशावाइतिसंपठन् ॥ १३३ ॥
संस्थाप्याज्याहुतिंदद्यात्तमीशानऋचापुनः ॥ आसद्यैर्मंत्रसंयुक्तैर्देवंनारायणंयजेत् ॥ १३४ ॥ वरुणात्मकंततोध्यात्वाततोनीराजनंपठेत् ॥
जानुभ्यामवनिंगत्वापठेज्ज्ञानामृतंस्तवम् ॥ १३५ ॥ धर्मावेशंततःकुर्यादुत्सर्गोतिविधीयते ॥ ततोदेवींपुनःकृत्वादत्वापुष्पाञ्जलि
त्रयम् ॥ १३६ ॥ सर्वसत्वोपकारायसमुत्सृजेत्तुवैजनम् ॥ उत्सृष्टंसर्वसत्वेभ्योदृश्यतेजलमूर्जितम् ॥ १३७ ॥ रमंतुसर्वभूतानि
स्नानपानावगाहनैः ॥ वरुणंचततोदेवंपुष्करिण्यांचनिक्षिपेत् ॥ १३८ ॥ जलेवरुणमंत्रेणमत्स्यादीन्प्रक्षिपेत्ततः ॥ पक्षिणश्च
शुभास्तत्रभेकंकूर्मंचकर्दमम् ॥ १३९ ॥ शैवालंप्रक्षिपेच्चैवदक्षिणांतदनंतरम् ॥ सुवर्णंधान्यरत्नंचआचार्यायपृथग्ददेत् ॥ १४० ॥
ऋत्विग्भ्यश्चपृथग्दद्याद्यथावित्तानुसारतः ॥ ब्राह्मणेभ्योगायनेभ्योवसुभ्यश्चपृथक्पृथक् ॥१४१॥ नित्यंसमाप्यविधिवद्दद्यात्पूर्णाहुतिंपुनः॥
दद्यादर्घ्यंचशूद्रायहस्तासइतिसंजपन् ॥ १४२ ॥ ततःप्रदक्षिणावर्तंसंवेष्ट्यक्षीरधारया ॥ प्रासादपक्षेप्रासादमारामेअथमंडपम् ॥
॥ १४३ ॥ शताधिधारयाशक्त्यात्रिवारंब्राह्मणैःसह ॥ विकीर्यलाजकुसुमंव्रीहींश्चैवकपर्दकात् ॥१४४॥ तूर्यघोषेणमहतागृहंविप्रपुरःसरम्॥
यजमानःसपत्नीकःप्रविशेत्स्वगृहंपुनः ॥१४५॥ ततोगृहार्चनंकृत्वाब्राह्मणानथभोजयेत् ॥ कुमारीश्चकुमारांश्चदीनान्धकृपणानपि॥१४६॥
नारायणंततोदद्याद्विप्रमुद्दिश्यभक्तितः ॥ १४७ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणिद्वितीयभागेएकविंशोध्यायः ॥ २१ ॥ छ ॥
इति मध्यमपर्वणिद्वितीयभागः समाप्तः ॥ २ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ सूतउवाच ॥ आरामादौविशेषोयोवक्ष्यतेऽत्रमयाधुना ॥ मंडलंकारयित्वातुचतुरस्रंसमंशुभम् ॥ १ ॥ ऐशान्यांकलशेदेवंतत्रनाथं
प्रपूजयेत् ॥ मध्यमेकलशेपूजाग्रहाणांचततःपरम् ॥२॥ स्वदिक्षुद्वारदेशेतुपश्चिमद्वारदेशयोः॥ब्राह्मणंचाप्यनन्तंचमध्यतोवरुणंयजेत् ॥३॥

वरुणंचोदकुंभस्थंभूतशाखासुशोभनम् ॥ तेनचावाहयामित्वांविभोस्वर्गायवैभव ॥ ४ ॥ पूर्वंगमंदरंस्थाप्यतोरणे:परिसत्तमाः ॥
विष्वक्सेनंसमभ्यर्च्यअर्चनंस्वर्गसंयुतम् ॥ ५ ॥ कार्णिकायांवासुदेवंशुद्धस्फटिकसंनिभम् ॥ चतुर्भुजंशङ्खचक्रगदापद्मविभूषितम् ॥ ६ ॥
श्रीवत्सकौस्तुभोरस्कंमुकुटाद्यैरलंकृतम् ॥ दक्षिणेकमलातस्यवामेपुष्टिव्यवस्थिताः ॥ ७ ॥ सिद्धकिन्नरयक्षाद्यैःस्तूयमानंसुरासुरैः ॥
संपूज्यविधिवद्भक्त्याविष्णोरराटइत्यृचा ॥८॥ दलेसंकर्षणादींश्चविमलाद्याश्चनायकाः ॥संपूज्यधूपदीपाद्यैरुपहारैरनुत्तमैः ॥९॥ घृतप्रदीपो
देवस्यगुग्गुलुः सरलस्तथा ॥ धूपोदेवबलिःक्षीरंपरमान्नंघृतप्लुतम् ॥ १० ॥ ध्यायेत्सोमंकर्णिकायांदक्षिणेपद्मसंस्थितम् ॥ शुक्लाभंद्विभुजं
शान्तंकेयूराद्युपशोभितम् ॥ ११ ॥ प्रशस्यंदेवयक्षाणांवरदाभयहस्तकम् ॥ इमंदेवाइतिऋचाउपचारैःपृथग्विधैः ॥ १२ ॥
पूजयेच्चनिशानाथंघृतभुक्तंनिवेदयेत् ॥ इन्द्रंजयंतमाकाशंवरुणंचाग्निमेवच ॥ १३ ॥ ईशानंतत्पुरुषंचैववायुपूर्वादिदिक्ष्वपि ॥ कर्णिकाया
वामभागेवरदाभयहस्तकम् ॥ १४ ॥ द्विभुजंशुक्लवर्णंचमहादेवंप्रपूजयेत् ॥ त्र्यंबकेणचमंत्रेणदद्याच्चघृतापिष्टकम् ॥ १५ ॥ वासुदेवायदे
वायजुहुयादष्टमाहुतिम् ॥ परमान्नेनसौम्यस्यजुहुयादष्टविंशतिम् ॥ १६ ॥ शिवायपरमान्नेनजुहुयादाहुतिद्वयम् ॥ गणेशस्यतथाज्येनदद्दे
देकाहुतिंबुधः ॥ १७ ॥ ब्रह्मणोवरुणस्याथएकैकामाहुतिंतथा ॥ ग्रहाणांस्वोक्तसमिधादिगीशानांपृथक्पृथक् ॥ १८ ॥ एकैकामाहुतिं
दद्यादाज्येनचयथाक्रमम् ॥ करालीधूमलीश्वेतालोहिताकनकप्रभा ॥ १९ ॥ अतिरक्तापद्मरागवह्निजिह्वाप्रकीर्तिताः ॥ तासांमंत्राःक्रमेणैव
सादिवासांतविंदवः ॥ २० ॥ यकारस्थाश्चविज्ञेयाअष्टस्वरविभूषिताः ॥ घृतमध्वाज्यसिक्ताभिर्होमयेच्चपृथक्पृथक् ॥ २१ ॥ एकैकामाहु
तिंदद्याद्दत्वाचैवसमाहितः ॥ अग्नीषोमंतथेन्द्रंचपृथिवीमंतरिक्षकम् ॥ २२ ॥ स्थालीपाकेनजुहुयान्मधुक्षीरयवान्वितम् ॥ एकैकामाहुतिं
तेषांसमुद्दिश्यपृथक्पृथक् ॥ २३ ॥ यावकान्गन्धपुष्पाद्यैरर्चित्वासपरावकम् ॥ जपस्वत्वंमहाभागसश्रद्धेनचवाग्यतः ॥ २४ ॥ जापको
विधिनानेनप्रजपेत्तत्ररुद्रकम् ॥ मङ्गलंपरमान्नंचसौरसूक्तंतथाजपेत् ॥ २५ ॥ ततः संमृज्यविधिनास्नापयित्वायथाविधि ॥ यूपंगर्भेविनि
क्षिप्यतत्रकुर्याद्विचक्षणः ॥ २६ ॥ ध्वजानारोप्यप्रांतेषुदद्यात्सोमंवनस्पतिम् ॥ कोऽदादितिपठित्वाचवृक्षाणांकर्णवेधनम् ॥ २७ ॥

सूच्यासुतीक्ष्णयाकार्यंद्विपात्रेवामदक्षिणे ॥ नवग्रहाणांतृप्त्यर्थंयावकंलड्डुकंतथा ॥२८॥ पिष्टकंचपृथग्दद्यात्कुमारीबालकेषुच ॥ निशा
रञ्जितसूत्रेणसंवेष्ट्यचसचूर्णकम् ॥ २९ ॥ प्रदद्याद्दोहकंचैववृक्षाणांविधिपूर्वकम् ॥ प्राशयेच्चैवतान्वृक्षानिमंमन्त्रमुदाहरेत् ॥ ३० ॥
वृक्षाग्रात्पतितस्यापिआरोहात्पातितस्यच ॥ मरणेवास्थिभङ्गेवाकर्तापापैर्नलिप्यते ॥ ३१ ॥ धेनुंसुवर्णंधान्यंचआचार्यायप्रदक्षिणम् ॥
दत्त्वाचऋत्विजेदद्यात्सुवर्णंरजतंतथा ॥ ३२ ॥ धान्यंचब्राह्मणेदद्याद्धृतभोज्यंसशर्करम् ॥ इष्टांचदक्षिणांदद्यात्सदस्यायतथैवच ॥
॥ ३३ ॥ अधिकलशंसमानीयस्नानंकुर्याद्विधानतः ॥ कृत्वाचैवानिशंकुर्याद्दद्यात्पूर्णाहुतिंतथा ॥ ३४ ॥ सर्वौषध्युदकंप्रोक्ष्यत्रिवारंक्षीर
धारया ॥ संवेष्ट्यत्रिश्चतुर्वारंब्रह्मघोषपुरःसरम् ॥ ३५ ॥ गृहंव्रजेत्ततोविप्रैः कुर्याच्चैवगृहार्चनम् ॥ तंतौविशेषंवक्ष्यामिवराएवेदमत्यृचा ॥
बलंकामंहयग्रीवंमाधवंपुरुषोत्तमम् ॥ वासुदेवंधनाध्यक्षंततोनारायणंयजेत् ॥ ३७ ॥ दधिभक्तंबलिंदद्यात्पञ्चगव्यसमुद्भवम् ॥ एवंसंपूज्य
विधिनादक्षिणंपृथिवींयजेत् ॥ ३८ ॥ शुद्धकाञ्चनवर्णाभांवराभयकरांशुभाम् ॥ मंडूकस्थांचद्विभुजांसर्वालङ्कारसुंदरीम् ॥ ३९ ॥
॥ ३९ ॥ स्योनापृथिवीतिमंत्रेणपूजयित्वायथाविधि ॥ पायसंमधुसंयुक्तंबलिंदद्यात्सशर्करम् ॥ ४० ॥ वामतोविश्वकर्माणंशुद्धस्फटिक
सन्निभम् ॥ शूलटंकधरंशांतंसंयजेदुपचारकैः ॥ ४१ ॥ विश्वन्निति ऋचातंचबलिंचमधुपिष्टकम् ॥ दद्याज्जपेच्चकौष्माण्डंसूक्तंपौरुषमे
वच ॥ ४२॥ मधुपायसयुक्तेनहोमानष्टौविधायच ॥ एकैकंहोमयेत्पश्चात्पृथिवीहोमकर्माणि ॥ ४३॥ समुत्सृज्यततःसेतुमिमंमंत्रंपठेत्ततः ॥
पिच्छित्वेपतितानांचउच्छातेनाङ्गसङ्गतः ॥४४॥ प्रतिष्ठितेधर्मसेतौधर्मोमेस्यान्नपातकम् ॥ सेतोरस्यप्रबंधस्यश्रद्धयापरयातथा ॥ ४५ ॥
येचात्रप्राणिनःसंतिरक्षांकुर्वंतिसेतवः॥वेदागमेनयत्पुण्यंयथैवाहिसमार्पितम् ॥४६॥ गर्तंगत्वापञ्चरत्नंसंस्थाप्यंतदनंतरम्॥ संस्थाप्यचततो
यूपंसंपूज्यचयथाविधि ॥ ४७॥आचार्यायततोदद्यादिष्टांचवरदक्षिणाम् ॥ पूजयेद्द्विजदांपत्यंलाजाभिःपरिपूजितम् ॥ ४८ ॥ पोटिकांचततः
शय्यांदद्यादिष्टार्थसिद्धये ॥ सेतौवृक्षस्थितायेस्यूरोपयेत्कदलींशुभाम् ॥४९॥ तेषांपार्श्वद्वयेप्येवमारामेचपृथक्पृथक् ॥ ५० ॥ इतिश्रीभ
विष्येमहापुराणेमध्यमपर्वणितृतीयभागेप्रथमोऽध्यायः ॥ १ ॥ छ ॥ ॥ सूतउवाच ॥ गोप्रचारेपुनर्वक्ष्येविशेषंयत्रमेशृणु ॥ यजेद्विष्णुंसल

क्ष्मीकमुपचारैःपृथग्विधैः ॥१॥उपचारैश्चब्रह्माणंरुद्रंचैवकरालिकाम् ॥वराहंसोमसूर्यंचमहादेवंयथाक्रमम् ॥ २ ॥ होमंचैत्रयथाविष्णोःकम
लायास्त्रयंत्रयम् ॥ आज्येनक्षेत्रपालानामन्येषांमधुमिश्रितैः ॥ ३ ॥ एकैकामाहुतिंदद्याल्लाजादिषुपृथक्पृथक् ॥ समुत्सृज्यविधानेनयूपंसं
स्थाप्यपूजयेत् ॥ ४ ॥ त्रिहस्तमात्रंरचितंकुर्यान्नागफणान्वितम् ॥ रोपयेदेकहस्तेनगर्भेहोमंप्रयोजयेत् ॥ ५ ॥ लाजासंयुक्तविधिनाविश्वे
षामितिसंजपन् ॥ नागाधिपतयेतद्वदच्युतायतृतीयकम् ॥६॥ भौमायेतिचतुर्थंचततोयूपंनिवेदयेत् ॥ मयिगृभ्णामीतिसंपूज्ययूपंचरुद्रदै
वतम् ॥७॥ संपूज्यरुद्रंपञ्चांगंधान्यंवस्त्रंचदक्षिणाम् ॥ आचार्यायतथाहोममन्येषामिष्टदक्षिणाम् ॥ ८ ॥ गोप्रचारेचशैलेयंयूपंहस्तद्वयान्वि
तम् ॥ पञ्चशीर्षान्वितंकुर्याद्धस्तमात्रंप्ररोपयेत् ॥ ९ ॥ यूपंचचैत्रवृक्षंचकुंडलीमठपीठिकाम् ॥ संस्पृश्याचम्यवैविप्राःप्राणायामेनशुद्ध्य
ति ॥१०॥ चतुर्हस्तप्रमाणेनशतकुंडेनसंमितम् ॥ तदर्धंचकनिष्ठेनअष्टअष्टाधिकंभवेत् ॥ ११ ॥ भूमौरत्नंचसंस्थाप्यइमंमंत्रमुदाहरेत् ॥
शिवलोकस्तदागावःसर्वेदेवसुपूजिताः ॥ १२ ॥ गोभ्यएषामयाभूमिःसंप्रदत्ताशुभार्थिना ॥ एवंनिवेदयेद्यस्तुगोप्रचारंसमाहितः ॥
॥ १३ ॥ समुक्तःसर्वपापेभ्योविष्णुलोकेमहीयते ॥ यावंतितृणगुल्मानिसंतिभूमौशुभानिच ॥ १४ ॥ तावद्वर्षसहस्राणिस्वर्गलो
केमहीयते ॥ पूर्वेस्मिन्निबध्नीयात्कृत्वावृक्षस्यरोपणम् ॥ १५ ॥ सेतुंकृत्वादक्षिणतःपश्चिमेङ्गाररोपणम् ॥ उत्तरेखानयेत्कूपंतत्तुसीमां
नुलंघयेत् ॥ १६ ॥ ततःसहस्रधारांचशस्येनपरिपूरिताम् ॥ प्रदद्याद्दाततोविप्राःसर्वपापैःप्रमुच्यते ॥ १७ ॥ नगरग्रामपूर्वेवाउत्तरेप
श्चिमेपिवा॥नकुर्यादग्निदिग्भागेदक्षिणांवाततःशुभाम् ॥ १८ ॥ गोप्रचारंखनेद्यस्तुवाहयेद्वाकथंचन ॥ कुलानिपातयत्याशुब्रह्महत्याश्च
विंशतिम् ॥ १९ ॥ स्वर्गंनयतिगोचर्मसम्यग्दत्तंसदक्षिणम् ॥ यावत्तृणानितद्भूमौसंतसंख्यानिसंख्यया ॥ २० ॥ तावत्कालंवसेत्स्वर्गेवि
ष्णुलोकान्नतच्च्युतिः ॥ महायागावसानेचयेनतर्पयतिद्विजान् ॥ २१ ॥ निरर्थकंतस्यकर्मप्रयासफलमात्रकम् ॥ वृषोत्सर्गावसानेतुप्रद
द्याद्योमहींद्विजाः ॥ २२ ॥ नयांतिविप्राःप्रेतत्वंतस्माद्विप्रादमत्सराः ॥ तत्रमानंपृथक्चैवशृणुतात्रसमागताः ॥ २३ ॥ अमानेनददेद्य
स्तुनरकंयातिरौरवम् ॥ गवांशतंवृषश्चैकोयत्रातिष्ठत्ययंत्रितः ॥ २४ ॥ तद्गोचर्मेतिविख्यातंदत्तंसर्वाघनाशनम् ॥ गोप्रचारस्यदेवस्य

ब्राह्मणस्यचभोद्विजाः ॥ २५ ॥ यावत्कालंविधेःसीमाअतीतेनास्तिपातकम् ॥ मंडपंपूजयेत्सूर्यंवासुदेवसमन्वितम् ॥ २६ ॥ होमास्तिलगु
डाभ्यांचअष्टावष्टौपृथक्पृथक् ॥ देहिमेतिचमंत्रेणविन्यसेन्मंडपोपरि॥२७॥यत्नासिद्धंततःकृत्वाशुक्लंघटचतुष्टयम् ॥ समुत्सृजेज्जपेत्पश्चात्सौ
रंसूक्तंचवैष्णवम्॥२८॥वटपत्रेतुसंलिख्यचित्रंनिर्मायवापुनः॥दिक्पालान्संन्यसेत्स्वासुस्वासुदिक्षुविचक्षणः ॥ २९ ॥ बद्धाञ्जलिःपठेन्मन्त्रा
निंद्रादीनांयथाक्रमम् ॥ धर्मसंस्थापनार्थायआत्मनोविभवायच ॥ ३० ॥ वज्रहस्तोमहेन्द्रत्वंधर्मतस्त्रातुमर्हसि ॥ ३१ ॥ भोवह्नेमेषवाहस्त्वं
चतुःशृंगविराजित ॥ अनाथंमंडपंत्वंहिधर्मतस्त्रातुमर्हसि ॥ ३२ ॥ यमत्वंदक्षिणाशेशमहमाहिषवाहन ॥ अनाथंमंडपंत्वंहिधर्मतस्त्रातुमर्हसि
॥ ३३ ॥ मंचस्थोराक्षसेंद्रस्त्वंखड्गपाणिर्महाबलः ॥ अनाथंमंडपंत्वंहिधर्मतस्त्रातुमर्हसि॥वारिराड्ध्वजहस्तोऽसिपवनोमृगवाहनः ॥ ३४ ॥
अनाथंमंडपंत्वंहिधर्मतस्त्रातुमर्हसि ॥ धनाध्यक्षोगदाहस्तःपिङ्गाक्षोनरवाहनः ॥ अनाथंमंडपंत्वंहिधर्मतस्त्रातुमर्हसि ॥ ३५ ॥ आदिदेवो
पिदेवानांकर्ताहर्तामहेश्वरः ॥ अनाथंमण्डपंत्वंहिधर्मतस्त्रातुमर्हसि ॥ अनंतोनागराजोयोधरामुद्धृत्यतिष्ठति ॥ ३६ ॥ अनाथंमण्डपं
त्वंहिधर्मतस्त्रातुमर्हसि ॥ चतुर्णामेववर्णानांस्थित्यर्थंमृगपाक्षिणाम् ॥ प्रीतयेवासुदेवस्यएवंमंडपमुत्सृजेत् ॥ ३७ ॥ भग्नेस्तंभेतृ
णेजीर्णेपुनस्तृणप्रदापने ॥ स्थापनेचतथैवास्यप्रतिष्ठास्याद्यथाक्षया ॥ घातापायादिदोषेणम्रियंतेयदिजंतवः ॥ ३८ ॥ प्रति
ष्ठायांकृतायांतुधर्मोमेस्यान्नपातकम् ॥ मानुषाःपशवोयेचनिवसंतीहमंडपे ॥ ३९ ॥ स्वस्तिचास्तुसदातेषांत्वत्प्रसादात्किलप्रभो ॥
ततस्त्रिगुणसूत्रेणसुत्रामाणेतिवैऋचा ॥ ४० ॥ सप्तधावेष्टयित्वातुदक्षिणांसंप्रकाश्यच ॥ उपानहौतथाछत्रमाचार्यायनिवेदयेत् ॥ ४१ ॥
मंडपेभोजयेद्विप्रांस्तेषांदद्याद्यथेप्सितान् ॥ दीनेभ्यश्चपृथग्दद्याद्गृहंविप्रपुरःसरम् ॥ ४२ ॥ प्रविशेत्तूर्यघोषेणप्रकुर्याच्चगृहार्चनम् ॥
एवंप्रपायांविज्ञेयोविशेषोवरुणंयजेत् ॥ ४३ ॥ वासुदेवेनसहितंसाङ्गोपाङ्गंसदक्षिणम् ॥ स्थालीपाकविधानेनप्रकुर्याद्देशिकोत्तमः ॥४४॥
आचार्यायगृहंदद्यात्परिच्छदसमन्वितम् ॥ ऋत्विजेताम्रपात्रंचजलपूर्णंचधान्यकम् ॥ ४५ ॥ दिक्पालान्द्वारदेशेतुस्तूपयागेविशेषतः ॥
ब्रह्माणंनागराजानंद्वारपालेचपश्चिमे ॥ ४६ ॥ यजेन्मंत्रैःपृथग्देवान्मंत्रैरेभिर्यथाक्रमम् ॥ बलिदानंविधानेनकृत्वादद्याद्यथाविधि ॥ ४७ ॥

पताकानामतस्तंतुप्रवक्ष्यामियथाक्रमम् ॥ वज्रीचधूमलीकृष्णापीताचैवाथवारुणी ॥ ४८ ॥ शीघ्रागौरीउमाचैवपीताशुक्लाप्रकीर्तिता ॥
कुंभेषुपूजयेद्देवान्महेशंप्रथमंबुधः ॥ ४९ ॥ ग्रहांश्चमध्यकलशेब्रह्माणंचततःपरम् ॥ वेदिकापूर्वभागेतुउत्तरेकलशेशिवम् ॥ ५० ॥
दक्षिणेकलशेविष्णुंकर्णिकायांजलेश्वरम् ॥ कलशेविधिवद्दत्त्याउपचारैःपृथग्विधैः ॥ ५१ ॥ संपूज्यश्चटपत्रेचनागान्संलिख्यनागजैः ॥
येनागास्तान्प्रवक्ष्यामिअनंतंवासुकिंतथा ॥ ५२ ॥ तथाकर्कोटकंचैवपद्मंचकुलिशंतथा ॥ पद्मंचैवमहापद्मंमन्त्रैरेभिःपृथक्पृथक् ॥ ५३ ॥
पुंडरीकदलाभासशुभकर्णांतलोचन॥फणासहस्रसंयुक्तशङ्खाब्जकृतलोचनम् ॥ ५४ ॥ अनंतनागराजेन्द्रइहागच्छनमोऽस्तुते ॥ सितकुंदे
न्दुवर्णाभोविस्फुरन्भोगमंडले ॥ ५५ ॥ सर्वनागस्यशूरस्यकृतस्वस्तिकलांछन ॥ नागेन्द्रतक्षकश्रीमन्निहागच्छनमोस्तुते ॥ ५६ ॥
नवीनजलदश्यामःश्रीमान्कमललोचनः ॥ विषदर्पोबलोन्मत्तोग्रीवायामेकशेखरः ॥ ५७ ॥ शंखपालइतिख्यातजलाधारप्रतीक्षक ॥
अध्यक्षोनागलोकानामिहागच्छनमोस्तुते ॥ ५८ ॥ अतिपीतःसुवर्णाभश्चन्द्रार्धांकितमस्तकः ॥ दीप्तभोगकृताटोपःशुभलक्षणनिंदितः ॥
॥ ५९ ॥ कुलीरोनागराजेंद्रःसर्वतत्वहितेरतः ॥ तिष्ठेहयज्ञसिद्धार्थकामरूपनमोस्तुते ॥ ६० ॥ यःसुवर्णेनवर्णेनपद्मपत्रायतेक्षणः ॥ पंच
बिंदुकृताभोगोग्रीवायामेकशेखरः ॥ ६१ ॥ तस्मैतेपद्मनागेन्द्रतीव्ररूपनमोस्तुते ॥ नागिन्योनागकन्याश्चतथानागकुमारकाः ॥ ६२ ॥
सर्वेतेप्रीतमनसःपूजांगृह्णंतुमेसदा ॥ स्वगृह्योक्तेनविधिनाकृत्वाग्निस्थापनंबुधः ॥ ६३ ॥ आज्यंसंस्कृत्यजुहुयाद्दिगीशानांयथाक्रमम् ॥
आदित्यादिग्रहांश्चैवब्रह्माणंकृष्णमेवच ॥ ६४ ॥ मधुपिष्टेनचाशिवंवरुणंजुहुयात्ततः ॥ प्रादेशमात्रंसंप्रोक्ष्ययूपंचास्यप्रमाणकम् ॥ ६५ ॥
चतुरस्त्रंशूलयुक्तंगणानानीयपूजयेत् ॥ कूपेनिक्षिप्यतान्नागान्पञ्चरत्नांक्षिपेत्ततः ॥ ६६ ॥ सुत्रामाणेतिमंत्रेणात्रिधासंवेष्ट्यसूत्रकैः ॥ राजितैः
कदलीवृक्षंवरुणायसमुत्सृजेत् ॥ ६७ ॥ त्रातारमिन्द्रमितिमंत्रेणवस्त्रमाल्येनभूषयेत् ॥ कर्णवेधंततःकृत्वाउत्सृजेद्वाक्यमुच्चरन् ॥ ६८ ॥
ॐअद्येत्यादिसर्वभूतेभ्यःफलपुष्पपत्रच्छायावृतमुख्यनानातरुविरचितमाराममंवनस्पतिदैवतंसुपूजितंवेदव्यासाद्युक्तफलावाप्तयेअमुकऋषि
सगोत्रःश्रीअमुकदेवशर्माहमुत्सृजे ॥ ६९ ॥ महोत्सवंततःकुर्यात्कृत्वाबद्धाञ्जलिःपठेत् ॥ वृक्षाग्रात्पतितस्यापिआरोहात्पतितस्यवा ॥ ७० ॥

मरणेचास्थिभंगेवाकर्तापापैर्नलिप्यते ॥ वज्राघातादिदोषेणम्रियंतेतरवोयदा ॥ ७१ ॥ तद्दोषशमनार्थायतस्याप्येतत्प्रतिष्ठितम् ॥ मध्ये
यूपंसमारोप्यचतुष्कोणेपियत्नतः ॥ ७२ ॥ मधुलाजाक्षतंदद्यादन्नंमाल्यमेवच ॥ निशासूत्रेणसंवेष्ट्यकदलीविटपंन्यसेत् ॥ ७३ ॥ वेष्ट
येत्क्षीरधारांचपातयेद्घृतधारया ॥ तोयान्वितंगुच्छयुक्तंवेष्टयेत्स्वगृहंव्रजेत् ॥ ७४ ॥ ॥ इति श्रीभविष्येमहापुराणेमध्यमपर्वणि
तृतीयभागेद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ क्षुद्रारामप्रतिष्ठांचवक्ष्येवैद्विजसत्तमाः ॥ अमंडलेशुभेस्थानेद्विहस्ते
प्यथस्थंडिले ॥१॥ स्थापयेत्कलशंतत्रविष्णुंसोमंसमर्चयेत् ॥ आचार्यमात्रंवरयेन्निशासूत्रैःप्रवेष्टयेत् ॥२॥ वृक्षान्माल्यैरलंकृत्यभूषयेद्भूषणा
दिना ॥ दोहदंचततोदद्यात्स्थापयेच्छतधारया ॥३॥ भोजयेत्पञ्चविप्राणांपुरतस्तंविशेषयेत् ॥ कर्णवेधंततःकृत्वाउत्सृजेद्वाक्यपूर्वकम् ॥४॥
दद्याद्यूपंमध्यदेशेरोपयेत्कदलींततः ॥ रंभाश्वरोपयेद्दिक्षुस्थालीपाकविधानतः ॥५॥ अष्टावष्टौचजुहुयादन्येषांचघृतेनतु ॥ एकैकामाहुतिंदद्या
त्स्विष्टकृत्तदनंतरम् ॥६॥ दक्षिणांचततोदद्यात्पूर्णांदत्वाहुतिंव्रजेत् ॥७॥ एकादिवृक्षंवृक्षाणांविधिंवक्ष्येद्विजोत्तमाः ॥ समुत्सृज्यततोयूपंकर्म
णासहधर्मवित् ॥ ८ ॥ वृक्षमूलेयजेद्धर्मंपृथिवींचाविशंतथा ॥ दिग्गांश्चतथायक्षानाचार्यंतोषयेत्ततः ॥ ९ ॥ धेनुंचदक्षिणांदद्याद्दोहदंवृक्ष
पूजनम् ॥ कृत्वासम्यग्विधानेनसवित्रेऽर्घ्यंनिवेदयेत् ॥ १० ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागेतृतीयोऽध्यायः ॥ ३ ॥ छ ॥
सूतउवाच ॥ ॥ अथाश्वत्थप्रतिष्ठायांमूलेबाहुप्रमाणके ॥ स्थंडिलंकारयेत्तत्रवंदनेनोक्षितंतथा ॥ १ ॥ पद्मंप्रकल्पयेत्तत्रसामान्यार्घ्यंविधा
यच ॥ पूर्वेद्युरात्रिसमयेतद्विष्णोरितिवैऋचा ॥ २ ॥ स्थापयेद्द्वारिणापूर्वंकयानेतिचगन्धकम् ॥ गंधद्वारेतितैलेनश्रीश्वतेतिचचन्दनम् ॥३॥
दद्याद्दूर्वाक्षतंकल्पेब्राह्मणत्रयभोजनम् ॥ कारयेच्छितसूत्रैश्चवेष्टयेच्चनदस्यच ॥ ४ ॥ कुंभेविजापकंपूज्यंब्राह्मणंचपरेघटे ॥ स्वदिक्षुदिक्प
तींश्चैववृक्षमूलेनवग्रहान् ॥ ५ ॥ मंडलेशिवमभ्यर्च्यपीठपूजापुरःसरम् ॥ अथध्यानंप्रवक्ष्यामिश्वेतंवृषभमेवच ॥ ६ ॥ द्विभुजंशूलहस्तंचस
र्वाभरणसंयुतम् ॥ आरोपयेत्स्वसामर्थ्याद्भूतशुद्धिंसमाचरेत् ॥ ७ ॥ ततोऽर्घ्यपात्रंकृत्वातुपीठपूजांसमाचरेत् ॥ गणेशंगुरुपादंचजयंभद्रं

समाहितः ॥ ८ ॥ मध्येआधारशक्तिंचकूर्मानंतंसपद्मकम् ॥ चन्द्रसूर्याग्निनादीनांमंडलानिक्रमाद्यजेत् ॥ ९ ॥ पुनःपात्रांतरस्थंचगृही
त्वाकुसुमंबुधः ॥ पाणिकच्छपिकांकृत्वाध्यायेद्देवरुणंतथा ॥ १० ॥ पूर्ववच्चविधानेनदद्यात्पात्रादिकंत्रयम् ॥ मधुपर्कंचासनंचपृच्छेच्चस्वा
गतंपुनः ॥११॥ मुद्रांप्रदर्श्यविधिवदंगपूजांसमाचरेत्॥पूर्वादिपत्रेइन्द्रादीन्ब्रह्माणंमध्यतोयजेत् ॥१२॥ अनंतंपुरतश्चैवतेषामस्त्राणितद्बहिः॥
मध्येतोयाधिपंरुद्रंशांतंचैवप्रशांतकम् ॥१३॥ भूस्तत्वंचभुवस्तत्वंस्वस्तत्वादिचतत्वकम् ॥ कामंधर्ममधर्मंचादिक्षुनारायणंशिवम् ॥१४॥
नैर्ऋतेचयजेद्दुर्गांपार्श्वयोश्चशतक्रतुम् ॥ विनायकंचविष्णुंचगङ्गांपृथिविषष्टिकम् ॥ १५ ॥ षोडशेनोपचारेणपूजयेच्चविशेषतः ॥
मंडलस्योत्तरेभागेनागरूपमनंतकम् ॥ १६ ॥ पंचकृष्णालकैःकुर्याद्धस्तपर्वप्रमाणकम् ॥ आरोपयेच्चाक्षताद्यैःश्वेतचन्दनपुष्पकैः ॥ १७ ॥
पूजयेत्परयाभक्त्याअग्निकार्यमथाचरेत् ॥ वरुणंजुहुयात्पूर्वंमधुनापायसेनवा ॥ १८ ॥ तिलाक्षतैर्वाआज्यैर्वात्रिमध्वक्तैरथापिवा ॥ अष्टो
त्तरशतंकुर्याद्दिगीशानांघृतेनतु ॥ १९ ॥ एकैकामाहुतिंदद्यात्पुष्पैस्तिलघृतेनच ॥ नारायणंशिवंदुर्गांगणेशंचग्रहान्निशि ॥ २० ॥ अ
ष्टावष्टौचजुहुयाद्घृतेत्वेकाहुतिर्भवेत् ॥ ब्रह्मयुध्वानमितिमंत्रेणब्रह्माणंपायसेनतु ॥२१॥ एकाहुतिंततोदद्यादापोहिष्ठेतिवात्रिभिः ॥ ततो
वरुणमुद्दिश्यदद्यादाज्याहुतित्रयम् ॥ २२ ॥ इमंवरुणइतिवातद्वरोमाऋचापुनः ॥ वरुणस्योत्तंभनमसीतियेनापावकएवच ॥ २३ ॥
वातस्ययमितिपुनःपञ्चवर्णयथाक्रमात् ॥ ततोवरुणमुद्दिश्यघृतेनचगुडैःसह ॥ २४ ॥ ततःस्विष्टकृतेदद्याद्बलिंदद्यादनुक्रमात् ॥ मध्वा
ज्यपायसंदद्याद्वरुणायविशेषतः ॥ २५ ॥ यवक्षीरंदिगीशानामन्येषांपायसेनतु ॥ नागायपिष्टकंदद्याल्लाजाहोमाष्टकंपुनः ॥ २६ ॥ अनं
तस्योत्तरेतीरेपद्मंपत्रंपरिस्तरेत् ॥ अष्टकृष्णलस्यानेनवरुणंराजतेनतु ॥ २७ ॥ कुर्यात्पूर्वंद्वयेनापिवाणरत्तिसुवर्णकैः ॥ कुर्यात्पुष्करिणीं
तत्रपूर्वार्धेचतुरस्रके ॥ २८ ॥ वरुणंविन्यसेत्तत्रतथापुष्करिणीमपि ॥ विधिवद्वाक्यपूर्वेणउत्सृजेच्चजलेशयम् ॥ २९ ॥ ॐअद्येत्या
दिविष्णुरूपायवरुणायअमुकऋषिसगोत्रस्यामुकशर्मणः श्रुतिस्मृत्याद्युक्तवेदव्यासप्रणीताग्निष्टोमफलप्राप्तयेपुष्करिणीप्रतिष्ठाकर्मणिइमां
पुष्करिणींसुवर्णराजतांस्वगृह्योदितांसालंकारांसुपूजितामसुकगोत्रःश्रीअमुकदेवशर्मातुभ्यमहंसंप्रददे ॥ इतिउत्सर्गवाक्यम् ॥ ३० ॥

ॐ अद्येत्यादिब्राह्मणमुख्येभ्यःअमुकगोत्रस्यामुकदेवशर्मणोममाग्निष्टोमाद्यनेकफलप्राप्तये इमंजलाशयंवरुणदैवतंसुपूजितंचतुर्मुखसहितंच
तुःसत्वावाच्छिन्नस्नानपानाद्युपभोगाय अमुकसगोत्रःश्रीअमुकदेवशर्माहमुत्सृजे ॥ ३१ ॥ ततोनौकांसमादायमध्यात्किंचित्तथोत्तरे ॥३२॥
जलाशयस्यमध्यंतुऋत्विग्घोमंचरेत्ततः ॥ ३३ ॥ पूर्वावस्थायिनींयष्टिंसमारोप्यविधानतः ॥ ततोवरुणसूक्तेनवरुणंराजतोद्भवम् ॥ ३४ ॥
पुष्करिण्यासमंतेननागयष्टयंतरेक्षिपेत् ॥ तत्रैवानंतनागंचमंत्रमेतदुदीरयेत् ॥ ३५ ॥ पुंडरीकदलाभासशुभरक्तांतलोचन ॥ फणासहस्रसं
युक्तसुप्रतिष्ठनमोऽस्तुते ॥ ३६ ॥ दक्षिणांचततोदद्यात्ततःपूर्णाविधीयते ॥ मोचयेन्मकरान्ग्राहान्मीनकूर्माञ्जलेचरान् ॥ ३७ ॥ पद्मो
त्पलंचशैवालंमंत्रमेवप्रयत्नतः ॥ पुष्करिण्यांचात्रिःकुर्यात्खातंसर्वप्रदक्षिणाम् ॥ ३८ ॥ आदित्यंध्यायकंजप्त्वाक्षिपेल्लाजा
कपर्दकान् ॥ पातयेत्क्षीरधारांचसहस्रेणशतेनच ॥ ३९ ॥ सूत्रेणवेष्टयेत्प्राज्ञोरकेनचचतुःक्रमात् ॥ पथिसंतोषयेद्दीनान्संतो
ष्यचगृहंव्रजेत् ॥ ४० ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ॥
नलिन्यांचतथावाप्यांह्रदस्यद्विजसत्तमाः ॥ विधिंवक्ष्येसहाङ्गेनविधानंशृणुतद्विजाः ॥ १ ॥ स्वर्णपादेनमानेनपूर्वेद्युरधिवा
सयेत् ॥ आपोहिष्ठेतिमन्त्रेणतथाअब्जैःशतैरपि ॥ २ ॥ स्वमंडलेशुभेस्थानेविशेत्पूर्वमुखेनतु ॥ गणेशंवरुणंचैववटेसंपूज
येच्छिवम् ॥ ३ ॥ वागीशंचतथाविष्णुंसूर्यंकुंभेसमर्चयेत् ॥ पायसेनाहुतिंदद्याद्वरुणायघृतेनच ॥ ४ ॥ एकैकामाहुतिंदद्यादन्ये
षांचस्रुवेणच ॥ बलिदानंपायसेनउत्सृजेत्तदनंतरम् ॥ ५ ॥ यूपंनिवेशयेत्पश्चाद्दद्याद्धेनुंचदक्षिणाम् ॥ पूर्णंदद्यात्सवित्रेर्घ्यंदत्वातुस्व
गृहंव्रजेत् ॥ ६ ॥ आरामस्यविधिंवक्ष्येप्रतिष्ठाविधिविस्तरम् ॥ हीनारामस्यचतथाएकवृक्षस्यचद्विजाः ॥ ७ ॥ अरण्यमध्येपाश्चात्त्येउ
त्तरेवाविशेषतः ॥ मंडपंवर्तुलंकुर्याद्दध्यर्हस्तप्रमाणकम् ॥ ८ ॥ तद्दक्षिणेभवेत्कुण्डंचतुरस्रंसमंशुभम् ॥ चतुर्मुखंचकर्तव्यंतोरणाद्यैरलं
कृतम् ॥ ९ ॥ मंदरादिक्रमावाह्यतत्रसंपूजयेत्क्रमात् ॥ विष्वक्सेनंचतत्रैवपूजयेद्गन्धचन्दनैः ॥ १० ॥ भृगुंकर्णसमारूढंसर्वभूषणभूषित
म् ॥ विष्वक्सेनस्यमंत्रोयंपूजायांचैवसर्वतः ॥ ११ ॥ द्वारपालंचसंपूर्णगौर्यादीन्कलशेषुच ॥ स्वासुदिक्षुदिगीशानांबलिपुष्पाक्षतादि

ना ॥ १२ ॥ नैर्ऋत्यवरुणयोर्मध्येअनंतंप्रतिपूजयेत् ॥ इंद्रेशानयोश्चमध्येब्रह्माणंचप्रकल्पयेत् ॥ १३ ॥ वेदिपार्श्वेततोगत्वावेदिमावाह्य
पूजयेत् ॥ आसनंकल्पयित्वातुसामान्यार्घ्यंविधायच ॥ १४ ॥ ऐशान्येकलशेविघ्नरुद्रब्रह्माणंचतथाग्रहान् ॥ स्वैःस्वैर्मंत्रैर्गंधपुष्पैर्नैवेद्यैश्च
पृथग्विधैः ॥ १५ ॥ मंडलेशंवासुदेवंसासनंचबृहस्पतिम् ॥ पूजयेत्परयाभक्त्यापायसान्नंबलिंहरेत् ॥ १६ ॥ द्विभुजंवासुदेवंचशंख
चक्रधरंविभुम् ॥ पद्मासनगतंध्यायेत्पीतवासंसुशोभनम् ॥ १७ ॥ नीलोत्पलदलाभासंहरिचंदनचर्चितम् ॥ देवर्षिसिद्धसहितंकलत्रद्वय
संयुतम् ॥ १८ ॥ ध्यात्वाआरोपयेद्देवंबालादीनथनायकान् ॥ विमलाद्यानायिकाश्चदिगीशांश्चयथाविधि ॥ १९ ॥ षोडशोचैःपृथग्भूः
प्रतिपुष्पांजलिक्रमात् ॥ परितःपूजयेद्विष्णुंशिवंदुर्गांसरस्वतीम् ॥ २० ॥ शुद्धस्फटिकसंकाशंध्यायेत्सोमंचतुर्मुखम् ॥ अश्वारूढंदे
व्यरूपंपद्माक्षंधृतपुष्पकम् ॥ २१ ॥ वरदंदेवगंधर्वैःसेवितंमुनिभिःस्तुतम् ॥ श्वेतंवनस्पतिंध्यायेद्द्विभुजंपीतवाससम् ॥ २२ ॥ स्वरथ
स्थंमहाबाहुंशंखांकुशसखेटकम् ॥ विद्यांचवामतोध्यायेत्स्वमन्त्रेणचस्थापयेत् ॥ २३ ॥ दशस्वरान्वितंतोयंस्वभावंतमसान्वितम् ॥ मंत्रो
यंदेवदेवस्यपूजायांविनियोजयेत् ॥ २४ ॥ नीलंजयंभृंगिणंचपरितश्चयथाक्रमात् ॥ ततःकुशंडिकांकृत्वास्थालीपाकंविधानतः ॥ २५ ॥
अष्टोत्तरशतंचैवसोमायद्वादशाहुतीः ॥ वनस्पतेस्तथाष्टौचआज्येन्येषांविधीयताम् ॥ २६ ॥ एकैकामाहुतिंदद्यात्सप्तजिह्वामनंतरम् ॥
वास्तोष्पतयइतिमंत्रेणस्थालीपाकद्वयंनयेत् ॥ २७ ॥ वनस्पतिंसमुद्दिश्यततोयमीरहेद्दशम् ॥ वृक्षादीन्स्थापयेत्पूर्वंगायत्र्याप्रथमंबुधः ॥
॥ २८ ॥ अञ्जैरग्रंकांस्यवस्त्रंरत्नंदिक्षुयथाक्रमम् ॥ व्रीहयश्चेतिमंत्रेणतथाचसरितश्चमे ॥ २९ ॥ मित्रत्रयश्चेतितथापूपाचमऋचा
तथा ॥ संस्थाप्यव्रीहीन्संवाप्यतत्रैवविधिपूर्वकम् ॥ ३० ॥ क्षिपेद्गङ्गाजलंतोयेसर्वौषध्युदकेनच ॥ संस्थाप्ययजमानंचसुरास्त्वा
मितिमंत्रकैः ॥ ३१ ॥ आचार्यमात्मनेतत्रसंस्थितंद्विजपुंगवैः ॥ समाप्यनित्यविधिनाचार्यायाथचदक्षिणाम् ॥ ३२ ॥ धेनुंचलो
हपात्रंचदत्वाइष्टांचदक्षिणाम् ॥ ब्राह्मणेभ्योयथाशक्तिदद्यात्पूर्णांगृहंव्रजेत् ॥ ३३ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागे
पंचमोऽध्यायः ॥ ५ ॥ ७ ॥ सूतउवाच ॥ ॥ क्षुद्रारामप्रतिष्ठांचवक्ष्येचद्विजसत्तम ॥ अमंडलेशुभेस्थानेद्विहस्तमयस्थंडिले ॥ १ ॥

स्थापयेत्कलशंतत्रसोमंविष्णुंसमर्चयेत् ॥ आचार्यमात्रंवरयेन्निशासूत्रैःप्रवेष्टयेत् ॥ २ ॥ वृक्षान्माल्यैरलंकृत्यभूषयेद्भूषणादिना ॥ दोहदं
चततोदद्यात्स्थापयेच्छिद्रधारया ॥ ३ ॥ भोजयेत्पंचविप्राणांपुरतोऽतेविशेषतः ॥ कर्णवेधंततःकृत्वाउत्सृजेद्वाक्यपूर्वकम् ॥ ४ ॥ द
द्याद्यूपंमध्यदेशेरोपयेत्कदलींततः ॥ रंभांचरोपयेद्दिक्षुस्थालीपाकविधानतः ॥ ५ ॥ अष्टावष्टौचजुहुयादन्येषांचघृतेनतु ॥ एकैकामा
हुतिंदद्यात्स्विष्टकृत्तदनंतरम् ॥ ६ ॥ दक्षिणांचततोदद्यात्पूर्णांदद्याद्गृहंव्रजेत् ॥ ७ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागे
षष्ठोऽध्यायः ॥ ६ ॥ छ ॥ सूतउवाच ॥ ॥ एकादिवृक्षवृक्षाणांविधिंवक्ष्येद्विजोत्तमाः ॥ वृक्षस्यपश्चिमेभागेस्थापयेत्कलशंततः ॥ १ ॥
वृक्षंसंस्थापयेत्पूर्वंसूत्रेणपरिवेष्टयेत् ॥ ब्रह्माणंकलशेभ्यर्च्यसोमंविष्णुंवनस्पतिम् ॥ २ ॥ ततस्तिलयवैर्होममष्टाष्टौविधिवच्चरेत् ॥ समु
त्सृज्यततोयूपंकदल्यासहधर्मवित् ॥ ३ ॥ वृक्षमूलेयजेद्धर्मंपृथिवींचविशेतथा ॥ दिगीशांश्चतथायक्ष्मान्नाचार्यंतोषयेत्ततः ॥ ४ ॥ धेनुं
चदक्षिणांदद्याद्दोहदंवृक्षपूजनम् ॥ कृत्वासम्यग्विधानेनसावित्रेर्घ्यंनिवेदयेत् ॥ ५ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागेस
प्तमोऽध्यायः ॥ ७ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ अथाश्वत्थप्रतिष्ठायांमूलेबाहुप्रमाणकम् ॥ स्थंडिलंकारयेत्तत्रचंदनेनाङ्कितंयथा ॥
॥ १ ॥ पद्मंप्रकल्पयेत्तत्रसामान्यार्घ्यंविधायच ॥ पूर्वेद्युरात्रिसमयेतद्विष्णोरितिवैऋचा ॥ २ ॥ स्थापयेद्द्वारिणापूर्वंकयानेतिचगंधकम् ॥
गंधद्वारेतितैलेनश्रीश्चतेतिचचंदनम् ॥ ३ ॥ दद्याद्दूर्वाक्षतंकल्यब्राह्मणत्रयभोजनम् ॥ कारयेत्सितसूत्रैश्चवेष्टयेच्चनदस्यच ॥ ४ ॥ कुंभे
विनायकंपूज्यब्रह्माणंचपरेघटे ॥ स्वदिक्षुदिक्पतींचापिवृक्षमूलेनवग्रहान् ॥ ५ ॥ मंडलेशिवमभ्यर्च्यपीठपूजापुरःसरम् ॥ पूर्वेचंडंप्रचं
डंचदक्षिणेनंदिभृंगिणम् ॥ ६ ॥ अनंतंपश्चिमेकामसुत्तरंगणनायकम् ॥ कार्तिकेयंमध्यदेशेआधारशक्तिपूर्वकम् ॥ ७ ॥ अनंतंपृथिवींचैवात्र
वृत्तंचत्रिमंडलम् ॥ अथध्यानंप्रवक्ष्यामिश्वेतंवृषभमेवच ॥ ८ ॥ द्विभुजंशूलहस्तंचसर्वाभरणसंयुतम् ॥ आरोपयेत्स्वतंत्रेणमूलेविष्णुंसम
र्चयेत् ॥ ९ ॥ शंकरंचतथामध्येअग्रेब्रह्माणकंयजेत् ॥ बलिंचपिष्टकान्नंचदत्वाचश्रपयेच्चरुम् ॥ १० ॥ जुहुयाद्रुद्रमुद्दिश्यरुद्रसंख्याहु
तिक्रमात् ॥ अन्येषांचस्रुवेणैवहोमंदद्यात्प्रयत्नतः ॥ ११ ॥ रोपयेत्कदलीवृक्षमाचार्यंपरितोषयेत् ॥ कृत्वापूर्णांपंचधारांकृत्वाचापिप्रद

क्षिणाम् ॥१२॥ क्षीरधारांचसंपाद्यअर्घ्यंदत्वागृहंव्रजेत्॥१३॥इति श्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागेऽष्टमोऽध्यायः ॥ ८ ॥छ॥
॥ सूतउवाच ॥ वटस्थानमथोवक्ष्येतस्यमूलेतुदक्षिणे ॥ त्रिहस्तवेदिमुपरिस्थापयेत्कलशत्रयम् ॥ १ ॥ गणेशंचाशिवंविष्णुंपूजयित्वाहु
नेच्चरुम् ॥ रक्तसूत्रैस्त्रिगुणितैःस्वर्णमेवपुरःसरम् ॥ २ ॥ यवक्षीरबलिंदद्यादुत्सृजेद्वाक्यमुच्चरन् ॥ यूपमारोपयेत्पश्चाद्वटमूलैःसमर्पयेत्॥३॥
यक्षान्नागांश्चगंधर्वान्सिद्धांश्चैवमरुद्गणान्॥४॥इति श्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागेनवमोऽध्यायः ॥ ९ ॥ छ ॥ सूतउवाच ॥
वक्ष्येबिल्वप्रतिष्ठांचपूर्वेद्युरधिवासयेत् ॥ त्र्यंबकश्चेतिमंत्रेणस्थापयेद्गंधवारिणा ॥ १ ॥ सुनाभेतिचमंत्रेणमेगृह्णामीतिचाक्षतम् ॥ कया
नेतिततोधूपंवस्त्रंमाल्यंनिवेदयेत् ॥ २ ॥ यजेद्रुद्रंततोवक्ष्येमध्येदुर्गांधनेश्वरम् ॥ ततःकल्येसमुत्थायनित्यंनिर्वर्त्यशास्त्रतः ॥ ३ ॥ स्वगृहेसप्त
विप्रांश्चभोजयेद्द्विजदंपती ॥ मूलेहस्तद्वयंदत्वावर्तुलावेदिकाभवेत् ॥४॥ तत्रगैरिकयुक्तेनकुसुंभचूर्णकेनवा॥निशारक्तेनवाकुर्यादष्टपत्रंसुशो
भनम् ॥ ५ ॥ निवेष्टनंततःकुर्याद्वृक्षस्यद्विजसत्तमाः ॥ रक्तसूत्रैर्वेष्टयेच्चपंचसप्तनवेनतु ॥ ६ ॥ व्रीहींश्चस्थापयेत्तत्रउत्तरादिमुखेनतु ॥ शि
वंविष्णुंचब्रह्माणंपूजयेद्भूतिमिच्छता ॥७॥ शिवंचनायकंकुर्यादादित्यान्पत्रमूलके ॥ शेषंचतरुमूलेतुमध्येनंतंशतक्रतुम् ॥८॥ वनपालंचसो
मंचसूर्यंपृथ्वीमनुक्रमात् ॥ होमंतिलाक्षतैःकार्यंबलिंदद्याद्घृतौदनैः॥९॥यक्षेभ्योमाषभक्तंचवायनानिचद्वादश ॥ ग्रहाणांप्रीतयेदद्यात्क्षीरेणवे
ष्टचदक्षिणाम्॥१०॥कांचनंकांस्यपात्रंचतांबूलंताम्रपात्रकम् ॥ यूपारोपःकर्णवेधःसवित्रेऽर्घ्यंनिवेदयेत् ॥११॥अथरात्रिप्रतिष्ठांचवक्ष्येशास्त्रा
नुसारतः॥यक्षैकवृक्षसंस्कारेनपुनर्जायतेभुवि ॥१२॥ पूर्वेद्युरुपवाहेतुवृक्षमूलेघटंन्यसेत् ॥ विष्णुंशिवंगणेशंचपूजयित्वातुस्थापयेत् ॥१३॥
कलशंपंचभिःसप्तगंधतैलैरनंतरम्॥दुग्धेनपंचगव्येनशंखतोयेनयत्नतः ॥१४॥ सूत्रैःसंवेष्टनंकृत्वावस्त्रमाल्यैरनंतरम् ॥ कांडादितिचमंत्रेणद
द्याद्दूर्वाक्षतंततः ॥ १५ ॥ विष्णुसूक्तेनचपुनःसिंदूरांजनचंदनम् ॥ दद्यात्फलंचदीपंचस्वयंतत्रस्वपेत्ततः ॥ १६ ॥ ततःप्रभातेविमलेब्रा
ह्मणान्सप्तभोजयेत् ॥ पूर्ववत्कलशंकृत्वाशिवंविष्णुंगणाधिपम् ॥ १७ ॥ सोमंवनस्पतिंचैवएककुंभेसमर्चयेत् ॥ हुनेत्पंचाहुतींतत्रयूपं
दद्यात्समुत्सृजेत् ॥ १८ ॥ बलिंचपायसेनैवप्रकुर्यात्कर्णवेधनम् ॥ वेष्टयेत्क्षीरतोयेनधान्यंधेनुंचदक्षिणाम् ॥ १९ ॥ दद्यादर्घ्यंहुनेत्पूर्णं

भोजयेद्द्विजदंपती ॥ २० ॥ इति श्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागेदशमोऽध्यायः ॥ १० ॥ छ ॥ सूतउवाच ॥ ॥ शतह
स्तामितांसुष्टिंनानातरुविभूषिताम् ॥ पूगाम्रादिफलैर्युक्तंवास्तुंकृत्वायजेत्तुयः ॥ १ ॥ षष्टिवर्षसहस्राणिस्वर्गलोकेवसेच्चिरम् ॥ यद्विधानंप्रव
क्ष्यामियथाशास्त्रानुसारतः ॥२॥ नित्यंनिर्वर्त्यविधिवत्पंचविप्रान्समर्चयेत् ॥भोजयेत्पूजयेद्विष्णुंप्रजापतिसमन्वितम् ॥३ ॥ अग्निकार्यंततः
कृत्वादद्याद्विप्रायदक्षिणाम्॥४॥इति श्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागएकादशोऽध्यायः॥११॥छ॥ ॥सूतउवाच ॥ ॥ प्रतिष्ठां
मंडपस्यैवशैलदारुमयस्यच ॥ तृणकाष्ठस्यचविभोतृणवत्सस्यचाद्विजाः ॥ १ ॥ अधिवासस्यपूर्वेद्युःशुभेलग्नेघटंन्यसेत् ॥ सूर्यंसोमंतथा
विष्णुंकलशेतुसमर्चयेत् ॥ २ ॥ प्रोक्षयेत्कुशतोयेनआपोहिष्ठेतित्र्यृचा ॥ आप्यायस्वेतिगंधेनगंधद्वारेतिगंधकम् ॥ ३ ॥ आकृष्णेनेति
तैलेनश्रीश्चतेइतिचंदनम् ॥ सिंदूरालक्तकंदद्यादंजनंपूर्वयासह ॥ ४ ॥ ततःप्रभातेविमलेश्राद्धंवृद्ध्यात्मकंचरेत् ॥ दिक्पालांश्चैवविन्यस्य
मंडपेशुभलक्षणे ॥५॥ मध्येवेद्यंतरेचैवराजाभिर्मंडलंलिखेत् ॥ सूर्यमावाहयेत्तत्रसोमंविष्णुंचपार्श्वयोः ॥ ६ ॥ गणेशंचग्रहांश्चैवदिक्पालांश्च
घटेर्चयेत् ॥ पायसंजुहुयादग्नावष्टोत्तरशतंतथा ॥ ७ ॥ आदित्यस्यतथाविष्णोःसोमस्यद्वादशाहुतीः ॥ बलिंचपायसंदद्यात्तैलंक्षीरमथा
पिवा ॥८॥ ततउत्सृज्यविधिवद्वाक्यमेतदुदीरयेत् ॥ जानुभ्यामवनिंगत्वाशनैरोष्ठंनचालयेत् ॥ ९ ॥ वास्तोष्पतिंचतत्रैवपूजयेद्गन्धचन्द
नैः ॥ अर्घ्यंदद्याच्चविधिवद्घृतेनैवाहुतिंहुनेत् ॥ १० ॥ ॐअद्येत्यादिब्राह्मणादिसर्वसत्वेभ्योविष्णुप्रीणनार्थमिदंमण्डपंसुपूजितंसूर्य
दैवतंशैलेयेष्टकादिसर्वसत्वेभ्योरचितंश्रुतिस्मृत्युक्तफलप्राप्तिकामनयाअमुकऋषिसगोत्रःश्रीअमुकदेवशर्माहमुत्सृजे ॥ ११ ॥ ततःश्वेतघटं
दद्यान्मण्डपोपरिसत्तमाः ॥ त्रिगुणेनानिशाक्तैर्वावेष्टयेद्वारिधारया ॥ १२ ॥ दक्षिणांविधिवद्दद्यात्सूर्यायार्घ्यंनिवेदयेत् ॥ तृणवेश्मानिवै
सूर्यंवासुदेवसमन्वितम् ॥ १५ ॥ घटेगणेशंवरदंवरंकृत्वासमुत्सृजेत् ॥ ऐशान्यांदापयेद्धूपंध्वजान्दिक्षुप्रकल्पयेत् ॥ १६ ॥ मंडपोपरि
कलशंसंस्थाप्यमन्त्रमुच्चरेत् ॥ प्रपायांवरुणः पूज्योविश्वकर्माप्रयत्नतः ॥ १७ ॥ पृथिवींचगणेशंचपूजयित्वाहुतेद्वटम् ॥ सर्ववर्ज्यमिदं
वाक्यंध्वजमात्रंविधीयते॥१८॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागेद्वादशोऽध्यायः ॥ १२ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ चतु

ईस्तंमहायूपंहस्तषोडशानिर्मितम् ॥ वक्ष्येतंचप्रतिष्ठांचरात्रौत्रैरात्रिकंयजेत् ॥ १ ॥ वरुणंसितकुंभेचप्रपाकूपस्यपश्चिमे ॥ गायत्र्यास्नाप
येत्पूर्वमापोहिष्ठेतिवैक्रमात् ॥ २ ॥ गंधद्वारेतिगन्धंचअंशुनाचेतितैलकम् ॥ मनोन्नाइतिकुसुमंधूरसीतिचधूपकम् ॥ ३ ॥ कयानेतिददे
द्वस्त्रंनैवेद्यंदीपचन्दनम् ॥ आदौश्राद्धंनकर्तव्यंप्रतिष्ठांतेविधीयते ॥४॥ दंपतीभोजनंकुर्याद्वरयेदेकब्राह्मणम् ॥ मंडपेचाष्टहस्तेचकलशेतत्र
विन्यसेत् ॥ ५ ॥ पूजयेद्वरुणंदेवंनारायणसमन्वितम् ॥ शिवंचपृथिवींचैवस्वैःस्वैर्मन्त्रैर्यथाक्रमात् ॥ ६ ॥ ततःकुशंडिकांकृत्वास्थाली
पाकविधानतः ॥ वरुणंचसमभ्यर्च्यजुहुयादाहुतीर्दश ॥ ७ ॥ अन्येषांचस्रुवेणैवदद्यादेकाहुतिंक्रमात् ॥ वरुणस्योक्तवरुणंतत्त्वायामिततः
परम् ॥ ८ ॥ वरुणस्योत्तंभनमसीतिचआभ्यांदेवातथैवच ॥ येनापावकचक्षसापंचमंसमुदाहृतम् ॥ ९ ॥ रात्रस्ययूपमित्यादिपरंचद
शमस्तकम् ॥ ततःस्विष्टकृतंकृत्वासप्तजिह्वांचरुंनयेत्॥१०॥ इहवेत्यादिकंपंचततःपंचाहुतिंहुनेत् ॥ शंभवेचपृथिव्यैचमहाराजायचक्रमा
त् ॥ ११ ॥ चरुपाकेतिनैवेद्यंबलिंचैवागुरूदनम् ॥ शंकरायचरुद्रायशर्वायपशुपतयेइतिच ॥ उग्रायअसनायेतिभवायतदनंतरम् ॥ १२ ॥
महादेवायचपुनरीशानायेतिचक्रमात् ॥ चरुपाकेतिनैवेद्यंबलिंचैवागुरूदनम् ॥ १३ ॥ वाक्यपूर्वंसृजेत्तोयंतत्रवाक्करणंशृणु ॥ १४ ॥ ॐ
अद्येत्यादिब्राह्मणादिसर्वसत्वेभ्यः अमुकगोत्रस्यमातिपतुरमुकदेवशर्मणःस्मृतिश्रुत्याद्युक्तंकूपप्रातिष्ठाजन्यफलप्राप्तयेइमंकूपंसुपूजितंसाच्छा
दितंवरुणदैवतममुकसगोत्रःश्रीअमुकदेवशर्माहमुत्सृजे ॥ १५ ॥ दक्षिणांविधिवद्दद्याद्गांचदद्यात्पयस्विनीम् ॥ १६ ॥ मंडपेक्षु
द्रकूपेचप्रतिष्ठांशृणुतद्विजाः ॥ गणेशंवरुणंकुंभेविधिवत्पूजयेत्सुधीः ॥ १७ ॥ वेष्टयेद्रक्तसूत्रैश्चदद्याद्यूपंसमुत्सृजेत् ॥ दक्षिणांविधिवद्द्या
द्विप्रान्संपूजयेत्ततः ॥१८॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागेत्रयोदशोऽध्यायः ॥१३॥ सूतउवाच ॥ पुष्पारामप्रतिष्ठांतुव
क्ष्येशृण्वंतुवैद्विजाः ॥ मध्येवेदींत्रिहस्तांचकृत्वासंस्थापयेद्वटम् ॥ १ ॥ अधिवासस्यपूर्वेद्युर्यथावद्विप्रभोजनम् ॥ कृत्वाघटेगणेशंचसूर्यंसो
मंहुताशनम्॥२॥नारायणंस्थंडिलेचजुहुयान्मधुपायसम्॥विधिवद्यूपमारोप्यगोधूमान्सेचयेद्गुरौ॥३॥वेष्टयेद्रक्तसूत्रैश्चप्रदद्याच्चोतिदक्षिणाम् ॥
एतद्धाराजलेनैवयवान्नंसगुडंपयः ॥ ४ ॥ ऐशान्यांयूपमारोप्याविधिवाद्विजसत्तमाः ॥ कर्णवेधंसमारोप्यस्नापयेत्कुशवारिणा ॥ ५ ॥

धान्यंयवंचगोधूमंदद्याद्विप्रायदक्षिणाम् ॥ शतधारजलैनैववेष्टयेत्परितोद्विजाः ॥ ६ ॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागे
चतुर्दशोऽध्यायः ॥छ॥ १४ ॥ ॥ सूतउवाच ॥ ॥ ज्येष्ठाषाढेतुलस्याश्चप्रतिष्ठांविधिवच्चरेत् ॥ यजमानःशुद्धदिनेएकादश्यामथापिवा ॥१॥
ततोरात्रौघटंस्थाप्यपूजयेत्परमेश्वरम् ॥ नारायणंशिवंसोमंब्रह्माणंचेंद्रमेवच ॥ २ ॥ गायत्र्यास्नापनंकुर्यात्तथोक्तैर्मंत्रकैरपि ॥ कयानेतिच
गंधेनअश्रुनेतिचतैलकम् ॥ ३ ॥ त्वांगंधर्वेतिचपुनःपुष्पंमंडशनेतिच ॥ मानस्तोकेतिकुसुमंश्रीश्चतेतिचचंदनम् ॥ ४ ॥ वैश्वदेवी
तिचपुनर्मंत्रेणानेनचंदनम् ॥ दूर्वामंत्रेणदूर्वाश्चरूपेणेतिचदर्पणम् ॥ ५ ॥ फलमंत्रेणचफलंसमेधेतिचअंजनम् ॥ सकुशंपीतसूत्राद्यैर्वेष्टये
त्क्षीरधारया ॥ ६ ॥ शतधाराजलैनैववेष्टयेत्स्वगृहंव्रजेत् ॥ वस्त्रेणावृत्यविधिवद्बुधःकालेघटंन्यसेत् ॥ ७ ॥ सप्तपंचत्रिभिर्वाथतद्विष्णो
रितिवैऋचा ॥ स्नापयेदथसाध्वीभिःकृतमंगलपूर्वकम् ॥ ८ ॥ ततःश्राद्धंसमाप्यैवमातृपूजापुरःसरम् ॥ आचार्यंवरयेत्पूर्वंगंधाद्यैःकुसुमैरपि
॥ ९ ॥ आचार्यएवहोतास्याद्ब्रह्माणंचसवस्यकम् ॥ मंडपेदशहस्तेपिवर्तुलेस्थंडिलेषुच ॥ १० ॥ सहस्रंमंडलंकुर्यात्तत्रनारायणंयजेत् ॥
ग्रहाँल्लोकेश्वरान्मध्येआदित्यांश्चमरुद्गणान् ॥ ११ ॥ रुद्रादन्वसूंश्चकलशेपरितश्चसमर्चयेत् ॥ततःकुशंडिकांकृत्वाहोमंतिलयवेनतु ॥ १२॥
अष्टोत्तरशतंकुर्यादन्येषांशक्तितोहुनेत् ॥ नारायणंसमुद्दिश्यदद्यादुत्सृज्यसत्तमाः ॥ १३ ॥ मध्येयूपंसमुद्दिश्यचरुपाकंबलिंददेत् ॥
कदलींदिक्षुसंन्यस्यध्वजान्दिक्षुप्ररोपयेत्॥१४॥दक्षिणांकांचनंदद्यात्तिलंधान्यंसपुष्पकम् ॥ धेनुंपयस्विनींदद्याद्वेष्टयेत्क्षीरधारया ॥ १५ ॥
जयंत्याःसोमवृक्षस्यतथासोमवटस्यच ॥ पनसस्यकदंबस्यनिंबस्यद्विजसत्तमाः ॥ १६ ॥ पाटलाकनकस्यैवशाल्मलीनिंबुकस्यच ॥
बिंबाशोकवटस्यैवप्रतिष्ठांनैवकारयेत् ॥ १७॥ भद्रकस्यशमीकोणचंडातकबकस्यच ॥ खदिरस्यैवकर्तव्यंकर्णवेधनकारयेत् ॥ १८ ॥
इतिश्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागेपंचदशोऽध्यायः ॥ १५ ॥ सूतउवाच ॥ वृक्षादीनांप्रतिष्ठांचउत्तमेसूत्तमंचरेत् ॥ मध्येम
ध्येकानिष्ठातुकनिष्ठंपरिकीर्तितम् ॥ १ ॥ वर्तुलंमंडलंकुर्यात्तत्तुशीर्षेतथान्त्यके ॥ मध्येदावेदिकांकुर्यात्तन्मध्येकुंडमंडलम् ॥
॥ २ ॥ पूर्वेद्यूरात्रिसमयेघटंसंस्थाप्यपूजयेत् ॥ शेषंसंपूज्यविधिवत्पृथिवींचशिवंतथा ॥ ३ ॥ गंधतोयेनगायत्र्यासेतुंसंपूज्यमोक्षयेत् ॥

कयानेतिचमंत्रेणआप्यायस्वेतिवैऋचा ॥ ४ ॥ दद्याद्गन्धादिकंश्रीश्चतेलक्ष्मीतिचचंदनम् ॥ दूर्वामंत्रेणदूर्वांश्चफलमंत्रेणवैफलम् ॥ ५ ॥
शन्नोदेवीतिमन्त्रेणदद्यात्कुशपवित्रकम् ॥ सुरासुरेतिमंत्रेणप्रदद्याद्वस्त्रयुग्मकम् ॥ ६ ॥ अञ्जनालककंकुर्यान्मनोन्नाइतिसंपठन् ॥ कुर्या
च्छ्राद्धंपरदिनेवसुधारापुरःसरम् ॥ ७ ॥ वरयेदथआचार्यहोतारंनरवरश्चरेत् ॥ पात्रद्वयंविधातव्यंस्वस्त्याचार्यमेवच ॥८॥ सेतुयागेविधात
व्यंतथाधान्याचलेपिच ॥ सहस्रहोमेवैकंतुविवाहेब्रह्मऋत्विजौ ॥ ९ ॥ यजेद्देनंकृतेमौलियागार्थयागमण्डपम् ॥ वेदिमावाहयेत्पूर्वं
मंडपंप्रतिपूजयेत् ॥ १० ॥ विघ्नग्रहाँल्लोकपालान्सर्वसिद्धिप्रदायकान् ॥ स्थंडिलेसर्वतोभद्रेशेषंविष्णुंप्रदर्शयेत् ॥ ११ ॥ तत्रैवतुव
राहाख्यंप्रतीतमृत्विजोत्तमम् ॥ स्थालीपाकेनजुहुयादष्टाविंशतिकत्रयम् ॥ १२ ॥ आज्येनतुवराहस्यहोमपंचकमीरितम् ॥ तत
स्तिलयवैर्नैवएकैकामाहुतिंक्रमात् ॥ १३ ॥ बलिंदद्यात्पृथग्रूपंशेषयेद्विधिपूर्वकम् ॥ पिष्टकान्नंघृतान्नंचविस्तरेवागुडौदनम् ॥ १४ ॥
माषभक्तंतुलोकायपृथिव्यैपरमान्नकम् ॥ वाक्यपूर्वंसृजेद्धीरोवाक्यप्रकरणंशृणु ॥ १५ ॥ ॐअद्येत्यादिएकविंशतिकुलस्याविशिष्टस्व
र्गप्राप्तयेइमंसेतुंसंक्रमसमेतंविष्णुदैवतंसुपूजितंविधिवद्वासुदेवस्यप्रीतयेअहमुत्सृजे ॥ १६ ॥ बद्धाञ्जलिःपठेन्मन्त्रंकुर्याच्चविधिवत्त
तः ॥ १७ ॥ पिच्छिलेपतितानांचउद्धातेनाङ्गभङ्गतः ॥ प्रतिष्ठितेधर्मसेतौधर्मोमेस्यान्नपातकम् ॥ १८ ॥ सेतोरस्यप्रबंधस्यश्रद्ध
यापरयायुतः ॥ येचात्रप्राणिनःसन्तिसर्वेषांप्राणधारक ॥ १९ ॥ वेदागमेनयत्पुण्यंकथितंसेतुबंधने ॥ तत्पुण्यंतुमयादेवपार्थ
वहिसमर्पितम् ॥२०॥ यूपंदद्यादितिमन्त्रेणअन्तेचापितथाध्वजान् ॥ विधिवद्दक्षिणांदद्यात्कुलानिनवपञ्चवा ॥ २१ ॥ पूर्णांदत्वासावित्रेऽर्घ्यं
दत्वाचस्वगृहंव्रजेत्॥अनातपेक्षुद्रसेतोःप्रतिष्ठांविधिवच्चरेत् ॥ २२ ॥ पूर्वंचदधिवासंचप्रभातेविप्रभोजनम् ॥ सेतुमध्यंततोगत्वागन्धादी
न्विधिवच्चरेत् ॥ २३ ॥ विष्णुंशिवंहुताशंचएककुंडेसमर्चयेत् ॥ वास्तोष्पतिंयजेत्तत्रहोमंतिलयवेनतु ॥ २४ ॥ कुर्यादेकैकशोविप्रा
अष्टाविंशतिसंख्यया ॥ उत्सृज्यदापयेद्रूपंध्वजवर्ज्यंहिसत्तमाः ॥ २५ ॥ ज्ञातिभिःसहभुञ्जीतकृतकृत्योभिधीयते ॥ २६ ॥ इति श्रीभ
विष्येमहापुराणेमध्यमपर्वणितृतीयभागेषोडशोऽध्यायः ॥ १६ ॥ छ ॥ सूतउवाच ॥ तत्रदण्डेचविप्रेन्द्राश्चतुरस्रेसमंततः ॥ षष्टि

हस्तमितांभूर्मिंतस्यपूर्णांमनोरमाम् ॥ १ ॥ प्रचारार्थंगवांचैवयोदद्यात्सुसमाहितः ॥ षष्टिवर्षसहस्राणिरुद्रलोकेमहीयते ॥ २ ॥ तदर्धंचत
दर्धंचतदर्धंवासमुत्सृजेत् ॥ योदद्यात्केवलांभूमिंकन्यांदासींतथावृषम् ॥ ३ ॥ अलंकारंविनाधेनुंफलस्यार्धंप्रकीर्तितम् ॥ अमंडपेशुभेस्था
नेशर्करादिविवर्जितम् ॥ ४ ॥ द्विहस्तवेदिकामध्येप्रकुर्यात्सेतुमंडपम् ॥ तत्रसंपूजयेद्रुद्रंब्रह्माणंचशचीपतिम् ॥ ५ ॥ गणेशंक्षेत्रपालंच
शेषंचैवदिगीश्वरान् ॥ पञ्चोपचारैर्विधिवत्पूजयेत्पायसादिना ॥ ६ ॥ स्थालीपाकेनजुहुयादन्तेवैविप्रभोजनम् ॥ अत्रयागेश्राद्धवर्जंपूर्वेद्यु
रधिवासयेत् ॥ ७ ॥ त्र्यम्बकेनैवमन्त्रेणभूमिंसंस्थाप्यपूजयेत् ॥ तद्विष्णोरितिमन्त्रेणगन्धतैलंसचन्दनम् ॥ ८ ॥ प्रदद्यादसुनोतेतिपुन
स्तुनैवस्थापयेत् ॥ पञ्चगव्येनचपुनःश्रीश्चतेतिचपुष्पकम् ॥ ९ ॥ एवंयूपस्यचतथाअधिगृह्णातिमन्त्रकम् ॥ गन्धद्वारेतिगन्धेनअंशुना
तातितैलकम् ॥ १० ॥ सुरासुरेतिकुसुमंदूर्वामंत्रेणदूर्वया ॥ प्रभातेपूजयेद्देवानुद्दिश्यहोमयेत् ॥ ११ ॥ स्थालीपाकेन
विधिनाअन्येषांपूर्ववच्चरेत् ॥ उत्सृज्यारोपयेद्यूपंस्थिरोभवेतिवैऋचा ॥ १२ ॥ तंत्रेणनिर्मितंकुर्यात्सफलंचत्रिहस्तकम् ॥ हस्तै
कंप्रापयेन्मध्येक्षेत्रेचैवविशेषतः ॥ १३ ॥ स्थापयेत्तत्रमन्त्रेणपञ्चगव्येनयत्नतः ॥ मधुवातेतिमधुनाआप्यायस्वेतिवैदधि ॥ १४ ॥
तद्विष्णोरितिमन्त्रेणघटतोयैरनंतरम् ॥ पृथिवींचवराहंचकूर्मंमाधवशक्तिकान् ॥ १५ ॥ वास्तोष्पतिंचविष्णुंचयूपेसंपूजयेत्क्रमात् ॥
दद्यादर्घ्यंचविवरेगतेहोमंविवर्जयेत् ॥ १६ ॥ अर्घ्यपात्रेचदुष्टेचहस्तेनोत्सृज्यसत्तमाः ॥ ॐअद्येत्यादिगोब्राह्मणसर्वसत्वेभ्यः
पर्यटनार्थायइमांभूमिंचसुपूजितां विष्णुदेवतांगोप्रचाररूपिणीं स्मृतिश्रुत्याद्युक्तफलप्राप्तयेऽहमुत्सृजे ॥ १७ ॥ शिवलोक
स्थितागावः सर्वदेवैः सुपूजिताः ॥ एवंनिवेदयेद्विप्रागोप्रचारंसमाहितः ॥ १८ ॥ समुक्तः सर्वपापेभ्योविष्णुलोकेमहीयते ॥ यावं
तितृणगुल्मानिसंतिभूमौशुभानिच ॥ १९ ॥ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ २० ॥ इति श्रीभविष्येमहापुराणेतृतीयभागेगो
प्रचारविधौसप्तदशोऽध्यायः ॥ १७ ॥ ७ ॥ ॥ सूतउवाच ॥ कलौचैकाहसाध्येनप्रतिष्ठामल्पवित्तवान् ॥ सद्योधिवासमाज्येनप्रकुर्या

त्तांत्रिकोत्तमः ॥१॥ उत्तरंतुगतेहंसेअतीतेचोत्तरायणे ॥ शरत्कालेव्यतीतेतुवसंतेयज्ञमारभेत् ॥ २ ॥ नारायणादिमूर्तीनांद्वात्रिंशद्भेदमे
वतु ॥ प्रतिष्ठांप्रतिमानांचगजास्यादींश्चसत्तमाः॥३॥नित्यंनिर्वर्त्यमतिमान्कुर्यादभ्युदयंततः ॥ विप्रान्संभोजयेद्धाथततोयागगृहंव्रजेत् ॥४॥
गणेशग्रहदिक्पालान्प्रतिकुंभेषुपूजयेत् ॥ स्थंडिलेपूजयेद्विष्णुंपरिवारगणंयजेत् ॥ ५ ॥ स्नापयेत्प्रथमंदेवंतोयैःपञ्चविधैरपि ॥ पञ्चामृतैः
पञ्चगव्यैःपंचमृत्पिण्डकैरपि॥६॥तिलतैलैश्चस्नेहैश्चकषायैरपिसत्तमाः ॥पञ्चपुष्पोदकैर्वाथत्रिपदैरपिसत्तमाः॥७॥तुलसीकुसुमापुष्पंपत्राण्या
हुस्त्रिपत्रकम्॥पञ्चकाम्रशमीपद्मकरवीरंचपंचकम्॥८॥मृत्तिकाकरिदंतस्यतथाश्वखुरमृत्तिका ॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिस्तुपंचमम्॥९॥
कुर्यात्प्राणप्रतिष्ठांचहोमंकुर्याद्यथाविधि ॥ दक्षिणांविधिवद्दद्यात्पूर्णांतुतदनंतरम् ॥ १० ॥ इति श्रीभविष्येमहापुराणेमध्यमपर्वणितृती
यभागेष्टादशोऽध्यायः ॥ १८ ॥ छ ॥ सूतउवाच ॥ अतःपरंतुविप्रेन्द्राःकाल्यादीनांतथैवच॥अधिवास्यचपूर्वेद्युःश्राद्धमभ्युदयात्मकम् ॥
॥१॥ प्रथमेजलजैःस्नानंपञ्चगव्यैरनंतरम् ॥ पूर्ववच्चविधानेनकुंभेदुर्गांसमर्चयेत् ॥२॥ पञ्चामृतैःपञ्चगव्यैःकरीषशतधारया॥ श्रीबिल्वेपूजये
द्देवींदद्यात्प्राणमनंतरम्॥३॥बिल्वपत्रैःफलैर्वापिदद्याच्चापिशताहुतीः ॥ एकैकशस्तुअन्येषांदद्यात्काञ्चनदक्षिणाम् ॥४॥ प्रतिमांकालिकाया
श्चतारायाश्चपृथक्पृथक् ॥ ग्राह्यंविनार्चयेद्विप्राःपञ्चपञ्चशतैरपि ॥ ५ ॥ भोजयेत्स्नापयेद्देवींगंधतोयैर्दिनत्रयम् ॥ ताम्रकुंभेऽर्चयेद्देवींत्रिदि
नंप्रातरेवहि॥६॥समीरणंततोदद्यात्पेटिकायांनिवेशयेत्॥ततोपिगन्धतोयैश्चस्नापयेत्कन्यकादिभिः ॥ ७ ॥ ततोवैचाष्टमदिनेरात्रावपिप्रपूज
येत्॥पशुदानंप्रकर्तव्यमग्निकार्यंचपायसैः॥८॥शिवलिङ्गप्रतिष्ठांचवक्ष्येतंत्रमतंयथा ॥ त्रिविप्रंभोजयेद्विप्राअधिवास्यंविशेषतः ॥ ९ ॥ नि
त्यंसमाप्यचपुनःकुर्यादभ्युदयंततः ॥ आचार्यंवरयेत्प्रातःस्नापयेत्पूर्ववत्मना ॥ १० ॥ परिवारगणैःसार्द्धमर्चयेत्तदनंतरम् ॥ दद्यात्समी
रणंपश्चादग्निकार्यंसमाचरेत् ॥ ११ ॥ तिलहेममयींगांचदद्याद्गांचविधानतः ॥ ननामनचगोत्रंचहोमकर्मणिसर्वदा ॥ १२ ॥ पूर्णिमायांवि
शेषेणनान्येषांचकथंचन ॥ होमांतेवसुधारांचकुंभेदत्वाविधानतः ॥ १३ ॥ त्रिहस्तचरकायंचहस्तैकंचतुर्हस्तके ॥ शालिग्रामाशि
लायाश्चप्रतिष्ठांविधिवच्चरेत् ॥ १४ ॥ सद्योधिवासयेदेवंद्वादश्यांस्नापयेदथ ॥ रत्नतोयैःपरिमलैस्त्रिगंधैःपंचपल्लवैः ॥ १५ ॥ कुंभेप्र

आनीयताम्र
जापतिंस्थाप्यश्वेताब्जंनवनाभके ॥ नवदुर्गोक्तमार्गेणपूजयेत्परमेश्वरम् ॥ १६ ॥ चक्रस्वरूपतोज्ञेयंप्रदद्याच्चसमीरणम् ॥ आनीयताम्र
भांडेचात्रिकालंप्रतिपूजयेत् ॥ १७ ॥ पायसान्नैरुत्पलैर्वापंकजैर्वापिहोमयेत् ॥ सकाञ्चनंवस्त्रयुग्मंप्रदद्याद्भूरिदक्षिणम् ॥ १८ ॥ श्रीसूर्य
स्यगणेशस्यविरिञ्चेश्चापिसत्तमाः ॥ वटवृक्षांतिकंगत्वास्थापयेद्वरुणंततः ॥ १९ ॥ रक्ताब्जेपूरयेत्सूर्यंपरिवारसमन्वितम् ॥ अष्टा
विंशतिभिर्दत्वादद्यात्प्राणमनंतरम् ॥ २० ॥ एकाहमथवाकाशेगुप्तंकृत्वादिनत्रयम् ॥ त्र्यहादेवपुनःपूजांपुनर्होमंसमाचरेत् ॥ २१ ॥
पुनश्चभोजयेद्विप्रान्दद्यात्काञ्चनदक्षिणाम् ॥ वाराहीत्रिपुरायाश्चनारिकेलैर्दोलकैरपि ॥ २२ ॥ स्नापयेद्वाविधानेनसिन्दूराद्यैःसमर्चयेत् ॥
दद्यात्समीरणंपश्चात्पुनःपूजांचहोमयेत् ॥ २३ ॥ पशुज्ञानंचकर्तव्यंषण्मासैःपञ्चमोदकैः ॥ कुमारींभोजयेद्रात्रौदद्यात्काञ्चनदक्षिणाम् ॥
॥ २४ ॥ प्रतिमांभुवनेशींचमहामायाम्बिकामपि ॥ कामाक्षांचततोदेवीइन्द्राक्षीचापराजिता ॥ २५ ॥ पूर्वेद्युरात्रिसमयेपिष्टकाष्टौनिवेदये
त् ॥ अष्टौनिर्माणयेत्पश्चाद्बलिंचाष्टौविधानवित् ॥ २६ ॥ परिवारगणैःसार्द्धंपूजयेत्प्रयतःसुधीः ॥ समीरणंततोदद्याच्छिवंसूर्यंयजे
त्पुनः ॥ २७ ॥ पायसान्नैश्चजुहुयात्रिदिनंलिपिपूजनम् ॥ कुमारीपूजनंकुर्यादग्निकार्यंदिनत्रयम् ॥ २८ ॥ पशुदानंचकर्तव्यंविभवे
सतिसत्तमाः ॥ रात्रौजागरणंकुर्यान्महोत्सवपुरःसरम् ॥२९॥ इतिश्रीभविष्येमहापुराणेमध्यमपर्वणितृतीयभागएकोनविंशोऽध्यायः ॥१९॥
॥ सूतउवाच ॥ ॥ दुर्निमित्तान्यथोवक्ष्येशृण्वंतुमुनिसत्तमाः ॥ यस्ययेग्रहदोषाःस्युस्तेषांशांतिंयथाक्रमात् ॥ १ ॥ दिव्यंतरिक्षेभौ
मंचेत्येवंत्रिपरिकीर्तितम् ॥ ग्रहर्क्षाद्यैःकृतंदिव्यमान्तरिक्षंनिबोधमे ॥ २ ॥ उल्काहितोदिशोदाहःपरिवेशस्तथैवच ॥ जलाशया
नांविकृत्यंभौमंतदपिकीर्तितम् ॥ ३ ॥ भौमंचाल्पफलंज्ञेयंदिव्यांतरिक्षमेवच ॥ सप्ताहमफलंद्याद्दैवंचापिचतत्क्षणात् ॥ ४ ॥ देवानांह
सनंचैवकल्कनंरुधिरस्रवः ॥ अकस्माद्व्यसनंतत्रयत्रनिर्घातानिर्दयः ॥ ५ ॥ सर्पाद्यारोहणंचैवदैवंतदपिकीर्तितम् ॥ ततोमेघात्समुत्पन्नाय
दिवृष्टिःशिलातले ॥ ६ ॥ सप्ताहाभ्यंतरेजीवमुत्पन्नंनिष्फलंभवेत् ॥ एकराशिस्थिताःपापाःशनिभौमादिवाकराः ॥ ७ ॥ पृथ्वीधूमाकु
लातत्ररुदंतिबहवोजनाः ॥ अभिचारगतेजीवेशनौचतत्रनागते ॥ ८ ॥ तत्रपश्यतिराजेन्द्रयोधरांधारयिष्यति ॥ सूर्यमपश्यतद्वंद्वंदिग्दा

हश्वतथैवच ॥ ९ ॥ दर्शनंधूमकेतोश्चनक्षत्रेधूमदर्शने ॥ भूकंपएवमासेचएकमासेतथादिने ॥ १० ॥ राज्ञोजन्मदिनेवाथशक्रचापंदिनां
तरे ॥ दर्शनंखरवातंचग्रहयुद्धस्यदर्शनम् ॥ ११ ॥ मासत्रयेतुग्रहणमुल्कापातप्रपातनम् ॥ आकाशेप्यथभूमौचतत्रमंडूकमेवच ॥ १२ ॥
हरिद्रावृष्टिपाषाणेसिंहबिल्वाकृतिर्यदि ॥ दर्शनेराष्ट्रदुर्भिक्षमकरंनृपतिक्षयः ॥ १३ ॥ चैत्रेकुंभेनदीवेगेदर्शनेविप्लवोभवेत् ॥ अर्कस्या
द्भुतमेतद्धिस्रुग्युक्तंश्रपयेच्चरुम् ॥ १४ ॥ आकृष्णेनेतिमंत्रेणअथवार्केणयत्नतः ॥ प्रासादतोरणंतत्रद्वारंप्राकारवेश्मच ॥ १५ ॥ धान्यसारं
गवांसारंकूपेकुंभप्रदर्शनम्॥आदित्यस्याद्भुतंविद्यात्कलशंजुहुयात्ततः ॥१६॥ सहस्रंजुहुयाद्वाथततःशान्तिर्भवेद्ध्रुवम् ॥ विकृताःपक्षिणश्चै
वपांडुकपोतकास्ततः ॥ १७ ॥ श्वेतोलूकोबृहच्चैवद्रोणकाकश्चकोकिलः ॥ क्रौंचश्चवर्द्धनीचैवानिपतंतिगृहेयदि ॥ १८ ॥ गृहेतस्य
महोत्पातोभविष्यतिनसंशयः ॥ स्थूलभङ्गप्रग्रहणंप्ररोहणमथापिवा ॥ १९ ॥ हाराःकटकटायंतेजातस्यदंतसंभवः ॥ हसतांदेवतानांच
गात्रेस्वेदश्चजायते ॥ २० ॥ सर्पमंडूकप्रसवःकुंभंनापिक्वचिद्भवेत् ॥ निमित्तान्येवमादीनिजायंतेयस्यवेश्मनि ॥ २१ ॥ षड्भिर्मासैश्चम्रि
यतेगृहिणीचशुभाचया ॥ अशनिःपततेयत्रगृहेवज्रंचपादपे ॥ २२ ॥ शुक्रावान्हिस्फुलिङ्गाश्चतस्याविद्धिमहद्भयम् ॥ खर्जूरउदरावर्तेनिको
चगरलेपिच ॥ २३ ॥ फलिवृक्षेतिन्दुकेचयत्रनिर्जायतेक्वचित् ॥ उद्यानेदेवगेहेचस्वगृहेचैत्यवृक्षके ॥ २४ ॥ कुर्यादादित्यवारेणअयुतं
तिलपायसम् ॥ ततःशान्तिर्भवेदाशुधेनुंदद्याच्चदक्षिणाम् ॥ २५ ॥ पायसंतिलमुद्रांचपुष्पंवातालवृंतकम् ॥ इक्षुमोदकपिण्याकाञ्जुहुया
द्रविमुद्दिशन्॥२६॥ सिंहासनंरथंछत्रंध्वजंचामरभूषितम् ॥ अकस्माद्दृश्यतेयत्रराज्ञोवान्यत्रकुत्रचित् ॥२७॥ नदयंतिचसत्यस्योज्ज्वलनंस्त्री
पुरुषयोः ॥ आगमस्यचदृष्टैवभंगःकटकटायनम् ॥ २८ ॥ उपरिष्टेभवेद्यस्यमहोत्पातोभवेदयम् ॥ चलत्वंचाधरस्यापितथाकटकटायनम्
॥ २९ ॥ रुदितंकोकिलस्यापिउलूकोप्यशुभंवदेत् ॥ राजामात्यविनाशायमहींचतत्सुतोऽपिवा ॥ ३० ॥ हस्तिनोमदयुक्ताश्चम्रियंतेनात्रसं
शयः ॥ ताडीपूगादयोयत्रयभौस्यातांप्रमादतः ॥३१॥ गेहीतत्रविनश्येतसदारःपुत्रसंयुतः ॥ बद्धपुष्पेयदापुष्पंपुष्पंवायादिदृश्यते ॥ ३२ ॥
अक्षतादर्शनात्तत्रसोमस्याद्भुतदर्शनम् ॥ दधिमधुघृतंचैवजुहुयादयुतंद्विजः ॥३३॥ पालाशंसोममुद्दिश्यसोमस्यचभवेद्दिने ॥ इमंदेवाइतिमं

त्रेणसोमायश्रपयेच्चरुम् ॥ ३४ ॥ उत्पतंतिगृहेयस्ययवामाषाश्चपुष्कलाः ॥ दधिक्षीराज्यपाकेषुरुधिरंदृश्यतेयदि ॥ ३५ ॥ अकस्मा
द्गृहदाहस्तुअनाग्निज्वलनंयथा ॥ मेघहीनाभवेद्विद्युद्वृषस्योद्गमनंतथा ॥ ३६ ॥ व्याधिहीनाविनश्यंतिनिखिलाःपशुमानुषाः ॥ एवंसर्वा
णिभूतानिभवन्त्यकारकेध्रुवम् ॥ ३७ ॥ राजामात्यविनाशायगेहेगेहीविनश्यति ॥ प्राणनाशायविप्रायाहुत्याचप्रभवंतिहि ॥ ३८ ॥ दृष्ट्वा
वाभद्रमत्युग्रंजुहुयादयुतंक्रमात्॥दधिमधुघृतैर्युक्तंखादिरोदुंबरेपिच ॥३९॥अग्निर्मूर्द्धेतिमंत्रेणश्रपितंलोहितंचरुम्॥त्रिविप्रान्भोजयेद्दद्याद्दक्षि
णांलोहितंततः ॥ ४० ॥ स्वर्णमंगारमुद्दिश्यततःशांतिःप्रजायते ॥ पुष्पंवापातयेद्यत्रफलंवापितथैवच॥४१॥दध्यन्नंचघृतैर्मिश्रंरौप्यंहिरण्य
मेवच॥हस्त्यश्वमहिषागावोदारापत्यधनानिच ॥४२॥ तुष्टेनांगारकेणैवसर्वमेतत्प्रदीयताम् ॥ अंगारकेणमंत्रेणखादिरंचाक्षतैर्युतम् ॥४३ ॥
दक्षिणांचयथाशक्तिदद्याद्विप्रायवापुनः ॥ लोहितंचबलिंदद्यात्ततःसंपद्यतेशुभम् ॥ ४४ ॥ धावंतिचोर्ध्वपुच्छाश्चगृहेगावःस्वयंयदि ॥
आरोहंतिगृहंविप्राःसारमेयाश्चसूकराः ॥ ४५ ॥ गृहेयस्यभवंत्येतेतस्यभार्याविनश्यति ॥ सर्वेषांवाभवेन्मृत्युर्वंध्यागावःप्रजायते ॥ ४६ ॥
मिथ्यावादेनगेहीचराज्ञावादश्चतिष्ठति ॥ अपवादेगृहेगावोनर्दयंतिहसंतिच ॥ ४७ ॥ धरणीहननंयत्रद्वयोरास्कंदनंतथा ॥ निमित्तान्येव
मादीनिगोश्वजातानिसत्तमाः ॥ ४८ ॥ यस्यगेहेभवंत्येतेनाशस्तस्यभवेद्ध्रुवम् ॥ मंडूकसर्पकूष्मांडाःप्रवसंतियथास्त्रियः ॥ ४९ ॥ अक
स्माद्यदिचैतानिबुधस्योत्पातलक्षणम् ॥ शांतितत्रप्रवक्ष्यामियथासंपद्यतेध्रुवम् ॥ ५० ॥ दधिमधुघृताक्तंचअपामार्गंतथापुनः ॥ अयुतं
बुधवारेचजुहुयाच्छ्रद्धयापुनः ॥ ५१ ॥ अंबकेतिचमंत्रेणबुधंचश्रपयेच्चरुम् ॥ सुवर्णंबुधमुद्दिश्यगांचदद्यात्पयस्विनीम् ॥ ५२ ॥ सुवर्णं
पुष्पवृष्टिंचसुफलंचाक्षतंतथा ॥ गृहेप्रांगणकेयस्यनिपतंतिकदाचन ॥ ५३ ॥ अलंकारजलंवापिसर्वाभरणभूषितम् ॥ गृहमध्येतुयःप
श्येत्क्षीणामंतर्हितांस्त्रियम् ॥ ५४ ॥ अकस्मान्मालतीपुष्पंजातंस्यात्तस्यवागृहम् ॥ सोमायनचसंतुष्टःसर्वमेतत्प्रदृश्यते ॥५५॥ धनंधान्यं
तथापुत्रमैश्वर्यंचवरस्त्रियः ॥ सभृत्याश्चमहिष्यश्चभविष्यंतिनसंशयः ॥ ५६ ॥ श्रीश्चतेतिचमन्त्रेणअपामार्गंतथाबुधः ॥ सहस्रंबुधवारेच
जुहुयाद्घृतसंयुतम् ॥ ५७ ॥ पयस्विनींतथागांचवासोयुगसमन्वितम् ॥ द्विजायश्रद्धयादद्यात्ततःसंपद्यतेशुभम् ॥ ५८ ॥ रक्तस्रावोभवे

यत्रतत्रऋत्विक्प्रसूयते ॥ सिंहव्याघ्रगवादीनांधनहानिविपत्करः ॥ ५९ ॥ एकोवृषस्त्रयोगावःसप्ताष्टनवदंतिनः ॥ संवत्सरेणतस्यैका
प्रसूतिर्विहितापुनः ॥ ६० ॥ पुनःपुनाव्रतंचाशुअकालेमैथुनंतथा ॥ गावोयत्रप्रसूयंतेयमौदोषकराविमौ ॥ ६१ ॥ भुञ्जीकृतानिधान्या
निव्रीहयोयवतंडुलाः ॥ ग्राविमार्जारमंडूकास्थूणाभंगेचप्राङ्गणे ॥ ६२ ॥ विकिरंतिनखैर्भूमिंप्ररोहंतिग्रहंतथा ॥ गृहेयस्यप्रजायंतेतस्य
मृत्युर्नसंशयः ॥ ६३ ॥ षण्मासाभ्यन्तरेयत्रश्मशानंयास्यतिध्रुवम् ॥ कलहंज्ञातिवैरंचव्याधिपीडाभविष्यति ॥ ६४ ॥ विप्रवृद्धिर्मित्र
नागइष्टेष्वनिष्टदर्शनम् ॥ भार्यापुत्रविनाशश्चभवेदेषुविनिश्चितम् ॥ ६५ ॥ क्रियावंतंयदाकुर्वन्कुर्वीतगृध्रबिल्वके ॥ यदाराज्ञांविभ्रमंचतथा
चैवगृहंतथा ॥ ६६ ॥ अमात्यवर्गाश्चपुरेराज्ञांराज्यपराङ्मुखाः ॥ बृहस्पतिंसमुद्दिश्यगांचदद्यात्पयस्विनीम् ॥ ६७ ॥ वारिमंडेचकूपेच
वाप्यांचमधुकांजिके ॥ क्षीरंदधिघृतंचैवजातंयद्भविष्यति ॥ ६८ ॥ अकस्मात्तत्रवृक्षंचफलेनसहसंयुतम् ॥ गृहमध्येप्रजायेतततःसंप
द्यतेशुभम् ॥ ६९ ॥ बृहस्पतेस्तुतुष्ट्यस्यसर्वमेतन्निदर्शनम् ॥ गौरोबृहस्पतेश्चैवप्रकुर्यात्प्रायदक्षिणाम् ॥ ७० ॥ अशुभंचशुभेनैवशांतिं
होमंचकारयेत् ॥ तत्रैवराक्षसंयत्रघटकंपरिशोषणम् ॥ ७१ ॥ केशरीशर्करातैलराजतंतांडवंस्थितम् ॥ माषभक्तंतथाधान्यंसुवर्णरजता
निच ॥ ७२ ॥ ताम्रंकांस्यंतथालोहंशीसकंपित्तलंतथा ॥ स्थापितानीवदृश्यंतेगृहेचैतानियस्यवै ॥ ७३ ॥ धननाशोभवेत्तस्यस्वर्गभंग
मथापिवा ॥ व्याधिपीडांतथाघोरांराजोपद्रवबंधनम् ॥ ७४ ॥ गजाश्वपशुभृत्यानांविनाशोजायतेध्रुवम् ॥ यस्यैतानिप्रदृश्यंतेपर्वतःक
थितानिच ॥ ७५ ॥ संव्यत्यस्यप्रजायेतानिश्चलासुखदासदा ॥ दंतोत्तरेषुदंताश्चपंक्तिमाक्रम्यसंस्थिताः ॥ ७६ ॥ तेपिदोषकराःसर्वेशला
काकृतिनस्तथा ॥ उपदंताश्चसर्वेतेनतेदोषकराःक्वचित् ॥ ७७ ॥ भांडकुंभेयदाचैवश्रूयतेघनगर्जितम् ॥ कंचुकानांगृहेचैवप्राकारःश्रूयते
यदि ॥ ७८ ॥ मूषिकानांमुखेचैवज्वलंतीयस्यपश्यति ॥ गेहेतत्रैवनश्येतशुकस्याद्भुतदर्शनम् ॥ ७९ ॥ शांतितत्रप्रवक्ष्यामियथासंपद्यते
शुभम् ॥ शमीपत्रंनिर्मितंचयवैर्युक्तंगृहिण्यपि ॥ ८० ॥ दधिमधुघृताक्तंचजुहुयाद्भार्गवेदिने ॥ शुक्लवासोयुगंचैवगांचशुक्लांपयस्विनीम् ॥
॥ ८१ ॥ सुवर्णंश्रद्धयाचैवदद्याद्विप्रायदक्षिणाम् ॥ देवागारेयदाभूमिर्लोहितातत्रदृश्यते ॥ ८२ ॥ पुष्पिताःदृश्यतेलोकेतत्रासिद्धिर्महद्भ

यम् ॥ राजावाराजपुत्रोवाराज्यंवापिविनश्यति ॥ ८३ ॥ मंत्रिणोमंत्रिपुत्राश्चम्रियंतेनात्रसंशयः ॥ यत्रवादृश्यतेलोकेगृहेयस्यसुपूजिताः ॥
॥८४॥ पुष्पिताश्चगृहस्तंभाःशरीरंचघटस्तथा ॥ हस्त्यश्वमहिषाश्चैवअजागावस्तथैवच ॥८५॥ नित्यंस्वामिवधार्थायपुष्पितांप्रवहंतिच॥
गृहेहंसोगृहेसम्यङ्मण्डूकाजलचारिणः ॥ ८६ ॥ द्वारेप्रविश्यसर्पश्चप्रतिमायाःप्रकल्पनम् ॥ अकस्माद्घटशब्दोपियत्रकुत्रापिजायते॥८७॥
स्रवंतिप्रमदायत्रभिन्नास्तेस्युर्नवांगिकाः ॥ गृहीतत्रविनश्येतसपुत्रपशुबांधवः ॥ ८८ ॥ धनुःखड्गधरारात्रौमध्याह्नेचान्द्रकेतथा ॥ उदितंदृ
श्यतेव्योम्निज्वलितःपावकस्तथा ॥ ८९ ॥ मनुष्याणांगणांचैवमरणंराष्ट्रविभ्रमम् ॥ रससिद्धानिवस्तूनिसुराद्याश्चापिवापुनः ॥ ९०॥
हस्तिनोमदयुक्ताश्चअश्वाधीरितिहिंसकाः॥विनश्यंतिसदाचैतेशनेरद्भुतदर्शनम्॥९१॥नगरेवाचग्रामेवातत्रकैवार्थवैरिणा॥ दिवावायदिवारात्रौ
शनेरद्भुतदर्शनम् ॥ ९२ ॥ मृगव्याघ्रादिरक्षांश्चतथागोमहिषानपि ॥ उत्पतंतियदाचैतेशनेरद्भुतमादिशेत् ॥ ९३ ॥ निधिमंत्रंप्रवक्ष्यामिये
नसंपद्यतेशुभम् ॥ जुहुयादयुतंसम्यक्सस्यांश्चसमिधंद्विजाः ॥ ९४ ॥ शन्नोदेवीतिमंत्रेणशुभार्थंशनिवासरे ॥ चरुंचश्रपयेत्तत्रसमुद्दिश्यशनै
श्वरम्॥९५॥गांचनीलांततोदद्याज्जीवद्वत्सांपयस्विनीम् ॥ वासोयुगंचविप्रायसुवर्णंरजतंतथा ॥९६॥ दत्वातुश्रद्धयासम्यग्दक्षिणांशिरसंस्थि
तां ॥ विधिंहोमावसानेतुततःसंपद्यतेशुभम्॥९७॥ यदाद्वारेगोधिकाचशंखिनीप्रविशेद्गृहम् ॥ तथाशुभंविजानीयाद्राजपीडाधनक्षयः॥९८॥
अयुतंजुहुयात्सम्यक्ततःसंपद्यतेशुभम् ॥ विनागर्जितमेघेनशिलावृष्टिःप्रजायते ॥ ९९ ॥ बहुमिश्राणिपांडूनिपतंतितत्रदृश्यते ॥ तत्रसं
दृश्यतेचाभ्रंवृक्षावातविवर्जिताः ॥ १०० ॥ शक्रध्वजंतथाचापंपतनंसुमनस्यच ॥ दिवाशिवापुरोरौतिउलूकोवानिशाचरः ॥ १ ॥ निशि
निपत्यकाकुत्स्थप्रदेशेरौतिवावृषः ॥ अधर्मप्रबलादेशाराजाधर्मपराङ्मुखः ॥ २ ॥ अन्योन्यंचजिघांसंतिगोब्राह्मणमथापिवा ॥ गृहेगृहीविन
श्येतसपुत्रपशुबांधवाः ॥३॥ उत्सानंद्वारदेशेस्यमरणंराष्ट्रविभ्रमम् ॥ राज्यनाशोभवेद्राज्ञोमरणंवाहनस्यच॥४ ॥ विपरीतानिदेशानिक्रमतः
संभवंतिहि ॥ राहुणाग्रस्तसूर्योऽपिनिशिचाथयदादिवा ॥ ५ ॥ तारकागणवच्चैवराज्ञांनिधनकारकम् ॥ सहामात्याविनश्यंतिस्वर्गेयेचसुदुर्ज
याः ॥ ६ ॥ परचक्रेणपात्यंतेराजानोनात्रसंशयः ॥ छायाध्वजंचगगनेदृश्यतेचकदाचन ॥ ७ ॥ दर्शनादेवराज्ञस्तुविनाशःसहराष्ट्रकैः ॥

ज्वलितोदृश्यतेयत्रपावकस्यसकृज्ज्वलम् ॥ ८ ॥ वज्रेशिरसिगात्रेवाजीवितंतस्यदुर्लभम् ॥ द्वारोपांतेतथास्तंभेआग्नेवाधूममेववा ॥९॥ पुरुष
स्यतुतत्रैवगगनेयस्यपश्याति ॥ गगनेऽशनिघातेनशक्रहस्तेनवापुनः ॥ ११० ॥ अब्दस्याभ्यंतरेतस्यमरणंनात्रसंशयः ॥ शिखायावलम
ध्येतुसधूमःपावकोद्गमः ॥ ११ ॥ दृश्यतेनगरेमध्येतत्रैवाद्भुतदर्शनम् ॥ शवस्यनीयमानस्यउत्थानंवाप्रमादतः ॥ १२ ॥ स्थापितस्यच
लिंगस्यअन्यत्रागमनंतथा ॥ निर्घातश्चापिभूकंपोनिवातोल्काप्रदर्शनम् ॥१३॥अकालेपुष्पितावृक्षाःफलंचाकालसंभवम्॥अनिमित्तानिसर्वा
णिदूरमागत्यानिर्भरम् ॥ १४ ॥ अनिमित्तस्यनाशोयःसैंहिकेयकृतस्यच ॥ नराणामासनंचैवगवांवामानुषींगिरम् ॥ १५ ॥ पक्षमात्रांतरेत
स्यपुत्रस्यमरणंदिशेत् ॥ अयुतंजुहुयात्तत्रराहुमुद्दिश्ययत्नतः ॥ १६ ॥ शांतिमत्रप्रवक्ष्यामिययासंपद्यतेशुभम् ॥ दधिमधुघृताक्तंचकु
र्याद्दूर्वाक्षतंतथा ॥ १७ ॥ कयानइतिमन्त्रेणजुहुयाद्रविवासरे ॥ चरुंचश्रपयेत्तत्रराहुमुद्दिश्यसंश्रयात् ॥ १८ ॥ होमंकुर्यात्ततोगांचकपिलां
चपयस्विनीम् ॥ अब्रवीत्तिलशङ्खंवावासोयुगमथापिवा ॥ १९ ॥ श्रद्धयाराहुमुद्दिश्यदद्याद्विप्रायदक्षिणाम् ॥ दुरितस्यविनाशायतस्यसंप
द्यतेशुभम्॥१२०॥दधिमधुघृतक्षीरेणवारुणेनचवारुणे ॥ दृश्यतेचाद्भुतंतेषुविशिष्टैर्दोषदर्शिभिः॥२१॥गृहीतत्रविनश्येतभवेत्सपशुबांधवः॥
दृश्यंतेतत्रक्रौंचाश्चजंबुकागृध्रवायसाः ॥ २२ ॥ दारुणंभीषणंघोरंनृत्यंतिचहसंतिच ॥ मैथुनानिचसर्वेषांयस्यवासेभवेद्यदि ॥ २३ ॥ मृ
त्युस्तस्यभवेदाशुईश्वरस्यचशासनात् ॥ धूमकेतुर्यदाव्योम्निज्वलत्पावकसन्निभः ॥ २४ ॥ स्थानात्स्थानांतरंयातिभूमौवापततेभृशम् ॥
सबंधुरस्यतेराजापरचक्रैःसपीडितः ॥ २५ ॥ दुर्भिक्षंमरणंचैवाचिरंराष्ट्रेभविष्यति ॥ गावोमर्कटकुंभावाविशंतेगृहवेश्मानि ॥ २६ ॥ गावश्च
तस्यनश्यंतिदारापत्यधनानिच ॥ अन्यस्यदोषोभवतिगृहेयान्तिप्रमादतः ॥ २७ ॥ अब्दांतरेभवेन्मृत्युर्विरजाहिभविष्यति ॥ शांतिमत्र
प्रवक्ष्यामिययासंपद्यतेशुभम् ॥२८॥ सप्ताश्वरथसंयुक्तंहेमच्छत्रविभूषितम् ॥ विप्रायमंडपेदद्याद्बिल्वपत्रमथापिवा॥२९॥ ऐंद्रेणैवतुमंत्रेणहो
मःकार्योद्विजातिभिः॥अकस्माच्छालतालाक्षखदिरोत्पलसेरकाः ॥१३०॥ गृहमध्येप्रजायंतेकेतारद्भुतदर्शनम् ॥ हंसंवाद्रोणकाकंवामयूरंवा
गृहोपरि॥३१॥गृहेतस्यमहोत्पातःकेतारद्भुतदर्शनम्॥शांतिमत्रप्रवक्ष्यामिययासंपद्यतेशुभम्॥३२॥दधिमधुघृताक्तंचजुहुयादयुतंकुशम् ॥

त्र्यंबकंचेतिमंत्रेणकेतवेभिवपेच्चरुम् ॥३३॥ नीलांधेनुंसवत्सांचबहुक्षीरप्रदांतथा ॥ मृत्तिकांहेमवासश्चनानालंकारमेवच ॥ दक्षिणांचप्रवक्ष्या
मियस्यनास्तिचप्रक्रिया॥३४॥देवमुद्दिश्यदानेनहोमेनचरुणातथा॥दक्षिणस्यांदिशिच्छायांयःपश्येदात्मनःस्वयम्॥३५॥ स्वच्छायांपादुक
स्यैवपश्येत्पश्चाशिरोद्वयम् ॥ एवमेवैवयच्छिन्नांशिष्यतिचततोहितम् ॥ शीघ्रनाशमवाप्नोतिसप्ताहेनात्रसंशयः ॥३६॥ उच्चावचान्प्रवक्ष्या
मियथाशास्त्रेणचोदितः ॥काकमार्जारशूकानांकपोतानांविशेषतः ॥ मैथुनंदृश्यतेयत्रतच्चराहोर्महाद्भुतम् ॥ ३७ ॥ शनिमुद्दिश्यजुहुया
दयुतंशनिवासरे॥पूजयेदर्कपुष्पेणशतेनजुहुयाच्चरुम् ॥ ३८ ॥ कृत्वातत्रैवपश्येतशनेरद्भुतदर्शनम् ॥ अष्टाविंशंचरुंकृत्वाततःशांतिर्भवे
द्ध्रुवम् ॥३९॥ भुजःपादस्तथाचक्षुःस्पंदनेमरणंदिशेत् ॥ तत्तुसोमाद्भुतंविंद्याद्वामदक्षिणतःक्रमात्॥१४०॥ कृष्णपक्षेभवेद्वामोविपरीतेद्भुतांदि
शेत्॥अनिष्टसूचकंयस्मात्तस्माच्छांतिंप्रकल्पयेत्॥ ४१॥ शतार्द्धंरविमुद्दिश्यशान्त्यर्थेहोममाचरेत् ॥ चरुपाकविधानेनयवैस्तिलसर्षपैः
॥ ४२ ॥ पुस्तकेयज्ञसूत्रंचअसत्पात्रेवरौतुवा ॥ शक्रवस्त्रप्रदग्धेचसूर्यस्याद्भुतदर्शनम् ॥ ४३ ॥ हयमारंत्रिमध्वक्तंजुहुयादिष्टसिद्धये ॥ देव
पुस्तकरत्नानिमणिकांचनमेवच ॥ ४४ ॥ लोहितस्याद्भुतंविद्यात्सहस्रंचविशोधनम् ॥ देवागारेतथागोधाशंखिनीप्रविशेत्क्वचित् ॥४५॥
द्रोणकाकोचकश्चैवउलूकद्वयमेवच ॥ रक्तकंठःकपोतश्चव्याघ्रएणश्चवादिशेत् ॥ ४६ ॥ यस्यदेवगृहंपश्येत्तस्यतस्यायुतंहुनेत् ॥ नचा
त्रगृहवैकृत्यंहसनंयदिदृश्यते ॥ ४७ ॥ संपत्तिसूचकंगेहेमरणंदुःखदर्शनम् ॥ क्रंदनेहतराज्येनगजाश्ववाहनेक्वचित् ॥ ४८ ॥ सूर्यमु
द्दिश्यजुहुयादयुतंसर्वसिद्धये ॥ प्रमादात्कंपनेहानिःस्वेदेजातेविपद्भवेत् ॥ ४९ ॥ क्षीरस्रावेचरुधिरेतत्रराज्येमहद्भयम् ॥ गोच्छागंवाथगो
मायुर्गृहोपरिप्रनृत्यति ॥ १५० ॥ यदारौतिदिवापेन्द्रात्तदानाशोभवेद्ध्रुवम् ॥ श्वजंबूकमथव्याघ्रोयथाशक्तिचधावति ॥ १५१ ॥ ईशेनम
हिषस्तद्वत्तदादेशेचविप्लवः ॥ राहोरद्भुतमुद्दिश्यसहस्रंजुहुयाच्चरुम् ॥ ५२ ॥ वृक्षाद्भुतंयदापश्येत्तत्रतस्यांपरित्यजेत् ॥ यद्गृहेषुहुतं
यांतिदेशविप्लवमादिशेत् ॥ ५३ ॥ देशेवानगरेग्रामेआरण्यपशुबन्धनम् ॥ सर्पंवाविपरीतंचमांसपिंडमथापिवा ॥ ५४ ॥ तद्गृहेम
रणंचैवदेशविप्लवमादिशेत् ॥ दिवाद्भुतेऽयुतंरात्रौद्विगुणंचभवेद्ध्रुवम् ॥ ५५ ॥ द्विगुणंचापिसंध्यायामर्धरात्रेचतुर्गुणम् ॥ अकालेपुत्र

मरणमकालेगृहिणीमृतिः ॥ ५६ ॥ सौराद्भुतंविजानीयादशुभेवाविशोधनम् ॥ एकैकस्यायुतंयत्रकुर्यात्तत्रैवहोमयेत् ॥ ५७ ॥
सांगोपाङ्गेनसहितमष्टावष्टौहुतंचवा ॥ अधिप्रत्यधिसहितंगृहपक्षेपिसत्तमाः ॥ ५८ ॥ तन्मानेनहुतेविप्राःकुर्यात्तत्रैवभूषणम् ॥ एकैकस्या
हुतंविप्राअष्टावष्टौहुतंचव । ॥ ५९ ॥ अधिप्रत्यधिदेवानांयाश्चान्याश्चाङ्गदेवताः ॥ मानांतंचददेत्पूर्णांदत्वापूर्णांनहोमयेत् ॥ १६० ॥
वक्ष्येग्रहमखेमानंयेनमानेनसिद्ध्यति ॥ अमानकरणेदोषस्तस्मान्माननहापयेत् ॥ ६१ ॥ पङ्क्तिचत्वारिंशदाद्येचतुर्धाविभजेन्नरः ॥
अनिष्टायततोदद्याच्चरुंहोमंविभागशः ॥६२॥ अधिप्रत्यधिदेवानामष्टावष्टौह्युदाहृतम्॥ त्र्यंबकादिषुमंत्रेषुहोमेत्रयमुदाहृतम् ॥६३॥ धनंजये
तथादद्याच्चरुंहोमंविभागतः ॥ आदित्यायाष्टावष्टावधिकंकल्पयेत्सुधीः ॥ ६४ ॥ शतहोमेतुसर्वत्रदशांगंकल्पयेन्नरः ॥ अनिष्टाययुगां
गंतुग्रहेभ्योह्यंगनायच ॥ ६५ ॥ अधिप्रत्यधिदेवानांतथैवांगंप्रकल्पयेत् ॥ द्वौतुदद्यात्र्यंबकायतथाधनंजयायच ॥६६ ॥ तत्रहोमोनायकाय
सर्वत्रैवविचक्षणः ॥ सहस्रेचैवविंशांगेअनिष्टायदशांशकम् ॥ ६७ ॥ पंचांशेनग्रहाणांचपंचांशेनयवानपि ॥ तत्रानिष्टेपंचशतंतस्यार्धं
ग्रहवाग्यतः ॥ ६८ ॥ एकत्रिंशद्भवेन्मानम् ३१ अन्येषांतुचतुर्दश १४ ॥ ग्रहाधिकंहोमयुगंतत्रभागेप्रकल्पयेत् ॥ ६९ ॥ अधा
तयेचातिथ्यंगंपंचांगंयस्यचाद्भुतम् ॥ ग्रहेभ्यश्चैवपंचांगंतत्रवांगपरानपि ॥ १७० ॥ एकैकांगेभवेन्मानंषट्शतंषष्टिरेवच ॥ अधिकंच
भवेत्षष्टिर्दशमंभागशेषतः ६६१० ॥ ७१ ॥ अनिष्टांशेत्रिसहस्रंत्रिशतंत्रिंशकंतथा ॥ चतुःशतंग्रहाणांचतथासप्तशताधिकम् ॥ ७२ ॥
उपग्रहेभ्योदद्याच्चपंचाशीत्यधिकंशतम् १८५ ॥ तिथ्यंगभागःशेषेणग्रहेसप्तशताधिकम् ॥ ७३ ॥ एकैकंतुग्रहस्यैवमादित्याययुगंभ
वेत् ॥ ग्रहांगेयत्स्थितंभागंयुगलंभागशेषतः ॥ ७४ ॥ त्र्यंबकायचतद्द्यात्तथाधनंजयायच ॥ शांतिकेपौष्टिकाम्येचयदिच्छेत्सुखमा
त्मनः ॥७५॥ ग्रहाणांचायुतंहोमंत्र्यहसाध्येनहोमयेत् ॥ त्र्यहसाध्येविधानंयत्पुरैवोदीरितंद्विजाः॥७६॥इदानींप्रक्रमेणैवयोभागःसनिगद्यते॥
पूर्वस्मिन्दिवसेनिष्टेसहस्रंत्रिशतोत्तरम् १३००॥इतरेषांग्रहाणांचप्रत्येकंतुशतंशतम् १०० ॥७७ ॥ अधिप्रत्यधिदेवानांपंचाशद्धोमउच्यते ॥
प्रथमेहिप्रदद्याच्चमिलित्वात्रिसहस्रकम् ३००० ॥ द्वितीयदिवसेनिष्टेद्विसहस्रमुदाहृतम् २००० ॥७८॥ प्रतिग्रहेभ्यस्त्रिशतंदद्यादष्टशताधि

मुत्तमम् ॥ निरायुधान्त्रिपून्स्वान्स्वांश्चकुःशक्तिप्रपूजकाः ॥ ११० ॥ एतस्मिन्नंतरेदेवःकालदर्शीसमागतः ॥ नभोमार्गेणतान्श्वांस्तेभ्यआ
गत्यसंददौ ॥ १११ ॥ बिन्दुलंचैवकृष्णांशोदेवस्तत्रमनोरथम् ॥ रूपणश्चकरालाश्वंचाह्लादस्तुपपीहकम् ॥ ११२ ॥ हरिणींबलखानिश्च
तद्भ्राताहरिनागरम् ॥ सिंहिनींतालनःशूरःसमारुह्यरणोद्यताः ॥ ११३ ॥ रात्रौतन्नृपतेःसेनांहत्वाबद्ध्वाचतत्पतिम् ॥ दोलांगेहाच्चनिष्का
श्यसप्तभ्रमरकारिताम् ॥ ११४ ॥ स्वसैन्यंतेसमाजग्मुर्निर्भयाबलवत्तराः ॥ तान्सर्वान्नेत्रसिंहादीन्दृष्ट्वात्राहीतिजल्पितान् ॥ ११५ ॥
निगडैरेकतःकृत्वापंचभूपान्हिवंचकान् ॥ कारागारेमहाघोरेतत्रतान्संन्यवासयन् ॥ ११६ ॥ नेत्रसिंहोवरोभ्रातासुन्दरारण्यभूमिपः ॥ हेतुंज्ञा
त्वाययौशीघ्रंमायावीलक्षसैन्यकः ॥ ११७ ॥ तत्रागत्यहरानन्दोनाम्नातानयुधद्बली ॥ नेत्रसिंहस्यसैन्यंचचतुर्लक्षंतदागमत् ॥ ११८ ॥
पंचलक्षैरणंघोरंसप्तलक्षयुतंह्यभूत् ॥ पंचाहोरात्रमात्रंचतयोश्चासीत्ससंकुलः ॥ ११९ ॥ अर्द्धसैन्यारिपोस्तत्रहतशेषाश्चदुद्रुवुः ॥ विस्मि
तःसहरानन्दोरुद्रमायाविशारदः ॥ १२० ॥ बलाधिक्ययुताञ्ज्ञात्वाशिवध्यानपरोऽभवत् ॥ रचित्वाशाबरींमायांनानारूपविधारिणीम् ॥
॥१२१॥ पाषाणभूतान्सकलान्कृत्वाभूपान्समाययौ ॥ ससुतंभ्रातरंज्येष्ठंनृपंपूर्णबलंतथा ॥१२२॥ मोचयित्वाययौगेहंकृतकृत्योमहाबली॥
आह्लादंनिगडैर्बद्ध्वामाययाजडतांगतम् ॥ १२३ ॥ नेत्रसिंहःसबलवान्ययौस्वंदुर्गमुद्यतः ॥ तंप्रशंस्यानुजंवीरोविप्रेभ्यश्चददौधनम्॥१२४॥
तदास्वर्णवतीदीनाबद्धंज्ञात्वापतिंनिजम् ॥ कृष्णांशाद्यान्मोहितांश्चशंभुमायाजहत्वगान् ॥ १२५ ॥ रुरोदोच्चैस्तदादेवींध्यायतीकामरूपि
णीम् ॥ तदातुष्टाजगद्धात्रीमूर्च्छितांस्तानबोधयत् ॥१२६॥ तेसर्वेचेतनांप्राप्ताःप्राहुःस्वर्णवतींमुदा ॥ क्वास्थितोबंधुराह्लादोदेवित्वंकारणं
वद ॥ १२७॥ यथागतःस्वयंस्वामीकथयामाससातथा ॥ अहंशुकीभवाम्यद्यभवान्बिंदुलसंस्थितः॥१२८॥ इत्युक्त्वासाशुकीभूत्वाकृष्णां
शेनसमन्विता ॥ यत्रास्तेतत्पतिर्बद्धस्तत्रसाकामिनीययौ ॥ १२९ ॥ कृष्णांशोऽपिहयारूढोनभोमार्गेणचाप्तवान् ॥ आभीरींमूर्तिमासाद्य
स्वामिनंप्रतिसाययौ ॥ १३० ॥ आश्वास्यतंयथायोग्यंकृष्णांशंप्रत्यवर्णयत् ॥ कृष्णांशस्तत्रबलवान्हत्वादुर्गनिवासिनः ॥ १३१ ॥
रक्षकाञ्छतसाहस्रान्हत्वाभ्रातरमाययौ ॥ पौर्णिमांमधुयुक्तांचज्ञात्वासर्वेत्वरान्विताः ॥ १३२ ॥ अयोध्यांशीघ्रमागम्यस्नात्वाचसरयूंन

दीम् ॥ होलिकादाहसमयेशंभ्रिवेण्यांसमागताः ॥ १३३ ॥ स्नानध्यानादिकानिष्ठाःकृत्वागेहमुपाययुः ॥ सागरस्यतटंप्राप्यकृत्वातेच
महोत्सवम् ॥१३४॥ चैत्रस्यकृष्णपंचम्यांस्वगेहंपुनरराययुः ॥ दूताउष्ट्रसमारूढास्तत्क्षेमकरणोत्सुकाः ॥१३५॥ फाल्गुनेशुक्लपंचम्यांस्व
गेहंपुनरराययुः ॥ मलनोभूपतिश्चैवगेहेगेहेमहोत्सवम् ॥ कारयित्वाविधानेनब्राह्मणेभ्योददौधनम् ॥१३६॥इति श्रीभविष्येमहापुराणेप्रतिसर्ग
पर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेत्रयोदशोऽध्यायः ॥ १३ ॥ छ ॥ सूतउवाच ॥ चतुर्दशाब्देकृष्णांशेयथाजा
तंतथाशृणु ॥ जयन्तःशक्रपुत्रश्चजानकीशापमोहितः ॥ १ ॥ कलौजन्मत्वमापन्नःस्वर्णवत्युदरेऽवसत् ॥ चैत्रशुक्लनवम्यांचमध्याह्नेगुरु
वासरे ॥ २ ॥ सजातश्चंद्रवदनोराजलक्षणलक्षितः ॥ जातेतस्मिन्सुतश्रेष्ठेदेवाःसर्षिगणास्तदा ॥ ३ ॥ इंदुलोयंमहींजातोजयंतोवासवा
त्मजः ॥ इत्यूचुर्वचनंतस्मादिंदुलोनामचाभवत् ॥ ४ ॥ आह्लादोजातकर्मादीन्कारयित्वाशिशोर्मुदा ॥ ब्राह्मणेभ्योददौस्वर्णधेनुवृंदं
हयान्गजान् ॥ ५ ॥ इन्दुलेतनयेजातेद्विमासान्तेमहीतले ॥ योगसिंहस्तदागत्यस्वर्णवत्यैददौधनम् ॥ ६ ॥ नेत्रसिंहसुतंदृष्ट्वामलनास्नेह
संयुता॥पप्रच्छकुशलप्रश्नंभोजयित्वाविधानतः ॥७॥ ज्ञातवृन्दाश्चनर्तक्योनानारागेणसंयुताः ॥ तत्रागत्यैवननृतुर्यत्रभूपसुतःस्थितः ॥८॥
सप्तरात्रमुषित्वासयोगसिंहोययौगृहम् ॥ षण्मासेचसुतेजातेदेवेन्द्रःस्नेहकातरः ॥ ९ ॥ पुत्रस्नेहेनतंपुत्रंसजहारस्वमायया ॥ संहृत्य
बालकंश्रेष्ठमिंद्राण्यैचसमर्पयत् ॥ १० ॥ स्नेहस्नुताशचीदेवीस्वस्तनौतमपाययत् ॥ देव्यादुग्धंसवैपीत्वाषोडशाब्दसमोभवत् ॥ ११ ॥
इंदुंपीयूषभवनंगृह्णातिवपुषास्वयम् ॥ अतःसइंदुलोनामजयंतश्चप्रकीर्तितः ॥ १२ ॥ सबालःस्वपितुर्विद्यांपठित्वाश्रेष्ठतामगात् ॥
विनष्टेबालकेतस्मिन्देवीस्वर्णवतीतदा ॥ १३ ॥ रुरोदोच्चैस्तदादीनाहापुत्रक्कगतोऽसिभोः ॥ ज्ञात्वाह्लादोतथाभूतोदशग्रामेतथाविधे ॥१४॥
रौद्रःकोलाहलोजातोरुदतांचनृणांमुने ॥ आह्लादःस्वकुलैःसार्द्धंनिराहारोयतेंद्रियः ॥ १५ ॥ शारदांशरणंप्राप्तस्त्रिरात्रंतत्रचावसत् ॥ त
दातुष्टास्वयंदेवीवाग्रुवाचाशरीरिणी ॥१६॥हेपुत्रस्वकुलैःसार्द्धमाशुचस्त्वंसुतंप्रति ॥ इन्द्रपुत्रोजयन्तश्चस्वर्गलोकमुपागतः ॥ १७ ॥ दिव्य
विद्यांपठित्वासत्रिवर्षान्तेगमिष्यति ॥ यावत्त्वंभूतलेऽवात्सीस्तावत्सभूतलेवसेत् ॥ १८ ॥ तत्पश्चात्स्वर्गतिंप्राप्यजयन्तोहिभविष्यति॥

इत्युक्तेवचनेदेव्यानिःशोकास्तेतदाभवन् ॥ दशग्रामंपुरंप्राप्यसमूषुर्ज्ञानतत्पराः ॥ १९ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणि
चतुर्युगखंडपरपर्यायेकलियुगीयेतिहाससमुच्चयेचतुर्दशोऽध्यायः ॥ १४ ॥ छ ॥ सूतउवाच ॥ इन्दुलेस्वर्गसंप्राप्तेतेवीराःशो
ककातराः ॥ शारदांपूजयामासुःसर्वलोकनिवासिनीम् ॥ १ ॥ जप्त्वासप्तशतीस्तोत्रंत्रिसंध्यप्रेमभक्तितः ॥ ध्यानेनानन्दमापन्नास्तदा
सप्तशतेहानि ॥ २ ॥ सामन्तद्विजपुत्रश्चचामुंडोनामविश्रुतः ॥ सोऽष्टवर्षवयाभूत्वापूजयामासचंडिकाम् ॥ ३ ॥ द्वादशाब्देततोजातेत्रिच
रित्रस्यपाठतः॥परीक्षार्थंतुभक्तानांसाक्षान्मूर्तित्वमागता ॥४॥ कुंडिकेयंचभोभक्ताःपूरयामिचतामहम् ॥ यूयंतुमनसोपायैःकुरुध्वंपूरणेम
तिम् ॥५॥ सुखखानिस्तु बलवान्मधुपुष्पैस्तथाफलैः ॥ कुंडिकांपूरयामासनपूर्णत्वमुपागता ॥६॥ बलखानिस्तथामांसैर्मूलशर्मातुरक्तकैः॥
देवकीचतदाहव्यैश्चंदनादिभिरर्चनैः ॥७॥ कुंडिकांपूरयामासनपूर्णत्वमुपागता ॥ आह्लादश्चैवसर्वांगैरुदयःशिरसास्वयम् ॥८॥ कुंडिकांपू
रयामासतदापूर्णत्वमागता ॥ उवाचवचनंदेवीस्वभक्तान्भक्तवत्सला ॥ ९ ॥ सुखखानेभवान्वीरोभविष्यतिसुरप्रियः ॥ बलखानिर्महावी
रोदीर्घकालेसमृत्युभाक् ॥ १० ॥ मूलशर्मातुबलवान्रक्तबीजोभविष्यति ॥ देवकीचभवेद्देवीचिरकालंस्वलोकगा ॥ ११ ॥ आह्लादश्चैव
कृष्णांशस्तयोर्मध्येद्वयंवरम् ॥ एकस्तुदेववत्प्रोक्तोबलाधिक्योद्वितीयकः ॥ १२ ॥ निष्कामोऽयंदेवसिंहोमृतेमोक्षत्वप्राप्नुयात् ॥
इत्युक्त्वान्तर्दधेमातातेसर्वेतृप्तिमागताः ॥ १३ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहा
ससमुच्चयेपंचदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ प्राप्तेसप्तदशाब्देचकृष्णांशेतत्रचाभवत् ॥ शृणुत्वंमुनिशा
र्दूलहृष्टंयद्योगदर्शनात् ॥ १ ॥ रत्नभानौमृतेराज्ञिमरुधन्वमहीपतिः ॥ गजसेनस्तदाविप्रपृथ्वीराजभयातुरः ॥ २ ॥ आराध्यपावकंदेवं
यज्ञध्यानव्रतार्चनैः ॥ द्वादशाब्दंसदाचारःप्रेमभक्त्याह्यतोषयत् ॥ ३ ॥ तदाप्रसन्नोभगवान्पावकीयंहयंशुभम् ॥ ददौतस्मैसुतौचोभौक
न्यांचगजमुक्तिकाम् ॥ ४ ॥ पावकास्तेहिचत्वारःसमुद्भूतामहीतले ॥ अग्निवर्णामहावीराःसर्वलक्षणलक्षिताः ॥ ५ ॥ अष्टादशवयोभूताः ॥
सर्वेतेमुनिपुंगव ॥ जातमात्रादेवसमाःसर्वविद्याविशारदाः ॥ ६ ॥ अष्टादशाब्दवयसासाकन्यावरवर्णिनी ॥ दुर्गायाश्चवरंप्राप्ताधर्मांशस्त्वांव

रिष्यति ॥ ७ ॥ शार्दूलवंशीसनृपःकृतवान्वैस्वयंवरम् ॥ नानादेश्यानृपाःप्राप्ताःसुतायारूपमोहिताः ॥ ८ ॥ मार्गशीर्षेसितेपक्षेचाष्टम्यां
चंद्रवासरे ॥ तस्याःस्वयंवरश्चासीत्सानृपान्प्रतिचाययौ ॥ ९ ॥ विद्युद्वर्णमुखंतस्याश्चंचलायास्तथागतम् ॥ दृष्ट्वामुमोहधर्मांशोबलखा
निर्महीपतिः ॥ १० ॥ सापिदृष्ट्वाचतंवीरंमुमोहजगमुक्तिका ॥ बुद्धातस्मैददौमालांवैजयंतींशुभानना ॥ ११ ॥ तारकाद्याश्चभूपालाःसर्वे
शस्त्रास्त्रसंयुताः ॥ रुरुधुःसर्वतोवीरंतेबलात्कन्यकार्थिनः ॥ १२ ॥ तथाविद्धान्नृपान्दृष्ट्वाभूपान्पंचशतान्बली ॥ सशीघ्रंखड्गमुत्सृज्यशत
भूपशिरांस्यहन् ॥ १३ ॥ सर्वतोवध्यमानंतंबलखानिंसतारकः ॥ तद्भुजाभ्यांददौखड्गंसतदंगेद्विधाभवत् ॥ १४ ॥ महीराजसुतोज्येष्ठो
दृष्ट्वाखड्गंतथागतम् ॥ अपोवाहरणाच्छूरस्तत्पश्चात्तेनृपाययुः ॥ १५ ॥ पराजितेनृपबलेबलखानिर्महाबलः ॥ तांकन्यांशिबिकारूढांस्व
गेहंसोऽनयद्बली ॥ १६ ॥ तांगच्छंतींसुतांदृष्ट्वागजसेनोमहीपतिः ॥ महीपत्याज्ञयाप्राप्तोज्ञात्वातंक्षत्रियाधमम् ॥ १७ ॥ जंबुकघ्नंमहावीरं
माययातममोहयत् ॥ जातेनिद्रातुरेवीरेदुर्गायाःशापमोहिते ॥ १८ ॥ निगडैस्तंबबंधाशुदृढैर्लौहमयैरुषा ॥ लोहदुर्गंचसंप्राप्यग्रामरूपं
महीपतिः ॥ १९ ॥ चांडालांश्चसमाहूयकठिनांस्तत्रवासिनः ॥ वधायाज्ञापयामासतस्यदंडैरनेकशः ॥ २० ॥ तेरौद्रास्तंसमाबध्यताडया
मासुरूर्जिताः ॥ तत्ताडनात्तदानिद्रातत्रैवविलयंगता ॥ २१ ॥ दृष्ट्वाततस्तुचंडालान्बलखानिरताडयत् ॥ तलमुष्टिप्रहारेणचांडाला
मरणंगताः ॥ २२ ॥ मृतेपंचशतेरौद्रेतच्छेषादुद्रुवुर्भयात् ॥ कपाटंसुदृढंकृत्वानृपान्तिकमुपाययौ ॥ २३ ॥ सनृपःकारणंज्ञात्वाहस्तबद्धो
महाबली ॥ उवाचतत्रगत्वासौवचनंकार्यतत्परः ॥ २४ ॥ भवान्महाबलीवीरचांडालैर्वधनंगतः ॥ दस्युभिर्लुंठितस्तत्रनिद्रावश्योवनेगतः
॥ २५ ॥ मत्सुताभवनेप्राप्तादिष्ट्यात्वंजीवितांगतः ॥ उद्वाह्यमत्सुतांशीघ्रंस्वगेहंयातुमर्हसि ॥ २६ ॥ इतिश्रुत्वाप्रियंवाक्यंतंप्रशंस्यतथा
करोत् ॥ मंडपेवेदकर्माणिविवाहार्थंचकारसः ॥ २७ ॥ जातायांमंडपार्चायांपत्रमाह्लादहेतवे ॥ तदाज्ञयालिखित्वासौगजसेनोऽग्निसेवकः
॥ २८ ॥ उष्ट्रारूढंसमाहूयशीघ्रंपत्रमचोदयत् ॥ बलखानेर्विवाहोऽत्रभवान्सैन्यसमान्वितः ॥ २९ ॥ संप्राप्ययोग्यद्रव्याणिभुक्त्वात्वंतृप्ति
मावह॥ इत्युक्तेनिशिजातायांबलखानिर्महाबलः ॥३०॥ भोजनंकृतवांस्तत्रविषजुष्टंनृपार्पितम्॥गरलंतेनसंभुक्तंनममारवराच्छुभात्॥३१॥

ततःकालेचसंप्राप्तेदृष्ट्वामोहत्वमागतम् ॥ पुनर्बबंधनिगडैस्ताडयामासवेतसैः ॥ ३२ ॥ विषदोषमसृक्धारान्निस्सृतंसर्वदेहतः ॥
तदाबुबोधबलवान्भूपतिंप्राहनम्रधीः ॥ ३३ ॥ राजन्किमीदृशंजातंत्वत्सैन्यंताडनेरतम् ॥ सआहभोमहावीरमत्कुलेरीतिरीदृशी ॥ ३४ ॥
यातनांप्रथमंप्राप्यतदनूद्वाहितोभवेत् ॥ इत्युक्तेसतिभूपालेगजमुक्तासमागता ॥ ३५ ॥ पितरंप्राहवचनंकोऽयंतत्ताडनेगतः ॥ नृपःप्राहसु
तेशीघ्रंयाहित्वंनिजमंदिरे ॥ ३६ ॥ कृषिकरोयमायातोद्रव्यार्थंताडनेगतः ॥ इतिश्रुत्वावचोवीरंबलखानिर्महाबलः ॥ ३७ ॥ छित्त्वातद्बं
धनंवीरंखड्गहस्तःसमाययौ ॥ शूराःपंचशतंतंचरुद्ध्वाशस्त्रैःसमंततः ॥ ३८ ॥ प्रजघ्नतस्तुतान्सर्वान्बलखानिर्व्यनाशयत् ॥ गजसेनसुतो
ज्येष्ठःसूर्यद्युतिरुपागतः ॥ ३९ ॥ बद्ध्वापुनस्तंबलिनंगर्तमध्येसमाक्षिपत् ॥ तथागतंपतिंदृष्ट्वागजमुक्तासुदुःखिता ॥ ४० ॥ निशितत्रगता
देवीदत्वाद्रव्यंतुरक्षकान् ॥ पतिंनिष्काश्यरुदतीव्यजनंपतयेददौ ॥ ४१ ॥ रात्रौरात्रौतथाप्राप्ताव्यतीतंपक्षमात्रकम् ॥ एतस्मिन्नंतरेवीर
आह्लादःसप्तलक्षकैः ॥ ४२ ॥ सैन्यैःसहाययौशीघ्रंश्रुत्वातत्रैवकारणम् ॥ बलखानिर्गतोगर्तैरुरोधनगरींतदा ॥ ४३ ॥ गजैःषोडशसाहस्रैर्ग
जसेनोरणंययौ ॥ त्रिलक्षैश्चहयैःसार्द्धंसूर्यद्युतिरुपाययौ ॥ ४४ ॥ कांतामलस्तदाप्राप्तस्त्रिलक्षैश्चपदातिभिः ॥ तयोश्चासीन्महद्युद्धमहोरात्रं
हिसैन्ययोः ॥ ४५ ॥ रक्षितेतालनाद्यैचगजसेनाद्यकेतदा ॥ द्वितीयेऽह्निसमायातेगजसेनोमहाबलः ॥ ४६ ॥ प्रभग्नंस्वबलंदृष्ट्वापावकोऽयं
समारुहत् ॥ दाहयामासतत्सैन्यंतालनाद्यैश्चपालितम् ॥४७॥ भस्मीभूतंबलंदृष्ट्वातालनःशत्रुसन्मुखे ॥गत्वाभल्लेनभूपालंताडयामासवेगतः
॥ ४८ ॥ मूर्छितंनृपमाज्ञायसूर्यद्युतिरुपाययौ ॥ पावकीयंसमारुह्यदाहयामासतालनम् ॥ ४९ ॥ एतस्मिन्नंतरेशूरौदेवौचाह्लादकृष्णकौ ॥
बबंधतूरुषाविष्टौसूर्यद्युतिमरिंदमम् ॥ ५० ॥ सुबद्धंभ्रातरंज्ञात्वाहयंकांतामलोऽरुहत् ॥ देवसिंहंचसंमोह्यकृष्णांशंप्रतिसोऽगमत् ॥ ५१ ॥
गृहीत्वातंसकृष्णांशस्तस्यतेजःसमाहरत्॥सप्तलक्षबलंसर्वंवह्निभूतमभूत्तदा ॥५२॥ अमरत्वात्सआह्लादस्तदातुसमजीवयत्॥गजसेनस्यार्द्धं
सैन्यंतैश्चसर्वैर्विनाशितम्॥५३॥विजयंनृपतिःप्राप्यहर्षितोगेहमाययौ॥वह्निभूतंचकृष्णांशंदृष्ट्वाह्लादःसुदुःखितः ॥५४॥ दुर्गांदेवींसतुष्टावमन
सारणमूर्द्धनि॥तदादेवीवचःप्राहवत्सतेपुत्रएवच॥५५॥स्वर्गादागत्यसर्वाणिपुनरुज्जीवयिष्यति॥इत्युक्तेवचनेदेव्याइन्दुलोवासवाज्ञया॥५६॥ ॥

द्वादशाब्दसमंरूपंधृत्वाविद्याविशारदः ॥ वडवामृतमारुह्यहयंतत्रसमागतः ॥ ५७ ॥ तदङ्गाद्दुद्धृतावाहामेघाइवसमन्ततः ॥
पावकंशमयामासुस्त्रयस्तेदेवतोपमाः ॥ ५८ ॥ शमीभूतेतदावन्हौस्वमुखात्सहयोमुदा ॥ लालाभूद्वाहयामासतयातेजीवितास्ततः ॥५९॥
जीवितेसप्तलक्षेतुशमीभूतेहिपावके ॥ गजसेनः सुताभ्यांचप्रयातः सर्वतोदिशम् ॥ ६० ॥ लक्षसैन्यंतदाशेषंतेसर्वेऽपिभयातुराः ॥
दुद्रुवुर्भार्गवश्रेष्ठदिव्यरूपत्वधारिणः ॥ ६१ ॥ केचित्संन्यासिनोभूत्वाकेचिद्वैब्रह्मचारिणः ॥ जीवत्वंप्राप्तवन्तस्तेतथान्येसंक्षयंगताः ॥
॥ ६२ ॥ बद्ध्वातान्गजसेनादींस्त्रीञ्छूरान्सचतालनः ॥ कृष्णांशेनसमायुक्तइंद्रदुर्गंसमाययौ ॥६३॥ बलखानिंचनिष्काश्यतालनस्तदनंतर
म् ॥ पृष्टवान्कारणंसर्वंश्रुत्वातन्मुखतोवचः ॥ ६४ ॥ तान्वीरांस्ताडयामासवेतसैः स्तंभबंधनात् ॥ गजमुक्ताज्ञयाविप्रसेनापतिरुदारधीः॥
॥ ६५ ॥ तालनस्तान्समुत्सृज्यविवाहार्थंसमाययौ ॥ बलखानिर्हयारूढोगजमुक्ताचमंडपे ॥ ६६ ॥ गजसेनस्तदादिव्यैर्भोजनैस्तानभो
जयत् ॥ निवास्यलोहदुर्गेतान्कपाटः सुदृढीकृतः ॥ ६७ ॥ लक्षशूरान्ससंस्थाप्यस्वयंरुद्धपुरंययौ ॥ तेरात्रौलोहदुर्गेषुवासित्वाय
त्नतोबलाः ॥ ६८ ॥ प्रभातेचकपाटंतंद्वारंदृष्ट्वातदाब्रवीत् ॥ द्वारमुद्घाटयाशुत्वंनोचेत्प्राणांस्त्यजिष्यसि ॥ ६९ ॥ इतिसेनापतिःश्रुत्वा
लक्षशूरान्समादिशत् ॥ नानायत्नैश्चहंतव्याः शत्रवोभयकारिणः ॥ ७० ॥ इतिश्रुत्वातुतेशूराः शतघ्न्यस्तैः सुरोपिताः ॥ एकैकंक्रमशो
जघ्नुर्वृंदंतेवैरतत्पराः ॥ ७१ ॥ हतेदशसहस्रेतुकृष्णांशोबिंदुलंहयम् ॥ समारुह्यजघानाशुस्वखड्गेनमहद्बलम् ॥ ७२ ॥ हतशेषा
भयार्ताश्चसहस्राशीतिसम्मिताः ॥ इन्द्रदुर्गंप्रतिप्राहुर्यथाजातंबलक्षयम् ॥ ७३ ॥ श्रुत्वाभयातुरोराजास्वसुताभ्यांसमन्वितः ॥
गजमुक्तांपुरस्कृत्यबहुद्रव्यसमन्विताम्॥७४॥स्वपापंक्षालयामासचोर्वीयापतिनाकृतम्॥षोडशोष्ट्राणिस्वर्णानिगृहीत्वाह्लादएवसः ॥ ७५॥
ययौस्वगेहंसहितः पुत्रभ्रातृसमन्वितः ॥ संप्राप्तेगेहमाल्हादेदेवीस्वर्णवतीस्वयम् ॥ ७६ ॥ इन्दुलंस्वांकमारोप्यललापकरुणंबहु ॥
मृताहंचत्वयापुत्रपुनरुज्जीवितंसुत ॥ ७७ ॥ धन्याहंकृतकृत्यास्मिजयन्ततवदर्शने ॥ इतिश्रुत्वेन्दुलोवीरोनत्वाहजननींमुदा ॥ ७८ ॥

अनृणंनाधिगच्छामित्वत्तोमातःकदाचन ॥ संप्राप्तेगेहमाह्लादेराजापरिमलःसुधीः ॥ वाद्यानिवादयामासविप्रेभ्यश्चददौधनम् ॥ ७९ ॥
इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेषोडशोऽध्यायः ॥ १६ ॥ ॥ ॥ ७ ॥
॥ सूतउवाच ॥ ॥ कृष्णांशेऽष्टादशाब्देतुयथाजातंतथाशृणु ॥ मृतेकृष्णकुमारेतुभूपतौरत्नभानुना ॥ १ ॥ महीराजःसुदुःखार्तोल
क्षचंडीमकारयत् ॥ होमान्तेतुतदादेवीवागुवाचनृपंप्रति ॥ २ ॥ वर्षेवर्षेतुतेसप्तभविष्यंत्यगमोद्भवाः ॥ कुमाराःकौरवांशाश्चद्रौपद्यंशासु
तानृपः ॥ ३ ॥ इत्युक्तेवचनेतस्मिन्राज्ञीगर्भमथोदधौ ॥ कर्णांशश्चसुतोजातस्तारकोबलवत्तरः ॥ ४ ॥ द्वितीयाब्देतथाजातोदुश्शासन
शुभांशतः ॥ नृहरिरितिविख्यातस्तृतीयाब्देतुचाभवत् ॥ ५ ॥ उद्भर्षांशःसरदनोदुर्मुखांशस्तुमर्दनः ॥ विकर्णांशःसूर्य्यकर्माभीमिश्चां
शोविंविंशतेः ॥ ६ ॥ वर्द्धनाश्चित्रबाणांशोवेलातदनुचाभवत् ॥ यथाकृष्णातथासैवरूपचेष्टागुणैर्मुने ॥ ७ ॥ भुवितस्यांचजातायांभूक
म्पोदारुणोऽभवत् ॥ अट्टाट्टहासमशिवंचामुंडाखेचकारह ॥ ८ ॥ रक्तवृष्टिःपुरेचासीदस्थिशर्करयायुता ॥ ब्राह्मणाश्चसमागत्यजातकर्मादि
कांक्रियाम् ॥ ९ ॥ कृत्वानामतथाचक्रेशृणुभूमिपसाक्षरम् ॥ इलाचशशिनांमाताविकल्पेनाऽभवद्भुवि ॥ १० ॥ तस्माद्वेलेतिविख्याताक
न्येयंरूपशालिनी ॥ जातायांचसुतायांसपिताविप्रेभ्यउत्तमम्॥ ११॥ ददौदानंमुदायुक्तोवासांसिविविधानिच ॥ द्वादशाब्दवयःप्राप्तेसासुता
वरवर्णिनी ॥१२॥ उवाचपितरंनम्राशृणुत्वंपृथिवीपते ॥ मंडपेरक्तधाराभिर्योमांसंस्नापयिष्यति ॥ १३ ॥ द्रौपद्याभूषणंदातासमेभर्ताभवि
ष्यति ॥ स्वर्णपत्रेतदाराजापद्यंवेलासुखोद्भवम् ॥१४॥ लिखित्वातारकंप्राहत्वमन्वेषयतत्पतिम् ॥ लक्षसार्द्धत्रयंद्रव्यंगृहीत्वालक्षसैन्यकः॥
॥१५॥ नृपान्तरंययौशीघ्रंतारकःपितुराज्ञया ॥ सिन्धुस्थानेचार्यदेशेभूपंभूपंययौबली ॥ १६ ॥ नगृहीतंनृपैःकैश्चित्तद्वाक्यंघोरसुल्बणम् ॥
महीपतिंससंप्राप्यमातुलंतद्वचोऽब्रवीत् ॥ १७ ॥ श्रुत्वासआहभोवीरब्रह्मानन्दोमहाबलः ॥ सचवाक्यंप्रगृह्णीयादाह्लादाद्यैःसुरक्षितः॥१८॥
किंत्वयाविदितंनैवचरित्रंतस्यविश्रुतम् ॥ भवान्षड्बंधुसहितःकृष्णांशाद्यैर्विवाहितः ॥१९॥ तेसर्वेवश्यगास्तस्यब्रह्मानंदस्यधीमतः ॥ ना
स्तिभूमंडलेकश्चित्तद्बलेनसमोनृपः ॥ २० ॥ इतिश्रुत्वाययौतूर्णंतारकःस्वबलैःसह ॥ तत्पद्यंचकथित्वाग्रेहस्तबद्धस्तदाभवत् ॥ २१ ॥

कृष्णांश स्तुगृहीत्वाशुपद्यवाक्यमुवाचह ॥ अहंविवाहयिष्यामिब्रह्मानंदंनृपोत्तमम् ॥ २२ ॥ तूष्णींभूतास्तदासर्वेतारकः सद्विजैःसह ॥
अभिषेकंतदाकृत्वास्वगेहंपुनराययौ ॥ २३ ॥ माघमासेसितेपक्षेत्रयोदश्यांसुवासरे ॥ विवाहलग्नंशुभदंवरकन्यार्थयोस्तदा ॥ २४ ॥
सप्तलक्षबलैःसार्द्धंलक्षणश्चसतालनः ॥ महावतींपुरींप्राप्तोबलीपरिमलादिभिः ॥ २५ ॥ आह्लादोलक्षसैन्याढ्यःकृष्णांशेनसमन्वितः ॥
बलखानिर्लक्षसैन्यःसंयुतःसुखखानिना ॥ २६ ॥ नेत्रसिंहोलक्षसैन्योयोगभोगसमन्वितः ॥ रणजिच्चबलीबालोद्विलक्षबलसंयुतः ॥ २७ ॥
एवंद्वादशलक्षाणांसैन्यानामधिपोबली ॥ तालनःसिंहिनीसंस्थोवडवांप्रययौसह ॥२८॥ सैन्यैर्द्वादशलक्षैश्चसहितस्तालनोबली ॥ आययौदेह
लीग्रामेमहीराजानुपालिते ॥ २९ ॥ देवोमनोरथारूढोबिंदुलस्थःसकृष्णकः ॥ वडवामृतमासाद्यस्वर्णवत्याःसुतोगतः ॥ ३० ॥ रूपण
श्चकरालस्थआह्लादश्चपपीहके ॥ बलखानिः कपोतस्थोहरिणस्थोऽनुजस्ततः ॥ ३१ ॥ रणजिन्मलनापुत्रःसंस्थितोहरिनागरे ॥ पंचश
ब्दगजारूढोमहावत्यधिपोगतः ॥ ३२ ॥ विमानवरमारुह्यधीमरैः शतवाहितैः ॥ मणिमुक्तास्वर्णमयंसहस्रैर्वाद्यकैर्युतम् ॥ ३३ ॥
अयुतैश्चपताकैश्चवेत्रपाणिसहस्रकैः ॥ सहस्रैः शिबिकाभिश्चपंचसाहस्रकैरथैः ॥ ३४ ॥ शकटैर्महिषोढैस्तुतथापंचसहस्रकैः ॥
सर्वतोपस्कृतंरम्यंब्रह्मानंदंसमागतः ॥ ३५ ॥ श्रुत्वाकोलाहलंतेषांमहीराजोनृपोत्तमः ॥ विस्मितः सबभूवात्रशिबिराणिमुदाददौ ॥ ३६ ॥
दुर्गद्वारिक्रियांरम्यांकृत्वाविधिविधानतः ॥ द्रौपद्याभूषणंदेहिवेलायैसतमब्रवीत् ॥ ३७ ॥ इन्दुलस्तुययौस्वर्गंवासवंप्रतिचाब्रवीत् ॥
द्रौपद्याभूषणंसर्वंदेहिमह्यंसुरोत्तम ॥ ३८ ॥ कुबेरात्ससमानीयदिव्यमाभूषणंददौ ॥ इन्दुलःप्रहरान्तेचप्राप्तःपित्रेन्यवेदयत् ॥ ३९ ॥
आह्लादस्तुस्वयंगत्वावेलायैभूषणंददौ ॥ प्राप्तेब्राह्मेमुहूर्तेतुविवाहस्तत्रचाभवत् ॥ ४० ॥ संप्राप्तेप्रथमावर्तेतारकःखड्गमाददौ ॥
आह्लादस्तंसमासाद्ययुयुधेबहुलीलया ॥ ४१ ॥ नृहरिस्तुद्वितीयेचकृष्णांशंप्रतिचारुधत् ॥ तथासरदनंवीरंबलखानिरुपाययौ ॥ ४२ ॥
मर्दनंसुखखानिस्तुचतुर्थावर्तकेऽरुधत् ॥ रणजित्सूर्यवर्माणंसभीमंरूपणोबली ॥ ४३ ॥ देवस्तुवर्धनंवीरंसप्तावर्तेक्रमाद्ययौ ॥
शतभूपान्खड्गधरान्गजसेनादिकांस्तदा ॥ ४४ ॥ लक्षणाद्याःसमाजग्मुर्मंडपेबहुविस्तृते ॥ भग्नभूतंनृपबलंदृष्ट्वाराजारुषान्वितः ॥ ४५ ॥

महीराजोययौरूढोगजंचारिभयंकरम् ॥ जित्वातान्नेत्रसिंहादीन्छिद्वेधीनृपोत्तमः ॥ ४६ ॥ लक्षणंप्रययौशीघ्रंबौद्धिनींहस्तिनींस्थितम् ॥
शिवंमनसिसंस्थाप्यजित्वाबद्धारुषान्वितः ॥४७॥ अगमत्तमुपगृह्यदर्शयामासतंनृपम् ॥ श्रुत्वापरिमलोराजाकृष्णांशंभीरुकोययौ ॥४८॥
वृत्तान्तंकथयामासचाह्लादादिपराजयम् ॥ अजितःसचकृष्णांशोनभोमार्गेणमंदिरम् ॥ ४९ ॥ गत्वाजगर्जबलवान्योगिन्यानंददायकः ॥
तदासलक्षणोवीरस्त्यक्त्वाबंधनमुत्तमम् ॥५०॥विष्णुंमनसिसंस्थाप्यमहीराजंसमाययौ ॥ गृहीत्वाचागमांदोलांस्वयंशिबिरमातवान्॥५१॥
एतस्मिन्नंतरेसर्वेत्यक्त्वामूर्छांसमंततः ॥ खड्गयुद्धेनताञ्जित्वाबद्धातान्निगडैर्दृढैः ॥ ५२ ॥ सान्वयाञ्छतभूपांश्चहत्वातद्रुधिरावहैः ॥ द्रौप
दींस्नापयामासुर्वेलारूपांकलोत्तमाम् ॥ ५३ ॥विवाहान्तेचतेसर्वेशिबिराणिसमाययुः ॥ समुत्सृज्यसुतान्सप्तसुभोज्यैस्तेह्यभोजयन् ॥५४॥
भुक्तवत्सुसुवीरेषुसाहस्रास्तैःसुतैःसह ॥ रुरुधुःसर्वतोजघ्नुरस्त्रशस्त्रैःसमन्ततः ॥ ५५ ॥ सहस्रशूरांस्तान्हत्वापुनर्बद्धामहाबलान् ॥
शिबिराणिसमाजग्मुस्तेषांहास्यविशारदाः ॥ ५६ ॥ दशलक्षसुवर्णानिगृहीत्वानृपतिर्बली ॥ वेलांनवोढामादायगत्वानत्वातमब्रवीत्॥५७॥
प्रद्योतसुतहेराजँल्लक्षणोऽसौमहाबलः ॥ ममपत्नींसमादायदासींकर्तुंसमिच्छति ॥ ५८ ॥ इतिश्रुत्वापरिमलःसर्वभूपसमन्वितः ॥
बहुधाबोधितश्चैवनबुबोधतदानृपः ॥ ५९ ॥ तदामहासतीवेलाविललापभृशंमुहुः ॥ तच्छ्रुत्वासचकृष्णांशःसहितोबलखानिना ॥ ६० ॥
तामाश्वास्यतदावेलांनभोमार्गेणचाययौ ॥ लक्षणंतर्जयित्वासौगृहीत्वाचागमन्मुदा ॥ ६१ ॥ नभोमार्गेणगेहेतांकृष्णांशःसमपेषयत् ॥
पुनस्त्यक्त्वासप्तसुतान्सहितान्नृपतेस्तुते ॥ ६२ ॥ शपथंकारयामासुर्दंभंप्रातमहाबलाः ॥ उषित्वादशरात्रांतेदध्युर्गंतुंमनोमुने ॥ ६३ ॥
महीराजस्तुबलवान्गृहीत्वाभूपतेःपदौ ॥ सउवाचचपूर्णाक्षस्तदापरिमलंनृपम् ॥ ६४ ॥ महाराजवधूस्तेचवेलेयंद्वादशाब्दिका ॥
पितृमातृवियोगंचनक्षमंतातुबालिका ॥ ६५ ॥ तस्मात्त्वंपरित्यज्यगच्छगेहंसुखीभव ॥ पतियोग्यायदाभूयात्तदात्वांपुनरेष्यति ॥६६॥
इत्युक्त्वाचवचोराजासस्नेहादङ्कमस्पृशत् ॥ चूर्णीभूतेपरिमलेचाह्लादस्तत्रदुःखितः ॥ ६७ ॥ महीराजंसपस्पर्शसराजाचूर्णतांगतः ॥
भग्नास्थीभूपतीचोभौपावकीयैश्चिकित्सकैः ॥ ६८ ॥ सुखवंतौगृहंप्राप्यकृतकृत्यत्वमागतौ ॥ मलनास्वसुतंदृष्ट्वाप्राप्तमुद्राहितंगृहे ॥ ६९ ॥

कृत्वोत्सवंबहुविधंविप्रेभ्यश्चददौधनम् ॥ होमंवैकारयामासचंडिकायाःप्रसन्नतः ॥७०॥ सभार्यांलक्षणोवीरोयात्राकालेतमब्रवीत् ॥ अगमां
जयचंद्रायमत्वाजित्वाहृतांतुताम् ॥७१॥ नभोमार्गेणसंप्राप्तौयोगिनौचशिवाज्ञया॥जहतुस्तौचमांजित्वातत्तीक्ष्णभयमोहितम्॥७२॥अद्याहं
धामगच्छामिचिरंजीवनृपोत्तम ॥ इत्युक्तवंतंतंनत्वाययुर्भूपाःस्वमालयम् ॥७३॥ इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापर
पर्यायेकलियुगीयेतिहाससमुच्चयेसप्तदशोऽध्यायः॥१७॥छ॥सूतउवाच ॥ विंशाब्देचैवकृष्णांशेयथाजातंतथाशृणु॥सागराख्यसरस्तीरेकदा
चिद्इंदुलोबली ॥ १ ॥ जप्त्वासप्तशतींस्तोत्रंतत्रध्यानान्वितोऽभवत् ॥ एतस्मिन्नंतरेहंसाआकाशाद्भूमिमागताः ॥ २ ॥ तेषांचरुतशब्दै
श्चसध्यानादुत्थितोऽभवत् ॥ वक्ष्यमाणंवचःप्राहुर्धन्योऽयंदिव्यविग्रहः ॥३॥ पर्वतानांहिमगिरिर्वनंवृंदावनंतथा ॥ महावतीपुरीणांचसागरः
सरसामपि ॥ ४ ॥ नारीणांपद्मिनीनारीनृणांश्रेष्ठःसइन्दुलः ॥ भोइन्दुलमहाप्राज्ञमानसेसरसिस्थिताः ॥ ५ ॥ वयंश्रुत्वाप्रियोवाक्यंनलिनी
सागरंययुः ॥ दृष्ट्वातत्रशुभांनारींसर्वाभरणभूषिताम् ॥ ६ ॥ सप्तालिभिर्युतांरम्यांगीतनाट्यविशारदाम् ॥ दृष्ट्वामोहत्वमापन्नावयंदेशान्तरे
गताः ॥ ७ ॥ विलोकितानराःसर्वेऽत्रास्माभिर्जगतीतले ॥ त्वत्समोनहिकोऽप्यत्रपद्मिनीसदृशोभुवि ॥ ८ ॥ तस्मात्त्वंनः समारुह्यतांदेवीं
द्रष्टुमर्हसि ॥ तथेत्युक्त्वाशक्रसुतोहंसराजंसमारुहत् ॥ ९ ॥ सिंहलद्वीपकेरम्येह्यार्यसिंहोनृपःस्थितः ॥ तत्सुतापद्मिनीनाम्नारूपयौवन
शालिनी ॥ १० ॥ रागिण्यःसप्तविख्यातास्तत्सख्यःप्रमदोत्तमाः ॥ नलिनीसागरेरम्येगिरिजामंदिरंशुभम् ॥ ११ ॥ तत्रस्थितांचतांदे
वीमिन्दुलःसददर्शह ॥ सापितंसुंदरंदृष्ट्वाहंसदेहसमास्थितम् ॥ १२ ॥ संमोह्याहूयतंदेवंतेनसार्द्धमरीरमत् ॥ वर्षमेकंययौतत्रनानाली
लासुमोहितः ॥ १३ ॥ भक्तिगर्वत्वमापन्नेचाह्लादेजगदंबिका ॥ दृष्ट्वाचान्तर्दधेदेवीगर्वाचरणकुंठिता ॥ १४ ॥ तस्यप्राप्तंमहद्दुःखमाह्लादस्य
जयैषिणः ॥ सकैश्चित्पुरुषैर्वीरःकथितोऽभूत्स्वमंदिरे ॥ १५ ॥ इन्दुलंरूपसम्पन्नंलंकापुरनिवासिनः ॥ राक्षसास्तंसमाहृत्यस्वगे
हंशीघ्रमाययुः ॥ १६ ॥ इतिश्रुत्वावचोघोरंसकुलोविललापह ॥ हाहाशब्दोमहांश्चासीत्तेषांतुरुदतांमुने ॥ १७ ॥ कृष्णांशो
रुदितंप्राहाह्लादंज्येष्ठंशृणुष्वभोः ॥ जित्वाहंराक्षसान्सर्वांस्तालनाद्यैः समन्वितः ॥ १८ ॥ इंदुलंत्वांसमेष्यामिभवान्धैर्यपरोभवेत् ॥

बलखानिश्चकृष्णांशोदेवसिंहश्चतालनः ॥ १९ ॥ सप्तलक्षबलःसार्द्धंलंकांप्रतिययुर्मुदा ॥ मार्गप्राप्ताश्चयेभूपाग्रामपाराष्ट्रपास्तथा ॥ २० ॥
यथायोग्यंबलिरम्यंप्राप्यतस्मैन्यवेदयन् ॥ येभूपामदमत्ताश्चजित्वातांस्तालनोबली ॥ २१ ॥ बद्धातैश्चसमाजग्मुःसेतुबंधंशिवस्थलम् ॥
पूजयित्वाचरामेशंरामेणस्थापितंशिवम् ॥ २२ ॥ सिंहलद्वीपमगमन्षण्मासाभ्यंतरंतदा ॥ नलिनीसागरंप्राप्यतत्रवासमकारयन् ॥ २३ ॥
पत्रंसंप्रेषयामासबलखानिर्नृपायच ॥ आर्य्यसिंहमहाभागस्वपोतान्देहितीर्णकान् ॥ २४ ॥ भवांश्चस्वबलैः सार्द्धंलंकांप्रतिव्रजाधुना ॥
नोचेत्त्वांसबलंजित्वाराष्ट्रभंगंकरोम्यहम् ॥ २५ ॥ इतिश्रुत्वापत्रवचोभूपतिर्बलवत्तरः ॥ रक्षितः शक्रपुत्रेणयुद्धायसमुपाययौ ॥ २६ ॥
इन्दुलः स्तंभनंमंत्रंसंस्थाप्यशरउत्तमे ॥ स्तंभयामासतत्सैन्यंतालनाद्यैःसुरक्षितम् ॥ २७ ॥ दिवसेसुखशर्माचत्रिलक्षैः स्वदलैःसह ॥
आर्य्यसिंहस्यतनयोमहद्युद्धमचीकरत् ॥ २८ ॥ निशामुखेचसंप्राप्तेशक्रपुत्रोमहाबलः ॥ शतपुत्रैःक्षत्रियाणांसार्द्धंयुद्धायचाययौ ॥२९॥
तेषांहयाहरिद्वर्णायोगिवेषधराबलाः ॥ महतींतेसहस्रंचरिपोःसेनांव्यनाशयन् ॥ ३० ॥ तत्पश्चाद्गृहमासाद्यतदातैःसुखितोऽवसत् ॥ एवं
जातंचषण्मासंतयोर्युद्धंहिसेनयोः ॥ क्रमेणसंक्षयंप्राप्तंबलखानेर्महद्बलम् ॥ ३१ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडा
परपर्य्यायेकलियुगीयेतिहाससमुच्चयेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ दृष्ट्वासैन्यनिपातंचबलखानिर्महाबलः ॥
संप्राप्यमानसींपीडांयुद्धार्थेविमुखोऽभवत् ॥ १ ॥ देवसिंहंसमाहूयत्रिकालज्ञंमहामतिम् ॥ तन्मंत्रंमंत्रयामासकार्यसिद्धिर्यथाभवेत् ॥ २ ॥
श्रुत्वोवाचमहायोगीदेवसिंहोमहाबलः ॥ महेंद्रतनयःकश्चित्सर्वशस्त्रास्त्रकोविदः ॥ ३ ॥ त्वत्सैन्यंरोधयित्वावैदिव्यास्त्रेणदिवामुखे ॥ रात्रौ
स्वयंसमागम्यकरोतिबलसंक्षयम् ॥ ४ ॥ अतस्त्वंमत्सहायेनतालनेनसमन्वितः ॥ कृष्णांशेनसमागम्यशक्रपुत्रंशुभाननम् ॥ ५ ॥ विज
यीभवशीघ्रंहिनोचेद्धास्येयमक्षयम् ॥ इतिश्रुत्वावचस्तस्यदेवसिंहस्यभाषितम् ॥ ६ ॥ यत्नंचकारबलवान्भ्रातृमित्रसमन्वितः ॥ एकांवि
शाब्दकृष्णांशेसंप्राप्तेयुद्धकोविदे ॥ ७ ॥ सेनांनिवेशयामासपोतेषुहयवाहनः ॥ अर्द्धसैन्यंचतत्रैवस्थापयित्वामहाबली ॥ ८ ॥ अर्द्धसै
न्येनकृष्णांशोदक्षिणांदिशमागमत् ॥ हयारूढाश्चतेशूराःसर्वेयुद्धसमन्विताः ॥ ९ ॥ कपाटंदृढमुद्धाट्यनगरान्तमुपाययुः ॥ हत्वा

तेराक्षिणःसर्वांल्लुंठयित्वापुरंशुभम् ॥ १० ॥ रिपोर्दुर्गंसमासाद्यचक्रुःशत्रोर्महत्क्षयम् ॥ राज्ञोऽन्तःपुरमागत्यकृष्णांशोबलवत्तरः ॥ ११ ॥
ददर्शसुंदरींबालांपद्मिनींपद्मलोचनाम् ॥ सप्तालिभिर्युतांरम्यांगीतनृत्यविशारदाम् ॥ १२ ॥ बलाद्दोलांसमारोप्यलुंठयित्वारिपोर्गृहम् ॥
जगामशिबिरेतस्मिन्यत्रजातोमहारणः ॥ १३ ॥ बलखानिस्तुबलवान्देवतालनसंयुतः ॥ जघानशात्रवींसेनामिंदुलास्त्रेणपालिताम् ॥१४॥
सुखवर्माणमागत्यसेनाध्यक्षंरिपोःसुतम् ॥ सर्वतस्तंस्वकीयास्त्रैर्जघ्नुस्तेमदविह्वलाः ॥ १५ ॥ हतेतस्मिन्महावीर्येजयंतःक्रोधमूर्च्छितः ॥
सेनामुज्जीवयांचक्रेशक्रपुत्रःप्रतापवान् ॥ १६ ॥ इयालंचसुखवर्माणंसंजीव्यस्वगृहंययौ ॥ तत्रदृष्ट्वाजनान्सर्वान्बहुरोदनतत्परान् ॥ १७ ॥
विस्मितःसययौगेहंयथापूर्वंतथाविधः ॥ नददर्शप्रियांतत्रसखीभिःसहितांमुने ॥ १८ ॥ आर्य्यसिंहगृहंगत्वापृष्टवान्सर्वकारणम् ॥
ज्ञात्वासंलुठितंगेहंशत्रुभिःशस्त्रकोविदैः ॥ १९ ॥ रुरोदसुभृशंवीरोहाप्रियेमदविह्वले ॥ दर्शयाद्यमुखंरम्यंत्वत्पतिस्त्वांसमुत्सुकः ॥ २० ॥
इत्येवंरोदनंकृत्वावडवोपरिसंस्थितः ॥ धनुस्तूणरिमादायखड्गंशत्रुविमोहनम् ॥ २१ ॥ एकाकीसययौक्रुद्धोनिशियत्रास्थितोरिपुः ॥
एतस्मिन्समयेवीरोबलखानिर्महाबलः ॥ २२ ॥ दृष्ट्वातांसुंदरींबालांविललापभृशंमुहुः ॥ हाइन्दुलमहावीरहामद्बंधोप्रियंकर ॥ २३ ॥
त्वद्योग्येयंशुभानारीरूपयौवनशालिनी ॥ दर्शनंदेहिमेशीघ्रंगृहाणाद्यशुभाननाम् ॥२४॥ इत्युक्त्वामूर्च्छितोभूत्वामानसेपूजयच्छिवाम् ॥
तस्मिन्कालेचसंप्राप्तःशक्रपुत्रोमहाबलः ॥२५॥ जघानशात्रवींसेनांकृष्णांशेनैवपालिताम् ॥ दृष्ट्वासैन्यनिपातंचतालनोवाहिनीपतिः॥२६॥
सिंहनादंननादोच्चैःसिंहिन्युपरिसंस्थितः ॥ नजयःसैन्यनाशेनतववीरभविष्यति ॥ २७ ॥ मांहत्वाजहिमत्सैन्यंयोगिन्बालस्वरूपक ॥
इतिश्रुत्वावचस्तस्यशक्रपुत्रोभयंकरः ॥ २८ ॥ जघानहृदयेबाणान्सतुखड्गेनचाच्छिनत् ॥ स्वभल्लेनपुनर्वीरोदंशयामासवक्षसम् ॥२९॥
इन्दुलेमूर्च्छितेतस्मिन्वडवादिव्यरूपिणी ॥ आकाशोपरिसंप्राप्यजयन्तंसमबोधयत् ॥३०॥ तदासबालस्त्वरितःकालास्त्रंचापमादधे ॥ ते
नजातोमहाञ्छब्दस्तालनःसममारह ॥ ३१ ॥ मृतेसेनापतौतस्मिन्कृष्णांशोमदविह्वलः ॥ नभोमार्गेणसंप्राप्यजगर्जचमुहुर्मुहुः ॥ ३२ ॥
इन्दुलःक्रोधताम्राक्षस्त्वाग्नेयंशरमाददे ॥ वह्निभूतंनभस्तत्रस्वयोगेनमहाबली ॥ ३३ ॥ कृत्वाशीघ्रंययौशत्रुंसतुवायव्यमादधे ॥ स्वयो

गेनैवकृष्णांशःपीत्वावायव्यमुत्तमम् ॥ ३४ ॥ पुनर्जगामतत्पार्श्वेकलैकःसहरेःस्वयम् ॥ तथाविधंरिपुंदृष्ट्वाशक्रपुत्रोमहाबली ॥ ३५ ॥
गंधर्वास्त्रंसमादायमोहनायोपचक्रमे ॥ पुनर्योगबलेनैवतदस्त्रंसंक्षयंगतम् ॥ ३६ ॥ वारुणंशरमादायतस्योपरिसमाक्षिपत् ॥ स्वयोगेनै
वकृष्णांशोजलंसर्वंमुखेऽकरोत् ॥३७॥ एवंसर्वाणिचास्त्राणिपीत्वापीत्वापुनःपुनः ॥ ययौशीघ्रंप्रसन्नात्माबाहुशालीयतेंद्रियः ॥३८॥ इन्दु
लस्तुतदाक्रुद्धोऽश्विनींत्यक्त्वाभुविस्थितः ॥ चर्मखड्गंगृहीत्वाशुखड्गयुद्धमचीकरत् ॥ ३९ ॥ एतस्मिन्नंतरेप्राप्तादेवाद्याःसर्वभूमिपाः ॥
ददृशुस्तन्महद्युद्धंसर्वविस्मयकारणम् ॥ ४० ॥ प्रातःकालेचसंप्राप्तेबलखानिर्महाबलः ॥ ददर्शबालकंरम्यंजटाजिनसमन्वितम् ॥ ४१ ॥
श्रमेणकर्शितोवीरःशक्रपुत्रःप्रतापवान् ॥ बलखानेःपितुर्वधोःशपथंकृतवान्स्वयम् ॥ ४२ ॥ स्वखड्गेनैवकृष्णांशशिरस्तवहराम्यहम् ॥
नोचेन्मेदूषितामातानाम्नास्वर्णवतीसती ॥ ४३ ॥ इत्युक्त्वाखड्गमादायययौशीघ्रंरुषान्वितः ॥ बलखानिस्तुतंज्ञात्वात्यक्त्वास्त्रंप्रेमकातरः
॥ ४४ ॥ पुत्रान्तिकमुपागम्यवचनंचेदमब्रवीत् ॥ हेइन्दुलमहाभागपितृमातृयशस्कर ॥ ४५ ॥ आह्लादप्राणसदृशस्वर्णवत्यंगमानस ॥
पूर्वंहत्वाचमांवीरस्वपितृव्यंततःपुनः ॥ ४६ ॥ तथैवोदयसिंहंचदेवसिंहंतथाकुलम् ॥ सुखीभवमहावीरगेहेवैसुखवर्मणः ॥ ४७ ॥ इतिश्रु
त्वावचस्तस्यज्ञात्वाचस्वकुलंशिशुः ॥ त्यक्त्वाखड्गंपतित्वाचस्वपितृव्यस्यपादयोः ॥ ४८ ॥ कृतवान्रोदनंगाढमपराधनिवृत्तये ॥ उवा
चमधुरंवाक्यंशृणुताततममप्रिय ॥ ४९ ॥ नारीयंदूषितावेदैर्नृणांमोहप्रदायिनी ॥ देवोवामानुषोवापिपन्नगोवापिदानवः ॥ ५० ॥ आर्य्यं
नारीमयंजालंबंधनायसमुद्यतः ॥ सोहमाजन्मशुद्धस्यपितुराह्लादकस्यच ॥ ५१ ॥ गेहेजातोजयन्तश्चशक्रपुत्रःस्वयंविभो ॥ पद्मिन्याज
नितंमोहंगृहीत्वाज्ञातवान्नहि ॥ ५२ ॥ क्षमस्वममनन्दस्यशेषमज्ञानजंपितुः ॥ इत्युक्त्वासपुनर्बालोरुरोदस्नेहकातरः ॥ ५३ ॥ सेनामुज्जी
वयामासतालनंचमहाबलम् ॥ इतिश्रुत्वावचस्तस्यकृष्णांशोवचनंशिशोः ॥ ५४ ॥ परमानन्दमागम्यहृदयेस्वमरोपयत् ॥ उत्सवंकार
यामासतत्रदेशेजनेजने ॥ ५५ ॥ आर्य्यसिंहस्तुतच्छ्रुत्वानानाद्रव्यसमन्वितः ॥ ददौकन्यांविधानेनपद्मिनीमिंदुलायवै ॥ ५६ ॥ शतंहया
स्तथानागामुक्तामणिविभूषिताः ॥ कन्यार्थेतान्ददौराजाजामात्रेबहुभूषणम् ॥ ५७ ॥ प्रस्थानमकरोत्तेषांसप्रेम्णावाक्यगद्गदः ॥ तेतुसर्वेमु

॥

दायुक्ताःस्वगेहंशीघ्रमाययुः ॥ ५८ ॥ उषित्वामासमेकंतुतस्मिन्मार्गेभयानके ॥ कीर्तिसागरमासाद्यचक्रुस्तेबहुधोत्सवम् ॥ ५९ ॥ आह्ला
दस्तुप्रसन्नात्मास्वसुतंपत्निसंयुतम् ॥ दृष्ट्वाविप्रान्समाहूयददौदानान्यनेकशः ॥ ६० ॥ दशहाराख्यनगरंसंप्राप्तःस्वकुलैस्सह ॥ कृष्णांश
स्यमहाकीर्तिर्जातालोकेजनेजने ॥ ६१ ॥ पृथ्वीराजस्तुतच्छ्रुत्वाविस्मयंपरमंययौ ॥ सातुवैपद्मिनीनारीदुर्वासःशापमोहिता ॥ ६२ ॥
अप्सरस्त्वंस्वयंत्यक्त्वाभूमिनारीत्वमागता ॥ द्वादशाब्दप्रमाणेनसोषित्वाजगतीतले ॥ ६३ ॥ यक्ष्मणामरणंप्राप्यस्वर्गलोकमुपाययौ ॥
नवमासंकृतोवासस्तयाचाह्लादमंदिरे ॥ ६४ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चये
एकोनविंशोऽध्यायः ॥ १९ ॥ ७ ॥ सूतउवाच ॥ मुनेपांचालदेशेतुराजासीद्बलवर्द्धनः ॥ तस्यपत्नीविशालाक्षीजलदेवीतिविश्रुता ॥ १ ॥
विसेनवंशभूपालोवेदतत्त्वविशारदः ॥ दंपतीपूजयामासवरुणंयादसांपतिम् ॥ २ ॥ तस्यपुत्रावुभौजातौक्षत्रधर्मपरायणौ ॥ लहरोज्येष्ठतन
योमयूरध्वजएवहि ॥ ३ ॥ द्वादशाब्दवयोभूत्वामयूरध्वजएवसः ॥ आज्ञयाज्येष्ठबंधोश्चस्कंददेवमतोषयत् ॥ ४ ॥ यतेंद्रियस्तथा
मौनीवानप्रस्थपरायणः ॥ पंचाब्दंतद्व्रतीभूत्वाजपध्यानपरोभवत् ॥ ५ ॥ तदाप्रसन्नोभगवान्सेनानीरग्निभूःस्वयम् ॥ स्वरूपंदर्श
यामाससर्वाश्चर्यसमन्वितम् ॥ ६ ॥ मयूरध्वजएवापिदृष्ट्वासर्वमयंशिशुम् ॥ देवसेनासहायंचतुष्टावश्लक्ष्णयागिरा ॥ ७ ॥ मयूर
ध्वजउवाच ॥ जयतितेवपुर्दिव्यविग्रहंनयतिसर्वदादेवतागणान् ॥ पिबातिमात्रियंदुग्धमुत्तमंवधतिसर्वदादैत्यदानवान् ॥ ८ ॥ नमस्ते
देवसेनेशमहिषासुरमर्दन ॥ षडाननमहाबाहोतारकप्राणनाशक ॥ ९ ॥ प्रसन्नोभवसर्वात्मन्गुहशक्तिधरायच ॥ किंकरंपाहिमां
नित्यंशरणागतवत्सल ॥ १० ॥ इतिश्रुत्वास्तुतिंतस्यसेनानीस्तमुवाचवै ॥ किंतेऽभीष्टंनृपश्रेष्ठमत्तःसर्वमवाप्स्यसि ॥ ११ ॥
इत्युक्तस्तेनदेवेनभूपतिःप्राहनम्रधीः ॥ बलंमेदेहिभगवन्सहायंकुरुसर्वदा ॥ १२ ॥ तथेत्युक्त्वातुतंस्कंदस्तत्रैवान्तरधीयत ॥
सनृपस्तुप्रसन्नात्माकारयामासवैपुरम् ॥ १३ ॥ नाम्नामयूरनगरंनरवृंदसमन्वितम् ॥ द्वियोजनायामयुतंस्कंददेवेनरक्षितम् ॥ १४ ॥
लहरोनामतद्बंधुर्द्विदशाब्दप्रयत्नतः ॥ वरुणंपूजयामासनदीनदसमन्वितम् ॥ १५ ॥ तदाप्रसन्नोभगवान्वरुणोयादसांपतिः ॥

वरंब्रूहीतिवचनंप्रेम्णोवाचमहीपतिम् ॥ १६ ॥ इतिश्रुत्वाऽमृतमयंवचनंलहरोनृपः ॥ तुष्टावश्लक्ष्णयावाचापाशिनंपयसांपतिम् ॥ १७ ॥
॥ लहरउवाच ॥ ॥ यस्यचित्तंमहज्ज्ञेयंतपोबलसमन्वितम्॥अतःप्रचेतास्तेनामनमस्तुभ्यंप्रचेतसे ॥१८॥ रुणद्धिपयसावेगंनकेनाप्यवरु
धितः ॥ अतस्त्वंवरुणोनामनमस्तेवरुणायवै॥१९॥दैत्यानांबंधनार्थायदेवानांजयहेतवे ॥ दिव्यंपाशंत्वयानीतंपाशिनेतेनमोनमः ॥ २० ॥
इतिस्तुतस्तदादेवोराज्ञातेनैवधीमता ॥ नगरंकारयामासलहरीमथमुत्तमम् ॥ २१ ॥ त्रियोजनायामयुतंचतुर्वर्णसमन्वितम् ॥
स्वयंचग्रामरक्षार्थंतत्रोवासजलाधिपः ॥ २२ ॥ भूपस्तुतत्प्रसादेनप्रापराज्ञींशुभाननाम् ॥ रावीनाममहाश्रेष्ठाज्ञेयादेवांगनोपमा ॥ २३ ॥
तस्यांसजनयामाससुतान्षोडशसंमितान्॥धार्तराष्ट्रांशजान्मुख्यान्गजतुल्यबलान्वितान् ॥२४॥ तत्पश्चात्कन्यकाजातानाम्नामदनमंजरी ॥
द्वादशाब्दवयःप्राप्तेसुतायाःसतुभूपतिः ॥ २५ ॥ देवसिंहंवरंमत्वाचंद्रवंशिनमुत्तमम् ॥ प्राहूयज्येष्ठतनयंप्रेषयामासभूपतिः ॥ २६ ॥
रणधीरस्तुतनयोलक्षमुद्रान्वितोबली ॥ सहस्रशूरसहितःप्राप्तवान्समहावतीम् ॥ २७ ॥ नत्वापरिमलंभूपंतदीयान्कुलशालिनः ॥
स्वहेतुंवर्णयामासविवाहार्थंस्वसुःस्वयम् ॥ २८ ॥ श्रुत्वापरिमलोभूपोदेवसिंहंमहामतिम् ॥ आहूयवचनंप्राहविवाहार्थंमनःकुरु ॥ २९ ॥
देवसिंहस्तुबलवान्पितृव्यंप्राहनम्रधीः ॥ विवाहंनकरिष्यामिब्रह्मचर्यंव्रतंमम ॥ ३० ॥ बहुधाप्रार्थितस्सर्वैर्द्विजवृंदसमन्वितैः ॥
नतत्याजव्रतंश्रेष्ठंदेवसिंहोमहामतिः ॥ ३१ ॥ तदापरिमलोभूपोरणधीरंवचोऽब्रवीत् ॥ सुखखानिरयंबालोविवाहार्थंवदाम्यहम् ॥ ३२ ॥
तथेतिमत्वासनृपोरणधीरोगृहंययौ ॥ पितरंकथयामाससुखखानिर्महाव्रतः ॥ ३३ ॥ एतस्मिन्नन्तरेधूर्तोमहीपतिरुवाचतम् ॥
अयोग्योऽयंविवाहोऽत्रपावकीयेकुलोत्तमे ॥ ३४ ॥ शूद्रीयोऽत्रवरोराजन्वर्णसंकरकारकः ॥ तस्मात्त्वंसैन्यसहितोजेतुंतान्गंतुमर्हसि ॥ ३५ ॥
कारागारेलोहमयेबंधनंकुरुभूपते ॥ मत्कीर्तिःस्वर्गगानित्यंजगत्यंतेभविष्यति ॥ ३६ ॥ जितस्तैर्जम्बुकोराजानेत्रसिंहस्तुयोनृपः ॥
तथागजपतिर्भूपःपृथ्वीराजोमहाबलः ॥ ३७ ॥ आर्यसिंहस्तथान्येचजितास्तेबलवत्तराः ॥ इतिश्रुत्वावचोरम्यंलहरोनृपसत्तमः ॥ ३८ ॥
सेनांसंस्थापयामासचतुरंगबलान्विताम् ॥ चतुर्लक्षमितांश्रेष्ठांपालितांषोडशात्मजैः ॥ ३९ ॥ माघशुक्लदशम्यांचबलखानिंमहाबलः ॥

संप्राप्तः स्वकुलैस्सार्द्धंचतुर्लक्षबलान्वितम् ॥४०॥ देशेपांचालकेरम्येलहरीनगरेस्थितः ॥ द्वादशाब्देचकृष्णांशेतत्रवासमकारयत् ॥४१॥
नृपतेराज्ञयाशूरायुद्धायसमुपाययुः ॥ बलखानिस्तुधर्मात्माद्दृष्ट्वाशूरांस्तथागतान् ॥ ४२ ॥ वीरानाज्ञापयामासस्वकीयान्संगरेपुनः ॥
तयोर्युद्धमभूद्घोरंसेनयोर्लोमहर्षणम् ॥ ४३ ॥ पंचमेऽह्निदिवाप्राप्तेबलखानिर्महाबलः ॥ कृष्णांशेनैवसहितोरिपोर्वधमकारयत् ॥ ४४ ॥
पराजितास्तेशूराहतशेषाभयातुराः ॥ तान्दृष्ट्वाषोडशसुतारथंस्वंस्वंसमास्थिताः ॥ ४५ ॥ युद्धायाभिमुखंजग्मुर्धनुर्बाणविशारदाः ॥
कृष्णांशस्तांस्तथादृष्ट्वाशरवर्षसमन्वितान्॥४६॥एकाकीप्रययौशीघ्रंखड्गचर्मधरोबली ॥ तेषांधनूंषिसंछित्त्वाबद्ध्वातान्युद्धदुर्मदान्॥४७॥
आह्लादायददौवीरःकृष्णांशोरणकोविदः ॥ पुत्राणांबंधनंश्रुत्वालहरोनृपसत्तमः ॥४८॥ प्लावयामासतत्सैन्यंबलखानेर्महात्मनः ॥ जलीभूते
तथासैन्येजयन्तोबलवत्तरः ॥ ४९ ॥ वायव्यास्त्रेणसमरेशुशोषसकलंजलम् ॥ लहरस्यततःसेनामुवाहबहुयोजनम् ॥५०॥ तदातुभगवान्दे
वोवरुणोयादसांपतिः ॥ सुतामुद्वाहयामासलहरस्यमहीपतेः ॥५१॥ लहरोऽपिप्रसन्नात्माज्ञात्वासंजगतीतले ॥ भक्तिंचकारशुद्धानामंशानां
परयामुदा ॥ ५२ ॥ दत्त्वाचबहुधाद्रव्यंपरिक्रम्यपुनःपुनः ॥ स्वान्तेनिवेशयामासमासमात्रंप्रसन्नधीः ॥ ५३ ॥ अंशास्तेऽपिमहत्पूजांगृही
त्वालहरप्रदाम् ॥ दोलामारोप्यतांदेवींस्वगेहाययुर्मुदा ॥ ५४ ॥ इतितेकथितंविप्रकृष्णांशचरितंशुभम् ॥ सुखखानेर्विवाहंचश्रुत्वानंदम
वाप्नुयात् ॥ ५५ ॥ इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेविंशोऽध्यायः ॥ २० ॥ छ ॥
॥ ऋषिरुवाच ॥ गृहंगत्वाचतेवीराःकिंचक्रुश्चरितंशुभम् ॥ तंचकथयविप्रेन्द्रसर्वज्ञोऽसिमतोहिनः ॥ १ ॥ सूतउवाच ॥ ॥ गृहमागत्यते
सर्वेपरितोभूपतेःसभाम् ॥ गत्वावार्तांतथाचक्रुर्यथाजातोमहारणः ॥ २ ॥ श्रुत्वापरिमलोभूपोवाजिवृंदान्क्षयंगतान् ॥ आहूयसच
कृष्णांशंवचनंप्राहनम्रधीः ॥ ३ ॥ सिंधुदेशेचगंतव्यंत्वयाचबलशालिना ॥ पंचलक्षान्हयान्कृत्वापुनरागच्छवैगृहम् ॥ ४ ॥ इतिश्रु
त्वातुकृष्णांशोदेवसिंहेनसंयुतः ॥ स्वर्णभारसहस्रोष्ट्रान्गृहीत्वातरसाययौ ॥ ५ ॥ शूरैश्चदशसाहस्रैस्सार्द्धंतत्रसमागतः ॥
मयूरनगरीयत्रचतुर्वर्णसमन्विता ॥ ६ ॥ प्रातःकालेतुसंप्राप्तेमालाकारस्यवैसुता ॥ पुष्पानामसमासन्नाचारंभेकुसुमार्थिनी ॥ ७ ॥

कृष्णांशस्तुतदापूजांकृत्वादेवमयोमुदा ॥ जगामविपिनंरम्यंवसंतेपुष्पनालिके ॥ ८ ॥ बह्वाश्चर्ययुतंपुष्पंमत्तभ्रमरनादितम् ॥
दृष्ट्वामुमोहकृष्णांशस्तदर्थैस्वयमुद्यतः ॥ ९ ॥ एतस्मिन्नंतरेपुष्पापुष्पार्थेसमुपागता ॥ ददर्शदेवसदृशंषोडशाब्दमयंनरम् ॥ १० ॥
प्रसन्नवदनंशान्तामिंद्रनीलमणिद्युतिम् ॥ कृष्णांशस्तुशुभांनारींदृष्ट्वाश्चर्यमुपागतः ॥ ११ ॥ पप्रच्छवचसातांवैकस्येयंसुरसुंदरी ॥
स्वर्गलोकादिहायातायादिवापन्नगीस्वयम् ॥१२॥ इतिश्रुत्वाचसाप्राहमालाकारस्यवैसुता ॥ अहंशूद्रीमहाबाहोपुष्पार्थेसमुपागता ॥१३॥
पुष्पेणानेनभूपालतुलिताभूपतेःसुता ॥ नाम्नापुष्पवतींदेवीराधेवसगुणावली ॥ १४ ॥ देवैश्चप्रार्थिताबालारूपयौवनशालिनी ॥
मकरन्दभयाद्देवास्तस्यायोग्यानवैबलात् ॥ १५ ॥ शृणुतत्कारणंभूपमकरन्दोयथाभवेत् ॥ मयूरध्वजभूपेनसंप्राप्तंगुहतोवरम् ॥ १६ ॥
अजयोऽन्यैश्चकृष्णांशाद्दतेत्वंजगतीतले ॥ तन्मित्रंपृथिवीराजोराजराजःशिवप्रियः ॥ १७ ॥ सराज्यंकारयामासधर्ममेधंहरिप्रियम् ॥
तदाप्रसन्नोभगवान्यज्ञेशोयज्ञमूर्तिमान् ॥१८॥ मिथुनंजनयामासपावकात्सुंदराननम् ॥ मकरन्दःसुतोज्ञेयःकन्यापुष्पवतीमता ॥ १९ ॥
पंचमाब्दवयोभूत्वामकरंदोमहाबलः ॥ तुष्टावतपसाधर्मवेदधर्मपरायणः ॥ २० ॥ द्वादशाब्दवयःप्राप्तेमकरन्देनृपप्रिये ॥ प्रसन्नोभगवा
न्धर्मोददौतस्मैमहाहयम् ॥ २१ ॥ शिलामयंमहावेगंशत्रुसेनाक्षयंकरम् ॥ तमश्वंस्वयमारुह्यसर्वपूज्योह्यभूत्सुखी ॥ २२ ॥ तस्येदं
सुंदरंदिव्यंविपिनंसुरपूजितम् ॥ भवानर्हतिवैश्रेष्ठःपुष्पवत्याःकलेवरम् ॥ २३ ॥ इतिश्रुत्वातुवचनंकृष्णांशःस्मरपीडितः ॥ ददौबहुधनं
तस्यैमानिन्यागेहमागतः ॥ २४ ॥ देवसिंहस्तुकालज्ञोज्ञात्वामोहत्वमागतम् ॥ कृष्णांशंबोधयामासपद्यैःसांख्यसमुद्भवैः ॥ २५ ॥
कृष्णांशस्तुततस्सार्द्धंदेवसिंहेनतन्मयः ॥ सिंधुदेशंसमागत्यक्रीत्वासर्वहयांस्तदा ॥ २६ ॥ मासान्तेगृहमागत्यराज्ञेसर्वान्न्यवेदयत् ॥
पुष्पवत्याःशुभंरूपंध्यात्वापुष्पेरितंवली ॥ २७ ॥ कृष्णांशोमोहमागत्यतुष्टावजगदंबिकाम् ॥ कृष्णांशउवाच ॥ देवमायेमहामाये
नित्यशुद्धस्वरूपिणि ॥ त्राहिमांकामदेवार्तंपुष्पवत्यैप्रबोधय ॥ २८ ॥ मधुकैटभसंमोहेमहिषासुरघातिनि ॥ त्राहिमांकामदेवार्तंपुष्पव
त्यैप्रबोधय ॥ २९ ॥ धूम्रलोचनसंदाहेचंडमुंडविनाशिनि ॥ त्राहि० ॥ ३० ॥ रक्तबीजासृजंपीतेसर्वदैत्यभयंकरे ॥ त्राहिमां० ॥ ३१ ॥

निशुंभदैत्यसंघातेशुंभदैत्यविनाशिनि ॥ त्राहिमां० ॥ ३२ ॥ इतिस्तुत्वाचसुष्वापसवीरःपरमासने ॥ तदातुशारदादेवीतयोःस्वप्नप्रदर्श
नम् ॥ ३३ ॥ चकारप्रत्यहंदेवीवरदाभयकारिणी ॥ एवंगतेचतुर्मासेजलवृष्टिकरेमुने ॥ ३४ ॥ त्रिविंशाब्दवयश्चासीत्कृष्णांशस्ययश
स्करम् ॥ कार्तिकेकृष्णपक्षेतुगतोऽसौदेवसंयुतः ॥३५॥ मयूरनगरेरम्येमकरंदेनरक्षिते ॥ पुष्पागृहमुपागम्यतत्रवासमचीकरत्॥ ३६ ॥
एकदासुंदरंहारंकृष्णांशेनैवगुंठितम् ॥ मणिमुक्तायुतंरम्यंनानापुष्पसमन्वितम् ॥ ३७ ॥ गृहीत्वाप्रययौपुष्पापुष्पवत्याश्चमंदिरे॥सातुग्रैवेय
यकंदृष्ट्वात्वष्ट्रेवराचितंप्रियम् ॥ ३८ ॥ हृदिकृत्वासुमोहाशुकामिनीरातिरूपिणी ॥ अयेसखिमहामायेसत्यंकथयमेऽग्रतः ॥३९॥ ग्रैवेयकमिदं
रम्यंकुतःप्राप्तंममप्रियम् ॥ इतिश्रुत्वावचस्तस्यामकरंदभयातुरा ॥ ४० ॥ पुष्पापुष्पांजलिंकृत्वावचनंप्राहतांप्रति ॥ जीवदानंचमेदेहितार्हिते
कथयाम्यहम् ॥ ४१ ॥ तथेत्युक्तवतीकन्यांसाहमेभगिनीशुभे॥कृष्णानाममहारम्यासर्वलोकविमोहिनी॥४२॥महावत्यांगृहंतस्यामद्गृहेसास
मागता ॥ तयाविरचितंसुभ्रुग्रैवेयकमनुत्तमम्॥४३॥इतिश्रुत्वातुवचनंदेवीपुष्पवतीस्वयम् ॥ उवाचमालिनींवाक्यंशीघ्रंदर्शयतांमम॥४४॥
मकरंदभयाद्देवास्तथान्येपुरुषाभुवि॥मत्समीपेगतिर्नास्तितेषांसत्यंब्रवीम्यहम् ॥४५॥इतिश्रुत्वावचोघोरंपुष्पातुभयकातरा ॥ नोवाचवचनं
किंचित्पृष्टमानापुनःपुनः॥४६॥तदापुष्पवतीप्राहकिंतेभयमुपागतम्॥साहमेभगिनीरम्यायदित्वद्गृहमागता॥४७॥मोहितःपुरुषःकश्चिद्बला
त्तांहिभजिष्यति॥तर्हिमेमरणंज्ञेयंकुलधर्मपरायणे॥४८॥इतिश्रुत्वापुष्पवतीपुनःप्रोवाचधर्मिणी॥मयूरध्वजएवापिमात्पितानीतितत्परः॥४९॥
अयोग्यंयेकरिष्यंतितेयास्यंतियमालयम् ॥ अतस्त्वंशीघ्रमादायतद्दोलांचमदन्तिके ॥ ५० ॥ दर्शयित्वाचतांरम्यांपुनर्गच्छगृहंस्वकम् ॥
तथेतिमत्वासाशूद्रीगृहमागत्यभामिनी ॥ ५१ ॥ कृष्णांशंवर्णयामासयथाप्रोक्तंतयामुने ॥ इतिश्रुत्वावचोरम्यंकृष्णांशोबलवत्तरः॥५२॥
नासावेधंस्वयंकृत्वापुनर्नारीमयंवपुः ॥ जगामपुष्पयासार्द्धंदोलामारुह्यवीर्यवान् ॥ ५३ ॥ तदापुष्पवतीदेवीदृष्ट्वाकृष्णांमनोरमाम् ॥ उ
वाचवचनंपुष्पांवचःशृणुसखेमम ॥ ५४ ॥ यादृशीयंशुभानारीतादृशःपुरुषोमया ॥ स्वप्नांतेप्रत्यहंदृष्टोरममाणोमयासह ॥ ५५ ॥
कृष्णांशश्चतुतामाहदेशराजसुतोवरः ॥ उदयोनामविख्यातस्तस्याहंललितासखी ॥ ५६ ॥ प्रत्यहंरचितंहारमथपूजनहेतवे ॥ सर्वा

रस्तुगृहीत्वातद्देवींपूज्यन्यवेदयत् ॥ ५७ ॥ एकदाप्रस्थितंवीरंपुष्पमध्येशनैःशनैः ॥ औदासीन्यंचतंदृष्ट्वाप्रोवाचाहंसमागता ॥ ५८ ॥
मोहोऽयंतेकुतःप्राप्तःसत्वंकथयमाचिरम् ॥ इत्युक्तःसतुमामाहस्वप्नान्तेप्रत्यहंसखि ॥ ५९ ॥ मयादृष्टाशुभानारीरूपयौवनशालिनी ॥
तद्वियोगेनदुःखार्तंमुखंम्लानंत्वमागतम् ॥ ६० ॥ इतिश्रुत्वापुष्पवतीतामाहरुचिराननाम् ॥ विवाहोमेयदातेनसार्द्धंरम्योभविष्यति ॥६१॥
तदात्वांतर्पयिष्यामिबहुद्रव्यैःशुभानने ॥ अतस्त्वंगच्छतत्पार्श्वंशीघ्रंतस्मैनिवेदय ॥ ६२ ॥ इतिश्रुत्वातुतद्वाचंपुष्पाप्रेमसमन्विता ॥
दोलामारोप्यतांकृष्णांस्वगेहंगंतुमुद्यता ॥ ६३ ॥ दुर्गद्वारेतुसंप्राप्तेतदोलायांचभार्गव ॥ मकरंदोमहावीर्य्योद्वादशाब्दवयाबली ॥ ६४ ॥
दोलासमीपमागत्यददर्शरुचिराननाम् ॥ कृष्णामिन्दीवरश्यामांचारुनेत्रांमनोहराम् ॥ ६५ ॥ मुमोहबलवान्वीरोगोवर्द्धनकलांशकः ॥
प्रेम्णोवाचसचार्वंगिशृणुमेवचनंप्रिये ॥ ६६ ॥ मद्गृहंशीघ्रमागच्छपत्नीममभवाधुना ॥ इतिश्रुत्वातुसाकृष्णाविहस्योवाचभूपतिम् ॥६७॥
कुलीनस्त्वंमहावीरवह्निकुंडात्समुद्भवः ॥ षोडशाब्दवयास्तूणाशनिभल्लसमान्वितः ॥ ६८ ॥ त्वद्योग्याभूपतेःकन्याचंद्रसूर्य्यान्वयस्यवै ॥
अहंशूद्रीहीनतमाकथंयोग्यातवेहवै ॥ ६९ ॥ कन्याहंशूद्रजातेश्चब्रह्मचर्य्यव्रतेस्थिता ॥ इतिश्रुत्वातुवचनंमकरन्दोनृपात्मजः ॥ ७० ॥
बलाद्गृहीत्वातांनारींपस्पर्शहृदयेस्वयम् ॥ कृष्णांशस्तुतदातस्यदत्त्वातद्धृदयव्यथाम् ॥ ७१ ॥ मोहयित्वानृपसुतंसदेवःस्वगृहंययौ ॥
मकरन्दस्तुसंबुद्धोमदनाग्निप्रपीडितः ॥ ७२ ॥ गेहमागत्यपुष्पायाःसर्वंतस्यैन्यवेदयत् ॥ तत्स्नेहकातरंभूपंमकरंदंमहाबलम् ॥ ७३ ॥ पु
ष्पाहश्लक्ष्णयावाचाशृणुपार्थिवसत्तम ॥ महावतीपुरीरम्यातत्रकृष्णागृहंशुभम् ॥ ७४ ॥ त्वद्भयाच्चगतागेहंकृष्णांशस्यचसासखी ॥ रोदनं
कुर्वतीगाढंतवनिंदनतत्परा ॥ ७५ ॥ आगमिष्यतिवैवीरोबलैस्सार्द्धंमहाबली ॥ अतस्त्वंसर्वसैन्यानिसज्जीभूतानिवैकुरु ॥ ७६ ॥ जितोये
नमहावीरःपितृव्योलहरस्तव ॥ विवाहंकारयामासतद्बंधोःसुतयासह ॥ ७७ ॥ इतिश्रुत्वावचोघोरंमकरंदोमहीपतिः ॥ शतघ्नीःस्थापयामा
सदुर्गकूटेषुदारुणाः ॥ ७८ ॥ स्वसैन्यंचसमाहूयत्रिलक्षंखड्गसंयुतम् ॥ तत्रैवस्थापयामासराष्ट्ररक्षार्थमुद्यतः ॥ ७९ ॥ कृष्णांशस्तुगृहंप्रा
प्यबलखानिमुवाचतत् ॥ श्रुत्वासचमहावीरोभ्रातृमित्रसमन्वितः ॥ ८० ॥ पंचलक्षबलैस्सार्द्धंमयूरनगरंययौ ॥ शतघ्नीःपंचसाहस्रागजादश

॥

सहस्रकाः ॥ ८१ ॥ एकलक्षाहयाःसर्वैशेषाज्ञेयाःपदातयः ॥ उषित्वापक्षमात्रंतुमार्गेपांचालकेतदा ॥ ८२ ॥ मकरंदस्तुतच्छ्रुत्वाशानिभल्ल
करस्थितः ॥ सेनामाज्ञापयामासजहिशत्रून्महाबलान् ॥ ८३ ॥ श्रुत्वापदातयोलक्षाःशतघ्नीवह्निमाददन् ॥ तास्तुवैसप्तसाहस्राश्चक्रुःशत्रु
बलक्षयम् ॥ ८४ ॥ ग्रामस्यदक्षिणद्वारेहयारूढास्तदाययुः ॥ भुशुंडीक्षेपणीशक्तिखड्गयुद्धविशारदाः ॥ ८५ ॥ एकलक्षहयास्सर्वेमकरंद
स्यभूपतेः ॥ तयोश्चासीन्महद्युद्धंतुमुलंहयसेनयोः ॥ ८६ ॥ तदातुपश्चिमद्वारेगजाविंशत्सहस्रकाः ॥ तथादशसहस्रैश्चशत्रुभिःसहसंययुः ॥
॥८७॥उष्ट्रारक्षामहावीराश्चत्वारिंशत्सहस्रकाः ॥ बलखान्यादिभिःसार्द्धंयुयुधुर्दिशिचोत्तरे ॥ ८८ ॥ अहोरात्रमभूद्युद्धंतुमुलंलोमहर्षणम् ॥
ततःपराजितास्सर्वेबलखानेर्महाबलाः ॥ ८९ ॥ त्यक्त्वायुद्धंतुतेसर्वेदुद्रुवुश्चदिशोदश ॥ कृष्णांशोबिन्दुलारूढोबलखानिःकपोतगः ॥९०॥
मनोरथस्थितोदेवश्चाह्लादस्तुगजस्थितः ॥ पूर्वादिक्रमतोद्वारिगतास्तेरणदुर्मदाः ॥ ९१ ॥ सत्सरुंखड्गमुत्सृज्यचक्रुःशत्रुमहद्वधम् ॥ परा
जिताश्चतेशूरामकरंदमुपाययुः ॥ ९२ ॥ वाह्निपुत्रस्तुबलवान्वाजिनंचाशिलामयम् ॥ शानिभल्लकरग्राहीतमारुह्यरणंययौ ॥ ९३ ॥ कृष्णां
शाद्याश्चतेशूरारुरुधुस्सर्वतोदिशम् ॥ तंचकंठेददौखड्गंबलखानिर्महाबलः ॥ ९४ ॥ स्वभल्लंदेवसिंहश्चतमंकेचसमाहनत् ॥ आह्लादोवक्ष
सिशरंकृष्णांशःखड्गमुत्तमम् ॥९५॥ शिलावाजिप्रभावेनकश्मलंनजगामह ॥ सदृष्ट्वानिष्फलान्वीराञ्जगर्जध्वनिभैरवम् ॥ ९६ ॥ शानिभ
ल्लेनतेसर्वेमूर्छिताःसंबभूविरे ॥ तेऽश्वाःशिलाइववेगेनमूर्छिताश्चाभवन्क्षणात् ॥ ९७ ॥ मकरंदस्तुबलवान्बद्ध्वातान्युद्धदुर्मदान् ॥ प्रसन्नात्मा
ययौगेहंस्वपित्रेताहन्यवेदयत् ॥ ९८ ॥ दृष्ट्वापराजितान्वीरान्रूपणोभयकातरः ॥ महावतींपुरींप्राप्यभूपतिंसमवर्णयत् ॥ ९९ ॥ ब्रह्मानंद
स्तुतच्छ्रुत्वालक्षसैन्यसमन्वितः ॥ इंदुलेनसहायेनमयूरनगरंययौ ॥ १०० ॥ लिखित्वानिर्मलंपत्रंतद्राज्ञेत्वरितोददौ ॥ भूमिराजसुताकां
न्तांविद्धिमांमनुजर्षभ ॥ १०१ ॥ कृष्णांशायसुतांदेहिनाम्नापुष्पवतींशुभाम् ॥ नोचेन्मत्कठिनैर्बाणैःक्षयंयास्यंतिसैनिकाः ॥ १०२ ॥
निशम्येतिनृपश्रेष्ठोमयूरध्वजएवसः ॥ मकरंदेनसहितोद्विलक्षबलसंयुतः ॥ १०३ ॥ अहोरात्रंकृतंयुद्धंतेनसार्द्धंभयप्रदम् ॥ ब्रह्मानंदस्तुब
लवान्बाणयुद्धमचीकरत् ॥ १०४ ॥ मकरंदस्यभल्लेनमूर्छितःसोऽपतद्भुवि ॥ तदास्वर्णवतीपुत्रोजयन्तःशक्रसंभवः ॥१०५॥ स्वविद्यांदर्श

यामासमकरंदायधीमते ॥ वैष्णवास्त्रप्रभावेनशिलाश्वोभस्मचाभवत्॥१०६॥ब्रह्मास्त्रेणभृगुश्रेष्ठशनिर्भल्लोऽपतद्भुवि॥नागपाशेनतंबद्ध्वामकरं
दंमहाबलम् ॥१०७॥ विवाहंकारयामासकृष्णांशस्यमहात्मनः ॥ सेनामुज्जीवयामासस्वकीयामिन्दुलोबली॥१०८॥मंगलंकारयामासमकरं
दोगृहेगृहे॥ददौकन्यांविधानेनवहुद्रव्यसमन्विताम्॥१०९॥मयूरध्वजभूपालोमहास्नेहमचीकरत् ॥ नृपाज्ञांतेपुरस्कृत्ययगुस्सार्द्धंमहावतीम्
॥११०॥इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेकृष्णांशविवाहोनामैकविंशोऽध्यायः२१॥
॥ सूतउवाच ॥ महावत्यांतुसंप्राप्तेकृष्णांशेबलवत्तरे ॥ मंगलंकृतवान्राजातदापरिमलोबली ॥ १ ॥ पुष्पवत्यातयासार्द्धंगीतनृत्यावि
शारदः ॥ कृष्णांशःप्रत्यहंगेहेसुमोहसखिभिःसह ॥ २ ॥ हेमन्तशिशिरेवीरोरहःक्रीडांकरोतिवै ॥ यथाशक्रोऽप्सरोभिश्चतथैवह्युदयो
बली ॥ ३ ॥ ग्रामधर्मंनकृतवान्सर्वस्पर्शविशारदः ॥ एकदानृत्यक्रीडायांदेवीपुष्पवतीस्वयम् ॥ ४ ॥ कृष्णांशंवचनंप्राहपूर्वजन्मानेको
भवान् ॥ इतिश्रुत्वोदयोवीरोविहस्योवाचवैवचः ॥ ५ ॥ नृपोहंचंद्रहासश्चपूर्वजन्मनिहेप्रिये ॥ बाल्यात्प्रभृतिमेदुःखंप्राप्तंदैवाविनिर्मि
तम् ॥ ६ ॥ शालग्रामशिलापूजाप्रत्यहंवैमयाकृता ॥ तेनपुण्यप्रभावेनसार्वभौमोबभूवह ॥ ७ ॥ मृतेऽहानितुसंप्राप्तेशालग्रामेमनोदधौ ॥
सायुज्यंमेहरेश्चासीत्स्वयंब्रह्मप्रसादतः ॥ ८ ॥ कलिनाप्रार्थितोविष्णुःकालात्मापरमेश्वरः ॥ स्वदेहान्मांतुनिष्काश्यभूमौजनुमचीकरत्॥९॥
यदायदाहिधर्मस्यग्लानिर्भवतिवैप्रिये ॥ युगधर्मस्यमर्यादास्थापनायभवाम्यहम् ॥ १० ॥ सत्येतुमानसीपूजादेवानांतृप्तिहेतवे ॥ त्रेता
यांवाह्निपूजाचयज्ञदानादिकाक्रिया ॥ ११ ॥ द्वापरेमूर्तिपूजाचदेवानांवैप्रियंकरी ॥ कलौतुदारुणेप्राप्तेब्रह्मपूजनमुत्तमम् ॥ १२ ॥ अहंहं
सःसत्ययुगेत्रेतायांयज्ञपूरुषः ॥ हिरण्यगर्भश्चप्रियेद्वापरेऽहंसुखप्रदः ॥ १३ ॥ शालग्रामःकलौप्राप्तेदेवानांतृप्तयेह्यहम् ॥ मुनयोदेवतास्स
र्वेतथापितृगणाःप्रिये ॥ १४ ॥ सर्वेतेतृप्तिमायांतिशालग्रामस्यपूजनात् ॥ द्विजातिभिस्त्रिवर्णैश्चपूजनचंदनादिकैः ॥१५॥ शूद्रैश्चस्नानमात्रे
णभक्तिभावेनपूजनम् ॥ म्लेच्छैश्चदर्शनंपुण्यंविनयाद्भक्तिभावतः ॥१६॥ शालग्रामःस्वयंब्रह्मसच्चिदानंदविग्रहम् ॥ तस्यदर्शनमात्रेणक्षयंया
स्यंतिवैमलाः॥१७॥इतितेकथितंदेवियुगमर्यादमुत्तमम्॥पुरात्वंकस्यतनयासत्यंकथयमेऽचिरम्॥१८॥पुष्पवत्युवाच ॥ पूर्वजन्मनिवेश्याहं

चंद्रकांतिरितिश्रुता॥गाननृत्यादिकंवाद्यंदेवस्याग्रेमयाकृतम् ॥१९॥ तेनपुण्यप्रभावेनस्वर्गलोकमुपागता॥ देवैश्चप्रार्थितातत्ररूपयौवनशा
लिनी॥२०॥ब्रह्मचर्येनतत्याजस्वर्गलोकेऽपिवैह्यहम्॥तस्यपुण्यप्रभावेनउषाबाणसुताऽभवम्॥२१॥अनिरुद्धःस्वयंब्रह्मममपाणिंगृहीतवान्॥
कलिनाप्रार्थितोदेवोममस्वामीस्वहेतवे ॥ २२ ॥ अर्चावतारमासाद्यमार्कंडेयस्थलंगतः ॥ स्वप्रसादस्यमहिमादर्शितस्तेनतत्रवै ॥ २३ ॥
अत्रैवस्थितिमर्यादोदारुरूपस्यमेपतेः ॥ अहंतस्याज्ञयास्वामिञ्जम्बुकस्यसुताभवम् ॥ २४ ॥ रूपदिव्यसमायुक्तानाम्नाहंविजयैषिणी ॥
कृतंममैवमरणंत्वद्भ्रात्राबलखानिना ॥ २५ ॥ मकरंदस्यभगिनीभूत्वात्वांपतिमागता ॥ तेनदोषेणत्वद्भ्रातायातनांतीव्रमागतः ॥ २६ ॥
राज्ञइन्नगठस्यैवगेहेगजपतेःस्वयम् ॥ इत्युक्त्वामौनमास्थायमेनैवपतिनासह ॥ २७ ॥ होलिकासमयेप्राप्तेमलिनास्नेहदुःखिता ॥
सुतांचंद्रावलींरम्यांस्वप्रांतेसाददर्शह ॥ २८ ॥ रुरोदनिशिदुःखानिस्वसुतास्नेहकातरः ॥ तदोदयोमहावीरोज्ञात्वारोदनकारणम् ॥ २९ ॥
शूरैश्चदशसाहस्रैस्सार्द्धंबहुधनैर्युतः ॥ एकाकीप्रययौवीरोयत्रचंद्रावलीगृहम् ॥ ३० ॥ महीपतिस्तुतच्छत्रुर्ज्ञात्वाकारणमुत्तमम् ॥
पश्चाज्जगामकार्यार्थीसतुदुर्योधनांशकः ॥ ३१ ॥ बलीठाठमितिख्यातंग्रामंयादवपालितम् ॥ वीरसेनोनृपस्तत्रत्रिलक्षबलसंयुतः ॥ ३२ ॥
अष्टौसुताश्चतस्यासन्रूपयौवनशालिनः ॥ कामसेनःप्रसेनश्चमहासेनस्तथैवच ॥ ३३ ॥ सुखसेनोरूपसेनोविष्वक्सेनोमधुव्रतः ॥
मधुपश्चक्रमाज्जातायादवांशाश्चयादवाः ॥ ३४ ॥ तत्रगत्वाचकृष्णांशस्सभार्यांनरकेसरी ॥ दंडवत्प्रणतोभूत्वावीरसेनंमहीपतिम् ॥ ३५ ॥
मलनालिखितंपत्रंदत्त्वाराज्ञेमहामनाः ॥ दशभारंसुवर्णस्यपुनर्वासमचीकरत् ॥ ३६ ॥ व्यंजनानिविचित्राणिभुक्त्वायादवसंयुतः ॥
चंद्रावलींसमागत्यकुशलंचन्यवेदयत् ॥ ३७ ॥ प्रेमोत्सुकाचभगिनीकृष्णांशंप्राहदुःखिता ॥ भवान्द्व्यब्दवयावीरतदाहंचविवाहिता ॥३८॥
विंशदब्दंततोजातंविस्मृतापितृमातृभिः ॥ समर्थेनत्वयावीरसंस्मृताभगिनीस्वयम् ॥ ३९ ॥ अद्यमेसफलंजन्मजीवितंसफलंचमे ॥
बंधुदर्शनमात्रेणसर्वंचसफलंमम ॥ ४० ॥ प्रसन्नात्मोदयस्तत्रभगिनींप्राहनम्रधीः ॥ जम्बुकेनगृहंसर्वंलुंठितंबलशालिना ॥ ४१ ॥
तस्यदुःखेनभूपालोभयभीतोदिनेदिने ॥ महत्कष्टेनविजयोजम्बुकाच्चाभयोऽभवत् ॥ ४२ ॥ महीराजस्तुबलवान्रुरोधनगरींमम ॥

मयाविवाहितोभ्राताब्रह्मातत्सुतयासह ॥ ४३ ॥ पुनश्चसिंहलद्वीपेजयंतार्थैवयंगताः ॥ एवंविधानिदुःखानिबहूनिह्यभवन्पितुः ॥ ४४ ॥
अतस्त्वांप्रतिसुप्रीतावयंभगिनिकिंकराः ॥ मृदुवाक्यमितिश्रुत्वातदाचंद्रावलीमुदा ॥ ४५ ॥ गेहंनिवासयामासस्वकीयंप्रेमविह्वला ॥
एतस्मिन्नन्तरेधूर्तोमहीपतिरुपाययौ ॥ ४६ ॥ सभायांवीरसेनस्यराज्ञातेनैवसत्कृतः ॥ वार्तांतरंसमासाद्यतमुवाचमहीपतिः ॥ ४७ ॥
निष्कासिताश्चतेसर्वेराज्ञाह्लादादयःखलाः ॥ चौरितोनृपतेःकोशोहीनजात्यैर्महाबलैः ॥ ४८ ॥ तदातुकुंठिताःसर्वेश्रृंशियाख्यपुरेऽवसन् ॥
छिद्रदर्शीतुकृष्णांशोगेहेतवसमागतः ॥ ४९ ॥ चंद्रावल्याश्चवैदोलांगृहीत्वासगमिष्यति ॥ सत्यंब्रवीमिभूपालनान्यथावचनंमम ॥ ५० ॥
इतिश्रुत्वावीरसेनोज्ञात्वातत्सत्यकारणम् ॥ कामसेनंसमाहूयचंद्रावलिपतिंसुतम् ॥ ५१ ॥ वचनंप्राहभोःपुत्रबंधनंकुरुतस्यवै ॥
इतिश्रुत्वाकामसेनोविषमादायदारुणम् ॥ ५२ ॥ भोजनायददौतस्यज्ञात्वाचंद्रावलीतदा ॥ भ्रातुरंतिकमासाद्यपात्रमादायसाययौ ॥५३ ॥
कामसेनश्चकुपितोगृहीत्वादंडवेतसम् ॥ स्वप्रियांताडयामाससदृष्ट्वातंतदाकुपत् ॥ ५४ ॥ गृहीत्वाभुजयोस्तांवैबंधनायसमुद्यतः ॥
बंधनत्वंगतेपुत्रेवीरसेनोमहाबलः ॥ ५५ ॥ पुत्रानाज्ञापयामासतस्यबंधनहेतवे ॥ एतस्मिन्नन्तरेवीरोदोलामादायसत्वरम् ॥ ५६ ॥
सेनामध्येसमागम्यमहद्युद्धमचीकरत् ॥ एकतोदशसाहस्रास्त्रिलक्षास्तुतथैवते ॥ ५७ ॥ अहोरात्रमभूद्युद्धंदारुणंरोमहर्षणम् ॥
हतालक्षामहाशूराउदयस्यसहस्रकाः ॥ ५८ ॥ शेषाःप्रदुद्रुवुस्सर्वेयादवाभयकातराः ॥ दृष्ट्वापराजितान्सैन्यान्सप्तपुत्रामहाबलाः ॥ ५९ ॥
स्वान्गजांश्चसमारुह्यकृष्णांशंरुरुधूरुषा ॥ सर्वारोबिंदुलारूढोभूमौकृत्वागजासनान् ॥ ६० ॥ तेषामस्त्राणिसंच्छित्त्वाबध्नातिबलदर्पितः ॥
इतिश्रुत्वावीरसेनःसूर्यभक्तिपरायणः ॥ ६१ ॥ सौरमस्त्रंसमादायतस्यसैन्यमदाहयत् ॥ तेनास्त्रेणैवकृष्णांशःसहयोमूर्च्छितोभुवि ॥ ६२ ॥
वीरसेनस्तुतंबद्ध्वामोचयित्वासुतान्वधूम् ॥ स्वगेहमागतस्तूर्णंनानावाद्यान्यवादयत् ॥ ६३ ॥ हतशेषास्तदावीराःकृष्णांशस्यययुर्दश ॥
हेतुंपरिमलस्याग्रेसर्वमूचुस्तदादितः ॥ ६४ ॥ महीपतिंमहाधूर्तंमत्वाराजाब्रवीदिदम् ॥ गच्छत्वंमलनापुत्रलक्षसैन्यसमन्वितः ॥ ६५ ॥
बद्ध्वास्वभगिनीकांतंस्वबंधुंमोचयाशुवै ॥ इतिश्रुत्वाचससुतोलक्षसेनासमन्वितः ॥६६॥ शीघ्रंगत्वाचनगरींरुरोधबलवान्रुषा ॥ युद्धीभूतेब

लेतस्मिन्वीरसेनोनृपोत्तमः ॥ ६७ ॥ सौरमस्त्रमुपादायदाहनार्थंसमुद्यतः ॥ सज्जीभूतेतदस्त्रेतुब्रह्मानंदोमहाबली ॥६८॥ब्रह्मास्त्रेणैवसशरंवार
यामासवैरुषा॥दृष्ट्वाभयान्वितोभूपस्तमेवशरणंययौ॥६९॥ब्रह्मानंदस्तुतंभूपंवचनंप्राहनिर्भयः॥धूर्तवाक्येनहेभूपमद्बंधुर्वधितस्त्वया ॥७०॥
अवध्याचसदानारीत्वत्सुतस्तामताडयत् ॥ अतस्त्वंभगिनीयुक्तंस्वसुतंदेहिमेनृप ॥ ७१॥ इतिश्रुत्वाचनृपतिर्वचनंप्राहनम्रधीः॥मत्सुताच
गृहे नास्तिकामसेनंगृहाणभोः ॥७२॥ इत्युक्त्वावीरसेनश्चसुतंचंद्रावलींतदा ॥ दत्त्वातस्मैप्रसन्नात्मातत्प्रस्थानमकारयत् ॥ ७३ ॥ ब्रह्मान
न्दोऽपिबलवान्कृष्णांशेनसमन्वितः ॥ सेनयाशीतिसाहस्र्याययौसार्द्धंमहावतीम् ॥ ७४ ॥ मलनास्वसुतंदृष्ट्वाप्रेमविह्वलकंपिता ॥
स्नापयित्वाश्रुधाराभिर्द्विजातिभ्योददौधनम् ॥ ७५ ॥ इतितेकथितंविप्रकृष्णांशचरितंशुभम् ॥ शृण्वतांकलिपापघ्नंकथयिष्यामिवैपुनः ॥
॥ ७६ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ छ ॥
॥ सूतउवाच ॥ ॥ चतुर्विंशाब्दकेप्राप्तेकृष्णांशेबलशालिनि ॥ इषशुक्लदशम्यांचकृतोराज्ञामहोत्सवः ॥ १ ॥ भोजयित्वाद्विजश्रेष्ठा
न्दत्त्वातेभ्योहिदक्षिणाः ॥ स्वभृत्येभ्यस्तथावित्तंयथायोग्यंक्रमाद्ददौ ॥ २ ॥ कार्तिक्यांशुभसंयोगेकृष्णांशोबलसंयुतः ॥ इन्दुलेनच
संयुक्तोदेवसिंहेनसंयुतः ॥ ३ ॥ अयुतैःस्वर्णद्रव्यैश्चशूरैर्दशसहस्रकैः ॥ ययौबर्हिष्मतीस्थानेनानाभूपसमन्विते ॥ ४ ॥ एतस्मिन्नंतरेतत्र
चित्ररेखासमागता ॥ वृतासप्तालिभिर्देवीचित्रगुप्तप्रपूजिनी ॥ ५ ॥ गंगामध्येमहारम्यंयानंमायामयंतया ॥ कृतंकौतूहलयुतंवहत्संवसम
न्वितम् ॥ ६ । आगतास्तत्रराजानोनानातद्दर्शनोत्सुकाः ॥ तदोदयोदेवयुतोजयंतेनसमन्वितः ॥ ७ ॥ शतशूरैश्चसहितोदर्शनार्थमुपा
ययौ ॥ चित्ररेखामहारम्यावाल्मीकनृपतेःसुता ॥ ८ ॥ ददर्शसुंदरंकान्तमिंदुलंशशिवन्मुखम् ॥ येनस्वप्नांतरेरम्यंसार्द्धंभुक्तंतयासुखम् ॥
॥ ९ ॥ तमाह्लादसुतंज्ञात्वासाभिनंदनदेहजा ॥ कृत्वामोहमयंजालंशुकभूतंतदेंदुलम् ॥ १० ॥ हृत्वास्वयंवरेरम्येपरमानंदमाययौ ॥
पुनराहृत्यतांमायांस्वगेहाययमुदा ॥ ११ ॥ कृष्णांशस्तुतदाबुद्धानददर्शस्वकंशिशुम् ॥ देवसिंहंबोधयित्वापप्रच्छक्वगतःशिशुः ॥
॥ १२ ॥ कालज्ञोदेवसिंहोऽपिमोहिताश्चित्रमायया ॥ नज्ञातस्तेनवैबालःक्वगतःकेनवाहृतः ॥ १३ ॥ विस्मितंदेवसिंहंचदृष्ट्वाकृष्णांश

कोवली ॥ रुरोदोच्चैस्तदागाढंचित्रमायाविमोहितः ॥ १४ ॥ श्रुत्वातुरोदनंतस्यखलस्तत्रमहीपतिः ॥ ययौशीघ्रंप्रसन्नात्मायत्राह्लादःस्वयं
स्थितः ॥ १५ ॥ रुदित्वातत्रवैगाढंवचनंप्राहनम्रधीः ॥ उदयोनामतेभ्रातामोहयित्वामदेनतौ ॥ १६ ॥ देवमिन्दुलमेवासौहत्वाधारासुरो
पितम् ॥ प्रत्यक्षंचमयादृष्टंतेनवीरेणवैकृतम् ॥ १७ ॥ शतस्वर्णंचमेदत्त्वाविनयेनावरोधितः ॥ देवसिंहस्ततोबुद्ध्यानज्ञातंतेनयत्कृतम् ॥
॥ १८ ॥ इतिश्रुत्वातुवचनंनिश्चयंनाधिगच्छति ॥ एतस्मिन्नंतरेप्राप्तौतौवीरौरोदनेरतौ ॥ १९ ॥ तद्वियोगेनकृष्णांशःस्वदेहंत्यक्तुमुद्यतः ॥
आह्लादोनिश्चयंज्ञात्वाभाषितंचमहीपतिः ॥ २० ॥ कृष्णांशंताडयामासवैतसैश्चर्मकृंतनैः ॥ तस्यमातातथापत्नीभगिनीप्रेमदुःखिताः ॥
॥ २१ ॥ आह्लादंबोधयामासुर्धूर्तमायाविमोहितम् ॥ नबोधितस्तदावीरश्चित्रमायाविमोहितः ॥ २२ ॥ तदापुष्पवतीदेवीस्वपतिंभ्रातृपी
डितम् ॥ दृष्ट्वातत्रमताशीघ्रंपतिदुःखेनदुःखिता ॥ २३ ॥ विनापराधंकृष्णांशोमहानिंदामवाप्तवान् ॥ तदावेदविदोविप्राआह्लादंप्राहुरूर्जि
तम् ॥ २४ ॥ वधस्त्यागःसमोज्ञेयोयोग्यंबुद्ध्याविचारय ॥ इत्युक्तःसतुरीयात्मापुत्रशोकेनदुःखितः ॥ २५ ॥ चांडालांश्चसमाहूयबद्धा
तंपुत्रघातिनम् ॥ दत्त्वातेभ्यःसपत्नीकंवधंकुरुतमाचिरम् ॥ २६ ॥ अस्यनेत्रेसमुत्पाट्यमांदर्शयतसंयुताः ॥ इतिश्रुत्वागतास्तेवैगहनं
व्याघ्रसेवितम् ॥ २७ ॥ देवसिंहस्ततोगत्वादत्त्वातेभ्योमहद्धनम् ॥ संप्राप्यदंपतीवीरश्चांडालेभ्योवनंययौ ॥ २८ ॥ बलखानेस्तुयापत्नी
गजमुक्तापतिव्रता ॥ दंपतीपालयामासगुह्यगेहेमुदायुता ॥ २९ ॥ चांडालास्तेतुसंगत्यमृगनेत्रेचतंददुः ॥ देवसिंहस्तदागत्यक्रोधात्माच
तमब्रवीत् ॥ ३० ॥ धिक्त्वांपापंदुराचारंत्वयामेहिंसितःसखा ॥ जीवतस्त्वत्सुतोभूमौतदन्वेषणहेतवे ॥३१॥ यास्यामिविविधान्राष्ट्रान्सत्यं
सत्यंब्रवीम्यहम् ॥ इत्युक्त्वाप्रययौवीरःशिंशियाख्यपुरंशुभम् ॥३२॥ गजमुक्तामनुज्ञाप्यदंपतीप्राप्यनिर्भयः॥मयूरनगरंरम्यंनिशिघोरंसमा
ययौ॥३३॥मकरंदस्तुबलवाञ्ज्ञात्वातत्सर्वकारणम्॥स्वसुःपतिंचभगिनींस्वांतिप्रेम्णान्यवासयत्॥३४॥ धर्ममाराधयामासयज्ञैर्नानाविधैःस्त
वैः ॥ प्रसन्नोधर्मराजश्चमकरन्दमुवाचह ॥३५॥ अभिनंदनभूपस्यसुताचित्रप्रपूजिनी ॥ नाट्यात्मजाकेशरिणीतत्सखीदंभकोविदा ॥३६॥
केशरिण्यागुरुर्ज्ञेयःकुतुकोयोगरूपधृक् ॥ तेनप्रसारितामायाशतयोजनमन्तरा ॥ ३७ ॥ शत्रुभिर्दुर्गमाभूमिःशत्रुपाषाणकारिणी ॥

चित्रगुप्तप्रभावेनानिर्भयोभूपतिःस्वयम् ॥ ३८ ॥ चित्ररेखाभूपसुताजयंतस्तुतयाहृतः ॥ नररूपधरोरात्रौशुकरूपधरोदिने ॥ ३९ ॥
इन्दुलश्चास्थितोदुःखीचित्रमायाविमोहितः ॥ कृष्णांशश्चभवान्देवःसहितःसूर्यवर्मणा ॥ ४० ॥ मयादत्तानियंत्राणिगृहीत्वातेमुदायुताः ॥
चित्ररेखांसमागत्यनृत्यादींस्तैःसमंकुरु ॥ ४१ ॥ मोहयित्वाचतांदेवींपाठित्वातन्मतंशुभम् ॥ पुनरागच्छशीघ्रंसैन्ययोगंपुनः कुरु ॥४२॥
इत्युक्त्वान्तर्दधेदेवस्सराजाविस्मयान्वितः ॥ कृष्णांशंवर्णयामासयथाधर्मेणभाषितम् ॥४३॥ फाल्गुनेमासिसंप्राप्तेत्रयस्तेयोगिरूपिणः ॥
ययुरिन्नगरंरम्यंनृत्यगीतविशारदाः ॥ ४४ ॥ मृदंगांकस्तदादेवोमकरंदोविपंचिवान् ॥ नृत्यगानकरोवीरःकृष्णांशःसर्वमोहनः ॥ ४५ ॥
मोहयित्वाचनगरंतथागजपतिंनृपम् ॥ सकुलंचससैन्यंचतुष्टोराजाऽब्रवीदिदम् ॥ ४६ ॥ वांछितंब्रूहिमेयोगिन्सश्रुत्वाप्राहनम्रधीः ॥
देहिमेसूर्यवर्माणंस्वसुतंकार्यहेतवे ॥ ४७ ॥ कृत्वाकार्यमहंशीघ्रंपुनर्दास्यामितेसुतम् ॥ विधिनानिर्मितोधर्मोराजभिर्विश्वरक्षणम् ॥ ४८ ॥
इतिश्रुत्वागजपतिर्दत्त्वातेभ्यःस्वकंसुतम् ॥ स्वराज्ञीमाययौराजागतास्तेकार्यतत्पराः ॥ ४९ ॥ पक्षमात्रेणबाह्लीकंनगरंप्रययुर्मुदा ॥
धर्मदत्तानियंत्राणिगृहीत्वाशत्रुमंदिरम् ॥ ५० ॥ आययुर्लास्यतत्त्वज्ञानृपमोहनतत्पराः ॥ सर्वेचनागराःप्राप्तास्तत्रक्षत्रगणामुदा ॥ ५१ ॥
मोहितास्तैश्चतेसर्वेगीतनृत्यविशारदैः ॥ महद्धनंददौतेभ्यस्तोमरान्वयसंभवाः ॥ ५२ ॥ तानादायपुनर्भूपःस्वगेहमभिनंदनः ॥
आययौगेहनृत्यार्थीकारयामासवैपुनः ॥ ५३ ॥ मकरंदस्तदावीणांमृदंगंभीष्मजोबली ॥ मंजरिंसूर्यवर्माचकृष्णांशोगाननृत्यकम् ॥५४॥
गृहीत्वामोदयामासुर्नारीवृन्दान्महोत्तमान् ॥ चित्ररेखास्वयंदृष्ट्वातेषांमोहनहेतवे ॥ ५५ ॥ मायांनिर्वापयामासनिष्फलासाऽभवत्क्ष
णात् ॥ मोहितातैश्चसादेवीतानुवाचमुदान्विता ॥ ५६ ॥ वांछितंब्रूहिमेवीरकृष्णांशश्चाहतांवधूम् ॥ शुकंदेहिचमेदेविनोचेच्छा
पंददाम्यहम् ॥ ५७ ॥ इतिश्रुत्वाचित्ररेखाशोकव्याकुलचेतना ॥ कृष्णांशंयोगिनंप्राहसत्यंकथयकोभवान् ॥ ५८ ॥ इंद्राद्यादेवतास्सर्वे
मयानिर्मितमायया॥मोहिताःक्षणमात्रेणनभवान्मोहितोमया ॥ ५९ ॥ देवोनारायणोवापिधर्मोवापिशिवःस्वयम् ॥इत्युक्तस्सतुकृष्णांशोवच
नंप्राहनिर्भयः ॥ ६० ॥ उदयोनाममेराज्ञिदेवसिंहोऽयमुत्तमः ॥ मच्छालोमकरंदोऽयंसूर्यवर्मातथाविधः ॥ ६१ ॥ इन्दुलस्यवियोगेनवयंयो

गित्वमागताः ॥ मद्गुरुश्चतथोन्मादीसंकुलस्तद्वियोगतः ॥ ६२ ॥ शुकंदेहिमहामायेइंदुलंदेहिवायादि ॥ इत्युक्त्वाशुरुरोदोच्चैर्हाइन्दुलमहा
बल ॥६३॥ दर्शनंदेहिमेशीघ्रंनोचेत्प्राणांस्त्यजाम्यहम् ॥ इत्येवंवादिनंवीरंचित्ररेखामहोत्तमा ॥ ६४ ॥ कृत्वालज्जांपुनःप्राहमांचपुत्रंगृहाण
भोः ॥ कृत्वानरमयंरूपंस्वकान्तंसर्वसुंदरम् ॥ ६५ ॥ पतित्वातच्चरणयोरुरोदोच्चैश्चदंपती ॥ तथाविधौचतौदृष्ट्वाकृष्णांशोहर्षसंयुतः॥६६॥
इंदुलेनैवलिखितंगृहीत्वापत्रमुत्तमम् ॥ धर्मयंत्रप्रभावेनमयूरनगरंययौ ॥ ६७ ॥ सूर्यवर्मागतोगेहंमकरंदेनमानितः ॥ देवसिंहस्तुबलवान्गृ
हीत्वापत्रमुत्तमम् ॥ ६८ ॥ ययौमनोरथारूढोयत्राह्लादःशुचान्वितः ॥ कोभवानितितंप्राहमहोन्मादीवदृश्यते ॥ ६९ ॥ देवसिंहंचमांवि
द्धित्वत्पुत्रान्वेषणेरतम् ॥ पत्रंगृहाणभोवीरलिखितंत्वत्सुतेनवै ॥ ७० ॥ इतिश्रुत्वासआह्लादश्चाह्लादंपरमाप्तवान् ॥ ज्ञात्वातत्कारणंसर्वं
यथाविधिसुतोहृतः ॥ ७१ ॥ महीपतिंसमाहूयवचनंप्राहनम्रधीः ॥ सत्यंकथयमेभूपकृष्णांशेनहृतस्सुतः ॥ ७२ ॥ सहोवाचश्रुतंवीरकृ
ष्णांशेनयथाहृतम् ॥ इत्युक्त्वातुविहस्याशुकार्यसिद्धिमुपागतः ॥ ७३ ॥ आह्लादःक्रोधताम्राक्षःकेशानाकृष्यतंमुदा ॥ वेतसैस्ताडयामा
सस्वहस्तेनपुनःपुनः ॥ ७४ ॥ श्रुत्वापरिमलोराजासपत्नीकस्समागतः ॥ बहुधामोदयामासरामांशंबहुरूपिणम् ॥ ७५ ॥ अरेधूर्तमहापा
पिन्मद्बंधुर्घातितस्त्वया ॥ गतोयत्रममप्राणस्सकुलंत्वांनयाम्यहम् ॥ ७६ ॥ तदामहीपतिर्दुःखीनिःश्वासोमौनमास्थितः ॥ तदघंहृदिसं
स्थाप्यमहापीडामवाप्तवान् ॥ ७७ ॥ एतस्मिन्नंतरेवीरोबलखानिःसमागतः ॥ विमुच्यमातुलंधूर्तंज्येष्ठवधाच्चदुःखितः ॥ ७८ ॥ सचकारविं
वाहार्थमुद्योगंभ्रातृजस्यवै ॥ नेत्रसिंहोनृपःप्राप्तोलक्षसैन्यसमन्वितः ॥ ७९ ॥ तारकश्चसमायातस्सार्द्धंशूरसहस्रकैः ॥ वीरसेनःस्वयंप्राप्तःशूरैः
सार्द्धंनवायुतैः ॥ ८० ॥ तालनश्चततःप्राप्तोलक्षसैन्यसमन्वितः ॥ सूर्यवर्मातथाप्राप्तोलक्षसैन्यसमन्वितः ॥ ८१ ॥ ब्रह्मानंदःस्वयंप्राप्तस्त्रि
लक्षबलसंयुतः ॥ आह्लादश्चशुचाविष्टोलक्षसैन्यसमन्वितः ॥८२ ॥ हाबंधोक्वगतस्त्वंवैमांत्यक्त्वापुरुषाधमम् ॥ इत्युक्त्वाश्रयर्यौवीरःशोक
व्याकुलचेतनः ॥ ८३ ॥ बलखानिस्तुबलवाँल्लक्षसैन्यसमन्वितः ॥ देवसिंहेनसहितोबाह्लीकंप्रत्यसौगमत् ॥ ८४ ॥ अहोरात्रप्रमाणेनमासे
कःपथिवैगतः ॥ ज्येष्ठकृष्णस्यपंचम्यांबाह्लीकग्राममाप्तवान् ॥ ८५ ॥ व्यूहःस्वकीयसैन्यानांरचितोबलखानिना ॥ एकोरथःस्थितो

युद्धेतत्पश्चात्संस्थितागजाः ॥ ८६ ॥ पंचाशतःक्रमात्तेषांवाजिनश्च शतंशतम् ॥ तेषांपश्चात्क्रमाज्ज्ञेयाःपत्तयोदशसंस्थिताः ॥ ८७ ॥
एकासेनाचज्ञेयासातत्प्रमाणंब्रवीम्यहम् ॥ एकोरथोगजास्सर्वेशतार्द्धंतुहयास्तुये ॥ ८८ ॥ सेनायांपंचसाहस्राःशतघ्न्यस्तुतथास्मृताः ॥
पंचायुतानिसेनायांसर्वेपदचराःस्मृताः ॥ ८९ ॥ एवंविधाश्चताःसेनाबलखानेश्चषोडश ॥ गजास्तुदशसाहस्रामदमत्ताःपृथग्ययुः ॥ ९० ॥
युद्धेऽस्मिन्गणितंह्येवंशूराःशत्रुप्रहारिणः ॥ अभिनंदनभूपस्यम्लेच्छाःपैशाचधर्मिणः ॥ ९१ ॥ त्रिलक्षाश्चहयारूढाएकलक्षाःशताग्नि
पाः ॥ एकलक्षापदचराभुशुंडीपरिघायुधाः ॥ ९२ ॥ तोमरान्वयसंयुक्ताःक्षत्रियाःप्रयुतानिवै ॥ गजस्थास्तत्रसंप्राप्तायत्राह्लादम
हाचमूः ॥ ९३ ॥ तयोश्चासीन्महद्युद्धंतुमुलंरोमहर्षणम् ॥ मदमत्ताश्चतेसर्वेनिर्भयारणमाययुः ॥ ९४ ॥ सप्ताहोरात्रमभवद्युद्धं
समरशालिनाम् ॥ बाह्लीकस्यार्द्धसेनाचक्षयंनीताचतैर्नृपैः ॥ ९५ ॥ एकलक्षाहताःसर्वेबलखानेश्चसैन्यपाः ॥ हाहाभूतेशत्रुसैन्येभयभी
तेदिशोगते ॥ ९६ ॥ हर्षिताबलखान्याद्याजयदुर्गेवचोऽब्रुवन् ॥ दृष्ट्वासैन्यविनाशंचराज्ञःसप्तकुमारकाः ॥ ९७ ॥ कौरवांशाश्चते
जग्मुर्यत्रजातोमहारणः ॥ महानंदश्चनंदश्चपरानंदोपनंदकौ ॥ ९८ ॥ सुनंदश्चसुरानंदःप्रनंदःक्रमतोभवाः ॥ गजस्थास्तेमहावी
रास्तोमरान्वयसंभवाः ॥ ९९ ॥ सेनांजघ्नुःशरैस्तीक्ष्णैर्बलखानेर्महात्मनः ॥ भयभीताश्चतेसर्वेब लखानिमुपाययुः ॥ १०० ॥ दृष्ट्वासै
न्यंपराभूतंबलखानिस्तदारुषा ॥ अभ्यधावतवेगेनकपोतस्थोमहाबली ॥ १०१ ॥ नंदंप्रतितथादेवःपरानंदंचतालनः ॥ उपनंदंसूर्यवर्मा
सुनंदंप्रतितारकः ॥ १०२ ॥ नेत्रसिंहःसुरानंदंप्रनंदंप्रतियादवः ॥ युध्यमानास्तुतेसर्वेपरस्परवधैषिणः ॥ १०३ ॥ दिनार्द्धमभवद्युद्धंबहु
वीरप्रणाशनम् ॥ पराजितास्तुतेपुत्राबाह्लीकस्यमहाबलाः ॥ १०४ ॥ त्यक्त्वायुद्धंययुर्गेहंभीरुकाबलखानिना ॥ दृष्ट्वातेषांबलंवीरमभि
नंदनभूमिपः ॥ १०५ ॥ कुतुकंचसमाहूयनाट्यांकेशरिणींतथा ॥ कथितंकारणंराज्ञायथाजातःपराजयः ॥ १०६ ॥ इतिश्रुत्वातुकुतुक
स्तमाश्वास्यमहीपतिम् ॥ सध्यात्वाशांबरींमायांमहादेवेननिर्मिताम् ॥ १०७ ॥ तत्सैन्यंमोहयामासशिलाभूतमचेतनम् ॥ तदाकेशरि
णीनाट्याअष्टौबद्ध्वामहाबलान् ॥ १०८ ॥ राज्ञःपार्श्वमुपागम्यदत्त्वातान्गेहमाययौ ॥ बाह्लीकश्चप्रसन्नात्माबद्ध्वातान्निगडैर्दृढैः ॥ १०९ ॥

लुंठितंद्राविणंतेषांकोशमध्येसमाक्षिपत् ॥ देव्याश्चवरदानेनदेवसिंहोभयातुरः ॥ ११० ॥ महावतींसमागम्यस्वर्णवत्यैन्यवेदयत् ॥ ज्ञात्वा स्वर्णवतीदेवीसर्वविद्याविशारदा ॥१११॥ श्येनींमूर्तिंसमास्थाययययौपुष्पवतींप्रति॥ दृष्ट्वातुदंपतीतत्रमकरंदगृहेस्थितौ॥११२॥रुदित्वाकथयामासयथाप्राप्तःपराजयः ॥ कृष्णांशस्तुतदादुःखीमकरन्दंवचोऽब्रवीत् ॥११३॥ गच्छवीरमयासार्द्धंमद्गुरुर्बंधनंगतः॥कुलक्षयेमहत्पापंसुप्रोक्तंपूर्वसूरिभिः॥११४॥निमग्नान्दुःखजलधौसमुद्धरममप्रिय॥इतिश्रुत्वातुतच्छ्यालःशूरायुतसमन्वितः॥११५॥संन्यस्तवेषमास्थायखड्गचर्मसमन्वितः ॥कृष्णांशेनहयारूढोबाल्हीकंत्वरितोययौ॥११६॥तदास्वर्णवतींदेवीपुष्पवत्यासमन्विता॥श्येनीरूपमुपास्थायययौयत्रमहारणः॥११७॥सांच्छित्त्वाशांबरींमायांबोधयित्वास्वसैनिकान्॥रुरोधनगरींतस्यबाल्हीकस्यमहात्मनः ॥११८॥ दृष्ट्वाताञ्छत्रुसंयुक्तान्कुतुकस्तुतयासह॥पुनश्चशांबरींमायांप्रेषयामासतान्प्रति॥११९॥छित्त्वासासकलांमायांबद्धातौदैत्यसन्निभौ ॥ नगरंदाहयामासतस्यभूपस्यमायया॥१२०॥नदाहोदाहमापन्नोनभस्मीभस्मवान्खलु ॥ माययाचकृतंचित्रंदेवीस्वर्णवतीस्वयम्॥१२१॥तदापुष्पवतींदेवीहत्वाकेशरिणींरुषा॥तन्मांसैस्तर्पयामासगृध्रगोमायुवायसान् ॥ १२२ ॥ कुतुकंचतथाभूतंहत्वास्वर्णवतीस्वयम् ॥ कारागारेलोहमयेस्थितान्वीरानमोचयत् ॥ १२३ ॥ पुनरागम्यसादेवीतयासार्द्धंशुभानना ॥ मकरन्दःस्थितोयत्रकृष्णांशेनसमन्वितः ॥ १२४ ॥ तेसर्वेविस्मिताश्चासञ्ज्ञात्वादेव्याविमोहिताः ॥ क्रोधवन्तोमहावीरायुद्धायसमुपाययुः ॥ १२५ ॥ पुनश्चासीत्तयोर्युद्धंसेनयोरुभयोर्मृधे ॥ बलखानिंमहानंदोनंदश्चाल्हादमाययौ ॥ १२६ ॥ परानंदस्तथादेवंतारकंचोपनंदनः ॥ सुनन्दोनेत्रसिंहंचसुरानंदश्चतालनम् ॥ १२७ ॥ प्रनन्दोवीरसेनंचब्रह्मानन्दंसभूपतिः ॥ गजस्थिताश्चतेसर्वेधनुर्युद्धपरायणाः ॥१२८॥ अहोरात्रमभूद्युद्धंतेषांचतुमुलंक्रमात् ॥ एतस्मिन्नंतरेरात्रौचित्ररेखासमागता॥१२९॥स्वकीयान्व्याकुलीभूतांस्तादृशांश्चविलोक्यवै॥ चित्रगुप्तंतदाध्यात्वाचित्रमायामचीकरत्॥१३०॥नानातद्वांधवाश्चासन्बहुधाचाभिनंदनाः॥तांदृष्ट्वाविस्मिताःसर्वेभयभीताश्चदुद्रुवुः॥१३१॥ त्यक्त्वायुद्धमयींभूमिंशोकव्याकुलचेतनाः॥पंचयोजनमागत्यततोवासमकारयत्॥१३२॥संध्याकालेतमोभूतेनिरुत्साहामहाबलाः॥हाकृष्णांशमहाबाहोशरणागतवत्सल॥१३३॥इंदुलस्तेकुमारोऽयंसंहृतश्चित्ररेखया॥

तथाविमोहितावीरावयंतेशरणंगताः ॥१३४॥ इत्युक्त्वारोदनंचक्रुःक्वगतोऽसिमहामते ॥ तदाकोलाहलश्चासीद्रुदतांबलशालिनाम् ॥१३५॥
आह्लादंगर्हयित्वातेमूर्छितासुविविह्वलाः ॥ आह्लादस्तुतथाश्रुत्वावज्रपाताहतःस्वयम् ॥ १३६ ॥ उन्मादिवत्तदाभूत्वाताडयामासवक्षसम् ॥
एतस्मिन्नंतरेयोगीकृष्णांशोभगवत्कलः ॥ १३७ ॥ चंद्रोदयेस्वयंप्राप्तश्चाष्टम्यांभृगुवासरे ॥ शूरश्चदशसाहस्रैर्मकरंदेनसंयुतः ॥ १३८ ॥
तत्सेनांलुंठयामासपालितांबलखानिना॥जित्वातान्सर्वभूपालान्गृहीत्वाविपुलंधनम् ॥१३९॥ पंचशब्दास्थितंबंधुंप्रत्यागत्यजगर्जवै॥तस्यश
ब्देनशेषांशोबोधितोबलशालिना॥१४०॥शकुनंशुभमालोक्यभुजावुत्थायवीर्यवान्॥स्वांकेनिवेशयामासकृष्णांशंयोगरूपिणम् ॥ १४१ ॥
स्नापयित्वाश्रुधाराभिःकृष्णांशंप्रेमविह्वलः ॥ दत्त्वाद्विजातिमुख्येभ्योवर्णयामासकारणम् ॥ १४२ ॥ कृष्णांशोऽपिप्रसन्नात्मास्वकीयांस
कलांकथाम् ॥ वर्णयित्वायथाभूतांपुनर्बाह्लीकमाययौ ॥ १४३ ॥ चित्रविद्यांस्वयंकृत्वापाठितांचित्ररेखया ॥ बद्ध्वाभिनंदनंभूपंससुतंच
समंत्रिणम् ॥ १४४ ॥ विवाहंकारयामासजयंतस्यतयासह ॥ बाह्लीकस्तुप्रसन्नात्मादत्वाचविपुलंधनम् ॥ १४५ ॥ स्वसुतांचित्ररेखांच
जयन्तायमुदाददौ ॥ शतंगजान्हयांस्तत्रसहस्रांश्चधनैर्युतान् ॥ १४६ ॥ शतंदासांस्तथादासीर्जयंतायस्वयंददौ ॥ प्रस्थानंकारयामासब
लखानेर्महात्मनः ॥ १४७ ॥ श्रावणेमासिसंप्राप्तास्तेसर्वेचमहावतीम् ॥ स्वंस्वंगेहंययुस्सर्वेभूपाश्चाह्लादमानिताः ॥ १४८ ॥ इतितेकथितं
विप्रचरित्रंकलिनाशनम् ॥ शृण्वतांसर्वपापघ्नंकथयिष्यामिवैपुनः ॥ १४९ ॥ इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्या
येकलियुगीयेतिहाससमुच्चयेत्रयोविंशोध्यायः ॥ २३ ॥छ॥ सूतउवाच ॥ कृष्णांशेचगृहंप्राप्तेचेन्दुलेचविवाहिते॥महीपतिस्सदादुःखीदेहलींप्र
तिचागमत् ॥ १ ॥ वृत्तांतंचनृपस्याग्रेकथयित्वासतारकः ॥ परंविस्मयमापन्नःकृष्णांशचरितंप्रति ॥ २ ॥ एतस्मिन्नंतरेमंत्रीचंद्रभट्ट
उदारधीः ॥ भूमिराजंवचःप्राहशृणुपार्थिवसत्तम ॥ ३ ॥ मयाचाराधितादेवीवैष्णवीविश्वकारिणी ॥ त्रिवर्षांतेचतुष्टाभूद्वरदाभयहारिणी
॥ ४ ॥ तयादत्तंशुभंज्ञानंकुमतिध्वंसकारणम् ॥ ततोऽहंज्ञातवान्भूत्वाकृष्णांशंप्रतिभूपते ॥ ५ ॥ चरित्रंवर्णयामासतस्यकल्मषना
शनम् ॥ इत्युक्त्वासचशुद्धात्माग्रंथंभाषामयंशुभम् ॥ ६ ॥ माहात्म्यंदेविभक्तानांश्रावयामासवैसभाम् ॥ तच्छ्रुत्वाभूमिराजस्तुविस्मि

तश्चाभवत्क्षणात् ॥ ७ ॥ महीपतिस्तदाप्राहादिव्याश्वबलदर्पितः ॥ उदयोनामबलवान्यस्यैवंवर्णिताकथा ॥ ८ ॥ चत्वारोवाजिनो
दिव्याजलस्थलखगाश्वते ॥ शीघ्रंतांश्चसमाहृत्यस्वयंभूपबलीभव ॥९॥ इतिश्रुत्वासनृपतिःश्रुतवाक्यविशारदम् ॥ आहूयकुंदनमलंप्रेषया
माससत्वरम् ॥ १० ॥ महावतींसमागत्यसदूतोभूपतिंप्रति ॥ उवाचवचनंप्रेम्णामहीराजस्यभूपतेः ॥ ११ ॥ वाजिनस्तेहिचत्वा
रोदिव्यरूपाःशुभप्रभाः ॥ दर्शनार्थंतववधूर्वेलानाममात्मजा ॥ १२ ॥ तयाहूतान्हयान्भूपदेहिमेविस्मयंत्यज ॥ नोचेद्वेलाग्नि
नासर्वेक्षयंयास्यंतिसैन्यपाः ॥ १३ ॥ इतिश्रुत्वावचोघोरंसभूपोभयकातरः ॥ आह्लादादीन्समाहूयवचनंप्राहनम्रधीः ॥ १४ ॥
हयान्स्वान्स्वान्मुदादेहिमदीयंवचनंकुरु ॥ इतिश्रुत्वासआह्लादोध्यात्वासर्वमयींशिवाम् ॥ १५ ॥ उवाचमधुरंवाक्यंशृणुभूप
शिवप्रिय ॥ यत्रनःसंस्थिताःप्राणास्तत्रतेवाजिनःस्थिताः ॥ १६ ॥ नदास्यामोवयंराजन्सत्यंसत्यंनचान्यथा ॥ इतिश्रुत्वा
वचस्तस्यराजापरिमलोबली ॥ १७ ॥ शपथंकृतवान्घोरंशृण्वतांबलशालिनाम् ॥ भोजनंब्रह्ममांसस्यपानीयंगोऽसृजोपमम् ॥ १८ ॥
शय्यास्वमातृसदृशीब्रह्महत्योपमासभा ॥ ममराष्ट्रेचयुष्माभिर्वासःपापमयोमहान् ॥ १९ ॥ इतिश्रुत्वातुशपथंदेवकीशोकतत्परा ॥
चकाररोदनंगाढंसगेहजनाविग्रहा ॥ २० ॥ पंचविंशाब्दकेप्राप्तेकृष्णांशेयोगतत्परे ॥ भाद्रशुक्लचतुर्दश्यांतद्गेहाद्धर्मतत्पराः ॥ २१ ॥
निर्ययुःकान्यकुब्जंतेजयचंद्रेणपालितम् ॥ स्वर्णवत्यापुष्पवत्यासहिताश्चित्ररेखया ॥ २२ ॥ इन्दुलःप्रययौशीघ्रसयुताश्वबलैस्सह ॥
करालंहयमारुह्यपंचशब्दंचतात्पिता ॥ २३ ॥ कृष्णांशोबिंदुलारूढोदेवकीमनुसंययौ ॥ त्यक्त्वातंभूपतेर्ग्रामंसर्वसंपत्समन्वितम् ॥ २४ ॥
पथित्र्यहमुषित्वातेजयचंद्रमुपाययौ ॥ नत्वातंभूपतिंप्रेम्णाकथित्वासर्वकारणम् ॥ २५ ॥ उषित्वाशीतलास्थानेपूजयामासचंडिकाम् ॥
जयचंद्रस्तुभूपालोदेवसिंहेनवर्णितः ॥ २६ ॥ तेभ्यश्चनददौवृत्तिंनृपःपरिमलाज्ञया ॥ कुंठितोदेवसिंहस्तुगत्वाकृष्णांशमुत्तमम् ॥ २७ ॥
कथित्वाकारणंसर्वंसश्रुत्वारोषमादधौ ॥ त्वरितंबिंदुलारूढोहयपंचशतावृतः ॥ २८ ॥ लुंठयामासनगरंपालितंलक्षणेनतत् ॥ दृष्ट्वातंल
क्षणोवीरोहस्तिनःपृष्ठमास्थितः ॥ २९ ॥ शरेणताडयामासकृष्णांशहृदयंदृढम् ॥ निष्फलत्वंगतोबाणोविष्णुमंत्रेणप्रेरितः ॥ ३० ॥

विस्मितःसतुभूपालोवाहनाद्भूमिमागतः ॥ नत्वातच्चरणौदिव्यौकुलिशादिभिरन्वितौ ॥ ३१ ॥ तुष्टावदंडवद्भूत्वालक्षणोगद्गदंगिरा ॥
॥ लक्षणउवाच ॥ ॥ वैष्णवंविद्धिमांस्वामिन्विष्णुपूजनतत्परम् ॥ ३२ ॥ जानेऽहंत्वांमहाबाहोकृष्णशक्त्यवतारकम् ॥ त्वद्हतेको
हिमेबाणोनिष्फलःकुरुतेभुवि ॥ ३३ ॥क्षमस्वममदौरात्म्यंनाथतेमाययाकृतम् ॥ इत्युक्त्वातेनसहितोजयचंद्रमहीपतिम् ॥३४॥गत्वातत्क
थयामासयथाप्राप्तंपराजयम् ॥ नृपस्तयोःपरीक्षार्थंयौतुच्छायाविमोहितौ ॥ ३५ ॥ गजौकुवलयापीडौत्यक्तवाञ्छीतलास्थले ॥ तदाह्ला
दोदयौवीरौगृहीत्वातौस्वलीलया ॥ ३६॥ चकर्षतुर्बलात्पुच्छेक्रोशमात्रंपुनःपुनः ॥ मृतौकुवलयापीडौदृष्ट्वाराजाभयातुरः ॥ ३७ ॥ ददौरा
जगृहंग्रामंतयोरर्थेप्रसन्नधीः ॥ इषशुक्लेतुसंप्राप्तेलक्षणोनामवैबली ॥ ३८ ॥ नृपाज्ञयाययौशीघ्रंतैश्चदिग्विजयंप्रति ॥ सप्तलक्षबलैस्सार्द्धं
तालनाद्यैश्चसंयुतः ॥ ३९ ॥ वाराणसींपुरींप्राप्यरुरोधनगरंतदा ॥ रुद्रवर्माचभूपालोगौडवंशयशस्करः ॥ ४० ॥ पंचायुतैःस्वसैन्यैश्चसार्द्धं
युद्धार्थमाप्तवान् ॥ याममात्रेणतंजित्वाषोडशाब्दस्यवैकरम् ॥ ४१ ॥ कोटिमुद्रामयंप्राप्यजयचंद्रायचार्पयत् ॥ मागधेशंपुनर्जित्वानाम्ना
विजयकारिणम् ॥ ४२ ॥ विंशदब्दकरंप्राप्यस्वभूपायसमार्पयत् ॥ पंचकोट्यश्चवैमुद्राराजतस्यपुनर्ययौ ॥ ४३ ॥ अंगदेशपतिंभूपंमायाव
र्माणमुत्तमम् ॥ सैन्यायुतयुतंजित्वाविंशदब्दस्यवैकरम् ॥ ४४ ॥ कोटिमुद्राश्चसंप्राप्यस्वभूपायसमार्पयत् ॥ वंगदेशपतिंवीरोलक्षणोवैयु
तश्चतैः ॥ ४५ ॥ लक्षसैन्ययुतंभूपंकालीवर्माणमुत्तमम् ॥ अहोरात्रेणतंजित्वामहायुद्धेनलक्षणः ॥ ४६ ॥ विंशदब्दकरंप्राप्यकोटिस्वर्णमयं
तदा ॥ प्रेषयामासभूपायजयचंद्रायवैमुदा ॥ ४७ ॥ उष्ट्रदेशंययौवीरःपालितंतैर्महाबलैः ॥ धोयीकविस्तत्रनृपोलक्षसैन्यसमन्वितः ॥४८॥
जगन्नाथाज्ञयाप्राप्तस्तैश्चसार्द्धंरणोन्मुखे ॥ तयोश्चासीन्महद्युद्धंतुमुलंरोमहर्षणम् ॥ ४९ ॥ अहोरात्रप्रमाणेनकृष्णांशेनजितोनृपः ॥
विंशदब्दकरंसर्वकोटिस्वर्णसमन्वितम् ॥ ५० ॥ संप्राप्यप्रेषयामासकान्यकुब्जाधिपायवै ॥ पुंड्रदेशंययौवीरोलक्षणोबलवत्तरः ॥ ५१ ॥
नृपंनागपतिंनामपंचायुतबलैर्युतम् ॥ दिनमात्रेणतंजित्वाकोटिमुद्रागृहीतवान् ॥ ५२ ॥ महेंद्रगिरिमागत्यनत्वातंभार्गवंमुनिम् ॥
ततोनिवृत्त्यतेसर्वेनेत्रपालपुरंययुः ॥ ५३ ॥ योगसिंहस्तदागत्यकृष्णांशंप्रतिभार्गवम् ॥ कोटिमुद्राददौतस्मैसप्तरात्रमवासयत् ॥ ५४ ॥

वीरसिंहपुरंजग्मुस्तेवीरामदवत्तराः ॥ रुरुधुर्नगरींसर्वांहिमतुंगोपरिस्थिताम् ॥ ५५ ॥ पालितांगोरखाख्येनयोगिनाभक्तकारणात् ॥
भूपानुजःप्रवीरश्चसैन्यायुतसमन्वितः ॥ ५६ ॥ कृतवान्दारुणंयुद्धंलक्षणस्यैवसेनया ॥ प्रत्यहंबलवाञ्छूरोहत्त्वाशूरसहस्रकम् ॥
॥ ५७ ॥ सायंकालेगृहंप्राप्ययोगिनंतमपूजयत् ॥ पूजनात्सप्रसन्नात्मासैन्यमुज्जीव्यभूपतेः ॥ ५८ ॥ दत्वागजबलंतेभ्यः
पुनर्योगंकरोतिवै ॥ सार्द्धमासोगतस्तत्रयुद्धचतांबलशालिनाम् ॥ ५९ ॥ तदातेतुनिरुत्साहादेवसिंहंतमब्रुवन् ॥ विजयोनःक
थंभूपतत्त्वंब्रूहिनअग्रतः ॥ ६० ॥ इतिश्रुत्वासहोवाचशृणुकृष्णांशमेवचः ॥ योगिनंगोरखंनामपराजित्यस्वनृत्यतः ॥ ६१ ॥ पुनर्यु
द्धंकुरुत्वंवैततोजयमवाप्स्यसि ॥ इत्युक्तास्तेहिकृष्णाद्याःकृत्वायोगमयंवपुः ॥ ६२ ॥ स्थापयित्वारणेसेनांपालितांलक्षणेनवै ॥ प्रातः
कालेययुस्तेवैमंदिरंतस्ययोगिनः ॥ ६३ ॥ कृष्णांशोनर्तकश्चासीद्वेणुवाद्यविशारदः ॥ देवसिंहोमृदंगाढ्योवीणाधारीचतालनः ॥ ६४ ॥
कांस्यधारीतदाह्लादोजगौगीतंसनातनीम् ॥ तदर्थंहृदयेकृत्वागोरखस्सर्वयोगवान् ॥ ६५ ॥ वरंवरयतानाहतेतच्छ्रुत्वाऽब्रुवन्वचः ॥
नमस्यामोवयंतुभ्यंयदिदेयोवरस्त्वया ॥ ६६ ॥ देहिसंजीविनीविद्यामाह्लादायमहात्मने ॥इतिश्रुत्वाहृदिध्यात्वातानुवाचप्रसन्नधीः॥६७॥
विद्यासंजीविनीतुभ्यंवर्षमात्रंभविष्यति ॥ तत्पश्चान्निष्फलीभूत्वागमिष्यतिमदंतिकम् ॥ ६८ ॥ अद्यप्रभृतिभोवीरमयात्यक्तमिदंजगत् ॥
यत्रभर्तृहरःशिष्यस्तत्रगत्वाशयेह्यहम् ॥ ६९ ॥ इत्युक्त्वान्तर्हितोयोगीजग्मुस्तेरणमूर्द्धनि ॥ जित्वाप्रवीरसिंहंचवीरसिंहंतथैवच ॥ ७० ॥
हत्वातस्यायुतंसैन्यंलुंठयित्वाचतद्गृहम् ॥ कृत्वादासमयंभूपंलक्षणःप्रययौमुदा ॥ ७१ ॥ कौशलंदेशमागत्यजित्वातस्यमहीपतिम् ॥
सैन्यायुतंसूर्यधरंकरयोग्यमचीकरत् ॥ ७२ ॥ षोडशाब्दकरंप्राप्यमुद्राकोटचयुतंमुदा ॥ नैमिषारण्यमागम्यतत्रोषुःस्नानतत्पराः ॥ ७३ ॥
होलिकायादिनेरम्येलक्षणोबलवत्तरः ॥ दत्त्वादानानिविप्रेभ्योमहोत्सवमकारयत् ॥ ७४ ॥ तदावयंचमुनयःसमाधिस्थाश्चभूपतिः ॥
यदासलक्षणःप्राप्तोनैमिषारण्यमुत्तमम् ॥७५॥ स्नात्वासर्वाणितीर्थानिसंतर्प्यद्विजदेवताः ॥ कान्यकुब्जपुरंजग्मुश्चैत्रकृष्णाष्टमीदिने॥७६॥
इतितेकथितंविप्रयथादिग्विजयोभवत् ॥ शृणुविप्रकथांरम्यांबलखानिर्यथामृतः ॥ ७७ ॥ मार्गकृष्णस्यसप्तम्यांभूमिराजोमहाबलः ॥

महीपतेश्चवाक्येनसामंतंप्राहनिर्भयः ॥ ७८ ॥ मयाश्रुतस्तेतनयःशारदावरदार्पितः ॥ रक्तबीजत्वमापन्नस्तंमेदेहिकृपांकुरु ॥ ७९ ॥
इत्युक्तस्सतुसामन्तस्तेनराज्ञैवसत्कृतः ॥ चामुंडंनामतनयंसमाहूयाब्रवीदिदम् ॥ ८० ॥ पुत्रत्वंनृपतेःकार्यंसदाकुरुरणप्रिय ॥
इतिश्रुत्वापितुर्वाक्यंसवैराजानमब्रवीत् ॥ ८१ ॥ देह्याज्ञांभूपतेमह्यंशीघ्रंजयमवाप्स्यसि ॥ इतिश्रुत्वासहोवाचबलखानिर्महाबलः ॥ ८२॥
छित्त्वामच्छूंशियवनंगृहीत्वाराष्ट्रमुत्तमम् ॥ सुस्थितोनिर्भयोगेहेबाहुशालीयतेंद्रियः ॥ ८३ ॥ यदित्वंबलखानिंचजित्वामेह्यर्पयिष्यसि ॥
हत्वावातस्यसकलंराष्ट्रंत्वयिभविष्यति ॥ ८४ ॥ इत्युक्त्वारक्तबीजंतंसमाहूयस्वकंबलम् ॥ सप्तलक्षंददौतस्मैसतत्प्राप्यमुदाययौ ॥ ८५ ॥
उषित्वात्रिदिनंमार्गेशृंशियाख्यमुपागतः ॥ रुरोधनगरींसर्वांबलखानेर्महात्मनः ॥ ८६ ॥ चामुंडागमनंश्रुत्वाबलखानिर्महाबलः ॥ पूजयि
त्वामहामायांदत्त्वादानान्यनेकशः ॥ ८७ ॥ लक्षसैन्येनसहितःप्रययौनगराद्बहिः ॥ तस्यानुजोमहावीरस्सुखखानिर्बलैःसह ॥ ८८ ॥ हरि
णींतांसमारुह्यशत्रुसैन्यंक्षयीतवान् ॥ बलखानिःकपोतस्थोनाशयित्वारिपोबलम् ॥ ८९ ॥ लक्षसैन्यंमुदायुक्तश्चामुंडंप्रतिचागमत् ॥ तयो
श्चासीन्महद्युद्धंस्वस्वसैन्यक्षयंकरम् ॥ ९० ॥ अहोरात्रप्रमाणेनसंहताःक्षत्रियारणे ॥ प्रातःकालेतुसंप्राप्तेकृत्वास्नानादिकाःक्रियाः ॥ ९१ ॥
जग्मतुस्तौरणेवीरौधनुर्बाणविशारदौ ॥ रथस्थोबलखानिश्चचामुंडोगजपृष्ठगः ॥ ९२ ॥ चक्रतुस्तुमुलंघोरंनरविस्मयकारकम् ॥ बाणैर्बा
णांश्चसंछित्त्वादेवीभक्तौचतौमुदा ॥ ९३ ॥ अन्योन्यवाहनंहत्वाभूतलत्वमुपागतौ ॥ खड्गचर्मधरौवीरौयुयुधातेपरस्परम् ॥ ९४ ॥ यावन्तो
रक्तबीजांगात्संजातारक्तबिंदवः ॥ तावन्तःपुरुषाजातारक्तबीजपराक्रमाः ॥ ९५ ॥ तैश्चवीरैर्मदोन्मत्तैर्बलखानिस्समंततः ॥ रोधितोऽभूद्भृगु
श्रेष्ठशारदांशरणंययौ ॥ ९६ ॥ एतस्मिन्नंतरेवीरःसुखखानिस्ततोऽनुजः ॥ आग्नेयंशरमादायरक्तबीजानदाहयत् ॥ ९७ ॥ पुरातुसुखखानि
श्चहव्यैर्देवंचपावकम् ॥ पंचाब्दंपूजयामासतदातुष्टस्स्वयंप्रभुः ॥ ९८ ॥ पावकीयंशरंरम्यंशत्रुसंहारकारकम् ॥ ददौतस्मैप्रसन्नात्मातेना
सौविजयोऽभवत् ॥ ९९ ॥ बलखानिस्तुबलवान्दृष्ट्वाशत्रुविनाशनम् ॥ पराजितंचचामुंडंबद्ध्वागेहमुपागमत् ॥ १०० ॥ कृत्वानारीमयंवेषं
सभीतोब्रह्महत्यया ॥ दोलामारोप्यबलवान्प्रेषयामासशत्रवे ॥ १०१ ॥ हतशेषाःपंचलक्षास्सैन्यागत्वाचदेहलीम् ॥ वृत्तान्तंकथयामासय

थाजातोमहारणः ॥ १०२ ॥ नारीवेषंचचामुंडंसदृष्ट्वापृथिवीपतिः ॥ क्रोधाविष्टश्चबलवान्महीपतिमुवाचह ॥ १०३ ॥ कथंजयोमेभविता
सुखखानौचजीविते ॥ श्रुत्वामहीपतिःप्राहच्छद्मनाकार्यमाकुरु ॥ १०४ ॥ ब्राह्मीमातातयोर्ज्ञेयाशुद्धासैवपतिव्रता ॥ दूतिभिःकारणंज्ञात्वा
पुनर्युद्धंकुरुष्वभोः ॥ १०५ ॥ इतिश्रुत्वामहीराजोदूतीस्ताश्छलकोविदाः ॥ आहूयप्रेषयामासबलखानिगृहंप्रति ॥ १०६ ॥ तास्तुवैब्राह्म
णीभूत्वाबलखानिगृहंययुः ॥ ससुतास्तांप्रशस्याशुपप्रच्छुर्विनयान्विताः ॥१०७॥ तवपुत्रौमहावीरौदिष्ट्याशत्रुक्षयंकरौ ॥ तयोर्मृत्युःकथंभू
याज्जीवेतांशरदांशतम् ॥ १०८ ॥ तदाब्राह्मीवचःप्राहपावकीयंशरंशुभम् ॥ सुखखानेर्जीवकरंबलखानेःपदाह्वकम् ॥ १०९ ॥ इतिज्ञा
त्वातुताःदूत्यःप्रययुर्देहलींप्रति ॥ कथयित्वानृपस्याग्रेधनंप्राप्यगृहंययुः ॥ ११० ॥ महीराजस्तुतच्छ्रुत्वामहादेवमुमापतिम् ॥ पार्थिवैःपू
जनंचक्रेसहस्रदिवसंमुदा ॥ १११ ॥ इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेचतुर्विंशोऽ
ध्यायः ॥२४॥ छ॥ सूतउवाच ॥ षड्विंशाब्देचकृष्णांशेयथाजातंतथाशृणु ॥ मुनेर्बिंदुसरोनामदक्षिणस्यांदिशिस्थितम् ॥१॥ तस्यतीरेऽव
सद्ग्रामोयोजनायामसंयुतः ॥ नाम्नाबिंदुगढोदुर्गोवर्णधर्मप्रवर्तकः ॥२॥ तस्मिन्ग्रामेऽवसद्भूपोविष्वक्सेनान्वयोद्भवः ॥ शारदानन्दनोनामब्रह्म
ध्यानपरायणः ॥३॥ ब्रह्मचर्यप्रभावेनतद्वीर्यंशिरसिस्थितम् ॥ अतस्सकामपालाख्यःप्रथितोऽभून्महीतले ॥४॥ यज्ञैःसंपूजयामाससुरज्येष्ठं
प्रजापतिम् ॥ यज्ञांशभुक्तमात्रेणराज्ञीगर्भमुपादधौ ॥५॥ दशमासान्तरेजाताकन्यासर्वगुणालया ॥ पद्मिनीनामविख्यातासर्वशोभासमन्वि
ता ॥ ६ ॥ द्वादशाब्दवयःप्राप्तौबभूववरवर्णिनी ॥ पद्माकरोभूपसुतोमहीराजपदानुगः ॥७॥ पितुराज्ञानुसारेणभूपानाहूयसत्वरम् ॥ स्वयं
वरंभगिन्याश्चकारयामासवैमुदा ॥ ८ ॥ नानादेश्याययुर्भूपामुख्यशूरसमन्विताः ॥ सहाह्लादैश्चतुर्वीरैर्लक्षणःपितुराज्ञया ॥ ९ ॥
ययौबिंदुगढंग्रामंस्थितोयत्रमहोत्सवः ॥ महीराजस्तुबलवान्दृष्ट्वालक्षणमागतम् ॥ १० ॥ स्वसेनांस्थापयामासरक्षार्थंसर्वभूभुजाम् ॥
एतस्मिन्नंतरेदेवीपद्मिनीसखिभिःसह ॥ ११ ॥ सर्वभूपान्विलोक्याशुलक्षणान्तमुपाययौ ॥ श्यामांगंचयुवानंचसर्वलक्षणलक्षितम् ॥
॥ १२ ॥ चत्वारिंशत्तथापंचाशन्मानाब्दवयोवृतम् ॥ व्यूढोरस्कंदृढस्कंधंनिर्जरंरोगवर्जितम् ॥ १३ ॥ दृष्ट्वातमात्मसदृशमाह्ला

दाद्यैश्वरक्षितम् ॥ जयमालांददौतस्मैपद्मिनींलक्षणायच ॥ १४ ॥ तदासलक्षणोवीरोगृहीत्वापाणिमुत्तमम् ॥ स्वरथंचसमारुह्यरा
ज्ञांमध्येययौमुदा ॥ १५ ॥ पृथ्वीराजस्तथासर्वैर्भूमिपाबलसंयुताः ॥ रुरुधुःसर्वतोवीरंलक्षणंबलवत्तरम् ॥ १६ ॥ तालनःसिंहिनी
संस्थोगृहीत्वापरिघंमुदा ॥ सैन्यांश्चयोधयामासभीमसेनांशसंभवः ॥ १७ ॥ पंचशब्दगजारूढश्चाह्लादस्तोमरायुधः ॥ रिपून्वि
दारयामासबलभद्रांशसंभवः ॥ १८ ॥ कृष्णांशोबिन्दुलारूढोगृहीत्वाखड्गमुत्तमम् ॥ भूपतीन्बहुधाच्छित्त्वामहद्वधमकारयत् ॥
॥ १९ ॥ देवोमनोरथारूढोभैरवंभल्लमादधौ ॥ हत्वाचबहुधासैन्यंननर्दचपुनःपुनः ॥ २० ॥ लक्षणोधनुरादायवैष्णवास्त्राणिवैपुनः ॥ सं
धायचजघानाशुमहीराजस्यसैन्यपान् ॥ २१ ॥ यामशात्रमभूद्युद्धंतेषांतैश्चसमन्वितम् ॥ त्यक्त्वायुद्धंमहीराजःसर्वभूपसमन्वितः ॥ २२ ॥
ययौसदेहलीग्रामेशारदानंदनस्तदा ॥ मंडपंचशुभंस्थाप्यकृत्वावैवाहिकीःक्रियाः ॥ २३ ॥ ददौकन्यांविधानेनधनधान्यादिसंवृताम् ॥
एतस्मिन्नन्तरेप्राप्तोमहीपतिरुवाचतम् ॥ २४ ॥ पद्माकरंभूपसुतंलक्षसैन्यसमन्वितम् ॥ अहोमित्रमहावीरकीदृशीतेमतिःस्थिता ॥२५ ॥
विष्वक्सेनान्वयेत्वंवैसंजातःक्षत्रियोत्तमः ॥ लक्षणोधर्मरहितोवर्णसंकरसंयुतः ॥ २६ ॥ आह्लादाद्याश्चतेशूराआभीरीमातृसंभवाः ॥ तैर्यु
तश्चनिवासोवैसंत्याज्योधर्मकोविदैः ॥ २७ ॥ इतिपद्माकरःश्रुत्वासर्वमायाविशारदः ॥ सकृत्वाशाम्बरींमायांबद्ध्वातानेवदुर्जयान् ॥ २८ ॥
स्वगेहेस्थापयामासकारागारेशिलामये ॥ देव्याश्चवरदानेनदेवसिंहस्तदानिशि ॥ २९ ॥ त्यक्त्वामायांमोहमयींकान्यकुब्जमुपाययौ ॥
इंदुलाग्रेचतत्सर्वंकथित्वातेनसंयुतः ॥ ३० ॥ प्राप्तोबिंदुगढंशीघ्रंदिव्यमायाविशारदः ॥ पद्माकरस्तुतच्छ्रुत्वाकृत्वामायांचशाम्बरीम् ॥
॥३१॥ मोहनायोद्यतस्तत्रयथामेघोरविंदिवि ॥ इंदुलश्चतदाचापेसंधायशरमुत्तमम् ॥३२॥ कामास्त्रेणतुतन्मायाभस्मीभूताभवत्क्षणात् ॥
तदातेबोधिताःसर्वेकामास्त्रेणमहाबलाः ॥ ३३ ॥ भित्त्वालोहमयंजालंकपाटंचतथादृढम् ॥ बहिर्भूताःसमाजग्मुःशत्रुसैन्याननाशयन्॥३४॥
क्षत्रियाःपंचसाहस्रामृतायमपुरंययुः ॥ शारदानंदनोभूपस्तत्रागत्यविनम्यतान् ॥ ३५ ॥ स्वसुतांचददौतस्मैलक्षणायमहात्मने ॥ नाना
विधानिभोज्यानिप्रशस्याभरणानिच ॥ ३६ ॥ सर्वेभ्यश्चददौराजासहस्रेभ्यस्तदामुदा ॥ कुमारिकांस्वकीयांचबहुरोदनतत्पराम् ॥ ३७ ॥

समत्वाकामपालोवैस्वगेहात्तंन्यवासयत् ॥ आगतोलक्षणोगेहंमाघकृष्णाष्टमीदिने ॥३८॥ जयचंद्रस्तुतंदृष्ट्वालक्षणंप्रेमविह्वलः ॥ शतग्रा
माणितेभ्यश्चतालनादिभ्यएवच ॥ ३९ ॥ दत्त्वाततोऽन्यदानानिगोवस्त्राभरणानिच ॥ प्रददौब्राह्मणेभ्यश्चचकारचमहोत्सवम् ॥ ४० ॥
॥ सूतउवाच ॥ ॥ महीराजोवरंप्राप्तःशंकरात्पार्थिवार्चनात् ॥ संयोज्यफाल्गुनेमासिसेनांशत्रुभयंकरीम् ॥ ४१ ॥ सप्तलक्षैश्चसहितःश्रं
श्रियाख्यपुरंययौ ॥ नृपाज्ञयाचचामुंडोरुरोधनगरंपुनः ॥ ४२ ॥ सुखखानिस्तदाक्रुद्धोलक्षसैन्यसमन्वितः ॥ नगराद्बहिरागत्यमहद्वधम
कारयत् ॥ ४३ ॥ पावकास्त्रेणबलवान्हत्वादशसहस्रकम् ॥ महीराजमुपागम्यवचनंप्राहनिर्भयः ॥ ४४ ॥ अद्यत्वांचहनिष्यामित्वंवाह
न्तारणेमम ॥ स्वाविद्यांकुरुभूपत्वंनोचेद्यास्यसिवैशसम् ॥ ४५ ॥ इतिश्रुत्वामहाराजोरौद्रास्त्रंचापमादधे ॥ तदस्त्राच्चमहावह्निःप्रादुर्भूतो
भयंकरः ॥ ४६ ॥ सुखखानिस्तदाग्नेयंसंदधौतस्यशांतये ॥ रौद्राग्निनाचसशरःसुखखानिर्लयंगतः ॥ ४७ ॥ तदस्त्रंशिवतूणीरेगतं
कार्यंविधायतत् ॥ बलखानिस्तुतच्छ्रुत्वाभयभीतःसमागतः ॥ ४८ ॥ भ्रातुर्वैरमुपादायजघानचरिपोर्बलम् ॥ ध्यात्वाचशारदांदेवींभूमि
राजमुपागमत् ॥ ४९ ॥ भूमिराजस्तुतंदृष्ट्वातद्बलाधिक्यमोहितः ॥ उवाचवचनंप्रेम्णाबलखानेशृणुष्वभोः ॥ ५० ॥ क्रोशमात्रान्तरेगर्ता
द्वादशैवमयाकृताः ॥ रक्षिताद्वादशशतैःशूरैर्युद्धविशारदैः ॥ ५१ ॥ शूराञ्जित्वासमुल्लंघ्यगर्तान्द्वादशसम्मितान् ॥ ममार्द्धंसकलंराष्ट्रंगृहा
णबलिसत्तम ॥ ५२ ॥ इतिश्रुत्वाप्रियंवाक्यंतद्राज्ञासत्यभाषितम् ॥ कपोतंहयमारुह्यखड्गहस्तोवनंययौ ॥ ५३ ॥ दृष्ट्वागर्तान्महावी
रोहत्वाशूराञ्छताञ्छतान् ॥ ययौसद्वादशंगर्तंबाहुशालीजितेंद्रियः ॥ ५४ ॥ चामुंडस्तुतदागत्यशूरायुतसमन्वितः ॥ रुरोधसर्वतो
वीरंच्छद्मकारीद्विजाधमः ॥ ५५ ॥ बलखानिश्चमहतींसेनांतस्यजघानह ॥ चामुंडंतमुपागम्यननर्दचपुनःपुनः ॥ ५६ ॥ त्रयोदशंगुप्त
गर्तंतृणैराच्छादितंमृदा ॥ विषधौतैर्महाभल्लैरोधितंविवरप्रभम् ॥ ५७ ॥ पतितंसकपोतश्चसवीरोदैवमोहितः ॥ अंधकारे
महाघोरेगंभीरंक्रोशमात्रकम् ॥ ५८ ॥ विदीर्णस्तत्रचरणस्सपद्मोवत्सजस्यवै ॥ महाकष्टेनतद्वाजीगर्तादागत्यवैबहिः ॥ ५९ ॥
स्वपदैस्ताडयामासमहीराजस्यतद्बलम् ॥ चामुंडस्तुतदागत्यबलखानेश्चवैशिरः ॥ ६० ॥ छित्त्वाजघानतत्सैन्यंहाहाभूतंविनेश्वरम् ॥

गजमुक्ताचतच्छ्रुत्वाचितामारोप्यवैपतिम् ॥ ६१ ॥ दाहयामासचांगानिपातिनासहसासती ॥ तदाब्रह्मास्ववध्वाचसार्द्धमागत्यतत्रवै ॥६२॥
सुखखानिंचसंहूयददाहस्वंकलेवरम् ॥ शून्यभूतंचनगरंभस्मकृत्वासवैनृपः ॥ ६३ ॥ जगामदेहलींशीघ्रंमहोत्साहसमन्वितः ॥ ६४॥
इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेविक्रमाख्यानकालेपंचविंशोऽध्यायः ॥२५ ॥छ॥
॥ सूतउवाच ॥ श्रावणेमासिसंप्राप्तेदेहलींचमहीपतिः ॥ नागोत्सवायप्रययौसदैवंकलहप्रियः ॥ १ ॥ दृष्ट्वानागोत्सवंतत्रगीतनृत्यसमन्वितम् ॥ महीराजंनमस्कृत्यवचनंप्राहनम्रधीः ॥२॥ राजन्महावतीग्रामेकीर्तिसागरमध्यगे ॥ वामनोत्सवमत्यन्तंयवव्रीहिसमन्वितम् ॥३॥
पश्यत्वंतत्रगत्वाचममैववचनंकुरु ॥ इतिश्रुत्वामहीराजोधुंधुकारेणसंयुतः ॥ ४ ॥ सप्तलक्षबलैर्युक्तश्चामुंडेनसमन्वितः ॥ संप्राप्तःश्रीशिरीषवनेतत्रवासमकारयत् ॥ ५ ॥ महीपतिस्तुनृपतिंनत्वावैचंद्रवंशिनम् ॥ उवाचवचनंदुःखीधूर्तमायाविशारदः ॥ ६ ॥ राजन्प्राप्तोमहीराजोयुद्धार्थीत्वामुपस्थितः ॥ चंद्रावलींचतनयांब्रह्मानंदतवात्मजाम् ॥ ७ ॥ दिव्यालिंगंससंपूज्यबलात्काराद्ग्रहीष्यति ॥ तस्मात्त्वंस्वबलैःसार्द्धमयासहमहामते ॥ ८ ॥ छद्मनातंपराजित्यनगरेऽस्मिन्सुखीभव ॥ इतिश्रुत्वादेववशोराजापरिमलोबली ॥ ९ ॥ चतुर्लक्षबलैस्सार्द्धंनिशीथेचसमागतः ॥ शायितान्क्षत्रियाञ्छूरान्हत्वापंचसहस्रकान् ॥ १० ॥ शतघ्नीरोषणींचक्रेबहुशूरविनाशिनीम् ॥ तदोत्थायमहीराजःकटिमाबध्यसंभ्रमात् ॥ ११ ॥ वैरिणंपरमंमत्वामहद्युद्धमचीकरत् ॥ युद्धेचतयोःसेनयोस्तत्रमलनापुत्रगृद्धिनी ॥ १२ ॥ शारदामादराद्गत्वापूजयामासभक्तितः ॥ देविदेविमहादेविसर्वदुःखविनाशिनि ॥ १३ ॥ हरमेसकलांबाधांकृष्णांशंबोधयाशु च ॥ जप्त्वायुतमिदंमंत्रंहुत्वातर्पणमार्जने ॥ १४ ॥ कृत्वासुष्वापतद्देशमतदातुष्टास्वयंशिवा ॥ मलनेमहतीबाधाक्षयंयास्यातिमाशुचः ॥ १५ ॥
इत्युक्त्वाशारदादेवीकृष्णांशंप्रतिचागमत् ॥ पुत्रतेजननीभूमिर्महीराजेनपीडिता ॥ १६ ॥ क्षयंयास्यातिशीघ्रंचतस्मात्त्वंतांसमुद्धर ॥
इतिश्रुत्वावचोदेव्यास्सवीरोविस्मयान्वितः ॥ १७ ॥ देवकींप्रतिसंप्राप्तःकथयामासकारणम् ॥ मातुश्श्रुत्वातपोघोरंस्वर्णवत्यासमन्वि
ता ॥ १८ ॥ रुरोदभक्तमुद्दिश्यविलप्यबहुधासती ॥ कृष्णांशस्तुतदादुःखी ॥ किंकर्तव्यंमयावीरदेहाज्ञांदारु

णभवं ॥ तच्छ्रुत्वातेनसाहेतोलक्षणेनसमान्वितः ॥ २० ॥ ययौदिग्विजयार्थेनव्याज ॥लनोभीमसेनांशःसेनापतिरुदा
रधीः ॥ २१ ॥ सप्तलक्षबलैस्सार्द्धंविनाह्लादेनसंययौ ॥ कल्पक्षेत्रमुपागम्ययोगिनस्तेतदाभवन् ॥ २२ ॥ सेनांनिवेशयामासविपिनेतत्र
दारुणे ॥ कृष्णांशस्तालनोदेवोलक्षणोबलवत्तरः ॥ २३ ॥ गृहीत्वालास्यवस्तूनियुद्धभूमिमुपागमन् ॥ सप्ताहंचतयोर्युद्धंजातंमृत्यु
विवर्द्धनम् ॥ २४ ॥ सप्तमेऽहनितेवीरास्संप्राप्तारणमूर्द्धनि ॥ तस्मिन्दिनेमहाभागमहद्युद्धमवर्तत ॥ २५ ॥ दृष्ट्वापराजितंसैन्यंराजापरि
मलोबली ॥ रथस्थश्चापदामापमहीराजमुपाययौ ॥ २६ ॥ यादवश्चगजारूढस्तदाचंद्रावलीपतिः ॥ धुंधुकारंसमाहूयधनुर्युद्धमचीक
रत् ॥२७॥ हरिनागरमारुह्यब्रह्मानंदोमहाबलः ॥ तारकंशत्रुमाहूयधनुर्युद्धंचकारह ॥ २८ ॥ मर्दनंराजपुत्रंचरणजिद्गजसंस्थितः ॥ स्वश
रैस्ताडयामासतत्सुतंचजघानह ॥ २९ ॥ रूपणोवैसकदनंहयारूढोजगामह ॥ आभीरीतनयोजातोमदनोनामवैबली ॥ ३० ॥ नृहरंराज
पुत्रंचशंखांशश्चजगामह ॥ तेषुसंग्राममेतेषुचामुंडोऽयुतसैन्यपः ॥ ३१ ॥ महीपतेश्चवचनंमत्वानगरमाययौ ॥ ददर्शनगरींरम्यांचतुर्वर्णस
मन्विताम् ॥ ३२ ॥ धनधान्ययुतांवीरोदेवीभक्तिपरायणः ॥ महीपतिस्तुवैधूर्तोदुर्गद्वारिसमागतः ॥ ३३ ॥ चामुंडेनयुतःपापीराजगेहमुपा
ययौ ॥ मलनाभ्रातरंदृष्ट्वावचनंप्राहदुःखिता ॥३४॥ भाद्रकृष्णाष्टमीचाद्ययवव्रीहिगृहेस्थिता॥नप्राप्ताजलसंस्थानेसुपुण्येकीर्तिसागरे ॥३५॥
महीराजोमहापापीवामनोत्सवमागतः ॥ विनाह्लादंचकृष्णांशंमहद्दुःखमुपागतम् ॥३६॥ इत्युक्तस्सावदेस्याहब्राह्मणोऽयंमहाबली ॥ कान्य
कुब्जात्समायातःकृष्णांशेनप्रपोषितः॥३७॥ देवदत्तश्चनाम्नाऽयंसतेकार्यंकरिष्यति॥ श्रुत्वाचंद्रावलीदेवीसर्वभूषणसंयुता ॥३८॥ कामाग्नि
पीडितंविप्रंचामुंडंचददर्शह॥मातरंप्रतिचागम्यवचनंप्राहनिर्भया॥३९॥धूर्तोऽयंब्राह्मणोमातार्निश्चयंमांहरिष्यति ॥ कोऽयंवरीनजानामिकथ
यामिपतिव्रता ॥ ४० ॥ इतिश्रुत्वावचस्तस्यालज्जितस्समहीपतिः ॥ चामुंडेनयुतःप्राप्तोयत्राभूत्समहारणः ॥ ४१ ॥ एतस्मिन्नंतरेतेवैब्रह्म
द्यास्तैःपराजिताः ॥त्यक्त्वायुद्धंगृहंप्राप्तास्त्रिलक्षबलसंयुताः॥४२॥ कपाटंसुदृढंकृत्वामहाचिंतामुपाययुः ॥ महीराजस्तुबलवान्महीपत्यनु
मोदितः॥४३॥प्रमदावनमागत्यषष्टिलक्षबलान्वितः ॥ जुगोपतत्रबलवान्माननोत्सवहेतवे ॥४४॥ तालनद्याश्चचत्वारःश्रीशियाख्यपुरंययुः॥

स्थलीभूतंचतंग्रामंदृष्ट्वातेविस्मयान्विताः ॥ ४५ ॥ प्रययुस्तेसुखभ्रष्टाददृशुर्हिमदंमुनिम् ॥ प्रणम्योचुःशुचाविष्टाबलखानिर्मुनेबली ॥४६॥
कगतःसमरश्लाघीसचकुनागरैर्युतः ॥ श्रुत्वाहाहिमदोयोगीमहीराजेननाशितः ॥ ४७ ॥ छद्मनाबलखानिश्चतस्येयंसुंदरीचिता ॥
इतिश्रुत्वावचोघोरंकृष्णांशःशोकतत्परः ॥ ४८ ॥ विललापभृशंतत्रहाबंधोधर्मजांशक ॥ त्वदृतेभूतलेवासोममातीवभयंकरः ॥ ४९ ॥
दर्शनंदेहिमेक्षिप्रंनोचेत्प्राणांस्त्यजाम्यहम् ॥ इत्युक्तःसतुतद्भ्राताबलखानिःपिशाचगः ॥ ५० ॥ सपत्नीकस्समायातोरोदनंकृतवान्बहु ॥
कथित्वासर्ववृत्तांतंयथाजातंस्ववैशसम् ॥ ५१ ॥ दिव्यंविमानमारुह्यगतोनाकंमनोरमम् ॥ युधिष्ठिरेतस्यकलाबलखानेर्लयंगता॥ ५२ ॥
तदादुःखीसकृष्णांशःकृत्वाभ्रातुस्तिलांजलिम् ॥ महावतींसमागत्यराजगेहमुपाययौ ॥ ५३ ॥ वेणुशब्देनकृष्णांशोननर्तजनमोहनः ॥
वीणाप्रवाद्यंचजगौतालनोयोगिरूपधृक् ॥ ५४ ॥ मृदंगध्वनिनादेवोलक्षणःकांस्यवाद्यकः ॥ सुस्वरंचजगौतत्रश्रुत्वाराजाविमोहितः॥५५॥
तदातुमलनाराज्ञीदृष्ट्वातद्वामनोत्सवम् ॥ रुदित्वावचनंप्राहकगतोमेप्रियंकरः ॥ ५६ ॥ कृष्णांशोबंधुसहितस्तत्कामांमदभागिनीम् ॥
त्वयाविरहितोदेशोमहीराजेनलुंठितः ॥ ५७ ॥ इत्युक्तामलनांदृष्ट्वाकृष्णांशःस्नेहकातरः ॥ वचनंप्राहनभ्रात्मादेवित्वंवचनंकुरु ॥ ५८ ॥
योगिनश्चवयंराज्ञिसर्वयुद्धविशारदाः ॥ तवेदंसकलंकार्यंकृत्वायामोहिनैमिषम् ॥ ५९ ॥ येयवव्रीहयश्चैवतवसद्मनिसंस्थिताः ॥
गृहीत्वायोषितस्सर्वागच्छध्वंसागरान्तिकम् ॥ ६० ॥ वयंतुयोगसैन्येनतवरक्षांचकुर्महे ॥ इतिश्रुत्वावचस्तस्यतत्सुताचपतिव्रता ॥६१ ॥
मातरंवचनंप्राहकृष्णांशोऽयंचनर्तकः ॥ पुंडरीकनिभेनेत्रेश्यामांगंतस्यसुंदरम् ॥ ६२ ॥ कृष्णांशेनविनामातःकोरक्षार्थंक्षमोभुवि ॥
दुर्जयश्चमहीराजःकृष्णांशेनविनिर्जितः ॥६३॥ इतितद्वचनंश्रुत्वामलनाप्रेमविव्हला ॥यवव्रीहींश्चनिष्कास्ययोषिद्भिःस्थापिताःकरे ॥६४॥
जगुस्तायोषितस्सर्वाःकृष्णांशचरितंशुभम्॥लक्षणःशीघ्रमागम्ययोगिवेषान्स्वसैनिकान् ॥६५॥सज्जीकृत्यस्थितस्तत्रतालनाद्यैःसुरक्षितः॥
कीर्तिसागरमागम्यतेवीराबलदर्पिताः॥६६॥ रुरुधुःसर्वतोनारीर्दोलायुतामितस्थिताः ॥ महीपतिस्तुकलहाज्ज्ञात्वाकृष्णांशमागतम्॥६७॥

१ निर्लोप आर्षः ।

चंद्रवंशिनमागम्यसपुत्रश्चरुरोदह ॥ योगिभिस्तैर्महाराजलुंठिताः सर्वयोषितः ॥ ६८ ॥ मलनासंहृतातत्रतथाचंद्रावलीसुता ॥
महाराजस्यतेसैन्यायोगिवेषास्समागताः ॥ ६९॥ तारकायसुतांप्रादान्महीराजायमत्स्वसाम् ॥इतिश्रुत्वावचोघोरंब्रह्मनंदोमहावली ॥७०॥
लक्षसैन्यान्वितस्तत्रययौरोषसमन्वितः ॥ महीराजस्तुकलहः सैन्यायुतमहात्मजः ॥ ७१ ॥ रक्षितः कामसेनेनतथारणजितायययौ ॥
तयोश्चासीन्महद्युद्धंसेनयोरुभयोर्भुवि ॥ ७२ ॥ तालनोयोगिवेषश्चब्रम्हानंदमुपाययौ ॥ लक्षणश्चाभयंशूरंदेवसिंहोमहीपतिम् ॥ ७३ ॥
जित्वावद्धाचमुदितौकामसेनस्समागतः ॥ लक्षणः कामसेनंचदेवोरणाजितंतदा ॥ ७४ ॥ बद्धातत्रास्थितौवीरौशत्रुसैन्यक्षयंकरौ ॥
एतस्मिन्नंतरेब्रह्मावद्धावैतालनंवली ॥ ७५ ॥ लक्षणान्तमुपागम्यधनुर्युद्धमचीकरत् ॥ लक्षणंच्छिन्नधनुषंपुनर्बद्धामहावली ॥ ७६ ॥
देवसिंहमुपागम्यमूर्छितंतंचकारह ॥ हाहाभूतेयोगिसैन्येप्रद्रुतेसर्वतोदिशि ॥ ७७ ॥ कृष्णांशोयोषितस्सर्वावचनंप्राहनम्रधीः ॥
ब्रह्मानंदोऽयमायातोममसैन्यक्षयंकरः ॥ ७८ ॥ तस्माद्यूयंमयासार्द्धंगच्छताशुचतंप्रति ॥ इत्युक्त्वातास्समादायब्रह्मानंदमुपाययौ ॥७९॥
तयोश्चासीन्महद्युद्धंनरनारायणांशयोः ॥ कृष्णांशस्तत्रबलवान्भीमार्गेणतंप्रति ॥ ८० ॥ रथस्थंचसमागम्यमोहयाससोऽसिना ॥
तदातुमूर्छितेतस्मिन्मोचयित्वाचतान्मुदा॥८१॥योगीसैन्यान्वितोयुद्धात्पलायनपरोऽभवत् ॥ पराजितेयोगिसैन्येब्रह्मानंदोमहावली॥८२॥
योषितस्ताः समादायस्वगेहायदधौमनः ॥ महीराजस्तुसंप्राप्तोमहीपत्यनुमोदितः ॥ ८३ ॥ रुरोधसर्वतोनारीः शिवदत्तवरोवली ॥
नृहरश्चाभयंशूरंमर्दनश्चैवरूपणम् ॥ ८४ ॥ मदनंवैसरदनोब्रह्मानंदंचतारकः ॥ चामुंडः कामसेनंचधनुर्युद्धमचीकरत् ॥ ८५ ॥
तदाभयोमहावीरोधुन्वंतंनृहरंरिपुम् ॥ छित्त्वाधनुस्तमागत्यखड्गयुद्धमचीकरत् ॥ ८६ ॥ नृहरः खड्गरहितस्सत्वायुद्धपराङ्मुखः ॥
तमाहवचनंक्रुद्धोऽभयोयुद्धार्थमुद्यतः ॥ ८७ ॥ भवान्वैमातृष्वस्रीयोमहीराजस्यचात्मजः ॥ क्षत्रियाणांपरंधर्मंकथंसंहर्तुमिच्छति ॥ ८८ ॥
इतिश्रुत्वातुनृहरोगृहीत्वापरिघंरुषा ॥ जघानतंचशिरसिसहतः स्वर्गमाययौ ॥ ८९ ॥ सचवैकृतवर्मांशोविलीनः कृतवर्मणि ।
मदनंगोपजातंचहत्वासरदनोवली ॥ ९० ॥ जयशब्दंचकारोच्चैःपुनर्हत्वारिपोर्बलम् ॥ उत्तरांशश्चसज्ञेयोमदनश्चोत्तरेलयः ॥ ९१ ॥

रूपणश्चसमागत्यमूर्छयित्वाचमर्दनम् ॥ पुनस्सरदनंप्राप्यखड्गयुद्धंचकारह ॥ ९२ ॥ ब्रह्मानंदश्चबलवान्सबद्धातारकंरुषा ॥
महीराजान्तमागम्यधनुर्युद्धंचकारह ॥ ९३ ॥ नृहरंरणजित्प्राप्यस्वभल्लेनतदारुषा ॥ जघानसमरश्लाघीमहीराजसुतंशुभम् ॥ ९४ ॥
सवैदुश्शासनांशश्चमृतस्तस्मिन्समागतः ॥ संहतेनृहरेबंधौमर्दनःक्रोधतत्परः ॥ ९५ ॥ स्वशरैस्ताडयामाससात्यकेरंशमुत्तमम् ॥
छित्त्वातान्रणजिच्छूरस्सवैपारिमलोद्भवः ॥९६॥ स्वभल्लेनशिरः कायंमर्दनस्यसचाहरत् ॥ मृतेऽस्मिन्मेर्दनेवीरेतदासरदनोबली ॥ ९७ ॥
ताडयामासतंवीरंस्वभल्लेनैववक्षसि ॥ महत्कष्टमुपागम्यरणजिन्मलनोद्भवः ॥ ९८ ॥ स्वखड्गेनशिरः कायादपाहरतवैरिणः ॥
त्रिबंधौनिहतेयुद्धेतारकः क्रोधमूर्छितः ॥ ९९ ॥ रथस्थश्चरथस्थंचताडयामासवैशरम् ॥ छित्त्वाबाणंचरणजित्तथैवचरिपोर्द्धनुः ॥ १०० ॥
त्रिशरैस्ताडयामासकर्णांशंतारकंहृदि ॥ अमर्षवशमापन्नोयथादंडैर्भुजंगमः ॥ १०१ ॥ ध्यात्वाचशंकरंदेवंविषधौतंशतंपुनः ॥
संधायतर्जयित्वाचशत्रुकंठमताडयत् ॥ १०२ ॥ तेनबाणेनरणजित्त्यक्त्वादेहंदिवंगतः ॥ हतेतस्मिन्महावीर्येब्रह्मानंदश्चदुःखितः ॥१०३॥
महीराजभयाद्ब्रह्मापुरस्कृस्यचयोषितः ॥ संध्याकालेतुसंप्राप्तेभाद्रकृष्णाष्टमीदिने ॥ १०४ ॥ कपाटंसुदृढंकृत्वासैन्यैःषष्टिसहस्रकैः ॥
सार्द्धंगेहमुपागम्यशारदांशरणंययौ ॥१०५॥ महीराजस्तुबलवान्पुत्रशोकेनदुःखितः ॥ संकल्पंकृतवान्घोरंशृण्वतांसर्वभूभृताम्॥१०६ ॥
श्रीश्रियाख्यपुरंरम्यंयथाशून्यंमयाकृतम् ॥ तथामहावतीसर्वाब्रह्मानंदादिभिस्सह ॥ १०७ ॥ क्षयंयास्यतिमद्बाणैःसर्वेतेचंद्रवंशिनः ॥
इत्युक्त्वाधुंधुकारंवैचाह्वयामासभूपतिः॥१०८॥पंचलक्षबलैस्सार्द्धंशीघ्रमागम्यतांप्रिय ॥ इतिश्रुत्वाधुंधुकारोगत्वाशीघ्रंचदेहलीम्॥१०९॥
उषित्वासतदिवसंयुद्धभूमिमुपागमत् ॥ तदाष्टलक्षसहितोमहीराजोमहाबलः ॥ तारकेणचसंयुक्तोयुद्धायसमुपाययौ ॥ ११० ॥
इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ छ ॥ ॥ सूतउवाच ॥
सप्तविंशाब्दकेप्राप्तेकृष्णांशेसर्वमंगले ॥ भाद्रकृष्णदशम्यांचमलनाशोककातरा ॥ १ ॥ जननायकमाहूयवचनंप्राहदुःखिता ॥
अयेकच्छपदेशीयगौतमान्वयसंभव ॥ २ ॥ हरिनागरमारुह्यकान्यकुब्जंव्रजाधुना ॥ पुत्रमाह्लादमाहूयसानुजंमत्प्रियंकरम् ॥ ३ ॥

इतिश्रुत्वातुवचनंहृदिसंचिंत्यवैपुनः ॥ मलनांदुःखितांप्राहनत्वायास्यतिसप्रभुः ॥ ४ ॥ राज्ञःपरिमलस्यैववाक्यंमत्वासुदुःखदम् ॥
इतिश्रुत्वातुवचनंरुरोदमलनासती ॥ ५ ॥ पुनर्मूर्च्छांगताभूमौजीवनंत्यक्तुमुद्यता ॥ हारामांशमहाबाहोवत्सकृष्णांशसुन्दर ॥ ६ ॥
क्वगतौसहदेवक्यात्यक्त्वामांमंदभागिनीम् ॥७॥ तदापरिमलापुत्रोदृष्ट्वाराज्ञींतथागताम् ॥ बहुधाश्वास्यबलवान्कान्यकुब्जपुरंययौ ॥ ८ ॥
॥ ऋषयऊचुः ॥ त्वयापरिमलापुत्रस्संप्रोक्तोजगनायकः ॥ रोमहर्षणनोब्रूहिसोऽयंकस्तेनकिंकृतम् ॥९॥ ॥ सूतउवाच ॥ ॥ इंद्रप्रस्थपुरे
वात्सीत्प्रद्योतःकथितोमया ॥ पितापरिमलस्यैवामात्योऽनंगमहीपतेः ॥ तस्यकन्यासमायातानाम्नापरिमलामुने ॥ १० ॥ दुःशलांशसमु
द्भूतारंभेवसुकुमारिका ॥ तद्विवाहार्थमुद्योगंकृतंपित्रास्वयंवरम् ॥११॥ पुत्रःकच्छपभूपस्यसनाम्नाकमलापतिः॥तामुद्वाह्यविधानेनस्वगेहा
ययौमुदा॥१२॥तयोस्समागमोजातःपुत्रोऽयंजगनायकः॥क्षत्रविद्यापरःशूरःखड्गयुद्धविशारदः॥१३॥ जित्वाभूपान्बलाद्वीरःसिंधुतीरनिवा
सिनः॥षडंशकरमादायपितृराज्यमुपस्थितः॥१४॥एकदातुमहीराजःस्वसैन्यपरिवारितः ॥ कच्छदेशमुपागम्यकरार्थंसमुपस्थितः ॥१५॥
तयोश्चासीन्महद्युद्धंजगनायकभूपयोः ॥ मासान्तेसूर्यवंशीयोमहीराजेननिर्जितः ॥ १६ ॥ त्यक्त्वाराष्ट्रंचसकुलःसंप्राप्तश्चमहावतीम् ॥
परिमलस्तुतदाराजातस्मैग्रामशुभंददौ ॥ १७ ॥ निवासःकृतवांस्तत्रस्वनाम्नाप्रथितंभुवि ॥ सर्वेकच्छपदेशीयोययौपरिमलाज्ञया ॥१८॥
तदासौचमहीराजोमहीपत्यनुमोदितः ॥ चामुंडंशीघ्रमाहूयलक्षसैन्यसमन्वितम् ॥ १९ ॥ आदेशंकृतवान्राजातस्यबंधनहेतवे ॥
सचनेत्रवतीकूलेसंप्राप्तेलक्षसैन्यपः ॥ २० ॥ रुरोधसूर्य्यवंशीयंजगनायकमुत्तमम् ॥ सतदाखड्गमादायबाहुशालीयतेंद्रियः ॥ २१ ॥
तत्रशूरशतंहत्वानभोमार्गमुपाययौ ॥ सेनापतेश्चमुकुटंगजस्थस्यगृहीतवान् ॥ २२ ॥ लज्जितस्सतुचामुंडोवचनंप्राहनम्रधीः ॥
भवान्वृत्तिकरोमह्यंक्षत्रियोब्राह्मणस्यवै ॥ २३ ॥ देहिमेमुकुटंवीरचिरंजीवसुखीभव ॥ इतिश्रुत्वासविनयंदत्त्वातस्मैशुभंवसु ॥ २४ ॥
कुठारनगरेप्राप्तोवामनेनसुरक्षितः ॥ दृष्ट्वातत्रवटच्छायांश्रमेणातीवकर्षितः ॥ २५ ॥ सुष्वापनिर्भयोवीरस्तत्रस्थानेसुखप्रदे ॥ तदातुवाम
नोज्ञात्वास्वदूतैस्तत्रकारणम् ॥ २६ ॥ वस्त्राण्याच्छाद्यचागम्यचाहरद्धरिनागरम् ॥ हतेतस्मिंश्चदिव्याश्वेप्रबुद्धोजगनायकः ॥ २७ ॥

चिंतामवाप्यमहतींरोदनंकृतवान्बहु ॥ अश्वांघ्रिचिह्नमालोक्यवामनंप्राप्यनिर्भयः ॥ २८ ॥ वचनंप्राहनम्रात्मानृपंगौरान्वयोद्भवम् ॥
क्षत्रियाणांहिसंहास्त्योभयदोभुविसर्वदा ॥२९॥सभवान्राजनीतिज्ञोदेहिमेऽश्वंसुखीभव ॥ नोचेत्त्वांवैसनगरंकृष्णांशःसंक्षयिष्यति ॥३०॥
इतिश्रुत्वातुवचनंवामनोगौरवंशजः ॥ भयभीतोविनिश्चित्यप्रददौहरिनागरम् ॥ ३१ ॥ प्रतोदंस्वर्णरचितंनानारत्नसमन्वितम् ॥
लोभाच्चनददौराजामृषाशपथकारकः ॥ ३२ ॥ तदापरिमलापुत्रःकुंठितःप्राहभूपतिम् ॥ प्रतोदोलोभतेराजन्क्षयंदुर्गोगमिष्यति ॥३३॥
इत्युक्त्वाप्रययौवीरःकान्यकुब्जंमहोत्तमम् ॥ लक्षणोहस्तिनीसंस्थोवचनंप्राहगर्वितः ॥ ३४ ॥ कस्त्वंप्राप्तोहयारूढोनिर्भयःक्षत्रियोत्तमः ॥
सहोवाचमहाराजप्रेषितश्चंद्रवंशिना ॥ ३५ ॥ तवान्तिकंसमायातःशरणागतवत्सल ॥ महीराजश्चबलवान्सकुलंचंद्रवंशिनम् ॥ ३६ ॥
हनिष्यतिचरौद्रास्त्रैर्महीपत्यनुमोदितः ॥ अतस्त्वंस्वबलैस्सार्द्धंसहाह्लादादिभिर्युतः ॥ ३७ ॥ गच्छगच्छमहाराजमृतानुज्जीवयाधुना ॥
इत्युक्तोलक्षणस्तेनजयचंद्रंप्रणम्यसः ॥ ३८ ॥ सर्वंवैकथयामासमहीराजोयथागतः ॥ जयचंद्रस्तुतच्छ्रुत्वाचाहूयजगनायकम् ॥ ३९ ॥
वचनंप्राहक्रुद्धात्माशृणुगौतमवंशज ॥ राजापरिमलःक्रूरस्त्यक्त्वामांनिजभूपतिम् ॥ ४० ॥ प्रीतिश्चकृतवांस्तेनमच्छत्रोर्देहलीपतेः ॥
प्रियंसंबंधिनंमत्वासंत्यक्तास्तेनरक्षकाः ॥ ४१ ॥ यथाकृतंफलंतेनभोक्तव्यंचतथाभुवि ॥ इतिश्रुत्वातुवचनंकृष्णांशःप्राहनम्रधीः ॥ ४२ ॥
राजञ्छुद्धःपरिमलोमहीपत्यनुवाचकः ॥ अतोवैत्वांसमुत्सृज्यभूमिराजवशंगतः ॥ ४३ ॥ भवान्वैसर्वधर्मज्ञस्तत्क्षमस्वापराधकम् ॥
आज्ञांदेहिमहाराजवसिष्यामस्तदंतिकम् ॥४४॥ इतिश्रुत्वातुवचनंजयचंद्रोमहीपतिः ॥ कृष्णांशंप्राहभोवीरदेहिमेभुक्तिमौल्यकम्॥४५॥
शीघ्रंव्रजाश्वसकुलोनोचेद्रंगंतुमर्हति ॥ इतिश्रुत्वाविहस्याहकृष्णांशस्सर्वमोहनः ॥ ४६ ॥ मयादिग्विजयंसर्वंकृतंभीरुभयंकरम् ॥
तदेयंदेहिमेराजन्गृहाणभुक्तिमौल्यकम् ॥४७॥ इत्युक्तस्सतुभूपालःकृष्णांशेनविलज्जितः ॥ सैन्यमाज्ञापयामाससप्तलक्षंमहाबलम् ॥४८॥
तदावैसकुलोवीरश्चाह्लादोलक्षणान्वितः ॥ नृपस्याग्रेसमास्थायनमस्कृत्यययौमुदा ॥ ४९ ॥ कुठारनगरंप्राप्यनृपदुर्गंरुरोधह ॥ ज्ञात्वास
वामनोभूपःप्रतोदंचददौमुदा ॥ ५० ॥ सैन्यायुतयुतंभूपंवामनंलक्षणोबली ॥ पश्चात्कृत्यययौशीघ्रंयमुनातटमुत्तमम् ॥ ५१ ॥ यमुनाज

लसुत्तीर्यकल्पक्षेत्रमवातवान् ॥ गंगासिंहंचनृपतिंषष्टिसाहस्रसंयुतम् ॥ ५२ ॥ पुरस्कृत्यययौवीरोलक्षणोबलवत्तरः ॥ नदींवेत्रवतीं
रम्यांसमागम्यबलैस्सह ॥ ५३ ॥ तत्रोषुःक्षत्रियाःशूरास्सर्वेशस्त्रास्त्रसंयुताः ॥ एतस्मिन्नंतरेवीरश्चामुंडोलक्षसैन्यपः ॥ ५४ ॥ शतघ्नीः
स्थापयामासभैरवीःशत्रुनाशिनीः ॥ तयोश्चासीन्महद्युद्धंशतघ्नीरणसंस्थयोः ॥ ५५ ॥ प्रहरान्तेचतत्सैन्यंदृष्ट्वाशूरपराजितम् ॥
रक्तबीजःसमागम्यगजस्थस्त्वरितोबली ॥ ५६ ॥ स्वबाणैस्ताडयामाससैन्यंतालनपालितम् ॥ केचिच्छूराहतायुद्धेकेचित्तत्रपराजिताः
॥ ५७ ॥ दुद्रुवुर्भयभीताश्चचामुंडेनचपीडिताः ॥ प्रभग्नंस्वबलंदृष्ट्वातालनःपरिघायुधः ॥ ५८ ॥ जघानतेनसगजंचामुंडोभूमि
मागतः ॥ खड्गयुद्धपरोवीरस्तालनंपरिघायुधम् ॥ ५९ ॥ पराजित्यययौपश्चाच्छत्रुसैन्यक्षयंकरः ॥ लक्षणस्त्वरितोगत्वास्वभल्लेनचतंरि
पुम् ॥ ६० ॥ भुजयोस्ताडयामासतदातेबहुधाऽभवन् ॥ सहस्रंरक्तबीजाश्चखड्गशक्त्यृष्टिपाणयः ॥ ६१ ॥ तिष्ठतिष्ठेतिभाषन्तः
क्षत्रियान्युद्धदुर्मदान् ॥ आह्लादाद्याश्चतेशूरारक्तबीजभयातुराः ॥ ६२ ॥ त्यक्त्वायुद्धंययुस्सर्वेब्रह्मानंदंमहाबलम् ॥ ब्रह्मानंदस्तु
तान्दृष्ट्वागत्वास्वपितरंप्रति ॥ ६३ ॥ वृत्तांतंकथयामासलक्षणागमनंमुने ॥ श्रुत्वापरिमलोराजाप्रेमविह्वलगद्गदः ॥ ६४ ॥ आह्ला
दपार्श्वमागम्यरुरोदभृशमातुरः ॥ तदातुदेवकीदेवीनृपतिंप्रेमतत्परम् ॥ ६५ ॥ उवाचसुमुखीदीनावयंतेभक्तितत्पराः ॥ भवता
संपरित्यक्ताविचरामोऽन्यभूपतिम् ॥ ६६ ॥ क्षमस्वममदौरात्म्यंपूर्वजन्मविपाकजम् ॥ इतिश्रुत्वाचनृपतिःपरमानंदनिर्भरः ॥ ६७ ॥
मंत्रिणश्चाधिकारंचरामांशायददौमुदा ॥ स्वकीयंलक्षसैन्यंचतत्पतिश्चोदयःकृतः ॥ ६८ ॥ ततःपंचदिनान्तेतुमहीराजस्समागतः ॥ रुरोध
नगरींसर्वांचामुंडबलदर्पितः ॥ ६९ ॥ तयोश्चासीन्महद्युद्धंमासमात्रंभयानकम् ॥ प्रभातेविमलेजातेकृष्णांशोलक्षसैन्यपः ॥ ७० ॥ चामुं
डान्तमुपागम्यसहस्रंस्वांगसंयुतम् ॥ चिच्छेदचशिरस्तेषांचामुंडानांपृथक्पृथक् ॥ ७१ ॥ छिन्नेशिरसितेसर्वेलक्षवीराबभूविरे ॥ तदाते
व्याकुलाःसैन्याश्चामुंडैस्तैःप्रपीडिताः ॥ ७२ ॥ विस्मितश्चैवकृष्णांशोभयभीतस्तदामुने ॥ तुष्टावशारदांदेवींसर्वमंगलकारिणीम् ॥ ७३ ॥
॥ कृष्णांशउवाच ॥ नमस्तेशारदेमातर्ब्रह्मलोकनिवासिनि ॥ त्वयाततमिदंविश्वंशब्दमात्रनिरंतरम् ॥ ७४ ॥ रक्तबीजविनाशायचामुंडा

रूपधारिणि ॥ नमस्तेदिव्यचामुंडेपाहिमांशरणागतम् ॥ ७५ ॥ इतिश्रुत्वास्तवंदेवीवरदासर्वकारिणी ॥ तस्यखड्गमुपागम्यरक्तबीजंददा हवै ॥ ७६ ॥ भस्मीभूतेलक्षरिपौचामुंडोभूमिमागतः ॥ बबंधतंसकृष्णांशोब्रह्मानंदांतिकंययौ ॥ ७७ ॥ भूमिराजस्तुतच्छ्रुत्वाभयभीतः समागतः ॥ तदापरिमलंभूपंदयालुंप्रेमविह्वलम् ॥ ७८ ॥ उवाचवचनंराजाक्षमस्वममदुष्कृतम् ॥ महीपतेश्ववचनान्महद्भयमुपागतः ॥ ॥ ७९ ॥ अद्यप्रभृतिभोवीरसंत्यक्तःकलहःप्रियः ॥ भवांश्चममसंबंधीवयंवैतवकिंकराः ॥ ८० ॥ इतिश्रुत्वापरिमलोराजानमिदमब्रवीत् ॥ रत्नभानोश्चतनयंलक्षणंनामविश्रुतम् ॥ ८१ ॥ शरण्यंशरणंपाहिविष्णुभक्तंदयापरम् ॥ इतिश्रुत्वाभूमिराजोद्विजरूपधरोबली ॥ ८२ ॥ साष्टांगंदंडवद्भूमौलक्षणस्यचकारह ॥ तदातुलक्षणोवीरःकृत्वास्नेहंनृपोपरि ॥ ८३ ॥ सप्तलक्षबलैःसार्द्धंकान्यकुब्जमुपाययौ ॥ फा ल्गुनेमासिसंप्राप्तेसर्वेस्वंस्वंगृहंययुः ॥ ८४ ॥ बलखानेर्गयाश्राद्धमचीकरदविप्लुतः ॥ चैत्रमासिसितेपक्षेसंप्राप्यानिजमंदिरे ॥ ८५ ॥ ब्राह्म णान्भोजयामाससहस्रान्वेदतत्परान् ॥ ८६ ॥ इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चये सप्तविंशोऽध्यायः ॥ २७ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ अष्टाविंशाब्दकेप्राप्तेकृष्णांशेबलवत्तरे ॥ कार्तिक्यामिंदुवारेचकृत्तिकाव्य तिपातभे ॥ १ ॥ कृष्णांशोऽयुतसेनाढ्यःस्वर्णवत्यासमन्वितः ॥ विवाहमुकुटस्यैवसंत्यागाययौमुदा ॥ २ ॥ पवित्रमुत्पलारण्यं वाल्मीकिमुनिसेवितम् ॥ गंगाकूलेब्रह्ममयंलोहकीलकमुत्तमम् ॥ ३ ॥ तत्रगत्वासशुद्धात्मापुष्पवत्यासमन्वितः ॥ गोसहस्रंचविप्रेभ्योददौ स्नानेप्रसन्नधीः ॥ ४ ॥ एतस्मिन्नंतरेप्राप्ताम्लेच्छजातिसमुद्भवा ॥ शोभानाममहारम्यावेश्यापरमसुन्दरी ॥ ५ ॥ साददर्शपरंरम्यंकृष्णां शंपुरुषोत्तमम् ॥ तद्दृष्टिमोहमापन्नाव्याकुलाचाभवत्क्षणात् ॥ ६ ॥ मूर्च्छितांतांसमालोक्यकृष्णांशःसर्वमोहनः ॥ स्वानिवास मुपागम्यविप्रानाहूयपृष्टवान् ॥ ७ ॥ अष्टादशपुराणानिकेनप्रोक्तानिकिंफलम् ॥ ब्रूतमेविदुषांश्रेष्ठावेदशास्त्रपरायणाः ॥ ८ ॥ इतिश्रुत्वावचोरम्यंविद्वांसःशास्त्रकोविदाः ॥ अब्रुवन्वचनंरम्यंकृष्णांशंसर्वधर्मगम् ॥ ९ ॥ पराशरेणरचितंपुराणंविष्णुदैवतम् ॥ शिवेनरचितंस्कांदंपाद्मंब्रह्ममुखोद्भवम् ॥ १० ॥ शुकप्रोक्तंभागवतंब्राह्मंवैब्रह्मणाकृतम् ॥ गारुडंहरिणाप्रोक्तंषड्वैसात्विकसं

भवाः ॥ ११ ॥ मत्स्यःकूर्मोनृसिंहश्चवामनःशिवएवच ॥ वायुरेषांपुराणानिव्यासेनरचितानिवै ॥ १२ ॥ राजसाःषट्स्मृतावी
रकर्मकांडमयाभुवि ॥ मार्कंडेयंचवाराहंमार्कंडेयेननिर्मितम् ॥ १३ ॥ आग्नेयमंगिराश्चैवजनयामासचोत्तमम् ॥ लिंगब्रह्मां
डकेवापितांडिनारचितेशुभे ॥ १४ ॥ महादेवेनलोकार्थेभविष्यंरचितंशुभम् ॥ तामसाःषट्स्मृताःप्राज्ञैःशक्तिधर्मपरायणाः ॥ १५ ॥
सर्वेषांचपुराणानांश्रेष्ठंभागवतंस्मृतम् ॥ घोरेभुविकलौप्राप्तेविक्रमोनामभूपतिः ॥ १६ ॥ कैलासाद्भुवमागत्यमुनीन्सर्वान्समाह्वयत् ॥
तदातेमुनयस्सर्वेनैमिषारण्यवासिनः ॥ १७ ॥ प्रोक्तान्युपपुराणानिसूतेनाष्टादशैवच ॥ इतिश्रुत्वातुवचनंकृष्णांशोधर्मतत्परः ॥ १८ ॥
श्रुत्वाभागवतंशास्त्रंसप्तमेऽह्निमहोत्तमम् ॥ ददौदानानिविप्रेभ्योगोसुवर्णमयानिच ॥ १९ ॥ ब्राह्मणान्भोजयामाससहस्रान्वेदतत्परान् ॥
तदातुभिक्षुकीभूत्वाशोभानाममदातुरा ॥२०॥ मायांकृतवतीप्राप्ताकृष्णांशोयत्रवैस्थितः ॥ ध्यात्वामहामदंवीरंपैशाचंरुद्रकिंकरम् ॥२१॥
मायांसाजनयामाससर्वपाषाणकारिणीम् ॥ दृष्ट्वास्वर्णवतींदेवींतांमायांशोभयोद्भवाम् ॥ २२ ॥ छित्त्वाचाह्लाद्यवामांगींस्वगेहंगंतुमुद्यता ॥
सावेश्यातुशुचाविष्टातस्याःशृंगारमुत्तमम् ॥२३॥ स्वर्णयंत्रस्थितंरम्यंलक्षद्रव्योपमूल्यकम् ॥संहृत्यमाययाधूर्तादेशंबाह्लीकमाययौ॥२४॥
कल्पक्षेत्रमुपागम्यनेत्रसिंहसमुद्भवा ॥ वेश्ययाममशृंगारंहृतंज्ञात्वासुदुःखिता ॥ २५ ॥ कृष्णांशंवचनंप्राहगच्छगच्छमहाबल ॥ गृहीत्वा
ममशृंगारंशीघ्रमागच्छमांप्रति ॥ २६ ॥ गुटिकेयंमयावीररचितातांमुखेनच॥धूर्तमायाविनाशायतवमंगलहेतवे ॥२७॥ इतिश्रुत्वातथाकृ
त्वाकृष्णांशस्सर्वमोहनः॥शूकरक्षेत्रमागम्यतत्रवेश्यांददर्शह॥२८॥सातुवेश्याचतंवीरंदृष्ट्वाकंदर्पकारिणम् ॥ रचित्वाचपुनर्मायांतदन्तिकमु
पागता॥२९॥तदासानिष्फलीभूत्वारुरोदकरुणंबहु ॥ रुदंतींतांसमालोक्यदयालुस्सप्रसन्नधीः॥३०॥ गृहीत्वासर्वशृंगारंवचनंप्राहनिर्भयः॥
किंरोदिषिमहाभागेसत्यंकथयमाचिरम् ॥ ३१ ॥ साहमेसहरोनामभ्राताप्राणसमप्रियः ॥ नाट्यैश्चपंचसाहस्रैः सहितोमरणंगतः ॥ ३२ ॥
अतोरौमिमहाभागसंप्राप्ताशरणंत्वयि ॥ इत्युक्त्वामाययाधूर्ताकृत्वाशवमयान्त्यजान् ॥ ३३ ॥ तस्मैप्रदर्शयामासनिजकार्यपरायणा ॥
रुदित्वाचपुनस्तत्रप्राणांस्त्यक्तुंसमुद्यता ॥३४॥ दयालुस्सचकृष्णांशस्तामाहकरुणंवचः ॥ कथंतेजीवयिष्यंतिशोभनेकथयाशुभे ॥३५॥

साहवीरतवास्येतुसंस्थितागुटिकाशुभा ॥ देहिमेकृपयावीरजीवयिष्यंतितेतया ॥ ३६ ॥ इत्युक्तस्तुतयावीरोददौतस्यैचतद्वसु ॥ तदा
प्रसन्नासाधूर्ताकृत्वाशुकमयंवपुः ॥ ३७ ॥ पंजरस्थमुपादायकृष्णांशंकामविह्वला ॥ वाहीकदेशमागम्यसारङ्गनगरंशुभम् ॥ ३८ ॥ उवा
चचस्वयंगेहेकृत्वादिव्यमयंवपुः ॥ निशीथेसमनुप्राप्तेकृत्वातंनररूपिणम् ॥ ३९ ॥ आलिलिंगाहिकामाताकृष्णांशंधर्मकोविदम् ॥ दृष्ट्वातां
सतथाभूतांकृष्णांशोजगदंबिकाम्॥ ४०॥तुष्टावमनसाधीरोरात्रिसूक्तेननम्रधीः ॥ तदासास्वैडिनीभूत्वात्यक्त्वाकृष्णांशमुत्तमम् ॥ ४१ ॥
पुनःशुकमयंकृत्वाचिंचिणीवृक्षमारुहत् ॥ तदास्वर्णवतीदेवीबोधिताविष्णुमायया ॥ ४२ ॥ कृत्वाश्येनिम यंरू पंतत्रगत्वामुदान्विता ॥
ददर्शशुकभूतंचकृष्णांशंयोगतत्परम् ॥ ४३ ॥ एतस्मिन्नंतरेवेश्यापुनःकृत्वाशुभंवपुः ॥ नरभूतंचकृष्णांशंवचनंप्राहनम्रधीः ॥ ४४ ॥
अयेप्राणप्रियस्वामिन्भजमांकामविह्वलाम् ॥ त्राहिमांरतिदानेनधर्मज्ञोसिभवान्सदा॥ ४५ ॥इत्युक्तस्सतुतामाहवचनंशृणुशोभने ॥ आर्य
धर्मस्थितोहंवैवेदमार्गपरायणः ॥ ४६ ॥ विवाहितांशुभांनारींयोभजेतऋतौनहि ॥ सपापीनरकंयातितिर्यग्योनिमयंस्मृतम् ॥ ४७ ॥
अतःपरस्त्रियाभोगंज्ञेयंवैनिरयप्रदम् ॥ इतिश्रुत्वातुसाप्राहविश्वामित्रेणधीमता ॥ ४८ ॥ शृंगेणाचमहाप्राज्ञवेश्यासंगःकृतःपुरा ॥ नकोऽ
पिनरकंप्राप्तस्तस्मान्मांभजकामिनीम्॥४९॥पुनश्चाहसकृष्णांशःकृत्तंपापंतपोबलात्॥ताभ्यांचमुनियुग्माभ्यामसमर्थोहिसांप्रतम् ॥५० ॥
अर्द्धांगंपुरुषस्यस्त्रीमैथुनेचविशेषतः ॥ अहमार्यश्चभवतीवेश्याचबहुभोगिनी॥५१॥ ऋचिश्श ब्दश्चपूर्वास्याज्जातोऋग्जस्सनातनः॥योगजश्चै
वयःशब्दोदक्षिणास्याद्यजुर्भवः ॥ ५२ ॥ तद्धितान्तश्चयश्शब्दाःपश्चिमास्याच्चसामजः ॥ छंदोभूताश्चयेशब्दास्तेसर्वेब्राह्मणप्रियाः ॥ ५३ ॥
केवलोवर्णमात्रश्चसशब्दोऽथर्वजःस्मृतः ॥ पंचमास्याच्चयेजाताःशब्दाःसंसारकारिणः ॥५४॥ तेसर्वेप्राकृताज्ञेयाश्चतुर्लक्षविभेदिनः॥ हित्वा
तान्योहिशुद्धात्माचतुर्वेदपरायणः॥५५॥सनैभवाटवींत्यक्त्वापदंगच्छत्यनामयम् ॥ नवदेद्यावनींभाषांप्राणैःकंठगतैरपि ॥५६॥ गजैरापी
ड्यमानोऽपिनगच्छेज्जैनमंदिरम् ॥ इत्येवंस्मृतिवाक्यानिमुनिनापठितानिवै ॥ ५७ ॥ कथंत्याज्योमयाधर्मस्सर्वलोकसुखप्रदः॥ इतिश्रुत्वा
तुसावेश्याम्लेच्छायाश्चांशसंभवा॥५८॥शोभनानामरंभोरूर्महाक्रोधमुपाययौ॥वेतसैस्ताडयित्वातंपुनःकृत्वाशुकंस्वयम्॥५९॥ नददौभो

जनंतस्मैफलाहारंशुकाययौ॥तदास्वर्णवतीदेवीकृत्वानारीमयंवपुः ॥६०॥मशकीकृत्यतंवीरंतत्रैवान्तरधीयत ॥ पुनःश्येनीवपुःकृत्वास्वदे
शाद्यातुमुद्यता ॥ ६१ ॥ पृष्ठमारोप्यमशकंमयूरनगरंययौ ॥ मकरंदस्तुतांदृष्ट्वाकृष्णांशेनसमन्विताम् ॥ ६२ ॥ नेत्रपालस्यतनयांनाम्ना
स्वर्णवतींबली ॥चरणावुपसंगृह्यस्वगेहेतामवासयत् ॥ ६३॥ शोभनापिचसंबुध्यपंजरान्तमुपस्थिता ॥ नददर्शशुकंरम्यंमूर्छिताचापतद्भु
वि ॥६४॥ किंकरोमिक्वगच्छामिविनातंरमणंपरम् ॥ इत्येवंबहुधालप्यमदहीनपुरंययौ ॥ ६५॥ तत्रस्थितंचपैशाचंमायामदविशारदम् ॥
महामदंचसंपूज्यस्वदेहंत्यक्तुमुद्यता॥६६॥महामदस्तुसंतुष्टोगत्वावैशिवमंदिरम्॥मरुस्थलेश्वरंलिंगंतुष्टावार्षभभाषया ॥६७॥तदाप्रसन्नोभ
गवान्वचनंप्राहसेवकम् ॥ स्वर्णवत्याहृतोवीरःकृष्णांशश्चार्यधर्मगः ॥ ६८ ॥ मयासहसमागच्छमयूरनगरंप्रति ॥ इत्युक्तस्तेनपैशाचोनटैः
पंचसहस्रकैः ॥ ६९ ॥ तयासहययौतूर्णंसहुरेणसमन्वितः ॥ इन्दुलश्चतथाल्हादोबोधितोविष्णुमायया ॥ ७० ॥ त्रिलक्षबलसंयुक्तोदेवसिं
हेनसंयुतः ॥ मयूरनगरंप्राप्यमकरंदमुपाययौ ॥ ७१ ॥ तदातुशोभनावेश्यासहुरेणबलैस्सह ॥ चकारभैरवींमायांसर्वशत्रुभयंकरीम्॥७२॥
सर्वतश्चोत्थितोवातोमहामेघसमन्वितः ॥ पतंतिबहुधाचोल्काःशर्करावर्षणेरताः ॥७३॥ दृष्ट्वातांभैरवींमायांतमोभूतांसमन्ततः ॥ मकरन्द
श्चबलवान्रथस्थःस्वयमाययौ ॥ ७४ ॥ शानिभल्लेनतांमायांभस्मकृत्वामहाबली ॥ गृहीत्वासहुरंधूर्तंसबलंगेहमानवान् ॥ ७५ ॥ तदातुशो
भनानारीकाममायांचकारह ॥ बहुलास्संस्थितावेश्यागीतनृत्यविशारदाः ॥ ७६ ॥ मोहिताःक्षत्रियाःसर्वेमुमुहुर्लास्यदर्शनात् ॥ देवसिंहा
च्चकृष्णांशाद्दतेतेजडतांगताः ॥ ७७ ॥ तदास्वर्णवतीदेवीकामाक्षीध्यानतत्परा ॥ पुनरुत्थायतान्सर्वान्गृहीत्वाशोभनांपुनः ॥ ७८ ॥
मयूरध्वजमागम्यनिगडैस्तान्बबंधह ॥ महामदस्तुतज्ज्ञात्वारुद्रध्यानपरायणः ॥ ७९ ॥ चकारशाम्बरींमायांनानासत्वविधायिनीम् ॥
व्याघ्राःसिंहावराहाश्चवानरादंशकानराः ॥ ८० ॥ सर्पागृध्रास्तथाकाकाभक्षयंतिसमंततः ॥ हाहाभूतेचतत्सैन्येदिक्षुविद्राविते सति ॥८१॥
शोभनाचाभवद्दासीस्वर्णवत्याश्चमायिनी ॥ सहुरस्तैर्नटैस्सार्द्धंचाह्लादेनैवचूर्णितः ॥ ८२ ॥ तेषांरुधिरकुंभानिभूमिमध्येसमारुहन् ॥

एवंचमुनिशार्दूलचतुर्मास्यमभवद्रणः ॥ ८३ ॥ वैशाखेमासिसंप्राप्तेतेवीरागेहमाययुः ॥ इतितेकथितंविप्रचान्यत्किंश्रोतुमिच्छसि ॥ ८४ ॥
इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेऽष्टाविंशोऽध्यायः ॥ २८ ॥ छ ॥ ॥
ऋषयऊचुः ॥ किन्नरीनामयाकन्यात्वयाप्रोक्तामहामुने ॥ कुत्रस्थानेकथंजातातत्सर्वंकृपयावद ॥ १ ॥ सूतउवाच ॥ पुराचैत्ररथेदेशेनाना
जननिषेविते ॥ वसंतसमयेप्राप्तेक्रीडंत्यत्रदिवौकसः ॥ २ ॥ मंजुघोषाचस्ववेश्याशुकस्थानेसमागता ॥ दृष्ट्वातंसुंदरंबालंमोहनायसमुद्यता
॥३॥गीतनृत्यादिरागांश्चकृत्वासाकामविह्वला ॥ प्रांजलिंप्रणताबद्धापुनस्तुष्टावतंमुनिम् ॥४॥ तदाशुकस्तुभगवान्पद्यैःस्तुतिमयंशुभम् ॥
श्रुत्वाप्रसन्नहृदयोवरंब्रूहीतिसोऽब्रवीत् ॥ ५ ॥ सातुश्रुत्वाशुभंवाक्यंप्रोवाचश्लक्ष्णयागिरा ॥ पतिर्मेभवहेनाथशरणागतवत्सल ॥ ६ ॥
इतिश्रुत्वातुवचनंतथाकृत्वातयासह ॥ सरेमेमुनिशार्दूलःशुकोविज्ञानकोविदः ॥ ७ ॥ तयोस्सकाशात्संजज्ञेमुनिर्नामसुतोऽनयोः ॥
तपश्चकारबलवान्द्वादशाब्दंप्रयत्नतः ॥ ८ ॥ तस्मैददौतदापत्नींस्वर्णदेवस्यवैसुताम् ॥ कुबेरोरुद्रसहितःसमुनिस्तुमुदान्वितः ॥ ९ ॥
तयोरेभेप्रसन्नात्मातयोर्जातासुतोत्तमा ॥ किन्नरीनामविख्याताहिमतुंगेसमुद्भवा ॥ १० ॥ तपश्चचारसादेवीरूपयौवनशालिनी ॥
तदाप्रसन्नोभगवाञ्छंकरोलोकशंकरः ॥ ११ ॥ मकरंदायधीरायददौतांरुचिराननाम् ॥ मुनिस्तुशंकरंप्राहदेवदेवनमोऽस्तुते ॥ १२ ॥
मत्सुतायैवरंदेहिराष्ट्रंवर्धनमुत्तमम् ॥ इतिश्रुत्वाशिवःप्राह गुरुंडान्तेचभूतले ॥ १३ ॥ मध्यदेशेचतेराष्ट्रंभविष्यातिसुखप्रदम् ॥
त्रिंशताब्दप्रमाणेनतत्पश्चात्क्षयमेष्यति ॥ १४ ॥ इतिश्रुत्वातुसमुनिर्हिमतुंगनिवासकः ॥ मकरंदेनसहितस्तत्रवासमकारयत् ॥ १५ ॥
इतितेकथितंविप्रपुनःशृणुकथांशुभाम् ॥ ऊनत्रिंशाब्दकेप्राप्तेकृष्णांशेरणकारणम् ॥ १६ ॥ नेत्रपालस्यनगरंनानाधातुविचित्रितम् ॥
मत्वान्यूनपतिर्बौद्धोरुरोधनगरंशुभम् ॥ १७ ॥ सप्तलक्षयुतोराजाबौद्धसिंहोमहाबलः ॥ त्रिलक्षबलसंयुक्तैस्सार्द्धंयुद्धमचीकरत् ॥ १८ ॥
सप्ताहोरात्रमभवत्सेनायुद्धंभयानकम् ॥ योगसिंहोभोगसिंहोविजयश्चमहाबली ॥ १९ ॥ जघानशात्रवींसेनांबौद्धसिंहेनपालिताम् ॥
एतस्मिन्नंतरेप्राप्ताः श्यामजापकदेशगाः ॥ २० ॥ बौद्धामायाविनस्सर्वेलोकमान्यप्रपूजकाः ॥ पुनर्जातंमहद्युद्धंमासमेकंतयोस्तदा ॥ २१ ॥

नेत्रपालाज्ञयासर्वेकृष्णांशाद्याः समागताः ॥ कृष्णांशोबिंदुलारूढोदेवःस्वहयसंस्थितः ॥ २२ ॥ इंदुलश्चकरालाश्वंमंडलीकोगजेस्थितः ॥
गोतमश्वसमायातोहरिनागरसंस्थितः ॥ २३ ॥ तालनश्चसमायातः सिंहिन्युपरिसंस्थितः ॥ धान्यपालस्तैलयकारोयुयुत्सोरंशसंभवः ॥२४॥
लल्हसिंहश्चबलवान्कुंतिभोजांशसंभवः ॥ ताम्बूलीयकजातीयोलक्षणानुज्ञयाययौ ॥ २५ ॥ तदातुनेत्रसिंहश्चसप्तलक्षबलैर्वृतः ॥
पालितश्चाष्टभिर्वीरैस्तेषांनाशायचाययौ ॥२६॥ भयभीताश्चतेबौद्धास्त्यक्त्वादेशंसमन्ततः ॥ चीनदेशमुपागम्ययुद्धभूमिमकारयन् ॥२७॥
तदनुप्रययुस्तेवैहूहानदमुपस्थिताः ॥ माघमासेतुसंप्राप्तेपुनर्युद्धमवर्तत ॥ २८ ॥ श्यामदेशोद्भवालक्षास्तथालक्षाश्चजापकाः ॥ दशल
क्षाश्चीनदेश्यायुद्धायसमुपस्थिताः ॥ २९ ॥ कृष्णांशोलक्षसेनाढ्योदेवोलक्षसमन्वितः ॥ नेत्रपालश्चलक्षाढ्योयोगभोगसमन्वितः ॥ ३० ॥
मंडलीकश्चेन्दुलेनलक्षसैन्यसमन्वितः ॥ ध्यानपालोलल्हसिंहोलक्षसैन्यान्वितः स्थितः ॥ ३१ ॥ जगनायकएवापिलक्षसैन्ययुतः स्थितः ॥
तालनोलक्षसेनाढ्योयुद्धायसमुपागतः ॥ ३२ ॥ तत्रयुद्धमभूद्घोरंबौद्धानामार्यकैस्सह ॥ पक्षमात्रंमुनिश्रेष्ठयमलोकविवर्द्धनम् ॥ ३३ ॥
सप्तलक्षाहताबौद्धाद्विलक्षाश्चार्यदेशजाः ॥ ततस्तेभयभीताश्चत्यक्त्वायुद्धंगृहंययुः ॥ ३४ ॥ कृत्वादारुमयींसेनांकलयंत्रप्रभावतः ॥
गजाश्वदशसाहस्राःसशूराःकाष्ठनिर्मिताः ॥ ३५ ॥ एकलक्षाहयारूढादारुपाश्चरणोन्मुखाः ॥ सहस्रंमहिषारूढास्सहस्राः कोलपृष्ठगाः ॥३६॥
सिंहारूढास्सहस्राश्चसहस्राहंसवाहनाः ॥ कंकगोमायुगृध्राणांश्यामारूढाः पृथक्तथा ॥ ३७ ॥ उष्ट्राः सप्तसहस्राश्चसशूराश्चरणोन्मुखाः ॥
एवंसपादलक्षैश्चकाष्ठसैन्यैश्चमानुषाः ॥ ३८ ॥ द्विलक्षाश्चक्षयंजग्मुःकृष्णांशाद्यैःसुरक्षिताः ॥ ततोहाहाकृतंसैन्यंचार्य्याणांचननाशतत् ॥
॥ ३९ ॥ दृष्ट्वातत्कौतुकंरम्यंजयन्तोयुद्धकोविदाः ॥ आग्नेयंशरमादायकाष्ठसैन्येषुचाक्षिपत् ॥४०॥ भस्मीभूताश्चतेसर्वेतत्रैवविलयंगताः॥
त्रिलक्षाःक्षत्रियाःशेषाजयंतंरणकोविदम् ॥ ४१ ॥ चक्रुर्जयरवंतत्रतुष्टुवुश्चपुनःपुनः ॥ तदातुचीनजाबौद्धाः कृत्वाविंशत्सहस्रकान् ॥ ४२ ॥
हयारूढाँल्लोहमयान्प्रेषयामासुरूर्जितान् ॥ योगसिंहोगजारूढोधनुर्बाणधरोबली ॥ ४३ ॥ कंठेषुलोहजान्वीरांस्ताडयामाससवैबली ॥
मृतास्तेपंचसाहस्रा योगसिंहशरार्दिताः ॥ ४४ ॥ बौद्धसिंहस्तदाशूरोदृष्ट्वातस्यपराक्रमम् ॥ कृत्वालोहमयंसिंहंयोगसिंहमपेषयत् ॥४५॥

पातेनतस्यासिंहस्यसवीरोमरणंगतः॥तदातुभोगसिंहश्चहयारूढोजगामह ॥ ४६ ॥ स्वभल्लेनचतंसिंहंहत्वातत्रजगर्ज्जवै॥तदातुबौद्धसिंहेनशा
र्दूलस्तत्रचोदितः॥४७॥सहयोभोगसिंहश्चतेनैवमरणंगतः॥मातुलौमृत्युवशगौदृष्ट्वास्वर्णवतीसुतः ॥४८॥ करालंहयमारुह्यबौद्धसिंहमुपाय
यौ॥शरमादायवैशीघ्रंनाम्नासंमोहनंशुभम्॥४९॥मोहयित्वारिपुबलंबौद्धसिंहसमन्वितम्॥बद्ध्वातान्बौद्धसिंहादीन्नृपान्दशसहस्रकान् ॥५०॥
कलयंत्रंचसंचूर्ण्यकृष्णांशःशान्तिकमाययौ ॥ तदातेहर्षितास्सर्वेप्रपेष्यनगरंययुः ॥ ५१ ॥ तद्देशमसुजनायामंसर्वसंपत्समन्वितम् ॥ लुंठयि
त्वाबलात्सर्वेनृपदुर्गमुपाययुः ॥ ५२ ॥ बौद्धसिंहस्तदागत्यजयन्तेनविमोचितः ॥ सुतांस्वांपद्मजांनाम्नाजयन्तायददौमुदा ॥ ५३ ॥
दशकोटीःसुवर्णस्यचाह्लादायतदाधनम् ॥ सर्वैश्चबौद्धवृंदैश्चतत्रैवशपथंकृतम् ॥ ५४ ॥ आर्यदेशंनयास्यामःकदाचिद्राष्ट्रहेतवे ॥ इत्यु
क्त्वातान्प्रणम्याशुसंप्रस्थानमकारयन् ॥ ५५ ॥ त्रिलक्षैश्चयुतास्तेवैनेत्रपालगृहंगताः ॥ ऋषयऊचुः ॥ इन्दुलेनकथंसूततत्रप्राणिकृता
नहि ॥ ५६ ॥ सुप्रियायोगसिंहाद्यास्तन्नोवदविचक्षण ॥ सूतउवाच ॥ आगतायमलोकाद्वैकतिचित्प्राणिनोभुवि ॥ ५७ ॥ तदातुदुः
खितोदेवोमहेंद्रान्तमुपाययौ ॥ देवराजनमस्तुभ्यंसर्वदेवप्रियंकर ॥ ५८ ॥ जयंतोजगतींप्राप्यमृताञ्जीवयतिस्वयम् ॥ अतोवैलोकमर्यादा
विरुद्धाहश्यतेभुवि ॥ ५९ ॥ इतिश्रुत्वातुवचनंमहेन्द्रोदेवमायया ॥ वडवामृतमाहृत्यतथावैस्वर्गगांगतिम् ॥ ६० ॥ जयंतस्यस्वपु
त्रस्यमुमोदससुरैःसह ॥ इन्दुलश्चतदादुःखीशारदांसर्वमंगलाम् ॥ ६१ ॥ पूजयित्वाविधानेनयोगध्यानपरोऽभवत् ॥ इतितेकथितंविप्रपु
नःशृणुकथांशुभाम् ॥ ६२ ॥ नेत्रपालश्चबलवान्बहुपुत्रःशुचान्वितः ॥ दशकोटिमितंस्वर्णंतेभ्योदत्त्वासमंसमम् ॥ ६३ ॥ प्रस्थानंकार
यामासचाष्टानांबलशालिनाम् ॥ तेवैद्विलक्षसैन्याढ्याःस्वगेहाययुर्मुदा ॥ ६४ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडा
परपर्यायेकलियुगीयेतिहाससमुच्चयेएकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ यदातेचीनदेशस्थास्तदाहूतोनृपे
णवै ॥ कामपालेनभोविप्रलक्षणोनकुलांशकः ॥ १ ॥ जयचंद्रमहाभागसावधानंवचःशृणु ॥ वैशाखशुक्लसप्तम्यांमुहूर्तोऽयंदिनागमे ॥ २ ॥
अतोवैलक्षणोवीरश्चैकाकीमांसमाप्नुयात्॥गृहीत्वामत्सुतादोलींगमिष्यातितवान्तिकम् ॥३॥ सेनान्वितंचतंज्ञात्वामहीराजोमहाबलः॥ गृही

ष्यतिपराजित्यतस्माद्योग्यंवचोमम ॥ ४ ॥ इतितत्रत्यवचनंमत्वाराजाप्रसन्नधीः ॥ लक्षणंहस्तिनीसंस्थंशतशूरसमन्वितम् ॥ ५ ॥
आहूयप्रेषयामासकामपालायधीमते ॥ मार्गेपंचदिनंवीरोवसित्वातद्गृहंययौ ॥ ६ ॥ तदापद्माकरःश्यालोज्ञात्वालक्षणमागतम् ॥ भूमिरा
जंसमाहूयतेनयुद्धमचीकरत् ॥ ७ ॥ लक्षणोनकुलांशश्चदृष्ट्वाशत्रुमुपस्थितम् ॥ स्वशरैस्तर्पयामासराजराजंमहाबलम् ॥ ८ ॥ मूर्च्छ
यित्वामहीराजंहत्वापंचशतान्बली ॥ कामपालंसमागम्यनत्वावासमकारयत् ॥ ९ ॥ उत्थितश्चमहीराजोगत्वापद्माकरंप्रति ॥ वचनंप्राह
कार्यार्थीशृणुमित्रवचोमम॥१०॥ लक्षणोमेमहाञ्छत्रुस्सचत्वद्गेहमागतः ॥ यदिदास्यसितंबद्धात्वांमदङ्कंकरोम्यहम् ॥ ११ ॥ इतिश्रुत्वा
सलोभात्मादत्त्वाहालाहलंविषम् ॥ बद्धातंलक्षणंवीरंमहीराजायचार्पयत् ॥ १२ ॥ हत्वाताञ्छतशूरांश्चगुप्तवार्तामकारयन् ॥ ज्ञात्वातत्प
द्मिनीनारीदुःखितालप्यवैभृशम् ॥ १३ ॥ चंडिकांपूजयामासपतिमंगलहेतवे ॥ तदाप्रसन्नासादेवीवरदासर्वमंगला ॥ १४ ॥ आश्वास्यप
द्मिनींनारींलक्षणान्तमुपाययौ ॥ स्वप्नेतामाहसादेवीह्रींफिट्स्वाहेजपंकुरु ॥ १५ ॥ अस्यमंत्रप्रभावाच्चसर्वविघ्नःप्रणश्यति ॥ सबुद्धालक्षणो
वीरस्तंमंत्रंचजजापह ॥ १६ ॥ आषाढेमासिसंप्राप्तेकृष्णांशाद्यागृहंययुः ॥ तालनश्चयुतस्ताभ्यांकान्यकुब्जमुपाययौ ॥ १७ ॥ नह
ष्टोलक्षणोवीरोजयचंद्रप्रियंकरः ॥ ज्ञात्वातत्कारणंतैश्चकृतंयोगमयंवपुः ॥ १८ ॥ धान्यपालःकांस्यधारीवीणाधारीचतालनः ॥ लह्
सिंहोमृदंगाढ्योययुस्तेवैमहावतीम् ॥ १९ ॥ सभांपरिमलस्यैवगत्वातेयोगरूपिणः ॥ चक्रुर्गानंमुदायुक्ताःसर्वेतेमोहमागताः ॥ २० ॥
प्रसन्नश्चतदाराजामुक्तामालांस्वकंठगाम् ॥ तालनायददौप्रीत्याताभ्यांस्वर्णांगुलीयकान् ॥२१॥ तदातेहर्षिताःसर्वेकृष्णांशंप्रतिचाययुः ॥
ज्ञात्वाकृष्णांशएवापिधृत्वायोगमयंवपुः ॥ २२ ॥ ययौबिंदुगढंवीरस्तालनाद्यैस्समन्वितः ॥ हाटमध्येसमागम्यकृत्वारासोत्सवंशुभम् ॥
॥ २३ ॥ गेहंपद्माकरस्यैवगत्वातेननृतुर्मुदा ॥ एतस्मिन्नंतरेसर्वायोषितस्तत्रचागताः ॥ २४ ॥ वेणुवाद्यधृतंवीरंकृष्णांशंददृशुर्मुहुः ॥
मोहितास्तस्यगानेनजडीभूताःप्रयच्छते ॥ २५ ॥ तदातुपद्मिनीनारीसर्वलक्षणसंयुता ॥ ज्ञात्वाकृष्णांशमेवापिरुरोदचिरमातुरा ॥२६॥
उवाचचविलप्याशुमत्पतिर्लक्षणोबली ॥ महीराजेनशूरेणकारागारेबलात्कृतः ॥२७॥अहंयोषाभवान्योगीकथंकार्यंभविष्यति ॥ इतिश्रुत्वा

तुसनृपोभुजमुत्थायसत्वरम् ॥२८॥ आश्वास्यपद्मिनींनारींययुस्तेदेहलींप्रति ॥ राजद्वारमुपागम्यकृष्णांशस्सनननर्तह ॥ २९ ॥ महाराज
स्तुबलवान्प्रसन्नस्तस्यलीलया ॥ वांछितंब्रूहिकृष्णांगसर्वयोगिन्ददाम्यहम् ॥ ३० ॥ इतिश्रुत्वाभूपवचोविहस्योवाचतंप्रति ॥ कारागारंलो
हमयंनृपयोग्यंचमेनृप ॥ ३१ ॥ दर्शयाशुस्वकीयंवैभवान्भूपशिरोमणिः ॥ इतिश्रुत्वासनृपतिर्मोहितःकृष्णलीलया ॥ ३२ ॥ दर्शयित्वाच
वैशीघ्रंपुनस्तेभ्योददौधनम् ॥ ततस्तेयोगिनस्सर्वेसंप्राप्यचमहावतीम् ॥ ३३ ॥ नत्वा परिमलंभूपंकथित्वासर्वकारणम् ॥ स्वसेनांसंजया
मासचाह्लादश्चनृपाज्ञया॥३४॥ पंचलक्षामहावत्याहयारूढास्समास्थिताः॥ तालनस्सप्तलक्षांश्चसैन्यानाहूयचागतः॥३५॥एवंद्वादशलक्षाश्च
क्षात्रियारणदुर्मदाः॥देहलींचसमाजग्मुस्सर्वेशस्त्रसमन्विताः ॥३६॥ एतस्मिन्नंतरेमंत्रीचंद्रभट्टोविशारदः ॥ सर्वशास्त्रार्थकुशलोवैष्णवीशक्ति
पूजकः॥३७॥महीराजंसमागम्यवचःप्राहशृणुष्वभोः॥ मयावैचरहःक्रीडादृष्टादेवीप्रसादतः॥३८॥तत्रोदयश्चकृष्णांशःपूर्णब्रह्माणमागमत् ॥
वचःप्राहप्रसन्नात्माशृणुत्वंसत्त्वविग्रह ॥३९॥ अग्निवंशविनाशायचाद्ययास्यामिदेहलीम्॥हत्वाहंकौरवांशांश्चस्थापयित्वाकलिंभुवि॥४०॥
पुनस्तवान्तिकंप्राप्यरहःक्रीडांकरोम्यहम् ॥ इत्युक्त्वाबिंदुलारूढःसवीरस्त्वामुपस्थितः ॥ ४१ ॥ इत्यहंपृष्टवान्भूपकृष्णांशंयोगनिद्रया ॥
इतितस्यवचःश्रुत्वासभूपोविस्मयान्वितः ॥ ४२॥भयभीतःसहस्रांश्चशूरानाहूयसत्वरम् ॥ तेभ्यश्चलक्षणंदत्वावचनंप्राहतान्प्रति ॥ ४३ ॥
पद्माकरायभूपायगत्वादत्वाशुलक्षणम् ॥ ममान्तिकमुपागम्यकारणंवदताशुतत् ॥ ४४ ॥ इतिश्रुत्वातुतेसर्वेवन्हिवंश्यामहाबलाः ॥
गत्वातत्रतथाकृत्वामहीराजमुपागमत् ॥ ४५ ॥ भगदंतश्चतेषांतुसहस्राणांचनायकः ॥ महीराजंवचःप्राहशृणुतन्नृपभाषितम् ॥ ४६ ॥
पद्मिनीमेस्वसाराजन्गुप्तविद्याविशारदा ॥ तयायज्ञपतिर्देवःसम्यगाराधितःपुरा ॥ ४७ ॥ दत्तंतेनवरंरम्यमन्तर्धानमयंपरम् ॥
सातुतंलक्षणंकांतमंतर्धानंकरिष्यति ॥ ४८ ॥ इतिश्रुत्वासनृपतिःपरमानंदमाप्तवान् ॥ एतस्मिन्नंतरेप्राप्ताःकृष्णांशाद्यामहाबलाः ॥४९॥
रुरुधुर्देहलींसर्वांमहीराजेनपालिताम् ॥ सतदापृथिवीराजोगृहीत्वाबहुभूषणाम् ॥ ५० ॥ सर्वेभ्यश्चददौप्रेम्णावचनंप्राहनम्रधीः ॥
लक्षणोनामतेराजाकारागारेनवैमम ॥ ५१ ॥ यदिमन्नगरेचास्तितर्हितेरोषईदृशः ॥ इत्युक्त्वातंचकृष्णांशंदर्शयामासवैगृहम् ॥ ५२ ॥

महादेवस्यशपथंकृतवान्भूपतिर्भयात् ॥ तदोदयोभूपवचःसत्यंमत्वासुदुःखितः ॥ ५३ ॥ स्वकीयैःसहसंप्राप्तोग्रामंबिंदुगढंशुभम् ॥
कामपालस्तुतच्छुत्वाकृष्णांशगमनंबली ॥ ५४ ॥ बलिंबहुगृहीत्वाशुकृष्णांशंशरणंययौ ॥ प्रांजलिःप्रणतोभूत्वावचनंप्राहभीरुकः॥५५॥
सुतामेपद्मिनीनारीलक्षणेनसमन्विता ॥ नज्ञाताक्वगताऽस्माभिस्सत्यंसत्यंब्रवीम्यहम् ॥ ५६ ॥ इतितद्वचनंश्रुत्वाकृष्णांशःस्वबलैस्सह ॥
कान्यकुब्जंसमागत्यजयचंद्रमुवाचह ॥ ५७॥ भ्रातृजस्तवभूपालपद्मिन्यालक्षणोऽन्वितः ॥ कामपालगृहेनास्तिनिश्चितोबहुधामया ॥५८॥
नजानेक्वगतोराजाममप्राणसमोभुवि ॥ यदिभूपनपश्यामिसत्यंप्राणांस्त्यजाम्यहम् ॥ ५९ ॥ हारत्नभानुतनयविष्णुभक्तशुभंकर ॥ स्व
मित्रंमांपरित्यज्यकांदिशंगतवान्भवान्॥६०॥इत्युक्त्वामूर्छितश्चासीत्कृष्णांशोवैष्णवप्रियः॥तदास्वर्णवतीदेवीस्वदास्याशोभयासह ६१॥
धृत्वाशुकमयंरूपंतत्रागत्यस्वमूर्तिगा ॥ तयासंप्रेषिताशोभाम्लेच्छमायाविशारदा ॥ ६२ ॥ जयचंद्रमुपागम्यधृत्वादिव्यमयंवपुः ॥
उवाचवचनंतत्रशृणुभूपशिरोमणे ॥ ६३ ॥ मायाविनींचमांविद्धिशोभनानामविश्रुताम् ॥ दंपतीतवभूपालसंहृतौयेनयत्रवै ॥ ६४ ॥
तत्राहंचगमिष्यामिमहामदसमन्विता ॥ आह्लादश्चेंदुलोवीरोदेवोवैतालनोबली ॥ ६५ ॥ कृष्णांशपालितास्सर्वेयास्यामोभूपतीन्वयम् ॥
इत्युक्त्वाशोभनावेश्याकृत्वायोगमयंवपुः ॥ ६६ ॥ महामदंसमारुह्यपैशाचंरुद्रकिंकरम् ॥ प्रययौतान्पुरस्कृत्ययोगवेषान्महाबलान्॥६७॥
आह्लादोगजसंस्थोवैकरालारूढइंदुलः ॥ तालनःसिंहिनीसंस्थोदेवःसिंहोमनोरथे ॥ ६८ ॥ कृष्णांशोबिंदुलारूढोनर्तयामासतंहयम् ॥
कामरूपमयंदेशंशतयोजनगामिनः ॥ ६९ ॥ बलवंतश्चसंप्राप्तागेहेगेहेजनेजने ॥ लक्षणंशोधयामासुर्नप्राप्तस्तत्रतंनृपम् ॥ ७० ॥
पुनर्मयूरनगरंशोभनातैःसमन्विता ॥ चिन्वतीतंमनुष्येषुनप्राप्तस्तत्रवैनृपः ॥ ७१ ॥ पुनरिन्नगढग्रामंशोभनाचजनेजने ॥
लक्षणंमृगयामासनप्राप्तस्तत्रलक्षणः ॥ ७२ ॥ गत्वाबाह्लीकनगरंशोभनातैस्समन्विता ॥ लक्षणंचनृपश्रेष्ठंनापश्यत्तत्रदुःखिता ॥ ७३ ॥
पुनःस्वदेशमागम्यबाह्लीकंम्लेच्छवासिनम् ॥ मर्कटेश्वरमीशानंतत्राहवनिवासिनः ॥ ७४ ॥ पूजयित्वाचसावेश्यागानननृत्यपराभवत् ॥
सदेवोभूमिमध्यात्तुसमागम्यमुदान्वितः ॥ ७५ ॥ कृष्णांशंप्रणतोभूत्वाब्रवीन्म्लेच्छप्रपूजकः ॥ अहंकालाग्निरुद्रेणभूमिगतैसुरोपितः ॥७६॥

असमर्थंचमांविद्धिगच्छवरियथासुखम् ॥ इतिश्रुत्वाचसा शोभानिराशाभूत्तदास्वयम् ॥ ७७ ॥ पुनः स्वर्णवतींप्राप्यसर्वमेवादितोऽब्रवी
त् ॥ त्रिंशदब्दैश्चकृष्णांशेचैत्रशुक्लेसमागते ॥ ७८ ॥ तानाश्वास्यसुवर्णांगीपूजयामासचंडिकाम् ॥ नवरात्रंगतंतस्याभोजनाच्छाद
नंविना ॥ ७९ ॥ निशीथेऽन्तेतमःप्राप्तेगत्वाहजगदम्बिका ॥ पद्मिनीनामयानारीमणिदेवस्यवैप्रिया ॥ ८० ॥ जातासाकामपालस्य
गृहेयज्ञावमानिता ॥ सेनापतिः कुबेरस्य मणिदेवोहिसंस्मृतः ॥ ८१ ॥ पूर्वंहिभीमसेनेनयक्षयुद्धेषुघातितः ॥ तदातत्पद्मिनीनारीदेवदे
वमुमापतिम् ॥ ८२ ॥ तुष्टावचनिराहारामत्पतिंदेहिशंकर ॥ शतवर्षांतरेदेवोमहादेवउवाचताम् ॥ ८३ ॥ कलौविक्रमकालेहि
शतद्वादशकेऽन्तिके ॥ नकुलांशंचसंप्राप्यभुक्त्वातेनमहत्सुखम् ॥ ८४ ॥ तद्वियोगेनसंत्यक्त्वादेहंपद्मानुवासितम् ॥ स्वपतिंचतदाप्रा
प्यकैलासंपुनरेष्यसि ॥ ८५ ॥ महावतींपुरींरम्यांराष्ट्रपालायशारदा ॥ करिष्यतितदादेवीमणिदेवस्तुत्वत्पतिः ॥ ८६ ॥ तयाविरचितो
भूमौग्रामरक्षार्थमुद्यतः ॥ प्राप्तस्त्वांपद्मिनींनारींकैलासंपुनरेष्यति ॥ ८७ ॥ अतःस्वर्णवतित्वंवैकैलासंगुह्यकालयम् ॥ गत्वाशुपद्मिनीं
तत्रबोधयाशुवचःकुरु ॥ ८८ ॥ इतिश्रुत्वास्वर्णवतीपद्मिनींप्रतिचागमत् ॥ वृत्तांतंचकथित्वाग्रेपद्मिनीतुदयातुरा ॥ ८९ ॥ कामपालगृहं
प्राप्यतत्रवासमकारयत् ॥ स्वर्णवत्यपिसंप्राप्तातदाशीघ्रंमहावतीम् ॥ ९० ॥ तस्यांगतायांगेहेवैपद्मिन्यालिखितंशुभम् ॥ पत्रंपरिमलो
राजावर्तयामासहर्षितः ॥ ९१ ॥ आगच्छसेनयासार्द्धंकृष्णांशंबलवत्तरम् ॥ जित्वापद्माकरंबंधुंमत्पतिंमोचयाशुवै ॥ ९२ ॥ भूतलेलक्ष
णोराजास्थितःपद्माकरांतिगः ॥ इतिज्ञात्वाचकृष्णांशोलक्षद्वादशसैन्यया ॥ ९३ ॥ रुरोधनगरींसर्वांकामपालेनरक्षिताम् ॥ कामपालस्तु
बलवांस्त्रिलक्षबलसंयुतः ॥ ९४ ॥ सुताज्ञयाययौयुद्धंसार्द्धंपद्माकरेणवै ॥ तयोश्चासीन्महद्युद्धंसेनयोरुभयोस्तदा ॥ ९५ ॥ अहोरात्रप्रमा
णेनभूपसेनापराजिता ॥ पद्मिनींशरणंप्राप्यतदाभ्रातापितास्थितः ॥ ९६ ॥ तयोर्विजयमेवाशुयथाप्राप्तंचकारसा ॥ अन्तर्द्धानमयंपत्रंत
योरर्थेचसाददौ ॥ ९७ ॥ तौतत्रान्तर्हितौभूत्वास्वखड्गेनरिपोर्बलम् ॥ अयुतंजघ्नतुर्मत्तौतदातेविस्मयंगताः ॥ ९८ ॥ तालनाद्यारणंत्य
क्त्वाकृष्णांशंशरणंययुः ॥ कृष्णांशोऽपितदादुःखीध्यात्वासर्वमयींशिवाम् ॥ ९९ ॥ दिव्यदृष्टिस्ततोजातःसंप्राप्यतमयुध्यत ॥ नभोगतं

कामपालंतथापद्माकरंनृपम् ॥ १०० ॥ बद्धातत्रमुदाविष्टोलक्षणंप्राप्यनिर्भयः ॥ दोलामारोप्यतांदेवींस्वगेहायमुदाययौ ॥ १०१ ॥ जय
चंद्रायभूपायदत्त्वावैतौचभूपती ॥ लक्षणंपद्मिनींचैवकृतकृत्यस्तदाभवत् ॥ १०२ ॥ जयचंद्रोऽपिबलवान्दृष्ट्वागेहेस्वदंपती ॥ ददौदानं
द्विजातिभ्योभूपतिंसममोचयत् ॥ १०३ ॥ ज्येष्ठेमासिसितेपक्षेकृष्णांशोगेहमागतः ॥ इतितेकथितंविप्रकृष्णांशचरितंशुभम् ॥ पुनस्ते
कथयिष्यामिदृष्टंयोगबलेनवै ॥ १०४ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चये
त्रिंशोऽध्यायः ॥ ३० ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ शृणुविप्रमहाभागचंद्रभट्टस्तदास्वयम् ॥ महीराजंसदःस्थंतंचंद्रभट्टस्स
मागतः ॥ १ ॥ तमागतंसमालोक्यसराजाशोकतत्परः ॥ उवाचवचनंरम्यंशृणुमंत्रिवरप्रभो ॥ २ ॥ कृष्णांशाद्यैर्महाशूरैर्मद्गामे
भयमागतम् ॥ कदातेचमरिष्यंतिकंटकाममदारुणाः ॥ ३ ॥ इत्युक्तस्सतुशुद्धात्माध्यात्वासर्वमयींशिवाम् ॥ वचनंप्राहराजानंशृणुभूप
शिरोमणे ॥ ४ ॥ जिष्णोरंशात्समुद्भूतोब्रह्मानंदोमहावतीम् ॥ सकृष्णांशसखाश्रेष्ठःसर्वदातत्प्रियेरतः ॥ ५ ॥ यदाचमलनापुत्रोदेहंत्य
क्त्वागमिष्यति ॥ तदातेसर्वदेवांशागमिष्यंतियतोगताः ॥ ६ ॥ इत्येवंवादिनंधीरममात्यंचमहीपतिः ॥ वचनंप्राहनम्रात्माकोऽप्यर्थश्चिंति
तोमया ॥ ७ ॥ एकाकिनंमहाशूरंब्रह्मानंदंनृपोत्तमम् ॥ समाहूयमहीराजोद्विरागमनहेतवे ॥ ८ ॥ छद्मनाघातयित्वातंकृतकृत्यो
भविष्यति ॥ इत्युक्तंनृपतिंप्राहमहीराजःप्रसन्नधीः ॥ ९ ॥ वचनंशृणुभोमित्रगच्छशीघ्रंमहावतीम् ॥ मलनांचसमागत्यबोधयित्वातुतां
स्वयम् ॥ १० ॥ ममान्तिकमुपागम्यचिरंजीवसुखीभव ॥ इतिश्रुत्वातुवचनंनत्वातंचमहीपतिः ॥ ११ ॥ रात्रौघोरंमुनिश्रेष्ठमलनांप्राह
निर्भयः ॥ वधूस्तवमहाराज्ञीवेलानामसुरूपिणी ॥ १२ ॥ संप्राप्तायौवनवतीपतियोग्याशुभानना ॥ कुजातिश्चैवकृष्णांशःश्रुतोराज्ञाम
हात्मना ॥ १३ ॥ अतोनप्रेषितापुत्रीतवपुत्रायधर्मिते ॥ अतोमद्वचनंमत्वाकुरुकार्यंतवाप्रियम् ॥ १४ ॥ मयासार्द्धंतवसुतोब्रह्मानंदो
महाबलः ॥ उर्वीयांनगरींप्राप्यतदामत्सैन्यसंयुतः ॥ १५ ॥ महीराजमुपागम्यपत्नींशीघ्रमवाप्स्यति ॥ नोचेन्ममाज्ञयावेलात्यक्त्वाकां
न्तंमरिष्यति ॥ १६ ॥ इतिश्रुत्वातुसाराज्ञीमोहितादैवमायया ॥ राजानंसमुपागम्यभ्रातुर्वचनमुत्तमम् ॥ १७॥ कथयामासवैसर्वंश्रुत्वाभू

पोऽब्रवीदिदम् ॥ महीपतिर्महाधूर्तोमद्विनाशायचोद्यतः ॥ १८ ॥ तस्यवार्तानमेरम्याकपटंतेननिर्मितम् ॥ इतिश्रुत्वाचमलनाराजानंको
पसंयुतम् ॥ १९ ॥ वचनंप्राहभोराजन्यथाबंधुस्तथाह्यहम् ॥ वचनंकुरुमेराजन्नोचेत्प्राणांस्त्यजाम्यहम् ॥२०॥ इत्युक्त्वादिनेरात्रौतदाप
रिमलोनृपः ॥ ब्रह्मानंदंददौतस्मैससुतोमातृवत्सलः ॥ २१ ॥ मातुराज्ञांपुरस्कृत्यमातुलेनसमन्वितः ॥ रात्रौचमातुलग्रामंसंप्राप्यमुदि
तोऽभवत् ॥ २२ ॥ प्रातःकालेचसंप्राप्तेहरिनागरमास्थितः ॥ एकाकीदेहलींरम्यांप्रययौदैवमोहितः ॥ २३ ॥ सायंकालेतुसंप्राप्तेमहीरा
जस्यमंदिरे ॥ अगमांदर्शयामाससुरूपांदिव्यविग्रहाम् ॥ २४ ॥ अगमाचसमालोक्यपरंहर्षमुपाययौ ॥ माघशुक्लस्यचाष्टम्यांब्रह्मानंद
श्चनिर्भयः ॥ २५ ॥ इयालानांयोषितःसप्तददर्शरुचिराननाः ॥ विधवाश्चत्रयोनार्यश्चतस्रोधवसंयुताः ॥ २६ ॥ ब्रह्मानंदंशुभंवाक्यमूचु
र्मुदान्विताः ॥ ब्रह्मानंदमहाभागसावधानंवचःशृणु ॥ २७ ॥ तवपत्नीस्वयंकालीवेलाकलहरूपिणी ॥ संजहारधवान्येवनोवयंतुसु
दुःखिताः ॥ २८ ॥ तत्पत्न्यस्तुतत्तस्यागृहाणास्मान्मनोहर ॥ धवान्विदेहिनोवीरपतिर्भवमदान्वितः ॥ २९ ॥ इतिश्रुत्वावचस्तासां
ब्रह्मानंदोमहाबलः ॥ उवाचमधुरंवाक्यंश्रुतिस्मृतिसमन्वितम् ॥ ३० ॥ पुरासत्ययुगेनारीचोत्तमाचपतिव्रता ॥ त्रेतायांमध्यमाजाता
निकृष्टाद्वापरेपुनः ॥ ३१ ॥ अधमाहिकलौनारीपरपुंसोपभोगिनी ॥ अतस्तुकलिकालेवैविवाहोविधवास्त्रियाः ॥ ३२ ॥ देवलेनशुभंप्रोक्त
श्चासितेनस्वयंस्मृतौ ॥ सतीसत्येतुसाप्रोक्तात्रेतायांपतिभस्मगा ॥ ३३ ॥ सतीसामध्यमाप्रोक्ताद्वापरेविधवासती ॥ ब्रह्मचर्यपराज्ञेयाक
लौनास्तिसतीव्रतम् ॥ ३४ ॥ अतोयूयंमयासार्द्धंभुंक्षध्वममलंसुखम् ॥ इतिश्रुत्वाप्रियंवाक्यंविधवास्तास्त्रयःस्त्रियः ॥ ३५ ॥ कृत्वाशृंगार
रूपाणिभूषणानिचसर्वशः ॥ ब्रह्मानंदमुपागम्यसमालिंगनतत्पराः ॥ ३६ ॥ तादृष्ट्वामलनापुत्रोवचनंप्राहनिर्भयः ॥ युष्माभिःपतयोमुक्ता
येचमद्बंधुनाहताः ॥ ३७ ॥ युष्मानतोनगृह्णीयांसत्यंसत्यंब्रवीम्यहम् ॥ इतिश्रुत्वावचोघोरंहास्ययुक्तंचयोषितः ॥ ३८ ॥ महीराजान्त
मागम्यरुरुदुर्भृशदुःखिताः ॥ राजन्वेलापतिर्धूर्तोममधर्मंजहातिवै ॥ ३९ ॥ दंडंदेहिचधूर्तायनोचेत्प्राणांस्त्यजाम्यहम् ॥ इतिश्रुत्वामही
राजोब्रह्मानन्दंमहाबलम् ॥ ४० ॥ समाहूयवचःप्राहभवान्भूपकुलाधमः ॥ परस्त्रियंचयोभुंक्तेसयातियममंदिरम् ॥ ४१ ॥ अद्यैवत्वंसुता

कान्तकारागृहमवाप्नुयाः ॥ इतिश्रुत्वावचोघोरंब्रह्मानंदोमहाबलः ॥ ४२ ॥ सत्सरोःखङ्गमुत्सृज्यमहीराजमधावत ॥ दृष्ट्वाभयातुरोराजा
चामुंडान्तमुपाययौ ॥ ४३ ॥ कपाटंदृढमाच्छाद्यतत्रवासमकारयत् ॥ ऋषयऊचुः ॥ तासांकथंविवाहाःस्युस्तत्त्वंनोब्रूहिविस्तरात् ॥४४॥
कुत्रत्यास्ताःकिमंशाश्चदृष्ट्वायोगेनवैत्वया ॥ सूतउवाच ॥ अंगदेशेमुनिश्रेष्ठमायावर्मनृपोऽभवत् ॥ ४५ ॥ तामसींपूजयित्वावैशक्तिंसर्ववि
मोहिनीम् ॥ वर्मोत्तमंतयादत्तंसर्वसत्त्वभयंकरम् ॥ ४६ ॥ गृहीत्वासतुभूपालःप्रस्थितोऽभून्महीतले ॥ प्रमदानामतत्पत्नीदशपुत्रानसूषु
वत् ॥ ४७ ॥ कौरवांशान्महाभागवर्षान्तेनाममेशृणु ॥ मत्तःप्रमत्तउन्मत्तःसुमत्तोदुर्मदस्तथा ॥ ४८ ॥ दुर्मुखोदुर्धरोबाहुःसुरथोविरथः
क्रमात् ॥ तेषांस्वसानुजाचासीत्सुनाम्नामदिरेक्षणा ॥ ४९ ॥ तस्यावैसुंदरंरूपंमदाघूर्णितलोचनम् ॥ कितवोनामवैदैत्योदृष्ट्वामोहमुपागतः
॥ ५० ॥ मायावर्माणमागत्यवचनंप्राहनम्रधीः ॥ यदित्वंमेस्वतनयांदेहिकामातुरायच ॥ ५१ ॥ तर्हितेसकलंकार्यंकरिष्यामिनसंशयः ॥
इतिश्रुत्वातदाभूपोददौतस्मैस्वकन्यकाम् ॥ ५२ ॥ कितवोगह्वरावासीरात्रौघोरेतमोवृते ॥ नृपगेहमुपागम्यबुभुजेस्मरविह्वलः ॥ ५३ ॥
प्रातःकालेतुतांत्यक्त्वाकन्दरान्तमुपाययौ॥वर्मदेवमतेजातेततोराजामदातुरः ॥ ५४ ॥ पुरोहितंसमाहूयलक्षद्रव्यसमन्वितम् ॥ महीराजा
यसंप्रेष्यतारकंससमावरत् ॥ ५५ ॥ महीराजस्तुबलवाँल्लक्षषोडशसैन्यपः ॥ संयुतःशतभूपालैर्मासान्तेसमुपागमत् ॥ ५६ ॥ कृष्णांशेपं
चदशकेसंप्राप्तेव्रततत्परे ॥ तारकश्चविवाहायबहुभूपोंऽगमानयत् ॥ ५७ ॥ मायावर्माचतंदृष्ट्वातारकंभूपसंयुतम् ॥ वचनंप्राहबलवान्राजरा
जवचःशृणु ॥ ५८ ॥ कितवोनाममेधावीदैत्यवंशयशस्करः ॥ तेनमेपीडिताबालारात्रौघोरेतमोवृते ॥ ५९ ॥ हताभूपकुमाराश्चमत्सुतार्थं
समागताः ॥ भक्षितास्तेनदैत्येनसंययुस्तेयमालयम् ॥ ६० ॥ तेषांचबहुधाद्रव्यंलुंठयित्वामदातुरः ॥ मत्सुतायैददौसर्वंतस्मात्त्वंदितिजं
जहि ॥ ६१ ॥ इतिश्रुत्वामहीराजस्सर्वसैन्यसमन्वितः ॥ कितवंचसमाहूयमहद्युद्धमचीकरत् ॥ ६२ ॥ कितवस्सतुमायावीजित्वासर्वान्महा
बलान् ॥ तारकंचसमाहृत्यगुहायांसमुपागमत् ॥ ६३ ॥ तारकश्चतदादुःखीध्यात्वाशंकरमुत्तमम् ॥ पाषाणभूतमगमन्महादेवप्रसादतः
॥ ६४ ॥ एतस्मिन्नंतरेप्राप्तामहावर्तीनिवासिनः ॥ क्षत्रियादशसाहस्राःकृष्णांशाद्यैश्चपालिताः ॥ ६५ ॥ महीराजस्तुतान्दृष्ट्वाबलवानिंम

हाबलम् ॥ उवाचवचनंप्रेम्णापुत्रशोकेनदुःखितः ॥ ६६ ॥ तारकःकितवेनैवसंहतोदितिजेनवै ॥ यदित्वंमेसुतंदेहिकोटिस्वर्णंददामितत्
॥ ६७ ॥ इतिश्रुत्वातुतेधीराःकृष्णांशोदेवसिंहकः ॥ वत्सजौचतथागम्यकितवंरुरुधुर्बलात्॥६८॥ अहोरात्रमभूद्युद्धंतेषांतेनसमन्वितम् ॥
कितवस्तुरुषाविष्टःकृष्णांशंदेवसिंहकम् ॥ ६९ ॥ बलखानिंमोहयित्वाजगर्जचपुनःपुनः ॥ सुखखानिस्तदाशूरःकितवंबलवत्तरम् ॥ ७० ॥
स्वखड्गेनशिरस्तस्यच्छित्त्वाराजानमागमत् ॥ त्रयस्तेसुखिनोभूत्वासुखखानिंप्रशस्यच ॥ ७१ ॥ महीराजायचददौतारकंकैतवंशिरः ॥
तदाभूपसुतादेवीसुखखानिंसमावरत् ॥ ७२ ॥ महीपतिस्तदागत्यतत्सुतांमंदिरेक्षणाम् ॥ संबुद्ध्वाविविधैर्वाक्यैर्भूमिराजान्तमागमत् ॥
॥ ७३ ॥ तारकस्यतयासार्द्धंविवाहोमुदितोऽभवत् ॥ कोटिस्वर्णंनृपात्प्राप्यबलखानिर्महाबलः ॥ ७४ ॥ प्रययौबंधुभिस्सार्द्धंश्रीश्रि
याख्यपुरंशुभम् ॥ सूतउवाच ॥ गुर्जरेनृपतिश्चासीन्मूलवर्मामहाबलः ॥ ७५ ॥ प्रभावतीतस्यसुतादशपुत्रानुजाभवत् ॥ बलश्च
प्रबलश्चैवसुबलोबलवान्बली ॥ ७६ ॥ सुमूलश्चमहामूलोदुर्गोभीमोभयंकरः ॥ करभोनामवैयक्षोलल्लराजस्यसेवकः ॥ ७७ ॥ प्रभा
वतींसमालोक्यसुमोहमदविह्वलः ॥ पंचवर्षांतरेजातेतेनभुक्ताकुमारिका ॥ ७८ ॥ मूलवर्मामहीराजंसमाहूयससैन्यकम् ॥ वचनं
प्राहनम्रात्माराजराजवचःकुरु ॥ ७९ ॥ प्रभावतींशुभांकन्यांनृहरायददाम्यहम् ॥ इत्युक्त्वानृहरंपुत्रंसमाहूयस्वमंदिरे ॥ ८० ॥
ददौवेदविधानेनसुतांचनृहरायवै ॥ पक्षमात्रान्तरेयक्षःकरभस्तत्रचागतः ॥ ८१ ॥ दंपतीपीडयामासजित्वासर्वमहीपतीन् ॥
महीराजस्तदादुःखीवत्सजौबलवत्तरौ ॥ ८२ ॥ समाहूयकथित्वाग्रेरुरोदबलवान्बली ॥ दयालूवत्सजौवीरौकरभान्तमुपेयतुः ॥
॥ ८३ ॥ करभस्तौसमालोक्यतत्रैवान्तरधीयत ॥ नागपाशेनतौबद्ध्वापीडयामासदंपती ॥ ८४ ॥ इतिश्रुत्वासकृष्णांशःकरभं
यक्षकिंकरम् ॥ बद्ध्वायोगबलेनैवमोचयामासदंपती ॥ ८५ ॥ भ्रातरौतौसमागम्यनागपाशंतुचासिना ॥ छित्त्वासुमोदबलवान्कोटि
स्वर्णंगृहीतवान्॥८६॥भूमिराजःप्रसन्नात्मादेहलींमुदितोऽगमत् ॥ ॥ सूतउवाच ॥ ॥ काश्मीरेचनृपश्चासीत्कैकयोनामविश्रुतः॥ ८७ ॥
दशपुत्राश्चतस्यैवकन्याचमदनावती ॥ कामःप्रकामःसंकामोनिष्कामोनिरपत्रपः ॥ ८८ ॥ जयश्चविजयश्चैवजयन्तोजयवाञ्जयः ॥

सभूपोभूमिराजंचसमाहूयवचोऽब्रवीत् ॥ ८९ ॥ पुत्रस्तेवैसरदनोयत्कन्यांप्राप्तुमर्हति ॥ गंधर्वस्सुकलोनाममत्कन्यांचशुभाननाम् ॥९० ॥
ज्योत्स्नायांनिशिसंहृत्यतयासार्द्धंहिदीव्यति ॥ पूर्णिमायांचसंप्राप्तःसर्वैचित्ररथप्रियः ॥ ९१ ॥ वैशाखस्यासितेपक्षेचाष्टमीचाद्यमंगला ॥
वधंकुरुनृपश्रेष्ठदेहलींगंतुमर्हसि ॥ ९२ ॥ इतिश्रुत्वामहीराजोलक्षसैन्यसमन्वितः ॥ गृहीत्वादंपतीशीघ्रंदेहलीनगरंययौ ॥ ९३ ॥
वैशाख्यांसुखजातायांसुकलोनामवीर्यवान् ॥ गंधर्वोदशसाहस्रैरुरोधनगरंरुषा ॥ ९४ ॥ नगराच्चबहिर्जातायेशूरामदविह्वलाः ॥
हत्वातान्सुकलःशीघ्रंराज्ञेदुःखंचकारह॥९५॥भयभीतोमहीराजोध्यात्वासर्वमयींशिवाम् ॥ सुष्वापनिशिशुद्धात्मातुष्टाभूज्जगदंबिका ॥९६॥
कृष्णांशादीन्बोधयित्वातैश्चसार्धंसमागमत् ॥ तेषांचासीन्महद्युद्धंगंधर्वैणतदाह्निकम् ॥ ९७ ॥ बलखानिश्चबलवाञ्छतगंधर्वमुत्तमम् ॥
त्रिदिनान्तेचसंहत्वासुखखानिस्तथैवच ॥ ९८ ॥ सुकलश्चतदाक्रुद्धोगांधर्वींचससर्जह ॥ बहुधातेहिगंधर्वास्तैश्चसार्द्धंसमारुधन् ॥ ९९ ॥
भयभीतास्तदासर्वेरामांशंशरणंययुः ॥ आह्लादश्चप्रसन्नात्माशारदांसर्वमंगलाम् ॥ १०० ॥ दिवासूक्तेनतुष्टावतदाप्रादुरभूच्छिवा ॥
गंधर्वान्मोहयित्वाशुद्रावयामासशारदा ॥१०१॥ पराजितेचगंधर्वेकृष्णांशोजनमोहनः ॥ महीराजमुपागम्यकोटिस्वर्णंगृहीतवान् ॥ १०२॥
षोडशाब्देचकृष्णांशेसंप्राप्तेदेविपूजके ॥ मार्गमासंतुसंप्राप्तेमर्दनश्चाविवाहितः ॥ १०३ ॥ सूतउवाच॥पुंड्रदेशेमहाराजोनागवर्मामहाबलः ॥
बभूवतक्षकपरोधर्मवाञ्जगतीतले ॥ १०४ ॥ पत्नीनागवतीतस्यतक्षकस्यसुताशुभा ॥ पितुःशापेनसंजाताकालिंगाधिपतेःसुता ॥१०५॥
दशैवतनयाश्चासन्कन्यातस्यशुभानना ॥ सुवेलानामविख्यातारूपयौवनशालिनी ॥ १०६ ॥ पुरोहितंसमाहूयमहीराजायचोदितः ॥
सगत्वाचकथित्वाग्रेमर्दनोवरितोमया ॥ १०७ ॥ महीराजस्तुतच्छ्रुत्वात्रिलक्षबलसंयुतः ॥ मंगलंकारयामासगत्वानागपुरेशुभे ॥ १०८ ॥
सुवेलापितरंप्राहदेहिमेनागभूषणम् ॥ विवाहंहिकरिष्यामिनोचेत्प्राणांस्त्यजाम्यहम् ॥ १०९ ॥ इतिश्रुत्वानागवर्मामहीराजान्तमाययौ ॥
सुवेलायाअभिप्रायंवर्णयामासविस्तरात्॥११०॥इत्युक्तःसमहीराजोविस्मितःससुदुःखितः॥प्रेषयामासवैपत्रंयत्राह्लादादयःस्थिताः॥१११॥
इतिज्ञात्वातदाऽऽह्लादःशूरपंचशतावृतः ॥ कृष्णांशवत्सजैस्सार्द्धंदिनांतेचसमागमत् ॥११२॥ शतयोजनगामिन्योवाजिन्यश्चाद्वियामके ॥

सहस्रयोजनंवीर्यंतेषांचैवदिनेनिशि ॥११३॥ कलांशादुद्भवाअश्वावाजिनांचहरेःस्वयम् ॥ रत्नाश्वस्यकलांशाश्चकपोतोहरणीभवः॥११४॥
गायत्र्यांयोभवद्वाजीकालचक्रप्रवर्तकः ॥ तत्कलांशात्समुद्भूतोरविदत्तःपपीहकः ॥ ११५ ॥ हरिणीनामतच्छक्तिःकलांशाद्भूमिमागता ॥
सुखखानिःपपीहस्थोबलखानिःकपोतगः ॥११६॥ आह्लादश्चकरालस्थोबिंदुलस्थोहरेःकला॥गत्वातेतुमहीराजंनत्वातुंगासमंययुः॥११७॥
प्रसन्नःसमहीराजोवचनंप्राहनम्रधीः ॥ ममपुत्राश्चयुष्माभिस्त्रयःशूराविवाहिताः ॥ ११८ ॥ तथैवमर्दनंवीरंसमुद्राह्यसुखीभव ॥ इति
श्रुत्वासआह्लादोगत्वाभूतलमुत्तमम् ॥ ११९ ॥ रसातलंचविख्यातंनागिनींप्राहनिर्भयः ॥ सुप्तोहितवभर्ताचपुंडरीकःशुभाननः ॥ १२० ॥
बोधयाशुमहाराज्ञिनागानांनोदयांकुरु ॥ इत्युक्त्वासहितोवीरैःपुंडरीकश्चमत्पतिः ॥ १२१ ॥ रुषाविष्टश्चबलवान्दाहयेच्चवपुस्तव ॥
इतिश्रुत्वाविहस्याहतवभर्तुर्ननोभयम् ॥ १२२ ॥ इत्येवंवचनंकृत्वापद्मचांपुच्छमताडयत्॥प्रबुद्धश्चतदाराजानागानांचमहाबलः॥१२३॥
ज्वालामालांस्वदेहाज्ञजनयामासवीर्यवान् ॥ दृष्ट्वातद्विषमुज्ज्वालंसध्यात्वासर्वमंगलाम् ॥ १२४ ॥ शमयामासबलवान्देवीपूजनतत्परः ॥
पुंडरीकःप्रसन्नात्मानागभूषणमुत्तमम् ॥१२५॥ आह्लादायददौशीघ्रंसर्वशृंगारसंयुतम्॥आह्लादस्तुहयारूढोमहीराजायदत्तवान् ॥ १२६ ॥
विवाहंकारयामासवैवाहिकविधानतः ॥ कोटिस्वर्णंनृपात्प्राप्तंगृहीत्वाशीघ्रमाययौ ॥ १२७ ॥ हयविद्यासमारूढास्तेहयागेहमागताः ॥
ज्ञेयाःपंचशतंसर्वेसशूरागृहमाययुः ॥ १२८ ॥ सूतउवाच ॥ मद्रदेशेषुयश्चासीन्मद्रकेशोमहाबलः ॥ पंचाब्दंपूजयामासस्वर्गवैद्यौसुरोत्तमौ
॥ १२९ ॥तयोश्चवरदानेनदशपुत्राबभूविरे ॥ सुताकान्तिमतीजातारूपयौवनशालिनी ॥ १३० ॥ समहीराजमाहूयत्रिलक्षबलसंयुतम् ॥
ददौकन्यांविधानेनमद्रेशःसूर्यवर्मणे ॥ १३१ ॥ नवोढांतुतदापत्नींसूर्यवर्मागृहीतवान् ॥ स्वगेहायययौशीघ्रंमहीराजोबलैस्सह ॥ १३२ ॥
कर्बुरोनाममायावीविभीषणसुतोबली ॥ राक्षसस्तत्रसंप्राप्तोदृष्ट्वाकान्तिमतींशुभाम् ॥ १३३ ॥ मद्रकेशस्यतनयांदिव्यशोभासमन्वि
ताम् ॥ जहारपश्यतांतेषांसह्याद्रिगिरिमाययौ ॥ १३४ ॥ महीराजस्तदादुःखीविललापभृशंमुहुः ॥ देहलीगेहमागम्यदूतमाहूयसत्व
रम् ॥ १३५ ॥ कृष्णांशंप्रेषयामाससगत्वासमवर्णयत् ॥ ज्ञात्वातेतुहयारूढाःशूराःपंचशतावृताः ॥ १३६ ॥ सह्याद्रिगिरिमागम्यकृष्णां

शः कर्बुरंप्रति ॥ निर्भयोवचनंप्राहशृणुराक्षससत्तम ॥ १३७ ॥ विभीषणोभक्तराजस्तस्यत्वंदयितःसुतः ॥ तस्मात्त्वयानकर्तव्यंपापवंश
विनाशनम् ॥ १३८ ॥ रावणेनपुरासीतासंहृताविदितंतव ॥ इतिश्रुत्वासहोवाचपुरेयंदयिताप्रिया ॥ १३९ ॥ ममगंधर्वतनयामुनिशापा
न्महींगता ॥ अतोऽहंतद्वियोगेनत्यक्त्वालंकांमहापुरीम् ॥ १४० ॥ मद्रकेशमहंप्राप्यमद्रकेशभयादहम् ॥ नजहारप्रियांरम्यांतत्रोषित्वा
दिनंबहु ॥ १४१ ॥ अद्यमेवशगासाभून्नाम्नाकांतिमतीशुभा ॥ जित्वामांचगृहाणाशुसमर्थाश्चवयंसदा ॥ १४२ ॥ इतिश्रुत्वासकृष्णांशः
खड्गयुद्धमचीकरत् ॥ सप्तरात्रेणतंजित्वालब्ध्वाकांतिमतींशुभाम् ॥ १४३ ॥ तदाचदेहलींप्राप्यमहीराजान्तमाययौ ॥ कोटिस्वर्णददौराजा
कृष्णांशायमहात्मने ॥ १४४ ॥ सवीरोबंधुभिःसार्धंप्रमदावनमाययौ ॥ सूतउवाच ॥ पट्टनाख्येपुरेराजानाम्नापूर्णामलोवली ॥ १४५ ॥
वसूनाराधयामासपंचवर्षान्तरेमुदा ॥ तदाप्रसन्नास्तेदेवाददुस्तस्मैवरंशुभम् ॥ १४६ ॥ वरदानाच्चसंजातादशपुत्रामहीपतेः ॥ विद्युन्मा
लासुताजातारूपयौवनशालिनी ॥ १४७ ॥ तद्विवाहार्थमाहूयमहीराजंमहाबलम् ॥ सप्तलक्षबलैःसार्द्धंतत्पुत्रायसुतांददौ ॥ १४८ ॥
महीराजसुतोभीमःपत्नींप्राप्यमनोरमाम् ॥ गेहमागम्यतैःसार्द्धंदेहलींहर्षमाप्तवान् ॥ १४९ ॥ तदापैशाचदेशस्थःसहोदश्चमहीपतिः ॥
म्लेच्छैश्चदशसाहस्रैर्विद्युन्मालार्थमुद्यतः ॥ १५० ॥ बलिर्दैत्याज्ञयाप्रातःकुरुक्षेत्रंशुभस्थलम् ॥ भित्त्वामूर्तीःसुराणांगोरक्तैस्तीर्थंजलंकृतम् ॥
॥ १५१ ॥ पत्रमालिख्यबलवान्महीराजायधर्मिणे ॥ स्वदूतःप्रेषितस्तेनश्रुत्वाभूपोऽब्रवीदिदम् ॥ १५२ ॥ भवान्म्लेच्छपतीराजावि
द्युन्मालार्थमुद्यतः ॥ मांशब्दवेधिनंविद्धिचौर्यदेशधुरंधरम् ॥ १५३ ॥ इत्युक्त्वासत्रिलक्षैश्चकुरुक्षेत्रमुपागतः ॥ तयोश्चासीन्महद्युद्धमहो
रात्रंभयानकम् ॥ १५४ ॥ निशीथेसमनुप्राप्तेज्येष्ठेमासितमोमये ॥ पातालाद्बलिरागत्यदैत्यायुतसमन्वितः ॥ १५५ ॥ नृपसैन्यंजघाना
शुभक्षयित्वापुनःपुनः ॥ भयभीतस्तदाराजाशारदांशरणंययौ ॥ १५६ ॥ एतस्मिन्नंतरेदेवाःकृष्णांशाद्यामहाबलाः ॥ क्षणमात्रेणसंप्राप्तास्त
दापदच्चरामुने ॥ १५७ ॥ हत्वादैत्यान्सहस्रांस्तेबलिदैत्यमुपाययौ ॥ देशजौवत्सजौवीरौदेवसिंहस्तथैवच ॥ १५८ ॥ स्वखड्गैस्तर्पया
मासदैत्यराजंमहाबलम् ॥ तदाप्रसन्नोबलवान्दैत्यराजोबलिःस्वयम् ॥ १५९ ॥ वरंवरयतानाहतेतुश्रुत्वाब्रुवन्वचः ॥ आर्यदेशंचतेदैत्या

नागम्यंतांत्वयासह ॥ १६० ॥ म्लेच्छदेशेसदाप्राप्यभक्षध्वंम्लेच्छधर्मगान् ॥ इतिश्रुत्वावचोघोरंविप्रियंचबलिःस्वयम् ॥ १६१ ॥
कृष्णांशमुदयंगत्वातुष्टावपरयागिरा ॥ तदाप्रसन्नःकृष्णांशोवचनंप्राहनिर्भयः ॥ १६२ ॥ यावदहंभूमिवासीतावत्त्वंगेहमावस ॥ तत्पश्चा
द्भूमिमागत्ययथायोग्यंकुरुष्वभोः ॥ १६३ ॥ इतितद्वचनंश्रुत्वासहोदोनीलसंयुतः ॥ पैशाचंदेशमगमत्पुनःप्राप्तोरसातलम् ॥ १६४ ॥ भू
मिराजःप्रसन्नात्माकोटिस्वर्णंददौतदा ॥ गजारूढाश्वतेपंचसंययुश्चमहावतीम् ॥ १६५ ॥ सूतउवाच ॥ वर्द्धनोभूमिराजस्यसुतःसर्वेभ्यउ
त्तमः ॥ पंचमाब्दवयोभूत्वाश्रीदंतुष्टावभक्तितः ॥१६६॥ वर्षांतरेचभगवान्ददौसर्वंशुभंनिधिम् ॥ तत्सर्वंनिधिभावेननृपकोशःसमन्ततः॥
॥ १६७ ॥ पूर्णोबभूवकणकोराजराजप्रभावतः ॥ किंनरीनामयाकन्यामंकणस्यप्रकीर्तिता ॥ १६८ ॥ कुबेरश्चददौतस्मैवर्द्धनायप्रियायच ॥
इतितेकथितंसर्वंविवाहचरितंमुने ॥ १६९ ॥ धुंधुकारोमहाशूरोलक्षसैन्यसमन्वितः ॥ब्रह्मानंदमुपागम्ययुद्धार्थायतमाह्वयत् ॥ १७० ॥
एकत्रिंशाब्दकेप्राप्तेकृष्णांशेबलवत्तरे ॥ एकाकीमलनापुत्रोदृष्ट्वासैन्यमुपास्थितम् ॥ १७१ ॥ ब्रह्मास्त्रंचापमादायचार्धसैन्यमदाहयत् ॥
पंचायुताश्वतेशूराभयभीतादिशोगताः ॥ १७२ ॥ धुंधुकारोरणंत्यक्त्वाभूमिराजमुपागमत् ॥ महीराजस्तदादुःखीभयभीतःसमंततः ॥
॥ १७३ ॥ महीपतिंसमाहूयचंद्रभट्टंचसोऽब्रवीत् ॥ कथंजयोमेभवितातत्सर्वंमंत्रयाशुवै ॥ १७४ ॥ महीपतिस्तदाप्राहशृणुभूपशिरोमणे॥
कृत्वानारीमयंवेषंचामुंडंबलशालिनम् ॥ १७५ ॥ वेलांमत्वाचतद्दोलांब्रह्मानंदायचार्पय ॥ शूराश्चत्वारस्तेसुताधुंधुकारेणसंयुताः॥१७६॥
छद्मनाचस्वशस्त्रैश्चघातयेयुस्तमूर्जिताः ॥ इतिश्रुत्वामहीराजोब्रह्मानंदायहर्षितः ॥ १७७ ॥ तथाकृत्वाददौदोलांपंचशूरैश्चपालिताम् ॥
सायंकालेतुसंप्राप्तेमाघशुक्लाष्टमीदिने ॥ १७८॥ वेलावंशश्चचामुंडोब्रह्मानंदमुपाययौ ॥ छद्मनाचत्रिशूलंचबलात्कृत्वारिपोर्दरे ॥ १७९ ॥
रुरोदबलवाञ्छूरस्तेतुशूराःसमागताः ॥ तारकोहृदितंबाणैःसूर्यवर्माचतोमरैः॥१८०॥भीमश्चगदयाचात्रवर्द्धनश्चतदासिना॥धुंधुकारश्चभल्ले
नजघानारिपुमूर्द्धनि ॥ १८१ ॥ मूर्छितःपतितोभूमौब्रह्मानंदोमहाबलः ॥ महद्व्रणयुतस्तत्रस्वखड्गंचसमाददत् ॥ १८२ ॥ भीमस्यचशिरः
कायाद्वर्द्धनस्यतथैवच ॥ छित्त्वातथैवभूमध्येसूर्यवर्माणमागतः ॥ १८३ ॥ तारकोधुंधुकारश्चचामुंडश्चतथैवच ॥ ब्रह्मानंदंतदात्यक्त्वा

महीराजान्तमाययौ ॥ १८४ ॥ हतेषुतेषुपुत्रेषुमहीराजोभयातुरः ॥ वेलापार्श्वमुपागम्यरुरोदबहुदुःखितः ॥ १८५ ॥ इतिश्रुत्वातदावेला दोलामारुह्यसत्वरम् ॥ ब्रह्मानंदंययौशीघ्रंमूर्च्छितंतंददर्शह ॥ १८६ ॥ कनिष्ठामृतभावेनवेलायाबलवांस्तदा ॥ उत्थायरुदतींनारींदद र्शरुचिरान्विताम् ॥ १८७ ॥ कात्वंकस्यसुतारम्यासंग्रामेमामुपास्थिता ॥ जलंदेहिमहासुभ्रुवचनंकुरुसुप्रियम् ॥ १८८ ॥ इतिश्रुत्वात दावेलाजलंदत्त्वाशुचान्विता ॥ वचनंप्राहवैरात्रौशृणुत्वंललनासुत ॥ १८९ ॥ वेलानाममहीभर्तुःसुताहंत्वामुपस्थिता ॥ मत्पतिश्चभवा न्वीरश्छद्मनावंचकैर्हतः ॥ १९० ॥ जीवनंकुरुराजेंद्रभुंक्ष्वभोगान्मयासह ॥ इत्युक्तःसतुतामाहकालिकालेसमागते ॥ १९१ ॥ जीवनान्म रणंश्रेष्ठंतस्मान्मद्वचनंकुरु ॥ हरिनागरमारुह्यमयासार्द्धंशुभानने ॥ १९२ ॥ गत्वातीर्थानिरम्याणिसंत्यजामिकलेवरम् ॥ इत्युक्त्वातौ समारुह्यपूर्वंचकापिलान्तिकम् ॥ गत्वास्नात्वाचविधिवत्ततोऽग्रेजग्मतुर्मुदा ॥ १९३ ॥ पृथक्पृथक्सुतीर्थानिस्नात्वादत्त्वाचजग्मतुः ॥ दक्षिणेसेतुबंधान्तेपश्चिमेद्वारिकामनु ॥ १९४ ॥ उत्तरेबदरीस्थानेस्नात्वातीर्थानिजग्मतुः ॥ गंधमादनमागत्यब्रह्मानंदोमहाबलः ॥१९५॥ वेलामुवाचवचनंभाद्रशुक्लाष्टमीदिने ॥ देहंत्यजामिभोराज्ञितारकंजहिभूतले ॥ १९६ ॥ इतिश्रुत्वातुसाप्राहस्वामिन्मद्वचनंकुरु ॥ कुरु क्षेत्रंमयासार्द्धंभवान्वैगंतुमर्हति ॥ १९७ ॥ स्थित्वातत्रसमस्त्वांतोभजत्वंसर्वमंगलम् ॥ अहंमहावतींप्राप्यपुनर्वैदेहलींप्रति ॥ १९८ ॥ तार कंचतथाहत्वात्वत्समीपंव्रजाम्यहम् ॥ इत्युक्तःसतथेत्युक्त्वाब्रह्मध्यानपरोऽभवत् ॥ १९९ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्व णिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेएकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ ॥ द्वात्रिंशाब्दे चकृष्णांशेसंप्राप्तेयोगरूपिणी ॥ वेलानामशुभानारीहरिनागरसंस्थिता ॥ १ ॥ महावतींसमागम्यसभायांतत्रचाविशत् ॥ एत स्मिन्नंतरेप्रातःकृष्णांशाद्यान्महाबलान् ॥ २ ॥ नत्वापरिमलंभूपंवेलावचनमब्रवीत् ॥ महीपतिंप्रियंमत्वाकृष्णांशंनृपदुष्प्रियम् ॥ ३ ॥ त्वयामेघातितोभर्ताब्रह्मानंदोमहाबलः ॥ महीराजसुतैर्धूर्तैस्तारकाद्यैर्महाबलैः ॥ ४ ॥ नारीवेषंचचामुंडंधुंधुकारेणवैकृतम् ॥ स्वामिनं प्रतिचागम्यतेजघ्नुश्छद्मनाप्रियम् ॥ ५ ॥ कुरुक्षेत्रेस्थितःस्वामीमहत्यामूर्छयान्वितः ॥ तस्माद्यूयंमयासार्द्धंगंतुमर्हथतंप्रति ॥ ६ ॥ इति

घोरतमंवाक्यंश्रुत्वासर्वेशुचान्विताः ॥ धिग्भूपतिंचमलनांताभ्यांनोघातितःसखा ॥ ७ ॥ इत्युक्त्वोच्चैश्चरुरुदुःकृष्णांशाद्यामहाबलाः ॥
पत्राणिप्रेषयामासुःस्वकीयान्भूपतीन्प्रति ॥ ८ ॥ क्रोधयुक्तातदावेलालिखित्वापत्रमुल्बणम् ॥ महीराजायसंप्रेष्यमलनागेहमागमत् ॥९॥
तत्पत्रंचमहीराजोवाचयित्वाविधानतः ॥ ज्ञात्वातत्कारणंसर्वंतच्छृणुष्वविशांपते ॥ १० ॥ चिन्ताकलेवरंप्राप्यसुखनिद्रांव्यनाशयत् ॥
आहूयभूपतीन्सर्वान्घोरयुद्धोन्मुखोऽभवत् ॥ ११ ॥ चतुर्विंशतिलक्षैश्चशूरैर्भूपसमन्वितैः ॥ कुरुक्षेत्रंययौशीघ्रंधृतराष्ट्रांशसंभवः ॥ १२ ॥
तथापरिमलोभूपोलक्षषोडशसैन्यपः ॥ द्रुपदांशोययौशीघ्रंवेलयास्वकुलैःसह ॥ १३ ॥ स्यमन्तपंचकेतीर्थेशिबिराणिचकारह ॥ ब्रह्मा
नंदःस्थितोयत्रसमाधिध्यानतत्परः ॥ १४ ॥ गंगाकूलेचतेसर्वेकौरवांशामहाबलाः ॥ शिबिराणिविचित्राणिचक्रुस्तेविजयैषिणः ॥ १५ ॥
कृत्वातेकार्तिकीस्नानंदत्त्वादानान्यनेकशः ॥ मार्गकृष्णद्वितीयायांयुद्धभूमिमुपाययुः ॥ १६ ॥ विष्वक्सेनीयभूपालोलहरस्तत्रचागतः॥
कौरवांशाश्चतत्पुत्राःषोडशैवमहाबलाः ॥ १७ ॥ पूर्वजन्मनियन्नामतन्नाम्नाप्राश्रिताइह ॥ दुस्सहोदुश्शलश्चैवजलसंधःसमःसहः ॥ १८ ॥
विंदस्तथानुविंदश्चसुबाहुर्दुष्प्रधर्षणः ॥ दुर्मर्षणश्चदुष्कर्णःसोमकीर्तिरनूदरः ॥ १९ ॥ शलःसत्वोविवित्सुश्चक्रमाज्ज्ञेयामहाबलाः ॥ तोम
रान्वयभूपालोबाह्लीकपतिरागतः ॥ २० ॥ त्रिलक्षैश्चतथासैन्यैःसप्तपुत्रैश्चभूपतिः ॥ चित्रोपचित्रौचित्राक्षश्चारुश्चित्रःशरासनः ॥२१॥ सुलो
चनःसवर्णश्चपूर्वजन्मनिकौरवाः ॥ तेषामंशाःक्रमाज्जाताअभिनंदनदेहजाः ॥ २२ ॥ महानंदश्चनंदश्चपरानंदोपनंदकौ ॥ सुनंदश्चसुरानंदः
प्रनंदःकौरवांशकः ॥ २३ ॥ नृपःपरिहरवंशीयोमायावर्मामहाबली ॥ सैन्यलक्षयुतःप्राप्तोदशपुत्रसमन्वितः ॥ २४ ॥ दुर्मदोदुर्विगाहश्चनंद
श्चविकटाननः ॥ चित्रवर्मासुवर्माचसुदुर्मोचनएवच ॥२५॥ ऊर्णनाभःसुनाभश्चचोपनंदश्चकौरवाः॥ तेषामंशाःक्रमाज्जाताःसुताअंगपतेःस्मृ
ताः ॥२६॥ मत्तःप्रमत्तउन्मत्तःसुमत्तोदुर्मदस्तथा ॥ दुर्मुखोदुर्द्धरोवायुःसुरथोविरथःक्रमात् ॥२७॥ शुक्लवंशीयभूपालोमूलवर्मासमागतः ॥
लक्षसैन्यैश्चबलवान्दशपुत्रसमन्वितः ॥ २८ ॥ अयोबाहुर्महाबाहुश्चित्रांगश्चित्रकुंडलः ॥ चित्रायुधोनिषंगीचपाशीवृंदारकस्तथा ॥ २९ ॥
दृढवर्मादृढक्षत्रःपूर्वजन्मनिकौरवाः ॥ तेषामंशामहींजातागृहेतेमूलवर्मणः ॥ ३० ॥ बलश्चप्रबलश्चैवसुबलोबलवान्बली ॥ सुमू

लक्ष्मसहामूलोदुर्गोभीमोभयंकरः ॥ ३१ ॥ कैकयश्चंद्रवंशीयोलक्षसैन्यसमन्वितः ॥ दशपुत्रान्वितःप्राप्तःकुरुक्षेत्रेमहारणे ॥ ३२ ॥
भीमवेगोभीमबलोबलाकीवलवर्द्धनः ॥ उग्रायुधोदंडधरोदृढसंधोमहीधरः ॥ ३३ ॥ जरासंधःसत्यसंधःपूर्वजन्मनिकौरवाः ॥ तेषामंशाःस
मुद्भूताःकैकयस्यगृहेशुभे ॥ ३४ ॥ कामःप्रकामःसंकामोनिष्कामोनिरपत्रपः ॥ जयश्चविजयश्चैवजयन्तोजयवाञ्जयः ॥ ३५ ॥ नागवंशी
यभूपालोनागवर्मासमागतः ॥ लक्षसेनान्वितःप्राप्तोदशपुत्रसमन्वितः ॥ ३६ ॥ पूर्वजन्मनियन्नाम्नातन्नाम्नाकौरवाभुवि ॥ पुंड्रदेशपतेःपुत्रा
जातादशशिवाज्ञया ॥ ३७ ॥ उग्रश्रवाउग्रसेनासेनानीर्दुष्परायणः॥अपराजितःकुंडशायीविशालाक्षोदुराधरः ॥३८॥ दृढहस्तःसुहस्तश्चसु
तास्तेनागवर्मणः ॥ मद्रकेशःसमायातस्तोमरान्वयसंभवः ॥ ३९ ॥ लक्षसैन्यैर्युतोराजादशपुत्रसमन्वितः ॥ वातवेगःसुवर्चाश्चनागदंतोग्र
याजकः॥४०॥आदिकेतुश्चवक्रशीचकवचीक्राथएवच॥कुंडश्चकुंडधारश्चकौरवाःपूर्वजन्मनि ॥४१॥ तन्नाम्नाभुविवैजातामद्रकेशस्यमंदिरे ॥
नृपःशार्दूलवंशीयोलक्षसैन्यसमन्वितः ॥ ४२ ॥ पूर्णामलोमागधेशोदशपुत्रान्वितोययौ ॥ वीरबाहुर्भीमरथश्चोग्रश्चैवधनुर्धरः ॥ ४३ ॥
रौद्रकर्मादृढरथोऽलोलुपश्चाभयस्तथा ॥ अनाधृष्टःकुंडभेदीकौरवाःपूर्वजन्मनि ॥ ४४ ॥ पूर्णामलस्यवैगेहेतन्नाम्नाभुविसंभवः ॥ मंकणः
किंनरोनामरूपदेशेमहीपतिः ॥ ४५ ॥ चीनदेशात्परंपारेरूपदेशःस्मृतोबुधैः ॥ नरःकिन्नरजातीयोवसतिप्रियदर्शनः ॥ ४६ ॥ मंकणश्चत
दाप्राप्तःकिन्नरायुतसंयुतः ॥ अष्टपुत्रान्वितःप्राप्तोयत्रसर्वनृपाःस्थिताः ॥ ४७ ॥ विरावीप्रथमश्चैवप्रमाथीदीर्घरोमकः ॥ दीर्घबाहुर्महाबाहु
र्व्यूढोराःकनकध्वजः ॥ ४८ ॥ पूर्वजन्मनियन्नाम्नातन्नाम्नाकिन्नराभुवि ॥ विरजांशश्चयोजातोमंकणोनामकिन्नरः ॥ ४९ ॥ नेत्रसिंहःसमायातो
लक्षसैन्यसमन्वितः ॥ शल्यांशःसतुविज्ञेयःशार्दूलान्वयसंभवः ॥ ५० ॥ तदागजपतीराजालक्षसैन्यसमन्वितः ॥ संप्राप्तःशकुनेरंशस्त्य
क्त्वागेहेऽस्यपुत्रकान् ॥ ५१ ॥ मयूरध्वजएवापिलक्षसैन्यसमन्वितः ॥ मकरंदंगृहेत्यक्त्वाविराटांशःसमागतः ॥ ५२ ॥ वीरसेनःसमायातः
कामसेनसमन्वितः ॥ लक्षसेनान्वितस्तत्रचोग्रसेनांशसंभवः ॥ ५३ ॥ लक्षणश्चसमायातःसप्तलक्षबलैर्युतः ॥ संत्यज्यपद्मिनींनारींमहत्क
ष्टेनभूपतिः ॥ ५४ ॥ तालनोधान्यपालश्चलल्लसिंहस्तथैवच ॥ भीमस्यांशोयुयुत्सोश्चकुंतिभोजस्यवैक्रमात् ॥ ५५ ॥ आह्लादश्चसमायातः

कृष्णांशेनसमान्वितः ॥ जयन्तेनचवैवीरोलक्षसैन्यान्वितोबली ॥ ५६ ॥ जगन्नायकएवापिशूरायुतसमन्वितः ॥ संप्राप्तोभगदत्तांशोगौतमा
न्वयसंभवः ॥ ५७ ॥ अन्येचक्षुद्रभूपाश्चसहस्राव्याःपृथक्पृथक् ॥ कुरुक्षेत्रंपरंस्थानंसंययुर्मदविह्वलाः ॥ ५८ ॥ मूलवर्माचनृपतिःसपुत्रोल
क्षसैन्यपः ॥ नृपंपरिमलंप्राप्यसंयुक्तोदेहलीपतिः ॥५९ ॥ कैकयोलक्षसेनाढ्यःसपुत्रोनृपतिःस्वयम् ॥ नृपंपरिमलंप्राप्यसयुद्धार्थमुपस्थितः
॥ ६० ॥ नेत्रसिंहश्चनृपतिःसवीरोलक्षसैन्यपः ॥ मयूरध्वजएवापिलक्षपःशशिवंशिनम् ॥ ६१ ॥ वीरसेनश्चलक्षाढ्यःसपुत्रश्चंद्रिपक्षगः ॥ लक्ष
णःसप्तलक्षाढ्योयुद्धार्थसमुपस्थितः ॥ ६२ ॥ आह्लादोलक्षसैन्याढ्यःपक्षगश्चंद्रवंशिनः ॥ त्रिलक्षसंयुतोराजाचंद्रवंशोरणोन्मुखः ॥ ६३ ॥
एवंषोडशलक्षाढ्यःस्थितःपरिमलोरणे ॥ लहरोभूपतिश्रेष्ठोलक्षपःपुत्रसंयुतः ॥ ६४ ॥ महीराजमुपागम्ययुद्धार्थसमुपस्थितः ॥ अभिनंदन
एवापिसपुत्रोलक्षसैन्यपः ॥ ६५ ॥ मायावर्माचनृपतिःसपुत्रोलक्षसैन्यपः ॥ नागवर्मासमायातःसपुत्रोलक्षसैन्यपः ॥६६॥ मद्रकेशःसपुत्रश्च
लक्षसैन्योरणोन्मुखः ॥ पूर्णामलःसपुत्रश्चलक्षपश्चैवपक्षगः ॥ ६७ ॥ मंकणःकिंनरोनामसपुत्रस्तत्रसंस्थितः ॥ गजराजःसमायातोमहीराजं
हिलक्षपः ॥ ६८ ॥ धुंधुकारःसमायातःपंचलक्षपतिःस्वयम् ॥ पुत्रःकृष्णकुमारस्यभगदत्तःसमागतः ॥ ६९ ॥ त्रिलक्षबलसंयुक्तोमहीराजं
महीपतिम् ॥ दलवाहनपुत्रश्चदेशगोपालसंस्थितः ॥ ७० ॥ अंगदस्तत्रसंप्राप्तःसायुतोदेवकीप्रियः ॥ महीराजमुपागम्ययुद्धार्थसमुपस्थितः
॥ ७१ ॥ कलिंगश्चनृपःप्राप्तास्त्रिकोणश्चतथैवच ॥ श्रीपतिश्चतथाराजाश्रीतारश्चतथागतः ॥ ७२ ॥ मुकुंदश्चसुकेतुश्चरुहिलोगुहिलस्तथा ॥
इन्दुवारश्चबलवाञ्जयंतश्चतथाविधः ॥ ७३ ॥ सर्वेदशसहस्राढ्यामहीराजमुपस्थिताः ॥ महीराजस्यपक्षेतुसहस्रंक्षुद्रभूमिपाः ॥ ७४ ॥
तेतुसाहस्रसेनाढ्यामहीराजमुपस्थिताः ॥ तेषांमध्येचवैभूपान्द्विशतान्देहलींप्रति ॥ ७५ ॥ ससैन्यान्प्रेषयामासराष्ट्ररक्षणहेतवे ॥
एवंसदेहलीराजाचतुर्विंशतिलक्षपः ॥ ७६ ॥ युद्धमष्टादशाहानिसंजातंसर्वसंक्षयम् ॥ शृणुयुद्धकथांरम्यांभृगुवर्यसुविस्तरात् ॥ ७७ ॥
मार्गकृष्णद्वितीयायांमहीराजोमहाबलः ॥ आहूयलहरंभूपंवचनंप्राहनिर्भयः ॥ ७८ ॥ भवान्सपुत्रःसेनाढ्योधुंधुकारेणरक्षितः ॥
चामुंडेनयुतोयुद्धेगंतुमर्हतिसत्तम ॥ ७९ ॥ इतिश्रुत्वाययौशीघ्रंकुरुक्षेत्रेमहारणे ॥ तदापरिमलोराजामयूरध्वजमेवहि ॥ ८० ॥

समाहूयवचःप्राहशृणुपार्थिवसत्तम ॥ कृष्णांशेनजयन्तेनदेवसिंहेनरक्षितः ॥ ८१ ॥ सभवाल्लँक्षसैन्याढ्योगंतुमर्हतिवैरणे ॥ इति
श्रुत्वातुवचनंमयूरध्वजएवहि ॥ ८२ ॥ लक्षसैन्यान्वितःप्राप्तोलहरंनृपतिंप्रति ॥ तयोश्चासीन्महद्युद्धंसेनयोरुभयोरणे ॥ ८३ ॥
सेनातुलक्षवीरस्यतत्रयुद्धेप्रकीर्तिता ॥ एकोरथोगजास्तत्रज्ञेयाःपंचशतंरणे ॥ ८४ ॥ हयाश्चपंचसाहस्राःपत्तयस्तद्गुणादश ॥ एतेसै
न्यानराज्ञेयाःसैन्यपांश्चशृणुष्वभोः ॥ ८५ ॥ दशानांपच्चराणांचपतिर्नाम्नासपत्तिपः ॥ पंचानांचहयानांचपतिर्नाम्नासगुल्मपः ॥ ८६ ॥
पंचानांचगजानांचपतिर्नाम्नागजाधिपः ॥ एतैःसार्द्धंरथीज्ञेयोरणेऽस्मिन्दारुणेकलौ ॥ ८७ ॥ उष्ट्रारूढाःस्मृतादूताश्चत्वारिंशच्चतद्दले ॥
शतघ्न्यस्तत्रसाहस्रास्तेषांमध्येपृथक्पृथक् ॥८८॥ षट्त्रिंशतिःपदचरास्तेषांकर्माणिमेशृणु ॥ दशगोलकदातारोदशतत्पुष्टिकारकाः ॥८९॥
दशचार्द्रकरास्तान्वैत्रयस्तेवह्निदायिनः ॥ त्रयोदृष्टिकराज्ञेयास्त्रियामेषुपृथक्पृथक् ॥ ९० ॥ शेषाःशूद्रास्तुसेनानांशूरकृत्यपरायणाः ॥
एवंचलक्षवीराणांसेनातत्रप्रकीर्तिता ॥ ९१ ॥ तत्रासीत्तुमुलंयुद्धंधर्मेणचसमंततः ॥ प्रातःकालात्समारभ्यमध्याह्नेसैन्ययोर्द्वयोः ॥ ९२ ॥
तत्पश्चाद्याममात्रेणसैन्यपायुद्धमागताः ॥ तत्पश्चाच्चमहाशूराधुंधुकारादयोबलाः ॥ ९३ ॥ याममात्रंचयुद्धायसंस्थितारणमूर्द्धनि ॥ चामुं
डेनचकृष्णांशोधुंधुकारेणचेंदुलः ॥ ९४ ॥ भगदत्तेनवैदेवःकृतवान्युद्धदुर्मदम् ॥ सायंकालेतुसंप्राप्तेसर्वेशूराःक्षयंगताः ॥ ९५ ॥ कृष्णां
शस्तत्रचामुंडंजित्वातुलहरात्मजान् ॥ षोडशैवजघानाशुघटीमात्रेणवीर्यवान् ॥ ९६ ॥ दध्मौशंखंप्रसन्नात्मालक्षणान्तमुपाययौ ॥ चामुं
डोधुंधुंकारश्चभगदत्तोयुतःशतैः ॥ ९७ ॥ महीराजमुपागम्यसुषुपुर्निशिनिर्भयाः ॥ इन्दुलोदेवसिंहश्चसहस्रैःसंयुतौमुदा ॥ ९८ ॥ गत्वापरि
मलंभूपंरात्रौसुषुपतुस्तदा ॥ प्रातःकालेतुसंप्राप्तेतृतीयायांभयंकरे ॥ ९९ ॥ महीराजस्तदाहूयनृपंगजपतिंबली ॥ वचनंप्राहभोराज
न्यस्त्रिवीरैःसुरक्षितः ॥ १०० ॥ स्वकीयैर्लक्षसैन्यैश्चगंतुमर्हसिवैरणे ॥ तदापरिमलोभूपोनेत्रसिंहंमहीपतिम् ॥ १ ॥ युद्धायाज्ञापयामास
कृष्णांशाद्यैःसुरक्षितम् ॥ तयोश्चासीन्महद्युद्धंसेनयोरुभयोःक्रमात् ॥ २ ॥ हयाहयैःक्षयंजग्मुर्गजाश्चैवतथागजैः ॥ पच्चराःपच्चरैःसार्द्धं
शतघ्न्यश्चशतघ्निभिः ॥ ३ ॥ अपराह्णेमुनिश्रेष्ठनेत्रसिंहोमहाबलः ॥ महागजंगजपतिंगत्वायुद्धमचीकरत् ॥ ४ ॥ परस्परंचविरथौसंछि

न्नधनुषौतदा ॥ खड्गहस्तौमहींप्राप्यचक्रतूरणमुल्बणम् ॥ ५ ॥ अन्योन्येनवधंकृत्वास्वर्गलोकमुपागतौ ॥ इन्दुलस्तंतुचामुंडंदेवोवै धुंधुकंतथा ॥ ६ ॥ कृष्णांशोभगदत्तंचाजित्वाराजानमाययुः ॥ शेषैःपंचशतैःशूरैस्तैःसार्द्धलक्षणंप्रति ॥ ७ ॥ पराजिताश्वतेसर्वेसहस्रैः सहिताययुः ॥ प्रातःकालेतुसंप्राप्तेमहीराजोमहाबलः ॥ ८ ॥ मायावर्माणमाहूयवचनंप्राहनिर्भयः ॥ भवान्दशसुतैर्वीरैर्लक्षसैन्यैश्चसंयुतः ॥ ९ ॥ सर्वशत्रुविनाशायगंतुमर्हतिसत्तम ॥ इतिश्रुत्वासनृपतिर्वाद्यान्संवाद्यचाययौ ॥ ११० ॥ दृष्ट्वापरिमलोभूपोमायावर्माणमागतम् ॥ जगन्नायकमाहूयवचनंप्राहनिर्भयः ॥ ११ ॥ भवान्दशसहस्रैश्चसार्द्धंतैस्त्रिभिरन्वितः ॥ गन्तुमर्हतियुद्धायशीघ्रंमद्विजयंकुरु ॥ १२ ॥ इति श्रुत्वाययौशीघ्रंसेनयोरुभयोर्महत् ॥ युद्धंचासीन्मुनिश्रेष्ठयाममात्रंभयानकम् ॥१३॥ हतास्तेदशसाहस्राःकृष्णांशाद्यैःसुरक्षिताः ॥ शंखा न्दध्मुश्चतेसर्वेचांगदेशनिवासिनः ॥ १४ ॥ एतस्मिन्नंतरेधीराःकृष्णांशाद्यास्तुरीयकाः ॥ याममात्रेणसंजघ्नुर्लक्षसैन्यंरिपोस्तदा ॥ १५ ॥ अपराह्णेमहाराजोमायावर्मासुतैःसह ॥ कृष्णांशंदेवसिंहंचसंप्राप्तोजगनायकः ॥ १६ ॥ अथाङ्गभूपंदशपुत्रयुक्तंकृष्णांशएवाशुजगामशीघ्रम्॥ हयस्थितोवीरवरःप्रमाथीकलैकजातोमधुसूदनस्य ॥ १७ ॥ ततोंगभूपस्त्रिभिरेवबाणैरताडयन्मूर्ध्निचपार्श्वयोर्वै ॥ अमर्षमाणोबलवान्मही पतिर्दृढैर्हतःकालइवाशुसर्पः॥१८॥हयंसमुड्डीयसपुष्करान्तंततोभ्यगात्तंनृपतिंरथस्थम्॥हयस्यपातैर्विरथीचकारसएवभूपोऽसिमुपाददानः ॥ १९ ॥ सेनासिनाबिंदुलमंगशल्यंकृत्वासकृष्णांशमुवाचवाक्यम् ॥ कल्लोलमायात्तवनाशनायत्वयाजिताभूपतयःप्रधानाः ॥ १२० ॥ तदैवकीर्तिर्भवितामामाशुहत्वाभवंतंचसुखीभवामि ॥ इत्युक्तवन्तंनृपतिंमहान्तंस्वेनासिनातस्यशिरोजहार ॥ २१ ॥ हतेऽङ्गभूपेदशतस्य पुत्रास्तमेवजग्मुर्युधिकौरवांशाः ॥ तानागतान्बिंदुलएवपंचजघानबाणैस्तुतदासमन्युः ॥ २२ ॥ उभौचदेवस्तुजघानतत्रभल्लेनासिद्धेननृपा त्मजौच ॥ ज्येष्ठंसुतंगौतमएवहत्वाद्यौयौसकृष्णांशउपाजगाम ॥ २३ ॥ शंखान्प्रदध्मूरुचिराननास्तेप्रदोषकालेशिबिराणिजग्मुः ॥ श्रमा न्वितास्तेसुषुपुर्निशायांप्रातःसमुत्थायसुकर्मकृत्वा ॥ २४ ॥ गत्वासभायांनृपतिंप्रणम्यवाक्यंसमूचुःशृणुचंद्रवंशिन् ॥ अद्यैवसेनापतिर स्तिकोवैचाज्ञापयास्मान्नृपतस्यगुप्त्यै ॥ २५ ॥ श्रुत्वाहभूपोद्यतुवीरसेनःसकामसेनःस्वबलैःसमेतः ॥ रणंकरिष्यत्यचिरेणवीरास्तस्मात्सु

रक्षध्वमरिभ्यएवच ॥ २६ ॥ सवीरसेनोनृपतिंप्रणम्यलक्षैःस्वसैन्यैर्युधिसंजगाम ॥ तदामहीराजनृपःप्रतापीसनागवर्माणमुवाचतापी॥२७॥
रणायगच्छाशुसुतैःसमेतोलक्षैःस्वसैन्यैरुतभूपवर्य ॥ हत्वारिपुंघोरतमंहिवीरंपतिंमहान्तंयुधिवीरसेनम् ॥ २८ ॥ इत्युक्तवंतंनृपतिंप्रणम्य
सुवादयामासतदाहिवीरः ॥ तयोर्बभूवाशुरणोमहान्वैसुसेनयोःसंकुलयुद्धकार्ययोः ॥ २९ ॥ त्रियाममात्रेणहताश्चसर्वेविमानमारुह्यययुश्च
नाकम् ॥ हतेषुसर्वेषुचनागवर्मासुतेषुवैयादवभूपमाह ॥१३०॥ भवान्विसैन्यश्चतथैवचाहंभवान्सपुत्रश्चतथाहमेव ॥ संस्मृत्यधर्मंकुरुयुद्ध
माशुततोरथस्थःसुधनुर्गृहीत्वा ॥ ३१ ॥ बाणैश्चबाणान्भुवितौचछित्त्वाबभूवतुस्तौविरथौनृपाग्र्यौ ॥ खड्गेनखड्गंचतथैवछित्त्वाविमानमारु
ह्यगतौहिनाकम् ॥ ३२ ॥ सकामसेनःस्वरिपोश्चपुत्राञ्जघानबाणैश्चतदाष्टसंस्थान् ॥ ज्येष्ठद्वयौकोपसमन्वितौतंगृहीतखड्गौचसमीयतुश्च
॥३३॥ रिपोःशिरोजह्नतुरुग्रवेगौसकामसेनस्यकबंधएव ॥ हत्वारिपूतौचतदामिलित्वास्वर्गंययुस्तेचविमानरूढाः ॥ ३४ ॥ हतेषुसर्वेषुत
दात्रयस्तेचामुंडकाद्याजगनायकंते ॥ रुद्धासमेताःस्वशरैःकठोरैर्जघ्नुस्तमश्वंहरिनागरंच ॥ ३५ ॥ सदिव्यवाजीचतदास्वपक्षौप्रसार्य्यखे
नाशुरिपुंजगाम ॥ सधुंधुकारस्यगजंविहत्यचामुंडकस्यैवगजंविमर्द्य ॥ ३६ ॥ रथंचभूमौभगदत्तकस्यविचूर्ण्यशीघ्रंचनभोजगाम ॥ प्रवा
ग्रशंखंजगनायकश्चकृष्णांशमागम्यकथांचकार ॥ ३७ ॥ निशामुषित्वाजगनायकाद्याःप्रातःसमुत्थायरणंप्रजग्मुः ॥ तदामहीराजउताशु
कारीसकिन्नरेशंकणकंसपुत्रम् ॥ ३८ ॥ उवाचराजञ्छृणुकिन्नराणांमहाबलास्तेरिपवोममैते ॥ विनाशयाशुप्रबलारिघातान्देवैर्नसार्द्धंयुधि
वैमनुष्याः ॥३९॥ इत्युक्तवान्मंकणभूपतिस्तुययौसपुत्रोऽयुतसैन्यपश्च ॥ तमागतंतत्रविलोक्यराजावीरान्स्वकीयांश्चसमादिदेश ॥१४०॥
मनोरथस्थोजगनायकश्चसतालनोवैवडवांविगृह्य ॥ करालसंस्थश्चतदाजयन्तोविगृह्यचापंतरसाजगाम ॥ ४१ ॥ पपीहकस्थश्चसरूपणोवैज
गामकृष्णांशसमन्विताश्च ॥ सलल्लसिंहोगजमत्तसंस्थःसधान्यपालोहयमारुरोह ॥ ४२ ॥ समंततःकिन्नरसैन्यघोरंविनाशयामासुरुपांशु
खड्गैः ॥ विनष्टमानेत्रिसहस्रसैन्येसकिन्नरेशस्तरसाजगाम ॥ ४३ ॥ ध्यात्वाकुबेरंचगृहीतचापोनभोगतस्तत्रबभूवसूक्ष्मः ॥ ११४ ॥ अदृ
श्यमानःस्वशरैःकठोरैर्विनर्द्यसर्वान्हिननर्दघोरम् ॥ विलप्यमानेचसमस्तशूरेजयन्तएवाशुजगामशत्रुम् ॥ १४५ ॥ ध्यात्वामहेंद्रंकणकं

चबद्धाकृष्णांशमागम्यपदौनमाम ॥ तदातुतेशत्रुसहस्रसैन्येनिशम्यबद्धंकणकंनिजेंद्रम् ॥१४६॥ विनद्यघोरंरुरुधुश्चसर्वान्मायाविनोगुह्यक
मस्त्रमूहुः ॥ दिनेषुसप्तेषुतथानिशासुबभूवयुद्धंचसमंततस्तैः ॥ १४७ ॥ श्रमान्विताःसप्तमहाप्रवीराहतेषुसर्वेषुसुषुपुश्चवैयदा ॥ तदाकुबे
रंकणकश्चध्यात्वालब्ध्वावरंबंधनमाशुछित्त्वा ॥ १४८ ॥ सुप्तान्समुत्थायचसप्तशूरान्निशीथकालेसचकारयुद्धम् ॥ जित्वाचतान्षट्सवरप्रभा
वांस्तदेंदुलेनैवरणंचकार ॥ १४९ ॥ गृहीतखड्गौरणघोरमत्तौहत्वाततोवैभुवितौययुश्च ॥ प्रजग्मतुर्नाकमुपान्तदेवौसंस्तूयमानोसुरसत्तमै
श्च ॥ १५० ॥ ततःप्रभातेविमलेविजातेरुरोदरामांशउताललाप ॥ पापैःकलापैःपरिपीडचमानःकुलान्वितःसर्वयुतोमुनींद्र ॥ १५१ ॥ सपं
चशब्दंगजमारुरोहत्रिलक्षसैन्यैस्तरसाजगाम ॥ तदामहीराजउताहशृण्वन्गच्छध्वमद्यैवमयासमेताः ॥ १५२ ॥ स्वपंचलक्षैःप्रबलैश्चशूरैः
सार्द्धंरुरोधाशुरिपोश्चसेनाम् ॥ तयोर्बभूवाशुरणःप्रघोरोविनर्दतोर्युद्धनिमित्तकानाम् ॥ १५३ ॥ त्रियाममात्रेणहताश्चसर्वेद्वयोश्चपक्षावलशा
लिनश्च ॥ तदामहीराजउतायथौवैसमंडलीकश्चधनुर्विगृह्य ॥ १५४ ॥ सधुंधुकारश्चतदाजगामरथस्थितंलक्षणमुग्रवीरम् ॥ तदोदयोवैभग
दत्तमेवचामुंडकंभीष्मकराजसूनुः ॥ १५५ ॥ सपंचशब्दंगजमास्थितोवैगतःसएवाशुजगामभूपम् ॥ धनुर्विगृह्याशुगमुल्बणंचनृपास्थित
श्चाथभयंकरंच ॥ १५६ ॥ गजंप्रमत्तंशिवदत्तमुग्रमाह्लादहन्तारमुवाचवाक्यम् ॥ अयेप्रमत्ताग्रगजेंद्रशूरजयंचमेदेहिशिवप्रदत्त ॥ १५७ ॥
समंडलीकोरणदुर्मदश्चरामांशआह्लादइतिप्रसिद्धः ॥ तस्माच्चमांरक्षजवेनहस्तिन्महाबलात्कालरसाच्चवीरात् ॥ १५८ ॥ इत्येवमुक्तंनृपतिं
सहस्तीवचस्तमाहाशुशृणुष्वराजन् ॥ यावदहंवैतनुजीवधारीतावद्भवाञ्छत्रुभयंकरश्च ॥ १५९ ॥ इत्युक्तवंतंचगजंप्रमत्तंसपंचशब्द
श्चतदास्वदंतैः ॥ मुखंचतुर्भिश्चविदार्यशत्रोर्ननर्दघोरंसमहेंद्रदत्तः ॥ १६० ॥ सरुद्रदत्तश्चगजःप्रमत्तोरुषान्वधावत्तरसागजेंद्रम् ॥ रिपुं
स्वपद्भ्यांचचखानकुंभैःस्वतुंडदंडेनतुदंप्रकुर्वन् ॥ १६१ ॥ अवापमूर्छांचसपंचशब्दस्तदाशुभूपंप्रतिमंडलीकः ॥ स्वतोमरेणांगव्रणं
प्रदत्वाखड्गेनहत्वागजराजमुग्रम् ॥ जगामपद्भ्यांसरिपुप्रमाथीयत्रास्थितश्चेन्दुलउग्रधन्वा ॥ १६२ ॥ उत्थायपुत्रंचविलप्यमा
नांपत्नींस्वकीयांप्रतिचाजगाम ॥ तदाप्रमत्तौचगजौसुमूर्छांत्यक्त्वापुनश्चक्रतुरेवयुद्धम् ॥ सलक्षणःखड्गवरेणबाणान्रिपोश्चछित्त्वा

निजवैष्णवास्त्रम् ॥ १६३ ॥ दधारचापंचसुमंत्रयित्वासधुंधुकारंचगजंददाह ॥ हतेचतस्मिन्निजमुख्यबंधौसभूमिराजश्चगृहीतचा
पः ॥ १६४ ॥ शरेणरौद्रेणचलक्षणंतंजघानतत्रादिभयंकरस्थः ॥ समूर्छितःशुक्लकुलेपुसूर्यस्तदोदयोवैभगदत्तमेव ॥ १६५ ॥
सुमूर्छयित्वाचजगामशीघ्रंतत्रास्थितोलक्षणएकवीरः ॥ भयान्वितस्तंचविलोक्यराजाजवेनदुद्रावचरक्तबीजम् ॥ १६६ ॥ तदासुदेवंच
सरक्तबीजोजित्वातुकृष्णांशयुतोजगाम ॥ बाणेनशीघ्रंसचमूर्छयित्वापुनश्चदेवंचसमूर्छयित्वा ॥ १६७ ॥ तद्वधनायोद्यतआशुकारी
सलक्षणस्तत्रतदाजगाम ॥ प्रधायचापंचसवैष्णवास्त्रंप्रचोदयामासचरक्तबीजम् ॥ १६८ ॥ तदाससामन्तसुतोबलीयात्रणंविहायाशुवि
लोक्यसंध्याम् ॥ भयान्वितस्तैश्चयुतोययौवैयत्रास्थिताभूपतयःसकोपाः ॥ १६९ ॥ विलोक्यशत्रुंचसरत्नभानोःसुतोययौवैशिबिराणि
युक्तः ॥ निशाम्यभूपःसचचंद्रवंशीजयंस्वकीयंसुपुपुस्तुतेवै ॥ १७० ॥ प्रातश्चकालेसचचंद्रवंशीविलोक्यशुक्लान्वयमाहभूपम् ॥ १७१ ॥
अयेगुर्जरदेशीयमूलवर्मन्सुतैःसह ॥ लक्षसैन्यान्वितोभूत्वागन्तुमर्हतुवैभवान् ॥ १७२ ॥ इत्युक्तःसतुभूपालोयुद्धभूमिमुपाययौ ॥
महीराजाज्ञयाप्राप्तोनाम्नापूर्णमलोबली॥१७३॥दशपुत्रान्वितोयुद्धेसैन्यलक्षेणसंयुतः ॥ तयोश्चासीन्महद्युद्धंयामद्वयमुपस्थितम् ॥१७४॥
हतेषुतेषुसर्वेषुतौनृपौससुतैर्बली ॥ अनोन्येनरणंकृत्वायमलोकमुपागतौ ॥ १७५ ॥ मार्गकृष्णचतुर्दश्यांप्रभातेविमलेरवौ ॥ कैकयोलक्षसे
नाढ्योदयापुत्रसमन्वितः ॥१७६॥ लक्षणानुज्ञयाप्राप्तस्तस्मिन्युधिभयानके॥मद्रकेशस्तदाराजादशपुत्रसमन्वितः॥१७७॥लक्षसैन्यान्वित
स्तत्रयत्रयुद्धंसमन्वभूत्॥परस्परंहताःसर्वेदिनान्तेक्षत्रियारणे॥१७८॥ पुनःप्रभातेविमलेभगदत्तोमहाबली॥त्रिलक्षबलसंयुक्तोजगर्ज्जरणमूर्द्ध
नि॥१७९॥दृष्ट्वातंलक्षणोवीरस्त्रिलक्षबलसंयुतः ॥ चकारतुमुलंघोरंसेनयाचस्वकीयया ॥ अपराह्णेहताःसर्वेसैन्याश्चनृपयोस्तदा ॥ १८०॥
भगदत्तःस्वयंक्रुद्धोरथस्थोलक्षणंययौ ॥ लक्षणोरथमारुह्यस्वपितुःशत्रुजंनृपम् ॥ १८१ ॥ त्रिभिर्बाणैश्चसंतोद्यभल्लेनसमताडयत् ॥
भगदत्तस्तदाक्रुद्धोविरथंतंचकारह ॥ १८२ ॥ क्रुद्धवंतंरिपुंघोरंलक्षणःखड्गपाणिकः ॥ हत्वाहयांस्तथासूतंभगदत्तमुपाययौ ॥ १८३ ॥
मर्दयित्वाचतच्चर्मच्छित्त्वावर्मतदुद्भवम् ॥ त्रिधाचकारबलवान्भगदत्तंरिपोस्सुतम् ॥ १८४ ॥ संध्याकालेहतेतस्मिँल्लक्षणस्त्वरयान्वितः॥

एकाकीशिविरंप्राप्तोहस्तिन्युपरिसंस्थितः ॥१८५॥ भगदत्तेहतेतस्मिन्सराजाक्रोधमूर्छितः ॥ स्वकीयान्सर्वभूपांश्चचामुंडेनसमन्वितान् ॥
॥१८६॥ प्रेषयामासयुद्धायमार्गेचप्रतिपद्दिने ॥ अंगदश्चकलिंगश्चत्रिकोणःश्रीपतिस्तथा॥१८७॥श्रीतारश्चमुकुंदश्चरुहिलोगुहिलस्तथा ॥
सुकेतुर्नवभूपास्तेनवायुतबलैर्युताः ॥ १८८ ॥ वाद्यानिवादयामासुस्तस्मिन्युद्धमहोत्सवे ॥ दृष्ट्वातांल्लक्षणोवीरोराजभिश्चस्वकीयकैः ॥
॥ १८९ ॥ सार्द्धंजगामयुद्धायतथाव्यूह्यायुधद्रिपून् ॥ रुद्रवर्माचनृपतिःशूरैर्दशसहस्रकैः ॥ १९० ॥ अंगदंवैरिणंमत्वातेनसार्द्धमयुध्यत ॥
कालीवर्माऽयुतैस्सार्धंकलिंगंप्रत्ययुध्यत॥१९१॥वीरसिंहोऽयुतैस्सार्द्धंत्रिकोणंप्रत्ययुध्यत ॥ ततोनुजःप्रवीरश्चश्रीपतिंसोऽयुतैस्सह॥१९२॥
नृपःसूर्योधरोवीरोऽयुताढ्योबलवान्रणे ॥ श्रीतारंनृपमासाद्यमहद्युद्धमचीकरत् ॥ १९३ ॥ वामनोयुतसंयुक्तोमुकुंदंप्रतिसोगमत् ॥ गंगासिं
हश्चबलवान्महिलंप्रतिसायुतः ॥१९४॥ लल्लसिंहोयुतैस्सार्द्धंगुहिलंप्रतिसोऽगमत्॥त्रिशतानिततोभूपाःसहस्राढ्याःपृथक्पृथक् ॥ १९५ ॥
क्षुद्रभूपाःक्षुद्रभूपांस्त्रिशतांश्चसमाययुः ॥ अन्योन्येनहताःसर्वेकृत्वायुद्धंभयानकम् ॥ १९६ ॥ चामुंडस्तुतदादृष्ट्वामृतकान्सर्वभूपतीन् ॥
लक्षणान्तमुपागम्यमहद्युद्धंचकारह ॥ १९७ ॥ लक्षणोरक्तबीजंतंज्ञात्वाब्राह्मणसंमतम् ॥ वैष्णवास्त्रंतदातस्मैनददौतेनपीडितः ॥ १९८ ॥
सायंकालेतुसंप्राप्तेलक्षणोहस्तिनीस्थितः ॥ एकाकीशिविरंप्राप्तश्चामुंडंनृपमाययौ ॥१९९॥द्वितीयायांप्रभातेचकृष्णांशोदेवसंयुतः ॥ शूरैर्द
शसहस्रैश्चयुद्धभूमिमुपाययौ ॥ २०० ॥ तारकश्चसचामुंडोद्विलक्षबलसंयुतः ॥ द्विशतैश्चतथाभूपैःसार्द्धंयुद्धमुपास्थितौ ॥ २०१ ॥ पुरस्कृ
त्यनृपान्सर्वान्ससैन्यौबलवत्तरौ ॥ तेषामनुस्थितौयुद्धेतत्रजातोमहारणः॥ २०२॥ याममात्रेणतौवीरौहत्वासर्वमहीपतीन् ॥ लक्षसैन्यांस्त
थाहत्वासंस्थितौश्रमकर्षितौ ॥ २०३ ॥ चामुंडस्तारकोधूर्तःसंप्राप्तौछिद्रदर्शिनौ ॥ ताभ्यांश्रमान्विताभ्यांचचक्रतुस्तौसमरंणम्॥२०४॥
तेषांत्रियाममात्रेणसंबभूवमहारणः ॥ सायंकालेतुसंप्राप्तेकृष्णांशश्चानिरायुधः ॥२०५॥ तलप्रहारेणरिपुंमूर्छयामासवीर्यवान् ॥ एतस्मिन्नंत
रेवीरस्तारकोदेवसिंहकम् ॥ २०६ ॥ हयंमनोरथंहत्वाशंखशब्दमथाकरोत् ॥ तच्छब्दात्सचचामुंडस्त्यक्त्वामूर्छांमहाबली ॥ २०७ ॥
कृष्णांशस्यशिरःकायादपहृत्यचेवगवान् ॥ गृहीत्वातौचशिरसिमहीराजमुपाययौ ॥२०८॥ महीराजस्तुतौदृष्ट्वापरमानंदनिर्भरः ॥ दत्त्वा

दानंद्विजातिभ्योमहोत्सवमकारयत् ॥ २०९ ॥ लक्षणस्यतदासैन्येहाहाशब्दोमहानभूत् ॥ श्रुत्वाकोलाहलंतेषांज्ञात्वातौचहतौ
नृपः ॥ २१० ॥ ब्रह्मानंदस्तदामूर्छांत्यक्त्वावेलामुवाचह ॥ प्रियेगच्छरणंशीघ्रंहरिनागरमास्थिता ॥ २११ ॥ ममवेषंशुभंकृत्वाता
रकंजहिमाचिरम् ॥ इतिश्रुत्वातुसावेलारामांशेनसमन्विता ॥ २१२ ॥ सहस्रशूरसहितायुद्धभूमिमुपाययौ ॥ श्रुत्वासलक्षणोवीरस्ता
लनेनसमन्वितः ॥ २१३ ॥ सैन्यैश्चदशसाहस्रैर्महीराजमुपाययौ ॥ तृतीयायांप्रभातेचतारकोबलवत्तरः ॥ २१४ ॥ ब्रह्मानंदंचतंमत्वा
महद्युद्धमचीकरत् ॥ रक्तबीजश्चचामुंडोरामांशोबलवत्तरः ॥ २१५ ॥ चकारदारुणंयुद्धंतस्मिन्वीरसमागमे ॥ याममात्रेणरामांशोह
त्वातस्यमहागजम् ॥ २१६ ॥ तच्छस्त्राणितथाच्छित्त्वामल्लयुद्धमचीकरत् ॥ त्रियाममात्रेणतदासायंकालेसमागते ॥ २१७ ॥ ममंथ
भ्रातृहन्तारंसचवीरोममारह ॥ तदावेलामहाशत्रुंतारकंबलवत्तरम् ॥ २१८ ॥ छित्त्वास्त्राणिस्वखड्गेनशिरःकायादपाहरत् ॥ चितांकृत्वा
विधानेनसादेवीद्रुपदात्मजा ॥ २१९ ॥ ब्रह्मानंदंनमस्कृत्यतच्चितायांसमारुहत् ॥ तेनसार्द्धंचसाशुद्धाश्वशुरस्याज्ञयामुदा ॥ २२० ॥
सप्तजन्मकथांकृत्वास्वपतेस्तुददाहवै ॥ तच्चितायांचभर्तारमिन्दुलंबलवत्तरम् ॥ २२१ ॥ संस्थाप्यदाहयामासतेनसार्द्धंकलेवरम् ॥
रात्रौपरिमलोराजालक्षणेनसमन्वितः ॥ २२२ ॥ महीराजमुपागम्यमहद्युद्धमकारयत् ॥ सपादलक्षाश्चतदाहतशेषामहाबलाः ॥ २२३ ॥
त्रिलक्षान्हतशेषांश्चसार्द्धंयोद्धुमुपस्थिताः ॥ धान्यपालःशतैर्भूपाँल्लक्षणश्चतथाशतम् ॥ २२४ ॥ तालनश्चशतंभूपान्हत्वाराजानमाययौ ॥
महीराजस्तदादुःखीध्यात्वारुद्रंमहेश्वरम् ॥ २२५ ॥ निशीथेसमनुप्राप्तेहतशेषैस्समागतः ॥ एकाकीगजमारुह्यययौचादिभयंकरः॥२२६॥
रुद्रदत्तेनबाणेनहत्वापरिमलंनृपम् ॥ धान्यपालंतथाहत्वातालनंबलवत्तरम् ॥ २२७ ॥ लक्षणान्तमुपागम्यमहद्युद्धमचीकरत् ॥ मही
राजस्यरौद्रास्त्रैस्सैन्यास्सर्वेक्षयंगताः ॥ २२८ ॥ लक्षणंप्रतिरौद्रास्त्रंमहीराजःसमादधे ॥ तदातुलक्षणोवीरोवैष्णवास्त्रंसमादधे ॥ २२९ ॥
तेनास्त्रेणक्षयंजातंमहीराजस्यसायकम् ॥ तेनास्त्रतेजसाराजामहासंतापमाप्तवान् ॥ २३० ॥ ध्यात्वारुद्रंमहादेवंत्यक्त्वातद्वैष्णवींविद्याम्॥
स्वभल्लेनशिरःकायादपाहरतभूमिपः ॥ २३१ ॥ हस्तिनीचतदारुष्टागजमादिभयंकरम् ॥ गत्वायुद्धंमुहूर्त्तेनकृत्वास्वर्गमुपाययौ ॥२३२॥ ॥

उषःकालेचसंप्राप्तेमलनापतिमुत्तमम् ॥ तच्चितायांसमारोप्यददाहस्वंकलेवरम् ॥ २३३ ॥ तदातुदेवकीशुद्धंलक्षणंबलवत्तरम् ॥ तालना
दींस्तथाहुत्वाददाहस्वंकलेवरम् ॥ २३४ ॥ प्रभातेविमलेजातेचतुर्थेभौमवासरे ॥ तथाहुत्वास्वर्णवतींकृत्वातेषांतिलांजलिम् ॥ २३५ ॥
ध्यात्वासर्वमयींदेवींस्थिरीभूत्वास्वयंस्थितः ॥ एतस्मिन्नंतरेतत्रकलिर्भार्यासमन्वितः ॥ २३६ ॥ वांछितंफलमागम्यतुष्टावश्लक्ष्णया
गिरा ॥ कलिरुवाच ॥ नमआह्लादमहतेसर्वानंदप्रदायिने ॥ २३७ ॥ योगेश्वरायशुद्धायमहावतीनिवासिने ॥ रामांशस्त्वंमहाबाहोम
मपालनतत्परः ॥ २३८ ॥ कलैक्यासमागम्यभुवोभारस्त्वयाहृताः ॥ राजानःपावकीयाश्चतपोबलसमन्विताः ॥ २३९ ॥
हत्वातान्पंचसाहस्रान्क्षुद्रन्भूपाननेकशः ॥ योगमध्येसमासीनोनमस्तस्मैमहात्मने ॥ २४० ॥ तेषांसैन्याःषष्टिलक्षाःक्रमाद्वीरतयाहताः ॥
वरंब्रूहिमहाभागयत्तेमनसिवर्तते ॥ २४१ ॥ इतिश्रुत्वासआह्लादोवचनंप्राहनिर्भयः ॥ ममकीर्तिस्त्वयादेवकर्तव्याचजनेजने ॥ २४२ ॥
पुनस्तेकार्यमतुलंकरिष्यामिशृणुष्वभोः ॥ महीराजश्चधर्मात्माशिवशक्तिपरायणः ॥ २४३ ॥ तस्यनेत्रेमयाशुद्धेकर्तव्येनीलरूपके ॥
तवप्रियःसदानीलस्तथैवचममप्रियः ॥ २४४ ॥ देवानांदुःखदोदेवदैत्यानांहर्षवर्द्धनः ॥ इत्युक्त्वासतुरामांशोगजमारुह्यवेगतः ॥ २४५ ॥
महीराजमुपागम्यमहद्युद्धंचकारह ॥ रुद्रदत्तोगजस्तूर्णंपंचशब्दमुपस्थितः ॥ २४६ ॥ पद्मदन्तान्समारुह्ययुयुधातेपरस्परम् ॥ अन्यो
न्येनतथाहत्वागजौस्वर्गमुपेयतुः ॥ २४७ ॥ तदाभयातुरोराजात्यक्त्वायुद्धंभयंकरम् ॥ सतुदुद्राववेगेनरामांशोऽनुययौततः ॥ २४८ ॥
केशेषुचमहीराजंगृहीत्वातरसाबली ॥ कलिदत्तंमहानीलंनेत्रयोस्तेनतत्कृतम् ॥ २४९ ॥ तदाप्रभृतिवैशंभुरशुद्धंनृपतिंप्रियम् ॥ मत्वा
त्यक्त्वाययौस्थानेकैलासेगुह्यकालये ॥ २५० ॥ आह्लादःकलिनासार्द्धंकदलीवनमुत्तमम् ॥ गत्वायोगंचकाराशुपर्वतेगंधमादने ॥ २५१ ॥
तथाभूतंचरामांशंकलिर्दृष्ट्वामुदान्वितः ॥ बलिपार्श्वमुपागम्यवर्णयामाससर्वशः ॥ २५२ ॥ सवैबलिर्दैत्यराजोऽयुतैःसहाविनिर्गतः ॥ गौर
देशमुपागम्यसहोड्डीनमुवाचह ॥ २५३ ॥ गच्छवीरबलैस्सार्द्धंनिशायांरक्षितोमया ॥ हत्वाभूपंमहीराजंविद्रन्मालांगृहाणभोः ॥ २५४ ॥
इतिश्रुत्वावचस्तस्यषोडशाब्दांतरेगतः ॥ सपादलक्षैश्चबलैःकुरुक्षेत्रमुपाययौ ॥ २५५ ॥ महीराजसुताञ्जित्वासमाहूयमहावतीम् ॥ मही

पतिंप्रेषयित्वालुंठयित्वाचतद्वसु ॥ २५६ ॥ लिंगार्थंकृतवान्यत्नंसनृपःकीर्तिसागरे ॥ नप्राप्तस्सनृपस्तंवैस्वगेहायतदाययौ ॥ २५७ ॥
लक्षचंडींकारयित्वापरमानंदमाप्तवान् ॥ जयचंद्रस्तुतच्छ्रुत्वापुत्रशोकसमन्वितः ॥ २५८ ॥ निराहारोयतीभूत्वामृतःस्वर्गपुरंययौ ॥ सहो
ड्डीनेनसनृपःकृत्वायुद्धंभयंकरम् ॥ २५९ ॥ सप्ताहोरात्रमात्रेणम्लेच्छराजावशंगतः ॥ मारितोबहुयत्नेनमहीराजोनवैमृतः ॥ २६० ॥
तदाम्लेच्छस्सहोड्डीनोनिर्बंधनमथाकरोत् ॥ ज्योतिरूपस्थितंतत्रचंद्रभट्टोनृपाज्ञया ॥ २६१ ॥ क्षुरप्रेणचबाणेनहत्वावह्नौददाहवै ॥
विद्रुमालांचसम्लेच्छोगृहीत्वाचधनंबहु ॥ तत्रस्थाप्यस्वदासंचकुतुकोड्डीनमागतः ॥ २६२ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्ग
पर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ इति तृतीयखंडः समाप्तः ॥ ॥ छ ॥ ॥

---

श्रीगणेशाय नमः ॥ ॥ श्रीराधावल्लभोजयति ॥ वेदव्यासउवाच ॥ एवंद्वापरसंध्यायामन्तेसूतेनवर्णितम् ॥ सूर्यचंद्रान्वयाख्यानंतन्मया
कथितंतव ॥ १ ॥ विशालायांपुनर्गत्वावैतालेनविनिर्मितम् ॥ कथयिष्यतिसूतस्तमितिहाससमुच्चयम् ॥ २ ॥ तन्मयाकथितंसर्वंहृषी
कोत्तमपुण्यदम् ॥ पुनर्विक्रमभूपेनभविष्यतिसमाह्वयः ॥ ३ ॥ नैमिषारण्यमासाद्यश्रावयिष्यतिवैकथाम् ॥ पुनरुक्तानियान्येवपुराणाष्टा
दशानिवै ॥ ४ ॥ तानिचोपपुराणानिभविष्यंतिकलौयुगे ॥ तेषांचोपपुराणानांद्वादशाध्यायमुत्तमम् ॥ ५ ॥ सारभूतंचकथितंचेतिहास
समुच्चयम् ॥ यत्तन्मयाचकथितंहृषीकोत्तमतेमुदा ॥ ६ ॥ विक्रमाख्यानकालान्तेऽवतारःकलयाहरेः ॥ सचशक्त्यावतारोहिराधाकृष्ण
स्यभूतले ॥ ७ ॥ तत्कथांभगवान्सूतोनैमिषारण्यमास्थितः ॥ अष्टाशीतिसहस्राणिश्रावयिष्यतिवैमुनीन् ॥ ८ ॥ यत्तन्मयाचकथितंहृषी
कोत्तमतेमुदा ॥ पुनस्तेशौनकाद्याश्चकृत्वास्नानादिकाःक्रियाः ॥ ९ ॥ सूतपार्श्वंगमिष्यंतिनैमिषारण्यवासिनः ॥ तत्पृष्टेनैवसूतेनयदु
क्तंतच्छृणुष्वभोः ॥ १० ॥ ॥ ऋषयऊचुः ॥ ॥ श्रुतंकृष्णस्यचरितंभगवन्भवतोदितम् ॥ इदानींश्रोतुमिच्छामिराज्ञांतेषांक्रमा
त्कुलम् ॥ ११ ॥ चतुर्णांवह्निजातानांपरंकौतूहलंहिनः ॥ सहरिस्त्रियुगीप्रोक्तःकथंजातःकलौयुगे ॥ १२ ॥ सूतउवाच ॥ ॥ कथयामि

मुनिश्रेष्ठायुष्माकंप्रश्नमुत्तमम् ॥ अग्निवंशनृपाणांचचरित्रंशृणुविस्तरात् ॥ १३ ॥ प्रमरश्चमहीपालोदक्षिणांदिशमास्थितः ॥ अम्ब या
रचितांदिव्याममरायपुरींशुभाम् ॥ १४ ॥ निवासंकृतवान्राजासामवेदपरोबली ॥ षष्ठवर्षंकृतंराज्यंतस्माज्जातोमहामरः ॥ १५ ॥ त्रि
वर्षंचकृतंराज्यंदेवापिस्तनयोऽभवत् ॥ पितुस्तुल्यंकृतंराज्यंदेवदूतस्ततोऽभवत् ॥ १६ ॥ पितुस्तुल्यंकृतंराज्यंशृणुतत्कारणंमुने ॥
अशोकेनिहतेतस्मिन्बौद्धभूपेमहाबले ॥ १७ ॥ कलिर्भास्करमाराध्यतपसाध्यानतत्परः ॥ पंचवर्षान्तरेसूर्यस्तस्मैचकलयेमुदा ॥ १८ ॥
शकाख्यंनामपुरुषंददौतद्भक्तितोषितः ॥ तदाप्रसन्नःसकलिःशकायचमहात्मने ॥ १९ ॥ तैत्तिरंनगरंप्रेम्णाददौहर्षितमानसः ॥
तत्रगोपान्दस्युगणान्वशीकृत्यमहाबली ॥२०॥ आर्यदेशविनाशायकृत्वोद्योगंपुनःपुनः ॥ हतवान्भूपतीन्बाणैस्तस्मात्तेस्वल्पजीविनः ॥
॥ २१ ॥ गंधर्वसेनश्चनृपोदेवदूतात्मजोबली ॥ शताब्दंदंपदंकृत्वातपसेपुनरागतः ॥ २२ ॥ शिवाज्ञयाचनृपतिर्विक्रमस्तनयस्ततः ॥
शतवर्षंकृतंराज्यंदेवभक्तस्ततोऽभवत् ॥ २३ ॥ दशवर्षंकृतंराज्यंशकैर्दुष्टैर्लयंगतः ॥ शालिवाहनएवापिदेवभक्तस्यचात्मजः ॥ २४ ॥
जित्वाशकान्सषष्टचब्दंराज्यंकृत्वादिवंगतः ॥ शालिहोत्रस्तस्यसुतोराज्यंकृत्वाशताब्दकम् ॥ २५ ॥ स्वर्गलोकंततःप्राप्तस्तत्सुतःशालि
वर्द्धनः ॥ पितुस्तुल्यंकृतंराज्यंशकहन्तातत्तोऽभवत् ॥२६॥ पितुस्तुल्यंकृतंराज्यंसुहोत्रस्तनयोऽभवत्॥ पितुस्तुल्यंकृतंराज्यंहविर्होत्रस्त
तोऽभवत् ॥२७॥ पितुस्तुल्यंकृतंराज्यमिंद्रपालस्ततोऽभवत् ॥ पुरीमिंद्रावतींकृत्वातत्रराज्यमकारयत् ॥२८॥ पितुस्तुल्यंकृतंराज्यंमा
ल्यवान्नामतत्सुतः ॥ पुरींमाल्यवतींकृत्वापितुस्तुल्यंकृतंपदम् ॥२९॥ अनावृष्टिस्ततश्चासीन्महतीचतुरब्दिका ॥ ततःक्षुधातुरोराजाश्ववि
ष्ठाधान्यगर्हितम्॥३०॥संस्कृत्यमंदिरेराजाशालग्रामायचार्पयत् ॥ तदाप्रसन्नोभगवान्वचनंनभसेरितम्॥३१॥ कृत्वाददौवरंतस्मैशृणुतन्मु
निसत्तम ॥ यावत्कुलेनृपाभाव्यास्तवभूपतिसत्तम ॥३२॥ अनावृष्टिर्नभवितातावत्तेराष्ट्रउत्तमे॥सुतोमाल्यवतश्चासीच्छंभुदत्तोहरप्रियः ॥
॥३३॥पितुस्तुल्यंकृतंराज्यंभौमराजस्ततोऽभवत्॥पितुस्तुल्यंकृतंराज्यंवत्सराजस्ततोऽभवत्॥३४॥पितुस्तुल्यंकृतंराज्यंभोजराजस्ततो
भवत् ॥ पितुस्तुल्यंकृतंराज्यंशंभुदत्तस्ततोऽभवत् ॥ ३५ ॥ दशहीनंकृतंराज्यंभोजराजपितुस्समम् ॥ शंभुदत्तस्यतनयोबिंदुपालस्ततो

ऽभवत्॥३६॥ बिंदुखंडंचराष्ट्रंवैकृत्वाससुखितोऽभवत् ॥ तेनराज्यंपितुस्तुल्यंकृतंवेदविदामुने ॥ ३७ ॥ बिंदुपालस्यतनयोराजपालस्ततो
ऽभवत् ॥ पितुस्तुल्यंकृतंराज्यंतस्माज्जातोमहीनरः॥३८॥पितुस्तुल्यंकृतंराज्यंसोमवर्मानृपोऽभवत्॥पितुस्तुल्यंकृतंराज्यंकामवर्मासुतोऽ
भवत्॥३९॥पितुस्तुल्यंकृतंराज्यंभूमिपालस्ततोऽभवत् ॥ भूसरस्तेनखनितंपुरंतत्रशुभंकृतम् ॥४०॥ पितुस्तुल्यंकृतंराज्यंरंगपालस्ततोऽ
भवत्॥भूमिपालस्तुनृपतिर्जित्वाभूपाननेकशः ॥ ४१ ॥ वीरसिंहस्ततोनाम्नाविख्यातोऽभून्महीतले॥ स्वराज्येरंगपालंसचाभिषिच्यवनंय
यौ॥४२॥तपःकृत्वादिवंयातोदेवदेवप्रसादतः ॥ कल्पसिंहस्ततोजातोरंगपालान्नृपोत्तमात् ॥४३॥ अनपत्योहिनृपतिःपितुस्तुल्यंकृतंपद
म्॥एकदाजाह्नवीतोयेस्नानार्थंमुदितोययौ ॥४४॥ दानंदत्वाद्विजातिभ्यःकल्पक्षेत्रमवाप्तवान् ॥ पुण्यभूमिंसमालोक्यशून्यभूतांस्थलीमपि
॥ ४५ ॥ नगरंकारयामासतत्रस्थानेमुदान्वितः ॥ कलापनगरंनाम्नाप्रसिद्धमभवद्भुवि ॥ ४६ ॥ तत्रराज्यंकृतंतेनगंगासिंहस्ततोऽभवत् ॥
नवत्यब्दवपुर्भूत्वासोऽनपत्योरणंगतः ॥ ४७ ॥ त्यक्त्वाप्राणान्कुरुक्षेत्रेस्वर्गलोकमवाप्तवान् ॥ समाप्तिमगमद्विप्रप्रमरस्यकुलंशुभम्॥४८॥
तदन्वयेचयेशेषाःक्षत्रियास्तदनंतरम्॥तन्नारीष्वमितोविप्रबभूववर्णसंकरः ॥४९॥ वैश्यवृत्तिकराःसर्वेम्लेच्छतुल्यामहीतले ॥ इतितेकथितं
विप्रकुलंदाक्षिणभूपतेः ॥५०॥ इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेप्रमरवंशवर्णनोनाम
प्रथमोऽध्यायः ॥१॥छ॥ सूतउवाच ॥ ॥ वयहानिर्महीपालोमध्यदेशेस्वकंपदम् ॥ गृहीत्वाब्रह्मरचितमजमेरमवासयत् ॥१॥ अजस्यब्रह्म
णोमाचलक्ष्मीस्तत्ररमागता ॥ तयाचनगरंरम्यमजमेरमजंस्मृतम् ॥ २ ॥ दशवर्षंकृतंराज्यंतोमरस्तत्सुतोऽभवत् ॥ पार्थिवैः
पूजयामासवर्षमात्रंमहेश्वरम् ॥ ३ ॥ इंद्रप्रस्थंददौतस्मैप्रसन्नोनगरंशिवः ॥ तदन्वयेचयेजातास्तोमराःक्षत्रियाःस्मृताः ॥ ४ ॥ तोमरा
वरजश्चैवचयहानिसुतःशुभः ॥ नाम्नासामलदेवश्चप्रश्रितोऽभून्महीतले ॥ ५ ॥ सप्तवर्षंकृतंराज्यंमहादेवस्ततोऽभवत् ॥ पितुस्तु
ल्यंकृतंराज्यमजयश्चततोभवत् ॥ ६ ॥ पितुस्तुल्यंकृतंराज्यंवीरसिंहस्ततोऽभवत् ॥ शताद्धाब्दंकृतंराज्यंततोबिंदुसुरोऽभवत् ॥ ७ ॥
पितुरर्द्धंकृतंराज्यंमध्यदेशेमहात्मना ॥ तस्माच्चमिथुनंजातंवीरावीरविहात्तकः ॥ ८ ॥ विक्रमायददौवीरांपितावेदविधानतः ॥ स्वपुत्रा

यस्वकंराज्यंमध्यदेशान्तरंमुदा ॥९॥ पितुस्तुल्यंकृतंराज्यंमाणिक्यस्तत्सुतोभवत् ॥ शताब्दार्द्धंकृतंराज्यंमहासिंहस्ततोऽभवत्॥१०॥
पितुस्तुल्यंकृतंराज्यंचंद्रगुप्तस्ततोऽभवत्॥पितुरर्द्धंकृतंराज्यंतत्सुतश्चप्रतापवान्॥११॥पितुस्तुल्यंकृतंराज्यंमोहनस्तत्सुतोऽभवत्॥ त्रिंश
दब्दंकृतंराज्यंश्वेतरायस्ततोऽभवत्॥१२॥पितुस्तुल्यंकृतंराज्यंनागवाहस्ततोऽभवत्॥पितुस्तुल्यंकृतंराज्यंलोहधारस्ततोऽभवत् ॥१३॥
पितुस्तुल्यंकृतंराज्यंवीरसिंहस्ततोऽभवत् ॥ पितुस्तुल्यंकृतंराज्यंविबुधस्तत्सुतोऽभवत्॥१४॥शताब्दार्द्धंकृतंराज्यंचंद्ररायस्ततोभवत् ॥
पितुस्तुल्यंकृतंराज्यंततोहरिहरोऽभवत् ॥१५॥ पितुस्तुल्यंकृतंराज्यंवसंतस्तस्यचात्मजः ॥ पितुस्तुल्यंकृतंराज्यंबलांगस्तनयोऽभवत्॥
॥१६॥ पितुस्तुल्यंकृतंराज्यंप्रमथस्तत्सुतोऽभवत्॥पितुस्तुल्यंकृतंराज्यमंगरायस्ततोऽभवत् ॥१७॥ पितुस्तुल्यंकृतंराज्यंविशालस्तस्य
चात्मजः॥पितुस्तुल्यंकृतंराज्यंशार्ङ्गदेवस्ततोऽभवत्॥१८॥पितुस्तुल्यंकृतंराज्यंमंत्रदेवस्ततोऽभवत् ॥पितुस्तुल्यंकृतंराज्यंजयसिंहस्तत
ोऽभवत्॥१९॥आर्यदेशाश्चसकलाजितास्तेनमहात्मना॥तद्धनैःकारयामासयज्ञंबहुफलप्रदम्॥२०॥ततश्चानन्ददेवोहिजातःपुत्रःशुभाननः॥
शताब्दार्द्धंकृतंराज्यंजयसिंहेनधीमता ॥ २१ ॥ तत्सुतेनपितुस्तुल्यंकृतंराज्यंमहीतले ॥ सोमेश्वरस्तस्यसुतोमहाशूरोबभूवह ॥ २२ ॥
अनंगपालस्यसुतोज्येष्ठांवैकीर्तिमालिनीम् ॥ तामुद्वाह्यविधानेनतस्यांपुत्रानजीजनत् ॥२३॥ धुंधुकारश्चवैज्येष्ठोमथुराराष्ट्रसंस्थितः ॥
मध्यःकुमाराख्यसुतःपितुःपदसमास्थितः ॥२४॥ महीराजस्तुबलवांस्तृतीयोदेहलीपतिः ॥ सहोद्दीनस्यनृपतेर्वशमाप्यमृतिंगतः ॥२५॥
चपहानेश्चसकुलंछाययित्वादिवंययौ॥तस्यवंशेतुराजन्यास्तेषांपत्न्यःपिशाचकैः॥२६॥म्लेच्छैश्चभुक्तवंत्यस्ताबभूवुर्वर्णसंकराः ॥नवैआर्या
नवैम्लेच्छाजट्टाजात्याश्चमेहनाः॥२७॥मेहनाम्लेच्छजातीयाजट्टाआर्यमयाःस्मृताः॥क्वचित्क्वचिच्चयेशेषाःक्षत्रियाश्चपहानिजाः ॥२८॥ इति
श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेप्रमरवंशवर्णनोनामद्वितीयोऽध्यायः ॥२॥ सूतउवाच ॥
शुक्लवंशंप्रवक्ष्यामिशृणुविप्रवरादितः॥यदाकृष्णःस्वयंब्रह्मत्यक्त्वाभूमिंस्वकंपदम्॥१॥दिव्यंवृन्दावनंरम्यंप्रययौभूतलेतदा॥कलेरागमनंज्ञा
त्वाम्लेच्छपाद्वीपमध्यगे ॥ २ ॥ स्थिताद्वीपेषुवैनानामनुजावेदतत्पराः ॥ कलिनामित्रधर्मेणदूषितास्तेबभूविरे ॥ ३ ॥ अष्टषष्टिसह

स्राणांवर्षाणांमुनिसत्तम ॥ अद्यप्रभृतिवैजातःकालःकलिसमागमे ॥ ४ ॥ षष्टिवर्षसहस्राणिद्वीपराज्यमचीकरत् ॥ सकलिर्म्लेच्छया
सार्धंसूर्यपूजनतत्परः ॥ ५ ॥ तत्पश्चाद्भारतेवर्षेम्लेच्छयाकलिराययौ ॥ दृष्ट्वातद्भारतंवर्षंलोकपालैश्चपालितम् ॥ ६ ॥ भयभीतस्त्व
राविष्टोगंधर्वाणांयशस्करः ॥ सकलिःसूर्यमाराध्यसमाधिस्थोबभूवह ॥ ७ ॥ ततोवर्षशतान्देतिसंतुष्टोरविरागतः ॥ सोंशुभिर्लोकमा
तप्यमहावृष्टिमकारयत् ॥ ८ ॥ चतुर्वर्षसहस्राणिचतुर्वर्षशतानिच ॥ व्यतीतानिमुनिश्रेष्ठचाद्यप्रभृतिसंप्लवे ॥ ९ ॥ संपन्नंभार
तंवर्षंतदाजातंसमन्ततः ॥ न्यूहाख्योयवनोनामतेनवैपूरितंजगत् ॥१०॥ सहस्राब्दकलौप्राप्तेमहेन्द्रोदेवराट्स्वयम् ॥ काश्यपंप्रेषयामास
ब्रह्मावर्तेमहोत्तमे ॥ ११ ॥ आर्यावतीदेवशक्तिस्तत्करंचाग्रहीन्मुदा ॥ दशपुत्रान्समुत्पाद्यसद्विजोमिश्रमागमत् ॥ १२ ॥ मिश्रदेशोद्भवा
न्म्लेच्छान्वशीकृत्यायुतंमुदा ॥ स्वदेशंपुनरागत्यशिष्यांस्तान्सचकारह ॥ १३ ॥ नष्टायांसप्तपुर्यांचब्रह्मावर्तेमहोत्तमम् ॥ सरस्वतीदृष
द्वत्योर्मध्यगंतत्रचावसत् ॥ १४ ॥ स्वपुत्रंशुक्लमाहूयद्विजश्रेष्ठंतपोधनम् ॥ आज्ञाप्यरैवतंशृंगंतपसेतुपुनःस्वयम् ॥ १५ ॥ नवपुत्रांस्तथा
शिष्यान्मनुधर्मंसनातनम् ॥ श्रावयामासधर्मात्मासराजामनुधर्मगः ॥ १६ ॥ शुक्लोपिरैवतंप्राप्यसच्चिदानंदविग्रहम् ॥ वासुदेवंजगन्नाथंत
पसासमतोषयत् ॥ १७ ॥ तदाप्रसन्नोभगवान्द्वारकानायकोबली ॥ करेगृहीत्वातंविप्रंसमुद्रान्तमुपाययौ ॥ १८ ॥ द्वारकांदर्शयामासदि
व्यशोभासमन्विताम् ॥ व्यतीतेद्विसहस्राब्देकिंचिज्जातेभृगूत्तम ॥ १९ ॥ अग्निद्वारेणप्रययौसशुक्लोऽर्बुदपर्वते ॥ जित्वाबौद्धान्द्विजैःसा
र्धंत्रिभिरन्यैश्चबंधुभिः ॥ २० ॥ द्वारकांकारयामासहरेश्चकृपयाहिसः ॥ तत्रोष्यमुदितोराजाकृष्णध्यानपरोभवत् ॥ २१ ॥ पश्चिमेभार
तेवर्षेदशाब्दंकृतवान्पदम् ॥ नारायणस्यकृपयाविष्वक्सेनःसुतोऽभवत् ॥ २२ ॥ विंशदब्दंकृतंराज्यंजयसेनस्ततोऽभवत् ॥ त्रिंशदब्दं
कृतंराज्यंविसेनस्तस्यचात्मजः ॥ २३ ॥ शतार्धाब्दंकृतंराज्यंमिथुनंतस्यचाभवत् ॥ प्रमोदोमोदसिंहश्चविक्रमायानिजासुताम् ॥२४॥
विसेनश्चददौप्रीत्याराष्ट्रंपुत्रायचोत्तमम् ॥ पितुस्तुल्यंकृतंराज्यंसिंधुवर्मासुतोऽभवत् ॥ २५ ॥ सिंधुकूलेकृतंराष्ट्रंत्यक्त्वातत्पैतृकंपदम् ॥
सिंधुदेशस्ततोनाम्नाप्रसिद्धोभून्महीतले॥२६॥पितुस्तुल्यंकृतंराज्यंराज्ञावैसिंधुधर्मिणा ॥ सिंधुद्वीपस्तस्यसुतःपितुस्तुल्यंकृतंपदम्॥२७॥



॥

श्रीपतिस्तस्यतनयोगौतमान्वयसंभवाम्॥काच्छपींमहिषींप्राप्यकच्छदेशमुपाययौ ॥२८॥पुलिंदान्यवनाञ्जित्वातत्रदेशमकारयत् ॥ देशो
वैश्रीपतिनाम्नासिंधुकूलेबभूवह॥२९॥पितुस्तुल्यंकृतंराज्यंभुजवर्मांततोऽभवत् ॥ जित्वासशबरान्भिल्लांस्तत्रराष्ट्रमकारयत्॥३०॥भुजदेश
स्ततोजातःप्रसिद्धोऽभून्महीतले ॥ पितुस्तुल्यंकृतंराज्यंरणवर्मासुतोऽभवत्॥३१॥पितुस्तुल्यंकृतंराज्यंचित्रवर्मासुतोऽभवत् ॥ कृत्वासाचि
त्रनगरींवनमध्येनृपोत्तमः ॥३२॥ पितुस्तुल्यंकृतंराज्यंधर्मवर्मासुतोऽभवत् ॥ पितुस्तुल्यंकृतंराज्यंकृष्णवर्मासुतोऽभवत् ॥ ३३॥ पितुस्तु
ल्यंकृतंराज्यमुदयस्तत्सुतोऽभवत् ॥ कृत्वोदयपुरंरम्यंवनमध्येनृपोत्तमः ॥ ३४ ॥ पितुस्तुल्यंकृतंराज्यंवाप्यकर्मासुतोऽभवत् ॥ वापी
कूपतडागानिनानाहर्म्याणितेनवै ॥ ३५ ॥ धर्मार्थंकारयामासधर्मात्मासचवैपुरम् ॥ एतस्मिन्नन्तरेप्राप्तोबलदोनामभूपतिः ॥ ३६ ॥
लक्षसैन्ययुतोवीरोमहामदमतेस्थितः ॥ तेनसार्धमभूद्युद्धंराज्ञोवैवाप्यकर्मणः ॥ ३७ ॥ जित्वापैशाचकान्म्लेच्छान्कृष्णोत्सवमकारयत् ॥
पितुस्तुल्यंकृतंराज्यंगुहिलस्तत्सुतोऽभवत् ॥ ३८ ॥पितुस्तुल्यंकृतंराज्यंकालभोजःसुतोऽभवत् ॥ पितुस्तुल्यंकृतंराज्यंराष्ट्रपालस्ततोऽ
भवत् ॥ ३९ ॥ सत्यक्त्वापैतृकंस्थानंवैष्णवींशक्तिमागमत् ॥ तपसाराधयामासशारदांसर्वमंगलाम् ॥ ४० ॥ प्रसन्नासातदादेवीकारया
मासवैपुरीम् ॥ महावतींमहारम्यांमणिदेवेनरक्षिताम् ॥ ४१ ॥ तत्रोष्यनृपतिर्धीमान्दशाब्दंराज्यमाप्तवान् ॥ तस्योभौतनयौजातौविज
यःप्रजयस्तथा ॥ ४२ ॥ प्रजयःपितरौत्यक्त्वागंगाकूलमुपाययौ ॥ द्वादशाब्दंचतपसापूजयामासशारदाम् ॥ ४३ ॥ कन्यामूर्तिमयीदे
वीवेणुवादनतत्परा ॥ हयमारुह्यसंप्राप्ताविहस्याहमहीपतिम् ॥ ४४ ॥ किंनिमित्तंभूपसुतत्वयाचाराधिताशिवा ॥ तत्फलंत्वंहितपसा
मत्तःशीघ्रमवाप्स्यसि ॥ ४५ ॥ इतिश्रुत्वासहोवाचकुमारिमधुरस्वरे ॥ नवीनंनगरंमह्यंकुरुदेविनमोस्तुते ॥ ४६ ॥ इतिश्रुत्वातुसादेवी
ददौतस्मैहयंशुभम् ॥ पुरोभूत्वावाद्यकरीदक्षिणांदिशमागता ॥ ४७ ॥ सभूपोहयमारुह्यनेत्रआच्छाद्यचाययौ ॥ पुनःसभूपतिःपश्चा
त्पश्चिमांदिशमागतः ॥ ४८ ॥ ततोनुप्रययौपूर्वमर्कणोयत्रपक्षिराट् ॥ भयभीतोनृपस्तेनसमुन्मील्यसचक्षुषी ॥ ४९ ॥ ददर्शनगरंरम्यं
कन्ययारचितंशुभम् ॥ उत्तरेतस्यवैगंगादक्षिणेनासपाण्डुरा ॥ ५० ॥ पश्चिमेईशसरितापूर्वेपक्षीसमर्कणः ॥ कुब्जभूतमभूद्ग्रामंकन्याकु

ञ्जामितिस्मृतम् ॥ ५१ ॥ दशवर्षंचतेनैवजयपालेनवैपदम् ॥ कृतंतस्यसुतोजातोवेणुवाद्याच्चवेणुकः ॥ ५२ ॥ सवेणुश्चमहीपालोदेवि
दत्तांमनोहराम् ॥ पत्नींकन्यामतींनाम्नासमुद्वाह्यरराजह ॥ ५३ ॥ तस्यांसप्तसुताजातामातृणांमंगलाःकलाः ॥ शीतलापार्वतीकन्या
तथापुष्पवतीस्मृता ॥ ५४ ॥ गोवर्धनीचसिंदूराकालीनाम्नाप्रकीर्तिता ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ ५५ ॥ वाराहीचतथें
द्राणीचामुंडाःक्रमतोऽभवन् ॥ एकदाभूपतेःपत्नीतंतुनामृत्तिकाघटम् ॥ ५६ ॥ कूपेकृतवतीप्रेम्णायथापूर्वंतथाप्यसा ॥ ददर्शबहुलानारी
र्नानाभूषणभूषिताः ॥ ५७ ॥ स्वयमेकैववसनामनोग्लानिमुपाययौ ॥ तदैवसघटोभूमौनप्राप्तःसप्रवृत्तिकाम् ॥ ५८ ॥ दृष्ट्वाकन्यामतीदेवी
घटहीनागृहंययौ ॥ तदातुसप्तकन्याश्चशिलाभूतागृहेस्थिताः ॥ ५९ ॥ श्रुत्वावेणुस्तदागत्यभर्त्सयित्वास्वकांप्रियाम् ॥ ब्रह्मचर्यव्रतंत्य
क्त्वारमयामासयोषितम् ॥ ६० ॥ नृपाद्वीरमत्यांचयशोविग्रहआत्मजः ॥ बभूवबलवान्धर्मीचार्यदेशपतिःस्वयम् ॥ ६१ ॥ विंशदब्दं
कृतंराज्यंतेनराज्ञामहीतले ॥ महीचंद्रस्तस्यसुतःपितुस्तुल्यंकृतंपदम् ॥ ६२ ॥ चंद्रदेवस्तस्यसुतोराज्यंतेनपितुःसमम् ॥ कृतंतस्मा
त्सुतोजातोमन्दपालोमहीपतिः ॥ ६३ ॥ तस्यभूपस्यसमयेसर्वेभूपाःसमंततः ॥ त्यक्त्वातंमंदपालंचतद्दत्तेसंस्थितागृहे ॥ ६४ ॥ पितु
रर्द्धंकृतंराज्यंकुंभपालस्ततोऽभवत् ॥ राजनीयाचनगरीपिशाचविषयेस्थिता ॥ ६५ ॥ तत्पतिश्चमहामोदोम्लेच्छपैशाचधर्मगः ॥
सजित्वाबहुधादेशाँल्लुंठयित्वाधनंबहु ॥६६॥ म्लेच्छधर्मकरःप्राप्तःकुंभपालोयतःस्थितः ॥ कुंभपालस्तुतंदृष्ट्वाकलिनानिर्मितंनृप ॥ ६७ ॥
महामोदंसमागम्यप्रणनामसबुद्धिमान् ॥ तदाम्लेच्छपतिःशूरोदत्वातस्मैधनंबहु ॥ ६८ ॥ राजनीयांचनगरींप्राप्तवान्मूर्तिखंडकः ॥
विंशदब्दंकृतंराज्यंकुंभपालेनधीमता ॥ ६९ ॥ तत्पुत्रोदेवपालश्चानंगभूपस्यकन्यकाम् ॥ समुद्वाह्यविधानेनचंद्रकांतितयासह ॥ ७० ॥
कान्यकुब्जगृहंप्राप्यजित्वाभूपाननेकशः ॥ पितुस्तुल्यंकृतंराज्यंतस्योभौतनयौस्मृतौ ॥ ७१ ॥ जयचंद्रोरत्नभानुर्दिशंपूर्वांतथोत्तराम् ॥
आर्यदेशस्यवैजित्वावैष्णवोराज्यमाप्तवान् ॥७२॥ रत्नभानोश्चतनयोलक्षणोनामविश्रुतः॥कुरुक्षेत्रेरणंप्राप्यत्यक्त्वाप्राणान्दिवंगतः ॥७३॥
समाप्तिमगमद्देशोवैश्यपालस्यधीमतः ॥ कुंभपालस्यशौक्लस्यवैश्यानांरक्षकस्यच ॥७४॥ विष्वक्सेनान्वयेजाताविष्वक्सेनानृपाःस्मृताः॥ ॥

विसेनस्यकुलेजाताविसेनाःक्षत्रियाःस्मृताः ॥७५॥ गुहिलस्यकुलेजातागौहिलाःक्षत्रियाहिते ॥ राष्ट्रपालान्वयेजाताराष्ट्रपालानृपाःस्मृताः ॥
॥ ७६ ॥ वैश्यपालस्यवैवंशेकुंभपालस्यधीमतः ॥ वैश्यपालाश्चराजन्याबभूवुर्बहुधाहिते ॥ ७७ ॥ लक्षणेमरणंप्राप्तेशुक्लवंशधुरंधुरे ॥
सर्वेतेक्षत्रियामुख्याःकुरुक्षेत्रेलयंगताः ॥ ७८ ॥ शेषास्तुक्षुद्रभूपालावर्णसंकरसंभवाः ॥ म्लेच्छैश्चदूषिताजाताम्लेच्छराज्यभयानके॥७९॥
इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेप्रमरवंशवर्णनोनामतृतीयोऽध्यायः ॥ ३ ॥छ॥
॥सूतउवाच॥भृगुवर्यशृणुत्वंवैवंशंपरिहरस्यच॥जित्वाबौद्धान्परिहरोऽथर्ववेदपरायणः॥१॥शक्तिंसर्वमयींनित्यांध्यात्वाप्रेम्णापरोऽभवत् ॥
प्रसन्नासातदादेवीसार्धयोजनमायतम् ॥ २ ॥ नगरंचित्रकूटाद्रौचकारकलिनिर्जरम् ॥ कलिर्यत्रभवेद्बद्धोनगरेऽस्मिन्सुरप्रिये ॥ ३ ॥
अतःकालिंजरोनाम्नाप्रसिद्धोऽभून्महीतले ॥ द्वादशाब्दंकृतंराज्यंतेनपूर्वप्रदेशके ॥ ४ ॥ गौरवर्मातस्यसुतःकृतंराज्यंपितुःसमम् ॥
स्वानुजंघोरवर्माणंतत्रस्थाप्यमुदान्वितः ॥ ५ ॥ गौडदेशेसमागम्यतत्रराज्यमकारयत् ॥ सुपर्णोनामनृपतिस्ततोऽभूद्गौरवर्मणः ॥ ६ ॥
पितुस्तुल्यंकृतंराज्यंरूपणस्तत्सुतोऽभवत् ॥ पितुस्तुल्यंकृतंराज्यंकारवर्मासुतोऽभवत् ॥७॥शकोनामततोराजामहालक्ष्मींसनातनीम् ॥
त्रिवर्षांतेचसादेवीकामाक्षीरूपधारिणी ॥ ८ ॥ स्वभक्तपालनाचैवतत्रवासमकारयत् ॥ शताब्दंकृतंराज्यंतेनवैकामवर्मणा ॥ ९ ॥
मिथुनंजनयामासभोगोभोगवतीहिसा ॥ विक्रमायैवसनृपतिःसुतांभोगवतींददौ ॥ १० ॥ स्वराज्यंचस्वपुत्रायप्रददौभोगवर्मणे ॥ पितुस्तु
ल्यंकृतंराज्यंकालिवर्मासुतोऽभवत् ॥११॥ महोत्सवंमहाकाल्याःकृतवान्सचभूपतिः॥तस्मैप्रसन्नावरदाकालीभूत्वास्वयंस्थिता ॥ १२ ॥
कलिकाबहुपुष्पाणांसाचकारस्वहर्षतः ॥ ताभिर्भवंचनगरंसंजातंचमनोहरम् ॥ १३ ॥ कलिकातापुरीनाम्नाप्रसिद्धाभून्महीतले ॥ कौ
शिकस्तस्यतनयःपितुस्तुल्यंकृतंपदम् ॥१४॥ कात्यायनस्तस्यसुतःपितुस्तुल्यंकृतंपदम्॥तस्यपुत्रोहैमवतःपितुस्तुल्यंकृतंपदम्॥१५॥
शिववर्माचतत्पुत्रःपितुस्तुल्यंकृतंपदम् ॥ भववर्माचतत्पुत्रःपितुस्तुल्यंकृतंपदम् ॥ १६ ॥ रुद्रवर्माचतत्पुत्रःकृतंराज्यंपितुःसमम् ॥
भोजवर्माचतत्पुत्रस्त्यक्त्वावैपैतृकंपदम्॥१७॥भोजराष्ट्रंवनोद्देशेकारयामासवीर्यवान्॥पितुस्तुल्यंकृतंराज्यंगववर्मानृपोभवत् ॥१८॥ पितु

स्तुल्यंकृतंराज्यंविंध्यवर्मानृपोऽभवत् ॥ स्वानुजायस्वकंराज्यंदत्वावंगमुपाययौ॥१९॥पितुस्तुल्यंकृतंराज्यंसुखसेनस्ततोऽभवत्॥पितुस्तु
ल्यंकृतंराज्यंबलाकस्तस्यचात्मजः ॥२०॥ दशवर्षंकृतंराज्यंलक्ष्मणस्तत्सुतोऽभवत् ॥ पितुस्तुल्यंकृतंराज्यंमाधवस्तत्सुतोऽभवत्॥२१॥
पितुस्तुल्यंकृतंराज्यंकेशवस्तत्सुतोऽभवत्॥पितुस्तुल्यंकृतंराज्यंसुरसेनस्ततोऽभवत्॥२२॥पितुस्तुल्यंकृतंराज्यंततोनारायणोऽभवत्॥पि
तुस्तुल्यंकृतंराज्यंशांतिवर्मासुतोभवत्॥२३॥गंगाकूलेशांतिपुरंरचितंतेनधीमता॥निवासंकृतवान्भूपःपितुस्तुल्यंकृतंपदम् ॥२४॥नदीवर्मा
तस्यसुतोगंगादत्तवरोबली ॥ चकारनगरींरम्यांनदीहांगौडराष्ट्रगाम् ॥२५॥ गंगयाचतदाहूतोभिज्ञोविद्याधरःस्वयम्॥तेनैवरक्षिताचासीत्पुरी
वेदपरायणा ॥ २६ ॥ विंशद्वर्षंकृतंराज्यंतेनराज्ञामहात्मना ॥ गंगावंशस्ततोजातोविश्रुतोऽभून्महीतले ॥ २७ ॥ शार्ङ्गदेवस्तस्यसुतोबल
वान्हरिपूजकः ॥ गौडदेशमुपागम्यहरिध्यानपरोभवत् ॥ २८ ॥ दशवर्षंकृतंराज्यंगंगादेवस्तुतत्सुतः ॥ विंशद्वर्षंकृतंराज्यंचानंगस्तस्यभू
पतिः ॥ २९ ॥ तनयोबलवांश्चासीद्गौडदेशमहीपतिः ॥ पितुस्तुल्यंकृतंराज्यंततोराजेश्वरोऽभवत् ॥ ३० ॥ पितुस्तुल्यंकृतंराज्यंनृसिंह
स्तनयोऽभवत् ॥ पितुस्तुल्यंकृतंराज्यंकलिवर्मासुतोऽभवत् ॥ ३१ ॥ राष्ट्रदेशमुपागम्यजित्वातस्यनृपंबली ॥ महावतींपुरींरम्यामध्या
स्यसुखितोऽभवत् ॥ ३२ ॥ पितुस्तुल्यंकृतंराज्यंधृतिवर्मासुतोऽभवत् ॥ पितुस्तुल्यंकृतंराज्यंतस्यपुत्रोमहीपतिः ॥ ३३ ॥ जयचंद्राज्ञया
भूपउर्वीमायामितिस्मृताम् ॥ नगरींकारयामासतत्रवासमकारयत् ॥ ३४ ॥ कुरुक्षेत्रेहताःसर्वेक्षत्रियाश्चंद्रवंशिनः ॥ तदामहीपतीराजाम
हावत्यधिपोऽभवत् ॥ ३५ ॥ विंशद्वर्षंकृतंराज्यंसहोद्दीनेनवैततः ॥ कुरुक्षेत्रेमृतिंप्राप्ताःसुयोधनकलांशकाः ॥ ३६ ॥ घोरवर्मातुनृपतिः
सुतःपरिहरस्यवै ॥ कालिंजरेकृतंराज्यंशार्दूलस्तत्सुतोऽभवत् ॥ ३७ ॥ तदन्वयेचयेभूपाःशार्दूलीयाःप्रकीर्तिताः ॥ भूपानांबहुधाराष्ट्रंशार्दू
लान्वयसंभवम् ॥ ३८ ॥ बभूवसर्वतोभूमौमहामायाप्रसादतः ॥ इतितेकथितंविप्रपावकीयमहीभुजाम् ॥ ३९ ॥ कुलंसकलपापघ्नंयथैवश
शिसूर्ययोः ॥ पुनरन्यत्प्रवक्ष्यामियथाजातःस्वयंहरिः॥४०॥ इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेति
हाससमुच्चयेचतुर्थोऽध्यायः॥४॥ ॥सूतउवाच ॥ मध्याह्नकालेसंप्राप्तेब्रह्मणोऽव्यक्तजन्मनः॥चाक्षुषांतरमेवापिमहावायुर्बभूवह ॥१॥ तत्प्रभा

वेनहेनगद्रिःकंपमानःपुनःपुनः ॥ यथावृक्षस्तथैवासौतत्कंपादेवमंडलः ॥२॥ नभसोभूतलेप्राप्तस्तदाभूमिःप्रकंपिता ॥ बभूवमुनिशार्दूलसर्व लोकविनाशिनी ॥ ३ ॥ सप्तद्वीपाःसमुद्राश्चजलभूताबभूविरे ॥ लोकालोकस्तदाशेषोऽभवत्सोत्तरपर्वतः ॥ ४ ॥ शेषाभूमिर्लयंप्राप्तामुनेम न्वंतरेलये ॥ सहस्राब्दांतरेभूमिर्बभूवजलमध्यगा ॥ ५ ॥ तदासभगवान्विष्णुर्भवेनविधिनासह ॥ शैशुमारंशुभंचक्रंचकारनभसिस्थितम् ॥ ६ ॥ गृहीत्वासकलास्ताराग्रहान्सर्वान्यथाविधि ॥ स्थापयामासभगवान्यथायोग्यंपितामहः ॥ ७ ॥ पुनर्वैज्योतिषांचक्रैःशोषितासकला महो ॥ स्थलीभूत्वायुताब्दान्तेदृश्यमानाबभूवह ॥ ८ ॥ तदासभगवान्ब्रह्मामुखात्सोमंचकारह ॥ द्विजराजंमहाप्राज्ञंसर्ववेदविशारदम् ॥९॥ भुजाभ्यांभगवान्ब्रह्म क्षत्रराजंमहाबलम् ॥ सूर्यंचजनयामासराजनीतिपरायणम् ॥ १० ॥ ऊरुभ्यांवैश्यराजंचसमुद्रंसरितांपतिम् ॥ रत्ना करंचकृतवान्परमेष्ठीपितामहः ॥ ११ ॥ पद्भ्यांचजनयामासविश्वकर्माणमुत्तमम् ॥ दक्षंनामकलाभिज्ञंशूद्रराजंसुकृत्यकम् ॥ १२ ॥ सोमा द्वैब्राह्मणाजाताःसूर्याद्राजन्यवंशजाः ॥ समुद्रात्सकलावैश्यादक्षाच्छूद्राबभूविरे ॥ १३ ॥ सूर्यमंडलतोजातोमनुर्वैवस्वतःस्वयम् ॥ तस्य राज्यमभूत्सर्वप्राणिनांलोकवासिनाम् ॥ १४ ॥ दिव्यानांचयुगानांचतज्ज्ञेयंचैकसप्ततिः ॥ तदासभगवान्विष्णुर्विश्वरूपोऽवतारकः ॥१५॥ विष्णुःपूर्वार्द्धतोजातःपरार्द्धाद्वामनःस्वयम् ॥ बाल्यंसत्ययुगेदेवोविश्वरूपःसनातनः ॥१६॥ चतुश्शतानिवर्षाणिपरमायुर्नृणांतदा॥त्रेतायां यौवनंप्राप्तःपूर्वार्द्धात्संभवोहरिः॥१७॥वर्षाणांत्रिशतानांचनृणामायुःप्रकीर्तितम् ॥ द्वापरेवार्द्धकोदेवोनृणामायुःशतद्वयम्॥१८॥कलौतुमर णंप्राप्तोविश्वरूपोहरिःस्वयम् ॥ नृणामायुःशताब्दंचकेषांचिद्धर्मशीलिनाम्॥१९॥परार्द्धाद्वामनोदेवोमहेन्द्रावरजोहरिः ॥ चतुर्भुजोमहाश्या मोगरुडोपरिसंस्थितः॥२०॥विश्वरूपहितार्थायत्रियुगीसबभूवह ॥ वामनाद्धोत्रियुगीजातोनारायणःस्वयम्॥२१॥श्वेतरूपोहरिःसत्येहंसा ख्योभगवान्स्वयम्॥ त्रेतायांरक्तरूपश्चयज्ञाख्योभगवान्स्वयम्॥२२॥द्वापरेपीतरूपश्चस्वर्णगर्भोहरिःस्वयम्॥कलिकालेतुसंप्राप्तेसंध्यायांद्वा परेयुगे॥२३॥कलातुसकलाविष्णोर्वामनस्यतथाकला॥एकीभूताचदेवक्यांजातोविष्णुस्तदास्वयम् ॥ २४ ॥ वसुदेवगृहेरम्येमथुरायांचदेव ताः ॥ ब्रह्माद्यास्तुष्टुवुर्देवंपरंब्रह्मसनातनम् ॥२५॥ तदाप्रसन्नोभगवान्देवानाहशुभंवचः ॥ देवानांचहितार्थायदैत्यानांनिधननायच ॥ २६ ॥

अहंकलौचबहुधाभवामिसुरसत्तमाः ॥ दिव्यंवृंदावनंरम्यंसूक्ष्मंभूतलसंस्थितम् ॥ २७ ॥ तत्राहंचरहःक्रीडांकरिष्यामिकलौयुगे ॥
सर्ववेदाःकलौघोरेगोपीभूताःसमंततः ॥ २८ ॥ रंस्यन्तेहिमयासार्द्धंत्यक्त्वाभूमंडलंतदा ॥ राधयाप्रार्थितोऽहंवैयदाकलियुगांतके ॥२९॥
समाप्यचरहःक्रीडांकल्कींचभवितास्म्यहम् ॥ युगांतप्रलयंकृत्वापुनर्भूत्वाद्विधातनुः ॥ ३० ॥ सत्यधर्मंकरिष्यामिसत्येप्राप्तेसुरोत्तमाः ॥
इतिश्रुत्वातुतेदेवास्तत्रैवान्तर्लयंगताः ॥ ३१ ॥ एवंयुगेयुगेक्रीडाहरेरद्भुतकर्मणः ॥ येतुवैविष्णुभक्ताश्चतेहिजानंतिविश्वगम् ॥ ३२ ॥
यथैवनृपतेर्दासाःस्वराज्ञःकार्यगौरवम् ॥ जानंतिनापरेविप्रतथादासाहरेःस्वयम् ॥ ३३ ॥ विष्णुवांछानुसारेणविष्णुमायासनातनी ॥
रचित्वाविविधाँल्लोकान्महाकालीबभूवह ॥ ३४ ॥ कृत्वाकालमयंसर्वंजगदेतच्चराचरम् ॥ पश्चात्तुभक्षयित्वातान्महागौरीभविष्यति॥३५॥
नमस्तस्यैमहाकाल्यैविष्णुमायेनमोनमः ॥ महागौरिनमस्तुभ्यमस्मान्पाहिभयान्वितान् ॥ ३६ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्ग
पर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेपंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ ॥ ॥ ऋषिरुवाच ॥ ॥ महीराजान्मु
निश्रेष्ठकेराजानोबभूविरे ॥ तान्नोवदमहाभागसर्वज्ञोऽसिभवान्सदा ॥ १ ॥ ॥ सूतउवाच ॥ ॥ पैशाचःकुतुकोदीनोदेहलीराज्य
मास्थितः ॥ वलीगढंमहारम्यंयादवैरक्षितंपुरम् ॥ २ ॥ ययौतत्रसपैशाचःशूरायुतसमन्वितः ॥ वीरसेनस्यवैपौत्रंभूपसेनंनृपो
त्तमम् ॥ ३ ॥ सजित्वाकुतुकोदीनोदेहलीग्रामसंस्थितः ॥ एतस्मिन्नंतरेभूपानानादेश्याःसमागताः ॥ ४ ॥ जित्वासकुतुकोदीनःस्वदे
शात्तैर्निराकृतः ॥ सहोद्दीनस्तुतच्छ्रुत्वापुनरागत्यदेहलीम् ॥ ५ ॥ जित्वाभूपान्दैत्यवरोमूर्तिखंडमथाकरोत् ॥ तत्पश्चाद्बहुधाम्ले
च्छाइहागत्यसमन्ततः ॥ ६ ॥ पंचषट्सप्तवर्षाणिकृत्वाराज्यंलयंगताः ॥ अद्यप्रभृतिदेशेऽस्मिञ्छतवर्षान्तरोहिते ॥ ७ ॥
भूत्वाचाल्पायुषोमन्दादेवतीर्थविनाशकाः ॥ म्लेच्छभूपामुनिश्रेष्ठास्तस्माद्यूयंमयासह ॥८॥ गंतुमर्हथवैशीघ्रंविशालांनगरींशुभाम् ॥ इति
श्रुत्वातुवचनंदुःखात्संत्यज्यनैमिषम् ॥९॥ ययुःसर्वेविशालायांहिमाद्रौगिरिसत्तमे ॥ तत्रसर्वेसमाधिस्थाध्यात्वासर्वमयंहरिम् ॥१०॥शतव
र्षान्तरेसर्वेध्यानाद्ब्रह्मगृहंययुः ॥ व्यासउवाच ॥ इत्येवंसकलंभाव्यंयोगाभ्यासवशाद्धुतम् ॥ ११ ॥ वर्णितंचमयातुभ्यंकिमन्यच्छ्रोतुमिच्छ

से ॥ मनुरुवाच ॥ भगवन्वेदतत्त्वज्ञसर्वलोकशिवंकर ॥१२॥ अहंमायाभवोजातोभवान्वेदभवोभुवि ॥ अविद्ययाचसकलंममज्ञानंसमाहृ
तम् ॥ १३ ॥ अतोऽहंविविधायोनीर्गृहीत्वालोकमागतः ॥ परंब्रह्मैवकृपयाहत्वामांमंदभागिनम् ॥१४॥ व्यासरूपंस्वयंकृत्वासमुद्धर्तुमुपाग
तः ॥ नमस्तस्मैमुनींद्रायवेदव्यासायसाक्षिणे ॥१५॥ अविद्यामोहकैर्भावैरक्षणायनमोनमः ॥ पुनरन्यच्चमेब्रूहिसूताद्यैःकिंकृतंमुने ॥ १६ ॥
नत्सर्वंकृपयास्वामिन्वक्तुमर्हसिसांप्रतम् ॥ व्यासउवाच ॥ ब्रह्माण्डेयेस्थितालोकास्तेसर्वेऽस्मिन्कलेवरे ॥ १७ ॥ अहंकारोहिजीवात्मासर्वः
स्यात्कोटिहीनकः ॥ पुराणोऽणोरणीयश्चषोडशात्मासनातनः ॥१८॥ इन्द्रियाणिमनश्चैवपंचचेन्द्रियगोचराः ॥ ज्ञेयोजीवःशरीरेऽस्मिन्सई
शगुणबन्धितः ॥१९॥ ईशोह्यष्टादशात्मावैशंकरोजीवशंकरः ॥ बुद्धिर्मनश्चविषयाइन्द्रियाणितथैवच ॥ २० ॥ अहंकारस्सचेशोवैमहादेवः
सनातनः ॥ जीवोनारायणस्साक्षाच्छंकरेणविमोहितः ॥२१॥ सबद्धस्त्रिगुणैःपाशैरेकश्चबहुधाभवत् ॥ कालात्माभगवानीशोमहाकल्पस्व
रूपकः ॥२२॥ शिवकल्पोब्रह्मकल्पोविष्णुकल्पस्तृतीयकः ॥ ईशनेत्राणितान्येवबन्धकल्पश्चतुर्थकः ॥२३॥ वायुकल्पोवह्निकल्पोब्रह्माण्डो
लिंगकल्पकः ॥ ईशवक्त्राणिपंचैवतत्त्वज्ञैःकथितानिवै ॥२४॥ भविष्यकल्पश्चतथातथागरुडकल्पकः ॥ कल्पभागवतश्चैववैमार्कण्डेयकल्पकः
॥२५॥ वामनश्चनृसिंहश्चवराहोमत्स्यकूर्मकौ ॥ ज्ञानात्मनोमहेशस्यज्ञेयादशभुजाबुधैः ॥२६॥ अष्टादशदिनेष्वेवब्रह्मणोऽव्यक्तजन्मनः ॥
कल्पाश्चाष्टादशास्सर्वेबुधैर्ज्ञेयाविलोमतः ॥ २७ ॥ कूर्मकल्पश्चतत्राद्योमत्स्यकल्पोद्वितीयकः ॥ तृतीयःश्वेतवाराहःकल्पोज्ञेयःपुरा
तनैः ॥ २८ ॥ द्विधाचभगवान्ब्रह्मासूक्ष्मःस्थूलोऽगुणोगुणी ॥ सगुणःसावेराण्नाम्नाविष्णुनाभिसमुद्भवः ॥ २९ ॥ निर्गुणोव्ययरूप
श्चाव्यक्तजन्मास्वभूःस्वयम् ॥ ब्रह्मणःसगुणस्यैवशतायुःकालनिर्मितः ॥ ३० ॥ ऊनविंशसहस्राणिलक्षैकोमानुषाब्दकः ॥ एभिर्वर्षैर्दिनं
ज्ञेयंविराजोब्रह्मणःस्वयम् ॥ ३१ ॥ निर्गुणोऽव्यक्तजन्माचकालात्सर्वेश्वरःपरः ॥ अव्यक्तंप्रकृतिर्ज्ञेयाद्वादशाङ्गानिवैततः ॥ ३२ ॥ इन्द्रि
याणिमनोबुद्धिरव्यक्तस्यस्मृतानिवै ॥ अव्यक्ताच्चपरंब्रह्मसूक्ष्मज्योतिस्तदव्ययम् ॥ ३३ ॥ यदाव्यक्तेस्वयंप्राप्तोऽव्यक्तजन्माहिसंस्मृतः ॥
शतवर्षसमाधिस्थोयस्तिष्ठेच्चनिरंतरम् ॥३४॥ सूक्ष्मोमनोनिलोभूत्वागच्छेद्वैब्रह्मणःपदम् ॥ सत्यलोकमितिज्ञेयंयोगगम्यंसनातनम् ॥३५॥

तत्रस्थानेतुमुनयोगताःसर्वेसमाधिना ॥ तत्रोषित्वाचलक्षाब्दंभूलोकात्क्षणमात्रकम् ॥ ३६ ॥ सच्चिदानंदघनकंततःप्राप्ताःकलेवरे ॥ नेत्राणिचसमुन्मील्यसंप्राप्तोद्दितयाह्निके ॥३७॥ ददृशुर्मनुजान्सर्वान्पशुतुल्यान्हिसूक्ष्मकान् ॥ षष्टचब्दायुर्युतान्घोरान्सार्द्धकिष्कुद्वयोन्नतान् ॥ ३८ ॥ क्वचित्क्वचित्स्थितावर्णावर्णसंकरसन्निभाः ॥ सर्वेम्लेच्छाश्चपाषंडाबहुरूपमतोस्थिताः ॥ ३९ ॥ तीर्थानिसकलावेदास्त्यक्त्वाभूमंडलंतदा ॥ गोपीभूत्वाचहरिणासार्द्धंचक्रुर्महोत्सवम् ॥ ४० ॥ पाषंडाबहुजातीयानानापंथप्रदर्शकाः ॥ कलिनानिर्मितान्वर्णान्वंचयित्वास्थिताभुवि ॥४१॥ इतिदृष्ट्वातुमुनयोरोमहर्षणमन्तिके ॥ गत्वातत्रभविष्यांतिमनःप्रांजलयोहिते ॥ ४२ ॥ तैश्चतत्रस्तुतःसूतोयोगनिद्रांसनातनीम् ॥ संत्यक्त्वाकथयिष्यांतिकल्पाख्यानंमुनीन्प्रति ॥ ४३ ॥ तच्छृणुष्वेंद्रियश्रेष्ठयथासूतेनवर्णितम् ॥ सूतउवाच ॥ कल्पाख्यानंप्रवक्ष्यामियद्दृष्टंयोगनिद्रया ॥ ४४ ॥ तच्छृणुध्वंमुनिश्रेष्ठालक्षाब्दांतेयथाभवत् ॥ मुकुलान्वयसंभूतोम्लेच्छभूपःपिशाचकः ॥ ४५ ॥ नाम्नातिमिरलिंगश्चमध्यदेशमुपाययौ ॥ आर्यान्म्लेच्छांस्तदाभूपाञ्जित्वाकालस्वरूपकः ॥ ४६ ॥ देहलीनगरीमध्येमहद्धमकारयत् ॥ आहूयसकलान्विप्रानार्यदेशनिवासिनः ॥ ४७ ॥ उवाचवचनंधीमान्यूयंमूर्तिप्रपूजकाः ॥ निर्मितायेनयामूर्तिस्तस्यपुत्रसमास्मृता ॥ ४८ ॥ तस्याःकिंपूजनंशुद्धंशालग्रामशिलामयम् ॥ विष्णुदेवश्चयुष्माभिःप्रोक्तःसतुनवैहरिः ॥ ४९ ॥ अतोवःसकलावेदाःशास्त्राणिविविधानिच ॥ वृथाकृतानिमुनिभिर्लोकवंचनहेतवे ॥ ५० ॥ इत्युक्त्वातान्बलाद्धत्वाज्वलदग्नौसमाक्षिपत् ॥ शालग्रामशिलाःसर्वाबलात्तेषांसुपूजकाः ॥ ५१ ॥ गृहीत्वाचोष्ट्रपृष्ठेषुसमारोप्यगृहंययौ ॥ तैत्तिरंदेशमागम्यदुर्गंतत्रचकारसः ॥ ५२ ॥ शालग्रामशिलानांचस्वासनारोहणंकृतम् ॥ तदातुसकलादेवादुःखितावासवंप्रभुम् ॥५३॥ समूचुर्बहुधालप्यदेवदेवंशचीपतिम् ॥ वयंतुभगवन्सर्वेशालग्रामशिलास्थिताः ॥ ५४ ॥ त्यक्त्वामूर्तीश्चसकलाःकृष्णांशेनप्रबोधिताः ॥ शालग्रामशिलामध्येवसामोमुदितावयम् ॥५५॥ शिलास्सर्वाश्चनोदेवशालदेशसमुद्भवाः ॥ ताश्चवैम्लेच्छराजेनस्वपदारोहणीकृताः ॥ ५६ ॥ इतिश्रुत्वातुवचनंदेवानांभगवान्स्वराट् ॥ ज्ञात्वाबलिकृतंसर्वंदेवपूजानिराकृतम् ॥ ५७ ॥ चुकोपभगवानिंद्रोदैत्यान्प्रत्यग्रशासनः ॥ गृहीत्वावज्रमतुलंस्वायुधंदैत्यनाशनम् ॥५८॥ तै

त्तिरेप्रेषयामासदेशेम्लेच्छनिवासके ॥ तस्यशब्देनसकलादेशाश्चबहुभिन्नकाः ॥ ५९ ॥ सम्लेच्छोमरणंप्राप्तस्तदासर्वसभाजनैः ॥ शालग्रा
मशिलाःसर्वागृहीत्वाविबुधास्तदा ॥ ६०॥ गंडक्यांचसमाक्षिप्यस्वर्गलोकमुपाययुः ॥ महेन्द्रस्तुसुरैसार्द्धंदेवंपूज्यमुवाचह ॥६१॥ महीतले
कलौप्राप्तेभगवन्दानवोत्तमाः ॥ वेदधर्मसमुल्लंघ्यममनाशनतत्पराः ॥ ६२ ॥ अतोमांरक्षभगवन्देवैःसार्धंकलौयुगे ॥ जीवउवाच ॥ महेन्द्र
तवयापत्नीशचीनाम्नामहोत्तमा ॥ ६३ ॥ ददौतस्यैवरंविष्णुर्भवितास्मिसुतःकलौ ॥ त्वदाज्ञयाचसादेवीपुरींशांतिमयींशुभाम् ॥६४॥
गौडदेशेचगंगायाःकूलेलोकनिवासिनीम् ॥ प्रत्यागत्यद्विजोभूत्वाकार्यसिद्धिंकरिष्यति॥६५॥भवान्वैब्राह्मणोभूत्वादेवकार्यंप्रसाधय ॥ इति
श्रुत्वागुरोर्वाक्यंरुद्रैरेकादशैःसह॥६६॥अष्टभिर्वसुभिःसार्धमाश्विभ्यांसचवासवः॥तीर्थराजमुपागम्यप्रयागंचरविप्रियम् ॥६७॥ माघेतुमकरे
सूर्येसूर्यदेवमतोषयत् ॥ बृहस्पतिस्तदागत्यसूर्यमाहात्म्यमुत्तमम् ॥ इन्द्रादीन्कथयामासद्वादशाध्यायमापठन् ॥ ६८ ॥ इति श्रीभविष्ये
महापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेप्रमरवंशवर्णनोनामषष्ठोऽध्यायः ॥ ६ ॥ ॥छ॥ ॥ ऋषयऊचुः ॥
बृहस्पतिस्तुभगवान्मुनिर्देवान्समास्थितान् ॥ किंप्रोवाचचमाहात्म्यंमंडलस्थस्यवैरवेः ॥१ ॥ तत्सर्वंकृपयाब्रह्मन्ब्रूहिनस्तत्समुत्सुकान् ॥
इतिश्रुत्वावचस्तेषांसूतोवचनमब्रवीत् ॥ २ ॥ बृहस्पतिंसमासीनंजीवरूपंगुणालयम् ॥ प्रयागस्थोमहेन्द्रश्चसुरैःसार्द्धमुवाचह ॥ ३ ॥
कथयस्वमहाभागसूर्यमाहात्म्यमुत्तमम् ॥ यच्छ्रुतेनरविःसाक्षात्प्रसन्नोद्यभवेत्प्रभुः ॥ ४ ॥ बृहस्पतिरुवाच ॥ धातृशर्माद्विजःकश्चिदप
त्यार्थेप्रजापतिम् ॥ तपसातोषयामासबर्हिष्मतिपुरेस्थितः ॥ ५ ॥ पंचमाब्देतुभगवान्संतुष्टश्चप्रजापतिः ॥ सुतंकन्यांपुनःपुत्रंत्रीण्यपत्या
निसंददौ ॥ ६ ॥ वर्षांतरेचजनितंत्र्यपत्यंसद्विजोत्तमः ॥ धातृशर्मापरंहर्षमातवान्पुत्रलालनैः ॥७॥ विवाहाश्चकथंतेषांभावितव्यामहोत्त
माः ॥ इतिचिन्तान्वितोविप्रोगंधर्वेशंचतुम्बुरुम् ॥ ८ ॥ हवनैस्तोषयामासवर्षमात्रंविधानतः ॥ तुम्बुरुश्चतदागत्यतच्चकारमनोरथम्॥९॥
प्रसन्नस्तुतदाविप्रोवधूजामातरंमुदा ॥ दृष्ट्वातेषांविहारंचपुनश्चिंतांचकारह ॥ १० ॥ भूषणानिचवासांसिधनानिविविधानिच ॥ तेषांकथं
भविष्यंतिनिर्धनानांममाशुच ॥ ११ ॥ षष्टिवर्षमयोभूत्वाचंदनाद्यैर्धनाधिपम् ॥ विधिवत्पूजयामासवर्षमात्रंतुतत्परः ॥ १२ ॥ तदाप्र

सत्रोभगवान्ददौतस्मैधनंबहु ॥ विद्यांयक्षमयींरम्यांपंचस्वर्णप्रदांमुदा ॥ १३ ॥ सहस्रजापंसंपूज्यहवनंतद्दशांशकम् ॥ तर्पणंमार्जनं
चैवकृत्वावांछामवाप्तवान् ॥ १४ ॥ इत्येवंवर्तमानस्यगतःकालोमहान्स्वयम् ॥ मृत्योरागमनंतस्यजातंरोगसमन्वितम् ॥ १५ ॥ पी
डितस्तुरुजाविप्रःशंकरंलोकशंकरम् ॥ स्तुतिभिःश्रुतिरूपाभिस्तुष्टावबलवर्जितः ॥ १६ ॥ मासमात्रेणभगवान्ददौज्ञानंस्वयंहरः ॥
धातृशर्मातुतत्प्राप्यभास्करंमोहनाशनम् ॥ १७ ॥ सूर्यवारव्रतैस्तत्रतोषयामासनम्रधीः ॥ पंचाब्देभगवान्सूर्योभक्तिभावेनवत्सलः॥१८॥
चैत्र्यांतमाहवचनंवरंब्रूहिपुनःपुनः ॥ धातृशर्मातुतच्छ्रुत्वाभास्करंमोहनाशनम् ॥ १९ ॥ प्रश्रयावनतोभूत्वातुष्टावपरयागिरा ॥ धातृश
र्मोवाच ॥ प्रवृत्तिश्चनिवृत्तिश्चमनसोस्यतनौप्रिया ॥२०॥रात्रिरूपाप्रवृत्तिश्चनिवृत्तिर्दिनरूपिणी ॥ भवतस्तेजसाजातेलोकबंधनहेतवे२१॥
अव्यक्तेतुस्थितंतेजोभवतोदिव्यसूक्ष्मकम् ॥ त्रिधाभूतंतुविश्वायतस्मैतेजात्मनेनमः ॥ २२॥ राजसीयास्मृताबुद्धिस्तत्पतिर्भगवान्विधिः॥
भवतस्तेजसाजातस्तस्मैतेविधयेनमः ॥ २३ ॥ सात्त्विकीयातनौबुद्धिस्तत्पतिर्भगवान्हरिः ॥ भवतानिर्मितासत्वात्तस्मैतेहरयेनमः॥२४॥
तामसीमोहनाबुद्धिस्तत्पतिश्चस्वयंशिवः ॥ तमोभूतेनभवताजातस्तस्मैनमोनमः ॥ २५ ॥ देहिमेभगवन्मोक्षंसंज्ञाकांतनमोनमः ॥ बृह
स्पतिरुवाच ॥ इत्येवंसंस्तुतस्तेनभगवान्धातृशर्मणा ॥ २६ ॥ महेन्द्रवचनंप्राहतंद्विजंज्ञानकोविदम् ॥ मोक्षश्चतुर्विधोविप्रसालोक्यंत
पसोद्भवम् ॥ २७ ॥ सामीप्यंभक्तितोजातंसारूप्यंध्यानसंभवम् ॥ सायुज्यंज्ञानतोज्ञेयंतेषांस्वामीपरःपुमान् ॥ २८ ॥ द्विगुणोद्विगु
णोज्ञेयआनन्दोमोक्षिणांक्रमात् ॥ देवानांचैवदेहेषुयेमोक्षाःपुनरागताः ॥ २९ ॥ यद्गत्वाननिवर्तंतेतद्विष्णोःपरमंपदम् ॥ यत्प्रसन्नेनविप्रे
न्द्रसायोज्यंमेभवेत्तव ॥ ३० ॥ मनुमात्रश्चयःकालस्तावत्तेमोक्षआस्थितः ॥ इत्युक्त्वांतर्दधेदेवस्तेनमोक्षीकृतोद्विजः ॥ ३१ ॥ सूतउ
वाच ॥ इत्युक्तवंतंवागीशंचैत्रमासेदिवाकरः ॥ स्वरूपंदर्शयामासदेवदेवःसनातनः ॥३२॥शृणुध्वंसकलादेवायन्निमित्तःसमागतः॥काश्मीरे
स्वांशमुत्पाद्यदेवकार्यंकरोम्यहम् ॥ ३३ ॥ इत्युक्त्वास्वमुखात्तेजःसमुत्पाद्यादिवाकरः ॥ स्वभक्तायैसुकन्यायैद्विजपत्न्यैददौहितम्॥३४॥
धातृशर्माद्विजोयोवैसूर्येमोक्षमुपागतः॥सवैतत्तेजसाजातःकाव्यकारस्यमंदिरे॥३५॥केशवोनामाविख्यातःसर्वशास्त्रविशारदः॥जित्वाविप्रा

न्वेदपरान्महतींकीर्तिमाप्तवान् ॥३६॥ इतितेकथितंविप्रयथाजीवेनभाषितम् ॥ पुनःशृणुकथांरम्यांदेवेभ्योजीवनिर्मिताम्॥३७॥ बृहस्पतिरुवाच॥मायावत्यांद्विजःकश्चिन्मित्रशर्मेतिविश्रुतः॥काव्यविद्यापरोनित्यंरसिकःकामिनीप्रियः॥३८॥कुंभराशिंमयिप्राप्तेगंगाद्वारेमहोत्सवः॥बभूवबहुलैर्भूपैःकारितस्तीर्थतत्परैः॥३९॥तत्रोत्सवेनरानार्योबहुभूषणभूषिताः॥समाययुर्दर्शनार्थंपरमानन्दनिर्भराः ॥ ४० ॥ मित्रशर्मातुसंप्राप्यकामसेनस्यवैसुताम् ॥ काव्यकेलिकलायुक्तांद्वादशाब्दमयींशुभाम् ॥ ४१ ॥ दाक्षिणात्यस्यभूपस्यतनयांमधुराननाम् ॥ दृष्ट्वातांमृगशावाक्षींतद्वशित्वमुपागतः ॥ ४२ ॥ सातुतंचित्रिणीनाम्नामित्रशर्माणमुत्तमम् ॥ दृष्ट्वातुमूर्छिताचासीद्विप्रमूर्तिर्हृदिस्थिता ॥ ४३॥ स्वगेहंपुनरागत्यचित्रिणीभास्करंप्रभुम् ॥ प्रत्यहंपूजयामासबहुमानपुरस्सरा ॥ ४४ ॥ मित्रशर्मातुतत्स्थानेगंगाकूलेमनोहरे ॥ प्रातःस्नात्वाशुचिर्भूत्वावैशाखेजलमध्यगः ॥ ४५ ॥ स्तोत्रमादित्यहृदयमजपत्सूर्यतत्परः ॥ प्रत्यहंद्वादशावर्तैस्तोषयामासभास्करम् ॥ ४६ ॥ मासान्तेभगवान्सूर्योददौतस्मैहितद्वरम् ॥ सतुलब्धवरोविप्रःस्वगेहंपुनरागतः ॥ ४७ ॥ चित्रिणीतुवरंप्राप्तावांछितंलोकभास्करात् ॥ पुनस्तौपितरौस्वप्नेभास्करेणप्रबोधितौ ॥ ४८ ॥ मित्रशर्माणमाहूयवरयामासतुःसुताम् ॥ स्वान्तेनिवासयामासकामसेनश्चदंपती ॥ ४९ ॥ तौतुचक्रंमुदाविष्टौप्रत्यहंसूर्यदैवतम् ॥ ताम्रपात्रेचतद्यंत्रंलेखयित्वाविधानतः ॥ ५० ॥ ईजतूरक्तकुसुमैर्व्रतंकृत्वारविप्रियम् ॥ शताब्दवपुषौचोभौनिर्जरौश्रमवर्जितौ ॥ ५१ ॥ आरोग्यौमरणंप्राप्यसामीप्यंचरवेर्गतौ ॥ इतिश्रुत्वारवेर्गाथांवैशाख्यांदेवराट्स्वयम् ॥ ५२ ॥ प्रत्यक्षंभास्करंदेवंददर्शसहितंसुरैः ॥ भक्तिनम्रान्सुरान्दृष्ट्वाभगवांस्तिमिरापहः ॥ ५३ ॥ उवाचवचनंरम्यंदेवकार्यपरंशुभम् ॥ ममांशात्तनयोभूमौभविष्यतिसुरोत्तम ॥ ५४ ॥ सूतउवाच ॥ इत्युक्त्वास्वस्यबिंबस्यतेजोराशिंसमन्ततः ॥ समुत्पाद्यकृतंकाश्यांरामानंदस्ततोभवत् ॥ ५५ ॥ देवलस्यचविप्रस्यकान्यकुब्जस्यवैसुतः ॥ बाल्यात्प्रभृतिसज्ज्ञानीरामनामपरायणः ॥ ५६ ॥ पित्रामात्रायदित्यक्तोराघवंशरणंगतः ॥ तदातुभगवान्साक्षाच्चतुर्दशकलोहरिः ॥ ५७ ॥ सीतापतिस्तद्धृदयेनिवासंकृतवान्मुदा ॥ इतितेकथितंविप्रमित्रदेवांशतोयथा ॥ ५८ ॥ रामानंदस्तुबलवान्हरिभक्तेश्चसंभवः ॥ बृहस्पतिरुवाच ॥ शृणुशक्रकथांरम्यांज्येष्ठमासस्यवैरवेः ॥ ५९ ॥ अर्यमानामवैविप्रः

पुरासत्ययुगेह्यभूत् ॥ वेदवेदाङ्गतत्वज्ञोधर्मशास्त्रपरायणः ॥ ६० ॥ तस्यपत्नीपितृमतीश्राद्धयज्ञस्यभूपतेः ॥ तनयाचमहासाध्वीसितपु
त्रानकल्मषान् ॥ ६१ ॥ अर्यम्णोजनयामासधर्मशास्त्रपरायणान् ॥ एकदासद्विजोधीमान्विचार्य्यबहुधाहृदि ॥ ६२ ॥ धनार्थीभास्करंदे
वंतुष्टावबहुपूजनैः ॥ प्रभातेश्वेतकुसुमैश्चंदनादिभिरर्चनैः ॥ ६३ ॥ मध्याह्नेरक्तकुसुमैःपीतपुष्पैःपितृप्रसौ ॥ मासमात्रंतुविधिनापूजया
मासभास्करम् ॥ ६४ ॥ ज्येष्ठेवैभगवान्सूर्योददौतस्मैमणिंशुभम् ॥ तन्मणेश्चप्रभावेनप्रस्थमात्रंचकांचनम् ॥ ६५ ॥ प्रत्यहंजनयामा
सतेनधर्मःसमार्जितः ॥ वापीकूपतडागानितथाहर्म्याणिभूतले ॥ ६६ ॥ कारयामासधर्मार्थीसूर्यदेवप्रसादतः ॥ सहस्राब्दवपुर्भूत्वानि
र्जरोनिरुपद्रवः ॥ ६७ ॥ त्यक्त्वाकलेवरंरम्यंसूर्यलोकमुपाययौ ॥ उषित्वातत्रलक्षाब्दंसूर्यरूपोबभूवह ॥ ६८ ॥ इत्येवंभास्करस्यैव
माहात्म्यंकथितंमया ॥ तस्माच्छक्रसुरैःसार्द्धंभजमंडलगंरविम् ॥ ६९ ॥ सूतउवाच ॥ इतिश्रुत्वातुतेदेवाःपद्यैःसूर्यकथामयैः ॥
तोषयांचक्रिरेप्रेम्णाज्येष्ठमासिरविस्त्वसौ ॥ ७० ॥ प्रत्यक्षमभवत्तत्रदेवानाहप्रसन्नधीः ॥ कलौभयानकेदेवामदंशोहिजनिष्यति ॥ ७१ ॥
निम्बादित्यइतिख्यातोदेवकार्यंकरिष्यति ॥ सूतउवाच ॥ इत्युक्त्वासौस्वदेहाच्चतेजउत्पाद्यभूतले ॥ ७२ ॥ गोविन्दशर्मणोगेहेचोदया
मासतत्पुरे ॥ सबालोहरिभक्तश्चसाधुसेवीदयान्वितः ॥ ७३ ॥ षोडशाब्दवपुर्भूत्वानित्यदाहरिमर्चयत् ॥ एकदावैष्णवास्तत्रतोतादर्या
समागताः ॥ ७४ ॥ बुभुक्षिताश्चवचनंतंबालंप्राहुरूर्जिताः ॥ यावत्सूर्यःस्थितोव्योम्नितावदस्मान्हिभोजय ॥ ७५ ॥ इतिश्रुत्वातथेत्यु
क्त्वाददौतेभ्यश्चभोजनम् ॥ तदातुभगवान्सूर्योह्यस्ताचलमुपागतः ॥ ७६ ॥ मुहूर्तमभवत्कालःपुनःसूर्यसमाह्वयत् ॥ दर्शयामासतान्सूर्यं
निम्बवृक्षःसमानयन् ॥ ७७ ॥ तदातेवैष्णवाःसर्वेसाधुसाध्वित्यपूजयन् ॥ निंबादित्यइतिख्यातःसबालोविश्रुतोभुवि ॥ ७८ ॥ इतिश्रीभ
विष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेरामानंदनिंबार्कसमुत्पत्तिवर्णनंनामसप्तमोऽध्यायः ॥ ७ ॥
॥बृहस्पतिरुवाच॥ ॥ पुरात्रेतायुगेशक्रशक्रशर्माद्विजोह्यभूत् ॥ अयोध्यायांमहाभागोदेवपूजनतत्परः ॥ १ ॥ अश्विनौचतथारुद्रान्वसून्सूर्या
न्पृथक्पृथक् ॥ यजुर्वेदमयैर्मंत्रैरर्चयित्वाप्रसन्नधीः ॥ २ ॥ हव्यैश्चतर्पयामासदेवांस्तान्प्रत्यहंद्विजः ॥ तद्भावतस्त्रयस्त्रिंशद्देवाःक्षुद्रगणैर्युताः ॥ ३ ॥

ददुर्मनोरथंतस्मैदुर्लभंसुलभीकृतम् ॥ दशवर्षसहस्राणिनिर्जरोनिरुपद्रवः ॥ ४ ॥ पश्चात्कलेवरंत्यक्त्वापश्चात्सूर्योबभूवसः ॥
लक्षाब्दंमण्डलेतस्मिन्नधिकारःकृतस्ततः ॥ ५ ॥ ब्रह्मलोकंययौविप्रःसर्वदेवप्रसादतः ॥ अष्टवर्षसहस्राणिदिव्यानिपदमुत्तमम् ॥ ६ ॥
विलोक्यमंडलेप्राप्तंतंसूर्यंजपपूजनैः ॥ इतिश्रुत्वातुवचनंमहेन्द्रःसुरसंयुतः ॥ ७ ॥ आषाढेभास्करंदेवंपूजयामासनम्रधीः ॥ आषाढपू
र्णिमायांचसदेवोजगतीतले ॥ ८ ॥ प्रत्यक्षमगमत्तत्रसुरानाहशृणुष्वतत् ॥ वृंदावनेमहारम्येजनिष्यामिकलौभये ॥ ९ ॥ सद्विजःसूर्यरूप
श्चदेवकार्यंकरिष्यति ॥ माधवस्यद्विजस्यैवतनयःसभविष्यति ॥ १० ॥ मधुर्नाममहाभागोवेदमार्गपरायणः ॥ ॥ सूतउवाच ॥ ॥
इत्युक्त्वाभगवान्सूर्योदेवकार्यार्थमुद्यतः ॥ ११ ॥ स्वांगात्तुतेजउत्पाद्यवृन्दावनमपेषयत् ॥ विमुखान्मधुरालापैर्वशीकृत्यसमन्ततः ॥
॥ १२ ॥ तेभ्यश्चवैष्णवींशक्तिंप्रददौभुक्तिमुक्तिदाम् ॥ मध्वाचार्यइतिख्यातःप्रसिद्धोऽभून्महीतले ॥ १३ ॥ ॥ जीवउवाच ॥ ॥ द्वापरे
चाद्विजश्रेष्ठोमेघशर्माबभूवह ॥ ज्ञानवान्मतिमान्धर्मीवेदमार्गपरायणः ॥ १४ ॥ कृषिकृत्यपरोनित्यंतद्धनैश्चदशांशकैः ॥ प्रत्यहंसकला
न्देवानर्चयामासभक्तिमान् ॥ १५ ॥ एकदापंचवर्षाब्देशन्तनौचमहीपतौ ॥ संप्राप्तेतस्यवैदेशेअनावृष्टिर्बभूवह ॥ १६ ॥ क्रोशमात्रंहितत्क्षे
त्रंपर्जन्येनैवसिंचितम् ॥ धान्यानांद्रोणमात्रश्चभावोऽभूदेकमुद्रया ॥ १७ ॥ मेघशर्मातदातत्रधनधान्ययुतोऽभवत् ॥ अन्येतुपीडितालो
काराजानंशरणंययुः ॥ १८ ॥ तदातुदुःखितोराजामेघशर्माणमाह्वयत् ॥ द्विजश्रेष्ठनमस्तुभ्यंगुरुर्भवममाप्रियः ॥ १९ ॥ अनावृष्टिर्यथान
स्यात्तथाविप्रसमादिश ॥ इत्येवंवादिनंभूपंमेघशर्मावचोऽब्रवीत् ॥ २० ॥ श्रावणेमासिसंप्राप्तेविप्रान्वेदपरायणान् ॥ द्वादशैवसमाहूयलक्ष
मात्रंरवेःस्वयम् ॥ २१ ॥ जापयित्वासुमनसापूर्णिमायांतुतद्व्रती ॥ सूर्यमन्त्राहुतीर्वह्नौतद्दशांशंहिताद्विजैः ॥ २२ ॥ कारयित्वाविधानेन
कृतकृत्यःसुखीभव ॥ इतिश्रुत्वातथाकृत्वाभोजयामासवेदगान् ॥ २३ ॥ प्रसन्नस्तुतदासूर्यःपर्जन्यात्मासमन्ततः ॥ भूमिमाच्छाद्यसदिशं
प्रभुर्वृष्टिमकारयत् ॥ २४ ॥ शंतनुस्तुतदाराजासूर्यव्रतपरायणः ॥ तद्व्रतेनमहापुण्योबभूवनृपसत्तमः ॥ २५ ॥ यंयंकरेणस्पृशातिवृद्धो
भवतिवैयुवा ॥ सूर्यदेवप्रभावेनमेघशर्मातथाह्यभूत् ॥ २६ ॥ सर्वेपंचशतायुश्चनिर्जरोनिरुपद्रवः ॥ त्यक्त्वाप्राणान्त्रिभिर्भूत्वासूर्यलोकमुपा

गमत् ॥ २७ ॥ लक्षाब्दंभुवमासाद्यब्रह्मलोकंगमिष्यति ॥ इत्येवंवादिनंजीवंपर्जन्योभगवान्रविः ॥ २८ ॥ स्वरूपंदर्शयामासप्रयागंप्राति
चागतः ॥ सुरानाहप्रसन्नात्माम्लेच्छराज्येकलौयुगे ॥ २९ ॥ वृन्दावनेसमागम्यदेवकार्यंकरोम्यहम् ॥ ॥ सूतउवाच ॥ ॥ इत्युक्त्वा
भगवान्सूर्योगत्वावृन्दावनंशुभम् ॥ ३० ॥ श्रीधरोनामविख्यातःपुत्रोभूद्देवशर्मणः ॥ श्रीमद्भागवतंशास्त्रंसमालोक्यविशारदः ॥ ३१ ॥
चकारविदुषामर्थेप्रदीप्तंश्रीमतःशुभम् ॥ श्रीमद्भागवतंशास्त्रंपुराणोपरितत्कृतम् ॥ ३२ ॥ ॥ जीवउवाच ॥ पुराकलौयुगेप्राप्तेप्रांशु
शर्माद्विजोऽभवत् ॥ वेदशास्त्रपरोनित्यंदेवतातिथिपूजकः ॥ ३३ ॥ सत्यवादीमहासाधुःस्तेयहिंसाविवर्जितः ॥ भिक्षावृत्तिपरोनित्यंपुत्र
दारप्रपोषकः ॥ ३४ ॥ एकदापथिभिक्षार्थंगच्छतस्तस्यभूपते ॥ मायाकृत्यकरोधूर्तःकलिस्तत्राक्षिगोचरः ॥ ३५ ॥ बभूववाटिकांकृत्वा
कलिर्दानमनोहराम् ॥ तमुवाचद्विजोभूत्वाप्रांशुशर्मवचःशृणु ॥ ३६ ॥ ममेयंवाटिकारम्यातत्रगच्छसुखीभव ॥ इतिविप्रवचःश्रुत्वावा
टिकांतांसमागतः ॥ ३७ ॥ कलिस्तुवाटिकामध्येगत्वारम्यफलानिच ॥ त्रोटयित्वाददौतस्मैभोजनार्थंमहाखलः ॥ ३८ ॥ प्रांजलिःप्र
णतोभूत्वाप्रांशुशर्माणमब्रवीत् ॥ भुंक्ष्वविप्रमयासार्द्धंकलिंदस्यफलंशुभम् ॥ ३९ ॥ इत्युक्तःसतुतंप्राहविहस्यमधुरस्वरम् ॥ वृक्षेविभी
तकेचैवकलिंदस्यफलेतथा ॥ ४० ॥ कलिःप्राप्तःस्मृतःप्राज्ञैस्तस्मान्नाहंगृह्णाम्यहो ॥ यदिदत्तंफलंभक्त्यात्वयाद्यद्विजसेविना ॥ ४१ ॥ शाल
ग्रामायवैदत्त्वाप्रसादंतद्भजाम्यहम् ॥ शालग्रामःस्वयंब्रह्मसच्चिदानंदविग्रहः ॥ ४२ ॥ दर्शनात्तस्यचाभक्ष्योभक्षोभवतिनिश्चितः ॥ इतिश्रुत्वा
कलिस्तत्रलज्जितोऽभून्निराशकः ॥ ४३ ॥ द्विजस्तुतत्फलंगृह्यभूमिग्राममुपाययौ ॥ नृपतिस्तत्रचागत्यद्विजमाहप्रसन्नधीः ॥ ४४ ॥ किंगृहीतंत्व
याविप्रदर्शयाशुप्रियंकुरु ॥ इतिश्रुत्वाप्रांशुशर्मातत्फलंवत्समुंडवत् ॥ ४५ ॥ गृहीत्वाप्रददौराज्ञेविस्मितोद्विजसत्तमः ॥ तदातुसकलिर्भूपस्तं
विप्रंताड्यवेतसैः ॥ ४६ ॥ कारागारेलोहमयेकृतवान्न्यायामित्रकः ॥ प्रातःकालेरवौप्राप्तेप्रांशुशर्मासुदुःखितः ॥ ४७ ॥ तुष्टावभास्करंदेवंस्तोत्रैर्ऋ
ग्वेदसंभवैः ॥ तदाप्रसन्नोभगवान्रविःसाक्षात्सनातनः ॥ ४८ ॥ विप्रस्यकर्णयोर्वाक्यमुवाचनभसेरितम् ॥ शृणुविप्रमहाभागकालरूपोहरिःस्व
यम् ॥ ४९ ॥ चतुर्युगंतेनकृतंविश्वपाल्यादिहेतवे ॥ कलिर्विश्वसमूहानांमृत्यवेरचितस्तथा ॥ ५० ॥ अतोघोरेकलौप्राप्तेविष्णुमायाविनिर्मितम् ॥

कलिंजरंचनगरंतत्रोष्यमुदितोभव ॥ ५१ ॥ इत्युक्त्वारक्षणंकृत्वातस्यविप्रस्यभास्करः ॥ कलिंजरेचनगरेप्रेषयामासतंद्विजम् ॥ ५२ ॥
सपादशतवर्षंचद्विजस्तत्रवसन्नविम् ॥ आराध्यपुत्रपत्नीकोरविलोकमुपाययौ ॥ ५३ ॥ सवैभाद्रपदेमासिसूर्योभूत्वायुताब्दकम् ॥
पश्चाद्ब्रह्मपुरंप्राप्यपरमानंदमाप्तवान् ॥ ५४ ॥ इतितेकथितंविप्रयथाजीवस्तमब्रवीत् ॥ आगत्यभास्करोदेवःपूर्णिमायांतुभाद्रके ॥ ५५ ॥
अष्टाविंशेकलौप्राप्तेस्वयंजातःकालिंजरे ॥ शिवदत्तस्यतनयोविष्णुशर्मेतिविश्रुतः ॥ ५६ ॥ वेदशास्त्रकलाभिज्ञोवैष्णवोदेवपूजकः ॥
चतुर्वर्णान्नरान्विप्रसमाहूयहरेर्गृहे ॥ ५७ ॥ वचनंप्राहधर्मात्माविष्णुःसर्वेश्वरोहरिः ॥ शृणुतत्कारणंशिष्याविश्वकारणकारकः ॥ ५८ ॥
भगवान्सच्चिदानंदश्चतुर्विंशतितत्त्ववान् ॥ देवान्ससर्जलोकार्थंतस्मात्सर्वेश्वरोऽभवत् ॥ ५९ ॥ पूर्वंहिसकलान्देवान्पूजयित्वानरःशुचिः ॥
पश्चाच्चपूजयेद्विष्णुंयथाभृत्यानृपंपुनः ॥६०॥ इतिश्रुत्वातुतेसर्वेप्रशंस्यबहुधाहितम् ॥ विष्णुस्वामीतितंनाम्नाकथाश्चक्रुश्चहर्षिताः ॥६१॥
इतितेकथितंविप्रविष्णुस्वामीयथाभवत् ॥ पुनःशृणुकथांरम्यांबृहस्पतिमुखेरिताम् ॥ ६२ ॥ जीवउवाच ॥ पुराचैत्ररथेदेशेभगशर्माद्वि
जोऽभवत् ॥ स्ववैश्यामंजुघोषायांमुनिमेधाविनाभुवि ॥ ६३ ॥ पितृमातृपरित्यक्तःसबालःश्रद्धयान्वितः ॥ सूर्यमाराधयामासतपसाश
तवार्षिकम् ॥ ६४ ॥ सूर्यमंडलमध्यस्थासावित्रीनामदेवता ॥ सर्वसूर्यस्यजननीकन्यातन्मण्डलस्यवै ॥ ६५ ॥ प्रसन्नातपसातस्य
प्रादुर्भूतासनातनी ॥ आश्विनेमासिराजानंद्विजंचक्रेचमण्डले ॥ ६६ ॥ लक्षवर्षसहस्राणिमासिमासितथाश्विने ॥ प्रकाशंकृतवान्विप्रः
पूजितोलोकवासिभिः ॥ ६७ ॥ तंसूर्यंभजदेवेन्द्रसतेकार्यंकरिष्यति ॥ इतिश्रुत्वाश्विनेमासिसरविर्देवपूजनात् ॥ ६८ ॥ प्रत्यक्षमगमत्तत्र
वचःप्राहसुरान्प्रति ॥ कान्यकुब्जेशुभेदेशेवाणीभूषणइत्यहम् ॥ ६९ ॥ भवामिसत्यदेवस्यविप्रस्यतनयःशुभः ॥ ॥ सूतउवाच ॥ ॥
इत्युक्त्वाभगवान्सूर्योजातःकन्यपुरेशुभे॥७०॥जित्वापाषंडिनोविप्रान्मांसभक्षणतत्परान्॥छंदोग्रंथंस्वनाम्नावैकृतवान्दैवतप्रियः ॥७१ ॥
मत्स्यमांसाशनाविप्रामृगमेषाजकाशनाः ॥ एकीभूयसमागम्यचक्रुःशास्त्रार्थमुल्बणम् ॥ ७२ ॥ कलिनाधर्ममित्रेणरक्षितास्तोद्विजातयः ॥
तंद्विजंचपराजित्यमत्स्यकेतुंचतद्गृहे ॥ ७३ ॥ बलाच्चस्तंभनंचक्रुस्तदाविष्णुप्रियोद्विजः ॥ वैष्णवींशक्तिमागम्यस्वमुखान्मीनखादि

तान् ॥ ७४ ॥ संजीव्यदर्शयामासतेदृष्ट्वाविस्मितास्तदा ॥ शिष्यभूताश्चतेतस्यवैष्णवंमतमागमन् ॥ ७५ ॥ ॥ जीवउवाच ॥ ॥
कदाचित्सरयूतीरेदेवयाजीद्विजोऽभवत् ॥ सर्वदेवपरोनित्यंवेदपाठपरायणः ॥ ७६ ॥ तत्सुतस्तुमृतिंप्राप्तोजन्ममात्रेहिदारुणे ॥
तदातुसद्विजःश्रुत्वासूर्यदेवमतोषयत् ॥ ७७ ॥ जिजीवतत्प्रसादेनविवस्वान्नामचाभवत् ॥ षोडशाब्दवपुर्भूत्वासर्वविद्याविशारदः ॥ ७८ ॥
अपत्यवान्धर्मपरःसूर्यव्रतपरायणः ॥ शिवरात्रिदिनेप्राप्तेतत्पत्नीभूषणप्रिया ॥ ७९ ॥ सुशीलानामविख्यातापतिसेवार्थमागता ॥
सव्रतीरुद्रदेवस्यदृष्ट्वातांमधुराननाम् ॥ ८० ॥ बलाद्गृहीत्वातुनिशिबुभुजेस्मरविह्वलः ॥ मैथुनस्यैवदोषेणतस्यकुष्ठोमहानभूत् ॥ ८१ ॥
लिंगेंद्रियंचपतितंगुदभ्रष्टोमहाङ्गरुक् ॥ केनचिदुपदेशेनरविवारस्यवैव्रतम् ॥ ८२ ॥ सचक्रेद्वादशंप्रेम्णानिराहारोयतेन्द्रियः ॥
तेनव्रतप्रभावेनसर्वपीडालयंगताः ॥ ८३ ॥ तदाश्रद्धारवौप्राप्ताप्रत्यहंसद्विजोत्तमः ॥ आदित्यंहृदयजप्त्वाकामरूपोद्विजोऽभवत् ॥ ८४ ॥
नारीभिर्भर्त्सितःपूर्वंसोथकामिनीयाचितः ॥ ब्रह्मचर्यव्रतंकृत्वाब्रह्मध्यानपरोऽभवत् ॥ ८५ ॥ शतायुर्ब्राह्मणोभूत्वाज्ञानवान्रोगवर्जितः ॥
यक्त्वाप्राणान्रविर्भूत्वासूर्यमण्डलमध्यगात् ॥ ८६ ॥ कार्तिकेमासिलक्षाब्दंप्रकाशंकृतवान्नभः ॥ तंचसूर्यंमहेन्द्रस्त्वंपूजयाशुसुरैःसह ॥ ८७ ॥
॥ सूतउवाच ॥ इतिश्रुत्वामहेन्द्रस्तुमासमात्रंहिभास्करम् ॥ पूजयित्वाविधानेनपूर्णिमायांददर्शह ॥ ८८ ॥ उवाचशक्रंसरविर्देवकार्यंकरो
म्यहम् ॥ भट्टैर्विद्यामयैर्धूर्तैःसूत्रपाठश्चखण्डितः ॥ ८९ ॥ धातुपाठोन्यपठितोभ्रंशार्थःस्वरवर्णकः ॥ जित्वातान्भट्टपाषंडान्वेदमुद्धारयामिभोः
॥ ९० ॥ इत्युक्त्वासगतःकाश्यांगेहेवैवेदशर्मणः ॥ दीक्षितान्वयभूतस्यनाम्नाकार्यगुणोऽभवत् ॥ ९१ ॥ द्वादशाब्दवपुर्भूत्वासर्वशास्त्रविशारदः ॥
शिवमाराधयामासविश्वनाथंशिवाप्रियम् ॥ ९२ ॥ त्रिवर्षान्तेचभगवांस्तस्मैज्ञानंमहद्ददौ ॥ तस्यज्ञानप्रभावेनव्यक्तमव्यक्तमुत्तमम् ॥ ९३ ॥
ज्ञातंकार्यगुणेनैवदीक्षितेनतदाह्लादि ॥ अव्यक्तेतुयदाबुद्धिःसाविद्याद्वादशांगिनी ॥ ९४ ॥ व्यक्तेऽहंकारभूतेचबुद्धिर्ज्ञेयाबुधैरजा ॥ अवि
द्यानामविख्याताषोडशाङ्गस्वरूपिणी ॥ ९५ ॥ अव्यक्तंतुपरंब्रह्मव्यक्तंशब्दमयंस्मृतम् ॥ अहंकारोलोककरोहिव्यक्तोऽष्टदशांगकः ॥ ९६ ॥
वृषरूपधरोमुख्योनन्दियानःस्मृतोबुधैः ॥ शृंगानितस्यचत्वारित्रिपादोद्विशिरोवृषः ॥ ९७ ॥ सप्तहस्तोद्विधाबद्धोनित्यशुद्धोसुखेस्थितः ॥ सुब

न्तश्चतिङन्तश्चकृदन्तश्चाव्ययस्तथा ॥९८॥ द्वौद्वौशृंगौचशिरसोर्नंदियानस्यवैस्मृतौ ॥ भूतंभव्यंभवच्चैवत्रयःपादोहितस्यवै ॥९९॥ रूढि
श्चयोगरूढिश्चशब्दौतस्याशिरद्वयम् ॥ कर्ताकर्मचकरणंसंप्रदानोविभागकः ॥ १०० ॥ संबंधश्चाधिकारश्चभुजास्तस्यवृषस्यवै ॥ वाक्यं
स्वरान्वितंज्ञेयंविभक्त्यंतंपदंस्मृतम् ॥ १०१ ॥ ताभ्यांबद्धश्चसवृषोनन्दियानायतेनमः ॥ तस्योपरिस्थितंनित्यमव्यक्तंलिंगरूपियत् ॥
॥ १०२ ॥ जातश्चवृषलिंगाभ्यांसोऽहंकारोहरिःस्वयम् ॥ नारायणःषोडशात्माबहुमूर्तिरमूर्तिकः ॥ १०३ ॥ इतिज्ञानंहृदिप्राप्यतदासिद्धा
न्तकौमुदीम् ॥ जित्वाभट्टांश्चकाराशुभट्टोजिःप्रश्नुतोऽभवत् ॥ १०४ ॥ जीवउवाच ॥ पुराकांचीपुरेरम्येगणकोब्राह्मणोत्तमः ॥ पुरोधाः
सत्यदत्तस्यराज्ञोवेदपरस्यवै ॥ १०५ ॥ एकदागणकोधीमान्सत्यदत्तमुवाचह ॥ मुहूर्तोऽभिजिदाख्योयंपुष्यनक्षत्रसंयुतः ॥ १०६ ॥
हाटंकुरुमहाराजसांप्रतंबहुवृत्तिदम् ॥ इतिश्रुत्वातथाकृत्वाडिंडिमध्वनिनापुरे ॥ १०७ ॥ नरानाज्ञापयामासतच्छृणुष्वसुरोत्तम ॥ अक्री
तंयस्यवैवस्तुहाटेऽस्मिन्वैश्यकोविदैः ॥ १०८ ॥ मयाक्रीतंचतज्ज्ञेयंसत्यमेतद्वचोमम ॥ इतिश्रुत्वाशूद्रजनाश्चक्रुर्नानाविधंवसु ॥ १०९॥
वैश्यैःसर्वंतदाक्रीतंमहान्हाटोहिसोऽभवत् ॥ एकदालोहकारश्चदारिद्र्यंलोहरूपियत् ॥ ११० ॥ कृत्वाहाटमुपागम्यशतमुद्रामयाचत ॥
अक्रीतंपुरुषंराजाज्ञात्वालोहदरिद्रकम् ॥ १११ ॥ क्रीतंतंशतमुद्राभिर्गृहीत्वागेहमागमत् ॥ कोशागारेतदाराजास्थापितोभूद्दरिद्रकः ॥
॥ ११२ ॥ निशीथेतमउद्भूतेकर्माधर्माचमातथा ॥ भूपगेहात्समागत्यपश्यतस्तस्यनिर्गताः ॥ ११३ ॥ तत्पश्चात्सत्यपुरुषोराजानमिदम
ब्रवीत् ॥ दरिद्रोयत्रभूपालतत्रकर्मानरोनहि ॥ ११४ ॥ कर्मणारहितोधर्मोभूतलेनास्थिरोभवेत् ॥ धर्मेणरहितालक्ष्मीर्नशोभातिकदाचन ॥
॥ ११५ ॥ अहंलक्ष्म्याविहीनश्चनतिष्ठामिकदाचन ॥ इत्युक्त्वागन्तुमिच्छंतंगृहीत्वाकरयोर्नृपः ॥११६॥ नम्रभूतोवचःप्राहशृणुसत्यंमम
प्रियम् ॥ नत्याज्योहिमयादेवभवान्किंगन्तुमर्हति ॥ ११७ ॥ इतिश्रुत्वातुवचनंसत्यदेवोगृहेगमत् ॥ तत्पश्चाच्चस्वयंलक्ष्मीस्तद्गेहेगंतुमुद्य
ता ॥ ११८ ॥ तामाहभूपतिर्धीरोदेवित्वंचंचलासदा ॥ अचलाभवभोमातस्तर्हिमन्मदिरंव्रज ॥ ११९ ॥ इतिश्रुत्वावरंदत्त्वानृपगेहंययौ
तदा ॥ पुरोधसंतंगणकंसमाहूयनृपोत्तमः॥१२०॥लक्षस्वर्णंददौतस्मैकथित्वासर्वकारणम् ॥ पुत्रजन्मनिकालेतुसंप्राप्तंतेनवैधनम् ॥१२१॥

व्ययंकृत्वाधनंसर्वंपोषयामासबालकम् ॥ पूषानामततोजातोमार्गशीर्षेशुभेदिने ॥ १२२ ॥ सतुसूर्यंसमाराध्यज्योतिःशास्त्रपरः
सुतः ॥ सूर्येतुमोक्षमगमद्देवदेवप्रसादतः ॥ १२३ ॥ तस्मात्त्वंमार्गमासेवैरविंदेवेन्द्रपूजय ॥ सूतउवाच ॥ देवेन्द्रपूजनात्सूर्यस्समागम्यत
दास्वयम् ॥ १२४ ॥ पूषानामवचोदेवानुवाचमधुरस्वरम् ॥ उज्जयिन्यामहंदेवायास्येरुद्रपशोर्गृहे ॥ १२५ ॥ नाम्नाचमिहिराचार्योज्यो
तिश्शास्त्रप्रवर्त्तकः ॥ इत्युक्त्वाभगवान्पूषापुत्रोजातोद्विजस्यवै ॥१२६॥ मूलगंडान्तविषयेऽभिजिद्योगेशुभंकरे ॥ जातमात्रंचतंपुत्रंपिता
काष्ठकटाहके ॥ १२७ ॥ धृत्वाक्षिप्त्वानदीमध्येनिर्शीथेसमवाहयत् ॥ समुद्रमगमत्पुत्रोराक्षसीभिश्वरक्षितः ॥ १२८ ॥ लंकामागम्यतत्रैव
ज्योतिःशास्त्रमधीतवान् ॥ जातकंफलितंचैवमूकप्रश्नंतथादितः ॥ १२९ ॥ पठित्वाराक्षसेंद्रंचविभीषणमुपागमत् ॥ भक्तराजनमस्तुभ्यं
विभीषणहरिप्रिय॥१३०॥आहृतोराक्षसीभिश्चत्वामहंशरणंगतः ॥ इतिश्रुत्वाचसनृपोवैष्णवंद्विजमुत्तमम्॥१३१॥मत्वासंप्रेषयामासयत्रत
ज्जन्मभूमिका ॥ म्लेच्छैर्विनाशितंयत्तुवेदाङ्गंज्योतिषांगतिः ॥ पुनरुद्धरितंतेनात्रिधाभूतंसनातनम्॥१३२॥ इतिश्रीभविष्येमहापुराणेप्राति
सर्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेमध्वाचार्यश्रीधराचार्यविष्णुस्वामिवाणीभूषणभट्टोजिदीक्षितवराहमिहिराचार्यो
त्पत्तिवर्णनोनामाऽष्टमोध्यायः ॥८॥ सूतउवाच ॥ इत्युक्त्वाभगवाञ्जीवस्सूर्यमाहात्म्यमुत्तमम् ॥ प्रयागेतुपुनर्देवानुवाचवचसांपतिः ॥१॥
प्रतिष्ठानपुरेरम्येसूर्योजातोहराज्ञया ॥ पुरात्रेतायुगांतेचतच्छृणुष्वसुरोत्तम ॥ २ ॥ त्रेतान्तेसिंहलद्वीपेपरीक्षितनृपोऽभवत् ॥ वेदधर्मपरो
नित्यंदेवतातिथिपूजकः ॥३॥ कन्याभानुमतीतस्यसूर्यव्रतपरायणा ॥ भक्तिभावेनसविताप्रत्यहंतद्गृहेस्वयम् ॥ ४ ॥ तयाकृतंशुभंभक्ष्यं
मध्याह्नेभुक्तवान्प्रभुः ॥ रविवारेकदाचित्सानलिनीसागरंप्रति ॥५॥ स्नानार्थमागताकन्यातदानारदआगतः ॥ दृष्ट्वामनोरमांबालामेकाकीं
जलमध्यगाम् ॥६॥ गृहीत्वावसनंतस्यावचनंप्राहनिर्भयः ॥ पाणिंगृहाणमेसुभ्रुत्वद्दृष्ट्यावशमागतः ॥ ७ ॥ इत्युक्तवंतंतुमुनिंकुमारीनम्रकं
न्धरा ॥ उवाचशृणुदेवर्षेकन्याहंत्वंसुतप्रदः ॥ ८ ॥ भवान्देवाङ्गनाभिश्चप्रार्थितःस्वर्गमण्डले ॥ क्वचवैमेनकारंभाक्वाहंमनुजयोनिजा॥९॥
नवद्वारेषुदेहेस्मिन्दुर्गन्धाःसंस्थिताःसदा ॥ नैवदेवाङ्गनाङ्गेवैतस्मात्तुभ्यंनमोनमः ॥ १० ॥ इतिश्रुत्वावचस्तस्यालज्जितोनारदस्तदा ॥

महादेवमुपागम्यचोक्तवान्सर्वकारणम् ॥ ११ ॥ कुष्ठीभूतंमुनिंदृष्ट्वाशंकरोलोकशंकरः ॥ तुष्टावभास्करंदेवंतदाप्रादुरभूत्प्रभुः ॥ १२ ॥
नारदस्यशुभंदेहंकृत्वाशिवमुवाचह ॥ आज्ञांदेहिमहादेवतवाशांपूरयाम्यहम् ॥ १३ ॥ इत्युक्तंतंशिवंप्राहद्विजोभूत्वाभवान्भुवि ॥
गृहाणनृपतेःकन्यांरविणातुतथाकृतम् ॥१४॥ सविताभानुमत्याचसार्द्धंकृत्वातपोन्वहम्॥सूर्यलोकंपुनःप्राप्तस्सपौषेचप्रकाशकृत् ॥१५॥
तंभजाशुमहेन्द्रस्त्वंदेवकार्यप्रसाधय ॥ सूतउवाच ॥इतिश्रुत्वागुरोर्वाक्यंमहेन्द्रश्चसुरैस्सह ॥ १६ ॥ सवितारंपौषमासेतुष्टावशुभपूजनैः ॥
तदाप्रसन्नोभगवान्देवानाहशुभंवचः ॥१७॥ अहंकाश्यांभवाम्यद्यनाम्नाधन्वंतरिःस्वयम्॥ रोगैश्चपीडितांल्लोकान्कलिनानिर्मितैर्भुवि॥१८॥
शमयिष्यामितत्रोष्यदेवकार्यंभविष्यति ॥ इत्युक्त्वाभगवान्सूर्यः काशीनगरमागतः ॥ १९ ॥ कल्पदत्तस्यविप्रस्यपुत्रोभूत्वामहीतले ॥
सुश्रुतंराजपुत्रंचविप्रवृद्धसमन्वितम् ॥ २० ॥ शिष्यंकृत्वाप्रसन्नात्माकल्पवेदमचीकरत् ॥ रोगैश्चक्षयितंदेहंकालपमेतत्स्मृतंबुधैः॥२१॥
तस्यज्ञानंचतंत्रेऽस्मिन्कल्पवेदमतःस्मृतम् ॥ धन्वंतरिस्सभगवान्प्रसिद्धोभूत्कलौयुगे॥ २२ ॥ यस्यदर्शनमात्रेणरोगानश्यंतितत्क्षणात् ॥
सुश्रुतःकल्पवेदंतंधन्वंतरिविनिर्मितम् ॥ २३ ॥ पठित्वाचशताध्यायंसोऽश्रुतंतंत्रमाकरोत् ॥ बृहस्पतिरुवाच ॥ पुरापंपापुरेरम्येहलीना
म्नाद्विजोऽभवत् ॥ २४ ॥ चतुष्षष्टिकलाभिज्ञोरविपूजनतत्परः ॥ त्यक्त्वाप्रतिग्रहंवृत्तिंकारवृत्तिंगृहीतवान् ॥ २५ ॥ कृत्वावस्त्रकलंलौ
हंतथाचित्रकलंतथा ॥ धातुमूर्तिकलंचैवसर्वकारकलंतथा ॥ २६ ॥ अविक्रियन्कारकोऽभून्मुद्रापंचसहस्रया ॥ कलएकोमासमात्रेकालेते
नैवानिर्मितः ॥ २७ ॥ तद्धनेनरविंदेवंयज्ञैर्माघेहिसोऽर्चयत् ॥ विश्वकर्मारविः साक्षान्माघमासेप्रकाशकः ॥ २८ ॥ हलिनोबहुलैर्यज्ञैस्स
न्तुष्टः प्रत्यहंप्रभुः ॥ पंपासरोवरेरम्येनिर्मितःस्तंभउत्तमः ॥२९॥ ज्योतीरूपोमहारम्यस्तत्रप्राप्तोरविःस्वयम् ॥मध्यान्हेहलिनादत्तंभोजनं
दैवतप्रियम् ॥ ३० ॥ भुक्त्वासप्रत्यहंस्वामीमासिमासिदिवाकरः ॥ त्रैलोक्यभावनांचक्रेसर्वदेवमयोहरिः ॥ ३१ ॥ सहस्रायुर्द्विजोभूत्वा
त्यक्त्वाप्राणान्रविःस्वयम् ॥ भूत्वामण्डलमध्यास्यमाघमासमतोषयत् ॥ ३२ ॥ तंसूर्यंभजदेवेन्द्रसतेकार्यंकरिष्यति ॥ सूतउवाच ॥
इतिश्रुत्वागुरोर्वाक्यंवासवोदैवतैस्सह ॥ ३३ ॥ सूर्यमाराधयामासविश्वकर्माणमुत्तमम् ॥ तदाप्रसन्नोभगवांस्त्वष्टातुष्टिकरोजनान् ॥३४॥

सुरानाहवचोरम्यंशृणुध्वंसुरसत्तमाः ॥ बिल्वग्रामेवंगदेशेसंभवामिनिरुक्तकृत् ॥ ३५ ॥ जयदेवइतिख्यातः कवीनांहिशिरोमणिः ॥
इत्युक्त्वाभगवान्सूर्योवंगदेशमुपाययौ ॥ ३६ ॥ गेहेकंदुकिनोजातोब्राह्मणस्यमहीतले ॥ सपंचाब्दवपुर्भूत्वापितृमातृपरायणः ॥ ३७ ॥
द्वादशाब्दंमहत्सेवातत्रतेनतयोःकृता ॥ मृतिमंतौचपितरौप्रेतकृत्येनतार्पितौ ॥ ३८ ॥ जयदेवेनतौनाकंगयाश्राद्धेहिजग्मतुः ॥
जयदेवस्तदाविप्रोभूत्वावैराग्यवान्भुवि ॥ ३९ ॥ तत्रस्थानेमहारम्येवनेवासमकारयत् ॥ त्रिविंशाब्देतनौप्राप्तेकेनचिन्मधुरानना ॥ ४० ॥
ब्राह्मणेनशुभाकन्याजगन्नाथायचार्पिता ॥ अर्चावसानेभगवाननिरुद्धस्सनातनः ॥ ४१ ॥ दारुब्रह्ममयः साक्षादाहतंस्वेनवैवचः ॥
शृणुत्वंभोःसत्यव्रतजयदेवोवपुर्मम ॥ ४२ ॥ पद्मावतींसुतांतस्मैनिवेदयममाज्ञया ॥ ४३ ॥ इत्युक्तस्सद्विजस्तूर्णंदृष्ट्वावैरागरूपिणम् ॥
तत्रस्थाप्यनिजांकन्यांस्वगेहायमुदाययौ ॥ ४४ ॥ सातुपद्मावतीकन्यामत्वातंसुंदरंपतिम् ॥ तत्सेवांसामुदायुक्ताचकारबहुवार्षि
कम् ॥ ४५ ॥ निरुक्तंवैदिकंचांगंकृतवान्ससमाधिना ॥ वर्णागमोगवेंद्रादौसिंहेवर्णविपर्ययः ॥ ४६ ॥ षोडशादौविकारश्चवर्ण
नाशःपृषोदरे ॥ वर्णविकारनाशाभ्यांधातोरतिशयेनयः ॥ ४७ ॥ योगस्तदुच्यतेप्राज्ञैर्मयूरभ्रमरादिषु ॥ एवंपंचविधान्ये
वानिरुक्तानिस्मृतानिवै ॥ ४८ ॥ शूद्रैश्चनागवंशीयैर्भ्रंशितानिकलौयुगे ॥ जित्वाप्राकृतभाषायाःकर्तॄन्मूढान्कलिप्रियान् ॥ ४९ ॥ शुद्धं
हिपाणिनिःशास्त्रंचकारसुरहेतवे ॥ एकदातुकलिर्धूर्तोह्यादिस्थश्चौरकर्मणाम् ॥ ५० ॥ नृपदत्तंद्विजस्यैवलुंठयित्वाधनंबहु ॥ पद्मावतीं
सतींमत्वात्यक्त्वातद्वैगतोगृहम् ॥ ५१ ॥ हस्तपादौद्विजस्यैवकलिश्चौरैःसमाच्छिनत् ॥ तदातुदुःखितादेवीगर्तमध्येस्थितंपतिम् ॥
॥ ५२ ॥ निष्कास्यबहुधालप्यपीडयहस्तेनचाहरत् ॥ एकस्मिन्दिवसेराजामृगयार्थमुपागतः ॥ ५३ ॥ अहस्तपादंचमुनिंजयदेवंददर्श
ह ॥ सपृष्टस्तेनतत्रैवकृतंकेनतवेदृशम् ॥ ५४ ॥ सहोवाचमहाराजहस्तपादविहीनकः ॥ कर्मणाहमिहप्राप्तोनकेनापिकृतंखलम् ॥ ५५ ॥
इतिश्रुत्वाधर्मपालोनृपतिस्तंद्विजोत्तमम् ॥ सपत्नीकंचशिबिकामारोप्यस्वगृहंययौ ॥ ५६ ॥ तस्यदीक्षांनृपःप्राप्यधर्मशालामकारयत् ॥
कदाचिद्वैष्णवाभूतास्तेचौराःकलिनिर्मिताः ॥५७॥ धर्मपालगृहंप्राप्यराजान्तामिदमब्रुवन् ॥ वयंहिशास्त्रनिपुणास्तवगेहमुपागताः ॥५८॥

अस्माभिर्निर्मितंभोज्यंस्वयंविष्णुःशिलामयः ॥ भुनक्तिप्रत्यहंप्रीत्यातत्पश्यनृपसत्तम ॥ ५९ ॥ इत्युक्त्वाकलिभक्तास्तेविष्णुरूपं
चतुर्भुजम् ॥ नृपायदर्शयामासुर्भुक्तवंतंस्वमायया ॥ ६० ॥ विस्मितोधर्मपालश्चजयदेवमुवाचह ॥ गुरोमद्भवनेप्राप्तावैष्णवाविष्णु
तत्पराः ॥ ६१ ॥ दृष्टवंतोहरिंसाक्षात्तस्मात्त्वंशीघ्रमाव्रज ॥ इतिश्रुत्वाद्विजःप्राप्तोविस्मितोऽभूत्तथानृपः ॥ ६२ ॥ तदातुतंहिपाखंडाभू
पमूचुर्विहस्यते ॥ असौविप्रश्चनृपतेगौडदेशेनिवासिनः॥६३ ॥ सूदोभक्ष्यकरस्तस्यकदाचिद्धनलोभतः॥गरलंमिश्रितंभक्ष्येतेनपाखंडरूपि
णा ॥ ६४ ॥ ज्ञात्वाराजातुतंविप्रंशूलमध्येह्यरोपयत् ॥ एतस्मिन्नंतरेराजन्वयंतत्रसमागताः ॥ ६५ ॥ आगस्कृतंद्विजंमत्वादत्त्वाज्ञाना
न्यनेकशः ॥ शूलात्तंहिसमुत्तीर्यहस्तौपादौनृपोऽच्छिनत् ॥ ६६ ॥ अस्माकंशिष्यभूतोहिराजास्माभिःप्रबोधितः ॥ इत्युक्तमात्रेवचने
दुःखिताभूश्चदीर्यिता ॥६७॥ चौरांस्तान्साहिपातालेचकारसुररक्षितान्॥जयदेवस्तथाभूतान्दृष्ट्वाचौरान्रुरोदह ॥६८॥ क्रंदमानेद्विजेतास्मि
न्हस्तांघ्रीप्रकृतिंगतौ॥विस्मितंनृपतिंतत्रसर्वंहेतुमवर्णयत् ॥ ६९॥ श्रुत्वाराजाप्रसन्नात्माजयदेवमुखोद्भवम् ॥ गीतगोविंदमेवाशुपठित्वामो
क्षमागमत् ॥७०॥ इतितेकथितंविप्रजयदेवोयथाभवत्॥कृष्णचैतन्यचरितंयथाजातंशृणुष्वतत् ॥७१॥ इति श्रीभविष्येमहापुराणेप्रतिसर्ग
पर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेधन्वंतरिसुश्रुतजयदेवसमुत्पत्तिवर्णनोनामनवमोऽध्यायः ॥ ९ ॥छ॥ जीवउवाच ॥
विष्णुशर्मापुराकाश्चिद्विप्रोभूद्वेदपारगः ॥ सर्वदेवमयंविष्णुंपूजयित्वाप्रसन्नधीः ॥ १ ॥ अन्यैस्सुरैश्चसंपूज्योबभूवहरिपूजनात् ॥ भिक्षावृ
त्तिपरोनित्यंपत्नीमान्पुत्रवर्जितः ॥ २ ॥ कदाचित्तस्यगेहेवैव्रतीकाश्चित्समागतः ॥ द्विजपत्नींतदैकाकींभक्तिनम्रांदरिद्रिणीम् ॥ ३ ॥ दृष्ट्वो
वाचमहाभागःपारसाढ्योदयापरः ॥ अनेनपारसेनैवलोहधातुश्चकांचनम् ॥४॥ भवेत्तस्मान्महासाध्वित्रिदिनांतंगृहाणतम् ॥ तावदहंसरयूं
स्नात्वायास्यामितेंऽतिकंमुदा ॥ ५ ॥ इत्युक्त्वासययौविप्रोब्राह्मणीबहुकांचनम् ॥ कृत्वालक्ष्मींसमाप्त्वासीद्विष्णुशर्मातदागमत् ॥ ६ ॥
बहुस्वर्णयुतांपत्नींदृष्ट्वोवाचहरिप्रियः॥गच्छनारिमदाघूर्णेयत्रवैरसिकोजनः ॥७॥ अहंविष्णुपरोदीनश्चौरभीतःसदैवाहि ॥ मधुमत्तांकथंत्वां
वैगृहीतुंभुविचक्षमः ॥ ८ ॥ इतिश्रुत्वाचघोरंपतिभीतापतिव्रता ॥ सस्वर्णपारसंतस्मैदत्त्वासेवापराभवत् ॥ ९ ॥ द्विजोऽपिघघरामध्ये

तद्द्रव्यंबलतोऽक्षिपत् ॥ त्रिदिनान्तेचसयतिस्तत्रागत्यमुदान्वितः ॥ १० ॥ उवाचब्राह्मणींदीनांस्वर्णंकिंनकृतंत्वया ॥ साहभोमत्पतिश्शु
द्धोगृहीत्वापारसंरुषा ॥ ११ ॥ घघरायांचचिक्षेपततोहंवह्निपाकिनी ॥ निर्लोहोवर्ततेविप्रस्ततःप्रभृतिहेगुरो ॥ १२ ॥ इतिश्रुत्वातुवचनं
सयतिर्विस्मयान्वितः ॥ स्थित्वादिनान्तेतंविप्रमुवाचबहुभर्त्सयन् ॥ १३ ॥ दरिद्रोभिक्षुकश्चास्तिभवान्दैवेनमोहितः ॥ देहिमेपारसंशीघ्रं
नोचेत्प्राणांस्त्यजाम्यहम् ॥१४॥ इत्युक्तवंतंयतिनंविष्णुशर्मातदाब्रवीत् ॥ गच्छत्वंघघराकूलेतत्रवैपारसस्तव ॥१५॥ इत्युक्त्वायतिनासा
र्द्धंगृहीत्वाकंटकान्बहून् ॥ यतिनेदर्शयामासपारसानिवकंटकान् ॥ १६ ॥ तदातुसयतीविप्रंनत्वाप्रोवाचनम्रधीः ॥ मयावैद्वादशाब्दां
तंसम्यगाराधितःशिवः ॥ १७ ॥ ततःप्राप्तंशुभंरत्नंतत्तुत्त्वद्दर्शनेनवै ॥ पारसंबहुधाप्राप्तंमयालोभात्मनाद्विज ॥ १८ ॥ इत्याभाष्यशुभंज्ञानं
प्राप्तोमोक्षमवाप्तवान् ॥ विष्णुशर्मासहस्राब्दमुषित्वाजगतीतले ॥ १९ ॥ सूर्यमाराध्यविधिवद्विष्णोर्मोक्षमवाप्तवान् ॥ सद्विजोवै
ष्णवंतेजोधृत्वावैमासिफाल्गुने ॥ २० ॥ त्रैलोक्यमतपत्स्वामीदेवकार्यपरायणः ॥ सूतउवाच ॥ इत्युक्त्वाभगवाञ्जीवःपुनःप्राहशचीप
तिम् ॥ २१ ॥ फाल्गुनेमासितंसूर्यंसमाराध्यसुखीभव ॥ इत्युक्तोगुरुणादेवोध्यात्वासर्वमयंहरिम् ॥ २२ ॥ पूजनैर्बहुधाकारैर्देवदेवमपूज
यत् ॥ तदाप्रसन्नोभगवान्संभवःसूर्यमण्डलात् ॥ २३ ॥ चतुर्भुजोहिरक्तांगोयथायज्ञस्तथैवसः ॥ पश्यतांसर्वदेवानांशक्रदेहमुपागमत् ॥
॥ २४ ॥ तत्तेजसातदाशक्रःस्वान्तर्लीयस्वकंवपुः ॥ अयोनिस्सद्विजोभूत्वाशचीदेवीतथैवसा ॥ २५ ॥ तदातौमिथुनीभूतौवैष्णवाग्निप्रपी
डितौ ॥ संवत्सरंररमतुर्गंगाकूलेमहावने ॥ २६ ॥ गर्भंधत्तेतदादेवीशचीतुद्विजरूपिणी ॥ भाद्रशुक्लेगुरौवारेद्वादश्यांब्राह्ममण्डले ॥ २७ ॥
प्रादुरासीत्स्वयंविष्णुर्धृत्वासर्वकलांहरिः ॥ चतुर्भुजश्चरक्ताङ्गोरविकुंभसमप्रभः ॥ २८ ॥ तदारुद्राश्चवसवोविश्वेदेवामरुद्गणाः ॥ साध्याश्च
भास्वराःसिद्धास्तुष्टुवुस्तंसनातनम् ॥ २९ ॥ देवाऊचुः ॥ कुलिशध्वजपद्मगदाङ्कुशाभंचरणंतवनाथमहाभरणम् ॥ रमणंमुनिभिर्विधिशं
भुयुतंप्रणमामवयंभवभीतिहरम् ॥ ३० ॥ दरचक्रगदाम्बुजमानधरःसुरशत्रुकठोरशरीरहरः ॥ सचराचरलोकभरश्चपलस्तवनाशकरस्सु
रकार्यकरः ॥ ३१ ॥ नमस्तेशचीनंदनानन्दकारिन्महत्पापसन्तापदुर्लोपहारिन् ॥ सुरारीन्निहत्याशुलोकाँश्चधारिन्स्वभक्त्याघजाताङ्ग

कोटिप्रहारिन् ॥ ३२ ॥ त्वयाहंस्वरूपेणसत्यंप्रपालयत्वयायज्ञरूपेणवेदःप्ररक्ष्यः ॥ सवैयज्ञरूपोभवाँल्लोकधारिञ्छचीनन्दनःशक्रशर्मप्र
सत्तः ॥ ३३ ॥ अनर्पितचरोंचिरात्करुणयावतीर्णःकलौसमर्पयितुमुन्नतोज्ज्वलरसास्वभक्तिश्रियम् ॥ हरेःपुनरसुन्दरद्युतिकदम्बसन्दी
पितःसदास्फुरतुनोहृदयकन्दरेशचीनन्दनः ॥ ३४ ॥ विसर्जितिनरान्भवान्करुणयाप्रपालयक्षितौनिवेदयितुमुद्भवःपरात्परंस्वकीयंपदम् ॥
कलौदितिजसंभवाधिव्यथाब्धिसुरमग्नगान्समुद्धरमहाप्रभोकृष्णचैतन्यशचीसुत ॥ ३५ ॥ माधुर्य्यैर्मधुभिस्सुगंधवदनःस्वर्णांबुजानांवनं
कारुण्यामृतनिर्झरैरुपाचितःसत्प्रेमहेमाचलः ॥ भक्तांभोधरधारिणीविजयिनीनिष्कंपसप्तावलीदेवीनःकुलदैवतंविजयतेचैतन्यकृष्णोहारिः ॥
॥ ३६ ॥ देवारातिजनैरधर्मजनितैस्संपीडितेयंमहीसंकुच्याशुकलौकलेवरमिदंबीजायहावर्तते ॥ त्वत्राम्नैवसुरारयोविदलिताःपाताल
गाःपीडिताम्लेच्छाधर्मपराःसुरेशनमनास्तस्मैनमोव्यापिने ॥ ३७ ॥ ॥ सूतउवाच ॥ ॥ इत्यभिष्टूयपुरुषंयज्ञेशंचशचीपतिम् ॥ बृहस्प
तिमुपागम्यदेवावचनमब्रुवन् ॥ ३८ ॥ वयंरुद्रामहाभागइमेचवसवोऽश्विनौ ॥ केनकेनांशकेनैवजनिष्यामोमहीतले ॥ ३९ ॥ तत्सर्वंकृपया
देववक्तुमर्हतिनोभवान् ॥ बृहस्पतिरुवाच ॥ अहंवःकथयिष्यामिशृणुध्वंसुरसत्तमाः ॥ ४० ॥ पुरापूर्वभवेचासीन्मृगव्याधोद्विजाधमः ॥
धनुर्बाणधरोनित्यंमार्गेविप्रविहिंसकः ॥४१॥ हत्वाद्विजान्महामूढस्तेषांयज्ञोपवीतकम् ॥ गृहीत्वाहेलयादुष्टोमहाक्रोशस्तुतत्कृतः॥४२॥
ब्राह्मणस्यचयद्रव्यंसुधोपममनुत्तमम् ॥ मधुरंक्षत्रियस्यैववैश्यस्यान्नसमंस्मृतम् ॥४३॥ शूद्रस्यवस्तुरुधिरमितिज्ञात्वाद्विजाधमः॥सजघान
त्रिवर्णांश्चब्राह्मणान्बहुलान्खलः ॥ ४४ ॥ द्विजनाशात्सुरास्सर्वेभयभीतास्समन्ततः ॥ परमेष्ठिनमागम्यकथाश्चक्रुश्चकारणम् ॥ ४५ ॥
श्रुत्वाचदुःखितोब्रह्मासप्तर्षीन्प्राहलोकगान् ॥ उद्देशंकुरुतत्रैवगत्वातस्यद्विजोत्तम ॥ ४६ ॥ इतिश्रुत्वामरीचिस्तुवसिष्ठादिभिरन्वितः ।
तत्रगत्वास्थितास्सर्वेमृगव्याधस्यवैवने ॥ ४७ ॥ मृगव्याधस्तुतान्दृष्ट्वाधनुर्बाणधरोबली ॥ उवाचवचनंघोरंहनिष्येहंचनोद्यवै ॥ ४८ ॥
मरीचाद्याविहस्याहुःकिमर्थंहंतुमुद्यतः ॥ कुलार्थंवात्मनोऽर्थंवाशीघ्रंवदमहाबल ॥ ४९ ॥ इत्युक्तस्तान्द्विजःप्राहकुलार्थंचात्मनो
हिते ॥ हन्मियुष्मान्धनैर्युक्तान्ब्राह्मणाँश्चविशेषतः ॥ ५० ॥ श्रुत्वातमाहुस्तेविप्रागच्छशीघ्रंधनुर्धर ॥ विप्रहत्याकृतंपापंभुंजीयात्को

विचारय ॥ ५१ ॥ इतिश्रुत्वातुघोरात्मातेषांदृष्ट्वासुनिर्मलः ॥ गत्वावंशजनानाहभूरिपापोमयार्जितः ॥ ५२ ॥ तत्पापं
चभवद्भिश्चगृहणीयंधनंयथा ॥ तेतुश्रुत्वाद्विजंप्राहुर्नवयंपापभोजनाः ॥ ५३ ॥ साक्षीयंभूमिरचलासाक्षीसूर्योऽयमुत्तमः ॥ इति
श्रुत्वामृगव्याधोमुनीनाहकृतांजलिः ॥ ५४ ॥ यथापापंक्षयंयातितथामांज्ञातुमर्हथ ॥ इत्युक्तास्तेनतेप्राहुःशृणुत्वंमंत्रमुत्तमम् ॥ ५५ ॥
रामनामहितज्ज्ञेयंसर्वाघौघविनाशनम् ॥ यावत्त्वत्पार्श्वमायामस्तावत्त्वंजपचोत्तमम् ॥५६॥ इत्युक्त्वातेगताविप्रास्तीर्थात्तीर्थान्तरंप्रति ॥
मरामरामरेत्येवंसहस्राब्दंजजापह ॥ ५७ ॥ जपप्रभावादभवद्वनमुत्पलसंकुलम् ॥ तत्स्थानमुत्पलारण्यंप्रसिद्धमभवद्भुवि ॥ ५८ ॥
ततःसप्तर्षयःप्राप्तावल्मीकात्तंनिराकृतम् ॥ दृष्ट्वाशुद्धंतदाविप्रमूचुस्तेविस्मयान्विताः ॥ ५९ ॥ वल्मीकान्निस्सृतोयस्मात्तस्माद्वाल्मीकिरु
त्तमम् ॥ तवनामभवेद्विप्रत्रिकालज्ञमहामते ॥६०॥ एवमुक्त्वाययुर्लोकंसतुरामायणंमुनिः ॥ कल्पाष्टादशयुक्तंहिशतकोटिप्रविस्तरम् ॥
॥ ६१ ॥ चकारनिर्मलंपद्यंसर्वाघौघविनाशनम् ॥ तत्पश्चात्सशिवोभूत्वातत्रवासमकारयत् ॥ ६२ ॥ अद्यापिसंस्थितःस्वामीमृगव्याधः
सनातनः ॥ शृणुध्वंचसुराःसर्वेतच्चरित्रंहरप्रियम् ॥ ६३ ॥ वैवस्वतेऽन्तरेप्राप्तेचाद्येसत्ययुगेशुभे ॥ ब्रह्मागत्योत्पलारण्यंतत्रयज्ञंचकारह ॥
॥ ६४ ॥ तदासरस्वतीदेवीनदीभूत्वासमागता ॥ तद्दर्शनात्स्वयंब्रह्मामुखतोब्राह्मणंशुभम् ॥ ६५ ॥ बाहुभ्यांक्षत्रियंचैवचोरुभ्यांवैश्य
मुत्तमम् ॥ पद्भ्यांशूद्रंशुभाचारंजनयामासवीर्यवान् ॥ ६६ ॥ द्विजराजस्तथासोमश्चंद्रमानामतोद्विजः ॥ लोकेसर्वातपःसूर्यःकश्यंवीर्यंहि
पातियः ॥ ६७ ॥ कश्यपोहिद्वितीयोऽसौमरीचिस्तुततोऽभवत् ॥ रत्नानामाकरोयोवैसहिरत्नाकरःस्मृतः ॥ ६८ ॥ लोकान्धरति
योद्रव्यैःसतुधर्मोहिनामतः ॥ गंभीरश्चास्तिसदृशःकोशोयस्यसरित्पतिः ॥ ६९ ॥ लोकान्दक्षतियःकृत्यैःसतुदक्षःप्रजापतिः ॥ ब्रह्मणोऽ
ङ्गाच्चतेजातास्तस्माद्वैब्रह्मणःस्मृताः ॥ ७० ॥ वर्णधर्मेणतेसर्वेवर्णात्मानश्चवैक्रमात् ॥ दक्षस्यमनसोजाताःकन्याःपंचशतंततः ॥ ७१ ॥
विष्णुमायाप्रभावेनकलाभूताःस्थिताभुवि ॥ तदातुभगवान्ब्रह्मासोमायाश्विनिमण्डलम् ॥ ७२ ॥ सप्तविंशद्गणंश्रेष्ठंददौलोकविवृद्धये ॥
कश्यपायादितिगणंक्षत्ररूपंत्रयोदशम् ॥ ७३ ॥धर्मायकीर्तिप्रभृतिददौसचमहामुनिः ॥ नानाविधानिसृष्टानिचासन्वैवस्वतेऽन्तरे ॥ ७४ ॥

तेषांपतिस्त्वयंदक्षोऽभूद्विधेराज्ञयाभुवि ॥ तत्रवासःस्वयंदक्षःकृतवान्यज्ञतत्परः॥७५॥सर्वेदेवगणादक्षंनमस्कृत्यचरंतिहि ॥ भूतनाथोमहादे
वोननंनामकदाचन॥७६॥ तदाक्रुद्धःस्वयंदक्षःशिवभागंनदत्तवान् ॥ मृगव्याधःशिवःक्रुद्धोवीरभद्रोबभूवह ॥ ७७॥ त्रिशिराश्चात्रिनेत्रश्चात्रि
पदस्तत्रचागतः ॥ तेनैवपीडितादेवामुनयःपितरोऽभवन् ॥ ७८ ॥ तदावैयज्ञपुरुषोभयभीतःसमंततः ॥ मृगभूतोययौतूर्णंदृष्ट्वाव्याधःशिवो
भवत् ॥ ७९॥ रुद्रव्याधेनसमृगोविभिन्नाङ्गोबभूवह ॥ तदातुभगवान्ब्रह्मातुष्टावमधुरस्वरैः ॥८०॥ संतुष्टश्चमृगव्याधोयज्ञंपूर्णमकारयत् ॥
तुलाराशिस्थितेभानौतंरुद्रंचंद्रमण्डले ॥८१॥ स्थापयित्वास्वयंब्रह्मासप्तविंशद्दिनात्मके ॥ प्रययौसत्तलोकंवैसरुद्रश्चंद्ररूपवान् ॥ ८२ ॥
इतिश्रुत्वावीरभद्रोरुद्रोहर्षितमानसः ॥ स्वांशंदेहात्समुत्पाद्यद्विजगेहमचोदयत् ॥ ८३ ॥ विप्रभैरवदत्तस्यगेहेगत्वासवैशिवः ॥ तत्पुत्रोऽ
भूत्कलौघोरेशंकरोनामविश्रुतः ॥ ८४ ॥ सबालश्चगुणीवेत्ताब्रह्मचारीबभूवह ॥ कृत्वाशंकरभाष्यंचशैवमार्गमदर्शयत् ॥ ८५ ॥ त्रिपुण्ड्र
श्चाक्षमालाचमंत्रंपंचाक्षरंशुभम् ॥ शैवानांमंगलकरंशंकराचार्यनिर्मितम्॥८६॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापर
पर्यायेकलियुगीयेतिहाससमुच्चयेकृष्णचैतन्यशंकराचार्यसमुत्पत्तिवर्णनोनामदशमोऽध्यायः ॥१०॥ ॥ छ ॥ बृहस्पतिरुवाच ॥ पुरातु
नैमिषारण्येविप्रश्चाजगरोऽभवत्॥वेदान्तशास्त्रनिपुणोज्ञानवाञ्छंभुपूजकः॥१॥ द्वादशाब्दान्तरेरुद्रस्तुष्टोऽभूत्पार्थिवार्चनात्॥तदागत्यददौ
ज्ञानंजीवन्मोक्षत्वमागतः॥२॥संकर्षणंसमाराध्यतज्ज्ञानेनद्विजोत्तमः॥तुष्टावपुष्कलाभिश्चस्तुतिभिःपरमेश्वरम् ॥३॥अजगरउवाच॥सदैव्यं
प्रधानंपरंज्योतिरूपंनिराकारमव्यक्तमानन्दनित्यम् ॥त्रिधातत्तुजातंत्रिलिंगैक्यभिन्नंपुमान्सत्वरूपोरजोरूपनारी ॥४॥ तयोर्यत्तुशेषंतमोरू
पमेवततश्शेषनाम्नेनमस्तेनमस्ते॥रजश्चादिभूतोगुणस्सैवमायातथामध्यभूतोनरस्सत्वरूपम्॥५॥ तथैवान्तभूतोनपुंस्कंतमोवत्सदैवाद्यना
गेशतुभ्यंनमस्ते॥नराधाररूपोभवान्कालकर्तानराकर्षणस्त्वंहिसंकर्षणश्च ॥६॥ रमन्तेमुनीशास्त्वयिब्रह्मधाम्निनमस्तेनमस्तेपुनस्तेनमोऽ
स्तु॥नराङ्गेषुचाधारभूताशिवायास्मृतायोगनिद्राहिशक्तिस्त्वदीया ॥७॥जीवउवाच ॥ एवंहिसंस्तुतोदेवोद्विजंचाजगरंप्रभुः॥सायुज्यंकृतवा
न्साङ्गेरुद्रःसर्पोहिसोऽभवत् ॥ ८ ॥ फणासहस्रसहितोगौराङ्गोगौरविग्रहः ॥ क्षीराब्धौमंदिरंयस्यबभूवचगुणाकरम् ॥ ९ ॥ तंसपर्ख्यंमहा

रुद्रंप्रत्यागत्यात्मभूःस्वयम् ॥ कर्कराशिस्थितेसूर्येचंद्रेभगणमण्डले ॥ १० ॥ तंरुद्रंस्थापयामासचंद्रमाःसतुचाभवत् ॥ इतिश्रुत्वाशेषना
गोरुद्रःश्रीगुरुभाषितम् ॥ ११ ॥ वचनंसप्रसन्नात्मातेजउत्पाद्यवैमुखात् ॥ विंध्याद्रौजनयामासदेवदत्तद्विजगृहे ॥ १२ ॥ गिरिशर्मासवै
विप्रोविजित्यविदुषांगणान् ॥ काशीपुरींसमायातःशिष्योभूच्छंकरस्यवै ॥ १३ ॥ इतितेकथितंविप्रयथारुद्रोबभूवह ॥ पुनःशृणुकथांवि
प्रयथाजीवेनभाषिताम् ॥ १४ ॥ जीवउवाच ॥ प्रयागेचपुराह्यासीद्ब्राह्मणोहरिसेवकः ॥ मंदभाग्योदरिद्रार्तोनैर्ऋतोनामविश्रुतः ॥ १५ ॥
महत्कष्टेनतस्यैवभिक्षाप्राप्तादिनान्तके ॥ नैर्ऋतःपुत्रपत्नीकोदरिद्रार्तोदिनेदिने ॥ १६ ॥ एकदानारदोयोगीसंप्राप्तोवैष्णवप्रियः ॥ पूजि
तस्तेनविप्रेणविष्णुलोकमुपाययौ ॥ १७ ॥ दृष्ट्वानारायणंदेवंनमस्कृत्यपुनःपुनः ॥ वचनंप्राहनम्रात्मासदैवभगवत्प्रियः ॥ १८ ॥ भगव
न्येसुराःसर्वेसदात्वत्पूजनेरताः ॥ तेषांभक्ताश्चयेभूमौधनधान्यसमन्विताः ॥ १९ ॥ त्वद्भक्ताश्चमयादृष्टादरिद्रार्ताःसदाभुवि ॥ किमर्थंब्रूहि
मेस्वामिजनार्दननमोस्तुते ॥ २० ॥ इत्युक्तोनारदेनैवभगवान्भक्तवत्सलः ॥ तमाहवचनंरम्यंतच्छृणुष्वसुरोत्तम ॥ २१ ॥ मद्भक्तोभग
वान्ब्रह्मादृष्ट्वानारायणप्रियान् ॥ जनाँश्चस्ववशीकृत्यलोककार्यंकरोतिहि ॥ २२ ॥ धर्मोऽधर्मस्तेनकृतोधर्मोवेदमयःस्मृतः ॥ सप्तलोकाश्च
धर्मस्यनिर्मितास्तेनधीमता ॥ २३ ॥ भूर्भुवःस्वोमहश्चैवजनश्चैवतपस्तथा ॥ सत्यंतथैवक्रमतोनॄणांद्विगुणदंसुखम् ॥ २४ ॥ अधर्मोवेदर
हितोभुविशब्दान्यकर्तृकः ॥ येशब्दाश्चमहावाण्यादूषितास्तेहिलोकगाः ॥ २५ ॥ वेदेतराःपापमयादैत्यवृद्धिकराःसदा ॥ अधर्मःसतुवि
ज्ञेयःसप्तलोकाश्चतस्यवै॥२६॥भूमिगर्तेषुविधिनानिर्मिताःसुखदायकाः॥अतलंवितलंचैवसुतलंचतलातलम् ॥२७॥महातलंरसाचैवपातालं
चान्यधर्मजम् ॥ अन्यधर्मोह्यधर्मश्चदेवास्त्वन्येहितेऽसुराः ॥ २८ ॥ धर्मपक्षाःसुराज्ञेयाअसुराश्चान्यधर्मजाः ॥ तयोर्विहीनोयोधर्मोदेवैर्दैत्यै
श्चदूषितः ॥ २९ ॥ विधर्मःसतुविज्ञेयस्तत्रलोकाव्यथाकुलाः ॥ तामिस्रमंधतामिस्रंकुंभीपाकंचरौरवम् ॥३०॥ महारौरवएवापितथामूर्तिर ॥
यस्तथा ॥ इक्षुयंत्रंशाल्मलंचह्यसिपत्रवनंतथा ॥ ३१ ॥ ज्ञेयमित्येवरचितंविधिनाचैकविंशतिः ॥ ब्रह्माण्डोऽयंलोकमयःपरंतस्माच्चमत्प
दम् ॥ ३२ ॥ मद्भक्ताभूतलेयेवैतेगच्छंतिपरंपदम् ॥ देवभक्ताश्चयेलोकाःसप्तलोकान्व्रजंतिते ॥ ३३ ॥ येतुवैतामसालोकादैत्यपूजनतत्प

राः ॥ तेगच्छंतिमहीलोकानतलादिमयाँस्तथा ॥ ३४ ॥ पातालाद्योजनंलक्षमधोलोकःप्रकीर्तितः ॥ विधर्मेतत्परालोकास्तेगच्छंतिह्यधो
गतिम् ॥ ३५ ॥ अतोवैविधिनाभ्रष्टामद्भक्ताश्चदरिद्रगाः ॥ येमद्भक्ताःसुरान्पूर्वंपूजयित्वाभजंतिमाम् ॥ ३६ ॥ लक्ष्मीवंतश्चतेज्ञेयाभुक्ति
मुक्तिपरायणाः ॥ प्रयागेनैर्ऋतोविप्रस्त्यक्त्वादेवान्ममाप्रियान् ॥३७॥ भजत्यनन्यभावेनतस्मात्सहिदरिद्रवान्॥देवैर्दत्तंहियद्द्रव्यंभोक्तव्यं
सर्वदाजनैः ॥३८॥ मयादत्तंहियद्वस्तुब्रह्माण्डेनास्तिनारद ॥ अतोमदाज्ञयाविप्रदेहितस्मैवरंशुभम् ॥ ३९ ॥ इत्युक्तोनारदोयोगीहरिणावि
श्वकारिणा ॥ द्विजपत्नीस्थितागेहेतत्रप्राप्यवचोऽब्रवीत् ॥ ४० ॥ वरंवरयहेसाध्वित्वयायद्वांछितंहृदि ॥ साहदेहिवरंस्वामिन्भूपराज्ञीभ
वाम्यहम् ॥ ४१ ॥ इत्युक्त्वावचनंतत्रदिव्यरूपाबभूवसा ॥ आगतस्तत्रनृपतिर्गृहीत्वागेहमाययौ ॥ ४२ ॥ सायंकालेतुसंप्राप्तेद्विजस्तत्रस
मागतः ॥ नारदस्तंवचःप्राहशृणुविप्रहरिप्रिय ॥ ४३ ॥ वरदानाच्चतेपत्नीभूपराज्ञीहिवर्तते ॥ त्वयाकिंवांछितंवस्तुमत्तःप्राप्यसुखीभव ॥
॥ ४४ ॥ इतिश्रुत्वादैववशोवचःप्राहरुषान्वितः ॥ क्रोष्ट्रीभवेच्चमत्पत्नीदेहिविप्रवरंमम ॥ ४५ ॥ इत्युक्तवचनात्क्रोष्ट्रीसाबभूवद्विजप्रिया ॥
एतस्मिन्नंतरेप्राप्तस्तत्पुत्रोगुरुपूजकः ॥ ४६ ॥ श्रुत्वातत्कारणंसर्वंनारदंसवचोऽब्रवीत् ॥ ममातायथास्वामिंस्तथाशीघ्रंवराद्भवेत् ॥४७॥
एतत्रिभिर्वरैःप्राप्तैर्देवमायाविमोहितैः ॥ तदातुनारदोदुःखीनैर्ऋतंप्राहवैवचः ॥ ४८ ॥ ब्रह्माण्डोऽयंदेवमयोभवस्तस्यमहेश्वरः ॥
अतोभवंभजाशुत्वंसतेकार्यंकरिष्यति ॥ ४९ ॥ इत्युक्तवचनोविप्रोभवंतंपार्थिवार्चनैः ॥ तुष्टावपरयाभक्त्यावर्षमात्रंहिनैर्ऋतः ॥ ५० ॥
तदाप्रसन्नोभगवान्महेशोभक्तवत्सलः ॥ कुबेरसदृशंदिव्यंददौतस्मैमहद्धनम् ॥ ५१ ॥ तद्धनेनसवैविप्रोधर्मकार्यंचकारह ॥
प्रसिद्धोऽभून्महीपृष्ठेनाम्नापुण्यजनोधनैः ॥ ५२ ॥ शिवभक्तिप्रभावेनप्राप्यद्रव्यमकंटकम् ॥ सहस्राब्दवपुर्भूत्वात्यक्त्वाप्राणान्दिवंययौ ॥
॥५३॥ वृषराशिस्थितेसूर्येराजाचंद्रस्यसोमवत् ॥ नैर्ऋतोनामविख्यातोरुद्रःसर्वजनप्रियः ॥५४॥ इतिश्रुत्वानैर्ऋतस्तुभृगुवर्यगुरूदितम्॥
स्वांशाद्भूतलमागम्यगिरिनालगिरौवने ॥५५॥ योगिनःसिद्धसांख्यस्यपुत्रोऽभूद्वनवासिनः ॥ वनशर्मेतिविख्यातोवेदशास्त्रपरायणः ॥५६॥
द्वादशाब्दवपुर्भूत्वाजित्वाविद्वज्जनान्बहून् ॥ काशीमागम्यतत्वार्थीशंकराचार्यमुत्तमम् ॥ ५७ ॥ प्रणम्यतस्यशिष्योऽभूद्वनशर्माविशा

रदः ॥ ॥ बृहस्पतिरुवाच ॥ ॥ वसुशर्माद्विजःकश्चिन्माहिष्मत्यांपुराभवत् ॥ ५८ ॥ शिवव्रतपरोनित्यंपुत्रार्थीपार्थिवार्चकः ॥ चतु
र्विंशतिवर्षाणिपूजतस्तस्यधीमतः ॥ ५९ ॥ व्यतीतानिसुरास्तत्रनप्रसन्नोऽभवच्छिवः ॥ तदातुदुःखितोविप्रोवह्निंप्रज्वाल्यभैरवम् ॥६०॥
जुहावस्वांगमांसानिसुखतश्चरणान्तिकम् ॥ नप्रसन्नोभवद्रुद्रस्तदाविप्रःशुचान्वितः ॥ ६१ ॥ गृहीत्वाचोत्तमंमेषंसंस्कारंकृतवाञ्छुचिः ॥
तेनमेषेणसहितोज्वलदग्नौसमाययौ ॥ ६२ ॥ प्रसन्नोभगवान्रुद्रस्तत्रागत्यगणैर्युतः ॥ स्वरूपंदर्शयामासशुद्धस्फटिकसुन्दरम् ॥ ६३ ॥
वरंब्रूहिवचःप्राहवसुशर्माणमुत्तमम् ॥ तच्छ्रुत्वासप्रसन्नात्मानत्वापार्वतिवल्लभम् ॥ ६४ ॥ प्रश्रयावनतोभूत्वावचनंप्राहशंकरम् ॥ देहिमे
तनयंस्वामिञ्छरणागतवत्सल ॥ ६५ ॥ इत्युक्तःशंकरस्तेनविहस्योवाचतंद्विजम् ॥ पुत्रदातास्वयंब्रह्माभाग्यकर्तापरात्परः ॥ ६६ ॥
तुभ्यंचशतजन्मान्तेतेनपुत्रोननिर्मितः ॥ तस्मादहंसुतंस्वांशात्तवविप्रददामिभोः ॥ ६७ ॥ इत्युक्त्वास्वमुखात्तेजोनिराकृत्यमहेश्वरः ॥ त
त्पत्न्यांजनयामाससकाशाद्वसुवर्मणः ॥ ६८ ॥ दशमासान्तरेजातःसुपुत्रोमधुराननः ॥ अजस्येवपदश्चैकोद्वितीयोनरवत्ततः ॥ ६९ ॥
अजैकपादइतिसप्रसिद्धोऽभून्महीतले ॥ चतुश्शताब्दवपुषिप्राप्तेतस्मिन्सुतेप्रिये ॥ ७० ॥ संप्राप्तोभगवान्मृत्युस्तदारोगगणैर्युतः ॥ तस्य
तैरभवद्युद्धमजैकचरणस्यवै ॥ ७१ ॥ वर्षमात्रेणतान्सर्वाञ्जित्वामल्लरणोत्कटः ॥ मृत्युंजयःसवैनाम्नाप्रसिद्धोऽभून्महीतले ॥ ७२ ॥ दुः
खितोभगवान्मृत्युस्तेनविप्रेणनिर्जितः ॥ परमेष्ठिनमागम्यकथयामासकारणम् ॥ ७३ ॥ तदातुभगवान्ब्रह्मासर्वदेवगणैर्युतः ॥ कुंभगे
द्युमणौदेवचंद्रमण्डलगंनृपम् ॥ ७४ ॥ तंद्विजंचचकाराशुरुद्ररूपंभयापहम् ॥ सूतउवाच ॥ इतिश्रुत्वामहादेवःसविप्रश्चतदाजपाद् ॥
॥७५॥पुरींमाहिष्मतींप्राप्तःकलिशुद्धिकरःप्रभुः॥पुरीशर्मेतिविख्यातोयतिदत्तस्यवैसुतः ॥७६॥ षोडशाब्दवपुर्भूत्वाजित्वावेदपरायणान् ॥
शंकराचार्यमागम्यतस्यशिष्योबभूवह ॥७७॥ इतितेकथितंविप्रयथामृत्युंजयोभवत् ॥७८॥ इति श्रीभविष्येमहापुराणेप्रातिसर्गपर्वणिचतु
र्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेआनंदगिरिवनशर्मपुरीशर्मवर्णनंनामएकादशोऽध्यायः ॥११॥छ॥ सूतउवाच॥पुनःशृणुकथांर ॥१
म्यांप्रयागेजीवभाषिताम् ॥ हिर्बुनामपुराचासीद्दानवोलोककंटकः ॥१॥ निकुंभान्वयसंभूतःशक्रतुल्यपराक्रमः ॥ सहस्राब्दंतपःकृत्वाताप

यामासवैसुरान् ॥ २ ॥ तदालोकपतिर्ब्रह्मालोकरक्षार्थमुद्यतः ॥ वरंब्रूहीतिवचनमुवाचदनुजेश्वरम् ॥ ३ ॥ नमस्कृत्याविधातारंवचनंप्राहन
म्रधीः ॥ यदिदेयोवरःस्वामिंस्त्वयाविश्वकृताविभो ॥४॥ मरणंनचमेभूयात्त्वत्कृतैश्चचराचरैः ॥ इत्युक्तस्सतथेत्युक्त्वाब्रह्मलोकमुपाययौ
॥५॥ दानवस्सतुरौद्रात्माजित्वास्वर्गेनिवासिनः ॥ आहूयदानवान्दैत्यान्विवरेभ्यःप्रसन्नधीः ॥६॥ स्वर्गेनिवासयामासतेदेवाभूतलीकृताः ॥
लक्षाब्दंचसुरास्सर्वेबुभुजुःपरमापदः ॥ ७ ॥ एकदानारदोधीमान्दृष्ट्वादेवांस्तथागतान् ॥ वचनंप्राहयोगात्माभजध्वंलोकशंकरम् ॥ ८ ॥
सदेवश्चमहादेवोब्रह्माण्डेशोविपत्तिहा ॥ इतिश्रुत्वातुवचनंतेदेवाविस्मयान्विताः ॥ ९ ॥ पार्थिवैःपूजयामासुर्देवदेवमुमापतिम् ॥
गतैकादशवर्षाश्चतेषांपूजनकारिणाम् ॥१०॥ तदाप्रसन्नोभगवान्महेशोलोकशंकरः ॥ ज्योतिर्लिंगमयोभूत्वालोकांस्त्रीन्समदाहयत् ॥११॥
येतुवैदेवभक्ताश्चशेषाश्चासन्महाभये ॥ अन्येतुदानवैस्सार्द्धंभस्मीभूताबभूविरे ॥ १२ ॥ एतस्मिन्नंतरेब्रह्माविष्णुनासहहर्षितः ॥
तुष्टावसमहारुद्रंस्तोत्रैस्सामसमुद्भवैः ॥ १३ ॥ मिथुनस्थेदिवानाथेशशिमण्डलभूपतिम् ॥ हिर्बुध्न्यंचमहारुद्रंचकारसुरहेतवे ॥ १४ ॥
इतिश्रुत्वासहिर्बुध्न्योदेवकार्यार्थमुद्यतः ॥ हिमालयेगिरौरम्येपुत्रोऽभूत्साद्यकर्मणः ॥ १५ ॥ पतिरूपःकलाभिज्ञोभारतीशइतिश्रुतः ॥
सजित्वाविदुषांवृंदान्काशीनगरमागतः ॥ १६ ॥ शंकराचार्यमागम्यशिष्योऽभूत्तेननिर्जितः ॥ ॥ बृहस्पतिरुवाच ॥ ॥ मयपुत्रः
स्मृतोमायीतपोघोरंचकारह ॥ १७ ॥ पदैकेनस्थितःसूर्य्येसहस्राब्दंप्रयत्नतः ॥ सलोकांस्तापयामासतपसालोकवासिनः ॥ १८ ॥
तदाप्रसन्नोभगवान्परमेष्ठीपितामहः ॥ त्रयोग्रामास्तत्प्रियार्थंक्रमाद्वैतेननिर्मिताः ॥ १९ ॥ सौवर्णंस्वर्गसदृशंपुरंषोडशयोजनम् ॥
तदधोयोजनान्तेचराजतंचभुवर्मयम् ॥ २० ॥ तदधोयोजनान्तेचभूर्लोकमिवचायसम् ॥ एवंपुरनिवासिन्योदैत्यानांयोषितोमुदा ॥ २१ ॥
शतकोटिमितादैत्याधर्मात्मानोनिवासिनः ॥ गृहीत्वायज्ञभागंचदेवतुल्याबभूविरे ॥ २२ ॥ तदानिर्बलिनोदेवाःक्षुधयापीडिताःप्रभुम् ॥
भगवन्तंमहाविष्णुंतुष्टुवुःपरयागिरा ॥ २३ ॥ चतुर्युगसमूहानांवर्षाणांभगवन्प्रभो ॥ अधिकारविहीनाश्चवर्तन्तेस्वर्गमण्डले ॥ २४ ॥
तामसांतरमेवापिषोडशैवचतुर्युगम् ॥ व्यतीतानिमहाविष्णोमायिनांदुःखभुंजताम् ॥ २५ ॥ इतिश्रुत्वावचस्तेषांभगवान्मधुसूदनः ॥

दृष्ट्वासंस्कृतवार्तायांदैत्यान्धर्मपरायणान् ॥२६॥ बौद्धरूपस्स्वयंजातःकलौप्राप्तेभयानके ॥ अजिनस्यद्विजस्यैवसुतोभूत्वाजनार्दनः॥२७॥
वेदधर्मपरान्विप्रान्मोहयामासवीर्यवान् ॥ निर्वेदाःकर्मरहितास्त्रिवर्णास्तामसान्तरे ॥ २८ ॥ षोडशेचकलौप्राप्तेबभूवुर्यज्ञवर्जिताः ॥
तदादैत्यारुषाविष्टास्सर्वेत्रिपुरवासिनः ॥२९॥ मनुजान्पीडयामासुर्निर्यज्ञान्वेदवर्जितान् ॥ क्षयंजग्मुर्नरास्सर्वेकल्पान्तेदैत्यभक्षिताः॥३०॥
पुनस्सत्ययुगेप्राप्तेकैलासेगुह्यकालये ॥ देवैश्चाराधितःशंभुस्सर्वलोकशिवंकरः ॥ ३१ ॥ ज्योतिर्लिंगंवपुःकृत्वातत्रतस्थौभयंकरः ॥
एतस्मिन्नंतरेदेवाःप्रसन्नास्तामसान्तरे ॥ ३२ ॥ भूमेस्सारंगृहीत्वातेरथंकृत्वाविधानतः ॥ चंद्रभास्करयोस्साराच्चक्रेकृत्वातथैवच ॥ ३३॥
सुमेरोश्चतथासारात्केतुंकृत्वारथस्यवै ॥ ददौशिवायमहतेयानंस्यन्दनरूपितत् ॥ ३४ ॥ तदाब्रह्मास्वयंप्राप्यबभूवरथसारथिः ॥
वेदाश्चवाजिनश्चासन्देवदेवस्यवैरथे ॥ ३५ ॥ लोकालोकगिरेःसारोधनुश्चासीन्महात्मनः ॥ घोरंचाजगवंनामप्रसिद्धमभवद्धनुः ॥ ३६ ॥
सत्यंचकारभगवांस्तद्धनुःकठिनंमहत् ॥ भग्नीभूतमभूच्चापंदेवदेवस्यवैरुषा ॥ ३७ ॥ विस्मितोभगवान्विष्णुस्सारंस्वर्गस्यवैतदा ॥
गृहीत्वाशुधनुर्दिव्यंपिनाकंसचकारह ॥ ३८ ॥ सज्यंजातंचरुद्रेणपुष्टिभूतंमहद्धनुः ॥ तदाब्रह्मर्षयस्तुष्टास्तुष्टुवुर्मनसाहरम् ॥ ३९ ॥
पिनाकीतिचतन्नाम्नाप्रसिद्धोभून्महेश्वरः ॥ गुणश्चापस्यवैशेषःशक्रोबाणस्तदाभवत् ॥४०॥ शरपक्षौवह्निवायूशल्यंविष्णुःसनातनः॥तेनबा
णेनदैत्यानांकोटिसंख्यामृताचखे॥४१॥त्रिपुरंदाहयामासमायिनापालितंशिवः॥भस्मीभूतेपुरेघोरेतदालोकपतिर्विधिः ॥ ४२ ॥ पिनाकिनं
महारुद्रंमीनराशिस्थितेरवौ॥शशिनोमण्डलस्यैवराजातंसचकारह ॥४३॥ स्वाधिकारांस्तदादेवाअवापुस्तामसान्तरे ॥ सूतउवाच ॥ इति
श्रुत्वापिनाकीचस्वमुखात्स्वांशमुत्तमम् ॥ ४४ ॥ समुत्पाद्यहरद्वारेहिमसानौचकारह ॥ मच्छंदोनामतत्रैवयोगीशंभुपरायणः ॥ ४५ ॥
गोरखस्यगुरुर्योवैतन्मुखेतेजआविशत् ॥ रंभानाम्नैवतत्रैवस्ववैश्याकामरूपिणी ॥ ४६ ॥ मच्छंदंचवशीकृत्यबुभुजेस्मरविह्वला ॥ तयो
स्सकाशाद्वैजातस्सपुत्रोरुचिराननः ॥ ४७ ॥ नाथशर्मेतिविख्यातोविद्वाञ्छ्रेष्ठतरोऽभवत् ॥ सजित्वापंडितान्भूमौपुरींकाशींसमागतः ॥
॥ ४८ ॥ शंकराचार्यविजितस्तस्यशिष्योबभूवह ॥ बृहस्पतिरुवाच ॥ चाक्षुषांतरसंप्राप्तेद्वादशेद्वापरेयुगे ॥ ४९ ॥ क्षत्रियैस्तालजंघीयैर्ब्रा

ह्मणाभृगुवंशजाः ॥ विनाशिताःकुरुक्षेत्रेगृहीत्वातद्धनंबहु ॥ ५० ॥ बुभुजुर्बलवंतस्तेदैत्यपक्षामहाधमाः ॥ कस्यचित्तुमुनेःपत्नीगुर्विणीच
भयान्विता ॥ ५१ ॥ हिमतुंगेसमागम्यतद्गर्भंमुनिसंभवम् ॥ शतवर्षंददौदेवीतपसाज्ञानरूपिणी ॥ ५२ ॥ मातुरूरूसुतोभित्त्वाततोजातो
महीतले ॥ तेजसातस्यपुत्रस्यभस्मीभूतमभूज्जगत् ॥ ५३ ॥ तदातुसकलादेवाःपुरस्कृत्यप्रजापतिम् ॥ वज्रास्थितश्चवैतालस्समाजग्मुर्भ
यातुराः ॥ ५४ ॥ पितृभिर्दैवतैर्बालस्समाज्ञातोहिमाचले ॥ लोकनाशकरंतेजोजलमध्येसचाक्षिपत् ॥ ५५ ॥ जलदेवीचवडवाभूत्वातत्तेज
उत्तमम् ॥ पीत्वाववामतत्रैवपीडितारौद्रतेजसा ॥ ५६ ॥ तदागत्यस्वयंब्रह्मात्रिकुटोयत्रवैगिरिः ॥ तदधःसागरेघोरेस्थापयामासलोकपः
॥ ५७ ॥ मेषगेद्युमणौप्राप्तेशशिमण्डलगंप्रभुम् ॥ तंरुद्रंसचकाराशुपरमेष्ठीपितामहः ॥ ५८ ॥ ऊरुजातात्स्मृतोवौर्वोदहनोलोकदाहतः ॥
वडवामुखतोजातोवाडवोनामसप्रभुः ॥५९॥ सूतउवाच ॥ इतिश्रुत्वातुदहनोगुरुवाक्यंमनोहरम् ॥ स्वमुखात्तेजउत्पाद्यकुरुक्षेत्रंचकारह ॥
॥ ६० ॥ सारस्वतस्यविप्रस्यगृहेजातस्सवैशिवः ॥ क्षेत्रशर्मेतिविख्यातोविद्वच्छ्रेष्ठोबभूवह ॥ ६१ ॥ शंकराचार्यमागम्यशिष्योभूत्वापरा
जितः ॥ ब्रह्मचर्यव्रतीकाश्यांतस्थौशंभुपरायणः ॥ ६२ ॥ बृहस्पतिरुवाच ॥ एकार्णवेपुराजातेनष्टेस्थावरजंगमे ॥ शताब्देब्रह्मणःप्राप्तेऽ
व्यक्तजन्मनिलोकगे ॥ ६३ ॥ अव्यक्तंप्रकृतिर्मायापीत्वासर्वजलंमुदा ॥ महाकालीस्वयंमूर्तिरंधकारस्वरूपिणी ॥ ६४ ॥ एकाबभूवतत्रैव
प्राकृतेकल्पदारुणे ॥ चतुर्युगानांकोटीनांत्रयाणांदारुणेलये ॥ ६५ ॥ षष्टिलक्षयुतानांचकालस्तत्रव्यतीतवान् ॥ तदासाप्रकृतिर्देवीनित्य
शुद्धासनातनी ॥ ६६ ॥ स्वेच्छयाचस्वरूपंस्वंमहागौरमनुत्तमम् ॥ पंचवक्त्रंदशभुजंत्रिनेत्रंचदधौशिवा ॥६७॥ भालनेत्रेणसामातासूक्ष्मते
जोददर्शह ॥ शून्यभूतंपरंनित्यमविकारिनिरंजनम् ॥६८॥ तदादिक्षुगतंब्रह्मस्वभुजैःप्रकृतिःपुरा ॥ गृहीतुमिच्छतीतत्रनसमर्थाबभूववै ॥
॥ ६९ ॥ विस्मिताप्रकृतिर्मातापंचवक्त्रैःसनातनम् ॥ तुष्टावपरयाभक्त्याचिरंकालात्परात्परम् ॥ ७० ॥ धातुशब्दैःप्राङ्मुखजैः
प्रत्ययैर्याम्यवक्त्रजैः ॥ सुविभक्तिमयैःशब्दैर्मुखपाश्चिमजैःस्थिरा ॥ ७१ ॥ तिङ्विभक्तिमयैर्नित्यामुखोत्तरमयैर्मुदा ॥ नभोवक्त्रमयैः
शब्दैर्वर्णमात्रैर्निरंजनम् ॥ ७२ ॥ सच्चिदानंदघनकंपूर्णब्रह्मसनातनम् ॥ तुतोषतत्तुसर्वज्ञंपंचवक्त्रेषुचागमत् ॥ ७३ ॥ पुरुषत्वमभू

द्ब्रह्मस्वयंभूनामचाभवत् ॥ अव्यक्तात्प्रकृतेर्जातोऽव्यक्तजन्माहिसस्मृतः ॥ ७४ ॥ तस्यहेतोःस्वयंदेवीवरदालोकरूपिणी ॥ महा
लक्ष्मीश्चपूर्वार्द्धाज्जाताषोडशलोकिनी ॥ ७५ ॥ अष्टादशभुजास्तस्यालोकरक्षणतत्पराः ॥ दृष्ट्वातदद्भुतंरूपंस्वयंभूर्विस्मयान्वि
तः ॥ ७६ ॥ प्रविश्यबहुधाभूत्वानान्तंतस्याजगामह ॥ बृहत्वाद्बहुरूपत्वाद्ब्रह्मानामेतिविश्रुतः ॥ ७७ ॥ श्रमितोभगवान्ब्रह्मासत्यलो
कमुपस्थितः ॥ मुखेभ्यउद्भवैर्वेदैर्वोवेदैस्तुष्टावशंकरम् ॥ ७८ ॥ चिरंकालंतदंगाद्वैनदीनदसमुद्भवः ॥ एकार्णवंतदाजातंशेतेतत्रस्व
यंप्रभुः ॥ ७९ ॥ सहस्रयुगपर्यंतमुषित्वाऽव्यक्तभूःस्वयम् ॥ सत्यलोकमुपागम्यपुनःसृष्टिंचकारह ॥ ८० ॥ अनन्ताःसृष्टयश्चासन्गणरू
पाःपृथक्पृथक् ॥ ताभिर्व्यक्तमभूत्सर्वंमहालक्ष्मीमयंजगत् ॥ ८१ ॥ दृष्ट्वाबहुत्वंसृष्टीनांमहालक्ष्मीःसनातनी ॥ विस्मिताभूच्चसर्वेशंभग
वन्तमुपाययौ ॥ ८२ ॥ नत्वोवाचवचोरम्यंकृष्णमव्यक्तमंगलम् ॥ भगवान्नित्यशुद्धात्मन्नराश्चासन्महत्तराः ॥ ८३ ॥ कथंतेषांचगणनाकर्त
व्याचमयासदा ॥ इतिश्रुत्वावचस्तस्याद्द्विधाभूतश्चसोऽव्ययः ॥८४॥ पूर्वार्द्धात्सतुरक्ताङ्गःपरार्द्धाद्गौररूपवान् ॥ चतुर्भुजस्सरक्तांगोगौरव
र्णश्चतुर्भुजः ॥ ८५ ॥ सर्वसृष्टिगणानांचसईशोभगवान्भवः ॥ गणेशोनामविख्यातश्चेश्वरस्सतुविश्रुतः ॥ ८६ ॥ परश्चतुर्भुजोयोवैयोगि
ध्येयोनिरंजनः ॥ एकदाविधितोजातःशिवःपार्वतिवल्लभः ॥ ८७ ॥ गणेशंपूजयामाससहस्राब्दंप्रयत्नतः ॥ तदाप्रसन्नोभगवान्गणेशःशर्व
पूजकः ॥ ८८ ॥ वरंवरयतेप्राहपार्वतीसाहितंहरम् ॥ प्रसन्नात्माभवःसाक्षात्तुष्टावचाविनम्रधीः ॥ ८९ ॥ शिवउवाच ॥ नमोविष्णुस्वरूपाय
गणेशायपरात्मने ॥ चतुर्भुजायरक्ताययज्ञपूर्णकरायच ॥ ९० ॥ विघ्नहंत्रेजगद्भर्त्रेसर्वानन्दप्रदायिने ॥ सिद्धीनांपतयेतुभ्यंनिधीनांपतये
नमः ॥ ९१ ॥ प्रसन्नोभवदेवेशपुत्रोभवममप्रियः ॥ इतिश्रुत्वादिपूज्यस्तुगणेशोभक्तवत्सलः ॥ ९२ ॥ पार्वत्याःसर्वदेहात्तुतेजोभूतात्समुद्भ
वः ॥ तदाकैलासशिखरेसर्वेदेवास्सवासवाः ॥ ९३ ॥ मंगलार्थमुपाजग्मुर्देवदेवस्यमन्दिरे ॥ महोत्सवश्चतत्रासीत्सर्वलोकसुखावहः ॥९४॥
एतस्मिन्नंतरेतत्रसूर्यपुत्रःशनिःस्वयम् ॥ क्रूरदृष्टिःसमायातःकालात्मादेवमण्डपे ॥ ९५ ॥ तस्यदर्शनमात्रेणसबालोविशिराह्यभूत् ॥ हा
हाकारोमहाँश्चासीत्कैलासेगुह्यकालये ॥ ९६ ॥ तच्छिरश्चंद्रलोकेवैतुलासंस्थेदिवाकरे ॥ सप्तविंशद्दिनान्येवप्रकाशयतिभूतले ॥ ९७ ॥

निंदितोदैवतैस्तत्रशनिर्जनभयंकरः ॥ गजस्यमस्तकंछित्त्वादन्तैक्यंरागरूपिपत् ॥ ९८ ॥ तच्छिशोःकंधरेरक्तेऽरोपयत्सूर्यसंभवः ॥ गज
योन्यास्तुतोब्रह्माकर्कटस्यतदाशिरः ॥ ९९ ॥ समारोप्यतुतद्योनिःकर्कटोविशिरीकृतः ॥ एवंगजाननोजातोगणेशश्चेश्वरःस्वयम् ॥ १०० ॥
सूतउवाच ॥ इतिश्रुत्वागणेशस्तुगुरोर्वचनमुत्तमम् ॥ स्वमुखात्स्कंधमुत्पाद्यकाश्यांजातःसचेश्वरः ॥ १०१ ॥ दैवज्ञस्यद्विजस्यैवपुत्रोभू
त्वाशुभाननः॥ ढुंढिराजस्ततोनाम्नाप्रसिद्धोऽभून्महीतले॥ १०२॥ जातकाभरणंनामज्योतिःशास्त्रंफलात्मकम्॥ कृत्वासवेदरक्षार्थंशंकराचार्य
मागमत् ॥ १०३॥ शिष्योभूत्वाप्रसन्नात्मागुरुसेवापरोऽभवत् ॥ इतितेकथितंविप्रढुंढिराजोयथाभवत् ॥ १०४॥ इति श्रीभविष्येमहापुराणे
चतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेभारतीशगोरखनाथक्षेत्रशर्मढुंढिराजसमुत्पत्तिवर्णनोनामद्वादशोऽध्यायः ॥ १२ ॥ छ ॥
॥ बृहस्पतिरुवाच ॥ ॥ षोडशाब्देचसंप्राप्तेब्रह्मणोव्यक्तजन्मनः ॥ सउषित्वाचकमलेस्थितःसृष्ट्यर्थमुद्यतः ॥ १ ॥ एतस्मिन्नन्त
रेवक्त्रात्समुद्भूताचशारदा ॥ दिव्यांगसुन्दरंतस्यादृष्ट्वाब्रह्मास्मरातुरः ॥ २ ॥ बलाद्गृहीत्वातांकन्यामुवाचस्मरपीडितः ॥ रतिंदे
हिमहाघूर्णेरक्षमांकामविह्वलम् ॥ ३ ॥ इतिश्रुत्वातुसामातारुषाप्राहपितामहम् ॥ पंचवक्त्रोऽयमशुभोनयोग्यस्तवकन्धरे ॥ ४ ॥
चतुर्वक्त्रोवेदमयोयोग्यस्सर्वेश्वरेत्वयि ॥ इत्युक्त्वान्तर्दधेमाताब्रह्माक्रोधान्वितोऽभवत् ॥ ५ ॥ तस्यकोपाग्निनातोयंशुष्कभूतमभूद्भुवि ॥
शान्तिभूतेचतत्कोपेरुद्रोजातोभयंकरः ॥ ६॥ भैरवोनामविख्यातः कालात्मासतवाहनः ॥ स्वनखैश्चनृसिंहाभैःक्षिप्त्वातत्पंचमंशिरः ॥७॥
जगर्जबलवान्रुद्रःशंकरोलोकशंकरः ॥ भयभीतस्तदाब्रह्माभैरवंशरणंययौ ॥ ८ ॥ नाथनःपापभूतानांधियोयोऽसौप्रचोदयात् ॥
इतिश्रुत्वासभगवान्भैरवोलोकविश्रुतः ॥ ९ ॥ ब्रह्मभूतमहंस्वामिन्वरेण्यंत्वामुपागतः ॥ सवितुस्तद्वरेण्यंयद्भर्गोदेवस्यधीमहि ॥ १० ॥
गाढमुच्चैरुरोदाशु खात्पेतुश्चाश्रुबिन्दवः ॥ ततोवृक्षास्समुद्भूतारुद्राक्षाणांपृथक्पृथक् ॥ ११ ॥ शिवोब्रह्मवधाद्भीतस्तत्कपालंगृहीतवान् ॥
कपालीनामविख्यातंभैरवस्यतदाह्यभूत् ॥ १२॥ सर्वलोकेषुपूतानियानिचायतनानिच ॥ तानितान्येवगत्वाशुशुद्धोनाभूच्छिवंकरः ॥ १३॥
एकदातेषुवृक्षेषुसंस्थितोभगवान्हरः ॥ तदाब्रह्मवधेदोषंत्यक्त्वादूरमुपागतः ॥ १४ ॥ ततःप्रभृतिवैशंभुर्धृत्वारुद्राक्षमुत्तमम् ॥

पुरींकाशींसमायातः कपालस्तेनमोचितः ॥ १६ ॥ कपालमोचनंनामतीर्थंजातमघापहम्॥एतस्मिन्नंतरेब्रह्मासर्वदेवसमन्वितः ॥ १६ ॥
समागत्यमहादेवंतुष्टावस्तुतिजैःस्तवैः ॥मकरस्थेदिवानाथेशशिनश्चेश्वरंशुभम् ॥१७॥ कपालिनंमहारुद्रंचकारभगवान्विधिः ॥सूतउवाच॥
इतिश्रुत्वागुरोर्वाक्यंकपालीभैरवःशिवः ॥१८॥ स्वमुखात्स्वांशमुत्पाद्यकाश्यांजातोह्ययोनिजः ॥ कपालमोचनात्कुण्डात्समागम्यमहीतले
॥१९॥यतिरूपोवेदनिधिर्भैरवोनामविश्रुतः ॥ अघोरंपंथकठिनंस्वशिष्यान्समचोदयत् ॥२०॥ शंकराचार्यमागम्यशिष्योभूत्वासभैरवः ॥
डामरंनामवैतंत्रंमंत्रभूतंचकारह ॥ २१ ॥ कीलितायेतुवैमंत्रास्तेनचोत्कीलितीकृताः ॥ बृहस्पतिरुवाच ॥ मन्दोदरीमयसुतात्रिपुराधिपतेः
स्वसा ॥२२॥ त्रिपुरेतुयदानष्टेमहाविष्णुंसनातनम् ॥ भक्त्यातुष्टावसादेवीप्रत्यहंगुप्तभाविनी ॥ २३ ॥ भक्तिभावात्ततोयोगंहरेःप्राप्यमहो
त्तमम् ॥ विंध्याद्रिकन्धरेघोरेतत्रैवान्तरधीयत ॥२४॥ चतुर्युगंचाद्विशतंतस्याजातंसमाधितः ॥ वैवस्वतेऽन्तरेप्राप्तेद्वादशेचैवकृद्युगे ॥२५॥
पुलस्त्योब्रह्मणः पुत्रोविश्रवारोषतोभवत् ॥ शताब्दंचतपस्तप्त्वाविश्रवानामयोमुनिः ॥ २६ ॥ सुमालिनोस्यदैत्यस्यसुतावैकैकसीमुदा॥
समुद्वाह्यविधानेनपुलस्त्यस्सचविश्रवाः ॥ २७ ॥ कदलीविपिनेरम्येगन्धमादनपर्वते ॥ सरेमेचतयासार्द्धंविश्रवाभगवानृषिः ॥ २८ ॥
रावणः कुंभकर्णश्चतयोर्जातौहिराक्षसौ ॥ रावणोमातृभक्तश्चपितृभक्तस्ततोऽनुजः ॥ २९ ॥ सहस्राब्दंतपोघोरंचक्रतुस्तौवरार्थिनौ ॥
तदाप्रसन्नोभगवान्परमेष्ठीपितामहः ॥ ३० ॥ ददौताभ्यांवरंरम्यमजेयंदेवदानवैः ॥ तौतुलब्धवरौक्रुद्धौपुष्पकंयानमुत्तमम् ॥ ३१ ॥
गृहीत्वाचबलाद्वीरौयुयुधातेपरस्परम् ॥ ताभ्यांविनिर्जितादेवास्त्यक्त्वास्वर्गंसुखप्रदम् ॥ ३२ ॥ पार्थिवैःपूजयामासुःशिवंकैलाससं
स्थिताः ॥ एकादशाब्दमाराध्यतेदेवागिरिजापतिम् ॥ ३३ ॥ शंकराच्चवरंप्राप्तानिर्भयाश्चतदाभवन् ॥ शिवोऽपिचस्वपूर्वार्द्धाज्जातोवै
मानसोत्तरे ॥ ३४ ॥ गिरौयत्रस्थितादेवीगौतमस्यतनूद्भवा ॥ अंजनीनामविख्याताकपिकेसरिभोगिनी ॥ ३५ ॥ रौद्रंतेजस्तदाघो
रंमुखेकेसरिणोययौ ॥ स्मरातुरःकपीन्द्रस्तुबुभुजेतांशुभाननाम् ॥ ३६ ॥ एतस्मिन्नंतरेवायुःकपीन्द्रस्यतनौगतः ॥ वांछितामं
जनींशुभ्रंरमयामासवैबलात् ॥ ३७ ॥ द्वादशाब्दमतोजातंदंपत्योर्मैथुनस्थयोः ॥ तदनुभ्रूणमासाद्यवर्षमात्रंहिसादधत् ॥ ३८ ॥

पुत्रोजातस्सरागात्मासरुद्रोवानराननः ॥ कुरूपाच्चततोमात्राक्षेपितोभूद्गिरेरधः ॥ ३९ ॥ बलादागत्यबलवान्दृष्ट्वासूर्यमुपास्थितम् ॥ विलिख्यभगवान्रुद्रोदेवस्तत्रसमागतः ॥ ४० ॥ वज्रसंताडितोवापिनतत्याजतदारविम् ॥ भयभीतस्तदाप्रांशुस्सूर्यत्राहीतिजल्पितः ॥ ॥ ४१ ॥ श्रुत्वातदार्तवचनंरावणोलोकरावणः ॥ पुच्छेगृहीत्वातंकीशंमुष्टियुद्धमचीकरत् ॥ ४२ ॥ तदातुकेसरिसुतोरविंत्यक्त्वारुषान्वितः ॥ वर्षमात्रंमहाघोरंमल्लयुद्धंचकारह ॥ ४३ ॥ श्रमितोरावणस्तत्रभयभीतस्समंततः ॥ पलायनपरोभूतःकीशरुद्रेणताडितः ॥ ४४ ॥ एतस्मिन्नंतरेप्राप्तोविश्रवाभगवानृषिः ॥ स्तोत्रैर्वेदमयैर्देवंतुष्टावपरयागिरा ॥ ४५ ॥ प्रसन्नस्तुतदारुद्रोरावणंलोकरावणम् ॥ त्यक्त्वापंपासरस्तीरेनिवासंकृतवान्बली ॥ ४६ ॥ स्थाणुभूतःस्थितस्तत्रस्थाणुर्नामततोऽभवत् ॥ हन्यमानंसुरान्मुख्यान्रावणंलोकरावणम्॥४७॥ हन्यतेमुष्टिभिर्योनहनुमानितिविश्रुतः ॥ तपसातस्यकीशस्यप्रसन्नोभगवान्विधिः ॥ ४८ ॥ नम्रधीर्वचनंप्राहशृणुरुद्रतपोनिधे ॥ वैवस्वतेऽन्तरेप्राप्तेचाष्टाविंशत्तमेयुगे ॥ ४९ ॥ त्रेतायाःपूर्वचरणेरामस्साक्षाद्भविष्यति ॥ तस्यभक्तिंचसंप्राप्यकृतकृत्योभविष्यसि ॥ ५० ॥ इतिचोक्त्वाददौतस्मैचंद्रंभाद्रप्रकाशकम् ॥ रावणायप्रियांरम्यांददौमन्दोदरींविधिः ॥ ५१ ॥ नैर्ऋतस्यैवदिक्पालस्सबभूवचरावणः ॥ अल्पायुर्मरणंप्राप्तोरामेणहरिरूपिणा ॥ ५२ ॥

॥ सूतउवाच ॥

॥ इतिश्रुत्वासहनुमानयोनिःकदलीवने ॥ देहभूतोमहींप्राप्तोबालशर्मेतिविश्रुतः ॥ ५३ ॥ पुरींकाशींसमायातोयत्रवैमणिकर्णिका ॥ रामपक्षेबालशर्माशिवपक्षेतुशंकरः ॥ ५४ ॥ मासमात्रंचशास्त्रार्थस्तयोश्चासीन्महोत्तमः ॥ शंकराचार्ययतिनाबालशर्मापराजितः॥५५॥ शिष्योभूत्वाचतत्रैवगुरुसेवापरोऽभवत् ॥ यश्चकारतंत्रमंत्रंसर्वजातिकथामयम् ॥५६॥

॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेअघोरपंथिभैरवहनुमज्जन्मरुद्रमाहात्म्यबालशर्मसमुत्पत्तिवर्णनोनामत्रयोदशोऽध्यायः ॥ १३ ॥

बृहस्पतिरुवाच ॥ इदंदृश्यंयदानासीत्सदसदात्मकंचयत् ॥ तदाक्षरमयंतेजोव्याप्तरूपमचिंत्यकम् ॥ १॥ नचस्थूलंनचसूक्ष्मंशीतंनोष्णंचतत्परम् ॥ आदिमध्यान्तरहितमनागाकारवर्जितम् ॥ २ ॥ योगिदृश्यंपरंनित्यंशून्यभूतंपरात्परम् ॥ एकावैप्रकृतिर्मायारेखायातदधःस्मृता ॥ ३ ॥ महत्तत्वमयीज्ञेयातदधश्चोर्ध्वरेखकाः ॥ रजस्सत्वतमो

भूताओमित्येवसुलक्षणम् ॥ ४ ॥ तत्सद्ब्रह्मपरंज्ञेयंयत्रप्राप्यपुनर्भवः ॥ कियताचैवकालेनतस्येच्छासमपद्यत ॥ ५ ॥ अहंकारस्ततोजा
तस्ततस्तन्मात्रकाःपराः ॥ पंचभूतान्यतोप्यासञ्ज्ञानविज्ञानकान्यतः ॥६॥ द्वाविंशज्जडभूतांश्चदृष्ट्वास्वेच्छामयोविभुः ॥ द्वंद्वभूतश्चसगुणो
बुद्धिर्जीवस्समागतः ॥ ७ ॥ पूर्वार्द्धात्सगुणःसोवैनिर्गुणश्चपरार्द्धतः ॥ ताभ्यांगृहीतंतत्सर्वंचैतन्यमभवत्ततः ॥ ८॥ सविराडितिसंज्ञोवैजीवो
जातस्सनातनः॥विराजोनाभितःजातःपद्मंतच्छतयोजनम्॥९॥पद्माच्चकुसुमंजातंयोजनायाममुत्तमम् ॥तत्पद्मकुसुमाज्जातोविरंचिःकमला
सनः॥१०॥द्विभुजस्सचतुर्वक्त्रोद्विपादोभगवान्विधिः॥ज्ञेयःसप्तवितत्यंगोमहच्चिंतामवाप्तवान्॥११॥कोऽहंकस्मात्कुतआयातःकामेजननीको
मेतातः॥इत्यर्थिचिंतयतंस्तद्दिदेवंशब्दमहत्त्वमयेनसआह॥१२॥तपश्चैवतुकर्तव्यंसंशयास्थापनुत्तये ॥तमाकर्ण्यविधिस्साक्षात्तपस्तेपेमहत्त
रम्॥१३॥सहस्राब्दंप्रयत्नेनध्यात्वाविष्णुंसनातनम्॥चतुर्भुजंयोगगम्यंनिर्गुणंगुणविस्तरम् ॥१४॥ समाधिनिष्ठोभगवान्बभूवकमलासनः ॥
एतस्मिन्नंतरेविष्णुर्बालोभूत्वाचतुर्भुजः॥१५॥श्यामांगोबलवानस्त्रीदिव्यभूषणभूषितः॥ब्रह्मणोऽङ्केहरिस्तस्थौयथाबालःपितुःस्वयम् ॥१६॥
तदाप्रबुद्धश्चविधिस्तंदृष्ट्वामोहमागतः ॥ वत्सवत्सेतिवचनंहरिःप्राहप्रसन्नधीः ॥ १७ ॥ विहस्याहतदाविष्णुरहंब्रह्मन्पितातव ॥
तयोर्विवदतोरेवंरुद्रोजातस्तमोमयः ॥ १८ ॥ ज्योतिर्लिंगश्चभयदोयोजनानंतविस्तरः ॥ हंसरूपंतदाब्रह्मावाराहोभगवान्प्रभुः ॥ १९ ॥
शताब्दंतौप्रयत्नेनजातौचोर्ध्वमधःक्रमात् ॥ लज्जितौपुनरागत्यतदातुष्टुवतुर्मुदा ॥ २० ॥ ताभ्यांस्तुतोहरःसाक्षाद्भवोनाम्नासमागतः ॥
कैलासानिलयंकृत्वासमाधिस्थोबभूवह ॥ २१ ॥ जातंपंचयुगंतत्रदिव्यंरुद्रस्ययोगिनः ॥ एतस्मिन्नंतरेघोरोदानवस्तारकासुरः ॥ २२ ॥
सहस्राब्दंतपःकृत्वाब्रह्मणोवरमाप्तवान् ॥ भववीर्योद्भवःपुत्रःसतेमृत्युंकरिष्यति ॥ २३ ॥ इतिमत्वासुराञ्जित्वामहेन्द्रश्चतदाभवत् ॥
तेसुराश्चैवकैलासंगत्वारुद्रंप्रतुष्टुवुः ॥ २४ ॥ वरंब्रूहीतिवचनंसुरान्प्राहतदाशिवः ॥ तेतुश्रुत्वाप्रणम्योचुर्वचनंनम्रकन्धराः ॥ २५ ॥
भगवन्ब्रह्मणादत्तोवरोवैतारकायच ॥ शिववीर्योद्भवःपुत्रःसतेमृत्युर्भविष्यति ॥ २६ ॥ अतोऽस्मान्रक्षभगवन्विवाहंकुरुशंकर ॥
स्वायंभुवेऽन्तरेपूर्वंदक्षश्चासीत्प्रजापतिः ॥ २७ ॥ षष्टिकन्यास्ततोजातास्तासांमध्येसतीवरा॥वर्षमात्रंभवन्तंसापार्थिवैःसमपूजयत् ॥२८॥

तस्यैत्वयावरंदत्तंसाबभूवतवप्रिया ॥ ततिपत्रायाकृतानिंदाभवतोऽज्ञानचक्षुषा ॥ २९ ॥ तस्यदोषात्सतीदेवीतत्याजस्वंकलेवरम् ॥
सतीतेजस्तदादिव्यंहिमाद्रौघोरमागमत् ॥ ३० ॥ पीडितस्तेनगिरिराड्बभूवस्मरविह्वलः ॥ पित्रीश्वरंसतुष्टावकामव्याकुलचेतनः ॥३१॥
अर्यमातुतदातुष्टोददौतस्मैसुतांनिजाम् ॥ मेनांमनोहरांशुद्धांसदृष्ट्वाहर्षितोऽभवत् ॥ ३२ ॥ नररूपंशुभंकृत्वादेवतुल्यंचतात्प्रियम् ॥
सरेमेचतयासार्द्धंचिरंकालंमहावने ॥ ३३ ॥ गर्भोजातस्तदारम्योनववर्षांतमुत्तमः ॥ कन्याजातातदासुभ्रूगौरीगौरमयीसती ॥ ३४ ॥
जातमात्रेचसाकन्याबभूवनवहायिनी ॥ तुष्टावशंकरंदेवंभवन्तंतपसाचिरम् ॥ ३५ ॥ शताब्दंचजलेमग्नाशताब्दंवह्निसंस्थिता ॥
शताब्देचास्थितावायौशताब्दंनभसिस्थिता ॥ ३६ ॥ शताब्दंचास्थिताचंद्रेशताब्दंरविमण्डले॥ शताब्दंगर्भभूम्यांचस्थितासागिरिजासती
॥३७॥शताब्दंचमहत्तत्वेगत्वायोगबलेनसा ॥ भवन्तंशंकरंशुद्धंतत्रदृष्ट्वास्थिताध्रुवे ॥ ३८ ॥ त्रिशताब्दमतोजातंतस्मात्त्वंपार्वतींशिवाम्॥
वरंदेहिप्रसन्नात्मामहादेवनमोऽस्तुते ॥ ३९ ॥ इतिश्रुत्वावचोरम्यंशंकरोलोकशंकरः ॥ देवानाहतदावाक्यमयोग्यंवचनंदिवः ॥ ४० ॥
मत्तोज्येष्ठाश्चयेरुद्राःकुमारव्रतधारिणः ॥ मृगव्याधादयोमुख्यादशज्योतिस्समुद्भवाः ॥ ४१ ॥ अहंतेषामवरजोभवोनामैवयोगराट् ॥
मायारूपांशुभांनारींकथंगृह्णामिलोकदाम्॥४२॥नारीभगवतीसाक्षात्तयासर्वमिदंततम् ॥ मातृरूपातुसाज्ञेयायोगिनांलोकवासिनाम्॥४३॥
अहंयोगीकथंनारींमातरंवरितुंक्षमः ॥ तस्माददंभवदर्थेस्ववीर्यमाददाम्यहम् ॥ ४४ ॥ तद्वीर्यंभगवान्वह्निःप्राप्यकार्यंकरिष्यति ॥
इत्युक्त्वावह्नयेदेवोददौवीर्यमनुत्तमम् ॥ ४५ ॥ स्वयंतत्रसमाधिस्थोबभूवभगवान्हरः ॥ तदाशक्रादयोदेवावह्निनासहनिर्ययुः ॥ ४६ ॥
सत्यलोकंसमागत्याब्रुवन्सर्वंप्रजापतिम् ॥ श्रुत्वातत्कारणंसर्वंस्वयंभूश्चतुराननः ॥ ४७ ॥ नमस्कृत्यपरंब्रह्मकृष्णध्यानपरोऽभवत् ॥
ध्यानमार्गेणभगवान्गत्वाब्रह्मापरंपदम् ॥ ४८ ॥ हेतुंतद्वर्णयामासयथाशंकरभाषितम् ॥ श्रुत्वाविहस्यभगवान्स्वमुखात्तेजउत्तमम् ॥४९॥
समुत्पाद्यततोजातःपुरुषोरुचिराननः ॥ ब्रह्माण्डस्यच्छवियोंवैस्थितातस्यकलेवरे ॥ ५० ॥ प्रद्युम्नोनामविख्यातंतस्यजातंमहात्मनः ॥
तेनसार्द्धंतदाब्रह्मासंप्राप्यस्वंकलेवरम् ॥ ५१ ॥ ददौतेभ्यस्सपुरुषंप्रद्युम्नंशंबरार्तिदम् ॥ तेजसातस्यदेवस्यनरानार्यस्समन्ततः ॥ ५२ ॥

एकीभूतास्त्रिलोकेषुबभूवुःस्मरपीडिताः॥स्थावराःसौम्यभूतावैतेतुकामाग्निपीडिताः॥५३॥सरिद्भिश्चलताभिश्चमिलितास्संबभूविरे॥ब्रह्माण्डे
शःशिवःसाक्षाद्रुद्रःकालाग्निसन्निभः॥५४॥त्रिनेत्रात्तेजउत्पाद्यशमयामासतद्व्यथाम्॥तदाक्रुद्धःसकृष्णांगोगृहीत्वाकौसुमंधनुः॥५५॥ दिव्या
न्पंचशरान्घोरान्महादेवायबंधवे॥उच्चाटनेनबाणेनगन्ताभूल्लोकशंकरः ॥५६॥ वशीकरणबाणेननारीवश्यःशिवोऽभवत् ॥ स्तंभनेनमहादेवः
शिवापार्श्वेस्थिरोऽभवत्॥५७॥आकर्षणेनभगवाञ्छिवाकर्षणतत्परः॥ मारणेनैवबाणेनमूर्छितोऽभून्महेश्वरः॥५८॥एतस्मिन्नंतरेदेवीमहतत्त्वे
स्थिताशिवा ॥ मूर्छितंशिवमालोक्यतत्रैवान्तरधीयत ॥ ५९ ॥ तदोत्थायमहादेवोविललापभृशंमुहुः ॥ हाप्रियेचंद्रवदनेहाशिवेचघटस्त
नि ॥ ६० ॥ हाउमेसुंदराभेचपाहिमांस्मरविह्वलम् ॥ दर्शनंदेहिरंभोरुदासभूतोऽस्मिसांप्रतम् ॥ ६१ ॥ एवंविलप्यमानंतंगिरिजायोगिनी
स्वयम् ॥ समागत्यवचःप्राहनत्वातंशंकरंप्रियम् ॥ ६२ ॥ कन्याहंभगवन्देवमातृपित्रनुसारिणी ॥ तयोस्सकाशाद्भगवन्ममपाणिंगृहाण
भोः ॥ ६३ ॥ तथेतिमत्वासशिवःप्रद्युम्नशरपीडितः ॥ सप्तर्षीन्प्रेषयामासतेतुगत्वाहिमाचलम् ॥ ६४ ॥ संबोध्यचविवाहस्यविधिंचक्रुर्मुदा
न्विताः ॥ ब्रह्माण्डेयेस्थितादेवास्तेषांस्वामीमहेश्वरः ॥ ६५ ॥ विवाहेतस्यसंप्राप्तेसर्वेदेवास्समाययुः ॥ अनन्तांश्चगणांश्चैवसुरान्दृष्ट्वाहिमा
चलः ॥ ६६ ॥ गिरिजाशरणंप्राप्यतस्थौपर्वतराट्स्वयम् ॥ तदातुपार्वतीदेवीनिधीन्सिद्धीःसमन्ततः ॥ ६७ ॥ चकारकोटिशस्तत्रबहुरू
पासनातनी ॥ दृष्ट्वातद्विस्मितादेवाब्रह्मणासहहर्षिताः ॥ ६८ ॥ तुष्टुवुःपार्वतींदेवींनारीरत्नंसनातनीम् ॥ देवाऊचुः ॥ उवितकैचमालक्ष्मी
र्बहुरूपाविदृश्यते ॥ ६९ ॥ उमातस्मात्त्वतेनामनमस्तस्यैनमोनमः ॥ कतिचिदयनान्येवब्रह्माण्डेऽस्मिञ्छिवेतव ॥ ७० ॥ कात्या
यनीहिविज्ञेयानमस्तस्यैनमोनमः ॥ गौरवर्णाच्चवैगौरीश्यामवर्णाच्चकालिका ॥ ७१ ॥ रक्तवर्णाद्धैमवतीनमस्तस्यैनमोनमः ॥ भवस्यदयि
तात्वंवैभवानीरुद्रसंयुता ॥ ७२ ॥ दुर्गात्वंयोगिदुष्प्राप्यानमस्तस्यैनमोनमः ॥ नान्तंजग्मुर्वयंतेवैचण्डिकानामविश्रुता ॥ ७३ ॥ अंबात्वं
मातृभूतानांनमस्तस्यैनमोनमः ॥ इतिश्रुत्वास्तवंतेषांवरदासर्वमंगला ॥ ७४ ॥ देवानुवाचमुदितादैत्यभीतिंहरामिवः ॥ स्तोत्रेणानेनसं
प्रीताभवामिजगतीतले ॥ ७५ ॥ इत्युक्त्वाशंभुसहिताकैलासंगुह्यकालयम् ॥ गुहायांमिथुनीभूयसहस्राब्दंमुमोदवै ॥ ७६ ॥ एतस्मिन्नंतरे

देवाभीरुकालोकनाशनात् ॥ ब्रह्माणंचपुरस्कृत्यतुष्टुवुर्गिरिजापतिम् ॥ ७७ ॥ लज्जितौतौतदातत्रपश्चात्तापंहिचक्रतुः ॥ महान्क्रोधस्तयो
श्चासीत्तेनवैदुद्रुवुःसुराः ॥ ७८ ॥ प्रद्युम्नोबलवाँस्तत्रसंतस्थौगौरिवाचलः ॥ रुद्रकोपाग्निनादग्धोबभूवबलवत्तरः ॥ ७९ ॥ प्रद्युम्नःस्थलरूपं
चत्यक्त्वाभस्ममयंतदा ॥ सूक्ष्मदेहमुपागम्यविश्रुतोऽभूदनंगकः ॥ ८० ॥ यथापूर्वंतथैवासीत्कायंकृत्वास्मरोविभुः ॥ स्थूलरूपारतिर्दे
वीशताब्दंशंकरंपरम् ॥ ८१ ॥ ध्यानेनाराधयामासगिरिजावल्लभंव्रतम् ॥ तदाददौवरंदेवस्तस्यैरत्यैसनातनः ॥ ८२ ॥ रतिदेविशृणुत्वंवै
लोकानांहृत्सुजायसे॥युवावयसिसंप्राप्तेनृणांदेहेःपतिंस्वकम्॥८३॥भजिष्यसिमदाधैनप्रद्युम्नंकृष्णसंभवम् ॥ स्वारोचिषान्तरःकालोवर्ततेचा
द्यसुप्रियः॥८४॥वैवस्वतेऽन्तरेप्राप्तेह्यष्टाविंशत्तमेयुगे॥द्वापरान्तेचभगवान्कृष्णःसाक्षाज्जनिष्यति ॥८५॥ तदातस्यसुतंदेवंप्रद्युम्नंमेरुमूर्द्धनि॥
भजिष्यसिसुखंरम्येविपिनेनन्दनेचिरम्॥८६॥अन्येषुद्वापरान्तेषुस्वर्णगर्भोहितत्पतिः॥जन्मवान्वर्ततेभूमौयथाकृष्णस्तथैवसः ॥८७॥मध्या
ह्नेचैवसंध्यायांब्रह्मणोऽव्यक्तजन्मनः॥कल्पेकल्पेहरिस्साक्षात्करोतिजनमंगलम्॥८८॥इत्युक्त्वाभगवाञ्छंभुस्तत्रैवान्तरधीयत ॥ राजाबभूव
रुद्राणीगिरिजावल्लभोभवः॥८९॥सूतउवाच॥इतिश्रुत्वाभवःसाक्षात्स्वमुखात्स्वांशमुत्तमम्॥समुत्पाद्यतदाभूमौगोदावर्यांबभूवह ॥९०॥ आ
चार्यशर्मणोगेहेपुत्रोजातोभवांशकः ॥ रामानुजस्सवैनाम्नानुजोऽभूद्रामशर्मणः॥९१॥एकदारामशर्मावैपतंजलिमतोस्थितः ॥ तीर्थात्तीर्थान्तरं
प्राप्तःपुरींकाशींशिवप्रियाम् ॥ ९२ ॥ शंकराचार्यमागम्यशतशिष्यसमन्वितः ॥ शास्त्रार्थंकृतवान्रम्यंकृष्णपक्षोहरिप्रियः ॥ ९३ ॥ शंक
राचार्यविजितोलज्जितोनिशिभीरुकः ॥ स्वगेहंपुनरायातःशांकरैर्वांशरैर्हतः ॥ ९४ ॥ रामानुजस्तुतच्छ्रुत्वासर्वशास्त्रविशारदः ॥ भ्रातृ
शिष्यैश्चसहितःपुरींकाशींसमाययौ ॥ ९५ ॥ वादोवेदान्तशास्त्रेचतयोश्चासीन्महात्मनोः ॥ शंकरःशिवपक्षश्चकृष्णपक्षस्सवैद्विजः ॥९६॥
मासमात्रेणवेदान्तेदर्शितस्तेनवैहरिः ॥ वासुदेवस्सवैनामसच्चिदानंदविग्रहः ॥ ९७ ॥ वसुदेवस्सवैज्ञेयोवसुष्वंशेनदीव्यति ॥ वसुदेवस्सवै
ब्रह्मातस्यसारोहियःस्मृतः ॥ ९८ ॥ वासुदेवोहरिस्साक्षाच्छिवपूज्यःसनातनः ॥ शंकरोलज्जितस्तत्रभाष्यशास्त्रेसमागतः ॥ ९९ ॥ पक्ष
मात्रंशिवैस्सूत्रैर्वर्णयामासवैशिवम् ॥ रामानुजेनतत्रैवभाष्येसंदर्शितोहरिः ॥ १०० ॥ गोविन्दोनामविख्यातोवैयाकरणदेवता ॥ गांपरां

विन्दतेयस्मिन्गोविन्दोनामवैहरिः ॥ १०१ ॥ गिरीशस्तुनगोविन्दोगिरिणामीश्वरोहिसः ॥ गोपालस्तुनवैरुद्रोगवारूढःप्रकीर्तितः ॥१०२॥
ज्ञेयःपशुपतिःशंभुर्गोपतिर्नैवविश्रुतः ॥ लज्जितःशंकराचार्योमीमांसाशास्त्रमागतः ॥ १०३ ॥ तयोर्दशदिनंशास्त्रेविवादस्सुमहानभूत् ॥
यस्तुवैयज्ञपुरुषोरामानुजमतप्रियः ॥ १०४ ॥ विच्छिन्नःशंकरेणैवमृगभूतःपराजितः ॥ आचारप्रभवोधर्मोयज्ञदेवेननिर्मितः ॥ १०५ ॥
भ्रष्टाचारस्तदाजातोयज्ञेदक्षप्रजापतेः ॥ इतिरामानुजःश्रुत्वावचनंप्राहनम्रधीः ॥ १०६ ॥ कर्मणेजनितोयज्ञोविश्वपालनहेतवे ॥
कर्मब्रह्मोद्भवंविद्धिब्रह्माक्षरसमुद्भवम् ॥ १०७ ॥ अक्षरोऽयंशिवःसाक्षाच्छब्दब्रह्मणिसंस्थितः ॥ पुराणपुरुषोयज्ञोज्ञेयोऽक्षरकरो
भुवि ॥ १०८ ॥ अक्षरात्सतुवैश्रेष्ठःपरमात्मासनातनः ॥ अक्षरेणनवैतृप्तातृप्तोभूद्यज्ञकर्मणि ॥ १०९ ॥ नाम्नासयज्ञपुरुषोवेदेलोकेहि
विश्रुतः ॥ प्रपौत्रस्यतदावृद्धिंदृष्ट्वास्पर्द्धातुरःशिवः ॥ ११० ॥ मृगभूतश्चरुद्रोऽसौदिव्यबाणैरतर्पयत् ॥ समर्थोयज्ञपुरुषोज्ञात्वागुरुमयं
शिवम् ॥ १११ ॥ पलायनपरोभूतोधर्मस्तेनमहान्कृतम् ॥ लज्जितःशंकराचार्योन्यायशास्त्रेसमागतः ॥ ११२ ॥ भवतीतिभवोज्ञेयो
मृडतीतिसवैमृडः ॥ लोकान्भरतियोदेवःसकर्ताभर्गएवहि ॥ ११३ ॥ हरतीतिहरोज्ञेयःसरुद्रःपापरावणः ॥ स्वयंकर्तास्वयंभर्तास्वयंह
र्ताशिवःस्वयम् ॥ ११४ ॥ शिवाद्विष्णुर्महीजातोविष्णोर्ब्रह्माचपद्मभूः ॥ इतिश्रुत्वातुवचनंप्राहरामानुजस्तदा ॥ ११५ ॥ धन्योऽयंभगवा
ञ्छंभुर्यस्यायंमहिमापरः ॥ सत्यंसत्यंममाज्ञेयंकर्ताकारयिताशिवः ॥ ११६ ॥ रामनामपरंनित्यंकथंशंभुर्जपेद्धरिम् ॥ अनंताःसृष्टयःसर्वा
उद्भूतायस्यतेजसा ॥ ११७ ॥ अनंतःशेषतःशेषोरमन्तेयोगिनोहितम् ॥ सचवैमत्प्रभोर्धामसच्चिदानंदविग्रहः ॥ ११८ ॥ इतिश्रुत्वातदा
वाक्यंलज्जितःशंकरोऽभवत् ॥ योगशास्त्रेपरोदेवःकृष्णस्तेनैवदर्शितः ॥ ११९ ॥ कालात्माभगवान्कृष्णोयोगेशोयोगतत्परः ॥ सांख्य
शास्त्रेचकपिलस्तस्मैतेनैवदर्शितः ॥ १२० ॥ कंवीर्यंपपीयतेयोवैसकपिस्तंचलातियः ॥ कपिलस्सतुविज्ञेयःकपीरुद्रःप्रकीर्तितः ॥ १२१ ॥
कपिलोभगवान्विष्णुःसर्वज्ञःसर्वरूपवान् ॥ तदातुशंकराचार्योलज्जितोनम्रकन्धरः ॥ १२२ ॥ शुक्लांबरधरोभूत्वागोविन्दोनामनिर्मलम् ॥
जजापहृदिशुद्धात्माशिष्योरामानुजस्यवै ॥ १२३ ॥ इतितेरुद्रमाहात्म्यंप्रसंगेनापिवर्णितम् ॥ धनवान्पुत्रवान्वाग्मीभवेद्यःशृणुयादिदम् १२४ ॥
इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्यायेरुद्रमाहात्म्यवर्णनेरामानुजोत्पत्तिवर्णनंनामचतुर्दशोऽध्यायः ॥ १४ ॥ छ ॥

सूतउवाच ॥ भृगुवर्यमहाभागशृणुत्वंजीववर्णितम् ॥ पवित्रंवसुमाहात्म्यंसर्ववस्तुसुखप्रदम् ॥ १ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ वैवस्वतेऽ
न्तरेप्राप्तेचाद्येसत्ययुगेशुभे ॥ इलवलातामसीशक्तिःप्रियाविश्रवसोमुनेः ॥ २ ॥ शिवमाराधयामाससतीसापार्थिवार्चनैः ॥ एतस्मिन्नंतरेजा
तोदीक्षितान्वयसंभवः ॥ ३ ॥ यक्षशर्मामहाधूर्तोयक्षिणीपूजनेरतः ॥ तस्यमित्रस्नुषासुभ्रूरमितातेनपापिना ॥ ४ ॥ तेनदोषेणविप्रोऽसौ
कुष्ठभूतस्तदाभवत् ॥ कुष्ठभूतंद्विजंत्यक्त्वायाक्षिणीमंत्रवत्सला ॥ ५ ॥ शिवलोकंययौदेवीकैलासंगुह्यकालयम् ॥ क्षुधातुरोयक्षशर्माशिव
रात्रेमहोत्तमे ॥ ६ ॥ दर्शितंपूजनंतेनयोषिद्भयश्चोपदेशतः ॥ प्रभातेसमनुप्राप्तेपारणंकृतवान्द्विजः ॥ ७ ॥ मरणंप्राप्तवान्कुष्ठीतत्रैवाशिवमं
दिरे ॥ तेनपुण्यप्रभावेनराजासीत्करणाटके ॥ ८ ॥ राजराजइतिख्यातोमण्डलीकोनृपोऽभवत् ॥ शिवार्चनंमंगलदंगेहेगेहेदिनेदिने ॥ ९ ॥
ब्राह्मणैःकारयामासराजराजोमहाबलः ॥ शताब्दंभूतलेराज्यंकृतंतेनमहात्मना ॥ १० ॥ राज्याधिकारंश्रेष्ठस्यसुतस्यप्रददौनृपः ॥ ततः
काशीपुरींप्राप्यशिवंतुष्टावपूजनैः ॥ ११ ॥ त्रिवर्षान्तेमहादेवोज्योतिर्लिंगोबभूवह ॥ राजराजेश्वरोनामप्रसिद्धोऽभूच्छिवःस्वयम् ॥ १२ ॥
सनृपःपावितस्तेनत्यक्त्वाप्राणाँस्तदास्वयम् ॥ इलवलागर्भमागम्यपुत्रोऽभूच्छुभलक्षणः ॥ १३ ॥ जातःकुत्सितवेलायांरात्रौघोरतमोवृते ॥
कुबेरइतितन्नामप्रसिद्धमभवद्भुवि ॥ १४ ॥ तपसातोषयामाससबालःपरमेष्ठिनम् ॥ तस्मैब्रह्मातदागत्यलंकांनामपुरींशुभाम् ॥ १५ ॥
सुवर्णरचितांरम्यांकारयित्वाददौप्रभुः ॥ तिस्रःकोट्यःस्मृतायक्षालोककार्यपरायणाः ॥ १६ ॥ तेषांस्वामीसवैचासीद्यक्षराडितिविश्रुतः ॥
किन्नरावहुरूपाश्चतदादेशनिवासिनः ॥ १७ ॥ बलिभिःपूजयामासुःकिन्नरेशस्तदास्वयम् ॥ गुह्यकानरभावस्थादिव्यमौल्यप्रकारिणः ॥ १८ ॥
तेषांस्वामीसवैचासीत्कुबेरोभगवान्स्वयम् ॥ गिरिभ्योबहुरत्नानिगृहीत्वालोकहेतवे ॥ १९ ॥ रक्षोभिःप्रेषयामासगेहेगेहेजनेजने ॥ धर्मका
र्यकरायेतुनरावेदपरायणाः ॥ २० ॥ तेषांकोशाश्वतेनैवपूरितानरधर्मिणा ॥ येतुलोभपराधूर्तानराःसंचयकारिणः ॥ २१ ॥ तेषांराजासभ
गवान्द्रव्यदोराक्षसेश्वरः ॥ शवभूतानरायेवैदाहितावह्निकर्मणि ॥ २२ ॥ अग्निद्वारेणतन्मांसंभुजंतेराक्षसाःसदा ॥ एभिर्विभूतिभिर्युक्तंद

ष्ट्वातंरावणोबली ॥ २३ ॥ जित्वानिष्कास्यलंकायाःस्वयंराजाबभूवह ॥ कुबेरोदुःखितस्तत्रशंकरंदुःखनाशनम् ॥ २४ ॥ शरण्यंशरणंप्रा
प्तस्तदातुभगवान्हरः ॥ तेनमैत्रीकृतारम्याकुबेरेणसमंदधौ ॥ २५ ॥ अलकावतीनामपुरीरचिताविश्वकर्मणा ॥ सतांमंगलदातत्रकुबेरोह
र्षमाप्तवान् ॥ २६ ॥ इतिश्रुत्वातदनुजोरावणोलोकरावणः ॥ कैलासंगिरिमागम्यनलकूबरभोगिनीम् ॥ २७ ॥ दृष्ट्वापुलस्त्यतनयःप
स्पर्शमधुराननाम् ॥ तदापतिव्रतादेवीसुप्रभाप्राहतंरुषा ॥ २८ ॥ स्नुषेवतवपापात्मन्वर्तेऽहंलोकरावण ॥ कुष्ठोभवेत्तवतनौतेनदोषे
णदारुणः ॥ २९ ॥ त्वयाहतंविमानंयज्ज्येष्ठबंधोश्चपुष्पकम् ॥ निष्फलत्वमवाप्नोतियथाचौरैर्हृतंधनम् ॥ ३० ॥ इतिशापान्वितो
वीरस्तथाभूतःसुदुःखितः ॥ शिवमाराधयामासकैलासेपार्थिवार्चनैः ॥ ३१ ॥ द्वादशाब्दमतोजातंपूजनंतस्यकुर्वतः ॥ सरुद्रोनप्रस
न्नोऽभूत्तदादुःखीसरावणः ॥ ३२ ॥ जुहावववह्नौक्रमतःशिरांसिपुरुषादनः ॥ स्थूलदेहंचसकलंसरुद्रायतदार्पयत् ॥ ३३ ॥ भस्म
भूतस्तदारक्षोनमृतोब्रह्मणोवरात् ॥ पावकादुद्भवंचान्यद्देहंप्राप्यमनोहरम् ॥ ३४ ॥ शिवायवायुरूपायददौस्वाङ्गंपुनर्बली ॥ पिशा
चैर्वायुरूपैश्चभक्षितःसचरावणः ॥ ३५ ॥ नममारवराद्घोरोवायोर्जातंकलेवरम् ॥ गृहीत्वासचरुद्रायनभोभूतायचार्पयत् ॥ ३६ ॥
तदामातृगणैर्घोरैर्भक्षितोऽभूत्सरावणः ॥ ब्रह्मणोवरदानेननपंचत्वमवाप्तवान् ॥ ३७ ॥ नभसश्चोद्भवंदेहंशून्यभूतंसरावणः ॥
पुनःप्राप्यशिवायैवसोऽहंभूतायचार्पयत् ॥ ३८ ॥ तदाप्रसन्नोभगवान्रुद्रोऽहंकारदेवता ॥ कुबेरस्ययथामित्रोरावणस्यतथाभवत् ॥ ३९ ॥
एकैकेनैवशिरसाकोटिकोटिशिरोऽभवत् ॥ वज्रभूतमभूद्देहंदेवदेवप्रसादतः ॥ ४० ॥ एवंसरावणोघोरोबभूववरदर्पितः ॥
देवदैत्यमनुष्याणांपन्नगानांचयोषितः ॥ ४१ ॥ नवोढारमिताश्चासन्ब्रह्मांडेतेनरक्षसा ॥ पतिव्रतामतंरम्यंवेदधर्मंसनातनम् ॥ ४२ ॥
भग्नीभूतमभूत्सर्वंसर्वलोकेषुरक्षसा ॥ क्षुत्तृड्भ्यांवर्जितोनित्यंशंकरेणैवतार्पितः ॥ ४३ ॥ अन्येसुराविनायज्ञैःक्षुधिताःसंबभूविरे ॥
ब्रह्माणंचपुरस्कृत्यक्षीराब्धौप्राप्यदुःखिताः ॥ ४४ ॥ एकीभूयसुरास्सर्वेतुष्टुवुःपरमेश्वरम् ॥ तदाप्रसन्नोभगवान्सगुणोनिर्गुणोहरिः ॥ ४५ ॥
उवाचसकलान्देवान्भक्तिनम्रान्यतेन्द्रियान् ॥ कल्पाख्येश्वेतवाराहेनेदृशःकोपिदानवः ॥ ४६ ॥ बभूवचयथैवासौरावणोलोकरावणः ॥

पुरामार्कंडकल्पेचानिशुंभःशुंभएवहि ॥ ४७ ॥ यथाजातौतथाघोरौकुंभकर्णश्चरावणः ॥ रावणाबहवश्चासन्हीदशानैवरावणः ॥ ४८ ॥
अहंब्रह्मातथारुद्रोयतोजातास्सनातनाः ॥ सातुवैप्रकृतिर्मायाकोटिविश्वविधायिनी ॥ ४९ ॥ देवसंकटघोरेषुसमर्थोदेवराट्स्वयम् ॥
शक्रविघ्नेसमुद्भूतेसमर्थोभगवान्हरः ॥ ५० ॥ रुद्राणांसंकटेघोरेसमर्थोऽहंसदाभुवे ॥ मयिसंकटसंप्राप्तेसमर्थोभगवान्हरिः ॥ ५१ ॥
ब्रह्मणःपरमेदुःखेसमर्थाप्रकृतिःपरा ॥ मधुकैटभौपुराजातौदानवौलोकविश्रुतौ ॥ ५२ ॥ ताभ्यांदुःखमयोब्रह्मातुष्टावजगदंबिकाम् ॥
तदातस्याबलेनाहंजघानमधुकैटभौ ॥ ५३ ॥ अतोमदाज्ञयासर्वेविष्णुमायांसनातनीम् ॥ शरण्यांशरणंप्राप्यकुर्वामजगतोहितम् ॥५४॥
इतिश्रुत्वातुतेदेवास्तुष्टुवुःप्रकृतिंपराम् ॥ प्रसन्नाचतदादेवीब्रह्मज्योतिर्मयीशिवा ॥ ५५ ॥ द्विधाभूतामहींप्राप्तासीतारामौपरापरौ ॥
त्रिलिंगजननीसीतातयातदपरंद्विधा ॥५६॥ कृतंतौचद्विधाजातौशब्दार्थौरामलक्ष्मणौ ॥ शब्दमात्रसमूहानांस्वामीरामस्सनातनः ॥५७॥
अर्थमात्रसमूहानामीशःक्लीबस्सलक्ष्मणः ॥ यस्यवज्रमयंवीर्यंब्रह्मचर्यंदृढंतथा ॥ ५८ ॥ सक्लीबश्चततोऽन्येवैक्लीबभूताहिवानराः ॥
परातुप्रकृतिस्सीतातयोर्मंगलदायिनी ॥ ५९ ॥ भूमिमध्यात्समुद्भूताह्ययोनिर्योनिकारिणी ॥ सहस्रंरामरामेतिजपितंयेनधीमता ॥ ६० ॥
सीतानाम्नाचतस्यैवफलंज्ञेयंचतत्समम् ॥ योनिभूतौचतौदेवौराधेयस्यगृहेगतौ ॥ ६१ ॥ इदंदृश्यंयदानासीत्तामसीप्रकृतिस्तदा ॥
अक्षराशेषभूताचस्वयंजातात्रिधेक्षया ॥ ६२ ॥ पूर्वशेषस्सवैरामोमध्येक्लीबस्सलक्ष्मणः ॥ अपरौपूर्वतोजातौपुंक्लीबौचपरेश्वरौ ॥
॥ ६३ ॥ परोभागस्तुसादेवीयोगनिद्रासनातनी ॥ अन्यकल्पेषुहेदेवाःक्षीरशायीहरिःस्वयम् ॥ ६४ ॥ रामोऽप्यजस्तथाशेषो
रुद्ररूपस्सलक्ष्मणः ॥ सीताभगवतीलक्ष्मीर्जाताजनकनन्दिनी ॥ ६५ ॥ सुदर्शनश्चभरतोहरेःशंखस्ततोऽनुजः ॥ कल्पाख्येश्वे
तवाराहेरामोजातःपरात्परः ॥ ६६ ॥ प्रद्युम्नोभरतोज्ञेयोनिरुद्धःशत्रुहाप्रभुः ॥ तैश्चसर्वैर्विदलिताराक्षसारावणादयः ॥ ६७ ॥
कीर्तिंस्वकीयांलोकेषुपावनींस्थाप्यसप्रभुः॥पुष्पकंचकुबेरायविमानंचतदाददौ॥६८॥रुद्रसंख्यासहस्राब्दंराज्यंकृत्वापरंययुः ॥सूतउवाच॥
इतिश्रुत्वाकुबेरस्तुप्रथमोवसुदेवता ॥ ६९ ॥ स्वमुखात्स्वांशमुत्पाद्यवैश्ययोनौबभूवह ॥ धरदत्तस्यवैश्यस्यपुत्रोभूत्वामहीतले ॥ ७० ॥

त्रिलोचनस्सवैनाममथुरायांबभूवह ॥ सर्वद्रव्यव्ययंकृत्वानानातीर्थेषुहर्षितः ॥ ७१ ॥ पुरींकाशींसमागम्यरामानंदंचवैष्णवम् ॥
नत्वातद्वश्यमभवच्छिष्योभूत्वात्रिलोचनः ॥ ७२ ॥ स्वगेहंपुनरागत्यसवैश्यश्चाज्ञयागुरोः ॥ रामभक्तिपरश्चासीत्साधुसेवापरायणः ॥७३॥
तदातुभगवान्रामोदासभूतश्चतद्गृहे ॥ स्थितस्त्रयोदशेमासिसर्ववांछितदायकः ॥ ७४ ॥ मणिरत्नहिरण्यानिवासांसिविविधानिच ॥ नाना
व्यंजनयोग्यानिब्राह्मणेभ्यःस्वयंददौ ॥ ७५ ॥ वैष्णवेभ्योयतिभ्यश्चमनोवांछितदायकः ॥ ततस्त्रिलोचनंप्राहभगवान्रावणार्तिहा ॥ ७६ ॥
अहंरामोनवैदासस्तवभक्तिविमोहितः ॥ निवासंकृतवान्गेहेतवप्रियहितेरतः ॥ ७७ ॥ अद्यप्रभृतिभोवैश्यवसामिहृदयेतव ॥ इत्युक्त्वान्त
र्हितोदेवःसवैश्योहर्षमागतः॥७८॥त्यक्त्वाकलत्रंपुत्रंचप्राप्यवैराग्यमुत्कटम्॥उषित्वासरयूतीरेरामध्यानपरोऽभवत्॥७९॥ इति श्रीभविष्ये
महापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेवसुमाहात्म्येत्रिलोचनवैश्योत्पत्तौपंचदशोऽध्यायः ॥ १५ ॥ ७ ॥
॥बृहस्पतिरुवाच॥ ॥ स्वायंभुवेन्तरेपूर्वेध्रुववंशसमुद्भवः ॥ राजाप्राचीनबर्हिश्चबभूवमखकारकः ॥१॥ नारदस्योपदेशेनत्यक्त्वाहिंसामयं
मखम् ॥ ज्ञानवान्वैष्णवोभूत्वादशपुत्रानजीजनत् ॥ २ ॥ प्रचेतानामतेषांवैजातस्तत्त्वैकरूपिणाम् ॥ पितुराज्ञांपुरस्कृत्यजलमध्येतपो
ऽर्थिनः ॥ ३ ॥ रत्नाकरस्यसिंधोश्चमग्नभूताबभूविरे ॥ तेषांतुतपसातुष्टःस्वयंभूश्चतुराननः ॥ ४ ॥ सप्ताब्धिषुचसप्तांश्चसुतान्संस्थाप्यलो
कराट् ॥ रत्नाकरेऽष्टमंपुत्रंनवमंमानसोत्तरे ॥ ५ ॥ दशमंमेरुशाखायांसुतंकृत्वामुमोदह ॥ आपोवहतियोलोकेसआपवइतिस्मृतः ॥ ६ ॥
द्वितीयोवरुणोनामयादसांपतिरप्पतिः ॥ ददौपाशंतदाब्रह्मादैत्यबंधनहेतवे ॥ ७ ॥ पाशीनामततोजातोवरुणस्यमहात्मनः ॥ सतुपूर्व
भवेचासीद्ब्राह्मणःशक्तिपूजकः ॥ ८ ॥ आपवोनामविख्यातोवारुणीपानतत्परः ॥ भद्रकाल्याःप्रियोभक्तोनित्यंपूजनतत्परः ॥ ९ ॥ नाना
रक्तमयैःपुष्पैर्गुंठितांरक्तमालिकाम् ॥ रक्तचंदनसंयुक्तांगृहीत्वामंत्रसंयुतः ॥ १० ॥ भद्रकाल्यैनिवेद्याशुनवार्णवपरोऽभवत् ॥ धूपैर्दी
पैश्चनैवेद्यैस्तांबूलैर्ऋतुजैःफलैः ॥ ११ ॥ पूजयित्वामहालक्ष्मींभद्रकालींसनातनीम् ॥ तिलैःशर्करयायुक्तंमधुनाचहविःस्वयम् ॥ १२ ॥
वह्निद्वारेणसंहुत्यतुष्टावजगदम्बिकाम् ॥ चरित्रंमध्यमंदेव्याविष्णुदेवेननिर्मितम् ॥ १३ ॥ नवार्णेनतेनैवप्रत्यहंजाप्यतत्परः ॥ एवं

वर्षत्रयंजाततंतस्यपूजांप्रकुर्वतः ॥ १४ ॥ प्रसन्नाभूत्तदादेवीवरदासर्वमंगला ॥ वरंब्रूहीतिवचनंतमाहद्विजसत्तमम् ॥ १५ ॥ इति
वाक्यंप्रियंश्रुत्वाद्विजआपवनम्रधीः ॥ तुष्टावदंडवद्भूत्वाभद्रकालींसनातनीम् ॥ १६ ॥ ॥ आपवउवाच ॥ ॥ विष्णुकल्पेपुरा
चासीद्दानवोमहिषासुरः ॥ कोटिकोटिसहस्रैस्तुरथैर्वाजिगजैर्युतः ॥ १७ ॥ त्रैलोक्यंस्ववशेकृत्वामहेंद्रस्सतदाभवत् ॥ स्वारोचिषा
न्तरःकालोगतस्तद्राज्यकुर्वतः ॥ १८ ॥ ततस्सभगवान्विष्णुस्सर्वदेवसमन्वितः ॥ समुत्पाद्यमुखात्तेजोज्वालामालीबभूवह ॥ १९ ॥
ज्योतिर्लिंगात्तदादेवीभवतीस्वेच्छयाभुवि ॥ संभूयमहिषंहंत्रीतस्यैदेव्यैनमोनमः ॥ २० ॥ रुद्रकल्पेपुराचासीद्रुद्रच्छंभुमुखाद्दिवि ॥ राव
णश्चसहस्रास्योजातोब्रह्मांडरावणः ॥ २१ ॥ राक्षसोबलवान्घोरोलोकालोकगिरेरधः ॥ न्यवसद्देवदैत्यानांमनुष्याणांचभक्षकः ॥ २२ ॥
षष्ठेमन्वंतरेतेनब्रह्माण्डंराज्यसात्कृतम् ॥ ततोवैवस्वतेप्राप्तेत्रेताष्टाविंशकेप्रभुः ॥ २३ ॥ सजातोराघवगृहेरामस्संकर्षणःस्वयम् ॥ षोड
शाब्दवपुर्भूत्वासगतोजनकालये ॥ २४ ॥ धनुश्चाजगवंघोरंभंजितंतेनधीमता ॥ तदाब्रह्मादयोदेवाज्ञात्वारामंसनातनम् ॥ २५ ॥ सह
स्रवदनस्यैववर्णयामासकारणम् ॥ तच्छ्रुत्वाहंसयानंचसमारुह्यससीतया ॥ २६ ॥ लोकालोकगिरौप्राप्यघोरयुद्धमचीकरत् ॥ हंस
यानपताकायांसंस्थितोहनुमान्कपिः २७॥ वेदाश्ववाजिनस्तत्रनेताब्रह्मासनातनः ॥ दिव्यवर्षमभूद्घोरंसंग्रामंतेनरक्षसा ॥ २८॥ राव
णस्सतदाक्रुद्धोद्विसहस्रैश्चबाहुभिः ॥ अपरौमूर्च्छयित्वातौभ्रातरौरामलक्ष्मणौ ॥ २९ ॥ जगर्जबलवान्घोरस्सचब्रह्मांडरावणः ॥ ब्रह्म
णासंस्तुतामाताभवतीब्रह्मरूपिणी ॥३०॥ सीताशान्तिमयीनित्यातयाब्रह्मांडरावणः ॥ विनाशितोनमस्तस्यैनमस्तस्यैनमोनमः ॥३१॥
ब्रह्मकल्पेपुराचासीत्तालजंघान्वयोद्भवः॥मुरोनाममहादैत्योब्रह्मणोबलदर्पितः ॥३२॥ ब्रह्मांडेशंमहारुद्रंमहेन्द्रादिसमन्वितम् ॥ सवभूवप
राजित्याधिकारीरौद्रआसने ॥ ३३ ॥ देवैस्सार्द्धंमहादेवोमाधवंक्षीरशायिनम् ॥ गत्वानिवेदयामाससविष्णुःक्रोधसंयुतः ॥ ३४ ॥ जगा
मगरुडारूढोयत्रदैत्योमुरःस्थितः ॥ तेनसार्द्धमभूद्युद्धंतस्यदेवस्यदारुणम् ॥ ३५ ॥ सहस्राब्दमतोजातंदृष्ट्वाब्रह्माभयान्वितः ॥ परांतु
प्रकृतिंनित्यांतुष्टावश्लक्ष्णयागिरा ॥ ३६ ॥ प्रसन्नासातदादेवीकुमारीसप्तहायिनी ॥ चतुर्भुजास्त्रसहिताभूत्वादैत्यमुवाचह ॥ ३७ ॥ परा

जितोऽयंभगवान्दैत्यराजेनवैत्वया ॥ विजयानाममेरम्याकैश्चिन्नाहंपराजिता ॥ ३८ ॥ उन्मीलिनीविंजुलीचत्रिस्पृशापक्षवार्द्धिनी ॥ जया जयंतीविजयावर्षैर्वर्षैक्रमादहम् ॥ ३९ ॥ एकादशशुभाचाराविष्णवस्तनयामम ॥ एकादशीतिविख्यातावेदमध्येसदाह्यहम् ॥ ४० ॥ अतोमांबलवाञ्जित्वाविजयांविष्णुमातरम् ॥ पाणिंगृहाणमेरम्यंसर्वपूज्योभवान्भवेत् ॥ ४१ ॥ इतिश्रुत्वामुरोदैत्यस्तस्यारूपेणमोहितः ॥ युयुधेसतयासार्द्धंक्षणार्द्धेनलयंगतः ॥४२॥ तंमुरंनिहतंदृष्ट्वानुजस्तन्नरकासुरः ॥ दैत्यमायांमहाघोरांचकारसुरनाशिनीम् ॥ ४३ ॥ एकादशीस्वयंमायाहुंकारेणैवतंतदा ॥ नरकेनसमंहत्वाजगर्जजगदंबिका ॥ ४४ ॥ तयोस्तेजोमहाघोरमन्नमध्येषुचागमत् ॥ दुष्टभूतमभूदन्नंनृणांरोगभयप्रदम् ॥ ४५ ॥ दृष्ट्वाचैकादशीनाम्नारविशुक्रावुवाचह ॥ कुरुतांशुद्धमेवान्तर्भवंतौलोकविश्रुतौ ॥४६॥ तदाज्ञयातथाकृत्वादेवपूज्यौबभूवतुः ॥ एवंमातस्त्वयासर्वंकृतंतस्यैनमोनमः ॥ ४७ ॥ इतिश्रुत्वाभद्रकालीस्तोत्रंदिव्यंकथामयम् ॥ आपर्वंप्राहसादेवीब्राह्मणंवेदकोविदम् ॥ ४८ ॥ प्रलयेचतदाप्राप्तेनष्टेस्थावरजंगमे ॥ एकार्णवेपुरात्वंवैमत्प्रसादात्सुखीभव ॥ ४९ ॥ स्तोत्रेणानेनसुप्रीतावरदाहंसदानरान् ॥ इत्युक्त्वांतर्हितादेवीसविप्रोवरुणोऽभवत् ॥५०॥ सूतउवाच ॥ इतिश्रुत्वागुरोर्वाक्यंभगवान्द्वितियोवसुः ॥ वरुणःस्वमुखात्तेजोजनयामासभूतले ॥ ५१ ॥ देहल्यांसतुवैजातोधर्मभक्तस्यवैगृहे ॥ विधवातस्ययाकन्यागर्भंधत्तेहरेःस्वयम् ॥ ५२ ॥ इतिज्ञात्वाधर्मभक्तोमुमोदसुतजन्मनि ॥ नामदेवइतिख्यातःसांख्ययोगपरायणः ॥ ५३ ॥ आब्रह्मस्तंबपर्य्यंतंसर्वंविष्णुमयंजगत् ॥ ज्ञात्वादृष्ट्वागतःकाश्यांरामानंदंहरिप्रियम् ॥५४॥ नत्वातच्छिष्यतांप्राप्यतत्रवासमकारयत् ॥ सिकंदरोम्लेच्छपतिर्देहलीराज्यमास्थितः ॥५५॥ नामदेवंसमाहूयसंपरीक्ष्यतदासुखी ॥ अर्धकोटिमितंद्रव्यंददौतस्मैकलिप्रियः ॥ ५६ ॥ नामदेवस्तुतद्द्रव्यैर्गंगारोहणमुत्तमम् ॥ कारयामासवैकाश्यांशुभ्रसर्वंशिलामयम् ॥ ५७ ॥ दशविप्रान्पंचनृपान्पंचवैश्यांश्छतंगवाम् ॥ पुनरुज्जीवयामासशवभूतान्सयोगवान् ॥ ५८ ॥ ॥ बृहस्पतिरुवाच ॥ विश्वानरःपुराचासीद्ब्राह्मणोवेदकोविदः ॥ अनपत्योविधातारंतुष्टावबहुपूजनैः ॥ ५९ ॥ वर्षमात्रेणभगवान्परमेष्ठीप्रजापतिः ॥ समागत्यवचःप्राहवरंब्रूहिद्विजोत्तम॥६०॥इतिश्रुत्वासहोवाचभगवँस्तेनमोनमः॥प्रकृतेश्चपरःपुत्रोभूयान्ममवरात्तव ॥६१॥

इतिश्रुत्वातदाब्रह्माविस्मितःप्राहतंद्विजम् ॥ एकावैप्रकृतिर्मायात्रिलिंगजननीस्वयम् ॥ ६२ ॥ तयादृश्यंजगत्सर्वंसमुत्पादितमात्मना ॥
प्रकृतेश्चपरोयोवैपरमात्मासचाव्ययः ॥६३॥ अबुद्धिर्बोधनिरतोनश्रुतिश्चशृणोतिवै ॥ अदेहःसस्पृशत्येतन्नचक्षुःपश्यतिस्वयम् ॥ ६४ ॥
अजिह्वोन्नंसगृण्हातिसाजिघ्रतिनसाविना ॥ अमुखोवेदवक्ताचकर्मकारःकरंविना ॥ ६५ ॥ अपदोगच्छतिह्येतन्नलिंगोनारिभोगवान् ॥
अगुह्योहिकरोत्येतांसतत्वांगुह्यभूतिनीम् ॥ ६६ ॥ शब्दब्रह्मस्पर्शमयंरूपब्रह्मरसात्मकम् ॥ गंधब्रह्मपरंज्ञेयंतस्मैतद्ब्रह्मणेनमः ॥ ६७ ॥
प्रकृतिंपुरुषंचैवविद्ध्यनादीउभावपि ॥ विकारांश्चगुणांश्चैवविद्धिप्रकृतिसंभवान् ॥ ६८ ॥ एकार्थौतौचशब्देकौरूपैकौनित्यविग्रहौ ॥ आ
दिमध्यान्तरहितौनित्यशुद्धौसनातनौ ॥६९॥ पुंस्त्रीनपुंस्कजननीज्ञेयासाप्रकृतिःपरा ॥ पुरुषश्चकविःसूक्ष्मःकूटस्थोज्ञानवान्परः ॥ ७० ॥
अजन्माजन्मआप्नोतिमयाजातःसजन्मवान् ॥ कथंसपुरुषोनित्यस्तवपुत्रोभविष्यति ॥ ७१ ॥ अतोविश्वानरमुनेमायाभूतोहरिःस्वयम् ॥
तवपुत्रत्वमाप्नोतिवरान्ममजनार्दनः ॥७२॥ इत्युक्त्वान्तर्दधेदेवः पावकस्तद्वरादभूत् ॥ अष्टानांचवसूनांचपावकोहिपतिस्त्वयम् ॥७३॥
वैश्वानरइतिख्यातोभवत्स्वाहापतिः प्रभुः ॥ सतुपूर्वभवेदेवः पुराकल्पेऽनलोभवत् ॥ ७४ ॥ नैषधोब्राह्मणोधीमान्यथाराजानलस्तथा ॥
संकटायांगतेभूपेदमयंतीपतिव्रता ॥ ७५ ॥ स्वपितुर्गेहमासाद्यान्वेषयामासभूपतिम् ॥ तदानलोद्विजंप्राप्तोदमयंतीपतिःप्रभुः ॥ ७६ ॥
दृष्ट्वातंमोहमापन्नादमयंतीशुभानना ॥ एतस्मिन्नंतरेतत्रवागुवाचाशरीरिणी ॥ ७७ ॥ नायंनलस्तवपतिर्ब्राह्मणायंसुमोहितः ॥
अनलोनामविख्यातोदेववाक्यात्सचाभवत् ॥७८॥ महासरस्वतींदेवींतुष्टावसतुमोहितः ॥ तस्यपुण्यप्रभावेनविश्वानरसुतोऽभवत् ॥७९॥
॥ सूतउवाच ॥ इतिश्रुत्वागुरोर्वाक्यंपावकोभगवान्प्रभुः ॥ स्वमुखात्स्वांशमुत्पाद्यसंजातस्तुततोवसुः ॥ ८० ॥ रंकणोनामविख्या
तोलक्ष्मीदत्तस्यवैसुतः ॥ नगरेकांचनपुरेवैश्यजात्यांसमुद्भवः ॥८१॥ यंकणानामतत्पत्नीबभूवचपतिव्रता ॥ सर्वद्रव्यव्ययंकृत्वाधर्मकार्ये
षुदंपती ॥८२॥ काष्ठमानीयविक्रीयबुभुजातेपरस्परम्॥रामानंदस्तस्यगुरूरंकणस्यमहात्मनः॥८३॥इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्व
णिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेवसुमाहात्म्येरंकणवैश्योत्पत्तिवर्णनोनामषोडशोऽध्यायः॥१६॥छ॥बृहस्पतिरुवाच ॥

दितिपुत्रौमहाघोरौविष्णुनाप्रभविष्णुना ॥ संहतौतुदितिर्ज्ञात्वाकश्यपंसमपूजयत् ॥ १ ॥ द्वादशाब्दांतरेस्वामीकश्यपोभगवानृषिः ॥
उवाचपत्नींसहितंवरंब्रूहिवरानने ॥ २ ॥ सातुश्रुत्वानमस्कृत्यवचनंप्राहहर्षिता ॥ अदितिर्ममयादेवीसपत्नीपुत्रसंयुता ॥ ३ ॥
द्वादशास्तनयास्तस्याममद्वौतनयौस्मृतौ ॥ तदवर्यसुतेनैवविष्णुनासुरपालिना ॥ ४ ॥ विनाशितौसुतौघोरौततोऽहंभृशदुःखिता ॥
देहिमेतनयंस्वामिन्द्वादशादित्यनाशनम् ॥ ५ ॥ इतिश्रुत्वावचोघोरंदितिंप्राहसुदुःखितः ॥ ब्रह्मणानिर्मितौलोकेधर्माधर्मौपरापरौ ॥ ६ ॥
धर्मपक्षास्तुयेलोकेनरास्तेब्रह्मणःप्रियाः ॥ अधर्मपक्षास्तुनरावैरिणस्तस्यधीमतः ॥ ७ ॥ अधर्मपक्षौतनयौतस्मान्मृत्युमुपागतौ ॥
अतोधर्मप्रियेशुद्धंकुरुतस्मान्महाबलः ॥ ८ ॥ भविष्यतिसुतोधीमाँश्चिरंजीवीतवप्रियः ॥ इतिश्रुत्वादितिर्देवीकश्यपाद्गर्भमुत्तमम् ॥९॥
संप्राप्यसाशुभाचाराबभूवव्रतधारिणी ॥ तस्यागर्भगतेपुत्रेमहेंद्रश्चभयान्वितः ॥ १० ॥ दासभूतःस्थितोगेहेसादितेराज्ञयागुरोः ॥
सप्तमासिस्थितेगर्भेशक्रमायाविमोहिता ॥ ११ ॥ अशुचिश्चदितिर्देवीसुष्वापनिजमंदिरे ॥ अंगुष्ठमात्रोभगवान्महेन्द्रोवज्रसंयुतः ॥१२॥
कुक्षिमध्येसमागम्यचक्रेगर्भंससप्तधा ॥ जीवभूतानतिबलान्दृष्ट्वासप्तमहारिपून् ॥ १३ ॥ एकैकःसप्तधातेनमहेन्द्रेणतदाकृतः ॥
नम्रीभूतश्चतान्दृष्ट्वामहेन्द्रस्तैःसमन्वितः ॥ १४ ॥ योनिद्वारेणचागम्यप्रणनामतदादितिम् ॥ प्रसन्नासादितिर्देवान्महेन्द्रायचतान्ददौ ॥१५॥
मरुद्गणाश्चतेसर्वेविख्याताःशक्रसेवकाः ॥ सतुपूर्वभवेजातोब्राह्मणोलोकविश्रुतः ॥ १६ ॥ इलोनामसवेदज्ञोयथेलोनृपतिस्तदा ॥
एकदाबलवान्राजामनुपुत्रइलःस्वयम् ॥ १७ ॥ एकाकीहयमारुह्यमेरोर्विपिनमाययौ ॥ मेरोरधःस्थितःखंडःस्वर्णगर्भोहरिप्रियः ॥ १८ ॥
निवासंकृतवाँस्तत्रकृत्वाराष्ट्रंमहोत्तमम् ॥ इलेनावृतमेवापिकृतंतत्रस्थलेसुराः ॥ १९ ॥ इलावृतमितिख्यातःखंडोऽभूद्विबुधप्रियः ॥
भारतेयेस्थितालोका इलावृतमुपागताः ॥२०॥ मेरुर्गिरिर्वृक्षमयोविधात्रानिर्मितोहिसः ॥ आरोहणंनरैस्तस्मिन्कृतंस्वर्णमयंशुभम् ॥२१॥
तमारुह्यक्रमाल्लोकाः स्वर्गलोकमुपागताः ॥ तान्दृष्ट्वामनुजान्प्राप्तान्सदेहान्स्वर्गमण्डले ॥ २२ ॥ विस्मिताश्चसुरास्सर्वेमहेशंशरणंययुः ॥
ज्ञात्वासभगवान्रुद्रोभवान्यासहशंकरः ॥ २३ ॥ इलावृतवनेरम्येसरेमेचतयासह ॥ एतस्मिन्नंतरेप्राप्तोवैवस्वतसुतोमहान् ॥ २४ ॥

इलोनाममहाप्राज्ञोमृगयार्थीसदाशिवम् ॥ नग्नभूतंसमालोक्यनेत्रेसंमील्यसंस्थितः ॥ २५ ॥ लज्जितांगिरिजांदृष्ट्वाशशापभगवान्हरः ॥
अस्मिन्खंडेसदानार्योभविष्यंतिचमांविना ॥ २६ ॥ इत्युक्त्वावचनंतस्मिन्नार्यस्सर्वाबभूविरे ॥ इलाबभूवनृपतेःकन्याजनमनोहरा ॥२७॥
बहुकालंमेरुशृंगेमहत्तपमचीकरत् ॥ इलासमाधिभूतायासप्तविंशच्चतुर्युगम् ॥ २८ ॥ जातंततइलाकन्यात्रेतामध्येतुचंद्रजम् ॥
बुधदेवंपतिंकृत्वाचंद्रवंशमजीजनत् ॥ २९ ॥ अयोध्याधिपतिःश्रीमान्यदेलावृतमागतः ॥ तस्यराज्ञीमदमतीनाम्नातुष्टावपार्वतीम्॥३०॥
तदाप्राप्तइलोविप्रस्तस्याःरूपेणमोहितः ॥ पस्पर्शतांमदमतींराज्ञींकामविमोहितः ॥ ३१ ॥ एतस्मिन्नंतरेतत्रवागुवाचाशरीरिणी ॥
इलोनायंद्विजश्चायंतवरूपविमोहितः ॥ ३२ ॥ अनिलोनामतत्रैवविख्यातोऽभूद्विजस्यवै ॥ कामाग्निपीडितोविप्रस्सतुष्टावचपावकम्॥३३॥
छित्त्वाछित्त्वाशिरोरम्यंतस्मैजातंपुनःपुनः ॥ दत्त्वातुष्टावतंदेवंप्रसन्नोऽभूद्धनंजयः ॥ ३४ ॥ प्राहत्वमूनपंचाशद्विभेदाञ्जनयिष्यसि ॥
तथाहंमित्रवान्भूत्वातत्संख्यस्तवकामदः ॥ ३५ ॥ यथाकुबेरोभगवान्षड्विंशद्वरुणप्रियः ॥ तथाहमूनपंचाशद्विभेदस्तववैसखा ॥ ३६ ॥
इत्युक्तेवचनेतस्मिन्दितिकुक्षौद्विजोत्तमः ॥ वायुर्नामसवैजातःपावकस्यप्रियस्सखा ॥३७॥ सूतउवाच॥इतिश्रुत्वागुरोर्वाक्यंवैश्यजात्यांस
मुद्भवः॥धान्यपालस्यवैगेहेमूलगंडान्तजःसुतः॥३८॥पितृमातृपरित्यक्तःकाश्यांविंध्यवनेतदा ॥ अलिकोनामवैम्लेच्छस्तत्रस्थानेसमागतः
॥ ३९ ॥ अनपत्योवस्त्रकारीसुतंप्राप्यगृहंययौ ॥ कबीरइतिविख्यातःसपुत्रोमधुराननः ॥ ४० ॥ ससप्ताब्दवपुर्भूत्वागोदुग्धपानतत्परः ॥
रामानंदंगुरुंमत्वारामध्यानपरोऽभवत् ॥४१॥ स्वहस्तेनैवसंस्कृत्यभोजनंहरयेऽर्पयत्॥ तत्प्रियार्थंहरिस्साक्षात्सर्वकामप्रदोऽभवत् ॥४२॥
॥ बृहस्पतिरुवाच ॥ उत्तानपादतनयोध्रुवोभूत्क्षत्रियःपुरा ॥ पितृमातृपरित्यक्तःसबालःपंचहायनः॥४३॥गोवर्द्धनगिरौप्राप्यनारदस्योपदे
शतः ॥ सचक्रेभगवद्ध्यानंषष्ठमासींमहाव्रती॥४४॥तदाप्रसन्नोभगवान्विष्णुर्नारायणःप्रभुः॥ खमंडलेपदंतस्मैददौप्रीत्यानभोमयम्॥४५॥
दृष्ट्वातद्वदनंरम्यंमायाशक्त्यादिशोदश ॥ स्वामिनंचध्रुवंमत्वाभक्तिनम्राबभूविरे ॥ ४६ ॥ ध्रुवोऽपिभगवान्साक्षात्सर्वपूज्योबभूवह ॥
दिक्पतिःसतुविज्ञेयोभगणानांपतिःस्वयम्॥४७॥नभःपतिःकालकरःशिशुमारपतिस्सवै॥पंचतत्वासवैमायाप्रकृतिस्तत्पतिःस्वयम् ॥४८॥

तस्माद्धरायांसंभूतोभौमोनाममहाग्रहः ॥ जलदेव्यास्ततोजातःशुक्रोनाममहाग्रहः ॥ ४९ ॥ वह्निदेव्यांततोजातश्चाहंतत्रमहाग्रहः ॥
वासुदेव्यांध्रुवाज्जातःकेतुर्नाममहाग्रहः ॥ ५० ॥ ग्रहभूतःस्थितस्तत्रनभोदेव्यांतदुद्भवः ॥ राहुर्नामतथाघोरोमहाग्रहउपग्रहः ॥ ५१ ॥
पूर्वायांदिशिवैतस्माज्जातश्चैरावतोगजः ॥ आग्नेय्यांदिशिवैतस्मात्पुंडरीकोगजोऽभवत् ॥ ५२ ॥ वामनःकुमुदश्चैवपुष्पदंतःक्रमाद्गजाः ॥
सार्वभौमःसुप्रतीकोनभोदिक्षुतुतत्सुताः॥५३॥अभ्रमुःकपिलाचैवपिंगलाख्याइमाःक्रमात् ॥ ताम्रकर्णीशुभ्रदंतीचांगनाचांजनावती॥५४॥
भूमिदिक्षुकरिण्याश्चजातातस्मात्तुतत्प्रियाः ॥ भगिनीचतथामातासुताचैवस्नुषातथा ॥ ५५ ॥ पशुयोन्युद्भवानांचनृणांतायोषितस्सदा ॥
देवयोन्युद्भवानांचनृणांपत्नीःस्मृतास्वसा॥५६॥मनुवंशोद्भवानांचनृणांचान्योद्भवाःस्त्रियः॥ इतिधर्मोविधात्रोक्तोमयाप्रोक्तःसुराहिवः॥५७॥
द्विधाध्रुवस्सविज्ञेयोभूमेरुर्द्धमधस्तथा ॥ सद्गुणःसदिवारूपोरात्रिरूपस्तमोगुणः॥५८॥अधोध्रुवेसदारात्रिर्नारकास्तत्रवैस्थिताः॥उर्द्धध्रुवेदि
वानित्यंतपोमध्येनिशादिवा॥५९॥महोजनस्तपस्सत्यंतेषुनित्यंदिनंस्मृतम् ॥ रौरवश्चांधकूपश्चतामिस्रंचतमोमयम्॥६०॥तेषुनित्यंस्मृता
रात्रिःकल्पमानंचकोविदैः॥सतुपूर्वभवेचासीद्ब्राह्मणोमाधवप्रियः॥६१॥षष्टचब्दंसर्वतीर्थेषुप्रातःस्नानंचकारह ॥तीर्थपुण्यात्सवैविप्रोमाधवो
माधवप्रियः॥६२॥सुनीत्यांगर्भमासाद्यध्रुवोभूत्वारराजह॥षट्त्रिंशच्चसहस्राब्दंराज्यंकृत्वाध्रुवोऽभवत् ॥६३॥ सूतउवाच ॥ इतिश्रुत्वागुरोर्वा
क्यंसध्रुवःपंचमोवसुः ॥ गुर्जरदेशआगम्यवैश्यजात्यांसमुद्भवः ॥ ६४ ॥ नरश्रीर्नामविख्यातोगुणवैश्यस्यवैसुतः ॥ कुसीदगुणगुप्तश्चनर
श्रीःपुत्रवत्सलः ॥ ६५ ॥ त्यक्त्वाप्राणान्ययौस्वर्गंसवैश्यतनयोध्रुवः ॥ प्रत्यहंसहरेःक्रीडांवृन्दावनमहोत्तमे ॥ ६६ ॥ शिवप्रसादात्प्रत्यक्षां
दृष्ट्वाहर्षमवाप्तवान् ॥ यस्यपुत्रविवाहेचभगवान्भक्तवत्सलः ॥ ६७ ॥ यादवैस्सहसंप्राप्तस्तस्यवांछितदायकः ॥ पुरींकाशींसमागम्यनरश्री
र्भक्तराट्स्वयम् ॥ ६८ ॥ रामानन्दस्यशिष्योऽभूद्विष्णुधर्मविशारदः ॥ ॥ बृहस्पतिरुवाच ॥ ॥ कदाचिद्भगवानत्रिर्गंगाकूलेऽनसू
यया ॥ ६९ ॥ सार्द्धंतपोमहत्कुर्वन्ब्रह्मध्यानपरोऽभवत् ॥ तदाब्रह्माहरिश्शंभुःस्वस्ववाहनमास्थिताः ॥ ७० ॥ वरंब्रूहीतिवचनंतमाहुस्ते
सनातनाः ॥ इतिश्रुत्वावचस्तेषांस्वयंभूतनयोमुनिः ॥ ७१ ॥ नैवकिंचिद्वचःप्राहसंस्थितःपरमात्मनि ॥ तस्यभावंसमालोक्यत्रयोदेवाः

सनातनाः ॥ ७२ ॥ अनसूयांतस्यपत्नींसमागम्यवचोऽब्रुवन् ॥ लिंगहस्तःस्वयंरुद्रोविष्णुस्तद्रसवर्द्धनः ॥ ७३ ॥ ब्रह्माकामब्रह्मलोपःस्थि
तस्तस्यावशंगतः ॥ रतिंदेहिमदाघूर्णेनोचेत्प्राणांस्त्यजाम्यहम् ॥७४॥ पतिव्रताऽनसूयाचश्रुत्वातेषांवचोऽशुभम् ॥ नैवकिंचिद्वचःप्राहको
पभीतासुरान्प्रति ॥ ७५ ॥ मोहितास्तत्रतेदेवागृहीत्वातांबलात्तदा ॥ मैथुनायसमुद्योगंचक्रुर्मायाविमोहिताः ॥ ७६ ॥ तदाक्रुद्धासतीसावै
तान्छशापमुनिप्रिया ॥ ममपुत्राभविष्यंतियूयंकामविमोहिताः ॥ ७७ ॥ महादेवस्यवैलिंगंब्रह्मणोऽस्यमहाशिरः ॥ चरणौवासुदेवस्य
पूजनीयानरैस्सदा ॥ ७८ ॥ भविष्यंतिसुरश्रेष्ठाउपहासोऽयमुत्तमः ॥ इतिश्रुत्वावचोघोरंनमस्कृत्यमुनिप्रियाम् ॥ ७९ ॥ तुष्टुवुर्भक्ति
नम्राश्चवेदपाठैश्चऋङ्मयैः ॥ अनसूयातदाप्राहभवन्तोममपुत्रकाः ॥ ८० ॥ भूत्वाशापंमदीयंचत्यक्त्वातृप्तिमवाप्स्यथ ॥ इत्युक्तेवचनेब्रह्मा
चंद्रमाश्चतदाह्यभूत् ॥ ८१ ॥ दत्तात्रेयोहरिःसाक्षाद्दुर्वासाभगवान्हरः ॥ तत्पापपरिहारार्थंयोगवन्तोबभूविरे ॥ ८२ ॥ एतस्मिन्नंतरेदेवी
प्रकृतिस्सर्वधर्मिणी ॥ विधिंविष्णुंहरंचान्यंचक्रेसागुणरूपिणी॥८३॥मन्वंतरमतोजातंतेषांयोगंप्रकुर्वताम् ॥हर्षिताश्चत्रयोदेवास्समागम्यच
तान्प्रति ॥८४॥ उवाचवचनंरम्यंतेषांमंगलहेतवे ॥ चंद्रमाश्चभवेत्सोमोवसुःषष्ठःसुरप्रियः ॥ ८५ ॥ रुद्रांशश्चैवदुर्वासाःप्रत्यूषःसप्तमोवसुः ॥
दत्तात्रेयमयोयोगीप्रभासश्चाष्टमोवसुः ॥८६॥ तेषांवाक्यंसमाकर्ण्यवसवस्तेत्रयोऽभवन् ॥ सूतउवाच ॥ इतिश्रुत्वागुरोर्वाक्यंवसवोहर्षितास्त्र
यः॥८७॥स्वांशेनभूतलेजग्मुःकलिशुद्धायदारुणे ॥ दाक्षिणात्येराजगृहेवैश्यजात्यांसमुद्भवः॥८८॥पीपानामसुतःसोमःसुदेवस्यतदाह्यभूत्॥
कृतंराज्यपदंतेनयथाभूपेनतत्पुरे ॥८९॥ रामानन्दस्यशिष्योऽभूद्द्वारकांससमागतः॥हरेर्मुद्रांस्वर्णमयींप्राप्यकृष्णात्सवैनृपः ॥९०॥ वैष्णवे
भ्योददौतत्रप्रेततत्त्वविनाशिनीम् ॥ प्रत्यूषश्चैवपांचालेवैश्यजात्यांसमुद्भवः ॥ ९१ ॥ मार्गपालस्यतनयोनानकोनामविश्रुतः ॥ रामानन्दं
समागम्यशिष्योभूत्वासनानकः ॥९२॥ सर्वैम्लेच्छान्वशीकृत्यसूक्ष्ममार्गमदर्शयत् ॥ प्रभासोवैशांतिपुरेब्रह्मजात्यांसमुद्भवः ॥९३॥ शुक्लद
त्तस्यतनयोनित्यानंदइतिस्मृतः ॥ इतितेवसुमाहात्म्यंमयाशौनकवर्णितम् ॥ ९४ ॥ इति श्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगख
ण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेवसुमाहात्म्येकबीरनरश्रीपीपानानकनित्यानन्दसमुत्पत्तिवर्णनंनामसप्तदशोऽध्यायः ॥ १७ ॥छ ॥

॥ सूतउवाच ॥ ॥ इत्युक्त्वातान्सुरान्देवोभगवान्बृहतांपतिः ॥ अश्विनौचसमालोक्यतयोर्गाथामवर्णयत् ॥ १ ॥ वैवस्वतेऽन्त
रेपूर्वंविश्वकर्माविचित्रकृत् ॥ चित्रगुप्तश्रियंदृष्ट्वाचित्रलेखाविनिर्मिताम् ॥ २ ॥ स्पर्द्धीभूतोमहामायांतुष्टाववहुपूजनैः ॥ प्रसन्ना
सातदादेवीचित्रायांतस्ययोषिति ॥ ३ ॥ स्वांशाज्जातास्मृतासंज्ञासर्वज्ञानकरीस्वयम् ॥ षोडशाब्देवयःप्राप्तेसंज्ञायास्तत्पितासु
खी ॥ ४ ॥ विवाहार्थीसुरान्सर्वानाह्वयन्मेरुमूर्द्धनि ॥ यक्षाधीशाश्चषड्विंशत्कुबेराद्यास्समागताः ॥ ५ ॥ यादसांपतयःप्राप्तादशतत्रैव
कामुकाः ॥ पावकाऊनपंचाशद्वायवश्चतथास्मृताः ॥ ६ ॥ ध्रुवौद्यौचस्वयंप्राप्तौसोमास्तत्रैवषोडश ॥ त्रयोदशाश्चप्रत्यूषाःप्राप्ताविश्व
प्ररक्षकाः ॥ ७ ॥ षष्ट्युत्तरंचत्रिशतंप्रभासादिनरक्षकाः ॥ भवाद्याश्चतदारुद्राःशशिमण्डलरक्षकाः ॥ ८ ॥ आदित्याश्चास्थितास्सर्वेसंज्ञा
याश्चस्वयंवरे ॥ दानवाविप्रचित्त्याद्याश्चतुराशीतिराययुः ॥ ९ ॥ प्रह्लादाद्यास्तदादैत्यावासुक्याद्याश्चपन्नगाः ॥ शेषाद्याश्चतदानागास्ता
क्ष्याद्यागरुडाःस्मृताः ॥ १० ॥ सर्वेस्वयंवरेप्राप्तामहान्कोलाहलोह्यभूत् ॥ एतस्मिन्नंतरेदेवीदेवकन्यासमन्विता ॥ ११ ॥ संज्ञादेवान्प्रति
तदाप्रत्यक्षमभवद्दिवि ॥ तांसमालोक्यबलवान्बलिःकामविमोहितः ॥१२॥ करेगृहीत्वाप्रययौपश्यतांसर्वधन्विनाम् ॥ तदाक्रोधातुरादेवा
रुरुधुर्दैत्यसत्तमम् ॥ १३ ॥ शस्त्रास्त्रैस्तर्पयित्वातंमहद्युद्धमकारयत् ॥ दानवाश्चतदादैत्यानानावाहनसंस्थिताः ॥ १४ ॥ देवैःसार्द्धंमहद्यु
द्धंतुमुलंचक्रिरेमुदा ॥ दानवैश्चहतादेवाःसुरैर्दैत्याविनाशिताः ॥ १५ ॥ शवभूतैरिलावर्तेऽभूदगम्यावसुंधरा ॥ पक्षमात्रमभू
द्युद्धंदिव्यंदानवदेवयोः ॥ १६ ॥ पांचजन्यस्तथाधाताहयग्रीवश्चमित्रकः ॥ अघासुरोऽर्यमाचैवबलःशक्रस्तथैवच ॥ १७ ॥ बकासुरश्चव
रुणःशकटःप्रांशुरेवच ॥ वत्सासुरोभगश्चैवविवस्वांश्चबलिःस्वयम् ॥ १८ ॥ प्रलंबश्चतथापूषागर्दभःसवितायुधि ॥ विश्वकर्मामयश्चैवका
लनेमिर्हरिःस्वयम् ॥ १९ ॥ कांक्षमाणौचविजयंयुयुधातेपरस्परम् ॥ पराजिताश्चतेदैत्यायुद्धंत्यक्त्वाप्रदुद्रुवुः ॥ २० ॥ विवस्वाँश्चतदासं
ज्ञांगृहीत्वारथसंस्थिताम् ॥ विश्वकर्माणमागम्यददौतस्मैप्रसन्नधीः ॥ २१ ॥ विवस्वंतंसुरश्रेष्ठंदृष्ट्वासंज्ञावचोऽब्रवीत् ॥ मत्पतिश्चभवान्दे
वोभवेत्कार्यकरस्सदा ॥ २२ ॥ त्वयाजिताहंभगवन्बलेर्विप्रियकारिणः ॥ भ्रातृजाग्रहणेदोषोनभवेत्सकदाचन ॥ २३ ॥ वीरभुक्तासदाना

रीस्त्रीरत्नंमुनिभिःस्मृता ॥ चतुर्द्धाप्रकृतिर्देवीगुणभिन्नागुणैकिका ॥ २४ ॥ एकासाप्रकृतिर्मातागुणसाम्यात्सनातनी ॥ सत्त्वभूताचभागि
नीरजोभूताचगेहिनी ॥ २५ ॥ तमोभूताचसाकन्यातस्यैदेव्यैनमोनमः ॥ बहवःपुरुषायेवैनिर्गुणाश्चैकरूपिणः ॥ २६ ॥ चैतन्याऽज्ञानवंत
श्चलोकेप्रकृतिसंभवाः ॥ अलोकेपापजास्सर्वेदेवब्रह्मसमुद्भवाः ॥ २७ ॥ यातुज्ञानमयीनारीवृणोद्यंपुरुषंशुभम् ॥ कोऽपिपुत्रःपिताभ्रातास
चतस्याःपतिर्भवेत् ॥ २८ ॥ स्वकीयांचसुतांब्रह्माविष्णुदेवःस्वमातरम् ॥ भगिनींभगवाञ्छंभुर्गृहीत्वाश्रेष्ठतामगात् ॥ २९ ॥
इतिश्रुत्वावेदमयंवाक्यंचादितिसंभवः ॥ विवस्वान्भ्रातृजांसंज्ञांगृहीत्वाश्रेष्ठवानभूत् ॥ ३० ॥ सुताःकन्यास्तयोर्जातामनुर्वैवस्वत
स्तथा ॥ यमश्चयमुनाचैवदिव्यतेजोभिरन्विताः ॥ ३१ ॥ तदासंज्ञासतीसाक्षात्तेजोभूतंपतिंस्वकम् ॥ ज्ञात्वाछायांसमुत्पाद्यतप
सेवनमागता ॥ ३२ ॥ सावर्णिश्चमनुस्तस्यांशनिश्चतपतीतथा ॥ छायायांचसमुद्भूताःक्रूरदृष्ट्याविवस्वतः ॥ ३३ ॥ पुत्रभेदे
नतांनारींमत्वामायांरुषान्वितः ॥ चकारभस्मभूतांतांविवस्वान्भगवान्रविः ॥ ३४ ॥ तदाशनिश्चसावर्णिर्विवस्वंतंरुषान्वितम् ॥ ज्ञात्वा
चक्रोधताम्राक्षौयुयुधातेपरस्परम् ॥ ३५ ॥ कियताचैवकालेनभग्नभूतौविवस्वता ॥ हिमाचलेगिरौप्राप्यतेपतुःपरमंतपः ॥ ३६ ॥ त्रिव
र्षान्तेचसादेवीमहाकालीसमागता ॥ अर्चितंचवरंताभ्यांददौतद्भक्तिवत्सला ॥ ३७ ॥ पुनस्तौचसमागम्ययुयुधातेविवस्वता ॥ विवस्वा
न्भयभीतश्चत्यक्त्वायुद्धंपराभवत् ॥ ३८ ॥ यत्रास्थिताप्रियासंज्ञावडवारूपधारिणी ॥ कुरुखंडेमहारम्येतपंतीतपउल्बणम् ॥ ३९ ॥
गत्वाददर्शभगवान्संज्ञासंबोधकारिणीम् ॥ कामातुरोहयोभूत्वातत्ररेमेतयासह ॥ ४० ॥ पंचवर्षान्तरेसंज्ञागर्भंतस्माद्दधौस्वयम् ॥ तनयौ
चसमुद्भूतौदिव्यरूपपराक्रमौ ॥ ४१ ॥ पितुर्दुःखंसमालोक्यजग्मतूरविमण्डलम् ॥ जित्वाबंधूदुराचारौक्रूरदृष्ट्यातदास्वयम् ॥ ४२ ॥
बद्धातौस्वपितुःपार्श्वंसंप्रातौवडवासुतौ ॥ दृष्ट्वाविवस्वान्भगवान्वैरिणौसमुपागतौ ॥ ४३ ॥ संपीड्यताडयामासलोहदंडैर्भयानकैः ॥
पंगुभूतौपुनस्त्यक्त्वाछायापुत्रौदिवाकरः ॥ ४४ ॥ आश्विनेयौसमालोक्यवचनंप्राहतौमुदा ॥ जीवईशौयथामित्रौनरनारायणौयथा ॥४५॥
एकनाम्नायुवांप्रीतौनासत्यौचभविष्यथः ॥ सोमशक्तिरिडादेवीज्येष्ठपत्नीभविष्याति ॥ ४६ ॥ पिंगलासूर्यशक्तिश्चलघुपत्नीभविष्याति ॥

इडापतिस्स्वैनामाद्वितीयःपिंगलापतिः ॥ ४७ ॥ द्वादशस्सनृणांराशेःक्रूरदृष्टिःशनैश्चरः ॥ तस्यशान्तिकरोज्येष्ठोभविष्यातिमहीतले
॥ ४८ ॥ द्वितीयश्चनृणांराशेःसावर्णिर्भ्रमकारकः ॥ तस्यशान्तिकरोभूमौभवितापिंगलापतिः ॥ ४९ ॥ जन्मराशिस्थितादेवीतपंतीता
पकारिणी ॥ इडाचपिंगलातस्याःशान्तिकर्त्र्यौभविष्यतः ॥ ५० ॥ इतिश्रुत्वावचस्तस्यसुरवैद्यौबभूवतुः ॥ सावर्णिश्चशनीराहुःकेतुः
स्वर्गप्रतापिनः ॥ ५१ ॥ तेषांतुपरिहारार्थौदस्रौचाश्विनिसंभवौ ॥ सूतउवाच ॥ इतिश्रुत्वागुरोर्वाक्यंप्रसन्नौसुरसत्तमौ ॥ ५२ ॥
स्वांशान्महीतलेजातौशूद्रयोन्यांरवेस्सुतौ ॥ चाण्डालस्यगृहेजातश्छागहंतुरिडापतिः ॥५३॥ सधनोनामविख्यातःपितृमातृपरायणः ॥
शालिग्रामशिलातुल्यंछागमांसमविक्रयत् ॥ ५४ ॥ कबीरंसमुपागम्यशिष्योभूत्वाराजवै ॥ सतुसत्यनिधिःपूर्वंब्राह्मणस्तपआस्थितः
॥ ५५ ॥ भयभीतंचगांतत्रचाण्डालायह्यदर्शयत् ॥ राजगेहेकरस्तस्मात्सधनस्यलयंगतः ॥ ५६ ॥ चर्मकारगृहेजातोद्वितीयःपिंगला
पतिः ॥ मानदासस्यतनयोरैदासइतिविश्रुतः ॥ ५७ ॥ पुरींकाशींसमागम्यकबीरंरामतत्परम् ॥ जित्वामतविवादेनशंकराचार्यमागतः
॥ ५८ ॥ तयोर्विवादमभवदहोरात्रंमतान्तरे ॥ पराजितस्सरैदासोनत्वातंद्विजसत्तमम् ॥ ५९ ॥ रामानन्दमुपागम्यतस्यशिष्यत्व
मागतः ॥ इतितेकथितंविप्रसुरांशाश्चयथाभवन् ॥ कलिशुद्धिकरीलीलातेषांमार्गप्रदर्शिनाम् ॥६०॥इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणि
चतुर्युगखंडापरपर्यायेकलियुगीयेतिहाससमुच्चयेअश्विनीकुमारावतारेसधनरैदाससमुत्पत्तिवर्णनेअष्टादशोऽध्यायः ॥१८॥छ॥सूतउवाच॥
इत्युक्त्वाभगवाञ्जीवोदेवमाहात्म्यमुत्तमम् ॥ स्वमुखात्स्वांशमुत्पाद्यब्रह्मयोनौबभूवह ॥ १ ॥ इष्टिकानगरीरम्यागुरुदत्तस्यवैसुतः ॥
रोपणोनामविख्यातोब्रह्ममार्गप्रदर्शकः ॥ २ ॥ सूत्रग्रंथमयींमालांतिलकंजलनिर्मितम् ॥ वासुदेवेतितन्मंत्रंकलौकृत्वाजनेजने ॥ ३ ॥
कृष्णचैतन्यमागम्यकंबलंचतदाज्ञया ॥ गृहीत्वास्वपुरींप्राप्यकृष्णध्यानपरोभवत् ॥ ४ ॥ अतःपरंशृणुमुनेचरित्रंचहरेर्मुदा ॥ यच्छ्रु
त्वाचकलौघोरेजनोनैवभयंव्रजेत् ॥ ५ ॥ पंचाब्देकृष्णचैतन्येयज्ञांशेयज्ञकारिणि ॥ काश्मीरसंभवोविप्रःकेशवःशारदाप्रियः ॥ ६ ॥
प्रातःशान्तिपुरेग्रामेवाग्देवीवरदर्पितः ॥ सतांदिग्विजयंकृत्वासर्वशास्त्रविशारदः ॥ ७ ॥ गंगाकूलेस्तवंरम्यंरचित्वासोऽपठद्द्विजः ॥

एतस्मिन्नंतरेतत्रयज्ञांशस्समुपागतः ॥ ८ ॥ उवाचवचनंरम्यंकेशवंस्तुतिकारिणम् ॥ सुकृतंपूर्तमर्णंचश्रुतीनांसारमेवाहि ॥ ९ ॥
इत्युक्तंभवतास्तोत्रेदूषणंभूषणंवद ॥ तमाहकेशवोधीमान्दूषणंनैवदृश्यते ॥ १० ॥ इत्युक्त्वाप्राहभगवान्भूषणंनैवदृश्यते ॥ सुकृतंचस्मृ
तंधर्मःपूर्तंचैतन्यमुच्यते ॥ ११ ॥ अर्णंवीर्यमितिज्ञेयंश्रुतिसारमतत्त्रयम् ॥ गंगाजलेदूषणोऽयंभूषणोऽयंकलेवरे ॥ १२ ॥ इतिश्रुत्वाम
वैविप्रोविस्मितोऽभूच्चगीःप्रियः ॥ लज्जितंस्वजनंदृष्ट्वाशारदासर्वमंगला ॥ १३ ॥ विहस्यकेशवंप्राहयज्ञांशोऽयंहरिःस्वयम् ॥ इतिश्रुत्वातु
तच्छिष्यःकृष्णमंत्रउपासकः ॥ १४ ॥ बभूववैष्णवश्रेष्ठःकृष्णचैतन्यसेवकः ॥ सूतउवाच॥श्रीधरोनामविख्यातोब्राह्मणःशिवपूजकः॥१५॥
पत्तनेनगरेरम्येतस्यसप्ताहमुत्तमम् ॥ राज्ञाभागवतंतत्रकारितंसधनंबहु ॥ १६ ॥ गृहीत्वाश्रीधरोविप्रोजगामश्वशुरालये ॥ तत्रोष्यमासमा
त्रंचस्वपत्न्यासहवैद्विजः ॥ १७ ॥ स्वगेहमगमन्मार्गेचौराःसप्ततुतंप्रति ॥ शपथंरामदेवस्यकृत्वासार्द्धमुपाययुः ॥ १८ ॥ समातेविपिने
रम्येहत्वातेश्रीधरंद्विजम् ॥ गोरथंसधनंतत्रसभार्यंजगृहुस्तदा ॥ १९ ॥ एतस्मिन्नंतरेरामःसच्चिदानंदविग्रहः ॥ सप्ततांश्चशरैर्हत्वापुन
रुज्जीव्यतंद्विजम् ॥ २० ॥ प्रेषयामासभगवांस्तदावृन्दावनेप्रभुः ॥ तदाप्रभृतिवैविप्रःश्रीधरोवैष्णवोऽभवत् ॥ २१ ॥ सप्ताब्देचैवयज्ञां
शेगत्वाशान्तिपुरींशुभाम् ॥ ब्रह्मज्ञानमुपागम्ययज्ञांशाच्छिष्यतांगतः ॥ २२ ॥ टीकाभागवतस्यैवकृतातेनमहात्मना ॥ सूतउवाच ॥
रामशर्मास्थितःकाश्यांशंकरार्चनतत्परः ॥ २३ ॥ शिवरात्रेद्विजोधीमानविमुक्तेश्वरस्थलः ॥ एकाकीजाग्रतोध्यानीजप्त्वापंचाक्षरंशुभ
म् ॥ २४ ॥ तदाप्रसन्नोभगवाञ्छंकरोलोकशंकरः ॥ वरंब्रूहीतिवचनंतमाहद्विजसत्तमम् ॥ २५ ॥ रामशर्माशिवंनत्वावचनंप्राहनम्रधीः ॥
भवान्यस्यसमाधिस्थोध्यानेयस्यपरोभवान् ॥ २६ ॥ सदेवोहृदयेमह्यंवसेत्तववरात्प्रभो ॥ इत्युक्तेवचनेतस्यविहस्याहमहेश्वरः ॥ २७॥
एकावैप्रकृतिर्मायात्रिधाब्रह्मस्वरूपिणी ॥ शून्यभूताव्ययस्यैवपुरुषस्यार्द्धतैजसम् ॥ २८ ॥ गृहीत्वालोकजननींपुंक्लीबौसुषुवेसुतौ ॥ पु
मान्नारायणःसाक्षाद्गौरश्चाष्टभुजैर्युतः ॥ २९ ॥ त्रिधाबभूवभगवान्स्वेच्छयाविश्वरक्षकः ॥ अर्धतेजास्सवैविष्णुर्वनमालीचतुर्भुजः ॥ ३० ॥
क्षीरशायीसआदित्यःस्वयंसद्गुणदेवताः ॥ अर्धतेजाद्विधासैवनरनारायणावृषी ॥ ३१ ॥ जिष्णुर्विष्णुःसर्वज्ञेयौपर्वतेगंधमादने ॥ क्लीबः

संकर्षणःसाक्षाद्ब्रह्मरूपंत्रिधाभवत् ॥ ३२ ॥ पूर्वार्द्धाद्गौरशेषश्चपरार्द्धाद्रामलक्ष्मणौ ॥ गौरशेषोद्वापरान्तेबलभद्रःसवैस्वयम् ॥ ३३ ॥
रामलक्ष्मणयोर्ध्यानंबलभद्रस्यपूजनम् ॥ सदामयाचकर्तव्यंतत्प्राप्यत्वंसुखीभव ॥ ३४ ॥ इत्युक्त्वान्तर्दधेदेवोरामानन्दस्यचाभवत् ॥
कृष्णचैतन्यमागम्यद्वादशाब्दवयोवृतम्॥३५॥शिष्योभूत्वास्थितस्तत्रकृष्णचैतन्यपूजकः॥कृतंतदाज्ञयातेनाध्यात्मरामायणंशुभम् ३६॥
॥ सूतउवाच ॥ निम्बादित्यस्सवैविप्रोरामानुजसमन्वितः ॥ श्रुत्वायज्ञांशचरितंपुरींशान्तिमयींगतः ॥ ३७ ॥ यज्ञांशेषोडशाब्देच
नत्वातंतौसमास्थितौ ॥ ऊचतुःकृष्णचैतन्यंभवताकिंमतंस्मृतम् ॥ ३८ ॥ विहस्याहसयज्ञांशःशाक्तोऽहंशक्तिपूजकः ॥ शैवोऽहंवैद्विजौ
नित्यंलोकार्थेशंकरव्रती ॥ ३९ ॥ वैष्णवोऽहंध्यानपरोदेवदेवस्यभक्तिमान् ॥ अहंभक्तिमदंपीत्वापापपुंसोबालेशुभम् ॥ ४० ॥ शक्त्यैसम
र्प्यहोमान्तेज्ञानाग्नौयज्ञतत्परः ॥ इतिश्रुत्वाद्विजौतौतुतस्यशिष्यत्वमागतौ ॥४१॥ आचारमार्गमागम्यसर्वपूज्यौबभूवतुः ॥ तदाज्ञयाचार
भाष्यंकृत्वारामानुजोमुनिः ॥ ४२ ॥ उवासतत्रमतिमान्कृष्णचैतन्यपूजकः ॥ निम्बादित्योगुरोराज्ञांपुरस्कृत्यमहामुनिः॥४३॥कृष्णखंडं
पुराणांगंचक्रेदशसहस्रकम् ॥ तत्रोष्यगुरुसेवाढ्योराधाकृष्णप्रपूजकः ॥४४॥ सूतउवाच ॥ विष्णुस्वामीसवैविप्रोगतःशान्तिपुरींशुभाम्॥
यज्ञांशऊनविंशाब्देनत्वातंप्राहसद्द्विजः ॥ ४५ ॥ कोदेवःसर्वदेवानांपूज्योब्रह्माण्डगोचरे ॥ इतिश्रुत्वासभगवानुवाचद्विजसत्तमम् ॥ ४६॥
सर्वपूज्योमहादेवोभक्तानुग्रहकारकः ॥ विष्णवीश्वरश्चरुद्रेशोब्रह्मेशोभगवान्हरः ॥ ४७ ॥ विनातत्पूजनेनैवपदार्थानिष्फलाहिते ॥ येतुवै
विष्णुभक्ताश्चशंकरार्चनतत्पराः ॥ ४८ ॥ शिवप्रसादात्सुलभावैष्णवीभक्तिरुत्तमा ॥ वैष्णवःपुरुषोभूत्वाशंकरंलोकशंकरम् ॥४९॥ कर्म
भूम्यांसमागम्यनपूजातिसनारकः ॥ विष्णुस्वामीतितच्छ्रुत्वाशिष्योभूत्वाचतद्गुणैः ॥ ५० ॥ कृष्णमंत्रमुपासित्वासबभूवशिवार्चकः ॥
वैष्णवीसंहितातेननिर्मिताचतदाज्ञया ॥ ५१ ॥ तत्रोष्यविष्णुभक्तश्चकृष्णचैतन्यपूजकः ॥ ॥ सूतउवाच ॥ मध्वाचार्यःकृष्णपरो
ज्ञात्वायज्ञांशमुत्तमम् ॥ ५२ ॥ गत्वाशान्तिपुरींरम्यांनत्वातंप्राहसद्द्विजः ॥ कृष्णोऽयंभगवान्साक्षात्तदन्येविश्वकारकाः ॥ ५३ ॥ देवाधा
त्रादयोज्ञेयास्तर्हितत्पूजनेनकिम् ॥ शक्तिमार्गपराविप्रावृथाहिंसामयैर्मखैः ॥ ५४ ॥ अश्वमेधादिभिर्देवान्पूजयन्तिमहीतले ॥ इति

श्रुत्वाविहस्याहयज्ञांशश्चशचीसुतः ॥ ५५ ॥ नकृष्णोभगवान्साक्षात्तामसोऽयंचशक्तिजः ॥ चौरोऽयंसर्वभोगीचहिंसकोमांसभक्षकः ॥
॥ ५६ ॥ परस्त्रियंभजेद्योवैसगच्छेद्यममंदिरम् ॥ चौरोयमालयंगच्छेज्जीवहंताविशेषतः ॥ ५७ ॥ एभिश्चलक्षणैर्हीनोभगवान्प्रकृतेःपरः ॥
यस्यबुद्धिःसवैब्रह्माहंकारोयस्यवैशिवः ॥ ५८ ॥ शब्दमात्रागणेशश्चस्पर्शमात्रायमःस्वयम् ॥ रूपमात्राकुमारोवैरसमात्राचयक्षराट् ॥ ५९ ॥
गंधमात्राविश्वकर्माश्रवणंभगवाञ्छनिः ॥ यस्यत्वक्सबुधोज्ञेयश्चक्षुस्सूर्यःसनातनः ॥ ६० ॥ यज्जिव्हाभगवाञ्छुक्रोघ्राणस्तस्याश्विनीसुतौ ॥
यन्मुखंभगवाञ्जीवोयस्यहस्तस्तुदेवराट् ॥ ६१ ॥ कृष्णोऽयंतस्यचरणौलिंगंदक्षःप्रजापतिः ॥ गुदंतद्भगवान्मृत्युस्तस्मैभगवतेनमः ॥ ६२ ॥
हिंसायज्ञैश्चभगवान्सचतृप्तिमवाप्नुयात् ॥ सचयज्ञपशुर्वह्नौब्रह्मभूयायकल्पते ॥ ६३ ॥ तस्यमोक्षप्रभावेनमहत्पुण्यमवाप्नुयात् ॥
विधिहीनोनरःपापीहिंसायज्ञंकरोतियः ॥ ६४ ॥ अंधतामिस्रनरकंतद्दोषेणवसेच्चिरम् ॥ महत्पुण्यंमहत्पापंहिंसायज्ञेषुवर्तते ॥ ६५ ॥
अतस्तुभगवान्कृष्णोहिंसायज्ञंकलौयुगे ॥ समाप्यकार्तिकेमासिप्रातिपच्छुक्लपक्षके ॥ ६६ ॥ अन्नकूटमयंयज्ञंस्थापयामासभूतले ॥
देवराजस्तदाक्रुद्धोऽनुजंप्रतिसुदुःखितः ॥ ६७ ॥ व्रजंसंप्लावयामासतदाकृष्णःसनातनीम् ॥ प्रकृतिंसचतुष्टावलोकमंगलहेतवे ॥ ६८ ॥
तदासाप्रकृतिर्मातास्वपूर्वाद्दिव्यविग्रहम् ॥ राधारूपंमहत्कृत्वाह्लादिकृष्णस्यचागता ॥ ६९ ॥ तच्छक्त्याभगवान्कृष्णोधृत्वागोवर्धनंगिरिम् ॥
नाम्नागिरिधरोदेवःसर्वपूज्योबभूवह ॥ ७० ॥ राधाकृष्णस्सभगवान्पूर्णब्रह्मसनातनः ॥ अतःकृष्णोनभगवान्राधाकृष्णःपरःप्रभुः ॥ ७१ ॥ इतिश्रुत्वा
वचस्तस्यमध्वाचार्योहरिप्रियः ॥ शिष्योभूत्वास्थितस्तत्रकृष्णचैतन्यपूजकः ॥ ७२ ॥ इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडापर
पर्यायेकलियुगीयेतिहाससमुच्चयेकृष्णचैतन्ययज्ञांशशिष्यबलभद्रविष्णुस्वामिमध्वाचार्यादिवृत्तांतवर्णनेएकोनविंशोध्यायः ॥ १९ ॥ छ ॥
॥ सूतउवाच ॥ भट्टोजिस्सचशुद्धात्माशिवभक्तिपरायणः ॥ कृष्णचैतन्यमागम्यनमस्कृत्यवचोऽब्रवीत् ॥ १ ॥ महादेवोगुरुःसर्वैशिवआत्माशरी
रिणाम् ॥ विष्णुर्ब्रह्माचतद्दासौताभ्यांतत्पूजनेनकिम् ॥ २ ॥ इतिश्रुत्वासयज्ञांशोविंशद्बद्वयोवृतः ॥ विहस्याहसभट्टोजिंनायंशंभुर्महेश्वरः ॥ ३ ॥
समर्थोभगवाञ्छंभुःकर्ताकिंनशरीरिणाम् ॥ नभर्ताचविनाविष्णुंसंहर्तायंसदाशिवः ॥ ४ ॥ एकमूर्तिस्त्रिधाजाताब्रह्माविष्णुर्महेश्वरः ॥ शाक्त

मार्गेणभगवान्ब्रह्मामोक्षप्रदायकः ॥ ५ ॥ विष्णुर्वैष्णवमार्गेणजीवानांमोक्षदायकः ॥ शंभुर्वैशैवमार्गेणमोक्षदाताशरीरिणाम् ॥ ६ ॥
शाक्तःसदाश्रमोगेहीयज्ञभुक्पितृदेवगः ॥ वानप्रस्थाश्रमोयोवैवैष्णवःकन्दमूलभुक् ॥ ७ ॥ यत्याश्रमः सदारौद्रोनिर्गुणः शुद्धविग्रहः ॥
ब्रह्मचर्याश्रमस्तेषामनुगामीमहाश्रमः॥ ८ ॥ इतिश्रुत्वागुरोर्वाक्यंशिष्योभूत्वासवैद्विजः ॥ तृतीयाङ्गंचवेदानांव्याचख्यौपाणिनिकृतम्॥९॥
तदाज्ञयाचसिद्धान्तकौमुद्यास्सचकारह ॥ तत्रोष्यदीक्षितोधीमान्कृष्णचैतन्यसेवकः ॥ १० ॥ ॥ सूतउवाच ॥ वराहमिहरोधीमान्सचसू
र्यपरायणः ॥ द्वाविंशाब्देचयज्ञांशंतमागत्यवचोऽब्रवीत् ॥११॥ सूर्योऽयंभगवान्साक्षात्त्रयोदेवायतोऽभवन् ॥ प्रातर्ब्रह्माचमध्याह्नेविष्णुस्सा
यंसदाशिवः॥१२॥अतोरवेःशुभापूजात्रिदेवयजनेनकिम्॥इतिश्रुत्वासयज्ञांशोविहस्याहशुभंवचः॥१३॥द्विधाबभूवप्रकृतिरपराचपरातथा॥
नाममात्रातथापुष्पमात्रातन्मात्रकातथा ॥ १४ ॥ शब्दमात्रास्पर्शमात्रारूपमात्रारसातथा ॥ गंधमात्रातथाज्ञेयापराप्रकृतिरष्टधा ॥१५ ॥
अपरायांजीवभूतानित्यशुद्धाजगन्मयी ॥ भूमिरापोऽनलोवायुःखंमनोबुद्धिरेवच ॥ १६ ॥ अहंकारइतिज्ञेयाप्रकृतिश्चापराष्टधा ॥ विष्णुर्ब्र
ह्मामहादेवोगणेशोयमराड्गुहः ॥ १७ ॥ कुबेरोविश्वकर्माचपराप्रकृतिदेवता ॥ सुमेरुर्वरुणोवह्निर्वायुश्चैवध्रुवस्तथा ॥ १८ ॥
सोमोरविस्तथाशेषोऽपराप्रकृतिदेवता ॥ अतःसोमपतीरुद्रोरविःस्वामीविधिःस्वयम्॥ १९ ॥ शेषस्वामीहरिःसाक्षान्नमस्तेभ्योनमोनमः ॥
इतिश्रुत्वातदाविप्रःशिष्योभूत्वाचतद्गुरोः ॥ २० ॥ तदाज्ञयाचतुर्थाङ्गंज्योतिःशास्त्रंचकारह ॥ वराहसंहितांनामबृहज्जातकमेवहि ॥ २१ ॥
क्षुद्रतंत्रांस्तथान्यान्वैकृत्वातत्रसचावसत् ॥ सूतउवाच ॥ वाणीभूषणएवापिशिवभक्तिपरायणः ॥ २२ ॥ कृष्णचैतन्यमागम्यवचःप्राह
विनम्रधीः ॥ विष्णुमायाजगद्धात्रीसैकाप्रकृतिरुत्कृता ॥२३॥ तयाजातमिदंविश्वंविश्वाद्देवास्समुद्भवाः॥ विश्वेदेवस्सपुरुषश्शक्तिजोऽहुधा
भवत् ॥ २४ ॥ ब्रह्माविष्णुर्हरश्चैवदेवाःप्रकृतिसंभवाः ॥ अतोभगवतीपूज्यातर्हितत्पूजनेनकिम् ॥ २५ ॥ इतिश्रुत्वासयज्ञांशोविहस्याह
द्विजोत्तमम् ॥ नवैभगवतीश्रेष्ठाजडरूपागुणात्मिका ॥ २६ ॥ एकासाप्रकृतिर्मायारचितुंजगतांक्षमा ॥ पुरुषस्यसहायेनयोषितेवनरस्य
च ॥ २७ ॥ देवीभागवतेशास्त्रेप्रसिद्धेयंकथाद्विज ॥ कदाचित्प्रकृतिर्देवीस्वेच्छयाचजगदिदम् ॥२८॥ निर्मितंजडभूतंतद्बहुधाबोधितंतया॥

नचैतन्यमभूद्विप्रविस्मिताप्रकृतिस्तदा ॥ २९ ॥ शून्यभूतंचपुरुषंचैतन्यंसमतोषयत् ॥ प्रविष्टोभगवान्देवीमायाजनितगोलके ॥ ३० ॥
स्वप्नवद्वास्वयंजातश्चैतन्यमभवज्जगत् ॥ अतःश्रेष्ठःसभगवान्पुरुषोनिर्गुणःपरः ॥ ३१ ॥ प्रकृत्यांस्वेच्छयाजातोलिंगरूपस्तदाऽभवत् ॥
पुँल्लिंगप्रकृतौजातःपुँल्लिंगोऽयंसनातनः ॥ ३२ ॥ स्त्रीलिंगप्रकृतौजातःस्त्रीलिंगोऽयंसनातनः ॥ नपुंसकप्रकृतौजातःक्लीबरूपःसवैप्रभुः ॥ ३३ ॥
अव्ययप्रकृतौजातोनिर्गुणोऽयमधोक्षजः ॥ नमस्तस्मैभगवतेशून्यरूपायसाक्षिणे ॥ ३४ ॥ इतिश्रुत्वातुतद्वाक्यंशिष्योभूत्वासवैद्विजः ॥
त्रिविंशाब्देचयज्ञांशेतत्रवासमकारयत् ॥ ३५ ॥ छंदोग्रंथंतुवेदाङ्गंस्वनाम्नातेननिर्मितम् ॥ राधाकृष्णपरंनामजप्त्वाहर्षमवाप्तवान् ॥ ३६ ॥
सूतउवाच ॥ धन्वंतरिर्द्विजोनामब्रह्मभक्तिपरायणः ॥ कृष्णचैतन्यमागम्यनत्वावचनमब्रवीत् ॥ ३७ ॥ भवांस्तुपुरुषःश्रेष्ठोनित्यशुद्धस्स
नातनः ॥ जडभूताचतन्मायासमर्थोभगवान्स्वयम् ॥ ३८ ॥ नित्योऽव्यक्तःपरःसूक्ष्मस्तस्मात्प्रकृतिरुद्भवा ॥ अतःपूज्यस्सभगवान्प्रकृ
त्याःपूजनेनाकिम् ॥ ३९ ॥ इतिश्रुत्वाविहस्याहयज्ञांशस्सर्वशास्त्रगः ॥ नायंश्रेष्ठस्सपुरुषोनक्षमःप्रकृतिंविना ॥ ४० ॥ पुराणेचैववाराहेप्र
सिद्धेयंकथाशुभा ॥ कदाचित्पुरुषोनित्योनाममात्रःस्वकेच्छया ॥ ४१ ॥ बभूवबहुधातत्रयथाप्रेतस्तथास्वयम् ॥ असमर्थोविरचितुंजगन्तिपुरुषः
परः ॥ ४२ ॥ तुष्टावप्रकृतिंदेवींचिरकालंसनातनीम् ॥ तदादेवीचतंप्राप्यमहत्तत्त्वंचकारह ॥ ४३ ॥ सोऽहंकारश्चमहतोजातास्तन्मात्रकास्ततः ॥
महाभूतान्यतोऽप्यासञ्जातंतैश्चजगदिदम् ॥ ४४ ॥ अतस्सनातनौचोभौपुरुषात्प्रकृतिःपरा ॥ प्रकृतेःपुरुषश्चैवतस्मात्ताभ्यांनमोनमः ॥
॥ ४५ ॥ इतिधन्वंतरिःश्रुत्वाशिष्योभूत्वाचतद्गुरोः ॥ तत्रोष्यचैववेदाङ्गंकल्पवेदंचकारह ॥ ४६ ॥ सुश्रुतादपरावापिशिष्याधन्वंतरेः
स्मृताः ॥ सूतउवाच ॥ जयदेवस्सवैविप्रोबौद्धमार्गपरायणः ॥ ४७ ॥ कृष्णचैतन्यमागम्यपंचविंशवयोवृतम् ॥ नत्वोवाचवचोरम्यंसच
श्रेष्ठउपापतिः ॥ ४८ ॥ यस्यनाभेरभूत्पद्मंब्रह्मणासहनिर्गतम् ॥ अतस्सब्रह्मसूर्नामसामवेदेषुगीयते ॥ ४९ ॥ विश्वोनारायणस्साक्षा
द्यस्यकेतौसमास्थितः ॥ विश्वकेतुरतोनामनानिरुद्धोऽनिरुद्धकः ॥ ५० ॥ ब्रह्मवेलाचतत्पत्नीनित्याचोषामहोत्तमा ॥ सर्वलोकहितार्थाय
स्वयमर्चावतारकः ॥ ५१ ॥ इतिश्रुत्वाविहस्याहयज्ञांशस्तंद्विजोत्तमम् ॥ वेदोनारायणस्साक्षात्पूजनीयोनरैःसदा ॥ ५२ ॥ ततः

कालस्ततःकर्मततोधर्मःप्रवर्तते ॥ धर्मात्कामःसमुद्भूतःकामपत्नीरतिःस्वयम् ॥ ५३ ॥ रत्यांकामात्समुद्भूतोऽनिरुद्धोनामदेवता ॥
उषासातस्यभगिनीतेनसार्द्धंसमुद्भवा ॥ ५४ ॥ कालोनामसवैकृष्णोराधातस्यसहोदरा ॥ कर्मरूपःसवैब्रह्मानियतिस्तत्सहोदरा ॥ ५५ ॥
धर्मरूपोमहादेवःश्रद्धातस्यसहोदरा ॥ अनिरुद्धःकथंचेशोभवतोक्तःसनातनः ॥ ५६ ॥ त्रिधासृष्टिश्चब्रह्माण्डेस्थूलासूक्ष्माचकारणा ॥
स्थूलसृष्टचैसमुद्भूतोदेवोनारायणःस्वयम्॥५७॥नारायणीचतच्छक्तिस्तयोर्जलसमुद्भवः॥जलाज्जातस्सवैशेषस्तस्योपरिसमास्थितौ॥५८॥
सुप्तेनारायणेदेवेनाभेःपंकजमुत्तमम् ॥ अनंतयोजनायाममुदभूच्चततोविधिः ॥ ५९ ॥ विधेःस्थूलमयीसृष्टिर्देवतिर्य्यङ्नरादिका ॥
सूक्ष्मसृष्टचैसमुद्भूतःसोऽनिरुद्धउषापतिः॥६०॥ ततोवीर्यमयंतोयंजातंब्रह्मांडमस्तके ॥ वीर्याज्जातस्सवैशेषस्तस्योपरिसचास्थितः॥६१॥
तस्यनाभेस्समुद्भूतोब्रह्मालोकपितामहः ॥ सूक्ष्मसृष्टिस्ततोजातायथास्वप्नेपिदृश्यते ॥ ६२ ॥ हेतुसृष्टचैसमुद्भूतोवेदोनारायणःस्वयम् ॥
वेदात्कालस्ततःकर्मततोधर्मादयःस्मृताः ॥ ६३ ॥ त्वद्गुरुश्चजगन्नाथउड्रदेशनिवासकः॥ मयातत्रैवगन्तव्यंसाशिष्येणाद्यभोद्विजाः ॥६४॥
इतिश्रुत्वातुवचनंकृष्णचैतन्यकिंकराः ॥ स्वान्स्वाञ्छिष्यान्समाहूयतत्पश्चात्प्रययुश्चते ॥ ६५ ॥ शांकराद्वादशगणारामानुजमुपाययुः ॥
नामदेवादयस्तत्रगणास्सततसमागताः ॥६६॥ रामानन्दंनमस्कृत्यसंस्थितास्तस्यसेवकाः ॥ रोपणश्चतदागत्यस्वशिष्यैर्बहुभिर्वृतः॥६७॥
कृष्णचैतन्यमागम्यनमस्कृत्यास्थितःस्वयम् ॥ जगन्नाथपुरींतेवैप्रययुर्भक्तितत्पराः ॥ ६८ ॥ निधयःसिद्धयस्तत्रतेषांसेवार्थमागताः ॥
सर्वेचदशसाहस्रावैष्णवाःशैवशाक्तिकैः ॥ ६९ ॥ यज्ञांशंचपुरस्कृत्यजगन्नाथपुरींययुः ॥ अर्चावतारोभगवाननिरुद्धउषापतिः ॥ ७० ॥
तदागमनमालोक्याद्विजरूपधरोमुनिः ॥ जगन्नाथःस्वयंप्राप्तोयत्रयज्ञांशकादयः ॥ ७१ ॥ यज्ञांशस्तंसमालोक्यनत्वावचनमब्रवीत् ॥
किंमतंभवताज्ञातंकलौप्राप्तेभयानके ॥ ७२ ॥ तत्सर्वंकृपयाब्रूहिश्रोतुमिच्छामितत्वतः ॥ इतिश्रुत्वातुवचनंजगन्नाथोहरिःस्वयम् ॥ ७३ ॥
उवाचवचनंरम्यंलोकमंगलहेतवे ॥ मिश्रदेशोद्भवाम्लेच्छाःकाश्यपेनैवशासिताः ॥ ७४ ॥ संस्कृताःशूद्रवर्णेनब्रह्मवर्णमुपागताः ॥ शिखा
सूत्रंसमाधायपठित्वावेदमुत्तमम् ॥ ७५ ॥ यज्ञैश्चपूजयामासुर्देवदेवंशचीपतिम् ॥ दुःखितोभगवानिंद्रःश्वेतद्वीपमुपागतः ॥ ७६ ॥

स्तुत्यामांबोधयामासदेवमंगलहेतवे ॥ प्रबुद्धंमांवचःप्राहशृणुदेवदयानिधे ॥ ७७ ॥ शूद्रसंस्कृतमन्नंचखादितुंनद्विजोऽर्हति ॥ तथाच
शूद्रजनितैर्यज्ञैस्तृप्तिंनचाप्नुयाम् ॥ ७८ ॥ काश्यपेस्वर्गतेप्राप्तेमागधेराज्ञिशासति ॥ ममशत्रुर्बलिर्दैत्यःकलिपक्षमुपागतः ॥ ७९ ॥
निस्तेजाश्चयथाऽहंस्यांतथावैकर्तुमुद्यतः ॥ मिश्रदेशोद्भवेम्लेच्छेसांस्कृतींतेनसंस्कृता ॥ ८० ॥ भाषादेवविनाशायदैत्यानांवर्द्धनायच ॥
आर्य्येषुप्राकृतभाषादूषितातेनवैकृता ॥ ८१ ॥ अतोमांरक्षभगवन्भवंतंशरणागतम् ॥ इतिश्रुत्वातदाहंवैदेवराजमुवाचह ॥ ८२ ॥
भवन्तोद्वादशादित्यागन्तुमर्हंतिभूतले ॥ अहंलोकहितार्थायजनिष्यामिकलौयुगे ॥ ८३ ॥ प्रवीणोनिपुणोऽभिज्ञःकुशलश्चकृतीसुखी ॥
निष्णातःशिक्षितश्चैवसर्वज्ञःसुगतस्तथा ॥८४॥ प्रबद्धश्चतथाबुद्धआदित्याःक्रमतोभवाः॥धातामित्रोऽर्यमाशक्रोमेघःप्रांशुर्भगस्तथा॥८५॥
विवस्वांश्चतथापूषासवितात्वाष्ट्रविष्णुकौ ॥ कीकटेदेशआगत्यतेसुराज्ञज्ञिरेक्रमात् ॥ ८६ ॥ वेदानिन्दांपुरस्कृत्यबौद्धशास्त्रमचीकरन् ॥
तेभ्योवेदान्समादायमुनिभ्यःप्रददुस्सुराः ॥ ८७ ॥ वेदनिंदाप्रभावेनतेसुराःकुष्ठिनोऽभवन् ॥ विष्णुदेवमुपागम्यतुष्टुवुर्बौद्धरूपिणम्॥८८॥
हरिर्योगबलेनैवतेषांकुष्ठंननाशह ॥ तद्दोषान्नग्नभूतश्चबौद्धस्सतेजसाभवत् ॥ ८९ ॥ पूर्वार्द्धान्नेमिनाथश्चपरार्द्धाद्बौद्धएवच ॥
बौद्धराज्यविनाशायदारुपाषाणरूपवान् ॥ ९० ॥ अहंसिंधुतटेजातोलोकमंगलहेतवे ॥ इंद्रद्युम्नश्चनृपतिःस्वर्गलोकादुपागतः ॥ ९१ ॥
मंदिरंरचितंतेनतत्राहंसमुपागतः ॥ अत्रस्थितश्चयज्ञांशप्रसादमहिमामहान् ॥ ९२ ॥ सर्ववांछितदंलोकेस्थापयामासमोक्षदम् ॥
वर्णधर्मश्चनैवात्रवेदधर्मस्तथानहि ॥ ९३ ॥ व्रतंचात्रनयज्ञांशमण्डलेयोजनांतरे ॥ येनोक्तायावनीभाषायेनबौद्धोविलोकितः ॥ ९४ ॥
तस्यप्राप्तंमहत्पापंस्थितोऽहंतदघापहः ॥ मांविलोक्यनरःशुद्धःकलिकालेभविष्यति ॥ ९५ ॥ इतिश्रीभविष्येमहापुराणेप्रतिस
र्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेकृष्णचैतन्यचरित्रेजगन्नाथमाहात्म्येविंशोऽध्यायः ॥२०॥ सूतउवाच ॥ ॥ इति
श्रुत्वावचस्तस्यजगन्नाथस्यधीमतः ॥ कृष्णचैतन्यएवापितमुवाचप्रसन्नधीः ॥ १ ॥ भगवन्प्राणिनांश्रेयोयदुक्तंभवतामुने ॥ विस्त
रात्तत्कथांब्रूहियथाबौद्धसमुद्भवः ॥ २ ॥ ॥ जगन्नाथउवाच ॥ ॥ सहस्राब्देकलौप्राप्तेकर्मभूम्यांचभारते ॥ कण्वोनाममुनि

श्रेष्ठस्संप्राप्तःकश्यपात्मजः ॥ ३ ॥ आर्यावतीदेवकन्याकण्वस्यदयिताप्रिया ॥ शक्राज्ञयाचसंप्राप्तौदंपतीशारदातटे ॥ ४ ॥
सरस्वतींनदीरूपांकुरुक्षेत्रनिवासिनीम् ॥ चतुर्वेदमयैःस्तोत्रैःकण्वस्तुष्टावनम्रधीः ॥ ५ ॥ वर्षमात्रान्तरेदेवीप्रसन्नासमुपागता ॥
आर्यसृष्टिसमृद्ध्यैसाददौतस्मैवरंशुभम् ॥ ६ ॥ दशपुत्रास्तयोर्जाताआर्यबुद्धिकराहिते ॥ उपाध्यायोदीक्षितश्चपाठकःशुक्लमि
श्रकौ ॥ ७ ॥ अग्निहोत्रीद्विवेदीचत्रिवेदीपाण्डएवच ॥ चतुर्वेदीतिकाथितायथानामतथागुणाः ॥ ८ ॥ तेवैसरस्वतींदेवींतुष्टु
वुर्नम्रकंधराः ॥ द्वादशाब्दवयोभ्यश्चतेभ्योदेवीस्वशक्तितः ॥ ९ ॥ कृत्वाकन्यादशैमाताशारदाभक्तिवत्सला ॥ उपाध्यायीदीक्षिताचपा
ठकीशुक्लिकाक्रमात् ॥ १० ॥ मिश्राणीचतथाज्ञेयाषष्ठीसाचाग्निहोत्रिणी ॥ द्विवेदिनीतथाज्ञेयाचाष्टमीत्रिवेदिनी ॥ ११ ॥ पाण्डायनी
चनवमीदशमीतुर्यवेदिनी ॥ तासांचस्वपतिभ्योवैसुताःषोडशषोडश ॥ १२ ॥ तेतुगोत्रकराज्ञेयास्तेषांनामानिमेशृणु ॥ कश्यपश्चभर
द्वाजोविश्वामित्रोऽथगौतमः ॥ १३ ॥ जमदग्निर्वसिष्ठश्चवत्सोगौतमएवच ॥ पराशरस्तथागर्गोत्रिर्भृगुश्चांगिरास्तथा ॥ १४ ॥ शृंगीकात्या
यनश्चैवयाज्ञवल्क्यःक्रमात्सुताः ॥ एभिर्नाम्नासुतास्सर्वेज्ञेयाःषोडशषोडश ॥ १५ ॥ सरस्वत्याज्ञयाकण्वोमिश्रदेशमुपाययौ ॥ म्लेच्छा
न्संस्कृतमाभाष्यतदादशसहस्रकान् ॥ १६ ॥ वशीकृत्यस्वयंप्राप्तोब्रह्मावर्तेमहोत्तमे ॥ तेसर्वेतपसादेवींतुष्टुवुश्चसरस्वतीम् ॥ १७ ॥
पंचवर्षान्तरेदेवीप्रादुर्भूतासरस्वती ॥ सपत्नीकाँश्चतान्म्लेच्छाञ्छूद्रवर्णायचाकरोत् ॥ १८ ॥ कारुवृत्तिकरास्सर्वेबभूवुर्बहुपुत्रकाः ॥
द्विसहस्रास्तदातेषांमध्येवैश्याबभूविरे ॥ १९ ॥ तन्मध्येचाचार्यपृथुनाम्नाकश्यपसेवकः ॥ तपसासचतुष्टावद्वादशाब्दंमहामुनिम् ॥ २० ॥
तदाप्रसन्नोभगवान्कण्वोदेववराद्धरः ॥ तेषांचकारराजानंराजपुत्रपुरंददौ ॥ २१ ॥ राजन्यानामतत्पत्नीमागधंसुषुवेतदा ॥ तस्मैकण्वोद
दौग्रामंपूर्वस्यांदिशिमागधम् ॥ २२ ॥ स्वर्गलोकंपुनःप्राप्तःसमुनिःकश्यपात्मजः ॥ स्वर्गतेकाश्यपेविप्रेतेम्लेच्छाःशूद्रवर्णकाः ॥ २३ ॥ य
ज्ञैस्समर्चयामासुर्देवदेवंशचीपतिम् ॥ दुःखितोभगवानिन्द्रस्सबंधुर्जगतीतले ॥ २४ ॥ वेदानाहर्तुमिच्छन्तोब्रह्मयोनौबभूविरे ॥ जिनोनाम
द्विजःकश्चित्तत्पत्नीजयनीस्मृता ॥ २५ ॥ कश्यपाददितेरंशाज्जातौतौकीकटस्थले ॥ तयोस्सकाशात्संजाताआदित्यालोकहेतवे ॥ २६ ॥

कर्मनाशानदीतीरेपुरीबोधगयास्मृता ॥ तत्रोष्यबौद्धशास्त्राढ्याश्चक्रुःशास्त्रार्थमुत्तमम् ॥ २७ ॥ वेदाञ्छूद्रेभ्यआहृत्यविशालांप्रययुःपु
रीम् ॥ समाधिस्थान्मुनीन्सर्वान्समुत्थाययदुःस्वयम् ॥ २८ ॥ गतास्सर्वेसुरास्स्वर्गेततःप्रभृतिभूतले ॥ म्लेच्छाबभूविरेबौद्धास्तदन्येवेद
तत्पराः ॥ २९ ॥ सरस्वत्याःप्रभावेनतआर्याबहवोऽभवन् ॥ तैश्चदेवपितृभ्यश्चहव्यंकव्यंसमर्पितम् ॥ ३० ॥ तृप्तिमन्तःसुराश्चासंस्त
आर्याणांसहस्रकाः ॥ सप्तविंशच्छतेभूमौकलौसंवत्सरेगते ॥ ३१ ॥ बलिनाप्रेषितोभूमौमयःप्राप्तोमहासुरः ॥ शाक्यसिंहगुरुर्गेयोबहु
मायाप्रवर्तकः ॥ ३२ ॥ सनाम्नागौतमाचार्योदैत्यपक्षविवर्द्धकः ॥ सर्वतीर्थेषुतेनैवयंत्राणिस्थापितानिवै ॥ ३३ ॥ तेषामधोगतायेतुबौ
द्धाश्चासन्समन्ततः ॥ शिखासूत्रविहीनाश्चबभूवुर्वर्णसंकराः ॥ ३४ ॥ दशकोटयःस्मृताआर्याबभूवुर्बौद्धपन्थिनः ॥ पंचलक्षास्तदाशेषाः
प्रययुर्गिरिमूर्द्धनि ॥ ३५ ॥ चतुर्वेदप्रभावेनराजन्यावह्निवंशजाः ॥ चत्वारिंशभवायोधास्तैश्चबौद्धास्समुज्झिताः ॥ ३६ ॥ आ
र्यास्तांस्तेतुसंस्कृत्यविंध्याद्रेर्दक्षिणेकृतान् ॥ तत्रैवस्थापयामासुर्वर्णरूपान्समंततः ॥ ३७ ॥ आर्यावर्तःपुण्यभूमिस्तत्रस्थाःपंचलक्षकाः॥
॥ सूतउवाच ॥ इतिश्रुत्वावचस्तस्ययज्ञांशोभगवान्हरिः ॥ ३८ ॥ जगन्नाथस्यशिष्योभूद्वेदमार्गपरायणः ॥ शुक्लदत्तस्यतनयोनित्यान
न्दोद्विजोत्तमः ॥ ३९ ॥ जगन्नाथपदंनत्वाशिष्योभूत्वारराजह ॥ तदाप्रसन्नोभगवाननिरुद्धउषापतिः ॥ ४० ॥ अभिषेकंतयोर्भालेमह
त्त्वेचकारह ॥ महत्त्वपदवीजातातदाप्रभृतिभूतले ॥४१॥ गुरुबंधूप्रसन्नौतौस्वशिष्यान्प्रोचतुर्मुदा ॥ जगन्नाथस्यवदनंपद्मनाभेरुषापतेः
॥४२॥दृष्ट्वायश्चात्रसंप्राप्यसर्वेस्वर्गमवाप्नुयात् ॥ प्रसादंयश्चभुंजीयात्तस्यदेवस्यसादरम् ॥ ४३ ॥ कोटिजन्मभवेद्विप्रोवेदपात्रोमहाधनी ॥
मार्कंडेयवटेकृष्णंदृष्ट्वास्नात्वामहोदधौ ॥ ४४ ॥ इंद्रद्युम्नसरस्येवपुनर्जन्मनविद्यते ॥ इमांगाथांशृणोत्योवैश्रद्धाभक्तिसमन्वितः ॥४५॥यत्पु
रीगमनेपुण्यंफलंतच्छीघ्रमाप्नुयात् ॥ इतियज्ञांशवचनंश्रुत्वासह्यवतारकः ॥ ४६ ॥ वैष्णवाश्चतथेत्युक्त्वातत्रैवान्तरधीयत ॥ एतस्मिन्नंत
रेविप्रकालिनाप्रार्थितोबलिः ॥ ४७ ॥ मयदैत्यंसमाहूयवचनंप्राहदुःखितः ॥ सुकन्दरोम्लेच्छपतिःसदामद्धर्मेरतः ॥ ४८ ॥ सहायंत
स्यदैत्येन्द्रकुरुशीघ्रंममाज्ञया ॥ इतिश्रुत्वाबलेर्वाक्यंयंशतदैत्यसमन्वितः ॥ ४९ ॥ कर्मभूम्यांमयःप्राप्तःकलविद्याविशारदः ॥ म्लेच्छजातीन्

रान्दुष्टान्रेखागणितमुत्तमम् ॥ ५० ॥ एकविंशतिमध्यायंकलवेदमशिक्षयत् ॥ तदाकलान्वितास्म्लेच्छाःकलाविद्याविशारदाः ॥ ५१ ॥
यंत्राणिकारयामासुःसप्तस्वेवपुरीषुच ॥ तदधोयेगतालोकास्तेसर्वेम्लेच्छतांगताः ॥ ५२ ॥ महत्कोलाहलंजातमार्याणांशोककारिणाम् ॥
श्रुत्वातेवैष्णवाःसर्वेकृष्णचैतन्यसेवकाः ॥५३॥ दिव्यमंत्रंगुरोश्चैवपठित्वाप्रययुःपुरीः ॥ रामानन्दस्यशिष्योवैचायोध्यायामुपागतः॥५४॥
कृत्वाविलोमंतंमंत्रंवैष्णवांस्तानकारयत् ॥ भालेत्रिशूलचिह्नंचश्वेतरक्तंतदाभवत् ॥ ५५ ॥ कंठेचतुलसीमालाजिह्वाराममयीकृता ॥
म्लेछास्तेवैष्णवाश्चासन्रामानन्दप्रभावतः ॥ ५६ ॥ संयोगिनश्चतेज्ञेयारामानन्दमतेस्थिताः ॥ आर्याश्चवैष्णवामुख्याअयोध्यायांबभू
विरे ॥ ५७ ॥ निम्बादित्योगतोधीमान्सशिष्यःकांचिकांपुरीम् ॥ म्लेच्छयंत्रंराजमार्गेस्थितंतत्रददर्शह ॥ ५८ ॥ विलोमंस्वगुरोर्मंत्रंकृत्वा
तत्रसचावसत् ॥ वंशपत्रसमारेखाललाटेकंठमालिका ॥ ५९ ॥ गोपीवल्लभमंत्रोहिमुखेतेषांरराजह ॥ तदधोयेगतालोकावैष्णवाश्चबभूविरे
॥ ६० ॥ म्लेच्छाःसंयोगिनोज्ञेयाआर्यास्तन्मार्गवैष्णवाः ॥ विष्णुस्वामीहरिद्वारेजगामस्वगणैर्वृतः॥६१॥ तत्रस्थितंमहायंत्रंविलोमंतच्चकार
ह ॥ तदधोयेगतालोकाआसन्सर्वेचवैष्णवाः ॥ ६२ ॥ ऊर्ध्वपुंड्रद्विरेखाभंतन्मध्येबिन्दुरुत्तमः ॥ ललाटेचस्थितंतेषांकंठेतुलसिगोलकम् ॥
॥ ६३ ॥ मुखेमाधवमंत्रश्चबभूवहितदायकः ॥ मथुरायांसमायातोमध्वाचार्योहरिप्रियः ॥ ६४ ॥ राजमार्गेस्थितंयंत्रंविलोमंसचकारह ॥
तदधोयेगतालोकावैष्णवास्तस्यपक्षगाः ॥ ६५ ॥ करवीरपत्रसदृशंललाटेतिलकंशुभम्॥स्थितंनासार्द्धभागान्तेकंठेतुलसिमालिका॥६६॥
राधाकृष्णशुभंनाममुखेतेषांबभूवह ॥ शंकराचार्यएवापिशैवमार्गपरायणः ॥ ६७ ॥ रामानुजाज्ञयाप्रातःपुरींकाशींगणैर्युतः ॥
कृत्वाविलोमतद्यंत्रंशैवाश्चतदधोऽभवन् ॥ ६८ ॥ त्रिपुंड्रंचस्थितंभालेकंठेरुद्राक्षमालिका ॥ गोविंदमंत्रश्चमुखेतेषांतत्रबभूवह ॥ ६९ ॥
तोतादर्यांचसंप्राप्तस्तदारामानुजः सुखी ॥ ऊर्ध्वरेखाद्वयोर्मध्येसूक्ष्मरेखाचपीतका ॥ ७० ॥ ललाटेतुतथाकंठमालातुलसिकाशुभा ॥
उज्जयिन्यांचसंप्राप्तोवराहमिहरोगुणी ॥ ७१ ॥ तद्यंत्रंनिष्फलंकृत्वानराञ्छैवांश्चकारह ॥ चिताभस्मास्थितंभालेकंठेरुद्राक्षमालिका ॥७२॥
शिवेतिमंगलंनामतेषांतत्रबभूवह ॥ कन्याकुब्जेस्वयंप्राप्तोवाणीभूषणएवहि ॥ ७३ ॥ अर्द्धचंद्राकृतिंपुंड्रंरक्तचंदनमालिका ॥

देव्याश्चनिर्मलंनामतेषांतत्रबभूवह ॥ ७४ ॥ धन्वंतरिः प्रयागेचगत्वातद्यंत्रमुत्तमम् ॥ विलोमंकृतवाँस्तत्रतदधोयेगतानराः ॥ ७५ ॥
अर्द्धपुंड्रंस्मृतंरक्तंसबिंदुचललाटके ॥ रक्तचंदनजामालाकंठेतेषांबभूवह ॥ ७६ ॥ भट्टोजिः सगतोधीमानुत्पलारण्यमुत्तमम् ॥
त्रिपुंड्रंचतथारक्तंकंठेरुद्राक्षमालिका ॥ ७७ ॥ विश्वनाथेतितन्मंत्रेतेषांतत्रबभूवह ॥ रोपणश्चेष्टिकांप्राप्तस्तद्यंत्रंचैवनिष्फलम् ॥ ७८ ॥
कृत्वाजनेजनेतत्रब्रह्ममार्गंददर्शह ॥ जयदेवःस्वयंप्राप्तोद्वारकांविष्णुभक्तिमान् ॥ ७९ ॥ तद्यंत्रंनिष्फलंयातंतदधोयेगतानराः ॥
रक्तरेखास्थिताभालेचैकाकंठेतुमालिका ॥ ८० ॥ पद्माक्षामंत्रगोविन्दस्तत्रतेषांबभूवह ॥ एवंतेवैष्णवाःशैवाःशाक्तिकाबहुधाऽभवन् ॥८१॥
निर्गुणाःशाक्तिकाज्ञेयाःसगुणावैष्णवास्मृताः ॥ निर्गुणाःसगुणायेतुशैवाज्ञेयाबुधैस्तदा ॥ ८२ ॥ समाधिस्थास्त्रयस्त्रिंशद्देवाःपुण्याबभूविरे॥
नित्यानन्दःशान्तिपुरेनदीहापत्तनेहरिः ॥८३॥ कबीरोमागधेदेशेरैदासस्तुकालिंजरे ॥ सधनोनैमिषारण्येसमाधिस्थोबभूवह ॥८४॥ अद्या
पिसंस्थितोविप्रवैष्णवानांगणोमहान् ॥ यज्ञभागमहावृद्धिःसंजातामेरुमूर्द्धनि ॥८५ ॥ इतितेकथितंविप्रयज्ञांशचरितंशुभम् ॥ यच्छ्रुत्वाच
नरानार्योमहत्पुण्यमवाप्नुयुः॥८६॥मयाद्यानिष्फलादैत्याबलिपार्श्वमुपागताः॥८७॥इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखंडाप
पर्यायेकलियुगीयेतिहाससमुच्चयेकृष्णचैतन्यचरित्रंनामैकविंशोऽध्यायः ॥२१॥छ॥सूतउवाच॥ इतिश्रुत्वाबलिर्दैत्योदेवानांविजयंमहत् ॥
रोषणंनामदैत्येंद्रंसमाहूयवचोऽब्रवीत् ॥ १ ॥ सुतस्तिमिरलिंगस्यसरुषोनामविश्रुतः ॥ त्वंहितत्रसमागम्यदैत्यकार्यंमहत्कुरु ॥ २ ॥
इतिश्रुत्वासवैदैत्योह्यादिविप्राप्तरोषणः ॥ ननाशवेदमार्गस्थान्देहलीदेशमास्थितः ॥ ३ ॥ पंचवर्षंकृतंराज्यंतत्सुतोबाबरोभवत् ॥
विंशदब्दंकृतंराज्यंहोमायुस्तत्सुतोऽभवत् ॥ ४ ॥ होमायुषामदान्धेनदेवताश्चनिराकृताः ॥ तेसुराः कृष्णचैतन्यंनदीहोपवनेस्थित
म् ॥ ५ ॥ तुष्टुवुर्बहुधातत्रश्रुत्वाकृद्धोहरिःस्वयम् ॥ स्वतेजसाचतद्राज्यंविघ्नभूतंचकारह ॥६॥ तत्सैन्यजनितैर्लोकैर्होमायुश्चनिराकृतः ॥
महाराष्ट्रैस्तदातत्रशेषशाकःसमास्थितः ॥ ७ ॥ देहलीनगरेरम्येम्लेच्छोराज्यंचकारह ॥ धर्मकार्यंकृतंतेनतद्राज्यंपंचहायनम् ॥ ८ ॥
ब्रह्मचारीमुकुंदश्चशंकराचार्यगोत्रजः ॥ प्रयागेचतपःकुर्वन्विंशच्छिष्यैर्युतःस्थितः ॥ ९ ॥ बाबरेणचधूर्तेनम्लेच्छराजेनदेवताः ॥

भ्रंशिताःसतदाज्ञात्वावह्नौदेहंजुहाववै ॥ १० ॥ तस्यशिष्यागतावह्नौम्लेच्छनाशनहेतुना ॥ गोदुग्धेचास्थितंरोमपीत्वासपयसामुनिः॥११॥
मुकुंदस्तस्यदोषेणम्लेच्छयोनौबभूवह ॥ होमायुषश्चकाश्मीरेसंस्थितस्यैवपुत्रकः ॥ १२ ॥ जातमात्रेसुतेतस्मिन्वाग्उवाचाशरीरिणी ॥
अकस्माच्चवरोजातःपुत्रोऽयंसर्वभाग्यवान् ॥ १३ ॥ पैशाचेदारुणेमार्गेनभूतोनभविष्यति ॥ अतःसोकवरोनामहोमायुस्तनयस्तव ॥
॥ १४ ॥ श्रीधरःश्रीपतिःशंभुर्वरेण्यश्चमधुव्रती ॥ विमलोदेववान्सोमोवर्द्धनोवर्तकोरुचिः ॥१५॥ मांधातामानकारीचकेशवोमाधवोमधुः ॥
देवापिःसोमपाःशूरोमदनोयस्यशिष्यकाः ॥ १६॥ समुकुन्दोद्विजःश्रीमान्दैवात्त्वद्देहमागतः ॥ इत्याकाशवचःश्रुत्वाहोमायुश्चप्रसन्नधीः ॥
॥ १७ ॥ ददौदानंक्षुधार्तेभ्यःप्रेम्णापुत्रमपालयत् ॥ दशाब्देतनयेजातेदेहलीदेशमागतः ॥ १८॥ शेषशाकंपराजित्यसचराजाबभूवह ॥
अब्दंतेनकृतंराज्यंतत्पुत्रश्चनृपोभवत् ॥ १९ ॥ संप्राप्तेऽकबरेराज्यंसप्तशिष्याश्चतत्प्रियाः ॥ पूर्वजन्मनियेमुख्यास्तेप्राप्ताभूपतिंप्रति॥२०॥
केशवोगानसेनश्चवैजवाक्सतुमाधवः ॥ म्लेच्छास्तेचस्मृतास्तत्रहरिदासोमधुस्तथा ॥२१॥ मध्वाचार्यकुलेजातोवैष्णवःसर्वरागवित् ॥ पूर्व
जन्मनिदेवापिःसचवीरबलोऽभवत् ॥ २२ ॥ ब्राह्मणःपाश्चिमात्योवैवाग्देवीवरदर्पितः ॥ सोमपामानसिंहश्चगौतमान्वयसंभवः ॥२३॥ सेना
पतिश्चनृपतेरार्यभूपशिरोमणेः ॥ सूरश्चैवद्विजोजातोदक्षिणश्चैवपंडितः ॥ २४ ॥ बिल्वमंगलएवापिनाम्नातन्नृपतेःसखा ॥ नायिकाभेदनि
पुणोवेश्यानांसचपारगः ॥ २५ ॥ मदनोब्राह्मणोजातःपौर्वात्यःसचनर्तकः ॥ चंदनोनामविख्यातोरहःक्रीडाविशारदः ॥ २६ ॥ अन्यदे
शगताःशिष्यास्तेषांपूर्वास्त्रयोदश ॥ अनपत्यसुतोजातःश्रीधरःशत्रुवेदितः ॥ २७॥ विख्यातस्तुलसीशर्मापुराणनिपुणःकविः ॥ नारी
शिक्षांसमादायराघवानन्दमागतः ॥ २८ ॥ शिष्योभूत्वास्थितःकाश्यांरामानन्दमतेस्थितः ॥ श्रीपतिःसबभूवान्धोमध्वाचार्यमतेस्थितः॥
॥ २९ ॥ सूरदासइतिज्ञेयःकृष्णलीलाकरःकविः ॥ शंभुर्वैचंद्रभट्टस्यकुलेजातोहरिप्रियः ॥ ३०॥ रामानन्दमतेसंस्थोभक्तकीर्तिपरायणः॥
वरेण्यःसोग्रमुड्नामारामानंदमतेस्थितः ॥ ३१ ॥ ज्ञानध्यानपरोनित्यंभाषाछंदकरःकविः ॥ मधुव्रतीसवैजातोकीलकोनामविश्रुतः॥३२॥
रामलीलाकरोधीमान्रामानन्दमतेस्थितः ॥ विमलश्चसवैजातःसनाम्नैवदिवाकरः ॥ ३३ ॥ सीतालीलाकरोधीमान्रामानन्दमतेस्थितः ॥ दे

ववान्केशवोजातोविष्णुस्वामिमतेस्थितः ॥ ३४ ॥ कविप्रियादिरचनांकृत्वाप्रेतत्वमागतः ॥ रामज्योत्स्नामयंग्रंथंकृत्वास्वर्गमुपाययौ ॥
॥ ३५ ॥ सोमोजातःसवैव्यासोनिम्बादित्यमतेस्थितः ॥ रहःक्रीडामयंग्रंथंकृत्वास्वर्गमुपाययौ॥३६॥वर्द्धनश्चसवैजातोनाम्नाचरणदासकः॥
ज्ञानमालामयंकृत्वाग्रंथंरैदासपन्थगः ॥ ३७ ॥ वर्तकःसचवैजातोरोपणस्यमतेस्थितः ॥ रत्नभानुरितिज्ञेयोभाषाकर्ताचजैमिनेः ॥ ३८ ॥
रुचिश्चरोचनोजातोमध्वाचार्यमतेस्थितः ॥ नानागानमयींलीलांकृत्वास्वर्गमुपाययौ ॥ ३९ ॥ मांधाताभूपतिर्नामकायस्थःसबभूवह ॥
मध्वाचार्योभागवतंचक्रेभाषामयंशुभम् ॥ ४० ॥ मानकारोनारिभावान्नारीदेहमुपागतः ॥ मीरानामेतिविख्याताभूपतेस्तनयाशुभा ॥
॥ ४१ ॥ माशोभाचतनौयस्यागतिर्गजसमाकिल ॥ सामीराचबुधैःप्रोक्तामध्वाचार्यमतेस्थिता ॥ ४२ ॥ एवंतेकथितंविप्रभाषाग्रंथ
प्रकारणम् ॥ प्रबंधंमंगलकरंकलिकालेभयंकरे ॥ ४३ ॥ सभूपोऽकबरोनामकृत्वाराज्यमकंटकम् ॥ शताद्धंनचशिष्यैश्चवैकुंठभवनं
ययौ ॥ ४४ ॥ सलोमातनयस्तस्यकृतंराज्यंपितुःसमम् ॥ खुर्दकस्तनयस्तस्यदशाब्दंचकृतंपदम् ॥ ४५ ॥ चत्वारस्तनयास्तस्यनव
रंगोहिमध्यमः ॥ पितरंचतथाभ्रातृञ्जित्वाराज्यमचीकरत् ॥ ४६ ॥ पूर्वजन्मनिदैत्योऽयमन्धकोनामविश्रुतः ॥ कर्मभूम्यांतदंशे
नदैत्यराजाज्ञयाययौ ॥ ४७ ॥ तेनैवबहुधामूर्तीर्भ्रंशिताश्चसमंततः ॥ दृष्ट्वादेवास्तदागत्यकृष्णचैतन्यमब्रुवन् ॥ ४८ ॥ भगवन्दैत्यरा
जांशःसजातश्चमहीपतिः ॥ भ्रंशयित्वासुरान्वेदान्दैत्यपक्षंविवर्द्धते ॥ ४९ ॥ इतिश्रुत्वासयज्ञांशोनदीहोपवनेस्थितः ॥ शशापतंदुरा
चारंयथावंशक्षयोभवेत् ॥ ५० ॥ राज्यमेकोनपंचाशत्कृतंतेनदुरात्मना ॥ सेवाजयोनामनृपोदेवपक्षविवर्द्धनः ॥ ५१ ॥ महाराष्ट्रद्वि
जस्तस्ययुद्धविद्याविशारदः ॥ हत्वातंचदुराचारंतत्पुत्रायचतत्पदम् ॥ ५२ ॥ दत्वाययौदाक्षिणात्येदेशेदेवविवर्द्धनः ॥ आलोमाना
मतनयःपंचाब्दंतत्पदंकृतम् ॥ ५३ ॥ तत्पश्चान्मरणंप्राप्तोविद्रधेनरुजामुने ॥ विक्रमस्यगतेराज्येसप्तत्युत्तरकंशतम् ॥ ५४ ॥ ज्ञेयं
सप्तदशंविप्रयदालोमामृतिंगतः ॥ तालनस्यकुलेजातोम्लेच्छःफलरुषोबली ॥ ५५ ॥ मुकलस्यकुलंहत्वास्वयंराज्यंचकारह ॥ दशा
ब्दंचकृतंराज्यंतेनभूपेनभूतले ॥ ५६ ॥ शत्रुभिर्मरणंप्राप्तोदैत्यलोकमुपागमत् ॥ महामदस्तत्तनयोविंशत्यब्दंकृतंपदम् ॥ ५७ ॥ तद्राष्ट्रे

नादरोनामदैत्योदेशउपागमत् ॥ हत्वार्यांश्चसुराञ्जित्वादेशंखुरजमाययौ ॥ ५८ ॥ महामत्स्योहिमदस्यतनयस्तत्पितुःपदम् ॥ गृही
त्वापंचवर्षान्तंसचराज्यंचकारह ॥५९॥ महाराष्ट्रैर्हतोदुष्टस्तालनान्वयसंभवः ॥ देहलीनगरेराज्यंदशाब्दंमाधवेनवै ॥ ६० ॥ कृतं
तत्रतदाम्लेच्छआलोमाराज्यमातवान् ॥ तद्राष्ट्रेबहवोजाताराजानोनिजदेशजाः ॥ ६१ ॥ ग्रामपाबहवोभूपादेशेदेशेबभूविरे ॥ म
ण्डलीकपदंतत्राक्षयंजातंमहीतले ॥ ६२ ॥ त्रिंशदब्दमतोजातंग्रामेग्रामेनृपेनृपे ॥ तदातुसकलादेवाःकृष्णचैतन्यमाययुः ॥ ६३ ॥ य
ज्ञांशश्चहरिःसाक्षाज्ज्ञात्वादुःखंमहीतले ॥ मुहूर्तंध्यानमागम्यदेवान्वचनमब्रवीत् ॥ ६४ ॥ पुरातुराघवोधीमाञ्जित्वारावणराक्षसम् ॥ कपी
नुज्जीवयामाससुधावर्षैस्समंततः ॥ ६५ ॥ विकटोवृजिलोजालोबरलीनोहिसिंहलः ॥ जवस्सुमात्रश्चतथानाम्नातेक्षुद्रवानराः ॥ ६६ ॥
रामचंद्रंवचःप्राहुर्देहिनोवांछितंप्रभो ॥ रामोदाशरथिःश्रीमाञ्ज्ञात्वातेषांमनोरथम् ॥ ६७ ॥ देवाङ्गनोद्भवाःकन्याराबणाल्लोकरावणात् ॥
दत्वातेभ्योहरिस्साक्षाद्वचनंप्राहहर्षितः ॥ ६८ ॥ भवन्नाम्नाचयेद्वीपाजालंधरविनिर्मिताः ॥ तेषुराज्ञोभविष्यंतिभवन्तोहितकारिणः ॥६९॥
नन्दिन्यागोश्चरुंडाद्वैजाताम्लेच्छाभयानकाः ॥ गुरुण्डाजातयस्तेषांतास्तुतेषुसदास्थिताः ॥ ७० ॥ जित्वातांश्चगुरुण्डान्वैकुरुध्वंराज्य
मुत्तमम् ॥ इतिश्रुत्वाहरिंनत्वाद्वीपेषुप्रययुर्मुदा ॥ ७१ ॥ विकटान्वयसंभूतागुरुण्डावानराननाः ॥ वाणिज्यार्थमिहायातागौरुण्डाबौद्ध
पन्थिनः ॥ ७२ ॥ ईशपुत्रमतेसंस्थास्तेषांहृदयमुत्तमम् ॥ सत्यव्रतंकामजितमक्रोधंसूर्यतत्परम् ॥ ७३ ॥ यूयंतत्रोष्यकार्यंचनृणांकुरुत
माचिरम् ॥ इतिश्रुत्वातुतेदेवाःकुर्युराचिंकमादरात् ॥ ७४॥ नगर्यांकलिकातायांस्थापयामासुरुद्यताः ॥ विकटेपश्चिमेद्वीपेतत्पत्नीविक
टावती ॥ ७५ ॥ अष्टकौशलमार्गेणराज्यमत्रचकारह ॥ तत्पतिस्तुपुलोमार्चिःकलिकातांपुरींस्थितः ॥ ७६ ॥ विक्रमस्यगतेराज्येशतम
ष्टादशंकलौ ॥ चत्वारिंशंतथाब्दंचतदाराजाबभूवह ॥ ७७ ॥ तदन्वयेसप्तनृपागुरुण्डाश्चबभूविरे ॥ चतुष्षष्टिमितंवर्षंराज्यंकृत्वालयंगताः
॥ ७८ ॥ गुरुण्डेचाष्टमेभूपेप्राप्तेन्यायेनशासति ॥ कलिपक्षोबलिर्दैत्योमुरंनाममहासुरम् ॥ ७९ ॥ आरुह्यप्रेषयामासदेवदेशेमहोत्तमे ॥
समुरोबार्डिलंभूपंवशीकृत्यहृदिस्थितः ॥८०॥ आर्यधर्मविनाशायतस्यबुद्धिंचकारह ॥ मूर्तिसंस्थास्तदादेवागत्वायज्ञांशयोगिनम् ॥८१॥

नमस्कृत्याब्रुवन्सर्वे यथाप्राप्तोसुरोऽसुरः ॥ ज्ञात्वाशशापकृष्णांशोगुरुण्डान्बौद्धपन्थिनः ॥ ८२ ॥ क्षयंयास्यंतितेसर्वेयेसुरस्यवशंगताः ॥
इत्युक्तेवचनेतस्मिन्गुरुण्डाःकालनोदिताः ॥ ८३ ॥ स्वसैन्यैश्चक्षयंजग्मुर्वर्षमात्रान्तरेखलाः ॥ सर्वेत्रिंशत्सहस्राश्चप्रययुर्यममंदिरे ॥ ८४ ॥
वाग्दंडैस्सचभूपालोवार्डिलोनाशमाप्तवान् ॥ गुरुण्डोनवमःप्राप्तोमेकलोनामवीर्यवान् ॥ ८५ ॥ न्यायेनकृतवान्राज्यंद्वादशाब्दंप्रयत्नतः ॥
आर्यदेशेचतद्राज्यंबभूवन्यायशासति ॥८६॥ लार्डलोनामविख्यातोगुरुण्डोदशमोहितः ॥ द्वात्रिंशाब्दंचतद्राज्यंकृतंतेनैवधार्मिणा ॥ ८७॥
लार्डलेस्वर्गतेप्राप्तेमकरंदकुलोद्भवाः ॥आर्याःप्राप्तास्तदामौनाहिमतुंगनिवासिनः ॥ ८८ ॥ बभ्रुवर्णाःसूक्ष्मनसावर्तुलादीर्घमस्तकाः ॥ एवं
लक्षाश्चसंप्राप्तादेहल्यांबौद्धपंथिनः ॥ ८९ ॥ आंर्जिकोनामवैराजातेषांतत्रबभूवह ॥ तस्यपुत्रोदेवकर्णोगंगोत्रीगिरिमूर्द्धनि ॥ ९० ॥ द्वाद
शाब्दंतपोघोरंतेपेराज्यविवृद्धये ॥ तदाभगवतीगंगातपसातस्यधीमतः ॥ ९१ ॥ स्वरूपंस्वेच्छयाप्राप्यब्रह्मलोकंजगामह ॥ कुबेरश्चतदा
गत्यदत्वातस्मैमहत्पदम् ॥ ९२ ॥ आर्याणांमण्डलीकंचतत्रैवान्तरधीयत ॥ मण्डलीकोदेवकर्णोबभूवजनपालकः ॥ ९३ ॥ षष्टिचब्दं
चकृतंराज्यंतेनराज्ञामहीतले ॥ तदन्वयेऽष्टभूपाश्चबभूवुर्देवपूजकाः ॥ ९४ ॥ द्विशताब्दंपदंकृत्वास्वर्गलोकमुपाययुः ॥ एकादशश्चयो
मौनःपन्नगारिरितिश्रुतः ॥ ९५ ॥ चत्वारिंशच्चवर्षाणिराज्यंकृत्वाप्रयत्नतः ॥ स्वर्गलोकंगतोराजापन्नगैर्मरणंगतः ॥ ९६ ॥ एवंचमौनजा
तीयैःकृतंराज्यंमहीतले ॥ ९७ ॥ इतिश्रीभविष्येमहापुराणेप्रतिसर्गपर्वणिचतुर्युगखण्डापरपर्यायेकलियुगीयेतिहाससमुच्चयेगुरुण्डमौनरा
ज्यवर्णनंनामद्वाविंशोध्यायः ॥ २२ ॥ ॥ सूतउवाच ॥ वैक्रमेराज्यविगतेचतुष्षष्ट्युत्तरंमुने ॥ द्वाविंशदब्दशतकंभूतनन्दिस्तदानृपः ॥
॥ १ ॥ कुबेरयक्षकान्मौनान्धनधान्यसमन्वितान् ॥ सार्द्धलक्षान्कलैर्घोरैर्जित्वातान्युद्धकारिणः ॥ २ ॥ किल्किलायांस्वयंराज्यंनागवंशै
श्चकारह ॥ आग्नेय्यांदिशिविख्यातापुण्डरीकेणनिर्मिता ॥ ३ ॥ पुरीकिलकिलानामतत्रराजाबभूवह ॥ पुण्डरीकादयोनागास्तस्मिन्राज्यं
प्रशासति ॥४॥ गेहेगेहेजनैस्सर्वैःपूजनीयाबभूविरे ॥ स्वाहास्वधावषट्कारोदेवपूजामहीतले ॥५॥ त्यक्त्वादेवानुपागम्यसंस्थितामेरुमूर्द्ध
नि ॥ शक्राज्ञयाकुबेरस्तुशूकधान्यंसमंततः ॥६॥ यक्षैःषडंशानादायदेवेभ्यःप्रददौप्रभुः ॥ मणिस्वर्णादिवस्तूनिमौनराज्येषुयानिवै ॥७॥

प्रोक्तंकेनाथकिंतुभ्यंसाध्यमन्नंनसाध्यते ॥ १८ ॥ नवास्मदीयंयुष्माकंरोचतेन्नंततोहरिः ॥ प्रहस्यप्रददौतस्मैवरंद्विजवरोमहत् ॥ १९ ॥
उन्नाम्यवक्त्रंचोवाचदेवसंस्तुतयागिरा ॥ संतुतेबहवःपुत्राःक्षेत्रव्यापारबुद्धयः ॥ २० ॥ पशुपाशगृहासक्ताःशतार्द्धबलवाहनाः ॥
तेषांपुत्राश्चपौत्राश्चकृषिवृद्धिप्रवर्द्धकाः ॥ २१ ॥ त्वञ्चवृत्तिशतैर्नित्यंवर्द्धस्वस्वजनावृतः ॥ इत्युक्त्वासजगन्नाथोवासुदेवःसनारदः ॥२२॥
क्षेत्रेगोस्वामिनामानंद्विजंददृशतुश्चतौ ॥ दरिद्रंहलकर्मार्त्तंमेथ्याद्योपस्करार्दितम् ॥ २३ ॥ भागीरथ्यास्तटेरम्येवेणिकाग्रामसन्निधौ ॥
तृणगुल्मलताच्छन्नक्षेत्रेचिंताकुलोहिसः ॥२४॥ ताभ्यांसंप्रार्थितोविप्रोभोज्यंप्रादाच्चकिंचन॥सकाशंतवसंप्राप्तौदूरादतिथिधर्मिणौ ॥ २५ ॥
इत्युक्तोऽसौद्विजश्रेष्ठोहलकर्मविधायतत् ॥ आजगामगृहंतूर्णंताभ्यांसहससंभ्रमम् ॥२६॥ चक्रेचैवादरंभक्त्यास्वयमासनसत्क्रियाम् ॥ पाद
शौचंतथाभ्यंगंकृत्वान्नंचसुसंस्कृतम् ॥२७॥ सहपत्न्यासतनयोभोज्यंभुक्तिंचकारसः ॥ भुक्तभोज्यौचशर्वर्यांसुखंसुप्तौनिशात्यये ॥ २८ ॥
प्रयातौददतुःश्रेष्ठंवरंतस्मैद्विजातये ॥ मातेभवतुगोस्वामिन्कदाचिदपिकर्षणम् ॥ २९ ॥ माधान्यंमवसंतानंमत्प्रसादाद्विजोत्तम ॥
इत्युक्त्वाजग्मतुस्तूर्णंपुनःपप्रच्छनारदः ॥३०॥किमिदंवददेवेशशापरूपोवरस्त्वया ॥ भक्तगोस्वामिनेदत्तःकिंचवैश्येतथाविधः ॥ ३१ ॥
इत्युक्तःप्राहदेवेशःशृणुनारदमद्वचः ॥ परमार्थंप्रवक्ष्येऽहंतवसंशयकृंतनम् ॥ ३२ ॥ संवत्सरेणयत्पापंमत्स्यघातीसमाचरेत् ॥ तदह्ने
केनकुरुतेलांगलीनात्रसंशयः ॥ ३३ ॥ अतोऽर्थंकृषिपाल्येननरकंयातिलांगली ॥ तदभावान्नकल्पःस्यात्तेनमोक्षोमयिध्रुवम् ॥ ३४ ॥
मयिभुक्तेप्रसन्नेवाकोविशेषोऽस्यनारद ॥ यदिस्वर्गोऽथवामोक्षोनसंपद्येततद्वृथा ॥ ३५ ॥ इदानींहलकालुष्यैःसीरभद्रोविचेष्टितैः ॥ बहुपा
पप्रसङ्गेनघोरंनरकमेष्यति ॥ ३६ ॥ सपुत्रपौत्रसंतानंहतोर्थंतद्धहेमया ॥ नभुक्तंनचविश्रान्तंविश्रान्तंद्विजवेश्मनि ॥ ३७ ॥ सोऽपिद्वि
जोमुनिश्रेष्ठसंसारादुत्तारिष्यति ॥ इत्येवंसंवदंतौचजग्मतुर्मार्गमुत्तमम् ॥ ३८ ॥ कन्यकुब्जस्यसामीप्येसरःश्रेष्ठमपश्यताम् ॥ हंसकार
ण्डवाकीर्णंचक्रवाकोपशोभितम् ॥ ३९ ॥ पद्मिनीजलकह्लाररक्तोत्पलसितोत्पलैः ॥ छादितंपद्मिनीपत्रैर्मत्स्यैःकूर्मैर्जलोद्भवैः ॥ ४० ॥

१ वोणिका–इ०पा० ।

तटैरम्यैर्वनैर्वृक्षैःकेतकीखण्डमंडितम् ॥ केतकीकुसुमामोदैर्लकुचैस्तटमंडितैः ॥ ४१ ॥ दात्यूहशिखिभारुण्डचकोरावैश्चसंकुलम् ॥
कुरबैश्चातकैरम्यंकेकाकुलनिनादितम् ॥ ४२ ॥ जलकुक्कुटसंगीतंहंससारसशोभितम् ॥ जीवंजीवकहारीतचकोरैरुपशोभितम् ॥ ४३ ॥
वसिष्ठस्यमुनेर्नाम्नाविख्यातंश्रीमहोदयम् ॥ अस्मिन्नद्यप्रवेष्टव्यंमहाजनविवेकिनाम् ॥ ४४ ॥ स्थातव्यंपुरतस्तेषांतस्मात्स्नानंसमाच
रेत् ॥ इत्युक्त्वाकेशवःपापंसस्नौप्रागेवतज्जलैः ॥ ४५ ॥ यंतीर्थलोकेविख्यातंस्नात्वातीरंसमाश्रितः ॥ प्रहरेवासुदेवस्यनारदोऽपिमुदा
युतः ॥ ४६ ॥ आचम्यसस्नौतीर्थेनक्षणात्तीर्थमवाप्यच ॥ यावदुत्तिष्ठतेतोयात्स्नात्वाऋषिरुदारधीः ॥ ४७ ॥ तावत्स्त्रीत्वंसमापन्नो
नारदःकेनवर्ण्यते ॥ यस्यास्तुविस्तृतेनेत्रेवक्त्रंचन्द्रोपमंशुभम् ॥ ४८ ॥ स्मरपाशोपमौकर्णौकपोलौकनकोज्ज्वलौ ॥ नासिकातिलधारेण
कामचापोपमेभ्रुवौ ॥ ४९ ॥ दशनाहीरकैस्तुल्याविद्रुमाभःशुभाधरः ॥ मयूरस्यकलापेनतुल्यंकचनिबंधनम् ॥ ५० ॥ शंखरेखात्रये
णैवकंठदेशोविराजते ॥ माधवीलतयातुल्यौमंजूतस्याभुजौशुभौ ॥ ५१ ॥ युतौरक्तोत्पलाभासौपाणीरक्तनखांगुली ॥ पीनावुत्तुंगत
नुधृत्कठिनौकलशोपमौ ॥ ५२ ॥ स्तनावविरलौस्निग्धौचक्रवाकयुगोपमौ ॥ स्वल्पकंमध्यदेशंतुमुष्टिग्राह्यमसंशयम् ॥ ५३ ॥ नाभि
मंडलगांभीर्यंलावण्यंकेनवर्ण्यते ॥ वलित्रयेणविकृतारोमराजिविराजितम ॥ ५४ ॥ नयनेचपुनस्तस्यामृग्याइवसुशोभने ॥ नितंबबिंब
फलकंमन्मथायतनंशुभम् ॥ ५५ ॥ रंभायुग्मोपमावूरूस्मरबाणनिबंधनौ ॥ विपरीतरतायासखेदभारसहौदृढौ ॥ ५६ ॥ नवकुन्दल
तासारसरलंसानिबंधनम् ॥ जंघायुगंमहाराजगूढगुल्फायुगंतथा ॥ ५७ ॥ रक्तांगुलीलतातलपनखचन्द्रकयाचितम् ॥ चरणारविंदयुग
लंसरक्तंसुप्रतिष्ठितम् ॥ ५८ ॥ सैवंविधातदानारीसर्वलक्षणपूजिता ॥ बभूवक्षणमात्रेणजगद्व्यामोहकारिणी ॥ ५९ ॥ क्षीरोदमथनोत्ती
र्णांलक्ष्मीमन्यामिवोच्छ्रिताम् ॥ दृष्ट्वाप्यदर्शनंप्राप्तोमाययामधुसूदनः ॥ ६० ॥ संप्राप्यतेचसाकालसंगेराहारिणीयथा ॥ आस्तएकाकि
नीमुग्धाकुर्याद्दिगवलोकनम् ॥ ६१ ॥ अथाजगामतंदेशंनाम्नातालध्वजोनृपः ॥ सहसैन्यैःपरिवृतःपुरंदरइवामरैः ॥ ६२ ॥ गजारूढैर्ह

१ तज्जले--इ०पा० । २ संगमाहारिणी–इ०पा० ।

याrूढैरथारूढैर्नरोत्तमैः ॥ विमानयानयुग्मस्थैस्तथांतःपुरिकाजनैः ॥ ६३ ॥ ध्वजातपत्रकलिलैरनीकैःपरिवारितः ॥ तेनसासहसादृ
ष्टानारीकमललोचना ॥ ६४ ॥ बभूवक्षणमात्रेणकंदर्पशरपीडितः ॥ केयंकस्यकुतःप्राप्ताकिंदेवीवाथमानुषी ॥ ६५ ॥ अदृष्टरूपाप्स
रसाकाचिद्देवीसमागता ॥ अहोरूपंसुरूपायागोचरेपरितःपुमान् ॥ ६६ ॥ मुमूर्षुर्जायतेमोहादनुदिग्धहतोयथा ॥ इतिसंचिन्त्यहृदये
राजातालध्वजोऽन्तिके ॥ ६७ ॥ उवाचनारींमुग्धांतांशृणुमद्वचनंशुभे ॥ कात्वंकस्यकुतःप्राप्तादेशमेनंशुचिस्मिते ॥ ६८ ॥ इत्युक्तेसा
श्रुचार्वंगीप्राहमांविद्धचयोनिजाम् ॥ पित्रामात्राविहीनांचतथाद्यापिकुमारिकाम् ॥ ६९ ॥ निराश्रयांविदित्वैनांततोराजास्मरा
र्दितः ॥ आरोप्यहयपृष्ठेतांततोराजास्मरार्दितः ॥ ७० ॥ नीत्वाविवाहयामासशास्त्रोक्तविधिनाततः ॥ रेमेप्रासादशृंगाग्रेपर्यंके
सितयातया ॥ ७१ ॥ उद्यानभव्यभूमीषुनदीनांपुलिनेषुच ॥ पर्वतानांनितंबेषुनिर्झरेषुगुहासुच ॥ ७२ ॥ पद्मखंडेषुफुल्लेषुशोभिते
षुसरस्सुच ॥ प्रयागादिषुतीर्थेषुनदीनामाश्रमेषुच ॥ ७३ ॥ दिव्यावसथरम्येषुवेलाकूलेषुपार्थिवः ॥ यावद्द्वादशवर्षाणिएकाहम
पिभारत ॥ ७४ ॥ ततस्त्रयोदशेवर्षेतस्यागर्भोऽभवन्मम ॥ एतस्मिन्गर्भसंपूर्णेजातंदीर्घमलाबुकम् ॥ ७५ ॥ तद्भेदाहतकुंभे
षुबीजप्ररोहणान्नराः ॥ बभूवुर्द्धातुशून्यावैदिव्यदेहबलोत्कटाः ॥ ७६ ॥ पंचाशत्संख्ययाजाताउपसर्गादिवर्जिताः ॥ आरूढयौ
वनाःसर्वेसुताःसंग्रामकोविदाः ॥ ७७ ॥ तेषांपुत्राश्चपौत्राश्चबभूवुःसुरसत्तमाः ॥ युयुधुःशरसंघातैश्चक्रशूलासिपट्टिशैः ॥ ७८ ॥ हयैरन्यैर्ग
जैरन्यैःक्रोधांधाःकौरवाइव ॥ पांडवैःसहसंग्रामेयुयुधुःक्षयमंजसा ॥ ७९ ॥ सपदातिगजारोहाःसांतःपुरयुगेच्छया ॥ विनेशुरब्धिमासाद्यासिं
धूनांप्रवराइव ॥ ८० ॥ सासिसबलविस्ताराःसदर्पाःसमहोच्छ्रयाः ॥ इन्द्रलोकोपमंसर्वंकुलंनष्टंक्षणंतदा ॥ ८१ ॥ नहृष्टानारदीयैषाविनष्टं
स्वकुलंरणे ॥ रुरोदस्नेहसंयुक्तैरसैःकलुषयागिरा ॥ ८२ ॥ हादैवहाविधेपापहाकृतान्तनमस्कृत ॥ दर्शयित्वाविधानंमेपुनर्नैत्रेहृतंत्वया ॥
॥ ८३ ॥ इत्युक्त्वास्वपुरोघातैर्जघानभृशदुःखिता ॥ भूमौमूर्च्छातुराभूत्वापुनःप्राप्ताविचेतसा ॥ ८४ ॥ सोऽपिराजाविषण्णोऽसौनिर्विण्णः

१ सुराः–इ० पा० । २ विधेयाथ–इ० पा० ।

शोकसागरे ॥ भूमौनिपतितोदुःखाद्रुरोदभृशदुःखितः ॥ ८५ ॥ विषण्णोमंत्रिभिःसार्धंवृद्धशोकेनसंयुतः ॥ एतस्मिन्नंतरेविष्णुराजगामाद्वि
जैःसह ॥ ८६ ॥ द्विजवेषपरिच्छन्नउपविष्टःसुखासने ॥ ततःपुरस्सरोभूत्वाचक्रेधर्मार्थदर्शनात् ॥ ८७ ॥ किंरोदितेनबहुनायुवयोःक्लेशका
रिणा ॥ श्रूयतांविष्णुमायैषास्वप्नवच्चधनोपमा ॥ ८८ ॥ शोभनेयादृशंशोकंकृत्वासंसारसागरे ॥ सर्वेषामेवभूतानांपरिणामोयमीदृशः ॥
॥ ८९ ॥ पुरंदरसहस्राणिचक्रवर्तिशतानिच ॥ निर्वापितानिकालेनदीपेनइववह्निना ॥ ९० ॥ येऽपिशोषयितुंशक्ताःसमुद्रंग्राहसंकुलम् ॥
कुर्युश्चकरयुग्मेनचूर्णमेरुंमहीतले ॥ ९१ ॥ उद्धर्तुंधरणींसंज्ञांग्रहीतुंचन्द्रभास्करौ ॥ प्रविष्टास्तेतुकालेनकृतांतवदनंतदा ॥ ९२ ॥ दुर्गं
त्रिकूटंपरिखाःसमुद्रारक्षांसियोधाधनदाच्चवित्तम् ॥ मंत्रंचयस्यौशनसंप्रणीतंसरावणोदैववशाद्विपण्णः ॥ ९३ ॥ संग्रामेगजतुरगसमाकुलेऽ
पिवादादग्नौवागतविवरेमहोदधौवा ॥ सर्वैर्वासहवसतामुदीर्णकोपैर्नाभाव्यंभवतिकदाचिदेवनाशः ॥ ९४ ॥ पातालमाविशतुयातुसुरेन्द्र
लोकमारोहतुक्षितिधराधिपतिंसुमेरुम् ॥ मंत्रौषधिप्रहरणैश्चकरोतुरक्षांयद्भावितद्भवतिनाथविभावितोऽस्मि ॥ ९५ ॥ रोदितिकश्चिदथाश्रु
धौताननगुरुतरशोकविह्वलः ॥ प्रविकटचरणवानपिनृत्यतिकश्चिद्धर्मादिविग्रहः ॥ ९६ ॥ गायतिहृदयहारिसुखनिर्भरमायतविस्तृता
धरोऽधिकम् ॥ सारएषरंगोदरगतनटपटहाकामएवायम् ॥ ९७ ॥ इत्येवंधर्ममुद्दिश्यविष्णुःसंसारचेष्टितम् ॥ तूष्णींबभूवानुपदंततस्तेद्वि
जपुङ्गव ॥९८॥ उत्तिष्ठस्नाहिपुत्राणांप्रकुरुष्वौर्ध्वदेहिकम् ॥ माशोकंविष्णुमायैषाविष्णुनानिर्मितंस्वयम् ॥ ९९ ॥ इत्युक्त्वाचारुसर्वांगी
सबभूवाचलःपुमान् ॥ सएषसदृशाकारोनारदस्तत्क्षणोऽभवत् ॥ १०० ॥ सोऽपिराजाददर्शाथतंसमंत्रिपुरोहितः ॥ सांतःपुरमिदंसर्वमि
न्द्रजालोपमंक्षणात् ॥ १०१ ॥ नारदंमुनिशार्दूलंजटाभारभयानकम् ॥ गौरवर्णंज्वलंतंचब्राह्म्यालक्ष्म्याविराजितम् ॥ १०२ ॥ शिखाक
मंडलुधरंवीणादंडकरंतथा ॥ ब्रह्मसूत्रेणशुभ्रेणकौपीनाच्छादनेनच ॥ १०३ ॥ पादुकाभ्यांस्थितंतीरेसरसोब्रह्मणासनि ॥ संप्रगृह्यकराग्रे
णजगामादर्शनंहरिः ॥ १०४ ॥ अंबरेणसुरैःसार्द्धंतस्माद्देशाद्युधिष्ठिरः ॥ श्वेतद्वीपमथासाद्यप्राहदेवोमुनिंनृप ॥ १०५ ॥ देवर्षेयत्त्वयापृष्टं
पूर्वंमायाकथांप्रति ॥ मायायथेदृशीमायायत्स्वरूपायदात्मिका ॥ १०६ ॥ सातेमायामयाब्रह्मन्वैष्णवीसंप्रदर्शिता ॥ एवमुक्त्वामुनिवरं

देवदेवोजनार्दनः ॥ १०७ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेमायादर्शनंनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥
॥ युधिष्ठिरउवाच ॥ देवत्वंमानुषत्वंचतिर्यक्त्वंकेनकर्मणा ॥ प्राप्नोतिपुरुषःकेनगर्भवासंसुदारुणम् ॥ १ ॥ गर्भस्थश्चकिमस्माभिःकथमु
त्पद्यतेपुनः ॥ दंतोत्थानादिकान्[1]दोषान्कथंतरतिदुस्तरान् ॥ २ ॥ बालभावेकथंपुष्टिःस्यादुषाकेनकर्मणा ॥ कुलीनःकेनभवतिसुरूपः
सुधनःकथम् ॥ ३ ॥ कथंदारानवाप्नोतिगृहंसर्वगुणैर्युतम् ॥ पंडितःपुत्रवांस्त्यागीस्यादामयविवर्जितः ॥ ४ ॥ कथंसुखेनम्रियतेकथंभुंक्ते
शुभाशुभम् ॥ सर्वमेवामलमतेगहनंप्रतिभातिमे ॥ ५ ॥ श्रीकृष्णउवाच ॥ शुभैर्देवत्वमाप्नोतिमिश्रैर्मानुषतांव्रजेत् ॥ अशुभैःकर्मभिर्जंतु
स्तिर्यग्योनिःप्रजायते ॥ ६ ॥ प्रमाणंश्रुतिरेवात्रधर्माधर्मविनिश्चये ॥ पापंपापेनभवतिपुण्यंपुण्येनकर्मणा ॥ ७ ॥ ऋतुकालेतदाशुक्रंनिर्दो
षंयेनसंस्थितम् ॥ तदातद्वायुनास्पृष्टंस्त्रीरक्तेनैकतांव्रजेत् ॥ ८ ॥ विसर्गकालेशुक्रस्यजीवःकरणसंयुतः ॥ भृत्यःप्रविशतेयोनिंकर्म
भिःस्वैर्नियोजितः ॥ ९ ॥ तच्छुक्ररक्तमेकस्थमेकाहात्कललंभवेत् ॥ पञ्चरात्रेणकललंबुद्बुदाकारतांव्रजेत् ॥ १० ॥ बुद्बुदं
सप्तरात्रेणमांसपेशीभवेत्ततः ॥ द्विसप्ताहाद्भवेत्पेशीरक्तमांसैर्दृढांचिता ॥ ११ ॥ बीजस्येवांकुराःपेश्याःपञ्चविंशतिरात्रतः ॥
भवंतिमासमात्रेणपञ्चधाजायतेपुनः ॥ १२ ॥ ग्रीवाशिरश्चस्कन्धश्चपृष्ठवंशस्तथोदरम्[2] ॥ मासद्वयेनसर्वाणिक्रमशःसंभवंतिच ॥
॥ १३ ॥ त्रिभिर्मासैःप्रजायंतेसद्रव्यांकुरसंधयः ॥ मासैश्चतुर्भिरंगुल्यःप्रजायंतेयथाक्रमम् ॥ १४ ॥ मुखंनासाचकर्णौचमासैर्जा
येतपंचभिः ॥ दंतपंक्तिस्तथागुह्यंजायंतेचनखाःपुनः ॥ १५ ॥ कर्णौचरंध्रसहितौषण्मासाभ्यंतरेणतु ॥ पायुर्मेढ्रमुपस्थश्चना
भिश्चाप्युपजायते ॥ १६ ॥ संधयोयेचगात्रेषुमासैर्जायंतिसप्तभिः ॥ अंगप्रत्यंगसंपूर्णःशिरःकेशसमन्वितः ॥ १७ ॥ विभक्ता
वयवःपुष्टःपुनर्मासाष्टकेनच ॥ पञ्चात्मकसमायुक्तःपरिपक्वःसतिष्ठति ॥ १८ ॥ मातुराहारवीर्येणषड्विधेनसतिष्ठति ॥ रसेनप्र
त्यहंबालोवर्धतेभरतर्षभ ॥ १९ ॥ तत्तेऽहंसंप्रवक्ष्यामियथाश्रुतमरिंदम ॥ नाभिसूत्रनिबन्धेनवर्द्धतेसदिनेदिने ॥ २० ॥ ततःस्मृतिंलभे

१ दंतोत्थानादिकान्–इ० पा० । २ अंसौपृष्ठंतथोदरम्–इ० पा० । ३ स्नायुः–इ०पा० ।

जीवःसंपूर्णेऽस्मिञ्छरीरके ॥ सुखंदुःखंविजानातिनिद्रास्वप्नंपुराकृतम् ॥ २१ ॥ मृतश्चाहंपुनर्जातोजातश्चाहंपुनर्मृतः ॥ नानायोनिसहस्राणिमयादृष्टानितानिवै ॥ २२ ॥ अधुनाजातमात्रोऽहंप्राप्तसंस्कारएवच ॥ एतच्छ्रेयः[1]करिष्यामियेनगर्भेणसंश्रयः ॥ २३ ॥ गर्भस्थश्चिंतयेद्देवमहंगर्भाद्विनिःसृतः ॥ अध्येष्येचतुरोवेदान्संसारविनिवर्तकान् ॥ २४ ॥ एवंसगर्भदुःखेनमहतापरिपीडितः ॥ जीवःकर्मवशादास्तेमोक्षोपायंविचिंतयन् ॥ २५ ॥ यथागिरिवराक्रांतःकश्चिद्दुःखेनतिष्ठति ॥ तथाजरायुणादेहीदुःखंतिष्ठतिचेष्टितः ॥ २६ ॥ पतितःसागरेयद्वद्दुःखमास्तेसमाकुलः ॥ गर्भोदकेनासिक्तांगस्तथास्तेव्याकुलःपुमान् ॥ २७ ॥ लोहकुंभेयथान्यस्तःपच्यतेकश्चिदग्निना ॥ तथासपच्यतेजंतुर्गर्भस्थःपीडितोदरः ॥ २८ ॥ सूचीभिरग्निवर्णाभिर्विभिन्नस्यनिरंतरम् ॥ यद्दुःखमुपजायेततद्गर्भेऽष्टगुणंपुमान् ॥ २९ ॥ गर्भवासात्परोवासःकष्टोनैवास्तिकुत्रचित् ॥ देहिनांदुःखवद्राजन्सुघोरोह्यतिसङ्कटः ॥ ३० ॥ इत्येतद्गर्भदुःखंहिप्राणिनांपरिकीर्तितम् ॥ चरस्थिराणांसर्वेषामात्मगर्भानुरूपतः ॥ ३१ ॥ गर्भात्कोटिगुणंदुःखंयोनियंत्रप्रपीडनात् ॥ संमूर्च्छितस्यजायेतजायमानस्यदेहिनः ॥ ॥ ३२ ॥ शरवत्पीड्यमानस्ययंत्रेणेवसमंततः ॥ शिरसिताड्यमानस्यपापमुद्गरकेणच ॥ ३३ ॥ गर्भान्निष्क्रम्यमाणस्यप्रबलैःसूतिमारुतैः ॥ जायतेसुमहद्दुःखंपरित्राणमविंदतः ॥ ३४ ॥ यंत्रेणपीडितायद्वन्निःसाराःस्युस्तिलेक्षवः ॥ तथाशरीरंनिःसारंयोनियंत्रप्रपीडितम् ॥ ॥ ३५ ॥ अस्थिमज्जात्वचामांसस्नायुबंधनयंत्रितम् ॥ रक्तमांसमृदायुक्तविण्मूत्रद्रवलेपनम् ॥ ३६ ॥ केशलोमतृणाच्छन्नंरोगायतनमातुरम् ॥ वदनैकमहद्द्वारं[2]दंतोष्ठकविभूषितम्[3] ॥३७॥ ओष्ठद्वयकपाटंचदन्तजिह्वार्गलान्वितम् ॥ नाडीस्वेदप्रवाहंचकफपित्तपरिप्लुतम् ॥३८॥ जराशोकसमाविष्टंकालचक्रानलेस्थितम् ॥ कामक्रोधसमाक्रांतंव्यसनैश्चोपमर्दितम् ॥ ३९ ॥ भोगतृष्णातुरंमूढंरागद्वेषवशानुगम् ॥ संवर्तितांगप्रत्यंगंजरायुपरिवेष्टितम् ॥ ४० ॥ संकटेनाविविक्तेनयोनिद्वारेणनिर्गतम् ॥ विण्मूत्ररक्तसिक्तांगपक्केशाच्चसमुद्भवम् ॥ ४१ ॥ इतिदेहगृहंप्रोक्तंनित्यस्यानित्यमात्मनः ॥ अविशुद्धंविशुद्धस्यकर्मबंधविनिर्मितम् ॥ ४२ ॥ शुक्रशोणितसंयोगाद्देहःसंजायतेयतः ॥ नि

१ तत्तच्छ्रेयः-इ०पा० । २ तुलास्तम्भम्-इ०पा० । ३ गवाक्षाष्टकभूषितम्-इ०पा० ।

त्यंविण्मूत्रपूर्णश्चतेनायमशुचिःस्मृतः ॥ ४३ ॥ यथांतर्विष्टयापूर्णःशुचिःस्यान्नबहिर्घटः ॥ यत्नतःशोध्यमानोऽपिदेहोऽयमशुचिस्तथा ॥
॥ ४४ ॥ संप्राप्यात्रपवित्राणिपंचगव्यहवींषिच ॥ अशुचित्वंक्षणाद्यांतिकिमन्यद्वस्तुविंदवः ॥ ४५ ॥ देहःसंशोध्यमानोऽपिपञ्चगव्यकुशां
बुभिः ॥ घृष्यमाणइवांगारोनिर्मलत्वंनगच्छति ॥ ४६ ॥ श्रोत्रांसियस्यसततंप्रवहंतिगिरेरिव ॥ कफमूत्रपुरीषाद्यैःसदेहःशुद्ध्यतेकथम् ॥
॥ ४७ ॥ सर्वाशुचिनिधानस्यशरीरस्यनविद्यते ॥ शुचिरेकःप्रदेशोऽपिविट्पूर्णःस्यंदतेकिल ॥ ४८ ॥ कायःसुगंधधूपाद्यैर्यत्नेनापितुसं
स्कृतः ॥ नजहातिस्वकंभावंश्वपुच्छमिवनामितम् ॥ ४९ ॥ यथाजात्यैवकृष्णोहिनशुक्लःस्यादुपायतः ॥ संशोध्यमानाऽपितथाभवेन्मूर्ति
र्ननिर्मला ॥ ५० ॥ जिघ्रन्नपिस्वदुर्गंधंपश्यन्नपिमलंस्वकम् ॥ नविरज्यतिलोकोऽयंपीडयन्नपिनासिकाम् ॥ ५१ ॥ अहोमोहस्यमाहात्म्यं
येनव्यामोहितंजगत् ॥ जिघ्रन्पश्यन्स्वकंदोषंकायस्यनविरज्यते ॥ ५२ ॥ एवमेतच्छरीरंहिनिसर्गादशुचिध्रुवम् ॥ त्वङ्मात्रसारंनिःसारंक
दलीसारसंनिभम् ॥ ५३ ॥ गर्भस्थस्यस्मृतिर्यासीत्साजातस्यप्रणश्यति ॥ संमूर्च्छितस्यदुःखेनयोनियंत्रप्रपीडनात् ॥ ५४ ॥ बाह्येनवायुनाचा
स्यमोहसंज्ञेनदेहिनः ॥ स्पृष्टमात्रेणघोरेणज्वरःसमुपजायते ॥ ५५ ॥ तेनज्वरेणमहतामहामोहःप्रजायते ॥ संमूढस्यस्मृतिभ्रंशःशीघ्रंसंजाय
तेपुनः ॥ ५६ ॥ स्मृतिभ्रंशात्तुतस्येहपूर्वकर्मवशेनच ॥ रतिःसंजायतेतूर्णंजंतोस्तत्रैवजन्मनि ॥ ५७ ॥ रक्तोमूढस्यलोकोऽयमकार्येसंप्रवर्त
ते ॥ नचात्मानंविजानातिनपरंविन्दतेचसः ॥ ५८ ॥ नश्रूयतेपरंश्रेयःसतिचक्षुषिनेक्षते ॥ समेपथिशनैर्गच्छन्स्खलतीवपदेपदे ॥ ५९ ॥
सत्यांबुद्धौनजानातिबोध्यमानोबुधैरपि ॥ संसारेक्लिश्यतेतेनरागलोभवशानुगः ॥ ६० ॥ गर्भस्मृतेरभावेनशास्त्रमुक्तंमहर्षिभिः ॥ तद्दुः
खमथनार्थायस्वर्गमोक्षप्रसाधकम् ॥ ६१ ॥ येसत्यस्मिन्परेज्ञानेसर्वकामार्थसाधके ॥ नकुर्वंत्यात्मनःश्रेयस्तदत्रमहदद्भुतम् ॥ ६२ ॥
अव्यक्तेंद्रियवृत्तित्वाद्बाल्येदुःखंमहत्पुनः ॥ इच्छन्नपिनशक्नोतिकर्तुंवक्तुंचसत्क्रियाम् ॥ ६३ ॥ दंतोत्थानेमहद्दुःखंमौलेनव्याधिनातथा ॥
बालरोगैश्चविविधैःपीडाबालग्रहैरपि ॥ ६४ ॥ तृड्बुभुक्षापरीतांगःक्वचित्तिष्ठतिरारटन् ॥ विण्मूत्रभक्षणमपिमोहाद्बालःसमाचरेत् ॥ ६५ ॥

१ कृष्णोर्णा न शुक्ला स्यादुपायतः–इ०पा० । २ विदुः–इ०पा० । ३ नच देवताम्–इ०पा० । ४ क्वचित्–इ०पा० ।

कौमारेकर्णवेधेनमातापित्रोश्चताडनात् ॥ अक्षराध्ययनात्पुंसांदुःखंस्याद्गुरुशासनात् ॥ ६६ ॥ प्रसन्नेंद्रियवृत्तिश्चकामरागप्रपीडनात् ॥
रोगोद्धतस्यसततंकुतःसौख्यंचयौवने ॥ ६७ ॥ ईर्ष्ययाचमहद्दुःखंमोहाद्रक्तस्यजायते ॥ नेत्रस्यकुपितस्यैवरागोदुःखायकेवलम् ॥ ६८ ॥
नरात्रौविंदतेनिद्रांकोपाग्निपरिपीडितः ॥ दिवावापिकुतःसौख्यमर्थोपार्जनचिन्तया ॥ ६९ ॥ स्त्रीष्वायासितदेहस्ययेपुंसःशुक्रबिंदवः ॥
नतेसुखायमंतव्याःस्वेदजाइवबिंदवः ॥७०॥ क्रिमिभिस्तुद्यमानस्यकुष्ठिनःकामिनस्तथा॥कंडूयनाग्नितापेनयद्भवेत्स्त्रीषुतद्धितत् ॥ ७१ ॥
यादृशंविन्दतेसौख्यंगंडान्वयविनिर्गमे ॥ तादृशंस्त्रीषुमंतव्यंनाधिकंतासुविद्यते ॥ ७२ ॥ गंडस्यवेदनायद्वत्स्फुटितस्यानिवर्तते ॥
तद्वत्स्त्रीष्वपिमंतव्यंनसौख्यंपरमार्थतः ॥ ७३॥ विण्मूत्रस्यसमुत्सर्गात्सुखंभवतियादृशम् ॥ तादृशंतेषुविज्ञेयंमूढैःकल्पितमन्यथा॥७४॥
नारीष्वशुचिभूतासुसर्वदोषाश्रयासुच ॥ नाणुमात्रकमप्येवंसुखमस्तिविचारतः ॥ ७५ ॥ सन्मानमयमानेनवियोगेनसुसंगमम् ॥ यौवनंज
रयाग्रस्तंकिंसौख्यमनुपद्रवम् ॥ ७६ ॥ वलीपलितखालित्यैःशिथिलीकृतविग्रहम् ॥ सर्वक्रियास्वशक्तंचजरयाजर्जरीकृतम् ॥ ७७ ॥
स्त्रीपुंसयोर्नवंरूपंतदान्योन्यंप्रियंपुरा ॥ तदेवजरयाग्रस्तमुभयोरपिनप्रियम् ॥ ७८ ॥ अपूर्ववत्स्वमात्मानंजरयापरिवर्तितः ॥
यःपश्यन्नापिरज्जेतकोऽन्यस्तस्मादचेतनः ॥ ७९ ॥ जराभिभूतःपुरुषःपत्नीपुत्रादिबांधवैः ॥ अशक्तत्वाद्दुराचारैर्भृत्यैश्चपरिभूयते ॥ ८० ॥
धर्ममर्थंचकामंचमोक्षंचनजरंयतः ॥ शक्तंसाधयितुंतस्माच्छरीरमिदमात्मनः ॥ ८१ ॥ वातपित्तकफादीनांवैषम्यंव्याधिरुच्यते ॥
तस्माद्व्याधिमयंज्ञेयंशरीरमिदमात्मनः ॥ ८२ ॥ वाताद्यव्यतिरिक्तत्वाद्व्याधीनांपञ्जरस्यच ॥ रोगैर्नानाविधैर्यानिदेहोदुःखान्यनेकधा ॥
॥ ८३ ॥ तानिचस्वात्मवेद्यानिकिमन्यत्कथयाम्यहम् ॥ एकोत्तरंमृत्युशतमस्मिन्देहेप्रतिष्ठितम् ॥ ८४ ॥ तत्रैकःकालसंयुक्तःशेषाश्चाग
तवःस्मृताः ॥ येत्विहागंतवःप्रोक्तास्तेप्रशाम्यंतिभेषजैः ॥ ८५ ॥ जपहोमप्रदानैश्चकालमृत्युर्नशाम्यति ॥ यदिचापिनमृत्युःस्याद्विषम
द्यादशंकितः ॥ ८६ ॥ नसंतिपुरुषेतस्मादपमृत्युविभीतयः ॥ विविधाव्याधयःशस्त्रंसर्पाद्याःप्राणिनस्तथा ॥ ८७ ॥ विषाणिजंगमा

१ चातिवादाश्च–इ०पा० ।

द्यानिमृत्योर्द्वाराणिदेहिनाम् ॥ पीडितंसर्वरोगाद्यैरपिधन्वंतरिःस्वयम् ॥ ८८ ॥ स्वस्थीकर्तुंनशक्नोतिप्राप्तंमृत्युंचदेहिनाम् ॥ नौषधंन
तपोदानंनमंत्रानचबांधवाः ॥ ८९ ॥ शक्नुवंतिपरित्रातुंनरंकालेनपीडितम् ॥ रसायनतपोजप्यैर्योगसिद्धैर्महात्मभिः ॥ ९० ॥ कालमृत्यु
रपिप्राज्ञैस्तीर्यतेनालसैर्नरैः ॥ नास्तिमृत्युसमंदुःखंनास्तिमृत्युसमंभयम् ॥ ९१ ॥ नास्तिमृत्युसमस्त्रासःसर्वेषामेवदेहिनाम् ॥ सद्भार्या
पुत्रमित्राणिराज्यैश्वर्यधनानिच ॥ ९२ ॥ अवद्धानिचवैराणिमृत्युःसर्वाणिकृंतति ॥ हेजनाःकिंनपश्यध्वंसहस्रस्यापिमध्यतः ॥ ९३ ॥
जनाःशतायुषःपञ्चभवंतिनभवंतिच ॥ अशीतिकाविपद्यंतेकेचित्सप्ततिकानराः ॥ ९४ ॥ परमायुषंस्थितंषष्टिस्तच्चैवानिश्चितंपुनः ॥
यस्ययावद्भवेदायुर्देहिनांपूर्वकर्मभिः ॥ ९५ ॥ तस्यार्द्धमानुषोरात्रिर्हरतेमृत्युरूपिणी ॥ बालभावेनमोहेनवार्द्धक्येजरयातथा ॥ ९६ ॥
वर्षाणांविंशतिर्यातिधर्मकामार्थवर्जिता ॥ आगंतुकैर्भयैःपुंसांव्याधिशोकैरनेकधा ॥ ९७ ॥ भक्ष्यतेऽर्द्धंचतत्रापियच्छेषंतच्चजीवति ॥
जीवितांतेचमरणंमहाघोरमवाप्नुयात् ॥ ९८ ॥ जायतेजन्मकोटीषुमृतःकर्मवशात्पुनः ॥ देहभेदेनयःपुंसांवियोगःकर्मसंक्षयात् ॥ ९९ ॥
मरणंतद्धिनिर्दिष्टंनान्यथापरमार्थतः ॥ महातपःप्रविष्टस्यच्छिद्यमानेषुमर्मसु ॥ १०० ॥ यद्दुःखंमरणेजंतोर्नतस्येहोपमाक्वचित् ॥
हातातमातःकांतेति[2]रुदन्नेवंहिदुःखितः ॥ १०१ ॥ मंडूकइवसर्पेणग्रस्यतेमृत्युनाजनः ॥ बांधवैःसंपरिष्वक्तःप्रियैःसपरिवारितः ॥ १०२ ॥
निःश्वसन्दीर्घमुष्णंचमुखेनपरिशुष्यति ॥ क्रन्दतेचैवखट्वायांपरिवर्तन्मुहुर्मुहुः ॥ १०३ ॥ संमूढःक्षिप्यतेऽत्यर्थंहस्तपादावितस्ततः ॥
खट्वातोवांछतेभूमिंभूमेःखट्वांपुनर्महीम् ॥१०४॥ विवशस्त्यक्तलज्जश्चमूत्रविष्ठानुलेपितः ॥ याचमानश्चसलिलंशुष्ककंठोष्ठतालुकः ॥१०५॥
चिंतयानश्चवित्तानिकस्यैतानिमृतेमयि ॥ [3]पञ्चावटान्खन्यमानःकालपाशेनकर्शितः ॥ १०६ ॥ म्रियतेपश्यतामेवजनानांघुर्घुरस्वनः ॥
जीवस्तृणजलौकेवदेहादेहंविशेत्क्रमात् ॥ १०७ ॥ संप्राप्योत्तरकालंहिदेहंत्यजतिपौर्वकम् ॥ मरणात्प्रार्थनादुःखमधिकंह्यविवेकिनः ॥
॥ १०८ ॥ क्षणिकंमरणादुःखमनंतंप्रार्थनाकृतम् ॥ जगतांपतिरर्थित्वाद्विष्णुर्वामनतांगतः ॥ १०९ ॥ अधिकःकोऽपरस्तस्माद्योनया

१ योनिकोटिषु-इ०पा०। २ क्रंदन्-इ०पा०। ३ मरणात्प्राक्-कर्णनासिकामुखानिहस्तेनचालयतीत्यवटखननापदेशः।

स्यतिलाघवम् ॥ ज्ञातंमयेदमधुनामतोभवतियद्गुरुः ॥ ११० ॥ नपरंप्रार्थयेद्भूयस्तृष्णालाघवकारणम् ॥ आदौदुःखंतथामध्येदुःखमं
तेचदारुणम् ॥ १११ ॥ निसर्गात्सर्वभूतानामितिदुःखपरंपरा ॥ वर्तमानान्यतीतानिदुःखान्येतानियानितु ॥ ११२ ॥ नरानभावयं
त्यज्ञानविरज्यंतितेनते ॥ अत्याहारान्महद्दुःखमनाहारान्महत्तमम् ॥ ११३ ॥ तुलितंजीवितंकष्टंमन्येऽप्येवंकुतःसुखम् ॥ बुभुक्षासर्वरोगा
णांव्याधिःश्रेष्ठतमःस्मृतः ॥ ११४ ॥ सचान्नौषधिलेपेनक्षणमात्रंप्रशाम्यति ॥ क्षुद्व्याधिवेदनातुल्यानिःशेषबलकृंतनी ॥ ११५ ॥ तयाभि
भूतोम्रियतेयथान्यैर्व्याधिभिर्नरः ॥ तद्रसोपिहिकामाद्याजिह्वाग्रेपरिवर्तते ॥ ११६ ॥ तत्क्षणाद्धार्धकालेनकंठंप्राप्यनिवर्तते ॥ इति
क्षुद्व्याधितप्तानामन्नमौषधवत्स्मृतम् ॥ नतत्सुखायमन्तव्यंपरमार्थेनपंडितैः ॥ ११७ ॥ मृतोपमोयश्चेक्षेतसर्वकार्यविवर्जितः ॥ तत्रा
पिचकुतःसौख्यंतमसाच्छादितात्मनः॥११८॥प्रबोधेऽपिकुतःसौख्यंकार्यैरुपहतात्मनः ॥ कृषिगोरक्षवाणिज्यसेवाध्वादिपरिश्रमैः॥११९॥
प्रातर्मूत्रपुरीषाभ्यांमध्याह्नेतुबुभुक्षया ॥ तृप्ताःकामेनबाध्यन्तेजंतवोऽपिविनिद्रया ॥ १२० ॥ अर्थस्योपार्जनेदुःखमर्जितस्यापिरक्षणे ॥
आयेदुःखंव्ययेदुःखमर्थेभ्यश्चकुतःसुखम् ॥ १२१ ॥ चौरेभ्यःसलिलादग्नेःस्वजनात्पार्थिवादपि ॥ भयमर्थवतांनित्यंमृत्योःप्राणभृता
मिव ॥ १२२ ॥ खेयातंपक्षिभिर्मांसंभक्ष्यतेश्वापदैर्भुवि ॥ जलेचभक्ष्यतेमत्स्यैस्तथासर्वत्रवित्तवान् ॥ १२३ ॥ विमोहयंतिसंपत्सुताप
यंतिविपत्तिषु ॥ खेदयंत्यर्जनाकालेकदाह्यर्थाःसुखावहाः ॥ १२४ ॥ यथार्थपतिरुद्विग्नोयश्चसर्वार्थनिःस्पृहः ॥ यतश्चार्थपतिर्दुः
खीसुखीसर्वार्थनिःस्पृहः ॥ १२५ ॥ शीतेनदुःखंहेमंतेग्रीष्मेतापेनदारुणम् ॥ वर्षासुवातवर्षाभ्यांकालेऽप्येवंकुतःसुखम् ॥ १२६ ॥
विवाहविस्तरेदुःखंतद्गर्भोद्वहनेपुनः ॥ प्रसवेऽपत्यदोषैश्चदुःखंदुःखादिकर्मभिः ॥ १२७ ॥ दन्ताक्षिरोगैःपुत्रस्यहाकष्टंकिंकरोम्य
हम् ॥ गावोनष्टाःकृषिर्भग्नावृषाःक्वापिपलायिताः ॥ १२८ ॥ अमीप्राघूर्णकाःप्राप्ताभक्तच्छेदेचमेगृहे ॥ बालापत्याचमेभार्या
कःकरिष्यतिरंधनम् ॥ १२९ ॥ प्रदानकालेकन्यायाःकीदृशश्चवरोभवेत् ॥ इतिचिन्ताभिभूतानांकुतःसौख्यंकुटुंबिनाम् ॥ १३० ॥

१ कथम्—इ०पा० ।

कुटुंबचिंताकुलितस्यपुंसःश्रुतंचशीलंचगुणाश्चसर्वे ॥ अपक्वकुंभेनिहिताइवापःप्रयांतिदेहेनसमंविनाशम् ॥ १३१ ॥ राज्येचसुम
हद्दुःखंसंधिविग्रहचिंतया ॥ पुत्रादपिभयंयत्रतत्रसौख्यंहिकीदृशम् ॥ १३२ ॥ स्वजातीयाद्भयंप्रायःसर्वेषामेवदेहिनाम् ॥
एकद्रव्याभिलाषित्वाच्छुनामिवपरस्परम् ॥ १३३ ॥ नाप्रधृष्यबलःकश्चिन्नृपःख्यातोस्तिभूतले ॥ निखिलंयस्तिरस्कृत्यसुखं
तिष्ठतिनिर्भयः ॥ १३४ ॥ आजन्मनःप्रभृतिदुःखमयंशरीरंकर्मात्मकंतवमयाकथितंनरेन्द्र ॥ दानोपवासनियमैश्चकृतैस्तदेवस
र्वोपभोगसुखभाग्भवतीहपुंसाम् ॥ १३५ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेसंसारदोषाख्यापनंनामच
तुर्थोऽध्यायः ॥ ४ ॥ छ ॥ श्रीकृष्णउवाच ॥ अधोधःपतनंपुंसामधःकर्मप्रकीर्तितम् ॥ नरकार्णवघोरेषुयातनापाप
मुच्यते ॥ १ ॥ अधर्मभेदाविज्ञेयाश्चित्तवृत्तिप्रभेदतः ॥ स्थूलाःसूक्ष्माःसुसूक्ष्माश्चकोटिभेदैरनेकधा ॥ २ ॥ तत्रयेपापानिच
याःस्थूलानरकहेतवः ॥ तेसमासेनकथ्यंतेमनोवाक्कायसाधनाः ॥ ३ ॥ परस्त्रीष्वथसंकल्पश्चेतसानिष्टचिंतनम् ॥ अकार्याभिनिवेशश्च
चतुर्धाकर्ममानसम् ॥ ४ ॥ अनिबद्धप्रलापित्वमसत्यंचाप्रियंचयत् ॥ परापवादपैशुन्यंचतुर्धाकर्मवाचिकम् ॥ ५ ॥ अभक्ष्यभक्षणं
हिंसामिथ्याकामस्यसेवनम् ॥ परस्वानामुपादानंचतुर्द्धाकर्मकायिकम् ॥ ६ ॥ इत्येतद्द्वादशविधंकर्मप्रोक्तंससाधनम् ॥ तेषांभेदंपुन
र्वच्मियेषांफलमनंतकम् ॥ ७ ॥ येद्विषंतिमहादेवंसंसारार्णवतारणम् ॥ समस्तपातकोपेतास्तेयान्तिनरकाग्निषु ॥ ८ ॥ ब्रह्मघ्नश्चसुराप
श्चस्तेयीचगुरुतल्पगः ॥ महापातकिनश्चैतेतत्संसर्गीचपंचमः ॥ ९ ॥ क्रोधाद्द्वेषाद्भयाल्लोभाद्ब्राह्मणंविशसंतिये ॥ प्राणांतिकोमहादो
षोब्रह्मघ्नास्तेप्रकीर्तिताः ॥ १० ॥ ब्राह्मणंचसमाहूययाचमानमकिञ्चनम् ॥ पश्चान्नास्तीतितंब्रूयात्सचैवंब्रह्महास्मृतः ॥ ११ ॥ यस्तु
विद्याभिमानेननिस्तेजयतिवैद्विजान् ॥ उदासीनःसभामध्येब्रह्महासोऽपिकीर्तितः ॥ १२ ॥ मिथ्यागुणैःस्वमात्मानंनयत्युत्कर्षणंबलात्॥
गुरूणांचविरुद्धोयःसचैवब्रह्महास्मृतः ॥ १३ ॥ क्षुत्तृट्संतप्तदेहानांद्विजानांभोक्तुमिच्छताम् ॥ यःसमाचरतेविघ्नंतमाहुर्ब्रह्मघातकम् ॥ १४ ॥

१ सर्वोपभोगसुभगम्-इ०पा० । २ सदाविष्णुम्-इ०पा० ।

पिशुनःसर्वलोकानांछिद्रान्वेषणतत्परः ॥ उद्वेगजननःक्रूरःसचैवंब्रह्महास्मृतः ॥ १५ ॥ गवांतृष्णाभिभूतानांजलार्थमुपसर्पताम् ॥
यःसमाचरतेविघ्नंसचैवब्रह्महास्मृतः ॥ १६ ॥ परदोषमवज्ञायनृपकर्णेकरोतियः ॥ पापीयान्पिशुनःक्षुद्रःसचैवब्रह्महास्मृतः ॥ १७ ॥
देवद्विजगवांभूमिंपूर्वमुक्तांहरेत्तुयः ॥ प्रनष्टामपिकालेनतमाहुर्ब्रह्मघातकम् ॥ १८ ॥ द्विजवित्तापहरणेन्यायतःसमुपार्जिते ॥ ब्रह्महत्या
समंज्ञेयंपातकंनात्रसंशयः ॥ १९ ॥ अग्निहोत्रपरित्यागोयस्तुयाज्ञिककर्मणाम् ॥ मातापितृपरित्यागःकूटसाक्ष्यंसुहृद्वधः ॥ २० ॥ गवां
मार्गेवनेचाग्निंपुरेग्रामेचदीपयेत् ॥ इतिपापानिघोराणिसुरापानसमानितु ॥ २१ ॥ हीनस्वहरणेचापिनरस्त्रीगजवाजिनाम् ॥ गोभूरजतर
त्नानामौषधीनांरजस्यच ॥ २२ ॥ चंदनागरुकर्पूरकस्तूरीखंडवाससाम् ॥ हस्तन्यस्यापहरणंरुक्मस्तेयसमंस्मृतम् ॥ २३ ॥ कन्यानां
वरयोग्यानामदानंसदृशेवरे ॥ पुत्रमित्रकलत्रेषुगमनंभगिनीषुच ॥ २४ ॥ कुमारीसाहसंघोरमन्त्यजस्त्रीनिषेवणम् ॥ अवर्णायाश्चगमनंगु
रुतल्पसमंस्मृतम् ॥ २५ ॥ महापातकतुल्यानिपापान्युक्तानियानितु ॥ तानिपातकसंज्ञानितद्वदाम्युपपातकम् ॥ २६ ॥ द्विजार्थं
चप्रतिज्ञायनप्रयच्छतियःपुनः ॥ तस्मान्नरपतेविघ्नतुल्यंतदुपपातकम् ॥ २७ ॥ द्विजद्रव्यापहरणंमर्यादायाव्यतिक्रमः ॥ अति
कोपश्चमानश्चदांभिकत्वंकृतघ्नता ॥ २८ ॥ अत्यंतविषयासक्तिःकार्पण्यंश्रेष्ठमत्सरः ॥ परदारापहरणंसाध्वीकन्याविदूषणम् ॥
॥ २९ ॥ परिवित्तिःपरीवेत्तायययाचपरिविद्यते ॥ तयोर्दानंचकन्यायास्तयोरेवचयाजनम् ॥ ३० ॥ पुत्रमित्रकलत्राणामभावे
स्वामिनस्तथा ॥ शिष्टानांचैवसंन्यासःसहजानांतपस्विनाम् ॥ ३१ ॥ भंगश्चधर्मकृत्यानांसहायानांविनाशनम् ॥ पीडामा
श्रमसंस्थानामाचरेत्त्वल्पिकामपि ॥ ३२ ॥ स्वभृत्यपरिवर्गस्यपशुधान्यधनस्यच ॥ कुप्यधान्यपशुस्तेयमयाच्यानांचयाचनम् ॥
॥ ३३ ॥ गवांक्षत्रियवैश्यानांस्त्रीशूद्राणांविशेषतः ॥ यज्ञारामतडागानांदारापत्यस्यविक्रयः ॥ तीर्थयात्रोपवासानांव्रतायतनकर्मणाम् ॥
॥ ३४ ॥ स्त्रीधनान्युपजीवंतिस्त्रीभिरत्यंतनिर्जिताः ॥ अरक्षणंचनारीणांमद्यपस्त्रीनिषेवणम् ॥ ३५ ॥ ऋणानामप्रदानंचधान्यवृद्ध्युपजीवि

१ पापं हरणे–इ०पा०। २ चंदनागुरुकर्पूरकस्तूरीपट्टवाससाम्–इ०पा०।

नाम् ॥ निंदिताच्चधनादानमपण्यानांचविक्रयः ॥ ३६ ॥ विषमारणमंत्राणांप्रयोगोमूलकर्मणाम् ॥ उच्चाटनाविचारश्चगराविद्वेषणाक्रिया ॥
॥ ३७ ॥ जिह्वासमुपभोगार्थयस्यारम्भःस्वकर्मसु ॥ मूल्येनाध्यापयेद्यश्चमूल्येनाधीयतेचयः ॥ ३८ ॥ व्रात्यताव्रतसंत्यागःसर्वाहारनिषेव
णम् ॥ असद्दाराभिगमनंशुष्कतर्कावलंबनम् ॥ ३९ ॥ देवाग्निसाधुसाध्वीनांनिंदागोब्राह्मणस्यच ॥ प्रत्यक्षंवापरोक्षंवाराज्ञांमंडलिकामपि
॥ ४० ॥ दुःशीलानास्तिकाःपापाःसर्वशून्यस्यवादिनः ॥ पर्वकालेदिवाचैववियोनौपशुयोनिषु ॥ ४१ ॥ रजस्वलानांयोनौचमैथुनंचसमा
चरेत् ॥ स्त्रीपुत्रमित्रसंप्रीतिग्रासान्नच्छेदकाश्चये ॥ ४२ ॥ जनस्याप्रियवक्तारोधूर्ताःसमयभेदिनः ॥ भेत्तातडागचक्राणांसंक्रमाणांरथ
स्यच ॥ ४३ ॥ एकपंक्तिस्थितानांचपाकभेदंकरोतियः ॥ इत्येतैस्तेनराःपापैरुपपातकिनःस्मृताः ॥ ४४ ॥ युक्तास्तदूनकैःक्षुद्रैःपापैःपाप
तराःस्मृताः ॥ येगोब्राह्मणकन्यानांस्वामिमित्रतपस्विनाम् ॥ ४५ ॥ अंतरंयांतिकार्येषुतेनरानारकाःस्मृताः ॥ परश्रियायेतप्यंतेयेपरद्र
व्यसूचकाः ॥ ४६ ॥ परव्यापारनिरताःपरस्त्रीनरदूषकाः ॥ द्विजायदुःखंयःकुर्यात्प्रकारैर्बहुभिःसदा ॥ ४७ ॥ सेवतेयोद्विजःशूद्रांसुरां
जिघ्रतिकामतः ॥ येपानाभिरताःक्रूरायेचाहिंसाप्रियानराः ॥ ४८ ॥ वितार्थयेचकुर्वंतिदानयज्ञादिकांक्रियाम् ॥ गोष्ठाग्निजलरथ्यासु
तरुच्छायामठेषुच ॥ ४९ ॥ त्यजंत्यमेध्यंपुरुषाआरामायतनेषुच ॥ मद्यपानरतानित्यंगानवाद्यरतानराः ॥ ५० ॥ केलीकलाभुजंगाश्वरं
ध्रान्वेषणतत्पराः ॥ वंशेषुकाशिकाष्ठैश्चशुभैःशंकुभिरेववा ॥ ५१ ॥ येमार्गान्समुपघ्नंतिपरस्त्रीराहरंतिच ॥ कूटशासनहर्तारःकूटकर्मक्रि
यारताः ॥ ५२ ॥ कूटयुद्धाश्चशस्त्रेणकूटसंव्यवहारिणः ॥ धनुषांशल्यशस्त्राणांयःकर्तायश्चविक्रयी ॥ ५३ ॥ निर्दयोऽतीवभृत्येषुपशूनां
दमकश्चयः ॥ मिथ्याप्रवदतोवाक्यमाकर्णयतियःशनैः ॥५४॥ स्वामिमित्रगुरुद्रोहीमायावीचपलःशठः ॥ येभार्यापुत्रमित्राणिबालवृद्धकृशा
तुरान् ॥ ५५ ॥ भृत्यानातिथिबंधूंश्चबाधयंतिबुभुक्षया ॥ यःस्वयंमिष्टमश्नातिविप्रायान्यत्प्रयच्छति ॥ ५६ ॥ वृथापाकःसविज्ञेयो
ब्रह्मवादिषुगर्हितः ॥ नियमान्स्वयमादाययेत्यजंत्याजितेंद्रियाः ॥५७॥ प्रव्रज्यावासिनोयेचरहस्यानांचभेदकाः ॥ ताडयंतिचवेगाद्येशपं

१ परस्त्रिया ये हृष्यन्ते–इ० पा० २ दद्यात्–इ०पा० । ३ चाघ्राति–इ०पा० । ४ हिंसापराः–इ०पा० । ५ पंक्त्यर्थम्–इ०पा० । ६ व्रतम्–इ०पा० ।

तिचमुहुर्मुहुः ॥ ५८ ॥ दुर्बलांश्चनपुष्णंतिपुनस्तान्वाहयंतिच ॥ पीडयंत्यतिभारेणसक्षतान्वाहयंतिच ॥ ५९ ॥ सार्द्धंयामादुपरितः
संयुक्तेषुचभुंजते ॥ येभग्नक्षतरोगार्तान्स्वगोरूपान्बुभुक्षया ॥ ६० ॥ नपालयंतियत्नेनतेगोघ्नानारकानराः ॥ वृषाणांवृषणान्येवपापि
ष्ठागालयंतिये ॥ ६१ ॥ वाहयंतिचगांवेध्यांतेमहानारकाःस्मृताः ॥ आश्रमंसमनुप्राप्तंक्षुत्तृष्णाश्रमपीडितम् ॥ ६२ ॥ येऽतिथिंनाभिमन्यं
तेतेवैनिरयगामिनः ॥ अनाथंविकलंदीनंबालंवृद्धंकृशातुरम् ॥ ६३ ॥ नानुकंपंतियेमूढास्तेयान्तिनिरयार्णवम् ॥ अजाविकोमाहिषि
कःसामुद्रोवृषलीपतिः॥६४॥शूद्रविट्क्षत्रवृत्तिश्चनारकीस्याद्द्विजाधमः ॥ शिल्पिनःकारुकावैद्याहेमकारानटाद्द्विजाः ॥ ६५ ॥ कृतकौक्षेय
संयुक्तास्तथान्येनारकाःस्मृताः ॥ यश्चोदितमतिक्रम्यस्वेच्छयावाहरेत्करम् ॥ ६६ ॥ नरकेतुसपच्येतयश्चदंडरुचिर्भवेत् ॥ उत्कोच
कैरधिकृतैस्तस्करैश्चप्रपीडचते ॥ ६७ ॥ यस्यराज्ञःप्रजारुष्टापच्यतेनरकेषुसः ॥ येद्विजाःप्रतिगृह्णंतिनृपस्यान्यायवर्तिनः ॥ ६८ ॥
प्रयांतितेपिघोराणिनरकाणिनसंशयः ॥ पारदारिकचौराणांयत्पापंपार्थिवस्यतत् ॥ ६९ ॥ भवेदरक्षतस्तस्माद्घोरस्तस्यप्रतिग्रहः ॥
अचौरंचौरवत्पश्येच्चौरंवाऽचौररूपवत् ॥ ७० ॥ अविचार्यनृपस्तस्माद्घातयन्नरकंव्रजेत् ॥ घृततैलान्नपानानिमधुमांससुरासवम् ॥ ७१ ॥
गुडेक्षुक्षारशाकानिदधिमूलफलानिच ॥ तृणंकाष्ठंपुष्पपत्रमौषधंकांस्यभाजनम् ॥ ७२ ॥ उपानच्छत्रशकटमासनंशयनांबरम् ॥ ताम्रं
सीसंत्रपुंकाचंशंखाद्यंचजलोद्भवम् ॥ ७३ ॥ वार्क्षंवावैणवाद्यंवागृहेषूपस्करणिच ॥ ऊर्णाकार्पासकौशेयभंगपट्टोद्भवानिच ॥ ७४ ॥
स्थूलसूक्ष्माणिवस्त्राणियेचलोभाद्धरंतिच ॥ एवमादीनिचान्यानिद्रव्याणिविविधानिच ॥ ७५ ॥ नरकाणिध्रुवंयांतिनरावानात्रसंशयः ॥
यद्वातद्वापरद्रव्यमपिसर्षपमात्रकम् ॥ ७६ ॥ अपहृत्यनरोयातिनरकंनात्रसंशयः ॥ एवमाद्यैर्नरःपापैरुत्क्रांतेःसमनंतरम् ॥ ७७ ॥ शरी
रंयातनार्थायपूर्वाकारमवाप्नुयात् ॥ यमलोकंव्रजेत्तेनशरीरेणयमाज्ञया ॥ ७८ ॥ यमदूतैर्महाघोरैर्नीयमानाःसुदुःखिताः ॥ तिर्यङ्मानुष
देहानामधर्मनिरतात्मनाम् ॥ ७९ ॥ धर्मराजःस्मृतःशास्तासुघोरैर्विविधैर्वधैः ॥ विनयाचारयुक्तानांप्रमादात्स्खलितात्मनाम् ॥ ८० ॥

१ सामिद्धः-इ० पा० । २ व्रजन्ति-इ० पा० ।

प्रायश्चित्तैर्गुरुःशास्तानचतैर्दंड्यतेयमः ॥ पारदारिकचौराणामन्यायव्यवहारिणाम् ॥ ८१ ॥ नृपतिःशासकस्तेषांप्रच्छन्नानांचधर्मराट् ॥
तस्मात्कृतस्यपापस्यप्रायश्चित्तंसमाचरेत् ॥ ८२ ॥ नाभुक्तस्यान्यथानाशःकल्पकोटिशतैरपि ॥ यःकरोतिस्वयंकर्मकारयेद्वा
पिमोदयेत् ॥ ८३ ॥ कायेनमनसावाचातस्यचाधोगतिःफलम् ॥ इतिसंक्षेपतःप्रोक्ताःपापभेदाःससाधनाः ॥ ८४ ॥ कथ्यंतेगतय
श्चित्रानराणांपापकर्मणाम् ॥ ८५ ॥ वाक्कायचित्तजनितैर्बहुभेदभिन्नैःकृत्यैःशुभाशुभफलोदयहेतुभूतैः ॥ भास्वत्सुरेशभुवनंनरकाननेका
न्संप्राप्नुवंतिमनुजामनुजेंद्रचन्द्र ॥ ८६ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिपापभेदख्यापनोनामपञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥
॥ श्रीकृष्णउवाच ॥ अथपापैरिमैर्यांतियमलोकंचतुर्विधैः ॥ संत्रासजननंघोरंविवशाःसर्वदेहिनः ॥ १ ॥ गर्भस्थैर्जायमानैश्चबालैस्तरुण
मध्यमैः ॥ पुंस्त्रीनपुंसकैर्वृद्धैर्ज्ञातव्यंसर्वजंतुभिः[1] ॥ २॥ शुभाशुभफलंतत्रदेहिनांप्रविचार्यते ॥ चित्रगुप्तादिभिःसभ्यैर्मध्यस्थैःसर्वदर्शिभिः॥
॥ ३ ॥ नतेऽत्रप्राणिनःसंतियेनयांतियमक्षयम्[2] ॥ अवश्यंहिकृतंकर्मभोक्तव्यंतद्विधारितम् ॥ ४ ॥ तत्रयेशुभकर्माणःसौम्यचित्तादयान्वि
ताः ॥ तेनरायांतिसौम्येनपथायमनिकेतनम् ॥५॥ यःप्रदद्याद्द्विजेन्द्राणामुपानत्काष्ठपादुकाम् ॥ सवराश्वेनमहतासुखंयातियमालयम् ॥
॥ ६ ॥ छत्रदानेनगच्छंतियथाछत्रेणदेहिनः ॥ दिव्यवस्त्रपरीधानायांतिवस्त्रप्रदायिनः ॥ ७ ॥ शिबिकाश्वप्रदानेनततस्तेनसुखंव्रजेत् ॥
शय्यासनप्रदानेनसुखंयांतियमाश्रयम् ॥ ८ ॥ आरामकर्ताछायासुशीतलासुसुखंव्रजेत् ॥ यांतिपुष्पकयानेनपुष्पारामप्रदायिनः ॥ ९ ॥
देवायतनकर्ताचयतिनामाश्रमस्यच ॥ अनाथमंडपानांचक्रीडन्यातिगृहोत्तमैः ॥ १० ॥ देवाग्निगुरुविप्राणांमातापित्रोश्चपूजकाः ॥ पूज्य
मानानरायांतिकामिकेनपथासुखम् ॥ ११ ॥ द्योतयंतोदिशःसर्वायांतिदीपप्रदायिनः ॥ प्रतिश्रयप्रदानेनसुखंयांतिगृहंस्वयम् ॥ १२ ॥
सर्वकामसमृद्धेनपथागच्छंतिगोप्रदाः ॥ येनपापानिकुर्वंतितेतृप्तायांतिनान्यथा ॥ १३ ॥ आर्तौषधप्रदातारः[3]सुखंयांतिनिराकुलाः ॥ विश्रा
म्यमाणागच्छंतिगुरुशुश्रूषणेरताः ॥१४॥ पादशौचप्रदानेनशीतलेनपथाव्रजेत्॥पादाभ्यंगंचयःकुर्यादश्वपृष्ठेनसव्रजेत्॥१५॥हेमरत्नप्रदाने

१ सर्वजंतवः–इ० पा० । २ यमक्षयं यमगृहमित्यर्थः । ३ अग्र्यौषधप्रदातारः–इ० पा० ।

नथातिदुर्गाणिनिस्तरन् ॥ यानवाहनदानेननरयानेनगच्छति ॥१६॥ सर्वकामसमृद्धात्माभूमिदानेनगच्छति ॥ अन्नपानप्रदानेनपिबन्खादं
श्चगच्छति ॥१७॥ इत्येवमादिभिर्दानैःसुखंयांतियमक्षयम् ॥ स्वर्गेपिविपुलान्भोगान्[2]प्राप्नुवंतिनरोत्तम॥१८॥सर्वेषामेवदानानामन्नदानंपरंस्मृ
तम्॥सद्यःप्रीतिकरंदिव्यंबलबुद्धिविवर्द्धनम् ॥१९॥ त्रयाणामपिलोकानांजीवितंह्यु[3]दकंस्मृतम् ॥ पवित्रममृतंदिव्यंशुद्धंसर्वरसायनम्॥२०॥
अन्नंपानंचगोवस्त्रभूशय्याछत्रमासनम् ॥ परलोकेप्रशस्तानिदानान्यष्टौविशेषतः॥२१॥ अन्नदानंविशेषेणधर्मराजपुरेनराः ॥ यस्माद्यांतिसुखे
नैवतस्माद्धर्मं[4]समाचरेत् ॥२२॥ येपुनःक्रूरकर्माणःपापादानविवर्जिताः ॥ तेघोरेणपथायांतिदक्षिणेनयमालयम् ॥२३॥षडशीतिसहस्राणियो
जनानामतीत्ययत् ॥ वैवस्वतपुरंज्ञेयंनानारूपव्यवस्थितम् ॥ २४ ॥ समीपस्थमिवाभातिनराणांशुभकर्मणाम् ॥ पापानामतिदूर
स्थपथारौद्रेणगच्छताम् ॥ २५ ॥ तीव्रकंटकयुक्तेनशर्करानिचितेनच ॥ क्षुरधारानिभैस्तीव्रैःपाषाणैर्निचितेनच ॥ २६ ॥ क्वचि
त्पंकेनमहतादुरुत्तारैश्चखातकैः ॥ लोहसूचीनिभैर्दर्भैःसंछन्नेनपथाक्वचित् ॥ २७ ॥ तटप्रपातविषमैःपर्वतैर्वृक्षसंकुलैः ॥ प्रतप्तां
गारयुक्तेनयांतिमार्गेणदुःखिताः ॥ २८ ॥ क्वचिद्विषमगर्ताभिःक्वचिल्लोष्टैःसुपिच्छलैः ॥ प्रतप्तवालुकाभिश्चतथातीक्ष्णैश्चशंकुभिः ॥
॥ २९ ॥ अनेकतापैर्विततैर्व्याप्तंवंशवनंक्वचित् ॥ क्वचिद्वालुकयाव्याप्तंकष्टेनैवप्रवेशनम् ॥ ३० ॥ क्वचिदुष्णांबुनाव्याप्तंक्वचिच्च
करीषाग्निना ॥ क्वचित्सिंहैर्वृकैर्व्याप्तंदंशैःकीटैश्चदारुणैः ॥ ३१ ॥ क्वचिन्महाजलौकाभिःक्वचिच्चाजगरैःपुनः ॥ मक्षिकाभिश्चरौद्राभिः
क्वचित्सर्पैर्विषोल्बणैः ॥ ३२ ॥ मत्तमातंगयूथैश्चबलोन्मत्तैःप्रमाथिभिः ॥ पंथानमुल्लिखद्भिश्चतीक्ष्णशृंगैर्महावृषैः ॥ ३३ ॥ महाविषाणै
र्महिषैरुष्ट्रैर्मत्तैश्चखादकैः ॥ डाकिनीभिश्चरौद्राभिर्विकरालैश्चराक्षसैः ॥ ३४ ॥ व्याधिभिश्चमहाघोरैःपीड्यमानाव्रजंतिच ॥ म
हाधूलीविमिश्रेणमहाचण्डेनवायुना ॥ ३५ ॥ महापाषाणवर्षेणहन्यमानानिराश्रयाः ॥ क्वचिद्विद्युत्प्रपातेनदार्यमाणाव्रजंतिच ॥ ३६ ॥

१ यमालयम्-इ० पा० । २ प्राप्नोतिविविधान्नरः-इ० पा० । ३ कथितं पयः-इ० पा० । ४ सुखं चरेत्-इ० पा० । ५ गुरुकर्मणाम्-इ० पा० । ६ लोह सूचीभिरत्यंतम-इ० पा० । ७ दुष्टांबुना-इ० पा० । ८ शाकिनीभिः-इ० पा० । ९ विद्युत्प्रतापेन दह्यमानाः-इ० पा० ।

महताबाणवर्षेणविध्यमानाश्चसर्वशः ॥ पतद्भिर्वज्रसंघातैरुल्कापातैश्चदारुणैः ॥ ३७ ॥ प्रतप्तांगारवर्षेणदह्यमानाव्रजंतिच ॥ तेनपांशुवर्षेणपूर्यमाणारुदंतिच ॥ ३८ ॥ महामेघरवैर्घोरैर्वित्रास्यंतेमुहुर्मुहुः ॥ निशितायुधवर्षेणचूर्यमाणानरैर्वृताः ॥ ३९ ॥ महाक्षाराम्बुधाराभिःसिच्यमानाद्रवंतिच ॥ महाशीतेनमरुतातीक्ष्णेनपरुषेणच ॥ ४० ॥ समंतात्पीड्यमानास्तेशुष्यंतेसंकुचंतिच ॥ इत्थंमार्गेणरौद्रेणपाथेयविरहितेनच ॥४१॥निरालंबनदुर्गेणनिर्जलेनसमंततः। अविश्रामेणमहतानिर्गतापाश्रयेणच॥४२॥तमोरूपेणकष्टेनसर्वदुःखाश्रयेणच॥नीयंतेदेहिनःसर्वेयेमूढाःपापकर्मिणः॥४३॥यमदूतैर्महाघोरैस्तदाज्ञाकारिभिर्बलात्॥एकाकिनःपराधीनामित्रबंधुविवर्जिताः ॥४४॥शोचंतःस्वानिकर्माणिरुदंतश्च मुहुर्मुहुः ॥ प्रेतभूताविवस्त्राश्चशुष्ककण्ठोष्ठतालुकाः ॥ ४५ ॥ कृशाङ्गाभीतभीताश्चदह्यमानाःक्षुधाग्निना॥बद्धाःशृंखलयाकेचिदुत्तानाःपादयोर्नराः ॥ ४६ ॥ आकृष्यंतेघृष्यमाणायमदूतैर्बलोत्कटैः ॥ पुनश्चाधोमुखाश्चान्येघृष्यमाणाःसुदुःखिताः ॥ ४७ ॥ केशपाशनिबद्धाश्चकृष्यंतेरज्जुभिर्नराः ॥ ललाटेचांकुशैस्तीक्ष्णैर्भिन्नाःकृष्यंतिदेहिनः ॥ ४८॥ उत्तानारटमानाश्चक्वचिदंगारवर्त्मना ॥ पश्चाद्बाहूंसबद्धाश्चजठरेचप्रपीडिताः ॥ ४९ ॥ पूरिताःशृंखलाभिश्चहस्तयोश्चप्रकीलिताः ॥ ग्रीवायामर्द्धचन्द्रेणाक्षिप्यमाणाइतस्ततः ॥ ५० ॥ शिश्नेचवृषणेबद्धानीयंतेचर्मरज्जुना ॥ विभिन्नाउदरेचान्येतप्तशृंखलयानराः ॥ ५१ ॥ कृष्यंतेकर्णयोश्चान्येभिन्नाश्चिबुकोपरि ॥ छिन्नाग्रपादहस्ताश्चछिन्नकर्णोष्ठनासिकाः ॥ ५२ ॥ संछिन्नाशिश्नवृषणाश्छिन्नाभिन्नांगसंधयः ॥ प्रतुद्यमानाःकुंतैश्चसायकैश्चततस्ततः ॥ ५३ ॥ भिद्यमानाःप्रधावंतिक्रन्दमानानिराश्रयाः ॥ मुद्गरैर्लोहदण्डैश्चहन्यमानामुहुर्मुहुः ॥ ५४ ॥ कशैश्चाविविधैर्घोरैर्ज्वलिताग्निसमप्रभैः ॥ भिंडिपालैर्विभिद्यंतेस्रवंतःपूयशोणितम् ॥ ५५ ॥ मांसेक्षताश्चकृमिभिर्नीयंतेविवशानराः ॥ याचमानाश्चसलिलमन्नंचापिबुभुक्षिताः ॥ ५६ ॥ छायांप्रार्थयमानाश्चशीतार्ताबहुवायुना ॥ दानहीनाःप्रयांत्येवयावंतोविमुखानराः ॥ ५७ ॥

१ महता–इ० पा०। २ म्रियमाणास्ते–इ०पा०। ३ पापकारिणः–इ० पा०। ४ क्षुधाग्निना–इ०पा०। ५ कृष्यमाणाः–इ०पा०। ६ केशपाशनिबद्धाश्च तान्याम्याः कर्षयंति च–इ०पा०। ७ प्रपीडिताः–इ०पा०। ८ च पुनःपुनः–इ०पा०।

गृहीतदानपाथेयाःसुखंयांतियमालयम् ॥ एवंयथातिकष्टेनप्राप्तायमपुरंतदा ॥ ५८ ॥ प्रज्ञापितास्तदादूतैर्निवेदयंतेयमाग्रतः ॥ तत्रयं
शुभकर्माणस्तांश्चसंमानयेद्यमः ॥ ५९ ॥ स्वागतासनदानेनपाद्यार्घेणप्रियेणच ॥ धन्यायूयंमहात्मानआत्मनोहितकारिणः ॥ ६० ॥
येनादिव्यसुखार्थायभवद्भिःसुकृतंकृतम् ॥ इदंविमानमारुह्यादिव्यस्त्रीभोगभूषितम् ॥ ६१ ॥ स्वर्गंगच्छध्वमतुलंसर्वकामसमन्वितम् ॥ ततो
भुक्त्वामहाभोगानंतेपुण्यस्यसंक्षयात् ॥ ६२ ॥ यत्किञ्चिदल्पमशुभंपुनस्तदिहभोक्ष्यथ ॥ तेचापिधर्मराजानंनराःपुण्यानुभावतः॥६३॥
पश्यंतिसौम्यवदनंपितृभूतमिवात्मनः॥ येपुनःपापकर्माणस्तेपश्यंतिभयानकम् ॥ ६४ ॥ पापाविशुद्धनयनाविपरीतात्मबुद्धयः ॥ दंष्ट्राक
रालवदनंभ्रुकुटीकुटिलेक्षणम् ॥ ६५ ॥ ऊर्ध्वकेशंमहाश्मश्रुंप्रस्फुरदधरोत्तरम् ॥ अष्टादशभुजंक्रुद्धंनीलांजनचयोपमम् ॥ ६६ ॥
सर्वायुधोद्यतकरंब्रह्मदंडेनतर्जकम् ॥ महामहिषमारूढंदीप्ताग्निसमलोचनम् ॥ ६७ ॥ रक्तमाल्याम्बरधरंमहामेरुमिवोच्छ्रितम् ॥
प्रलयांबुदनिर्घोषंपिबंतमिवसागरम् ॥ ६८ ॥ ग्रसंतमिवलोकानामुद्गिरंतमिवानलम् ॥ मृत्युश्चतत्समीपस्थःकालानलसमप्रभः ॥ ६९ ॥
कालश्चांजनसंकाशःकृतांतश्चभयानकः ॥ मारीचोग्रामहामारीकालरात्रिःसुदारुणा ॥ ७० ॥ विविधाव्याधयःकष्टानानारूपभयावहाः ॥
शक्तिशूलांकुशधराःपाशचक्रासिधारिणः ॥७१॥ वज्रदण्डधरारौद्राःक्षुद्रतूणीधनुर्द्धराः ॥ असंख्यातामहावीर्याःक्रूराश्चाञ्जनसंप्रभाः॥७२॥
सर्वायुधोद्यतकरायमदूताभयानकाः ॥ अनेनपरिवारेणमहाघोरेणसंवृतम् ॥ ७३ ॥ यमंपश्यंतिपापिष्ठाश्चित्रगुप्तंचभीषणम् ॥
निर्भर्त्सयंतंचात्यन्तंयमंसदुपकारिणम् ॥ ७४ ॥ चित्रगुप्तश्चभगवान्धर्मवाक्यैःप्रबोधयन् ॥ भोभोदुष्कृतकर्माणःपरद्रव्यापहारिणः॥७५॥
गर्विताःरूपवीर्येणपरदाराविमर्दकाः॥ यत्स्वयंक्रियतेकर्मतत्स्वयंभुज्यतेपुनः ॥ ७६ ॥ तत्किमात्मोपघातार्थंभवद्भिर्दुष्कृतंकृतम् ॥ इदानीं
किंप्रतप्यध्वंपीड्यमानाःस्वकर्मभिः॥७७॥भुंजध्वंस्वानिकर्माणिनात्रदोषोऽस्तिकस्यचित्॥एतेचपृथिवीपालाःसंप्राप्तामत्समीपतः ॥ ७८ ॥
स्वकीयैःकर्मभिर्घोरैर्दुःप्रज्ञाबलगर्विताः ॥ भोभोनृपादुराचाराःप्रजाविध्वंसकारिणः ॥७९॥ अल्पकालस्यराज्यस्यकृतेकिंदुष्कृतंकृतम् ॥

१ अश्नंतमिव त्रैलोक्यम्–इ०पा०।

राज्यलोभेनमोहाद्वाबलादन्यायतःप्रजाः ॥ ८० ॥ यत्पीडिताःफलंतस्यभुंजध्वमधुनानृपाः ॥ कृतंराज्यंकलत्रंचयदर्थमशुभंकृतम्॥८१॥
तत्सर्वंसंपरित्यज्ययूयमेकाकिनःस्थिताः ॥ पश्यामतद्बलंतुभ्यंयेनविध्वंसिताःप्रजाः ॥ ८२ ॥ यमदूतैस्ताडयमानाअधुनाकीदृशंभवेत् ॥
एवंबहुविधैर्वाक्यैरुपालब्धाश्यमेनते ॥ ८३ ॥ शोचंतःस्वानिकर्माणितूष्णींतिष्ठंतिपार्थिव ॥ इतिधर्मसमादिश्यनृपाणांधर्मराट्पुनः॥८४॥
तत्पापपंकशुद्धयर्थमिदंवचनमब्रवीत् ॥ भोभोश्चण्डमहाचण्डगृहीत्वानृपतीन्निमान् ॥ ८५ ॥ विशोधयध्वंपापेभ्यःक्रमेणनरकाग्निषु ॥
ततःशीघ्रंसमुत्थायनृपान्संगृह्यपादयोः ॥ ८६ ॥ भ्रामयित्वातिवेगेनविक्षिप्योर्ध्वंविगृह्यच ॥ सर्वप्राणेनमहतासुतप्तेतुशिलातले ॥ ८७ ॥
आस्फालयंतितरसावज्रेणेवमहाद्रुमम् ॥ ततःसरक्तस्रोतोभिःस्रवतेजर्जरीकृतः ॥ ८८ ॥ सनिःसंज्ञस्तदादेहीनिश्चेष्टःसंप्रजायते ॥
ततःसवायुनास्पृष्टःशनैरुज्जीवतेपुनः ॥ ८९ ॥ ततःपापविशुद्धयर्थंक्षिप्यतेनरकार्णवे ॥ अष्टाविंशतिरेवाधःक्षितेर्नरककोटयः ॥ ९० ॥
सप्तमस्यतलस्यांतेघोरेतमसिसंस्थिताः ॥ रौरवप्रभृतीनांचनरकाणांशतंस्मृतम् ॥ ९१ ॥ चत्वारिंशत्समाधिकंमहानरकमंडलम् ॥
येषुपापाःप्रपच्यंतेनराःकर्मानुरूपतः ॥ ९२ ॥ यातनाभिर्विचित्राभिराकर्मप्रक्षयाद्भृशम् ॥ आमलप्रक्षयाद्यद्वदग्नौधास्यंतिधातवः ॥ ९३ ॥
तथापापक्षयात्पापाच्छोध्यंतेनरकाग्निषु ॥ सुगाढहस्तयाबाढंतप्तशृंखलयानराः ॥ ९४ ॥ महावृक्षाग्रशाखायांलंबंतेयमकिंकरैः ॥
ततस्तेसर्पयंत्रेणाक्षिप्तादोल्यंतिकिंकरैः ॥ ९५ ॥ दोल्यंतश्चातिवेगेननिःसंज्ञायांतियोजनम् ॥ अंतरिक्षस्थितानांचलोहभारशतंततः ॥
॥ ९६ ॥ पादयोर्बाध्यतेतेषांयमदूतैर्महाबलैः ॥ तेनभारेणमहताभृशमातार्दितानराः ॥ ९७ ॥ ध्यायंतिस्वानिकर्माणितूष्णींतिष्ठं
तिविह्वलाः ॥ ज्वालाभिराग्निवर्णाभिर्लोहदंडैःसकंटकैः ॥ ९८ ॥ हन्यंतेकिंकरैर्घोरैःसमंतात्पापकारिणः ॥ ततःक्षारेणदीप्तेनवह्नेः
रपिविशेषतः ॥ ९९ ॥ समंततःप्रलिप्यंतेक्षतांगाजर्जरीकृताः ॥ पुनर्विदार्यचांगेषुशिरसःप्रभृतिक्रमात् ॥ १०० ॥ वृंताकवत्प्र

१ तुभ्यं तवेत्यर्थः-षष्ठयर्थे चतुर्थी । २ बलात्-इ० पा० । ३ पापिष्ठान्-इ० पा०। ४ प्रगृह्य च-इ० पा०। ५ आस्फोटयन्ति-इ० पा०। ६ एषु-इ० पा० ।
७ बुध्यंते स्वानि कर्माणि कृष्यंते यमकिंकरैः-इ० पा० ।

पच्यंतेतप्ततैलकटाहके ॥ विष्ठापूर्णेततःकूपेकृमीणांनिचयेततः ॥ १०१ ॥ मेदस्त्वक्पूयपूर्णायांवाप्यांक्षिप्यंतितेपुनः ॥ भक्ष्यंते
क्रिमिभिस्तीक्ष्णैर्लोहतुंडैश्चवायसैः ॥ १०२ ॥ श्वभिर्दंशैर्वृकैर्घोरैर्व्याघ्रैरप्यथवानरैः ॥ पच्यंतेमांसवच्चापि[3]प्रदीप्तांगारराशिषु ॥ १०३ ॥
प्रोताःशूलेषुतीक्ष्णेषुनराःपापेनकर्मणा ॥ तिलपिंडैरिवाक्रम्यघोरैःकर्मभिरात्मनः ॥ १०४ ॥ तिलवत्संप्रपीड्यंतेचक्राख्येनर
केतथा ॥ भिद्यंतेचापितल्पेषुलोहभ्राष्ट्रेष्वनेकधा ॥ १०५ ॥ तैलपूर्णकटाहेषुसुतप्तेषुपुनःपुनः ॥ बहुशःपीड्यतेजिह्वायाऽसत्य
प्रियवादिनी ॥ १०६ ॥ संदंशेनसुतप्तेनप्रपीड्यंतेचपादयोः ॥ मिथ्यागमप्रवक्तुश्चाद्विजिह्वस्यचनिर्गताः ॥ १०७ ॥ जिह्वार्द्धक्रोश
विस्तीर्णाहलैस्तीक्ष्णैश्चबाध्यते ॥ निर्भर्त्सयंतियेक्रूरामातरंपितरंगुरुम् ॥ १०८ ॥ तेषांवक्षउलूकाभिर्मुखमापूर्यसेव्यते ॥ ततः
क्षारेणदीप्तेनताम्रेणतुपुनःपुनः ॥ १०९ ॥ हतेनापूर्यतेऽत्यर्थंतप्ततैलैश्चतन्मुखम् ॥ इतस्ततःपुनर्वक्त्रंभृशमापूर्यहन्यते ॥ ११० ॥
विष्ठाभिःकृमिभिश्चापिसुवर्णहरणैर्नरः ॥ १११ ॥ परिष्वजतिचात्युग्रांप्रदीप्तांलोहशाल्मलिम् ॥ हन्यतेपृष्ठदेशेचपुनस्तीक्ष्णैर्महाघनैः ॥
दंतुरेणातिकूटेनक्रकचेनबलीयसा ॥११२॥ शिरःप्रभृतिपादांतंघोरैःकर्मभिरात्मजैः॥खाद्यतेस्वं[4]निर्मांसानिपाययतेशोणितंस्वकम् ॥११३॥
अन्नंपानंनदत्तंयैर्मूढैर्नाप्यनुमोदितम्॥इक्षुवत्तेप्रपीड्यंतेजर्जरीकृतमस्तकाः॥११४॥असितालवनेघोरेच्छिद्यंतेखण्डखण्डशः॥ सूचीभिर्भि
न्नसर्वांगास्तप्तशूलप्रपोपिताः॥११५॥संबाध्यमानाविवशाःक्लिश्यंतेनाम्रियंतेवै॥देहादुत्साद्यमांसानिभिद्यंतेऽस्थीनि[5]मुद्गरैः॥११६॥हाहेतिराकृ
ष्यतेतूर्णंयमदूतैर्बलोत्कटैः॥निरस्तास्तेनिरुच्छ्वासास्तिष्ठंतिनरकेध्रुवम्॥११७॥उच्छ्वसंतिसदाश्वासैर्वालुकावदनावृताः॥रौरवेरोदमानाश्चपी
ड्यंतेविविधैःशरैः ॥११८॥ महारौरवपीडाभिर्महतीभिस्तदंतिके॥पदोरास्येगुदेचैवपार्श्वेचोरसिमस्तके ॥११९॥ निखन्यंतेघनैस्तीक्ष्णैः
सुतप्तैर्लोहशंकुभिः॥सुतप्तवालुकायांच[6]प्रलुठ्यंतेपुनःपुनः ॥१२०॥ जतुपंकेभृशंतप्तेक्षिप्त्वाक्रंदंतिविस्तरम्॥तेनतेनैवरूपेणहसंतिपारदारि

१ द्रौण्याम्–इ० पा० । २ व्याघ्रैश्च विरुताननैः–इ० पा० । ३ दीप्तांगारप्रदीप्तिषु–इ० पा । ४ ह्रस्वमांसानि–इ०पा० । ५ अशिवमुद्गरैः–इ०पा० ।
६ जल्पंते च–इ०पा० ।

कम्॥१२१॥गाढमालिङ्ग्यतेनारींज्वलंतींलोहनिर्मिताम्॥पूर्वाकारंचपुरुषंप्रज्वलंतंसमंततः॥१२२॥दुश्चारिण्यःस्त्रियोगाढमालिंगंतिवदंति
च॥किंप्रधावसिवेगेनतेनमोक्षोऽस्तिसांप्रतम् ॥ १२३ ॥ लंघितस्तेयथाभर्तापापंभुंक्ष्वतथाधुना ॥ लोहकुंभेतथाक्षिप्ताःसविधानैःशनैःशनैः
॥ १२४ ॥ मृद्वग्निनाथपच्यंतेस्वपापैरेवमानवाः ॥ क्वणंत्युदूखलेसास्त्राःप्रक्षिप्यंतेशिलासुच ॥ १२५ ॥ क्षिप्यंतेचांधकूपेषुदश्यंतेभ्रमरै
र्भृशम् ॥ कृमिभिर्भिन्नसर्वांगाःशतशोजर्जरीकृताः॥१२६॥सुतीक्ष्णक्षारकूपेषुक्षिप्यंतेतदनंतरम् ॥ महाज्वालेचनरकेपापाःफूत्कारयंतिच॥
॥१२७॥इतस्ततश्चधावंतिदह्यमानास्तदर्चिषा॥पृष्ठेचानीयजंघेद्वेविन्यस्तेस्कंधयोःस्थिते॥१२८॥ तयोर्मध्येनचाकृष्यबाहुपृष्ठेनगाढतः॥
वध्वाःपरस्परंसर्वैसुदृढंगाढरज्जुभिः॥१२९॥ पीडयंतिसुसरंध्राभ्रमरास्तीक्ष्णलोहजाः ॥मानिनांक्रोधिनांचैवपुरापापस्यसंशयात्॥१३०॥
पापानांनरकेपुंसांघृष्यतेचंदनंयथा ॥ शरीराभ्यंतरगतंतरुणानांचदारुणम् ॥ १३१ ॥ पिंडबंधःस्मृतोयाम्योमहाज्वालेपुयातनाः ॥
रज्जुभिर्वेष्टितांगाश्चप्रलिप्ताःकर्दमेनच ॥ १३२ ॥ करीषरूक्षवह्नौचपच्यंतेनम्रियंतिच ॥ सुतीक्ष्णक्षारतोयेनशर्करासुशिलासुच ॥१३३॥
आपापसंक्षयात्पापाघृष्यंतेचंदनंयथा ॥ शरीराभ्यंतरगतैःप्रभूतैःकृमिभिर्नराः ॥ १३४ ॥ भक्ष्यंतेतीक्ष्णवदनैरादेहप्रक्षयाद्भृशम् ॥
कृमीणांनिचयेक्षिप्ताःपूतिमांसस्यराशिषु ॥ १३५ ॥ तिष्ठंत्युद्विग्नहृदयाःपर्वताभ्यांचपीडिताः॥सुतप्तवज्रलेपेनशरीरमनुलिप्यते॥१३६॥
अधोमुखोर्द्ध्वपादाश्चधृतास्तप्यंतिवह्निषु[3] ॥ वदनांतःप्रविन्यस्तंसुतप्तायोमयंगुडम् ॥ १३७ ॥ तेखादंतिपराधीनाहन्यमानास्तुमुद्गरैः ॥
येशिवायतनारामवापीकूपमठांगणात्॥१३८॥अभिद्रवंतिपापिष्ठानरास्तत्रवसंतिच ॥ व्यायामोद्वर्तनाभ्यंगस्नानमापानभोजनम् ॥१३९॥
क्रीडनंमैथुनंद्यूतमाचरंतिरमंतिच ॥ तेबाधैर्विविधैर्घोरैरिक्षुयंत्रादिपीडनैः ॥ १४० ॥ निरयाग्निषुपच्यंतेयावदाचन्द्रतारकम् ॥ येशृण्वं
ति गुरोर्निंदांतेषांकर्णःप्रपूर्य्यंते ॥ १४१ ॥ अग्निवर्णैरयःकीलैस्तप्तताम्रादिभिर्द्रुतैः ॥ त्रपुसीसारकूटाद्यैःक्षारेणजंतुनापुनः ॥ १४२ ॥
क्रमादापूर्यतेकर्णोनरकेषुचयातनाः ॥ अनुक्रमेणसर्वेषुभवंत्येतेसमंततः ॥ १४३ ॥ सर्वेंद्रियाणामप्येवंक्रमात्पापेनयातनाः ॥ भवंति

१ तदा नरम्-इ० पा० । २ तथाविधम्-इ० पा० । ३ अधःशिरोर्ध्वपादाश्च-इ० पा० ।

घोराःप्रत्येकंशरीरेतत्कृतेनच ॥ १४४ ॥ स्पर्शलोभेनयेमूढाःसंस्पृशंतिपरस्त्रियम् ॥ तेषांत्वगग्निवर्णाभिःसूचीभिःपूर्यतेभृशम् ॥ १४५ ॥
ततःक्षारादिभिःसर्वैःशरीरमनुलिप्यते ॥ यातनाचमहाकष्टासर्वेषुनरकेषुच ॥ १४६ ॥ गुरोःकुर्वंतिभ्रुकुटिंक्रूरंचक्षुश्चयेनराः ॥
परदारांश्चपश्यंतिलुब्धाःस्निग्धेनचक्षुषा ॥ १४७ ॥ सूचीभिरग्निवर्णाभिस्तेषांनेत्रंप्रपूर्यते ॥ क्षाराद्यैश्चक्रमात्सर्वैर्देहेसर्वाश्चयातनाः॥१४८॥
देवाग्निगुरुविप्राणांयेऽनिवेद्यप्रभुंजते ॥ लोहकीलशतैस्तप्तैस्ताञ्जिह्वास्यंप्रपूर्यते ॥ १४९ ॥ ततःक्षारेणदीप्तेनतैलताम्रादिभिःक्रमात् ॥
शरीरेचमहाघोराश्चित्रानरकयातना ॥१५०॥ येशिवारामपुष्पाणिलोभात्संगृह्यपाणिना ॥ जिघ्रंतिमूढमनसाशिरसाधारयंतिच ॥१५१॥
आपूर्यंतेशिरस्तेषांसुतप्तैर्लोहशंकुभिः ॥ नासिकाचातिबहुशस्ततःक्षारादिभिःपुनः ॥ १५२ ॥ येनिंदंतिमहात्मानमाचार्यंधर्मदेशकम् ॥
शिवभक्तांश्चयेमूढाःशिवंधर्मंचशाश्वतम् ॥ १५३ ॥ तेषामुरसिकंठेचजिह्वायांदंतसंधिषु ॥ तालुकोष्ठेचनासायांमूर्ध्निसर्वांगसंधिषु॥१५४॥
अग्निवर्णाःसुतप्ताश्चत्रिशिखालोहशंकवः ॥ आखन्यंतेसुबहुशःस्थानेष्वेतेषुमुद्गरैः ॥ १५५ ॥ ततःक्षारेणतप्तेनताम्रेणत्रपुणापुनः ॥
तप्ततैलादिभिःसर्वैरापूर्यंतेसमंततः ॥ १५६ ॥ क्षारताम्रादिभिर्दीप्तैर्दह्यंतेबहुशःपुनः ॥ नरकेषुचसर्वेषुविचित्रादेहयातनाः ॥ १५७ ॥
भवंतिबहुशःकष्टाःपाणिपादसमुद्भवाः॥शिवायतनपर्यंतेशिवारामेचकुत्रचित्॥१५८॥समुत्सृजंतियेपापाःपुरीषंमूत्रमेववा ॥ तेषांलिंगंसवृष
णंचूर्ण्यतेलोहमुद्गरैः॥१५९॥सूचीभिरग्निवर्णाभिस्ततश्चापूर्यतेपुनः॥लोहदण्डश्चसुमहानग्निवर्णःसकंटकः ॥१६०॥आखोद्यतेगुदस्तेषांयाव
न्मूर्ध्निविनिर्गतः॥ततःक्षारेणमहतातात्रेणत्रपुणापुनः॥१६१॥द्रुतेनापूर्यतेगाढंगुदंशिश्नंहिदेहिनाम्॥मनःसर्वेन्द्रियाणांचयस्मादुक्तंप्रवर्त्तकम्
॥१६२॥तस्मादिन्द्रियदुःखेनयाचतेतत्सुदुःखितम्॥धनेसत्यपियेदानंनप्रयच्छंतितृष्णया॥अतिथिंचावमन्यंतेकालप्राप्तंगृहाश्रमे ॥१६३॥
तेलोहतोरणेबद्धाहस्तपादावताडिताः ॥ विदारितांगाःशुष्यंतेतिष्ठंत्यब्दशतंनराः ॥ १६४ ॥ हस्तपादललाटेषुकीलितालोहशंकुभिः ॥

---

१ ये देवारामपुष्पाणि–इ०पा० । २ विष्णुधर्मंच–इ०पा० । ३ देवायतनपर्यंते देवारामे च कुत्रचित्–इ०पा० । ४ भृशम्–इ०पा० । ५ निरूप्य च गुदे तेषां यावन्मूर्ध्नि विनिर्गमः–इ०पा० ।

नित्यंचनीवृतंवक्रंकीलकद्वयनाडितम् ॥१६५॥ कृमिभिःप्राणिभिश्चोग्रैर्लोहदंडैश्चवायसैः ॥ उपद्रवैर्बहुविधैःसर्पैर्मुखरकैस्ततः ॥ १६६ ॥
आपीडच्यंतेजिह्वामूलेनिबध्यशृंखलाःपुनः ॥ तिष्ठंतिलंबमानाश्चलोहभारप्रपीडिताः ॥ १६७ ॥ स्निग्धेचवृषणेनद्धेलोहभारद्वयंपुनः ॥
तिष्ठतेलंबमानंचबहुभारचतुर्गुणम् ॥१६८॥ ततःस्वमांससमुत्कृत्त्यतिलमात्रप्रमाणतः ॥ भोजनंदीयतेतेषांसूच्यग्रेणसशोणितम् ॥१६९॥
यदानिर्मांसतांप्राप्ताःकालेनमहतापुनः ॥ ततःक्षारेणदीप्तेनवपुस्तेषांप्रलिप्यते ॥ १७० ॥ सिच्यंतेवर्षधाराभिःशोष्यंतेवायुनापुनः ॥ सि
च्यंतेतप्ततैलेनप्रतप्तेनसमंततः ॥ १७१ ॥ पश्चात्तेवह्निनाभूयोदूरस्थेनशनैःशनैः ॥ निःशेषयातनाभिश्चपीडच्यंतेक्रमशःपुनः ॥ १७२ ॥
भृशंबुभुक्षयापीडामूर्च्छयातिपिपासया ॥ अत्युष्णेनातिशीतेनपापानांसमरेणच ॥ १७३ ॥ एवमादिमहाघोरायातनाःपापकारिणः ॥
एकैकनरकेचैवशतशोथसहस्रशः ॥ १७४ ॥ प्रत्येकंयातनाश्चित्राःसर्वेषुनरकेषुच ॥ कष्टंवर्षशतेनापिसोढुंसर्वैश्चनारके ॥ १७५ ॥
एतेचविविधैर्घोरैर्यात्यमानाश्चकर्मभिः ॥ म्रियंतेनैवपापिष्ठाविविधाःपापकारिणः[1] ॥ १७६ ॥ महाघोराभिघोराख्याःकालाग्निसदृशोपमाः ॥
श्रुतेरेतैर्महारौद्रैर्म्रियन्तेमृदुचेतसः ॥१७७॥ततस्तेनात्रकथिताःपापागच्छंतितान्स्वयम् ॥ पुत्रमित्रकलत्रार्थंयदापुण्यंत्वपाकृतम्॥१७८॥
एकाकीदह्यतेतेननचपश्यातितानिसः ॥ आत्मनाचकृतंपापंभोक्तव्यंध्रुवमात्मना ॥ १७९ ॥ तत्किमन्योपघातार्थंमूढपापंकृतंत्वया ॥
एवंदूतैरुपालब्धास्तेपृच्छंतिततःपुनः ॥ १८० ॥ कियंतंकेनपापेनकालमात्राथतेनराः ॥ देवद्रव्यविनाशेनगुरुद्रोहादिकर्मभिः ॥ १८१ ॥
पापात्सर्वेषुपच्यंतेनरकेष्वामहाक्षयात् ॥ महापातकिनश्चापिसर्वेषुनरकेष्विह ॥ १८२ ॥ आचंद्रतारकंयावत्पीडच्यंतेविविधैर्वधैः ॥
महापातकिनश्चान्येनरकार्णवकोटिषु ॥ १८३ ॥ चतुर्दशसुपच्यंतेकलार्धविविधैर्वधैः ॥ उपपातकिनश्चापितदर्धंयांतिमानवाः ॥ १८४ ॥
शेषपापैस्तदर्धंतुकालंचापितथाविधम् ॥ तस्मात्पापंनकुर्वीतचंचलेजीवितेसति ॥ १८५ ॥ पापेनहिध्रुवंयांतिनरकेषुनराःस्वयम् ॥
यःकरोतिनरःपापंतस्यात्माध्रुवमप्रियः ॥ १८६ ॥ पापस्येहफलंदुःखंतद्भोक्तव्यमिहात्मना ॥ कथंतेपापनिरतानरानारी[2]षुशेरते ॥१८७॥

१ अस्मादग्रे-"तत्रान्यायतनानांचविविधाःपापकारिणः"-इति पाठ एकास्मिन्पुस्तकेऽधिकः पृथक्तयोपलभ्यते। २ नारीषु-इ० पा०।

मरणांतरितायेषांनारकीतीव्रयातना[1] ॥ एवंक्लिष्टविशुद्धाश्चसावशेषेणकर्मणा ॥ १८८ ॥ ततःक्षितिंसमासाद्यपुनर्जायंतेदेहिनः ॥ स्थावरा विविधाकारास्तृणगुल्मादिभेदतः ॥१८९॥ तत्रानुभूयदुःखानिजायंतेकीटयोनिषु॥निष्क्रांताःकीटयोनिभ्यस्ततोजायंतिपक्षिणः ॥१९०॥ संश्लिष्टाःपक्षिभावेनभवंतिमृगजादिषु ॥ मार्गंदुःखमतिक्रम्यजायंतेपशुयोनिषु ॥ १९१ ॥ क्रमाद्गोयोनिमासाद्यपुनर्जायंतिमानवाः ॥ एवंयोनिषुसर्वासुपरिक्रम्यक्रमेणतु ॥१९२॥ कालांतरवशाद्यांतिमानुष्यमतिदुर्लभम्॥व्युत्क्रमेणापिमानुष्यंप्राप्यतेपुण्यगोचरात्॥१९३॥ विचित्रागतयःप्रोक्ताःकर्मणांगुरुलाघवात् ॥ मानुष्यंयःसमासाद्यस्वर्गमोक्षप्रसाधकम् ॥ १९४ ॥ द्वयोर्नसाधयत्येकंसमृतस्तप्यतेचिरम्॥ देवासुराणांसर्वेषांमानुष्यमतिदुर्लभम् ॥१९५॥ तत्संप्राप्यतथाकुर्यान्नगच्छेन्नरकंयथा॥ स्वर्गापवर्गलाभाययदिनास्तिसमुद्यतः ॥१९६॥ स्वर्गस्यमूलंमानुष्यंतद्यत्नादनुपालयेत् ॥ धर्ममूलेनमानुष्यंलब्ध्वासर्वार्थसाधकम् ॥१९७॥ यदिलाभेनयत्नस्तेमूलंरक्षस्वयत्नतः॥मनुष्यत्वेचविप्रत्वंयःसंप्राप्यातिदुर्लभम् ॥१९८॥ नकरोत्यात्मनःश्रेयःकोन्यस्तस्मादचेतनः॥सर्वेषामेवदेशानांमध्यदेशः[2]परःस्मृतः ॥१९९॥ अतःस्वर्गश्चमोक्षश्चयशःसंप्राप्यतेनरैः ॥ एतस्मिन्भारतेपुण्येप्राप्यमानुष्यमध्रुवम् ॥ २०० ॥ यःकुर्यादात्मनःश्रेयस्तेनात्मारक्षितः स्वयम् ॥ यःकुर्यान्नात्मनःश्रेयस्तेनात्मावंचितःस्वयम् ॥ २०१ ॥ भोगभूमिःस्मृतःस्वर्गःकर्मभूमिरियंमता ॥ इहयत्क्रियतेकर्मस्वर्गे तदुपभुज्यते ॥ २०२ ॥ यावत्स्वास्थ्यंशरीरस्यतावद्धर्मंसमाचर ॥ अश्वस्थश्चातियत्नेननकिञ्चित्कर्तुमुत्सहेत् ॥ २०३ ॥ अध्रुवेण शरीरेणह्यध्रुवंयःप्रसाधयेत् ॥ ध्रुवंतस्यपरिभ्रष्टमध्रुवंनष्टमेवच ॥ २०४ ॥ आयुषःखंडखंडानिनिपतंतितवाग्रतः ॥ अहोरात्रापदेशेनकिमर्थंनावबुध्यसे ॥ २०५ ॥ यदानज्ञायतेमृत्युःकदाकस्यभविष्यति ॥ आकस्मिकेहिमरणेधृतिंविंदेतकस्तदा ॥ २०६ ॥ परित्यज्ययदासर्वमेकाकीयास्यसिध्रुवम् ॥ नददासितदाकस्मात्पाथेयार्थमिदंधनम् ॥ २०७ ॥ गृहीतदानपाथेयाःसुखंयांतिमहाध्वनि ॥ अन्यथाक्लिश्यतेजंतुःपाथेयरहितःपथि ॥ २०८ ॥ येषांद्विजेन्द्रवाहित्रीपूर्णभांडातुगच्छति ॥ स्वर्गदेशस्यपुरतस्तेषांलाभंपदेपदे ॥ २०९ ॥

१ मरणं त्वरितं येषाम्–इ०पा० । २ अयं देशः–इ०पा० ।

इतिज्ञात्वानरःपुण्यंकुर्यात्पापंविवर्जयेत् ॥ पुण्येनयातिदेवत्वमपुण्यान्नरकंव्रजेत् ॥ २१० ॥ येमनागपिदेवेशंप्रपन्नाःशरणंशिवम् ॥ तेपि
घोरंनपश्यंतियमस्यवदनंनराः ॥ २११ ॥ किंतुपापैर्महाघोरैःकिञ्चित्कालंशिवाज्ञया ॥ भवंतिप्रेतराजानस्ततोयांतिशिवालयम् ॥२१२॥
येपुनःसर्वभावेनप्रतिपन्नामहेश्वरम् ॥ नतेलिप्यंतिपापेनपद्मपत्रमिवांभसा ॥ २१३ ॥ तस्माद्विवर्धयेद्भक्तिमीश्वरेसततंबुधः ॥ तन्मा
हात्म्यविचारेणभवदोषविरागतः ॥ २१४ ॥ पापानिपंचपरमार्थतयैवपार्थदुःखप्रदानिसुचिरंपितृराजलोके ॥ अन्यानियानिचिरकाल
भयानकानिवक्तुंनयांतिकिलतानिपरिस्फुटानि ॥ २१५ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेशुभाशुभफ
लनिर्देशोनामषष्ठोऽध्यायः ॥ ६ ॥छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ यदेतत्तेसमाख्यातंगंभीरंनरकार्णवम् ॥ व्रतोपवासनियम
पूर्वेणोत्तीर्यतेसुखम् ॥ १ ॥ दुर्लभंप्राप्यमानुष्यंविद्युत्पतनचञ्चलम् ॥ तथात्मानंसमादध्याद्भ्रश्यतेनपुनर्यथा ॥ २ ॥ दानव्रतम
यीकीर्तिर्यस्यस्यादिहदेहिनः ॥ परलोकेऽपिसतयाज्ञायतेज्ञातिवर्द्धनः ॥ ३ ॥ ज्ञायतेनेहनामुत्रव्रतस्वाध्यायवर्जितः ॥ पुरुषः
पुरुषव्याघ्रतस्माद्व्रतपरोभवेत् ॥ ४ ॥ अत्रतेकथयिष्यामिइतिहासंपुरातनम् ॥ सिद्धेनसहसंवादमवंत्यांब्राह्मणस्यहि ॥ ५ ॥
योगर्द्धिसिद्ध्यासांसिद्धःकश्चित्सिद्धोमहीतलम् ॥ चचारविकृतंकृत्वावपुःपरमभीषणम् ॥ ६ ॥ निर्गीर्णदंतोलंबोष्ठःपिंगाक्षस्तनुमूर्द्धजः ॥
त्रुटितैककर्णोदुर्वर्णःशीर्णवस्त्रोमहोदरः ॥ ७ ॥ चिपिटाक्षःस्फुटितपाज्जंघाढ्यःकृशकूर्परः ॥ दिशःपश्यतिसंहृष्टोबभ्रामोद्भ्रांतचित्त
वत् ॥ ८ ॥ मूलजालिकविप्रेणदृष्टःपृष्टश्चकोभवान् ॥ कदास्वर्गात्समायातःकेनकार्येणमेवद ॥ ९ ॥ कच्चिद्दृष्टात्वयारंभाभासितादिगं
तरा ॥ चित्तसंमोहनकरीदेवानामेकसुंदरी ॥ १० ॥ गत्वामद्वचनाद्वाच्यानिर्वाच्यादोषदर्शिभिः ॥ आवंत्यस्त्वांकुशलिनींपृच्छ
तिस्मद्विजोत्तमः ॥ ११ ॥ सिद्धःप्रसिद्धंतंविप्रंप्राहेदंविस्मयान्वितः ॥ कथंत्वयाहंविज्ञातःस्वर्गादभ्यागतःस्फुटम् ॥ १२ ॥ ब्राह्मणस्त

१ हारिम्-इ०पा० । २ परां गातिम्-इ०पा० । ३ जनो यज्ञविवर्जितः-इ० पा० । ४ शिवेन-इ० पा० । ५ चिपिटाक्षःस्फुटितकाखंडजाकृशकटित्याः-
इत्यशुद्धःपाठःकस्मिंश्चित्पुस्तके दृश्यते ।

मथोवाचविज्ञातोऽसिमयायथा ॥ तथातेऽहंप्रवक्ष्यामिक्षणाद्यौवावधारय ॥ १३ ॥ गात्रत्रयंविरूपंस्याद्द्वितीयंवास्वरूपतः ॥ दृष्ट्वासर्वां
गवैरूप्यंविज्ञातोऽसिततोमया ॥ १४ ॥ दुर्लंघ्याप्रकृतिःसाक्षादनुभूतकरीभवेत् ॥ प्रकृतेरन्यथाभावःसर्वथालक्ष्यतेजनैः ॥ १५ ॥ विप्रस्यै
वंवचःश्रुत्वाजगामादर्शनंशनैः ॥ पुनःकैश्चिदहोरात्रैराजगामसतांपुरीम् ॥ १६ ॥ मूलजालकविप्रेणपृष्टःप्राहामरावतीम् ॥ गतोऽहंपूर्ववां
स्तत्ररंभांविभ्रमकारिणीम् ॥१७॥शक्रस्यावसरेवृत्तेव्रजन्त्याःस्वगृहंमया ॥ त्वत्संदेशःसमाख्यातःसावदत्कोनवेद्मितम् ॥१८॥ विद्ययाकल
याचापिपौरुषेणव्रतेनच ॥ तपसावापुमान्मर्त्योदिविविज्ञायतेचिरम् ॥ १९ ॥ ब्राह्मणस्तमथोवाचमुग्धादग्धाग्निसंभवा ॥ नभक्षयामिशक
टंव्रतेनैतेनवेत्तिमाम् ॥२०॥तस्यैतद्वचनंश्रुत्वासासिद्धःसुविशुद्धधीः ॥प्रहस्यामंत्र्यतंविप्रंजगामादर्शनंपुनः ॥२१॥कदाचिच्चरतातेनस्वर्गमार्गे
यदृच्छया॥दृष्ट्वारंभांद्विजप्रोक्तंसर्वमेवनिवेदितम् ॥२२॥ रंभोवाच ॥ कोनजानामितंविप्रंशकटव्रतचारिणम् ॥ मूलजालैर्वर्तयंतंमहाकालव
नाश्रयम् ॥ २३ ॥ दर्शनादथसंभाषादुपकारात्सहासनात् ॥ चतुर्धास्नेहनिर्बंधोनृणांसंजायतेधिकः ॥२४॥ नदर्शनंनसंभाषाकदाचित्सह
तेनमे ॥ नामश्रवणमात्रेणस्नेहःसंदर्शितोमहान् ॥ २५ ॥ इत्येवमुक्त्वारंभोरूरंभाजंभारिणोंतिकम् ॥ विस्मयोत्फुल्लनयनाजगामगजगा
मिनी ॥ २६ ॥ गत्वानिवेदयामासस्नेहव्रतविचेष्टितम् ॥ पुरतोरुद्धहृदयाब्राह्मणस्यचधीमतः ॥ २७ ॥ शक्रःप्रोवाचचार्वंगींगीर्वाणहृदयं
गमाम् ॥ किमानयामितंविप्रंसमीपंतवसुव्रतम् ॥२८॥ दिव्यमाल्यांबरधरंदिव्यस्रगनुलेपनम् ॥ विमानवरमारोप्यदर्शयामासतंपुनः ॥२९॥
तत्रस्थःसद्विजोभोगान्भुनक्तिसहरंभया ॥ शकटव्रतमाहात्म्यमित्येतत्तेमयोदितम् ॥ ३० ॥ राज्यश्रियंजगतिसर्वजनोपभोग्यामाप्नोतिशक्र
शिवकेशवयोर्निवासम् ॥ नाप्राप्यमस्तिभुवनेसुदृढव्रतानांतस्मात्सदाव्रतपरेणनरेणभाव्यम् ॥ ३१ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्व
णिश्रीकृष्णयुधिष्ठिरसंवादेशकटव्रतमाहात्म्यकथनंनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ ब्रह्मेशकेशवादीनांगौरी
गणपतेस्तथा ॥ दुर्गासूर्याग्निसोमानांव्रतानिमधुसूदन ॥१॥ शास्त्रांतरेषुदृष्टानितवबुद्धिगतानिच॥तानिसर्वाणिमेदेववददेवकिनन्दन॥२॥

१ सर्वैर्व्यालक्ष्यते जनैः–इ० पा०। २ संभाष्यापूज्य–इ०पा०। ३ संवर्द्धितः–इ०पा०। ४ शिववासवयोः–इ०पा०।

प्रतिपत्क्रमयोगेनविहितायस्ययातिथिः ॥ देवस्यतस्यांयत्कार्यंतदशेषेणकीर्तय ॥ ३ ॥ ॥ श्रीकृष्णउवाच ॥ वसंतेकिंशुकाशोकशो
भनेप्रतिपत्तिथिः ॥ शुक्लातस्यांप्रकुर्वीतस्नानंनियमतत्परः ॥ ४ ॥ नारीनरोवाराजेन्द्रसंतर्प्यपितृदेवताः ॥ नद्यास्तीरेतडागेवागृहेवा
नियतात्मवान् ॥५॥ पिष्टातकेनविलिखेद्वत्सरंपुरुषाकृतिम्[1] ॥ ततश्चन्दनचूर्णेनपुष्पधूपादिनार्चयेत् ॥६॥ दीपैश्चापिसनैवेद्यैःपूजयेद्वत्सरं
तदा॥मासर्तुनामभिःपश्चान्नमस्कारांतयोजितैः॥पूजयेद्ब्राह्मणान्विद्वान्मंत्रैर्वेदोदितैःशुभैः ॥७॥ संवत्सरोऽसिपरिवत्सरोऽसीडावत्सरोऽभित्स
रोऽसिउषसस्तेकल्पंतामहोरात्रास्तेकल्पंतामर्धमासस्तेकल्पतांमासास्तेकल्पंतामृतवस्तेकल्पन्तांसंवत्सरस्तेकल्पताम् ॥८॥ एवमभ्यर्च्य
वासोभिःपश्चात्तमभिवेष्टयेत्॥ कालोद्भवैर्मूलफलैर्नैवेद्यैर्मोदकादिभिः ॥९॥ ततस्तंप्रार्थयेत्पश्चात्पुरःस्थित्वाकृतांजलिः ॥ भगवंस्त्वत्प्रसा
देनवर्षंशुभदमस्तुमे ॥ १० ॥ एवमुक्त्वायथाशक्त्यादद्याद्विप्रायदक्षिणाम् ॥ ललाटपट्टेतिलकंकुर्याच्चंदनपङ्कजम् ॥ ११ ॥ ततःप्रभृत्यनु
दिनंतिलकालंकृतंमुखम् ॥ धार्यंसंवत्सरंयावच्छशिनेवनभस्तलम् ॥ १२ ॥ एवंनरोवानारीवाव्रतमेतत्समाचरेत् ॥ सदैवपुरुषव्याघ्रभोगा
न्भुविभुनक्त्यसौ ॥ १३ ॥ भूताःप्रेताःपिशाचाश्चदुर्वाराविरिणोग्रहाः ॥ निरर्थकाभवंत्येतेतिलकंवीक्ष्यतत्क्षणात् ॥ १४ ॥ पूर्वमासीन्मही
पालोनाम्नाशत्रुंजयोजयी[2] ॥ चित्रलेखेतितस्याभूद्भार्याचारित्रभूषणा ॥ १५ ॥ तयाव्रतमिदंचैत्रेगृहीतंद्विजसन्निधौ ॥ संवत्सरंपूजयित्वाधृ[3]
त्वाहृदिजनार्दनम् ॥ १६ ॥ असूयुःक्षेत्रुकामोवासमागच्छातियःपुरः ॥ प्रयातिप्रियकृत्तस्यादृष्ट्वामुखमधोमुखः ॥ १७ ॥ सपत्नीदर्पापहरा
वशीकृतमहीतला ॥ भर्तुरिष्टाप्रहृष्टाचसुखमास्तेनिराकुला ॥ १८ ॥तावत्करेणाभिभूतोभर्तापुत्रःसवेदनः॥ शिरोऽत्यर्थनाशंप्रयातःसुहृदां
दुःखदायकः ॥१९॥ धर्मराजपुरंप्राप्तुंसर्वभूतापहारकः॥तस्मिन्क्षणेमहाराजधर्मराजस्यकिंकराः॥२०॥तस्यद्वारमनुप्राप्ताःप्रवेष्टुंगृहमञ्जसा ॥
शत्रुंजयंसमानेतुंकालमृत्युपुरःसराः ॥ २१ ॥ पार्श्वस्थितांचित्रलेखांतिलकालंकृताननाम् ॥ दृष्ट्वाप्रणष्टसंकल्पाःपरावृत्यगताःपुनः॥२२॥ ॥ १
गतेषुतेषुसनृपःपुत्रेणसहभारत॥नीरुजोबुभुजेभोगान्पूर्वकर्मार्जिताञ्छुभान्॥२३॥एतद्व्रतंमहाभागकीर्तितंनमहोदयम्॥ शंकरेण[4]समाख्यातं

१ सुपिष्टकेन–इ० पा० । २ सत्वंजयो जयी–इ० पा० । ३ ध्यात्वा–इ० पा० । ४ अक्रूरेण–इ० पा० ।

ममपूर्वंयुधिष्ठिर ॥ २४ ॥ एतत्रिलोकतिलकालकभूषणंतेख्यातंव्रतंसकलदुःखहरंपरंच ॥ इत्थंसमाचरतियःससुखंविहृत्यमर्त्येप्रया
तिपदमापादिपद्मयोनेः ॥२५॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेतिलकव्रतकथनंनामाष्टमोऽध्यायः ॥ ८ ॥छ॥
॥ श्रीकृष्णउवाच ॥ आश्वयुक्छुक्लपक्षस्यप्रथमेऽह्निदिनोदये ॥ अशोकंपूजयेद्वृक्षंप्ररूढशुभपल्लवम् ॥ १ ॥ विरूढैःसप्तधान्यैश्चगुणकैर्मो
दकैःशुभैः ॥ फलैःकालोद्भवैर्दिव्यैर्नारिकेरैःसदाडिमैः ॥ २ ॥ पुष्पधूपादिनातद्वत्पूजयेत्तद्दिनेऽनघ ॥ अशोकंपाण्डवश्रेष्ठशोकंनाप्नोति
कुत्रचित् ॥ ३ ॥ पितृभ्रातृपतिश्वश्रूश्वशुराणांतथैवच ॥ अशोकशोकशमनोभवसर्वत्रनःकुले ॥ ४ ॥ इत्युच्चार्यततोदद्यादर्घ्यंश्रद्धासमन्वि
तम् ॥ पताकाभिरलंकृत्यप्रच्छाद्यशुभवाससा ॥ ५ ॥ दमयंतीयथास्वाहायथावेदवतीसती ॥ तथाशोकव्रतादस्माज्जायतेपतिवल्लभा ॥
॥ ६ ॥ वनेव्रजंत्यासद्धर्मःसीतयासंप्रदर्शितः ॥ दृष्ट्वाऽशोकंवनेपार्थपल्लवालंकृतांबरम् ॥ ७ ॥ कृत्वासमीपेभर्तारंदेवरंचातिलाक्षतैः ॥
दीपालंकृतनैवेद्यधूपसूत्रफलार्चनैः ॥ ८ ॥ अर्चयित्वाप्रार्थितोऽसौरक्ताशोकोयुधिष्ठिर ॥ मैथिल्याप्राञ्जलिर्भूत्वाशृण्वतोराघवस्यच ॥
॥ ९ ॥ चिरंजीवतुमेवृद्धःश्वशुरःकोशलेश्वरः ॥ भर्तामेदेवराश्चैवजीवंतुभरतादयः ॥ १० ॥ कौशल्यामपिजीवंतींपश्येयमितिमैथिली ॥
ययाचेतंमहाभागाद्रुमंसत्योपयाचनम् ॥ ११ ॥ प्रदक्षिणमुपावृत्यततस्तेप्रययुःपुनः ॥ एवमन्यापियानारीपूजयेद्भुवितंनगम् ॥ १२ ॥
तिलतंदुलसंमिश्रैर्यवगोधूमसर्षपैः ॥ क्षमाप्यवंदयेन्मूलंपादपंरक्तपल्लवम् ॥ १३ ॥ मंत्रेणानेनकौंतेयप्रणम्यस्त्रीपतिव्रता ॥ महा
वृक्षमहाशाखमकरध्वजमन्दिर ॥ १४ ॥ प्रार्थयेत्वांमहाभागवनोपवनभूषण ॥ एवमाभाष्यतंवृक्षंदत्वाविप्रायदक्षिणाम् ॥ १५ ॥
सखीभिःसहितासाध्वीततःस्वभवनंव्रजेत् ॥ १६ ॥ याःशोकनाशनमशोकतरुंतरुण्यःसंपूजयंतिकुसुमाक्षतधूपदीपैः ॥ ताःप्राप्यसौख्यमतु
लंभुविभर्तृजातंगौरीपदंप्रमुदिताःपुनराप्नुवंति ॥ १७ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेअशोकव्रतवर्णनं
नामनवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ज्येष्ठेमासिसितेपक्षेप्रथमेऽह्निदिनोदये ॥ देवोद्यानभवंहृद्यंकरवीरंसम

१ पितृभ्रातृपतिश्वश्रूसुतानां च तथैव च–इ० पा० ।

र्चयेत् ॥ १ ॥ रक्ततंतुपरीधानंगन्धधूपविलेपनैः ॥ विरूढैःसप्तधान्यैश्चनारंगैर्बीजपूरकैः ॥ २ ॥ गुणकैर्घटकैर्दिव्यैर्नारिकेरैःसुशो
भनैः ॥ अभ्युक्ष्याक्षततोयेनमंत्रेणैवंक्षमापयेत् ॥ ३ ॥ करवीरविषावासनमस्तेभानुवल्लभ ॥ मौलिमंडनसद्रत्ननमस्तेकेशवेशयोः ॥४॥
आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ५ ॥ एवंभक्त्यासमभ्यर्च्यदत्वावि
प्रायदक्षिणाम् ॥ प्रदक्षिणामथोकृत्वाततःस्वभवनंव्रजेत् ॥ ६ ॥ एतद्व्रतंमहाभागसूर्याराधनकाम्यया ॥ अनसूययाचक्षमयासावित्र्यासत्य
भामया ॥७॥ दमयन्त्यासरस्वत्यागायत्र्यागङ्गयातथा ॥ अन्याभिरपिनारीभिर्मर्त्यलोकेऽप्यनुष्ठितम् ॥८॥करवीरव्रतंपार्थसर्वसौख्यफलप्र
दम् ॥९॥संपूज्यरत्नकुसुमांचितसर्वशाखंनीलैर्दलैस्तततनुंकरवीरवृक्षम् ॥भुक्त्वामनोऽभिलषितान्भुविभव्यभोगानंतेप्रयातिभवनंभरताग्र्य
भानोः ॥ १० ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेकरवीरव्रतवर्णनंनामदशमोऽध्यायः ॥ १० ॥ ॥ छ ॥
॥ ॥ युधिष्ठिरउवाच ॥ ॥ स्वभर्त्रासहसंबद्धमहास्नेहायथाभवेत् ॥ कुलस्त्रीणांतदाचक्ष्वव्रतंममसुरोत्तम ॥ १ ॥ ॥ श्रीकृष्ण
उवाच ॥ यमुनायास्तटेपूर्वंमथुरास्तेपुरीशुभा ॥ तस्यांशत्रुघ्ननाम्नाभूद्राजारामप्रतिष्ठितः ॥ २ ॥ तस्यभार्याकीर्तिमालानाम्नासी
त्प्रथिताभुवि ॥ तयाप्रणम्यभगवान्वसिष्ठोमुनिपुङ्गवः ॥ ३ ॥ पृष्टःसुखंमुनिश्रेष्ठकथंसमुपजायते ॥ ब्रूहिमेतिलसंबंधकारणंव्रतमु
त्तमम् ॥ ४ ॥ एवमुक्तस्तयाज्ञानीवसिष्ठःकीर्तिमालया ॥ ध्यात्वामुहूर्तमाचख्यौकोकिलाव्रतमुत्तमम् ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥
आषाढपूर्णिमायांतुसंध्याकालेह्युपस्थिते ॥ संकल्पयेन्मासमेकंश्रावणेश्वःप्रभृत्यहम् ॥ ६ ॥ स्नानंकरिष्येनियताब्रह्मचर्येस्थितासती ॥
भोक्ष्यामिनक्तंभूशय्यांकरिष्येप्राणिनांदयाम् ॥ ७ ॥ इतिसंकल्प्यपुरुषोनारीवाब्राह्मणांतिके ॥ प्राप्यानुज्ञांततःप्रातःसर्वसामग्रिसंयुतः ॥८॥
पुरुषःप्रतिपत्कालाद्दंतधावनपूर्वकम् ॥ नद्यांगत्वातथावाप्यांतडागेगिरिनिर्झरे ॥ ९ ॥ स्नानंकुर्याद्व्रतीपार्थसुगन्धामलकैस्तिलैः ॥ दिनाष्ट
कंतथापश्चात्सर्वौषध्याःपुनःपृथक् ॥ १० ॥ वचयाष्टौपुनःपिष्ट्वाशिरोरुहाविमर्दनम् ॥ स्नात्वाध्यात्वारविंचैववंदयित्वापितॄनथ ॥ ११ ॥

१ रक्तवस्त्रपरीधानम्-इ०पा० । २ विकृतैः-इ०पा० । ३ वटकैः-इ०पा० । ४ पुरा पार्थ-इ०पा० ।

तर्पयित्वातिलपिष्टैःकोकिलांपक्षिरूपिणीम् ॥ कलकंठींशुभैःपुष्पैःपूजयेच्चंपकोद्भवैः ॥ १२ ॥ पत्रैर्वाधूपनैवेद्यदीपालक्तकचन्दनैः ॥ तिलतंदुलदूर्वाग्रैःपूजयित्वाक्षमापयेत् ॥ १३ ॥ नित्यंतिलव्रतीभक्त्यामन्त्रेणानेनपाण्डव ॥ तिलसहेतिलसौख्येतिलवर्णेतिलप्रिये॥१४॥ सौभाग्यंद्रव्यपुत्रांश्चदेहिमेकोकिलेनमः ॥ इत्युच्चार्यततःपश्चाद्गृहमभ्येत्यसंयतः ॥ १५ ॥ कृत्वाहारंस्वपेत्पार्थयावन्मासःसमाप्यते ॥ मासांतेताम्रपात्र्यांतुकोकिलांतिलपिष्टजाम् ॥१६॥ रत्ननेत्रांस्वर्णपक्षांब्राह्मणायानिवेदयेत् ॥ वस्त्रैर्द्धनैर्गुडैर्युक्तांश्रावण्यांकुंडलेऽथवा॥१७॥ श्वश्रूश्वशुरवर्गेवादेवज्ञेवापुरोहिते ॥ व्यासेवासंप्रदातव्याव्रतिभिःशुभकाम्यया ॥ १८ ॥ एवंयाकुरुतेनारीकोकिलाव्रतमादरात् ॥ सप्त जन्मानिसौभाग्यंसाप्राप्नोतिसुविस्तरम् ॥ १९ ॥ निःसापत्न्यंपतिंभव्यंसस्नेहंप्राप्यभूतले ॥ मृतागौरीपुरंयातिविमानेनार्कवर्चसा ॥२०॥ एतद्व्रतंवसिष्ठेनमुनिनाकथितंपुरा ॥ तयाचानुष्ठितंपार्थसमस्तंकीर्तिमालया ॥ २१ ॥ तस्याश्चसर्वसंपन्नंवसिष्ठवचनादिह ॥ पुत्रसौभाग्यसंमानंशत्रुघ्नस्यप्रसादजम् ॥ २२ ॥ एवंयान्यापिकौंतेयकोकिलाव्रतमादरात् ॥ करिष्यतिध्रुवंतस्याःसौभाग्यंचभविष्यति ॥ २३ ॥ येकोकिलांकलरवांकलकंठपीठांयच्छंतिसाज्यतिलपिष्टमयींद्विजेभ्यः ॥ तेनंदनादिषुवनेषुविहृत्यकामंमर्त्यैसमेत्यमधुरध्वनयोभवंति ॥ ॥ २४ ॥ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेकोकिलाव्रतंनामैकादशोऽध्यायः ॥ ११ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथपापापहंवक्ष्येबृहद्व्रतमनुत्तमम् ॥ सुरासुरमुनीनांचदुर्लभंविधिनाशृणु ॥ १ ॥ पर्वण्याश्वयुजस्यांतेपायसंघृतसंयुतम् ॥ नक्तंभुंजीतशुद्धात्माओदनंवैक्षवान्वितम् ॥ २ ॥ आचम्याथशुचिर्भूत्वाबिल्वजंदंतधावनम् ॥ भक्षयित्वामहादेवंप्रणम्येदमुदीरयेत् ॥ ३ ॥ अहंदेवव्रतमिदंकर्तुमिच्छामिशाश्वतम् ॥ तवाज्ञयामहादेवयथानिर्वहतेकुरु ॥ ४ ॥ इत्येवंनियमंकृत्वायावद्वर्षाणिषोडश ॥ तिथयःप्रतिपत्पूर्वाभजिष्यामीत्यनुक्रमात् ॥ ५ ॥ ततोमार्गशिरेमासिप्रतिपद्यपरेऽहनि ॥ पृष्ट्वागुरुंचोपवासंमहादेवंस्मरन्मुहुः ॥ ६ ॥ स्नात्वादेवंसमभ्यर्च्यरात्रौप्रज्वाल्यदीपकान् ॥ यमुनांचमहादेवंनत्वापश्चान्निमंत्रयेत् ॥ ७ ॥ महादेवरतान्विप्रान्सपत्नीकान्यतव्रतान् ॥

१ तर्पयित्वा लिखेदष्टौःकोकिलाः पक्षिरूपिणीः॥कलकंठीः-इ०पा० ।

षोडशाष्टौतदर्धंवाएकंवाशक्त्यपेक्षया ॥ ८ ॥ आमंत्र्यस्वगृहंगत्वामहादेवंस्मरन्स्थितौ ॥ शुचिवस्त्रास्तृतायांतुनिराहारोनिशिस्वपेत् ॥९॥
भास्करोदयमासाद्यस्नात्वाचादायदीपकान् ॥ नैवेद्यंस्नपनंपुष्पंधूपंगच्छेच्छिवालये ॥ १० ॥ अभ्यंगयित्वादेवेशंकषायैश्चविरूक्षयेत् ॥
स्नापयेत्पञ्चगव्येनपयसातदनंतरम् ॥ ११ ॥ घृतेनमधुनादध्नारसेनपयसापुनः ॥ तिलांबुनाततःस्नाप्यस्नापयेदुष्णवारिणा ॥ १२ ॥
लेपयेत्सुघनंपश्चात्कर्पूरागरुचंदनैः ॥ पुष्पैःसंपूज्यदातव्यंहैमंशिरसिपंकजम् ॥ १३ ॥ वस्त्रयुग्मंपताकांचपञ्चवर्णवितानकम् ॥
धूपंदीपंचघण्टाश्चदद्याद्देवस्यशक्तितः ॥ १४ ॥ पश्चान्निवेद्यनैवेद्यंस्तुत्वास्वभवनंव्रजेत् ॥ सुसमिद्धंततःकृत्वापूजयेज्जातवेदसम् ॥
॥ १५ ॥ व्रतिनश्चतथाचार्य्यंभोजयेन्मिथुनानिच ॥ हेमवस्त्रादिदानेनयथाशक्त्याक्षमापयेत् ॥ १६ ॥ एवंविसर्ज्यतान्सर्वान्सा
र्द्धंबंधुजनैःस्वयम् ॥ प्राशयित्वापञ्चगव्यंहृष्टोभुंजीतवाग्यतः ॥ १७ ॥ एवमेवविधिंकृत्वाप्रारभेन्निर्द्धनोधनी ॥ वित्तसामर्थ्यतश्चै
वप्रतिमासंचकृत्स्नशः ॥ १८ ॥ वित्तहीनोयथाकश्चिच्छ्रद्धयाचपुनःपुनः ॥ पुष्पार्चनविधानेनसर्वमेतत्समाचरेत् ॥ १९ ॥ प्रतिमासमुपो
ष्यैवंप्रतिपत्कार्तिकावधौ ॥ पारयेत्तंहुतंपार्थप्रारंभविधिनास्फुटम् ॥ २० ॥ द्वितीयेद्वेपञ्चदश्यांकृत्वानक्तंनराधिपः ॥ प्रतिपत्स
द्वितीयाचेत्तस्यामुपवसेत्सुधीः ॥ २१ ॥ द्वितीयोपवसेच्छुक्लाततःप्रभृतिवत्सरम् ॥ प्रारंभविधिनाचैवंद्वितीयामपिपारयेत् ॥ २२ ॥
उपवासद्वयंकृत्वातृतीयांप्रारभेत्ततः ॥ अनेनक्रमयोगेनयावद्वर्षंसमाप्यते ॥ २३ ॥ कृत्वैवंषोडशेवर्षेपूर्णमास्यांसमुद्यतः ॥ पूर्व
वद्देवमभ्यर्च्यकृशानुंवाभितर्प्यच ॥ २४ ॥ हेमशृंगींरौप्यखुरांसघंटांकांस्यदोहनाम् ॥ महादेवायगांदद्याद्दीक्षितायद्विजायवै ॥ २५ ॥
शिवभक्तिरतान्विप्रान्विशुद्धांश्चैवषोडश ॥ वस्त्राभरणदानैश्चशक्त्यासंपूजयेद्व्रती ॥ २६ ॥ ब्राह्मणांश्चयथाशक्त्याभोजयेदपरानपि ॥
अन्येषांचक्षुधार्तानांदद्याद्दानंयथेच्छया ॥ २७ ॥ बृहत्तपोव्रतंचैवब्रह्मघ्नाघविशोषणम् ॥ भूर्भुवादिषुलोकेषुभूरिभोगप्रदंनृणाम् ॥ २८ ॥
चतुर्णामपिवर्णानांस्वर्गसोपानवत्स्थितम् ॥ नकुर्याद्योधनंप्राप्यसमुष्टोनष्टचेतनः ॥ २९ ॥ धन्यमायुःप्रदंपुण्यंरूपसौभाग्यवर्द्धनम् ॥
स्त्रीपुंसयोश्चनिर्दिष्टंव्रतमेतत्पुरातनम् ॥ ३० ॥ विधवयापिकर्तव्यंभूयोऽवैधव्यहेतवे ॥ सधवयापिकर्तव्यमवियोगायसद्व्रतम् ॥ ३१ ॥

उपोष्यप्रतिमासंतुभुंजीतब्राह्मणैःसह ॥ एकद्वित्रिचतुर्भिर्वास्वशक्त्यापांडुनंदन ॥ ३२ ॥ अंतेचांतेसुवर्णानांप्रारंभविधिनाचरेत् ॥
पुण्यसंभारमन्विच्छन्गमयित्वाशिवालयम् ॥ ३३ ॥ व्रतविघ्नेमहाराजजातेदैवात्कथंचन ॥ तावत्यस्तिथयश्चान्याःसमुपोष्याःसमाप्तये ॥
॥ ३४ ॥ अथशीघ्रतरंकश्चिद्व्रतंकर्तुंसमुद्यतः ॥ विधिनानेनराजेन्द्रतेनग्राह्यांतिथिद्वयम् ॥ ३५ ॥ अंतेचांतेचवर्षाणांप्रारंभविधिनाचरेत् ॥
अथारब्धेव्रतेकश्चिदसमाप्तेम्रियेतचेत् ॥३६॥ सोऽपितत्फलमाप्नोतिसत्यारंभप्रभावतः ॥ वाचकाःश्रावकाश्चैवव्रतस्यास्ययुधिष्ठिर ॥३७॥
भवंतिपुत्रसंश्लिष्टाःशिवध्यानानुभावतः ॥३८॥ पुण्यंबृहत्तपइदंव्रतमादरायेकुर्वंतिषोडशसमानिरताःस्वधर्मे ॥ तेभानुमंडलमभेद्यमचिंत्य
माद्यंभित्त्वाप्रयान्तिशशिशेखरपादमूलम् ॥ ३९ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेबृहत्तपोव्रतवर्णनंनाम
द्वादशोऽध्यायः॥१२॥छ॥ युधिष्ठिरउवाच ॥ जातिस्मरत्वंदेवेशदुष्प्राप्यमितिमेमतिः॥तदहंज्ञातुमिच्छामिप्राप्यतेकेनकर्मणा ॥१॥वरप्रदा
नाद्देवानामृषीणांसेवनेनवा ॥ तीर्थस्नानेनवादेवतपोहोमव्रतेनवा ॥२॥ ॥ श्रीकृष्णउवाच ॥ चत्वारिराजन्भद्राणिसमुपोष्याणियत्नतः॥
तत्प्रभावाद्भवेन्नूनंराजञ्जातिस्मरोनरः ॥ ३ ॥ शुभोदयःपुरावैश्योबभूवयमुनातटे ॥ तेनव्रतमिदंचीर्णंमृतःकालक्रमादसौ ॥ ४ ॥
संजयस्यसुतोजातःस्वर्णष्ठीवीतिविश्रुतः ॥ व्रतप्रभावाज्जातिज्ञःसचचौरैर्निपातितः ॥ ५ ॥ नारदस्यप्रभावेणपुनरुज्जीव्यतेऽप्यसौ ॥
सस्मारपूर्ववृत्तांतंसकलंव्रतधर्मतः ॥ ६ ॥ युधिष्ठिरउवाच ॥ संजयस्यकथंपुत्रःस्वर्णष्ठीवीतिवाकथम् ॥ दस्युभिश्चकथंनीतोमृत्युंवैजीवि
तःकथम् ॥ ७ ॥ ॥ श्रीकृष्णउवाच ॥ संजयोनामराजासीत्कुशावत्यांनराधिप ॥ तस्यदेवर्षीमित्रौचसदानारदपर्वतौ ॥ ८ ॥
एकदासंजयगृहंसंप्राप्तौतौयदृच्छया ॥ स्वागतासनदानाद्यैरुपचारैरपूजयत् ॥ ॥ ९ ॥ तेषामथोपविष्टानांपूर्ववृत्तांतभाषिणौ ॥
संजयस्यसुताप्राप्तातरुणीपितुरंतिकम् ॥ १० ॥ पर्वतःप्राहराजानंकन्येयंवरवर्णिनी ॥ गुप्तगुल्फासंहतोरूःपीनश्रोणिपयोधरा ॥ ११ ॥
पद्मपत्रेक्षणनखापद्मकिंजल्कसप्रभा ॥ आकुञ्चितमृदुस्निग्धैःकेशैरविततैर्घनैः ॥ १२ ॥ सविलासागजगतिःसुनासाकोकिलस्वरा ॥
अहोरूपमहोधैर्यमहोलावण्यमुत्तमम्॥१३॥तिलपुष्पस्फुटानासारूपंसंपरिलक्ष्यते॥कस्येयंभद्रिकाभद्राममातिहृदयंगमा ॥१४॥ एवंब्रुवा

णंतंविप्रंविस्मयोत्फुल्ललोचनम्॥सराजाप्राहकन्येयंदुहितामपर्वत॥१५॥ अथोवाचनृपंधीमान्नारदःक्षुभितेन्द्रियः ॥ राजन्निवेष्टुकामोऽहंक
न्येयंममदीयताम्॥१६॥ईप्सितंतवदास्यामिवरंमर्त्येषुदुर्लभम्॥एवमुक्तोनारदेनप्रीतात्मासंजयस्तथा॥१७॥कृताञ्जलिरुवाचेदंप्रहर्षोत्फुल्ल
लोचनः॥पुत्रोमेदीयतांक्षिप्रमक्षीणकनकाकरः॥१८॥यस्यमूत्रंपुरीषंवाश्लेष्माणंक्षिपतिक्षितौ॥ जातरूपंहितत्सर्वंसुवर्णंभवतुस्थिरम्॥१९॥
एवमस्त्वितितंराजन्नारदःप्रत्यभाषत ॥ सुवर्णष्ठीविनंपुत्रंददामितवसुव्रत ॥ २० ॥ एवमुक्त्वासतांकन्यांसालङ्कारांसुमध्यमाम् ॥ विवाह
यामासतयानारदोहृष्टमानसः ॥ २१ ॥ ततस्तस्यचेष्टितंदृष्ट्वापर्वतःक्रोधमूर्छितः ॥ उवाचनारदंरोषाद्दीप्ताक्षःस्फुरिताधरः ॥ २२ ॥ मयेयं
प्रार्थितापूर्वंत्वयायस्माद्विवाहिता ॥ तस्मान्मयासमंस्वर्गंनगंतासिकथंचन ॥ २३ ॥ दत्तस्त्वयास्ययःपुत्रोवरदानेननारद ॥ सोऽपिचौरै
रभिहतःपञ्चत्वमुपयास्यति ॥ २४ ॥ एवमुक्तःपर्वतेननारदःप्राहदुर्म्मनाः ॥ नत्वंधर्मंविजानासिकिञ्चिन्मूढोऽसिदुर्मते ॥ २५ ॥ सामान्यं
सर्वभूतानांकन्याभवतिसुव्रत ॥ नतस्यावरणेदुःखंपश्यंतीहबहुश्रुताः ॥ २६ ॥ नसेवितास्त्वयावृद्धास्तेनमांशपसेरुषा ॥ पाणिग्रहणमं
त्राणांनिष्ठास्यात्सप्तमेपदे ॥२७॥ यस्मादेतदविज्ञायशपसेमामनागसम् ॥ तस्मात्त्वमप्यहोस्वर्गंनगंतासिमयाविना ॥ २८ ॥ संजयस्यसु
तःशापाद्यदिपञ्चत्वमेष्यति ॥ आनयिष्येतथाप्येनंयमलोकान्नसंशयः ॥ २९ ॥ एवंशप्त्वातदाऽन्योन्यंदेवर्षीताववुभौपुनः ॥ पूजितौसंजये
नाथजग्मतुःस्वाश्रमंप्रति ॥ ३० ॥ अथास्यसप्तमेमासिजातःपुत्रोनृपस्यसः ॥ स्वर्णष्ठीवीतिनामास्ययथार्थमकरोत्पिता ॥ ३१ ॥ जाति
स्मरःस्मरवपुःसुवर्णोत्पत्तिकारणम् ॥ सर्वभूतरुतज्ञोऽभूद्भद्रव्रतफलादिह ॥ ३२ ॥ मूत्रश्लेष्मपुरीषादियत्किञ्चित्क्षिपतिक्षितौ ॥ जायते
कनकंसर्वंप्रसादान्नारदस्यच ॥ ३३ ॥ तेनासौयजतेराजाविधिवद्भूरिदक्षिणैः ॥ राजसूयादिभिर्यज्ञैर्विविधैर्ब्राह्मणैर्वृतः ॥ ३४ ॥ बभारभृ
त्याननिशंपुपोषस्वजनातिथीन् ॥ चकारदेवतागारसरश्चारामवाटिकाः ॥ ३५ ॥ जातस्नेहंतथापुत्रंररक्षरक्षिभिर्वृतः ॥ राज्ञयः
कनकस्यास्यबभूवुर्नृपतेःसुतात् ॥ ३६ ॥ अथास्यदस्यवःकेचिच्छ्रुत्वातंकनकाकरम् ॥ धनलोलुपयाजघ्नुर्दाक्षिणात्यामदोद्धताः ॥३७॥

१ दोषम्–इ० पा० ।

तस्मिन्विनष्टेतन्नष्टंवरदानसमुद्भवम् ॥ कनकंतदपश्यंतोजग्मुरन्योन्यतःक्षयम् ॥ ३८ ॥ पातितंदस्युभिःपुत्रंदृष्ट्वाराजासुदुःखितः ॥
विललापाकुलमतिःसमुमोहपपातच ॥ ३९ ॥ विलपंतंतुतंदृष्ट्वानारदःप्राहसंजयम् ॥ राजन्विषादंमाकार्षीःशृणिवमांभारतींमम ॥ ४० ॥
इत्युक्त्वाससमाचख्यौचरितानिमहौजसाम् ॥ विशिष्टानांनरेंद्राणांयतीनांदक्षिणावताम् ॥४१॥ श्रुत्वाराजानरेंद्राणांचरितानिमहात्मनाम्॥
विनष्टशोकःसहसाप्रकृतिस्थोबभूवसः ॥ ४२ ॥ नारदोऽपिनरेंद्रस्यमृतंपुत्रंयमालयात् ॥ आनयामासतरसातथारूपंयथाहृतम् ॥ ४३ ॥
दृष्ट्वास्पृष्ट्वासपुत्रंतंपरितुष्टेनचेतसा ॥ व्रीडितोविस्मितश्चैवकृताञ्जलिरथाब्रवीत् ॥ ४४ ॥ किमाश्चर्यंप्रसन्नेनभवताममनारद ॥
दत्तःपुत्रस्तथाभूतोदस्युभिर्घातितोयथा ॥ ४५ ॥ षण्मासांतेपुनरसौजीवितंसर्वमेवतत् ॥ सस्मारपूर्ववृत्तांतंभद्राणांपारणात्किल ॥४६॥
एतत्तेसर्वमाख्यातंजातिस्मरणकारकम्॥व्रतंव्रताधिकंश्रेष्ठंकिमन्यत्कथयामिते॥४७॥श्रीकृष्णउवाच ॥ब्राह्मणाश्चैवशूद्राश्चकुलेमहतिजन्म
च ॥ दाताक्षमीधनीवाग्मीरूपीस्वैर्भद्रैकैर्भवेत्॥४८॥चत्वारिराजन्भद्राणिचतुष्पादानितानिवै॥तान्येवबहुविघ्नानिदुष्प्राप्यान्यकृतात्मभिः
॥४९॥मार्गशीर्षेतुप्रथमंद्वितीयंफाल्गुनेतथा ॥ ज्येष्ठेतृतीयंराजेन्द्रख्यातंभाद्रपदेपरम् ॥५०॥ फाल्गुनामलपक्षाद्यौत्रीन्मासांस्तुनराधिप॥
तत्रिपुष्पमितिख्यातंतपस्याकरणंपरम् ॥ ५१ ॥ ज्येष्ठस्यशुक्लपक्षाद्यौत्रीन्वैमासान्युधिष्ठिर ॥ तत्त्रिरामामितिख्यातंसत्यशौर्यप्रदायकम् ॥
॥ ५२ ॥ शुक्लेभाद्रपदस्याद्यौत्रीन्मासान्पांडुनंदन ॥ तत्त्रिरंगमितिख्यातंबहुविद्याप्रदायकम् ॥ ५३ ॥ शुक्लमार्गशिरस्याद्यौत्रीन्मासांस्तु
नराधिप ॥ तद्विष्णुपदमित्युक्तंसर्वधर्मप्रदायकम् ॥ ५४ ॥ समासेनैवचोक्तानिभद्राण्येतानिभारत ॥ कर्तव्यानिनरैःस्त्रीभिर्ब्रा
ह्मणानुमतेनवा ॥५५॥ युधिष्ठिरउवाच ॥ विस्तरेणैवमेब्रूहिदेवदेवजगत्पते ॥ भद्राणांनियमाधानंप्रधाननियमांस्तथा ॥५६॥ श्रीभगवानु
वाच ॥ शृणुराजन्नवहितोभद्राणांविस्तरंपरम् ॥ कथयिष्येनकथितंकस्यचिद्यन्मयापुरा॥५७॥ शुक्लेमार्गशिरस्याद्यौचत्वारास्तिथयोवराः॥
द्वितीयाचतृतीयाचचतुर्थीपञ्चमीतथा ॥५८॥ एकभुक्तासनास्तिष्ठेत्प्रतिपद्यांजितेन्द्रियः॥ प्रभातेतुद्वितीयायांकृत्वायत्करणीयकम्॥५९॥
प्रहरत्रयेसमाधिकेगतेस्नानंसमाचरेत् ॥ मृद्गोमयंचसंगृह्यमंत्रैरेभिर्विचक्षणः ॥ ६० ॥ अहंतेतुप्रदिश्यामिमंत्राणांविधिमुत्तमम् ॥ येषांदे

योनदेयोवाताञ्छृणुष्ववदामिते ॥ ६१ ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्रायेशुचयोऽमलाः ॥ तेषांमंत्राःप्रदेयावैनतुसंकीर्णधर्मिणाम् ॥ ६२ ॥
यास्त्रीभर्त्राविंयुक्तापिस्वाचारैःसंयुताशुभा ॥ साचमन्त्रान्प्रगृह्णातुसभर्त्रातदनुज्ञया ॥ ६३ ॥ स्नानंनदीतडागेवावापीकूपगृहेपिवा ॥
दशोत्तरंफलंज्ञेयमधिकंहिसमंत्रकम् ॥ ६४ ॥ मृदंमंत्रेणसंगृह्यसर्वांगेषुप्रदापयेत् ॥ त्वंमृदेवंदितादेवैःसमलैर्दैत्यघातिभिः ॥ ६५ ॥
मयापिवंदिताभक्त्यामामतोविमलंकुरु ॥ ६६ ॥ मृन्मंत्रः ॥ एवंजपन्मृदंदत्त्वास्वहस्ताग्रेसमंत्रकम् ॥ जलावगाहनंकुर्यात्कुण्डमालिख्य
धर्मवित् ॥ ६७ ॥ सिद्धार्थकैःकृष्णतिलैर्वचासर्वौषधीःक्रमात् ॥ त्वमादिःसर्वदेवानांजगतांचजगन्मये ॥ ६८ ॥ भूतानांवीरुधांचैवरसानां
पतयेनमः ॥ गंगासागरजंतोयंपौष्करंनार्मदंतथा ॥ ६९ ॥ यामुनंसांनिहत्यंचसंनिधानमिहास्तुमे ॥ ७० ॥ स्नानमंत्रः ॥ शरीरालंभनं
पूर्वंकृत्वामृद्गोमयांबुभिः ॥ एवंस्नात्वासमाप्लुत्यआचम्यतटमास्थितः ॥ ७१ ॥ निवस्यवाससीशुभ्रेशुचिःप्रयतमानसः ॥ देवान्पितॄन्म
नुष्यांश्चतर्पयेत्सुसमाधिना ॥ ७२ ॥ एवंगृहीतनियमोगृहंगच्छेच्छुचिव्रतः ॥ उपविश्यनसंजल्पेद्यावच्चन्द्रस्यदर्शनम् ॥ ७३ ॥ स्नात्वा
चैवततोनामतृतीयादिचतुर्दिने ॥ नमःकृष्णाच्युतानंतहृषीकेशेतिचक्रमात् ॥ ७४ ॥ चतुर्दिनेद्वितीयादिदेवमभ्यर्चयेच्युतम् ॥ प्रथमे
ह्निस्मृतापूजापादयोश्चक्रपाणिना ॥ ७५ ॥ नाभिपूजाद्वितीयेह्निकर्तव्याविधिवद्धरेः ॥ मुरद्विषस्तृतीयेह्निपूजांवक्षसिविन्यसेत् ॥ ७६ ॥
चतुर्थेह्निजगद्धातुःपूजाशिरसिकल्पयेत् ॥ पुष्पैर्विलेपनैर्धूपैरर्घ्यंदद्युर्विभूषणैः ॥ ७७ ॥ चीवरैर्हारिनैवेद्यैर्दीपदानैश्चभक्तितः ॥ पूजयित्वा
विधानेनविष्णुंविश्वेश्वरंव्रती ॥ ७८ ॥ ततोदिनावसानेतुमुहूर्तेनिर्गतेसति ॥ अर्घ्यंप्रदद्यात्सोमायभक्त्यातद्भावभावितः ॥ ७९ ॥ शशिच
न्द्रशशांकेन्दुनामानिक्रमशोनरः ॥ तृतीयादिषुचन्द्रस्यसंकीर्त्यार्घंनिवेदयेत् ॥ ८० ॥ सचार्घ्योयादृशोदेयऋद्धिमद्भिस्थेतरैः ॥ तत्तेसम्य
क्प्रवक्ष्यामियुधिष्ठिरनिबोधमे ॥ ८१ ॥ चन्दनागरुकर्पूरदधिदूर्वाक्षतादिभिः ॥ रत्नैःसमुद्रजैश्चान्यैर्वज्रवैडूर्यमौक्तिकैः ॥ ८२ ॥ पुष्पैः
फलैःस्वकालोत्थैःखर्जूरैर्नालिकेरकैः ॥ वस्त्राच्छादनगोवाजिभूमिहेमगजान्वितैः ॥ ८३ ॥ सत्वयुक्तस्यऋद्धस्यराजन्नेषविधिःस्मृतः ॥
इतरस्ययथाशक्त्याफलपुष्पाक्षतोदकैः ॥८४॥ लवणंगुडंघृतंतैलंपयःकुंभास्तिलैःसह॥अर्घेष्वेतानिशस्तानिशशिवृद्ध्याविवर्द्धयेत्॥८५॥

प्रत्यहंवर्द्धयेदर्घ्यंशशिवृद्ध्यानरोत्तम ॥ एवमर्घःप्रदातव्यःशृणुमंत्रविधिक्रमम् ॥ ८६ ॥ नवोनवोसिमासांतेजायमानःपुनःपुनः ॥
त्रिरग्निसमवेतोवैदेवानाप्यायसेहविः ॥ ८७ ॥ गगनाङ्गणसद्दीपदुग्धाब्धिमथनोद्भव ॥ भाभासितदिगाभोगरमानुजनमोऽस्तुते ॥ ८८ ॥
दत्वार्घ्यंद्विजराजायतद्विप्रायनिवेदयेत् ॥ निर्वर्त्यार्घ्यक्रममिदंततोभुंजीतवाग्यतः ॥ ८९ ॥ भूमिंतुभाजनंकृत्वापद्मपत्रसमास्तृताम् ॥
पालाशैर्मधुपत्रैर्वासुरूपैर्वाशिलातले ॥९०॥ समालभ्यधरांदेवींमंत्रेणानेनमंत्रवित् ॥ त्वत्तलेभोक्तुकामोऽहंदेविसर्वरसोद्भवे ॥ ९१ ॥ मदनु
ग्रहायसुस्वादंकुर्वन्नममृतोपमम् ॥ एवंजप्त्वाचभुक्त्वाचशाकंपाकंगुणोत्तरम् ॥९२॥ आचम्यखान्युपालभ्यस्मृत्वासोमंस्वपेद्भुवि ॥ भोक्त
व्यंतुद्वितीयायामक्षारलवणंहविः ॥९३॥ मुन्यन्नंतुतृतीयायांचतुर्थ्यांगोरसोत्तरम् ॥ घृताक्ताःसगुडाःशस्ताःपञ्चम्यांकृशरास्सदा ॥ ९४ ॥
शस्ता[1]भद्रेषुसर्वेषुसदाश्यामाकतण्डुलाः॥प्रसाधिकाघृतंगव्यंवन्यंफलमयाचितम्॥९५॥प्रातःस्नानंततःकृत्वासंतर्प्यपितृदेवताः ॥ भोजये
द्ब्राह्मणान्भक्त्यादत्तदानान्विसर्जयेत् ॥९६॥ भृत्यबन्धुजनैःसार्द्धंपश्चाद्भुञ्जीतकामतः ॥ एवंभद्रेषुसर्वेषुत्रि[2]मासेषुगतेषुयः ॥९७ ॥ करोत्ये
तन्नरोभक्त्यावर्षमेकममत्सरी ॥ तस्यश्रीर्विजयश्चैवनित्यंसोमःप्रसीदति॥९८॥एतत्करोतियाकन्याशुभंप्राप्नोतिसापतिम् ॥ दुर्भगासुभगा
साध्वीभवत्यविधवासदा ॥९९॥ राज्यार्थीलभतेराज्यंधनार्थीलभतेधनम्॥पुत्रा[3]र्थीलभतेपुत्रानितिप्राहप्रभाकरः॥ १००॥ योषित्कुलाकुल
विवाहमनोरमाणिशय्यान्नयानशयनासनशोभितानि ॥ भद्राण्यवाप्यधनपुत्रकलत्रजानिजातिस्मरोभवतिभारतभद्रकर्ता॥१०१॥इतिश्री
भविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेभद्रोपवासव्रतनिरूपणंनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ इतिप्रातिपत्कल्पः
समाप्तः ॥ ॥ श्रीकृष्णउवाच ॥ ॥ संत्यन्यास्तिथयःपार्थद्वितीयाद्याःपरिश्रुताः॥मासैश्चतुर्भिश्चत्वारःप्रावृट्छुक्लाःक्लमापहाः ॥ १ ॥
गोपिताश्चसदालोकेनप्रोक्ताश्चमयाक्वचित् ॥ प्रकाशयामिताःपार्थशृणुसर्वामयाहिताः ॥ २ ॥ एकातुश्रावणेमासिअन्याभाद्रपदेतथा ॥
अपराश्वयुजेमासिचतुर्थीकार्तिकेभवेत् ॥ ३ ॥ श्रावणेकलुषानामप्रोष्ठपादेचगीर्मला ॥ आश्विनेप्रेतसंचाराकार्तिकेचयमास्मृता ॥ ४ ॥

१ भोज्याः-इ०पा० । २ प्रकाशेषु-इ०पा० । ३ अपुत्रः-इ०पा० ।

॥ युधिष्ठिरउवाच ॥ कस्मात्साकलुषाप्रोक्ताकस्मात्सागीर्मलामता ॥ कस्मात्साप्रेतसंचाराकस्माद्याम्याप्रकीर्तिता ॥ ५ ॥ ॥ श्रीकृष्ण
उवाच ॥ पुरावृत्रवधेवृत्तेप्राप्तराज्येपुरंदरे ॥ ब्रह्महत्यापनोदार्थमश्वमेधेप्रवर्तिते ॥ ६ ॥ क्रोधादिन्द्रेणवज्रेणब्रह्महत्यानिषूदिता ॥
षट्खण्डाचकृताक्षिप्तावृक्षेतोयेमहीतले ॥ ७ ॥ नारीब्रह्महनेवह्नौसंविभज्ययथाक्रमम् ॥ तत्पापंश्रावणेव्यूढंद्वितीयायांदिनोदये ॥ ८ ॥
नारीवृक्षनदीभूमिवह्निब्रह्महणेतथा ॥ निर्मलीकरणंजातमतोर्थकलुषास्मृता ॥ ९ ॥ मधुकैटभयोरक्तेपुरामग्नेतिमेदिनी ॥
अष्टांगुलापवित्रासानारीणांतुरजोमलम् ॥१०॥ नद्यःपूरमलाःसर्वावह्नेर्धूमशिखामलः ॥ कलुषाणिचरंत्यस्यांतेनैषाकलुषामता ॥ ११ ॥
गीर्गिराभारतीवाणीवाचामेधासरस्वती ॥ गीर्मलंवहतेयस्माद्द्वितीयागीर्मलामता ॥ १२ ॥ देवर्षिपितृधर्माणांनिंदकानास्तिकाःशठाः ॥
तेषांसावाग्मलव्यूढाद्वितीयातेनगीर्मला॥१३॥अनध्यायेषुशास्त्राणिपाठयंतिपठंतिच॥शाब्दिकास्ताकिंकाःश्रौतास्तेषांशब्दापशब्दजाः ॥
॥१४॥मलाव्यूढाद्वितीयायामतोर्थंगीर्मलाचसा ॥ प्रेतास्तुपितरःप्रोक्तास्तेषांतस्यांतुसंचरः ॥१५॥ द्वितीयायांचलोकेषुतेनसाप्रेतसंचरा ॥
अग्निष्वात्ताबर्हिषदआज्यपाःसोमपास्तथा॥ १६ ॥ पितृपितामहप्रेतसंचारात्प्रेतसंचरा ॥ पुत्रैःपौत्रैश्चदौहित्रैःस्वधामंत्रैःसुपूजिताः ॥१७॥
श्राद्धदानमखैस्तृप्तायांत्यतःप्रेतसंचरा ॥ कार्तिकेशुक्लपक्षस्यद्वितीयायांयुधिष्ठिर ॥ १८ ॥ यमोयमुनयापूर्वंभोजितःस्वगृहेतदा ॥ द्विती
यायामहोत्सर्गेनारकीयाश्चतर्पिताः॥१९॥पापेभ्योविप्रमुक्तास्तेमुक्ताःसर्वेविबंधनाः॥भ्रामितानींतितास्तुष्टाःस्थिताःसर्वेयदृच्छया ॥ २० ॥
तेषांमहोत्सवोवृत्तोयमराष्ट्रेसुखावहः ॥ ततोयमद्वितीयासाप्रोक्तालोकेयुधिष्ठिर ॥ २१ ॥ अस्यांनिजगृहेपार्थनभोक्तव्यमतोबुधैः ॥ स्नेहे
नभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्द्धनम् ॥२२॥ दानानिचप्रदेयानिभगिनीभ्योविधानतः ॥ स्वर्णालंकारवस्त्राद्यैःपूजासत्कारभोजनैः ॥ २३ ॥
सर्वाभगिन्यःसंपूज्याअभावेप्रतिपत्तिगाः ॥ पितृव्यभगिनीहस्तात्प्रथमायांयुधिष्ठिर ॥ २४ ॥ मातुलस्यसुताहस्ताद्द्वितीयायांपुनर्नृप ॥
पितृमातृस्वसारौयेतृतीयायांतयोःकरात्॥२५॥भोक्तव्यंसहजायाश्चभगिन्याहस्ततःपरम्॥सर्वासुभगिनीहस्ताद्भोक्तव्यंबलवर्द्धनम् ॥२६॥

१ वधङ्गागा-इ०पा० ।

धन्यंयशस्यमायुष्यंधर्मकामार्थवर्द्धनम् ॥ व्याख्यातंसकलंस्नेहात्सरहस्यंमयातव ॥ २७ ॥ यस्यांतिथौयमुनयायमराजदेवःसंभोजितो
जगतिसत्वरसौहृदेन ॥ तस्यांस्वसुःकरतलादिहयोभुनक्तिप्राप्नोतिवित्तमथभोज्यमनुत्तमंसः ॥ २८ ॥ इतिश्रीभविष्येमहापुराणेउत्तर
पर्वणिश्रीकृष्णयुधिष्ठिरसंवादेयमद्वितीयाव्रतमाहात्म्यंनामचतुर्दशोऽध्यायः ॥१४॥छ॥ ॥ युधिष्ठिरउवाच ॥ ॥ भगवन्भवताप्रोक्तंधर्मा
र्थादेःसुसाधनम् ॥ गार्हस्थ्यंतच्चभवतिदंपत्योःप्रीयमाणयोः ॥ १ ॥ पत्नीहीनःपुमान्पत्नीभर्त्राविरहितातथा ॥ धर्मकामार्थसंसिद्धौन
स्यातांमधुसूदन ॥ २ ॥ तद्ब्रूहिदेवदेवेशविधवास्त्रीनजायते ॥ व्रतेनयेनगोविंदपत्न्याऽविरहितोनरः ॥ ३ ॥ ॥ श्रीकृष्णउवाच ॥ ॥
अशून्यशयनंनामद्वितीयांशृणुतांमम ॥ यामुपोष्यनवैधव्यंप्राप्नोतिस्त्रीयुधिष्ठिर ॥ ४ ॥ पत्नीविमुक्तश्चनरोनकदाचित्प्रजायते ॥
शेतेजगत्पतिर्विष्णुःप्रियासार्द्धंयदाकिल ॥ ५ ॥ अशून्यशयनंनामतदाग्राह्याचसातिथिः ॥ उपवासेननक्तेनतथैवायाचितेनच ॥ ६ ॥
कृष्णपक्षेद्वितीयायांश्रावणेनृपसत्तम ॥ स्नानंनद्यांतडागेवागृहेवानियतात्मवान् ॥ ७ ॥ कृत्वापितॄन्मनुष्यांश्चदेवान्संतर्प्यभक्तिमान् ॥
स्थंडिलंचतुरस्रंतुमृन्मयंकारयेत्ततः ॥ ८ ॥ तत्रस्थंश्रीधरंश्रीशंभक्त्याभ्यर्च्यश्रियासह ॥ नैवेद्यपुष्पधूपाद्यैःफलैःकालोद्भवैःशुभैः ॥ ९ ॥
इममुच्चारयेन्मंत्रंप्रणम्यजगतःपतिम् ॥ श्रीवत्सधारिञ्छ्रीकान्तश्रीधामञ्छ्रीपतेऽव्यय[3] ॥ १० ॥ गार्हस्थ्यंमाप्रणाशंमेयातुधर्मार्थकामदम् ॥
अग्नयोमाप्रणश्यंतुमाप्रणश्यंतुदेवताः ॥११॥ पितरोमाप्रणश्यंतुमत्तोदंपत्यभेदतः ॥ लक्ष्म्यावियुज्यतेकृष्णनकदाचिद्यथाभवान् ॥१२॥
तथाकलत्रसंबंधोदेवमामेप्रणश्यतु ॥ लक्ष्म्यानशून्यंवरदयथातेशयनंसदा ॥ १३ ॥ शय्याममाप्यशून्यास्तुतथाजन्मनिजन्मनि ॥
एवंप्रसाद्यपूजांचकृत्वालक्ष्म्याहरेस्तथा ॥१४॥ चंद्रोदयेस्नानपूर्वंपञ्चगव्यंतुसंयुतम् ॥ विप्रायदक्षिणांदद्यात्स्वशक्त्याफलसंयुताम्॥१५॥
अनेनविधिनाराजन्यावन्मासचतुष्टयम् ॥ कृष्णपक्षेद्वितीयायांप्रागुक्तविधिमाचरेत् ॥१६॥ कार्तिकेचाथसंप्राप्तेशय्यांश्रीकान्तसंयुताम् ॥
सोपस्करांसोदकुंभांसान्नांदद्याद्द्विजातये ॥ १७ ॥ प्रतिमासंचसोमायअर्घंदद्यात्समंत्रकम् ॥ दध्यक्षतैर्मूलफलैरत्नैःसौवर्णभाजनैः ॥१८॥

१ प्रयत्नात्-इ०पा० । २ अथ सौख्यम्-इ०पा० । ३ अच्युत-इ०पा० ।

गगनांगणसद्दीपदुग्धाब्धिमथनोद्भव ॥ आभासितदिगाभोगरमानुजनमोस्तुते ॥ १९ ॥ एवंकरोतियःसम्यङ्नरोमासचतुष्टयम् ॥
तस्यजन्मत्रयंयावद्गृहभंगोनजायते ॥ २० ॥ अशून्यशयनश्चैवधर्मकामार्थसाधकः ॥ भवत्यश्वाहतैश्वर्यःपुरुषोनात्रसंशयः ॥ २१ ॥
नारीचपार्थधर्मज्ञाव्रतमेतद्यथाविधि॥याकरोतिनसाशोच्याबंधुवर्गस्यजायते॥२२॥वैधव्यंदुर्भगत्वंचभर्तृत्यागंचसत्तम ॥ प्राप्नोतिजन्मत्रित
यंनसापांडुकुलोद्वह॥२३॥एषाह्यशून्यशयनानृपतेद्वितीयाख्यातासमस्तकलुषापहराऽद्वितीया॥ एतांसमाचरतियःपुरुषोऽथयोषित्प्राप्नो
त्यसौशयनमग्र्यमहार्हभोग्यम् ॥ २४ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेअशून्यशयनव्रतमाहात्म्यंनामपंचद
शोऽध्यायः॥१५॥श्रीकृष्णउवाच॥फाल्गुनेऽप्यसितेपक्षेतृतीयायामुपोषिता॥ प्रातःस्थित्वाब्रह्मचर्येजटामुकुटशोभिता ॥१॥ गोधारथगतां
देवींरुद्रध्यानपरायणाम्॥पूजयेद्गंधकुसुमैर्दीपालक्तकचन्दनैः॥२॥केसरैर्मधुरैर्द्रव्यैःस्वर्णमाणिक्यपूजया॥ ॐ भूषिकादेवभूषाचभूषिकाललि
ताउमा ॥ ३ ॥ तपोवनरतागौरीसौभाग्यंमेप्रयच्छतु ॥ दौर्भाग्यंमेशमयतुसुप्रसन्नमनाःसदा ॥ ४ ॥ अवैधव्यंकुलेजन्मददात्वपरजन्म
नि ॥ अङ्गअङ्गेममोपाङ्गेपर्वेपर्वेस्थितामृतम् ॥ ५ ॥ सुखदृष्टिस्पर्शरसंगौरीसौभाग्यंयच्छतु॥एवमुच्चार्यमंत्रांश्चनारीज्ञानवतीसती ॥ ६ ॥
पूजयेद्ब्राह्मणोक्तैस्तुमंत्रैःसुखसुवासिनी ॥ जीरकैःकटुहुंडैश्चलवणैर्गुडसर्पिषा ॥ ७ ॥ हृद्यैरार्द्रैःफलैःस्वर्णैर्मनोज्ञैःपुष्पबन्धनैः ॥ कुसुमैः
कुंकुमैर्गंधैःकालेयागुरुचन्दनैः ॥ ८ ॥ सिंदूरेणातिरक्तेनवस्त्रैर्नानाविधैःशुभैः ॥ नेत्रैरनेकदेशोत्थैःपूपकैस्तिलतंडुलैः ॥ ९ ॥ आशो
कैश्चत्रिगुणकैर्घृतपूर्णैस्तुमोदकैः ॥ इत्येवमादिनैवेद्यैःपूजयित्वामहाद्रुमम् ॥ १० ॥ प्रदक्षिणंततःकृत्वादत्वाविप्रायदक्षिणाम् ॥ एतत्क
रोतितेपुत्रीदुहित्राव्रतमुत्तमम् ॥ ११ ॥ ततःप्राप्स्यसिदुष्प्राप्यंत्रैलोक्येश्रीधरंप्रति ॥ एतद्व्रतंमयाख्यातंयास्यंतिशाश्वतीःसमाः॥१२॥
व्याख्यातंकश्यपेनादौरुक्मिणीव्रतमुत्तमम् ॥ याश्चरिष्यंतिताःसर्वाभविष्यंतिनिरामयाः ॥ १३ ॥ अङ्गप्रत्यङ्गसुभगालोकदृष्टिमनो
हराः ॥ स्थित्वावर्षशतंचान्तेततोरुद्रपुरंशुभम् ॥ १४ ॥ यास्यंतिहंसयानस्थंकिङ्किणीशब्दनादितम् ॥ तत्रत्वारमयिष्यंतिस्वभर्तॄ
न्वत्सरान्बहून् ॥ १५ ॥ दिव्यभोगभुजोहृष्टाःसिद्धचष्टकसमन्विताः ॥ १६ ॥ अर्घमहार्घमणिकुंकुमकेसराढ्यंस्रग्गंधमुग्धमुखरालि

कुलोपगीतम् ॥ दत्वाफलाक्षतयुतंमधुपादपस्यगौरीवलोकमहिताभवतीहनारी ॥ १७ ॥ इतिश्रीभविष्येमहापुराणेउत्तरेपर्वणिश्रीकृ
ष्णयुधिष्ठिरसंवादेमधूकतृतीयाव्रतवर्णनंनामषोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ युधिष्ठिरउवाच ॥ मेघपालीव्रतंकृष्णकदाचित्क्रियतेनृ
भिः ॥ किंपुण्यंकिमनुष्ठानंकीदृग्वल्लीस्मृतातुसा ॥ १ ॥ श्रीकृष्णउवाच ॥ अश्वयुक्कृष्णपक्षेतुतृतीयायांयुधिष्ठिर ॥ मेघपाल्यैप्रदात
व्योभक्त्यास्त्रीभिर्नृभिस्तथा ॥ २ ॥ अर्घोविरूढैर्गोधूमैःसप्तधान्यसमन्वितैः ॥ तिलतंडुलपिंडैर्वादातव्योधर्मलिप्सुभिः ॥ ३ ॥ तांबूलस
दृशैःपर्वैरक्तावल्लीसमंजरी ॥ वाटीषुग्राममार्गेषुप्रोत्थितापर्वतेऽपिच ॥ ४१ ॥ मेघपाल्यांधान्यतैलगुडकुंकुमहैमनान् ॥ पदान्यापिचकु
र्वंतिजनावाणिज्यजीविनाः ॥ ५ ॥ पापंसत्यानृतंकृत्वाद्रव्यलुब्धाःफलान्विताः ॥ अर्घंदत्वामेघपाल्यैनाशयंतिक्षणादिह ॥ ६ ॥
मानोन्मानेजन्ममध्येयत्पापंकुत्रचित्कृतम् ॥ तत्सर्वंनाशमायातिव्रतेनानेनपांडव ॥ ७ ॥ मेघपालीशुभेस्थानेशुभेदेशेसमुत्थिता ॥
पूजनीयावरस्त्रीभिःफलैःपुष्पैस्तथाक्षतैः ॥ ८ ॥ खर्जूरैर्नालिकेरैश्चदाडिमैःकरवीरकैः ॥ गंधधूपैर्दधिदीपैर्विरूढैर्धान्यसंचयैः ॥ ९ ॥
रक्तवस्त्रैःसमाच्छाद्यापिष्टातकविभूषिताम् ॥ कृत्वार्घःसंप्रदातव्योमंत्रेणानेनभारत ॥ १० ॥ वेदोक्तेनद्विजोविद्वांस्तत्रतस्यैनिवेदयेत् ॥
इत्येवंपूजयित्वातांमेघपालींपुमांस्ततः ॥ ११ ॥ नारीवापुरुषव्याघ्रप्राप्नोतिपरमांश्रियम् ॥ स्थित्वावर्षशतंमर्त्येसुखसौभाग्यगर्विते ॥ १२ ॥
विष्णुलोकमवाप्नोतिदेहांतेयानसंस्थितः ॥ कुलानिसप्तनयतिस्वर्गेस्वानिरसातलात् ॥ १३ ॥ उद्धृत्यनात्रसंदेहस्त्वयाकार्योयुधिष्ठिर ॥ १४ ॥
नरकभीरुतयाददातियोऽर्घफलाद्यनुयुतंननुमेघपाल्यै ॥ उन्मानकूटकपटानिकृतानियानिपापानिहंतिसवितेवतमःप्ररोहान् ॥ १५ ॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेमेघपालीतृतीयाव्रतवर्णनंनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ युधि
ष्ठिरउवाच॥ स्त्रीणांसंपद्यतेयेनमर्त्यलोकेगृहेशुभम् ॥ पतिप्रेमतथात्यंतंतन्मेब्रूहिव्रतंशुभम् ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ एकदापार्वतीशंभू
स्थितौमुनिसुरावृतौ ॥ कैलासशिखरेरम्येनानाधातुविचित्रिते ॥ २ ॥ नानाद्रुमलताकीर्णेनानापुष्पोपशोभिते ॥ मुनिकिन्नरसंघुष्टेगेयनृ
त्यसमाकुले ॥ ३ ॥ शंकरःपार्वतींप्राहकिंत्वयासद्व्रतंकृतम् ॥ वामारूपेणमेत्यंतंप्रियासिवरवर्णिनि ॥ ४ ॥ आगच्छजानुदेशंतुसुप्रसन्ना

जनाःप्रिये ॥ ब्रूहिचावितथंसर्वंत्वयापार्वतियत्कृतम् ॥ ५ ॥ इत्युक्ताप्रणताभूत्वागौरीप्राहशिवंशुभा ॥ तृतीयायांमयाचीर्णंपुरारंभाव्रतं
शुभम् ॥ ६ ॥ तेनमेत्वंमनोहारीभर्तालब्धोसिसशंकर ॥ ईश्वरीवाप्यहंस्त्रीणांतवदेहार्द्धहारिणी ॥ ७ ॥ ॥ ईश्वरउवाच ॥ ॥
कीदृशंतद्व्रतंभद्रेसर्वसौख्यप्रदायकम् ॥ ब्रूहिपार्वतियत्तेनयच्चीर्णंपितुरंतिके ॥ ८ ॥ ॥ गौर्युवाच ॥ पुराहंदेवतिष्ठामिकुमारीभवनेपितुः॥
हिमवद्गह्वरेरम्येसखीगणसमावृता ॥ ९ ॥ ततोऽहंमेनयाप्रोक्तास्वापित्राचहिमाद्रिणा ॥ पुत्रिरंभाव्रतंचार्यवरसौभाग्यवर्धनम् ॥ १० ॥
येनप्रारब्धमात्रेणसर्वंसंपत्स्यतेतव ॥ सौभाग्यंस्त्रीगणैश्वर्यंमहादेवीपदंतथा ॥ ११ ॥ एवंकरोमिवैमातर्ममचोक्तंपुरस्त्वया ॥
मनोभिलषितंयेनयेनप्राप्नोतिशंकरम् ॥ १२ ॥ ॥ मेनोवाच ॥ अथशुक्लतृतीयायांस्नात्वानियमतत्परा ॥ कुरुपार्श्वेषुपञ्चाग्नीञ्ज्वाल
मानान्हुताशनान् ॥ १३ ॥ गार्हपत्यंदक्षिणाग्निमन्यंचाहवनीयकम् ॥ पंचमंभास्करंतेजइत्येतेपंचवह्नयः ॥ १४ ॥ एतेषांमध्यतोभूत्वा
तिष्ठपूर्वमुखाचिरम् ॥ चतुर्भुजांध्यानपरांपद्मयोपरिसंस्थिताम् ॥ १५ ॥ मृगाजिनच्छिन्नकुचांजटावल्कलधारिणीम् ॥ सर्वाभरणसंयु
क्तांदेवीमभिमुखींकुरु ॥ १६ ॥ महालक्ष्मीर्महाकालीमहामायामहामतिः ॥ गङ्गाचयमुनासिंधुःशतद्रुर्नर्मदामही ॥ १७ ॥
सरस्वतीवैतरिणीसैवप्रोक्तामहासती ॥ तस्याश्चप्रेक्षणपराभवतद्भावभासिता ॥ १८ ॥ होमंकुर्युर्यतात्मानोब्राह्मणाःसर्वतोदिशम् ॥
देव्याःपूजाप्रकर्तव्यापुष्पधूपादिनाततः ॥ १९ ॥ बहुप्रकारनैवेद्यैर्नैवेद्यंघृतपाचितम् ॥ स्थापयेत्पुरतोदेव्याःपृथक्सौभाग्यमेवच ॥२०॥
जीरकंकटुहुंडश्चाप्यपूपान्कुसुमंतथा ॥ निपाचांपावनतरांलवणंशर्करांगुडम् ॥२१॥पुष्पमंडपिकाकार्यागंधपुष्पाधिवासिता ॥ पद्मासनेन
संतिष्ठेद्यावत्परिणतोरविः ॥२२॥ ततःप्रणम्यरुद्राणींमंत्रमेतमुदीरयेत् ॥ वेदेषुसर्वशास्त्रेषुदिविभूमौधरातले ॥२३॥ दृष्टःश्रुतश्चबहुशोशंका
विरहितःस्तवः ॥ त्वंशक्तिस्त्वंस्वधास्वाहात्वंसावित्रीसरस्वती॥२४॥पतिंदेहिगृहंदेहिवसुदेहिनमोस्तुते॥एवंक्षमापयेद्देवींप्रणिपत्यपुनःपुनः
॥२५॥देहिभक्त्यागृहंरम्यंविचित्रंबहुभूमिकम् ॥ आच्छाद्यद्वारकेदारकपोतादिविभूषितम् ॥ २६ ॥ कुडचस्तंभगवाक्षाढ्यंमणिमंडिततोर
णम् ॥ पद्मरागमहानीलवज्रवैडूर्यभूषितम् ॥ २७ ॥ गृहदानविधानेनब्राह्मणाययशस्विने ॥ सपत्नीकायसंपूज्यसर्वोपस्करसंयुतम्॥ २८ ॥

सुवासिनीभ्यस्तद्देयंनैवेद्यंसूर्यसंस्थितम् ॥ निर्वर्त्यविधिनानेनततःपश्चात्क्षमापयेत् ॥ २९ ॥ दांपत्यानिचभोज्यानिचतुर्थ्यांमधुरैरसैः ॥
इत्युक्तसुमयाचीर्णंहररंभाव्रतंपरम् ॥ ३० ॥ व्रतांतेगस्त्यमुनयेदत्तंगृहवरंशुभम् ॥ लोपामुद्राप्रियापत्नीतस्यवेश्मनिपूजिता ॥ ३१ ॥
तेनधर्मेणदेवत्वंभर्तालब्धोऽसिशंकरः ॥ अर्द्धांकेऽपिस्थितातेनयाश्चरिष्यंतियोषितः ॥ ३२ ॥ कौंतेयपुरुषोवापिख्यातंरंभाव्रतंभुवि ॥
तासांपुत्रागृहंभोगाःकुलवृद्धिर्भविष्यति ॥ ३३ ॥ स्त्रीणांचातुर्यसौभाग्यंगार्हस्थंसर्वकामिकम् ॥ बालावृद्धस्थमध्यानांरूपलावण्यबृंहणम्
॥ ३४ ॥ सपत्नीदर्पदलनंवशीकरणमुत्तमम् ॥ हिमवद्विंध्ययोर्मध्येआर्यावर्तेमनोहरे ॥ ३५ ॥ उत्पत्यशोभतेवासेपूर्वोत्पन्नधनेकुले ॥
मृतःशक्रपुरंयातिततोविष्णुपुरंव्रजेत् ॥ ३६ ॥ ततःशिवपुरंयातिव्यासस्यवचनंयथा ॥ ३७ ॥ यद्रंभयाबलभयापहरंततश्चगौर्याहिमा
द्रिभवनस्थितयापिचीर्णम् ॥ तस्याव्रतंसुविकरोतिरताचधर्मेब्रह्मेशकेशवपतिंसुखदंलभेत्सा ॥ ३८ ॥ ॥ इति श्रीभविष्येमहापुराणे
उत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेपञ्चाग्निसाधनाख्यंरंभातृतीयाव्रतंनामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ पार्थभाद्रप
देमासिशुक्लपक्षेदिनोदये ॥ तृतीयायांचतुर्थ्यांचशुद्धायांप्रतिवत्सरम् ॥ १ ॥ उपवासेनगृह्णीयाद्व्रतंनाम्नातुगोपदम् ॥ स्नात्वानरोवानारी
वापुष्पधूपविलेपनैः ॥ २ ॥ दध्यक्षतैश्चमालाभिःपिष्टकैर्वनमालया ॥ अभ्यंजयेद्गवांशृंगंखुरंपुच्छान्तमेवच ॥ ३ ॥ दद्याद्गवाह्निकंभक्त्या
तासांपूर्वापराह्णयोः ॥ अनाग्निपाकंभुञ्जीयात्तैलक्षारविवर्जितम् ॥ ४ ॥ व्रजंतीनांगवांनित्यमायांतीनांचभारत ॥ पुरद्वारेथवागोष्ठेमन्त्रेणा
नेनमन्त्रवित् ॥ ५ ॥ अर्घं[1]प्रदद्याद्धृष्टात्मावागवांपादेषुपाण्डव ॥ ६ ॥ मातारुद्राणांदुहितावसूनांस्वसादित्यानाममृतस्यनाभिः ॥ प्रनुवोचं
चिकितुषेजनायमागामनागामदितिंवधिष्ट॥७॥गवांमन्त्रः ॥ गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसंतुगवांमध्येवसाम्यहम् ॥
॥ ८ ॥ इत्थंसंपूज्यदत्वार्घंततोगच्छेद्गृहाश्रमम् ॥ पञ्चम्यांक्रोधरहितोभुञ्जीयाद्गोरसंदधि ॥ ९ ॥ शालिपिष्टंफलंशाकंतिलमन्नंच
शोभनम् ॥ भुक्तावसानेराजेन्द्रसंयतस्तांनिशांस्वपेत् ॥ १० ॥ प्रभातेगोपदंदत्वाब्राह्मणायाहिरण्मयम् ॥ क्षमापयेद्गवांनाथं

[1] अर्थम्-इ॰पा॰ ।

गोविन्दंगरुडध्वजम् ॥ ११ ॥ अर्च्यंतेऽत्रयथागावस्तथागोवर्धनोगिरिः ॥ प्रगम्याच्युतमुद्दिश्यशृणुयत्फलमाप्नुयात् ॥ १२ ॥
गोभक्तोगोव्रतंकृत्वाभक्त्याशक्त्याचगोष्पदम् ॥ सौभाग्यंरूपलावण्यंप्राप्नोतिपृथिवीतले ॥ १३ ॥ गोतर्णकाकुलंगेहंगोकुलंचस
मासतः ॥ धनधान्यसमोपेतशालीक्षुरसमृद्धिमान् ॥ १४ ॥ संतानपूजितंलब्ध्वाततःस्वर्गेऽमरोभवेत् ॥ दिव्यरूपधरःस्रग्वीदि
व्यालंकारभूषितः ॥ १५ ॥ गंधर्वैर्गीतवाद्येनसेव्यमानोऽप्सरोगणैः ॥ दिव्यंयुगशतांछित्त्वाततोविष्णुपुरंव्रजेत् ॥ १६ ॥ योगोपदव्रतमिदंकु
रुतेत्रिरात्रंगाश्चप्रपूजयतिगोरसपूजनाच्च ॥ गोविंदमादिपुरुषंप्रणतःसवित्रामालोकमुत्तममुपैतिगवांपवित्रम् ॥ १७ ॥ इति श्रीभविष्येमहा
पुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेतृतीयाव्रतेगोष्पदतृतीयाव्रतंनामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥
शुक्लेभाद्रपदस्यैवतृतीयायांसमर्चयेत् ॥ सर्वधान्यैस्तांविरूढांभूतांहरितशाड्वलाम् ॥ १ ॥ हरिकालींदेवदेवींगौरींशंकरवल्लभाम् ॥
गंधैःपुष्पैःफलैर्धूपैर्नैवेद्यैर्मोदकादिभिः ॥ २ ॥ प्रीणयित्वासमाच्छाद्यपद्मरागेणभास्वता ॥ घंटावाद्यादिभिर्गीतैःशुभैर्दिव्यकथानुगैः ॥ ३ ॥
कृत्वाजागरणंरात्रौप्रभातेह्युद्गतेरवौ ॥ सुवासिनीभिःसानेयामध्येपुण्यजलाशये ॥ ४ ॥ तस्मिन्विसर्जयेत्पार्थहरकालींहरिप्रियाम् ॥
युधिष्ठिरउवाच ॥ भगवन्हरिकालीतिकादेवीप्रोच्यतेभुवि ॥ ५ ॥ आर्द्रधान्यैःस्थिताकस्मात्पूज्यतेस्त्रीजनेनसा ॥ पूजिताकिंददातीहसर्वं
मेब्रूहिकेशव ॥ ६ ॥ श्रीकृष्णउवाच ॥ सर्वपापहरांदिव्यांमत्तःशृणुकथामिमाम् ॥ आसीद्दक्षस्यदुहिताकालीनाम्नीतुकन्यका ॥ ७ ॥
वर्णेनापिचसाकृष्णानवनीलोत्पलप्रभा ॥ साचदत्वात्र्यंबकायमहादेवायशूलिने ॥ ८ ॥ विवाहिताविधानेनशंखतूर्यानुनादिना ॥ यत्कु
र्यादागतैर्देवैर्ब्राह्मणानांचानिःस्वनैः ॥ ९ ॥ निर्वर्तितेविवाहेतुकन्यासार्धंत्रिलोचनः ॥ क्रीडतेविविधैर्भोगैर्मनसःप्रीतिवर्धनः ॥ १० ॥ अथदे
वसमानस्तुकदाचित्सवृषध्वजः ॥ आस्थानमंडपेरम्येआस्तेविष्णुसहायवान् ॥ ११ ॥ तत्रस्थश्चाह्वयामासनर्मणात्रिपुरांतकः ॥ कालीं
नीलोत्पलश्यामांगणमातृगणावृताम् ॥ १२ ॥ एह्येहित्वमितःकालिकृष्णांजनसमन्विते ॥ कालसुंदरिमत्पार्श्वेधवलेत्वमुपाविश ॥ १३ ॥
एवमुत्क्षिप्तमनसादेवीसंक्रुद्धमानसा ॥ श्वासयामासताम्राक्षीबाष्पगद्गदयागिरा ॥ १४ ॥ रुरोदसत्वरंबालातत्रस्थास्फुरिताधरा ॥ किंदेव

योगात्ताम्रागौर्गौरीचेत्यभिधीयते ॥ १५ ॥ यस्मान्ममोपमादत्ताकृष्णवर्णेनशंकर ॥ हरिकालीतिवाहूतादेवर्षिगणसेविता ॥ १६ ॥
तस्माद्देहमिमंकृष्णंजुहोमिज्वलितेनले ॥ इत्युक्त्वावार्यमाणातुहरिकालीरुषान्विता ॥ १७ ॥ मुमोचहरितच्छायाकांतिहरितशाद्वले॥
चिक्षेपदोषरागेणज्वलितेहव्यवाहने ॥ १८ ॥ पुनःपर्वतराजस्यगृहेगौरीबभूवसा ॥ महादेवस्यदेहार्द्धेस्थितासंपूज्यतेसुरैः ॥ १९ ॥
एवंसाहरिकालीतिगौरीशस्यव्यवस्थिता ॥ पूजनीयामहादेवीमंत्रेणानेनपांडव ॥ २० ॥ हरकर्मसमुत्पन्नेहरकायेहरिप्रिये ॥ मांत्राहीशस्य
मूर्तिस्थेप्रणतास्तुनमोनमः ॥ २१ ॥ इत्थंसंपूज्यनैवेद्यंदद्याद्विप्रायपांडव ॥ तांचप्रातर्जलेरम्येमंत्रेणैवविसर्जयेत् ॥ २२ ॥ अर्चितासि
मयाभक्त्यागच्छदेविसुरालयम् ॥ हरकालेशिवेगौरिपुनरागमनायच ॥ २३ ॥ एवंयःपांडवश्रेष्ठहरिकालीव्रतंचरेत् ॥ वर्षेवर्षेविधानेन
नारीनरपतेशुभा ॥ २४ ॥ सायत्फलमवाप्नोतितच्छृणुष्वनराधिप ॥ मर्त्यलोकेचिरंतिष्ठेत्सर्वरोगविवर्जिता ॥ २५ ॥ सर्वभोगसमायुक्तासौ
भाग्यबलगर्विता ॥ पुत्रपौत्रसुहृन्मित्रनप्तृदौहित्रसंकुला ॥ २६ ॥ साग्रंवर्षशतंयावद्भोगान्भुक्त्वामहीतले ॥ ततोवसानेदेहस्याशिवज्ञाना
महामुने ॥ २७ ॥ चिरभद्रामहाकालनंदीश्वरविनायकाः ॥ तदाज्ञाकिंकराःसर्वेमहादेवप्रसादतः ॥ २८ ॥ संपूर्णसूर्यगणसत्तविरूढशस्या
तांवैहिमाद्रिदुहितांहरिकालिकाख्याम् ॥ संपूज्यजागरमनुद्धतगीतवाद्यैर्यच्छंतियाइहभवंतिपतिप्रियास्ताः ॥ २९ ॥ इतिश्रीभविष्येमहापु
राणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेहरिकालीतृतीयाव्रतंनामविंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ अथपृच्छामि
भगवन्व्रतंद्वादशमासिकम् ॥ ललिताराधनानाममासमासक्रमेणवा ॥ १ ॥ कृष्णउवाच ॥ शृणुपांडवयत्नेनयथावृत्तंपुरातनम् ॥ शंकर
स्यमहादेव्याःसंवादंकुरुसत्तम ॥ २ ॥ कैलासशिखरेरम्येबहुपुष्पफलोपगे ॥ सहकारद्रुमच्छन्नेचंपकाशोकभूषिते ॥ ३ ॥ कदंबबकुला
मोदवशीकृतमधुव्रते ॥ मयूररवसंघुष्टेराजहंसोपशोभिते ॥ ४ ॥ मृगर्क्षगजसिंहैश्चशाखामृगगणावृते ॥ गंधर्वयक्षदेवर्षिसिद्धकिन्नरपन्नगैः ॥
॥ ५ ॥ तपस्विभिर्महाभागैःसेव्यमानंसमंततः ॥ सुखासीनंमहादेवंभूतसंघैःसमावृतम् ॥ ६ ॥ अप्सरोभिःपरिवृतमुमानत्वाब्रवीदिदम् ॥
॥ उमोवाच ॥ भगवन्देवदेवेशशूलपाणेवृषध्वज ॥७॥ कथयस्वमहेशानतृतीयाव्रतमुत्तमम्॥सौभाग्यंलभतेयेनधनंपुत्रान्पशून्सुखम् ॥८॥

नारीस्वर्गंशुभंरूपमारोग्यंश्रियमुत्तमम् ॥ एवमुक्तोदयितयाभार्ययाप्रीतिपूर्वकम् ॥ ९ ॥ विहस्यशंकरःप्राहकिंव्रतेनतवप्रि
ये ॥ येकामास्त्रिषुलोकेषुदिव्याभूम्यंतरिक्षजाः ॥ १० ॥ सर्वेपितेनचायत्तावश्यस्तेहंयतःपतिः ॥ उमोवाच ॥ सत्यमेतत्सु
रेशानत्वयिदृष्टेनदुर्लभम् ॥ ११ ॥ किंचित्त्रिभुवनाभोगभूषणेशशिभूषण ॥ भक्त्यास्त्रियोहिमांदेविप्रजयंतिशुभाशुभम् ॥ १२ ॥
विरूपाःसुलभाःकाश्चिदपुत्राबहुपुत्रिकाः ॥ सुशीलास्तपसाकाश्चिच्छ्वश्रूभिःपीडिताभृशम् ॥ १३ ॥ शौचाचारसमायुक्तानरोचतेथक
स्यचित् ॥ एवंबहुविधैर्दुःखैःपीड्यमानास्तुदारुणैः ॥ १४ ॥ शरणंमांप्रपन्नास्ताःकृपाविष्टस्ततोह्यहम् ॥ येनताःसुखसंभोगरूप
लावण्यसंपदा ॥ १५ ॥ पुत्रैःसौभाग्यवित्तौघैर्युक्ताःस्युःसुरसत्तम ॥ तन्मेकथयतत्त्वेनव्रतानामुत्तमंव्रतम् ॥ १६ ॥ ईश्वरउवाच ॥
माघेमासिसितेपक्षेतृतीयायांयतव्रताः ॥ मुखंप्रक्षाल्यहस्तौचपादौचैवसमाहितः ॥ १७ ॥ उपवासस्यनियमंदंतधावनपूर्वकम् ॥
मध्याह्नेतुततःस्नानंबिल्वैरामलकैःशुभैः ॥१८॥ स्नात्वातीर्थजलेशुभ्रेवाससीपरिधायच ॥ सुगंधैःसुमनोभिश्चप्रभूतैःकुंकुमादिभिः ॥१९॥
अर्चयंतिसदादेवित्वांभक्त्याभक्तवत्सले ॥ कर्पूराद्यैस्तथाधूपैर्नैवेद्यैःशर्करादिभिः ॥ २० ॥ यदृच्छालाभसंपन्नैर्धूपदीपार्चनादिभिः ॥
नाम्नेशानींगृहीत्वातुप्रतीक्षेद्घटिकांततः ॥ २१ ॥ पात्रेताम्रमयेशुद्धेजलक्षातविमिश्रिते ॥ सहिरण्यंद्विजंकृत्वामंत्रपूर्वंसमाधिना ॥ २२ ॥
शिरसिप्रक्षिपेत्तोयंध्यायंतिमनसेप्सितम् ॥ ब्रह्मावर्तात्समायाताब्रह्मयोनेर्विनिर्गता ॥ २३ ॥ भद्रेश्वराततोदेवीललिताशंकरप्रिया ॥
गंगाद्वारेहरंप्राप्तागङ्गाजलपवित्रिता ॥ २४ ॥ सौभाग्यारोग्यपुत्रार्थमथार्थेहरवल्लभे ॥ आयाताघटिकांभद्रेप्रतीक्षस्वनमोनमः ॥ २५ ॥
दत्त्वाहिरण्यंतत्तस्मैप्राशयीतकुशोदकम् ॥ आचम्यप्रयतोभूत्वाभूमिस्थाक्षपयेत्क्षपाम् ॥ २६ ॥ ध्यायमानाउमांदेवींहारितेयवसंस्तरे ॥
द्वितीयेह्नितत:स्नात्वातथैवाभ्यर्च्यपार्वतीम् ॥२७॥ यथाशक्त्याद्विजान्पूज्यततोभुञ्जीतवाग्यता ॥ एवंतुप्रथमेमासिपूजनीयासिकालिके॥
॥ २८ ॥ द्वितीयेपार्वतीनामतृतीयेशंकरप्रिया ॥ भवान्यथचतुर्थेत्वंस्कंदमाताथपञ्चमे ॥२९॥ दक्षस्यदुहिताषष्ठेमेनाकीसप्तमेस्मृता ॥



१ च तत्वतः-इ०पा०। २ ततःसायंगृहीत्वातु-इ०पा०। ३ जनवल्लभे-इ०पा०। ४ मुदा-इ०पा०।

कात्यायन्यष्टमेमासिनवमेतुहिमाद्रिजा ॥३०॥ दशमेमासिविख्यातादेविसौभाग्यदायिनी ॥ उमात्वेकादशेमासिगौरीतुद्वादशेपरा ॥३१॥
कुशोदकंपयःसर्पिगोंमूत्रंगोमयंफलम् ॥ निंबपत्रंकंटकारीगवांशृंगोदकंदधि ॥ ३२ ॥ पञ्चगव्यंतथाशाकंप्राशनानिक्रमादमी ॥
मासिमासिस्थिताह्येवमुपवासपरायणा ॥ ३३ ॥ ददातिश्रद्धयैतानिवाचकेब्राह्मणोत्तमे ॥ कुसुंभमाज्यंलवणंजीरकंगुडमेवच ॥ ३४ ॥
दत्तैरेभिःसूर्यस्थात्वंसूर्यस्थातुष्यसिप्रिये ॥ मासिमासिभवेन्मन्त्रोगकाराद्द्वादशाक्षरः ॥ ३५ ॥ ओङ्कारपूर्वकेदेविनमस्कारांतईरितः ॥
एभिस्त्वंपूजितामंत्रैस्तुष्यसिव्रततःप्रिये ॥ ३६ ॥ तुष्टात्वमीप्सितान्कामान्ददासिप्रीतिपूर्वकम् ॥ समाप्तेतुव्रतेतस्मिन्ब्राह्मणंवेदपारगम् ॥
॥ ३७ ॥ सहितंभार्ययाभ्यर्च्यगंधपुष्पादिभिःशुभैः ॥ द्विजंमहेश्वरंकृत्वाउमांभार्यांतथैवच ॥३८॥ अन्नंसदक्षिणंदद्यात्तथाशुक्लेचवाससी ॥
रक्तंवासोयुगंदद्यात्त्वामुद्दिश्यहरिप्रिये ॥ ३९ ॥ ब्राह्मणेश्रद्धयायुक्तस्तस्यांफलमिदंशृणु ॥ दशवर्षसहस्राणिलोकान्प्राप्यपरापरान् ॥४०॥
मोदतेभर्तृसहितायथेंद्रेणशचीतथा ॥ मानुषत्वंपुनःप्राप्यस्वेनभर्त्रासहैवसा ॥ ४१ ॥ पुण्येकुलेश्रियायुक्तानीरोगासुखमश्नुते ॥ सप्तज
न्मानियावन्नवैधव्यमवाप्नुयात् ॥ ४२ ॥ पुत्रान्भोगांस्तथारूपंसौभाग्यारोग्यमेवच ॥ एकपत्नीतथाभर्तुःप्राणेभ्योऽप्यधिकाभवेत् ॥४३॥
शृणुयाद्वाच्यमानंतुभक्त्यायाललिताव्रतम् ॥ मयास्नेहेनकथितंसापितत्फलभागिनी ॥ ४४ ॥ संपूज्यलक्षललितांललितांगयष्टिं
गंधोदकामृतघटींशिरसिक्षिपेद्यः ॥ सास्वर्गमेत्यललितातुलला[1]मभूताभूपाधिपंपतिमवाप्यसुखंभुनक्ति ॥ ४५ ॥ इति श्रीभविष्ये
महापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेललितातृतीयाव्रतमाहात्म्यंनामैकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ युधिष्ठि
रउवाच ॥ इहापियोगमासाद्यभर्तृबंधुजनैःसह ॥ वदनारीनरश्रेष्ठव्रजेद्येनाशिवालयम् ॥ १ ॥ विधवाचपरेलोकेभूयोऽपिन
वियुज्यते ॥ सुखसंदोहसौभाग्ययुक्ताभवतिभामिनी ॥२॥ श्रीकृष्णउवाच ॥ उभयाचरितंयत्नाद्भववाल्लालितामृतम् ॥ लब्ध्वाहिभवतोज
न्मदक्षकोपाद्वियुक्तया ॥ ३ ॥ महासौभाग्यसंदोहंदृष्ट्वादेव्यामहात्मना ॥ अरुंधत्यावसिष्ठेनपृष्टेनकथितंशृणु ॥ ४ ॥ मासिमार्गशिरे
प्राप्तेचंद्रवृद्धौशुचिस्मिता ॥ द्वितीयायांसमासाद्यनक्तंभुंजीतपायसम् ॥ ५ ॥ आचम्यचशुचिर्भूत्वादंडवच्छंकरंनमेत् ॥ मुदान्वितानम

१ मृडानी चाष्टमे मासि–इ०पा० ।

स्कृत्यविज्ञाप्यपरमेश्वरम् ॥ ६ ॥ औदुम्बरमृजुंगृह्यभक्षयेद्दंतधावनम् ॥ उत्तराशागतंसाग्रंसत्वचंनिर्व्रणंशुभम् ॥ ७ ॥ द्वितीयायांपरे
वाह्निगौरींशंभुंचपूजयेत् ॥ शालिपिष्टमयेकृत्वारूपेस्त्रीपुंसयोःशुभे ॥ ८ ॥ पात्रेसंस्थाप्यसंपूज्यजागरंनिशिकल्पयेत् ॥ विधिवत्पूजायि
त्वातुशंकरंकीर्तयन्स्वपेत् ॥ ९ ॥ प्रभातेतेगृहीत्वातुआचार्यायनिवेदयेत् ॥ भोजयेन्मृष्टमन्नाद्यैःशिवभक्त्याद्विजोत्तमान् ॥ १० ॥ दां
पत्यानिचतत्रैवशक्त्यातान्यपिभोजयेत् ॥ प्रतिमासंप्रकुर्वीतविधिनातेनसंयता ॥ ११ ॥ कार्तिकांतेततोमासिमार्गशीर्षेसमुद्यमेत् ॥
नामानिचप्रवक्ष्यामिप्रतिमासंक्रमाच्छृणु ॥ १२ ॥ पूजाजाप्यनिमित्तंचसिद्ध्यर्थंचेतितस्यच ॥ एवंपौषेतुसंप्राप्तेगिरिशंपार्वतींतथा ॥ १३ ॥
समभ्यर्च्यचतुर्थ्यांतुपंचगव्यंपिबेत्सुधीः ॥ एतत्पारणमुद्दिष्टंमार्गादौमार्गगोचरम् ॥ १४ ॥ नचान्यत्पञ्चगव्यादिपावनंपरमंस्मृतम् ॥
भवंचैवभवानींचमासिमाघेप्रपूजयेत् ॥ १५ ॥ फाल्गुनेतुमहादेवमुमयासहितंमतम् ॥ ललितांशंकरंदेवंचैत्रेसंपूजयेत्ततः ॥ १६ ॥
स्थाणुंवैशाखमासेतुलोलनेत्रायुतंयजेत् ॥ ज्येष्ठेवीरेश्वरंदेवमेकवीरासमन्वितम् ॥ १७ ॥ आषाढेपशुनाथंचशक्त्यासार्द्धंत्रिलोचनम् ॥
श्रीकंठंश्रावणेदेवंसुतान्वितमथार्चयेत् ॥ १८ ॥ भीमंभाद्रपदेमासिदुर्गयासहितंयजेत् ॥ ईशानंकार्तिकेमासिशिवादेवीयुतंयजेत् ॥ १९ ॥
जप्यध्यानार्चनार्थंवनामान्येतानिसुव्रत ॥ स्मृतानिविधिनाराजन्व्रतसिद्धिर्भवेद्ध्रुवम् ॥ २० ॥ प्रतिमासंतुपुष्पाणियानिपूजासुयोजयेत् ॥
तानिक्रमात्प्रवक्ष्यामिसर्वाःप्रीतिकराणिवै ॥ २१ ॥ आदौनीलोत्पलंयोज्यंतदभावेऽपराण्यपि ॥ पवित्राणिसुगंधीनियोजयेद्भक्तितोऽर्च
ने ॥ २२ ॥ करवीरंबिल्वपत्रंकिंशुकंकुब्जमल्लिका ॥ पाटलाब्जकदंबंचतगरंद्रोणमालती ॥ २३ ॥ एतान्युक्तक्रमेणैवमासेषुद्वादशे
ष्वपि ॥ भक्त्यायोज्यानिराजेन्द्रशिवयोस्तुष्टिहेतवे ॥ २४ ॥ वत्सरांतेवितानंचधूपोत्क्षेपंसघंटिकम् ॥ ध्वजंदीपंवस्त्रयुगंशङ्करायनि
वेदयेत् ॥ २५ ॥ स्नापयित्वाचलिम्ब्वाचसौवर्णंमूर्ध्निपङ्कजम् ॥ पूपयुग्मंचपुरतःशालिपिष्टमयंन्यसेत् ॥ २६ ॥ नैवेद्यंशक्तितोदत्वानत्वा
चविधिवच्छिवम् ॥ कुर्यान्नीराजनंशम्भोस्ततोगच्छेत्स्वकंगृहम् ॥ २७ ॥ तत्रगत्वात्रिकोणञ्चचतुरस्रंचकारयेत् ॥ त्रिकोणेब्राह्म
णीभोज्याचतुरस्रेद्विजोत्तमाः ॥ २८ ॥ व्रतिनोभोजयेत्पश्चाद्द्वादशैवद्विजोत्तमान् ॥ मिथुनानिचतावंतिशक्त्याभक्त्याचपाण्डव ॥ २९ ॥

उमामहेश्वरंहैमंकारयित्वासुशोभनम् ॥ मौक्तिकानिचतुःषष्टिस्तावंतोऽपिप्रवालकाः ॥ ३० ॥ तावंतिपुष्परागाणिताम्रपात्रोपरि
न्यसेत् ॥ वस्त्रेणवेष्टयित्वाचगन्धैर्धूपैस्तथार्चयेत् ॥ ३१ ॥ एतत्संभारसंयुक्तमाचार्यायनिवेदयेत् ॥ व्रतिनांब्राह्मणानांचद
म्पतीनांचभारत ॥ ३२ ॥ दत्त्वाहिरण्यवासांसिप्रणिपत्यक्षमापयेत् ॥ चत्वारिंशत्तथाष्टौचकुम्भांश्छत्रमुपानहौ ॥ ३३ ॥
सहिरण्याक्षतान्सर्वान्दद्यात्पुष्पोदकान्वितान् ॥ दीनान्धदुःखितानांचतद्दिनेवानिवारितम् ॥ ३४ ॥ कल्पयेदन्नदानंचालोचयञ्छ
क्तिमात्मनः ॥ न्यूनाधिकंचकर्तव्यंस्ववित्तपरिमाणतः ॥ ३५ ॥ संपूरयेत्कल्पनयावित्तशाठ्यंनकारयेत् ॥ अवियोगकरंचैत
द्रूपसौभाग्यवित्तदम् ॥ आयुःपुत्रप्रदंस्वर्ग्यंशिवलोकप्रदायकम् ॥ ३६ ॥ सम्यक्पुराणपतितंव्रतचर्यमेतत्तत्त्वंचराचरगुरोर्हृदयंगमायाः ॥
पूजांविधायविधिवन्नवियोगमेतिसाध्वीस्वभर्तृसुतबन्धुजनैर्धनैश्च ॥ ३७ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिअवियोगतृती
याव्रतंनामद्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ केनधर्मेणनारीणांव्रतेननियमेनच ॥ सौभाग्यंजायतेऽतीवपुत्रा
श्चबहवःशुभाः ॥ १ ॥ धनंधान्यंसुवर्णंचवस्त्राणिविविधानिच ॥ अवियोगंचसततंलभतेपुत्रपौत्रयोः ॥ २ ॥ ॥ श्रीकृष्णउवाच ॥
शृणुपार्थप्रवक्ष्यामिव्रतानामुत्तमंव्रतम् ॥ यत्कृत्वासुभगानारीबह्वपत्याचजायते ॥ ३ ॥ धनंधान्यंहिरण्यंचदासीदासादिकंबहु ॥
उत्पद्यतेगृहेयेनतद्व्रतंकथयामिते ॥ ४ ॥ उमामहेश्वरंनामअप्सरोभिःपुराकृतम् ॥ विद्याधरैःकिन्नरैश्चऋषिकन्याभिरेवच ॥ ५ ॥
रूपिण्यारंभयाचैवसीतयाऽहल्ययातथा ॥ रोहिण्यादमयंत्याचतारयाचानसूयया ॥ ६ ॥ एताभिश्चरितंपार्थव्रतंसर्वव्रतोत्तम
म् ॥ सौभाग्यारोग्यफलदंदारिद्र्यव्याधिनाशनम् ॥ ७ ॥ मर्त्यलोकेस्त्रियोयाश्चदुर्भगारूपवर्जिताः ॥ अपुत्रानिर्धनाश्चैवसर्वभोग
विवर्जिताः ॥ ८ ॥ तासांहितार्थंपार्वत्याउमामहेश्वरंव्रतम् ॥ अवतारितंपुरापार्थनजानंत्यधमाःस्त्रियः ॥ ९ ॥ पूर्वंमार्गशिरेमा
सिनारीधर्मपरायणा ॥ शुक्लपक्षेतृतीयायांसोपवासाजितेन्द्रिया ॥ १० ॥ स्नात्वासंपूज्यललितांहरकार्यार्धवासिनीम् ॥ पुनः
प्रभातसमयेस्नानंचाकृत्रिमेजले ॥ ११ ॥ कृत्वादेवीस्तर्पयित्वाइदंवाक्यमुदीरयेत् ॥ नमोनमस्तेदेवेशउमादेहार्द्धधारक ॥ १२ ॥

महादेविनमस्तेऽस्तुहरकायार्द्धवासिनि ॥ हृदिकृत्वाशिवंदेवींजपेद्यावद्बहंगता ॥ १३ ॥ पूजयेद्देवमीशानंपुष्पैःकालोद्भवैस्ततः ॥
वामपार्श्वेउमांदेवींदक्षिणेतुमहेश्वरम् ॥ १४ ॥ धूपंवागुग्गुलंवापिदहेत्पश्चात्सुभाविता ॥ नैवेद्यंतुयथाशक्त्याघृतपक्वंनिवेदयेत् ॥ १५ ॥
कारयेद्वैश्वदेवंतुतिलाज्येनसुसंस्कृतम् ॥ पञ्चगव्यंततः प्राश्यआत्मकायविशोधनम् ॥ १६ ॥ एवंद्वादशमासांस्तुपूजयित्वामहेश्वरम् ॥
उद्यापनंततःकुर्यात्प्रहृष्टेनान्तरात्मना ॥ १७ ॥ शिवंरूप्यमयंकृत्वाउमांहैममयींतथा ॥ आरूढौवृषभेरौप्येसर्वालंकारभूषितौ ॥ १८ ॥
चन्दनेनाशिवंचर्च्यकुंकुमेनचपार्वतीम् ॥ अर्चयेत्कुसुमैःपश्चात्सुगन्धैःसुमनोहरैः ॥ १९ ॥ वेष्टयेच्छुक्लवस्त्रेणशिवंरक्तेनपार्वतीम् ॥ पश्चा
द्धूपंदहेन्नारीभक्तिभावेनभाविता ॥ २० ॥ भोजयेच्छिवभक्तांश्चब्राह्मणान्वेदपारगान् ॥ भक्तेभ्योदक्षिणादेयाभक्त्याशाठ्यविवर्जितः ॥२१॥
ततःप्रदक्षिणीकृत्यइदमुच्चारयेद्बुधः ॥ उमामहेश्वरौदेवौसर्वलोकपितामहौ ॥ २२ ॥ व्रतेनानेनसुप्रीतौभवेतांममसर्वदा ॥ एवमुक्त्वाजि
तक्रोधेब्राह्मणेवेदपारगे ॥ २३ ॥ व्रतंनिवेदयेद्भक्त्यावाचकेवागुणान्विते ॥ इदंकृत्वाव्रतंनारीमहेशार्पितमानसा ॥ २४ ॥ प्रयातिपरमंस्था
नंयत्रदेवोमहेश्वरः ॥ शिवलोकेवसेत्तावद्यावदिन्द्राश्चतुर्दश ॥ २५ ॥ अप्सरोभिःपरिवृताकिन्नरीभिस्तथैवच ॥ यदामानुष्यमायातिजा
यतेविमलेकुले ॥ २६ ॥ रूपयौवनसंपन्नाबहुपुत्रापतिव्रता ॥ धनधान्यसमायुक्तेसुवर्णमणिमंडिते ॥ २७ ॥ यावज्जीवंगृहेरम्येतिष्ठत्यव्या
हतेन्द्रिया ॥ वियोगंनैवसापश्येद्भर्तृमित्रसुतादिकम् ॥ २८ ॥ मृताशिवपुरंयातिशिवगौरीप्रसादतः ॥ २९ ॥ हैमीमुमांरजतपिण्डमयंमहे
शंरौप्येसुरूपवृषभेचसमास्थितौतौ ॥ सम्पूज्यरक्तसितवस्त्रयुगावगूढौनारीभवत्यविधवासुतसौख्ययुक्ता ॥३०॥ इतिश्रीभविष्येमहापुराणे
उत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेउमामहेश्वरव्रतंनामत्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥छ॥ ॥ श्रीकृष्णउवाच ॥ ॥ रंभातृतीयां
वक्ष्यामिसर्वपापप्रणाशिनीम् ॥ पुत्रसौभाग्यफलदांसर्वामयनिवारिणीम् ॥ १ ॥ सर्वदुष्टहरांपुण्यांसर्वसौख्यप्रदांतथा ॥ सपत्नीदर्पदलनां
तथैश्वर्यकरींशिवाम् ॥ २ ॥ शङ्करेणपुराप्रोक्तापार्वत्याःप्रियकाम्यया ॥ तामिमांशृणुभूपालसर्वभूतहितायवै ॥ ३ ॥ मार्गशीर्षेशुभेमासितृ
तीयायांनराधिप ॥ शुक्लायांप्रातरुत्थायदंतधावनपूर्वकम् ॥४॥ उपवासस्यनियमंगृह्णीयाद्भक्तिभाविता ॥ देविसंवत्सरंयावत्तृतीयायामुपो

पिता ॥ ५ ॥ प्रतिमासंकरिष्यामिपारणंचापरेऽहनि ॥ तदविघ्नेनमेयातुप्रसादात्तवपार्वति ॥ ६॥ एवंसंकल्प्यविधिवत्कौंतेयकृतनिश्चयः ॥
भक्त्यानरोवानारीवास्नानंकुर्यादतंद्रितः ॥ ७ ॥ नद्यांतडागेवाप्यांवागृहेवानियतात्मवान् ॥ पूजयेत्पार्वतींनामरात्रौप्राश्यकुशोदकम्॥८॥
प्रभातेभोजयेद्विप्राञ्छिवभक्तान्विशेषतः ॥ हिरण्यंलवणंचैवतेषांददतुदक्षिणाम् ॥ ९ ॥ गौरीश्वरंयथाशक्त्याभोजयेत्प्रयतासती ॥ अने
नविधिनाराजन्यःकुर्यान्मासिपौषके ॥ १० ॥ गोमूत्रंप्राशयेद्रात्रौप्रभातेभोजयेद्द्विजान् ॥ हिरण्यंजीरकंचैवस्वशक्त्यादापयेत्ततः ॥ ११ ॥
कडुहुण्डंचकनकंतेभ्योदत्त्वाविसर्जयेत् ॥ वाजपेयातिरात्राभ्यांफलंप्राप्नोत्यसंशयः ॥ १२ ॥ शक्रलोकेवसेत्कल्पंततःशिवपुरंव्रजेत् ॥
माघेमासितृतीयायांसुदेवींनामपूजयेत्॥१३॥गोमयंप्राशयेद्रात्रौततश्चैकाकिनीस्वपेत् ॥ प्रातःकुसुंभंकनकंदद्याच्छक्त्याद्विजातिषु॥१४॥
विष्णुलोकेचिरंस्थित्वाप्राप्नोतिशिवसात्म्यताम् ॥ गौरीतिफाल्गुनेनामगोक्षीरंप्राशयेन्निशि ॥ १५ ॥ प्रभातेभोजयेद्विप्राञ्छिवभक्ता
न्सुवासिनीः ॥ कडुहुंडंसकनकंतेभ्योदत्त्वाविसर्जयेत् ॥ १६ ॥ वाजपेयातिरात्राभ्यांफलंप्राप्नोत्यसंशयः ॥ चैत्रेमासिविशालाक्षींपूजये
द्भक्तितत्परा ॥ १७ ॥ दधिप्राश्यस्वपेत्प्रातर्दद्याद्धेमंसकुंकुमम् ॥ सौभाग्यंमहदाप्नोतिविशालाक्ष्याःप्रसादतः ॥ १८ ॥ वैशाखस्य
तृतीयायांश्रीमुखींनामपूजयेत् ॥ घृतंचप्राशयेद्रात्रौततश्चैकाकिनीस्वपेत् ॥ १९ ॥ शिवभक्तान्द्विजान्प्रातर्भोजयित्वायथेप्सितम् ॥
तांबूलंलवणंदत्त्वाप्रणिपत्यविसर्जयेत् ॥ २० ॥ अनेनविधिनादत्त्वापुत्रानाप्नोतिशोभनान् ॥ आषाढेमाधवींनत्वाप्राशयीततिलोदकम् ॥
॥ २१ ॥ प्रभातेभोजयेद्विप्रान्दक्षिणायांगुडःस्मृतः ॥ सकाञ्चनःशुभाँल्लोकान्प्राप्नोतिहिनसंशयः ॥ २२ ॥ श्रावणेतुश्रियंपूज्यपिबेद्रात्रौशृङ्ग
जंजलम् ॥ शिवभक्तांश्चसंपूज्यदद्याद्धेमफलैःसह ॥ २३ ॥ सर्वलोकेश्वरोभूत्वासर्वकामानवाप्नुयात् ॥ भाद्रेचैवतृतीयायांहरितालीति
पूजयेत् ॥ २४ ॥ माहिषंचपिबेद्दुग्धंसौभाग्यमतुलंलभेत् ॥ इहलोकेसुखंभुक्त्वाचांतेशिवपुरंव्रजेत् ॥ २५ ॥ आश्विनेतुतृतीयायांगिरिपु
त्रीतिपूजयेत् ॥ संप्राश्यतण्डुलजलंप्रातर्विप्रांश्चपूजयेत् ॥ २६ ॥ दक्षिणाचापिनिर्दिष्टाकनकंचसचन्दनम् ॥ सर्वयज्ञफलंप्राप्यगौरीलोकेम
हीयते ॥ २७ ॥ पद्मोद्भवाकार्तिकेचपंचगव्यंपिबेत्ततः ॥ रात्रौप्रजागरंकुर्यात्प्रभातेभोजयेद्द्विजान् ॥ २८ ॥ सपत्नीकाञ्छुभाचारान्माल्य

वस्त्रविभूषणैः ॥ पूजयेच्छिवभक्तांश्चकुमारीश्चैवभोजयेत् ॥ २९ ॥ उमामहेश्वरंहैमंसमातेकारयेन्नृप ॥ यथाविभवसारेणवितानंपञ्चवर्णकम् ॥ ३० ॥ अशनंचशुभंदद्याच्छ्वेतच्छत्रंकमंडलुम् ॥ पादुकोपानहौदिव्यैर्वस्त्रयुग्मैश्चपाण्डव ॥ ३१ ॥ पीतयज्ञोपवीतैश्चदीपनेत्रैःसमुज्ज्वलैः ॥ शंखशुक्तिसमोपेतैर्दर्पणैश्चसुशोभितैः ॥ ३२ ॥ उमामहेश्वरंस्थाप्यपूजयित्वायथाविधि ॥ नानाविधैःसुगन्धैश्चपत्रैःपुष्पैःफलैस्तथा ॥ ३३ ॥ घृतपक्वैश्चनैवेद्यैर्दीपमालाभिरेवच ॥ शर्करानालिकेरैश्चदाडिमैर्बीजपूरकैः॥ ३४ ॥ जीरकैर्लवणैश्चैवकुसुंभैःकुंकुमैस्तथा॥ सताम्रभाजनैर्दिव्यैर्मोदकैरससंयुतैः ॥ ३५ ॥ पूजयेद्देवदेवेशंततःपश्चात्क्षमापयेत् ॥ शंखवादित्रनिर्घोषैर्वेदध्वनिसमन्वितैः॥ ३६ ॥एवंकृते फलंयत्स्यात्तन्नशक्यंमयोदितुम् ॥ पूर्वोक्तफलभागीस्यात्सर्वदेवैश्चपूज्यते॥ ३७॥कल्पकोटिशतंयावत्सर्वकामानवाप्नुयात् ॥तदंतेशिवसायुज्यंप्राप्नोतिहिनसंशयः ॥३८॥ पुरैतद्रंभयाचीर्णंतेनरंभाव्रतंस्मृतम् ॥ योऽहंसाचस्मृतागौरीयागौरीसमहेश्वरः॥३९॥इतिमत्वामहाराजशरणंव्रजपार्वतीम्॥४०॥एषाहिमाद्रिदुहितुर्दयितातृतीयारंभाविधानमलभद्भुवितत्कृतेति॥सत्प्राशितैरुदितनामयुतामुपोष्यप्राप्नोतिवाञ्छितफलान्यबलाबहूनि॥४१॥इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेरंभातृतीयाव्रतंनामचतुर्विंशतितमोऽध्यायः॥२४॥

॥ ॥श्रीकृष्णउवाच ॥ ॥ तथैवान्यत्प्रवक्ष्यामिसर्वकामफलप्रदम् ॥ सौभाग्यशयनंनामयत्पुराणविदोविदुः ॥ १ ॥ पुरादग्धेषुलोकेषुभूर्भुवःस्वर्महादिषु ॥ सौभाग्यंसर्वलोकानामेकस्थमभवत्तदा ॥ २ ॥ तच्चवैकुण्ठमासाद्यविष्णोर्वक्षस्थलेस्थितम् ॥ ततःकालेनमहतापुनःसर्गविधौनृप ॥ ३ ॥ अहंकारावृतेलोकेप्रधानपुरुषान्विते ॥ स्पर्द्धायांचप्रवृत्तायांकमलासनकृष्णयोः ॥ ४ ॥ पिङ्गाकारासमुद्भूताज्वालावक्षस्थलीतदा ॥ तयाभितप्तस्यहरेर्वक्षसस्ताद्विनिःसृतम् ॥ ५ ॥ यद्वक्षस्थलमाश्रित्यविष्णोःसौभाग्यमास्थितम् ॥ रसरूपतयातावत्प्राप्नोतिवसुधातलम् ॥ ६ ॥ उत्क्षिप्तमंतरिक्षस्थंब्रह्मपुत्रेणधीमता ॥ दक्षेणपीतमात्रंतुरूपलावण्यकारणम् ॥ ७ ॥ बलंतेजोमहज्जातंदक्षस्यपरमेष्ठिनः ॥ शेषंयदपतद्भूमावष्टधातदजायत ॥ ८ ॥ इक्षवस्तवराजंचनिष्पावाजाजिधान्यकम् ॥ विकारवच्चगोक्षीरंकुसुंभं ॥

१ तुल्यतेज-इ० पा० ।

कुंकुमंतथा ॥ ९ ॥ लवणंचाष्टमंतत्रसौभाग्याष्टकमुच्यते ॥ पतिंयद्ब्रह्मपुत्रेणयोगज्ञानाविदातथा ॥ १० ॥ दुहितास्याभवत्तस्माद्यासती
त्यभिधीयते ॥ लोकानतीत्यलालित्याल्ललितातेनचोच्यते ॥ ११ ॥ त्रैलोक्यसुंदरीमेनामुपयेमेपिनाकधृक् ॥ त्रिविश्वसौभाग्यमयी
भुक्तिमुक्तिफलप्रदा ॥ १२ ॥ आराध्यतामुमांभक्त्यानारीराजन्किन्नविन्दति ॥ १३ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ कथमाराधनंतस्या
जगद्धात्र्याजनार्दन ॥ यद्विधानंचतत्सर्वंजगन्नाथवदस्वमे ॥ १४ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ वसंतमासमासाद्यतृतीयायांयुधिष्ठिर ॥
शुक्लपक्षस्यपूर्वाह्णेतिलैःस्नानंसमाचरेत् ॥ १५ ॥ तस्मिन्नहनिसादेवीकिलाविश्वात्मनासती ॥ पाणिग्रहणकैर्मन्त्रैरुद्वाह्यावरवर्णिनी ॥१६॥
तयासहैवदेवेशंतृतीयायामथार्चयेत् ॥ फलैर्नानाविधैर्धूपदीपनैवेद्यसंयुतैः ॥ १७ ॥ पञ्चगव्येनानुमासंतथागंधोदकेनच ॥ स्नापयित्वा
र्चयेद्गौरीमिन्दुशेखरसंयुताम् ॥ १८ ॥ पाटलांशंभुसाहितांपादयोस्तुप्रपूजयेत् ॥ त्रियुगांशिवसंयुक्तांगुल्फयोरुभयोरपि ॥ १९ ॥
भद्रेश्वरेणसहितांविजयांजानुनोर्युगे ॥ ईशानींहरिकेशंचकट्यांसंपूजयेद्बुधः ॥ २० ॥ कोटनींशूलिनंकुक्षौमंगलांशर्वसंयुताम् ॥
उदरेपूजयेद्राजन्नुमांरुद्रंकुचद्वये ॥ २१ ॥ अनंतांत्रिपुरघ्नंचपूजयेत्करसंपुटे ॥ कंठेभवंभवानींचमुखेगौरींहरंतथा ॥ २२ ॥
सर्वात्मनाचसहितांललितांमस्तकोपरि॥ओंकारपूर्वकैरेतैर्नमस्कारांतयोजितैः ॥२३॥ पूजयेद्भक्तिसहितोगन्धमाल्यानुलेपनैः॥एवमभ्यर्च्य
विधिवत्सौभाग्याष्टकमग्रतः॥२४॥स्थापयेत्स्वन्नानिष्पावान्कुसुंभक्षीरजीरकम् ॥ तवराजेक्षुलवणंकुंकुमंचतथाष्टमम्॥२५॥दत्तंसौभाग्यदं
यस्मात्सौभाग्याष्टकमुच्यते ॥ एवंनिवेद्यतत्सर्वंशिवयोःप्रीयतामिति ॥ २६ ॥ चैत्रेशृंगोदकंप्राश्यस्वपेद्भूमावरिंदम ॥ ततःप्रातःसमुत्था
यकृतप्राणजयःशुचिः ॥२७॥ संपूज्यद्विजदांपत्यंमाल्यवस्त्रविभूषणैः॥सौभाग्याष्टकसंयुक्तंसौवर्णंचरणद्वयम् ॥२८॥ प्रीयतामत्रललिताब्रा
ह्मणायनिवेदयेत् ॥ एवंसंवत्सरंयावत्तृतीयायांसदानृप ॥२९॥ प्राशनेनाममंत्रेचविशेषोऽयंनिबोधमे॥गोशृंगोदकमाद्येस्याद्वैशाखेगोमयंपुनः
॥३०॥ज्येष्ठेमंदारपुष्पंचबिल्वपत्रंशुचौस्मृतम्॥श्रावणेदधिसंप्राश्यंनभस्येचकुशोदकम् ॥३१॥ क्षीरमाश्वयुजेतद्वत्कार्तिकेपृषदाज्यकम् ॥

---

१ घृतगव्येन–इ० पा० । २ प्राश्य–इ० पा० । ३ प्रीयतां ललितादेवी–इ० पा० ।

थवा॥४॥शुक्लपक्षतृतीयायांस्नातःसद्गौरसर्षपैः ॥ गोरोचनसुगोमूत्रमुस्तागोशकृतंतथा ॥५॥ दधिचंदनसंमिश्रंललाटेतिलकंन्यसेत् ॥ सौ
भाग्यारोग्यकृद्यत्स्यात्सदाचललिताप्रियम् ॥ ६ ॥ प्रतिपक्षंतृतीयाचवद्धावापीतवाससी ॥ धारयेदथवारक्तपीतानिकुसुमानिच ॥ ७ ॥
विधवाप्यनुरक्तानिकुमारीशुक्लवाससी ॥ देव्यर्चांपञ्चगव्येनततःक्षीरेणकेवलम् ॥ ८ ॥ स्नापयेन्मधुनातद्वत्पुष्पगंधोदकेनच ॥ पूज
येच्छुक्लपुष्पैश्चफलैर्नानाविधैरपि ॥ ९ ॥ धान्यकाजाजिलवणगुडक्षीरघृतादिभिः ॥ शुक्लाक्षतैस्तिलैरर्च्यांललितांयःसदार्चयेत् ॥ १० ॥
आपादाद्यर्चनंकुर्याद्गौर्याःसम्यक्समासतः ॥ वरदायैनमःपादौतथागुल्फौश्रियैनमः ॥ ११ ॥ अशोकायैनमोजंघेभवान्यैजानुनीतथा ॥
ऊरूमांगल्यकारिण्यैकामदेव्यैतथाकटिम् ॥ १२ ॥ पद्मोद्भवायैजठरमुरःकामप्रियेनमः ॥ करौसौभाग्यवासिन्यैबाहूशशिमुखाश्रये ॥१३॥
मुखंकंदर्पवासिन्यैपार्वत्यैतुस्मितंतथा ॥ गौर्य्यैनमस्तथानासांसुनेत्रायैचलोचने ॥ १४ ॥ तुष्ट्यैचललाटफलकंकात्यायन्यैशिरस्तथा ॥
नमोगौर्यैनमःसृष्ट्यैनमःकांत्यैनमःश्रियै ॥ १५ ॥ रंभायैललितायैचवासुदेव्यैनमोनमः ॥ एवंसंपूज्यविधिवदग्रतःपद्ममालिखेत् ॥ १६ ॥
पत्रैर्द्वादशभिर्युक्तंकुंकुमेनसकर्णिकम् ॥ पूर्वेणविन्यसेद्गौरीमपर्णांचततःपरम् ॥ १७ ॥ भवानींदक्षिणेतद्वद्रुद्राणींचततःपरम् ॥ विन्यसे
त्पश्चिमेसौम्यांततोमदनवासिनीम् ॥१८॥ वायव्यांपाटलावासामुत्तरेणततोह्युमाम्॥लक्ष्मींस्वाहांस्वधांतुष्टिंमंगलांकुमुदांसतीम् ॥१९॥
रुद्राणींमध्यतःस्थाप्यललितांकर्णिकोपरि ॥ कुसुमैरक्षतैःशुभ्रैर्नमस्कारेणविन्यसेत् ॥ २० ॥ गीतमंगलघोषंचकारयित्वासुवासिनीः ॥
पूजयेद्रक्तवासोभीरक्तमाल्यानुलेपनैः ॥ २१ ॥ सिंदूरंस्नानचूर्णंचतासांशिरसिपातयेत् ॥ सिंदूरंकुंकुमंस्नानमिष्टंसत्याःसदायतः ॥२२॥
नभस्येपूजयेद्गौरीमुत्पलैरसितैस्तथा ॥ बंधुजीवैराश्वयुजेकार्तिकेशतपत्रकैः ॥ २३ ॥ कुंदपुष्पैर्मार्गशिरेपौषेवैकुंकुमेनच ॥ माघेतुपू
जयेद्देवींसिंदुवारेणभक्तितः ॥ २४ ॥ जात्यातुफाल्गुनेपूज्यापार्वतीपांडुनंदन ॥ चैत्रेचमल्लिकाशोकैर्वैशाखेगंधपाटलैः ॥ २५ ॥
ज्येष्ठेकमलमंदारैराषाढेचंपकांबुजैः ॥ कदंबैरथमालत्याश्रावणेपूजयेदुमाम् ॥ २६ ॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् ॥ वि

१ व्यक्तम्-इ० पा० ।

ल्वपत्रार्कपुष्पंचगवांशृंगोदकेतथा ॥ २७ ॥ पञ्चगव्यंतथाबिल्वंप्राशयेत्क्रमशःसदा ॥ एतद्भाद्रपदाद्यंतुप्राशनंसमुदाहृतम् ॥ ॥ २८ ॥ प्रतिपक्षंद्वितीयायांमयाप्रोक्तंवरानने ॥ ब्राह्मणंब्राह्मणींचैवशिवंगौरींप्रकल्प्यच ॥ २९ ॥ भोजयित्वार्चयेद्भक्त्यावस्त्रमाल्यानुलेपनैः ॥ पुंसःपीतांबरेदत्वास्त्रियाःकौसुंभवाससी ॥ ३० ॥ निष्पावाजाजिलवणमिक्षुदण्डंगुणान्वितम् ॥ स्त्रियंदद्यात्फलंपुंसःसुवर्णोत्पलसंयुतम् ॥ ३१ ॥ यथानदेवदेवेशस्त्वांपरित्यज्यगच्छति ॥ तथामांसंपरित्यज्यपतिर्नान्यत्रगच्छतु ॥ ३२ ॥ कुमुदाविमलानंताभवानीवसुधाशिवा ॥ ललिताकमलागौरीसतीरंभाथपार्वती ॥ ३३ ॥ नभस्यादिषुमासेषुप्रीयतामित्युदीरयेत् ॥ व्रतांतेशयनंदद्यात्सुवर्णकमलान्वितम् ॥ ३४ ॥ मिथुनानिचतुर्विंशत्तदर्द्धंसकृदर्च्चयेत् ॥ अष्टावष्टावथपुनश्चातुर्मास्येसमर्चयेत् ॥ ३५ ॥ तथोपदेष्टारमपिपूजयेद्यत्नतोगुरुम् ॥ नपूज्यतेगुरुर्यत्रसर्वास्तत्राफलाःक्रियाः ॥ ३६ ॥ उक्तानंततृतीयैषासदानंदफलप्रदा ॥ सर्वपापहरादेवीसौभाग्यारोग्यवर्धिनी ॥ ३७ ॥ नचैनांवित्तशाठ्येनकदाचिदपिलंघयेत् ॥ नरोवायदिवानारीवित्तशाठ्यात्पतत्यधः ॥ ३८ ॥ गर्भिणीसूतिकानक्तंकुमारीचाथरोगयुक् ॥ यदाश्रद्धातदान्येनाक्रियमाणंतुकारयेत् ॥ ३९ ॥ इमामनंतफलदांतृतीयांयःसमाचरेत् ॥ कल्पकोटिशतंसाग्रंशिवलोकेसपूज्यते ॥ ४० ॥ वित्तहीनोऽपिकुर्वीतवर्षत्रयमुपोषणैः ॥ पुष्पपत्रविधानेन[1]सोपितत्फलमाप्नुयात् ॥ ४१ ॥ नारीवाकुरुतेयातुकुमारीविधवातथा ॥ सोऽपितत्फलमाप्नोतिगौर्यनुग्रहभाविता ॥ ४२ ॥ इतिपठतिशृणोतिवायइत्थंगिरितनयाव्रतमिंदुलोकसंस्थः ॥ मतिमपिचददातिसोऽपिदेवैरमरवधूजनकिंनरैश्चपूज्यः ॥ ४३ ॥ ॥ इति अनंततृतीयाव्रतम् ॥ ॥ श्रीकृष्णउवाच ॥ अन्यामपिप्रवक्ष्यामितृतीयांपापनाशिनीम् ॥ रसकल्याणिनीनामपुराकल्पविदोविदुः ॥ ४४ ॥ माघमासेतुसंप्राप्यतृतीयांशुक्लपक्षिकाम्॥ प्रातर्गव्येनपयसातिलैःस्नानंसमाचरेत् ॥ ४५ ॥ स्नापयेन्मधुनादेवींतथैवेक्षुरसेनच ॥ पुनःपूजाप्रकर्तव्याजात्यावाकुंकुमेनवा ॥ ४६ ॥ दक्षिणांगानिसंपूज्यततोवामानिपूजयेत् ॥ ललितायैनमःपादौगुल्फंतद्वदथार्चयेत् ॥ ४७ ॥ जंघेजानूतथासत्यैतथोरश्चश्रियैनमः ॥ मदनालसायैतुकटिंमदनायैतथोदरम् ॥ ४८ ॥ स्तनौमदनवासिन्यैकुमुदायैचकंधरम् ॥ भुजान्भुजाग्रंमाधव्यैकमलायैह्युपस्थितम्॥४९॥



1. पुष्पमंत्रविधानेन-इ०पा०।

भ्रूर्ललाटंचरुद्राण्यैशंकरायैतथालकान् ॥ मुकुटंविश्ववासिन्यैपुनःकांत्यैतथालकान् ॥ ५०॥ नेत्रंचक्रावधारिण्यैपुष्ट्यैचवदनंपुनः ॥ उत्कं
ठिन्यैनमःकंठमनंतायैतुकंधराम् ॥५१॥ रंभायैवामबाहुंचविशोकायैनमःपरम् ॥ हृदयंमन्मथादित्यैपाटलायैनमोनमः ॥५२॥ एवंसंपूज्य
विधिवद्द्विजदांपत्यमर्चयेत् ॥ भोजयित्वान्नदानेनमधुरेणविमत्सरः ॥ ५३ ॥ सलड्डुकंवारिकुंभंशुक्लांबरयुगंततम् ॥ दत्त्वासुवर्णकलशंगं
धमाल्यैरथार्चयेत् ॥ ५४ ॥ प्रीयतामत्रकुमुदागृह्णीयाल्लवणव्रतम् ॥ अनेनविधिनादेवींमासिमासिसमर्चयेत् ॥ ५५ ॥ लवणंवर्जयेन्माघे
फाल्गुनेचगुडंपुनः ॥ तावराजंतथाचैत्रेवर्ज्यंचमधुमाधवे ॥ ५६ ॥ पारकंज्येष्ठमासेतुआषाढेजीरकंतथा ॥ श्रावणेवर्जयेत्क्षीरंदधिभाद्रपदे
तथा ॥ ५७ ॥ घृतमश्वयुजेतद्वद्वर्जयेद्याचमज्जिका ॥ धान्यकंमार्गशीर्षेतुपुष्येवर्ज्यातुशर्करा ॥ ५८ ॥ व्रतांतेकरकापूर्णानेतेषांमासि
मासिच ॥ दद्याद्विकालवेलायांभक्षपात्रेणसंयुतान् ॥ ५९ ॥ तंदुलाच्छ्रेतवर्णाश्चसंयावमधुपूरिकाः ॥ घारिकाघृतपूरांश्चमंडकान्क्षीरशाक
कम् ॥६०॥ दध्यन्नंषाड्वंचैवभिंडयःशाकवर्तिकाः ॥ माघादौक्रमशोदद्यादेतानिकरकोपरि॥६१॥कुमुदामाधवीगौरीरंभाभद्राजयाशिवा॥
उमाशचीसतीतद्वन्मंगलारतिलालसा ॥ ६२ ॥ क्रमान्माघादिसर्वत्रप्रीयतामितिकीर्तयेत् ॥ चर्वंतंपंचगव्यंचप्राशनंसमुदाहृतम् ॥६३॥
उपवासीभवेन्नित्यमशक्तोदक्षिणेकरे ॥ पुनर्माघेतुसंप्राप्यशर्कराकरकोपरि ॥६४॥ कृत्वातुकांचनींगौधांपंचरत्नसमन्विताम् ॥ उमामंगुष्ठ
मात्रांचसुधासूत्रकमंडलुम् ॥ ६५ ॥ तद्वद्गोमिथुनंसर्वंसुवर्णास्यंसितंपरम् ॥ सवस्त्रभाजनंदत्वाभवानीप्रीयतामिति ॥ ६६ ॥ अनेनवि
धिनायश्चरसकल्याणिनीव्रतम् ॥ कुर्यात्ससर्वपापेभ्यस्तत्क्षणादेवमुच्यते ॥ ६७ ॥ भवार्बुदसहस्रंतुनदुःखीजायतेक्वचित् ॥ अग्निष्टोमस
हस्रेणयत्फलंतदवाप्नुयात् ॥ ६८ ॥ नारीवाकुरुतेयातुकुमारीवायुधिष्ठिर ॥ विधवावावराकीवासापितत्फलभागिनी ॥ सौभाग्यारोग्य
संपन्नागौरीलोकेमहीयते ॥ ६९ ॥ इतिपठतियइत्थंयःशृणोतिप्रसंगात्सकलकलुषमुक्तःपार्वतीलोकमेति ॥ मतिमपिचनराणांयोद
दातिप्रियार्थीविपुलमतिजनानांनायकःस्यादमोघम् ॥ ७० ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेरसक
ल्याणिनीव्रतवर्णनंनामषड्विंशतितमोऽध्यायः ॥ २६ ॥ छ ॥ श्रीकृष्णउवाच ॥ ॥ तथाचान्यांप्रवक्ष्यामितृतीयांपापनाशिनीम् ॥ लोके

षुनाम्नाविख्यातामार्द्रानंदकरीमिमाम् ॥ १ ॥ यदाशुक्लतृतीयायामाषाढर्क्षंभवेत्क्वचित् ॥ ब्रह्मर्क्षंचाथमार्गेवाव्रतंग्राह्यंतदाशुभम् ॥ २ ॥
दर्भगंधोदकैःस्नानंतदासम्यक्समाचरेत् ॥ शुक्लमाल्यांबरधरःशुक्लगंधानुलेपनः ॥ ३ ॥ भवानीमर्चयेद्भक्त्याशुक्लपुष्पैःसुगंधिभिः ॥
महादेवेनसहितामुपविष्टांवरासने ॥ ४ ॥ वासुदेव्यैनमःपादौशंकरायनमोहरेः ॥ जंघेशोकविनाशिन्यायानन्दायनमःप्रभो ॥ ५ ॥ रंभायैपू
जयेदूरूशिवायचपिनाकिनः ॥ आदित्यैचकटिंपूज्याशूलिनःशूलपाणये ॥ ६ ॥ माधव्यैचतथानाभिमथशंभोर्भवायवै ॥ स्तना
वानंदकारिण्यैशंकरायेंदुधारिणे ॥ ७ ॥ उत्कंठिन्यैनमःकंठंनीलकंठायवैहरेः ॥ करावुत्पलधारिण्यैरुद्रायजगतीपतेः ॥ ८ ॥
बाहुंचपरिरंभिण्यैनृत्यशीलायवेहरेः ॥ ९ ॥ देव्यामुखंविलासिन्यैवृषेशायपुनर्विभोः ॥ स्मितंसस्मरशीलायैविश्ववक्त्रायवैविभोः ॥ १० ॥
नेत्रंमदनवासिन्यैविश्वधाम्नेत्रिशूलिने॥भ्रुवौरतिप्रियायैचतांडवेशायवैविभोः॥११॥देव्यैललाटमिंद्राण्यैहव्यवाहायवैविभोः॥स्वाहायैमुकुटं
देव्याविभोःपञ्चशरायवै॥१२॥विश्वकायैविश्वमुख्यैविश्वपादकरौशिवौ॥प्रसन्नवदनौवंदेपार्वतिपरमेश्वरौ ॥१३॥ एवंसंपूज्यविधिवदग्रतःशि
वयोःपुनः॥पद्मोत्पलानिचतथानानावर्णानिकारयेत् ॥ १४ ॥ शङ्खचक्रेसकटकेस्वस्तिकंवर्द्धमानकम् ॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोद
कम्॥१५॥शृंगोदकंबिल्वपत्रंवारिकुंभान्वितंतथा ॥ उशीरनीरंतद्वच्चयवचूर्णोदकंततः ॥ १६ ॥ तिलोदकंचसंप्राप्यस्वपेन्मार्गशिरादिषु ॥
प्रतिपक्षेद्वितीयायांप्राशनंसमुदाहृतम् ॥ १७॥ सर्वत्रशुक्लपुष्पाणिप्रशस्तानिशिवार्चने ॥ दानकालेषुसर्वेषुमंत्रमेतमुदीरयेत् ॥१८॥ गौरी
मेप्रीयतांनित्यमघनाशायमंगला ॥ सौभाग्यायास्तुललिताभवानीसर्वसिद्धये ॥ १९ ॥ संवत्सरांतेलवणंगुडकुंभंसमार्ज्जितम् ॥ चन्द
नंनेत्रपट्टंचासितवस्त्रयुगान्वितम् ॥ २० ॥ उमामहेश्वरंहैमंतद्वदिक्षुफलैर्युतम् ॥ प्रस्तरावरणंशय्यांसविश्रामांनिवेदयेत् ॥ २१ ॥
सपत्नीकायविप्रायगौरीमेप्रीयतामिति ॥ आर्द्रानन्दकरीनामतृतीयैषासनातनी ॥ २२ ॥ यामुपोष्यनरोयातिशंभोस्तत्परमंपदम् ॥
इहलोकेयदानंदंप्राप्नोतिधनसंचयात् ॥ २३ ॥ आयुरारोग्यसंपन्नोनकश्चिच्छोकमाप्नुयात् ॥ नारीवाकुरुतेयातुकुमारीविधवातथा॥२४॥

१ रक्तपुष्पैः–इ० पा०। २ विश्वचक्राय–इ० पा०। ३ शर्वाणी–इ०पा०।

सापितत्फलमाप्नोतिदेव्यनुग्रहलालिता ॥ प्रतिपक्षमुपोष्यैवंमंत्रार्चनविधानतः ॥ २५ ॥ रुद्राणीलोकमाप्नोतिपुनरावृत्तिदुर्लभम् ॥ यइदंशृणुयान्नित्यंश्रावयेद्वापिमानवः ॥ शक्रलोकेसगंधर्वैःपूज्यतेऽब्दशतत्रयम् ॥ २६ ॥ आनंददांसकलदुःखहरांतृतीयांयास्त्रीकरोतिविधिवत्सधवाधवाच ॥ सास्वेगृहेसुखशतान्यनुभूयभूयोगौरीपुरंसदयितामुदिताप्रयाति ॥ २७ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेआर्द्रानन्दकरीतृतीयाव्रतंनामसप्तविंशतितमोऽध्यायः ॥ २७ ॥छ॥ युधिष्ठिरउवाच ॥ चैत्रेभाद्रपदेमाघेरूपसौभाग्यपुत्रदम् ॥ तृतीयात्रयमेतन्मेकृष्णकस्मान्नकीर्तितम् ॥ १ ॥ किमहंभक्तिरहितस्त्रयीमार्गातिगोनरः ॥ सुप्रसिद्धंजगत्येतद्गोपितंकेनहेतुना ॥ २ ॥ भवान्सर्वार्थानुकूलःसर्वज्ञइतिमेमतिः ॥ श्रीकृष्णउवाच ॥ व्रतंचैतज्जगत्ख्यातंनाख्यातंतेनतेमया ॥ ३ ॥ यद्यस्तिश्रवणेबुद्धिःश्रूयतांपाण्डुनन्दन ॥ कोऽन्यःश्रोताजगत्यस्मिन्भवतासदृशोभुवि ॥ ४ ॥ जयाचाविजयाचैवउमायाःपरिचारिके ॥ आगत्यमुनिकन्याभिःपृष्टेभीष्टफलेच्छया ॥ ५ ॥ भवत्यौसर्वदादेव्याश्चित्तवृत्तिविदौकिल ॥ केनव्रतोपचारेणकस्मिन्नहनिपार्वती ॥ ६ ॥ पूजितातुष्टिमभ्येतिमंत्रैःकैश्चवरानने ॥ तासांतद्वचनंश्रुत्वाजयाप्रोवाचसादरम् ॥ ७ ॥ श्रूयतामभिधास्यामिसर्वकामफलप्रदम् ॥ व्रतमुत्सवसंयुक्तंनरनारीमनोरमम् ॥ ८ ॥ चैत्रेसिततृतीयायांदन्तधावनपूर्वकम् ॥ उपवासस्यनियमंगृह्णीयाद्भक्तिभावितम् ॥ ९ ॥ सकुंकुमंसतांबूलंसिन्दूरंरक्तवाससी ॥ विधवासोपवासाप्यवैधव्यकरणंपरम् ॥ १० ॥ विधवायातिमार्गेणकुमारीतुयदृच्छया ॥ कुर्यादभ्यर्चनविधिंश्रूयतांमंत्रविक्रमः ॥ ११ ॥ नेत्रपट्टपटीवस्त्रैर्वस्त्रमण्डपिकांशुभाम् ॥ कारयेत्कुसुमामोदादिव्याभरणभूषिताम् ॥ १२ ॥ प्रवाललंबितव्रातामंतर्दिव्यवितानकाम् ॥ विन्यस्तपूर्णकलशांसत्पीठस्थापिताद्विजाम् ॥ १३ ॥ पुरतःकारयत्कुण्डंहस्तमात्रंसमेखलम् ॥ ततःस्नातानुलिप्ताचपरिधायसुवाससी ॥ १४ ॥ देवान्पितॄन्समभ्यर्च्यततोदेवीगृहंव्रजेत् ॥ नामाष्टकेनसंपूज्यागौरीगोपतिवल्लभा ॥ १५ ॥ तत्कालप्रभवैःपुष्पैर्गन्धालिबकुलाकुलैः ॥ कुंकुमेनसमालभ्यकर्पूरागरुचन्दनैः ॥ १६ ॥ एवंसंपूज्यविधिवत्सद्धूपेनाधिवासयेत् ॥

१ अब्दशतद्वयम्–इ० पा० २ बिभृयात्सोपवासापि–इ० पा० । ३ समालक्ष्य–इ० पा० ।

पार्वतीललितागौरीगांधारीशाङ्करीशिवा ॥ १७ ॥ उमासतीसमुद्दिष्टंनामाष्टकमिदंमया ॥ लड्डुकैःखण्डवेष्टैश्चगुणकैःसिंहकेसरैः ॥
॥१८॥ सोमालकैःकोकसरैःखण्डखाद्यकरंबकैः ॥ घृतपक्वैर्बहुविधैःसुपक्वफलकल्पितैः ॥ १९ ॥ दृष्टिप्राणहरैर्हृद्यैर्नैवेद्यैःप्रीणयेदुमा
म् ॥ कंटुखंडंजीरकंचकुंकुमंलवणार्द्रकम् ॥ २० ॥ इक्षुदंडानैक्षवंचहरिद्रार्द्रान्पुरोन्यसेत् ॥ नालिकेरानामलकान्मातुलुंगान्सदा
डिमान् ॥ २१ ॥ कूष्माण्डकर्कटीवृंतनारङ्गपनसादिकान् ॥ कालोद्भवानिचान्यानिफलानिविनिवेदयेत् ॥ २२ ॥ गृहाद्यु
दूखलशिलासूर्यान्प्रणतिभिःसह ॥ नेत्रांजनशलाकाश्चनखरेचनकानिच ॥ २३ ॥ दर्पणंवंशपात्राणिभवान्यैविनिवेदयेत् ॥
शंखतूर्यनिनादेनगीतमङ्गलनिःस्वनैः ॥२४॥ भक्त्यासंपूजयेद्देवींस्वशक्त्याशिववल्लभाम् ॥ ततोऽस्तसमयेभानोःकुमार्यःकरकैर्नवैः॥२५॥
स्नानंकुर्युर्मुदायुक्ताःसौभाग्यारोग्यवृद्धये ॥ यामेयामेगतेस्नानंदेवीपूजनमेवच ॥ २६ ॥ तैरेवनामभिर्होमस्तिलाज्येनप्रशस्यते ॥ पञ्चास
नस्थितासाध्वीतेनैवार्द्रेणवाससा ॥ २७ ॥ गौरीमुखेक्षणपरातांरात्रिमतिवाहयेत् ॥ काश्चिद्गायंतिसंहृष्टाःकाश्चिन्नृत्यंतिहर्षिताः ॥ २८ ॥
कथयंतिकथाःकाश्चिद्देव्यास्तत्रमहोत्सवे ॥ गीततालानुसंबद्धमनुद्धतमनाकुलम् ॥ २९ ॥ नृत्यंतिस्मपुरेदेव्याःकाश्चिदुल्लासितभ्रुवम् ॥
नृत्येनहृष्यतिहरोगौरीगीतेनतुष्यति ॥ ३० ॥ सद्भावेनाथवासर्वेगच्छंतेपरमांमुदम् ॥ सुवासिनीभिस्तांबूलंकुंकुमंकुसुमानिच ॥ ३१ ॥
प्रदेयंजागरवताचान्येषामपिकिंचन ॥ नटैर्विटैर्भटैश्चैवतथाप्रेक्षणकोत्सवैः ॥ ३२ ॥ सखिभिःसहितारात्रिंगायन्नृत्यन्हितांनयेत् ॥ एवंप्रभा
तसमयेस्नात्वासंपूज्यपार्वतीम् ॥ ३३ ॥ ततोवैससमारोहेद्वस्त्रालंकृततोरणम् ॥ तोलयेत्सतथासीनंगुडेनलवणेनच ॥ ३४ ॥ कुंकुमेनाथ
वाशक्त्याकर्पूरागरुचंदनैः ॥ पर्वतानामपिछेदैःकेचिदिच्छंतिसूरयः ॥ ३५ ॥ कुंडमंडपसंभारैर्मंत्रैस्तत्रैवशोभयेत् ॥ लवणेनसहात्मानं
तोलयंतिगुडेनवा ॥३६॥ कयापिभक्तिपरयासौभाग्यमतुलीकृतम्॥एवंदेवींप्रणम्यार्यांक्षमाप्यगृहमाविशेत् ॥ ३७ ॥ आमंत्र्यशास्त्रकुशला
नाचारविधिपारगान् ॥ अन्नंचमधुरप्रायंभोजयित्वासुवासिनीः ॥ ३८ ॥ स्वयंभुंजीतसहसाज्ञातीजनबुधैःस्वकैः ॥ यच्चदेव्याःपुरोदत्तंनैवे
द्यादितदिच्छया ॥ ३९ ॥ गृहंप्रतिनयेत्सर्वंविभज्याभ्रांतिमानसा ॥ ततोदद्याद्गृहस्थेभ्यःकृतकृत्याभवेत्तदा ॥ ४० ॥ विधिर्भाद्रपदेऽप्येष

सुसौन्दर्यप्रदायकः ॥ सप्तधान्यस्वरूपांचशूर्पैसंपूजयेदुमाम् ॥ ४१ ॥ गोमूत्रप्राशनंह्यत्रतेनगोमूत्रसंज्ञिता ॥ माघमासतृतीयायांविशे
षःश्रूयतामिति ॥ ४२ ॥ पूर्वोक्तंसकलंकृत्वाप्रभातेयवसंस्तरम् ॥ तोलयित्वाकुन्दपुष्पैःपूजयेत्तत्सुतामिति ॥ ४३ ॥ एतेनकारणेनो
क्ताचतुर्थीकुन्दसंज्ञया ॥ तृतीयाख्यंमयैतत्तेकथितंसर्वकारणम् ॥ ४४ ॥ जययामुनिकन्यानांयत्पुरासमुदाहृतम् ॥ श्रीकृष्णउवाच ॥
आसीद्विदर्भनगरेवेश्यासर्वाङ्गसुन्दरी ॥ ४५ ॥ तयाब्राह्मणवाक्येनसर्वमेतत्कृतंपुरा ॥ भुक्त्वाभोगान्महीपृष्ठेदत्वादानंयथेप्सया ॥ ४६ ॥
कालेनसमनुप्राप्तामरणंमनुजेश्वर ॥ अचिन्त्याराजदुहितासाबभूवातिशोभना ॥ ४७ ॥ अवंतिसुन्दरीनामदेवानामपिसुन्दरी ॥
यदिवक्त्रसहस्राणांसहस्रंस्यात्कथंचन ॥ ४८ ॥ तथापिनिर्वर्णयितुमशक्यासासुलोचना ॥ चैत्रतृतीयामाहात्म्यात्साबभूवप्रभावती ॥४९॥
मातापित्रोरतिप्रेष्ठाशिष्टान्यजनवल्लभा ॥ लब्धाब्धिसंभवायद्वत्कृष्णेनाक्लिष्टकर्मणा ॥ ५० ॥ ततःसाबुभुजेभोगान्भर्त्रासार्द्धंमुदासती ॥
यददाद्ब्राह्मणेभ्यःसाभूषणंकटकादिकम् ॥५१॥ तत्प्रभावेणसालेभेसौभाग्यंकिंततःपरम् ॥ पुत्रांश्चजनयामासविष्णुशक्रपराक्रमान्॥५२॥
सर्वास्त्रशस्त्रकुशलान्वेदोक्तविधिपारगान् ॥ एवंरूपंमहत्प्राप्यसौभाग्यंपुत्रसंपदम् ॥ ५३ ॥ भर्तुःसहैवमरणमंतेप्राप्यपतिव्रता ॥
शक्रादिलोकपालानांभवनेषुयथाक्रमम् ॥ ५४ ॥ आक्रम्यब्रह्मलोकंचजगामाशिवसात्मताम्॥एवंयान्यापिकुरुतेनारीव्रतमिदंशुभम्॥५५॥
सारूपसौभाग्यसुतान्प्राप्यस्वर्गेमहीयते ॥ नदुर्भगाकुलेतस्याःकाचिद्भवतिकन्यका ॥ ५६ ॥ नदुर्विनीतश्चसुतोनभृत्योऽप्रियकृद्भवेत् ॥
नदारिद्र्यंगृहेतस्मिन्नव्याधिरुपजायते ॥ ५७ ॥ यत्रसारमतेसाध्वीध्मातचामीकरप्रभा॥अन्याश्चयाश्चरिष्यंतिब्राह्मणानुमतेव्रतम् ॥ ५८ ॥
संपूज्यवाचकंभक्त्याभूषणाच्छादनादिभिः॥ ताःसर्वसुखसंपन्नाअविपन्नमनोरथाः ॥ भविष्यंतिगुरुश्रेष्ठतस्यैदेविनमोस्तुते॥५९॥माघेमहा
र्घ्यमणिमंडितपादपीठांचैत्रेविचित्रकुसुमोत्करचर्चितांगीम् ॥ सूर्यप्ररूढनवसस्यमयींनभस्येसंपूज्यशंभुदयितांप्रभवंतिनार्यः ॥ ६० ॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेचैत्रभाद्रपदमाघतृतीयाव्रतवर्णनंनामाष्टाविंशतितमोऽध्यायः॥२८॥छ॥युधि
ष्ठिरउवाच ॥ शुक्लपक्षतृतीयास्तुबहवःसमुदाहृताः॥आनन्तर्यव्रतंब्रूहितृतीयोभयसंयुतम् ॥१॥ हितायसर्वभूतानांललनानांविशेषतः॥नाम

प्राशनंनैवेद्यैर्मासिमासिपृथक्पृथक् ॥२॥ श्रीकृष्णउवाच ॥ ब्रह्मविष्णुमहेशाद्यैर्यथोक्तंसुरसत्तमैः॥अपूर्वंसर्वमंत्राणामानंतर्यव्रतंशृणु ॥ ३ ॥
आदौमार्गशिरेमासिव्रतमेतत्समाचरेत् ॥ नक्तंकुर्याद्द्वितीयायांतृतीयायामुपोषितः ॥ ४ ॥ उमांदेवींसमभ्यर्च्यपुष्पगंधादिभिःक्रमात् ॥
शर्करापुत्रिकांशक्त्याप्रणिपत्यनिवेदयेत् ॥ ५ ॥ प्राशयित्वादधिरात्रौस्वपेद्विगतमत्सरः ॥ प्रभातेविधिवद्भक्त्यामिथुनंभोजयेत्सुधीः ॥६॥
अश्वमेधमवाप्नोतिसमग्रंनात्रसंशयः ॥ तथाकृष्णतृतीयायांसोपवासोजितेन्द्रियः ॥ ७ ॥ जपेत्कात्यायनींनामनालिकेरंनिवेदयेत् ॥
क्षीरंप्राश्यस्वपेद्रात्रौकामक्रोधविवर्जितः ॥ ८ ॥ दांपत्यंसुभगंभोज्यंगोमेधफलमाप्नुयात् ॥ पौषस्यादितृतीयायांसोपवासोजितेन्द्रियः ॥९॥
गौरींनामतुसंपूज्यलड्डुकान्विनिवेदयेत् ॥ घृतंप्राश्यस्वपेद्रात्रौत्यक्त्वाकामंतदव्रतः ॥ १० ॥ प्रभातेमिथुनंभोज्यंनरमेधफलंभवेत् ॥
एवंकृष्णतृतीयायांपार्वतीमितिपूजयेत् ॥११॥ निवेदयान्नंशष्कुल्योगोमयंप्राशयेन्निशि ॥ दांपत्यंविविधंभोज्यमश्वमेधफलंलभेत् ॥१२॥
माघस्यशुक्लपक्षेतुतृतीयायामुपोषितः ॥ सुरनायिकांचसंपूज्यखण्डाबिल्वंनिवेदयेत् ॥ १३ ॥ ततःकुशोदकंप्राश्यस्वपेद्भूमौजितेन्द्रियः॥
प्रभातेमधुरान्नेनमिथुनंभोज्यभक्तितः ॥ १४ ॥ क्षमाप्यांतंनमस्कृत्यइतिस्वर्णफलंलभेत् ॥ पुनरेतत्ततोमाघेकृष्णपक्षेशुचिव्रतः ॥ १५ ॥
आर्यांनाम्नाप्रपूज्याथखाद्यकानिनिवेदयेत् ॥ मधुप्राश्यस्वपेद्रात्रौकामक्रोधविवर्जितः ॥ १६ ॥ मिथुनंभोजयित्वातुवाजपेयफलंलभेत् ॥
एवंवैफाल्गुनेमासिसोपवासांशुचिव्रतः ॥ १७ ॥ भद्रांनामप्रपूज्याथकासारंविनिवेदयेत् ॥ शर्करांप्राशयित्वाथस्वपेद्रात्रौविमत्सरः॥१८॥
प्रभातेमिथुनंभोज्यंसौत्रामणिफलंलभेत् ॥ पुनःकृष्णतृतीयायांफाल्गुनस्यैवभारत ॥ १९ ॥ विशालाक्षींसमभ्यर्च्यपूरिकाविनिवेदयेत् ॥
सोदकांस्तंडुलान्दत्त्वास्वपेद्भूमौमनस्विनी॥२०॥भोजयेन्मिथुनंप्रातरग्निष्टोमफलंलभेत्॥चैत्रस्यादितृतीयायांशुचिर्भूताजितेन्द्रिया॥२१॥
श्रियंदेवींयजेद्भक्त्यावटकानिनिवेदयेत् ॥ बिल्वपत्रंततःप्राश्यस्वपेद्ध्यानपरायणा ॥ २२ ॥ प्रातरुत्थायमद्भक्त्यामिथुनंपूजयेत्सुधीः ॥
प्रणिपत्यक्षमाप्यैवंराजसूयफलंभवेत् ॥ २३॥ पुनःकृष्णतृतीयायांचैत्रेसम्यगुपोषिता ॥ कालींनामसमभ्यर्च्यापिष्टंप्राश्यस्वपेन्निशि॥२४॥
पूपकानिनिवेद्याथकुर्याद्रात्रौप्रजागरम् ॥ मिथुनानिचसंभोज्यअतिरात्रफलंभवेत् ॥ २५ ॥ एवंवैशाखमासेतुसोपवासोजितेंद्रियः ॥

पूजयेच्चंडिकांदेवींमधुकानिनिवेदयेत् ॥२६ ॥ श्रीखंडंचंदनंलिप्त्वास्वपेद्देव्यग्रतोभुवि ॥ भोजयित्वाचदांपत्यंचांद्रायणफलंलभेत् ॥२७॥
तथाकृष्णतृतीयायांसोपवासोविमत्सरः ॥ पूजयेत्कालरात्रिंतुगंधपुष्पैःसदीपकैः ॥ २८ ॥ सुराज्यंपावकंदत्त्वातिलान्भुंजन्स्वपेन्निशि ॥
प्रभातेमिथुनंभोज्यमतिकृच्छ्रफलंलभेत् ॥२९॥ ज्येष्ठेसिततृतीयायांह्युपवासकृतांवरः॥शुभांदेवींसमभ्यर्च्यआम्राणिविनिवेदयेत् ॥ ३०॥
संप्राश्यामलकंरात्रौगौरींध्यात्वासुखंस्वपेत् ॥ ततःप्रातःसमुत्थायदांपत्यंरूपशालिनम् ॥३१॥ भोजयित्वाविधानेनतीर्थयात्राफलंलभेत्॥
पुनःकृष्णतृतीयायांसोपवासासुवासिनी ॥ ३२ ॥ स्कन्दमातेतिसंपूज्यइडायैविनिवेदयेत् ॥ प्राशयेत्पञ्चगव्यञ्चस्वपेद्देव्यग्रतस्ततः॥३३॥
प्रभातेमिथुनंभोज्यंकन्यादानफलंलभेत् ॥ आषाढमासेसंप्राप्तेपूजयेच्चयशोधनम् ॥ ३४ ॥ करंजकंचनैवेद्यंगोशृंगांभःपिबेन्निशि ॥ प्रभाते
मिथुनंभोज्यंकन्यादानफलंलभेत् ॥ ३५ ॥ तथाकृष्णतृतीयायांकूष्माण्डींशक्तितोयजेत् ॥ सक्तून्गुडाज्यसंयुक्तान्पुरतोविनिवेदयेत् ॥
॥ ३६ ॥ कुशोदकंचसंप्राश्यस्वपेद्रात्रौजितेन्द्रिया ॥ प्रभातेमिथुनंभोज्यंगोसहस्रफलंलभेत् ॥ ३७ ॥ श्रावणेसोपवासाचचंडांघंटांप्रपूज
येत् ॥ कुल्माषास्तत्रनैवेद्यंपिबेत्पुष्पोदकंपुनः ॥ ३८ ॥ प्रभातेशक्तितोदद्याद्भोजनंमिथुनस्यतु ॥ प्राप्नोत्यभयदानस्यफलंनैवात्रसंशयः॥
॥ ३९ ॥ तद्वत्कृष्णतृतीयायांरुद्राणींनामभिर्यजेत् ॥ सिद्धांपिडानिदिव्यानिनैवेद्यंदापयेत्तथा ॥ ४० ॥ पिण्याकंप्राशयित्वातुस्वपेद्रात्रौ
विमत्सरा ॥ संपूज्यद्विजदांपत्यमिष्टापूर्तफलंलभेत् ॥ ४१ ॥ भाद्रेशुक्लतृतीयायांपूजयेतहिमाद्रिजाम् ॥ गोधूमान्नंनिवेद्यैवप्राशयेच्च
न्दनंसितम् ॥ ४२ ॥ गंधोदकंततःप्राश्यसखीभिःसहितास्वपेत् ॥ प्रभातेमिथुनंभोज्यंमार्गपालीशतंलभेत् ॥ ४३ ॥ तद्वत्कृष्णतृती
यायांदुर्गांदेवींसमर्चयेत् ॥ दद्यात्पिष्टफलान्दिव्यान्गुडाज्यपरिपूरितान् ॥ ४४ ॥ प्राशयित्वातुगोमूत्रंस्वपेच्छान्तेनचेतसा ॥ प्रातस्तु
मिथुनान्भोज्यसदासत्रफलंलभेत् ॥ ४५ ॥ मासिचाश्वयुजेभक्त्यादेवींनारायणींयजेत् ॥ सोपवासाखण्डपूपान्नैवेद्यंपरिकल्पयेत् ॥४६ ॥
प्राशयेच्चन्दनंरक्तंस्वपेच्चगतमत्सरा ॥ प्रभातेभोज्यदंपत्यमग्निहोत्रफलंलभेत् ॥ ४७ ॥ तथाकृष्णतृतीयायांस्वस्तिनामप्रपूजयेत् ॥

१ संप्रपूजयेत्–इ० पा० २ एवं भाद्रपदस्यादौ पूजयेत्कमलालयाम्–इ०पा० ।

शाल्योदनंगुडोपेतंनैवेद्यंनिर्वपेत्ततः ॥ ४८ ॥ कुसुंभबीजान्संप्राश्यत्यक्त्वाकामंस्वपेन्निशि ॥ संभोज्यमिथुनंप्रातर्गवाह्निकफलंलभेत् ॥
॥ ४९ ॥ कार्तिकस्यतृतीयायांस्वाहानाम्नींप्रपूजयेत् ॥ क्षीरंखण्डघृतोपेतंनैवेद्यंदापयेच्चताम् ॥ ५० ॥ स्वपेद्रात्रौजितक्रोधाप्राश्यकुं
कुमकेशरान् ॥ प्रभातेमिथुनंभोज्यमेकभक्तफलंलभेत् ॥ ५१ ॥ तथाकृष्णतृतीयायांस्वधानाम्नींप्रपूजयेत् ॥ मुद्गौदनंनिवेद्याथघृतं
प्राश्यस्वपेन्निशि ॥ ५२ ॥ प्रातःसंभोज्यमिथुनंनक्तव्रतफलंलभेत् ॥ एवंसंवत्सरंकृत्वामुक्तपापाशुचिर्भवेत् ॥ ५३ ॥ शुक्लपक्षेतृतीयायां
सोपवासानिरामया॥विज्ञायचद्रुतंभक्त्याउमांशास्त्रार्थबोधकः ॥ ५४ ॥ मंडलंचततोलिख्यनवनाभंवरप्रदम् ॥ सौवर्णंकारयेद्देवमुमयास
हितंप्रभुम्॥५५॥ताभ्यांनेत्रेषुदातव्यंमौक्तिकंनीलमेवच॥प्रवालमोष्ठयोर्दद्यात्कर्णयोरत्नकुण्डले॥५६॥उपवीतंतुदेवस्यदेव्याहारंतथोरसि॥
रक्तवस्त्रधरांदेवींसितवस्त्रंमहेश्वरम्॥५७॥चतुःसमेनवालभ्यपुष्पैर्धूपैरथार्चयेत्॥मंडलेपूजयित्वाचहोमंकुर्यात्ततोगुरुः॥५८॥तथोऽपराजितां
नामदेवींतत्रैवपूजयेत्॥मृत्स्नांसंप्राशयित्वाचरात्रौकुर्यात्प्रजागरम्॥५९॥गीतवाद्योत्सवैर्हृद्यैर्वीणामङ्गलपाठकैः॥रात्रिमेवंजपेद्भक्त्यायावदुद्ग
च्छतेरविः॥६०॥तूलीगंडकसंयुक्तेपर्यंकेत्यंतशोभिते ॥ उद्धृत्यमण्डलाद्देवंपर्यंकोपरिविन्यसेत् ॥६१॥वितानध्वजमालालिंकिंकिणीदर्पणा
न्वितम्॥पुष्पमण्डपिकाच्छन्नंधूपगुग्गुलवासितम्॥६२॥तस्याग्रेभोजयेद्भक्त्यास्वशक्त्यामिथुनानिच ॥प्रीणयेद्भक्ष्यभोज्यैश्चपक्वान्नैर्मधुरैःशु
भैः॥६३॥ ततोदत्वाऽक्षतान्हस्तेतांबूलंविनिवेदयेत् ॥ प्रीयतांमेउमाकांतःपार्वत्यासहितःशिवः ॥६४॥ उच्छिष्टंशोधयित्वातुपुनःप्रोक्ष्यस
र्वंततः॥रक्तवर्णांसुशीलांचसुरूपांसुपयस्विनीम्॥६५॥शृंगाभ्यांदत्तकनकांराजतखुरसंयुताम्॥ कांस्यदोहनकोपेतांरक्तवस्त्रावगुण्ठिताम् ॥
॥६६॥घंटाभरणशोभाढ्यांदेवदेव्यग्रसंस्थिताम्॥पादुकोपानहच्छत्रभोज्यभाजनसंयुताम् ॥६७॥ त्रिधाप्रदक्षिणीकृत्यगुरोःसर्वंनिवेदयेत्॥
उमामहेश्वरंदेवमवियोगंसुरार्चितम् ॥ ६८ ॥ अव्यवच्छेदभूतंचसुप्रीतंतादिहास्तुमे ॥ प्रणम्यशिरसाभूमौक्षमस्वेतिगुरुंवदेत् ॥ ६९ ॥
एवंसमाप्यतेदेव्या[2]आनंतर्यव्रतोत्तमम् ॥ यःप्रकुर्यात्पुमान्स्त्रीवातस्यपुण्यफलंशृणु ॥ ७० ॥ गन्धर्वयक्षलोकांश्चविद्याधरमहोरगान् ॥

१ ततः-इ०पा० । सम्यक्-इ० पा० ।

ऋषिसिद्धामरंब्राह्मंविष्णुलोकंसनातनम्॥७१॥भुक्त्वाभोगानशेषांश्चएकविंशत्कुलान्वितः ॥ रत्नयानेसमारूढोगुह्याप्सरससंवृतः ॥७२॥ देवविद्याधरैर्यक्षैर्वृतोयातिशिवालयम् ॥ तत्रभुक्त्वामहाभोगान्सभुंक्तेशिववद्बहून् ॥ ७३ ॥ भुक्त्वाभोगान्यदाभूतःकदाचित्तपसःक्षयात् ॥ पृथिव्यांतुसमागम्यभवेत्सकलभूमिपः ॥ ७४ ॥ स्त्रीवासमाचरेद्यातुमहादेवीतुजायते ॥ आनंतर्यव्यवच्छिन्नान्भोगान्देवीउमायथा ॥७५॥ त्रैलोक्यपतिरुद्रेणसाभुंक्तेसहितातथा ॥ मनुर्देव्यायथामह्याशच्याशक्रोयथासुखम् ॥ ७६ ॥ नैरंतर्ययथासौख्यंसाभुंक्तेपतिनासह ॥ मुनेररुंधतीयद्वद्विष्णोर्लक्ष्मीर्हृदिस्थिता ॥७७॥ तथातयोर्महत्सौख्यंनैरंतर्यंहिजायते ॥ सावित्रीब्रह्मणोयद्वद्गंगातोयनिधेर्यथा ॥ ७८ ॥ अव्यवच्छिन्नयोःप्रीतिस्तथाजन्मनिजन्मनि ॥ अथजन्मन्यहोन्यस्मिन्व्रतमेतत्कृतंभवेत् ॥ ७९ ॥ तेनैवपतिनासार्द्धंनवियोगमुपैतिसा ॥ योजनायुतसाहस्रेसुरूपामण्डलेभवेत् ॥ ८० ॥ अर्घाढ्यासुभगासाध्वीपुत्रपौत्रैरलंकृता ॥ एतत्तेनिखिलंप्रोक्तमानंतर्यव्रतंमया ॥ ८१ ॥ भक्तायसुविनीतायकथितव्यंनचान्यथा ॥ ८२ ॥ एषाविशेषविहिताभिहितातृतीयायानंतरीत्यविधवाभिरुदीरितोच्चैः ॥ एतामुपोष्यविधिवत्प्रतिपक्षयोगान्नैवांतरंसुतसुहृत्स्वजनैरुपैति ॥ ८३ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेअनंतरतृतीयाव्रतवर्णनंनामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ बहुनात्रकिमुक्तेनकिंबह्वक्षरमालया ॥ वैशाखस्यसितामेकांतृतीयांशृणुपाण्डव ॥ १ ॥ स्नानंदानंजपोहोमःस्वाध्यायःपितृतर्पणम् ॥ यदस्यांक्रियतेकिंचित्सर्वस्यात्तादिहाक्षयम् ॥ २ ॥ आदौकृतयुगस्येयंयुगादिस्तेनकथ्यते ॥ सर्वपापप्रशमनीसर्वसौख्यप्रदायिनी ॥ ३ ॥ शाकलेनगरेकश्चिद्धर्मनामाभवद्वणिक् ॥ प्रियंवदःसत्यरतोदेवब्राह्मणपूजकः ॥ ४ ॥ तेनश्रुतंवाच्यमानंतृतीयारोहिणीपुरा ॥ यदास्याद्बुधसंयुक्तातदासाचमहाफला ॥ ५ ॥ तस्यांयद्दीयतेकिंचित्तत्सर्वंचाक्षयंभवेत् ॥ इतिश्रुत्वासगङ्गायांसंतर्प्यपितृदेवताः ॥ ६ ॥ गृहमागत्यकरकान्सान्नानुदकसंयुतान् ॥ अंबुपूर्णान्गृहेकुंभान्क्रमान्निःशेषतस्तदा ॥ ७ ॥ यवगोधूमचणकसक्तुदध्योदनंतथा ॥ इक्षुक्षीरविकारांश्चसहिरण्यांश्चशक्तितः ॥ ८ ॥ शुचिःशुद्धेनमनसाब्राह्मणेभ्योददौवणिक् ॥ भार्ययावार्यमाणोपिकुटुंबासक्तचिंतया ॥ ९ ॥ तावत्सचस्थितःसत्त्वेमत्त्वासर्वंविनश्वरम् ॥ धर्मार्थकाम

शक्रस्तुकालेनबहुनाततः ॥ १० ॥ जगामपञ्चत्वमसौवासुदेवंस्मरन्मुहुः ॥ ततःसक्षत्रियोजातःकुशावत्यांनरेश्वरः ॥ ११ ॥ बभूवचाक्षयात्तस्यसमृद्धिर्धर्मनिर्जिता ॥ इयाजसमहायज्ञैःसमाप्तवरदक्षिणैः ॥ १२ ॥ ददौगोभूहिरण्यादीन्दानान्यस्यामहर्निशम् ॥ बुभुजेकामतोभोगान्दीनार्तांस्तर्पयञ्जनान् ॥ १३ ॥ तथाप्यक्षयमेवास्यक्षयंयातिनतद्धनम् ॥ श्रद्धापूर्वंतृतीयायांयद्दत्तंविभवंविना ॥ १४ ॥ एतद्व्रतंमयाख्यातंश्रूयतामत्रयोविधिः ॥ उदकुंभान्सकरकान्स्नानसर्वरसैर्युतान् ॥ १५ ॥ ग्रैष्मिकंसर्वमेवात्रसस्यदानंप्रशस्यते ॥ छत्रोपानत्प्रदानंचगोभूकांचनवाससाम् ॥ १६ ॥ यद्यदिष्टतमंचान्यत्तद्देयमविशंकया ॥ एतत्तेसर्वमाख्यातंकिमन्यच्छ्रोतुमिच्छसि ॥ १७ ॥ अनाख्येयंनमेकिञ्चिदस्तिस्वस्त्यस्तुतेऽनघ॥१८॥ अस्यांतिथौक्षयमुपैतिहुतंनदत्तंतेनाक्षयाचमुनिभिःकथितातृतीया॥उद्दिश्ययत्सुरपितॄन्क्रियतेमनुष्यैस्तच्चाक्षयंभवतिभारतसर्वमेव ॥ १९ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेऽक्षय्यतृतीयाव्रतवर्णनंनामत्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ रूपसौभाग्यसुखदंनरनारीजनप्रियम् ॥ पापापहंबहुफलंसुकरंसूपवासकम् ॥ १ ॥ ऋद्धिवृद्धिकरंस्वर्ग्यंयशस्यंसर्वकामदम् ॥ तन्मेवदव्रतंकिञ्चिद्यदितुष्टोऽसिमाधव ॥ २ ॥ ॥ श्रीकृष्णउवाच ॥ शृणुपार्थपरंगुह्यंयन्मयाकथितंनच ॥ पुरातववनस्थस्यतदद्यप्रवदाम्यहम् ॥ ३ ॥ शिवयोरतिसंहर्षाद्रक्तबिंदुश्च्युतःक्षितौ ॥ मेदिन्यासप्रयत्नेनविधृतोधृतियुक्तया ॥ ४ ॥ तस्माज्जातःकुमारोऽसौरक्तोरक्तसमुद्भवः ॥ अंगप्रसिद्धमेवेहांगारकोवेगउच्यते ॥ ५ ॥ शिवांगाद्भसाजातस्तेनांगारकउच्यते ॥ अंगस्थोऽगारकांतिश्चअंगप्रत्यङ्गसंभवः ॥ ६ ॥ सौभाग्यारोग्यकृद्यस्मात्तस्मादंगारकःस्मृतः ॥ भक्त्याचतुर्थ्यांनक्तेनयस्तुश्रद्धासमन्वितः ॥७॥ तंपूजयतियत्नेननारीवाऽनन्यमानसा ॥ तस्यतुष्टःप्रयच्छेत्सयत्त्वयाससमुदाहृतम् ॥८॥ रूपंसौभाग्यसंपन्नंनरनारीमनोहरम् ॥ युधिष्ठिरउवाच ॥ एतन्मेवददेवेशअंगारकविधिंशुभम् ॥९॥ सहोममंत्रसंस्थानंसाधिवासविधानतः॥श्रीकृष्णउवाच ॥ पूर्वंतुकृतसंकल्पःस्नानंकृत्वाबहिर्जले ॥१०॥ स्नानार्थंमृत्तिकांमंत्रैर्गृह्णीयादंभसिस्थितः ॥ त्वंमृदेवंदितापूर्वंकृष्णेनोद्धरताकिल ॥ ११ ॥

१ यादव-इ० पा० । २ त्वमेव वदे देवेश-इ० पा० ।

तेनमेदहपापौघंयन्मयापूर्वसंचितम् ॥ इमंमंत्रंपठन्पार्थआदित्यायप्रदर्शयेत् ॥ १२ ॥ आदित्यरश्मिसंततंगंगाजलकणोक्षितम् ॥
तांमृदंशिरसिप्रार्थ्यपूर्वंदत्वांगसंधिषु ॥ १३ ॥ ततःस्नानंप्रकुर्वीतमंत्रेणान्तर्जलेपुनः ॥ त्वमापोयोनिःसर्वेषांदैत्यदानवरक्षसाम् ॥ १४ ॥
स्वेदजोद्भिज्जयोनीनांरसानांपतयेनमः ॥ स्नातोऽहंसर्वतीर्थेषुसर्वप्रस्रवणेषुच ॥ १५ ॥ नदीषुदेवखातेषुस्नानंतेषुचमेभवेत् ॥
ध्यायन्ध्वनिमिमंमंत्रंततःस्नानंसमाचरेत् ॥ १६ ॥ ततःस्नात्वाशुचिर्भूत्वागृहमागत्यनस्पृशेत् ॥ नजल्पेतचसंवीक्षेत्क्वचित्पापिष्ठमेवहि
॥ १७ ॥ दूर्वाश्वत्थशमींस्पृष्ट्वागांचमंत्रेणमंत्रवित् ॥ दूर्वामप्यस्यमंत्रेणयुतेनसमुपस्थितम् ॥ १८॥ त्वंदूर्वेऽमृतजन्मासिसर्वदेवैश्चवंदिता॥
वंदितादहतत्सर्वंयन्मयादुष्कृतंकृतम् ॥ १९ ॥ दूर्वामंत्रः ॥ पवित्राणांपवित्रंत्वंकाश्यपीपठ्यसेश्रुतौ ॥ शमीशमयमेपापंयन्मयादुरनुष्ठित
म् ॥ २० ॥ शमीमंत्रः ॥ अश्वत्थमंगलभतेमंत्रमेतन्निबोधमे ॥ अक्षिस्पंदंभुजस्पंदंदुःस्वप्नंदुर्विचिंतितम् ॥ २१ ॥ शत्रूणांचसमुत्थान
मश्वत्थशमयस्वमे ॥ अश्वत्थमंत्रः ॥ गांदद्यात्तुततोदेवींसवत्सांसप्रदक्षिणाम् ॥ २२ ॥ समालभ्यंतुमंत्रेणमंत्रमेतदुदीरयेत् ॥ सर्वदेवमये
देविदैवतैस्त्वंसुपूजिता॥२३॥तस्मात्स्पृशामिवंदामिवंदितापापहाभव ॥ गोमंत्रः ॥ एवंमंत्रंपठन्पार्थभक्त्याभावेनभावितः ॥२४॥ प्रदक्षि
णांयःकुरुतेगांदृष्ट्वावरवर्णिनीम्॥प्रदक्षिणीकृतातेनपृथिवीनात्रसंशयः॥२५॥एवंमौनेनचागत्यवंद्यान्वंद्यगृहंव्रजेत्॥प्रक्षाल्यचमृदापादौआहि
ताऽग्निगृहंविशेत्॥२६॥होमंतत्रप्रकुर्वीतएभिर्मंत्रैःपदैर्वरैः॥शर्वायशर्वपुत्रायपार्वत्यागोःसुतायच॥२७॥ कुजायलोहितांगायगृहेशांगारकाय
च॥भूयोभूयोयमाहुत्याहुत्वाहुत्वाजुहोतिवै ॥२८॥ ओंकारपूर्वकैर्मंत्रैःस्वाहाकारांतयोजितैः ॥ अष्टोत्तरशतंपार्थअर्द्धमर्धार्धमेवच ॥ २९ ॥
एभिर्मंत्रपदैर्भक्त्याशक्त्यावाकाममेववा ॥ समिद्भिःखादिरीभिश्चघृतदुग्धैस्तिलैर्यवैः ॥ ३० ॥ भक्ष्यैर्नानाविधैरन्यैःशक्त्यावामंत्रविद्वशी॥
हुत्वाहुतीस्ततःपार्थदेवंसंस्थापयेत्क्षितौ ॥ ३१ ॥ स्नपनंकेचिदिच्छंतिसगुडेताम्रभाजने ॥ सौवर्णंरक्तवर्णंचशक्त्यादारुमयंतथा ॥ ३२ ॥
कृष्णागरुमयंचैवश्रीखण्डघटितंपुनः ॥ सौवर्णपात्रेरौप्येवाअर्च्यंकुंकुमकेसरैः ॥ ३३ ॥ अन्यैरालोहितैःपार्थपुष्पैर्वस्त्रैःफलैःशुभैः ॥

१ बादरीभिः–इ०पा० । २ स्थापनम्–इ० पा० ।

राजन्रत्नैश्चविविधैरर्थवान्भक्तितोऽर्चयेत्॥३४॥यावद्भिशक्यतेचित्तंवित्तवान्भक्तिभावितः ॥ तावद्धिवर्धतेपुण्यंदातुःशतसहस्रिकम् ॥३५॥
किञ्चित्ताम्रमयेपात्रेवंशजेमृन्मयेपिवा ॥ पूजयंतिनरारक्तैःपुष्पैःकुंकुमकेशरैः ॥ ३६ ॥ "ॐअंगारकायनमः ॥ शिरसि ॥ ॐकुजायनमः॥
वदने ॥ ॐभौमायनमः ॥ स्कंधयोः ॥ ॐमंगलायनमः ॥ बाह्वोः ॥ ॐरुद्रायनमः ॥ उरसि ॥ ॐलोहितांगायनमः ॥ कट्याम्॥
ॐआरायनमः ॥ जंघयोः ॥ ॐमहीधरायनमः ॥ पादयोः ॥ एपाष्टपुष्पिका ॥ पुरुषाकृतिंकृतःपात्रेकुजंमंत्रैःसमर्चयेत् ॥ " गुग्गु
लंघृतसंयुक्तंकृष्णागरुसमन्वितम् ॥ धूपंसद्रव्यजंवापिदद्यात्तत्रसमाधिना ॥३७॥ होमंकुर्वीतपूर्वोक्तैर्मंत्रैर्मंगलसंज्ञितैः ॥एवंप्रणम्यदेवेशंब्रा
ह्मणायनिवेदयेत् ॥ ३८ ॥ निष्पावकंभोजनंवादद्याच्छक्त्यासदक्षिणम् ॥ वित्तशाठ्यंहिकुर्वाणोनमुख्यफलभाग्भवेत् ॥ ३९ ॥ पश्चा
द्भुञ्जीतमौनेनभूमिंकृत्वातुभाजनम् ॥ मन्त्रेणानेनचालभ्यतन्निबोधमयोदितम् ॥ ४० ॥ सर्वौषधिरसावासेसर्वदासर्वदायिनि ॥ त्वत्तलं
भोक्तुकामोऽहंतद्भुक्तममृतंभवेत् ॥ ४१ ॥ युधिष्ठिरउवाच ॥ अंगारकेनसंयुक्ताचतुर्थीनक्तभोजनैः ॥ उपोष्याकतिमात्रासाकिमेकाव
दयादव ॥ ४२ ॥ ॥ श्रीकृष्णउवाच ॥ चतुर्थीचचतुर्थीचयदांगारकसंयुता ॥ उपोष्यातत्रतत्रैवप्रदेयोविधिनाकुजः ॥ ४३ ॥ वि
त्तहीनाःप्रतीक्षंतेयावद्वित्तोपलंभनम् ॥ चतुर्थ्याचचतुर्थ्याचविधानंशृणुपाण्डव ॥ ४४ ॥ सौवर्णपात्रेकृत्वातुअंगारकमकृत्रिमम् ॥
दशसौवर्णिकंमुख्यंदशार्द्धार्द्धमथापिवा ॥४५॥ विंशत्पलानिपात्राणिविंशत्यर्द्धपलानिच॥विंशत्कर्षाणिवापार्थअतोन्यूनंनकारयेत्॥४६॥
प्रतिष्ठाप्यकुजंमंत्रैर्वस्त्रैःसंपरिवेष्टितम् ॥ पुष्पमंडपिकांकृत्वादिव्यांसद्धूपधूपिताम् ॥ ४७ ॥ तत्रैसंपूजयेद्देवंपूर्वमंत्रैर्विधानतः ॥ भक्त्या
भोज्यैरनेकैश्चफलैरत्नैश्चसागरैः ॥ ४८ ॥ वस्त्रैःप्रावरणैर्यानैःशय्योपानद्धासनैः ॥ छत्रैःपुष्पैर्गन्धवरैःशक्त्यावित्तानुसारतः ॥ ४९ ॥
ततोविप्रंपरीक्षेतव्रतशौचसमन्वितम् ॥ वेदाध्ययनसंपन्नंशास्त्रज्ञंनिरहंकृतम् ॥ ५० ॥ अंगारकाविधिंयश्चसम्यग्जानातिशास्त्रतः ॥ आ
ह्वानविधिमंत्रांश्चहोमार्चनविसर्जनम् ॥५१॥ संपूज्यवस्त्राभरणैस्तस्मैदेयःकुजोत्तमः ॥यथाश्रुतोयथाज्ञातस्तथाभक्त्याह्युपोषितः ॥५२॥

१ रत्नैः-इ० पा० । २ महीनंदनाय नमः-इ० पा० । ३ तत्रस्थमर्चयेन्मंत्रैःपुष्पधूपैर्विधानतः-इ०पा० । ४ शुभैः-इ०पा० ।

वित्तसारेणतुष्यत्वंममभौमभवोद्भव ॥ पठन्निमंमंत्रवरंब्राह्मणायनिवेदयेत् ॥ ५३ ॥ ब्राह्मणश्चाप्यसौविद्वान्मंत्रमेतमुदाहरेत् ॥ मंगलं
प्रतिगृह्णामिउभयोरस्तुमंगलम् ॥ ५४ ॥ दातृप्रतिग्राहकयोःक्षेमारोग्यंभवत्विति ॥ प्रतिग्राहकमंत्रः ॥ एवंचतुर्थेसंप्राप्तेधनप्राप्तिर्नविद्यते
॥ ५५ ॥ तदा[1]मंत्रार्चनपरःपुनरेतांसमाचरेत् ॥ आशरीरनिपाताद्वायथोक्तफलभाग्भवेत् ॥ ५६ ॥ अल्पवित्तोयथाशक्त्यासर्वमेतत्समाच
रेत् ॥ अंगारकेणसंयुक्तांवाम्रांतिलशराविकाम् ॥ ५७ ॥ अनेनविधिनादत्वायथोक्तफलभाग्भवेत् ॥ एवंचतुर्थीयोभक्त्याकुजयुक्तामुपो
षयेत् ॥ ५८ ॥ तस्यपुण्यफलंयच्चतन्निबोधयुधिष्ठिर ॥ इहस्थित्वाचिरंकालंपुत्रपौत्रश्रियावृतः ॥ ५९ ॥ देहावसानेदिव्यौजादिव्यगंधानु
लेपनः ॥ दिव्यनारीगणवृतोविमानवरमास्थितः ॥ ६० ॥ यातिदेवपुरंहृष्टोदेवैःसहाभिनंदितः ॥ सतत्ररमतेकालंदेवैःसहसुरेशवत् ॥६१॥
चतुर्युगानिषट्त्रिंशत्ततःकालांतरेपुनः ॥ इहवागत्यराजासौकुलेमहतिजायते ॥ ६२ ॥ रूपवान्धनवान्वाग्मीदानशीलोदयापरः ॥
नारीचरूपसंपन्नासुभगाजातिसंयुता ॥ ६३ ॥ पुत्रपौत्रैःपरिवृताभर्त्रासहरमेच्चिरम् ॥ रमित्वासुचिरंकालंपुनःस्वर्गगतिंलभेत् ॥ ६४ ॥
एषतेकथितोराजन्सरहस्योविधिस्तथा ॥ दुर्लभोयोमनुष्याणांदेवानांभद्रमस्तुते ॥ ६५ ॥ अंगारकेणसहितातुसिताचतुर्थीशस्तासुरा
र्चनविधौपितृपिण्डदाने ॥ तस्यांकुजंकुरुकुलोद्वहयेऽर्चयंतिभूमौभवंतिबहुमंगलभाजनास्ते ॥६६॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणि
श्रीकृष्णयुधिष्ठिरसंवादेचतुर्थीव्रतेअङ्गारकचतुर्थीव्रतवर्णनंनामैकत्रिंशत्तमोऽध्यायः॥३१॥छ॥ ॥युधिष्ठिरउवाच॥ ॥ यन्नसिद्ध्यंतिकार्म
णिप्रारब्धानिनरोत्तमैः॥तत्केनकारणेनैतत्पृष्टोमेब्रूहिमाधव ॥१॥ ॥ श्रीकृष्णउवाच ॥ ॥ विनायकोर्थसिद्ध्यर्थंलोकस्यविनियोजितः ॥
गणानामाधिपत्येचरुद्रेणब्रह्मणातथा ॥२॥ तेनोपसृष्टोयस्तस्यलक्षणानिनिबोधत ॥ स्वप्नेऽवगाहतेऽत्यर्थंजलंमुण्डांश्चपश्यति॥३॥ काषाय
वाससश्चैवक्रव्यादांश्चाधिरोहति ॥ अंत्यजैर्गर्दभैरुष्ट्रैःसहैकत्रावतिष्ठति ॥ ४ ॥ व्रजमानस्तथात्मानंमन्यतेतुगतंपरैः ॥ विमनाविफला
रंभःससीदत्यनिमित्ततः ॥ ५ ॥ पातकीविहीनच्छायोम्लानत्वहेतुलक्षणः ॥ करभारूढमात्मानंमहीषखरगंतथा ॥ ६ ॥ यातुधानासृतं

१ यन्त्रार्चनपरः–इ० पा० ।

यातंश्मशानस्यांतिकंनृप ॥ पश्येतकुरुशार्दूलस्वप्नांतेनात्रसंशयः ॥७॥ तैलार्द्रमात्रंसंदेहंकरवीरविभूषितम् ॥ तेनोपसृष्टोलभतेनराज्यंरा
जनंदनः ॥८॥ कुमारीनचभर्तारमपत्यंगर्भमंगना॥आचार्यत्वंश्रोत्रियश्चनशिष्योऽध्ययनंतथा ॥ ९ ॥ वणिग्लाभंनचाप्नोतिकृषिंचैवकृषीव
लः ॥ स्नापनंतस्यकर्तव्यंपुण्येऽह्निविधिपूर्वकम् ॥१०॥ गौरसर्षपकल्केनवस्त्रेणाच्छादितस्यतु ॥ सर्वौषधैःसर्वगंधैर्विलिप्तशिरसस्तथा ॥
॥ ११ ॥ शुक्लपक्षेचतुर्थ्यांतुवारेवाधिषणस्यतु ॥ पुष्येचवीरनक्षत्रेतस्यैवपुरतोनृप ॥ १२ ॥ भद्रासनोपविष्टस्यस्वास्तिवाच्याद्विजैःशु
भैः ॥ चत्वारऋग्यजुःसामाथर्वणप्रवणास्ततः ॥१३॥व्योमकेशंतुसंपूज्यपार्वतींभूमिजंतथा ॥ कृष्णस्यपितरंचाथअवतारंसितंतथा॥१४॥
धिषणंक्ष्वेदपुत्रंचकोणंलक्ष्मींचभारत ॥ विधुंतुदंबाहुलेयंनंदकस्यचधारणम् ॥ १५ ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥
मृत्तिकांरोचनांरत्नंगुग्गुलुंचाप्सुनिक्षिपेत् ॥ १६ ॥ यदाहृतंह्येकवर्णैश्चतुर्भिःकलशैर्ह्रदात्॥ चर्मण्यानडुहेरक्तेस्थाप्यभद्रासनंतथा॥१७॥
सहस्राक्षंशतधारमृषिभिः पावनंकृतम् ॥ तेनत्वामभिषिंचामिपावमान्यःपुनंतुमे ॥ १८ ॥ ॐ भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः ॥
भगमिन्द्रश्चवायुश्चभगंसप्तर्षयोददुः ॥ १९ ॥ यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्द्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा ॥ २० ॥
स्नातस्यसार्षपंतैलंस्रुवेणौदुंबरेणतु ॥ जुहुयान्मूर्ध्निशकलान्सव्येनप्रतिगृह्यच ॥ २१ ॥ मितश्चसम्मितश्चैवतथाशालकटंकटा ॥
कूष्माण्डोराजपुत्रश्चेत्यंतेस्वाहासमन्वितैः ॥ २२ ॥ नामभिर्बलिमंत्रैश्चनमस्कारसमन्वितैः ॥ दद्याच्चतुष्पथेशूर्पेकुशानास्तीर्यसर्वतः ॥
॥ २३ ॥ कृताकृतांस्तंडुलांश्चपललौदनमेवच ॥ मत्स्यान्पक्वांश्चतथामांसमेतावदेवतु ॥२४॥ पुष्पान्वितंसुगंधंचसुरांचत्रिविधामपि ॥
मूलकंपूरिकापूपांस्तथैवोंडेरकस्रजः ॥ २५ ॥ दध्यन्नंपायसंचैवगुडवेष्टिसमोदकम् ॥ विनायकस्यजननीमुपतिष्ठेत्ततोंबिकाम्॥
॥ २६ ॥ दूर्वासर्षपपुष्पाणांदत्त्वार्घ्यंपूर्णमञ्जलिम् ॥ रूपंदेहिजयंदेहिभगंभवतिदेहिमे ॥ २७ ॥ पुत्रान्देहिधनंदेहिसर्वान्कामां
श्चदेहिमे ॥ प्रबलंकुरुमेदेविबलविख्यातिसंभवम् ॥ २८ ॥ शुक्लमाल्यांबरधरःशुक्लगंधानुलेपनः ॥ भोजयेद्ब्राह्मणान्दद्याद्वस्त्रयु

१ प्रासादानुगतम्-इ० पा० ।

ग्मंगुरोरपि ॥ २९ ॥ एवंविनायकंपूज्यग्रहस्यैवाविधानतः ॥ कर्मणांफलमाप्नोतिश्रियंप्राप्नोत्यनुत्तमाम् ॥ ३० ॥ आदि
त्यस्यसदापूजास्तिलकंस्वामिनस्तथा ॥ महागणपतेश्चैवकुर्वन्सिद्धिमवाप्नुयात् ॥ ३१ ॥ वैनायकंविनयसत्त्वंवतांनराणांस्नानंप्रश
स्तमिहविघ्नविनाशकारि ॥ कुर्वंतियेविधिवदत्रभवंतितेषांकार्याण्यभीष्टफलदानिनसंशयोऽत्र ॥ ३२ ॥ इति श्रीभविष्येमहापुराणे
उत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेविनायकस्नपनचतुर्थीव्रतंनामद्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ ॥छ॥ ॥ श्रीकृष्णउवाच॥ ॥
अथाविघ्नकरंराजन्कथयामिव्रतंतव ॥ येनसम्यक्कृतेनेहनविघ्नमुपजायते ॥ १ ॥ चतुर्थ्यांफाल्गुनेमासिगृहीतव्यंव्रतंत्विदम् ॥ नक्ता
हारेणराजेन्द्रतिलान्नंपारणंस्मृतम् ॥ २ ॥ तदेववह्नौहोतव्यंब्राह्मणायचतद्भवेत् ॥ ३ ॥ शूरायवीरायगजाननायलंबोदरायैकरदायचैव॥
एवंतुसंपूज्यपुनश्चहोमंकुर्याद्व्रतीविघ्नविनाशहेतोः ॥ ४ ॥ चतुर्मास्यांव्रतंचैवकृत्वेत्थंपञ्चमेतथा ॥ सौवर्णंगजवक्त्रंतुकृत्वाविप्रायदाप
येत् ॥ ५ ॥ ताम्रपात्रैःपायसभृतैश्चतुर्भिःसहितंनृप ॥ पञ्चमेनतिलैःसार्द्धंगणेशाधिष्ठितेनच ॥ ६ ॥ मृन्मयान्यपिपात्राणिवित्तहीन
स्तुकारयेत् ॥ हेरंबंराजतंतद्वाद्विधिनानेनदापयेत् ॥ ७ ॥ इत्थंव्रतमिदंकृत्वासर्वविघ्नैःप्रमुच्यते ॥ हयमेधस्याविघ्नेतुसंजातेसगरः
पुरा ॥ ८ ॥ एतदेवव्रतंचीर्त्वापुनरश्वंप्रलब्धवान् ॥ तथारुद्रेणदेवेनत्रिपुरंनिघ्नतापुरा ॥ ९ ॥ एतदेवकृतंयस्मात्त्रिपुरस्तेनघा
तितः ॥ मयासमुद्रंविशताएतदेवव्रतंकृतम् ॥ १० ॥ तेनाद्रिद्रुमसंयुक्तापृथिवीपुनरुद्धृता ॥ अन्यैरपिमहीपालैरेतदेवकृतं
पुरा ॥ ११ ॥ तपोऽर्थिभिर्यज्ञसिद्ध्यैनिर्विघ्नंस्यात्परंतप ॥ अनेनकृतमात्रेणसर्वविघ्नैःप्रमुच्यते ॥ १२ ॥ मृतोरुद्रपुरंयाति
वराहवचनंयथा ॥ १३ ॥ विघ्नानितस्यनभवंतिगृहेकदाचिद्धर्मार्थकामसुखसिद्धिविघातकानि ॥ यःसप्तमीन्दुशकलाकृतिकांतदंतंविघ्नं
शमर्चयतिनक्तकृतीचतुर्थ्याम् ॥१४॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेविनायकचतुर्थीव्रतंनामत्रयस्त्रिंशत्तमो
ध्यायः ॥३३॥ इति चतुर्थीकल्पःसमाप्तः ॥ ॥छ॥ ॥श्रीकृष्णउवाच॥ शांतिव्रतंप्रवक्ष्यामिशृणुष्वैकमनाधुना ॥ येनचीर्णेनशांतिः

१ शुक्लपक्षीयाम्–इत्यर्थः

स्यात्सर्वदागृहमेधिनाम् ॥ १ ॥ पञ्चम्यांशुक्लपक्षस्यकार्तिकेमासिपार्थिव ॥ आरभ्यवर्षमेकंतुभुंजीयादाम्लवर्जितम् ॥ २ ॥ नक्तंदेवंचसंपू
ज्यहरिंशेषोपरिस्थितम् ॥ अनंतायेतिपादौतुधृतरा(?)ष्ट्रायवैकटिम् ॥ ३ ॥ उदरंतक्षकायेतिउरःकर्कोटकायच ॥ पद्मायकर्णौसंपूज्यमहाप
द्मायदोर्युगम् ॥ ४ ॥ शंखपालायवक्षस्तुकुलिकायेतिवैशिरः ॥ एवंविष्णुंसर्वगतंपृथगेवप्रपूजयेत् ॥ ५ ॥ क्षीरेणस्नपनंकुर्याद्धरिमुद्दिश्यवा
ग्यतः ॥ तदग्रेहोमयेत्क्षीरंतिलैःसहविचक्षणः ॥६॥ एवंसंवत्सरस्यांतेकुर्याद्ब्राह्मणभोजनम् ॥ अच्युतंकांचनंकृत्वासुवर्णंतुविचक्षणम् ॥७॥
गांसवत्सांवस्त्रयुगंकांस्यपात्रंसपायसम् ॥ हिरण्यंचयथाशक्त्याब्राह्मणायोपपादयेत् ॥ ८ ॥ एवंयःकुरुतेभक्त्याव्रतमेतन्नराधिप ॥
तस्यशांतिर्भवेन्नित्यंनागानामभयंतथा ॥ ९ ॥ शेषाहिभोगशयनस्थमयोगसूर्तिंसंपूज्ययज्ञपुरुषंपतगेंद्रनाथम् ॥ येपूजयंतिमधुरैःसितप
ञ्चमीषुतेषांननागजनितंभयमभ्युपैति ॥ १० ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेशांतिव्रतंनामचतुस्त्रिंश
त्तमोऽध्यायः ॥ ३४ ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ मधुराभारतीकेनव्रतेनमधुसूदन ॥ तथैवजनसौभाग्यमतिविद्यासुकौश
लम् ॥ १ ॥ अभेदश्चापिदंपत्योस्तथाबंधुजनेनच ॥ आयुश्चविपुलंपुंसांजायतेकेनकेशव ॥ २ ॥ ॥ श्रीकृष्णउवाच ॥ ॥
सम्यक्पृष्टस्त्वयाराजञ्छृणुसारस्वतंव्रतम् ॥ यस्यसंकीर्तनादेवतुष्यतीहसरस्वती ॥ ३ ॥ योऽयंभक्तःपुमान्कुर्यादेतद्व्रतमनुत्तमम् ॥
तद्वत्सरादौसंपूज्यविप्रेणतंसमाचरेत् ॥ ४ ॥ अथवादित्यवारेणग्रहताराबलेनच ॥ पायसंभोजयित्वाचकुर्याद्ब्राह्मणवाचनम् ॥ ५ ॥
शुक्लवस्त्राणिदद्याच्चसहिरण्यानिशक्तितः ॥ गायत्रींपूजयेद्भक्त्याशुक्लमाल्यानुलेपनैः ॥ ६ ॥ एभिर्मंत्रपदैःपश्चात्पूर्वंकृत्वाकृताञ्जलिः ॥
यथातुदेविभगवान्ब्रह्मालोकपितामहः ॥ ७ ॥ त्वांपरित्यज्यनोतिष्ठेत्तथाभववरप्रदा ॥ वेदशास्त्राणिसर्वाणिनृत्यगीतादिकंचयत् ॥ ८ ॥
वाहितंयत्त्वयादेवितथामेसंतुसिद्धयः ॥ लक्ष्मीर्मेधावरारिष्टिर्गौरीतुष्टिःप्रभामातिः ॥ ९ ॥ एताभिःपाहितनुभिरष्टाभिर्मांसरस्वति ॥
एवंसंपूज्यगायत्रींवीणाक्षमणिधारिणीम् ॥ १० ॥ शुक्लपक्षेऽक्षतैर्भक्त्यासकमंडलुपुस्तकाम् ॥ मौनव्रतेनभुञ्जीतसायंप्रातश्चधर्मवित् ॥ ११ ॥

१ दंतवर्जितम्-इ०पा० ।

पञ्चम्यांप्रतिपक्षेचपूजयित्वासुवासिनीः ॥ तिलैश्चतंदुलप्रस्थंघृतपात्रेणसंयुतम् ॥ १२ ॥ क्षीरंतथाहिरण्यंचगायत्रीप्रीयतामिति ॥
संध्यायांचततोमौनंतद्व्रतंतुसमाचरेत् ॥ १३ ॥ नांतराभोजनंकुर्याद्यावन्मासास्त्रयोदश ॥ समाप्तेतुव्रतेदद्याद्भोजनंशुक्लतंडुलैः ॥ १४ ॥
पूर्णंसुवस्त्रयुग्मंचगांचविप्रायभोजनम् ॥ देव्यैवितानंघंटांचासितनेत्रेपटान्वितम् ॥ १५ ॥ चन्दनंवस्त्रयुग्मंचदध्यन्नंशिखरैर्युतम् ॥
तथोपदेष्टारमपिभक्त्यासंपूजयेद्गुरुम् ॥ १६ ॥ वित्तशाठ्येनरहितोवस्त्रमाल्यानुलेपनैः ॥ अनेनविधिनायस्तुकुर्यात्सारस्वतंव्रतम् ॥१७॥
विद्यावानर्थयुक्तश्चरक्तकंठश्चजायते ॥ सरस्वत्याःप्रसादेनव्यासवत्तुकविर्भवेत् ॥ १८ ॥ नारीवाकुरुतेयातुसापितत्फलभागिनी ॥
ब्रह्मलोकेवसेत्तावद्यावत्कल्पायुतत्रयम् ॥ १९ ॥ सारस्वतंव्रतंयस्तुशृणुयादपियःपठेत् ॥ विद्याधरपुरेसोऽपिवसेत्कल्पायुतत्रयम् ॥२०॥
संवत्सरंव्रतवरेणसरस्वतींयेसंपूजयंतिजगतोजननींजनित्रीम् ॥ विद्यावदातहृदयामधुरस्वरास्तेरूपान्वितावहुकलाकुशलाभवंति ॥ २१ ॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेसारस्वतव्रतनिरूपणंनामपंचत्रिंशत्तमोऽध्यायः॥३५॥छ॥श्रीकृष्णउवाच॥पं
चमीदयिताराजन्नागानंदविवर्द्धनी॥पञ्चम्यांकिलनागानांभवतीत्युत्सवोमहान् ॥१॥ वासुकिस्तक्षकश्चैवकालिकोमणिभद्रकः॥धृतराष्ट्रोरैव
तश्चकर्कोटकधनंजयौ ॥२॥ एतेप्रयच्छंत्यभयंप्राणिनांप्राणजीविनाम्॥पञ्चम्यांस्नापयंतीहनागान्क्षीरेणयेनराः॥३॥तेषांकुलेप्रयच्छंतिअभ
यंप्राणिनांसदा॥शप्तानागायदामात्रादह्यमानादिवानिशम् ॥४॥ निर्वापितागवांक्षीरैस्ततःप्रभृतिवल्लभाः ॥ युधिष्ठिरउवाच॥मात्राशप्ताःकथं
नागाःकिमुद्दिश्यचकारणम् ॥५॥ कथंवातस्यशापस्यविनाशोऽभूज्जनार्दन ॥ श्रीकृष्णउवाच॥उच्चैःश्रवाश्वराजश्चश्वेतवर्णोऽमृतोद्भवः॥६॥
तंदृष्ट्वाचाब्रवीत्कद्रूर्नागानांजननीस्वसाम् ॥ अश्वरत्नमिदंश्वेतंपश्यपश्यामृतोद्भवम् ॥ ७ ॥ कृष्णांश्चपश्यसेबालान्सर्वंश्वेतानुताथवै ॥
॥ विनतोवाच ॥ सर्वश्वेतोहयवरोनायंकृष्णोनलोहितः ॥ ८ ॥ कथंत्वंपश्यसेकृष्णंविनतोवाचतांस्वसाम् ॥ कद्रूरुवाच ॥ पश्येहमेक
नयनाकृष्णबालसमन्वितम् ॥ ९ ॥ द्विनेत्राचत्वंविनतेनपश्यासिपणंकुरु ॥ विनतोवाच ॥ अहंदासीभवित्रीतिकृष्णकेशेप्रदर्शिते ॥१०॥

१ मन्दमभवत्प्रसादात्कस्य माधव—इ०पा० ।

नचेद्दर्शयसेकद्रुममदासीभविष्यासि ॥ एवंतेविपणंकृत्वागतेक्रोधसमन्विते ॥ ११ ॥ स्वापितेप्राज्यदोषेतुकद्रूर्जिह्ममचिंतयत् ॥ आ
हूयपुत्रान्प्रोवाचबालाभूत्वाहयोत्तमे ॥ १२ ॥ तिष्ठध्वंविपणौजेष्येविनतांजयगृद्धिनीम् ॥ प्रोचुस्तेजिह्मबुद्धिंतांनागाःकद्रूंविगृह्यच ॥१३॥
अधर्मएषतुमहान्करिष्यामोनतेवचः ॥ अशपद्दुषिताकद्रूःपावकोवःप्रधक्ष्याति ॥ १४ ॥ गतेबहुतिथेकालेपांडवोजनमेजयः ॥ सर्प
सत्रंसकर्तावैभूमावन्यैःसुदुष्करम् ॥ १५ ॥ तस्मिन्सत्रेचतिग्मांशुःपावकोभक्षयिष्यति ॥ एवंशप्त्वातदाकद्रूःप्रत्युवाचनाकिंचन ॥ १६ ॥
मात्राशप्तस्तदानागःकर्तव्यंनान्वपद्यत ॥ वासुकिर्दुःखसंतप्तःपपातभुविमूर्च्छितः ॥ १७ ॥ वासुकिंदुःखितंदृष्ट्वाब्रह्माप्रोवाचसांत्वयन् ॥
माशुचोवासुकेत्यर्थंशृणुमद्वचनंपरम् ॥१८॥ यायावरकुलेजातोजरत्कारुरितिद्विजः ॥ भविष्यतिमहातेजास्तस्मिन्कालेतपोनिधिः ॥१९॥
भगिनींचजगत्कारुंतस्यत्वंप्रतिदास्यासि ॥ भवितातस्यपुत्रोऽसौआस्तीकइतिविश्रुतः ॥ २० ॥ सतत्सत्रंप्रवृद्धंवैनागानांभयदंमहत् ॥
निषेधयिष्यतिमुनिर्वाग्भिःसंपूज्यपार्थिवम् ॥२१॥ तादियंभगिनीनागरूपौदार्यगुणान्विता ॥ जरत्कारुर्जरत्कारोःप्रदेयाह्यविचारतः ॥२२॥
यदासौप्राथ्यतेऽरण्येयत्किञ्चित्प्रवदिष्यति ॥ तत्कर्तव्यमशेषेणइच्छञ्छ्रेयस्तथात्मनः ॥२३॥ पितामहवचःश्रुत्वावासुकिः प्रणिपत्यच ॥
तथाकरोद्यथाचोक्तंयत्नंपरममास्थितः ॥ २४ ॥ तच्छ्रुत्वापन्नगाःसर्वेप्रहर्षोत्फुल्ललोचनाः ॥ पुनर्जातमिवात्मानंमेनिरेभुजगोत्तमाः ॥२५॥
अप्लवेतुनिमग्नानांघोरेयज्ञाग्निसागरे ॥ आस्तीकस्तत्रभवितापूवभूतोऽभयप्रदः ॥ २६ ॥ श्रुत्वासचाग्निराजानमृत्विजस्तदनंतरम् ॥
निवर्तयिष्यतियागंनागानांमोहनंपरम् ॥ २७॥ पञ्चम्यांतच्चभविताब्रह्माप्रोवाचलेलिहान् ॥ तस्मादियंमहाराजपंचमीदयिताशुभा॥२८॥
नागानांहर्षजननीदत्तावैब्रह्मणापुरा ॥ दत्वातुभोजनंपूर्वंब्राह्मणानांतुकामतः ॥ २९ ॥ विसृज्यनागाःप्रीयंतांयेकेचित्पृथिवीतले ॥
हिमाचलेयेवसंतियेंऽतरिक्षेदिविस्थिताः ॥ ३० ॥ येनदीषुमहानागायेसरःस्वभिगामिनः ॥ येवापीषुतडागेषुतेषुसर्वेषुवैनमः ॥ ३१ ॥
नागान्विप्रांश्चसंपूज्यविसर्ज्यचयथार्थतः ॥ ततःपश्चाच्चभुञ्जीयात्सहभृत्यैर्नराधिप ॥ ३२ ॥ पूर्वंमधुरमश्नीयात्स्वेच्छयातदनंतरम् ॥



१ इह–इ०पा० ।

[1]एवंनियमयुक्तस्ययत्फलंतन्निबोधमे ॥ ३३ ॥ मृतोनागपुरंयातिपूज्यमानोऽप्सरोगणैः ॥ विमानवरमारूढोरमतेकालमीप्सितम् ॥ ३४ ॥
इहचागत्यराजासौसर्वराजवरोभवेत् ॥ सर्वरत्नसमृद्धश्चवाहनाढ्यश्चजायते ॥ ३५॥ पञ्चजन्मन्यसौराजाद्वापरेद्वापरेभवेत् ॥ आधिव्याधि
विनिर्मुक्तःपत्नीपुत्रसहायवान् ॥३६॥ तस्मात्पूज्याश्चनागा[2]श्चघृतक्षीरादिनासदा ॥ युधिष्ठिरउवाच ॥ दशंतिर्यंनरंकृष्णनागाःक्रोधसमन्वि
ताः ॥ ३७ ॥ भवेत्किंतस्यदष्टस्यविस्तरात्प्रब्रवीहिमे ॥ श्रीकृष्णउवाच ॥ नागदष्टोनरोराजन्प्राप्यमृत्युंव्रजत्यधः ॥ ३८ ॥ अधोगत्वाभ
वेत्सर्पोनिर्विषोनात्रसंशयः ॥ युधिष्ठिरउवाच ॥ नागदष्टःपितायस्यभ्रातामातासुहृत्सुतः ॥३९॥ स्वसावादुहिताभार्याकिंकर्तव्यंवदस्वमे॥
मोक्षायतस्यगोविन्ददानंव्रतमुपोषितम्॥४०॥ब्रूहिमेयदुशार्दूलयेनस्वर्गतिमाप्नुयात् ॥ श्रीकृष्णउवाच ॥ उपोष्यापंचमीराजन्नागानांपुष्टि
वर्द्धनी॥४१॥वर्षमेकंतुराजेन्द्रविधानंशृणुयादृशम्॥मासेभाद्रपदेयातुशुक्लपक्षेमहीपते ॥४२॥ साचपुण्यतमाप्रोक्ताग्राह्यासद्भतिकाम्यया ॥
ज्ञेयाद्वादशवर्षांतेपञ्चम्याभरतर्षभ ॥ ४३ ॥ चतुर्थ्यामेकभक्तंतुतस्यांनक्तंप्रकीर्तितम् ॥ भूरिचन्द्रमयंनागमथवाकलधौतजम् ॥ ४४ ॥
कृत्वादारुमयंचापिउताहोमृन्मयंनृप[3] ॥ पञ्चम्यामर्चयेद्भक्त्यानागंपञ्चफणंशृणु[4] ॥ ४५ ॥ करवीरैस्तथापद्मैर्जातीपुष्पैःसुशोभनैः ॥
गन्धपुष्पैःसनैवेद्यैःपूज्यपन्नगसत्तमम् ॥ ४६ ॥ ब्राह्मणान्भोजयेत्पश्चाद्घृतपायसमोदकैः ॥ नारायणबलिःकार्यःसर्पदष्टस्यदेहिनः ॥ ४७ ॥
दानेपिण्डप्रदानेचब्राह्मणानांचतर्पयेत् ॥ वृषोत्सर्गस्तुकर्तव्योगतेसंवत्सरेनृप ॥ ४८ ॥ स्नानंकृत्वोदकंदद्यात्कृष्णोऽत्रप्रीयतामिति ॥
अनंतंवासुकिंशेषंपद्मंकंबलमेवच ॥ ४९ ॥ तथातक्षकनागंचनागमश्वतरंनृप ॥ धृतराष्ट्रं[5]शंखपालंकालियंतक्षकंतथा ॥ ५० ॥ पिंगलं
चमहानागंमासिमासिप्रकीर्तिताः ॥ वत्सरांतेपारणंस्यान्महाब्राह्मणभोजनम् ॥ ५१ ॥ इतिहासविदेनागंकाञ्चनेनकृतंनृप ॥ तथार्जुनी
प्रदातव्यासंवत्साकांस्यदोहना ॥ ५२ ॥ एषपारणकेपार्थविधिःप्रोक्तोविचक्षणैः ॥ कृतेव्रतवरेतस्मिन्सद्गतिंयान्तिबान्धवाः ॥ ५३ ॥
येदन्दशूकरदनैर्दष्टाःप्राप्ताह्यधोगतिम् ॥ वर्षमेकंचरिष्यंतिभक्त्यायेव्रतमुत्तमम् ॥ ५४ ॥ दांष्ट्रिकंमोक्ष्यतेतेषांशुभंस्थानमवाप्स्यति ॥

१ एतेनव्रतमुख्येन–इ०पा० । २ मान्याश्च–इ०पा० । ३ तथा–इ०पा० । ४ शुभम्–इ०पा० । ५ शंखम्–इ०पा० ।

यश्चेदंशृणुयान्नित्यंपठेद्भक्त्यासमन्वितः ॥५५॥ नवैकुटुंबेनागेभ्योभयंभवतिकुत्रचित् ॥ श्रीकृष्णउवाच ॥ ॥ तद्वद्भाद्रपदेमासिपञ्चम्यां श्रद्धयान्वितः ॥५६॥ यस्त्वालेख्यनरोनागान्कृष्णवर्णादिवर्णकैः ॥ पूजयेद्गन्धपुष्पैस्तुसर्पिर्गुग्गुलुपायसैः ॥ ५७ ॥ तस्यतुष्टिंसमायांति पन्नगास्तक्षकादयः ॥ आसप्तमात्कुलात्तस्यनभयंनागतोभवेत् ॥ ५८ ॥ तस्मात्सर्वप्रयत्नेननागान्संपूजयेद्बुधः ॥ तथाचाश्वयुजेमासिप ञ्चम्यांकुरुनन्दन ॥ ५९ ॥ कृत्वाकुशमयान्नागानिंद्राण्यासहपूजयेत् ॥ घृतोदकाभ्यांपयसास्नापयित्वाविशांपते ॥ ६० ॥ गोधूमैःप यसास्विन्नैर्भक्ष्यैश्चविविधैस्तथा ॥ यस्त्वस्यांविविधान्नागाञ्छुचिर्भक्त्यासमन्वितः ॥ ६१ ॥ पूजयेत्कुरुशार्दूलतस्यशेषादयोनृप ॥ नागाःप्रीताभवंतीहशांतिंप्राप्नोतिशोभनाम्॥६२॥सशांतिलोकमासाद्यमोदतेशाश्वतीःसमाः॥इत्येतत्कथितंवीरपञ्चमीव्रतमुत्तमम् ॥६३॥ तत्रायमुच्यतेमन्त्रःसर्वदोषनिषेधकः॥ ॐकुरुकुल्लेहुंफट्स्वाहा॥भक्तेनभक्तिसहिताःशतपञ्चमीषुयेपूजयंतिभुजगान्कुसुमोपहारैः॥तेषांगृहे ष्वभयदाहिसदैवसर्पाःशश्वत्प्रमोदपरमारुचयोभवंति ॥ ६४॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेनागपञ्चमीव्र तवर्णनंनामषट्त्रिंशत्तमोऽध्यायः॥३६॥छ॥युधिष्ठिरउवाच॥कथमासाद्यतेलक्ष्मीर्दुर्लभाभुवनत्रये॥दानेनतपसायापिव्रतेनानियमेनवा ॥१॥ जपहोमनमस्कारैःसंस्कारैर्वापृथग्विधैः ॥ एतद्वदयदुश्रेष्ठसर्ववित्त्वंमतोमम ॥ २॥ श्रीकृष्णउवाच ॥ भृगोःख्यात्यांसमुत्पन्नापूर्वंश्रीःश्रू यतेशुभा ॥ वासुदेवायसादत्तामुनिनामानवृद्धये ॥ ३ ॥ वासुदेवोऽपितांप्राप्यपीनोन्नतपयोधराम् ॥ पद्मपत्रविशालाक्षींपूर्णचन्द्रनिभा ननाम् ॥ ४ ॥ भाभासितदिगाभोगांसाक्षाद्भानोःप्रभामिव ॥ नितंबाडंबरवतींमत्तमातंगगामिनीम् ॥ ५ ॥ रेमेसहतयाराजन्विभ्रमो द्भ्रांतचित्तया ॥ साचविष्णुंजगज्जिष्णुंपतिंत्रिजगतांपतिम् ॥ ६ ॥ प्राप्यकृतार्थमात्मानंमेनेमानयशोधना ॥ हृष्टंपुष्टंजगत्सर्वमभवद्भा वितंतया ॥ ७ ॥ लक्ष्म्यानिरीक्षितंचैवसानन्दंहिमहीतलम् ॥ क्षेमंसुभिक्षमारोग्यमनाक्रन्दमनाकुलम् ॥ ८ ॥ जगदासीदनुद्भ्रान्तं

१ पठेद्वाश्रद्धयान्वितः-इ०पा०। २ ओं वाच कुल्ले हुं फट् स्वाहा-इ०पा०। ३ सुभगाः-इ० पा०। ४लक्ष्यामां पालपंचम्यां सहृष्टे च महीतलम्-इ० पा०। ५ अनामयम्-इ० पा०।

प्रशांतोपद्रवंतथा ॥ दिविदेवामुमुदिरेदानवादैत्यमागताः ॥ ९ ॥ विस्फारितफणाभोगानागाश्चैवरसातले ॥ हृदयेब्राह्मणैर्वह्नौभुज्य
तेत्रिदिवैर्हविः ॥ १० ॥ चातुर्वर्ण्यमसंकीर्णपाल्यतेपार्थपार्थिवैः ॥ विरोचनप्रभृतिभिर्दृष्ट्वैवंदैत्यसत्तमैः ॥ ११ ॥ तपस्तप्तुमथारब्ध
मग्निमाश्रित्यसंयतैः ॥ सोमसंस्थाहविःसंस्थापाकसंस्थादिभिर्मखैः ॥ १२ ॥ सदाचारैःसमारब्धामिष्टंस्वेष्टाभिलाषिभिः ॥ एवंधर्म
प्रधानैस्तैर्वेदवादरतात्मभिः ॥ १३ ॥ जगदासीत्समाक्रांतंविक्रमेणक्रमेणतु ॥ लक्ष्मीविलासप्रभवोदेवानामभवन्मदः ॥ १४ ॥ मदाच्छी
लंचशौचंचसत्यंसद्योव्यनीनशन् ॥ सत्यशौचविहीनांस्तान्देवान्संत्यज्यचश्चलान् ॥१५॥ जगामदानवकुलंकुलदेवानुरागतः॥लक्ष्म्याभा
वितदेहैस्तैःपुनरुद्धतमानसैः ॥१६॥ व्यवहर्तुंसमारब्धमन्यायेनमदोद्धतैः ॥वयंवेदावयंयज्ञावयंविद्यावयंजगत् ॥१७॥ ब्रह्मविष्णुशंकराद्या
वयंसर्वेदिवौकसः ॥ अहंकारविमूढांस्ताञ्ज्ञात्वादानवसत्तमान्॥१८॥सागरंसाविवेशाथभ्रांतचित्ताभृगोःसुता॥क्षीराब्धिमध्यगतयालक्ष्म्या
क्षीणार्थसंचयाः॥१९॥निरानन्दगतश्रीकमभवद्भुवनत्रयम् ॥ गतश्रीकमथात्मानंमत्वाशंबरसूदनः॥२०॥पप्रच्छांगिरसंविप्रंब्रूहिकिञ्चिद्व्रतंम
म॥येनसंप्राप्यतेलक्ष्मीर्लब्धानचलतेपुनः ॥२१॥ निश्चलापिसुहृन्मित्रैर्भोग्याभवतिसामुने ॥नसाश्रीत्यभिमन्तव्याकन्यासापाल्यतेगृहे ॥
॥२२॥परार्थयासुहृन्मित्रभृत्यैर्नैवोपभुज्यते ॥ शक्रस्यैतद्वचःश्रुत्वाबृहस्पतिरुदारधीः ॥२३॥ कथयामाससंचिंत्यशुभंश्रीपञ्चमीव्रतम् ॥
यत्पुराकस्यचित्प्रोक्तंव्रतानामुत्तमंव्रतम् ॥ २४ ॥ तदस्मैकथयामाससरहस्यमशेषतः ॥ तच्छ्रुत्वाकर्तुमारब्धंसुरेशेनसुरैस्तथा ॥ २५ ॥
दैत्यदानवगंधर्वैर्यक्षैःप्रक्षीणकल्मषैः ॥ सिद्धैःप्रसिद्धचरितैर्विष्णुनाप्रभविष्णुना ॥ २६ ॥ ब्राह्मणैर्ब्रह्मतत्त्वज्ञैःसमर्थैःपार्थिवैःसह ॥
कैश्चित्सात्त्विकभावेनराजसेनापरैरपि ॥ २७ ॥ तामसेनतथाकैश्चित्कृतंव्रतमिदंतथा ॥ व्रतेसमाप्तेभूयिष्ठेनिष्ठयापरयाप्रभो ॥ २८ ॥
देवानांदानवानांचयुद्धमासीदथोद्धतम् ॥ निर्मथ्यभुजवीर्येणसागरंसरितांपतिम् ॥ २९ ॥ समाहरामोह्यमृतंहितायात्रिदिवौकसाम् ॥
इत्येवंसमयंकृत्वाममंथुर्वरुणालयम् ॥३०॥ मंथानंमंदरंकृत्वानेत्रंकृत्वातुवासुकिम् ॥ मथ्यमानजलाज्जातश्चन्द्रःशीतांशुरुज्ज्वलः ॥३१॥
अनंतरंसमुत्पन्नालक्ष्मीःक्षीराब्धिमध्यतः ॥ तयाविलोकिताःसर्वेदैत्यदानवसत्तमाः ॥ ३२ ॥ आलोक्यसाजगामाशुविष्णोर्वक्षःस्थलं

शुभम् ॥ विधिनाविष्णुनाचीर्णंव्रतंतेनाब्धिसंभवा ॥ ३३ ॥ शरीरस्थावभूवास्यविभ्रमोद्भ्रांतलोचना ॥ किंचराजसभावेनशक्रेणै
तत्कृतंयतः ॥ ३४ ॥ ततस्त्रिभुवनैश्वर्यंप्राप्तंतेनमहर्द्धिकम् ॥ तमसावृतचित्तैस्तुसंचीर्णंदैत्यदानवैः ॥ ३५ ॥ तेनतेषामथैश्वर्यंदृ
ष्टिनष्टमभूत्किल ॥ एवंसश्रीकमभवत्सदेवासुरमानुषम् ॥ ३६ ॥ जरच्चजगतांश्रेष्ठव्रतस्यास्यप्रभावतः ॥ ॥ युधिष्ठिरउवाच ॥
कथमेतद्व्रतंकृष्णक्रियतेमनुजैःकदा ॥ ३७ ॥ प्रारभ्यतेपार्यंतेचसर्ववदयदूत्तम ॥ ॥ श्रीकृष्णउवाच ॥ ॥ मार्गशीर्षेसि
तेपक्षेपंचम्यांपतगोदये ॥ ३८ ॥ उपवासस्यनियमंकुर्यादाशुसुहृद्धृदि ॥ स्वर्णरौप्यारकूटोत्थाताम्रमृत्काष्ठजाथवा ॥ ३९ ॥
चित्रपट्टगतांदेवींलक्ष्मींक्ष्मापालकारयेत् ॥ पद्महस्तांपद्मवर्णांपद्मांपद्मदलेक्षणाम् ॥ ४० ॥ दिग्गजेन्द्रैःस्नाप्यमानांकांचनैःकलशोत्तमैः ॥
ततोयामत्रयेजातेनिम्नगायांगृहेऽथवा ॥ ४१ ॥ स्नानंकुर्यादसंभ्रांतंशक्रवदुपचारतः ॥ देवान्पितॄंश्चसंतर्प्यततोदेवगृहंव्रजेत् ॥ ४२ ॥
तत्रस्थांपूजयेद्देवींपुष्पैस्तत्कालसंभवैः ॥ चपलायैनमःपादौचंचलायैचजानुनी ॥ ४३ ॥ कटिंकमलवासिन्यैनाभिंख्यात्यैनमोनमः ॥
स्तनौमन्मथवासिन्यैललितायैभुजद्वयम् ॥४४॥ उत्कंठितायैकंठंचमाधव्यैमुखमण्डलम् ॥ नमःश्रियैशिरःपूज्यदद्यान्नैवेद्यमादरात्॥४५॥
फलानिचयथालाभंविरूढान्धान्यसंचयान् ॥ ततःसुवासिनीपूज्याकुसुमैःकुंकुमेनच ॥ ४६ ॥ भोजयेन्मधुरान्नेनप्रणिपत्यविसर्जयेत् ॥
ततस्तुतंदुलप्रस्थंघृतपात्रेणसंयुतम् ॥ ४७ ॥ ब्राह्मणायप्रदातव्यंश्रीशःसंप्रीयतामिति ॥ निवर्त्यतदशेषेणततोभुञ्जीतवाग्यतः ॥ ४८ ॥
मासानुमासंकर्तव्यंविधिनानेनभारत ॥ श्रीर्लक्ष्मीःकमलासंपद्रमानारायणीतदा ॥ ४९ ॥पद्माधृतिःस्थितिःपुष्टिर्ऋद्धिःसिद्धिर्यथाक्रमम् ॥
मासानुमासंराजेन्द्रप्रीयतामितिकीर्तयेत् ॥५०॥ ततश्चद्वादशेमासिसंप्राप्तेपंचमेदिने ॥ वस्त्रमंडपिकांकृत्वापुष्पगन्धाधिवासिताम्॥५१॥
शय्यायांस्थापयेल्लक्ष्मींसर्वोपस्करसंयुताम् ॥ मौक्तिकाष्टकसंयुक्तांनेत्रपट्टावृतस्तनीम् ॥ ५२ ॥ सप्तधान्यसमोपेतांरसधातुसमन्विताम्॥
पादुकोपानहच्छत्रभाजनासनसत्कृताम् ॥ ५३ ॥ दद्यात्संपूज्यविधिवद्ब्राह्मणायकुटुंबिने ॥ व्यासायवेदविदुषेयस्यवारोचतेस्वयम्॥५४॥
सोपस्करांसवत्सांचधेनुंदत्त्वाक्षमापयेत् ॥ क्षीराब्धिमथनोद्भूतेविष्णोर्वक्षःस्थलालये ॥ ५५ ॥ सर्वकामप्रदेदेविऋद्धिंयच्छनमोऽस्तुते ॥

ततःसुवासिनीःपूज्यवस्त्रैराभरणैःशुभैः ॥५६॥ भोजयित्वास्वयंपश्चाद्भुञ्जीतसहबन्धुभिः ॥ एवंयःकुरुतेपार्थभक्त्याश्रीपञ्चमीव्रतम्॥५७॥
अस्यश्रीर्भवनेभातिकुलानामेकविंशतिः ॥ नारीवाकुरुतेयातुप्राप्यानुज्ञांस्वभर्तृतः ॥ ५८ ॥ सुभगादर्शनीयाचबहुपुत्राचजायते ॥५९॥
श्रीपञ्चमीव्रतमिदंदयितंमुरारेर्भक्त्यासमाचरतिपूज्यभृगोस्तनूजाम् ॥ राज्यंनिजंसमुविभज्यजनोपभोगान्भुक्त्वाप्रयातिभुवनंमधुसूदनस्य
॥६०॥इति श्रीभाविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेपञ्चमीव्रतकल्पेश्रीपञ्चमीव्रतानिरूपणंनामसप्तत्रिंशत्तमोऽध्यायः॥३७॥
इतिपंचमीकल्पःसमाप्तः॥ ॥युधिष्ठिरउवाच॥षष्ठीविधानमधुनाकथयस्वजनार्दन॥सर्वव्याधिप्रशमनंसर्वकर्मफलप्रदम्॥१॥श्रुतंमयापूज्यमा
नोभानुःसर्वंप्रयच्छति॥दिवाकराराधनंमेतस्मात्कथयकेशव॥२॥श्रीकृष्णउवाच ॥ विशोकषष्ठीमतुलांवक्ष्यामिमनुजोत्तम॥यामुपोष्यनरः
शोकंनकदाचिदिहजायते॥३॥माघेकृष्णतिलैःस्नातःपञ्चम्यांशुक्लपक्षतः[1]॥कृताहारःकृशरयादंतधावनपूर्वकम्॥४॥उपवासव्रतंकृत्वाब्रह्मचा
रीभवेन्निशि॥ततःप्रभातेचोत्थायकृतस्नानस्ततःशुचिः॥५॥कृत्वातुकाञ्चनंपद्ममर्कोऽयमितिपूजयेत्॥करवीरेणरक्तेनरक्तवस्त्रयुगेनच॥६॥
यथाविशोकंभवनंत्वयैवादित्यसर्वदा ॥ तथाविशोकतामेस्यात्त्वद्भक्तिर्जन्मजन्मनि ॥ ७ ॥ एवंसंपूज्यषष्ठ्यांतुशक्त्यासंपूजयेद्द्विजान् ॥
सुप्त्वासंप्राश्यगोमूत्रमुत्थायकृतनिश्चयः[2] ॥ ८ ॥ संपूज्यविप्रमंत्रेणगुडपात्रसमन्वितः ॥ सुसूक्ष्मवस्त्रयुगलंब्राह्मणायनिवेदयेत् ॥ ९ ॥
अतैललवणंभुक्त्वासप्तम्यांमौनसंयुतः ॥ ततःपुराणश्रवणंकर्तव्यंभूतिमिच्छता ॥ १० ॥ अनेनविधिनासर्वमुभयोरपिपक्षयोः ॥ कुर्या
द्यावत्पुनर्माघशुक्लपक्षस्यसप्तमी ॥ ११ ॥ व्रतांतेकलशंदद्यात्सुवर्णकमलान्वितम् ॥ शय्यांसोपस्करांतद्वत्कापिलांचपयस्विनीम् ॥१२॥
अनेनविधिनायस्तुवित्तशाठ्यविवर्जितः ॥ विशोकषष्ठींकुरुतेसयातिपरमांगतिम् ॥ १३ ॥ यावज्जन्मसहस्राणांसाग्रकोटिशतंभवेत् ॥ ता
वन्नशोकमभ्येतिरोगदौर्गत्यवर्जितः ॥ १४ ॥ यंयंप्रार्थयतेकामंतंतंप्राप्नोतिपुष्कलम् ॥ निष्कामंकुरुतेयस्तुसपरंब्रह्मगच्छति ॥ १५ ॥
यःपठेच्छृणुयाद्वापिषष्ठींशोकविनाशिनीम् ॥ सोपींद्रलोकमाप्नोतिनदुःखीजायतेक्वचित् ॥१६॥ येभास्करंदिनकरंकरवीरपुष्पैःसंपूजयंत्य

१ कृष्णपक्षतः—इ०पा०। २ कृतनैत्यकः—इ०पा०।

पैःसोहालककरंबकैः ॥ गुडपुष्पैःकर्णवेष्टैर्मोदकैर्मुखमोदकैः॥११॥एवमभ्यर्च्यविधिवद्रात्रौजागरणंततः ॥ गीतवाद्यनटच्छत्रप्रेक्षणीयैःसुशो
भनैः ॥१२॥ सखीभिःसहितासाध्वीतांरात्रींप्रशमन्नयेत् ॥नचसम्मीलयेन्नेत्रेनारीयामचतुष्टयम् ॥१३॥ दुर्भगादुर्गतावंध्यानेत्रसंमीलनाद्भवे
त् ॥ एवंजागरणंकृत्वासप्तम्यांसरितंनयेत् ॥ १४॥ गन्धपुष्पैरथाभ्यर्च्यगीतवाद्यपुरःसरम् ॥ तच्चदद्याद्द्विजेंद्रायनैवेद्यादिनरोत्तम ॥ १५ ॥
स्नात्वागृहमुपागम्यहुत्वावैश्वानरंक्रमात्॥देवान्पितॄन्मनुष्यांश्चपूजयित्वासुवासिनीम्॥१६॥कुमारिकाभोजनीयाब्राह्मणादशपंचच ॥भक्ष्य
भोज्यैर्बहुविधैर्दयातेभ्यःसुदक्षिणा ॥१७॥ ललिताप्रीतियुक्तास्तुइत्युक्त्वातान्विसर्जयेत्॥यःकश्चिदाचरेदेतद्भक्त्याललितिकाव्रतम्॥१८॥
नरोवायदिवानारीतस्यपुण्यफलंशृणु ॥ तत्रास्तिमानुषेलोकेतस्ययन्नोपपद्यते ॥ १९ ॥ सुखसौभाग्यसंयुक्तागौरीलोकमवाप्नुयात् ॥२०॥
षष्ठ्यांजलांतरगतांवरवंशपात्रेसंगृह्यपूजयतियासिकताःक्रमेण ॥ नक्तंचजागरमनुद्धतगीतनृत्यैःकृत्वाह्यसौत्रिभुवनेललितेवभाति ॥२१॥
॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेललिताषष्ठीव्रतवर्णनंनामैकचत्वारिंशोऽध्यायः॥४१॥छ॥श्रीकृष्णउवाच ॥
येयंमार्गशिरेमासिषष्ठीभरतसत्तम ॥ पुण्यापापहराधन्याशिवाशान्तागुहप्रिया ॥ १ ॥ निहत्यतारकंषष्ठ्यांगुहस्तारकराजवत् ॥
रराजतेनदयिताकार्त्तिकेशस्यसातिथिः ॥ २ ॥ स्नानदानादिकंकर्मतस्यामक्षयमुच्यते ॥ यस्यांपश्यंतिगांगेयंदक्षिणापथमाश्रितम् ॥३॥
ब्रह्महत्यादिपापैस्तेमुच्यंतेनात्रसंशयः ॥ तस्मादस्यांसोपवासःकुमारंस्वर्णसंभवम् ॥ ४ ॥ राजतंवामहाराजमृन्मयंवापिकारयेत् ॥
अपराह्णेततःस्नात्वासमाचम्ययतव्रती ॥५॥ पद्मासनस्थोगाङ्गेयंध्यायंस्तिष्ठेत्समाधिना ॥ ब्राह्मणस्तुततोविद्वान्गृहीत्वाकरकंनवम् ॥६॥
पातयेत्तस्यशिरसिधारांवैदक्षिणामुखः ॥ चन्द्रमण्डलभूतानांभवभूतिपवित्रिता ॥ ७ ॥ गंगाकुमारधारेयंपतितातवमस्तके ॥ एवंस्ना
त्वासमभ्यर्च्यभास्करंभुवनाधिप ॥ ८ ॥ पुष्पधूपादिनापश्चात्पूजयेत्कृत्तिकासुतम् ॥ देवसेनापतेस्कन्दकार्त्तिकेयभवोद्भव ॥ ९ ॥
कुमारगुहगांगेयशक्तिहस्तनमोऽस्तुते ॥ एभिर्नामपदैःपूज्यनैवेद्यंविनिवेदयेत् ॥ १० ॥ फलानिदक्षिणान्यानिचन्दनंमलयोद्भवम् ॥ पा
र्श्वस्थौपूजयेच्छागकुक्कुटौस्वामिवल्लभौ ॥ ११ ॥ सकलापंमयूरंचप्रत्यक्षांहिमजांतथा ॥ कृत्तिकाकटकंपार्श्वेसंपूज्यस्कन्दवल्लभम् ॥१२॥

तेनैवनामभिर्होमःकार्यःसाज्यैस्तिलैस्तथा ॥ एवंनिर्वर्त्यविधिवत्फलमेवंयुधिष्ठिर ॥ १३ ॥ भक्षयित्वास्वपेद्भूमौस्वास्तृतेदर्भसंस्तरे ॥
नालिकेरंमातुलुंगंनारिंगंपनसंतथा ॥ १४ ॥ जंबीरंदाडिमंद्राक्षांद्द्यान्याम्रफलानिच ॥ श्रीफलामलकंतद्वत्त्रपुसंकदलीफलम् ॥ १५ ॥
क्रमेणभक्षयेद्राजन्संयतोनियतव्रती ॥ अलाभेकलकालौघफलमद्यादतंद्रितः ॥ १६ ॥ प्रत्यक्षोहेमघटितश्छागोवाकुक्कुटोऽथवा ॥ प्रात
र्दद्याद्द्विजायैतत्सेनानीःप्रीयतामिति ॥ १७ ॥ सेनायांसचसंभूतःक्रौञ्चारिःषण्मुखोगुहः ॥ गांगेयःकार्तिकेयश्चस्वामीबालग्रहाग्रणीः ॥१८॥
छागप्रियइशक्तिधरोद्वारोद्वादशमःस्मृतः ॥ प्रीयतामितिसर्वेषुक्रमान्मासेषुकीर्तयेत् ॥१९॥ ब्राह्मणान्भोजयित्वादौपश्चाद्भुञ्जीतवाग्यतः॥
एवंसंवत्सरस्यान्तेकार्तिकेमासिशोभने॥२०॥कार्तिकेयंसमभ्यर्च्यवासोभिर्भूषणैःसह॥गांगेयःकार्तिकेयश्चसकृदेवैवमाचरेत् ॥२१॥ संवत्स
रविधिंकृत्वाजपंहोमपुरस्कृतम्॥दद्याद्विप्रायराजेन्द्रवाचकायविशेषतः॥२२॥एतेविप्राःस्मृतादिव्याभौमास्त्वन्याद्विजातयः॥पालितेऽस्मि
न्व्रतेपार्थतीर्णःस्याद्भवसागरे ॥ २३ ॥यएवंकुरुतेभक्त्यानरोयोषिदथापिवा॥सप्राप्येहशुभंकामंगच्छतीन्द्रसलोकताम् ॥२४॥ सदैवपूजनी
यस्तुकार्तिकेयोमहीपते ॥ कार्तिकेयाद्दतेनान्योराज्ञांपूज्यःप्रवक्ष्यते ॥ २५ ॥ संग्रामंगच्छमानोयःपूजयेत्कृत्तिकासुतम् ॥ ससर्वंजयते
वीरोयथेन्द्रोदानवान्रणे ॥ २६ ॥ तस्मात्सर्वप्रयत्नेनपूजयेच्छंकरात्मजम् ॥ पूज्यमानस्तुसद्भक्त्यासर्वान्कामानवाप्नुयात् ॥ २७ ॥ यस्तु
षष्ठ्यांनरोनक्तंकुर्याद्भारतसत्तम ॥ सर्वपापविनिर्मुक्तोगांगेयस्यसदाव्रजेत् ॥ २८ ॥ श्रुत्वैवंदक्षिणांमासंगत्वाश्रद्धासमन्वितः ॥ पूजयेद्देव
देवेशंसगत्वाशिवमंदिरम्॥२९॥ स्कन्दंगुहंशरवणोद्भवमादिदेवंशंभोःसुतंसदयितंगिरिराजपुत्र्याः ॥ स्वर्गेनिरर्गलसुखाननुभूयतेनासेनाप
तिर्भवतिराज्यधुरंधुरोऽसौ ॥३०॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेतारकवधकार्तिकेयपूजाषष्ठीव्रतवर्णनंनाम
द्विचत्वारिंशोऽध्यायः॥४२॥छ॥युधिष्ठिरउवाच॥सप्तमीचयदादेवकेनकालेनपूज्यते॥ किंफलानियमःकश्चिद्वददेवकिनन्दन ॥१॥ श्रीकृष्ण
उवाच ॥ शुक्लपक्षेतुसप्तम्यांयदादित्यदिनंभवेत् ॥ सप्तमीविजयानामतत्रदत्तंमहाफलम् ॥ २ ॥ स्नानंदानंजपोहोमउपवासस्तथैवच ॥
सर्वंविजयसप्तम्यांमहापातकनाशनम् ॥ ३ ॥ प्रदक्षिणांयःकुरुतेफलैःपुष्पैर्दिवाकरम् ॥ ससर्वगुणसंपन्नंपुत्रंप्राप्नोत्यनुत्तमम् ॥ ४ ॥

प्रथमानालिकेरैस्तुद्वितीयारक्तनागरैः ॥ तृतीयामातुलुंगैश्चचतुर्थीकदलीफलैः ॥ ५ ॥ पञ्चमीवरकूष्माण्डैःषष्ठीपकैस्तुतैंदुकैः ॥
वृंताकैःसप्तमींदेयाअष्टोत्तरशतेनच ॥ ६ ॥ मौक्तिकैःपद्मरागैश्चनीलैःकर्केतनैस्तथा ॥ गोमेदैर्वज्रवैडूर्यैःशतेनाष्टाधिकेनतु ॥ ७ ॥ अक्षो
टैर्बदरैर्बिल्वैःकरमर्दैःसबर्बरैः ॥ आम्राम्रातकजंबीरैर्जंबुककौटिकाफलैः ॥ ८ ॥ पुष्पैर्धूपैःफलैःपत्रैर्मोदकैर्गुणकैःशुभैः ॥ एभिर्वि
जयसप्तम्यांभानोःकुर्यात्प्रदक्षिणाम् ॥ ९ ॥ अन्यैःफलैश्चकाम्यैश्चएकवैर्ग्रंथिवर्जितैः ॥ रवेःप्रदक्षिणादेयाफलेनफलमादिशेत् ॥ १० ॥
नविशेन्नचसंजल्पेन्नचकश्चिद्वदेदपि ॥ एकचित्ततयाभानुश्चिन्तनायप्रयच्छति ॥ ११ ॥ वसोर्धाराप्रदातव्याभानोर्गव्येनसर्पिषा ॥
चन्द्रातपत्रंवध्नीयाज्जयंकिंकिणिकायुतम् ॥ १२ ॥ कुंकुमेनसमालभ्यपुष्पधूपैश्चपूजयेत् ॥ शुभंनिवेद्यनैवेद्यंततःपश्चात्क्षमापयेत् ॥१३॥
भानोभास्करमार्तण्डचण्डरश्मेदिवाकर ॥ आरोग्यमायुर्विजयंपुत्रंदेहिनमोऽस्तुते ॥ १४ ॥ उपवासेननक्तेनतथैवायाचितेनच ॥
कृतानियमयुक्तेनयात्वियंजयसप्तमी ॥ १५ ॥ रोगीविमुच्यतेरोगाद्दरिद्रःश्रियमाप्नुयात् ॥ अपुत्रोलभतेपुत्रंविद्याविद्यार्थिनोभवेत् ॥
॥ १६ ॥ शुक्लपक्षेयदापार्थसादित्यसप्तमीभवेत् ॥ तदानक्तेनमुद्राशीःक्षपयेत्सप्तसप्तमीः ॥ १७ ॥ भूमौपलाशपत्रेषुस्नात्वा
हुत्वायथाविधि ॥ समाप्तेतुव्रतेदद्यात्सौवर्णमुद्गमिश्रितम् ॥ १८ ॥ मुद्गंश्रेष्ठायविप्रायवाचकायाविशेषतः ॥ सप्तम्यांसप्तसं
युक्तआदित्येननरोत्तम ॥ १९ ॥ उपोष्यविधिनानेनमंत्रप्राशनपूजनैः ॥ षडक्षरेणमंत्रेणसर्वकार्यविजानता ॥ २० ॥ अर्चनं
वह्निकार्यंचशतमष्टोत्तरंनरः ॥ समाप्तेतुव्रतेपश्चात्सुवर्णेनघटापितम् ॥ २१ ॥ सौवर्णंभास्करंपार्थरुक्मपात्रगतंशुभम् ॥ रक्तां
वरंचकाषायंगन्धंदद्यात्सदक्षिणम् ॥ २२ ॥ मंत्रेणानेनविप्रायकर्मसिद्ध्यैद्विजातये ॥ ॐभास्करायसुदेवायनमस्तुभ्यंयशस्कर ॥ २३ ॥
ममाद्यसमीहितार्थप्रदोभवनमोनमः ॥ दानानिचप्रदेयानिगृहाणिशयनानिच ॥ २४ ॥ श्राद्धानिपितृदेवानांशाश्वतींतृप्तिमिच्छता ॥
यात्राप्रशस्तायातृणांराज्ञांचजयमिच्छताम् ॥२५॥ विजयोजायतेऽवश्यंयतीनांचनृणांतदा॥अतोर्थंविश्रुतालोकेसदाविजयसप्तमी ॥२६॥

१ षष्टिपकैस्तुतंदुलैः–इ० पा० ।

एवमेषातिथिःपार्थइहकामप्रदानृणाम् ॥ परत्रसुखदासौम्यासूर्यलोकप्रदायिनी ॥ २७ ॥ दाताभोगीचचतुरोदीर्घायुर्नीरुजःसुखी ॥
इहागत्यभवेद्राजाहस्त्यश्वधनरत्नवान् ॥ २८ ॥ नारीवाकुरुतेयातुसापितत्पुण्यभागिनी ॥ भवत्यत्रनसंदेहःकार्यःपार्थत्वयाक्वचित् ॥
॥ २९ ॥ स्वर्ग्यासमीहितसुखार्थफलप्रदाचयामृग्यतेमुनिवरैःप्रवरातिथीनाम् ॥ साभानुपादकमलार्चनचिंतकानांपुंसांसदैवविजयाविजयं
ददाति ॥ ३० ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेविजयसप्तमीव्रतकथनंनामात्रिचत्वारिंशोऽध्यायः ॥४३॥छ॥
॥ श्रीकृष्णउवाच ॥ ॥ अथान्यदपितेवच्मिदानंश्रेयस्करंपरम् ॥ आदित्यमंडलंनामसर्वाशुभविनाशनम् ॥ १ ॥ यवचूर्णेनशुभ्रेणकु
र्याद्गोधूमजेनवा ॥ सुपक्वंभानुबिंबाभंगुडगव्याज्यपूरितम् ॥ २ ॥ संपूज्यभास्करंभक्त्यातदग्रेमंडलंशुभम् ॥ रक्तचन्दनजंकुर्यात्कुंकुमं
वाविशेषतः ॥ ३ ॥ मण्डलंतत्रसंस्थाप्यरक्तवस्त्रैःसुपूजितम् ॥ ब्राह्मणायप्रदातव्यंमंत्रेणानेनपांडव ॥ ४ ॥ आदित्यतेजसोत्पन्नंराजतंवि
धिनिर्मितम् ॥ श्रेयसेममविप्रत्वंप्रतिगृह्णेदमुत्तमम् ॥ ५ ॥ इति दानमंत्रः ॥ कामदंधनदंधर्म्यंपुत्रदंसुखदंतव ॥ आदित्यप्रीतयेदत्तंप्रतिगृ
ह्णामिमंडलम् ॥६॥ इतिप्रतिग्रहमंत्रः ॥ एवंदत्वानरोराजन्सूर्यवद्विविराजते ॥ सर्वकामसमृद्धार्थोमंडलाधिपतिर्भवेत् ॥७॥ दातव्योजयस
प्तम्यांतदारभ्यदिनेदिने ॥ भास्करस्यमहाराजशक्त्याभावेनभावितः ॥ ८ ॥ गोधूमचूर्णजनितंयवचूर्णजंवाआदित्यमंडलमखण्डगुडा
ढ्यपूर्णम् ॥ कृत्वाद्विजायविधिवत्प्रतिपादयेद्योभूमौभवत्यमितमंडलमंडलोऽसौ ॥ ९ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्ण
युधिष्ठिरसंवादेआदित्यमंडलविधिवर्णनंनामचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ छ ॥ युधिष्ठिरउवाच ॥ ॥ यामुपोष्यनरःकामान्प्राप्नोति
मनसेप्सितान् ॥ तामेकांवदमेदेवसप्तमींधनसौख्यदाम् ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ भानोर्दिनेसितेपक्षेअतीतेचोत्तरायणे ॥ पुन्ना
माह्वयनक्षत्रेगृह्णीयात्सप्तमीव्रतम् ॥ २ ॥ सव्रीहिकान्यवतिलान्सहमाषमुद्गैर्गोधूममांसमधुमैथुनकांस्यपात्रम् ॥ अभ्यंजनांजनशिलात
लचूर्णितानिषष्ठ्यांपरंपरिहरेदहनिप्रसिद्ध्यै ॥ ३ ॥ देवान्मुनीन्पितृगणान्सजलांजलीभिःसंतर्प्यपूज्यगगनांगणहस्तभुक्तान् ॥ हुत्वानले
तिलयवान्बहुशोघृताक्तान्भूमौस्वपेद्धृदिनिधायहितंसवित्रम् ॥ ४ ॥ यानित्रयोदशजनैरिहवर्जितानिद्रव्याणितानिपरिहृत्यपरिद्विप

ष्ट्या ॥ संप्राप्यशुद्धचणकानिहवर्षमेकंप्राप्नोतिभारतसुखंमनसेप्सितंच ॥ ५ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधि
ष्ठिरसंवादेत्रयोदशवर्ज्यसप्तमीव्रतंनामपंचचत्वारिंशोऽध्यायः ॥४५॥छ॥ श्रीकृष्णउवाच ॥ लोमशोनामविप्रर्षिर्मथुरायांगतःपुरा ॥ सोऽर्चि
तोवसुदेवेनदेवक्याचयुधिष्ठिर ॥१॥ उपविष्टःकथाःपुण्याःकथयित्वामनोहराः ॥ ततःकथयितुंभूयोकथामेतांप्रचक्रमे ॥ २ ॥ कंसेहतेमृताः
पुत्राःपुत्राजातापुनःपुनः ॥ मृतवत्सादेवकित्वंपुत्रदुःखेनदुःखिता ॥ ३ ॥ यथाचन्द्रमुखीदीप्तिर्बभूवमृतपुत्रिका ॥ पश्चाच्चीर्णव्रता
सैवबभूवाक्षतवत्सका ॥ ४ ॥ त्वमेवदेवकितथाभविष्यासिनसंशयः ॥ देवक्युवाच ॥ कासाचन्द्रमुखीब्रह्मन्बभूवबहुपुत्रिका ॥ ५ ॥
किंविचीर्णंव्रतवरंबहुसंततिकारकम् ॥ सतांसदर्थकरणंसौभाग्यारोग्यवर्द्धनम् ॥ ६ ॥ लोमशउवाच ॥ अयोध्यायांपुराराजानहुषोनामवि
श्रुतः ॥ तस्यराज्ञोमहादेवीनाम्नाचन्द्रमुखीपुरा ॥ ७ ॥ पुरोहितस्यतस्यैवपत्न्यासीन्मानमानिका ॥ तयोरासीद्दृढाप्रीतिःस्पृहणीयापर
स्परम् ॥ ८ ॥ अथापितेऽपिमित्रिण्यौस्नानार्थंशरयूजले ॥ प्राप्तेप्राप्ताश्चतत्रैवबह्व्यश्चनगराङ्गनाः ॥९॥ स्नात्वातुमंडलंचक्रुःस्वपतेर्व्यक्तरूपि
णः॥लेखयित्वाशिवंशांतमुमयासहशंकरम्॥१०॥गन्धपुष्पाक्षतैर्भक्त्यापूजयित्वायथाविधि॥प्रणम्यगंतुकामास्ताःपृष्टास्ताभ्यांनरस्त्रियः॥
॥११॥ताऊचुःशङ्करोऽस्माभिःपार्वत्यासहपूजितः॥स्वर्णसूत्रमयंतंतुंशिवायात्मानिवेदितः॥१२॥धारामयमिदंतावद्यावत्प्राणावधारणम् ॥
तासांतुवचनंश्रुत्वामित्रिण्यौतेऽपिभारत ॥ १३ ॥ तस्यैवसमयंतत्रबद्धादोर्भ्यांतुडोरकैः ॥ ततस्ताःस्वगृहाञ्जग्मुःस्वसखीभिःसमावृताः ॥
॥ १४ ॥ कालेनमहतायातंतस्यावैतद्व्रतंनृप ॥ चंद्रवत्याःप्रमत्तायाविस्मृतःसतुडोरकः ॥ १५ ॥ मृताकैश्चिदहोरात्रैःसाबभूवप्लवङ्गमी ॥
मानीचकुक्कुटीजाताप्रायःसंनिकटंचरे ॥ १६ ॥ तथैवजातेमित्रिण्यौपूर्वजातिस्मरेतथा ॥ संभूयभूपसमयंप्राग्भूतंचक्रतुःपुनः ॥ १७ ॥
तद्दिनेतत्रसंप्राप्तेपुनःकालेनतेमृते ॥ तत्रैवमात्रकेदेशेजातेगोकुलसंयुते ॥ १८ ॥ राज्ञोजायाबभूवाथपृथ्वीनाथस्यवापुनः ॥ ईश्वरी
नामविख्याताराज्ञीराजेंद्रवल्लभा ॥ १९ ॥ अग्निमीला[1]द्विजस्याभूद्भार्याभूषणनामिका ॥ पुरोहितस्यकालेनकुक्कुटीबहुपुत्रिणी ॥ २० ॥

१ अग्निमाला-इ०पा० ।

जातिस्मरापद्महस्ताअष्टपुत्रामृतप्रजा ॥ पुनर्निरंतराप्रीतिर्बभूवाथतयोर्नृप ॥ २१ ॥ तत्रेश्वरीपुत्रमेकंप्रसूताचैवरोगिणम् ॥ नववर्षैतु
पञ्चत्वमगात्सचयुधिष्ठिर ॥ २२ ॥ ततस्तांभूषणांद्रष्टुमथैषापुत्रदुःखिता ॥ सखीभावादतिस्नेहात्सर्वपुत्रसमन्विता ॥ २३ ॥ अमुक्ता
भरणानित्यंस्वभावेनैवभूषिता ॥ तांदृष्ट्वापुत्रिणींभव्यांप्रजज्वालेश्वरीरुषा ॥ २४ ॥ ततोगृहंप्रेष्यचतांसखींवैतीव्रमत्सरा ॥ चिंतया
माससारात्र्यांतस्याःपुत्रवधंप्रति ॥ २५ ॥ हताहताश्चतत्पुत्रापुनर्जीवन्त्यनामयाः ॥ कदाचिदाहूयसखींभूषणांपुरतःस्थिताम् ॥ २६ ॥
ईश्वरीप्राहकिमिदंसखिपुण्यंत्वयाकृतम् ॥ येनतेनिहताःपुत्राःपुनर्जीवन्तिनोभयम् ॥ २७ ॥ बहुपुत्राजीववत्साअमुक्ताभरणाकथम् ॥
शोभसेऽभ्यधिकंभद्रेविद्युत्सौदामिनीवहि ॥ २८ ॥ भूषणोवाच ॥ भद्रेभाद्रपदेमासिसप्तम्यांसलिलाशये ॥ स्नात्वाशिवंमंडलकेलेखयि
त्वासहांबिकम् ॥ २९ ॥ भक्त्यासंपूज्यसमयंकुर्याद्बद्धाकरेगुणम् ॥ यावज्जीवंमयातावच्छिवस्यात्मानिवेदितः ॥ ३० ॥ इत्येवंसमयंकृ
त्वाततःप्रभृतिडोरकम् ॥ स्वर्णरौप्यमयंवापिकरशाखासुधारयेत् ॥ ३१ ॥ मंडकंवेष्टिकांदद्याच्छूर्पक्षेद्विजेतुवा ॥ स्वयंचतानभोक्त
व्याव्रतभंगभयात्सखि ॥ ३२ ॥ परितोमुद्रिकारौप्यासौवर्णाचयुधिष्ठिर ॥ ताम्रपात्रोपरिस्थाप्यब्राह्मणायनिवेदयेत् ॥ ३३ ॥ सोहा
लकानिकांसारंदद्याद्भुञ्जीतचस्वयम् ॥ मण्डलंसद्मवित्तंचाशिवंशक्तिसमन्वितम् ॥ ३४ ॥ संपूज्यसखिदुष्प्राप्यंत्रैलोक्येऽपिनविद्यते ॥
तदेवंसमयंपूर्वंत्वयासहमयाकृतः ॥ ३५ ॥ समयापालितोभक्त्याततोऽहंसुस्थितासखि ॥ त्वयासभग्नःसमयोदर्पात्त्यक्तःशरीरयोः ॥३६॥
तेनसंततिविच्छिन्नाराज्येपिसातिदुःखिता ॥ एषप्रभावःकथितोव्रतस्यास्यमयातव ॥ ३७ ॥ अर्द्धंतवप्रदास्यामितस्यधर्मस्यसुव्रते ॥
सखिभावात्प्रतीच्छत्वंनात्रकार्याविचारणा ॥३८॥ इत्युक्त्वाप्रतिजग्राहव्रतदानफलंततः ॥ बभूवसुप्रजाःसाध्वीमोक्षंप्राप्यसुरेश्वरी॥ ३९ ॥
व्रतस्यास्यप्रभावेणसपुत्रात्वंचदेवकि ॥ भविष्यासित्रिलोकेशंपुत्रंचजनयिष्यसि ॥ ४० ॥ इत्येवंकथयित्वास्यालोमशोमुनिपुंगवः ॥
जगामनभसापार्थमयाऽप्येतत्तवोदितम् ॥ ४१ ॥ येचरिष्यंतिमनुजाव्रतमेतद्युधिष्ठिर ॥ कुक्कवाकुप्रसंगाख्यंदेवक्याचरितंशुभम् ॥ ४२ ॥
तेषांसंततिविच्छेदोनकदाचिद्भविष्यति॥स्त्रियश्चयाश्चरिष्यंतिव्रतमेतत्सुतप्रदम्॥४३॥मर्त्यलोकेसुखंस्थित्वायास्यंतिशिवमंदिरम् ॥४४॥

यःकुक्कुटीव्रतवरंप्लवगीसमेतंचक्रेचराचरगुरुंहृदयेनिधाय ॥ तद्वचाकरोतिकलुषौघविघातरक्षांसास्त्रीयुवाभवतिशोभनगीतवत्सा ॥ ४५ ॥
इति श्रीभविष्येमहापुराणेउत्तरेपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेकुक्कुटमर्कटीव्रतवर्णनंनामषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ छ ॥
॥ श्रीकृष्णउवाच ॥ अतऊर्ध्वंप्रवक्ष्यामिसप्तमीकल्पमुत्तमम् ॥ माघमासात्समारभ्यशुक्लपक्षेयुधिष्ठिर ॥ १ ॥ सप्तम्यांकुरुसंकल्पमहोरात्रे
व्रतेनृप॥वरुणेत्यर्चयित्वातुब्रह्मकूर्चंतुकारयेत् ॥२॥ अष्टम्यांभोजयेद्विप्रांस्तिलपिष्टंगुडौदनम् ॥ अग्निष्टोमस्ययज्ञस्यफलंप्राप्नोतिमानवः
॥ ३ ॥ सप्तम्यांफाल्गुनेमासिसूर्यमित्याभिपूजयेत् ॥ वाजपेयस्ययज्ञस्ययथोक्तंलभतेफलम् ॥ ४ ॥ सप्तम्यांचैत्रमासेतुवेदांशुरपिपूजयेत्॥
उक्थाध्वरसमंपुण्यंनरःप्राप्नोतिभक्तिमान् ॥ ५ ॥ वैशाखस्यतुसप्तम्यांधातारमभिपूजयेत् ॥ पशुबंधध्वरेपुण्यंसम्यक्प्राप्नोतिमानवः ॥
॥ ६ ॥ सप्तम्यांज्येष्ठमासस्यइन्द्रमित्यभिपूजयेत् ॥ वाजपेयस्ययज्ञस्यफलंप्राप्नोतिदुर्लभम् ॥ ७ ॥ आषाढमासेसप्तम्यांपूजयित्वा
दिवाकरम् ॥ बहुवर्णस्ययज्ञस्यफलंप्राप्नोतिपुष्कलम् ॥ ८ ॥ सप्तम्यांश्रावणेमासिमातार्पिनामपूजयेत् ॥ सौत्रामणिफलंसम्यक्प्राप्नो
तिपुरुषंशुभम् ॥ ९ ॥ रविंप्रौष्ठपदेमासेसप्तम्यामर्चयेच्छुचिः ॥ तुलापुरुषदानस्यफलंप्राप्नोतिमानवः ॥ १० ॥ आश्वयुक्छुक्लसप्तम्यां
सवितारंप्रपूज्यच ॥ गोसहस्रप्रदानस्यफलंप्राप्नोतिमानवः ॥ ११ ॥ कार्तिकेशुक्लसप्तम्यांदिनेशंसप्तवाहनम् ॥ योऽभ्यर्चयतिपु
ण्यात्मापौण्डरीकंसविन्दति ॥ १२ ॥ भानुंमार्गसितेपक्षेपूजयित्वाविधानतः ॥ राजसूयस्ययज्ञस्यफलंदशगुणंलभेत् ॥ १३ ॥
भास्करंपुष्यमासेतुपूजयित्वायथाविधि ॥ नरमेधस्ययज्ञस्यफलंप्राप्नोतिपुष्कलम् ॥ १४ ॥ तदेवकृष्णसप्तम्यांनामसंपूजयेद्बुधः ॥
सोपवासःप्रयत्नेनवर्षमेकंयुधिष्ठिर ॥ १५ ॥ पश्चात्समाप्तेनियमेसूर्ययागंसमाचरेत् ॥ शुचिर्भूमौसमेदेशेलेपयेद्रक्तचन्दनैः ॥
॥ १६ ॥ एकहस्तंद्विहस्तंवाचतुर्हस्तमथापिवा ॥ सिंदूरगैरिकाभ्यांचसूर्यमण्डलमालिखेत् ॥ १७ ॥ रक्तपुष्पैःसपद्मैश्चधूपैः
कुंदुरुकादिभिः ॥ संपूज्यदद्यान्नैवेद्यंविचित्रंघृतपाचितम् ॥ १८ ॥ पुरतःस्थापयेत्कुंभान्सहिरण्यान्नसंयुतान् ॥ अग्निकार्यंततः
कुर्यात्समभ्युक्ष्यहुताशनम् ॥ १९ ॥ आकृष्णेनेतिमंत्रेणसमिद्भिश्चार्कसंभवैः ॥ तिलैराज्यगुडोपेतैर्दद्याद्दशशताहुतीः ॥ २० ॥

ततस्तुदक्षिणादेयाब्राह्मणानांयुधिष्ठिर ॥ भोजयित्वारक्तवस्त्रैःशुक्लान्यपिपिधापयेत् ॥ २१ ॥ द्वादशात्रप्रशंसंतिगावोवस्त्रान्विताःशुभाः ॥
छत्रोपानहयुग्मंचएकैकायप्रदापयेत् ॥ २२ ॥ एवंविसृज्यतान्विप्रान्स्वयंभुंजीतवाग्यतः ॥ यएवंकुरुतेपार्थसप्तमीव्रतमुत्तमम् ॥ २३ ॥
नीरुजोरूपवान्वाग्मीदीर्घायुश्चैवजायते ॥ सप्तम्यांसोपवासास्तुभानोःपश्यंतियेमुखम् ॥ २४ ॥ सर्वपापविनिर्मुक्ताःसूर्यलोकमवाप्नुयुः ॥
व्रतमेतन्महाराजसर्वाशुभविनाशनम् ॥ २५ ॥ सर्वदुष्टप्रशमनंशरीरारोग्यकारकम् ॥ सूर्यलोकप्रदंचांतेप्राहैवंनारदोमुनिः ॥ २६ ॥
येसप्तमीमुपवसंतिसितासितांचनामाक्षरैरहिमदीधितिमर्चयंति ॥ तेसर्वरोगरहिताःसुखिनःसदैवभूत्वारवेरनुचराःसुचिरंभवंति ॥ २७ ॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेउभयसप्तमीव्रतवर्णनंनामसप्तचत्वारिंशोऽध्यायः ॥४७॥छ॥ युधिष्ठिरउवाच ॥
भगवन्दुर्गसंसारसागरोत्तारकारकम् ॥ किंचिद्व्रतंसमाचक्ष्वस्वर्गारोग्यसुखप्रदम् ॥१॥ श्रीकृष्णउवाच ॥ यदातुशुक्लसप्तम्यामादित्यस्यादिनंभ
वेत् ॥ तदासातुमहापुण्याविजयातुनिगद्यते ॥ २ ॥ प्रातर्गव्येनपयसास्नानमस्यांसमाचरेत् ॥ शुक्लांबरधरःपद्ममक्षतैःपरिकल्पयेत् ॥३॥
प्राङ्मुखोष्टदलंमध्येतद्वच्चित्रांचकर्णिकाम् ॥ सर्वेष्वपिदलेष्वेवंविन्यसेत्पूर्वतःक्रमात् ॥ ४ ॥ पूर्वेणतपनायेतिमार्तंडायेतिवैनमः ॥
याम्येदिवाकरायेतिविधात्रेनैर्ऋतेनच ॥ ५ ॥ पश्चिमेवरुणायेतिभास्करायेतिवानिले ॥ सौम्येचवरुणायेतिरवयेंऽत्येऽष्टमेदले ॥ ६ ॥
आदावंतेचतन्मध्येनमोऽस्तुपरमात्मने ॥ मंत्रैरेवंसमभ्यर्च्यनमस्कारांतदीपितैः ॥ ७ ॥ शुक्लवस्त्रफलैर्भक्ष्यैर्धूपमाल्यानुलेपनैः ॥
स्थंडिलेपूजयेद्भक्त्यागुडेनलवणेनच ॥ ८ ॥ ततोव्याहृतिहोमेनविभज्याद्विजपुङ्गवान् ॥ शक्तितस्तर्पयेद्भक्त्यागुडक्षीरघृतादिभिः ॥९॥
तिलपात्रंहिरण्यंचगुरवेचानिवेदयेत् ॥ एवंनियमकृत्स्नात्वाप्रातरुत्थायमानवः ॥ १० ॥ कृतस्नानजपोविप्रैःसहैवघृतपायसम् ॥
भुक्त्वाचवेदविद्भिर्वैडालव्रतवर्जितैः ॥ ११ ॥ एवंसंवत्सरस्यांतेकृत्वैतदाखिलंनृप ॥ उद्यापयेद्यथाशक्त्याभास्करंसंस्मरन्हृदि ॥ १२ ॥
घृतपात्रंसकरकंसोदकुंभंनिवेदयेत् ॥ वस्त्रालंकारसंयुक्तांसुवर्णास्यांपयस्विनीम् ॥ १३ ॥ एकामपिप्रदद्याद्गांवित्तहीनोविमत्सरः ॥
वित्तशाठ्यंनकुर्वीतततोमोहात्पतत्यधः ॥१४॥ अनेनविधिनायस्तुकुर्यात्कल्याणसप्तमीम् ॥ शृणुयाद्वापठेद्वापिसोऽपिपापैःप्रमुच्यते ॥१५॥

यश्चाष्टपत्रकमलोदरकर्णिकायांसंपूजयेत्कुसुमधूपविलेपनाद्यैः ॥ षष्ठ्याःपरेहनिनिवार्तिहरंदिनेशंकल्याणभाजनमसौभवतोहिजंतुः ॥
॥ १६ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेकल्याणसप्तमीव्रतवर्णनंनामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शर्करासप्तमींवक्ष्येसर्वकल्मषनाशिनीम् ॥ आयुरारोग्यमैश्वर्ययथानंतंप्रजायते ॥ १ ॥
माधवस्यसितेपक्षेसप्तम्यांश्रद्धयान्वितः ॥ प्रातःस्नात्वातिलैःशुद्धैःशुक्लमाल्यानुलेपनैः ॥ २ ॥ स्थंडिलेपद्ममालिप्यकुंकुमेनसकर्णिकम् ॥
तस्मिन्नमःसवित्रेतिगंधपुष्पंनिवेदयेत् ॥ ३ ॥ स्थापयेदुदकुंभंचशर्करापात्रसंयुतम् ॥ रक्तवस्त्रैःस्वलंकृत्यशुक्लमाल्यानुलेपनैः ॥ ४ ॥
सुवर्णाश्वसमायुक्तंमंत्रेणानेनपूजयेत् ॥ विश्वेदेवमयोयस्माद्वेदवादीतिपठ्यते ॥ ५ ॥ त्वमेवामृतसर्वस्वमतःपाहिसनातन ॥
सौरसूक्तंजपंस्तिष्ठेत्पुराणश्रवणेनवा ॥ ६ ॥ अहोरात्रेगतेपश्चादष्टम्यांकृतनैत्यकः ॥ सर्वंचवेदविदुषेब्राह्मणायोपपादयेत् ॥ ७ ॥
भोजयेच्छक्तितोविप्राञ्छर्कराघृतपायसैः ॥ भुञ्जीयात्तैललवणंस्वयमप्यथवाग्यतः ॥ ८ ॥ अनेनविधिनासर्वंमासिमासिसमाचरेत् ॥
वत्सरांतेपुनर्दद्याद्ब्राह्मणायसमाहितः ॥ ९ ॥ शयनंवस्त्रसंवीतंशर्कराकलशान्वितम् ॥ सर्वोपस्करसंयुक्तंतथैकांगांपयास्विनीम् ॥ १० ॥
गृहंचशक्तितोदद्यात्समस्तोपस्करान्वितम् ॥ सहस्रेणापिनिष्काणांकृत्वादद्याच्छतेनवा ॥ ११ ॥ दशभिर्द्वात्रिभिर्निष्कैस्तदर्धेनापिभ
क्तितः ॥ सुवर्णाश्वःप्रदातव्यःपूर्ववन्मंत्रवाचनम् ॥ १२ ॥ वित्तशाठ्यंनकुर्वीतकुर्वन्दोषान्समश्नुते ॥ अमृतंपिबतोवक्रात्सूर्यस्यामृत
बिन्दवः ॥ १३ ॥ निश्चेतुरेतदुत्थायशालिमुद्गेक्षवःस्मृताः ॥ शर्कराचपरंतस्मादिक्षुरसोद्भवामता ॥ १४ ॥ इष्टारवेरतः
पुण्याशर्कराहव्यकव्ययोः ॥ शर्करासप्तमीचैषावाजिमेधफलप्रदा ॥ १५ ॥ सर्वेदुपशमंयांतिपुनःसंततिवर्द्धिनी ॥ यःकुर्यात्परया
भक्त्यासपरंब्रह्मगच्छति ॥ १६ ॥ कल्पमेकंवसेत्स्वर्गेततोयातिपरंपदम् ॥ १७ ॥ इदमनघशृणोतियःस्मरेद्वापरिपठतीहसुरे

१ मुच्यते–इ०पा०।

श्वरस्यलोके ॥ मतिमपिचददातियोजनानाममरवधूजनकिंन्नरैःसपूज्यः ॥ १८ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्ण
युधिष्ठिरसंवादेशर्करासप्तमीव्रतवर्णनंनामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ अतःपरंप्रव
क्ष्यामितद्वत्कमलसप्तमीम् ॥ यस्याःसंकीर्तनादेवतुष्यतीहदिवाकरः ॥ १ ॥ वसंतेऽमलसप्तम्यांस्नातःसन्गौरसर्षपैः ॥ तिलपात्रेचसौव
र्णंनिधायकमलंशुभम् ॥ २ ॥ वस्त्रयुग्मवृतंकृत्वागंधपुष्पैरथार्चयेत् ॥ नमस्तेपद्महस्तायनमस्तेविश्वधारिणे ॥ ३ ॥ दिवाकरनमस्तुभ्यं
प्रभाकरनमोऽस्तुते ॥ ततोद्विकालवेलायामुदकुंभसमन्वितम् ॥ ४ ॥ विप्रायदद्यात्संपूज्यवस्त्रमाल्यविभूषणैः ॥ अहोरात्रेगतेपश्चादष्टम्यां
भोजयेद्द्विजान् ॥ ५ ॥ यथाशक्त्याथभुञ्जीतविमांसंतैलवर्जितम् ॥ अनेनविधिनाशुक्लसप्तम्यांमासिमासिच ॥ ६ ॥ सर्वंसमाचरेद्भक्त्यावि
त्तशाठ्यविवर्जितः ॥ व्रतांतेशयनंदद्यात्सुवर्णकमलान्वितम् ॥ ७ ॥ गांवसदद्याच्छक्त्यातुसुवर्णाढ्यांपयस्विनीम् ॥ भाजनासनदीपादी
न्दद्यादिष्टानुपस्करान् ॥ ८ ॥ अनेनविधिनायस्तुकुर्यात्कमलसप्तमीम् ॥ लक्ष्मीमनन्तामभ्येत्यसूर्यलोकेचमोदते ॥ ९ ॥ कल्पेकल्पेत
थालोकान्सप्तगत्वापृथक्पृथक् ॥ अप्सरोभिःपरिवृतस्ततोयातिपराङ्गतिम् ॥ १० ॥ यःपश्यतीदंशृणुयान्मुहूर्तंपठेच्चभक्त्यासुमतिंददा
ति ॥ सोऽप्यत्रलक्ष्मीमचलामवाप्यगन्धर्वविद्याधरलोकमेति ॥ ११ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादे
कमलासप्तमीव्रतवर्णनंनामपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ अन्यामपिप्रवक्ष्यामिशोभनांशुभसप्त
मीम् ॥ यामुपोष्यनरोरोगाच्छोकदुःखात्प्रमुच्यते ॥ १ ॥ पुण्यआश्वयुजेमासिकृतस्नानःपयःशुचिः ॥ वाचयेत्ततोविप्रानारभेच्छुभसप्त
मीम् ॥ २ ॥ कपिलांपूजयेद्भक्त्यागन्धमाल्यानुलेपनैः ॥ नमामिसूर्यसंभूतामशेषभुवनालयाम ॥ ३ ॥ त्वामहंशुभकल्याणशरीरांसर्वसि
द्धये ॥ अथाहृत्यातिलप्रस्थंताम्रपात्रेणसंयुतम् ॥ ४ ॥ काञ्चनंवृषभंतद्वद्वस्त्रमाल्यगुडान्वितम् ॥ दद्याद्द्विकालवेलायामर्यमाप्रीयतामि
ति ॥ ५ ॥ पञ्चगव्यंचसंप्राश्यस्वपेद्भूमौविमत्सरः ॥ ततःप्रभातेसंजातेभक्त्यासंतर्पयेद्द्विजान् ॥ ६ ॥ अनेनविधिनादद्यान्मासिमासिसदा

१ आर्षम् ।

नरः ॥ वाससीवृषभंहैमंतद्वद्धेनोस्तुपूजनम् ॥ ७ ॥ संवत्सरांतिशयनमिक्षुदण्डगुडान्वितम् ॥ सोपधानकविश्रामंभाजनासनसंयुतम् ॥८॥
ताम्रपात्रंतिलप्रस्थंसौवर्णवृषसंयुतम् ॥ दद्याद्वेदविदेसर्वंविश्वात्माप्रीयतामिति ॥ ९ ॥ अनेनविधिनाराजन्कुर्याद्यःशुभसप्तमीम् ॥
तस्यश्रीर्विमलाकीर्तिर्भवेज्जन्मनिजन्मनि ॥ १० ॥ अप्सरोगणगन्धर्वैःपूज्यमानःसुरालये ॥ वसेद्गणाधिपोभूत्वायावदाभूतसंप्लवम् ॥ ११ ॥
सकल्पादवतीर्णस्तुसप्तद्वीपाधिपोभवेत् ॥ ब्रह्महत्यासहस्रस्यभ्रूणहत्याशतस्यच ॥ १२ ॥नाशङ्करोतिपुण्येयंकृतावैशुभसप्तमी ॥ १३ ॥
इमांपठेद्यःशृणुयान्मुहूर्तंपश्येतसंगादपिदीयमानम् ॥ सोऽप्यत्रसंबाध्यविमुक्तदेहःप्राप्नोतिविद्याधरनायकत्वम् ॥ १४ ॥ इति श्रीभ
विष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेशुभसप्तमीव्रतनिरूपणंनामैकपंचाशत्तमोऽध्यायः ॥ ५१ ॥छ॥ युधिष्ठिरउवाच ॥ ॥
किमुद्वेगाद्भवेत्कृत्यमलक्ष्मीःकेनहन्यते ॥ मृतवत्सादिकार्येषुदुःस्वप्नेचाकिमिष्यते ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ पुराकृतानिपा
पानिफलंत्यत्रयुधिष्ठिर ॥ रोगदौर्गत्यरूपेणतथैवेष्टविघातनैः ॥ २ ॥ तद्विघातायवक्ष्यामिसदाकल्याणसप्तमीम् ॥ सप्तमीस्नपनं
नामव्याधिपीडाविनाशनम् ॥ ३ ॥ बालानांमरणंयत्रक्षीरपानंप्रशस्यते ॥ तद्वद्वृद्धातुराणांचयौवनेनेवापिवर्ततताम् ॥ ४ ॥ शान्तये
तत्रवक्ष्यामिमृतवत्सादिकेचयत् ॥ एतदेवाद्भुतोद्वेगचिंताविभ्रममानसम् ॥ ५ ॥ वराहकल्पेसंप्राप्तेमनोर्वैवस्वतेंऽतरे ॥ कृतेयुगेमहा
राजहैहयोरूपवर्द्धनः ॥ ६ ॥ आसीन्नृपोत्तमःपूर्वंकृतवीर्यःप्रतापवान् ॥ सप्तद्वीपमखिलंपालयामासभूतलम् ॥ ७ ॥ यावद्वर्ष
सहस्राणिसप्तसप्ततिभारत ॥ जातमात्रंचतस्याथशुभंपुत्रशतंकिल ॥ ८ ॥ यवनस्यतुशापेनविनाशमगमत्पुरा ॥ कृतवीर्यःस
माराध्यसहस्रांशुंदिवाकरम् ॥ ९ ॥ उपवासव्रतैर्दिव्यैर्वेदसूक्तैश्चभारत ॥ दर्शयामासचात्मानंकृतवीर्यस्यभानुमत् ॥ १० ॥
कृतवीर्येणवैपृष्टःप्रोवाचेदंबृहस्पतिः ॥ अतिक्लेशेनमहतापुत्रस्तवनराधिप ॥ ११ ॥ भविष्यतिचिरंजीवीकिंतुकल्मषनाशनम् ॥
सप्तमीस्नपनंवाप्यांकुरुपापविनष्टये ॥ १२ ॥ यातस्यमृतवत्सायाःसप्तमेमासिभूपते ॥ गृहताराबलंलब्ध्वाकृत्वाब्राह्मणवाचनम् ॥ १३ ॥

१ अतिक्रमेण–इ०पा० ।

वालस्यजन्मनक्षत्रंवर्जयेत्तांतिथिंबुधः ॥ सद्गुद्वातुरगाणांतुकृतंस्यादितितेषुच ॥ १४ ॥ गोमयेनोपलिप्तायांभूमावेकाग्रचितवान् ॥
तंदुलैरक्तशालेयैर्वरुणाक्षीरसंयुतम् ॥ १५ ॥ निर्वपेत्सूर्यमुद्राभ्यांमातृभ्योपिविधानतः ॥ कीर्तयेत्सूर्यदैवत्यंसप्तार्चिषिघृताहुतीः ॥१६॥
जुहुयाद्रुद्रसूक्तेनतद्वद्रुद्रायभारत ॥ होतव्याःसमिधश्चात्रतत्रवार्कपलाशजाः ॥ १७ ॥ यवकृष्णतिलैर्होमःकर्तव्योष्टशतंपुनः ॥ हुत्वा
स्नानंचकर्तव्यंमध्येगांगेनधीमता ॥ १८ ॥ विप्रेणवेदविदुषाविधिवद्दर्भपाणिना ॥ स्थापयित्वाचतुःकोणेचतुःकुंभान्प्रशोभनान् ॥ १९॥
पंचमंचपुनर्मध्येचाक्षतंचाविभूषितम् ॥ स्थापयेद्दर्पणाक्रांतंसप्तर्षिणाभिमंत्रितः ॥ २० ॥ सौरेणतीर्थतोयेनपूर्णचन्द्रमलान्वितान् ॥ सर्वा
न्सर्वौषधियुतान्पञ्चभंगजलान्वितान्॥२१॥पंचरत्नफलैर्युक्ताञ्छाखाभिरपिवेष्टितान्॥गजाश्वरथ्याराजद्वार्वल्मीकाद्ध्रदगोकुलात् ॥ २२ ॥
सुशुद्धिमृदमानीयसर्वेष्वेवविनिक्षिपेत् ॥ चतुर्ष्वपिचकुंभेषुरत्नगर्भेषुमध्यमम् ॥ २३ ॥ गृहीत्वाब्राह्मणंचात्रसौरान्मन्त्रानुदीरयेत् ॥
नारीभिःसतसंख्याभिरथाङ्गाङ्गाभिरत्रच॥२४॥भोजिताभिर्यथाशक्त्यामाल्यवस्त्रविभूषणैः॥सविप्राभिश्चकर्तव्यंमृतवत्साभिषेचनम्॥२५॥
दीर्घायुरस्तुबालोऽयंजीवपुत्राचभाविनी ॥ आदित्यचन्द्रमासार्धग्रहनक्षत्रमण्डलम् ॥ २६ ॥ शक्रःसलोकपालोवैब्रह्माविष्णुर्महेश्वरः ॥
एतेचान्येचवैदेवाःसदापांतुकुमारकम् ॥ २७ ॥ मासनिर्मासहुतभुङ्माचबालग्रहाःक्वचित् ॥ पीडांकुर्वंतुबालस्यमामातृजनकस्यवै ॥२८॥
ततःशुक्लाम्बरधराःकुमारंपतिसंयुताः ॥ सप्तकंपूजयेद्भक्त्यापुष्पैर्गन्धैःफलैःशुभैः ॥ २९ ॥ काञ्चनींचततःकृत्वातिलपात्रोपरिस्थितम् ॥
प्रतिमांधर्मराजस्यगुरवेविनिवेदयेत् ॥ ३० ॥ वस्त्रकाञ्चनरत्नौघैर्भक्ष्यैःसघृतपायसैः ॥ पूजयेद्ब्राह्मणांस्तद्वद्वित्तशाठ्यंविवर्जयेत् ॥
॥ ३१ ॥ भुक्त्वाचगुरुणायेयमुच्चार्यामंत्रसंततिः ॥ दीर्घायुरस्तुबालोऽयंयावद्वर्षशतंसुखी॥३२॥यत्किञ्चिदस्यदुरितंतत्क्षिप्तंवडवामुखे ॥
ब्रह्मारुद्रोविष्णुःस्कन्दोवायुःशक्रोहुताशनः ॥ ३३ ॥ रक्षंतुसर्वेदुष्टेभ्योवरदायांतुसर्वदा ॥ एवमादीनिचान्यानिवदतःपूजयेद्गुरून्॥ ३४ ॥
शक्तितःकपिलांदत्त्वाप्रणिपत्यविसर्जयेत् ॥ चरुंचपुत्रसहिताप्रणम्यरविशंकरौ ॥ ३५ ॥ हुतशेषंतदानीयादादित्यायनमोऽस्तुते ॥

१ दक्षिणम्-इ० पा० । २ कर्पूरसंयुतमित्यर्थः । ३ पंचभङ्गाःपंचपल्लवाः-इत्यर्थः ।

इदमेवाद्भुतंयोगमद्भुतेषुचशस्यते ॥ ३६ ॥ कर्तुर्जन्मनिवृक्षाणांदेवान्संपूजयेत्तदा ॥ शांत्यर्थंशुक्लसप्तम्यामेतत्कुर्वन्नसीदति ॥ ३७ ॥
पुण्यंपवित्रमायुष्यंसप्तमीस्नपनंरविः ॥ कथयित्वानरश्रेष्ठतत्रैवांतरधीयत ॥ ३८ ॥ सचानेनविधानेनकार्तवीर्योऽर्जुनोनृप ॥ संवत्स
राणामयुतंशशासपृथिवीमिमाम्॥आरोग्यंभास्करादिच्छेद्धनमिच्छेद्धुताशनात्॥३९॥शंकराज्ज्ञानमिच्छेत्तुगतिमिच्छेज्जनार्दनात् ॥४०॥
एतन्महापातकनाशनंस्यादप्यक्षयंवेदविदःपठंति ॥ शृणोतियश्चैनमनन्यचेतास्तस्यापिसिद्धिंमुनयोवदंति ॥ ४१ ॥ इतिश्रीभवि
ष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेस्नपनसप्तमीव्रतवर्णनंनामद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥
अध्रुवेणशरीरेणसुपक्केनापिकिंफलम् ॥ माघस्नानविहीनेनयत्त्यक्तंयदुनंदन ॥ १ ॥ प्रातःस्नानासमर्थानांशरीरंपश्यदेहिनाम् ॥
किंतेनवदकर्तव्यंमाघेसंसारभीरुणा ॥ २ ॥ कायक्लेशसहानायेनभवंतियदूत्तम ॥ सौकुमार्यंशरीरस्यअचलत्वात्तथैवच ॥ ३ ॥
कथंचताःसुरूपाःस्युःसुभगाःसुप्रजास्तथा ॥ सुकृतस्येहपुण्यस्यसर्वमेतत्फलंयतः ॥ ४ ॥ अल्पायासेनसुमहद्येनपुण्यमवाप्यते ॥
स्त्रीभिर्माघेममब्रूहिस्नानंतत्सुरमाधव॥५॥ ॥ श्रीकृष्णउवाच॥ ॥श्रूयतांपांडवश्रेष्ठरहस्यमृषिभाषितम् ॥ यन्मयाकस्यचिन्नोक्तमचलास
प्तमीव्रतम्॥६॥वेश्याचेंदुमतीनामरूपौदार्यगुणान्विता॥आसीत्कुरुकुलश्रेष्ठमगधस्यविलासिनी ॥७॥ तनुमध्यासुजघनीपीनोन्नतपयोधरा॥
सम्यग्विभक्तावयवापूर्णचन्द्रनिभानना ॥ ८ ॥ सौंदर्यसौकुमार्यंचतस्याःकामेनगीयते ॥ यस्याःसंदर्शनादेवकामःकामातुरोभवेत् ॥ ९ ॥
मूर्तिःशशधरस्येवनयनानन्दकारिणी ॥ वशीकरणविद्येवसर्वलोकमनोहरा ॥ १० ॥ एकस्मिन्दिवसेप्रातःसुसुखास्थितयातया ॥
चिन्तिताहृदयेराजन्संसारस्यानवस्थितिः ॥११॥ सन्निमज्ज्याजगदिदंविषयेकायसागरे ॥ जन्ममृत्युजराग्राहंनकश्चिदवबुद्ध्यते ॥१२॥
अपाकोभूतभाण्डानांधातृशिल्पिविनिर्मितम्॥ स्वकर्मेंधनसंवीतंपच्यतेबालवह्निना ॥ १३ ॥ येयांतिदिवसाःपुंसांधर्मकामार्थवर्जिताः ॥
नतेपुनरिहायांतिहरभक्तानरायथा ॥ १४ ॥ स्नानदानतपोहोमःस्वाध्यायःपितृतर्पणम् ॥ यस्मिन्दिनेनाक्रियतेवृथासादिवसोनृणाम् ॥
॥ १५ ॥ पुत्राणांदारगृहकसमासक्तंहिमानसम् ॥ वृकीवोरणमासाद्यमृत्युद्धारायगच्छति ॥ १६ ॥ इत्येवंचिंतयित्वातुवेश्याचेंदुमतीततः॥

वसिष्ठस्याश्रमंपुण्यंजगामगजगामिनी ॥ १७ ॥ वसिष्ठमृषिमासीनंप्रणम्यविनयात्ततः ॥ कृताञ्जलिपुटंकृत्वाइदंवचनमब्रवीत् ॥ १८ ॥
॥ इन्दुमत्युवाच ॥ दशसूनासमश्चक्रीदशचक्रिसमोध्वजः ॥ दशध्वजसमावेश्यादशवेश्यासमोनृपः ॥ १९ ॥ मयानदत्तंनहुतंनोपवास
व्रतंकृतम् ॥ भक्त्यानपूजितःशम्भुःश्रितोनैकोधनीनरः ॥ २० ॥ सांप्रतंवर्तमानायाव्रतंकिंचिद्वदस्वमे ॥ येनदुःखांबुपापौघादुत्तरामि
भवार्णवात् ॥ २१ ॥ एतदस्याःसुबहुशःश्रुत्वाधर्मपरंतपः ॥ वसिष्ठःकथयामासमहाकारुणिकोमुनिः ॥ २२ ॥ ॥ वसिष्ठउवाच ॥
माघस्यसितसप्तम्यांसर्वकामफलप्रदम् ॥ तपःसौभाग्यजननंस्नानंतववरानने ॥ २३ ॥ कृत्वाषष्ठ्यामेकभक्तंसप्तम्यांनिश्चलंजलम् ॥
रात्र्यंतेचालयेथास्त्वंदत्त्वाशिरसिदीपकम् ॥ २४ ॥ माघस्यसितसप्तम्यांमचलंचालितंमया ॥ जलामलानांसर्वेषांकृतंनचलनंतथा॥२५॥
वसिष्ठवचनंश्रुत्वातस्मिन्नेवाहनिनृप ॥ सर्वंचकारेन्दुमतीस्नानंदानंयथाविधि ॥ २६ ॥ त्र्यैहस्नानप्रभावेणभुक्त्वाभोग्यान्यथेप्सितान् ॥
इन्द्रलोकेऽप्सरःसंघेनायकत्वमवापसा ॥ २७ ॥ अचलासप्तमीस्नानंकथितंचविशांपते ॥ सर्वपापप्रशमनंसुखसौभाग्यवर्द्धनम् ॥ २८ ॥
॥ युधिष्ठिरउवाच ॥ सप्तमीस्नानमाहात्म्यंश्रुतंनचविशेषतः ॥ सांप्रतंश्रोतुमिच्छामिविधिमंत्रसमन्वितम् ॥ २९ ॥ ॥ श्रीकृष्णउवाच ॥
एकभक्तेनसंतिष्ठेत्षष्ठ्यांसंपूज्यभास्करम् ॥ सप्तम्यांतुव्रजेत्प्रातःसुगंभीरंजलाशयम् ॥ ३० ॥ सरित्संगंतडागंचदेवखातमथापिवा ॥ सुखा
वगाहसलिलंदुष्टसत्वैरदूषितम् ॥३१॥ पशुभिःपक्षिभिश्चैवजलजैर्मत्स्यकच्छपैः॥ नजलंचाल्यतेयावत्तावत्स्नानंसमाचरेत् ॥३२॥ नमस्ते
रुद्ररूपायरसानांपतयेनमः ॥ वरुणायनमस्तेऽस्तुहरिवासनमोऽस्तुते ॥ ३३ ॥ यावज्जन्मकृतंपापंमयाजन्मसुसप्तसु ॥ तन्मेरोगंचशो
कंचमाकरीहंतुसप्तमी ॥ ३४ ॥ जननीसर्वभूतानांसप्तमीसप्तसप्तिके ॥ सर्वव्याधिहरेदेविनमस्तेरविमंडले ॥ ३५ ॥ जलोपरितरंदीपंस्ना
त्वासंतर्प्यदेवताः ॥ चंदनेनलिखेत्पद्ममष्टपत्रंसकर्णिकम् ॥ ३६ ॥ मध्येशर्वंसपत्नीकंप्रणवेनतुपूजयेत् ॥ भानुंशक्रेदलेपूज्यरविंवैश्वान
रेदले ॥ ३७ ॥ याम्येविवस्वान्नैर्ऋत्येभास्करस्येतिपूजयेत् ॥ पश्चिमेसवितापूज्यःपूज्योर्कोवायुनाजले ॥ ३८ ॥ सौम्येसहस्राकिरणःशेषे

१ श्रितःआश्रित इत्यर्थः । २ अहो स्नानप्रभावेण–इ०पा० ।

सर्वात्मनेतिच ॥ पूज्याःप्रणवपूर्वास्तुनमस्कारांतयोजिताः ॥ ३९ ॥ पुष्पैःसुगन्धधूपैश्चवस्त्रेणाच्छाद्यभास्करम् ॥ विसर्जयेत्ततःपश्चात्स्व
स्थानंगम्यतामिति ॥ ४० ॥ ताम्रपात्रेसुविस्तीर्णेमृन्मयेवायुधिष्ठिर ॥ स्थापयेत्तिलचूर्णंचसघृतंसगुडंतथा ॥४१॥ काञ्चनंतालकंकृत्वाह्य
सिक्तस्तिलचूर्णकम् ॥ संस्थाप्यरक्तवस्त्रैस्तुपुष्पैर्धूपैस्तथार्चयेत् ॥४२॥ ततस्तंब्राह्मणेदद्यादत्वामंत्रेणतालकम् ॥ आदित्यस्यप्रसादेनप्रातः
स्नानफलंलभेत् ॥४३॥ दुष्टदौर्भाग्यदुःखेभ्योमयादत्तंतुतालकम् ॥ ततस्तंतालकंकृत्वाब्राह्मणायोपपादयेत् ॥४४॥ सपुत्रपशुभृत्यायमेऽर्को
यंप्रीयतामिति ॥ ततोव्रतोपदेष्टारंपूजयेद्वस्त्रगोतिलैः ॥ ४५ ॥ विप्रानन्यान्यथाशक्त्यापूजयित्वागृहंव्रजेत् ॥ एतत्तेकथितंकार्यंरूपसौभा
ग्यकारकम् ॥ ४६ ॥ अचलासप्तमीस्नानंसर्वकामफलप्रदम् ॥ ४७ ॥ इतिपठतियइत्थंयःशृणोतिप्रसंगात्कलिकलुषहरंवैसप्तमीस्ना
नमेतत् ॥ मतिमपिनयनानांयोददातिप्रसंगात्सुरभवनगतोऽसौपूज्यतेदेवसंघैः ॥ ४८ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणि
श्रीकृष्णयुधिष्ठिरसंवादेऽचलासप्तमीव्रतविधिवर्णनंनामत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ छ ॥ ॥ ॥ श्रीकृष्णउवाच ॥
बुधाष्टमीव्रतंभूयोब्रवीमिशृणुपांडव ॥ येनचीर्णेननरकंनरःपश्यतिनक्वचित् ॥ १ ॥ पुराकृतयुगस्यादौइलोराजाबभूवह ॥ बहुभृ
त्यसुहृन्मित्रमंत्रिभिःपरिवारितः ॥ २ ॥ जगामहिमवत्पार्श्वंमहादेवेनवारितः ॥ योऽन्यःप्रविशतेभूमौसास्त्रीभवतिनिश्चितम् ॥ ३ ॥
सराजामृगसंगेनप्राविशत्तद्रुमावने ॥ एकाकीतुरगोपेतःक्षणात्स्त्रीत्वंजगामह ॥ ४ ॥ सावभ्रामवनेशून्येपीनोन्नतपयोधरा ॥ कुतोऽहमागते
त्येवंनत्वबुध्यतकिंचन ॥ ५ ॥ तांददर्शबुधःसौम्यांरूपौदार्यगुणान्विताम् ॥ अष्टम्यांबुधवारेणतस्यास्तुष्टोबुधोग्रहः ॥ ६ ॥
दधौगर्भंतदुदरेइलायारूपतोषितः ॥ पुत्रमुत्पादयामासयोऽसौख्यातःपुरूरवाः ॥ ७ ॥ चंद्रवंशकरोराजाआद्यःसर्वमहीक्षिताम् ॥
ततःप्रभृतिपूज्येयमष्टमीबुधसंयुता ॥ ८ ॥ सर्वपापप्रशमनीसर्वोपद्रवनाशिनी ॥ अथान्यदपितेवच्मिधर्मराजकथानकम् ॥ ९ ॥
आसीद्राजाविदेहानांमिथिलायांसवैरिभिः ॥ संग्रामेनिहतोवीरस्तस्यभार्यादरिद्रिणी ॥ १० ॥ ऊर्मिलानामबभ्राममहींबालकसंयुता ॥
अवंतीविषयंप्राप्तब्राह्मणस्यनिवेशने ॥ ११ ॥ चकारोदरपूर्त्यर्थंनित्यंकंडनपेषणे ॥ हृत्वासास्तोकगोधूमान्ददौबालकयोस्तदा ॥ १२ ॥

कारुण्यान्मातृवात्सल्यात्क्षुधासंपीड्यमानयोः ॥ कालेनबहुनासाध्वीपंचत्वमगमच्छुभा ॥१३॥ पुत्रस्तस्याविदेहायांगत्वास्वपितुरासने॥
उपविष्टःसत्वयोगाद्बुभुजेगामनाकुलः ॥ १४ ॥ अन्विष्यधर्मराज्ञोवैसाकन्यामिथिवंशजा ॥ विवाहिताहिताभर्तुःसामहानायिकाऽभवत् ॥
॥ १५ ॥ श्यामलानामचार्वंगीप्रसिद्धाश्रूयतेश्रुतौ ॥ तामुवाचवरारोहांधर्मराजःस्वयंप्रियाम् ॥ १६ ॥ वहस्वसर्वव्यापारंश्यामलेत्वंगृहेमम
॥ कुरुस्वजनभृत्यानांदानक्षेपंयथेप्सितम् ॥ १७॥ किंत्वेतेपंजराःसप्तकीलकैरतियंत्रिताः ॥ कदाचिदपिनोद्घाट्यास्त्वयावैदेहनंदिनि ॥
॥ १८ ॥ एवमस्त्वितिसाप्युक्तानिजंकर्मचकारह ॥ कदाचिद्व्याकुलीभूतेधर्मराजेविदेहजा ॥ १९ ॥ उद्घाटयित्वाप्रथमंददर्श
जननींस्वकाम् ॥ सापच्यमानाक्रंदंतीभीषणैर्यमकिंकरैः ॥ २० ॥ हेलयाक्षिप्यतेबद्धातप्ततैलेपुनःपुनः ॥ तथैवतालकंदत्वाव्री
डितासामनस्विनी ॥ २१ ॥ द्वितीयेपंजरेतद्वन्मातामेवददर्शह ॥ सुधावच्छिप्यमानांतांशिलातलपेष्टकेनतु ॥२२॥ तृतीयपंजरेतद्वत्तांददर्श
स्वमातरम् ॥ क्रकचैःपाट्यतेमूर्ध्निघंटायुक्तैःकरोल्बणैः ॥ २३ ॥ चतुर्थेपंजरेस्थानेभीषणैर्दारुणाननैः ॥ भक्ष्यमाणैःश्वापदैश्चक्रंदं
तींतांपुनःपुनः॥२४॥पंचमेनिहितांभूमौकंठेपादेनपीडिताम् ॥ संदंशैर्वनघातैश्चविदीर्णाक्रियतेरुषा ॥२५॥षष्ठेचेक्षुयन्त्रगतांमस्तकेमुद्गराह
ताम्॥संपीड्यमानामनिशंसुदृढाखंडखंडवत् ॥ २६ ॥ सप्तमेपंजरेचीर्णस्वनांपूतिसुगंधिनीम् ॥ दृष्ट्वातथागतांतांतुमातरंदुःखकर्षिता ॥
॥२७॥श्यामलाम्लानवदनाकिंचिन्नोवाचभामिनी॥अथागतंयमंप्राहसरोषाश्यामलापतिम् ॥२८॥ किंतवापहृतंराजन्ममयमात्रासुदारुणम्॥
येनेयंविविधैर्घातैर्बध्यतेबहुधात्वया ॥ २९ ॥ यमःप्राहप्रियांदृष्ट्वाभद्रेह्युद्घाटितास्त्वया ॥ एतेपंजरकाःसप्तनिषिद्धात्वंमयापुरा ॥ ३० ॥
तवमात्रासुतस्नेहाद्गोधूमायेहृताःकिल ॥ किंनजानासितेभद्रेयेनरुष्टाममोपरि ॥ ३१ ॥ ब्रह्मस्वंप्रणयाद्भुक्तंदहत्यासप्तमंकुलम् ॥ तदेवचौ
र्यरूपेणदहत्याचंद्रतारकम् ॥३२॥ गोधूमास्तइमेभूताःकृमिरूपाःसुदारुणाः ॥ येपुराब्राह्मणगृहेहृतास्तत्रकृतेऽनया ॥ ३३ ॥ श्यामलो
वाच ॥ जानामितदहंसर्वंयन्मेमात्राकृतंपुरा ॥ तथापित्वांसमासाद्यसाचजामातरंशुभम् ॥३४॥ मुच्यतेकृमिराशित्वाद्यथातदधुनाकुरु ॥
तच्छ्रुत्वाचिंतयाविष्टश्चिरंस्थित्वाजगादताम्॥३५॥धर्मराजःसहासीनांप्रियांप्राणधनेश्वरीम्॥ इतश्चसप्तमेऽतीतेजन्मनिब्राह्मणीशुभा ॥३६॥

आसीत्तस्मिंस्त्वयासंगात्सखीनांपर्युपासिता ॥ बुधाष्टमीसुसंपूर्णायथोक्तफलदायिनी ॥३७॥ तत्फलंयदिदास्यस्यैसत्यंकृत्वाममाग्रतः ॥
तेनमुच्येततेमातानरकात्पापसंकटात्॥३८॥तच्छ्रुत्वात्वरितंस्नात्वाददौपुण्यंस्वकंकृतम्॥स्वमातुःश्यामलातुष्टातेनमोक्षंजगामसा॥३९॥
ऊर्मिलारूपसंपन्नादिव्यदेहधराशुभा ॥ विमानवरमारूढादिव्यमाल्यांबरावृता ॥ ४० ॥ भर्तुःसमीपेस्वर्गस्थादृश्यतेऽद्यापिसाजनैः ॥
बुधस्यपार्श्वेनभसिमिथिराजसमीपतः ॥ ४१ ॥ विस्फुरंतीमहाराजबुधाष्टम्याःप्रभावतः ॥ ४२ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ यद्येवंप्रव
राकृष्णसातिथिर्वैबुधाष्टमी ॥ तस्याएवविधिंब्रूहिविधानंचविशेषतः ॥ ४३ ॥ तस्याएवविधिंब्रूहियादितुष्टोऽसिमेप्रभो ॥ ४४ ॥ ॥ श्रीकृष्ण
उवाच ॥ ॥ शृणुपांडवयत्नेनबुधाष्टम्याविधिंशुभम् ॥ यदायदासिताष्टम्यांबुधवारोभवेद्यदि ॥ ४५ ॥ तदातदाचसाग्राह्याएकभक्ता
शनैर्नृभिः ॥ स्नात्वानद्यांतुपूर्वाह्णेगृहीत्वाकलशंनवम् ॥ ४६ ॥ जलपूर्णंतुसद्रव्यंपूर्णपात्रसमन्वितम् ॥ अष्टवारंप्रकर्तव्याविधानैस्तुपृथ
क्पृथक् ॥४७॥ प्रथमामोदकैःकार्याद्वितीयाफेणकैस्तथा ॥ तृतीयाघृतपूपैश्चचतुर्थीवटकैर्नृप ॥४८ ॥ पंचमीशुभ्रकारैश्चषष्ठीसोहालकैस्त
था ॥ अशोकवर्तिभिःशुभ्रैःसप्तमीखंडसंयुतैः ॥ ४९ ॥ अष्टमीफलपुष्पैश्चकेवलाखंडफेणिकैः ॥ एवंक्रमेणकर्तव्याःसुहृत्स्वजनबांधवैः ॥
॥ ५० ॥ सहकृत्वास्थितैर्भोज्यंभोक्तव्यंस्वस्थमानसैः ॥ उपोष्याणामिदंश्रेष्ठंकथयद्भिःशनैःशनैः ॥ ५१ ॥ श्रुत्वाष्टमीबुधस्यापिमाहात्म्यं
भोजनंत्यजेत् ॥ तावदेवहिभोक्तव्यंकथायावत्समाप्यते ॥ ५२ ॥ तथासुक्त्वाबुधस्याग्रेआचम्यचपुनःपुनः ॥ विप्रायवेदविदुषेतंब्रुवन्प्र
तिपादयेत् ॥ ५३ ॥ साक्षतंसहिरण्यंचजातरूपमयंशुभम् ॥ अर्चितंविविधैःपुष्पैर्धूपदीपैःसुगंधिभिः ॥ ५४ ॥ पीतवस्त्रैःसमाच्छन्नंबुधंसो
मात्मजाकृतिम् ॥ माषकेणसुवर्णेनतदर्धार्धेनवापुनः ॥५५॥ ॥ ॐबुधायनमः ॥ ॥ ॐसोमात्मजायनमः ॥ ॥ ॐदुर्बुद्धिनाशनायनमः ॥
ॐसुबुद्धिप्रदायनमः ॥ ॥ ॐताराजातायनमः ॥ ॥ ॐसौम्यग्रहायनमः ॥ ॥ ॐसर्वसौख्यप्रदायनमः ॥ ॥ एतेपूजामंत्राः ॥
अष्टमीतुयदापूर्णातदाराजर्षिसत्तम ॥ ब्राह्मणान्भोजयेदष्टौगांदद्याच्चसवत्सकाम् ॥ ५६ ॥ वस्त्रालंकरणैःसर्वैर्भूषणैर्विविधैरपि ॥ सपत्नी
कंसमभ्यर्च्यकर्णमात्रांगुलीयकैः ॥ ५७ ॥ मंत्रेणानेनकौंतेयदद्यादेवंसमाचरन् ॥ बुधोऽयंप्रतिगृह्णातुद्रव्यस्थोऽयंबुधःस्वयम् ॥ ५८ ॥

दीयतेबुधराजायतुष्यतांचबुधोमम ॥ ५९ ॥ ॥ इति दानमंत्रः ॥ ॥ बुधःसौम्यस्तारकेयोराजपुत्रइलापतिः ॥ कुमारोद्विजराजस्ययः
पुरूरवसःपिता ॥ ६० ॥ ॥ इतिप्रतिग्रहणमंत्रः ॥ ॥ दुर्बुद्धिबाधजनितंनाशयित्वाचमेबुधः ॥ सौख्यंचसौमनस्यंचकरोतुशशिनंदनः ॥
॥ ६१ ॥ इत्युच्चार्यगृहीत्वातुदद्यान्मंत्रपुरःसरम् ॥ सप्तजन्मनिराजेन्द्रजातोजातिस्मरोभवेत् ॥ ६२ ॥ धनधान्यसमायुक्तःपुत्रपौत्रप्रवर्द्ध
नम् ॥ दीर्घायुर्विपुलान्भोगान्भुक्त्वाचैवमहीतले ॥ ६३ ॥ ततःसुतीर्थेमरणंध्यात्वानारायणंविभुम् ॥ मृतोऽसौस्वर्गमाप्नोतिपुरंदरसमोन
रः ॥ ६४ ॥ वसतेयावदासृष्टेःपुनराभूतसंप्लवम् ॥ एवमेतन्मयाख्यातंव्रतानामुत्तमंव्रतम् ॥ ६५ ॥ एतदेवमयाख्यातंगुह्यंपार्थबुधाष्टमी ॥
यांश्रुत्वाब्रह्महागोघ्नःसर्वपापैःप्रमुच्यते ॥ ६६ ॥ यश्चाष्टमींबुधयुतांसमवाप्यभक्त्यासंपूजयेद्विधुसुतंकनपृष्ठसंस्थम् ॥ पक्वान्नपात्रसहितैः
सहिरण्यवस्त्रैःपश्येदसौयमपुरंनकदाचिदेव ॥ ६७ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेबुधाष्टमीव्रतवर्ण
नंनामचतुःपंचाशतमोऽध्यायः ॥ ५४ ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ जन्माष्टमीव्रतंब्रूहिविस्तरेणममाच्युत ॥ कस्मिन्कालेसमुत्प
न्नंकिंपुण्यंकोविधिःस्मृतः ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ हतेकंसासुरेदुष्टेमथुरायांयुधिष्ठिर ॥ देवकीमांपरिष्वज्यकृत्वोत्संगेरुरोदह ॥
॥ २ ॥ तत्रैवरंगवाटेनमंचारूढजनोत्सवे ॥ मल्लयुद्धेपुरावृत्तेसमेतेकुकुराऽन्धके ॥ ३ ॥ स्वजनैर्बंधुभिःस्निग्धैःसमंस्त्रीभिःसमावृते ॥ वसु
देवोऽपितत्रैववात्सल्यात्प्ररुरोदह ॥ ४ ॥ समाकृष्यपरिष्वज्यपुत्रपुत्रेत्युवाचह ॥ सगद्गदस्वरोदीनोबाष्पपर्याकुलेक्षणः ॥ ५ ॥ बल
भद्रंचमांचैवपरिष्वज्यमुदापुनः ॥ अद्यमेसफलंजन्मजीवितंयत्सुजीवितम् ॥ ६ ॥ यदुभाभ्यांसुपुत्राभ्यांसमुद्भूतःसमागमः ॥ एवंवर्षेणदां
पत्येहृष्टंपुष्टंतथाह्यभूत् ॥७॥ प्रणिपत्यजनाःसर्वेबभूवुस्तेप्रहर्षिताः ॥ एवंमहोत्सवंदृष्ट्वामामाहसकलोजनः ॥८॥ प्रसादःक्रियतांनाथलोक
स्यास्यप्रसादतः ॥ यस्मिन्दिनेजगन्नाथदेवकीत्वामजीजनत् ॥ ९ ॥ तद्दिनेदेहिवैकुंठंकुर्मस्तेत्रनमोनमः ॥ सम्यग्भक्तिप्रपन्नानांप्रसादंकु
रुकेशव ॥ १० ॥ एवमुक्तेजनौघेनवसुदेवोऽतिविस्मितः ॥ विलोक्यबलभद्रंचमांचकृत्वारुरोदह ॥ ११ ॥ एवमस्त्वितिलोकानांकथय
स्वयथातथा ॥ ततश्चपितुरादेशात्तथाजन्माष्टमीव्रतम् ॥ १२ ॥ मथुरायांजनौघाग्रेपार्थसम्यक्प्रकाशितम् ॥ पौरजनाजन्मदिनंवर्षेवर्षेम

मोदितम् ॥ १३ ॥ पुनर्जन्माष्टमींलोकेकुर्वंतुब्राह्मणादयः ॥ क्षत्रियावैश्यजातीयाःशूद्रायेन्येऽपिधार्मिकाः ॥ १४ ॥ सिंहराशिगतेसूर्येगगने
जलदाकुले ॥ मासिभाद्रपदेऽष्टम्यांकृष्णपक्षेऽर्धरात्रिके ॥ १५ ॥ वृषराशिस्थितेचन्द्रेनक्षत्रेरोहिणीयुते ॥ वसुदेवेनदेवक्यामहंजातोज
नाःस्वयम् ॥ १६ ॥ एवमेतत्समाख्यातंलोकेजन्माष्टमीव्रतम् ॥ भगवत्पार्श्वतोराजन्बहुरूपंमहोत्सवम् ॥ १७ ॥ मथुरायास्ततःपश्चाल्लोके
ख्यातिंगमिष्यति ॥ शांतिरस्तुसुखंचास्तुलोकाःसंतुनिरामयाः ॥ १८ ॥ युधिष्ठिरउवाच ॥ तत्कीदृशंव्रतंदेवलोकेःसर्वैरनुष्ठितम् ॥ जन्मा
ष्टमीव्रतंनामपवित्रंपुरुषोत्तम ॥ १९ ॥ येनत्वंतुष्टिमायासिलोकानांप्रभुरव्ययः ॥ एतन्मेभगवन्ब्रूहिप्रसादान्मधुसूदन ॥ २० ॥ श्रीकृष्णउ
वाच॥पार्थतद्दिवसेप्राप्तेदंतधावनपूर्वकम्॥उपवासस्यनियमंगृह्णीयाद्भक्तिभावितः॥२१॥ एकेनैवोपवासेनकृतेनकुरुनंदन॥सप्तजन्मकृतंपापं
मुच्यतेनात्रसंशयः ॥ २२ ॥ उपावृत्तस्यपापेभ्योयस्तुवासोगुणैःसह ॥ उपवासःसविज्ञेयःसर्वभोगविवर्जितः ॥ २३ ॥ ततःस्नात्वाचम
ध्याह्नेनद्यादौविमलेजले ॥ देव्याःसुशोभनंकुर्याद्देवक्याःसूतिकागृहम् ॥ २४ ॥ पद्मरागैःपत्रनेत्रैर्मंडितंचर्चितंशुभैः ॥ रम्यंतुवनमालाभी
रक्षामणिविभूषितम् ॥ २५ ॥ सर्वंगोकुलवत्कार्यंगोपीजनसमाकुलम् ॥ घण्टामर्दलसङ्गीतमाङ्गल्यकलशान्वितम् ॥ २६ ॥ यवार्धस्वस्ति
काकुडचैःशङ्खवादित्रसंकुलम् ॥ बद्धासुरालोहखड्गैःप्रियच्छागसमन्वितम् ॥ २७ ॥ धान्येविन्यस्यमुशलंरक्षितंरक्षपालकैः ॥ षष्ठ्यादे
व्याश्चसंपूर्णैर्नैवेद्यैर्विविधैःकृतैः ॥ २८ ॥ एवमादियथाशेषंकर्तव्यंसूतिकागृहम् ॥ एतन्मध्येप्रतिष्ठाप्यासाचाप्यष्टविधास्मृता ॥ २९ ॥
काञ्चनीराजतीताम्रीपैत्तलीमृन्मयीतथा ॥ दार्वीमणिमयीचैवकर्णिकालिखिताथवा ॥ ३० ॥ सर्वलक्षणसंपन्नापर्यंकेश्वार्द्धसुप्तिका ॥ प्रतप्त
काञ्चनाभासामयासहतपस्विनी ॥ ३१ ॥ प्रस्तुताचप्रसूताचतत्क्षणाच्चप्रहर्षिता ॥ मांचापिबालकंसुप्तंपर्यंकेस्तनपायिनम् ॥ ३२ ॥
श्रीवत्सवक्षसंपूर्णंनीलोत्पलदलच्छविम् ॥ यशोदाचापितत्रैवप्रसूतावरकन्यकाम् ॥ ३३ ॥ तत्रदेवगृहंनागायक्षविद्याधरानराः ॥ प्रणताः
पुण्यमालाग्रव्यग्रहस्ताःसुरासुराः ॥३४॥ संचरंतइवाकाशेप्राकारैरुदितोदितैः ॥ वसुदेवोऽपितत्रैवखड्गचर्मधरःस्थितः ॥३५॥ कश्यपोवसुदे
वोयमदितिश्चापिदेवकी ॥ शेषनागोबलीभद्रोयशोदादित्यजायत ॥ ३६ ॥ नन्दःप्रजापतिर्दक्षोगर्गश्चापिचतुर्मुखः ॥ एषोवतारोराजेन्द्रकं

सोऽयंकालनेमिजः ॥ ३७ ॥ तत्रकंसनियुक्तायेदानवाविविधायुधाः ॥ तेचप्राहारिकाःसर्वेसुप्तानिद्राविमोहिताः ॥ ३८ ॥ गोधेनुकुञ्जराश्वा
स्यदानवाःशस्त्रपाणयः ॥ नृत्यंत्यप्सरसोहृष्टागंधर्वागीततत्पराः ॥ ३९ ॥ लेखनीयश्चतत्रैवकालियोयमुनाह्रदे ॥ रम्यमेवविधिंकृत्वादेवकीं
नवसूतिकाम् ॥ ४० ॥ तांपार्थपूजयेद्भक्त्यागन्धपुष्पाक्षतैःफलैः ॥ कूष्माण्डैर्नालिकेरैश्चखर्जूरैर्दाडिमीफलैः ॥ ४१ ॥ बीजपूरैःपूगफलैर्लं
कुचैस्त्रपुसैस्तथा ॥ कालदेशोद्भवैर्मृष्टैःपुष्पैश्चापियुधिष्ठिर ॥ ४२ ॥ ध्यात्वावतारंप्रागुक्तंमंत्रेणानेनपूजयेत् ॥ ४३ ॥ गायद्भिःकिन्नराद्यैः
सततपरिवृतावेणुवीणानिनादैर्भृङ्गारादर्शकुम्भप्रवरकृतकरैःसेव्यमानामुनीन्द्रैः ॥ पर्यंकेस्वास्तृतेयामुदिततरमनाःपुत्रिणीसम्यगास्तेसादे
वीदेवमाताजयतिसुवदनादेवकीकांतरूपा ॥ ४४ ॥ पादावभ्यंजयंतीश्रीर्देवक्याश्चरणांतिके ॥ निषण्णापङ्कजेपूज्यानमोदेव्यैचमंत्रतः ॥
॥ ४५ ॥ ॐदेवक्यैनमः ॥ ॐवसुदेवायनमः ॥ ॐबलभद्रायनमः ॥ ॐश्रीकृष्णायनमः ॥ ॐसुभद्रायैनमः ॥ ॐनन्दायनमः ॥ ॐयशोदा
यैनमः ॥ ॥ एवमादीनिनामानिसमुच्चार्यपृथक्पृथक् ॥ पूजयेयुर्द्विजाःसर्वेस्त्रीशूद्राणाममंत्रकम् ॥४६॥ विध्यंतरमपीच्छंतिकेचिदत्रद्विजो
त्तमाः ॥ चन्द्रोदयेशशाङ्कायअर्घ्यंदद्याद्धरिंस्मरेत् ॥ ४७ ॥ अनघंवामनंशौरिंवैकुंठंपुरुषोत्तमम् ॥ वासुदेवंहृषीकेशंमाधवंमधुसूदनम् ॥
॥ ४८ ॥ वाराहंपुण्डरीकाक्षंनृसिंहंब्राह्मणप्रियम् ॥ दामोदरंपद्मनाभंकेशवंगरुडध्वजम् ॥ ४९ ॥ गोविन्दमच्युतंकृष्णमनंतमपराजितम् ॥
अधोक्षजंजगद्बीजंसर्गस्थित्यंतकारणम् ॥ ५० ॥ अनादिनिधनंविष्णुंत्रैलोक्येशंत्रिविक्रमम् ॥ नारायणंचतुर्बाहुंशंखचक्रगदाधरम् ॥५१॥
पीतांबरधरंनित्यंवनमालाविभूषितम् ॥ श्रीवत्साङ्कंजगत्सेतुंश्रीधरंश्रीपतिंहरिम्॥५२॥ योगेश्वरराययोगेशभवाययोगपतयेगोविन्दायनमोन
मः ॥ इतिस्नानमन्त्रः ॥ यज्ञेश्वररायज्ञसंभवाययज्ञपतयेगोविन्दायनमोनमः ॥ ५३ ॥ इत्यनुलेपनार्घ्याद्यर्चनधूपमंत्रः ॥ विश्वायविश्वेश्वरा
यविश्वसंभवायविश्वपतयेगोविन्दायनमोनमः ॥ ५४ ॥ इतिनैवेद्यमन्त्रः ॥ धर्मेश्वरायधर्मपतयेधर्मसंभवायगोविंदायनमोनमः ॥ ५५ ॥ इति
दीपासनमंत्रः ॥ क्षीरोदार्णवसंभूतअत्रिनेत्रसमुद्भव॥गृहाणार्घ्यंशशाङ्केन्दोरोहिण्यासहितोमम ॥५६॥ स्थंडिलेस्थापयेद्देवंसचन्द्रांरोहिणींत

१ पाद्यार्घ्यैः-इ० पा० ।

था॥देवकींवसुदेवंचयशोदांनन्दमेवच॥५७॥बलदेवंतथापूज्यसर्वपापैःप्रमुच्यते॥अर्द्धरात्रेवसोर्द्धारांपातयेद्गुडसर्पिषा ॥५८॥ ततोवर्द्धापनंष
ष्ठीनामादिकरणंक्षम॥कर्तव्यंतत्क्षणाद्रात्रौप्रभातेनवमीदिने॥५९॥यथाममतथाकार्यंभगवत्यामहोत्सवम्॥ ब्राह्मणान्भोजयेच्छक्त्यातेभ्योद
द्याच्चदक्षिणाम्॥६०॥हिरण्यंकाञ्चनंगावोवासांसिकुसुमानिच॥यद्यदिष्टतमंतत्तत्कृष्णोमेप्रीयतामिति ॥६१॥ यदेवंदेवकीदेवीवसुदेवादजीज
नत्॥भौमस्यब्रह्मणोगुप्त्यैतस्मैब्रह्मात्मनेनमः ॥६२॥ सुजन्मवासुदेवायगोब्राह्मणहितायच ॥ शान्तिरस्तुशिवंचास्तुइत्युक्त्वातुविसर्जयेत्
॥६३॥ एवंयःकुरुतेदेव्यादेवक्याःसुमहोत्सवम् ॥ वर्षेवर्षेभगवतोमद्भक्तोधर्मनन्दन ॥ ६४ ॥ नरोवायदिवानारीयथोक्तफलमाप्नुयात् ॥
पुत्रसंतानमारोग्यंधनधान्यादिसद्गृहम् ॥ ६५ ॥ शालीक्षुयवसंपूर्णमण्डलंसुमनोहरम् ॥ तस्मिन्राष्ट्रेप्रभुर्भुंक्तेदीर्घायुर्मनसेप्सितान् ॥
॥ ६६ ॥ परचक्रभयंनास्तितस्मिन्राज्येऽपिपाण्डव ॥ पर्जन्यःकामवर्षीस्यादीतिभ्योनभयंभवेत् ॥ ६७ ॥ यस्मिन्गृहेपांडुपुत्रक्रियतेदेव
कीव्रतम् ॥ नतत्रमृतनिष्क्रांतिर्नगर्भपतनंतथा ॥६८॥ नचव्याधिभयंतत्रभवेदितिमतिर्मम ॥ नवैद्यजनसंयोगोनचापिकलहोगृहे ॥६९॥
संपर्केणापियःकश्चित्कुर्याज्जन्माष्टमीव्रतम् ॥ विष्णुलोकमवाप्नोतिसोऽपिपार्थनसंशयः ॥ ७० ॥ जन्माष्टमीजनमनोनयनाभिरामापापा
पहासपदिनंदितनंदगोपात् ॥ योदेवकींसदयितांजयतीहतस्यांपुत्रानवाप्यसमुपैतिपदंसविष्णोः ॥ ७१ ॥ इतिश्रीभविष्येमहापुराणेउत्त
रपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेजन्माष्टमीव्रतवर्णनंनामपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शुक्लेभाद्र
पदेचैवपक्षेऽष्टम्यांयुधिष्ठिर ॥ दूर्वाष्टमीव्रतंपुण्यंयःकुर्याच्छ्रद्धयान्वितः ॥ १ ॥ नतस्यक्षयमाप्नोतिसंतानंसप्तपौरुषम् ॥ नंदतेवर्द्धतेनित्यं
यथापूर्वंतथाकुलम् ॥ २ ॥ युधिष्ठिरउवाच ॥ कुतएषासमुत्पन्नादूर्वाकस्माच्चिरायुषा ॥ कस्माच्चसापवित्राचलोकनाथब्रवीहिमे ॥ ३ ॥
॥श्रीकृष्णउवाच॥क्षीरोदसागरेपूर्वंमथ्यमानेमृतार्थिना॥विष्णुनाबाहुजंघाभ्यांयद्धृतोमन्दरोगिरिः॥४॥भ्रमितोवैसवेगेनरोमाण्युद्धर्षितानिवै॥
तान्येतानिजलोर्मीभिरुत्क्षिप्तानितदर्णवात् ॥५॥ अजायतशुभादूर्वारम्याहरितशाद्वला ॥ एवमेषासमुत्पन्नादूर्वाविष्णुतनूरुहा ॥ ६ ॥ त
स्याश्चोपरिविन्यस्तंमथितामृतमुत्तमम् ॥ देवदानवगन्धर्वैर्यक्षविद्याधरैस्तथा ॥७॥ तत्राप्यमृतकुंभस्यपेतुर्निष्यंदबिंदवः ॥ तैरियंस्पृष्टमा

त्राभूद्दूर्वारस्याऽजराऽमरा ॥ ८ ॥ वंद्यापवित्रादेवैस्तुवंदिताभ्यर्चितापुरा ॥ अष्टम्यांफलपुष्पैस्तुखर्जूरैर्नारिकेरकैः ॥ ९ ॥ द्राक्षाक्षोट
कपित्थैश्चबर्बरैर्लकुचैस्तथा ॥ नारिंगैर्जंबुकैराम्रैर्बीजपूरैश्चदाडिमैः ॥ १० ॥ दध्यक्षतैःसुपुष्पैश्चधूपनैवेद्यदीपकैः ॥ मंत्रेणानेनराजेन्द्रशृ
णुष्वावहितेनच ॥ ११ ॥ त्वंदूर्वेमृतजन्मासिवंदिताचसुरासुरैः ॥ सौभाग्यंसंततिंकृत्वासर्वकार्यकरीभव ॥ १२ ॥ यथाशाखाप्रशाखाभि
र्विस्तृतासिमहीतले ॥ तथाममापिसंतानंदेहित्वमजरामरे ॥ १३ ॥ एवमेषांपुरापार्थपूजितात्रिदशोत्तमैः ॥ तेषांपत्नीवधूभिश्चभगिनीभि
स्तथैवच ॥ १४ ॥ पूजिताभ्यर्हितावाचागौर्याराजञ्छ्रियातथा ॥ मर्त्यलोकेवेदवत्यादमयंत्यापिसीतया ॥ १५ ॥ सुकेश्याचघृताच्या
चरंभयाचसुकेशया ॥ सहन्याकामकंदन्यामेनकोर्वशिकादिभिः ॥ १६॥ स्त्रीभिरेवार्चितादूर्वासौभाग्यसुखदायिनी ॥ स्नाताभिःशुचिवस्त्रा
भिःसखीभिःससुहृज्जनैः ॥ १७॥ दत्वादानानिविप्रेभ्यःफलंदत्वार्चयेत्प्रभोः ॥ तिलपिष्टकगोधूमसप्तधान्यानिपांडव ॥१८॥ भक्षयित्वासुहृ
न्मित्रसंबंधिस्वजनेतथा॥यानार्योविचारिष्यंतिव्रतमेतत्पुरातनम्॥१९॥दूर्वाष्टमीतिविख्यातंपुण्यंसंतानकारकम्॥ ताःसर्वाःसुखसौभाग्यपुत्र
पौत्रादिभिस्तथा॥२०॥मर्त्यैर्लोकेचिरंस्थित्वाततःस्वर्गंगताःपुनः॥देवैरानंदितास्तत्रभर्तृभिःसहबांधवैः॥२१॥वसंतिरममाणास्तायावदाभूत
संप्लवम्॥२२॥मेघावृतेंऽबरतलेहरितेवनांतेयासाष्टमीशुभफलासफलानभस्ये॥दूर्वाफलाक्षततिलैःप्रतिपूज्ययोषिद्वंशैववृद्धिमुपयातिसुतैःसुहृ
द्भिः॥२३॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेदूर्वाष्टमीव्रतवर्णनंनामषट्पंचाशत्तमोऽध्यायः ॥५६॥ छ ॥ ॥
॥श्रीकृष्णउवाच॥कृष्णाष्टमीव्रतंपार्थशृणुपापभयापहम् ॥ धर्मसंजननंलोकेरुद्रप्रीतिकरंपरम् ॥१॥ मासिमार्गशिरेप्राप्तेदंतधावनपूर्वकम्॥
उपवासस्यनियमंकुर्यान्नक्तस्यवापुनः ॥ २ ॥ अशक्तशक्तभेदेनगृहान्निष्क्रम्यबाह्यतः ॥ कृष्णाष्टम्यावर्षमेकंगुरुंपृष्ट्वाविचक्षणः ॥ ३ ॥
ब्रह्मचारीजितक्रोधःशिवार्चनजपेरतः ॥ ततोऽपराह्णसमयेस्नात्वानद्यांविशुद्धधीः ॥ ४ ॥ शिवलिङ्गंसमभ्यर्च्यसुमनोभिःसुगंधिभिः ॥
गुग्गुलुंचशुभंदग्ध्वादद्यान्नैवेद्यमुत्तमम् ॥ ५ ॥ ततोदेवस्यपुरतोहोमंकुर्यात्तिलैर्गुरुः ॥ मार्गशीर्षेशुभेमासिशंकरेत्यभिपूजयेत् ॥ ६ ॥
गोमूत्रप्राशनंकृत्वाततोभूमौनिशिस्वपेत् ॥ अतिरात्रस्ययज्ञस्यफलमाप्नोतिमानवः ॥ ७ ॥ एवंपुष्येपिसंपूज्यशंभुंनाममहेश्वरम् ॥

कृष्णाष्टम्यांघृतंप्राश्यवाजपेयफलंभवेत् ॥ ८ ॥ माघेमाहेश्वरंनामकृष्णाष्टम्यांप्रपूजयेत्॥निशिपीत्वागवांक्षीरंगोमेधाष्टकमाप्नुयात् ॥ ९ ॥
फाल्गुनेचमहादेवंसंपूज्यप्राशयेत्तिलान् ॥ राजसूयस्ययज्ञस्यफलमष्टगुणंभवेत् ॥ १० ॥ चैत्रेचस्थाणुनामानंकृष्णाष्टम्यांशिवंयजेत् ॥
यवाहारोश्वमेधस्ययज्ञस्यफलमाप्नुयात् ॥ ११ ॥ वैशाखेशिवनामानमिष्ट्वारात्रौकुशोदकम् ॥ पीत्वापुरुषमेधस्यफलंदशगुणंभवेत् ॥ १२ ॥
ज्येष्ठेपशुपतिंपूज्यगवांशृङ्गोदकंपिबेत् ॥ गवांलक्षप्रदानस्यनरःफलमवाप्नुयात् ॥ १३ ॥ आषाढेचोग्रनामानमिष्ट्वासंप्राश्यगोमयम् ॥
वर्षाणांनियुतंसाग्रंरुद्रलोकेमहीयते ॥ १४ ॥ श्रावणेशर्वनामानमिष्ट्वार्कंनिशिभक्षयेत् ॥ बहुस्वर्णस्ययज्ञस्यनरःफलमवाप्नुयात् ॥ १५ ॥
मासिभाद्रपदेऽष्टम्यांत्र्यंबकंनामपूजयेत् ॥ बिल्वपत्रंनिशिप्राश्यअन्नदीक्षाफलंलभेत् ॥ १६ ॥ भवनामाश्विनेपूज्यःप्राशयेत्तंदुलोदकम् ॥
पौण्डरीकस्ययज्ञस्यफलंशतगुणंलभेत् ॥ १७ ॥ कार्तिकेरुद्रनामानंसंपूज्यप्राशयेद्दधि ॥ अग्निष्टोमस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥१८॥
अब्दांतेभोजयेद्विप्राञ्छिवभक्तिपरायणान् ॥ पायसंमधुसंयुक्तंघृतेनसमभिप्लुतम् ॥ १९ ॥ शक्त्याहिरण्यवासांसिभक्त्यातेभ्योनिवेदयेत् ॥
सतिलाःकृष्णकलशाभक्ष्यभोज्येनसंयुताः ॥२०॥ द्वादशात्रप्रदातव्याश्छत्रोपानद्युगान्विताः॥ निवेदयीतरुद्राणांगांचकृष्णांपयस्विनीम्॥
॥ २१ ॥ वर्षमेकंचरेदेवंनैरन्तर्य्येणयोनरः ॥ कृष्णाष्टमीव्रतंभक्त्यातस्यपुण्यफलंशृणु ॥ २२ ॥ सर्वपापविनिर्मुक्तःसर्वैश्वर्यसमन्वितः ॥
मोदतेभूपवान्नित्यंमर्त्यलोकेशतंसमाः ॥ २३ ॥ अनेनविधिनादेवाःसर्वेदेवत्वमागताः ॥ देवीदेवत्वमापन्नागुहःस्कंदत्वमागतः ॥ २४ ॥
ब्रह्माब्रह्मत्वमापन्नोह्यहंविष्णुत्वमागतः ॥ इन्द्रश्चदेवराजत्वंगणोगणपतांगतः ॥ २५ ॥ नारीवापुरुषोवापिकृत्वाकृष्णाष्टमीव्रतम् ॥
अखंडितंमहाराजपुण्यंप्राप्नोत्यनुत्तमम् ॥ २६ ॥ सूर्यकोटिप्रतीकाशैर्विमानैःसर्वकामिकैः ॥ रुद्रकन्यासमाकीर्णैर्हंससारससंयुतैः ॥ २७ ॥
नृत्यवादित्रसंयुक्तैरुत्कृष्टध्वनिनादितैः ॥ दोधूयमानश्चमरैःस्तूयमानःसुरासुरैः ॥ २८ ॥ त्रिनेत्रःशूलपाणिश्चशिवैश्वर्यसमन्वितः ॥
आस्तेशिवपुरेतावद्यावत्कल्पेषुचाष्टकम् ॥२९॥इत्येतत्तेसमाख्यातंपार्थकृष्णाष्टमीव्रतम्॥यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः॥ ३० ॥

१ वृद्धाः-इ० पा० । २ पार्थपापस्य-इ०पा० ।

कृष्णाष्टमीव्रतमिदंशिवभावितात्मासत्याशनैरुदितनामयुतैरुपोष्य ॥ कृष्णान्ददातिकलशान्सतिलान्नयुक्तान्योसौप्रयातिपदमुत्तममिन्दु
मौलेः ॥ ३१ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेकृष्णाष्टमीव्रतवर्णनंनामसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥
॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ ब्रह्मपुत्रोमहातेजाअत्रिर्नाममहानृषिः ॥ तस्यपत्नीमहाभागअनसूयापतिव्रता ॥ १ ॥
तयोःकालेनमहताजातःपुत्रोमहातपाः ॥ दत्तोनाममहायोगीविष्णोरंशोमहीतले ॥ २ ॥ द्वितीयोनामलोकेस्मिन्ननघश्चेतिविश्रुतः ॥
तस्यभार्यानदीनामबभूवसहचारिणी ॥ ३ ॥ अष्टपुत्राजीववत्सासर्वब्राह्मगुणैर्वृता ॥ अनयोर्विष्णुरूपेणलक्ष्मीश्चैवानदस्मृता ॥ ४ ॥
एवंतस्यसभार्यस्ययोगाभ्यासरतस्यवा ॥ आजग्मुःशरणंदेवाःशुंभदैत्येनपीडिताः ॥ ५ ॥ ब्रह्मलब्धप्रसादेनद्रुतंगत्वामरावतीम् ॥
संरुद्धांजंभदैत्येनदिव्यवर्षशतंनृप ॥ ६ ॥ दैत्यदानवसंयोगेपातालादेत्यभारत ॥ तस्यसैन्यमसंख्येयंदैत्यदानवराक्षसैः ॥ ७ ॥
तेननिर्णाशितादेवाःसेंद्रचंद्रमरुद्गणाः ॥ त्याजिताःस्वानिधिष्ण्यानित्यक्त्वाजग्मुर्दिशोदश ॥ ८ ॥ अग्रतःप्रलयंयांतःसेन्द्रादेवाभयार्दि
ताः ॥ पृष्ठतोनुव्रजंतिस्मदैत्याजंभपुरःसराः ॥ ९ ॥ युध्यंतःशरसंघातैर्गदामुशलमुद्गरैः ॥ नर्दन्तोवृषभारूढाःकेचिन्माहिषवाहनाः ॥
॥ १० ॥ शरभैर्गंडकैर्व्याघ्रैर्वानरैरभसैर्द्रुताः ॥ मुञ्चन्तोयांतिपाषाणाञ्छतघ्नीस्तोमराञ्छरान् ॥ ११ ॥ यावद्विन्ध्यगिरिंप्राप्ता
स्तत्तस्याश्रममण्डलम् ॥ अनघश्चानदीचैवदंपत्यंयत्रतिष्ठति ॥ १२ ॥ तयोःसमीपंसंप्राप्तास्तेनराःशरणार्थिनः ॥ अनघोऽपि
चतान्देवाँल्लीलयैवसवासवान् ॥ १३ ॥ अभ्यंतरेप्रविश्याथतिष्ठध्वंविगतज्वराः ॥ तथेतिनामतेकृत्वासर्वेतुष्टिंसमास्थिताः ॥ १४ ॥
दैत्याअपिद्रुतंप्राप्ताघ्नंतःप्रहरणैररीन् ॥ इत्यूचुरुल्बणाघोरागृह्णीध्वंब्राह्मणींमुनेः ॥ १५ ॥ द्रुतंद्रुमानाक्षिप्यध्वंपुष्पोपगफलोपगान् ॥ अथा
रोप्यानघंमूर्ध्निदैत्याजग्मुस्तदाश्रमान् ॥ १६ ॥ तत्क्षणाच्चापिदैत्यानांश्रीर्बभूवाशिरोगता॥दत्तकेनापितेदृष्टानष्टाध्यानाग्निनाक्षणात्॥१७॥
निस्तेजसोबभूवुर्हीनिःश्रीकामदपंडिताः ॥ देवैरपिगृहीतास्तेदैत्याश्चहरणेरणे ॥१८॥ रुदंतोनिस्तनंतश्चनिश्चेष्टाब्रह्मकंटकाः ॥ ऋष्टिभिः
करणैःशूलैस्त्रिशूलैःपरिघैर्घनैः ॥ १९ ॥ एवंतेप्रलयंजग्मुस्तत्प्रभावान्मुनेस्तदा ॥ असुरादेवशस्त्रौघैर्जिताइन्द्रेणघातिताः ॥ २० ॥ देवाअ

पिस्वराष्ट्रेषुतस्थुःसर्वेयथापुरा ॥ सुरैरपिमुनेस्तस्यदेवर्षेर्महिमाऽभवत् ॥ २१ ॥ ततःससर्वलोकानांभवायसततोत्थितः ॥ कर्म
णामनसावाचाशुभान्येवसमाचरत् ॥ २२ ॥ काष्ठकुडयशिलाभूतऊर्ध्वबाहुर्महातपाः ॥ ब्रह्मोत्तरंनामतपस्तेपेसुनियतव्रतः ॥ २३ ॥
नेत्रेह्यनिमिषेकृत्वाभ्रुवोर्मध्येविलोकयन् ॥ त्रीणिवर्षसहस्राणिदिव्यानीतिहिनःश्रुतम् ॥ २४॥ तथोर्द्ध्वरेतसस्तस्यास्थितस्यानिमिषस्यहि॥
योगाभ्यासप्रयत्नस्यमाहिष्मत्याःपतिःप्रभुः ॥२५ ॥ एकाह्याद्दुतमभ्येत्यकार्तवीर्योर्जुनोनृप ॥ शुश्रूषाविनयंचक्रेदिवारात्रमतंद्रितः ॥२६॥
गात्रसंवाहनंपूजांमनसाचिंतितंतथा ॥ संपूर्णेनियमेवृत्तेदृढतुष्ट्यासमन्वितः ॥ २७ ॥ तस्मैददौवरान्पुष्टांश्चतुरोभूरितेजसः ॥
पूर्वंबाहुसहस्रंतुसवव्रेप्रथमंवरम् ॥ २८ ॥ अधर्माधीयमानस्यसाद्भिस्तस्मान्निवारणम् ॥ धर्मेणपृथिवींजित्वाधर्मेणवानुपालनम् ॥ २९ ॥
संग्रामान्सुबहूञ्जित्वाहत्वावीरान्सहस्रशः ॥ संग्रामेयुध्यमानस्यवधोमेस्याद्वरःकरात् ॥ ३० ॥ तेनदुष्टेनलोकेऽस्मिन्दत्तंराज्यंमहीतले ॥
कार्तवीर्यस्यकौंतेययोगाभ्यासंसविस्तरम् ॥३१॥ चक्रवर्तिपदंचैवअष्टसिद्धिसमन्वितम् ॥ तेनापिपृथिवीकृत्स्नासप्तद्वीपासपर्वता ॥३२॥
ससमुद्राकरवतीधर्मेणविधिनाजिता ॥ तस्यबाहुसहस्रंतुप्रभावात्किलधीमतः ॥ ३३ ॥ यागाद्रथोध्वजश्चैवप्रादुर्भवतिमायया ॥
दशयज्ञसहस्राणितेषुद्वीपेषुसप्तसु ॥ ३४ ॥ निरर्गलानिवृत्तानिस्वयंतेतस्यपाण्डव ॥ सर्वेयज्ञामहाबाहोप्रसन्नाभूरिदाक्षिणाः ॥ ३५ ॥
सर्वेकाञ्चनवेदिक्याःसर्वेयूपैश्चकाञ्चनैः ॥ सर्वेदेवैर्महाभागैर्विमानस्थैरलंकृताः ॥ ३६ ॥ गंधर्वैरप्सरोभिश्चनित्यमेवोपशोभिताः ॥
तस्ययज्ञेजगुर्गाथांगंधर्वोनारदस्तथा ॥ ३७ ॥ चरितंराजसिंहस्यमहिमानंनिरीक्ष्यसे ॥ तन्नूनंकार्तवीर्यस्यगतिंयास्यसिपार्थिव ॥ ३८ ॥
यज्ञैर्दानैस्तपोभिर्वाविक्रमेणश्रुतेनच ॥ द्वीपेषुसप्तसुसवैखड्गचर्मशरासनी ॥ ३९ ॥ व्यचरच्छ्येनवद्योवैदूरादारादपश्यत ॥
अनष्टद्रव्यताचास्यनशोकोनचवैक्लमः ॥ ४० ॥ प्रभावेनमहीराजःप्रजाधर्मेणरक्ष्यच ॥ पञ्चाशीतिसहस्राणिवर्षाणांवैनराधिप ॥ ४१ ॥
समुद्रवसनायांसचक्रवर्तीबभूवह ॥ सएवपशुपालोभूत्क्षेत्रपालःसएवच ॥ ४२ ॥ सएववृष्ट्यापर्जन्योयोगित्वादर्जुनोभवत् ॥
सवैबाहुसहस्रेणज्याघातकठिनत्वचा ॥ ४३ ॥ वातिराङ्गमसहस्रेणक्षोभ्यमाणेमहोदधौ ॥ सहिनागमनुष्यैस्तुमाहिष्मत्यांमहाद्युतिः ॥ ४४ ॥

कर्कोटाहेःसुताञ्जित्वापुरितत्रन्यवेशयेत् ॥ सवैपत्नींसमुद्रस्यप्रावृट्कालेंबुजेक्षणाम् ॥ ४५ ॥ क्रीडतेचमदोन्मत्तःप्रतिस्रोतश्चकारह ॥ ललि
ताक्रीडतातेनफलनिष्पन्दमालिनीम् ॥ ४६ ॥ ऊर्मीभ्रुकुटिमत्येवशंकितास्येतिनर्मदा ॥ तस्यबाहुसहस्रेणक्षोभ्यमाणेमहोदधौ ॥ ४७ ॥
भवंत्यालीनानिश्चेष्टाःपातालस्थामहासुराः ॥ तूष्णींकृतामहाभागलीनहीनमहामतिः ॥ ४८ ॥ चकाराडोलयत्तादोःसहस्रेणससागरम् ॥
क्रांतानिश्चलमूर्द्धानोबभूवुश्चमहोरगाः ॥ ४९॥ सायाह्नेकदलीखण्डान्निर्धातास्मिहताइव ॥ सर्वेविद्याधनुर्जाताःसुतिक्तंपञ्चभिःशरैः ॥५०॥
लङ्काधिपंमोहयित्वासबलंरावणंबलात् ॥ निर्जित्यवशमानीयमाहिष्मत्यांबबंधच ॥ ५१ ॥ ततोभ्येत्यपुलस्त्यस्तुअर्जुनंसंप्रसादयन् ॥
मुमोचरक्षःपौलस्त्यंपौलस्त्येनानुगामिना ॥ ५२ ॥ तस्यबाहुसहस्रस्यबभूवज्यातलस्वनः॥क्षुधितेनकदाचित्सप्रार्थितश्चित्रभानुना॥५३॥
सप्तद्वीपांचित्रभानोःप्रादाद्भिक्षांमहीमिमाम् ॥ कुंडेशयस्ततोऽद्यापिदृश्यतेभगवान्हरिः ॥ ५४ ॥ निंबादित्यश्चप्रत्यक्षोजाग्रतस्तस्य
वेश्मनि॥बभूवदुहिताहेतोःशरदोऽद्यापितिष्ठति ॥५५॥ सएवंगुणसंयुक्तोराजाभूदर्जुनोभुवि ॥ अनघस्यप्रसादेनयोगाचार्यस्यपांडव ॥५६॥
तेनेयंवरलब्धेनकार्तवीर्येणयोगिना ॥ प्रवर्तितामर्त्यलोकेप्रसिद्धाह्यनघाष्टमी ॥ ५७ ॥ अघंपापंस्मृतंलोकेतच्चापित्रिविधंभवेत् ॥
यस्मादघंनाशयतितेनासावनघास्मृता ॥ ५८ ॥ तस्याष्टगुणमैश्वर्यंविनोदार्थंविभाव्यते ॥ अणिमामाहिमाप्राप्तिप्राकाम्येमाहिमा
तथा ॥ ५९ ॥ ईशित्वंतच्चवशित्वंचसर्वकामावसायिता ॥ इत्यष्टौयोगसिद्धस्यसिद्धयोमोक्षलक्षणाः ॥ ६० ॥ समुत्पन्नाद्दत्तक
स्यलोकेप्रत्ययकारकाः ॥ यात्रासमातौसंगृह्ययदघानितथैववा ॥ ६१ ॥ जगत्समस्तमनघंकुर्यादस्मादतोनघा ॥ मदंशोमद्गतप्राणोलो
केस्मिन्[1]तकोद्विजः ॥ ६२ ॥ युधिष्ठिरउवाच ॥ कीदृशंपुण्डरीकाक्षसवैराजाजिनाव्रतम् ॥ ६३ ॥ चक्रेवात्रिषुलोकेषुकैर्मंत्रैःसमयैश्चकैः ॥
कस्मिन्कालेतिथौकस्यामेतन्मेवदकेशव ॥ ६४ ॥ श्रीकृष्णउवाच ॥ कृष्णाष्टम्यांमार्गशीर्षेदांपत्यंदर्भनिर्मितम् ॥ अनघंचानघांचैवबहु
पुत्रैःसमन्विताम् ॥ ६५ ॥ पुराकृतीकृतंशांतंभूमिभागेस्थितंशुभम् ॥ स्नात्वैवमर्चयेत्पुष्पैःसुसुगन्धैर्युधिष्ठिर ॥ ६६ ॥ ऋग्वेदोक्तऋचावि

१ वृत्तकः–इ० पा० ।

प्राविष्णुंध्यात्वाममांशजम्॥ अनघंवासुदेवेनानघालक्ष्मींव्रजांतनुम् ॥ ६७ ॥ प्रद्युम्नादिपुत्रवर्गैर्हरिवंशेयथोदितम् ॥ ६८ ॥ "ॐअतोदेवा
अवंतुनोयतोविष्णुर्विचक्रमे ॥ पृथिव्याःसप्तधामभिः ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूळ्हमस्यपांसुरे ॥ त्रीणिपदाविचक्रमे
विष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे ॥ इंद्रस्ययुज्यःसखा ॥ तद्विष्णोःपरमंपदंसदाप
श्यंतिसूरयः ॥ दिवीवचक्षुराततम् ॥ तद्विप्रासोविपन्यवोजागृवांसःसमिंधते ॥ विष्णोर्यत्परमंपदम्"॥ लोकोद्भवैःफलैःकन्दैःशृंगारैर्बदरैः
शुभैः ॥ वित्तैश्चधान्यैःपुष्पैश्चगंधधूपैःसदीपकैः ॥ ६९ ॥ यःपूजयेद्भक्तियुक्तःसर्वपापैःप्रमुच्यते ॥ ततोद्विजान्भोजयेच्चसुहृत्संबंधिबांध
वान् ॥ ७० ॥ व्रतावसानेगृह्णीयात्कश्चिदेकोनरोव्रतम् ॥ तेषांमध्येदृढाश्चक्रुरनघव्रतपारगाः ॥ ७१ ॥ इदंजीवनघातीचेत्सत्यंतुसमयोषि
तम् ॥ वर्षमेकंततःस्वेच्छाइदंतवानघव्रतम् ॥ ७२ ॥ तत्रोपेक्षणकंकार्यंनटनर्तकगायकैः ॥ प्रभातेतुनदम्यांततोयमध्येविसर्जयेत् ॥ ७३॥
एवंसकुरुतेयात्रांवर्षेवर्षेचहर्षितः ॥ भक्तियुक्तःश्रद्धयाचसर्वपापैःप्रमुच्यते ॥ ७४ ॥ कुटुंबंवर्द्धतेतेषांयेषांविष्णुःप्रसीदति ॥ आरोग्यंसप्त
जन्मानिततोयांतिपरांगतिम् ॥ ७५ ॥ एतामघौघशमनामनघाष्टमींचकौंतेयसंप्रतिमयाकथितांहिताय ॥ कुर्वंत्यनन्यमन
सःस्वयशोभिवृद्ध्यैऋद्धिंप्रयांतिकृतवीर्यसुतानुरूपम् ॥ ७६ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादे
अनघाष्टमीव्रतंनामाष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ अथान्यत्संप्रवक्ष्यामिव्रतंश्रेयस्करंपरम् ॥
शिवलोकप्रदंपुण्यंविधिवन्मेनिबोधत ॥ १ ॥ वारेसोमेसिताष्टम्यांपक्षेसोमंसमर्चयेत् ॥ विधिनाचन्द्रचूडालंप्राप्यमेतत्सचन्द्रकम् ॥
॥ २ ॥ दक्षिणार्धेहरिंध्यात्वामध्येतुपरितःप्रभुम् ॥ पञ्चामृतादिनादेवंस्थापयित्वायतव्रती ॥ ३ ॥ चंदनेनेन्दुयुक्तेनदक्षिणार्धे
विलेपयेत् ॥ हरभागंनीलरक्तंशिवस्योपरिमौक्तिकम् ॥ ४ ॥ पश्चात्पुष्पैःसमभ्यर्च्यसितैरक्तैरनुत्तमैः ॥ नीराजनंपुनःकुर्यात्पंच
विंशतिदीपकैः ॥ ५ ॥ अर्घसिद्धैःशुभैर्भक्ष्यैर्नैवेद्यंविनिवेदयेत् ॥ एवंकृतोपवासस्तुप्रभातेपूर्ववच्छिवम् ॥ ६ ॥ संपूज्याज्यतिलै

१ अर्घसिद्धैः–इ० पा०।

मिश्रंजुहुयाज्जातवेदसि ॥ व्रतिनोब्राह्मणान्पश्चाद्भोजयित्वाविधानतः ॥ ७ ॥ मिथुनानितुसंभोज्ययथाशक्त्यानुपूजयेत् ॥ आवर्त्य
पितरावर्च्येविधिनातेनसुव्रत ॥ ८ ॥ संवत्सरांतेकर्तव्यंयत्तत्सर्वंनिबोधत ॥ प्रागुक्तविधिनापूज्यासितपीतयुगद्वयम् ॥ ९ ॥
दद्याद्वितानकंचैवपताकांघटकींतथा ॥ धूपगंधारसीचापिदीपवृक्षंसुशोभनम् ॥ १० ॥ एवमादीनियोज्यानिपूर्ववद्भोज्यमाचरेत् ॥
चतुरस्रंत्रिकोणंचमण्डलंकारयेत्ततः ॥ ११ ॥ त्रिकोणेपार्वतींध्यायेच्चतुरस्रेमहेश्वरम् ॥ संकल्प्याद्विजदांपत्यंवासोभिर्भूषणैस्तथा ॥१२॥
पूजयित्वायथाशक्त्याकुर्यान्नीराजनंशुभैः ॥ दीपकैःपञ्चविंशद्भिर्भोजयित्वाविसर्जयेत् ॥ १३ ॥ अब्दपञ्चकमेकंवाएवंयःकुरुतेनरः ॥
उभाभ्यांलोकमासाद्यपदंयास्यत्यनामयम् ॥ १४ ॥ आदेहपतनाद्यस्तुनित्यमेतत्समाचरेत् ॥ इहैवसहरिःसाक्षान्नतरूपंविभाव्यते ॥१५ ॥
नस्पृशंत्यापदस्तस्यनदुःखीभवतेकचित् ॥ ज्वरग्रहादिभिर्नैवपीड्यतेऽसौकदाचन ॥१६॥ ॥ श्रीकृष्णउवाच ॥ अथवातनेमागर्णेतामवे
हिसिताष्टमीम् ॥संप्राप्यादित्ययोगेनप्राग्विधानेनचाभ्यसेत्॥१७॥किंतुदक्षिणतंत्रस्थंभास्करंवार्चयेद्बुधः[1] ॥ पद्मरागेणदिव्येनसुवर्णेनचपार्व
तीम् ॥१८॥ कुंकुमेनसमालभ्यचन्दनेनशिवंतथा ॥ अभावेसर्वरत्नानांहेमसर्वत्रयोजयेत् ॥ १९ ॥ रुद्रबीजंपरंपूतंप्रियंरुद्रस्यसर्वदा ॥
रक्तमाल्यांबरधरंनैवेद्यंघृतपाचितम् ॥ २० ॥ शेषःपूर्वविधानेनकर्तव्योविधिविस्तरः ॥ तिथौपूर्णेचकुर्वीतगव्येनानघपारणम् ॥ २१ ॥
एतत्प्राक्चविधायाब्दंपश्चाब्दानेवमेवच ॥ कृत्वासूर्यादिलोकेषुभुक्त्वाभोगान्व्रजेत्परम् ॥ २२ ॥ पतङ्गवत्प्रतापीस्याददीनश्चजन
प्रियः ॥ अस्मिन्नरोगोनबाध्येतधनवान्पुत्रवान्भवेत् ॥ २३ ॥ यद्यष्टमीभवतिसोमयुताकदाचिदर्केणवाकुरुकुलोद्वहतामुपोष्य ॥ पूज्यो
मयासहहरंहरिणांकचिह्नंभक्त्यायुषांपदमुपैतिपरंमुरारेः ॥ २४ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेसोमा
ष्टमीव्रतवर्णनंनामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ समुत्पन्नेषुरत्नेषुक्षीरोदमथनेपुरा ॥
दैत्यानांमोहनार्थाययोषिद्भूतेजनार्दने ॥ १ ॥ बिल्ववृक्षेक्षणंश्रांताविश्रांताकमलालया ॥ यामेवामितिवान्योन्यंयुयुधुर्देवदानवाः ॥ २ ॥

१ किंतुलक्षणनेत्रस्थम्-इ०पा० ।

जिताःसर्वेपुरापार्थयुद्धेकृष्णेनचक्रिणा ॥ पातालंगमितादैत्याःसश्रीकःस्वयमायया ॥ ३ ॥ श्रीसमावासितायस्माच्छ्रीवृक्षस्तुततःस्मृतः ॥
तस्माद्भाद्रपदस्यैवशुक्लपक्षेकुरूत्तम ॥ ४ ॥ नवम्यामर्चयेद्भक्त्याईषत्सूर्योदयेनगम् ॥ श्रीवृक्षंविविधैःपुष्पैरनाग्निपाचितैःफलैः ॥ ५ ॥
तिलपिष्टान्नगोधूमैर्धूपगन्धस्रगंबरैः ॥ ईषद्भानुकराताम्रताम्रीकृतनभस्तले ॥ ६ ॥ मंत्रेणानेनराजेन्द्रकृत्वाब्राह्मणभोजनम् ॥ त
तोभुञ्जीतमौनेनतैलक्षारविवर्जितः ॥ ७ ॥ अनग्निपाकंभूपात्रेदधिपुष्पफलैःशुभम् ॥ एवंयःकुरुतेपार्थश्रीवृक्षस्यार्चनंनरः ॥ ८ ॥
नारीवादुःखशोकाभ्यांमुच्यतेनात्रसंशयः ॥ सप्तजन्मांतरंयावत्सुखसौभाग्यसंयुता ॥ ९ ॥ श्रीमतीफलिनीधन्यामर्त्यलोकेमहीयते ॥१०॥
श्रीवृक्षमक्षतफलंवसितंनवम्यांनैवेद्यपुष्पफलवस्त्रविचित्रधान्यैः ॥ पूज्यःप्रभातसमयेपुरुषोत्तमेष्टांसंप्राप्नुवंतिपुरुषाःपुरुषेन्द्रवन्द्यम् ॥११॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेश्रीवृक्षनवमीव्रतवर्णनंनामषष्टितमोऽध्यायः ॥ ६० ॥ ॥ छ ॥ ॥ श्री
कृष्णउवाच ॥ ॥ महिषासुरेविनिहतेभगवत्यामहासुरैः ॥ पूर्ववैरमनुस्मृत्यसंग्रामाबहवःकृताः ॥ १ ॥ नानारूपधरादेवीअवतीर्य
पुनःपुनः ॥ धर्मसंस्थापनार्थायनिजघ्नेदैत्यसत्तमान् ॥ २ ॥ अथरक्तासुरोनाममहिषस्यसुतोमहान् ॥ आसीत्तेनतपस्तप्तंवर्षाणांनियुतानि
षट् ॥ ३ ॥ तस्मैददौचतुर्वक्त्रोराज्यंत्रैलोक्यमण्डले ॥ तेनलब्धंवरेणाथमेलयित्वादनोःसुतान् ॥ ४ ॥ प्रारब्धंसहशक्रेणयुद्धंगत्वाऽमराव
तीम् ॥ तंदृष्ट्वादानवबलंसन्नद्धात्युद्धतध्वजाः ॥ ५ ॥ युयुधेदानवैःसार्द्धंसुरैःशक्रपुरस्सरैः ॥ तत्रप्रावर्ततनदीशोणितौघतरंगिणी ॥ ६ ॥
परमस्यगदाग्राहवसुनंदककच्छपाः ॥ वहंतिपितृलोकायसुरासुरभयानकाः ॥ ७ ॥ अथरक्तासुरोरोषाद्युयुधेविबुधैःसह ॥ तेहन्यमाना
विबुधारक्ताक्षेणमहारणे ॥ ८ ॥ भ्रष्टाःस्वर्गंपरित्यज्यत्यक्तप्रहरणाद्रुतम् ॥ करच्छत्रांपुरींप्राप्तायत्रास्तेभववल्लभा ॥ ९ ॥ दुर्गाचामुण्डया
सार्धंनवदुर्गासमन्विता ॥ आद्यातावन्महालक्ष्मीर्नंदाक्षेमकरीतथा ॥ १० ॥ शिवदूतीमहारुण्डाभ्रामरीचन्द्रमङ्गला ॥ रेवतीहरसिद्धिस्तु
नवैताःपरिकीर्तिताः ॥११॥ एतासांतेस्तुतिंचक्रुस्त्रिदशाःप्रणताननाः॥१२॥अमरपतिमुकुटचुंबितचरणांबुजसकलभुवनसुखजननी॥जय
तिजगदीशवंदितासकलामलनिष्कलादुर्गा ॥१३॥ विकृतनखदशनभूषणरुधिरवशाच्छुरितक्षतखड्गहस्ता ॥ जयतिनरमुंडमुंडितपिशित

सुराहारकृच्चंडी ॥ १४ ॥ प्रच्छादिताशिखिगणोद्धलविकटजटाबद्धचन्द्रमणिशोभा ॥ जयतिदिगंबरभूषासिद्धवटेशामहालक्ष्मीः ॥ १५ ॥
करकमलजनितशोभापद्मासनबद्धपद्मवदनाच ॥ जयतिकमंडलुहस्तानंदादेवीनतार्तिहरा ॥ १६ ॥ दिग्वसनाविकृतमुखा
फेत्कारोद्दामपूरितादिशौघा ॥ जयतिविकारालदेहाक्षेमंकरीरौद्रभावस्था ॥ १७ ॥ क्रोशितब्रह्मांडोदरसुरवरमुखरहुंकृतनिनादा ॥
जयतिमदातिमिहस्ताशिवदूतीप्रथमाशिवशक्तिः ॥ १८ ॥ मुक्ताट्टहासभैरवदुःसहतरचकितसकलदिक्चक्रा ॥ जयतिभुजगे
न्द्रबंधनशोभितकर्णामहातुंडा ॥ १९ ॥ पटुपटहमुरजमर्दलझल्लरिझङ्कारनर्तितावयवा ॥ जयतिमधुव्रतरूपादैत्यहरीभ्रामरी
देवी ॥ २० ॥ शांताप्रशांतवदनासिंहवराध्यानयोगतन्निष्ठा ॥ जयतिचतुर्भुजदेहाचन्द्रकलाचन्द्रमण्डलादेवी ॥ २१ ॥
पक्षपुटचंचुघातैःसंचूर्णिताविविधशत्रुसंघाता ॥ जयतिशितशूलहस्तावहुरूपारेवतीभद्रा ॥ २२ ॥ पर्यटतिजगतिहृष्टापितृवनानिलयेषु
योगिनीसहिता ॥ जयतिहरसिद्धिनाम्नीहरसिद्धिर्वंदितासिद्धैः ॥ २३ ॥ इतिनवदुर्गासंस्तवमनुपममार्याभिरपरराट्कृत्वा ॥ इदमूचे
सहदेवैस्त्राह्यस्मान्सर्वभीतिभ्यः ॥ २४ ॥ पुनःपुनःप्रणम्योचुर्भवानींसिंहवाहिनीम् ॥ अस्माकंभयभीतानांशरण्येशरणंभव॥२५॥देवानांत
द्वचःश्रुत्वादत्वातेभ्योऽभयंततः ॥ सिंहारूढाविनिर्गत्यदुर्गाभिःसहितापुरा ॥ २६ ॥ युयुधेदानवैस्सार्धंमहासमरदुर्दिनम् ॥ कुमारी
विंशतिभुजाघनविद्युल्लतोपमा ॥ २७ ॥ तेऽपितत्रासुराःप्राप्ताःप्रचंडारुद्ररूपिणः ॥ सर्वेलब्धवराःशूराःसुतप्ततपसस्तथा ॥ २८ ॥ महा
ग्राहपराक्रांतादुष्टमायाविनष्टये ॥ अब्राह्मण्याद्धव्यमिषानामतश्चनिजोद्यतात् ॥ २९ ॥ इंद्रमारीमसत्क्लेशःप्रलंबोनरकःसुतः ॥ कुष्ठःपुलो
माशरभःशंबरोदुंदुभिःखरः ॥ ३० ॥ इल्वलोनमुचिर्भौमोवातापिर्धेनुकःकलिः ॥ मायावृतौबलौबंधुर्मधुकैटभकालजित् ॥ ३१ ॥ रहः
पौंड्रादिदैत्येन्द्राःप्राधान्येनप्रकीर्तिताः ॥ धनगोभिर्जनाःसर्वेसन्नद्धाःस्वाग्रतोध्वजः ॥ ३२ ॥ रूपतोवर्णिताश्चैवध्वजास्तेषांपृथक्पृथक् ॥
प्रत्यहदृश्यंतराजेन्द्रज्वलिताइवपावकाः ॥ ३३ ॥ काञ्चनाःकाञ्चनापीडाःकाञ्चनस्रगलंकृताः ॥ पताकाविविधैर्वालैरुच्छ्रितालक्षणान्विताः
॥ ३४ ॥ नील्यःपीताःसितारक्ताःकृष्णास्ताःपञ्चवर्णकाः ॥ तत्रपट्टपटीसौत्राःकृतबुद्बुदकर्बुराः ॥ ३५ ॥ पताकाकान्तिरनलानर्तक्यइव

शोभनाः ॥ ततोहलहलारावंचक्रुस्तेदानवोत्तमाः ॥ ३६ ॥ प्रास्फालयंतिपणवभेरीझर्झरगोमुखान् ॥ न्यवादयंत्यानकान्येशंखाडंबरडिंडि
मान् ॥ ३७ ॥ एवंतेसमयुध्यंतभवानींदैत्यदानवाः ॥ समाजघ्नुःशरैःशूलैःपरिघैःशक्तितोमरैः ॥३८॥ कर्णकैरिषणैःकुंतैःशतघ्नीकूटमुद्गरैः॥
आहत्यमानरोषेणजज्वालसमरेऽधिकम् ॥ ३९ ॥ सिंहारूढाद्रुतंदेवीरणमध्येप्रधाविता ॥ आच्छिद्याच्छत्रचिह्नानिध्वजानानाविधास्तथा
॥ ४० ॥ बलात्कारेणदैत्यानामनाथसमरेरुषा ॥ चिह्नकानिददौतुष्टादेवेभ्यःशीघ्रचारिणी ॥ ४१ ॥ सुरैरपिगृहीतानिजयदेवीतिवादिभिः॥
अंबिकातुभृशंतुष्टातेषांचक्रेक्षणात्क्षयम् ॥ ४२ ॥ कालरात्रीदानवानांमारीवनिपपातसा ॥ जीवितानिचजग्राहदैत्यानांदेवनंदिनी ॥४३॥
अथरक्तासुरंकंठेगृहीत्वापात्यभूतले ॥ देवीजग्राहतीक्ष्णेनात्रिशूलेनभृशंदिवि ॥४४॥ सभिन्नहृदयःपश्चाद्भूमौतत्रप्रपोथितः ॥ तथापिदेव्या
निहतःपपातचममारच ॥ ४५ ॥ देवास्तानसुराञ्जित्वागत्वाशत्रुपुरंजितम् ॥ ददृशुस्तेरणप्रांतेलंबमानान्महाध्वजान् ॥ ४६ ॥ यात्रांच
क्रुःसंप्रहृष्टानवम्यांध्वजचिह्निताम् ॥ अतोद्यापीहभूपालैर्जयलब्धीच्छयाहृतैः ॥ ४७ ॥ उपोष्यतेनरैर्भक्तैर्नारीभिश्चैवपांडव ॥ ४८ ॥
॥ युधिष्ठिरउवाच ॥ कीदृग्विधानंतस्यास्तुनवम्याब्रूहिमेप्रभो ॥ सरहस्यंसमंत्रंचतुष्यतेयेनचंडिका ॥ ४९ ॥ ॥ श्रीकृष्णउवाच ॥
पौषस्यशुक्लपक्षेयानवमीसंपरिश्रुता ॥ तस्यांस्नात्वाशुभैःपुष्पैरर्चनीयाहरेःस्वसा ॥ ५० ॥ कुमारीसुभगादेवीसिंहस्यन्दनगामिनी ॥
ध्वजान्नानाविधान्कृत्वापुरस्तस्याश्चपूजयेत् ॥ ५१ ॥ मालतीकुसुमैर्दीपैर्गन्धधूपविलेपनैः ॥ बलिभिःपशुभिर्मेध्यैःसुरामांसासृगंबरैः ॥
॥ ५२ ॥ दधिचन्दनचूर्णैश्चभग्नैश्चानग्निपाचितैः ॥ मंत्रेणानेनकौंतेयब्रह्मणोप्यथवानतु ॥५३॥ भद्रांभगवतींकृष्णांविश्वस्यजगतोहितम् ॥
संवेशिनींसंयमनींग्रहनक्षत्रमालिनीम् ॥ ५४ ॥ प्रपन्नोहंशिवांरात्रींभद्रेपारमशीमहि ॥ सर्वभूतपिशाचेभ्यःसर्वसत्वसरीसृपैः ॥५५॥देवेभ्यो
मानुषेभ्यश्चोभयेभ्योरक्षमांसदा ॥ ततश्चारोपयेद्राजादेवीनांभवनेतथा ॥५६॥ भोजयेच्चकुमारींचप्रणिपत्यक्षमापयेत्॥उपवासेनकुर्वीतएक
भक्तेनवापुनः ॥५७॥ भक्त्याभूपालयंचास्यभक्तिस्तस्यगरीयसी॥ एवंयेपूजयिष्यंतिध्वजैर्भगवतींनराः ॥५८॥ तेषांदुर्गादुर्गमार्गेचोरव्या
लाग्निसंकटे ॥ रणेराजकुलेगेहेयुद्धमध्येजलेस्थिते॥५९॥रक्षांकरोतिसततंभवानीसर्वमंगला ॥ अस्यांबभूवविजयंनवम्यांपांडुनन्दन॥६०॥



॥

भगवत्यास्तुतेनैषानवमीसततंप्रिया ॥ धन्यापुण्यापापहरासर्वोपद्रवनाशनी ॥ ६१ ॥ अनुष्ठेयाप्रयत्नेनसर्वान्कामानभीप्सुभिः ॥ ६२ ॥ देव्यर्चनाहितमतिर्मनुजोनवम्यांहेमस्रजंध्वजवरंसहिरोपयेद्यः ॥ भोगानवाप्यमनसोभिमतान्प्रकामंदेहंविहायसमुपैतिसवीरलोकम् ॥६३॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेध्वजनवमीव्रतवर्णनंनामैकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ उल्काख्यांनवमींराजन्कथयामिनिबोधताम् ॥ याकाश्यपेनकथिताताराकस्यार्तिनाशिनी ॥ १ ॥ अश्वयुक्छुक्लपक्षेयानवमीलोकविश्रुता ॥ नद्यांस्नात्वासमभ्यर्च्यपितृदेवींयथाविधि ॥ २ ॥ पश्चात्संपूजयेद्देवींचामुण्डांभैरवप्रियाम् ॥ पुष्पैर्धूपैस्सनैवेद्यैर्मांसमत्स्यसुरासवैः ॥ ३ ॥ पूजयित्वास्तवंकुर्यान्मन्त्रेणानेनमानवः ॥ समारोप्याञ्जलिंमूर्ध्निजानुभ्यामवनींगतः ॥ ४ ॥ महिषघ्निमहामायेचामुण्डेमुण्डमालिनि ॥ द्रव्यमारोग्यविजयौदेहिदेविनमोऽस्तुते ॥ ५ ॥ कुमारीर्भोजयेत्पश्चान्नवनीलसुकंचुकैः[1] ॥ परिधानैर्भूषणैश्चभूषयित्वाक्षमापयेत् ॥ ६ ॥ सप्तपञ्चाप्यथैकांवाचित्तवृत्तानुरूपतः ॥ श्रद्धयातुष्यतेदेवीइतिवीरानुशासनम् ॥ ७ ॥ अभ्युक्ष्यमण्डलंकृत्वागोमयेनशुचिस्मितः ॥ दत्वासनेचोपवसेत्पात्रंचपुरतोन्यसेत् ॥ ८ ॥ ततःसुसिद्धमन्नंयत्तत्सर्वंपरिवेषयेत् ॥ सघृतंपायसंचापिस्थापयेत्पात्रसन्निधौ ॥ ९ ॥ तृणानिषष्टिमादायचादायधमनींतथा ॥ प्रज्वालयेत्ततोभोज्यंयावज्ज्वलतिपावकः ॥ १० ॥ प्रशांतेभोजनंत्यक्त्वासमाचम्यप्रसन्नधीः ॥ चामुंडांहृदयेध्यात्वागृहकृत्यपरोभवेत् ॥११॥ अनेनविधिनासर्वंमासिमासिसमाचरेत् ॥ ततःसंवत्सरस्यांतेभोजयित्वाकुमारिकाः ॥१२॥ वस्त्रैराभरणैःपूज्यप्रणिपत्यक्षमापयेत् ॥ सुवर्णंशक्तितोदद्याद्गांचविप्रायशोभनाम् ॥ १३ ॥ यएवंकुरुतेपार्थपुरुषोनवमीव्रतम् ॥ नतस्यशत्रवोनार्तिःसराजानष्टतस्करः ॥ १४ ॥ भूताःप्रेताःपिशाचाश्चजनयंतिभयंगृहे ॥ समुद्यतेषुशस्त्रेषुहंतातस्यनविद्यते ॥ १५ ॥ रक्षतेतंसदोद्युक्तासर्वास्वापत्सुचंडिका ॥ नरोवायदिवानारीव्रतमेतत्समाचरेत् ॥ १६ ॥ उल्कावत्ससपत्नानांज्वलन्नास्तेसदाहृदि ॥१७॥

[1] नवनीलकुसुंबकैः-इ०पा०।

तांशुष्ककोहरमुखींप्रकटोरुदंष्ट्रांकापालिनींसमवलंबितमुण्डमालाम्॥उक्तव्रतेषुपुरुषोनवमीषुचण्डींसंपूज्यकस्यहृदयेनचशंकरोति ॥१८॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेउल्कानवमीव्रतवर्णनंनामद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ छ ॥ ॥ श्रीकृ
ष्णउवाच ॥ पूर्वंकृतयुगस्यादौभृगोर्भार्यामहासती ॥ दिव्यारामाश्रमेरम्यागृहकार्यैकतत्परा ॥१॥ बभूवसाभृगोर्नित्यंहृदयेप्सितकारिणी॥
तस्यांमुनिर्महातेजाअग्निहोत्रंनिधायच ॥२॥ विष्णोस्त्रासाद्दानवानांकुलत्राणसमाकुलम् ॥ मुक्त्वायुद्धस्थितंपार्श्वेसमर्प्यमुनिपुङ्गवः ॥३॥
दत्त्वानिक्षेपकंसर्वंदिव्यायासुमहातपाः ॥ जगामहिमवत्पार्श्वेहरंतोषयितुंहरः ॥ ४ ॥ संजीवनींकृतोनित्यंकर्णेधूममधोमुखः ॥
पपौदानवराजस्यविजयायपुरोहितः ॥ ५ ॥ आजगामगतेतस्मिन्गरुडेनाश्रितोहरिः ॥ अभ्येत्यजल्पनंचक्रेचक्रेणोत्कृत्तकंधरम् ॥ ६ ॥
गलद्रुधिरसंपन्नंलोहितार्णवसंनिभम् ॥ दृष्ट्वासुरबलंसर्वंनिहतंविष्णुनातदा ॥ ७ ॥ दिव्यासंशप्तुकामाभूद्विष्णुंसास्त्रीविलक्षणा ॥
यावन्नोच्चरतेवाचंचक्रेणकृत्तकंधरम् ॥ ८ ॥ तावन्निपातयामासशिरस्तस्याःसकुण्डलम् ॥ प्राप्यसंजीवनींविद्यांयावदायात्यसौमुनिः ॥९॥
तावत्सदैत्यान्नापश्यत्पश्यतिस्मानिपातितम्॥रोषाच्छशापचहरिंभ्रुकुटीकुटिलाननः ॥१०॥ अवश्यभावभावित्वाद्विश्वस्यहितकारणात्॥
यस्मात्त्वयाहतादैत्याब्रह्मणामत्परिग्रहाः ॥ ११ ॥ तस्मात्त्वंमानुषेलोकेदशवारान्गमिष्यसि ॥ अतोऽर्थंमानुषेलोकेरक्षार्थंचमहीक्षिताम् ॥
॥ १२ ॥ अवतारंचकाराहंभूयोभूयःपृथग्विधम् ॥ पूर्वोक्तैःकारणैःपार्थअवतीर्णमहीतले ॥ १३ ॥ मांनरायेऽर्चयिष्यंतितेपांवासास्त्रिविष्टपे॥
॥ युधिष्ठिरउवाच ॥ ॥ व्रतंदशावताराख्यंकृष्णब्रूहिसविस्तरम् ॥ १४ ॥ समंत्रंसरहस्यंचसर्वपापप्रणाशनम् ॥ ॥ श्रीकृष्णउवाच ॥
प्रोष्ठपदेसितेपक्षेदशम्यांनियतःशुचिः ॥ १५ ॥ स्नात्वाजलाशयेस्वच्छेपितृदेवादितर्पणम् ॥ कृत्वाकुरुकुलश्रेष्ठगृहमागत्यमानवः ॥१६॥
गृह्णीयाद्धान्यचूर्णस्यद्विहस्तप्रसृतीत्रयम् ॥ क्रमेणपावयेत्तांतुपुंसज्ञंघृतसंसृतम् ॥ १७ ॥ वर्षेवर्षेदिनेतस्मिन्यावद्वर्षाणिवैदश ॥ प्रथमे
पूरिकान्वर्षेद्वितीयेघृतपूरकान् ॥ १८ ॥ तृतीयेशुक्लकांसारंचतुर्थेमोदकाञ्छुभान् ॥ सोहालकान्पञ्चमेऽब्देषष्ठेऽब्देखण्डवेष्टकान् ॥ १९ ॥

१ ह्यर्थम्-इ० पा० ।

सप्तमेऽब्देकोकरसानपूपांश्चतथाष्टमे ॥ नवमेकर्णवेष्टांस्तुदशमेखंडकाञ्छुभान् ॥ २० ॥ दशधेनोर्दशहरेदशविप्रायदापयेत् ॥
क्रमेणभक्षयित्वाचयथोक्तंभरतर्षभ ॥ २१ ॥ अर्द्धार्द्धंपिष्टयेदेवमर्द्धार्द्धंवाद्विजातये ॥ स्वतएवार्धमश्नीयाद्गत्वारम्येजलाशये ॥ २२ ॥
दशावतारानभ्यर्च्यपुष्पधूपविलेपनैः ॥ मंत्रेणानेनमेधावीहरिमभ्युक्ष्यवारिणा ॥ २३ ॥ मत्स्यंकूर्मंवराहंचनरसिंहंत्रिविक्रमम् ॥
श्रीरामंरामकृष्णंचबुद्धंचैवसकल्किनम् ॥ २४ ॥ गतोऽस्मिशरणंदेवंहरिंनारायणंप्रभुम् ॥ प्रणतोऽस्मिजगन्नाथंसमेविष्णुःप्रसीदतु ॥२५॥
छिनत्तुवैष्णवींमायांभक्त्याजातोजनार्दनः ॥ श्वेतद्वीपंनयस्त्वस्मात्समात्मानिनिवेदयेत् ॥ २६ ॥ एवंयःकुरुतेपार्थविधिनानेनसुव्रत ॥
दशावतारनामाख्यंतस्यपुण्यफलंशृणु ॥ २७ ॥ श्रूयतेयास्त्वमालोच्यपुरुषाणांदशादश ॥ तांश्छिनत्तिनसंदेहशक्रप्रहरणैर्हरिः ॥ २८ ॥
संसारसागरेघोरेमज्जंततत्रमांहरिः ॥ श्वेतद्वीपंनयत्याशुव्रतेनानेनतोषितः ॥ २९ ॥ किंतस्यनभवेल्लोकेयस्यतुष्टोजनार्दनः ॥
सोऽहंजनार्दनोराजन्कालरूपीधरासुतः ॥३०॥ मर्त्यलोकेस्वयंपार्थभूभारोत्तारकारणम् ॥ यास्त्रीव्रतमिदंपार्थचरिष्यातिमयोदितम् ॥३१॥
सालक्ष्म्याऽचलयायुक्ताभर्तृपुत्रसमन्विता ॥ मर्त्यलोकेचिरंस्थित्वाविष्णुलोकेमहीयते ॥ ३२ ॥ विष्णुलोकाद्रुद्रलोकंततोयातिपरंपदम्॥
येपूजयंतिपुरुषाःपुरुषोत्तमस्यमत्स्यादिकांस्तुदशमीषुदशावतारान् ॥ मर्त्यादशस्वपिदशासुसुखंविहृत्यतेयांतियानमधिरुह्यसुरेशलो
कान् ॥३३॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेदशावतारचरित्रव्रतंनामात्रिषष्टितमोऽध्यायः॥६३॥छ॥श्रीकृष्ण
उवाच ॥ पार्थपार्थिववृन्दानांमुखपङ्कजसद्रवे ॥ शृणुष्वावहितोवच्मितवाशादशमीव्रतम् ॥ १ ॥ नलनामाभवत्पूर्वंनिषधेषुमहीपते ॥
सभ्रात्रानिहितोराज्येनिष्करेणेतिनःश्रुतम् ॥ २ ॥ अक्षैर्द्यूतेनराजेन्द्रनिर्ययौभार्ययासह ॥ वनंप्रतिभयंशून्यंझिल्लीकगणनादितम् ॥ ३ ॥
सगत्वाप्रत्यहोरात्रंजलमात्रेणवर्तयन् ॥ ददर्शवनमध्यस्थाञ्छकुनीन्कांचनच्छवीन् ॥ ४॥ ग्रहीतुमिच्छंस्तान्राजन्समाच्छाद्यस्ववाससा ॥
समापेतुःखगास्तूर्णंगृहीत्वावसनंशुभम् ॥ ५ ॥ आससादसभांकांचिद्धृतवासाःसुदुःखितः ॥ दमयंतींसभांप्राप्यनिद्रयापहृतांसदा ॥ ६ ॥
दुःखादुत्सृज्यगतवान्भाग्यतःप्राग्धनेश्वरम् ॥ गतेतुनैषधेभैमीप्रबुद्धेवांचितानना ॥ ७ ॥ अपश्यंतीनलंवीरंवीरभीमसुतावने ॥ इतश्चे

तश्चबभ्रामहाहेतिरुदतेमुहुः ॥ ८ ॥ दुःखशोकसमाक्रांतानलदर्शनलालसा ॥ आससाददिनैःकैश्चित्साचैद्यपुरमंजसा ॥ ९ ॥ उन्म
त्तवत्परिवृताशिशुभिःकौतुकाकुलैः ॥ सादृष्टाचेदिराजस्यजनन्याजनवेष्टिता ॥ १० ॥ चंद्रलेखेवपतिताभूमौभासितादिङ्मुखा ॥
आरोप्यसास्वभवनंपृष्टाकात्वंवरानने ॥ ११ ॥ उवाचभैमीसव्रीडंसैरंध्रींमांनिबोधत ॥ नधावयेयंचरणौनोच्छिष्टंभक्षयाम्यहम् ॥ १२ ॥
यदिप्रार्थयतेकश्चिद्दंड्यस्तेसांप्रतंभवेत् ॥ प्रतिज्ञयानयादेवितिष्ठेयंतववेश्मनि ॥ १३ ॥ एवमस्त्वनवद्यांगिराजमाताप्युवाचताम् ॥
एवंविधातद्भवनेकंचित्कालमनिंदिता ॥ १४ ॥ उवासवसनार्द्धेनप्रवृत्तांतेकिलद्विजः ॥ आनयामाससमुदितोदमयंतींगृहंपितुः ॥ १५ ॥
मात्रापित्रासमायुक्तासुतैर्भ्रातृभिरेवच ॥ दमयंतीतथाप्यास्तेदुःखंनैषधवर्जिता ॥ १६ ॥ प्रोवाचाविमनाहूयव्रतंदानमथापिवा ॥ कथ
यध्वंयथामेस्यादिष्टेनसहसंगमः ॥ १७ ॥ तत्रेतिहासकुशलोविप्रःप्रोवाचबुद्धिमान् ॥ भद्रेत्वमाशादशमींकुरुष्वेप्सितासिद्धिदाम् ॥ १८ ॥
चकारसर्वंतन्वंगीयत्पुराणविदातदा ॥ ख्यातमाख्यानविदुषादमनेनपुरोधसा ॥ १९ ॥ व्रतस्यास्यप्रभावेनदमयंत्यानरोत्तम ॥
संजातःसुखदोऽत्यर्थंभर्त्रासहसमागमः ॥ २० ॥ ॥ युधिष्ठिरउवाच ॥ ॥ कथमाशादशम्येषागोविन्दक्रियतेकदा ॥ सर्वमेतत्समाच
क्ष्वमासपोह्यासियादव ॥ २१ ॥ ॥ श्रीकृष्णउवाच ॥ राज्याशयाराजपुत्रःकृष्यर्थंतुकृषीवलः ॥ भार्यार्थंतुवणिक्पुत्रःपुत्रार्थंगुर्विणीतथा ॥
॥ २२ ॥ धर्मार्थकामसंसिद्ध्यैलोकेकन्यावरार्थिनी ॥ यष्टुकामोद्विजवरोरोगीरोगापनुत्तये ॥२३॥ चिरप्रवासितेकांतेकालेनधृतिपंडिता॥
एतेष्वन्येषुकर्तव्यमाशाव्रतमिदंसदा ॥ २४ ॥ यदायस्यभवेदार्तिकार्यंतेहितदाव्रतम् ॥ शुक्लपक्षेदशम्यांतुस्नात्वासंपूज्यदेवताः ॥ २५ ॥
नक्तंतदाशाःसंपूज्याःपुष्पालक्तकचन्दनैः ॥ गृहाङ्गणेलेखयित्वायवैःपिष्टातकेनवा ॥ २६ ॥ दत्त्वाघृताक्तंनैवेद्यंपुनःकार्यंनिवेदयेत् ॥
आशाश्चाशाःसदासंतुविद्यंतांचमनोरथाः ॥ २७ ॥ भवतीनांप्रसादेनसदाकल्याणमस्त्विति ॥ एवंसंपूज्यभुञ्जीतदत्वाविप्रायदक्षिणाम् ॥
॥ २८ ॥ अनेनक्रमयोगेनमासिमासिसमाचरेत् ॥ यावन्मनोरथःपूर्णस्ततःपश्चात्समुद्यमात् ॥ २९ ॥ मासिपूर्णेचषण्मासेवर्षेवर्षद्वयेगते ॥
सौवर्णाःकारयेदाशारौप्यापिष्टातकेनवा ॥ ३० ॥ ज्ञातिबंधुजनैःसार्द्धंस्नातःसम्यगलंकृतः ॥ पूजयेन्मंत्रसंदर्भैरभिध्यांत्वागृहांगणे ॥ ३१ ॥

तवसंनिहितःशक्रःसुरासुरनमस्कृतः ॥ पूर्वाचन्द्रेणसहिताऐन्द्रीदिग्देवतेनमः ॥ ३२ ॥ अग्नेःपरिग्रहादार्येत्वमाग्नेयीतिपठ्यसे ॥
तेजोमयीपराशक्तिराग्नेयीवरदाभव ॥ ३३ ॥ देवराजंसमासाद्यलोकःसंयमयत्यसौ ॥ तेनसंयमनीयासियाम्येकामप्रदाभव ॥ ३४ ॥
खड्गंसहातिविकृतानैर्ऋतिस्त्वमुपाभृता ॥ तेननैर्ऋतनाम्नीत्वंकृतवान्मघवासदा ॥ ३५ ॥ त्वय्यास्तेभवनाधारवरुणोयादसांपतिः ॥
इष्टकामार्थसिद्ध्यर्थंवारुणिप्रभवाभव ॥ अधिश्रितासियस्मात्त्वंवायुनाजगदायुना ॥३६ ॥ वायव्येत्वमतःशान्तिनित्यंयच्छनमोनमः॥
कौबेरोवाशिसौम्याचप्रख्यातात्वमथोत्तरा ॥ ३७ ॥ ऐशानीजगदीशेनशंभुनात्वमलंकृता ॥ अतस्त्वंशिवसान्निध्यंदेविदेहिशिवे
नमः ॥ ३८ ॥ सर्पाष्टककुलेनत्वंसेवितासितथाप्यधः ॥ नागांगनाभिःसहिताहितानःसर्वदाभव ॥ ३९ ॥ सप्तलोकैःपरिगतासर्वदात्वं
शिवायतः ॥ सनकाद्यैःपरिवृताब्राह्मीजिह्वानयाकुरु ॥ ४० ॥ नक्षत्राणिचसर्वाणिग्रहास्ताराग्रहास्तथा ॥ नक्षत्रमातरोयेचभूतप्रेतावि
नायकाः ॥ ४१ ॥ सर्वेममेष्टसिद्ध्यर्थंभवंतुप्रणताःसदा ॥ एभिर्मंत्रैःसमभ्यर्च्यपुष्पधूपादिनाततः ॥ ४२ ॥ वासोभिरभिसंस्थाप्यफला
निविनिवेदयेत्॥तत्तूर्यध्वनिघोषेणगीतमङ्गलनिःस्वनैः ॥ ४३ ॥ नृत्यंतीभिर्वरस्त्रीभिस्तांरात्रिमतिवाहयेत्॥कुंकुमक्षोदतीव्रेणदानमानादि
भिःसुखम् ॥४४॥ प्रभातेवेदविदुषेसर्वंतत्प्रतिपादयेत् ॥ अनेनाविधिनासर्वंक्षमाप्यप्रणिपत्यच ॥४५॥ भुञ्जीतमित्रसहितःसुहृद्बंधुजनैरपि॥
यएवंकुरुतेपार्थदशमीव्रतमादरात् ॥ ४६ ॥ ससर्वकाममाप्नोतिमनसाभीप्सितंनरः ॥ स्त्रीभिर्विशेषतःकार्यंव्रतमेतद्युधिष्ठिर ॥ ४७ ॥
लघुचित्तायतोनार्यःसदाकामपरायणाः ॥ धन्यंयशस्यमायुष्यंसर्वकामफलप्रदम् ॥ ४८ ॥ कथितंतेमहाराजमयाव्रतमनुत्तमम् ॥ ४९ ॥
येमानवामनुजपुङ्गवकामकामाःसंपूजयंतिदशमीषुसदादशाशाः ॥ तेषांविशेषनिहताहृदयेप्रकाममाशाःफलंत्यलमलंबहुनोदितेन ॥५०॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेआशादशमीव्रतंनामचतुष्षष्टितमोऽध्यायः ॥ ६४ ॥ छ ॥ युधिष्ठिरउ
वाच ॥ अहंत्वागस्करःपापःपृथिवीक्षयकारकः ॥ परिपृच्छामिगोविन्दत्वांनमस्कृत्यपादयोः ॥ १ ॥ गुह्याद्गुह्यतरंब्रूहिव्रतंकिंचिदनु
त्तमम् ॥ तरामियेनपापौघंभीष्मद्रोणवधार्णवम् ॥ २ ॥ श्रीकृष्णउवाच ॥ आसीत्पुरोत्तरोनाम्नाविदर्भायांकुशध्वजः ॥ सांतःपुरसु

तोयश्चचक्रेराज्यमतंद्रितः ॥ ३ ॥ जघानतापसंसोऽथप्रमादान्मृगयांगतः ॥ मृगंमत्वामहारण्येब्राह्मणंदैवमोहितः ॥ ४ ॥ तेनकर्मविपा
केनदेहांतेनरकंगतः ॥ तत्रासौयातनाघोराअनुभूयातिपीडितः ॥ ५ ॥ तस्मादिहागतोमर्त्यौरौद्रोविषधरोऽभवत् ॥ अदशत्सोऽपिराजे
न्द्रब्राह्मणंचरणेरुषा ॥ ६ ॥ लब्ध्वासहचपंचत्वंजगामद्विजसंयुतः ॥ विपन्नस्तुततःसिंहोद्वितीयेऽभूत्सुदारुणः ॥ ७ ॥ विदारितमुखोहिं
स्रोनानासत्त्वभयंकरः ॥ जघानासौपुनःश्रेष्ठंराजन्यंमृगयागतम् ॥ ८ ॥ ततोऽपिबहुभिःशस्त्रैराजलोकैर्निपातितः ॥ पुनर्व्याघ्रोबभूवासौ
तृतीयेऽपिभवांतरे ॥ ९ ॥ तीक्ष्णपादनखाघातव्यापादितमृगान्वयः ॥ तेनापिवैश्योनिधनंनीतःकिञ्चिद्भवांतरम् ॥ १० ॥ सनीतः
कृमिराशित्वंलोकैःखातनिपातनात् ॥ संजातस्तुमहान्क्रोशनखराहतजंतुरुक् ॥ ११ ॥ जघानबालंचण्डालादसौमृत्युमवाप्नुयात् ॥ पञ्चमे
मकरोजातःसमुद्रेऽतिभयंकरः ॥ १२ ॥ स्त्रियंजघानतरुणींस्नातुकामामथागताम् ॥ प्रभातेशङ्करस्याग्रेशशाङ्कग्रहणेनिशि ॥१३॥ तत्रापि
बडिशंदत्त्वाजनैःप्राणैर्वियोजितः ॥ पुनःषष्ठेभवेजातःपिशाचःपिशिताशनः ॥ १४ ॥ क्रूरश्छिद्रपरःक्षुद्रोनरप्राणवियोजकः ॥ सोऽवती
र्णोनरस्यांगंकर्षयामासकस्यचित् ॥ १५ ॥ मंत्रेणाहूयसिद्धेनवातिकेनव्यसुःकृतः ॥ सप्तमेसपुनर्जातोदुर्निरीक्ष्यवपुर्भृशम् ॥ १६ ॥
क्रूरदंष्ट्रःकरालास्योमांसशोणितभोजनः ॥ दिग्वासामनुभूमीषुवासिष्ठोब्रह्मराक्षसः ॥ १७ ॥ सराष्ट्रंजर्जरंशून्यंसर्वंचक्रेविषादिषु ॥
आक्रम्यभीमदासेनराज्ञाराक्षसशत्रुणा ॥१८॥ समारोप्यधनुःसंख्येब्रह्मास्त्रेणनिपातितः ॥ भूयोऽभवद्व्याघ्रसमःस्वजन्मन्यष्टमेभुवि ॥ १९ ॥
वनेचराणांक्रुद्धाङ्गोब्राह्मणान्निधनंगतः ॥ ततोहस्तीचभल्लूकोमातंगेनधनुष्मता ॥ २० ॥ एकादशेऽपिपाञ्चालोभवमध्येऽतिभीषणः ॥
ऊर्ध्वकेशोतिरक्ताक्षोजातोह्रस्वतनुर्दृढः ॥२१॥ पापोधर्मध्वजोरक्षोदेवतोज्झितमाल्यधृक् ॥ सदण्डपाशिकेनैववृक्षाग्रेह्यवलंबितः ॥२२॥
द्वादशेसपुनर्जातःपुष्कलक्लेशभाजनः ॥ भक्ष्यलोभाद्बिलगतोव्याधेनाविनिपातितः ॥ २३ ॥ तेनचासीत्कृतंपूर्वंतारकद्वादशीव्रतम् ॥
तस्यप्रभावाज्जातोऽपिदुष्टयोनौपुनःपुनः ॥ २४ ॥ अवापशीघ्रंपंचत्वंसंसारभवसागरे ॥ पुनरेवाभवद्राजाविदर्भायांसुधार्मिकः ॥ २५ ॥

१ गौर्जरम्–इ०पा० ।

भूयश्चोपोषितातेनतारकद्वादशीशुभा ॥ पश्यतांव्रतमाहात्म्यंजातोजातःपुनःपुनः ॥२६॥ व्रतप्रभावाद्भुवनेभुक्त्वाराज्यमकंटकम्॥प्रापवि
ष्णुपुरेस्थानंयावदाभूतसंप्लवम्॥२७॥ ॥युधिष्ठिरउवाच॥कथमेतद्व्रतंकृष्णकर्तव्यंपुरुषोत्तमैः॥स्त्रीभिर्वाभर्तृवाक्येनस्नानदानजपादिकम्॥
॥२८॥ ॥ श्रीकृष्णउवाच॥मार्गशीर्षेसितेपक्षेगृहीत्वाद्वादशीव्रतम्॥अकृत्रिमेजलेस्नानमपराह्णेसमाचरेत् ॥२९॥ प्रणम्यभास्करायाथकृत्वा
देवार्चनंतथा॥होमंचतावत्स्थातव्यंयावदस्तमितोरविः ॥३० ॥ ततोभुक्त्वाफलैःपुष्पैर्गन्धधूपविलेपनैः॥सजलंसाक्षतंकृत्वासहिरण्यंशुभैः
फलैः॥३१॥रम्येताम्रमयेपात्रेजानुभ्यांधरणींगतः॥पूर्वामुखःप्रशोषाग्रेमूर्ध्निकृत्वार्घ्यभाजनम् ॥३२॥भूमौतुमंडलंकृत्वागोमयेनसतारकम् ॥
चंदनेनसमालिख्यध्रुवंहिगगनोन्मुखः ॥ ३३ ॥ सहस्रशीर्षामंत्रेणभूमौशक्त्याशनैःस्वयम् ॥ तारकाणांकुरुश्रेष्ठदद्यादर्घ्यमतंद्रितः ॥ ३४ ॥
पर्युक्ष्यधूममुत्क्षिप्यदद्याद्विप्रायदक्षिणाम् ॥ क्रमेणसर्वंनिर्वर्त्यभोज्यंभोज्यंनिशागमे ॥ ३५ ॥ मार्गशीर्षेखंडखाद्यंपौषेसोहालकंतथा ॥
तिलतंडुलकंमाघेगुडापूपंचफाल्गुने ॥ ३६ ॥ मोदकांश्चैत्रमासेतुवैशाखेखंडवेष्टकम् ॥ ज्येष्ठेसक्तुभृतैःपात्रैराषाढेगुडपूरिकैः ॥ ३७ ॥
श्रावणेमधुशीर्षेणनभस्येपायसेनच ॥ घृतपर्णैश्चाश्वयुजेकांसारैःकार्तिकेक्रमात् ॥ ३८ ॥ एभिर्द्वादशभिर्वर्षैर्भोजयित्वाद्विजान्स्वयम् ॥
भुञ्जीतभक्त्याराजेन्द्रपश्चाद्देवंक्षमापयेत् ॥ ३९ ॥ समाप्तेतुव्रतेकृत्वाराजतंतारकागणम् ॥ दृष्ट्वावापूर्वविधिनापूजयित्वाक्षमापयेत् ॥४०॥
कुंभाद्वादशदातव्याःसोदकामोदकाश्रिताः ॥ ब्राह्मण्यांपरिधानंचपद्मरागंसकुंकुमम् ॥ ४१ ॥ ब्राह्मणेवल्गुलह्वाटंलक्षपुष्पोपशोभितम् ॥
चालकेनोपवीतंचपुष्पंदत्त्वाक्षमापयेत् ॥ ४२ ॥ अनेनविधिनाराजन्यःकरोतिव्रतंनरः ॥ नारिवाभरतश्रेष्ठभक्तिभावपुरःसरा ॥ ४३ ॥
नक्षत्रलोकंव्रजातिविमानेनार्कवर्चसा ॥ अप्सरोगणगन्धर्वयक्षविद्याधरामरैः ॥ ४४ ॥ सहस्रभर्तास्वर्लोकेपूज्यमानोदिवाकरैः ॥ वसे
त्कल्पायुतंयावत्पुनर्विष्णुपुरंव्रजेत् ॥ ४५ ॥ एतद्व्रतंपुराचीर्णंशच्याराज्ञ्याश्रियोमया ॥ सीतयादमयंत्याचरुक्मिण्यासत्यभामया ॥४६॥
मेनयारंभयास्वर्गेउर्वश्यादेवदत्तया ॥ अन्याभिरपिनारीभिःपुरुषैश्चपृथग्विधैः ॥ ४७ ॥ चीर्णमेतद्व्रतंपार्थसर्वपापभयापहम् ॥ ४८ ॥

जन्मांतरेष्वपिकृतानिहरत्यघानियासंदहत्यहरहःसुकृतोपयोगात् ॥ साद्वादशीजगतितारकनामधेयातन्नास्तियन्नविदधातिकृतामनुष्यैः ॥ ४९ ॥ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेतारकद्वादशीव्रतंनामपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ भगवन्ब्रूहिमेसम्यगरण्यद्वादशीव्रतम् ॥ सप्राशनंसोपवासंसरहस्यंसमंत्रकम् ॥ १ ॥ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ कौंतेययत्पुराचीर्णंसीतयावनसंस्थया ॥ व्रतंराघववाक्येनप्रशस्तंदोषवर्जितम् ॥ २ ॥ लोपामुद्रालयेसाध्व्योमुनिपत्न्योबहुप्रजाः ॥ भोजितास्तर्पिताःसर्वैराहारैःसर्करापिकैः ॥ ३ ॥ पद्मिनीपत्रविस्तीर्णैःसोपदंशैर्यथानवैः ॥ भक्ष्यैर्भोज्यैस्तथालेह्यैश्चोष्यैश्चापियदृच्छया ॥४॥ तामिहैकमनाःपार्थशृणुष्वारण्यद्वादशीम् ॥ मार्गशीर्षेसितेपक्षेएकादश्यांदिनोदये ॥५॥ स्नात्वानरःसोपवासःकृत्वापूजांजनार्दने ॥ गंधपुष्पाक्षतैर्धूपैर्दीपैर्जागरणैर्निशाम् ॥ ६ ॥ नीत्वाप्रभातेगत्वाचवनेवेदाङ्गपारगान् ॥ भोजयित्वाफलप्रायंस्वयंभुञ्जीतवाग्यतः ॥ ७ ॥ पञ्चगव्यंप्राशयित्वापूर्वमेवाथतद्दिने ॥ वर्षमेकंशुभंपूर्णंपारयित्वायुधिष्ठिर ॥ ८ ॥ श्रावणेकार्तिकेमाघेचैत्रेवाथसमर्चिते ॥ सोपदंशैःपत्रशाकैस्तिलशष्कुलिकादिभिः ॥ ९ ॥ अपूपैःखण्डवेष्टैश्चमरीचैःसिंहकेसरैः ॥ धूलीमुखैरमृतफलैःस्वादुकोकरसैःशुभैः ॥ १० ॥ शीतलैस्तर्पयेद्विद्वानर्कपुष्पैःसुमालकैः ॥ दधिक्षीराज्यपाणिज्यैश्चातुर्जातकरंजितैः ॥ ११ ॥ कर्पूरनखविद्धैश्चमधुरैःपनसोत्तमैः ॥ बहुवृक्षंवनंगत्वासुस्वादुसलिलंशिवम् ॥ १२॥ सुखासनोपविष्टांश्चप्रागुदङ्मुखवच्छुचीन् ॥ भोजयेद्दशचद्वौवामुनीनारण्यवासिनः ॥१३॥एकदंडींस्त्रिदंडींश्चगृहस्थांश्चापिसुव्रतान् ॥ ब्राह्मण्योविविधाःसतएकपत्न्यःपतिव्रताः॥१४॥ चार्वंग्यश्चार्चिताःस्नाताःसर्वावयवशोभनाः ॥ सुवस्त्राःकुंकुमाक्ताङ्गाःसुगन्धकुसुमार्चिताः ॥१५॥ अंगैर्वाभोजनीयास्तास्ताश्चादित्यस्यदैवताः॥वासुदेवजनार्दनदामोदरमधुसूदनाः ॥१६॥ पद्मनाभकृष्णाविष्णुगोवर्द्धनात्रिविक्रमाः ॥ श्रीधरश्चहृषीकेशःपुण्डरीकाक्षआदिवाराहाः ॥१७॥एभिर्द्वादशभिर्मंत्रैर्नमस्कारांतयोजितैः॥गंधचंदनसंवस्त्रंधूपंदत्त्वापृथक्पृथक्॥१८॥भोजयित्वाशुभान्नानिदद्यात्ताभ्यःसुदक्षिणाम् ॥

१ मासे–इ॰ पा॰। २ प्रपापैः इ॰ पा॰।

प्रणम्यप्रार्थयेद्भक्त्याविष्णुर्मेप्रीयतामिति ॥१९॥ ततोभुञ्जीतसहितंभृत्यैःप्रेष्यजनेनच ॥ आगताभ्यागतैर्लोकैःसुहृत्संबंधिबंधुभिः ॥२०॥
एवंकौंतेयकुरुतेयोऽरण्यद्वादशींनरः ॥ सदेहांतेविमानस्थोदिव्यकन्यासमावृतः ॥ २१ ॥ यातिज्ञातिसमायुक्तःश्वेतद्वीपंहरेःपुरम् ॥ यत्रलो
काःपीतवस्त्राःश्यामदेहाश्चतुर्भुजाः ॥ २२ ॥ शंखचक्रगदापद्मचारुहस्ताःसकौस्तुभाः॥गरुडासनाःसाभरणामुकुटोत्कटकुंडलाः ॥ २३ ॥
नीलोत्पलोद्दामपद्ममालयालंकृतोरसः ॥ लक्ष्मीधरामेघवर्णाःकूर्पराङ्गदभूषणाः ॥ २४ ॥ तिष्ठंतिविष्णुसामान्येयावदाभूतसंप्लवम् ॥
तस्मादेत्यमहातेजाःपृथिव्यांनृपपूजिताः ॥ २५ ॥ मर्त्यलोकेकीर्तिमंतःसंभवंतिनरोत्तमाः ॥ ततोयांतिपरंस्थानंमोक्षमार्गेशिवंशुभम् ॥
॥ २६ ॥ यत्रगत्वानशोचंतिनसंसारेभ्रमंतिच ॥ २७॥ येद्वादशीमुपवसंतिसितामरण्यनाम्नींवनेद्विजवरानथभोजयंति ॥ साध्व्यःस्त्रियःसु
चरिताभरणाश्चतेषांविष्णुःप्रसादमुपयातिददातिमोक्षम्॥२८॥इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेअरण्यद्वादशी
व्रतंनामषट्षष्टितमोऽध्यायः॥६६॥छ॥ युधिष्ठिरउवाच ॥ घनावृतेवरेदेवेवर्षाकालेह्युपस्थिते ॥ मयूरकेकाकुलितेदर्दुरारावपूरिते ॥ १ ॥
कुलस्त्रियःप्रयच्छंतिकस्यान्नंकाऽत्रदेवता ॥ किंव्रतंकृष्णविख्यातमन्नंकस्यांतिथौभवेत् ॥ २ ॥ ॥ श्रीकृष्णउवाच ॥ प्रवृत्तेश्रावणे
मासिकृष्णपक्षेह्युपस्थिते ॥ एकादश्यांशुचिर्भूत्वासर्वौषधिजलैःशुभैः ॥ ३ ॥ माषचूर्णेनराजेन्द्रकुर्यादिंदुरिकाशनम् ॥ मोदकांश्च
तथापंचघृतपक्वान्सुनिर्मलान् ॥ ४ ॥ नरमेकैकमुद्दिश्यततोगत्वाजलाशयम् ॥ दुष्टयादोविरहितंसतोयंजलजैर्युतम् ॥ ५ ॥ तस्यैवपुलि
नेरम्येजुष्टान्नेगोमयादिना ॥ कृत्वामंडलकंवृत्तंपिष्टकादिभिरर्चितम् ॥ ६ ॥ चर्चितंगंधकुसुमैर्धूपदीपाक्षतोज्ज्वलम् ॥ तत्रचंद्रंलि
खेदेवरोहिण्यासहितंविभुम् ॥ ७ ॥ अर्चयेच्चसभार्यौवैमन्त्रेणानेनभावितः ॥ सोमराजनमस्तुभ्यंरोहिण्यैतेनमोनमः ॥ ८ ॥ महासातिमहा
देविसंपादयममेप्सितम् ॥ एवंसंपूज्यतस्याग्रेनैवेद्यंदेयमर्चितम् ॥ ९ ॥ तत्रैवब्राह्मणेदद्यात्सोमोमेप्रीयतामिति ॥ प्रीयतामितिमेदेवीरोहि
णीसहिताप्रिया ॥ १० ॥ एवमुच्चार्यदत्त्वाचततोऽतर्जलमाविशेत् ॥ कठांतंकटिमात्रंवागुल्फांतंवाजलाशये ॥ ११ ॥ ध्यायेतमनसासोमं
रोहिणीसहितंतदा ॥ यावत्समस्तंतद्भुक्तंभुक्त्वाचांतस्तटेस्थितः ॥ १२ ॥ नियम्यवसतांचान्येततोविप्रायभोजनम् ॥ दक्षिणासहितंदेयं

निश्चयंवाविकल्पयेत्॥१३॥भक्त्याशक्त्यायथाचित्तंयथावित्तंतथातथा॥यःकरोतिनरोराजन्नारीवाथकुमारिका॥१४॥ वर्षेवर्षेविधानेनपार्थे
दंरोहिणीव्रतम् ॥ इहलोकेचिरंस्थित्वाधनधान्यसमाकुले ॥ १५ ॥ गृहाश्रमेशुभांलब्ध्वापुत्रपौत्रादिसंततिम् ॥ ततःसुतीर्थेमरणंततोब्रह्म
पुरंव्रजेत् ॥ १६ ॥ तस्माद्विष्णुपुरंपार्थततोरुद्रपुरंशुभम् ॥ १७ ॥ खेरोहिणीशशधराभिमताहिताचकिंकारणंशृणुनरेन्द्रनिवेदयामि ॥
संपिष्टमाषरचितेंदुरिकाशतंयद्धुक्तंजलेगुडघृतेनफलंतदेतत् ॥ १८ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादे
रोहिणीचन्द्रव्रतंनामसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ अवियोगव्रतंब्रूहिममयादवनंदन ॥ विधानं
तस्यकीदृक्चकिंपुण्यंकाऽत्रदेवता ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुपांडवयत्नेनकथ्यमानंयथाखिलम् ॥ अवियो
गव्रतंनामव्रतानामुत्तमोत्तमम् ॥ २ ॥ प्रौष्ठपदेशुक्लपक्षेद्वादश्यांप्रातरुत्थितः ॥ यस्तुशुक्लांबरधरःस्नात्वापूर्वंजलाशये ॥ ३ ॥
हृद्येरम्येसौधतटेहारींलिख्येतमण्डले ॥ गोधूमचूर्णपिष्टेनलक्ष्मींतत्पार्श्ववर्तिनीम् ॥ ४ ॥ तत्रैवचहरंगौरींसावित्रींब्रह्मणासह ॥
राज्ञीसहितंचरविंत्रैलोक्येद्योतकतारम् ॥ ५ ॥ गंधैःपुष्पैश्चधूपैर्नैवेद्यैरर्चयेद्यथाशक्त्या ॥ अवियोगव्रतचारीमंत्रेणाऽनेनराजेन्द्र ॥ ६ ॥
नारीवापुरुषोवाअवियोगमतिंदृढांकृत्वा ॥ भक्त्याध्यानीमौनीदंपत्यंपूजयेद्देवम् ॥ ७ ॥ सहस्रमूर्द्धापुरुषःपद्मनाभोजनार्दनः ॥
व्यासोऽपिकपिलाचार्योभगवान्पुरुषोत्तमः ॥ ८ ॥ नारायणोमधुलिहोविष्णुर्दामोदरोहरिः ॥ महावराहोगोविंदःकेशवोगरुडध्वजः ॥ ९ ॥
श्रीधरःपुंडरीकाक्षोविश्वरूपस्त्रिविक्रमः ॥ उपेन्द्रोवामनोरामोवैकुंठोमाधवोध्रुवः ॥ १० ॥ वासुदेवोहृषीकेशःकृष्णःसंकर्षणोऽच्युतः ॥
अनिरुद्धोमहायोगीप्रद्युम्नोनंदएवच ॥ ११ ॥ नित्यंसमेशुभःप्रीतःसश्रीकःकेशशूलिनः ॥ उमापतिर्नीलकंठःस्थाणुःशंभुर्भगाक्षिहा॥१२॥
ईशानोभैरवःशूलीत्र्यंबकस्त्रिपुरांतकः ॥ कपर्दीशोमहालिंगीमहाकालोवृषध्वजः ॥ १३ ॥ शिवःशर्वोमहादेवोरुद्रोभूतमहेश्वरः ॥
ममास्तुसहपार्वत्याशंकरःशंकरश्चिरम् ॥ १४ ॥ ब्रह्माशंभुःप्रभुःस्रष्टापुष्करीप्रपितामहः ॥ हिरण्यगर्भोवेदज्ञःपरमेष्ठीप्रजापतिः ॥ १५ ॥
चतुर्मुखःसृष्टिकर्तास्वयंभूःकमलासनः ॥ विरञ्चिःपद्मयोनिश्चममास्तुवरदःसदा ॥ १६ ॥ आदित्योभास्करोभानुःसूर्योर्कःसवितारविः ॥

मार्तंडोमंडलज्योतिरग्निरश्मिर्जनेश्वरः ॥१७॥ प्रभाकरःसप्तसप्तिस्तरणिःसरणिःखगः ॥ दिवाकरोदिनकरःसहस्रांशुर्मरीचिमान् ॥ १८ ॥
पद्मप्रबोधनःपूषाकिरणीमेरुभूषणः ॥ निकुंभोवर्णभोदेवःसुप्रीतोऽस्तुसदामम ॥ १९ ॥ लक्ष्मीःश्रीःसंपदापद्मामाविभूतिर्हरिप्रिया ॥
पार्वतीललितागौरीउमाशंकरवल्लभा ॥ २०॥ गायत्रीप्रकृतिःसृष्टिःसावित्रीवेधसोमता ॥ राज्ञीभानुमतीसंज्ञानित्यभाभास्करप्रिया ॥२१॥
इतिपद्मनाभशंकरपितामहार्कादिसप्रियान्पूज्य ॥ दत्वादत्वादानंभुक्त्वाचांतेव्रजेद्वेश्म ॥ २२ ॥ द्वादश्यांचरतिनरोव्रतमेतद्भक्तिभावितो
लोके॥भवतियशोधनभागीसंततिमान्विगतसंतापः ॥ २३ ॥ हरिहरहिरण्यगर्भप्रभाकराणांक्रमेणलोकेषु ॥ भुक्त्वाभोगान्विपुलानथयो
गीनिर्वृतोभवति ॥ २४ ॥ स्त्रीपुंसोर्यदियुग्मंपुरुषोवायादिसमाचरतिकश्चित् ॥ नारीवाव्रतमेतच्चीर्त्वायात्यालयंविष्णोः ॥ २५ ॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेहरिहरहिरण्यगर्भप्रभाकराणामवियोगव्रतंनामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥
॥ छ ॥ युधिष्ठिरउवाच ॥ अक्षौहिण्योदशाष्टौचमद्राज्यार्थेक्षयंगताः ॥ तेनपापेनमेचित्तेजुगुप्सातिविवर्तते ॥ १ ॥ तत्रब्राह्मणरा
जन्यवैश्यशूद्रादयोहताः ॥ भीष्मद्रोणकलिंगादिकर्णशल्यसुयोधनाः ॥ २ ॥ तेषांवधेनयत्पापंतन्मेमर्माणिकृंतति ॥ पापप्रक्षालनं
कश्चिद्धर्मंब्रूहिजगत्पते ॥ ३ ॥ श्रीकृष्णउवाच ॥ सुमहत्पुण्यजननंगोवत्सद्वादशीव्रतम् ॥ अस्तिपार्थमहाबाहोपांडवानांधुरंधर ॥ ४ ॥
॥ युधिष्ठिरउवाच ॥ केयंगोद्वादशीनामविधानंतत्रकीदृशम् ॥ कथमेषासमुत्पन्नाकस्मिन्कालेजनार्दन ॥ ५ ॥ एतत्सर्वंहरेब्रूहित्राहिमां
नरकार्णवात् ॥ ६ ॥ श्रीकृष्णउवाच ॥ पुराकृतयुगेपार्थमुनिकोटिःसमागता ॥ तपश्चचारविपुलंनानाव्रतधरागिरौ ॥ ७ ॥ हर्षेणमहता
विष्टादेवदर्शनकांक्षया॥जंबूमार्गेमहापुण्येनानातीर्थविभूषिते॥८॥पारियात्रेसिद्धपात्रेरम्येतंदुलिकाश्रमे॥टंटांविरितिविख्यातेउत्तमेशिखरेनृ
प ॥९॥ तापसारण्यमतुलंदिव्यकाननमंडितम् ॥ वसिष्ठशुक्रांगिरसक्रतुदक्षादिभिर्वृतम् ॥१० ॥ वल्कलाजिनसंवीतैर्भृगोराश्रममंडलम् ॥
नानामृगगणैर्जुष्टंशाखामृगगणैर्युतम् ॥ ११ ॥ प्रशांतसिंहहरिणंवस्तुसर्वगतद्रुमम् ॥ गहनंनिर्झरंरम्यंलतासंतानसंकुलम् ॥ १२ ॥

१ टटाभिरिति–इ०पा०।

सिंहव्याघ्रगजैर्भिन्नंहरिणैःशंबरैःशशैः ॥ वराहैरुरुभिश्चित्रैःसमंतादुपशोभितम् ॥ १३ ॥ तपस्यतांतत्रतेषांमुनीनांदर्शनार्थिनाम् ॥
व्याजंचक्रेमहीनाथद्वादशार्धार्धलोचनः ॥ १४ ॥ बभूवब्राह्मणोवृद्धोजरापांडुरमूर्द्धजः ॥ श्लथचर्मतनुःकुब्जोयष्टिपाणिःसवेपथुः ॥ १५ ॥
उमापिचक्रेगोरूपंशृणुतत्पार्थयादृशम् ॥ क्षीरोदतोयसंभूतायाःपुरामृतमंथने ॥ १६ ॥ पञ्चगावःशुभाःपार्थपञ्चलोकस्यमातरः ॥
नंदासुभद्रासुरभीसुशीलाबहुलाइति ॥ १७ ॥ एतेलोकोपकारायदेवानांतर्पणायच ॥ जमदग्निभरद्वाजवसिष्ठासितगौतमाः ॥ १८ ॥
जगृहुःकामदाःपञ्चगावोदत्ताःसुरैस्ततः ॥ गोमयंरोचनामूत्रंक्षीरंदधिघृतंगवाम् ॥ १९ ॥ षडंगानिपवित्राणिसंशुद्धिकरणानिच ॥
गोमयादुत्थितःश्रीमान्बिल्ववृक्षःशिवप्रियः ॥ २० ॥ तत्रास्तेपद्महस्ताश्रीःश्रीवृक्षस्तेनसस्मृतः ॥ बीजान्युत्पलपद्मानांपुनर्जातानिगोम
यात् ॥ २१ ॥ गोरोचनाचमांगल्यापवित्रासर्वसाधिका ॥ गोमूत्राद्गुग्गुलुर्जातःसुगंधप्रियदर्शनः ॥ २२ ॥ आहारःसर्वदेवानांशिवस्यचवि
शेषतः ॥ यद्बीजंजगतःकिञ्चित्तज्ज्ञेयंक्षीरसंभवम् ॥२३॥ दध्नःसर्वाणिजातानिमङ्गलान्यर्थसिद्धये॥घृतादमृतमुत्पन्नंदेवानांतृप्तिकारणम् ॥
॥ २४ ॥ ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतम् ॥ एकत्रमंत्रास्तिष्ठंतिहविरन्यत्रतिष्ठति ॥ २५ ॥ गोषुयज्ञाःप्रवर्ततेगोषुदेवाःप्रतिष्ठिताः॥
गोषुवेदाःसमुत्कीर्णाःसषडंगपदक्रमाः ॥ २६ ॥ शृङ्गमूलेगवांनित्यंब्रह्माविष्णुश्चसंस्थितौ ॥ शृङ्गाग्रेसर्वतीर्थानिस्थावराणिचराणिच॥२७॥
शिवोमध्येमहादेवःसर्वकारणकारणम् ॥ ललाटेसंस्थितागौरीनासावंशेचषण्मुखः ॥ २८ ॥ कंबलाश्वतरौनागौनासापुटसमाश्रितौ ॥ कर्ण
योरश्विनौदेवौचक्षुर्भ्यांशशिभास्करौ ॥ २९ ॥ दंतेषुवसवःसर्वेजिह्वायांवरुणःस्थितः ॥ सरस्वतीचकुहरेयमयक्षौचगण्डयोः ॥ ३० ॥
संध्याद्वयंतथेष्टाभ्यांग्रीवायांचपुरंदरः ॥ रक्षांसिककुदेद्यौश्चपार्ष्णिकायेव्यवस्थितौ ॥ ३१ ॥ चतुष्पात्सकलोधर्मोनित्यंजंघासुतिष्ठति ॥
खुरमध्येषुगन्धर्वाःखुराग्रेषुचपन्नगाः ॥ ३२ ॥ खुराणांपश्चिमेभागेराक्षसाःसंप्रतिष्ठिताः ॥ रुद्राएकादशपृष्ठेवरुणःसर्वसन्धिषु ॥ ३३ ॥
श्रोणीतटस्थाःपितरःकपोलेषुचमानवाः ॥ श्रीरपानेगवांनित्यंस्वाहालंकारमाश्रिताः ॥ ३४ ॥ आदित्यारश्मयोवालाःपिण्डीभूताव्यवस्थि
ताः ॥ साक्षाद्गंगाचगोमूत्रेगोमयेयमुनास्थिता॥३५॥ त्रयस्त्रिंशद्देवकोट्योरोमकूपेव्यवस्थिताः ॥ उदरेपृथिवीसर्वासशैलवनकानना॥३६॥

चत्वारःसागराःप्रोक्तागवांयेतुपयोधराः ॥ पर्जन्यःक्षीरधारासुमेघाबिंदुव्यवस्थिताः ॥ ३७ ॥ जठरेगार्हपत्योऽग्निर्दक्षिणाग्निर्हृदिस्थितः ॥ कंठेआहवनीयोऽग्निःसभ्योऽग्निस्तालुनिस्थितः ॥ ३८ ॥ अस्थिव्यवस्थिताःशैलामज्जासुक्रतवःस्थिताः ॥ ऋग्वेदोऽथर्ववेदश्चसामवेदोयजुस्तथा ॥ ३९ ॥ सुरक्तपीतकृष्णादिगवांवर्णेव्यवस्थिताः ॥ तासांरूपमुमास्मृत्वासुरभीणांयुधिष्ठिर ॥ ४० ॥ संस्मृत्यतत्क्षणाद्गौरीइयेष सदृशांतनुम् ॥ आत्मानंविदधेदेवीधर्मराजशृणुष्वताम् ॥ ४१ ॥ षडुन्नतांपंचनिम्नांमंडूकाक्षींसुवालधिम् ॥ ताम्रस्तनींरौप्यकटिंसुखुरींसुमुखींसिताम् ॥ ४२ ॥ सुशीलांचसुतस्नेहांसुक्षीरांसुपयोधराम् ॥ गोरूपिणीमुमांस्पृष्ट्वास्वामिनींतांसवत्सकाम् ॥४३॥ चर्ययाप्रतरंदृष्टो महादेवःस्वचेतसि ॥ शनैःशनैर्ययौपार्थविप्ररूपीमहाश्रमम् ॥ ४४ ॥ दत्त्वाकुलपतेःपार्श्वंभृगोस्तांगांन्यवेदयत् ॥ तपस्विनांमहातेजास्तांचसर्वेषुपांडव ॥ ४५ ॥ न्यासरूपांददौधेनुंरक्षित्वातांदिनद्वयम् ॥ यावत्स्नात्वाइतस्तीर्त्वाजंबूमार्गेवियाम्यहम् ॥ ४६ ॥ रक्षिष्यामःप्रातिज्ञातेमुनिभिःसुरभीमिमाम् ॥ अंतर्द्धिमगमद्देवःपुनर्व्याघ्रोबभूवह ॥ ४७ ॥ वज्रचक्रनखोदर्वीज्वलत्पिंगललोचनः ॥ जिह्वाकरालवदनोजिह्वालांगूलदारुणः ॥ ४८ ॥ संप्रायादाश्रमपदंतांचधेनुंसवत्सकाम् ॥ त्रासयामासतांदेवमुनीनांदिक्ष्ववस्थिताः ॥४९॥ ऋषयोऽपिसमाक्रांताआर्तनादंप्रचक्रिरे ॥ हाहेत्युच्चैःकेचिदूचुर्हुंहुंकारैस्तथापरे ॥ ५० ॥ तालास्फोटान्ददुःकेचिद्व्याघ्रंदृष्ट्वातिभैरवम् ॥ सापिहंभारवांश्चक्रे गौरुत्प्लुत्यसवत्सका ॥ ५१ ॥ तस्याव्याघ्रभयार्तायाःकपिलायायुधिष्ठिर ॥ पलायंत्याःशिलामध्येक्षणंक्षुरचतुष्टयम् ॥ ५२ ॥ व्याघ्रवत्सकयोस्तत्रवंदितंसुरकिन्नरैः ॥ दृश्यतेऽतीवसुव्यक्तंतदद्यापिचतुष्टयम् ॥ ५३ ॥ सजलंशिवलिंगंचशंभोस्तीर्थंतदुत्तमम् ॥ यस्संस्पृशतिराजेन्द्रसगोवध्यांव्यपोहति ॥ ५४ ॥ तत्रस्नात्वामहातीर्थेजंबूमार्गेनराधिप ॥ ब्रह्महत्यादिभिःपापैर्मुच्यतेनात्रसंशयः ॥ ५५ ॥ ततस्तेमुनयःक्रुद्धाब्रह्मदत्तांमहास्वनाम् ॥ जघ्नुर्घंटांसुरैर्दत्तांगिरिकंदरपूरणीम् ॥ ५६ ॥ शब्देनतेनव्याघ्रोऽपिमुक्त्वागावंसवत्सकाम् ॥ विप्रैस्तत्रकृतंनामढुंढागिरिरितिश्रुतिः ॥ ५७ ॥ तंप्रपश्यंतियेपार्थतेरुद्रानात्रसंशयः ॥ अथप्रत्यक्षतांश्रेष्ठस्तेषांदेवोमहेश्वरः ॥ ५८ ॥ शूलपाणिस्त्रिपुरहाकामघ्नोवृषभेस्थितः ॥ उमासहायोवरदःसस्वामीसविनायकः ॥ ५९ ॥ सनंदिःसमहाकालःसशृंगीसमनोहरः ॥ वीर

भद्राचचामुंडाघंटाकर्णादिभिर्वृतः ॥ ६० ॥ मातृभिर्भूतसंघातैर्यक्षराक्षसगुह्यकैः ॥ देवदानवगंधर्वमुनिविद्याधरोरगैः ॥ ६१ ॥
प्रणम्यदेवदेवायपत्नीभिःसहितैरुमा ॥ गोरूपिणीसवत्साचपूजिताब्रह्मचारिभिः ॥ ६२ ॥ कार्तिकेशुक्लपक्षेतु[1]द्वादश्यांनंदिनीव्रतम् ॥
ततःप्रभृतिराजेन्द्रअवतीर्णंमहीतले ॥ ६३ ॥ उत्तानपादेनतथाव्रतंचीर्णमिदंशृणु ॥ उत्तानपादनामासीत्क्षत्रियःपृथिवीपते ॥ ६४ ॥
तस्यभार्याद्वयंचासीद्रुचिशुभ्नीतिविश्रुतम् ॥ शुभ्नीजातोध्रुवःपुत्रोबालपादधरोऽलसः ॥ ६५ ॥ रुच्याःसमर्पितःशुभ्न्याध्रुवोऽयंरक्षतांसखि ॥
अहंकरिष्येशुश्रूषांभर्तुस्तावत्सदास्वयम् ॥६६॥ रुचीरसवतींनित्यंप्रत्यहंकुरुतेगृहे॥अकरोद्भर्तृशुश्रूषांशुभ्नीनित्यंपतिव्रता ॥ ६७ ॥ कदा
चित्क्रोधमात्सर्यात्सापत्न्यंदर्शितंतया॥स्वयंरुच्यानिहत्यासौशिशुःखंडलशःकृतः ॥६८॥ तापिकायांतथास्थाल्यांपक्वसिद्धःसुसंस्कृतः ॥
अन्नभोजनवेलायांददातिनृपभाजने ॥ ६९ ॥ तंवैभक्षयितुंदुष्टासामिषंभोजनंकिल ॥ अथभोजनवेलायांवत्रेजीवितमाप्तवान् ॥ ७० ॥
तथैवप्रहसन्बालोमातुरुत्संगजोऽभवत् ॥ तंदृष्ट्वामहदाश्चर्यंशुभ्नीपप्रच्छविस्मिता ॥ ७१ ॥ किमेतद्ब्रूहिवृत्तांतंकस्येयंव्युष्टिरुत्तमा ॥
किंत्वयाचरितंकिंचिद्व्रतंदत्तंहुतंतथा ॥ ७२ ॥ सत्यंसत्यंपुनःसत्यंयेनजीवतितेसुतः ॥ मयायंसप्तवारंतुविशल्यशकलीकृतः ॥ ७३ ॥
पक्वःस्वयंकृतःस्थाल्यांव्यंजनैःसहभोजनैः ॥ परिविष्यमाणःसपुनःकथंजीवितमाप्तवान् ॥ ७४ ॥ किंतेसिद्धामहाविद्यामृतसंजीवनीशुभा॥
रत्नंमणिर्महारत्नंयोगाञ्जनमहौषधम् ॥७५॥ कथयस्वमहाभागेसत्यंसत्यंभगिन्यसि ॥ एवमुक्तेरुचिस्तस्याव्याचख्यौवत्सगोव्रतम्॥७६॥
कार्तिकेचैवद्वादश्यांयथाचानुष्ठितंपुरा ॥ व्रतस्यास्यप्रभावेनपुनर्जीवतिमेसुतः ॥ ७७ ॥ वत्सोमेवत्सवेलायांमृतोऽर्थंलभतेपुनः ॥
समागमश्चभवतिव्रतैःप्रवासितैरपि ॥ ७८ ॥ यथार्थमेतद्व्याख्यातंतेचगोद्वादशीव्रतम् ॥ तवापिरुचितत्सर्वंभविष्यतिशुभंप्रियम् ॥ ७९ ॥
एवमुक्तंव्रतंचीर्णंरुच्यापुत्राःसुखंधनम् ॥ संप्राप्तंजीवितांतेचध्रुवस्थानेनिवेशिता ॥ ८० ॥ ब्रह्मणासृष्टिकारेणरुचिर्भर्त्रासहासिता ॥
दशनक्षत्रसंयुक्तोध्रुवःसोद्यापिदृश्यते ॥ ८१ ॥ ध्रुवर्क्षेचयदादृष्टेलोकःपापैःप्रमुच्यते ॥ ॥ युधिष्ठिरउवाच ॥ कीदृशंतद्विधानंचतन्मे ॥ ६

[1] कृष्णपक्षेतु-इ०पा० ।

ब्रूहिजनार्दन ॥ ८२ ॥ यत्कृतंशुध्निवचनाद्दुच्यायदुकुलोद्भव ॥ ॥ श्रीकृष्णउवाच ॥ ॥ संप्राप्तेकार्तिकेमासिशुक्लपक्षेकुरू
त्तम ॥ ८३ ॥ द्वादश्यांकृतसंकल्पःस्नात्वापुण्येजलाशये ॥ नरोवायदिवानारीएकभक्तंप्रकल्पयेत् ॥ ८४ ॥ ततोमध्याह्नसमयेदृष्ट्वाधेनुंस
वत्सकाम् ॥ सुशीलांवत्सलांश्वेतांकपिलांरक्तरूपिणीम्॥८५॥ब्राह्मणक्षत्रियविशांशूद्राणांस्त्रीजनेश्वर ॥ यथाक्रमेणपूज्येनगंधपुष्पजलाक्षतैः
॥ ८६॥ कुंकुमालक्तकैर्दीपैर्माषान्नवटकैःशुभैः॥कुसुमैर्वत्सकंचापिमंत्रेणानेनपांडव॥८७॥"ॐमातारुद्राणांदुहितावसूनांस्वसादित्यानाममृत
स्यनाभिः॥प्रनुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ट"नमोनमःस्वाहा ॥ ८८॥ इत्थंसंपूज्यगांदृष्ट्वापश्चात्तांचक्षमापयेत् ॥ ओंसर्व
देवमयेदेविलोकानांशुभनंदिनि॥८९॥मातर्ममाभिलषितंसफलंकुरुनंदिनि॥एवमभ्यर्च्यदेवेशंगामेतद्धिगवाह्निकम्॥९०॥पर्युक्ष्यवारिणाभ
क्त्याप्रणम्यसुरभींततः ॥ तद्दिनेतापिकापक्वंस्थालीपाकंचवर्जयेत् ॥ ९१ ॥ भूमौस्वयंब्रह्मचारीशृणुयात्फलमाप्नुयात् ॥ यावंतिगात्रेरोमा
णिगवांकौरवनंदन॥९२॥तावत्कालंसवसतिगोलोकेनात्रसंशयः॥मेरोःपृष्ठेकंरम्यमिंद्राग्नियमरक्षसाम्॥९३॥वरुणानिलयक्षाणांरुद्रस्यचयु
धिष्ठिर॥तासामुपरिगोलोकस्तत्रयातिसगोव्रती ॥ ९४ ॥ ऊर्जेसितेद्विदशमेऽहनिगांसवत्सांयाःपूजयंतिकुसुमैर्वटकैश्चहृद्यैः ॥ ताःसर्वकामसु
खभोगविभूतिभाजोमर्त्येवसंतिसुचिरंवहुजीववत्साः ॥ ९५ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेगोवत्सद्वादशी
व्रतंनामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुपार्थप्रवक्ष्यामिगोविन्दशयनंव्रतम् ॥ कटदानंसमुत्था
नंचातुर्मास्यव्रतक्रमम् ॥ १ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ किंदेवशयनंनामदेवःस्वपितिचाप्यसौ ॥ देवःकिमर्थंस्वपितिकिंविधानंसदाव
द ॥ २ ॥ केमंत्राःकेचनियमाव्रतान्यथक्रियाचका ॥ किंग्राह्यंकिंचभोक्तव्यंसुप्तेदेवेजनार्दने ॥ ३ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ मिथुन
स्थेसहस्रांशौस्थापयेन्मधुसूदनम् ॥ तुलाराशिगतेतस्मिन्पुनरुत्थापयेद्व्रतम् ॥ ४ ॥ अधिमासेचपतितेएषएवविधिक्रमः ॥ नान्यथास्था
पयेद्देवंनचैवोत्थापयेद्धरिम् ॥ ५ ॥ आषाढस्यसितेपक्षेएकादश्यामुपोषितः ॥ स्थापयेद्भक्तिमान्विष्णुंशंखचक्रगदाधरम् ॥ ६ ॥ पीतां
बरधरंसौम्यंपर्यंकेस्वास्तृतेशुभे ॥ शुक्लवस्त्रसमाच्छन्नेसोपधानेयुधिष्ठिर ॥७॥ इतिहासपुराणज्ञोविष्णुभक्तोपियःपुमान् ॥ स्नापयित्वादधि

क्षीरघृतक्षौद्रजलैस्तथा ॥ ८ ॥ समालभ्यशुभैर्गंधैर्धूपैर्वस्त्रैरलंकृतम् ॥ पूजयित्वाकुंकुमाद्यैर्मंत्रेणानेनपाण्डव ॥ ९ ॥ सुप्तेत्वयिजगन्नाथ
जगत्सुप्तंभवेदिदम् ॥ विबुद्धेत्वयिबुध्येतजगत्सर्वंचराचरम् ॥ १० ॥ एवंतांप्रतिमांविष्णोःस्थापयित्वायुधिष्ठिर ॥ तस्यैवाग्रेस्वयंवाचं
गृह्णीयान्नियमांस्ततः ॥ ११ ॥ चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि ॥ स्त्रीवानरोवामद्भक्तोधर्मार्थीसुदृढव्रतः ॥ १२ ॥ गृह्णीयान्नियमानेतान्दंतधावनपूर्वकम् ॥ तेषांफलानिवक्ष्यामितत्कर्तॄणांपृथक्पृथक् ॥ १३ ॥ मधुरस्वरोभवेद्राजापुरुषोगुडवर्जनात् ॥ तैलस्यवर्जनात्पार्थसुंदरांगःप्रजायते ॥ १४ ॥ कटुतैलपरित्यागाच्छत्रुक्षयमवाप्नुयात् ॥ मधूकतैलत्यागेनसौभाग्यमतुलंभवेत् ॥ १५ ॥ पुष्पादिभोगत्यागेनस्वर्गेविद्याधरोभवेत् ॥ योगाभ्यासीभवेद्यस्तुसब्रह्मपदमाप्नुयात् ॥ १६ ॥ कटुकाम्लतिक्तमधुरक्षारकाषायमेवच ॥ योवर्जयेत्सवैरूप्यंदौर्गंत्यंनाप्नुयात्क्वचित् ॥ १७ ॥ तांबूलवर्जनाद्भोगीरक्तकंठश्चजायते ॥ घृतत्यागात्सुलावण्यंसर्वांसिद्धिःपुनर्भवेत् ॥ १८ ॥
फलत्यागाच्चमतिमान्बहुपुत्रश्चजायते ॥ शाकपत्राशनाद्रोगीअपक्वादोऽमलोभवेत् ॥ १९ ॥ पादाभ्यंगपरित्यागाच्छिरोभ्यंगाच्चपार्थिव ॥
दीप्तिमान्दीप्तिकरणोयक्षोद्रव्यपतिर्भवेत् ॥२०॥ दधिदुग्धतक्रनियमाद्गोलोकंलभतेनरः ॥ इन्द्रातिथित्वमाप्नोतिस्थालीपाकविवर्जितात् ॥
॥२१॥ लभेतसंततिंदीर्घांतापपक्वस्यभक्षणात् ॥ भूमावस्तरशायीचविष्णोरनुचरोभवेत्॥२२॥सदामुनिःसदायोगीमधुमांसस्यवर्जनात् ॥
निर्व्याधिर्नीरुजौजस्वीसुरामद्यविवर्जनात् ॥ २३ ॥ एवमादिपरित्यागाद्धर्मःस्याद्धर्मनंदन ॥ एकांतरोपवासेनब्रह्मलोकेमहीयते ॥ २४ ॥
धारणंनखरोमाणांगंगास्नानंदिनेदिने ॥ मौनव्रतीभवेद्यस्तुतस्याज्ञाऽस्खलिताभवेत् ॥ २५ ॥ भूमौभुंक्तेसदायस्तुसपृथिव्याःपतिर्भवेत् ॥
नमोनारायणायेतिजपतोनशनंफलम् ॥२६॥ पादाभिवंदनाद्विष्णोर्लभेद्गोदानजंफलम्॥ विष्णुपादांबुसंस्पर्शात्कृतकृत्योभवेन्नरः ॥२७॥
विष्णुदेवकुलेकुर्यादुपलेपनमर्चनम् ॥ कल्पस्थायीभवेद्राजासनरोनात्रसंशयः ॥ २८ ॥ प्रदक्षिणाशतंयस्तुकरोतिस्तुतिपाठकः ॥
हंसयुक्तविमानेनसचविष्णुपुरंव्रजेत् ॥ २९ ॥ गीतवाद्यकरोविष्णोर्गांधर्वलोकमाप्नुयात् ॥नित्यंशास्त्रविनोदेनलोकान्यस्तुप्रबोधाति ॥३०॥
सव्यासरूपीभगवानंतेविष्णुपुरंव्रजेत् ॥ पुष्पमालादिभिःपूजांकृत्वाविष्णुपुरंव्रजेत् ॥ ३१ ॥ नित्यस्नायीनरोयस्तुनरकंसनपश्यति ॥

भोजनंचजयेद्यस्तुसस्नानंपौष्करंलभेत् ॥ ३२ ॥ कृत्वाप्रेक्षणकंदिव्यंराज्यंसोऽप्सरसांलभेत् ॥ अयाचितेनप्राप्नोतिवापीकूपेयथाफलम् ॥
॥३३॥षष्ठकालेन्नभोज्येनस्थायीस्वर्गेनरोभवेत् ॥ पर्णेषुयोनरोभुंक्तेकुरुक्षेत्रफलंलभेत्॥३४॥शिलायांभोजनान्नित्यंस्नानंप्रयागजंभवेत् ॥
यामद्वयेजलत्यागान्नरोगैःपरिभूयते ॥ ३५ ॥ एवमादिव्रतेपार्थतुष्टिमायातिहेतुतः ॥ सुप्तेसतिजगन्नाथेकेशवेगरुडध्वजे ॥ ३६ ॥
निवर्तन्तेक्रियाःसर्वाश्चातुर्वर्ण्यस्यभारत ॥ विवाहव्रतबंधादिभूतसंस्कारदीक्षणम् ॥ ३७ ॥ यज्ञाश्रमगृहवेशादिगोदानाच्चप्रतिष्ठितम् ॥
पूज्यानियानिकर्माणितानिसर्वाणिवर्जयेत् ॥ ३८ ॥ असंक्रांतंतुमासंवैदैवेपित्र्येचवर्जयेत् ॥मलिम्लुचमशौचंचसूर्यसंक्रांतिवर्जितम् ॥३९॥
प्राप्तेभाद्रपदेमासिएकादश्यांदिनेहरेः ॥ कटदानंभवेद्विष्णोर्महापूजांप्रवर्तयेत् ॥ ४० ॥ यएतदेवशयनंतत्रेदंकारणंशृणु ॥
पुरातपःप्रभावेनतोषयित्वाहरिंविभुम् ॥ ४१ ॥ ममापिमानयत्यङ्गंप्रार्थितोयोगनिद्रया ॥ निरीक्ष्यचात्मनोदेवारुद्धंलक्ष्म्याउरःस्थलम् ॥
॥ ४२ ॥ शंखचक्रासिमार्गांश्चैर्बाहवोप्यथवक्षसा ॥ अधोनाभेर्निरुद्धंमेवैनतेयेनपक्षिणा ॥ ४३ ॥ मुकटेनशिरोरुद्धंकुंडलाभ्यांचकर्णकौ ॥
ततोददावहंतुष्टोनेत्रयोःस्थानमादरात्॥४४॥चतुरोवार्षिकान्मासान्माऽऽश्रितासाभविष्यति॥योगनिद्रापिमाहात्म्यंश्रुत्वापौरातनंशुभम् ॥
॥४५॥चकारलोचनावासमतोऽर्थंमेयुधिष्ठिर॥अहंचतांभावयित्वामानयामिमनस्विनीम् ॥४६॥योगनिद्रामहानिद्राशेषाभिशयनेस्थितम् ॥
क्षीरोदधौचाविध्यग्रेधौतपादःसमाहितः ॥४७॥ लक्ष्मीकरांबुजैरक्षैर्मृद्यमानपदद्वयः ॥ तास्मिन्कालेऽपिमद्भक्तोयोमासांश्चतुरःक्षिपेत्॥४८॥
व्रतैरनेकैर्नियमैःपांडवश्रेष्ठमानवः ॥ कल्पस्थायीविष्णुलोकंसव्रजेन्नात्रसंशयः ॥ ४९ ॥ ततोऽवबुध्यतेदेवःश्रीमाञ्छार्ङ्गगदाधरः ॥
कार्तिकेशुक्लपक्षस्यएकादश्यांपृथक्छृणु ॥ ५९ ॥ मन्त्रेणानेनराजेन्द्रदेवमुत्थापयेद्द्विजः ॥ इदंविष्णुर्विचक्रमेस्वासनेचतदानृप ॥ ५१ ॥
समुत्थितेतदाविष्णौक्रियाःसर्वाःप्रवर्तयेत् ॥ महातूर्यरवेरात्रौभ्रामयेत्स्यंदनेस्थितम् ॥ ५२ ॥ उत्थितेदेवदेवेशेनगरेपार्थिवःस्वयम् ॥
दीपोद्रेककरेमार्गेनृत्यगीतजनाकुले ॥ ५३ ॥ यंयंदामोदरःपश्येदुत्थितोधरणीधरः ॥ तंतंप्रदेयंराजेन्द्रसर्वंस्वर्गायकल्पते ॥ ५४ ॥

१ तद्वाक्यम्-इ०पा० ।

रात्रौप्रजागरेदेवमेकादश्यांसुरालये ॥ प्रभातेविमलेस्नात्वाद्वादश्यांविष्णुमर्चयेत् ॥ ५५ ॥ होमयेद्धव्यवाहंचहव्यद्रव्यैर्घृतादिभिः ॥
ततोविप्राञ्छुभान्स्नात्वाभोजयेदन्नविस्तरैः॥५६॥घृतदधिक्षौद्रकाद्यैर्गुडधूपैःसमोदकैः ॥ यजमानोऽपिसंतुष्टस्त्वराहास्यविवर्जितः॥५७॥
एकादशदशाष्टौवापंचद्वौवाकुरूत्तम ॥ अर्चयेच्चन्दनैर्धूपैःपुष्पैर्गन्धैर्द्विजोत्तमान् ॥ ५८ ॥ श्रद्धोक्तविधिनापार्थभोजयेद्गाग्यवान्यतीन् ॥
आचांतेभ्यस्ततोदद्यात्त्यागंयत्किञ्चिदेवहि॥५९॥स्ववाचास्वमनोभीष्टपत्रपुष्पफलादिकम् ॥ चतुरोवार्षिकान्मासान्नियमंयस्ययत्कृतम्॥
॥६०॥कथयित्वाद्विजेभ्यस्तंदद्याद्भक्त्यासदक्षिणाम्॥दत्त्वाविसर्जयेद्विप्रांस्ततोभुञ्जीतचस्वयम्॥६१॥यत्त्यक्तंचतुरोमासान्प्रवृत्तिस्तस्यचा
चरेत्॥एवंयआचरेत्पार्थसोऽनन्तंधर्ममाप्नुयात् ॥ ६२ ॥ अवसानेतुराजेन्द्रवासुदेवपुरींव्रजेत् ॥ यस्याविघ्नैःसमाप्येतचातुर्मास्यव्रतंनृप ॥
॥ ६३ ॥ सभवेत्कृतकृत्यस्तुनपुनर्मातृकोभवेत् ॥ योदेवशयनंपार्थमासंमासंसमाचरेत् ॥ ६४ ॥ उत्थानंचापिकृष्णस्यसहरेर्लोकमाप्नु
यात् ॥ शृणोतिध्यायतिस्तौतिजुहोत्याख्यातियोनरः ॥ ६५ ॥ विष्णोर्भक्तिपरांपार्थसगच्छेद्वैष्णवंपदम् ॥ ६६ ॥ दुग्धाब्धिभोगशयने
भगवाननन्तोयस्मिन्दिनेस्वपितियत्रविबुध्यतेवा ॥ तस्मिन्ननन्यमनसामुपवासभाजांपुंसांददातिसुगतिंगरुडांगसंगी ॥ ६७ ॥ इति
श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेदेवशयनोत्थापनद्वादशीव्रतवर्णनंनामसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ छ ॥
॥ श्रीकृष्णउवाच ॥ ॥ पुराबभूवराजर्षिरजपालइतिश्रुतः ॥ प्रार्थितःसप्रजाभिस्तुसर्वदुःखापनुत्तये ॥ १ ॥ दुःखापनोदंकुरुभोव्याधि
तानांनरेश्वर ॥ एवमुक्तश्चिरंध्यात्वाकृत्वाऽव्याधीन्प्रजागणान् ॥ २ ॥ पालयामासहृष्टोऽसावजपालस्ततोऽभवत् ॥ तेनैषानिर्मिताशां
तिर्नाम्नानीराजताजने ॥ ३ ॥ तस्यास्तुपांडवश्रेष्ठलक्षणंवच्मितेशृणु ॥ राज्ञापुरोहितैःसार्द्धमनुष्ठेयाविधानतः ॥ ४ ॥ तस्मिन्कालेबभूवा
थरावणोराक्षसेश्वरः ॥ लंकास्थितःसुरगणान्नियुनक्तिस्वकर्मसु ॥५॥ अखण्डमण्डलंचन्द्रमातपत्रंचकारह ॥ इन्द्रंसेनापतिंचक्रेवायुंपांशुप्र
मार्जकम् ॥ ६ ॥ वरुणंबद्धकर्मस्थंधनदंधनरक्षकम् ॥ यमंसंयमनेऽरीणांयुयुजेमंत्रणेमनुम् ॥ ७ ॥ मेघाश्छादान्तिनृपतिंद्रुमपुष्पादिपं
क्तिषु ॥ सप्तर्षयःशांतिपराब्रह्मणासहसंस्थिताः॥८॥यामिकामध्यकक्षायांगन्धर्वागीततत्पराः॥प्रेक्षणीयेऽप्सरोवृंदंबाह्येविद्याधरावृताः ॥९॥

गंगाद्याःसरितःपानेगार्हपत्येहुताशनः ॥ विश्वकर्मान्नसंस्कारेयमःशिल्पिप्रयोजने ॥१०॥ तिष्ठंतिपार्थिवाःसर्वेपुरःसेवाविधायिनः ॥ दृश्यंते
भासुरैरत्नैःप्रभावंतोविभूषणैः॥११॥संदृष्ट्वारावणःप्राहप्रशस्तंप्रतिहारकम्॥सेवांकर्तुंममस्थानेब्रूहिकोऽत्रसमागतः॥१२॥सउवाचप्रणम्याग्रे
दंडपाणिर्निशाचरः ॥ एषककुत्स्थोमांधाताधुंधुमारोनलोर्जुनः ॥ १३ ॥ ययातिर्नहुषोभीमोराघवोयंविदूरथः ॥ एतेचान्येचबहवोराजान
इतिआसते॥१४॥मेघाकारास्तवस्थानेनाजपालइहागतः॥रावणःकुपितःप्राहशीघ्रंदूतंव्यसर्जयत्॥१५॥इत्युक्तेप्रहितोदूतोधूम्राक्षोनामराक्ष
सः॥धूम्राक्षगच्छब्रूहित्वमजपालंममाज्ञया ॥१६॥ सेवांकुरुसमागच्छकवंधोयस्यपार्थिवः॥अन्यथाचन्द्रहासेनत्वांकरिष्येविकंधरम् ॥१७॥
रावणेनैवमुक्तस्तुधूम्राक्षोगरुडोयथा ॥ संप्राप्यतांपुरींरम्यांतच्चराजकुलंगतः ॥ १८ ॥ ददर्शयंतमेकंसअजपालमजावृतम् ॥ मुक्त
केशंमुक्तकक्षंनैकमुक्तक्रमद्वयम् ॥ १९ ॥ यष्टिस्कन्धंरेणुभृतंव्याधिभिःपरिवारितम् ॥ निहतामित्रशार्दूलंसर्वोपद्रवनाशनम् ॥ २० ॥
महामालिख्यनामानिविनिघ्नंतंद्विषांगणम् ॥ स्नातंभुक्तंशुभेस्थानेकृतकृत्यंमुनिंयथा ॥ २१ ॥ दृष्ट्वाहृष्टमनाःप्राहधूम्राक्षोरावणोदि
तम् ॥ साक्षेपमजपालोऽपिप्रत्युक्त्वाकरणांतरम्॥२२॥प्रेषयामासधूम्राक्षंततःकृत्यंसमादधे॥ज्वरमाकारयित्वातुप्रोवाचेदंमहीपतिः॥२३॥
गच्छलंकाधिपस्थानमाचरस्वयथोचितम् ॥ नियुक्तस्त्वजपालेनज्वरोराजञ्जगामह ॥ २४ ॥ गत्वाचकंपयामाससगणंराक्षसेश्वरम् ॥ रा
वणस्तंविदित्वातुज्वरंपरमदारुणम् ॥ २५ ॥ प्रोवाचातिष्ठतुनृपस्तेनमेनप्रयोजनम् ॥ ततःसविज्वरोराजाबभूवधनदानुजः ॥ २६ ॥
तेनैषानिर्मिताशांतिरजपालेनधीमता ॥ सर्वरोगप्रशमनीसर्वोपद्रवनाशिनी ॥ २७ ॥ कार्तिकेशुक्लपक्षस्यद्वादश्यांरजनीमुखे ॥ समु
त्थितेविनिद्रेतुदेवेदामोदरेतदा ॥ २८ ॥ वेद्यंतेरत्नमालाभीरम्येमालानुरंजिते ॥ जनयित्वानवंविष्णुंहुत्वामंत्रैर्द्विजोत्तमैः ॥ २९ ॥
वर्द्धमानतरूत्थाभिर्दीपिकाभिर्हुताशनम् ॥ कृत्वामहाजनःसर्वैर्हरिंनीराजयेच्छनैः ॥ ३० ॥ पुष्पैरभ्यर्चितंदेवंसमालब्धंचचन्दनैः ॥ वद
रैःकर्बुरैश्चैवत्रपुसैरिक्षुभिस्तथा ॥ ३१ ॥ गन्धैःपुष्पैरलंकारैर्वस्त्रैरत्नैश्चपूजितैः ॥ तस्यैवानुमतांलक्ष्मींब्रह्माणंचण्डिकांतथा ॥ ३२ ॥

१ नारदः-इ० पा० । २ वशम्-इ० पा० ।

आदित्यंशंकरंगौरींयक्षंगणपतिंग्रहान् ॥ मातरंपितरंनागान्सर्वान्नीराजयेत्ततः ॥ ३३ ॥ गवांनीराजनंकुर्यान्महिष्यादेश्चमंडलम् ॥ ग्राम
येत्रासयेच्छर्दिघंटावादनछादनैः ॥ ३४ ॥ तागावःप्रस्नुतायांतिस्वापीडास्तवकांगदाः ॥ सिंदूरकृतशृंगाग्राःसंभारवशवत्सकाः ॥ ३५ ॥
अनुयांतिसगोपालाःकालयंतोधनानिते ॥ छेदानुलिप्तरक्ताङ्गारक्तपीतासितांबराः ॥ ३६ ॥ एवंकोलाहलेवृत्तेगवांनीराजनोत्सवे ॥ तुर
गाँल्लक्षणैर्युक्तान्द्विरदांश्चसुपूजितान् ॥ ३७ ॥ राजचिह्नानिसर्वाणिउद्धृत्यस्वगृहांगणे ॥ राजापुरोहितैःसार्द्धंमंत्रिभृत्यपुरःसरः ॥ ३८ ॥
सिंहासनोपविष्टश्चशङ्खतूर्यादिनिस्वनैः ॥ पूजयेद्गन्धकुसुमैर्वस्त्रदीपविलेपनैः ॥ ३९ ॥ ततःस्त्रीलक्षणैर्युक्तावेश्यावाथकुलाङ्गना ॥ शीर्षोप
रिनरेन्द्रस्यभ्रामयेद्दारुपात्रिकाम् ॥४०॥ शांतिरस्तुसमृद्धिश्चद्विजैश्चस्वजनेनच॥ततोनीराजयेत्सौम्यंहस्त्यश्वरथसंकुलम् ॥४१॥ एवमेषा
महाशांतिःख्यातानीराजनेजने॥येषांराष्ट्रेपुरेग्रामेक्रियतेपांडुनंदन॥४२॥तेषांरोगाःक्षयंयांतिसुभिक्षंवर्द्धतेतदा॥शांतिर्नीराजनाल्लोकेसर्वान्रो
गान्व्यपोहति ॥४३॥ लोकानावर्द्धयित्वातुअजपालवरोयथा ॥ एषांरोगादिपीडासुजंतूनांहितामिच्छता ॥ ४४ ॥ वर्षेवर्षेप्रयोक्तव्याशांतिर्नी
राजनाइति॥४५॥नीराजयंतिनवमेघनिभंहरिंयेगोब्राह्मणान्रथगजांश्चनरेशचिह्नान् ॥ तेसर्वरोगरहिताश्चनुतानरेन्द्रैरिंद्रप्रभाभुविभवंत्यजपा
लवाक्यात्॥४६॥इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेनीराजनद्वादशीव्रतवर्णनंनामैकसप्ततितमोऽध्यायः ॥७१॥
॥ युधिष्ठिरउवाच ॥ यदेतदतुलंपुण्यंव्रतानामुत्तमंव्रतम् ॥ कर्तव्यंकार्तिकेमासिप्रयत्नाद्भीष्मपञ्चकम् ॥ १ ॥ विधानंकीदृशंतस्यफलं
चकुरुसत्तम ॥ कथयस्वप्रसादान्मेमुनीनांहितामिच्छताम् ॥ २ ॥ ॥ श्रीकृष्णउवाच ॥ प्रवक्ष्यामिव्रतंपुण्यंव्रतानामुत्तमंव्रतम् ॥
यथाविधिचकर्तव्यंफलंचास्ययथोदितम् ॥ ३ ॥ मयापिभृगवेप्रोक्तंभृगुश्चोशनसेददौ ॥ उशनापिहिविप्रेभ्यःप्रह्लादायचधीमते ॥ ४ ॥
तेजस्विनांयथावह्निःपवनःशीघ्रगामिनाम् ॥ विप्रोयथाचपूज्यानांदानानांकाञ्चनंयथा ॥ ५ ॥ भूलोकःसर्वलोकानांतीर्थानांजाह्नवीयथा ॥
यथाश्वमेधोयज्ञानांमथुरामुक्तिकांक्षिणाम् ॥ ६ ॥ वेदोयथैवशास्त्राणांदेवानामच्युतोयथा ॥ तथासर्वव्रतानांतुवरोक्तंभीष्मपञ्चकम् ॥ ७ ॥
दुष्करंभीष्ममित्याहुर्नंशक्यंतदिहोच्यते ॥ यस्तंकरोतिराजेन्द्रतेनसर्वंकृतंभवेत् ॥ ८ ॥ वसिष्ठभृगुभर्गाद्यैश्चीर्णंकृतयुगादिषु ॥

नाभागांबरीषाद्यैश्चीर्णंत्रेतायुगादिषु ॥ ९ ॥ सीरभद्रादिभिर्वैश्यैः शूद्रैरन्यैः कलौयुगे ॥ दिनानिपंचपूज्यानिचीर्णमेतन्महाव्रतम् ॥ १० ॥
ब्राह्मणैर्ब्रह्मचर्येणजपहोमक्रियादिभिः ॥ क्षत्रियैश्चतथाशक्त्याशौचव्रतपरायणैः ॥ ११ ॥ पराधिःपरिहर्तव्याब्रह्मचर्येणनिष्ठया ॥
मद्यंमांसंपरित्यज्यमैथुनंपापभाषणम् ॥ १२ ॥ शाकाहारपरैश्चैवकृष्णार्चनपरैर्नरैः ॥ स्त्रीभिर्वाभर्तृवाक्येनकर्तव्यंसुखवर्द्धनम् ॥ १३ ॥
विधवाभिश्चकर्तव्यंपुत्रपौत्रादिवृद्धये ॥ सर्वकामसमृद्ध्यर्थंमोक्षार्थमपिपांडव ॥ १४ ॥ नित्यंस्नानेनदानेनकार्तिकीयावदेवतु ॥
प्रातःस्नात्वाविधानेनमध्याह्नेनतथाव्रती ॥ १५ ॥ नद्यांनिर्झरगर्तेवासमालभ्यचगोमयम् ॥ यवव्रीहितिलैःसम्यक्तर्पयेच्चप्रयत्नतः ॥ १६ ॥
देवानृषीन्पितॄंश्चैवततोन्यान्कामचारिणः ॥ स्नानंमौनंनरःकृत्वाधौतवासादृढव्रतः ॥ १७ ॥ ततोऽनुपूजयेद्देवंसर्वपापहरंहरिम् ॥
स्नापयेच्चाच्युतंभक्त्यामधुक्षीरघृतेनच ॥ १८ ॥ तत्रैवपञ्चगव्येनगंधचंदनवारिणा ॥ चन्दनेनसुगंधेनकुंकुमेनाथकेशवम् ॥ १९ ॥
कर्पूरोशीरमिश्रेणलेपयेद्गरुडध्वजम् ॥ अर्चयेद्रुचिरैःपुष्पैर्गंधधूपसमन्वितैः ॥ २० ॥ गुग्गुलंघृतसंयुक्तंदहेत्कृष्णायभक्तितः ॥
दीपकंचदिवारात्रौदद्यात्पंचदिनानितु ॥ २१ ॥ नैवेद्यंदेवदेवस्यपरमान्नंनिवेदयेत् ॥ ॐनमोवासुदेवायेतिजपेदष्टोत्तरंशतम् ॥ २२ ॥
जुहुयाच्चघृताक्तांश्चतिलव्रीहींस्ततोव्रती ॥ षडक्षरेणमंत्रेणस्वाहाकारान्वितेनच ॥ २३ ॥ उपास्यपश्चिमांसंध्यांप्रणम्यगरुडध्वजम् ॥
जपित्वापूर्ववन्मंत्रंक्षितिशायीभवेन्नरः ॥ २४ ॥ सर्वमेतद्विधानंचकार्यंपंचदिनेष्वपि ॥ संविशेत्कंबलेचास्मिन्पदपूर्वंशृणुष्वमे ॥ २५ ॥
प्रथमेऽह्निहरेः पादौपूजयेत्कमलैर्नरः ॥ द्वितीयेबिल्वपत्रेणजानुदेशंसमर्चयेत् ॥ २६ ॥ पूजयेच्चतृतीयेऽह्निनाभिंभृङ्गरसेनच ॥
मध्येबिल्वजयाभिश्चततःस्कंधौप्रपूजयेत् ॥ २७ ॥ ततोऽनुपूजयेच्छीर्षंमालत्याःकुसुमैर्नवैः ॥ कार्तिक्यांदेवदेवस्यभक्त्यातद्गतमानसः ॥ २८ ॥
अर्चयित्वाहृषीकेशमेकादश्यांसमाहितः ॥ संप्राश्यगोमयंसम्यङ्मंत्रवत्समुपावसेत् ॥ २९ ॥ गोमूत्रंमंत्रवत्कृत्वाद्वादश्यांप्राशयेद्व्रती ॥
क्षीरंतत्रत्रयोदश्यांचतुर्दश्यांतथादधि ॥ ३० ॥ संप्राश्यकायशुद्ध्यर्थंलंघयीतचतुर्दिनम् ॥ पंचमेतुदिनेस्नात्वाविधिवत्पूज्यकेशवम् ॥ ३१ ॥

१ कार्यसिद्ध्यर्थम्–इ०पा० ।

भोजयेद्ब्राह्मणान्भक्त्यातेभ्योदद्याच्चदक्षिणाम् ॥ तथोपदेष्टारमपिपूजयेद्वस्त्रभूषणैः ॥ ३२ ॥ ततोनक्तंसमश्नीयात्पञ्चगव्यपुरःसरम् ॥
एवंसमापयेत्सम्यग्यथोक्तंव्रतमुत्तमम् ॥ ३३ ॥ सर्वपापहरंपुण्यंप्रख्यातंभीष्मपञ्चकम् ॥ मद्यपोयस्त्यजेन्मद्यंजन्मनोमरणांतिकम् ॥ ३४॥
तद्भीष्मपञ्चकंत्यक्त्वाप्राप्नोत्यभ्यधिकंफलम् ॥ ब्रह्मचर्येणनरश्चीर्त्वासुघोरंनैष्ठिकंव्रतम् ॥३५॥यत्प्राप्नोतिमहत्पुण्यंतत्कृत्वाभीष्मपंचकम्॥
गात्राभ्यंगंशिरोऽभ्यंगंमधुमांसंचमैथुनम्॥३६॥ ब्रह्मलोकमवाप्नोतित्यक्त्वैकंभीष्मपञ्चकम्॥संवत्सरेणयत्पुण्यंकार्तिकेनचयद्भवेत् ॥३७॥
यत्फलंकार्तिकेनोक्तंभवेत्तद्भीष्मपञ्चके ॥ व्रतमेतत्सुरैःसिद्धैःकिन्नरैर्नागगुह्यकैः ॥ ३८ ॥ फलंसमीहितंप्राप्यकृत्वाभ्यर्च्यजनार्दनम्॥ पाप
स्यप्रतिमाकार्यारौद्रवक्त्रातिभीषणा ॥३९॥ खड्गहस्तातिविकृतासर्वलोकभयीनृप ॥ तिलप्रस्थोपरिस्थाप्याकृष्णवस्त्राभिवेष्टिता ॥४०॥
करवीरकुसुमपीडाचलत्काञ्चनकुंडला ॥ ब्राह्मणायप्रदातव्याकृष्णोमेप्रीयतामिति ॥ ४१ ॥ अन्येषामपिदातव्यंयत्कृत्वावसुवांछितम् ॥
कृतकृत्यःस्थिरोभूत्वाविरक्तःसंयतोभवेत्॥४२॥शांतचेतानिराबाधःपरंपदमवाप्नुयात् ॥ नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः॥४३॥अष्ट
षष्ठैकनयनःशंकुकर्णोमहास्वनः ॥ जटीद्विजिह्वस्ताम्रास्योमृगराजतनुच्छदः ॥ ४४ ॥ चिंतनीयोमहादेवोयस्यरूपंनविद्यते ॥ इदंभीष्मेण
कथितंशरतल्पगतेनमे ॥ ४५ ॥ तदेवतेसमाख्यातंदुष्करंभीष्मपंचकम् ॥ व्रतंचराजशार्दूलप्रवरंभीष्मपञ्चकम् ॥ ४६ ॥ यस्तस्मिंस्तो
षयेद्भक्त्यातस्मैमुक्तिप्रदोऽच्युतः ॥ ब्रह्मचारीगृहस्थोवावानप्रस्थोऽथवायतिः ॥४७॥ प्राप्नोतिवैष्णवंस्थानंसत्कृत्वाभीष्मपञ्चकम् ॥ ब्रह्म
हामद्यपःस्तेयीगुरुगामीसदाकृती ॥४८॥ मुच्यतेपातकात्सम्यक्कृत्वैकंभीष्मपञ्चकम् ॥ नास्माद्व्रतात्पुण्यतमंवैष्णवेभ्योयतोव्रतम्॥४९॥
अथास्मिंस्तोषितोविष्णुर्नृणांमुक्तिप्रदोभवेत्॥श्रुत्वैतत्पठ्यमानंतुपवित्रंभीष्मपंचकम्॥५०॥मुच्यतेपातकेभ्योवापाठकोविष्णुलोकभाक्॥
धन्यंपुण्यंपापहरंयुधिष्ठिरमहाव्रतम् ॥ ५१ ॥ यद्भीष्मपञ्चकमितिप्रथितंपृथिव्यामेकादशीप्रभृतिपञ्चदशीनिरुद्धम् ॥ अन्नस्यभोजन
निवृत्तिवशादमुष्मिन्निष्टंफलंदिशतिपांडवशार्ङ्गधन्वा ॥ ५२ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेभीष्मपंचक
व्रतवर्णनंनामद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ शङ्खचक्रगदापाणेश्रीवत्सगरुडासन ॥ ब्रूहिमेमल्लद्वाद

इयाविधानंदेवकीसुत ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ यदाभांडीरन्यग्रोधेवसामियमुनातटे ॥ गोपालमध्येगोवत्सैरष्टवर्षोस्मिलीलया ॥
॥ २ ॥ कंसासुरवधार्थायमथुरोपवनेतदा ॥ आबालोबालरूपेणगोपमल्लैर्बलोत्कटैः ॥ ३ ॥ समेत्यमल्लगोपस्यबलेनसहकानने ॥
आस्फोटयंतिनृत्यंतित्रिदशोत्रिदशाइव ॥ ४॥ सुरभद्रोमंडलीकयोगवर्द्धनयोगदाः ॥ यक्षेंद्रभद्रइत्यादितेषांनामानिगोकुले॥५॥गोपीनामपि
नामानिप्राधान्येननिबोधमे ॥ गोपालीपालिकाधन्याविशाखाध्याननिष्ठिका ॥६॥ इल्वानुगंधासुभगातारकादशमीतथा ॥ इत्येवमादिभि
रहंसूपविष्टोवरासने ॥ ७ ॥ पूजितोऽस्मिसुरैःपुष्पैर्दधिदुग्धाक्षतैस्तथा ॥ शतानित्रीणिषष्टिश्चमल्लानांपूजयंतिमाम्॥८॥मल्लिन्यश्चसुरामांसै
रंगजागरनर्त्तनैः॥मल्लयुद्धैर्बहुविधैर्बाह्यैर्मल्लभटैःस्फुटैः॥९॥भक्ष्यैर्भोज्यैस्तथापानैर्दधिदुग्धघृतासवैः ॥ गोदानैर्वृषदानैश्चश्रद्धयाविप्रपूजनैः
॥१०॥ गोष्ठीप्रभृतैर्बंधूनांस्नेहसंभाषणैर्मिथः ॥ एवंद्वादशद्वादश्योगृहीतव्यायथेच्छया ॥ ११ ॥ संबंधिभिःक्रमेणैवमल्लानांचपृथक्पृथक्॥
पूजयंतिक्रमेणैवमासिमासितनुंमम ॥ १२ ॥ मासादिकार्तिकांतंचभक्त्याद्वादशनामभिः ॥ पारणेपारणेदद्यान्मल्लकानिद्विजातये॥१३ ॥
केशवनारायणमाधवगोविन्दविष्णुमधुसूदनत्रिविक्रमवामनश्रीधरहृषीकेशपद्मनाभदामोदराणांनमोनमइति ॥ १४ ॥ गन्धैःपुष्पैस्तथाधू
पैर्दीपैर्जागरणैर्निशि ॥ गीतवाद्यैश्चनृत्यैश्चमल्लक्ष्वेडांगयुद्धकैः ॥ १५ ॥ घृतदानैःक्षीरदानैःकृष्णोमेप्रीयतामिति ॥ एवमेषविधिःप्रोक्तोमा
सैर्द्वादशभिर्नृप ॥ १६ ॥ द्वादशीयाममाद्यापिमनसःप्रीतिवर्द्धनी ॥ मल्लैःप्रवर्तितायस्मादतोऽर्थमल्लद्वादशी ॥ १७ ॥ तेषांपरममल्ला
नांतेषांज्ञानांयुधिष्ठिर ॥ गोष्ठेबभूवसुप्राज्यगोमहिष्याद्यजाविकम् ॥ १८ ॥ मत्प्रसादाद्धर्मपुत्रबलंकीर्तिर्यशोधनम् ॥ एवमन्येऽपिपु
रुषाह्यबलामल्लद्वादशीम् ॥ १९ ॥ येकरिष्यंतिमद्भक्तास्तेषांदास्यामिहृद्गतम् ॥ आरोग्यंबलमैश्वर्यंविष्णुलोकंचशाश्वतम् ॥ २० ॥ भां
डीरपादपतलेमिलितैर्महाद्रिमल्लैरनाकुलितबाहुबलैर्बलिष्ठैः ॥ संपूजितःसपदियत्रतिथौततश्चसाद्वादशीसुविदिताव्रतमल्लसंज्ञा ॥ २१ ॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेमल्लद्वादशीव्रतवर्णनंनामात्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ छ ॥
॥ श्रीकृष्णउवाच ॥ विदर्भाधिपतिःश्रीमानासीत्पूर्वंसुधार्मिकः ॥ दमयंत्याःपितापूर्वंनलस्यश्वशुरोभुवि ॥ १ ॥ सत्यवादनशीलश्चप्रजा

पालनतत्परः ॥ क्षत्रधर्मरतः श्रीमान्संग्रामेष्वपराजितः ॥ २ ॥ तस्यापिकुर्वतोराज्यंशास्त्रदृष्टेनकर्मणा ॥ आजगाममहाभागःपुलस्त्योब्रह्म
णःसुतः ॥ ३ ॥ सर्वज्ञानविधिःश्रीमांस्तीर्थयात्राप्रसंगतः ॥ तमागतमथोदृष्ट्वाब्रह्मयोनिमकल्मषम् ॥ ४ ॥ उत्थायप्रददौराजास्वमासनम
भीप्सितम् ॥ अर्घपाद्यंचयत्किंचित्तत्तस्मैप्रददौस्वयम् ॥ ५ ॥ राज्यंचैवात्मनासार्द्धंनिवेद्यसकृतांजलिः ॥ तेनचैवाभ्यनुज्ञातोनिषसादव
रासने ॥ ६ ॥ पप्रच्छकुशलंप्रश्नंतपस्यध्ययनेतथा ॥ तथेतिचोक्त्वासमुनिस्तंराजानमभाषत ॥ ७ ॥ ॥ पुलस्त्यउवाच ॥ कच्चित्तेकुश
लंराजन्कोशेजनपदेपुरे ॥ धर्मेचतेमतिर्नित्यंकच्चित्पार्थिववर्तते ॥ ८ ॥ ॥ भीमउवाच ॥ सर्वत्रकुशलंब्रह्मन्येषांकुशलमिच्छसि ॥ तवचा
गमनेनाहंपावितःसंगवारिणा ॥ ९ ॥ एवंतौसंविदंकृत्वासंभाष्याथपरस्परम् ॥ रेमातेपूर्ववृत्तांतैःकथाभिरितरेतरम् ॥ १० ॥ ततःकथांते
राजेन्द्रपुलस्त्यंजातविस्मयः ॥ पप्रच्छसर्वलोकस्यहितायजगतःपतिः ॥ ११ ॥ भगवन्प्राणिनःसर्वेसंसारार्णवमध्यगाः ॥ दृश्यंतेविविधै
र्दुःखैःपीड्यमानादिवानिशम् ॥ १२ ॥ नरकेगर्भवासेचव्याधिभिर्जन्मनातथा ॥ तथाकष्टवियोगादिदुःखैर्दौर्गत्यसंभवैः ॥ १३ ॥ लालप्य
मानाबहवःपरपीडोपजीविनः ॥ एवंविधान्यनेकानिदुःखानिमुनिपुङ्गव ॥ १४ ॥ दृष्ट्वैवतानितान्येवभृशंमेव्यथितंमनः ॥ तेषांदुःखानिभू
तानांप्राणिनांमुनिमानद ॥ १५ ॥ उपकारकरंब्रूहिममानुग्रहकाम्यया ॥ स्वल्पायासेनभगवञ्जायतेसुमहत्फलम् ॥ १६ ॥ ॥ पुलस्त्यउ
वाच ॥ शृणुराजन्प्रवक्ष्यामिव्रतानामुत्तमंव्रतम् ॥ यामुपोष्यनदुःखानांभाजनोजायतेजनः ॥ १७ ॥ माघमासेसितेपक्षेद्वादशीपावनीस्मृ
ता ॥ तस्यांजलार्द्रवसनउपोष्यसुखभाग्भवेत् ॥ १८ ॥ ॥ भीमउवाच ॥ कथंसामुनिशार्दूलउपोष्याद्वादशीभवेत् ॥ विधिनाकेनविप्रे
न्द्रतन्मेब्रूहियथाक्रमम् ॥ १९ ॥ ॥ पुलस्त्यउवाच ॥ शृणुराजन्नवहितोव्रतंपापप्रणाशनम् ॥ तवशुश्रूषणाद्वाच्यंममाप्येतन्नसंशयः ॥ २० ॥
अदीक्षितायनोदेयानाशिष्यायकदाचन ॥ विष्णुभक्तायशांतायधर्मनिष्ठायचैवहि ॥ २१ ॥ वाच्यमेतन्महाराजभवतान्यस्यनकचित् ॥
ब्रह्महागुरुघातीचबालस्त्रीघातकस्तथा ॥ २२ ॥ कृतघ्नोमित्रध्रुक्चौरःक्षुद्रोभग्नव्रतस्तथा ॥ मुच्यतेपातकैःसर्वैर्व्रतेनानेनभूपते ॥ २३ ॥

१ उत्तरोत्तरम्-इ०पा० ।

शुद्धेतिथौमुहूर्तेचमंडपंकारयेत्ततः ॥ दशहस्तप्रमाणेनदशपूर्वोत्तरेप्लवे ॥ २४ ॥ तन्मध्येपञ्चहस्तांतुवेदिकांपरिकल्पयेत् ॥ शुक्लां
सुकुट्टिमांभूमिंवेद्यांकृत्वाप्रयत्नतः ॥ २५ ॥ विलिखेन्मंडलंतत्रपंचवर्णैर्विधानतः ॥ ब्राह्मणोवेदसंपन्नोविष्णुभक्तोजितेन्द्रियः ॥ २६ ॥
पञ्चविंशतितत्त्वज्ञःस्वाचाराभिरतस्तथा ॥ कुंडानिकल्पयेत्तत्रअष्टौचत्वारिवापुनः ॥२७ ॥ ब्राह्मणांस्तेषुयुंजीतचातुश्चरणिकाञ्छुभान् ॥
मध्येचमंडलस्याथकर्णिकायांजनार्दनम् ॥ २८ ॥ प्रत्यङ्मुखंन्यसेद्देवंचतुर्बाहुमरिंदम ॥ पूजयेत्तंविधानेनशास्त्रोक्तेनविचक्षणः ॥ २९ ॥
गन्धैःपुष्पैस्तथाधूपैर्नैवेद्यैर्विविधैरपि ॥ एवंसंपूज्यदेवेशंब्राह्मणैःसहदैशिकः ॥ ३० ॥ न्यसेत्स्तंभद्वयंपश्चात्तिष्ठन्काष्ठसमन्वितम् ॥
देवस्याभिमुखंतत्रपीठंतुपरिकल्पयेत् ॥ ३१ ॥ षट्त्रिंशदंगुलंश्रेष्ठंचतुरस्रंसमंततः ॥ तत्रशिक्यंसमालंब्यसुवृत्तंसुदृढंनवम् ॥ ३२ ॥
आरोपयेद्घटंतत्रयादृशंतच्छृणुष्वमे ॥ कलधौतंतथारौप्यंताम्रंवाप्यथमृन्मयम् ॥ ३३ ॥ सर्वलक्षणसंयुक्तंदृढंव्यंगविवर्जितम् ॥
तत्सहस्रंशतंकुर्यादेकच्छिद्रमथापिवा ॥ ३४ ॥ कुशलत्वानुरूपेणपार्श्वेकच्छिद्रमेववा ॥ सन्निधानेततःकुर्यात्सलिलंवस्त्रपावनम् ॥ ३५ ॥
होमार्थंकल्पयेच्चापिपालाश्यःसमिधःशुभाः ॥ तिलाघृतंतथाक्षीरंशमीपत्राणिचैवहि ॥ ३६ ॥ वेद्याःपूर्वोत्तरेभागेग्रहपीठंप्रकल्पयेत् ॥
तत्रपूज्याग्रहाःसर्वेग्रहयज्ञविधानतः ॥ ३७ ॥ पूर्वस्यांदिशिशक्रस्यपूजांकुर्वीतयत्नतः ॥ दक्षिणस्यांयमस्याथप्रतीच्यांवरुणस्यच ॥३८॥
कुबेरस्यतथोदीच्यांबलिंकुर्यात्फलाक्षतैः ॥ एवंसंभृत्यसंभारंशुक्लांबरधरस्तथा ॥ ३९ ॥ समालभ्यशुभैर्गंधैर्दर्भपाणिरतंद्रितः ॥
पीठमारोपयेयुस्तेयजमानंद्विजोत्तमाः ॥ ४० ॥ यजमानोऽपिदेवस्यसंमुखःप्रयतःशुचिः ॥ उपविश्यपठेन्मंत्रंपुराणोक्तमिदंशृणु ॥ ४१ ॥
नमस्तेदेवदेवेशनमस्तेभुवनेश्वर ॥ व्रतेनानेनमांत्राहिपरमात्मन्नमोस्तुते ॥ ४२ ॥ ततोदकस्यधारास्ताःप्रत्यंगेषुसमान्विताः ॥
शिरसाधारयेत्तूष्णींतद्गतेनांतरात्मना ॥ ४३ ॥ होमंकुर्युस्ततोविप्रादिक्षुसर्वासुतत्पराः ॥ पठेयुःशांतिकाध्यायंविष्णुसंज्ञानियानिवै ॥
॥४४॥ वादित्रैस्ताडयमानैश्चशंखगेयस्वनैस्तथा॥पुण्याहजयशब्दैश्चवेदस्वनविमिश्रितैः॥४५॥मंगलैःस्तुतिसंयुक्तैःकारयेत्तन्महोत्सवम् ॥

१ अष्टौ चत्वारि वा पुनः–इ०पा० ।

देवदेवस्यचरितंकेशवस्यमहात्मनः ॥ ४६ ॥ हरिवंशादिकंसर्वंश्रावयेद्ब्राह्मणोवरः ॥ सौपर्णिकमथाख्यानंभारताख्यानमेवच ॥ ४७ ॥
व्याख्यानकुशलाःकेचिच्छ्रावयेयुरतंद्रिताः ॥ अनेनविधिनासर्वांतांरात्रिंप्रीतिवर्द्धिनीम् ॥४८॥ यजमानोनयेद्धीमान्यावत्सूर्योदयोभवेत् ॥
ब्राह्मणाश्चापितांरात्रींजुह्वतोजातवेदसम् ॥ ४९ ॥ मंत्रैस्तुवैष्णवैर्दिव्यैःक्षपयेयुर्महीपते ॥ वासुदेवस्यशिरसिवसोर्द्धारांप्रपातयेत् ॥ ५० ॥
क्षीरेणाज्येनवाराजन्सर्वसिद्धिप्रदायिनीम् ॥ ततःप्रभातसमयेयजमानोद्विजैःसह ॥ ५१ ॥ स्नानंकुर्यान्नृपश्रेष्ठनद्यांसरसिवापुनः ॥
अथवाशक्तिहीनस्तुयजमानोष्णवारिणा ॥ ५२ ॥ ततःशुक्लानिवस्त्राणिपरिधाययतव्रतः ॥ अर्घ्यंदत्वाभास्करायसविधानंप्रसन्नधीः ॥५३॥
पुष्पैर्धूपैःसनैवेद्यैःपूजयेत्पुरुषोत्तमम् ॥ हुत्वाहुताशनंभक्त्यादत्त्वापूर्णाहुतिंततः ॥ ५४ ॥ पूजयेद्ब्राह्मणान्सर्वान्होतारोयज्ञकल्पिताः ॥
शय्याभोजनगोदानैर्वस्त्रैराभरणैस्तथा ॥ ५५ ॥ आचार्यःपूजनीयोऽत्रसर्वस्वेनापिभारत ॥ येनवातस्यसंतुष्टिर्देवतुल्योगुरुर्यतः ॥ ५६ ॥
वित्तशाठ्यविहीनस्तुभक्तिशक्तिसमन्वितः ॥ दीनानाथविशिष्टाश्चवांदिनश्चसमागताः ॥ ५७ ॥ तेषामन्नंहिरण्यंचदद्याच्छुद्धेनचेतसा ॥
एवंसंपूज्यविप्रायभोजयित्वायथेप्सितम् ॥ ५८ ॥ यथाविभवसारेणपश्चाद्भुंजीतवाग्यतः ॥ हविष्यमन्नंयज्ञेनहविष्याःसतिलास्तथा ॥५९॥
एवंयज्ञोमहाराजंश्चोक्तस्तेसंप्रकीर्तितः ॥ पापिष्ठाःसर्वपापेभ्योमुच्यंतेनात्रसंशयः ॥ ६० ॥ वाजपेयातिरात्राभ्यांयेयजंतिशतंसमाः ॥
सर्वेतेविष्णुयागस्यकलांनार्हंतिषोडशीम्॥६१॥सप्तजन्मानिसौभाग्यमायुरारोग्यसंपदः ॥ प्राप्नोतिद्वादशीमेतांतामुपोष्यविधानतः॥६२ ॥
मृतोविष्णुपुरंयातिविष्णुनासहमोदते ॥ चतुर्युगानिद्वात्रिंशद्विष्णुरूपधरःस्थितः ॥ ६३ ॥ रुद्रलोकेतथाराजन्युगानिद्वादशैवतु ॥
ब्रह्मलोकेतथात्रीणिसूर्यलोकेयुगानिच ॥ ६४ ॥ पुण्यक्षयादिहाभ्येत्यराजाभवतिधार्मिकः ॥ पृथिव्याधिपतिःश्रीमान्विजितारिःप्रतापवान् ॥
॥६५॥व्रतमेतत्पुराचीर्णंसगरेणमहात्मना ॥ अजेनधुंधुमारेणदिलीपेनययातिना ॥ ६६ ॥ अन्यैश्चपृथिवीपालैःपालितंशेषभूतलैः ॥
स्त्रीभिर्वैश्यैस्तथाशूद्रैर्धर्मकामैःसदानृप ॥ ६७ ॥ भृग्वाद्यैर्मुनिभिःसर्वैर्ब्राह्मणैर्वेदपारगैः ॥ त्वयाचपृष्टेनमयाकथितंतेनराधिप ॥ ६८ ॥ ॥ ७१ ॥
अद्यप्रभृतिचैवेयंख्यातिंयास्यतिभूतले ॥ भीमाख्याद्वादशीचेतिकृतकृत्याचभारत ॥ ६९ ॥ एषापुलस्त्यमुनिनाकथिताकुरुनंदन ॥

यश्चैनांकथितांध्यात्वाकुर्याद्वाभक्तिभावतः ॥ ७० ॥ सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते ॥ दरिद्रश्चापिभोःपार्थवित्तशाठ्यंविवर्जयेत् ॥
॥७१॥विष्णुभक्तेनकर्तव्यासंसारभयभीरुणा ॥ ७२ ॥ भीमेनयाकिलपुरासमुपोषिताचरात्रौघटस्थिरसुशीतलवारिधारा ॥ तांद्वादशीं
दशमुखारिमुखाच्छ्रुतांचसम्यग्व्रतीचरतियातिसविष्णुलोके ॥ ७३ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादे
भीमद्वादशीव्रतवर्णननामचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥छ॥ युधिष्ठिरउवाच ॥ ॥ उपवासासमर्थानांसदैवपुरुषोत्तम ॥ एकायाद्वादशी
पुण्यातांवदस्वममानघ ॥ १ ॥ श्रीकृष्णउवाच ॥ मासिभाद्रपदेशुक्लाद्वादशीश्रवणान्विता ॥ सर्वकामप्रदापुण्याचोपवासेमहाफला ॥२ ॥
संगमेसरितांस्नात्वाद्वादश्यांसमुपोषितः ॥ अयत्नात्समवाप्नोतिद्वादशद्वादशीफलम् ॥ ३ ॥ बुधश्रवणद्वादश्यामेवंवैसंयतोभवेत् ॥
अतिवमहतीतस्यांकृतंसर्वमथाक्षयम् ॥ ४ ॥ द्वादशीश्रवणोपेतायदाभवतिभारत ॥ संगमेसरितांस्नात्वागंगादिस्नानजंफलम् ॥ ५ ॥
सोपवासःसमाप्नोतिनात्रकार्याविचारणा ॥ जलपूर्णेतथाकुंभेस्थापयित्वाविचक्षणः ॥ ६ ॥ पंचरत्नसमोपेतंसोपवीतंसुपूजितम् ॥
तस्यस्कंधेसुघटितंस्थापयित्वाजनार्दनम् ॥ ७ ॥ यथाशक्त्यास्वर्णमयंशंखशार्ङ्गविभूषितम् ॥ स्नापयित्वाविधानेनासितचंदनचार्चितम् ॥
॥८॥सितवस्त्रयुगच्छन्नंछत्रोपानद्युगान्वितम् ॥ ॐनमोवासुदेवायेतिशिरःसंपूजयेद्धरेः ॥ ९ ॥ श्रीधरायमुखंतद्वत्कंठंकृष्णायवैपुनः ॥
ॐनमःश्रीमतेवक्षोभुजौसर्वास्त्रधारिणे ॥ १० ॥ व्यापकायनमःकुक्षिंकेशवायोदरंनमः ॥ त्रैलोक्यजनकायेतिएवंसंपूजयेद्धरिम् ॥ ११ ॥
सर्वाधिपतयेजंघेपादौसर्वात्मनेनमः ॥ अनेनविधिनाराजन्पुष्पैर्धूपैःसमर्चयेत् ॥ १२ ॥ ततस्तस्याग्रतोदेयंनैवेद्यंघृतपाचितम् ॥
सोदकांश्चनवान्कुंभाञ्छक्त्यादद्याद्विचक्षणः ॥ १३ ॥ एवंसंपूज्यगोविंदंजागरंतत्रकारयेत्॥ प्रभातेविमलेस्नात्वासंपूज्यगरुडध्वजम्॥१४॥
पुष्पधूपादिनैवेद्यैःफलैर्वस्त्रैःसुशोभनैः ॥ ततःपुष्पांजलिंबद्ध्वामंत्रमेतमुदीरयेत् ॥ १५ ॥ नमोनमस्तेगोविंदबुधश्रवणसंज्ञक ॥
अघौघसंक्षयंकृत्वासर्वसौख्यप्रदोभव ॥ १६ ॥ एवंसंपूज्यगोविंदंब्राह्मणंपूजयेत्ततः ॥ अनंतरंब्राह्मणेवैवेदवेदांतपारगे ॥ १७ ॥ पुराणज्ञे
विशेषेणविधिवत्संप्रदापयेत् ॥ द्वादश्यांश्रवणेयुक्तेअशेषाहस्करान्विते ॥ १८ ॥ करकंसंगमेस्नात्वाप्रीयतांमेजनार्दनः ॥ ॥ श्रीकृष्ण

उवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ १९ ॥ महत्यरण्येयद्वृत्तंभूमिपालशृणुष्वतत् ॥ देशोदशार्णकोनामतस्यभागेतुपश्चि
मे ॥ २० ॥ अस्तिकश्चिन्मरुदेशःसर्वसत्त्वभयंकरः ॥ सुतप्तसिकताभूमिर्यत्रदुष्टामहोरगाः ॥ २१ ॥ अल्पच्छायद्रुमाकीर्णोमृतप्राणिसमा
कुलः ॥ शमीखदिरपालाशकरीरैःपीलुभिःसह ॥ २२ ॥ तत्रभीमद्रुमाःपार्थकंटकैःशबलादृढैः ॥ दग्धप्राणिगणाकीर्णायत्रभूर्दृश्यतेक्वचि
त् ॥ २३ ॥ अन्नोदकंनोलभंतेराजंस्तत्रवलाहकाः ॥ कदाचिदपिदृश्यंतेभ्रममाणाविहंगमाः ॥ २४ ॥ वृक्षांतरगतैर्नित्यंशिशुभिस्तृषितैः
समम् ॥ उत्क्रांतजीविताराजन्दृश्यंतेविहगोत्तमाः ॥ २५ ॥ तृषातुराश्चसहसामृगाःसैकतमागताः ॥ सैकतेष्वेवनश्यंतिजलंसैकतसेतुवत्
॥ २६ ॥ तस्मिंस्तथाविधेदेशेकश्चिद्दैववशाद्वणिक् ॥ निजसार्थपरिभ्रष्टःप्रविष्टोमरुजंगले ॥ २७ ॥ पिशाचान्मलिनांस्तीक्ष्णान्निर्मांसा
न्भीमदर्शनात् ॥ इतस्ततःसंचरतोददर्शवणिजोत्तमः ॥ २८ ॥ बभ्रामोद्भ्रांतहृदयःक्षुत्तृपाश्रमकर्पितः ॥ क्वयामःक्वजलंक्वाहंयास्यामिनतु
बोधसः ॥ २९ ॥ अथप्रेतान्ददर्शासौतृष्णाव्याकुलितेंद्रियान् ॥ स्नायुबद्धास्थिचरणान्प्रेक्षमाणानितस्ततः ॥ ३० ॥ प्रेतस्कंधसमारूढ
मेकंप्रेतंददर्शह ॥ अपश्यद्बहुभिःप्रेतैःसमंतात्परिवारितम् ॥ ३१ ॥ आगच्छमानमव्यग्रंस्तुतुशब्दपुरःसरम् ॥ प्रेतस्कंधान्महींगत्वातस्यां
तिकमुपागमत् ॥ ३२ ॥ सदृष्ट्वाथवणिक्छ्रेष्ठमिदंवचनमब्रवीत् ॥ अस्मिन्वैनिर्जलेदेशेगमनंभवतःकथम् ॥ ३३ ॥ तमुवाचवणिग्धीमान्सा
र्थभ्रष्टस्यचैवमे ॥ प्रवेशोदैवयोगेनपूर्वकर्मकृतेनतु ॥ ३४ ॥ तृष्णामांबाधतेऽत्यर्थंक्षुद्दुनोतिभृशंतथा ॥ प्राणाःकंठमनुप्राप्तानचनंनश्यती
वमे ॥ ३५ ॥ अत्रोपायंनपश्यामिजीवेयंयेनकेनचित् ॥ कृष्णउवाच ॥ इत्येवमुक्तेप्रेतस्तंवणिजंवाक्यमब्रवीत् ॥ ३६ ॥ पुंनागमिममा
श्रित्यप्रतीक्षस्वमुहूर्तकम् ॥ कृतातिथ्योयथालाभंगमिष्यसियथासुखम् ॥ ३७ ॥ एवमुक्तस्तथाचक्रेसवणिक्तृष्णयार्दितः ॥ मध्याह्न
समयेप्राप्तेततस्तंदेशमागतः॥३८॥पुन्नागवृक्षात्करकोवारिधारामनोरमः ॥ दध्योदनसमायुक्तोवर्धमानेनसंयुतः ॥३९॥ आगतेकरकेतस्मि
न्प्रादादतिथयेतदा ॥ भुक्त्वान्नंचजलंपीत्वावणिक्तुष्टिमुपागतः ॥ ४० ॥ वितृष्णोविज्वरश्चैवक्षणेनसमपद्यत ॥ ततस्तुप्रेतसंघस्यभोक्तु
कामस्यवैददौ ॥ ४१ ॥ दध्योदनंसपानीयंप्रेतास्तृप्तिंपरांगताः ॥ अतिथिंतर्पयित्वाचप्रेतलोकंचसर्वशः ॥ ४२ ॥ ततःस्वयंसबुभुजेसु

क्लेशेषुयथासुखम् ॥ तस्युक्तवतश्चान्नंपानीयंचक्षयंययौ ॥४३॥ प्रेताधिपंततस्तृप्तोवणिग्वचनमब्रवीत् ॥ आश्चर्यमेतत्परमंवनेऽस्मिन्प्रति
भातिमे॥४४॥अन्नपानस्यसंप्राप्तिःपरमस्यकुतस्तव॥स्तोकेनचतथान्नेनाविभर्पिसुबहून्पृथक्॥४५॥तृप्ताःपरंकथंत्वेतेनिर्मांसाभिन्नकुक्षयः॥
अपरंचकथंचेहममपापपरिक्षयः ॥ ४६ ॥ हस्तावलंबनःकस्त्वंसंप्राप्तोनिर्जनेवने ॥ तृप्तश्चासिकथंग्रासमात्रेणचशुभव्रत ॥ ४७ ॥ कस्त्व
मस्यांसुघोरायामटव्यांतुकृतालयः॥ तदेतत्संशयंछिंधिपरंकौतूहलंमम ॥ ४८॥ एवमुक्तःसवणिजाप्रेतोवचनमब्रवीत् ॥ शृणुभद्रप्रवक्ष्या
मिदुष्कृतंकर्मचात्मनः ॥ ४९ ॥ शाकलेनगरेरम्येअहमासंसुदुर्मतिः॥वणिजासक्तितःपूर्वकालोनीतोमयानघ॥५०॥ धनलोभान्मयातत्र
दाचिच्चप्रमादिना॥ नदत्ताभिक्षवेभिक्षातृष्णयापीडितायच ॥ ५१ ॥ प्रतिवेशेचतत्रासीद्ब्राह्मणोगुणवान्मम ॥ श्रवणद्वादशीयोगेमासिभाद्र
पदेतथा ॥ ५२ ॥ सकदाचिन्मयासार्धंतोषांनामनदींययौ ॥ तस्याश्चसंगमःपुण्योयत्रासीच्चंद्रभागया ॥ ५३ ॥ चंद्रभागासोमसुतातोषाचै
वार्कनंदिनी ॥ तयोःशीतोष्णसलिलसंगमःसुमनोहरः ॥ ५४ ॥ तत्तीर्थवरमासाद्यप्रतिवेश्यःसचद्विजः ॥ श्रवणद्वादशीयोगेस्नातश्चैवसुपो
पितः ॥ ५५ ॥ चंद्रभागातोपयोश्चवारिधान्यैर्नवैर्दृढैः ॥ दध्योदनयुतैःसार्धंसंपूर्णैर्वर्धमानकैः ॥ ५६ ॥ छत्रोपानद्युगंवस्त्रंप्रतिमांविधिवद्वरः ॥
चंद्रभागाजीवनेनदध्योदनयुतंतदा ॥ ५७ ॥ एतत्कृत्वागृहंप्राप्तस्ततःकालेनकेनचित्॥ पंचत्वमहमासाद्यनास्तिक्यात्प्रेततांगतः ॥५८॥
अस्यामटव्यांघोरायांयथादृष्टस्त्वयानघ ॥ ब्रह्मस्वहारिणस्त्वेतेपापाःप्रेतत्वमागताः ॥ ५९ ॥ परदाररताःकेचित्स्वामिद्रोहरताःपरे ॥
मित्रद्रोहरताःकेचिद्देशेऽस्मिंस्तुसुदारुणे ॥६०॥ ममैतेभृत्यतांयाताअन्नपानकृतेनच ॥ अक्षय्योभगवान्कृष्णःपरमात्मासनातनः ॥६१॥
यद्दीयतेतमुद्दिश्यअक्षय्यंतत्प्रकीर्तितम् ॥ मयाविहीनाःकिंत्वेतेवनेऽस्मिन्भृशदारुणे ॥ ६२ ॥ पीडामनुभविष्यंतिदारुणांकर्मयोनिजाम्॥
एतेषांत्वंमहाभागममानुग्रहकाम्यया ॥ ६३ ॥ अनेकनामगोत्राणिगृहाणलेखनेनच ॥ अस्तुकक्षागताचैवतवसंपुटिकाशुभा ॥ ६४ ॥
हिमवत्यांतथासाद्यतत्रत्वंलप्स्यसेनिधिम् ॥ गयाशीर्षंततोगत्वाश्राद्धंकुरुमहामते ॥ ६५ ॥ एकमेकमथोद्दिश्यप्रेतंप्रेतंयथासुखम् ॥ एवं
संभाष्यमाणोऽसौतप्तजांबूनदप्रभः ॥ ६६ ॥ विमानवरमारुह्यस्वर्गलोकमितोगतः ॥ स्वर्गतेप्रेतनाथेतुप्रभावात्सवणिक्पुमान् ॥ ६७ ॥

नामगोत्राणिसंगृह्यप्रयातःसहिमाचलम् ॥ तत्रप्राप्यनिधिंगत्वाविनिक्षिप्यस्वकेगृहे ॥ ६८ ॥ धनभागमुपादायगयाशीर्षवटंययौ ॥ प्रेता
नांक्रमशस्तत्रचक्रेश्राद्धंदिनेदिने ॥ ६९ ॥ यस्ययस्यगयाश्राद्धंसकरोतिदिनेवणिक् ॥ सचतस्यसदास्वप्नेदर्शयत्यात्मनस्तनुम् ॥ ७० ॥
ब्रवीतिचमहाभागप्रसादेनतवानघ ॥ प्रेतभावांमयात्यक्तःप्राप्तोस्मिपरमांगतिम् ॥ ७१ ॥ सकृत्वाधनलोभाच्चप्रेतानांसत्क्रियांवणिक् ॥ ज
गामस्वगृहंतत्रमासिभाद्रपदेतथा ॥ ७२ ॥ श्रवणद्वादशीयोगेपूजयित्वाजनार्दनम् ॥ दानंचदत्त्वाविप्रेभ्यःसोपवासोजितेंद्रियः ॥ ७३ ॥
महानदीसंगमेषुप्रतिवर्षंयुधिष्ठिर ॥ चकारविधिवद्दानंततोदिष्टांतमागतः ॥ ७४ ॥ अवापपरमंस्थानंदुर्लभंचात्रमानवैः ॥ यत्रकामफला
वृक्षानद्यःपायसकर्दमाः ॥ ७५ ॥ शीतलामलपानीयाःपुष्करिण्योमनोहराः ॥ ७६ ॥ तंदेशमासाद्यवणिङ्महात्मासुतप्तजांबूनदभूषितां
गः ॥ कल्पंसमग्रंसहसुंदरीभिःस्वर्गेसरेमेमुदितःसदैव ॥ ७७ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेश्रवण
द्वादशीव्रतवर्णनंनामपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ द्वादश्यास्तेविधिःप्रोक्तःश्रावणेयोयुधिष्ठिर ॥
सर्वपापप्रशमनःसर्वसौख्यप्रदायकः ॥ १ ॥ एकादशीयदासास्याच्छ्रवणेनसमन्विता ॥ विजयासातिथिःप्रोक्ताभक्तानांविजयप्रदा ॥ २ ॥
बलवानजितोदैत्योबलिर्नामामहाबलः ॥ तेनदेवगणाःसर्वेत्याजिताःसुरमंदिरम् ॥ ३ ॥ ततोदेवामहाविष्णुंगत्वावचनमूचिरे ॥ त्वं
गतिःसर्वदेवानांशीघ्रंकष्टात्समुद्धर ॥ ४ ॥ जहिदैत्यंमहाबाहोबलिंबलनिषूदन ॥ श्रुत्वाविष्णुस्तदावाक्यंदेवानांकरुणोदयम् ॥ ५ ॥
उवाचवाक्यंकालज्ञोदेवानांहितकाम्यया ॥ जानेवैरोचनिंदैत्यंबलिंत्रैलोक्यकंटकम् ॥ ६ ॥ तपसाभावितात्मानंशांतंदांतंजितेंद्रियम् ॥
मद्भक्तंमद्गतप्राणंसत्यसंधंमहाबलम् ॥ ७ ॥ तपसोंतःसुबहुनाकालेनास्यभविष्यति ॥ यदाविनयसंपन्नज्ञास्यकालेनकेनचित् ॥ ८ ॥
समाहृत्यप्रियंतस्यतदादास्येदिवौकसम् ॥ अदितिर्मांप्रपन्नावैपुत्रार्थंपुत्रलोभिनी ॥ ९ ॥ तस्यामतिहितंदेवाःकरिष्येनात्रसंशयः ॥ तदे
वानांहितंसर्वंचाहितंतुसुरद्विषाम् ॥ १० ॥ तद्गच्छध्वंनिरुद्विग्नाःकालःकश्चित्प्रतीक्ष्यताम् ॥ एवमुक्तागतादेवाःकार्यंविष्णुरचिंतयत् ॥ ११ ॥
संचिंतयित्वासुचिरंदेव्यागर्भावतारणम् ॥ अदितिर्वरयामासवांछितंमेभविष्यति ॥ १२ ॥ अथकालेबहुतिथेगतेसागर्भिणीह्यभूत् ॥ सुषु

वेनवमेमासिपुत्रंसावामनंहरिम् ॥ १३ ॥ ह्रस्वपादंह्रस्वकायंमहच्छिरसमर्भकम् ॥ पाणिपादोदरकृशंस्वयंनारायणंहरिम् ॥ १४ ॥
दृष्ट्वातुवामनंजातंयदिसावकुमुद्यता ॥ निरुद्धवाक्याह्यभवद्वक्तुंकिंचिन्नपारितम् ॥ १५ ॥ एकादश्यांभाद्रपदेश्रवणेननरोत्तम ॥ संच
चालमहीजातेवामनेतुत्रिविक्रमे ॥ १६ ॥ भयंबभूवदैत्यानांदेवानांतोषआभवत् ॥ जातकर्मादिकांस्तस्यसंस्कारान्स्वयमेवहि ॥ १७ ॥
चकारकश्यपोधीमान्प्रजापतिरनुद्यतः ॥ आबद्धमेखलोदंडीधृत्वायज्ञोपवीतकम् ॥ १८ ॥ कुशस्वच्छोदकधरःकमंडलुविभूषितः ॥ बले
र्बलवतोयज्ञंजगामबहुविस्तरम् ॥ १९ ॥ दृष्ट्वाबलिमथोवाचवामनोऽभ्येत्यतत्क्षणम् ॥ अथचाहयज्ञपतेदीयतांममभेदिनी ॥ २० ॥
पादत्रयप्रमाणेनपठनार्थंस्थितोह्यसि ॥ दत्तादत्तातवमयाबलिःप्राहद्विजोत्तमम् ॥ २१ ॥ ततोवर्द्धितुमारब्धोवामनोऽनंतविक्रमः ॥ पादौ
भूमौप्रतिष्ठाप्यशिरसावृत्यरोदसी ॥ २२ ॥ ताभ्यामिंद्रादिकाँल्लोकाँल्ललाटेब्रह्मणःपदम् ॥ नतृतीयंपदंलेभेततोनेदुर्दिवौकसः ॥ २३ ॥
तद्दृष्ट्वामहदाश्चर्यंसिद्धादेवर्षयस्तथा ॥ साधुसाध्वितिदेवेशंप्रशशंसुर्मुदान्विताः ॥ २४ ॥ ततोदैत्यगणान्सर्वाञ्जित्वात्रिभुवनंवशी ॥ बलिमाहत
तोगच्छसुतलंस्वबलानुगः ॥ २५ ॥ तत्रत्वमीप्सितान्भोगान्भुक्त्वामद्बाहुपालितः ॥ अस्येंद्रस्यावसानेतुत्वमेवेंद्रोभविष्यसि ॥ २६ ॥ एवमुक्तो
बलिःप्रायान्नमस्कृत्यनरोत्तमम् ॥ विसृज्यमेवंबलिंदेवान्सकलान्सउवाचह ॥ २७ ॥ स्वानिधिष्ण्यानिगच्छध्वंतिष्ठध्वंविगतज्वराः ॥ देवेनोक्तागता
देवाहृष्टाःसंपूज्यवामनम् ॥ २८ ॥ देवःकृत्वाजगत्कार्यंतत्रैवांतरधीयत ॥ एतत्सर्वंसमभवदेकादश्यांनराधिप ॥ २९ ॥ तेनेष्टादेवदेवस्यसर्व
दाविजयातिथिः ॥ एषावैफाल्गुनेमासिपुष्येणसहितानृप ॥ ३० ॥ विजयाप्रोच्यतेसद्भिःकोटिकोटिगुणोत्तरा ॥ एकादश्यांसोपवासोरात्रौसं
पूजयेद्धरिम् ॥ ३१ ॥ रौप्यसौवर्णपात्रेवादारुवंशमयेऽपिवा ॥ कुंडिकांस्थापयेत्पार्श्वेछत्रंवैपादुकेतथा ॥ ३२ ॥ शुभांचवैष्णवींयष्टिंतथासूत्रकमं
डलू ॥ आच्छाद्यपात्रंवासोभिःफलैश्चापिसुशोभनैः ॥ ३३ ॥ मार्गंचार्मण्यगंधैश्चभक्त्यावामृगचर्मणा ॥ तिलाढकेनवित्ताढ्यःप्रस्थेनकुडवेनवा ॥
॥ ३४ ॥ व्रीहिभिर्वाथगोधूमैःफलैःशुक्लतिलैर्भवेत् ॥ पुष्पैर्गंधैर्धूपदीपैःपक्वान्नैरर्चयेद्धरिम् ॥ ३५ ॥ नानाविधैश्चनैवेद्यैर्भक्ष्यभोज्यैर्गुडोदनैः ॥
स्वस्ववित्तानुसारेणसहिरण्यंचकारयेत् ॥ ३६ ॥ मंत्रंशतगुणंचैवभक्त्यालक्षगुणोत्तरम् ॥ भक्तिमांश्चगुणोपेतंकोटिकोटिगुणोत्तरम् ॥ ३७ ॥

एभिर्मंत्रपदैस्तत्रपूजयेद्गरुडध्वजम् ॥ उपहारैर्नरश्रेष्ठशुचिर्भूत्वासमाहितः ॥ ३८ ॥ ॐजलजोपमदेहायजलजास्यायशंखिने ॥
जलराशिस्वरूपायनमस्तेपुरुषोत्तम ॥ ३९ ॥ नमःकमलनाभायनमस्तेजलशायिने ॥ नमस्तेकेशवानंतवासुदेवनमोऽस्तुते ॥ ४० ॥
स्नानमंत्रः ॥ मलयेषुसमुत्पन्नंगंधाढ्यंसुमनोहरम् ॥ मयानिवेदितंतुभ्यंगृहाणपरमेश्वर ॥ ४१ ॥ चंदनमंत्रः ॥ ननल्पानिसमुत्पन्नानि गाढ्यं
सुमनोहरम् ॥ मयानिवेदितंपुष्पंगृहाणपुरुषोत्तम ॥ ४२ ॥ पुष्पमंत्रः ॥ नमःकमलकिंजल्कपीतनिर्मलवाससे ॥ मनोहरवपुःस्कंध
धृतचक्रायशार्ङ्गिणे ॥ ४३ ॥ पूजामंत्रः ॥ मत्स्यंकूर्मंवराहंचनारसिंहंचवामनम् ॥ रामंरामंचकृष्णंनामभिर्वामनायते ॥ ४४ ॥ पादादि
कैकांगस्यपूजनंशीर्षगंततः ॥ सर्वांगपूजा ॥ धूपोऽयंदेवदेवेशशंखचक्रगदाधर ॥ ४५ ॥ अच्युतानंतगोविंदवासुदेवनमोऽस्तुते ॥ धूप
मंत्रः ॥ त्वमेवपृथिवीज्योतिर्वायुराकाशमेवच ॥ ४६ ॥ त्वमेवज्योतिषांज्योतिर्दीपोऽयंप्रतिगृह्यताम् ॥ दीपमंत्रः ॥ अन्नंचतुर्विधंस्वादु
रसैःषड्भिःसमन्वितम् ॥ ४७ ॥ भक्ष्यभोज्यसमायुक्तंप्रसीदपरमेश्वर ॥ अन्नंप्रजापतिर्विष्णूरुद्रेंद्रशशिभास्कराः ॥ ४८ ॥ अन्नंत्वप्रायसो
ऽग्निश्चपापंहरतुमेऽव्ययः ॥ नैवेद्यमंत्रः ॥ जगदादिर्जगद्रूपमनादिजगदंतकृत् ॥४९॥ जलाशयजगद्योनिःप्रीयतांमेजनार्दनः ॥ प्रीणनमंत्रः॥
अनेककर्मनिर्बंधध्वंसिनंजलशायिनम् ॥ ५० ॥ नतोऽस्मिमधुरावासंमाधवंमधुसूदनम् ॥ नमोवामनरूपायनमस्तेऽस्तुत्रिविक्रम ॥५१॥
नमस्तेमणिबंधायवासुदेवनमोऽस्तुते ॥ नमस्कारमंत्रः ॥ नमोनमस्तेगोविंदवामनेशत्रिविक्रम ॥ ५२ ॥ अघौघसंक्षयंकृत्वासर्वकाम
प्रदोभव ॥ प्रार्थनामंत्रः ॥ सर्वगःसर्वदेवेशःश्रीधरःश्रीनिकेतनः ॥ ५३ ॥ विश्वेश्वरश्चविष्णुश्चश्रीशायीचनमोनमः ॥ शयनमंत्रः ॥ एवं
संपूज्ययोरात्रावेकादश्यांनृपोत्तम ॥ ५४ ॥ जागरंतत्रकुर्वीतगीतवादित्रनिस्वनैः ॥ याचश्रवणसंयुक्ताद्वादशीपरमातिथिः ॥ ५५ ॥ त
स्यांचसंगमेस्नात्वासर्वपापैःप्रमुच्यते ॥ एवंसंपूज्ययत्नेनप्रभातेविमलेसति ॥ ५६ ॥ प्रदेयंशास्त्रविदुषेब्राह्मणायचमंत्रतः ॥ ब्राह्मणश्चा
पिमंत्रेणप्रतिगृह्णीतमंत्रवत् ॥ ५७ ॥ वामनोऽस्यप्रतिग्राहीवामनायनमोनमः ॥ ५८ ॥ ॐगुह्ये ॥ ॐशिरसि ॥ ॐपादयोः ॥ ॐना
भौ ॥ ॐभुजयोः ॥ ॐसर्वांगे ॥ सर्वात्मनेनमः ॥ पुष्पंफलंचनैवेद्यंसर्वमेतद्यथाविधि ॥ नरोदद्यादुपोष्यैवमेकादश्यांसमंत्रकम् ॥५९॥

पूर्वोक्तविधिनाप्रातर्भोजनंपृषदाज्यकम् ॥ पूर्वंदत्वाब्राह्मणेभ्यःपश्चाद्भुंजीतवाग्यतः ॥ ६० ॥ भूयोभूयोऽपिराजेंद्रसर्वत्रैवंविधिःस्मृतः ॥
समाप्तेतुव्रतेराजन्यत्पुण्यंतन्निबोधमे ॥ ६१ ॥ चतुर्युगानिराजेंद्रएकसप्ततिसंख्यया ॥ प्राप्याविष्णुपुरेराजन्क्रीडतेकालमक्षयम् ॥ ६२ ॥
इहागत्यभवेद्राजाप्रतिपक्षक्षयंकरः ॥ हस्त्यश्वरथपत्तीनांदाताभोक्ताविमत्सरी ॥ ६३ ॥ रूपसौभाग्यसंपन्नोदीर्घायुर्नीरुजोभवेत् ॥ पु
त्रैःपरिवृतोजीवोजीवेच्चशरदःशतम् ॥ ६४ ॥ एतस्याःफलमाख्यातमेकादश्यामयातव ॥ पूर्वमेवसमाख्याताद्वादशीश्रवणान्विता ॥६५ ॥
उपोष्यैकादशींपश्चाद्द्वादशीमप्युपोषयेत् ॥ नचात्रविधिलोपःस्यादुभयोर्दैवताहरिः ॥ ६६ ॥ "एकादशीद्वादश्योरन्यतरस्यांश्रवणयुक्तायां
श्रवणयुक्तोपवासेनैवव्रतद्वयसिद्धिः॥ एकस्मिन्व्रतेपूर्वमन्यांतिथिमुपोष्यपश्चादपारयित्वैवान्योपोष्यतइतियोविधिलोपःसएकदेवताकत्वेन
नभवतीत्यर्थः" ॥ बुधश्रवणसंयुक्ताद्वादशीसंगमोदकम् ॥ दानंदध्योदनंसत्यमुपवासःपरोविधिः ॥ ६७ ॥ सगरेणककुत्स्थेनधुंधुमारे
णगाधिना ॥ एतैश्चान्यैश्चराजेंद्रकृतंवैद्वादशीव्रतम् ॥ ६८ ॥ साद्वादशीबुधयुताश्रवणेनसाकंस्याद्वैजयायकथिताक्रापिभिर्नभस्ये ॥ तामा
दरेणसमुपोष्यनरोऽमरत्वंप्राप्नोतिपार्थअणिमादिगुणोपपन्नम् ॥ ६९ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादे
विजयश्रवणद्वादशीव्रतवर्णनंनामषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ कृष्णपक्षेतुपौषस्यसंप्राप्तद्वादशीव्र
तम् ॥ पौषादिपारणंमासैःषड्भिर्ज्येष्ठांतिकंस्मृतम् ॥ १ ॥ प्रथमंपुंडरीकाक्षंनामकृष्णस्यगीयते ॥ द्वितीयेमाधवाख्यंतुविश्वरू
पंतुफाल्गुने ॥ २ ॥ पुरुषोत्तमाख्यंतुततःपंचमेऽच्युतसंज्ञकम् ॥ षष्ठेजयेतिदेवेशगुह्यंनामप्रकीर्तितम् ॥ ३ ॥ पूर्वोक्तेषुचमासेषुस्ना
नप्राशनयोस्तिलाः ॥ आषाढादिषुमासेषुपंचगव्यमुदाहृतम् ॥ ४ ॥ स्नानंचप्राशनंचैवपंचगव्यंसदिष्यते ॥ पूजयेत्पुंडरीकाक्षंतैस्तैरे
वचनामभिः ॥ ५ ॥ प्रतिमासंचदेवेशकृत्वापूजांयथाविधि ॥ विप्रायदक्षिणांदद्याच्छ्रद्दधानश्चभक्तितः ॥ ६ ॥ पारणंचैवदेवेशप्रीणनंभ
क्तिपूर्वकम् ॥ कुर्वीतभक्त्यागोविंदसद्भावेनार्चनंयतः ॥ ७॥ नक्तंभुंजीतसततंतैलक्षारविवर्जितम् ॥ एकादश्यामुपोष्यैवंद्वादश्यामथवादि
ने ॥ ८ ॥ एवंसंवत्सरस्यांतेयदभिप्रेतमात्मनः ॥ धनंचसुहिरण्यंचधान्यंभाजनमासनम् ॥ ९ ॥ शय्यांवाब्राह्मणेदद्यात्केशवःप्रीयताम्

ष्ठताम् ॥ एतामुपोष्यविधिनाविष्णुप्रीतौचतत्परः ॥ १० ॥ सर्वान्कामानवाप्नोतियद्यदिच्छतिचेतसा ॥ ततोलोकेषुविख्यातंसंप्राप्तं
द्वादशीतिवै ॥ ११ ॥ कृताभिलषिताद्दष्टाप्रारब्धाधर्मतत्परैः ॥ पूरयेदखिलान्कामान्संस्मृतावादिनेदिने ॥ १२ ॥ संप्राप्तिकामुप
वसंतिसमीहितार्थायेमानवामनुजपुंगवविष्णुभक्ताः ॥ तेषांसमीहितफलानिददातिशश्वद्वासःसुरेशभवनेभगवत्प्रसादात् ॥ १३ ॥
इति श्रीभविष्यमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेसंप्राप्तिद्वादशीव्रतंनामसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ छ ॥श्रीकृष्णउवाच॥
तथान्यामपितेवच्मिगोविंदद्वादशींशृणु ॥ तस्याःसम्यगनुष्ठानात्प्राप्नोत्यभिमतंफलम् ॥ १ ॥ पौषेमासेसितेपक्षेद्वादश्यांसमुपोषितः ॥
सम्यक्संपूज्यगोविन्दनाम्नादेवमधोक्षजम् ॥ २ ॥ धूपपुष्पोपचारैश्चनैवेद्यैश्चसमाहितः ॥ गोविंदेतिजपेन्नामपुनस्तद्गतमानसः ॥ ३ ॥
विप्रायदक्षिणांदद्याद्यथाशक्त्यानराधिप ॥ स्वयंविबुद्धस्तुलितोगोविंदेतिचकीर्तयेत् ॥ ४ ॥ पाखंडिभिर्विकर्मस्थैरालापांश्चविवर्जयेत् ॥
गोमूत्रंगोमयंवापिदधिक्षीरमथापिवा ॥ ५ ॥ गोदोहतःसमुद्भूतंप्राश्नीतात्मविशुद्धये ॥ द्वितीयेऽह्निपुनःस्नानंतथैवाभ्यर्च्यकेशवम् ॥ ६ ॥
तेनैवनाम्नासंपूज्यदत्वाविप्रस्यदक्षिणाम् ॥ ततोभुञ्जीतगोदोहसंभूतेनसमुद्भवम् ॥ ७ ॥ एवमेवाखिलान्मासानुपोष्यप्रयतःशुचिः ॥
दद्याद्गवाह्निकंविद्वान्प्रतिमासंतुशक्तितः ॥ ८ ॥ पारितेचपुनर्वर्षेगोविन्दंपद्मयासह ॥ गोविन्दःप्रीतिमायातुव्रतेनानेनमेसदा ॥ ९ ॥
विशेषतःपुनर्दद्यात्तस्मिन्नह्निगवाह्निकम् ॥ भक्त्यापरमयाराजञ्छृणुयत्फलमाप्नुयात् ॥ १० ॥ स्वर्णशृंगंरौप्यखुरंगोशतंवृषभंवरम् ॥
इतिमासंद्विजातिभ्योदत्वायत्फलमश्नुते ॥ ११ ॥ तदाप्नोत्यखिलंसम्यग्व्रतमेतदुपोषितः ॥ तंचलोकमवाप्नोतिगोविन्दोयत्रतिष्ठति॥१२॥
गोविन्दद्वादशीमेतामुपोष्यंतिविधानतः ॥ विद्योतमानादृश्यंतेलोकेव्यापिशशाङ्कवत् ॥ १३ ॥ गोविन्दमर्चयतिगोरसभोजनस्तुगावोवि
नोदयतितद्गवाह्निकश्च ॥ योद्वादशीषुकुरुराजकृतोपवासःप्राप्नोत्यसौसुरभिलोकमपेतशोकम् ॥ १४ ॥ इतिश्रीभविष्यमहापुराणेउ
त्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेगोविन्दद्वादशीव्रतवर्णनंनामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥

१ विकल्पस्थैः–इ०पा० ।

उपवासव्रतानांतुवैकल्यंयन्महामते ॥ दानधर्मेकृतंयस्यविपाकोवदयादृशः ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ यज्ञानामुपवासा
नांव्रतानांचनरेश्वर ॥ वैकल्यात्फलवैकल्यंयादृशंतच्छृणुष्वमे ॥ २ ॥ उपवासान्विनाखण्डंप्राप्नुवंत्येवताञ्छृणु ॥
भ्रष्टैश्वर्यानिर्द्धनाश्चवसंतिपुरुषाःपुनः ॥ ३ ॥ रूपंनथोत्तरंप्राप्यव्रतवैकल्यदोषतः ॥ काणाःकुब्जाश्चपण्ढाश्चभवंत्यन्धाश्चमानवाः ॥ ४ ॥
उपवासीनरःपत्नींनारीप्राप्यतथापतिम् ॥ वियोगंव्रतवैकल्यंदुर्भगत्वमवाप्नुयात् ॥ ५ ॥ येद्रव्येसत्यदातारस्तथान्नेसत्यनग्रयः ॥
कुलेवसंतिदुःशीलादुष्कुलाशीलनिश्चये ॥ ६ ॥ वस्त्रानुलेपनैर्हीनाभूषणैश्चातिरूपिणः ॥ विरूपरूपाश्चतथाप्रसाधकगुणान्विताः ॥ ७ ॥
तेसर्वेव्रतवैकल्यात्फलवैकल्यमागताः ॥ तस्मात्तद्व्रतवैकल्यंयज्ञवैकल्यमेवच ॥ ८ ॥ उपवासेनकर्तव्यंवैकल्याद्विकलंफलम् ॥
॥ युधिष्ठिरउवाच ॥ कथंचिद्यदिवैकल्यमुपवासादिकेभवेत् ॥ ९ ॥ किंतत्रवदकर्तव्यमच्छिद्रंयेनजायते ॥ ॥ श्रीकृष्णउवाच ॥ ॥
अखंडद्वादशीह्येषासमस्तेष्वेवकर्मसु ॥ १० ॥ वैकल्यंप्रशमंयातिशृणुष्वगदतोमम ॥ मार्गशीर्षेसितेपक्षेद्वादश्यांनियतःशुचिः ॥ ११ ॥
कृतोपवासोदेवेशंसमभ्यर्च्यजनार्दनम् ॥ स्नातोनारायणंब्रूयाद्भुञ्जन्नारायणंतथा ॥ १२ ॥ गच्छन्नारायणंदेवंस्वपन्नारायणंपुनः ॥
पञ्चगव्यजलस्नातोविशुद्धात्माजितेन्द्रियः ॥ १३ ॥ यवव्रीहिमयंपात्रंदत्त्वाविप्रायभक्तितः ॥ इदमुच्चारयेत्पश्चाद्देवस्यपुरतोहरेः ॥ १४ ॥
सप्तजन्मनियत्किञ्चिन्मयाखण्डव्रतंकृतम् ॥ भगवंस्त्वत्प्रसादेनतदखंडमिहास्तुमे ॥ १५ ॥ यथाखंडंजगत्सर्वंत्वमेवपुरुषोत्तम ॥
तथाखिलान्यखंडानिव्रतानिममसंतुवै॥१६॥चतुर्भिरपिमासैस्तुपारणंप्रथमंस्मृतम्॥प्रीणनंचहरेःकुर्यात्पारितःपारणेततः॥१७॥चैत्रादिषुच
मासेषुचतुर्गुण्यंतुपारणम् ॥ तत्रापिसक्तुपात्राणिदद्याच्छ्रद्धासमन्वितः ॥ १८ ॥ श्रावणादिषुमासेषुकार्तिकांतेषुपारणम् ॥ तत्रापिघृत
पात्राणिदद्याद्विप्रायदक्षिणाः ॥ १९ ॥ सौवर्णंरौप्यंताम्रंचमृन्मयंपात्रमिष्यते ॥ स्वशक्त्यपेक्षयाराजन्पालाशंवापिकारयेत् ॥ २० ॥
एवंसंवत्सरस्यांतेब्राह्मणान्सजितेन्द्रियः ॥ आमंत्र्यद्वादशान्विप्रान्भोजयेद्घृतपायसैः ॥ २१ ॥ वस्त्राभरणदानैश्चप्रणिपत्यक्षमापयेत् ॥

१ उपवासादिना राज्यं प्रापयंत्येव—इ०पा० ।

उपदेष्टारमप्यत्रपूजयेद्विधिवद्गुरुम् ॥ २२ ॥ एवंसम्यग्यथान्याय्यमखंडद्वादशींनरः ॥ समुपोष्यअखंडस्यव्रतस्यफलमश्नुते ॥ २३ ॥
सप्तजन्मसुवैकल्यंयद्व्रतस्यक्वचित्कृतम् ॥ करोत्यविकलंसर्वमखंडद्वादशीतुतत् ॥ २४ ॥ तस्मादेषाप्रयत्नेननरैःस्त्रीभिश्चसुव्रत ॥
अखंडद्वादशीसम्यगुपोष्याफलकांक्षया ॥२५॥ येद्वादशीव्रतमखंडमितिप्रसिद्धंमार्गोत्तमाङ्कमधिकृत्यकृतेनयेन॥खंडव्रतानिपुरुषैःसुकृता
नियानिसंपूर्णतांसमुपयान्तिहरेःप्रसादात् ॥ २६ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेऽखंडद्वादशीव्रतवर्णनंनामै
कोनाशीतितमोऽध्यायः॥७९॥छ॥श्रीकृष्णउवाच॥फाल्गुनेमलपक्षस्यएकादश्यामुपोषितः॥नरोवायदिवानारीसमभ्यर्च्यजगत्पतिम् ॥१॥
हरेर्नामवदन्भक्त्याभावयुक्तोयुधिष्ठिर॥उत्तिष्ठन्प्रस्वपंश्चैवहरिमेवानुकीर्तयेत् ॥२॥ततोन्येद्युर्दिवसंप्राप्तेद्वादश्यांनियतोहरिम्॥स्नात्वासम्यक्स
मभ्यर्च्यदत्वाविप्रायदक्षिणाम्॥३॥हरिमुद्दिश्यचैवाग्नौघृतहोमकृताक्रियः॥प्रणिपत्यजगन्नाथमितिवाणीमुदीरयेत् ॥४॥ पातालसंस्थांवसुधां
यांप्रसाद्यमनोरथान्॥अवापवसुदेवोसौप्रदद्यात्तुमनोरथान्॥५॥यमभ्यर्च्यदिविप्राप्तःसकलांश्चमनोरथान् ॥ अष्टराज्यश्चदेवेंद्रोयमभ्यर्च्यजग
त्पतिम्॥६॥मनोरथानभिनवान्प्राप्तवांश्चमनोहरान् ॥ एवमभ्यर्च्यपूजांचनिष्पाद्यचहरेस्ततः ॥ भुञ्जीतप्रयतःसम्यग्हविष्यंपांडुनंदन॥७॥
फाल्गुनेचैत्रवैशाखेज्येष्ठेमासिचसत्तम ॥ चतुर्भिःपारणंमासैरेभिर्निष्पादितंभवेत् ॥ ८ ॥ रक्तपुष्पैश्चचतुरोमासान्कुर्वीतचार्चनम् ॥
दहेत्तुगुग्गुलुंप्राश्यगोशृंगक्षालनंजलम् ॥ ९ ॥ हविष्यान्नंचनैवेद्यमात्मनश्चापिभोजनम् ॥ ततश्चश्रूयतांपार्थआषाढादौतुयाक्रिया॥१०॥
जातीपुष्पाणिधूपश्चशस्तःसार्जरसोनृप ॥ प्राश्यदर्भोदकंचास्यशाल्यन्नंचनिवेदनम् ॥ ११ ॥ स्वयंतदेवचाश्नीयाच्छेषंपूर्ववदाचरेत् ॥
कार्तिकादिषुमासेषुगोमूत्रंकायशोधनम् ॥ १२ ॥ सुगंधंचेच्छयाधूपंपूजांभृंगारकेनच ॥ कांसारंचात्रनैवेद्यमश्नीयात्तच्चवैस्वयम्॥१३॥
प्रतिमासंचविप्रायदातव्यादक्षिणातथा ॥ पारणंचेच्छयाविष्णोःपारणेपावनेमते ॥ १४ ॥ यथाशक्त्यायथाप्रीत्यावित्तशाठ्यंविवर्जयेत् ॥
सद्भावेनैवगोविंदःपूजितःप्रीयतेयतः॥१५॥पारणांतेयथाशक्त्यास्नापितःपूजितोहरिः॥प्रीणितश्चेप्सितान्कामांस्तान्ददात्यव्ययान्नृप ॥१६॥
वर्षांतेप्रतिमामिष्टांकारयित्वासुशोभनाम्॥स्वर्णकेचयथाशक्त्याशंखशार्ङ्गविभूषिताम् ॥ १७ ॥ पुष्पवस्त्रयुगच्छत्रांब्राह्मणायनिवेदयेत् ॥

द्वादशब्राह्मणांस्तत्रभोजयित्वाक्षमापयेत् ॥१८॥ द्वादशात्रप्रदातव्याःकुंभाःसान्नजलाक्षताः॥छत्रोपानद्युगैःसार्द्धंदक्षिणाभिश्चभारत ॥१९॥
एषापुण्यापापहराद्वादशीफलमिच्छताम्॥ यथाभिलषितान्कामान्ददातिनृपसत्तम ॥ २० ॥ पूरयत्यखिलान्भक्त्यायतश्चैषांमनोरथान् ॥
मनोरथाद्वादशीयंततोलोकेषुविश्रुता ॥२१॥ उपोष्यैतांत्रिभुवनंलब्धमिन्द्रेणवैपुरा ॥ आदित्याश्चेप्सिताःपुत्राधनमौशनसातथा ॥ २२ ॥
धौम्येनाध्ययनंप्राप्तमन्यैश्चाभिमतंफलम् ॥ राजर्षिभिस्तथाविप्रैःस्त्रीविट्शूद्रैश्चभूतले ॥२३॥ यंयंकाममभिध्यायव्रतमेतदुपोषितम् ॥ सत्त
द्राप्नोत्यसंदिग्धंविष्णोराराधनोद्यतः ॥ २४ ॥ अपुत्रोलभतेपुत्रमधनोलभतेधनम् ॥ रोगाभिभूतश्चारोग्यं कन्याप्राप्नोतिसत्पतिम् ॥ २५ ॥
समागमंप्रवसनैरुपोष्यैतामवाप्यते ॥ सर्वान्कामानवाप्नोतिमृतःस्वर्गेचमोदते ॥ २६ ॥ नापुत्रोनाधनोज्येष्ठोवियोगीनचनिर्गुणः ॥ उपोष्यै
तद्व्रतंमर्त्यःस्त्रीशूद्रोवापिजायते ॥२७॥स्वर्गलोकेसहस्राणिवर्षाणामयुतानिच ॥ भोगानभिमतान्भुक्त्वातत्रतत्रयथेच्छया ॥२८॥ इहपुण्य
वतांनृणांधनिनांलघुशालिनाम् ॥ गृहेप्रजायतेराजन्सर्वव्याधिविवर्जितः ॥२९॥ नद्वादशीमुपवसन्तिमनोरथाख्यांनैवार्चयंतिपुरुषोत्तममा
दिदेवम्॥गोब्राह्मणांश्चननमंतिनपूजयंतियेतेमनोभिलषितंकथमाप्नुवंति ॥ ३० ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसं
वादेमनोरथद्वादशीव्रतवर्णनंनामाशीतितमोऽध्यायः ॥ ८० ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ अल्पायासेनभगवन्धने
नाल्पेनवाविभो ॥ पापंप्रशममायातियेनतद्वक्तुमर्हसि ॥ ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ शृणुपार्थपरांपुण्यांद्वादशींपापना
शिनीम् ॥ यामुपोष्यपरंपुण्यमाप्नुयाच्छ्रद्धयान्वितः ॥ २ ॥ माघमासेचसंप्राप्तेआषाढर्क्षेभवेद्यदि ॥ मूलंवाकृष्णपक्षस्यद्वादश्यांनियत
व्रतः ॥ ३ ॥ गृह्णीयात्पुण्यफलदंविधानंतस्यमेशृणु ॥ देवदेवंसमभ्यर्च्यसुस्नातःप्रयतःशुचिः ॥ ४ ॥ कृष्णनाम्नाचसंपूज्यएकाद
श्यांमहामते ॥ उपोषितोद्वितीयेह्निपुनःसंपूज्यकेशवम् ॥ ५ ॥ संस्तूयनाम्नातेनैवकृष्णाख्येनपुनःपुनः ॥ दद्यात्तिलांश्चविप्रायकृष्णोमे
प्रीयतामिति ॥ ६ ॥ ततश्चप्राशयेच्छस्तांस्तथाकृष्णतिलान्नृप ॥ विष्णुप्रीणनमंत्रोक्तिसमाप्तेवर्षपारणे ॥ ७ ॥ कृष्णकुंभांस्तिलैः

१ अलब्धः-इ०पा० । २ कृतेनानेन-इ० पा० । ३ पूज्यं वा-इ०पा०

साद्धंपक्वान्नेनचसंयुतान् ॥ छत्रोपानद्युगैर्वस्त्रैःसहितानन्नगर्भिणः ॥८॥ ब्राह्मणानांप्रदेयास्तेयथावन्माससंख्यया ॥ तिलप्ररोहाज्जायंतेयाव
त्संख्यास्तिलानृप ॥ ९ ॥ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ अरोगोजायतेनित्यंनरोजन्मनिजन्मनि ॥ १० ॥ अंधोनबधिरश्चैवन
कुष्ठीनचकुत्सितः ॥ भवत्येतामुपित्वातुतिलाख्यांद्वादशींनरः ॥ ११ ॥ अनेनपार्थविधिनातिलदातानसंशयः ॥ मुच्यतेपातकैःसर्वैरना
यासेनमानवः ॥ १२ ॥ दानंविधिस्तथाश्राद्धंसर्वपातकशांतये ॥ नार्थःप्रभूतोनायासःशरीरेनृपसत्तम ॥ १३ ॥ सर्वोपभोगनिरतोह्निपरे
दशम्यांस्नानंतिलैस्तिलनिवेदनकृत्तिलाशी ॥ दत्वातिलान्द्विजवरायविराजकेतुंसंपूज्यविष्णुपदवींसमुपैतिमर्त्यः ॥ १४ ॥ इति
श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेउल्कानवमीव्रतवर्णनंनामैकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ छ ॥ ॥ युधिष्ठिर
उवाच ॥ ॥ यन्नतापायवैपुंसांभवत्यामुष्मिकंकृतम् ॥ तदपापायभवतितदाचक्ष्वयदूत्तम ॥ १ ॥ उपवासप्रभावंवैकृष्णाराधन
कांक्षिणाम् ॥ कथयेहमहाबाहोनैवतृप्यामिकथ्यतः ॥ २ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ श्रूयतांपार्थयत्पृष्टाःकौतुकाद्भवतावयम् ॥
आमुष्मिकंनतापायप्रतापायचजायते ॥ ३ ॥ उपोषितप्रभावंचकृष्णाराधनकांक्षिणाम् ॥ कथयामियथावृत्तंपूर्वमेवनरोत्तम ॥ ४ ॥
वैदिशंनामनगरंप्रख्यातंनृपसत्तम ॥ तत्रवैश्योऽभवत्पूर्वंसीरभद्रइतिश्रुतः ॥ ५ ॥ भार्ययामातृदुहितापुत्रपौत्रैःसमन्वितः ॥
प्रभूतभृत्यवर्गश्चबहुव्यापारकारकः ॥ ६ ॥ पुत्रपौत्रादिभरणेव्यासक्तिर्मतिरेवच ॥ परलोकंप्रतिमतिस्तस्यनासीत्कदाचन ॥ ७ ॥
चकारानुदिनंसोऽथन्यायान्यायैर्धनार्जनम् ॥ सर्वत्रान्यत्रनिःस्नेहःपुत्रस्नेहपरिप्लुतः ॥ ८ ॥ नजुहोत्युदितेकालेनददात्यतितृष्णया ॥
बभूवचोद्यमस्तस्यपुत्रादिभरणेपरः ॥ नित्यनैमित्तिकानांचहानिंचक्रेस्वकर्मणा ॥ ९ ॥ तृष्णाभिभूतोराजेन्द्रस्ववर्गभरणोज्झितः ॥
कालेनागच्छतासोऽथमृतोविंध्याटवीतटे ॥ १० ॥ यातनादेहभृत्प्रेतोग्रीष्मकालेभवन्नृप ॥ तंददर्शमहाभागोदिव्ययानसमन्वितः ॥११॥
वेदवेदाङ्गविद्द्वेषीविपीतोनामवैद्विजः ॥ भास्करस्यांशुभिर्दीप्तैर्दहंतमतिदारुणैः ॥ १२ ॥ प्रतप्तवालुकामध्येतृषार्तश्चातिपीडितः ॥ क्षु
त्क्षामकंठंशुष्कास्यंतथोद्वृत्तविलोचनम् ॥१३॥ निष्क्रांताजिह्वमंगेषुविस्फोटैःसर्वतश्चितम् ॥ निश्वासायासखेदेनविह्वलःपीडितोदरः ॥१४॥

निजेनकर्मणाबद्धमसमर्थंप्रसर्पणे ॥ तथादृशमथोदृष्ट्वागदंभेयोमहानृषिः ॥ १५ ॥ विपीतःप्राहराजेन्द्रकारुण्यभरितंवचः ॥ जान
न्नपियथाप्राप्तंतस्यानुष्ठानजंफलम् ॥ १६ ॥ जंतोस्तस्योपकारायसर्वतोह्लादयन्निव ॥ ॥ विपीतउवाच ॥ ॥ अधःसूर्यांशुभिस्त
तैर्बहुभिःपथिपांशुभिः ॥ १७ ॥ उपर्यंकंकरैस्तीक्ष्णैस्तृषावातनिपीडितम् ॥ अन्यस्तत्राणकैर्घोरैरविषह्यैःसुदारुणैः ॥ १८ ॥ कथयेह
यथातत्वमेकाकीदह्यसेकथम् ॥ तस्यैतद्वचनंश्रुत्वाविपीतस्यसवेदनः ॥ १९ ॥ वेदनार्तउवाचेदंकृच्छ्राद्दुच्छ्वस्यमंदकम् ॥सीरभद्रउवाच॥
ब्रह्मन्नालोचितंपूर्वंकथमंतेभविष्यति ॥ २० ॥ अशाश्वतेशाश्वतधीस्तेनदह्यामिदुर्मतिः ॥ इदंकरिष्याम्यपरंत्विदंकृत्वात्विदंपुनः ॥२१॥
इतीच्छाशतमारूढस्तेनदह्यामिदुर्मतिः ॥ शीतोष्णवर्षादिभवंलोभात्सोढंमयाऽशुभम् ॥ २२ ॥ तदेवाहिनधर्मार्थंतेनदह्यामिदुर्मतिः ॥ पि
तृदेवमनुष्याणामदत्त्वायोषिताहिये ॥ २३ ॥ तेगतानापिवर्ततेदह्याम्येकोऽत्रदुर्मतिः ॥ पुत्रक्षेत्रकलत्रेषुममत्वाहृतचेतसा ॥ २४ ॥ बहुसा
धुकृतंकर्मतेनदह्यामिदुर्मतिः ॥ मृतेमयिधनेतस्मिन्नन्यायोपार्जितेसदा ॥ २५ ॥ रूपवंतोऽभिवर्ततेदह्याम्येकोत्रदुर्मतिः ॥ नमयापूजिता
गेहान्निर्गताद्विजसत्तमाः ॥ २६ ॥ स्ववर्गमिहकामेनतेनदह्याम्यहंमतिः ॥ यन्मेनपूजितादेवाःकुटुंबंपोषितंपरम् ॥ २७ ॥ एकाकीतत्रदह्या
मियेसुतास्तेऽन्यतोगताः ॥ नित्यंनैमित्तिकंकर्मपूर्वेषांचैवनोकृतम् ॥ २८ ॥ एकाकीतेनदह्यामिगतास्तेफलभोगिनः ॥ दाराःपुत्राश्च
भृत्याश्चपापशुद्ध्यामयाभृताः ॥ २९ ॥ एकाकीतेनदह्यामिगतास्तेफलभोगिनः ॥ दाराःपुत्राश्चभृत्यार्थेमयान्यायार्थसंचयः ॥ ३० ॥
कृतस्तेनात्रदह्यामियेभुक्तास्तेऽन्यतोगताः ॥ क्षतपापंमयाभुक्तमन्यैस्तत्कर्मसंचितम् ॥ ३१ ॥ दह्याम्येकोऽहमत्यंतंगतास्तेफलभोगिनः ॥
यन्ममत्वाभिभूतेनमयापापमुपार्जितम् ॥ ३२ ॥ नतदन्यस्यकस्यापिकेवलंममदुष्कृतम् ॥ अंतर्दुःखेनदग्धोऽहंबाहिर्दह्यामिभावयन् ॥
॥ ३३ ॥ तावद्दुःखंनवाभंतुपापमेकंद्विधास्थितम् ॥ कुरुतस्मात्समुद्धारंपश्यस्यमृतसागरम् ॥ ३४ ॥ तवयेनाहमाह्लादंप्राप्नुयांमुनि
सत्तम ॥ ॥ विपीतउवाच ॥ ॥ अल्पकालिकउद्धारेतवपश्यामिसंशयम् ॥ ३५ ॥ प्रक्षीणंपापमेतावत्सुवृत्तंचास्तितेपरम् ॥ प्रती
तेदशमेजन्मन्यच्युताराधनेच्छया ॥ ३६ ॥ सुकर्मजयदाभद्रद्वादशींसमुपोषितः ॥ नचतस्याःप्रसादेनपापमत्यन्तदुर्जयम् ॥ ३७ ॥

अल्पैरहोभिःसंक्षीणमामपात्रेयथाजलम् ॥ गतंपापमयंह्यस्याःप्रभावोऽत्यन्तदुर्लभः ॥ ३८॥ नाशःपापस्यकुरुतेजयंसुकृतकर्मणः ॥ सक्रृत्कर्मप्रदाह्येषाततोवैद्वादशीस्मृता ॥ ३९ ॥ यथैतद्वदतातेनभवतापरिदेवितम् ॥ तमुवाचात्रसंदेहोममतापायदेवकिम् ॥ ४० ॥ पापमत्रकृतंप्रेत्यभद्रतापायजायते ॥ आह्लादायतथापुण्यमिहपुण्यकृतांनृणाम् ॥ ४१ ॥ सौरभद्रंसमाश्वास्ययययावित्थंमहामुनिः ॥ सोप्यल्पेनैवकालेनततोमोक्षमवाप्तवान् ॥ ४२ ॥ उपवासप्रभावश्चकथितस्तेनरोत्तम ॥ येनाल्पैरेवदिवसैर्भूरिपापंक्षयंगतम् ॥ ४३ ॥ तस्मान्नरेणपुण्याययतितव्यंनपातकम् ॥ उपवासाश्चकर्तव्याःसदैवात्माहितैषिणा ॥ ४४ ॥ युधिष्ठिरउवाच ॥ अथैतत्कष्टपापानां विपाकोनरकस्थितैः ॥ पुरुषैर्भुज्यतेशश्वत्तन्मोक्षंवदसत्तम ॥ ४५ ॥ श्रीकृष्णउवाच ॥ जयासमेताःपुरुषाःसदासुकृतकर्मणः ॥ जयासाद्वादशीशस्तानृणांसुकृतकर्मणाम् ॥ ४६ ॥ फाल्गुनामलपक्षस्यएकादश्यामुपोषितः ॥ द्वादश्यांतुद्विजश्रेष्ठपूजयेन्मधुसूदनम् ॥४७॥ एकादश्यांसमुत्तिष्ठन्विष्णोर्नामानुकीर्तयन् ॥ पूजायांवासुदेवस्यभुञ्जीतसुसमाहितः ॥४८॥ कामंक्रोधंचलोभंचमदंमोहंचवर्जयेत् ॥द्रोहादीन्वर्जयेद्दोषान्सर्वान्धनमदोद्भवान्॥४९॥भावयेद्विष्णुभक्तश्चसंसारेऽसारतांतथा॥एवंभावितचित्तेनप्राणिनांहितमिच्छता॥५०॥ नमोनारायणायेतिवक्तव्यंस्वपतानिशि॥तथैवकुर्याद्द्वादश्यांनाम्नाक्षुत्पारणंनृप॥५१॥सौवर्णताम्रपात्राणिमृन्मयान्यपिपांडव ॥यवपात्राणिपूर्वेतुदद्यान्मासचतुष्टयम्॥५२॥आषाढादिद्वितीयंतुपारयेच्चमहामते॥तत्रापिघृतपात्राणिदद्याच्छ्रद्धासमन्वितः॥५३॥कार्तिकादिषुमासेषुमाषांतेषुतथातिलान्॥विप्रायदद्यात्पात्रंतुप्रतिमाससमुपोषितः॥५४॥नामत्रयमशेषेणमासिमासिदिनद्वयम्॥ तथैवोच्चारयन्दद्यान्मासिमासियथाविकम्॥प्रणम्यचहृषीकेशंकृतपूजःप्रसादयेत्॥५५॥विष्णोनमस्तेजगतीप्रसूतेश्रीवासुदेवायनमोनमस्ते॥ नारायणास्यंप्रणतैर्विचिंत्यंकरोतुमेशाश्वतपुण्यराशिम् ॥ ५६ ॥ प्रसीदपुण्यंजयमेतिविष्णोश्रीवासुदेवर्द्धिमुपैतुपुण्यम् ॥ प्रयातुवाशेषमथोविनाशंमातेऽङ्घ्रिपद्मादितरत्रमेमतिः ॥ ५७ ॥ विष्णोपुण्योद्भवोमेस्तुवासुदेवास्तुमेशुभम् ॥ नारायणास्तुमेधर्मोजहिपापमशेषतः ॥ ५८ ॥ अनेकजन्मजनितंबाल्ययौवनवार्द्धके ॥ पुण्यंविवृद्धिमायातुयातुपापंचसंक्षयम् ॥ ५९ ॥ आकाशादिषुशब्दादौश्रोत्रादौमहदादिषु ॥ प्रकृतौपुरुषेचैवब्रह्मण्यपिचस

प्रभुः ॥ ६० ॥ यथैकएवधर्मात्मावासुदेवोऽव्यवस्थितः ॥ तेनसत्येनपापंमेनरकार्तिप्रदंक्षयम् ॥ ६१ ॥ प्रयातुसुकृतस्यास्तुममानुदिवस
क्षयः ॥ पापस्यहानिःपुण्यस्यवृद्धिर्मेस्तूत्तमोत्तमा ॥ ६२ ॥ एवमुच्चार्यविप्रायदद्याद्यत्कथितंतव ॥ भुञ्जीतकृतकृत्यस्तुपारणेपारणेगते
॥ ६३ ॥ पारणांतेतुदेवेशप्रीणनंशक्तितोनृप ॥ कुर्वीताखिलपाखंडैरालापंचविवर्जयेत् ॥ ६४ ॥ एवंसंवत्सरस्यांतेकांचनींप्रतिमांहरेः ॥
पूजयित्वावस्त्रपुष्पैर्घृतपात्रेणसंयुतैः ॥ ६५ ॥ गांसवत्सांचविप्रायदद्याच्छ्रद्धासमन्वितः ॥ विलंबितंचयत्पूर्वंदेवानन्यान्भजेद्यदि ॥ ६६ ॥
तस्मिन्नहनिदातव्यंभोजनंचानिवारितम् ॥ इत्येषाकथितापुण्यासुकृतस्यजयावहा ॥ ६७ ॥ द्वादशीनरकंपार्थयामुपोष्यनपश्यति ॥
नाग्नयोनचशस्त्राणिनचलोहमुखाःखगाः ॥ ६८ ॥ नारकास्तंप्रबाधन्तेमतिर्यस्यजनार्दने ॥ नामोच्चारणमात्रेणविष्णोःक्षीणाघसंचयः ॥६९॥
भवत्यघविनाशश्चनरकेपतनंकुतः ॥ नमोनारायणहरेवासुदेवेतिकीर्तयन् ॥ ७० ॥ नयातिनरकंमर्त्यःसंक्षीणाशेषपातकः ॥ तस्मात्पा
खंडिसंसर्गमकुर्वन्द्वादशीमिमाम् ॥ ७१ ॥ उपोष्यपुण्योपचयेनयातिनरकंनरः ॥ ७२ ॥ पापंक्षिणोतिसुकृतस्यकरोतिवृद्धिंवृद्धिंप्रयच्छ
तिनियच्छतिसर्वदोषान् ॥ यद्वादशीहसुकृतातिहिताचलोकेकस्मान्नतामुपवसंतिविमूढचित्ताः ॥७३॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्व
णिश्रीकृष्णयुधिष्ठिरसंवादेसुकृतद्वादशीव्रतवर्णनंनामद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ यदेतत्परमंगुह्यंस
र्ववेदेषुपठ्यते ॥ सदेवःपुण्डरीकाक्षःस्वयंनारायणोहरिः ॥ १ ॥ सयज्ञैर्विविधैरिष्टैर्व्रतैश्चयदुसत्तम ॥ प्राप्यतेपरमोदेवःसनातनकथं
चन ॥ २ ॥ बहुवित्तेनभगवानृत्विग्भिर्वेदपारगैः ॥ प्राप्यन्तेसुसहायैश्चक्वचित्त्यक्ताःसुदुष्कराः ॥ ३ ॥ वित्तेनचविनादानंदातुंकृष्णन
शक्यते ॥ विद्यमानेऽपिनमतिःकुटुंबासक्तचेतसः ॥ ४ ॥ तस्यामोक्षःकथंकृष्णसर्वथादुर्लभोहरिः ॥ अल्पायासेनलभतेयेनदेवः
सनातनः ॥ ५ ॥ तन्मेसामान्यतोब्रूहिसर्ववर्णेषुयद्भवेत् ॥ ॥ श्रीकृष्णउवाच ॥ कथयामिपरंगुह्यंरहस्यंदेवनिर्मितम् ॥ ६ ॥
धरण्यायत्कृतंपूर्वंमज्जन्त्यावसुधातले ॥ पृथिव्यांपार्थिवभवेत्सलिलेनातिवाहितः ॥ ७ ॥ तस्मिन्सलिलसंलग्नेमहीप्रायाद्रसात
लम् ॥ साभूतधात्रीधरणीरसातलगताशुभा ॥ ८ ॥ आराधयामासविभुंदेवंनारायणंपरम् ॥ उपवासव्रतैर्देवीनियमैश्चपृथग्विधैः ॥ ९ ॥

कालेनमहतातस्याःप्रसन्नोगरुडध्वजः ॥ उज्जहारस्थितौचेमांस्थापयामासवाच्युतः ॥ १० ॥ प्राप्तेमार्गशिरेमासेदशम्यांनि
यतात्मवान् ॥ स्नात्वादेवार्चनंकृत्वाअग्निकार्यंयथाविधि ॥ ११ ॥ शुचिवासाःप्रसन्नात्माह्यत्यल्पान्नंसुसंस्कृतम् ॥ भुक्त्वापं
चपदंकृत्वापुनःशौचंचपादयोः ॥ १२ ॥ कृत्वाष्टाङ्गुलमात्रंतुक्षीरवृक्षसमुद्भवम् ॥ भक्षयेद्दंतकाष्ठंतुततश्चाचम्ययत्नतः ॥ १३ ॥
स्पृष्ट्वान्यासानिकर्माणिचिरंध्यात्वाजनार्दनम् ॥ शंखचक्रगदापाणिंपीताम्बरसमावृतम् ॥ १४ ॥ एवमुच्चारयेद्वाचंतस्मिन्कालेमहाद्युते ॥
एकादश्यांनिराहारःस्थित्वाहमपरेहनि ॥ १५ ॥ भोक्ष्येहंपुण्डरीकाक्षशरणंमेभवाच्युत ॥ एवमुक्त्वाततोदेवदेवदेवस्यसन्निधौ ॥ १६ ॥
जपेन्नारायणायेतिरूपेतत्रविधानतः ॥ ततःप्रभातेविमलेनदींगत्वासमुद्रगाम् ॥ १७ ॥ इतरांवातडागंवागृहेवानियतात्मवान् ॥
आनीयमृत्तिकांशुद्धांमंत्रेणानेनमानवः ॥ १८ ॥ धारणंपोषणंत्वत्तोभूतानांदेविसर्वदा ॥ तेनसत्वेनमांपाहिपापान्मोचयसुव्रते ॥ १९ ॥
॥ मृत्तिकामंत्रः ॥ ॥ ब्रह्माण्डोदरतीर्थानिकरैःस्पृष्टानितेरवे ॥ भवंतिभूतानिसतांमृत्तिकामालभेत्पुनः ॥ २० ॥ आदित्यदर्शनमन्त्रः ॥
एवंमृदंरवेरग्रेकृत्वाथात्मानमालभेत् ॥ त्रिःकृत्वाशेषमृदयाकुंडमालिख्यवैजले ॥ २१ ॥ ततःस्नात्वानरःसम्यक्चक्रवर्त्युपचारकः ॥
आचम्यावश्यकंकृत्वापुनर्देवगृहंव्रजेत् ॥ २२ ॥ तमाराध्यमहायोगंदेवंनारायणंप्रभुम् ॥ केशवायनमःपादौकटिंदामोदरायच ॥ २३ ॥
ऊरुयुग्मंनृसिंहायउरःश्रीवत्सधारिणे ॥ कंठंकौस्तुभनाथायवक्षःश्रीपतयेतथा ॥ २४ ॥ त्रैलोक्यविजयायेतिबाहूसर्वात्मनेशिरः ॥
रथाङ्गधारिणेचक्रंशंकरायेतिचांबुजम् ॥ २५ ॥ गंभीरायेतिचगदामभयंशांतमूर्तये ॥ एवमभ्यर्च्यदेवेशंदेवंनारायणंप्रभुम् ॥
॥ २६ ॥ पुनस्तस्याग्रतःकुंभांश्चतुरःस्थापयेद्बुधः ॥ जलपूर्णान्समाल्यांश्चसितचन्दनचर्चितान् ॥ २७ ॥ चतुर्भिस्तिलपात्रैश्चस्थ
गिताग्रत्नसंयुतान् ॥ चत्वारस्तेसमुद्रास्तुकलशाःपरिकीर्तिताः ॥ २८ ॥ तेषांमध्येतुसंपीठंस्थापयेद्वस्त्रसंवृतम् ॥ तस्मिन्सौ
वर्णंरौप्यंवाताम्रंवादारवंतथा ॥ २९ ॥ पात्रंतोयभृतंकृत्वातस्यमध्येततोन्यसेत् ॥ सौवर्णमात्स्यरूपेणकृत्वादेवंजनार्दनम् ॥ ३० ॥
वेदवेदाङ्गसंयुक्तंश्रुतिस्मृतिविभूषितम् ॥ भक्ष्यैर्बहुविधैराजन्फलैःपुष्पैश्चशोभितम् ॥ ३१ ॥ गंधैर्धूपैर्मंत्रवरैरर्चयित्वायथाविधि ॥

रसातलगतावेदायथादेवत्वयाहृताः ॥ ३२ ॥ मत्स्यरूपेणतद्वन्मांभवादुद्धरकेशव ॥ एवमुच्चार्यतस्याग्रेजागरंतत्रकारयेत् ॥ ३३ ॥
यथाविभवसारेणप्रभातेऽपिपुनःपुनः ॥ चतुर्णांब्राह्मणानांतुचतुरोदापयेद्घटान् ॥ ३४ ॥ पूर्वंतुबह्वृचेदद्याच्छंदोगेदक्षिणंतथा ॥
यजुःशाखान्वितेदद्यात्पश्चिमंघटमुत्तमम् ॥ ३५ ॥ उत्तरंकामतोदद्यादेशएवविधिक्रमात् ॥ ऋग्वेदःप्रीयतांपूर्वंसामवेदश्चदक्षिणः ॥ ३६ ॥
यजुषःपश्चिमोनाम्नाआथर्वायोत्तरंतथा ॥ पूर्णपात्रैस्तुसतिलैःस्थगितान्कारयेद्घटान् ॥ ३७ ॥ ततस्तंजलपात्रस्थंब्राह्मणायकुटुंबिने ॥
दद्याद्देवंमहाभागततःपश्चात्तुभोजयेत् ॥ ३८ ॥ ब्राह्मणान्पायसान्नेनततःपश्चात्स्वयंगृही ॥ भुञ्जीतभृत्यसहितोवाग्यतःसंयतेन्द्रियः ॥३९॥
अनेनविधिनायस्तुद्वादशींक्षपयेन्नरः ॥ तस्यपुण्यफलंराजञ्छृणुसत्यवतांवर ॥ ४० ॥ यदिवक्त्रसहस्राणिभवंतिहियुगेयुगे ॥
आयुश्चब्रह्मणस्तुल्यंभवेद्यदिमहामते ॥ ४१ ॥ तदस्यफलसंख्यानंकर्तुंशक्यंनधारयेत् ॥ यःकृष्णद्वादशीमेतामनेनविधिनानृप ॥ ४२ ॥
करोतिब्रह्मलोकंससमाप्नोतिनसंशयः ॥ ब्रह्महत्यादिपापानिजन्मांतरकृतान्यपि ॥ ४३ ॥ अकामतःकामतोवाप्रणश्यंतिनसंशयः ॥
तथैवपुष्यमासेनअमृतंमथितंसुरैः ॥ ४४ ॥ तत्रकूर्मोभवद्देवःस्वयमेवजनार्दनः ॥ तस्येयंतिथिरुद्दिष्टाहरेर्वैकूर्मरूपिणः ॥ ४५ ॥ पुष्यमासं
समासाद्यद्वादशींशुक्लसंयुताम् ॥ तस्यांप्राग्वत्तुसंकल्पःप्रातःस्नानादिकाःक्रियाः ॥ ४६ ॥ निर्वर्त्याधारयेद्रात्र्यामेकादश्यांजनार्दनम् ॥
प्रीयमंत्रैर्नृपश्रेष्ठदेवदेवंजगद्गुरुम् ॥ ४७ ॥ कूर्मायपादौप्रथमंसुपूज्यनारायणायेतिकटिंहरेस्तु ॥ सङ्कर्षणायेत्युदरंविशोधेत्पुरोभवायेतिचकं
ठपीठम् ॥ ४८ ॥ सुबाहवेत्येवभुजौशिरश्चसवात्मनेपांडवपूजनीयौ ॥ स्वनाममंत्रेणचशंखचक्रेगदांनमस्कारपरेणचैव ॥ ४९ ॥ मंत्रैरिमैः
पुष्पसुगन्धधूपैर्नैवेद्यदीपैर्विविधैःफलैश्च ॥ अभ्यर्च्यदेवंकलशंतदग्रेसंस्थापयेन्माल्यविलेपनाद्यम् ॥ ५० ॥ तंरत्नगर्भंसुसुगंधतोयंकृत्वात
तोहेममयंस्वशक्त्या ॥ समंदरंकूर्मतनुंसुरेशंसंस्थापयेच्चात्रशुभेचपात्रे ॥५१॥ घृतस्यपूर्णंकलशाग्रसंस्थंसंपूजयेज्जागरनृत्यगीतैः ॥ संपूज्य
विप्रान्घृतपायसेननिवेद्यपूर्वंद्विजपुङ्गवाय ॥ ५२ ॥ निर्वर्त्यसर्वंविधिवत्ततश्चभुञ्जीतसंतुष्टमनाःसभृत्यः ॥ एवंकृतेकल्पयुगांतराणिस्वर्गेव
सेत्सर्वसमृद्धकामः॥५३॥संसारचक्रंसविधायशीघ्रमाप्नोतिलोकेतुहरेःपुराणे॥प्रयांतिपापानिविनाशमाशुश्रियायुतोजायतिसत्यधर्मः॥५४॥

अनेकजन्मार्जितसंयुतानिनश्यंतिपापानिनरस्यभक्त्या ॥ प्रागुक्तरूपंचफलंलभेत्सनारायणंवस्तुमुपैतिसद्यः ॥ ५५ ॥ एवंमाघे
सितेपक्षेद्वादशींधरणीधर ॥ वराहस्यशृणुष्वान्यांराजन्परमधार्मिक ॥ ५६ ॥ प्रागुक्तेनविधानेनस्नानंसंकल्पमेवच ॥ कृत्वादेवंसमभ्य
र्च्यएकादश्यांसमाहितः ॥ ५७ ॥ धूपनैवेद्यगंधैस्तुअर्चयित्वायुतंनरः ॥ पश्चात्तस्याग्रतःकुंभंजलपूर्णंतुविन्यसेत् ॥ ५८ ॥ वराहायेतिपा
दौतुमाधवायेतिवैकटिम् ॥ क्षेत्रज्ञायेतिजठरंविश्वरूपेत्युरोहरेः ॥५९॥ पूर्वत्रायेतिकंठंतुप्रजानांपतयेशिरः ॥ प्रद्युम्नायेतिचभुजौदिव्यास्त्रा
यसुदर्शनम् ॥ ६० ॥ अमृतोद्भवायशंखंतुगदिनेचगदांतथा ॥ एवमभ्यर्च्यमेधावीतस्मिन्कुंभेऽपिविन्यसेत् ॥ ६१ ॥ सौवर्णंरूप्यताम्रंवा
पात्रंविभवशक्तितः ॥ सर्वबीजैस्तुसंपूर्णंस्थापयित्वाविचक्षणः ॥ ६२ ॥ तत्रशक्त्याचसौवर्णंवाराहंकारयेत्ततः ॥ दंष्ट्राग्रेणोद्धरन्पृथ्वींसपर्व
तवनद्रुमाम् ॥ ६३ ॥ माधवंमधुहंतारंवाराहंरूपमास्थितम् ॥ सर्वबीजभृतैःपात्रैरत्नगर्भघटोपरि ॥ ६४ ॥ स्थापयेत्परमंदेवंजातरूपमयं
हरिम् ॥ सितवस्त्रयुगच्छन्नंताम्राभावेतुवैणवे ॥ ६५ ॥ स्थाप्यार्चयेद्गन्धपुष्पैर्नैवेद्यैर्विविधैःफलैः ॥ पुष्पमंडपिकांकृत्वाजागरंतत्रकारयेत्
॥ ६६ ॥ प्रादुर्भावंहरेर्दिव्यंवाचयेद्वोपयेद्बुधः ॥ एवंसनियमस्यास्यप्रभातेउदितेरवौ ॥ ६७ ॥ वेदवेदाङ्गविदुषेसाधुवृत्तायधीमते ॥
विष्णुभक्तायराजेन्द्रविशेषेणप्रदापयेत् ॥ ६८ ॥ एवंसकुंभंदत्त्वाचहरिंवाराहरूपिणम् ॥ ब्राह्मणायभवेद्यद्दत्फलंतन्मेनिशामय ॥ ६९ ॥
इहजन्मनिसौभाग्यंश्रीःकांतिःपुष्टिरेवच ॥ प्राप्नोतिपुरुषोराजन्यद्यदिच्छतिकिंचन ॥ ७० ॥ एकाऽपिविधिनोपास्तादददात्यमृतमुत्तमम् ॥
किंपुनर्वर्षमेकंचकरोतिकुरुनंदन ॥ ७१ ॥ एतच्चफाल्गुनेमासिशुक्लपक्षेतुद्वादशी ॥ उपोष्यापूर्वविधिनाहरिमाराधयेत्सुधीः ॥ ७२ ॥
नरसिंहायपादौतुगोविंदायोदरंतथा ॥ कटिंविश्वसृजेपूज्यअनिरुद्धेत्युरोहरेः ॥ ७३ ॥ कंठंतुशितिकंठायवैनतेयायवैशिरः ॥ असु
रध्वंसनायेतिवक्रंतोयात्मनेनमः ॥ ७४ ॥ शंखमित्येवसंपूज्यगंधपुष्पैःफलैस्तथा ॥ तदग्रेतुघटंस्थाप्यसितवस्त्रयुगान्वितम् ॥ ७५ ॥
तस्योपरिनृसिंहंतुसौवर्णंताम्रभाजने ॥ हैमेचशक्तितःकृत्वादारुवंशमयेऽपिवा ॥ ७६ ॥ रत्नगर्भमयेस्थाप्यभक्त्यासंपूज्यमानवः ॥ द्वा
दश्यांवेदविदुषेब्राह्मणायनिवेदयेत् ॥ ७७ ॥ एषावंध्यापापहराद्वादशीभवतेमया ॥ कथिताचप्रयत्नेनश्रुताचभवतोप्सिता ॥ ७८ ॥

एवमेषानरव्याघ्रचैत्रेसंकल्प्यद्वादशी ॥ उपोष्याराधयेत्पश्चाद्देवदेवंजनार्दनम् ॥ ७९ ॥ कुंडिकांस्थापयेत्पार्श्वेछात्रिकांपादुकेतथा ॥
अमलंवामनंस्थाप्यबृसीकांसपरिच्छदाम् ॥८०॥ फलैःपुष्पैःसुगंधैश्चप्रभातेसद्विजातये ॥ दापयेत्प्रीयतांविष्णुर्ह्रस्वरूपीत्युदीरयेत्॥८१॥
मासनाम्नात्रसंयुक्तंप्रादुर्भावंविधानतः ॥ प्रीयतामितिसर्वत्रविधिरेवंप्रकीर्तितः ॥ ८२ ॥ अपुत्रोलभतेपुत्रमधनोधनमाप्नुयात् ॥ भ्रष्टराज्यो
लभेद्राज्यंमृतोविष्णुपुरंव्रजेत् ॥ ८३ ॥ क्रीडित्वासुचिरंकालमिहमर्त्यमुपागतः ॥ चक्रवर्तीभवेद्धीमान्ययातिरितिनाहुषः ॥ ८४ ॥
वैशाखेऽप्येवमेवंतुसंकल्प्यविधिवन्नरः ॥ तद्वत्स्नानंमृदातद्वत्ततोदेवालयंव्रजेत् ॥ ८५ ॥ तत्राराध्यहरिंभक्त्याएभिर्मन्त्रैर्विचक्षणः ॥ जामद
ग्न्यायपादौतुउदरंसर्वधारिणे ॥ ८६ ॥ मधुसूदनायेतिकटिमुरःश्रीवत्सधारिणे ॥ क्षत्रांतकायचभुजौमणिकंठायकंठकम् ॥ ८७ ॥
पूजयेन्नियतोभूत्वासुरूपायेतिवैमुखम् ॥ स्वनाम्नाशंखचक्रेचशिरोब्रह्मांडधारिणे ॥ ८८ ॥ एवमभ्यर्च्यमेधावीप्राग्वंशस्याग्रतोघटम् ॥
विन्यसेत्पुष्पवस्त्राढ्यंसितचन्दनचर्चितम् ॥ ८९ ॥ वैणवेऽभिनवेपात्रेस्थापयेन्मधुसूदनम् ॥ जामदग्न्येनरूपेणकृत्वासौवर्णमग्रतः ॥९०॥
दक्षिणेपरशुंहस्तेतस्यदेवस्यकारयेत् ॥ सर्वगंधैस्तुसंपूज्यपुष्पैर्नानाविधैःशुभैः ॥ ९१ ॥ ततस्तस्याग्रतःकुर्याज्जागरंभक्तिमान्नरः ॥ प्रभा
तेविमलेसूर्येब्राह्मणायनिवेदयेत् ॥ ९२ ॥ एवंनियमयुक्तस्ययत्फलंतन्निबोधमे ॥ काश्यपेब्रह्मणोलोकेवासित्वाप्सरसांगणैः ॥ ९३ ॥
स्थित्वाभौत्यंचसृष्टौचचक्रवर्तीभवेद्ध्रुवम् ॥ ज्येष्ठमासेऽप्येवमेवसंकल्प्यविधिवन्नरः ॥ ९४ ॥ अर्चयेत्परमंदेवंपुष्पैर्नानाविधैःशुभैः ॥
नमोदामोदरायेतिपादौपूर्वंसमर्चयेत् ॥ ९५ ॥ त्रिविक्रमायेतिकटिंधृतविश्वायचोदरम् ॥ उरःसंवर्तकायेतिकंठंसंवत्सरायच ॥ ९६ ॥
सर्वासुधारिणेबाहुंस्वनाम्नाब्जरथांगकौ ॥ सहस्रशिरसेऽभ्यर्च्यशिरस्तस्यमहात्मनः ॥ ९७ ॥ एवमभ्यर्च्यविधिवत्प्रागुक्तंविधिवन्न्यसेत् ॥
प्राग्वद्वस्त्रसुगंधस्थसुवर्णौरामलक्ष्मणौ ॥ ९८ ॥ अर्चयित्वाविधानेनप्रभातेब्राह्मणायतौ ॥ दातव्यौमनसाकाममहितापुरुषेणतु ॥ ९९ ॥
अपुत्रेणपुरापृष्टोराज्ञादशरथेनतु ॥ पुत्रकामेनवदतावसिष्ठःपरमार्चितः ॥ १०० ॥ इदमेवविधानंतुकथयामासवौद्विजः ॥
सरहस्यंविदित्वात्रसराजाकृतवानिदम् ॥१०१॥ तस्यपुत्रःस्वयंजज्ञेरामोनाममहाबलः ॥ चतुर्द्धासोऽव्ययोविष्णुःपरितोषादजायत॥१०२॥

एतदेवंमयाख्यातंपरलोकेसुखप्रदम् ॥ १०३ ॥ श्रीकृष्णउवाच ॥ आषाढेऽप्येवमेवंतुसंकल्प्यविधिनापरः ॥ अर्चयेत्परमंदेवंगंधपुष्पैः
समाहितः ॥ १०४ ॥ वासुदेवायपादौतुकटिंसंकर्षणायच ॥ प्रद्युम्नायेतिजठरमनिरुद्धायवैनमः ॥ १०५ ॥ चक्रपाणिंभुजौकंठंमुखं
भूपतयेतथा ॥ स्वनाम्नाशंखचक्रेतुपुरुषायेतिवैशिरः ॥ १०६ ॥ एवमभ्यर्च्यमेधावीप्राग्वत्तस्याग्रतोघटम् ॥ विन्यस्यवस्त्रसंयुक्तंतस्योप
रिततोन्यसेत् ॥१०७॥ कांचनंवासुदेवेतिचक्रबाहुंसनातनम् ॥ तमभ्यर्च्यविधानेनगंधपुष्पादिभिःक्रमात् ॥ १०८ ॥ प्राग्वृत्तंब्राह्मणेदद्या
द्देवादिनिसुव्रते ॥ एषाह्युपोषिताराजन्विद्यांविप्रेप्रयच्छति ॥ १०९ ॥ राज्यंचभ्रष्टराज्यानामपुत्राणांसुतान्बहून् ॥ मृतोविष्णुपुरेरम्ये
क्रीडतेकालमक्षयम् ॥ ११० ॥ मन्वंतराणिषट्त्रिंशत्ततःकालात्ययेपुनः ॥ इहलोकेभवेद्राजासप्तजन्मनिमानवाः ॥ १११ ॥ दाताथ
शक्षमायुक्तस्ततोनिर्वाणमाप्नुयात् ॥ श्रीकृष्णउवाच ॥ एवमेवंश्रावणेतुमासिसंकल्प्यद्वादशीम् ॥ ११२ ॥ अर्चयेत्परमंदेवंगंधपुष्पनिवे
दनैः ॥ बुधायपादौसंपूज्यश्रीधरायेतिवैकटिम् ॥११३॥ पद्मोद्भवायजठरमुरःसंवत्सरायच ॥ सुग्रीवायेतिवैकंठंभुजौवैचित्रबाहवे ॥११४॥
प्राग्वदस्त्राणिसंपूज्यब्राह्मणायनिवेदयेत् ॥ अनेनविधिनासर्वद्वादशींसमुपोषितः ॥ ११५ ॥ शुद्धोदनेनतस्याभूत्स्वयंपुत्रोजनार्दनः ॥ महतीं
चश्रियंप्राप्यपुत्रपौत्रसमन्वितः ॥ ११६ ॥ भुक्त्वाराज्यश्रियंसोथगतःपरमिकांगतिम् ॥ एषतेविधिरुद्दिष्टःश्रावणेमासिसत्तम ॥ ११७ ॥
एकैकोपोषिताप्यस्तुराज्यमेकैवयच्छति ॥ किंपुनर्द्वादशैवात्रदद्युरैंद्रंमहत्पदम् ॥ ११८ ॥ तद्वद्भाद्रपदेमासिशुक्लपक्षेतुद्वादशीम् ॥ सं
कल्प्यविधिनादेवमर्चयेत्परमेश्वरम् ॥११९॥ नमोऽस्तुकल्किनेपादौहृषीकेशायवैकटिम्॥म्लेच्छप्रध्वंसनायेतिजगन्मूर्तेतथोदरम्॥१२०॥
शितिकंठायकंठंतुखड्गपाणीतिवैभुजौ ॥ शंखचक्रेस्वनाम्नात्रविश्वमूर्तेतथासितः ॥ १२१ ॥ एवमभ्यर्च्यमेधावीप्राग्वत्तस्याग्रतोघटम् ॥
विन्यस्यकल्किनंदेवंसौवर्णंतत्रकारयेत् ॥१२२॥ सितवस्त्रयुगच्छन्नंगंधपुष्पोपशोभितम्॥ कृत्वाप्रभातेविप्रायप्रदेयःशास्त्रवित्तमे॥१२३॥
एवंकृतेभवेद्यत्तुतान्निबोधनृपोत्तम ॥ दशावतारदानेनपूजनेचैवतत्फलम् ॥ १२४ ॥ पूज्यतेमत्स्यरूपेणसर्वज्ञत्वमभीप्सुभिः ॥ स्ववंश
भरणायाथकूर्मरूपीतुपूज्यते ॥ १२५ ॥ भवोदधिनिमग्नैस्तुवाराहःपूज्यतेहरिः ॥ नृसिंहनवरूपेणतद्वत्पापभयान्नरः ॥ १२६ ॥

वामनंमोहनाशायवित्तार्थेजमदग्निजम् ॥ क्रूरशत्रुविनाशायजपेद्दाशरथिंबुधः ॥ १२७ ॥ बलकृष्णौजपेद्धीमान्पुत्रकामोनसंशयः॥रूपका
मोजपेद्बुद्धंकल्किनंशत्रुघातने ॥ १२८ ॥ सर्वांदत्त्वाविधानेनपूजांप्राप्नोतिवांछितम् ॥ ॥ श्रीकृष्णउवाच ॥ तद्वदाश्वयुजेमासिशुक्लपक्षे
तुद्वादशीम्॥१२९॥संकल्प्याभ्यर्चयेद्देवंपद्मनाभंसनातनम्॥पद्मनाभायपादौतुकटिंवैपद्मयोनये॥१३०॥उदरंसर्वदेवायपुष्कराक्षायवैउरः ॥
अव्ययायतथाशीर्षंप्राग्वदस्त्राणिपूजयेत्॥१३१॥ततस्तस्याग्रतःकुंभंमाल्यवस्त्रसमन्वितम् ॥ यथाशक्त्याकाञ्चनेनपद्मनाभेतिभूषितम् ॥
॥१३२॥रात्रौतुजागरंकृत्वाप्रभातेविमलेततः॥ब्राह्मणेतत्प्रदातव्यंसंसारभयभीरुणा ॥१३३॥ एवंकृतेतुयत्पुण्यंतद्वक्तुंशक्यतेकथम्॥ब्रह्मह
त्यादिपापानिकिंतुपंचैवभारत ॥१३४॥ नश्यंतिकृतपुण्यस्यविष्णोर्नामानुकीर्तनात् ॥श्रीकृष्णउवाच॥ शृणुराजन्महाबाहोकार्तिकेमासि
द्वादशीम्॥१३५॥उपोष्यविधिनायेनयथास्याःप्राप्यतेफलम् ॥ प्राग्विधानेनसंकल्प्यवासुदेवंप्रपूजयेत्॥१३६॥अनुलोमेनदेवेशंपूजयित्वा
विचक्षणः॥नमोदामोदरायेतिसर्वाङ्गंपूजयेद्धरिम्॥१३७॥एवंसंपूज्यविधिनातस्याश्चचतुरोघटान्॥स्थापयेद्रत्नगर्भांश्चसितचन्दनचर्चितान्
॥१३८॥स्रग्दामालंबितग्रीवान्सितवस्त्रैश्चगुंठितान्॥स्थगितांस्ताम्रपात्रैस्तुतिलपूर्णैःसकांचनैः॥१३९॥चत्वारःसागरास्तेचकथिताराजसत्तम॥
तन्मध्येप्राग्विधानेनसौवर्णंस्थापयेद्धरिम् ॥१४०॥ योगेश्वरमङ्गनिर्धिविरक्तंपीतवाससम् ॥ तद्वद्देवंचसंपूज्यजागरंतत्रकारयेत् ॥ १४१ ॥
कृत्वातुवैष्णवंयोगंजपेद्योगेश्वरंहरिम् ॥ षोडशैर्वरथांगेषुरजोभिर्बहुभिःकृते ॥ १४२ ॥ एवंकृत्वाप्रभातेतुब्राह्मणान्पञ्चभोजयेत् ॥ चत्वा
रःकलशादेयाश्चतुर्णांपञ्चमस्यहि ॥ १४३ ॥ योगेश्वरंचसौवर्णंदापयेत्प्रयतःशुचिः ॥ ब्राह्मणायसमंदत्तंद्विगुणंवेदवादिने ॥ १४४ ॥
वेदवेदांगविदुषेसहस्रगुणितंभवेत् ॥ पंचमस्यरहस्यंतुससमंचोपपादयेत् ॥ १४५ ॥ विधानंतस्यपंचैवदत्वाकोटिगुणोत्तरान् ॥ इतिहास
पुराणज्ञेदत्तंचैवाक्षयंभवेत् ॥ १४६ ॥ पञ्चदत्त्वाविधानेनद्वादश्यांविष्णुमर्च्यच ॥ विप्राणांभोजनंदद्याद्यथाशक्त्यासदक्षिणम् ॥ १४७ ॥
दीनानाथादिकान्सर्वान्पूजयेच्छक्तितोनृप ॥ धरणीव्रतमेतत्तुपुराकृत्वाप्रजापतिः ॥ प्रजांलेभेततोमुक्तिंब्रह्मणाविष्णवेशुभे ॥ १४८ ॥
युवनाश्वेनराजर्षिरनेनविधिनापुरा ॥ मत्वातारंशुभंलोकेपरंब्रह्मचशाश्वतम् ॥ १४९ ॥ तथाहैहयदायादःकृतवीर्योनराधिप ॥ चक्रवर्तिसु

तंलेभेसहस्रार्जुनमूर्जितम् ॥ १५० ॥ शकुंतलाप्येवमेवव्रतंचीर्त्वानरोत्तमम् ॥ लेभेशाकुंतलंपुत्रंदुष्यंतश्चक्रवर्तिनम् ॥ १५१॥ तथापुराण
राजानोवेदोक्ताश्चक्रवर्तिनः ॥ अनेनविधिनाप्राप्ताश्चक्रवर्तित्वमुत्तमम् ॥ १५२ ॥ अरण्याआपिपातालेमग्नयाचरितंपुरा ॥ व्रतमेतत्ततोना
म्नाधरणीव्रतमुच्यते ॥ १५३ ॥ समाप्तेऽस्मिंस्तदादेवीहरिणाक्रोडरूपिणा ॥ उद्धृतादशनाग्रेणस्थापितानौरिवांभसि ॥ १५४॥ धरणीव्रत
मेतत्तेकथितंपांडुनंदन ॥ यइदंशृणुयाद्भक्त्यायश्चकुर्यान्नरोत्तम ॥ १५५ ॥ सर्वपापविनिर्मुक्तोविष्णुसायुज्यतांव्रजेत् ॥ १५६ ॥
चीर्णंरसातलतलेगतयाधरण्यातेनप्रसिद्धिमगमद्धरणीव्रतेति ॥ सद्यःसमाचरतिधर्मरतिर्द्धरित्र्यामुद्धृत्यसप्तपुरुषान्सपरंप्रयाति ॥ १५७ ॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेधरणीव्रतंनामत्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ छ ॥ ॥ युधिष्ठि
रउवाच ॥ ॥ किमभीष्टवियोगशोकसंघाल्लघुइहसमुपोषतांव्रतंवा ॥ विभवोद्भवकारिभूतलेऽस्मिन्भवतिविभोभयसूदनंचपुंसाम् ॥१॥
श्रीकृष्णउवाच ॥ परिपृष्टमिदंजगत्प्रियंतेविबुधानामपिदुर्लभंमहत्त्वात् ॥ तवभक्तिमतस्तथापिवक्ष्येव्रतमिन्द्रासुरदानवेषुगुह्यम् ॥ २ ॥
पुण्यमाश्वयुजेमासिविशोकद्वादशीव्रतम् ॥ दशम्यांलघुभुग्विद्वानारभेन्नियमेनतु ॥ ३॥ उदङ्मुखःप्राङ्मुखोवादंतधावनपूर्वकम् ॥ एका
दश्यांनिराहारःसम्यगभ्यर्च्यकेशवम् ॥४॥ विधिवत्त्वांसमभ्यर्च्यभोक्ष्यामिअपरेऽहनि॥ एवंनियमकृत्सुप्त्वाप्रातरुत्थायमानवः॥५॥स्नानंस
र्वौषधैःकुर्यात्पञ्चगव्यजलेनतु ॥ शुक्लमाल्यांबरस्तद्वत्पूजयेच्छ्रीशमुत्पलैः ॥ ६ ॥ विशोकायनमःपादौजंघेचवरदायवै ॥ श्रीशायजा
नुनीतद्वदूरूचजलशायिने ॥ ७ ॥ कंदर्पायनमोगुह्यंमाधवायनमःकटिम् ॥ दामोदरायेत्युदरंपार्श्वेचविपुलायवै ॥ ८ ॥ नाभिं
चपद्मनाभायहृदयंमन्मथायवै ॥ श्रीधरायविभोर्वक्षःकरौमधुभिदेनमः ॥ ९ ॥ चक्रिणेनामबाहुंचदक्षिणंगदिनेनमः ॥ वैकुंठाय
नमःकंठमास्यंयज्ञमुखायवै ॥ १० ॥ नासामशोकनिधयेवासुदेवायचाक्षिणी ॥ ललाटंवामनायेतिकिरीटंविश्वरूपिणे ॥ ११ ॥
नमःसर्वात्मनेतद्वाच्छिरइत्यभिपूजयेत् ॥ एवंसंपूज्यगोविंदंफलमाल्यानुलेपनैः ॥ १२ ॥ ततस्तस्याग्रतोभव्यंस्थंडिलंकारयेन्मृदा ॥
चतुरस्रंसमंताच्चारत्निमात्रमुदग्भवम् ॥ १३ ॥ नदीवालुकयापूर्णंलक्ष्म्याकृतिंकृतान्न्यसेत् ॥ स्थंडिलेसूर्यमारोप्यलक्ष्मीमित्यर्च

नमोदेव्यैनमःशांत्यैनमोलक्ष्म्यैनमःश्रियै ॥ नमःपुष्ट्यैनमस्तुष्ट्यैनमोहृष्ट्यैनमोनमः[1] ॥ १५ ॥ विशोकादुः
येद्बुधः ॥ १४ ॥
खनाशायविशोकावरदास्तुमे ॥ विशोकावास्तुसंतत्यैविशोकासर्वसिद्धये ॥ १६ ॥ ततःशुक्लांबरधरोशूर्पंसंवेष्ट्यपूजयेत् ॥ भक्ष्यै
र्नानाविधैस्तद्वत्सुवर्णकमलेनच ॥ १७ ॥ रजनीषुचसर्वासुपिबेद्दर्भोदकंव्रती ॥ ततस्तुनृत्यगीतादिकारयेत्सर्वरात्रिकम् ॥ १८ ॥
यामत्रयेव्यतीतेतुसुत्वास्वस्थोपमानसः ॥ अभिगम्यचविप्राणांमिथुनानिसदार्चयेत् ॥ १९ ॥ शक्तितस्त्रीणिचैकंवावस्त्रमाल्यानुलेपनैः ॥
शयनस्थानिपूज्यानिनमोऽस्तुजलशायिने ॥ २० ॥ ततस्तुगीतवाद्याद्यैरात्रौजागरणेकृते ॥ प्रभातेविमलेस्नानंकृत्वादांपत्यमर्चयेत् ॥२१॥
भोजनंचयथाशक्त्यावित्तशाठ्यविवर्जितः ॥ भुक्त्वाश्रुत्वापुराणानितद्दिनंत्वतिवाहयेत् ॥२२॥ अनेनविधिनासर्वंमासिमासिसमाचरेत् ॥
व्रतांतेशयनंदद्याद्गुडधेनुसमन्वितम् ॥ २३ ॥ सोपिधानकविश्रामंमास्तरावरणंशुभम् ॥ यथानलक्ष्मीर्देवेशत्वांपरित्यज्यगच्छति ॥२४॥
तथाकुरुयथायोग्यमशोकंचास्तुमेसदा ॥ यथादेवेनरहितानलक्ष्मीर्जायतेक्वचित् ॥ २५ ॥ तथाविशोकतामेऽस्तुभक्तिरग्र्याचकेशवे ॥ मंत्रे
णानेनध्यात्वातुगुडधेनुसमन्वितम् ॥ २६ ॥ शूर्पंचलक्ष्म्यासहितंदातव्यंभूतिमिच्छता ॥ उत्पातंकरवीरंचबाणमम्लानकुंडलम् ॥२७॥
केसरंसिंदुवारंचमल्लिकागंधपाटलम् ॥ कदंबंकुंकुमंजातीतथान्यैरपिपूजयेत् ॥२८॥ युधिष्ठिरउवाच ॥ गुडधेनुविधानंमेत्वमाचक्ष्वजगत्प
ते ॥ किंरूपाकेनमंत्रेणदातव्यातदिहोच्यताम् ॥ २९ ॥ श्रीकृष्णउवाच ॥ गुडधेनुविधानंचयद्रूपमिहयत्फलम् ॥ तादिदानींप्रवक्ष्यामि
सर्वपापप्रणाशनम् ॥ ३० ॥ कृष्णाजिनंचतुर्हस्तंप्रागेवांविन्यसेद्भुवि ॥ गोमयेनानुलिप्तायांदर्भानास्तीर्यसर्वतः ॥३१॥ लघ्वेनकांचनंत
द्वत्संचपरिकल्पयेत् ॥ प्राङ्मुखींकल्पयेद्धेनुमुदक्पादांसवत्सकाम् ॥३२॥ उत्तमागुडधेनुःस्यात्सदाभारचतुष्टया ॥ वत्संभारेणकुर्वीत
द्वाभ्यांवैमध्यमास्मृता ॥ ३३ ॥ अर्द्धभारेणवत्सःस्यात्कनिष्ठाभारकेणतु ॥ चतुर्थांशेनवत्सःस्याद्गृहवित्तानुसारतः ॥ ३४ ॥ धेनुवत्सौ
कृतावेतौसितसूक्ष्मांबरावृतौ ॥ शुक्तिकर्णाविक्षुपादौशुक्तिमुक्ताफलेक्षणौ ॥३५॥ सितसूत्रशिरालौतुसितकंबलकंबलौ ॥ ताम्रगल्लकपृष्ठौ

१ हृष्ट्यै कृष्ट्यै नमोनमः-इ० पा० ।

तौसितचामररोमकौ ॥ ३६ ॥ विद्रुमभ्रूयुगाव ... म्तनान्वितौ ॥ क्षौमपुच्छौकांस्यदोहाविन्द्रनीलकतारकौ ॥ ३७ ॥ सुवर्णशृंगाभर
णौराजतखुरसंयुतौ ॥ नानाफलसमायुक्तौघ्राणगंधकरंडकौ ॥ ३८ ॥ इत्येवंरचयित्वातुधूपदीपैरथार्चयेत् ॥ यालक्ष्मीःसर्वभूतानांयाच
देवेष्ववस्थिता ॥ ३९ ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ विष्णोर्वक्षसियालक्ष्मीःस्वाहायाचविभावसौ ॥ ४० ॥ चंद्रार्कश
क्रशक्तिर्याधेनुरूपास्तुसाश्रिये ॥ चतुर्मुखस्ययालक्ष्मीर्यालक्ष्मीर्धनदस्यच ॥ ४१ ॥ यालक्ष्मीर्लोकपालानांसाधेनुर्वरदास्तुमे ॥
स्वधात्वंपितृमुख्यानांस्वाहायज्ञभुजांपुनः ॥ ४२ ॥ सर्वपापहराधेनुस्तस्माच्छांतिंप्रयच्छमे ॥ एवमामंत्र्यतांधेनुंब्राह्मणायनिवेदयेत् ॥
॥ ४३ ॥ विधानमेतद्धेनूनांसर्वासामिहपठ्यते ॥ यास्तुपापविनाशिन्यःश्रूयंतेदशधेनवः ॥ ४४ ॥ तासांस्वरूपंवक्ष्यामिनामा
निचनराधिप ॥ प्रथमागुडधेनुःस्याद्घृतधेनुरथापरा ॥ ४५ ॥ तिलधेनुस्तृतीयास्याच्चतुर्थीमधुधेनुका ॥ जलधेनुःपंचमीतुषष्ठी
तुक्षीरसंभवा ॥ ४६ ॥ सप्तमीशर्कराधेनुर्दधिधेनुरथाष्टमी ॥ रसधेनुश्चनवमीदशमीस्यात्स्वरूपतः ॥ ४७ ॥ कुंभाःस्युर्दशधे
नूनामितरासांतुराशयः ॥ सुवर्णधेनुमप्यत्रकेचिदिच्छंतिमानवाः ॥ ४८ ॥ नवनीतेनरत्नैश्चतथाप्यन्येमहर्षयः ॥ एतदेववि
धानंस्यात्तएवोपस्कराःस्मृताः ॥ ४९ ॥ मंत्रावाहनसंयुक्तासदापर्वणिपर्वणि ॥ यथाश्रद्धंप्रदातव्याभुक्तिमुक्तिफलप्रदा ॥ ५० ॥
गुडधेनुप्रसंगेनसर्वास्तवमयोदिताः ॥ अशेषयज्ञफलदाःसर्वपापहराःशुभाः ॥ ५१ ॥ व्रतानामुत्तमंयत्स्याद्विशोकद्वादशीव्रतम् ॥
तदंगत्वेनचैवैषागुडधेनुःप्रशस्यते ॥ ५२ ॥ अयनेविषुवेपुण्येव्यतीपातेऽथवापुनः ॥ गुडधेन्वादयोदेयाउपरागादिपर्वसु ॥ ५३ ॥
विशोकद्वादशीचैषासर्वपापहराशुभा ॥ यामुपोष्यनरोयातितद्विष्णोःपरमंपदम् ॥ ५४ ॥ इहलोकेतुसौभाग्यमायुरारोग्यमेवच ॥
वैष्णवंपदमाप्नोतिमरणेसद्धतिर्भवेत् ॥ ५५ ॥ भवार्बुदसहस्राणिदशचाष्टौचधर्मवित् ॥ नशोकदुःखदौर्गत्यंतस्यसंजायतेनृप ॥ ५६ ॥
नारीवाकुरुतेयातुविशोकद्वादशीमिमाम् ॥ नृत्यगीतपरानित्यंसापितत्फलमाप्नुयात् ॥ ५७ ॥ इतिपठतियइत्थंयःशृणोतीहसम्यङ्मधु
पुरनरकारेरर्चनंयश्चपश्येत् ॥ मतिमपिचजनानांयोददातीन्द्रलोकेवसतिसविबुधाद्यैःपूज्यमानःसदैव ॥ ५८ ॥ इति श्रीभविष्येमहा
पुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेविशोकद्वादशीव्रतंनामचतुरशीतितमोऽध्यायः ॥ ८४ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ शृणुभू

पालवक्ष्यामिविष्णुव्रतमनुत्तमम्॥विभूतिद्वादशींनामसर्वामरनमस्कृतम्॥१॥कार्तिकेवाथवैशाखेमार्गशीर्षेचफाल्गुने ॥ आषाढेवादशम्यां
चशुक्लायांलघुभुङ्नरः॥२॥कृत्वासायंतनींसंध्यांगृह्णीयान्नियमंबुधः ॥ एकादश्यांनिराहारःसमभ्यर्च्यजनार्दनम् ॥३॥ द्वादश्यांद्विजसंयुक्तः
करिष्येभोजनंविभो॥तदविघ्नेनमेयातुसाफल्यंमधुसूदन ॥ ४ ॥ ततःप्रभातउत्थायकृतस्नानजपःशुचिः ॥ पूजयेत्पुण्डरीकाक्षंशुक्लमाल्या
नुलेपनैः॥ ५ ॥भूतिदायनमःपादौविशोकायचजानुनी ॥ नमःशिवायेत्यूरूचविश्वमूर्तेनमःकटिम् ॥६॥ कंदर्पायनमोमेढ्रमादित्यायनमःक
रौ ॥ दामोदरायेत्युदरंवासुदेवायचस्तनौ ॥ ७ ॥ माधवायेतिहृदयंकंठंवैकुंठिनेनमः ॥ श्रीधरायमुखंकेशान्केशवायेतिपांडव ॥ ८ ॥
पृष्ठंशार्ङ्गधरायेतिश्रवणौवरदायवै ॥ स्वनाम्नाशङ्खचक्रासिगदापरशुपाणये ॥ ९ ॥ सर्वात्मनेशिरोराजन्नमइत्यभिपूजयेत् ॥
दशावताररूपाणिप्रतिमासंक्रमान्नृप ॥ १० ॥ दत्तात्रेयंतथाव्यासमुत्पलेनसमन्वितम् ॥ दद्यादनेनविधिनापाखंडानपिवर्जयेत् ॥ ११ ॥
समाप्यैवंयथाशक्त्याद्वादशद्वादशीर्नरः ॥ संवत्सरांतेलवणपर्वतेनसहप्रभोः ॥ १२ ॥ शय्यांदद्यान्मुनिश्रेष्ठगुरवेरससंयुताम् ॥ ग्रामं
चशक्तिमान्दद्यात्क्षेत्रंवाभवनान्वितम् ॥ १३ ॥ गुरुंसंपूज्यविधिवद्वस्त्रालंकारभूषणैः ॥ अन्यानपियथाशक्त्याभोजयित्वाद्विजोत्तमान् ॥
॥१४॥ तर्पयेद्वस्त्रगोदानैरन्यत्रधनसंचयात् ॥ अल्पवित्तोयथाशक्त्यास्तोकंस्तोकंसमाचरेत् ॥१५॥ यश्चातिनिःस्वःपुरुषोभक्तिमान्माधवं
प्रति ॥ पुष्पार्चनविधानेनसकुर्याद्वत्सरत्रयम्॥१६॥अनेनविधिनायस्तुविभूतिद्वादशीव्रतम् ॥ कुर्यात्सपापनिर्मुक्तःपितॄणांतारयेच्छतम् ॥
॥१७॥ जन्मनांशतसाहस्रंनशोकफलभाग्भवेत् ॥ नचव्याधिर्भवेत्तस्यनदारिद्र्यंनबंधनम् ॥१८॥ वैष्णवोवाथशैवोवाभवेज्जन्मनिजन्मनि ॥
यावद्युगसहस्राणांशतमष्टोत्तरंभवेत् ॥ १९ ॥ तावत्स्वर्गेवसेद्राजन्भूपतिश्चपुनर्भवेत् ॥ पुरारथंतरेकल्पेराजासीत्पुष्पवाहनः ॥ २० ॥
नाम्नालोकेषुविख्यातस्तेजसासूर्यसन्निभः ॥ तपसातस्यतुष्टेनचतुर्वक्त्रेणभारत ॥ २१ ॥ कमलंकाञ्चनंदत्तंयथाकामगतःसदा ॥ समस्त
भृत्यसहितःसांतःपुरपरिस्थितः ॥ २२ ॥ द्वीपानिसुरलोकंचयथेष्टंविचरत्यसौ ॥ कल्पादौसप्तमंद्वीपंतस्यपुष्करवासिनः ॥ २३ ॥ लोकेसं

पूजितोयस्मात्पुष्करंद्वीपमुच्यते ॥ तदैवब्रह्मणादत्तंयानमस्ययतोनृप ॥ २४ ॥ पुष्पवाहनमित्याहुस्तस्मात्तंदेवदानवाः ॥ २५ ॥ ना
गस्यतस्यास्यजगत्त्रयेपिब्रह्मांबुजस्थस्यतपोऽनुभावात् ॥ पत्नीचतस्याप्रतिमानरेन्द्रनारीसहस्रैरभितोऽभिनंद्या ॥ २६ ॥ नाम्नाचलाव
ण्यवतीबभूवयापार्वतीवेष्टतमाभवस्य ॥ तस्यात्मजानामयुतंबभूवधर्मात्मनामग्र्यधनुर्द्धराणाम् ॥ २७ ॥ तदात्मनःसर्वमवेक्ष्यराजामुहुर्मुहु
र्विस्मयमाससाद ॥ सोभ्यागतंपूज्यमुनिप्रवीरंप्रचेतसंवाचमिमांबभाषे ॥ २८ ॥ कस्माद्विभूतिरमलाममर्त्यपूज्याजायाचसर्वविजिताम
रसुंदरीया ॥ भार्यात्वनल्पतपसावसुतोषितेनदत्तंममांबुजगृहंपरमप्रसादात् ॥ २९ ॥ यस्मिन्प्रविष्टमपिकोटिशतंनृपाणांसामात्यकुंजरन
वाश्वघनावृतानाम् ॥ नालक्ष्यताक्षगतमंबरनौरिवेहताराहगणैरपिसुरासुरलोकपालैः ॥ ३० ॥ तस्मात्किमन्यजननीजठरोद्भवेनधर्मादिकं
कृतमशेषजनातिगंस्यात्॥सम्यङ्मयाथतनयैरनयामहर्षेमाहार्ययातदखिलंकथयप्रचेतः॥३१॥तस्यतद्वचनंश्रुत्वाध्यानेनावेक्ष्यचाखिलम्॥
प्रचेतास्तमुवाचाथशृणुभूपपुरातनम् ॥ ३२ ॥ लुब्धकस्त्वंपुराराजन्सर्वसत्वभयंकरः॥आसीदसाधुचरितःसुहृन्मित्रविवर्जितः ॥ ३३ ॥ य
तमध्योह्रस्वकेशःकृष्णांगोरक्तलोचनः ॥ धनुष्पाणिर्वनगतःकृतांतकसमोभवान् ॥ ३४ ॥ अभूदनावृष्टिरतीवरौद्राकदाचिदाहारनिमित्तरो
षः ॥ पद्मान्यथादायततोबहूनिगतंपुरंवैदिशनामधेयम् ॥ ३५ ॥ उन्मूल्यलोभाच्चपुरंसमस्तंभ्रांतंत्वयाशेषमहस्तदासीत् ॥ क्रेतानकश्चि
त्कमलेषुजातस्तोकेभृशंक्षुत्परिपीडितश्च॥३६॥उपविष्टस्त्वमेकस्मिन्सभार्योभवनांगणे ॥ अथमङ्गलशब्दस्तुत्वयारात्रौतथाश्रुतः॥३७॥
समाप्यमाघमासस्यद्वादश्यांलवणाचलम् ॥ निवेदयंतीगुरवेशय्यांचोपस्करान्विताम् ॥ ३८ ॥ अलंकृत्यहृषीकेशंसौवर्णंपरमंपदम् ॥
साथदृष्टाततस्ताभ्यामिदंचित्तेवधारितम् ॥३९॥ किमेभिःकमलैःकार्यंवरंविष्णुरलंकृतः॥इतिभक्तिस्तदाजातादांपत्यस्यनरेश्वर ॥ ४० ॥
तत्प्रसंगात्समभ्यर्च्यकेशवंलवणाचलम् ॥ शय्यांचपुष्पप्रकरैःपूजिताभूच्चसर्वदा ॥ ४१ ॥ अथानंगवतीतुष्टातयोर्हेमशतत्रयम् ॥
प्रादाद्गृहीतंताभ्यांचनतत्सर्वावलंबनात् ॥ ४२ ॥ अनंगवतिचपुनस्तयोरन्नंचतुर्विधम् ॥ आनाय्योपहृतंकृत्वाभुज्यतामितिभूपते ॥ ४३ ॥
ताभ्यांतुतदपित्यक्तंभोज्यावःश्वोवरानने ॥ प्रसंगाच्चोपवासेनतवाभ्यास्तुसुखावहः ॥ ४४ ॥ जन्मप्रभृतिपापिष्ठावावांदेविदृढव्रते ॥

सत्प्रसंगाद्धनुर्मध्येधर्मलाभस्तुचावयोः ॥ ४५ ॥ इतिजागरणंताभ्यांप्रसंगात्तदनुष्ठितम् ॥ प्रभातेचतयादत्ताशय्यासलवणाचला ॥ ४६ ॥
ग्रामश्वगुरवेभक्त्याविप्रेभ्योद्वादशैवहि ॥ वस्त्रालंकारयुक्तांगागावश्चकनकांचिताः ॥ ४७ ॥ भोजनंचसुहृन्मित्रदीनांधकृपणैःसमम् ॥
तत्तुलुब्धकदांपत्यंपूजयित्वाविसर्जितम् ॥४८॥ सभवाँल्लुब्धकोजातःसपत्नीकोनरेश्वरः ॥ पुष्पाणांप्रकरेतस्मात्केशवस्यप्रपूजनम्॥४९॥
प्राप्तंसुदुर्लभंवीरत्वयापुष्करमन्दिरम् ॥ तस्यसर्वस्यमाहात्म्यादलंनतपसानृप ॥ ५० ॥ यथाकामगतंदक्षपद्मयोनिविरिंचिना ॥
संतुष्टस्तस्यराजेन्द्रब्रह्मरूपीजनार्दनः ॥ ५१॥ शय्यानंगवतीवेश्याकोमदेशस्यसांप्रतम्॥पत्नीसपत्नीसंजातारत्याप्रीतिरितिश्रुता ॥५२॥
लोकेष्वानंदजननीसकलामरपूजिता ॥ तदप्युत्सृज्यराजेन्द्रनिर्वाणंसमवाप्स्यसि ॥ ५३ ॥ इत्युक्त्वासमुनिःसर्वंतत्रैवांतरधीयत ॥
राजायथोक्तंचपुनःसचक्रेपुष्पवाहनः ॥ ५४ ॥ इमामाचरतोब्रह्मन्नखण्डव्रतमाचरेत् ॥ यथाकथंचित्कालेनद्वादशद्वादशीर्मुने ॥ ५५ ॥
कर्तव्याःशक्तितोदेयाविप्रेभ्योदक्षिणानृप ॥ ५६ ॥ इतिकलुषविदारणंजनानामितिपठतिशृणोतिचातिभक्त्या ॥ मतिमपिचददातिदे
वलोकेवसतिसपरःशतानिवत्सराणाम् ॥ ५७ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेविभूतिद्वादशीव्रतवर्णनंनाम
पंचाशीतितमोऽध्यायः ॥ ८५ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ श्रोतुमिच्छामिभगवन्मदनद्वादशीव्रतम् ॥ सुतानेकोनपंचाशद्वै
नलेभेदितिःपुरा ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ तद्वासिष्ठादिभिःप्रोक्तमित्येकातिथिरुत्तमा ॥ विस्तरेणतदेवेदंतत्सकाशान्निबोधत॥२॥
चैत्रेमासेसितेपक्षेद्वादश्यांनियतव्रतः ॥ स्थापयेदव्रणंकुंभंसिततंडुलपूरितम् ॥ ३ ॥ नानाफलयुतंतद्वदिक्षुदण्डसमन्वितम् ॥
सितवस्त्रयुगच्छन्नंसितचन्दनचर्चितम् ॥ ४ ॥ नानाभक्ष्यसमोपेतंसहिरण्यंचशक्तितः ॥ ताम्रपात्रंगुडोपेतंतस्योपरिनिवेदयेत् ॥ ५ ॥
तस्योपरितथाकामंकदलीदलसंस्थितम् ॥ कुर्याच्छर्करयोपेतामितितस्यसमीपतः ॥ ६ ॥ गंधंपुष्पंतथादद्याद्गीतंवाद्यंचकारयेत् ॥
तदलाभेकथांकुर्यात्कामकेशवयोर्नरः ॥ ७ ॥ कामंनाम्नाहरेरर्चांस्नापयेद्गंधवारिणा ॥ शुक्लपुष्पाक्षततिलैरर्चयेन्मधुसूदनम् ॥
॥ ८ ॥ कामायपादौसंपूज्यजंघेसौभाग्यदायच ॥ मन्मथायतथामेढ्रंमाधवायकटिंनमः ॥ ९ ॥ शांतोदरायेत्युदरमनंगायेत्युरो

हरेः ॥ मुखंपद्मसुखायेतिबाहुंपञ्चशरायवै ॥ १० ॥ नमःसर्वात्मनेमौलिमर्चयेदितिकेशवम् ॥ ततःप्रभातेकुंभंचब्राह्मणाय
निवेदयेत् ॥ ११ ॥ ब्राह्मणान्भोजयेद्भक्त्यास्वयंचलवणादृते ॥ भक्त्याथदक्षिणांदद्यादिमंमंत्रमुदीरयेत् ॥ १२ ॥ प्रीयतामत्रभगवान्काम
रूपीजनार्दनः ॥ हृदयेसर्वभूतानांयथावेदोऽभिधीयते ॥ १३ ॥ अनेनविधिनासर्वंमासिमासिसमाचरेत् ॥ फळमामलकंप्राश्यद्वादश्यांभूत
लेस्वपेत् ॥ १४ ॥ ततस्त्रयोदशेमासिघृतधेनुसमन्विताम् ॥ शय्यांदद्याद्विजेन्द्रायसर्वोपस्करसंयुताम् ॥१५॥ काञ्चनंकामदेवंचशुक्लांगांच
पयस्विनीम् ॥ वासोभिर्द्विजदांपत्यंपूज्यशक्त्याविभूषणैः ॥१६॥ होमःशुक्लतिलैःकार्यःकामनामानिकीर्तयेत् ॥ गव्येनसर्पिषातत्रपायसेनच
धर्मवित्॥१७॥ विप्रेभ्योभोजनंकृत्वावित्तशाठ्यंविवर्जयेत्॥इक्षुदंडान्नरोदद्यात्पुष्पमालांचशक्तितः ॥१८॥ यःकुर्याद्विधिनानेनमदनद्वादशी
मिमाम् ॥ सर्वपापविनिर्मुक्तःप्राप्नोतिपरमंपदम् ॥१९॥ इहलोकेवरान्पुत्रान्सौभाग्यंसुखमश्नुते ॥कश्यपोव्रतमाहात्म्यादागत्यपरयामुदा ॥
॥२०॥ चकाराकर्कशांभूयोरूपलावण्यसंयुताम् ॥ वरेणच्छन्दयामासयाचवव्रेवरंवरम् ॥ पुत्रंशत्रुवधार्थायसमर्थममितौजसम् ॥ २१ ॥
प्रार्थयामिमहाभाग्यंसर्वामरनिषूदनम् ॥ कश्यपःप्राहतांभद्रेएवमस्तुसुशोभने ॥ २२ ॥ संवत्सरशतंत्वेकंगर्भोधार्यःसुखेप्सया ॥ सं
ध्यायांनैवभोक्तव्यंगर्भिण्यावरवर्णिनि ॥ २३ ॥ नस्थातव्यंनगंतव्यंवृक्षमूलेषुसर्वदा ॥ नोपस्करेषुनिविशेन्मुशलोलूखलादिषु ॥ २४ ॥
जलंनचावगाहेतशून्यागारंविवर्जयेत् ॥ वर्जयेत्कलहंगेहेगात्रभंगंतथैवच ॥ २५ ॥ मुक्तकेशीनातिष्ठेतनाशुचिःस्यात्कथंचन ॥
नशयीतोन्नतशिरानचाप्यार्द्रशिराःक्वचित् ॥ २६ ॥ नवस्तुहीनानोद्विग्नानार्द्रपादानभूतले ॥ नामंगल्यांवदेद्वाचंनचहास्यपराभवेत् ॥२७॥
कुर्याच्चगुरुशुश्रूषांनित्यंमंगलतत्परा ॥ सर्वौषधीभिःकोष्णेनवारिणास्नानमाचरेत् ॥ २८ ॥ कुस्त्रियोनाभिभाषेतवस्त्रवातंविवर्जयेत् ॥
मृतवत्सादिसंसर्गंपरगेहंचसुंदरि ॥ २९ ॥ नशीघ्रंमार्गमाक्रामेल्लंघयेन्नमहानदीम् ॥ नचबीभत्सकंकिंचिन्नचवीक्षेद्भयानकम् ॥ ३० ॥
गुरुवातलमाहारमजीर्णंनसमाचरेत् ॥ संपूर्णगर्भिण्यायामंव्यायामंचाविवर्जयेत् ॥ ३१ ॥ गर्भोरक्ष्यःसदौषध्याह्लादिधार्योनमत्सरः ॥ अ
नेनविधिनासाध्विशोभनंपुत्रमाप्नुयात् ॥ ३२ ॥ अन्यथागर्भपतनंस्तंभनंवाप्रवर्तते ॥ तस्मात्त्वमनयावृत्त्यागर्भेस्मिश्चसमाचरेः ॥ ३३ ॥

भविष्यतिशुभःपुत्रःसर्वावयवसुंदरः ॥ स्वस्त्यस्तुतेगमिष्यामितथेत्युक्तस्तयाचसः ॥ ३४ ॥ पश्यतांसर्वभूतानांतत्रैवांतरधीयत ॥ ततःसा
कश्यपोक्तेनविधिनासमातिष्ठत ॥ ३५ ॥ अथापपुत्रान्पंचाशदेकोनान्पांडुनंदन ॥ एवमन्यापियानारीमदनद्वादशीमिमाम् ॥ ३६ ॥
करोतिपुत्रानाप्नोतिसहभर्त्रासुखीभवेत् ॥३७॥ एकोनमर्द्धशतमापादितिःसुतानांयेनव्रतेनबलवीर्यसमन्वितानाम् ॥ मर्त्यःसमाचरतिपुत्रध
नाभिलाषीतत्सर्वमत्रसफलंभवतीहपुंसाम् ॥ ३८ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेमदनद्वादशीव्रतवर्णनं
नामषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ कांतारवनदुर्गेषुसुप्रसन्नाटवीषुच ॥ समुद्रतरणेदानेसंग्रामेत
स्करार्दने ॥ १ ॥ कांदेवतांस्मरेत्कृष्णपरित्राणकरीमिह ॥ कथंचदेवःपुरुषःपरित्राणंस्मृतोजनैः ॥ २ ॥ श्रीकृष्णउवाच ॥ सर्वमंगलमां
गल्यांदुर्गांभगवतीमिमाम् ॥ नाप्नोतिदुःखंपुरुषःसंस्मरन्सर्वमङ्गलाम् ॥ ३ ॥ अलक्ष्यांलक्षभूतानांसंस्मरन्सर्वमंगलाम् ॥ नभयंसमवा
प्नोतिपुरुषःपार्थकुत्रचित् ॥ ४ ॥ यदातांप्रतिजिज्ञासुरवंत्यामहमागतः ॥ पुरासंदीपनौपार्थबलेनसहभारत ॥ ५ ॥ प्राप्तविद्येनचमयाप्र
तिज्ञातास्यदक्षिणा ॥ दिव्यंस्तवंविदित्वामेतेनाहंयाचितःप्रभो ॥ ६ ॥ प्रभासतीर्थेपुत्रोमेगतःकेनाप्यसौहृतः ॥ तमानयमहाबाहो
सत्यंकुरुवचोमम ॥ ७ ॥ उपाध्यायस्यवचनाद्वैवस्वतपुरेमया ॥ प्रातःसंदीपनेःपुत्रःसमानीतःक्षणादसौ ॥ ८ ॥ दक्षिणां
तामुदाहृत्यप्रास्थितौपुनरागतौ ॥ स्थानमेतत्स्वपादांकंकृत्वावांगृहमागतौ ॥ ९ ॥ ततःप्रभृतिपुत्रार्थाःपूजयंतिजनाःसदा ॥
मांचैवबलभद्रंचमध्यस्थांसर्वमंगलाम् ॥ १० ॥ वामेनारायणोहंसएवमेवचकेभवेत् ॥ अवाधकंयोर्चयेतेतृतीयंकुंतिनंदन ॥ ११ ॥
त्रयोदश्यांसितेपक्षेमासिमासियतव्रतः ॥ नक्तेनैवोपवासेनएकभक्तेनवापुनः ॥ १२ ॥ गंधपुष्पैश्चमधुभिःसीधुभिश्चसुरासवैः ॥
मृन्मयींकांचनींवापिकृत्वाप्रतिकृतिंतुयः ॥ १३ ॥ यक्षगंधर्वलिक्षेपैःपललौदनसंसृजैः ॥ सोऽभ्यर्चयतिराजेन्द्रसर्वपापैःप्रमुच्यते ॥
॥ १४ ॥ नारीवाभर्तृसहितास्वर्गलोकेमहीयते ॥ १५ ॥ अंबाम्बिकांविदशमेऽह्निसितेसदैवयःपूजयेत्कुसुममांससुरोपहारैः ॥ नश्यंतित
स्यभवनेष्वतिभीषणानिचौराग्निमारजनितानिभयानिसद्यः ॥ १६ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेअ
वाधकव्रतवर्णनंनामसप्ताशीतितमोऽध्यायः॥८७॥छ॥ ॥ युधिष्ठिरउवाच ॥ ॥ ब्रूहिमेयदुशार्दूलव्रतंगन्धविनाशनम्॥कटुतिक्ताम्लदेहोत्थंदौ

भाग्यशमनंतथा ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ इमंप्रश्नंपुरापार्थजातूकर्ण्योमहामुनिः ॥ पृष्टोराज्ञ्याविष्णुभक्त्याकालनंदनजातया ॥ २ ॥
कथयामाससंपृष्टासूपविष्टाशृणोतिसा॥देवीकृताञ्जलिपुटाजातूकर्ण्योवदद्व्रतम् ॥३॥ ज्येष्ठेमासिसितेपक्षेत्रयोदश्यांयुधिष्ठिर ॥स्नात्वापुण्यन
दीतोयेपूजयेच्छुभदेशजम्॥४॥श्वेतमंदारमर्कंवाकरवीरंचरक्तकम्॥निंबंचसूर्यदेवस्यवल्लभंदुर्लभंतथा॥५॥पुष्पैर्नैवेद्यधूपाद्यैर्मंत्रेणानेनपांड
व॥निरीक्ष्यगगने सूर्यंध्यात्वाहृदिसमुच्चरेत्॥६॥सूर्यश्वेतारमंदारश्वेतार्कार्कस्यसंशयम्॥करवीरनमस्तुभ्यंनिंबवृक्षनमोऽस्तुते ॥७॥ इत्थंयो
र्कपतेर्भक्त्यावर्षेवर्षेपृथङ्नरः॥मूलमंत्रेणनृश्रेष्ठनारीवाभक्तिसंयुता॥८॥तस्याःशरीरदौर्गंध्यंदौर्भाग्यंवाअजाविकम् ॥९॥ निंबंनवार्ककरवीर
लतांसुपुष्पांयाःपूजयंतिकुसुमाक्षतधूपदीपैः॥ताःसर्वकामसुखभोगसमृद्धिभाजोदौर्भाग्यदोषरहिताःसुभगाभवंति॥१०॥इतिश्रीभविष्येमहा
पुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेमन्दारनिम्बार्ककरवीरव्रतवर्णनंनामाष्टाशीतितमोऽध्यायः॥८८॥छ॥युधिष्ठिरउवाच॥यमस्याराध
नंब्रूहिश्रीवत्सपुरुषोत्तम॥कथंनगम्यतेकृष्णनरकंनरकेसरिन्॥१॥श्रीकृष्णउवाच॥द्वारवत्यांपुरापार्थस्नातोऽहंलवणाम्भसि ॥ दृष्टवान्मुनिमा
यांतंमुद्गलंनामपार्थिव॥२॥प्रज्वलंतमिवादित्यंतपसाद्योतितात्मना॥तंप्रणम्यार्घ्यसत्कारैःपप्रच्छाहंयुधिष्ठिर ॥ ३ ॥ यमादर्शननामानंव्रतंज
न्तुभयापहम्॥कथयामाससकलंमुद्गलोविस्मयान्वितः॥४॥मुद्गलउवाच॥अकस्मात्कृष्णमूर्च्छामेपतितोऽस्मिधरातले ॥ पश्यामिदंडपुरुषै
र्देहात्प्रज्वलन्निव ॥ ५ ॥ अंगुष्ठमात्रःपुरुषोबलदाकृष्यरोपितः ॥ बद्धोयमभटैर्गाढंनीयतेवेदवादिभिः ॥ ६ ॥ क्षणात्सभायांपश्यामिय
मंपिंगललोचनम् ॥ कृष्णावदातंरौद्रास्यंमृत्युंव्याधिशतान्वितम् ॥७॥ वातपित्तमहाश्लेष्मैर्मूर्तिमद्भिरुपासितम् ॥कासशोफज्वरातंकस्फो
टिकालूतमारिभिः ॥ ८ ॥ ज्वरगर्दभशीर्षादिभगंदरमलक्षयैः ॥ गंडमालाक्षिरोगैश्चमूत्रकृच्छ्रहरव्रणैः ॥ ९ ॥ वेदनाभिःप्रमेहैश्चपिटकैर्ग
डबुद्बुदैः ॥ विषूचिकागलग्राहदरिद्राभूततस्करैः ॥१०॥ इत्थंबहुविधैरौद्रैर्नानारूपभयंकरैः ॥ करालशस्त्रहस्तैश्चसंग्रामैर्नरकैस्तथा॥११॥
राक्षसैर्दानवैरुग्रैरुपविष्टैःपुरःस्थितैः ॥ धर्माधिकरणस्थैश्चचित्रगुप्तादिलेखकैः ॥ १२ ॥ सिंहैर्व्याघ्रैर्वराहैश्चतरक्षैश्चातुजंतुकैः ॥ वृश्चिकैर्दंश



१ जानंजंबुकैः–इ०पा० ।

मशकैःशिवासर्पैःसडुंडुभैः ॥ १३ ॥ गृध्रैरुलूकैर्बहुभिर्मत्कुणैर्डाकिनिग्रहैः ॥ अपस्मारस्मरोन्मादवृद्धिकारेवतीग्रहैः ॥ १४ ॥ पिशा
चैर्यक्षकूष्मांडैःपाशखड्गधनुर्द्धरैः ॥ मुक्तकेशैस्त्रासकरैर्भ्रुकुटीकुटिलाननैः ॥ १५ ॥ बृहत्कायैर्नारकीयैःपापिष्ठानांनियामकैः ॥ असि
पत्रवनांगारैःक्षारगर्तांण्डदायकैः ॥ १६ ॥ असिभंगामिषच्छेदरुधिरस्रावकादिभिः ॥ आस्थानेसंभृतोभातियमोमृत्यूपमोपमः ॥ १७ ॥
सआहकिंकरान्सर्वान्धर्मराजोजनार्दन ॥ किमयंमुनिरानीतोयुष्माभिर्भ्रांतनामभिः ॥ १८ ॥ मुद्गलोनामकौंडिन्येनगरेभीष्मका
त्मजः ॥ क्षत्रियोऽस्तिसआनेयःक्षीणायुस्त्यज्यतांमुनिः ॥ १९ ॥ इत्युक्तास्तेगतास्तस्मादायाताःपुनरेवते ॥ ऊचुर्यत्रभटाः
प्रह्वाधर्मराजंसाविस्मयाः ॥ २० ॥ अस्माभिस्तत्रक्षीणायुर्नदेहीलक्षितोगतैः ॥ नजानीमोभानुसूनोकथंचिद्भ्रांतमानसाः ॥ २१ ॥
॥ यमराजउवाच ॥ प्रायेणतेनदृश्यंतेपुरुषैर्यमकिंकरैः ॥ कृतात्रयोदशीयैस्तुनरकार्तिविनाशिनी ॥ २२ ॥ उज्जायिन्यांप्रयागे
वाभैरवेवाथयेमृताः ॥ तिलान्नगोहिरण्यादिदत्तंयैश्चगवाह्निकम् ॥ २३ ॥ ॥ दूतउवाच ॥ ॥ कीदृशंतद्व्रतंस्वामिञ्छंसनोभास्क
रात्मज ॥ किंतत्रवदकर्तव्यंपुरुषैस्तवतुष्टिदम् ॥ २४ ॥ ॥ यमउवाच ॥ ॥ पूर्वाह्णेमार्गशीर्षादौवर्षमेकंनिरन्तरम् ॥ त्रयोदश्यांसौ
म्यदिनेसूर्यांगारकवर्जितः ॥ २५ ॥ मंमनाम्नाद्विजानष्टौपंचचैवसमाह्वयेत् ॥ वेदांतगाञ्जातिशुद्धाञ्छांतचित्तान्सुशोभनान् ॥ २६ ॥ वाच
कश्चापितन्मध्येसदाभास्करवल्लभान् ॥ दिनस्यप्रथमेयामेशुचौदेशेसमास्थितान् ॥ २७ ॥ अंतर्वासोवृतान्भक्तान्सोपदिष्टादिसोन्मुखान् ॥
अभ्यंगयेच्छिरोदेशात्तिलतैलेनमर्दयेत् ॥२८॥ स्नापयेद्गन्धकाषायैःसुखोष्णांबुभिरेवच ॥ पृथक्पृथक्स्नापयित्वासर्वानेवाद्विजोत्तमान्॥२९॥
शुचिर्भूत्वातथाचांतोव्रतीभक्तिपरायणः ॥ स्वयंसंभृत्यशुश्रूषांतेषांकृत्वानरोत्तम ॥ ३० ॥ प्राङ्मुखानुपविष्टांश्चत्रयोदशपृथक्पृथक् ॥
भोजयेच्छालिमुद्गाद्यंगुडपूपान्सुखोचितान् ॥३१॥ सुव्यञ्जनंसुपक्वान्नंभूयोभूयोनिवेदयेत् ॥ शुचिर्भूत्वातथाचांतादर्चयेत्तिलतंडुलैः॥३२॥
प्रस्थमात्रैरथैकैकंताम्रपात्रसमन्वितैः ॥ सदक्षिणैःसच्छत्रैश्चजलकुंभैःपवित्रकैः ॥ ३३ ॥ चर्मप्रावरणैःश्रेष्ठैस्तेषांदत्वाविसर्जयेत् ॥ मंत्रेण

१ यमनाम्ना–इ० पा० ।

नेनराजेन्द्रअर्चयेत्तान्पृथक्सुधीः ॥ ३४ ॥ ब्राह्मणान्वाचकंवापिपंक्तिभेदंनकारयेत् ॥ ॐनमःशनैश्चरोमृत्युर्दंडहस्तोविनाशकः ॥ ३५ ॥
अभावःप्रलयःसौरिर्दुःखघ्नःशमनोंऽतकः ॥ लोकपालोह्यतिक्रूरोरौद्रोघोराननःशिवः ॥ ३६ ॥ यमःप्रसन्नमानस्कोदद्यान्मेऽभयदक्षिणाम् ॥
स्वाहा॥इत्युक्त्वासंप्रयच्छेतदेयंदत्वाव्रतीपुनः ॥ ३७ ॥ द्विजांश्चानुव्रजेत्तान्गृहांश्चार्चितचार्चितान् ॥ एवंयःपुरुषःकश्चित्सकृद्व्रतमिदंच
रेत्॥३८॥समृतोऽपिनरोमर्त्यैर्नायातिममर्मंदिरम्॥अदृष्टोममर्मायाभिर्विमानेनार्कमंडले॥३९॥सचायातिपुरींविष्णोस्ततःशिवपुरंव्रजेत् ॥
कृतंचीर्णंव्रतंतेनमुद्गलेनममोदितम् ॥ ४० ॥ तेननायात्यसौलोकेममक्षत्रियपुङ्गवः ॥ इतिकालवचःश्रुत्वातेऽपिदूतागतास्तुमे ॥ ४१ ॥
अहंपुनःसमापन्नस्तूर्णंकालैर्विसर्जितः ॥ स्वशरीरंपुनःप्राप्यनीरोगःपुनरुत्थितः ॥ ४२ ॥ त्वांद्रष्टुमागतःप्रोक्तमेतद्वृत्तंमयातव ॥
इत्युक्त्वामुद्गलोराजन्प्रयातःस्वगृहंप्रति ॥ ४३ ॥ इदंकुरुष्वकौंतेयत्वमप्यत्रमहीतले ॥ ततोयास्यस्यसंदिग्धंवंचयित्वायमंमृतः ॥ ४४ ॥
एवंयेन्येऽपिपुरुषाःस्त्रियोवापियुधिष्ठिर ॥ त्रयोदश्यांत्रयोदश्यांयेचरिष्यंतिभूतले ॥ ४५ ॥ एकभक्तेननक्तेनउपवासेनवापुनः ॥
यमदर्शनमाख्यातंव्रतंसर्वव्रतोत्तमम् ॥ ४६ ॥ सर्वपापविनिर्मुक्तादिव्ययानसमाश्रिताः ॥ यास्यन्तीन्द्रपुरंदृष्टाअप्सरोगणसंवृताः ॥ ४७ ॥
दोधूयमानाश्चमरैःस्तूयमानाःसुरासुरैः ॥ गन्धर्वतूर्यनादेनच्छत्रपंक्तिविराजिताः ॥ ४८ ॥ अदृष्ट्वाघोररूपास्यैर्यमदूतैर्युधिष्ठिर ॥
अनर्दिताव्याधिगतैरदृष्टयमकिङ्करैः ॥ ४९ ॥ अनारितामहारौद्रैर्नानाप्रहरणोत्तमैः ॥ यमदृष्टिपथामुक्तःसर्वसौख्यसमन्वितः ॥ ५० ॥
सर्वसौख्यसमायुक्तःशिववत्सौम्यदर्शनाः॥स्वर्गेवसंतिसुचिरंभाविताःस्वेनकर्मणा॥ ५१॥ स्नाप्यत्रयोदशमुनीन्घृतपायसेनसंपूज्यपूज्यातिल
तन्दुलवस्त्रदानैः ॥ कुर्वंतितेव्रतमिदंत्रिदशोह्निपूताःपश्यंतितेयममुखंनकदाचिदेव ॥५२॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयु
धिष्ठिरसंवादेयमदर्शनत्रयोदशीव्रतवर्णनंनामैकोननवतितमोऽध्यायः ॥ ८९ ॥छ॥ युधिष्ठिरउवाच॥भगवन्भूतभव्येशसंसारार्णवतारक ॥
व्रतंकथयकिञ्चिन्मेरूपसौभाग्यदायकम् ॥ १ ॥ श्रीकृष्णउवाच ॥ किंकृतैर्बहुभिःपार्थव्रतैरुन्मत्तचेष्टितैः ॥ कायक्लेशकरैःक्रूरैरसारैःफल



१ यजिष्यन्ति-इ० पा० ।

साधनैः ॥ २ ॥ वरमेकापिवरदाकृतानंगत्रयोदशी ॥ प्रसिद्धिंसमनुप्राप्तामर्त्यैकामप्रदायिनी ॥ ३ ॥ सौभाग्यारोग्यजयदासर्वातंकनिवारि
णी ॥ सर्वदुष्टोपशमनीसर्वमङ्गलवर्धनी ॥ ४ ॥ शृणुष्वतांमहाबाहोकथयामिसविस्तरम् ॥ पुरादग्धेनकामेनत्रिनेत्रनयनाग्निना ॥ ५ ॥
भस्मीभूतेनलोकानांसंकल्पितापुरानघ ॥ अनंगेनकथाह्येषातेनानंगत्रयोदशी ॥ ६ ॥ हेमंतेसमनुप्राप्तेमासिमार्गशिरेशुभे ॥ शुक्लपक्षे
त्रयोदश्यांसोपवासोजितेन्द्रियः ॥ ७ ॥ स्नानंनद्यांतडागेचगृहेवानियतात्मवान् ॥ कृत्वासमभ्यर्च्यविभुंविधिनाशशिशेखरम् ॥ ८ ॥
धूपदीपैःसनैवेद्यैःपुष्पैःकालोद्भवैस्तथा ॥ शंभुनामान्यथोच्चार्यहोमःकार्यस्तिलाक्षतैः ॥ ९ ॥ अनंगनाम्नासंपूज्यमधुप्राश्यस्वपेन्निशि ॥
नैवेद्यैर्मधुरैर्दिव्यैःसुस्वादैर्घृतपाचितैः ॥ १० ॥ धूपंसुगंधंदद्याच्चरक्तपुष्पैस्तुपूजनम् ॥ रंभातुल्याभवेत्सातुरूपयौवनशालिनी ॥ ११ ॥
मधुवत्स्यात्समधुरःकामरूपधरस्तथा ॥ दशानामश्वमेधानांफलंप्राप्नोतिमानवः ॥ १२ ॥ पुष्यमासस्यचैवोक्तंचंदनंप्राशयेन्निशि ॥
योगेश्वरंतुसंपूज्यमालतीकुसुमैःशुभैः ॥ १३ ॥ नैवेद्यंघृतपूराश्चदमशान्तास्तुताःस्त्रियः ॥ सौम्यशीतसुगन्धाढ्यचन्दनप्राशनोद्भवैः ॥
॥ १४ ॥ राजसूयस्ययज्ञस्यफलंप्राप्नोत्यनुत्तमम् ॥ माघेनटेश्वरंनामपूजयेत्पंकजेनतु ॥ १५ ॥ नैवेद्यंक्षीरखंडाद्यैर्मौक्तिकंप्राशये
न्निशि ॥ बहुपुत्राभवेत्सातुधनंसौभाग्यमुत्तमम् ॥ १६ ॥ मुक्ताचूर्णनिभैर्नेत्रैर्यद्वास्यात्तद्ददेवहि ॥ गौरीतुल्याभवेत्सातुकाम
लाङ्गःप्रजायते ॥ १७ ॥ ततजांबूनदाभासोभवेद्दिव्यतनुर्महान् ॥ गोमेधस्यसहस्रस्यफलंप्राप्नोतिमानवः ॥ १८ ॥ फाल्गुने
मासिसंपूज्यदेवदेवंहरेश्वरम् ॥ काञ्चनारस्यपुष्पाणिनैवेद्येबीजपूरकम्[2] ॥ १९ ॥ कंकोलंप्राशयेद्रात्रौसौंदर्यमतुलंलभेत् ॥ चैत्रे
सुरूपकंनामपूजयेद्दमनेनतु ॥ २० ॥ नैवेद्यंधूपकंदद्याद्घृतखण्डविपाचितान् ॥ कर्पूरंप्राशयेद्रात्रौसौभाग्यंमहदाप्नुयात् ॥ २१ ॥ चन्द्र
श्चचन्द्रकांतिश्चचन्द्रवर्तिहरावृते ॥ नरमेधस्ययज्ञस्यफलंप्राप्नोतिशोभनम्[3] ॥ २२ ॥ वैशाखेचमहारूपंपुष्पैर्नौमालिकार्चनम् ॥ कां
रंबकैस्तुनैवेद्यंदातव्यंचातिशोभनम् ॥२३॥ जातीफलंतुसंप्राश्यजातिमाप्नोत्यनुत्तमाम् ॥ सफलास्तस्यसर्वाशाभवंतिभुविभारत ॥२४॥

१ मधुनामान्यथोच्चार्य–इ० पा०। २ तु जबीरकम्–इ०पा०। ३ षड्गुणम्–इ० पा०।

ज्येष्ठमासेतुप्रद्युम्नंपूजयेन्मल्लिकास्रजैः ॥ २५ ॥ नैवेद्यंखंडवर्तिंचलवंगंप्राशयेन्निशि ॥ ज्येष्ठपदम
गोसहस्रफलंप्राप्यब्रह्मलोकेमहीयते ॥ ज्येष्ठेमासेतुप्रद्युम्नंपूजयेन्मल्लिकास्रजैः ॥ २५ ॥ नैवेद्यंखंडवर्तिंचलवंगंप्राशयेन्निशि ॥ ज्येष्ठपदम
वाप्नोतितथालक्ष्मींजनार्दनात् ॥ २६ ॥ सर्वसौख्यसमोपेतांस्थित्वासुविशतंसमाः ॥ वाजपेयस्ययज्ञस्यशतमष्टगुणोत्तरम् ॥ २७ ॥
आषाढेचैवसंप्राप्तेउमाभर्तारमर्चयेत्॥पुष्पधूपादिनैवेद्यैःप्राशयीतातिलोदकम् ॥२८॥ तिलोत्तमारूपधरासुखीस्याच्छरदःशतम् ॥ श्रावणे
उमापतिंनामातिलपुष्पैस्तुपूजनम्॥२९॥नैवेद्यंलड्डुकान्दद्यात्कृष्णांश्चप्राशयेत्तिलान्॥पौंडरीकस्ययज्ञस्यफलंप्राप्नोत्यनाकुलम् ॥३०॥ तदं
तेराजराजःस्याच्छत्रुपक्षक्षयंकरः ॥सद्योजातंभाद्रपदेपूज्यकुंकुमकेशरैः ॥३१॥ नैवेद्यंसोलिकांदद्यात्प्राशयेदगुरुंनिशि॥अगुरुंप्राशयित्वातु
गुरुर्भवतिभूतले॥३२॥पुत्रपौत्रैःपरिवृतोभुक्त्वाभोगान्मनोऽनुगान्॥उक्तयज्ञफलंप्राप्यविष्णुलोकेमहीयते ॥३३॥ त्रिदशाधिपतिमश्वयुजिपू
ज्यसिंदूरकस्रजैः॥स्वर्णादिकंतुसंप्राश्यस्वर्णवर्णःप्रजायते ॥३४॥ रूपवान्सुभगोवाग्मीभुक्त्वाभोगान्महीतले॥सुवर्णकोटिदानस्यफलंप्राप्नो
तिमानवः ॥ ३५ ॥ विश्वेश्वरं[1]कार्तिकेतुसर्वपुष्पैस्तुपूजयेत् ॥ दमनस्यफलंप्राश्यदमनेनपुमान्भवेत् ॥ ३६ ॥ दमनोन्मादकर्ताचसर्वस्य
जगतःप्रभुः ॥भवेद्भुजबलोपेतस्ततःशिवपुरंव्रजेत् ॥ ३७ ॥ एवंसंवत्सरस्यांतेपारितेऽस्मिन्व्रतोत्तमे ॥ यत्कर्तव्यंतदधुनाश्रूयतांयदुनं
दन ॥ ३८ ॥ व्रतेविघ्नंयदाचस्यादशक्त्यासूतकेनवा ॥ उपोष्यमेवोपवसेत्तदाद्धमपुरःपुनः ॥ ३९ ॥ पूर्वोक्तमेवंनिर्वर्त्यसौवर्णकारयेच्छि
वम् ॥ ताम्रपात्रेतुसंस्थाप्यकलशोपरिविन्यसेत् ॥ ४० ॥ शुक्लवस्त्रेणसंछाद्यपुष्पनैवेद्यपूजितम् ॥ ब्राह्मणायप्रदातव्यंशिवभक्तायसुव्रते ॥
॥ ४१ ॥ शक्तिमाञ्छयनंदद्याद्गांसवत्सांपयस्विनीम् ॥ छत्रोपानत्प्रदातव्यंकलशान्सोदकांस्तथा ॥ ४२ ॥ शांताश्चकेचिदिच्छंतिश
क्तिंदद्याच्चदक्षिणाम् ॥ पञ्चामृतेनस्नानंचतस्मिन्नहनिकारयेत् ॥ ४३ ॥ देवदेवस्यराजेन्द्रपुष्पदीपान्नसंयुतम् ॥ भोजनंचयथाशक्त्याष
ड्रसंमधुरोत्तरम् ॥ ४४ ॥ प्रदद्याच्छिवभक्तानांविशुद्धेनांतरात्मना ॥ एवंनिर्वर्त्यविधिवत्कृतकृत्यःपुमान्भवेत् ॥ ४५ ॥ नारी
वाभरतश्रेष्ठकुमारीवायतव्रता ॥ पारितेतुव्रतेपश्चात्कुर्याच्चसुमहोत्सवम् ॥ ४६ ॥ अनेनविधिनाकुर्याद्यस्त्वनंगत्रयोदशीम् ॥ सराज्यं

१ विद्येश्वरम्-इ०पा० ।

॥ ततोनिर्वाणमायातिशिवलोकंचगच्छति ॥
निहतामित्रंकीर्तिरायुर्यशोबलम् ॥ ४७ ॥ सौभाग्यंमहदाप्नोतियावज्जन्मशतंनृप ॥ तांप्राशनैरुदितनामयुतैरुपेतांकृत्वाप्रयातिपर
॥ ४८ ॥ कामेनयाकिलपुरासमुपोषितासीच्छ्रुभ्रातिथिस्त्रिदशमौसुशुभांगहेतोः ॥ तांप्राशनैरुदितनामयुतैरुपेतांकृत्वाप्रयातिपर ॥ ९० ॥ छ ॥
मंपदमिंदुमौलेः ॥ ४९ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वण्यनंगत्रयोदशीव्रतवर्णनंनामनवतितमोऽध्यायः ॥ ९० ॥ छ ॥
॥ ॥ युधिष्ठिरउवाच ॥ ॥ अंबुपूर्णतडागेषुमहत्तोयाशयेषुच ॥ कस्यार्थंसंप्रयच्छंतिकृष्णैताःकुलयोषितः ॥ १ ॥ ॥ श्रीकृष्ण
उवाच ॥ ॥ मासिभाद्रपदेप्राप्तेशुक्लेभूततिथौनृप ॥ तडागपाल्यांदातव्यंवरुणायार्घ्यमुत्तमम् ॥ २ ॥ ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैःस्त्रीभि
स्तथैवच ॥ तस्मिन्दिनेभक्तिनम्रैर्दद्यादर्घंयुधिष्ठिर ॥ ३ ॥ पुष्पैःफलैस्तथावस्त्रैर्दीपालक्तकचन्दनैः ॥ अनग्निपाकसिद्धान्नैस्तिलतंडुल
मिश्रकैः ॥ ४ ॥ खर्जूरैर्नालिकेरैश्चबीजपूर्णारकैस्तथा ॥ द्राक्षादाडिमपूगैश्चत्रपुसैश्चापिपूजयेत् ॥ ५ ॥ आलिख्यमण्डलेदेवंवरुणंवारुणीयु
तम् ॥ मंत्रेणानेनराजेन्द्रपूजयेद्भक्तिभावतः ॥ ६ ॥ वरुणायनमस्तुभ्यंनमस्तेयादसांपते ॥ अपांपतेनमस्तेऽस्तुरसानांपतयेनमः ॥ ७ ॥
माक्लेदंमाचदौर्गंध्यंविरस्यंमामुखेऽस्तुमे ॥ वरुणोवारुणीभर्तावरदोऽस्तुसदाममस्वाहा ॥ ८ ॥ एवंयःपूजयेद्भक्त्यावरुणंवरुणालयम् ॥
मध्याह्नेसरसिस्नात्वानाग्निपाकीव्रतीनृप ॥ ९ ॥ चातुर्वर्ण्यार्थवैनारीव्रतेनानेनपांडव ॥ नैवेद्यंब्राह्मणेदेयंयन्नैवेद्येप्रकल्पितम् ॥ १० ॥
एवंयःकुरुतेपार्थपालीव्रतमनुत्तमम् ॥ तत्क्षणात्सर्वपापेभ्योमुच्यतेनात्रसंशयः ॥ ११ ॥ संरुद्धशुद्धसलिलातिबलांविशालांपालीमुपेत्य
बहुभिस्तरुभिःकृतालीम् ॥ येपूजयंतिवरुणंसहितंसमुद्रैस्तेषांगृहेभवतिभूमिरलब्धवेगा ॥ १२ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्व
णिश्रीकृष्णयुधिष्ठिरसंवादेपालीव्रतवर्णनंनामैकनवतितमोऽध्यायः ॥ ९१ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ अस्मिन्नेवदिनेपार्थशृ
णुब्रह्मसभातले ॥ देवलेनपुरागीतंदेवर्षिगणसन्निधौ ॥ १ ॥ अप्सरोगणगंधर्वैर्देवैःसर्वैःसमार्चितम् ॥ संसारासारतांदृष्ट्वातत्रस्था
कदलीद्रुमे ॥ शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदेनृप ॥ २ ॥ दत्तमर्घ्यंवरस्त्रीभिःफलैर्नानाविधैःशुभैः ॥ विरूढैःसप्तधान्यैश्चदीपालक्तकचंद

१ मम-इ०पा०। २ समन्वितम्-इ० पा०।

शयः ॥ केनकालेनभवातिरतेर्विरतिरेतयोः ॥ ९ ॥ एतद्विचिन्त्यप्रहितौदेवैस्तत्रानिलानलौ ॥ गतौतौचोमयादृष्टौसमस्थौविषम
स्थया ॥ १० ॥ शशापचरुषादेवीदेवान्गर्भविवर्जिता ॥ यस्मात्तैर्जनितंविघ्नमपत्यार्थेदिवौकसाम् ॥ ११ ॥ अथोवाचतदादेवोदेवा
न्सर्वगणाञ्छनैः ॥ अग्निर्गृह्णातुवीर्यमेसंभृतंसुचिरंहियत् ॥ १२ ॥ एवमुक्तोऽथरुद्रेणनष्टोऽग्निर्देवसंकुलात् ॥ नवस्थोनभुविस्थोवानसूर्य
स्थोनभूतले ॥ १३ ॥ देवाअन्वेषणेयत्नमकुर्वन्नग्निदर्शने ॥ कृमिकीटपतंगाश्चअष्टौचात्रिदिवौकसः ॥ १४ ॥ हंहोकेकाःशुकावह्निःशीघ्रं
शरवणंगतः ॥ शशापाग्निर्गजाजिह्वाद्विगुणावोभविष्यसि ॥ १५ ॥ दृष्ट्वाथविबुधाःसर्वेपक्षिणंपक्षिणांवरम् ॥ जीवंजीवकनामानं
भोभोसत्यंवदस्वनः ॥ १६ ॥ कच्चिद्दृष्टस्त्वयावह्निर्वनेऽस्मिन्नटतासदा ॥ नभद्रंनापिभद्रंवाकिञ्चिद्देववचोऽब्रवीत् ॥ १७ ॥
भूयोभूयस्तुपृष्टोऽपिनगामुच्चारयेच्चिरम् ॥ तुष्टस्तस्याब्रवीद्वह्निर्जीवंजीववदामिते ॥ १८ ॥ यस्मान्नकिञ्चिदुक्तंतेतस्माच्चित्रतनूरुहाः ॥
जीवंजीवपुनर्जीवयावदिच्छातथायुषः ॥ १९ ॥ द्वितीयंतेवरंद्वाम्नि जीवंजीवकशोभनम् ॥ व्यक्तातेमानुषीवाचास्पष्टार्थाचभविष्यति ॥२०॥
कश्चिद्यदितवाधस्ताद्बुधःस्नानंकरिष्यति ॥ वंध्यावाषोडशाब्दीयाक्षणाद्बालेभविष्यति ॥ २१ ॥ मांसंयश्चतृतीयंवैभक्षयिष्यातिनिंदितम् ॥
अजरःसोऽमरश्चैवसर्वकालंभविष्यति ॥ २२ ॥ इदंदत्त्वावरांस्तस्यवह्निस्त्वमथआतवान् ॥ विबुधाअपितत्रैवतमपश्यंतवंशगम् ॥ २३ ॥
ऊष्मयाजातकल्माषंज्ञात्वासंहृष्टमानसः ॥ तुष्टावंशमथोचुस्तेदेवास्त्रिभुवनेश्वराः ॥ २४ ॥ ऊष्मयाकल्मषीभूत्वाअग्निर्गर्भंधरिष्यति ॥
योगृहीवैणवींयष्टिंब्रह्मचारीचनैष्ठिकः ॥ २५ ॥ पंडाग्निपालनेपुण्यंयदृष्टंब्रह्मवादिभिः ॥ वदतःकल्मषीयष्टिस्तंप्राप्नोतिद्विजोत्तम ॥ २६ ॥
वंशस्यानुग्रहंकृत्वादेव्याह्वतिमथाब्रुवन् ॥ गृह्णीतशुक्रंभद्रस्यतवपुत्रोभविष्यति ॥ २७ ॥ ॥ युधिष्ठिरउवाच ॥ यदाग्निर्नष्टोदेवानांकिना
ग्नित्वंतदाकृतम् ॥ भूयोऽपिकेनकालेनअग्निराग्नित्वमाप्तवान् ॥२८॥ कृष्णउवाच ॥ शृणुराजन्प्रनष्टेऽग्नौयेनाग्नित्वंकदाचन ॥ यस्मिन्कालेतिथौ
यस्यांपुनरग्नित्वमाप्तवान् ॥२९॥ उतथ्याङ्गिरसोःपूर्वमासीद्व्यतिकरोमहान् ॥ अहंविद्यातपोभ्यांवैतवज्यायाञ्छुतेनच ॥३०॥ उत्तथ्येनैवमुक्त
स्तुअङ्गिराःप्राहतंमुनिम् ॥ गच्छावोब्रह्मसदनंमरीचिप्रमुखैर्द्विजैः ॥३१॥ उपेतंचान्यमुनिभिर्ब्रह्मराजर्षिसत्तमैः ॥ उतथ्यःप्राहसद्ब्रह्मन्नृषींस्तान्स्त

ध्यमानसः ॥३२॥ ज्यायान्वाकतमोस्माकमितिनःकथ्यतांस्फुटम् ॥ अथोवाचमुनिर्ब्रह्माताबुभौक्रुद्धमानसौ ॥३३॥ आनयध्वंद्रुतंगत्वावि
बुधान्भुवनेश्वरान् ॥ ततोविवादंपश्यामिभवनांतेःसमेत्यच ॥ ३४ ॥ ततस्तौसहितौगत्वाऽऽनिन्यतुश्चऋषींस्तदा ॥ लोकपालान्महेंद्रादी
न्सयमान्वारुणानिलान्॥३५॥साध्यान्मरुद्गणान्विश्वानृषीन्भृग्वग्निनारदान् ॥ गंधर्वान्वित्तरक्षोघ्नान्राक्षसान्दैत्यदानवान्॥३६॥नायातस्तत्र
तिग्मांशुःसर्वेचान्येसमागताः ॥ दृष्ट्वातुविबुधान्सर्वान्ब्रह्माप्रोवाचतानृषीन् ॥३७॥ आनयध्वमितःसूर्यंसाम्नादंडेनवापुनः॥एवमुक्तोगतस्ता
वदुतथ्यःसूर्यमंडलम्॥३८॥ सगत्वाप्राहमार्तण्डंशीघ्रमेह्येवसंविदम् ॥ सउतथ्यमथोवाचकथंब्रह्मन्व्रजाम्यहम् ॥ ३९ ॥एवमुक्त्वागतःसूर्यो
भुवनेमयिनिर्गते ॥ एवमुक्तोमुनिःप्रायात्सर्वदेवसमागमम् ॥ ४० ॥ आचचक्षेचयत्प्रोक्तंभास्वताततपनंप्रति ॥ उवाचाङ्गिरसंब्रह्माशीघ्रमेनंत्व
मानय॥४१॥सतथोक्तोगतस्तत्रयत्रासौतपतेरविः ॥ एह्येहिभगवन्सूर्यतप्यतेभवतान्वहम् ॥ ४२ ॥ एवमुक्तोगतःसूर्योयत्रदेवाःसमागताः ॥
स्थित्वामुहूर्तंप्रोवाचकिंवाकार्यमुपस्थितम् ॥ ४३ ॥ पृच्छन्तमेवमार्तंडंब्रह्माप्रावोचसादरम् ॥ गच्छशीघ्रंनदहतेभुवनंयावदंगिराः ॥ ४४ ॥
लब्धप्रायंतुगोलोकंवर्ततेकृष्णपिंगलम् ॥ पाटलंहरितंशोणंश्वेतोवर्णःप्रणाशितः ॥ ४५ ॥ शाकद्वीपंकुशद्वीपंक्रौञ्चद्वीपंसपन्नगम् ॥
दग्धमङ्गिरसासर्वंभूयोऽपिप्रदहिष्यति ॥ ४६ ॥ यावन्नदहतेसर्वंभुवनंतपसांगिराः ॥ गच्छतावदितःशीघ्रंस्वस्थानेतपभास्कर ॥ ४७ ॥
एवमुक्तःसविभुनास्वस्थानमधिरूढवान् ॥ विसृष्टवानंगिरसंसकाशममृताशिनाम् ॥ ४८॥ गत्वाङ्गिराउवाचेदंगतःकिंकरवाण्यहम् ॥
देवाअंगिरसंप्राहुस्तपोराशिमकल्मषम् ॥ ४९ ॥ संप्रशस्योचुरग्नित्वंकुरुतावन्महीतले ॥ पूर्वंयथाग्निःकृतवांस्तथात्वमपिसत्तम ॥ ५० ॥
यावदग्निंप्रपश्यामःक्वासौनष्टःक्वतिष्ठति ॥ एवमुक्तःसदेवैस्तुअग्नित्वंकृतवांस्तदा ॥ ५१ ॥ देवैर्दृष्टोयथाह्यग्निस्तत्तेसर्वंनिवेदितम् ॥ देव
कार्येकृतेतस्मिन्देवावह्निमथाब्रुवन् ॥ ५२ ॥ अग्नेऽग्नित्वंकुरुष्वत्वमंगिरास्तुयथापुरा ॥ एवमुक्तःसुरैर्वह्निश्चिन्तयामासदुःखितः ॥ ५३ ॥
केनमेऽपहृतंतेजःकेनाग्नित्वंकृतंत्विह ॥ अथाग्निरंगिरसंदृष्ट्वातेजोराशिमकल्मषम् ॥ ५४ ॥ उवाचमुंचमत्स्थानंवचस्तोषकरंशृणु ॥ अहं
तेतनयश्श्रेष्ठोभाविष्येप्रथमेशुभे ॥५५॥ बृहस्पतीतिनामावैतथान्येबहवःसुताः ॥ एवमुक्तोमुनिस्तुष्टोबहूंश्चाजनयत्सुतान् ॥५६॥ वह्निःसं

॥ ९० ॥

जनयामासपुत्रान्पौत्रांस्तदांगिराः ॥ अवापपुनरग्नित्वमग्निस्तस्यांतिथौनृप ॥ ५७ ॥ सर्वमेवचतुर्दश्यांसंजातंहव्यवाहनम् ॥ हव्यवाहन
देवानांभूतानांगुह्यचारितम् ॥ ५८ ॥ ततोऽष्टपतिपत्वेचरुद्रेणप्रतिपादितम् ॥ पूजितेयंतिथिर्देवैर्दैविस्थैश्चनृपैरपि ॥ ५९ ॥ पैलजाबा
लमन्वाद्यैरन्यैश्चनहुषादिभिः ॥ विषशस्त्रहतानांचसंग्रामेन्यत्रतेक्वचित् ॥ ६० ॥ अज्ञातावृषपापैश्चव्यालैर्येव्याप्यहिंसिताः ॥ नदीप्र
वाहपतिताःसमुद्रेपर्वतेऽध्वनि ॥ ६१ ॥ पतिताःपर्वतेभ्यश्चतोयाग्निदहनेमृताः ॥ उदध्यापातितायेचयेकेचात्महनोजनाः ॥ ६२ ॥ ते
षांशस्तंचतुर्दश्यांश्राद्धंस्वर्गसुखप्रदम् ॥ श्राद्धानिचैवदत्तानिदानानिसुलघून्यपि ॥ ६३ ॥ प्रसूनफलभोज्यानिउपतिष्ठंतितान्नरान् ॥
एवंतिथिरियंराजन्नाग्नेयीप्रोच्यतेजनैः ॥ ६४ ॥ रौद्रींचकेचिदित्याहूरुद्रोग्निःसचपठ्यते ॥ यस्यांमनोरथंयंयंसमुद्दिश्यह्युपोषति ॥ ६५ ॥
ददातितस्यतद्वह्निःसाग्रेसंवत्सरेगते ॥ चतुर्दश्यांनिराहारःसमभ्यर्च्यत्रिलोचनम् ॥ ६६ ॥ पुष्पधूपादिनैवेद्यैरात्रौजागरणान्नरः ॥ पञ्चग-
व्यंनिशिप्राश्यस्वपेद्भूमौविमत्सरः ॥ ६७ ॥ श्यामाकमथवाभुक्तातैलक्षारविवर्जितम् ॥ होमःकृष्णतिलैःकार्यःशतमष्टोत्तरंनृप ॥ ६८ ॥
अग्नयेहव्यवाहनायसोमायांगिरसेनमः ॥ ततःप्रभातेविमलेस्नाप्यपंचामृतैःशिवम् ॥ ६९ ॥ पूजयित्वाविधानेनहोमंकृत्वातथैवच ॥
उदीरयेन्मन्त्रमेतंकृत्वाशिरसिचांजलिम् ॥७०॥ नमस्त्रिमूर्तयेतुभ्यंनमःसूर्याग्निरूपिणे ॥ पुत्रान्यच्छसुखंयच्छमोक्षंयच्छनमोऽस्तुते॥७१॥
नीराजनंततःकृत्वापश्चाद्भुंजीतवाग्यतः ॥ एवंसंवत्सरस्यांतेकृत्वासर्वंयथोदितम् ॥ ७२ ॥ सौवर्णंकारयेद्देवंत्रिनेत्रंशूलपाणिनम् ॥ वृषस्कं
धगतंसौम्यंसितवस्त्रयुगान्वितम्॥७३॥चन्दनेनानुलिप्ताङ्गंसितमाल्योपशोभितम् ॥ स्थापयित्वाताम्रपात्रेब्राह्मणायनिवेदयेत्॥७४॥सर्वका
लिकमेतत्तेकथितंव्रतमुत्तमम्॥संवत्सरंसमाप्तंहिव्रतस्यतुयदाभवेत् ॥७५॥ कालेगतेबहुतिथेतीर्थस्यशरणंभवेत् ॥ मृतस्यदेहोदिव्यस्थोदि
व्यालंकारभूषितः॥७६॥दिव्यनारीगणवृतोविमानवरमास्थितः॥देवदेवैःसमःशंभोःक्रीडतेत्रिपुरेचिरम् ॥७७॥ इहचागत्यकालांतेजातःसच
नृपोभवेत्॥दातायज्वाधनीदक्षोब्राह्मणोब्राह्मणप्रियः॥७८॥श्रीमान्वाग्मीकृतीधीमान्पुत्रपौत्रसमन्वितः ॥पत्नीगणसमायुक्तश्चिरंभद्राणिपश्य

१ बुध्यते—इ० पा० ।

ति॥७९॥ येदुर्लभासुविसुरोरगमानवानांकामाह्यनुत्तमगुणेनयुताःसदैव॥तानाप्नुवंतिसितभूततिथौसुरेशंसंपूज्यसोमतिलकंविधिवन्मनुष्याः
॥८०॥इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेआग्नेयीचतुर्दशीव्रतवर्णनंनामत्रिनवतितमोऽध्यायः ॥ ९३ ॥छ॥ ॥
श्रीकृष्णउवाच ॥ ॥ अनंतव्रतमस्त्यन्यत्सर्वपापहरंशिवम् ॥ सर्वकामप्रदंनॄणांस्त्रीणांचैवयुधिष्ठिर ॥१॥ शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदे
शुभे ॥ तस्यानुष्ठानमात्रेणसर्वपापैःप्रमुच्यते ॥ २ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ कृष्णकोऽयंत्वयाख्यातेअनंतइतिविश्रुतः ॥ किंशेष
नागआहोस्विदनंतस्तक्षकःस्मृतः ॥ ३ ॥ परमात्माथवानंतउताहोब्रह्मउच्यते ॥ कएषोऽनंतसंज्ञोवैतथ्यंमेब्रूहिकेशव ॥ ४ ॥ ॥ श्रीकृष्ण
उवाच ॥ ॥ अनंतइत्यहंपार्थममनामानिबोधय ॥ आदित्यादिषुवारेषुयःकालउपपद्यते ॥ ५ ॥ कलाकाष्ठामुहूर्तादिदिनरात्रिशरीर
वान् ॥ पक्षमासर्तुवर्षादियुगकल्पव्यवस्थया ॥ ६ ॥ योऽयंकालोमयाख्यातस्तवधर्मभृतांवर ॥ सोऽहंकालोऽवतीर्णोऽत्रभुवोभारावतार
णात् ॥ ७ ॥ दानवानांविनाशायवसुदेवकुलोद्भवम् ॥ मांविद्धचनंतंपार्थत्वंविष्णुंजिष्णुंहरंशिवम् ॥ ८ ॥ ब्रह्माणंभास्करंशेषंसर्वव्यापि
नमीश्वरम् ॥ विश्वरूपंमहात्मानंसृष्टिसंहारकारकम् ॥ ९ ॥ प्रत्ययार्थंमयाख्यातंसोऽहंपार्थनसंशयः ॥ ॥ युधिष्ठिरउवाच ॥ ॥
अनंतव्रतमाहात्म्यंविधिंवदविदांवर ॥१०॥ किंपुण्यंकिंफलंचास्यह्यनुष्ठानरतांनृणाम् ॥ केनवादौपुराचीर्णंमर्त्येकेनप्रकाशितम् ॥ ११ ॥
एवंसमस्तंविस्तार्यब्रूह्यनंतव्रतंहरेः ॥ ॥ श्रीकृष्णउवाच ॥ ॥ आसीत्पुराकृतयुगेसुमंतोनामवैद्विजः ॥ १२ ॥ वसिष्ठगो
त्रेचोत्पन्नःसुरूपश्चभृगोःसुताम् ॥ दीक्षांनामोपयेमेतांवेदोक्तविधिनाततः ॥ १३ ॥ तस्याःकालेनसंजातादुहितानंतलक्षणा ॥ शीला
नामसुशीलासावर्धतेपितृसद्मनि ॥ १४ ॥ माताचतस्याःकालेनहरदाहेनपीडिता ॥ विननाशनदीतीरेमृतास्वर्गपुरंययौ ॥ १५ ॥ सुमं
तोपिततोन्यांवैधर्मपुंसःसुतांपुनः ॥ उपयेमेविधानेनकर्कशांनामनामतः ॥ १६ ॥ दुःशीलांकर्कशांचंडींनित्यंकलहकारिणीम् ॥ सापि
शीलापितुर्गेहेगृहार्चनरताविभो ॥ १७ ॥ कुड्यस्तंभतुलाधारदेहलीतोरणादिषु ॥ चातुर्वर्णकरंगैश्चनीलपीतसितासितैः ॥ १८ ॥

१ आनंदचतुर्दशीव्रतवर्णनंनाम–इ० पा० । १ सर्वपापं प्रणश्यति–इ० पा० ।

स्वस्तिकैःशंखपद्मैश्चअर्चयंतीपुनःपुनः ॥ पित्राद्दष्टासुमंतेनस्त्रीचिह्नायौवनेस्थिता ॥ १९ ॥ कस्मैदेयामयाशीलाविचार्यैवंसुदुःखितः॥
पितादद‍ौमुनीन्द्रायकौंडिन्यायशुभेदिने ॥२०॥ स्मृत्युक्तशास्त्रविधिनाविवाहमकरोत्तदा॥निवर्त्योद्वाहिकंसर्वंप्रोक्तवान्ककेशांद्विजः॥२१॥
किञ्चिद्दायादिकंदेयंजामातुःपारितोषिकम् ॥ तच्छ्रुत्वाककेशाक्रुद्धाप्रोद्धृत्यगृहमंडपम् ॥२१॥ कपाटेसुस्थिरंकृत्वागम्यतामित्युवाचह ॥
भोज्यावशिष्टचूर्णेनपाथेयंचचकारसा ॥२३॥ कौंडिन्योपिविवाह्यैनांपथिगच्छञ्छनैःशनैः॥ शीलांसुशीलामादायनवोढांगोरथेनाहि ॥२४॥
मध्याह्नेभोज्यवेलायांसमुत्तीर्यसरित्तटे ॥ ददर्शशीलासास्त्रीणांसमूहंरक्तवाससाम् ॥ २५ ॥ चतुर्दश्यामर्चयंतंभक्त्यादेवंपृथक्पृथक् ॥उपग
म्यशनैःशीलापप्रच्छस्त्रीकदंबकम् ॥२६॥ नार्यःकिमेतन्मेब्रूतकिंनामव्रतमीदृशम्॥ताऊचुर्योषितःसर्वाअनंतोनामविश्रुतः॥२७॥साब्रवीदह
मप्येवंकरिष्येव्रतमुत्तमम्॥विधानंकीदृशंतत्रकिंदानंकस्यपूजनम् ॥२८॥ ॥ स्त्रियऊचुः ॥ ॥ शीलेपक्वान्नप्रस्थस्यपुन्नाम्नःसुकृतस्यतु॥
अर्द्धंविप्रायदातव्यमर्द्धमात्मनिभोजनम् ॥ २९ ॥ कर्तव्यंतुसरित्तीरेकथांश्रुत्वाहरेरिमाम्॥ अनंतानंतमभ्यर्च्यमंडलेगन्धदीपकैः ॥ ३० ॥
धूपैःपुष्पैःसनैवेद्यैःपीतालक्तैश्चतुःशतैः॥तस्याग्रतोदृढंसूत्रंकुंकुमाक्तंसुदोरकम् ॥३१ ॥ चतुर्दशग्रंथियुतंवामेस्त्रीदक्षिणेपुमान् ॥ मंत्रेणानेन
राजेन्द्रयावद्वर्षंसमाप्यते॥३२॥अनंतसंसारमहासमुद्रेमग्नान्समभ्युद्धरवासुदेव॥अनंतरूपेविनियोजितात्माअनंतरूपायनमोनमस्ते ॥३२॥
अनेनदोरकंबद्ध्वाभोक्तव्यंस्वस्थमानसैः ॥ ध्यात्वानारायणंदेवमनंतंविश्वरूपिणम् ॥ ३४ ॥ भुक्त्वाचांतेव्रजेद्वेश्ममिदंप्रोक्तंव्रतंतव ॥
सापिश्रुत्वाव्रतंचक्रेशीलाबद्ध्वासुदोरकम् ॥ ३५ ॥ भर्तातस्याःसमागत्यतांददर्शमहाधनाम्॥पाथेयशेषंविप्रायदत्त्वाभुक्त्वातथैवच॥३६॥
पुनर्जगामसाहृष्टागोरथेनस्वमाश्रमम् ॥ भर्त्रासहैवशनकैःप्रत्यक्षंतत्क्षणादभूत् ॥ ३७ ॥ तेनानंतप्रभावेनशुभगोधनसंकुलम् ॥
गृहाश्रमंश्रियायुक्तंधनधान्यसमायुतम् ॥३८॥ आकुलंव्याकुलंरम्यंसर्वत्रातिथिपूजनम्॥सापिमाणिक्यकाञ्चीभिर्मुक्ताहारविभूषिता॥३९॥
दिव्याङ्गवस्त्रसंछन्नासावित्रीप्रतिमाभवत् ॥ कदाचिदुपविष्टेनदृष्टंबद्धंसुदोरकम् ॥ ४० ॥ शीलायाहस्तमूलेतुसाक्षेपंत्रोटितंरुषा ॥

१ वामे करतले न्यसेत्–इ०पा । २ तेनानंतव्रतेनास्य बभौ–इ०पा० ।

तेनकर्मविपाकेनतस्यसाश्रीःक्षयंगता ॥ ४१ ॥ गोधनंतस्करैर्नीतंगृहंचाग्निविदाहितम् ॥ यद्यदेवागतंगेहेतत्रतत्रैवनश्यति ॥ ४२ ॥
स्वजनैःकलहोमित्रैर्वचनंनजनैस्तथा ॥ अनंताक्षेपदोषेणदारिद्र्यंपतितंगृहे ॥ ४३ ॥ नकश्चिद्वदतेलोकस्तेनसार्द्धंयुधिष्ठिर ॥ ततोजगा
मकौंडिन्योनिर्वेदाद्गनगह्वरम् ॥ ४४ ॥ मनसाध्यायतेनंतंकदाद्रक्ष्यामिकेशवम् ॥ व्रतंनिरशनंगृह्यब्रह्मचर्यंजपन्हरिम् ॥ ४५ ॥
विह्वलःप्रययौपार्थअरण्यंजनवर्जितम् ॥ तत्रापश्यन्महावृक्षंफलितंपुष्पितंतथा ॥ ४६ ॥ तमपृच्छत्त्वयानंतःकच्चिद्दृष्टोमहाद्रुम ॥
तद्ब्रूहिसोप्युवाचेदंनानन्तंवेद्म्यहंद्विज ॥ ४७ ॥ एवंनिरीक्षितस्तेनगांददर्शसवत्सकाम् ॥ तृणमध्येप्रधावंतीमितश्चेतश्चपांडव ॥ ४८ ॥
सोब्रवीद्धेनुकेब्रूहियद्यनंतस्त्वयेक्षितः ॥ गौरुवाचाथकौंडिन्यंनानंतंवेद्म्यहंविभो ॥ ४९ ॥ ततोजगामाथवनेगोवृषंशाड्वलेस्थितम् ॥
दृष्ट्वापप्रच्छगोस्वामिन्ननन्तोलक्षितस्त्वया ॥५०॥ गोवृषस्तमुवाचाथनानंतोवीक्षितोमया॥ ततोव्रजन्ददर्शाग्रेरम्यंपुष्करिणीद्वयम् ॥५१॥
अन्योन्यजलकल्लोलवीचिभिःपरिशोभितम् ॥ छन्नंकुमुदकह्लारैःकुमुदोत्पलमंडितम् ॥ ५२ ॥ सेवितंभ्रमरैर्हंसैश्चक्रैःकारंडवैर्बकैः ॥
तमपृच्छद्द्विजोनंतोभवद्भ्यांनोपलक्षितः ॥ ५३ ॥ ऊचतुःपुष्करिण्यौतंनानन्तंविद्महेद्विज ॥ ततोब्रह्मन्ददर्शाग्रेगर्दभंकुञ्जरंतथा ॥ ५४ ॥
तावप्युक्तौसुमंतेनतस्यापिविनिवेदितम् ॥ नावाभ्यांवीक्षितोनंतस्तच्छ्रुत्वानिषसादह ॥ ५५ ॥ तस्मिन्क्षणेमुनिवरेकौंडिन्येब्राह्मणोत्तमे ॥
कृपयानंतदेवोपिप्रत्यक्षःसमजायत ॥ ५६ ॥ वृद्धब्राह्मणरूपेणइतएहीत्युवाचतम् ॥ प्रवेशयित्वास्वगृहंगृहीत्वादक्षिणेकरे ॥ ५७ ॥
तांपुरींदर्शयामासदिव्यनारीनरैर्युताम् ॥ तस्यांनिविष्टमात्मानंवरसिंहासनेनृप ॥ ५८ ॥ पार्श्वस्थशंखचक्रासिगदागरुडशोभितम् ॥
दर्शयामासविप्रायपूर्वोक्तंविश्वरूपिणम् ॥ ५९ ॥ विभूतिभेदैश्चानन्तमनन्तंपरमेश्वरम् ॥ तंदृष्ट्वातुद्विजोनन्तमुवाचपरयामुदा ॥ ६० ॥
पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहिमांपुण्डरीकाक्षसर्वपापहरोभव ॥ ६१ ॥ अद्यमेसफलंजन्मजीवितंचसुजीवितम् ॥ चूतवृ
क्षोवृषःकस्तुकागौःपुष्करिणीद्वयम् ॥६२॥ गर्दभंकुञ्जरंचैवदेवमेब्रूहितत्त्वतः ॥ अनंतउवाच॥चूतवृक्षोहिविप्रोसौविद्वान्योवेदगर्वितः॥६३॥
विद्यादानंनोपकुर्वञ्छिष्येभ्यस्तरुतांगतः ॥ सागौर्वसुन्धरादृष्टानिष्फलायात्वयेक्षिता ॥६४॥ सहर्षोवृषभोदृष्टोलभार्थ्यस्त्वयावृतः॥धर्मा

१ आसीददानाच्छास्त्रस्य–इ०पा० ।

धर्मव्यवस्थानंतच्चपुष्करिणीद्वयम् ॥ ६५ ॥ खरःक्रोधस्त्वयादृष्टःकुंजरोधर्मदूषकः ॥ ब्राह्मणोसावनंतोहंगुहासंसारगह्वरे ॥ ६६ ॥ इत्यु
क्तंतेमयासर्वंविप्रगच्छपुनर्गृहम् ॥ चरानंतव्रतंतत्त्वंनववर्षाणिपंचच ॥ ६७ ॥ ततस्तुष्टःप्रदास्यामिनक्षत्रस्थानमुत्तमम् ॥ भुक्त्वाचावि
पुलान्भोगान्सर्वान्कामान्यथेप्सितान् ॥ ६८ ॥ पुत्रपौत्रैःपरिवृतस्ततोमोक्षमवाप्स्यसि ॥ इतिदत्वावरोदेवस्तत्रैवांतरधीयत ॥ ६९ ॥
कौंडिन्योप्यागतोगेहेचचारानंतसद्व्रतम् ॥ शीलयासहधर्मात्माभुक्त्वाभोगान्मनोरमान् ॥७०॥ अंतेजगामचस्वर्गेनक्षत्रंचपुनर्वसुम् ॥ कल्प
स्थायीचसंभूतोदृश्यतेद्यापिसज्वलन् ॥७१॥ अनंतव्रतधर्मेणसम्यक्चीर्णेनकौरव ॥ एतत्तेकथितंपार्थव्रतानामुत्तमंव्रतम् ॥७२॥ यत्कृत्वास
र्वपापेभ्योमुच्यतेनात्रसंशयः ॥७३॥ येचशृण्वंतिसततंवाच्यमानंनरोत्तम ॥ तेसर्वेपापनिर्मुक्तायास्यंतिपरमांगतिम् ॥७४॥ संसारसागरगुहा
सुसुखंविहर्तुंवांछंतियेकुरुकुलोद्भवशुद्धसत्वाः ॥ संपूज्यतेत्रिभुवनेशमनंतदेवंबध्नंतिदक्षिणकरेवरदोरकंमे ॥७५॥ इति श्रीभविष्येमहापुराणे
उत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेअनंतचतुर्दशीव्रतंनामचतुर्नवतितमोऽध्यायः ॥ ९४ ॥ छ ॥ युधिष्ठिरउवाच ॥ लोकेप्रसिद्धाःश्रूयंतेश्रव
ण्योनामदेवताः ॥ एताःकाःकिंचकुर्वंतिधर्मंचासांब्रवीहिमे ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ विद्यंतेदेवताःपुण्याःश्रवण्योनामपांडव ॥
ब्रह्मणाप्रथमंसृष्टानियोगंचजनेकृतम् ॥ २ ॥ योयंवदतिलोकेस्मिञ्छुभंवाप्यथवाशुभम् ॥ श्राणयंतिहितंशीघ्रंब्राह्मणाःकर्मगोचरम् ॥ ३ ॥
जातास्त्रिलोकेपूज्यास्तुनियमेनप्रजायते ॥ दूराच्छ्रवणविज्ञानंदूराद्दर्शनगोचरम् ॥ ४ ॥ तासामस्तीहसाशक्तिरचिन्त्यातर्कहेतुभिः ॥
नरैस्तुष्टैश्चयत्प्रोक्तंकार्याकार्यस्यकारणात् ॥ ५ ॥ तंशृण्वंतियतःपार्थनैकाश्रावणिकामताः ॥ यथादेवायथादैत्यायथाविद्याधरानराः ॥६॥
यथाहिसिद्धगन्धर्वानागाःकिंपुरुषाःखगाः ॥ राक्षसाश्चपिशाचाश्चदेवानामष्टयोनयः ॥ ७ ॥ तथैताःपुण्यनामानोवंद्याःश्रावणिकाःस्मृताः ॥
ताःसमुद्दिश्यकर्तव्यंव्रतंनारीनरैरिह ॥ ८ ॥ किंतुतासांमहोग्रंतुव्रतंसंयमनंतदा ॥ आघ्रायधूपंपक्वान्नंजलंचागन्धमेवच ॥ ९ ॥
दातव्यंपुनरन्यासांनारीणांभोज्यपारणा ॥ अदत्वायदिमृत्युःस्याद्दंतरालेपिपांडव ॥ १० ॥ तदालग्नग्रहैर्ग्रस्तालग्नाह्युपरिकारटम् ॥
सफेनिलैर्मुखैरौद्रैर्म्रियंतेनीचदुःखिताः ॥ ११ ॥ श्रूयंतेहिपुरापार्थपृथिव्यांनहुषोनृपः ॥ तस्यभार्यामहादेवीजयश्रीर्नामभारत ॥१२॥

प्रत्यक्षरूपसंपन्नादर्शनीयतराशुभा ॥ पीवरोरुस्तनाश्यामामृदुकुञ्चितमूर्द्धजा ॥ १३ ॥ शब्दगद्गदसंभाषामत्तमातंगगामिनी ॥
यथारूपातथाशीलासतीचेष्टामहीतले ॥ १४ ॥ साकदाचिद्गतास्नातुंगंगायांसाश्रमेमुनेः ॥ वसिष्ठस्यददर्शाथसतींभार्यामरुं
धतीम् ॥ १५ ॥ भोजयंतिमुनीनांतुपत्न्योनानान्नभोजनैः ॥ तयाचप्रणिपत्याथपृष्टादेव्यामहासती ॥ १६ ॥ पूज्यंभगव
तिब्रूहिकिमेतद्व्रतमुच्यते ॥ अरुन्धत्युवाच ॥ जयश्रियेशृणुष्वत्वंनाम्नाश्रवणिकाव्रतम् ॥ १७ ॥ एतद्व्रतंसमाख्यातंवासिष्ठेनमहर्षिणा ॥
गूढंब्रह्मर्षिसर्वस्वंसुपतिव्रतकंशुभम् ॥ १८ ॥ गच्छवातिष्ठवाराज्ञितवातिथ्यंकरोम्यहम् ॥ एवमुक्ताजयश्रीस्तुभोज्येतस्मिन्यदृच्छ
या॥१९॥बुभुजेसापितत्रैवअरुंधत्याकृतादरात् ॥भुक्त्वाचम्यजगामाथस्वपुरंपरमेश्वरम् ॥२०॥कालेनविस्मृतंतस्यास्तद्व्रतंतस्यभोजने ॥
ततस्तुसमयेपूर्णेम्रियमाणामहासती ॥ २१ ॥ जयश्रीर्घर्घरांगंतुकुर्वाणाकंठगद्गदम् ॥ फेनंलालाविलाद्वक्त्रादुद्गिरंतीमुहुर्मुहुः ॥ २२ ॥
स्थितापंचदशाहानिबीभत्सादारुणानना ॥ ततःषोडशमेप्राप्तेदिनेस्वयमरुंधती ॥ २३ ॥ प्रतिश्याभ्यंतरंपूर्णांतांराज्ञीमवलोक्यच ॥
नहुषायसमाचख्यौयदुक्तंश्रवणीव्रते ॥ २४ ॥ तच्छ्रुत्वानहुषोराजाद्रुतंभोज्यंप्रचक्रमे ॥ यथोक्तंतदरुंधत्यायच्चयावदभीप्सितम् ॥ २५ ॥
दत्वाचकरकानष्टौतामुद्दिश्यजयश्रियम् ॥ क्षणाज्जगामपञ्चत्वंकरकाणांप्रदानतः ॥ २६ ॥ जगामशक्रलोकंसाविमानेनार्कवर्चसा ॥
दोधूयमानाचमरैःस्तूयमानासुरासुरैः ॥ २७ ॥ ॥ युधिष्ठिरउवाच ॥ मार्गशीर्षादिमासेषुद्वादशस्वपिपांडव ॥ द्रव्यप्राप्तिश्चभक्तिश्चदान
कालेप्रशस्यते ॥ २८ ॥ भुक्त्वायज्ञेचतुर्दश्यामष्टम्यांवायुधिष्ठिर ॥ व्रतीस्नात्वातुपूर्वाह्णेनद्यादौविमलेजले ॥ २९ ॥ आमंत्रयेद्दशैकैका
नारीगौरीस्वरूपिणीः ॥ यदाचाराःसुवेषाश्चब्राह्मण्योवास्वगोत्रजाः ॥३०॥ द्वादशब्राह्मणांस्तत्रवेदवेदांगपारगान् ॥ मंत्रज्ञानितिहासज्ञानु
पशांताञ्जितेन्द्रियान् ॥ ३१ ॥ सर्वदद्याद्विधानेनपादक्षालनपूर्वकम् ॥ चंदनेनसुगन्धेनपुष्पधूपादिनातथा ॥ ३२ ॥ ग्रीवासूत्रकसिंदूरकुं
कुमेनचभूषयेत् ॥ तासामग्रेप्रदातव्यावर्द्धन्योद्वादशैवतु ॥३३॥ अच्छिद्राजलपूर्णास्तुसुवृत्ताःसूत्रवेष्टिताः॥सोहालकादिभिश्छन्नाःपुष्पमा
लाविभूषिताः ॥३४॥ चंदनेनसमालब्धाःसहिरण्याःपृथक्पृथक् ॥ तन्मध्येवर्द्धनींचैकास्वकेशीर्षेनिवेशयेत्॥३५॥स्थित्वामण्डलकेमध्ये

यजमानःस्वयंतदा॥यद्बाल्येयच्चकौमारेवार्द्धकेवापियत्कृतम् ॥३६॥ तत्सर्वंनाशमायातुपितृदेवर्षिणांनृणाम्॥इमामेसमयंस्वर्णंतारयस्वभ
वार्णवात्॥३७॥अद्याहंगंतुमिच्छामिविष्णोःपदमनुत्तमम् ॥ एवमस्त्वितिताब्रूयुःस्त्रियःसर्वायुधिष्ठिर ॥ ३८ ॥ ततोब्राह्मणमाहूययजमान
इदंवदेत् ॥ ब्रूहिब्राह्मणयन्मेत्वमघंयेनक्षयंव्रजेत् ॥ ३९ ॥ उत्तीर्यश्रावणंमासंसमुत्तारयसांप्रतम् ॥ उत्तारयीतमंत्रेणब्राह्मणोवर्धनीं
चताम् ॥४०॥ उपोष्यशिरसोदेव्याःसमुत्तीर्यरुहद्द्रुमान् ॥ कटुकंनिंबवृक्षंवाततोमधुकमारुह ॥४१॥ ततोगच्छमहादेवंश्रवणेश्रवणोत्तमे ॥
वर्धनिकोत्तारणमंत्रः ॥ एवंताःसमयंप्रोक्त्वादत्त्वाशीर्वचनानिच ॥४२॥ तांवर्द्धनिकामेकान्तेविप्रायप्रतिपादयेत् ॥ गृहीत्वाकरकान्नार्य्यो
व्रजेयुःस्वेषुवेश्मसु ॥ ४३ ॥ यजमानोऽपियातासुयथेष्टंकाममाचरेत् ॥ एवमाचरतेपार्थश्रावणीव्रतमादरात् ॥ ४४ ॥ तस्यकालेतुसं
प्राप्तेसुखंमृत्युःप्रजायते ॥ निर्व्याधिर्नीरुजोभोगीस्थित्वास्थित्वाशतंसुखम् ॥४५॥ पुत्रपौत्रसमृद्धाढ्यौभुक्त्वामर्त्यसुखानिच ॥ रुद्रलोकम
वाप्नोतिसोमलोकंसगच्छति ॥ ४६ ॥ स्त्रीणांतुल्यंसहीनोऽपिव्रतीव्रतफलंभवेत् ॥ गौरीभोज्येषुदत्तेषुएकादशसुयत्फलम् ॥ ४७ ॥
तदेकेनापिलभतेपार्थश्रवणिकाव्रते ॥ भक्त्यागच्छंतितेलोकान्विहृत्यसुखमादरात् ॥ ४८ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणि
श्रीकृष्णयुधिष्ठिरसंवादेश्रवणिकाव्रतंनामपंचनवतितमोऽध्यायः ॥९५॥छ॥ श्रीकृष्णउवाच ॥ अथनक्तोपवासस्यविधानंशृणुपांडव ॥ येन
विज्ञातमात्रेणनरोमोक्षमवाप्नुयात् ॥ १ ॥ येषुतेषुचमासेषुशुक्लपक्षेचतुर्दशीम् ॥ ब्राह्मणंभोजयित्वातुप्रारभेत्तुततोव्रतम् ॥ २ ॥ मासिमा
सिभवंतिद्वावष्टम्यौचचतुर्दशी ॥ शिवार्चनरतोभूत्वाशिवध्यानैकमानसः ॥ ३ ॥ वसुधाभाजनंकृत्वाभुञ्जीयान्नक्तभोजनम् ॥ उपवा
सात्परंभैक्ष्यंभैक्ष्यात्परमयाचितम् ॥ ४ ॥ अयाचितात्परंनक्तंतस्मान्नक्तेनभोजयेत् ॥ देवैश्चभुक्तंपूर्वाह्णेमध्याह्नेमुनिभिस्तथा ॥ ५ ॥
अपराह्णेचपितृभिःसंध्यायांगुह्यकादिभिः ॥ सर्वलोकानतिक्रम्यनक्तभोजीसदाभवेत् ॥ ६ ॥ हविष्यभोजनंस्नानंसत्यमाहारलाघवम् ॥
अग्निकार्यमधःशय्यानक्तभोजीसदाभवेत् ॥ ७ ॥ एवंसंवत्सरस्यांतेव्रतंपूर्णस्यसर्पिषः ॥ पूर्णकुंभोपरिस्थाप्यपूजयेच्चसुशोभने ॥८॥
कपिलापंचगव्येनस्थापयेन्मृन्मयंशिवम् ॥ फलंपुष्पंयवक्षीरंदधिदर्भांकुरांस्तथा ॥ ९ ॥ तत्कुंभांश्चजलोन्मिश्रमर्घमष्टाङ्गमुच्यते ॥

शिरसाधारयित्वातुजानूकृत्वामहीतले ॥ १० ॥ महादेवायदातव्यंगंधपुष्पंयथाक्रमम् ॥ भक्ष्यौदनैर्बलिंकृत्वाप्रणम्यपरमेश्वरीम् ॥ ११ ॥
धेनुंवादक्षिणांदद्याद्वृषंवापिधुरंधरम् ॥ श्रोत्रियायदरिद्रायकल्पव्रतविदायच ॥ १२ ॥ योददातिशिवेभक्त्यातस्यपुण्यफलंशृणु ॥
विमानमर्कप्रतिमंहंसयुक्तमलंकृतम् ॥ १३ ॥ आरूढोऽप्सरसांगीतैर्यातिरुद्रालयेसुखम् ॥ स्थित्वारुद्रस्यभवनेवर्षकोटिशतत्रयम् ॥
॥ १४ ॥ इहलोकेनृपश्रेष्ठग्रामलक्षेश्वरोभवेत् ॥ १५ ॥ यश्चाष्टमीषुचशिवासुचतुर्दशीषुनक्तंसमाचरतिशास्त्रविधानदृष्टम् ॥
स्वर्गांगनाकलरवाकुलितंविमानमारुह्ययातिससुखेनसुरेशलोकम् ॥ १६ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसं
वादेषण्णवतितमोऽध्यायः ॥ ९६ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुष्वावहितोराजन्वक्ष्येमाहेश्वरंव्रतम् ॥ त्रिषुलोके
षुविख्यातंनाम्नाशिवचतुर्दशी ॥ १ ॥ मार्गशीर्षेत्रयोदश्यांसितायामेकभुङ्नरः ॥ मासेष्वन्येषुवाराजन्पार्थएवंनकारयेत् ॥ २ ॥
चतुर्दश्यांनिराहारःसमभ्यर्च्यमहेश्वरम् ॥ सौवर्णवृषभंदत्त्वावक्ष्यामिचपरेऽहनि ॥ ३ ॥ एवंनियमकृत्सुप्त्वाप्रातरुत्थायमानवः ॥
कृतस्नानजपःपश्चादुमयासहशंकरम् ॥ ४ ॥ पूजयेत्कुसुमैःशुक्लैर्गंधधूपानुलेपनैः ॥ पादौनमःशिवायेतिशिरःसर्वात्मनेनमः ॥ ५ ॥
ललाटंतुत्रिनेत्रायनेत्राणिहरयेनमः ॥ मुखमिन्दुमुखायेतितथेशानायचोदरम् ॥ ६ ॥ पार्श्वौचानंतधर्मायज्ञानरूपायवैकटिम् ॥
ऊरूचानन्त्यवैराग्यजानुनीचार्चयेद्बुधः ॥ ७ ॥ प्रधानायनमोजंघेगुल्फौव्योमात्मनेनमः ॥ व्योमव्योमात्मरूपायपृष्ठमभ्यर्चयेन्नरः ॥ ८ ॥
नमःसृष्ट्यैनमस्तुष्ट्यैपार्वतींचापिपूजयेत् ॥ ततश्चवृषभंहैममुदकुंभसमन्वितम् ॥९॥ शुक्लमाल्यांबरयुतंपञ्चरत्नविभूषितम् ॥ भक्ष्यैर्नाना
विधैर्युक्तंब्राह्मणायनिवेदयेत् ॥ १० ॥ प्रीयतांदेवदेवोऽत्रसद्योजातःपिनाकधृक् ॥ पृषदाज्यंचसंप्राश्यस्वपेद्भूमावुदङ्मुखः ॥ ११ ॥ पञ्चद
श्यांततःप्रातःसर्वमेतत्समाचरेत् ॥ तर्पयित्वाततोन्नेनब्राह्मणाञ्छक्तितःशुभान् ॥ १२ ॥ सुहृत्पदातिसहितःपश्चाद्भुञ्जीतवाग्यतः ॥
ततःकृष्णचतुर्दश्यामेतत्सर्वंसमाचरेत् ॥ १३ ॥ चतुर्दशीषुसर्वासुकुर्यात्पूर्ववदर्चनम् ॥ येचमासेविशेषाःस्युस्तान्निबोधक्रमादिह ॥१४॥
मार्गशीर्षादिमासेषुस्वपन्नेतानुदीरयेत् ॥ शंकरायनमस्तुभ्यंनमस्तेकरवीरक ॥ १५ ॥ त्र्यंबकायनमस्तुभ्यंमहेश्वरमतःपरम् ॥ नम

स्तेऽस्तुमहादेवस्थाणवेचततःपरम् ॥ १६ ॥ नमःपशुपतेनाथनमस्तेशंभवेनमः ॥ नमस्तेपरमानंदनमःसोमार्द्धधारिणे ॥ १७ ॥
नमोभीमायचोग्रायत्वामहंशरणंगतः ॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् ॥ १८ ॥ पंचगव्यंतथाबिल्वंयवागूक्षीरवारिजम् ॥
तिलांश्चकृष्णान्विधिवत्प्राशयेत्समुदाहृतम् ॥१९॥ प्रतिमासंचतुर्दश्यामेकैकंप्राशनंस्मृतम् ॥ मंदारैर्मालतीभिश्चतथाधत्तूरकैरपि ॥२०॥
सिंदुवारैरशोकैश्चमल्लिकाकुब्जपाटलैः ॥ अर्कपुष्पैःकदंबैश्चशतपत्रैस्तथोत्पलैः ॥ २१ ॥ करवीरैश्चराजेंद्रतथापूज्योमहेश्वरः ॥
एकैकेनचतुर्दश्यामर्चयेत्पार्वतीपतिम् ॥ २२ ॥ पुनश्चकार्तिकेमासिसंप्राप्तेतर्पयेद्द्विजान् ॥ अन्नैर्नानाविधैर्भक्ष्यैर्वस्त्रैर्माल्यविभूषणैः ॥
॥२३॥कृत्वानीलंवृषोत्सर्गंश्रुत्युक्तविधिनानरः ॥ उमामहेश्वरंहैमंवृषभंचगवासह ॥ २४ ॥ मुक्ताफलाष्टकयुतंसितनेत्रपटावृतम् ॥
सर्वोपस्करयुक्तायांशय्यायांविनिवेदयेत् ॥ २५ ॥ उदकुंभयुतंतद्वच्छालितंदुलसंयुतम् ॥ स्थाप्यविप्रायशांतायवेदव्रतपरायच ॥ २६ ॥
ज्येष्ठसामविदेदेयंनचकुर्वीतितेक्वचित् ॥ अव्यंगगायसौम्यायसदाकल्याणकारिणे ॥ २७ ॥ सपत्नीकायसंपूज्यमाल्यवस्त्रविभूषणैः ॥
नवित्तशाठ्यंकुर्वीतकुर्याल्लोभात्पतत्यधः ॥२८॥ अनेनविधिनायस्तुकुर्याच्छिवचतुर्दशीम्॥सोऽश्वमेधसहस्रस्यफलंप्राप्नोतिमानवः॥२९॥
ब्रह्महत्यादिकंपापंयदत्रामुत्रवाकृतम्॥पितृभिर्मातृभिर्वापितत्सर्वंनाशमाप्नुयात् ॥३०॥दीर्घायुरारोग्यकुलाभिवृद्धिरत्राक्षयान्यत्रचतुर्भुजत्व
म्॥गणाधिपत्यंदिविकल्पकोटीस्वर्गेवसित्वापदमेतिशंभोः॥३१॥नबृहस्पतिरप्येतन्नरस्यफलमिंद्रोनपितामहोऽपिवक्तुम् ॥ नचासिद्धगणोऽ
प्यलंनवाहंयदिजिह्वायुतकोप्यपिवक्त्रे॥३२॥भवत्यमरवल्लभःपठतियःस्मरेद्वासदाशृणोत्यपिविमत्सरःसकलपापनिर्मोचनम्॥इमांशिवचतु
र्दशीममरकामिनीकोटयःस्तुवंतिदिविनंदिताःकिमुसमाचरेद्यःसदा॥३३॥यापार्थनारीकुरुतेऽतिभक्त्याभर्तारमापृच्छ्यचशुभंगुरुंवा ॥ सा
पिप्रसादात्परमेश्वरस्यपरंपदंयातिपिनाकपाणेः ॥३४॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेशिवचतुर्दशीव्रतंनाम
सप्तनवतितमोऽध्यायः ॥९७॥छ॥ ॥ श्रीकृष्णउवाच ॥ ॥ तथासर्वफलत्यागमाहात्म्यंशृणुभारत॥यदक्षयंपरेलोकेसर्वकामफलप्रदम्॥१॥

---

१ माल्यानुलेपनैः—इ०पा० ।

मार्गशीर्षेशुभेमासिचतुर्दश्यांधृतव्रतः ॥ आरंभेशुक्लपक्षस्यकृत्वाब्राह्मणवाचनम् ॥ २ ॥ अन्येष्वपितुमासेषुअष्टम्यांनरसत्तम ॥ सदक्षिणापायसेनशक्तितःपूजयेद्विजान् ॥ ३ ॥ अष्टादशानांधान्यानामन्यत्रफलमूलकम् ॥ वर्जयेदब्दमेकंतुविधिनौषधकारकम् ॥ ४ ॥ ततःसंवत्सरस्यांतेचतुर्दश्यष्टमीषुच ॥ अशक्तश्चव्रतंकर्तुंसहसैवप्रमुच्यते ॥ ५ ॥ सौवर्णंकारयेद्रुद्रंधर्मराजंतथैवच ॥ कूष्माण्डंमातुलुंगंचवृंताकंपनसंतथा ॥६॥ आम्राम्रातकपित्थंचकलिंगंसेर्वारुकम्॥श्रीफलंसवटाश्वत्थंजंबीरंकदलीफलम् ॥ ७ ॥ बदरंदाडिमंशक्त्याकार्याण्येतानिषोडश ॥ मूलकामलकंजंबूपुष्करंकरमर्दकम् ॥ ८ ॥ उदुंबरंनालिकेरंद्राक्षाचबृहतीद्वयम् ॥ कंकालीकाकतुंडीरकरीरकुटजंशमी ॥ ९ ॥ रौप्याणिकारयेच्छक्त्याफलानीमानिषोडश ॥ ताम्रंतालफलंकुर्यादगस्त्यफलमेववा ॥१० ॥ पिंडीरकंचखर्जूरंतथासूरणकंदकम्॥पनसंलकुचंचैवकर्कटंतिंतिडिंतथा ॥ ११ ॥ चित्रावल्लीफलंतद्वत्कूटशाल्मलिकाफलम् ॥ मधूकंकारवेल्लंचवल्लींगुदपटोलकम्॥ १२ ॥ कारयेच्छक्तितोधीमान्फलान्येतानिषोडश ॥ उदकुंभद्वयंकुर्याद्धान्योपरिसवाससम् ॥१३॥ पक्षपात्रद्वयोपेतंयमरुद्रसमन्वितम् ॥ धेन्वासहैवशांतायविप्रायाथकुटुंबिने ॥ १४ ॥ सपत्नीकायसंपूज्यपुण्येह्नि निवेदयेत् ॥ यथाफलेषुसर्वेषुवसंत्यमरकोटयः ॥ १५ ॥ तथासर्वफलत्यागाच्छिवेभक्तिःसदास्तुमे ॥ यथाशिवश्चधर्मश्चसदानन्तफलप्रदौ ॥ १६ ॥ तद्युक्तफलदानेनतौस्यातांमेवरप्रदौ ॥ यथाफलानाकामस्याशिवभक्तस्यसर्वदा ॥ १७ ॥ यथानंतफलावाप्तिरस्तुजन्मनिजन्मनि ॥ यथाभेदंनपश्यामिशिवविष्णवर्कपद्मजाम् ॥ १८ ॥ तथाममास्तुविश्वात्माशङ्करःशङ्करःसदा ॥ इत्युच्चार्यचतत्सर्वमलंकृत्यविभूषणैः ॥ १९ ॥ शक्तश्चेच्छयनंदद्यात्सर्वोपस्करसंयुतम् ॥ अशक्तस्तुफलान्येवयथोक्तानिविधानतः ॥ २० ॥ तथोदकुंभसहितौशिवधर्मौचकांचनौ ॥ विप्रायदत्त्वाभुञ्जीततैलक्षारविवर्जितम्॥२१॥ अन्यानपियथाशक्त्याभोजयेद्द्विजपुङ्गवान् ॥ नशक्नोतिविहातुंचेत्सर्वाण्यपिफलान्युत ॥ २२ ॥ एकमेवपरित्यज्यतादित्थंप्रतिपादयेत् ॥ एतत्त्यागव्रतानांतुगवैवैष्णवयोगिनाम् ॥ २३ ॥ शस्तंसर्वफलत्यागंव्रतंवेदविदोविदुः ॥ नारीभिश्चयथाशक्त्याकर्तव्यंराजसत्तम ॥ २४ ॥ नैतस्मादपरंकिञ्चिदिहलोकेपरत्रच ॥ व्रतमस्तिमुनिश्रेष्ठयदनंतत्फलप्रदम् ॥२५॥ सौवर्णरौप्यताम्रेषुयावंतःपरमाणवः ॥ भवंतिचूर्ण्यमाणे

षुफलेषुनृपसत्तम ॥२६॥ तावद्युगसहस्राणिरुद्रलोकेमहीयते ॥ २७॥ एतत्समस्तकलुषापहरंजनानामाजीवनायमनुजेश्वरसर्वदास्यात् ॥
जन्मान्तरेष्वपिनपुत्रकलत्रदुःखमाप्नोतिधामसपुरंदरएवजुष्टम् ॥ २८॥ योवाशृणोतिपुरुषोल्पधनोनरोवायोब्राह्मणस्तुभवनेषुचधार्मिका
णाम् ॥ पापैर्विमुक्तश्चपरत्रपुरंमुरारेरानंदकृत्परमुपैतिनरेन्द्रसोपि ॥ २९ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिर
संवादेफलत्यागचतुर्दशीव्रतवर्णनंनामाष्टनवतितमोऽध्यायः ॥ ९८ ॥ ॥ छ ॥ ॥ श्रीकृष्णउवाच ॥ पूर्णमासीमहाराजन्सो
मस्यदयितातिथिः ॥ पूर्णमासोभवेद्यस्यांपौर्णमासीततःस्मृता ॥ १ ॥ पौर्णमास्यांचसंजातःसंग्रामोजयलक्षणः ॥ सोमस्यारिबुधैःसार्द्धं
सर्वसत्वभयंकरम् ॥ २ ॥ तारायांचन्द्रमाःसक्तस्तस्याभर्ताबृहस्पतिः ॥ तयोरभून्महायुद्धंभार्याकृत्येषुतेपुरा ॥ ३ ॥ ॥ युधिष्ठिरउवाच॥
ताराकस्यसुताकस्मात्सक्रुद्धःससुरारिहा॥सोमेनसहसंग्रामंचक्रेचक्रगदाधर ॥४॥ ॥ श्रीकृष्णउवाच॥ ॥प्रजापतेरभूत्कन्यातारावृत्रस्यचा
नुजा ॥ तांबृहस्पतयेप्रादात्पृथिव्यामेकसुंदरीम् ॥ ५ ॥ देवाचार्यसभार्यात्वनिर्देश्यातथाविधा । रूपेणाभ्यांरूपवतीसानिर्धूयव्य
वस्थिता ॥ ६ ॥ बृहस्पतिंपर्यचरद्यथाचान्याःस्त्रियःक्वचित् ॥ तांददर्शायतापांगींतन्वंगींचारुहासिनीम् ॥ ७ ॥ शीतांशुर्दर्शनादेव
कामस्यवशमीयिवान् ॥ आबभाषेचमधुरंतारेएह्येहिमाचिरम् ॥ ८ ॥ इंगिताकारकुशलातारासोमस्यचेष्टितम् ॥ बुद्ध्वाशुद्धिमथो
तन्वीप्राहेदंमधुराक्षरम् ॥ ९ ॥ मुनेरंगिरसःपुत्रस्त्वंचसोम्योऽसिसोमराट् ॥ अंगिरसोमुनेर्वीरस्नुषाहमुचितंनते ॥ १० ॥ सहसौम्येन
योयोगस्तवसिद्धोऽद्भुतोमहान् ॥ अंगिरास्त्वांकिलपुरासुरासुरराक्षसैः॥११॥राजत्वेस्थापयामासनैतत्स्मरसिकिंविधो ॥ कथमद्यनिशा
नाथह्यनंगेनासिपीडितः ॥ १२ ॥ तस्माद्ब्रवीमिसिद्धचंतेरोचयेघटितंकुरु ॥ परवत्यस्मिभद्रंतेनगम्यास्मिबुधोत्तम ॥ १३ ॥ एवमु
क्तस्तथाचासौनचैतत्कृतवांस्ततः ॥ गृहीत्वाकर्षयामाससोमोऽनंगवशीकृतः ॥ १४ ॥ बृहस्पतिस्तुतांज्ञात्वासतंसोममगर्हयत् ॥ प्रेष
यिष्यतिमेभार्यांस्वयमेवममांतिकम् ॥ १५ ॥ एवंचिरेणविज्ञायबृहस्पतिरुदारधीः ॥ नाससादस्वकांभार्यांरोषात्प्रस्फुरिताधरः ॥ १६ ॥
आचख्यौसर्वमिन्द्रायसोमस्येदंविचेष्टितम् ॥ इंद्रःसमाहूयामासदेवानृषिगणांस्तथा ॥ १७ ॥ नसोमोगणयामासततोऽबुध्यतदेवराट् ॥

आकार्यत्रिदशान्सर्वानाचख्यौचन्द्रचेष्टितम् ॥ १८ ॥ तच्छ्रुत्वादेवगंधर्वाःक्रोधान्धाःक्षुब्धमानसाः ॥ प्रगृहीतप्रहरणारथानारुरुहुःस्व
कान् ॥ १९ ॥ सोमोऽपिदेवान्सन्नद्धाञ्ज्ञात्वासुकृतनिश्चयान् ॥ दैत्यदानवरक्षांसिसमानीयव्यवस्थितः ॥ २० ॥ आरुह्यचरथश्रे
ष्ठंयुद्धायैवमनोदधे ॥ प्रवृत्तंसुमहद्युद्धंशरतोमरकंपनैः ॥ २१ ॥ कौणपैःक्ष्मासुरैःशूलैर्दैवदानवदारुणम् ॥ सतेषांसुमहद्युद्धंदत्वाता
रागणाधिपः ॥ २२ ॥ बभंजदेवान्सेन्द्रांश्चहिमवृष्ट्याक्षपाकरः ॥ सजित्वादेवगन्धर्वान्सोमोराजन्यसत्तम ॥ २३ ॥ श्रियापरम
यायुक्तोयथानान्योहविर्भुजाम् ॥ देवाश्चनिर्जितास्तेनसोमेनामिततेजसा ॥ २४ ॥ आजग्मुःशरणंदेवंशरण्यंस्वर्गवासिनाम् ॥
इन्द्रःसर्वंसमाचख्यौसोमस्येदृग्विचेष्टितम् ॥ २५ ॥ श्रुत्वाक्रुद्धोहृषीकेशआरुह्यगरुडंरुषा ॥ गृहीत्वाचायुधंश्रेष्ठंयुद्धायैवमनोदधे ॥
॥ २६ ॥ प्रकर्तुंसुमहद्युद्धंचक्रशार्ङ्गगदाधरः ॥ जगामाविबुधैःसार्धंसोमस्योपरिरोषितः ॥ २७ ॥ विष्णुंविदित्वासंप्राप्तंसोमोदैत्यगणैः
सह ॥ युद्धायसमरामर्षीस्थितःप्रध्माप्यवारिजम् ॥ २८ ॥ सजित्वादेवसंघातंसेंद्रंवायुपुरस्सरम् ॥ विष्णुनासहसंयुक्तःशस्त्रास्त्रै
रसुभोजनैः ॥ २९ ॥ यदानासावुपरमेद्युद्धायसहविष्णुना ॥ तदाऽऽददेरुषाविष्णुश्चक्रंक्रोधसमन्वितः ॥ ३० ॥ अथाहब्रह्मादेवे
शमजितंविष्णुमव्ययम् ॥ योऽसौमेवप्रपुष्टांगंयत्त्वांवच्मिनिबोधतत् ॥ ३१ ॥ नास्तिवध्यंत्रिभुवनेचक्रस्यास्यतवानघ ॥ सोमोद्विजा
धिपत्येचमयासमभिषेचितः ॥ ३२ ॥ तस्माद्यद्युध्यतेदेवकार्येऽस्मिंस्तद्विधीयताम् ॥ अथाहभगवान्विष्णुःसुरब्रह्मर्षिसान्निधौ ॥ ३३ ॥
सिनीवालीकुहूनामतस्यांनष्टःक्षपाकरः ॥ विनष्टोऽपिपुनर्जन्मप्राप्स्यतीतिनसंशयः ॥३४॥ राकांचानुमतींप्राप्यवृद्धिरस्यभविष्यति ॥ आ
प्यायितश्चश्रुत्युक्तैःपितृपिण्डैःसमंत्रकैः ॥३५॥ ब्राह्मणैर्हव्यकव्यानिदेवेभ्यःप्रापयिष्यति ॥ वृद्धिःकृष्णेनचैवास्यनचजातस्यभूयसी॥३६॥
एवमेवविधिर्दृष्टस्तस्याप्यायनमेवमे ॥ अमोघस्यनमोघत्वंभविष्यतिकदाचन ॥३७॥ शप्तश्चसोमोदक्षेणसचावश्यंभविष्यति ॥ सुदर्शन
स्यचप्रीतिरेवमेवभविष्यति ॥ ३८ ॥ एवमस्त्वितिदेवेशयद्भवान्प्रब्रवीषिवै ॥ ब्रह्माप्रोवाचसोमंतुविनीतवदुपास्थितम् ॥ ३९ ॥ अर्पयस्व

१ विमलं चक्रम्-इ०पा०। २ प्रध्मातवारिजः-इ०पा०। ३ विष्णुं चाभिप्रदुद्रुवे-इ०पा०।

गुरोर्भार्यानकार्यंपुनरीदृशम् ॥ सतथोक्तःसमानीयददौतारांबृहस्पतेः ॥ ४० ॥ पुनरूचेशशीस्पष्टंशृण्वतांत्रिदिवौकसाम् ॥ अस्यांगर्भो
मदीयोऽयंयदपत्यंममैवतत् ॥ ४१ ॥ बृहस्पतिरथोवाचमयिगर्भःसमाहितः ॥ क्षेत्रेमदीयेचोत्पन्नस्तस्मात्सममपुत्रकः ॥ ४२ ॥ उक्तं
चवेदशास्त्रज्ञैर्ऋषिभिर्धर्मदर्शिभिः ॥ उप्तंवाताहृतंबीजंयस्यक्षेत्रेप्ररोहति ॥ ४३ ॥ क्षेत्रिणस्तस्यतद्बीजंनबीजीफलभाग्भवेत् ॥ सम्यगु
क्तंनभवताशशांकःप्राहतत्ववित् ॥ ४४ ॥ माताभस्त्रापितुःपुत्रोयेनजातःसएवसः ॥ इतिपौराणिकाःप्राहुर्मुनयोनयचक्षुषः ॥ ४५ ॥
विवदंतौनिवार्याथब्रह्माप्रोवाचतांवधूम् ॥ शनैरेकांतमानीयगर्भोयंकस्यशंसमे ॥ ४६ ॥ एतदुक्तवतीताराह्रियानोवाचकिंचन ॥
उत्ससर्जक्षणाद्गर्भंभाभासितसुरालयम् ॥ ४७ ॥ तमुवाचततोब्रह्मापुत्रकस्यसुतोभवान् ॥ सोमस्याहंसुतोब्रह्मन्नितितथ्यंमयोदितम् ॥४८॥
बुधोऽयंविबुधाःप्राहुःसर्वज्ञानविदांवरः ॥ गृहीत्वापुत्रकंसोमोजगामस्वंनिवेशनम् ॥ ४९ ॥ गुरुर्गृहीत्वास्वांभार्यांजगामभवनंशनैः ॥
सोमोऽपितनयंलब्ध्वाहर्षव्याकुलमानसः ॥५०॥ पौर्णमासीसमाख्याताप्राप्तपूर्णमनोरथा ॥ प्राप्तःपुत्रोमयाह्यस्यांलब्धश्चविजयस्तथा ॥५१॥
तस्मादेनामुपासिष्येविधिनाव्रततत्परः ॥ एवमन्योऽपिपूर्णार्थःपूर्णांशःपूर्णलक्षणः ॥ ५२ ॥ योमामक्यांतिथौभक्त्याविधिवत्पूजयिष्यति॥
तस्यप्रसादाभिमुखःसर्वकामप्रदोह्यहम् ॥ ५३ ॥ एवमेषातिथिःपार्थसोमस्यदयिताशुभा ॥ पौर्णमासीसमाख्यातापूर्णमासोभवेद्यथा॥५४॥
तदस्यांस्रोतसिस्नात्वासंतर्प्यपितृदेवताः ॥ आलिख्यमंडलेसोमंनक्षत्रैःसहितंविभुम् ॥ ५५ ॥ पूजयेत्कुसुमैर्हृद्यैर्नैवेद्यैर्घृतपाचितैः ॥
शुक्लाक्षतैःशुक्लवस्त्रैःपूजयित्वाक्षमापयेत् ॥ ५६ ॥ शाकाहरणमुन्यन्नैर्नक्तंभुञ्जीतवाग्यतः ॥ वसंतबांधवविधोशीतांशोस्वस्तिनःकुरु ॥५७॥
गगनार्णवमाणिक्यचन्द्रदाक्षायणीपते ॥ पक्षेपक्षेपौर्णमास्यांविधिरेषप्रकीर्तितः ॥ ५८ ॥ कृष्णपक्षेऽपियःकश्चिच्छ्रद्धावान्वैव्रतीभवेत् ॥
तस्याप्येषविधिःप्रोक्तःसर्वसौख्यप्रदायकः ॥ ५९ ॥ अमावास्यातिथिरियंपितॄणांदयितासदा ॥ अस्यांदत्तंतपस्तप्तंपितॄणामक्षयंभवेत् ॥६०॥
अमावास्यामहाराजप्रयत्नैर्यैरुपोषिता ॥ तैरक्षय्यंभवेद्दत्तंपितृभ्यस्तीर्थमुत्तमम् ॥ ६१ ॥ यःकश्चित्कुरुतेतस्मिन्पितृपिण्डोदकक्रियाम् ॥

१ मासेमासे–इ०पा० ।

सतारयतिपुंण्यात्मापुरुषानेकविंशतिम् ॥ ६२ ॥भवेयुरक्षयास्तस्यलोकाःपितृनिषेविताः ॥ यदात्विहकालांतेतस्यात्रागमनंभवेत् ॥६३॥
ब्राह्मणःपितृभक्तश्चसर्वविद्याविशारदः ॥ एवंजन्मनिराजेन्द्रभवेद्धनसमन्वितः ॥ ६४ ॥ एवंसंवत्सरस्यांतेहैमंकृत्वासुशोभनम् ॥
सोमंनक्षत्रसहितंविप्रायप्रतिपादयेत् ॥ ६५ ॥ उपदेशंप्रयच्छेद्यस्तस्मैव्रतकृतेनरः ॥ संपूज्यवस्त्राभरणैर्मंत्रेणेत्थंनिवेदयेत् ॥ ३० ॥
मासेमासेविधिरयंव्रतस्यास्यनराधिप ॥ योनशक्नोतिवाकर्तुंपक्षंवाथनिरंतरम् ॥ ६६ ॥ सएकामप्युपोष्यैवकृत्वाह्युद्यापनंसुधीः ॥
यश्चैतत्कुरुतेपार्थपौर्णमासीव्रतंनरः ॥ ६७ ॥ सर्वपापविनिर्मुक्तश्चन्द्रवद्विविराजते ॥ पुत्रपौत्रधनोपेतोयज्वादाताप्रियंवदः ॥ ६८ ॥
संततिंविपुलांप्राप्यप्रयागेमरणंभवेत् ॥ ततश्चैवाक्षयाँल्लोकान्प्राप्नोतिसुरसेवितान् ॥ ६९ ॥ सेव्यमानःसगन्धर्वैःस्तूयमानःसुरासुरैः ॥
आस्तेसंपूर्णसर्वांगोयावत्कल्पायुतत्रयम् ॥ ७० ॥ अभ्यर्चयंतिसितपञ्चदशीषुसोमंकृष्णासुयेपितृगणंजलपिंडदानैः ॥ तेषांगृहाणिधन
धान्यसुतादिसंपत्पूर्णानिपार्थिवभवंतिविधेर्विधानात् ॥ ७१ ॥ इतिश्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेविजयपौ
र्णमासीव्रतवर्णनंनामनवनवतितमोऽध्यायः ॥ ९९ ॥ छ ॥ ॥युधिष्ठिरउवाच॥ ॥ संवत्सरेचयाःकाश्चित्तिथयःपुण्यलक्षणाः ॥
तामेवदयदुश्रेष्ठस्नानेदानेमहाफलाः ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ वैशाखीकार्तिकीमाघीतिथयोऽतीवपूजिताः ॥ स्नान
दानविहीनैस्तानन्नेयाःपांडुनन्दन ॥ २ ॥ तीर्थस्नानंतदाशस्तंदानंवित्तानुरूपतः ॥ वैशाख्यांपांडवश्रेष्ठश्रेष्ठाद्योतनिकामता ॥ ३ ॥
कार्तिक्यांपुष्करारण्यंमाघ्यांवाराणसीस्मृता ॥ स्नानेनोदकदानेनतारयत्यपिदुष्कृतीन् ॥ ४ ॥ कुंभान्स्वच्छांभसःपूर्णान्सहि
रण्यान्नसंयुतान् ॥ वैशाख्यांब्राह्मणेदत्वानशोचतिकृतेव्रते ॥५॥ मधुरान्नरसैःपूर्णान्भाजनान्कनकोज्ज्वलान् ॥ गोभूहिरण्यवासांसिविधि
वत्प्रतिपादयेत् ॥ ६ ॥ माघ्यांमघासुचतथासंतर्प्यपितृदेवताः ॥ तिलपात्राणिदेयानितिलांश्चपललौदनम् ॥ ७ ॥ कार्पासदानमत्रैवतिलदा
नंचशस्यते ॥ कंबलाजिनरत्नानिमोचकौपापमोचकौ ॥८॥ उपानद्दानमत्रैवकथितंसर्वकामदम् ॥ यत्रवातत्रवास्नानंदानंवित्तानुरूपतः॥९॥

१ नरकात्-इ० पा० । २ कृत्वा बलिम्-इ०पा० ।

कलिकालोद्भवंसर्वंशस्यतेपांडुनंदन ॥ कार्तिक्यांतुवृषोत्सर्गोविवाहःपुण्यलक्षणः ॥ १० ॥ कार्यंकुरुकुलश्रेष्ठहरेर्नीराजनंतथा ॥
गजाश्वरथदानंचघृतधेन्वादयस्तथा ॥ ११ ॥ प्रदेयाःपुण्यकृद्भिश्चतास्ताःसंकल्प्यदेवताः ॥ फलानियानिविद्यंतेसुगंधिमधुराणिच ॥१२॥
जातीफलंचकंकोललवंगलवलीफलम् ॥ खर्जूरीनालिकेरांश्चकदल्याश्चफलानिच ॥ १३ ॥ दाडिमान्मातुलुंगांश्चककोटांस्त्रपुसांस्तथा ॥
वृंताकान्कारवेल्लांश्चबिंबान्कूष्मांडकर्बुरान् ॥१४॥ अप्रदानेनयेषांतुतिथयोयांतिभारत ॥ तेव्याधितादरिद्राश्चजायंतेभुविमानवाः ॥१५॥
नकेवलंब्राह्मणानांदानंसर्वस्यशस्यते ॥ भगिनीभागिनेयानांमातुलानांपितृष्वसुः ॥ १६ ॥ दरिद्राणांचबंधूनांदानंकोटिगुणोत्तरम् ॥ मित्रं
कुलीनश्चापन्नोबंधुर्दारिद्र्यदुःखितः ॥ १७ ॥ आशयाभ्यागतोदूरात्सोतिथिःस्वर्गसंक्रमः ॥ वनंप्रस्थापितेरामेससीतेसहलक्ष्मणे ॥ १८ ॥
मातामहकुलादेत्यविशुद्धेनांतरात्मना ॥ ससर्वैःश्राविर्तोनेकैःकौशल्याभरतेनवै ॥ १९ ॥ यदानप्रत्ययंयातिकथंचित्कौशलात्मजः ॥ तदा
विशुद्धभावेनतिथयःश्राविताःपुनः ॥ २० ॥ वैशाखीकार्तिकीमाघीतिथयोमरपूजिताः ॥ अप्रदानवतोयांतियस्यार्थेनुमतेगतः ॥ २१ ॥
एतच्छ्रुत्वातुकौसल्यासहसाप्रत्ययंगता ॥ अंकमानीयभरतंसांत्वयामासदुःखितम् ॥ २२ ॥ एतत्तिथीनांमाहात्म्यमाख्यातंबहुविस्तरम् ॥
भूयस्तुकिंप्रवक्ष्यामितवराजन्महामते ॥ २३ ॥ वैशाखकार्तिकमघासहिताथमाघेयापूर्णिमाभवतिपूर्णशशांकचिह्ना ॥ तस्यांजलान्नकन
कांबरमातपत्रंदत्वाप्रयातिपुरुषःपुरुहूतलोकम् ॥ २४ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेवैशाखीका
र्तिकीमाघीव्रतवर्णनंनामशततमोऽध्यायः ॥ १०० ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ पुनर्मेब्रूहिदेवेशत्वद्भक्त्याभावितात्म
नः ॥ कथ्यमानामिहेच्छामिशुभधर्मपदंमहत् ॥ १ ॥ यत्राण्वपिनरैर्दत्तंजतंवासुमहद्भवेत् ॥ २ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुपां
डवतेवच्मिरहस्यंदेवनिर्मितम् ॥ यन्मयाकस्यचिन्नोक्तंसुप्रियस्यापिभारत ॥ ३ ॥ वैशाखमासस्यतुयातृतीयानवम्यसौकार्तिकशुक्लपक्षे ॥
नभस्यमासस्यतुकृष्णपक्षेत्रयोदशींपञ्चदशींचमाघे ॥४॥ वैशाखस्यतृतीयातुसमाकृतयुगेनतु ॥ नवमीकार्तिकेयातुत्रेतायुगसमावुभौ ॥
॥ ५ ॥ त्रयोदशीनभस्येतुद्वापरेणसमागता ॥ माघेपञ्चदशीराजन्कलिकालादिरुच्यते ॥ ६ ॥ एताश्चतस्रोराजेन्द्रयुगानांप्रभवाद्यथा ॥

युगादयश्चकथ्यंतेतेनैताःसर्वसूरिभिः ॥ ७ ॥ उपवासस्तपोदानंजपहोमाक्रियास्तथा ॥ यद्यत्तुक्रियतेकिंचित्सर्वंकोटिगुणंभवेत् ॥ ८ ॥
वैशाखस्यतृतीयायांश्रीसमेतंजगद्गुरुम् ॥ नारायणंपूजयेथाःपुष्पधूपविलेपनैः ॥ ९ ॥ वस्त्रालंकारसंभारैर्नैवेद्यैर्विविधैस्तथा ॥
ततस्तस्याग्रतोधेनुर्लवणस्याढकेनतु ॥ १० ॥ कार्याकुरुकुलश्रेष्ठचतुर्भागेणवत्सकम् ॥ अविचर्मोपरिस्थाप्यकल्पयित्वाविधानतः ॥ ११ ॥
शास्त्रोक्तक्रमयोगेनब्राह्मणायोपपादयेत् ॥ श्रीधरःश्रीपतिःश्रीमाञ्छ्रीशःसंप्रीयतामिति ॥ १२ ॥ अनेनविधिनादत्वाधेनुंविप्रायभारत ॥
गोसहस्रंदशगुणंप्राप्नोतीहनसंशयः ॥ १३ ॥ तथैवकार्तिकेमासिनवम्यांनक्तभुङ्नरः ॥ स्नात्वानदीतडागेषुदेवखातेषुवापुनः ॥ १४ ॥
उमासहायंवरदंनीलकंठमथार्चयेत् ॥ पुष्पधूपादिनैवेद्यैरनिंद्यैःशंकरंशिवम् ॥ १५ ॥ धेनुंतिलमयींदद्यात्पुराणोक्तविधानतः ॥
अष्टमूर्तिर्नीलकंठःप्रीयतामितिचिंतयेत् ॥ १६ ॥ यदत्रप्राप्यतेपुण्यंपार्थतत्केनवर्ण्यते ॥ दत्वातिलमयींधेनुंशिवलोकमवाप्नुयात् ॥ १७ ॥
त्रयोदशीनभसियाकृष्णमस्यांसमर्चयेत् ॥ पितॄन्पायसदानेनमधुनाचघृतेनतु ॥ १८ ॥ भोजयेद्ब्राह्मणान्भक्त्यावेदवेदाङ्गपारगान् ॥
पितॄनुद्दिश्यदातव्यासवत्साकांस्यदोहनी ॥ १९ ॥ प्रत्यक्षागौर्महाराजतरुणीसुपयस्विनी ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ २० ॥
प्रीयंतांगोप्रदानेनइतिदत्वाविसर्जयेत् ॥ कृतेनानेनराजेन्द्रयत्पुण्यंप्राप्यतेनृभिः ॥ २१ ॥ तत्केनवर्णितुंयातिवर्षकोटिशतैरपि ॥
पुत्रान्पौत्रान्प्रपौत्रांश्चधनंचमहदीप्सितम् ॥ २२ ॥ इहचाप्नोतिपुरुषःपरत्रचशुभांगतिम् ॥ पञ्चदश्यांचमाघस्यपूजयित्वापितामहम् ॥ २३ ॥
गायत्र्यासहितंदेवंवेदवेदाङ्गभूषितम् ॥ नवनीतमयींधेनुंफलैर्नानाविधैर्युताम् ॥ २४ ॥ सहिरण्यांसवत्सांचब्राह्मणायनिवेदयेत् ॥
कीर्तयेत्प्रीयतामत्रपद्मयोनिःपितामहः ॥ २५ ॥ यत्स्वर्गेयच्चपातालेयच्चमर्त्येसुदुर्लभम् ॥ तदवाप्नोत्यसंदिग्धंपद्मयोनिप्रसादतः ॥ २६ ॥
यानिचान्यानिदानानिदत्तानिसुबहून्यपि ॥ युगादिषुमहाराजअक्षयानिभवंतिहि ॥ २७ ॥ अल्पमल्पंहियःकश्चित्प्रदद्यान्निर्धनोपिसन् ॥
तदक्षयंभवेत्सर्वंयुगादिषुनसंशयः ॥ २८ ॥ वित्तानुसारंस्वंज्ञात्वावित्तवान्पार्थिवोपिवा ॥ अनुसारेणवित्तस्यअसाध्येनसमाधिना ॥ २९ ॥

१ पितॄनुद्दिश्य–इ०पा०।

भूहिरण्यंगृहंवासःशयनान्यासनानिच ॥ छत्रोपानहयुग्मानिप्रदेयानिद्विजातिषु ॥ ३० ॥ एवंदत्त्वायथाशक्त्याभोजयित्वाद्विजानपि ॥
पश्चाद्भुञ्जीतसुमनावाग्यतःस्वजनैःसह ॥३१॥ यत्किञ्चिन्मानसंपापंकायिकंवाचिकंतथा॥तत्सर्वंनाशमायातियुगादितिथिपूजनात् ॥३२॥
उद्गीयमानोगन्धर्वैःस्तूयमानःसुरासुरैः ॥ रमतेचाक्षयंकालंस्वर्गलोकेनसंशयः ॥ ३३ ॥ यद्दीयतेकिमपिकोटिगुणंतदाहुःस्नानंजपो
नियममक्षयमेवसर्वम् ॥ स्यादक्षयासुयुगपूर्वतिथीषुराजन्व्यासादयोमुनिवराःसमुदाहरंति ॥ ३४ ॥ ७ ॥ इति श्रीभविष्येमहापुराणे
उत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेयुगादितिथिव्रतमाहात्म्यवर्णनंनामैकाधिकशततमोऽध्यायः ॥ १०१ ॥ ॥ युधिष्ठिरउवाच ॥ ॥
स्मरयामिहृषीकेशयन्नोक्तंभवताक्वचित् ॥ तत्साविर्त्रीव्रतंब्रूहिममोपरिदयांकुरु ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ कथया
मिकुलस्त्रीणांमहाभाग्यंयुधिष्ठिर ॥ यथाचीर्णंव्रतवरंसावित्र्याराजकन्यया ॥ २ ॥ आसीन्मद्रेषुधर्मात्मासर्वभूतहितेरतः ॥ पार्थि
वोश्वपतिर्नामपौरजानपदप्रियः ॥ ३ ॥ क्षमावांश्चक्षितिपतिःसत्यवांश्चजितेन्द्रियः ॥ ससभार्योव्रतमिदंचचारनृपतिःस्वयम् ॥ ४ ॥ सावि
त्रीव्रतसिद्धंतत्सर्वकामप्रदायकम् ॥ तस्यतुष्टाभवद्राजन्सावित्रीब्रह्मणःप्रिया ॥ ५ ॥ भूर्भुवःस्वरितीत्येषासाक्षान्मूर्तिमतीस्थिता ॥
कमंडलुधरादेवीप्रसन्नवदनेक्षणा ॥ ६ ॥ उवाचदुहिताह्येकातवराजन्भविष्यति ॥ इत्येवमुक्त्वासावित्रीजगामादर्शनंपुनः ॥ ७ ॥
कालेनसातथाराजन्दुहितादेवरूपिणी ॥ सावित्र्याप्रीतयादत्तासावित्र्याजप्तयातदा ॥ ८ ॥ सावित्रीत्येवनामास्याश्चक्रुर्विप्रास्तथापिता ॥
सागृहवतीसश्रीर्व्यवर्द्धतनृपात्मजा ॥ ९ ॥ सावित्रीसुकुमाराङ्गीयौवनस्थाबभूवह ॥ तांसुमध्यांपृथुश्रोणींप्रतिमांकाञ्चनीमिव ॥ १० ॥
प्राप्तेवदेवकन्येतिदृष्ट्वातामितरेजनाः ॥ सातुपद्मपलाशाक्षीप्रज्वलंतीवतेजसा ॥ ११ ॥ चचारसाचसावित्रीव्रतंयद्भृगुणोदितम् ॥
अथोपोष्यशिरःस्नात्वादेवतामभिगम्यसा ॥ १२ ॥ हुत्वाग्निंविधिवद्विप्रान्वाचयित्वेंदुपर्वणि ॥ तेभ्यःसुमनसःशेषाःप्रतिगृह्यनृपात्मजा ॥
॥१३॥साध्वीपतिव्रताभ्येत्यदेवश्रीरिवरूपिणी॥सोभिवाद्यपितुःपादौशेषान्पूर्वंनिवेद्यच ॥१४॥ कृतांजलिर्वरारोहानृपतेःपार्श्वतःस्थिता॥तां
दृष्ट्वायौवनंप्राप्तांस्वच्छांतांदेवरूपिणीम्॥१५॥उवाचराजासंमंत्र्यस्मृत्यर्थंसहमंत्रिभिः॥युक्तिप्रदानकालेभ्यस्तेनकश्चिद्वृणोतिमाम्॥ १६ ॥

विचारयित्वापश्यामिवरंतुल्यंमहात्मनः ॥ देवादीनांयथावाच्योनलभेयंतथाकुरु ॥ १७ ॥ बुद्ध्यमानोमयापुत्रिधर्मशास्त्रेषुयच्छ्रुतम् ॥
पितुर्गृहेतुयाकन्यारजःपश्यत्यसंस्कृता ॥ १८ ॥ ब्रह्महत्यापितुस्तत्रसाकन्यावृषलीस्मृता ॥ अतोर्थंप्रेषयामीतिकुरुपुत्रिस्वयंवरम् ॥१९॥
वृद्धैरमात्यैःसहिताशीघ्रंगच्छातिधारयन् ॥ एवमस्त्वितिसावित्रीप्रोक्तातस्माद्विनिर्ययौ ॥ २० ॥ तपोवनानिरम्याणिराजर्षीणांजगामसा ॥
मान्यानामत्रवृद्धानांकृत्वापादाभिषेचनम् ॥ २१ ॥ ततोभिगम्यतीर्थानिसर्वाण्येवाश्रयाणिच ॥ आजगामपुनर्वेश्मसावित्रीसहमंत्रिभिः ॥
॥२२॥तत्रापश्यतदेवर्षिंनारदंपुरतःपितुः ॥ आसीनमासनेविप्रंप्रणम्यस्मितभाषिणी ॥ २३ ॥ कथयामासतत्सर्वंयथावृत्तंवनेऽभवत् ॥
॥ सावित्र्युवाच ॥ ॥ आसीत्साल्वेषुधर्मात्माक्षत्रियःपृथिवीपतिः ॥ २४ ॥ द्युमत्सेनइतिख्यातोदैवदत्तोबभूवसः ॥ ॥ नारदउवाच ॥
अहोबतमहत्कष्टंसावित्र्यानृपतेःकृतम् ॥ २५ ॥ बाल्यभावाद्वदनयागुणवान्सत्यवान्नृपः ॥ सत्यंवदत्यस्यपितासत्यंमाताप्रभाषते ॥२६॥
उपेतोऽस्तिगुणैःसर्वैर्द्युमत्सेनसुतोबली ॥ एकोदोषोऽस्तिनान्योऽस्यसोऽद्यप्रभृतिसत्यवाक् ॥ २७ ॥ संवत्सरेणहीनायुर्देहत्यागंकरिष्यति॥
नारदस्यवचःश्रुत्वादुहितांप्राहपार्थिवः ॥ २८ ॥ पुत्रिसावित्रिगच्छत्वमन्यंवरयसत्पतिम् ॥ संवत्सरेणसोल्पायुर्देहत्यागंकरिष्यति ॥२९॥
॥ सावित्र्युवाच ॥ सकृज्जल्पंतिराजानःसकृज्जल्पंतिपंडिताः ॥ सकृत्प्रदीयतेकन्यात्रीण्येतानिसकृत्सकृत् ॥३०॥ दीर्घायुरथवाल्पायुःसगु
णोनिर्गुणोऽपिवा ॥ सकृद्वृतोमयाभर्तानाद्वितीयंवृणोम्यहम् ॥३१ ॥ मनसानिश्चयंकृत्वाततोवाचाऽभिधीयते ॥ क्रियतेकर्मणापश्चात्प्रमाणं
मेमनःसदा ॥३२॥ नारदउवाच ॥ यद्येतदिष्टंदुहितुस्ततःशीघ्रंविधीयताम् ॥ अविघ्नमस्तुसावित्र्याःप्रदानेदुहितुस्तव ॥ ३३ ॥ एवमुक्त्वा
समुत्पत्यनारदस्त्रिदिवंगतः ॥ राजाचदुहितुःसर्वंवैवाहिकमथाकरोत् ॥ ३४ ॥ शुभेमुहूर्तेपार्श्वस्थैर्ब्राह्मणैर्वेदपारगैः॥सावित्र्यपिवरंलब्ध्वा
भर्तारंमनसेप्सितम् ॥३५॥ मुमुदेऽतीवतन्वंगीस्वर्गंप्राप्येवपुण्यकृत् ॥ एवंतत्राश्रमेतेषांवसतांप्रीतिपूर्वकम् ॥ ३६॥ कालस्तपस्यतांकश्चि
दतिचक्रामभारत॥सावित्र्यास्तप्यमानायास्तिष्ठंत्याश्चदिवानिशम् ॥३७॥ नारदेनयदुक्तंतद्वाक्यंमनसिवर्तते॥ततःकालेबहुतिथेव्यतिक्रां
तेकदाचन॥३८॥सप्राप्तकालोम्रियेतइतिसंचिंत्यभामिनी ॥ प्रोष्ठपदेसितेपक्षेद्वादश्यांरजनीमुखे ॥३९॥ गणयंत्याश्चसावित्र्यानारदोक्तंवचो

ह्रदि॥व्रतंत्रिरात्रमुद्दिश्यदिवारात्रौविनाभवत् ॥४०॥ ततस्त्रिरात्रंनिर्वर्त्यस्नात्वासंतर्प्यदेवताः ॥ चतुर्थेऽहनिमर्तव्यमितिसंचिंत्यभामिनी ॥
॥४१॥श्वश्रूश्वशुरयोःपादौववंदेचारुहासिनी ॥ अथप्रतस्थेपरशुंगृहीत्वासत्यवान्वनम् ॥४२॥ सावित्र्यपिचभर्तारंगच्छतःपृष्ठतोऽन्वगात् ॥
ततोऽवदत्सभर्तातांपृच्छस्वश्वशुरौनिजौ ॥ ४३ ॥ तथेत्युक्त्वाहिपप्रच्छनत्वाश्वश्रूपदानिसा ॥ श्वशुरावववदतांचनगंतव्यंत्वयाऽघ ॥४४॥
बालेत्वंपरमंभीरुःकथंगच्छसिकाननम् ॥ भूयोभावेनसाप्रोचेद्रष्टव्यंकाननंमया ॥ ४५ ॥ गच्छेतितांतदोचातेश्वशुरौचारुहासिनीम् ॥
ततोगृहीत्वातरसाफलपुष्पसमित्कुशान् ॥ ४६ ॥ यथाशुष्काणिवादायकाष्ठभारमकल्पयत्॥अथपाटयतःकाष्ठंजाताशिरसिवेदना॥४७॥
व्यथामांबाधतेबालेस्वप्तुमिच्छामिसुंदरि ॥ विश्रमस्वमहाबाहोसावित्रीप्राहदुःखिता ॥ ४८ ॥ पश्चादपगमिष्यामिस्वाश्रमंश्रमनाशनम् ॥
यावदुत्संगकेकृत्वाशिरआस्तेमहीतले ॥ ४९ ॥ तावद्ददर्शसावित्रीपुरुषंकृष्णपिंगलम् ॥ किरीटिनंपीतवस्त्रंसाक्षात्सूर्यमिवोदितम् ॥५०॥
तमुवाचाथसावित्रीप्रणम्यमधुपिंगलम् ॥ कस्त्वंदेवोऽथवादैत्योमांधर्षयितुमागतः ॥ ५१ ॥ नचाहंकेनचिच्छक्यास्वधर्माद्वरोपितुम् ॥
स्प्रष्टुंवापुरुषश्रेष्ठदीप्तामग्निशिखामिव ॥ ५२ ॥ ॥ यमउवाच ॥ ॥ यमःसंयमनश्चास्मिसर्वलोकभयंकरः ॥ क्षीणायुरेषतेभर्तातंनयामिप
तिव्रते ॥५३॥ नशक्यःकिंकरैर्नेतुमतोऽहंस्वयमागतः ॥ एवमुक्त्वासत्यवतःशरीरात्पाशसंचयैः ॥ ५४ ॥ अंगुष्ठमात्रंपुरुषंनिश्चकर्षयमो
बलात्॥अथप्रयातुमारेभेपंथानंपितृसेवितम् ॥५५॥ सावित्र्यपिवरारोहापृष्ठतोऽनुजगामह॥पातिव्रतांतथाश्रांतांतामुवाचयमस्तदा ॥५६॥
निर्वर्तगच्छसावित्रिस्वगृहंत्वमिहागता ॥ एषमार्गोविशालाक्षिनकेनाप्यनुगम्यते ॥ ५७ ॥ ॥ सावित्र्युवाच ॥ नश्रमोनचमेग्लानिःकदाचिद
पिजायते ॥ भर्तारमनुगच्छंतियास्तासांनश्रमादयः ॥ ५८ ॥ सतांसंतोगतिर्नान्यास्त्रीणांभर्तासदागतिः ॥ वेदोवर्णाश्रमाणांचशिष्याणां
चगतिर्गुरुः ॥ ५९ ॥ सर्वेषामेवजंतूनांस्थानमस्तिमहीतलम् ॥ भर्तारएवमनुजस्त्रीणांनान्यःसमाश्रयः ॥ ६० ॥ एवमन्यैश्चविविधैर्वाक्यै
र्द्धर्मार्थसंहितैः ॥ तुतोषसूर्यतनयःसावित्रींचेदमब्रवीत् ॥ ६१ ॥ तुष्टोऽस्मितवभद्रंतेवरंवरयभामिनि ॥ सावित्र्यपिवरान्वव्रेविनयावनता
नना ॥ ६२ ॥ चक्षुःप्राप्तिस्तथाराज्यंश्वशुरस्यमहात्मनः ॥ पितुःपुत्रशतंचैवपुत्राणांशतमात्मनः ॥ ६३ ॥ जीवितंचतथाभर्तुर्धर्मसिद्धिश्च

शाश्वती ॥ धर्मराजोवरान्दत्त्वाप्रेषयामासतांततः ॥ ६४ ॥ अथभर्तारमासाद्यसावित्रीहृष्टमानसा ॥ जगामसाश्रमपदंसहभर्त्रानिराकुला
॥ ६५ ॥ भाद्रस्यपौर्णमास्यांतुयथाचीर्णंव्रतंत्विदम् ॥ माहात्म्यमस्यनृपतेकथितंसकलंमया ॥ ६६ ॥ ॥ युधिष्ठिरउवाच ॥ कीदृशं
तद्व्रतंदेवसावित्र्यायदनुष्ठितम् ॥ तस्मिन्भाद्रपदेमासिसिद्धान्नंतस्यकीदृशम् ॥ ६७ ॥ कादेवताव्रतेतस्मिन्ब्रूहिकामंप्रतिप्रभो ॥ सविस्त
रंहृषीकेशब्रूहिधर्मंसनातनम्॥६८॥॥श्रीकृष्णउवाच॥ श्रूयतांपांडवश्रेष्ठसावित्रीव्रतमादरात्॥कथयामिकथंचीर्णंतयासत्यायुधिष्ठिर ॥६९॥
त्रयोदश्यांभाद्रपदेदंतधावनपूर्वकम्॥त्रिरात्रनियमःकार्यउपवासस्यभारत॥७०॥अशक्त्यातुत्रयोदश्यांनक्तंकुर्याज्जितेन्द्रियः॥अयाचितंचतु
र्दश्यामुपवासेनपूर्णिमा॥७१॥नित्यंस्नात्वामहानद्यांतडागेचाथनिर्झरे॥विशेषःपूर्णमास्यांतुस्नानंसर्षपमृज्जलैः ॥७२॥ गृहीत्वातिलकान्पात्रे
प्रस्थमात्रंयुधिष्ठिर ॥ अथवाधान्यमादाययवशालितिलादिकम् ॥ ७३ ॥ ततोवंशमयेपात्रेवस्त्रयुग्मेनवेष्टयेत् ॥ सावित्रीप्रतिमांकृत्वासर्वा
वयवशोभनाम् ॥७४॥ सौवर्णीमृन्मयींवापिस्वशक्त्यारौप्यनिर्मिताम्॥रक्तवस्त्रयुगंदद्यात्सावित्र्यैब्रह्मणेतथा ॥७५॥ सावित्रींब्रह्मणासार्द्धमेवं
भक्त्याप्रपूजयेत्॥गंधैःसुगंधपुष्पैश्चधूपनैवेद्यदीपकैः ॥ ७६ ॥ पूर्णैःकोशातकैर्भक्ष्यैःकूष्मांडैःकर्कटीफलैः ॥ नालिकेरैश्चखर्जूरैःकपित्थैर्दा
डिमीफलैः॥७७॥जंबूजंबीरनारंगैःकर्कटैःपनसैस्तथा ॥ जीरकैःकटुखंडैश्चगुडेनलवणेनच ॥ ७८ ॥ विरूढैःसप्तधान्यैश्चवंशपात्रेप्रकल्पितैः॥
राजन्यासूत्रकंटैश्चशुभैःकुंकुमकेसरैः ॥ ७९ ॥ अवतारवतीत्येवंसावित्रीब्रह्मणःप्रिया ॥ तामर्चयेतमंत्रेणसावित्रींब्राह्मणःस्वयम् ॥ ८० ॥
इतरेषांपुराणोक्तमंत्रोऽत्रसमुदाहृतः ॥ ॐकारपूर्वकेदेविवीणापुस्तकधारिणी ॥ ८१ ॥ वेदमातर्नमस्तुभ्यमवैधव्यंप्रयच्छमे ॥
एवंसंपूज्यविधिवज्जागरंकारयेत्ततः ॥ ८२ ॥ गीतवादित्रशब्देनह्यष्टतारीकदंबकैः ॥ नृत्यहासैर्नयेद्रात्रिंपृष्ठतश्चकथानकैः ॥ ८३ ॥
सावित्र्याख्यानकंवापिवाचयेद्द्विजसत्तमम् ॥ यावत्प्रभातसमयंगीत्याभावरसैःसमम् ॥ ८४ ॥ ततःप्रभातेविमलउषःकालेह्युपस्थिते ॥
ब्राह्मणेवेदविदुषिसावित्रींविनिवेदयेत् ॥ ८५ ॥ यथासावित्रकल्पज्ञेसावित्र्याख्यानवाचके ॥ दैवज्ञउंच्छवृत्तौचदरिद्रेचाग्निहोत्रिणे ॥ ८६ ॥
मंत्रेणानेनकौंतेयप्रणम्यविधिपूर्वकम् ॥ दर्भाक्षततिलैर्मिश्रापूर्वाशाभिमुखास्थिता ॥ ८७ ॥ सुधीर्विप्रवरोविप्रॐकारस्वास्तिपूर्वके ॥

सावित्रीयंमयादत्तासहिरण्यामहासती ॥ ८८ ॥ ब्रह्मणःप्रीणनार्थायब्राह्मणप्रतिगृह्यताम् ॥ एवंदत्त्वाद्विजेंद्रायसावित्रींतांयुधिष्ठिर ॥ ८९ ॥
नैवेद्यादिचतत्सर्वंब्राह्मणःस्वगृहंनयेत् ॥ स्वयंदशपदंगच्छेत्स्ववेश्मपुनराविशेत् ॥ ९० ॥ तत्रभुक्त्वाहविष्यान्नंब्राह्मणैर्बांधवैःसह ॥
विसर्जयेत्ततोविप्रान्सावित्रीप्रीयतामिति ॥ ९१ ॥ पंचदश्यांतथाज्येष्ठेवटकेचमहासती ॥ त्रिरात्रोपोषितानारीविधिनानेनपूजयेत् ॥९२॥
सार्द्धंसत्यवतासाध्वीफलनैवेद्यदीपकैः ॥ पट्टावलंबनंकृत्वाकाष्ठभारंयुधिष्ठिर ॥ ९३ ॥ रात्रौजागरणंकृत्वानृत्यगीतपुरस्सरैः ॥ प्रभाते
विधिनापूर्वंपूर्वोक्तेननरोत्तमः ॥ ९४ ॥ तत्सर्वंब्राह्मणेदद्यात्प्रणिपत्यक्षमापयेत् ॥ एतत्तुतेव्रतमिदंकथितंविधिवन्मया ॥ ९५ ॥ याश्चरिष्यं
तिलोकेस्मिन्पुत्रपौत्रसमन्विताः ॥ भुक्त्वाभोगांश्चिरंभूमौयास्यंतिब्रह्मणःपदम् ॥ ९६ ॥ एतत्पुण्यंपापहरंधन्यंदुःस्वप्ननाशनम् ॥ जपतां
शृण्वतांचैवसावित्रीव्रतमादरात् ॥ ९७ ॥ स्मृत्यर्थेवेदजननींसहर्शंभुजायांसंपूजयेदिहत्रिरात्रकृतोपवासा ॥ सावित्रिवत्पितृकुलंचतथास्व
भर्तुरुद्धारयेच्चविभुनक्तिचिरंसुखानि ॥ ९८ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेवटसावित्रीव्रतंनामद्व्य
धिकशततमोऽध्यायः ॥१०२॥छ॥ श्रीकृष्णउवाच ॥ ॥ पूर्वमासीत्कृतयुगेक्षत्रिणीबहुपुत्रिणी॥नाम्नाकलिंगभद्रेतिरूपलावण्यसंयुता ॥
॥ १ ॥ तुंगस्तनीपद्मनेत्राहंसनागेन्द्रगामिनी ॥ सौभाग्यगुणसंपूर्णाचंद्रबिंबनिभानना ॥ २ ॥ धनरत्नैश्चसंपूर्णामध्यदेशेवृषस्थले ॥
राज्ञःपत्नीतुसादेवीदिलीपस्यमहात्मनः ॥ ३ ॥ कलिङ्गभद्राललितामहादेवीगुणान्विता ॥ महाप्रसादंमन्वानाबहुमानपुरस्सरम् ॥ ४ ॥
ब्राह्मणेभ्यश्चदानानिप्रयच्छतिमहासती ॥ त्यागसंभोगसौभाग्येद्वितीयायातुतादृशी ॥ ५ ॥ नारीणांतुनरश्रेष्ठादिलीपस्ययथाविधा ॥
यथाचकार्तिकेमासिगृहीतंकृत्तिकाव्रतम् ॥ ६ ॥ षण्मासेनव्रतंयावदिदंसंचिंत्यचेतसि ॥ पारितंचतयासर्वंकिंचिन्मात्रंतुवर्तते ॥
॥ ७ ॥ पारणेपारणेवापिपुराणज्ञेद्विजोत्तमे ॥ उद्यापनंप्रयच्छंतीकालंनयतिसुन्दरी ॥ ८ ॥ कदाचिदर्धरात्रेतुसुप्ताभर्त्रासं
हैवसा ॥ दष्टासर्पेणरौद्रेणजगामनिधनंक्षणात् ॥ ९ ॥ तेनदोषेणसाबालाअजायोनौह्यजायत ॥ वनेचरीधर्मपरापूर्वजाति
स्मराद्दढा ॥ १० ॥ पूर्वाभ्यासेनतेनैवगृहीतंकृत्तिकाव्रतम् ॥ व्यस्तायूथपरिभ्रष्टाउपवासपरिस्थिता ॥ ११ ॥ परक्षेत्रेनगच्छं

तीअजासस्यावमर्द्दनी ॥ कार्तिक्यांगलकेबद्धाग्रामकेणचिरागता ॥ १२ ॥ दृष्टात्रिणामहाभागापूर्वजातिस्मरेणसा ॥ कारणं
बुध्यतांबुद्धासहकालिंदभद्रकाम् ॥ १३ ॥ मोक्षितावदरीबद्धाचरंतीकृत्तिकाव्रतम् ॥ गोपालबंधनात्साध्वीअनिर्वेदपरातुसा ॥ १४ ॥
संप्राप्यबदरीपत्रंपीत्वापुष्करिणीपयः ॥ ममेत्युक्त्वाह्यसंभ्रांतापारयामासतद्व्रतम् ॥१५॥ तस्यैयोगंततोदत्वाजगामात्रिस्तपोवनम्॥सापि
योगेश्वरीभूत्वानिंदित्वाजन्मचात्मनः ॥१६॥ तत्याजयोगात्स्वान्प्राणान्प्रस्थितागौतमस्यहि ॥ ऋषेर्बभूवदुहिताह्यहल्यागर्भसुन्दरी॥१७॥
योगलक्ष्मीतिनाम्नासाकन्यागुणगणैर्युता ॥ विद्येवदत्तासापित्राशांडिल्यायमहर्षये ॥ १८ ॥ तपोधनायदांतायनित्यंसहचरीबभौ ॥
ब्राह्मलक्ष्म्यादीप्यमानासाक्षाद्वेदस्मृतिर्यथा ॥ १९ ॥ सरस्वतीचस्वाहाचशचीचारुन्धतीयथा ॥ गौरीराज्ञीतथालक्ष्मीर्गायत्रीचोत्तमासती
॥ २० ॥ महालक्ष्मीस्तथाराजञ्छाण्डिल्यस्यगृहेबभौ ॥ पितृदेवमनुष्याणांनित्यंशुश्रूषणेरता॥२१॥ अथतेनात्रिणादृष्टापुनर्गर्भवतीगृहे॥
भक्त्याभिक्षांप्रयच्छंतीब्राह्मणानामनिंदिता ॥२२॥योगाद्विदित्वातामूचेभगवान्पूर्ववच्छनैः॥योगलक्ष्मिमहाभागेवर्ततेकतिकृत्तिकाः॥२३॥
सापिजातिस्मराप्राहभगवंतंमहासती ॥ षड्वर्ततेमहायोगिन्नेकापरवशेस्थिता ॥ २४ ॥ तच्छ्रुत्वास्यैभगवतासकारुण्येनचेतसा ॥
दत्तंव्रतंतथामंत्रोयेनस्वर्गंजगामसा ॥ २५ ॥ इहभुक्त्वाचिरंभोगान्पुत्रपौत्रश्रियावृता ॥ ततःसातत्पदंप्राप्तापुनरावृत्तिदुर्लभम् ॥ २६ ॥
॥ ॥ युधिष्ठिरउवाच ॥ ॥ कीदृशंतद्व्रतंकृष्णमंत्रश्चापिजनार्दन ॥ विधानंकृत्तिकानांचतंचकालंवदस्वमे ॥ २७ ॥ ॥ श्रीकृष्ण
उवाच ॥ ॥ कृत्तिकासुस्वयंसोमःकृत्तिकासुबृहस्पतिः ॥ यदास्यात्सोमवारेणसामहाकार्तिकीस्मृता ॥ २८ ॥ ईदृशीबहुभि
र्वर्षैर्बहुपुण्यैश्चलभ्यते ॥ तथासानवृथानेयायदीच्छेच्छ्रेयआत्मनः ॥ २९ ॥ अन्यापिकार्तिकीपार्थसमुपोष्याविधानतः ॥ तस्याविधा
नंराजेन्द्रशृणुष्वैकमनाभव ॥ ३० ॥ कार्तिकेशुक्लपक्षस्यपूर्णमास्यांदिनोदये ॥ नक्तायनियमंकुर्याद्दंतधावनपूर्वकम् ॥ ३१ ॥
उपवासस्यवाशक्त्याततःस्नात्वाजलाशये ॥ कुरुक्षेत्रेप्रयागेवापुष्करेनैमिषेतथा ॥ ३२ ॥ शालग्रामेकुशावर्तेमूलस्थानेसकुंतले ॥ गो
कर्णेवार्बुदेपुण्येऽथवाप्यमरकंटके ॥ ३३ ॥ पुरेवानगरेवापिग्रामेघोषेऽथपत्तने ॥ यत्रवातत्रवास्नायान्नरोयोषिदथापिवा ॥ ३४ ॥ देव

र्पिपितृपूजांचकृत्वाहोमंयुधिष्ठिर ॥ ततोऽस्तसमयेप्राप्तेपात्रंगव्यस्यसर्पिषः ॥ ३५ ॥ क्षीरस्यवासुसंपूर्णंकृत्वागुडफलान्वितम् ॥ षट्प्रमा
णंयथाव्योम्निकृत्तिकाशकटंन्यसेत् ॥ ३६ ॥ षट्कृत्तिकानांबिंबानिस्वर्णरौप्यमयानिच॥रत्नगर्भाणिकुर्याच्चस्वशक्त्यापाण्डुनंदन ॥३७॥
प्रथमास्वर्णनिष्पन्नाद्वितीयारौप्यकीकृता ॥ तृतीयारत्नघटिताचतुर्थीनवनीतजा ॥ ३८ ॥ पञ्चमीकाणिकान्यूनाषष्ठीपिष्टमयीकृता ॥ षट्
कृत्तिकाःकृतबिंबाःकृत्वालक्तकसूत्रकाः॥३९॥रत्नगर्भाःकुंकुमाक्ताःपृष्ठतःस्तबकान्विताः॥सिंदूरचन्दनाभ्यक्ताजातीपुष्पैःसुपूजिताः॥४०॥
मंत्रेणानेनराजेंद्रद्विजायप्रतिपादयेत् ॥ ४१ ॥ "ॐसप्तर्षिदाराह्यनलस्यवल्लभायाब्रह्मणारक्षितयेतियुक्ताः ॥ तुष्टाःकुमारस्ययथार्थमातरो
ममापिसुप्रीततराभवंतुस्वाहा" ॥ ४२ ॥ एवमुच्चार्यविप्रायप्रदेयाःकृत्तिकानृप ॥ ब्राह्मणोपिप्रतीच्छेतमंत्रेणानेनपांडव ॥ ४३ ॥ धर्मदाः
कामदाःसतुइमानक्षत्रमातरः ॥ कृत्तिकादुर्गसंसारात्तारयंत्वावयोःकुलम् ॥ ४४ ॥ अनेनविधिनादत्वादृष्ट्वाचैवांबरेस्थिताः ॥ विसर्ज्यब्रा
ह्मणान्भक्त्याचानुव्रज्यपदानिषट् ॥ ४५ ॥ निवर्त्त्यचकथार्थंतुशृणुयात्फलमाप्नुयात् ॥ विमानेनार्कवर्णेनगत्वानक्षत्रमंडलम् ॥ ४६ ॥दि
व्येनवपुषायुक्तःस्रक्चंदनविभूषितः ॥ दिव्यनारीगणवृतःसुखंभुंक्तेह्यनामयम् ॥ ४७ ॥ दोधूयमानश्चमरैरत्नपंक्त्याविराजितः ॥ पारि
जातकमंदारपुष्पभारोपशोभिताः ॥४८॥ कृतार्थःपरिपूर्णाशस्तिष्ठेदाभूतसंप्लवम् ॥ ताराःकृत्वाव्रतंतेवागत्वास्वर्गंसभर्तृका ॥४९॥ रमते
सुभयासाध्वीसर्वभोगसमन्विता ॥ यश्चैतच्छृणुयात्पार्थभक्तियुक्तःसमाधिना ॥ नारीवापुरुषोवापिमुच्यतेसर्वकिल्बिषैः ॥ ५० ॥ सौवर्ण
रौप्यमणिगोनवनीतसिद्धाःषट्कृत्तिकाःकणिकपिष्टमयीश्चकृत्वा ॥ पात्रेनिधायकुसुमाक्षतधूपदीपैःसंपूज्यजन्मगहनंनविशंतिमर्त्याः ॥५१॥
इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेकार्तिक्यांकृत्तिकाव्रतंनामत्र्यधिकशततमोऽध्यायः ॥१०३॥छ॥ श्रीकृष्णउ
वाच॥पञ्चदश्यांशुक्लपक्षेफाल्गुनस्यनरोत्तम ॥ पाखंडान्पतितांश्चैवतथैवान्त्यावसायिनः॥१॥ नास्तिकान्भिन्नवृत्तांश्चपापिनोनैवचालपेत्॥
नारायणेगतमनाःपुरुषोहिजितेन्द्रियः ॥ २ ॥ तिष्ठन्व्रजन्प्रस्खलन्वाभुंजन्नपिजनार्दनम् ॥ कीर्तयेच्चक्रियाकालेसप्तकृत्वःप्रकीर्तयेत् ॥ ३ ॥
लक्ष्म्यासमन्वितंदेवमर्चयेच्चजनार्दनम् ॥ संध्याद्युपरमेचन्द्रस्वरूपंहरिमीश्वरम् ॥ ४ ॥ रात्रौचलक्ष्मींसंचिन्त्यसम्यगर्घेणपूजयेत् ॥

श्रीनिशाचन्द्ररूपस्त्वंवासुदेवजगत्पते ॥ ५ ॥ मनोभिलषितंदेवपूरयस्वनमोनमः ॥ मंत्रेणानेनदत्त्वार्घंदेवदेवस्यभक्तितः ॥ ६ ॥
नक्तंभुञ्जीतनस्वैरस्तैलक्षारविवर्जितम् ॥ तथैवचैत्रवैशाखेज्येष्ठेचनृपसत्तम ॥ ७ ॥ अर्चयेच्चयथाप्रोक्तंमासिमासिचतद्दिने ॥
निष्पादितंभवेदेकंपारणंपार्थशक्तितः ॥ ८ ॥ द्वितीयंचापिवक्ष्यामिपारणंतेनरोत्तम ॥ आषाढेश्रावणेमासिप्राप्तेभाद्रपदेतथा ॥ ९ ॥
तथैवाश्वयुजेभ्यर्च्यश्रीधरंप्रिययासह ॥ अर्घंचन्द्रमसेदत्त्वाभुञ्जीताथयथाविधि ॥ १० ॥ द्वितीयमेतदाख्यातंतृतीयंपारणंशृणु ॥
कार्तिकादिषुमासेषुतथैवाभ्यर्च्यकेशवम् ॥ ११ ॥ भूत्यासमन्वितंदद्याच्छशांकायतथानिशि ॥ भुञ्जीतचयथाख्यातंतृतीयंपारणंशृणु ॥
॥ १२ ॥ प्रतिपूज्यततोदद्याद्ब्राह्मणेभ्यश्चदक्षिणाम् ॥ प्रतिमासंचवक्ष्यामिप्राशनंकायशुद्धये ॥ १३ ॥ चतुरःप्रथमान्मासान्पञ्चगव्यमुदाहृ
तम् ॥ कुशोदकंतथैवान्यदुक्तंमासचतुष्टयम् ॥ १४ ॥ सूर्यांशुतप्तंतद्वच्चजलंकायविशोधनम् ॥ गीतवाद्यादिकंरात्रौतथाकृष्णकथांशुभाम्
॥ १५ ॥ कारयेच्चैवदेवस्यपारणेपारणेगते ॥ जनार्दनंसपत्नीकमर्चयेत्प्रथमंततः ॥ १६ ॥ सश्रीकंश्रीधरंतद्वत्तृतीयेभूतिकेशवौ ॥
प्रतिमासंतुनामानिकृष्णस्यैतानिभारत ॥ १७ ॥ कृतोपवासःसुस्नातःपूजयित्वाजनार्दनम् ॥ उच्चारयन्नरोयातियथालोकंयथासुखम् ॥
॥ १८ ॥ ततोविप्रायवैदद्यादुदकुंभंसदक्षिणम् ॥ उपानद्वस्त्रयुग्मंचच्छत्रंकनकमेवच ॥ १९ ॥ यद्वैमासगतंनामप्रीयतामितिकीर्तयेत् ॥
केशवंमार्गशीर्षेतुपौषेनारायणंतथा ॥ २० ॥ माधवंमाघमासेतुगोविन्दमपिफाल्गुने ॥ चैत्रमासेतथाविष्णुंवैशाखेमधुसूदनम् ॥ २१ ॥
ज्येष्ठेत्रिविक्रमंज्ञेयंतथाषाढेचवामनम् ॥ श्रीधरंश्रावणेतद्वद्धृषीकेशेतिचापरम् ॥ २२ ॥ रामोभाद्रपदेमासिगीयतेपुण्यकांक्षिभिः ॥
पद्मनाभमश्वयुजिदामोदरमतःपरम् ॥ २३ ॥ कार्तिकेदेवदेवेशंस्तुवंस्तरतिदुर्गतिम् ॥ एवंसंवत्सरस्यांतेप्रतिमासेक्रमोदितम् ॥ २४ ॥
यदिदातुंनशक्नोतिदद्याच्चैवैकहेलया ॥ विशेषश्चात्रकथितश्चन्द्रंकृत्वाहिरण्मयम् ॥ २५ ॥ पूजयित्वाफलैर्वस्त्रैर्ब्राह्मणायनिवेदयेत् ॥
स्तुवंत्येवंविधानेनपारणेऽभ्यर्चयेत्प्रभुम् ॥ २६ ॥ तावंतिजन्मान्यसुखंनाप्नोतीष्टवियोगजम् ॥ इहैवस्वस्थतांप्राप्यमरणेस्मरणंततः ॥ २७ ॥
स्थानंतुममसंप्राप्यस्वर्गलोकेमहीयते ॥ ततोमानुष्यमासाद्यनिरातंकोगतज्वरः ॥ धनधान्यवतिस्फीतेजन्मसाधुकुलेऽर्हति ॥ २८ ॥

श्रीशर्वरीमधुनिहाभगवाञ्छशांकः संकल्प्यचन्दनतिलाक्षतपुष्पमिश्रम् ॥ यच्छंतियेऽर्घमनयानृपपूर्णिमायांनूनंभवंतिपरिपूर्णमनोरथास्ते
॥ २९ ॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेपूर्णमनोरथव्रतंनामचतुराधिकशततमोऽध्यायः ॥ १०४ ॥ छ ॥
॥ ॥ श्रीकृष्णउवाच ॥ ॥ अशोकपूर्णिमांचान्यांशृणुष्वगदतोमम ॥ यामुपोष्यनराःशोकंनाप्नुवंतिकदाचन ॥ १ ॥ फाल्गु
नामलपक्षस्यपूर्णमास्यांनरोत्तम ॥ मृज्जलेननरःस्नात्वादत्त्वाशिरसिवैमृदम् ॥ २ ॥ मृत्प्राशनंततःकृत्वाकृत्वाचस्थंडिलंमृदा ॥
पुष्पैःपत्रैस्तथाभ्यर्च्यभूधरंनामनामतः ॥ ३ ॥ धरणींचतथादेवीमशोकेत्यभिकीर्तयेत् ॥ यथाविशोकांधरणींकृतवांस्तुजनार्दनः ॥ ४ ॥
तथामांसर्वशोकेभ्योमोचयाशेषधारिणि ॥ यथासमस्तभूतानामाधारत्वेव्यवस्थिता ॥ ५ ॥ तथाविशोकंकुरुमांसकलेच्छाविभूतिभिः ॥
ध्यानमात्रेयथाविष्णोःस्वास्थ्यंजानासिमेदिनि ॥ ६ ॥ तथामनःस्वस्थतांमेकुरुत्वंभूतधारिणि ॥ एवंस्तुत्वातथाभ्यर्च्यचन्द्रायार्घ्यंनिवेद्यच ७ ॥
उपोषितव्यंनक्तंवाभोक्तव्यंतैलवर्जितम् ॥ अनेनैवप्रकारेणचत्वारःफाल्गुनादयः ॥ ८ ॥ उपोष्यानृपतेमासाःप्रथमंपारणंस्मृतम् ॥
आषाढादिषुमासेषुतद्वत्स्नानंमृदंबुना ॥ ९ ॥ तथैवप्राशनंपूजातद्वदेदोस्तथार्हणम् ॥ चतुर्ष्वन्येषुचैवोक्तंकार्तिकादिषुपारणम् ॥ १० ॥
पारणंत्रितयेचैवचातुर्मासिकमुच्यते ॥ विशेषपूजादानंचतथाजागरणंनिशि ॥ ११ ॥ विशेषेणैवकर्तव्यंपारणेपारणेगते ॥ प्रथमेधरणी
नामतुभ्यंमासचतुष्टयम् ॥ १२ ॥ द्वितीयेमेदिनीवाच्यातृतीयेचवसुंधरा ॥ पारणेपारणेपार्थयुग्मानेवार्चयेद्विजान् ॥ १३ ॥ धरणींदेव
देवंचतत्तत्स्थानेनकेशवम् ॥ वस्त्राभावेचसूत्रेणपूजयेद्धरणींतथा ॥ १४ ॥ घृताभावेतथाक्षीरंशस्तंवासलिलंहरेः ॥ एवंसंवत्सरस्यांतेगौः
सवत्साद्विजातये ॥ १५ ॥ प्रदेयाधरणीदेवीवस्त्रालंकारसंयुता ॥ पातालसंस्थयादेव्याचीर्णमेतन्महाव्रतम् ॥ १६ ॥ धरण्याकेशव
प्रीत्यैततःप्राप्तासमुन्नतिम् ॥ देवेनचोक्ताधरणीवराहवपुषापुरा ॥ १७ ॥ उपवासव्रतपरासमुद्धृत्यरसातलात् ॥ व्रतेनानेनकल्याणित्व
याहंपरितोषितः ॥ १८ ॥ तस्मात्प्रसादमतुलंकरोमितवसुव्रते ॥ यथैवकुरुषेभक्त्यापूजांममसुशोभनाम् ॥ १९ ॥ तथैवतवकल्या
णिप्रणतोयःकरिष्यति ॥ व्रतमेतदुपाश्रित्यपारणंचयथाविधि ॥ २० ॥ सर्वबाधाविनिर्मुक्तोजन्मजन्मांतराण्यपि ॥ विशोकःसर्वकल्या

णभाजनंस्यान्नसंशयः ॥ २१ ॥ यथात्वमेववसुधेसंप्राप्तानिर्वृतेःपदम् ॥ तथासपरमँल्लोकेसुखंप्राप्स्यातिमानवः ॥ २२ ॥ एवमेतन्महा
पुण्यंसर्वपापप्रशांतिदम् ॥ विशोकाख्यंव्रतवरंतत्कुरुष्वमहाव्रतम् ॥ २३ ॥ सम्यग्विशोककरणीनृपपूर्णिमातेख्यातामयामनुमहेन्द्रस
मानकीर्ते ॥ एवंकरोतिकुरुपुङ्गवयःप्रयत्नाच्छोकोनतस्यभवतीहकुलेपिपुंसः ॥२४॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधि
ष्ठिरसंवादेविशोकपूर्णिमाव्रतंनामपंचाधिकशततमोऽध्यायः ॥१०५॥ ॥छ॥ ॥ ॥युधिष्ठिरउवाच॥सर्वकामानवाप्नोतिसमाराध्यजनार्दनम्॥
प्रकारैर्बहुभिःकृष्णयान्यानिच्छतिचेतसा॥१॥ नृणांस्त्रीणांचसर्वेषांनान्यच्छोकस्यकारणम्॥ अपत्यादधिकंकिंचिद्विद्यतेह्यत्रजन्मनि॥२॥
अपुत्रतामहादुःखमतिदुःखंकुपुत्रता ॥ सुपुत्रःसर्वसौख्यानांहेतुभूतोमतोमम ॥ ३ ॥ धन्यास्तेयेसुतंप्राप्ताःसर्वदुःखविवर्जितम् ॥
शक्तंप्रशांतंबलिनंपरांनिर्वृतिमागतम् ॥ ४ ॥ स्वकर्माभिरतंनित्यंदेवद्विजपरायणम् ॥ शास्त्रज्ञंसर्वधर्मज्ञंदीनानाथानुकंपिनम्[1] ॥ ५ ॥
विनिर्जितारिसर्वस्वंमनोहृदयनंदनम् ॥ देवानुकूलतायुक्तंयुक्तंसम्यग्गुणेनच ॥ ६ ॥ मित्रस्वजनसन्मानलब्धनिर्वाणमुत्तमम् ॥
यःप्राप्नोतिसुतंतस्मान्नान्योधन्यतरोभुवि ॥ ७ ॥ सोऽहमेवंविधंश्रोतुंकमिच्छामिमहामते ॥ येनेदृग्लक्षणःपुत्रःप्राप्यतेभुविमानवैः ॥ ८ ॥
॥ श्रीकृष्णउवाच ॥ एवमेतन्महाभागपुत्रापुत्रसमुद्भवम् ॥ दुःखंप्रयात्युपशमंतनयान्नेहकेनचित् ॥ ९ ॥ अत्रापिश्रूयतांवृत्तंयत्पूर्व
मभवन्मुने ॥ उत्पत्तौकार्तवीर्यस्यहैहयस्यमहात्मनः ॥ १० ॥ कृतवीर्योमहीपालोहैहयोनामवैपुरा ॥ तस्यशीलधनानामबभूव
वरवर्णिनी ॥ ११ ॥ पत्नीसहस्रप्रवरामहिषीशीलमंडना ॥ सात्वपुत्रामहाभागामैत्रेयींपर्यपृच्छत ॥ १२ ॥ गुणवत्पुत्रलाभायकृता
सनपरिग्रहम् ॥ तयापृष्टाथसासम्यङ्मैत्रेयीब्रह्मवादिनी ॥ १३ ॥ कथयामासपरमंनाम्नानन्तव्रतंमहत् ॥ सर्वकामफलावाप्तिकारणं
पापनाशनम् ॥ १४ ॥ तस्याःसुपुत्रलाभायराजपुत्र्यास्तपस्विनी ॥ मैत्रेय्युवाच ॥ योयमिच्छेन्नरःकामंनारीवावरवर्णिनी ॥ १५ ॥
सतंसमाराध्यविभुंसमाप्नोतिजनार्दनात्॥मार्गशीर्षेमृगशिरोभीमोयस्मिन्दिनेऽभवत् ॥ १६ ॥ तस्मिन्संप्राश्यगोमूत्रंस्नातोनियतमानसः॥

१ दीनानाथजनाश्रयम्–इ०पा० ।

पुष्पैर्धूपैस्तथागन्धैरुपवासैश्चभक्तितः ॥ १७ ॥ वामपादमनंतस्यपूजयेद्धरवर्णिनि ॥ अनंतःसर्वकामानामनंतंभगवान्फलम् ॥ १८ ॥
ददात्वनंतंचपुनस्तदेवान्यत्रजन्मानि ॥ अनंतपुण्योपचयमनंतंतुमहाव्रतम् ॥ १९ ॥ यथाभिलषितावाप्तिंकुरुमेपुरुषोत्तम ॥
इत्युच्चार्याभिपूज्यैनंयथावद्विधिनानरः ॥ २० ॥ समाहितमनाभूत्वाप्रणिपातपुरस्सरम् ॥ विप्रायदक्षिणांदद्यादनंतःप्रीयतामिति ॥ २१ ॥
समुच्चार्यततोनक्तंभुञ्जीयात्तैलवर्जितम् ॥ ततश्चपौषेपुष्यर्क्षेतथैवभगवत्कटिम् ॥ २२ ॥ वामामभ्यर्च्चयेद्भक्त्यागोमूत्रप्राशनंततः ॥
अनंतःसर्वकामानामितिचोच्चारयेत्पुनः ॥ २३ ॥ भुञ्जीतचयथाविप्रान्वाचयित्वायथाविधि ॥ माघेमघासुतद्वच्चबाहुंदेवस्यपूजयेत् ॥२४॥
स्कंधंचफाल्गुनीयेमेफाल्गुनेमासिभामिनि ॥ चतुर्ष्वेतेषुगोमूत्रंप्राशयेन्नृपनंदिनि ॥ २५ ॥ ब्राह्मणायतथादद्यात्तिलान्कनकमेवच ॥
देवस्यदक्षिणंस्कंधंचैत्रेचित्रासुपूजयेत् ॥ २६ ॥ तथैवप्राशनंचात्रपञ्चगव्यमुदाहृतम् ॥ विप्रवाचनिकेदद्याद्यवान्मासचतुष्टयम् ॥ २७ ॥
वैशाखेचविशाखासुबाहुंसंपूज्यदक्षिणम् ॥ तथैवोक्तान्यवान्दद्यान्नक्तंकुर्याद्द्विजक्रियाम् ॥ २८ ॥ ज्येष्ठासुकटिपूजांचज्येष्ठमासिशुभव्रते ॥
आषाढासुतथाषाढेकुर्यात्पादार्चनंशुभे ॥ २९ ॥ पादद्वयंतुश्रवणेश्रावणेमासिपूजयेत् ॥ घृतंविप्रायदातव्यंप्राशनीयंयथाविधि ॥ ३० ॥
श्रावणादिषुमासेषुप्राशनंदानमेवच ॥ एतदेवंसमाख्यातंदेवांस्तद्वच्चपूजयेत् ॥ ३१ ॥ गुह्यंप्रोष्ठपदायोगेमासिभाद्रपदेऽर्चयेत् ॥
तद्वदाश्वयुजेपूज्यंहृदयंचाश्विनीषुच ॥ ३२ ॥ कुर्यात्समाहितमनाःस्नानंप्राशनमर्चनम् ॥ अनंतशिरसःपूजांकार्तिकेकृत्तिकासुच ॥ ३३ ॥
यस्मिन्यस्मिन्दिनेपूजातत्रतत्रतदादिने ॥ नामानंतस्यजप्तव्यंक्षुतप्रस्खलितादिषु ॥ ३४ ॥ घृतेनानंतमुद्दिश्यपूर्वमासचतुष्टयम् ॥
कुर्वीतहोमंचैत्रादौशालिनाकुलनंदिनि ॥ ३५ ॥ क्षीरेणश्रावणादौचहोमंमासचतुष्टयम् ॥ प्रशस्तंसर्वमासेषुहविष्यान्नेनभोजनम् ॥ ३६ ॥
एवंद्वादशभिर्मासैःपारणात्रितयंशुभे ॥ व्रतावसानेचानंतंसौवर्णंकारयेच्छुभम् ॥ ३७ ॥ राजतंमुशलंचैवहलंपार्श्वेषुविन्यसेत् ॥
पुष्पधूपादिनैवेद्यैःपूजाकार्यायथाविधि ॥ ३८ ॥ ताम्रपीठोपरिहरेर्मंत्रैरेभिर्यथाक्रमम् ॥ नमोऽस्त्वनंतायाशिरःपादौसर्वात्मनेनमः ॥ ३९ ॥
शेषायजानुयुगलंकामायेतिकटिंनमः ॥ नमोस्तुवासुदेवायपार्श्वेसंपूजयेद्धरेः ॥ ४० ॥ संकर्षणायेत्युदरंभुजंसर्वास्त्रधारिणे ॥ कण्ठंश्रीकण्ठ

नाथायमुखामिन्दुमुखायच ॥ ४१ ॥ हलंचमुसलंचैवस्वनाम्नापूजयेद्बुधः ॥ एवंसंपूज्यगोविन्दंसितवस्त्रविभूषितम् ॥ ४२ ॥ छत्रोपानहसंयु
क्तंस्रग्दामालंकृतंतथा ॥ नक्षत्रदेवताःपूज्यनक्षत्राणिचसर्वशः ॥ ४३॥ सोमोनक्षत्रराजाचमासःसंवत्सरंतथा ॥ द्वादशात्रघटान्कुर्यात्सतोयां
श्चान्नसंयुतान्॥४४॥एवंसंपूज्यविधिवद्देवदेवंजनार्दनम्॥ब्राह्मणंपूजयित्वाचवस्त्रैराभरणैस्तथा॥४५॥ कर्णाङ्गुलैःपवित्रैश्चशांतंदांतंजितेन्द्रिय
म्॥पुराणज्ञंधर्मनित्यमव्यङ्गंसुप्रियंवदम् ॥४६॥ तस्यदेयंसमस्तंतदनन्तःप्रीयतामिति॥अन्येषांब्राह्मणानांचदेयंशक्त्यायथेप्सितम् ॥४७॥
अनेनविधिनापार्थव्रतंचैतत्समाप्यते ॥ पारितेचसमाप्नोतिसर्वानेवमनोरथान् ॥ ४८॥ पुत्रार्थिभिर्वित्तकामैर्भृत्यदारानभीप्सुभिः॥ प्रार्थ
यद्भिश्चमर्त्येऽस्मिन्नारोग्यफलसंपदः ॥ ४९ ॥ एतद्व्रतंमहाभागेपुण्यंस्वस्त्ययनप्रदम् ॥ अनंतव्रतसंज्ञंवैसर्वपापप्रणाशनम् ॥५०॥ तत्कुरु
ष्वैवदेवित्वंव्रतंशीलधनेपरम् ॥ वरिष्ठंसर्वलोकस्ययदिपुत्रमभीप्ससि ॥५१ ॥ श्रीकृष्णउवाच ॥ इतिशीलधनाश्रुत्वामैत्रेयीवचनंशुभम् ॥
चकारैतद्व्रतवरंसाविष्ण्वाहितमानसा ॥ ५२॥ पुत्रार्थिन्यास्ततस्तस्माद्व्रतेनानेनसुव्रत ॥ विष्णुस्तुतोषतुष्टेचविष्णौसासुषुवेसुतम्॥५३॥
तस्यवैजातमात्रस्यप्रववौचानिलःशुभम् ॥ नीरजस्कमभूद्व्योमसुदंप्रापाखिलंजगत् ॥ ५४ ॥ देवदुंदुभयोनेदुःपुष्पवृष्टिःपपातच ॥ प्रज
गुर्देवगन्धर्वाननृतुश्चाप्सरोगणाः ॥ ५५ ॥ धर्मेमनःसमस्तस्यपार्थलोकस्यचाभवत् ॥ तस्यनामपिताचक्रेतनयस्यार्जुनेतिवै ॥ ५६ ॥
कृतवीर्यसुतत्वाच्चकार्तवीर्योबभूवसः ॥ तेनापिभगवान्विष्णुर्दत्तात्रेयस्वरूपवान् ॥ ५७ ॥ आराधितोऽतिमहतातपसापार्थभूभृताम् ॥ त
स्यतुष्टोजगन्नाथश्चक्रवर्तित्वमुत्तमम् ॥ ५८ ॥ ददौशौर्यधनेचापिसकलान्यायुधानिच ॥ सवव्रेचवधंदेवममत्वत्तोभवेदिति ॥ ५९ ॥
परंतुस्मरणंज्ञानंभीतानामार्तिनाशनम् ॥ स्मरणादुपकारित्वंजगतोऽस्यजगत्पते ॥ ६० ॥ तमाहदेवदेवेशःपुण्डरीकनिभेक्षणः ॥ सर्वमेत
न्महाभागतवभूयोभविष्यति ॥ ६१ ॥ यश्चप्रभातेरात्रौचत्वांनरःकीर्तयिष्यति ॥ नमोऽस्तुकार्तवीर्यायेत्यभिधास्यतिचैवयः ॥ ६२ ॥
तिलप्रस्थप्रदानस्यनरःपुण्यमवाप्स्यति ॥ अनष्टद्रव्यताचैवतवनामानुकीर्तने ॥ ६३ ॥ भविष्यतिमहीपालेत्युक्त्वातंप्रययौहरिः ॥

१ शौर्यबले–इ० पा०। २ स वव्रे च वरं देव मम त्राता भवेति च–इ० पा०।

सचापिवरमासाद्यप्रसन्नाद्गरुडध्वजात् ॥ ६४ ॥ पालयामासभूपालःसप्तद्वीपांवसुंधराम् ॥ तेनेष्टंविविधैर्यज्ञैःसमाप्तवरदक्षिणैः ॥ ६५ ॥
जित्वारिवर्गमखिलंधर्मतःपालिताःप्रजाः ॥ अनंतव्रतमाहात्म्यादासाद्यतनयंचतम् ॥ ६६ ॥ पितुःपुत्रोद्भवंदुःखंनासीत्स्वल्पमपिप्रभो ॥
एवमेतत्समाख्यातमनंताख्यंव्रतंतव॥६७॥यत्कृत्वाराजपत्नीसाकार्तवीर्यमसूयत॥यश्चैतच्छृणुयाज्जन्मकार्तवीर्यस्यमानवः॥६८॥स्त्रीवादुः
खमपत्योत्थंसप्तजन्मनिनाश्नुते ॥६९ ॥ ऐश्वर्यमप्रतिहतंपरमंविवेकंपुत्रानमित्रहृदयार्तिकरान्बहूंश्च ॥ कृत्वात्वनंतइतियद्व्रतनामधेयंप्राप्नो
त्यनंतविभवस्यविभोःप्रसादात् ॥७०॥ इति श्रीभविष्येमहापुराणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेअनंतव्रतवर्णनंनामषडधिकशततमो
ऽध्यायः॥१०६॥छ॥युधिष्ठिरउवाच॥अप्राप्तेनतथादुःखमैश्वर्याद्येर्नरोत्तम॥यथामनोरमैःस्वैःस्वैर्नानादुःखंभवेन्नृणाम् ॥१॥यथामनोरथैर्लब्धै
र्नस्याद्दुःखभयंनृणाम् ॥ ऐश्वर्याद्विच्युतोवापिसंततेर्देवलोकतः ॥ २ ॥ अभीष्टादन्यतोवापियदाघेनाविनिष्कृतिम् ॥ प्राप्नोतिपुरुषोवाथ
नारीवापुण्यसंचयात् ॥ ३ ॥ तन्ममाचक्ष्वभगवन्येननाभ्येतिविच्युतिम् ॥ ॥ श्रीकृष्णउवाच ॥ ॥सत्यमेतन्महाभागदुःखंप्राप्नोत्यसं
शयः ॥ ४ ॥ ऐश्वर्योदयचित्तस्यबंधुवर्गसुखस्यच ॥ तदेतच्छ्रूयतांपार्थयथानेष्टात्परिच्युतिः ॥ ५ ॥ स्वर्गादेर्जायतेसम्यगुपवासवतांसता
म् ॥ द्वादशर्क्षाणिराजेंद्रप्रतिमासंतुयानिवै ॥६॥ तन्नाम्नाचाच्युतंतेषुसम्यक्संपूजयेन्नृप ॥ पुष्पैर्धूपैस्तथांभोभिरभीष्टैरपरैरपि ॥ ७ ॥ आ
दितःकृत्तिकांकृत्वाकार्तिकेनृपसत्तम ॥ कृशरामत्रनैवेद्यंपूर्वंमासचतुष्टयम् ॥ ८ ॥ निवेदयेत्फाल्गुनादिसंयावंचततःपरम् ॥ आषाढा
दिषुदेवायपायसंविनिवेदयेत् ॥ ९ ॥ तेनैवान्नेनराजेन्द्रब्राह्मणान्भोजयेद्बुधः ॥ पञ्चगव्यजलस्नानंतस्यैवप्राशनाच्छुचिः ॥ १० ॥ सम्य
क्संपूज्यराजेन्द्रतमेवपुरुषोत्तमम् ॥ प्रणम्यप्रार्थयेद्विष्णुंशुचिःस्नातोयथाविधि ॥ ११ ॥ नमोनमस्तेऽच्युतमेक्षयोस्तुपापस्यवृद्धिंसमु
पैतुपुण्यम्॥ऐश्वर्यवित्तादितथाऽक्षयंमेक्षयंचमासंततिरभ्युपैतु ॥१२॥ यथाच्युतस्त्वंपरतःपरस्मात्सब्रह्मभूतःपरतःपरात्मा ॥ तथाच्युतंमे
कुरुवांछितंत्वंहरस्वपापंचतथाप्रमेय ॥१३॥अच्युतानंतगोविन्दप्रसीदयदभीप्सितम् ॥ तदक्षयममेयात्मन्कुरुष्वपुरुषोत्तम ॥१४॥ एवमे

१ सौभाग्यमिष्टजनलाभसुखं च लोकास्ते वै समस्तसुखदाः सुलभा भवन्ति—इ०पा० ।

वंसमभ्यर्च्यप्रार्थयित्वातथाशिवम्॥नैवेद्यंस्वयमश्नीयान्नक्तंसंपूजितेच्युते ॥ १५ ॥ ततःसंवत्सरस्यांतेसुखसुप्तोत्थितेऽच्युते ॥ घृतपूर्णताम्र
पात्रंब्राह्मणायनिवेदयेत् ॥ १६ ॥ शक्तितोदक्षिणांदद्यादच्युतःप्रीयतामिति ॥ ततस्तुसप्तमेवर्षेकुर्यादुद्यापनंबुधः ॥ १७ ॥ कार्याचैवा
च्युतस्यार्चाशक्त्यास्वर्णमयीनृप ॥ तदग्रेब्राह्मणीस्थाप्यास्थविरासांभरायणी ॥ १८ ॥ महासतीरौप्यमयीसमानार्हासदेवता ॥ ततस्तौपू
जयित्वाचमाल्यवस्त्रविलेपनैः ॥ १९ ॥ मंत्रेणानेनराजेन्द्रप्रणिपत्यविधानतः ॥ प्रतिवर्षंचदत्तंचेत्ताम्रंपात्रंद्विजातये ॥ २० ॥ तदेकहे
लयादद्यात्सहिरण्याश्वसंयुतम् ॥ गाश्चप्रदद्यात्संपूज्यसवत्साःकांस्यदोहनाः ॥ २१ ॥ एकांवाशक्तितोदद्याद्भक्त्यातुष्यतिकेशवः ॥ घटाः
सत्पात्रनिर्दिष्टाःसान्नाःपूर्णजलोज्ज्वलाः ॥ २२ ॥ छत्रोपानद्युगैःसार्धमेवंदत्वाविसर्जयेत् ॥ शय्यांसतूलिकांदद्याद्गृहंचोपस्करैःसह ॥ २३ ॥
श्रियाचसहविष्णुंचपूजयेद्धूपयेत्प्रभुम् ॥ वस्त्रैराभरणैश्चैवप्रणिपत्यक्षमापयेत् ॥ २४ ॥ कृतेनानेनराजेन्द्रच्युतिंनाप्नोतिमानवः ॥
संततेःस्वर्गवित्तादेरैश्वर्यस्यतथैवच ॥ २५ ॥ यद्वाभिमतमन्यच्चततोनच्यवतेनरः ॥ तस्मात्सर्वप्रयत्नेनमासनक्षत्रपूजनैः ॥ २६ ॥
यजेताक्षयकामस्तुसदेवपुरुषोत्तमम् ॥ ॥ श्रीकृष्णउवाच ॥ अत्रापिश्रूयतेकाचित्सिद्धास्वर्गेमहाव्रता ॥ २७ ॥ नारीतपोध
नाभूत्वाप्रख्यातासांभरायणी ॥ समस्तसंदेहहरासदास्वर्गौकसांहिसा ॥ २८ ॥ कस्यचित्त्वथकालस्यदेवराजःशतक्रतुः ॥ पूर्वेन्द्र
चरितंराजन्पप्रच्छेदंबृहस्पतिम् ॥ २९ ॥ पूर्वेन्द्रात्परतःपूर्वेयेबभूवुःसुरेश्वराः ॥ तेषांचरितमिच्छामिश्रोतुमंगिरसांवर ॥ ३० ॥
एवमुक्तस्तदातेनदेवेन्द्रेणामलद्युतिः ॥ प्राहधर्मभृतांश्रेष्ठःपरमर्षिर्बृहस्पतिः ॥ ३१ ॥ नाहंचिरंतनान्वेद्मिदेवराजसुरेश्वरान् ॥
आत्मनःसमकालीनमवैहिचसुरेश्वर ॥ ३२ ॥ ततःप्रपच्छदेवेन्द्रःकोस्माभिर्मुनिपुंगवः ॥ प्रष्टव्योऽत्रमहाभागकृतादिवसतिर्दिवि ॥ ३३ ॥
बृहस्पतिश्चिरंध्यात्वाततःप्राहशचीपतिम् ॥ तपस्विनींमहाभागांपृच्छैतांसांभरायणीम् ॥ ३४ ॥ इत्युक्तस्तेनदेवेन्द्रःकौतूहलसमन्वितः ॥
ययौयत्रमहाभागासम्यगास्तेतपस्विनी ॥ ३५ ॥ सातौदृष्ट्वासमायातौदेवराजबृहस्पती ॥ सम्यगर्घ्येणसंपूज्यप्रणिपत्याहसुव्रता ॥ ३६ ॥



१ सुखव्युष्टोत्थिते–इ०पा० । २ पूर्णजलान्विताः–इ०पा० ।

नमोऽस्तुदेवराजायतथैवाङ्गिरसेनमः ॥ यद्वांकार्यंमहाभागौसकलंतादिहोच्यताम् ॥ ३७ ॥ यदिकर्तुंमयाशक्यंतत्करिष्येविमृश्यच ॥
॥ बृहस्पतिरुवाच ॥ आवामभ्यागतौप्रष्टुंत्वामत्रातिविवेकिनीम् ॥ ३८ ॥ यच्चकार्यंमहाभागेपृष्टंतत्कथयस्वनः ॥ यदिस्मरसिकल्याणि
पूर्वेन्द्रचरितानिवै ॥ ३९ ॥ तदाख्याहिमहाभागेदेवेन्द्रस्यकुतूहलम् ॥ सांभरायण्युवाच ॥ योवैपूर्वंसुरेंद्रस्यततश्चप्रथमोहियः ॥ ४० ॥
तस्मात्पूर्वतरोयश्चतस्यापिप्रथमश्चयः ॥ तेषांपूर्वतरायेचवेद्मितानाखिलानहम् ॥ ४१ ॥ तेषांचचरितंकृत्स्नंजानाम्यंगिरसांवर ॥
मन्वंतराण्यनेकानिसृष्टीश्चत्रिदिवौकसाम् ॥ ४२ ॥ सप्तर्षीन्सुबहून्वेद्मिमनूनांचसुतान्नृपान् ॥ एवमुक्त्वाततस्ताभ्यां[1]सुहृष्टासांभरायणी ॥
॥ ४३ ॥ यथावदाचष्टतयोःपूर्वेन्द्रचरितंमहत् ॥ स्वायंभुवेयस्तुमनौमनौस्वारोचिषेचयः ॥ ४४ ॥ उत्तमेतामसेचैवरैवतेचाक्षुषेतथा ॥
येबभूवुर्हिदेवेन्द्रास्तस्यतस्यतपस्विनी ॥ ४५ ॥ तदाजगादचरितंयथावत्सांभरायणी ॥ कथयामासचाश्चर्यंतच्चापिकथयामिते ॥ ४६ ॥
शंकुकर्णस्तदादैत्योबभूवात्यंतदुर्जयः ॥ सलोकपालान्समरेविजित्यसहदैवतैः ॥ ४७ ॥ इंद्रस्यासाद्यभवनंप्रविवेशसुनिर्भयः ॥ तंदृष्ट्वा
सहसाप्राप्तंशक्रःशय्यातलेऽलुठत् ॥४८॥ जुगोपसहसात्मानंशंकुकर्ण[2]भयार्दितः॥ दानवःशक्रशयनेतस्मिन्नुपविवेशह ॥४९॥ इन्द्राण्यापित
थाभीतागतावाचस्पतेर्गृहम् ॥ अथदेवाःसमाजग्मुर्भयाद्द्रष्टुंसुरद्विषम् ॥ ५० ॥ आसीनंशक्रशयनेप्राणिपातपुरस्सराः ॥ वासुदेवोऽपि
तत्रागात्तंद्रष्टुंदेवकंटकम् ॥ ५१ ॥ दृष्ट्वाकृष्णमनुप्राप्तंदानवःप्राहहर्षितः ॥ धन्योऽहं[3]कृतकृत्योऽहंयस्यमेगरुडध्वजः ॥ ५२ ॥ शक्रश
य्यासनस्थस्यद्रष्टुमभ्येतिकेशवः ॥ ततःकरेसमालंब्यशयनाभ्याशमानयत् ॥ ५३ ॥ चकारकंठग्रहणंबांधवस्येवहर्षितः ॥ ततःकृ
ष्णस्तुसहसागृह्यदोर्भ्यांशनैःशनैः ॥ ५४ ॥ पीडयामासविहसन्नदंतंभैरवान्रवान् ॥ ममारदानवेन्द्रोऽसौबलाद्भग्नास्थिपञ्जरः ॥ ५५ ॥
निर्जगामततःशक्रःशय्यामूलादवाक्छिराः ॥ तुष्टावहरिमासीनंशंखचक्रगदाधरम् ॥५६॥एतद्दृष्टंमयाशक्रवसंत्यासुरसद्मनि ॥ ततःकुतूहल
परोदेवराट्तांतपस्विनीम्॥५७॥उवाचजानासिकथंत्वमेतान्सांभरायणि॥सांभरायण्युवाच॥सर्वएवहिदेवेन्द्राःस्वर्गस्थायेमरेश्वराः॥५८॥

१ सा हृष्टा–इ०पा० । २ महाहनुः–इ०पा० । ३ कृतपुण्योऽहम्–इ०पा० ।

बभूवुरेतेचरितमेतेषांविज्ञितेनवै ॥ चरितंचमयातेपांश्रुतंदृष्टंतथैवच ॥५९॥इन्द्रउवाच ॥ किंकृतंवदधर्मज्ञेत्वयायेनेयमक्षया ॥ स्वर्लोकेवस
सातिःप्राप्तायथानान्येनकेनचित् ॥ ६० ॥ अहोसर्वव्रतानांतुह्युपोषितमथाद्भुतम् ॥ प्रधानतरमत्यंतंस्वर्गवासप्रदंमतम् ॥ ६१ ॥
एवमुक्तातत्स्तेनदेवेन्द्रेणतपस्विनी ॥ प्रत्युवाचमहाभागायथावत्सांभरायणी ॥ ६२ ॥ मासर्क्षेह्यच्युतोदेवःप्रतिमासंसुरेश्वर ॥
यथोक्तव्रतयासम्यक्सप्तवर्षाणिपूजितः ॥ ६३ ॥ तस्येयंकर्मणोव्युष्टिरच्युताराधनस्यमे ॥ देवलोकादभिमतादेवराजपदच्युतिः ॥ ६४ ॥
स्वर्गेन्द्रविभवैश्वर्यसंततिर्यातिचाच्युतिम् ॥ नरोवाञ्छतितेनेत्थंतोषणीयस्ततःप्रभुः ॥ ६५ ॥ एतत्तेपूर्वदेवेन्द्रचरितंसकलंमया ॥
स्वर्गवासाक्षयत्वंचमासर्क्षाच्युतपूजनात् ॥ ६६ ॥ यथावत्कथितंदेवपृच्छतस्त्रिदशेश्वर ॥ धर्मार्थकाममोक्षाश्चवाञ्छताविबुधाधिप॥६७॥
विष्णोराराधनादन्यत्परंमसिद्धिकारणम् ॥ तस्यास्तद्वचनंश्रुत्वादेवराजबृहस्पती ॥ ६८ ॥ तत्तथेत्यूचतुःसाध्वींचिरतुश्चापितद्व्रतम् ॥
तस्मात्पार्थप्रयत्नेनप्रतिमासंसमाहितः ॥ ६९ ॥ मासर्क्षाच्युतपूजायांभवेथास्तन्मनाःसदा ॥ ७० ॥ येसांभरायणिकथाचरितव्रतेऽस्मि
न्वर्षाणिसप्तविधिनासुधियोनयंति ॥ तेस्वर्गलोकमभिगम्यकृताधिवासाःकल्पायुतायुतशतैरपिनच्यवंते ॥ ७१ ॥ इतिश्रीभविष्येमहापु
राणेउत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादेसांभरायणीव्रतवर्णनंनामसप्ताधिकशततमोऽध्यायः ॥१०७॥ ॥छ॥ ॥ युधिष्ठिरउवाच ॥ ॥ सुरू
पतामनुष्याणांस्त्रीणांचयदुसत्तम ॥ कर्मणाजायतेकेनतन्ममाख्यातुमर्हसि ॥ १ ॥ सुरूपाणांसुगात्राणांसुवेषाणांतथैवच ॥ न्यूनंतथाधि
कंचापियथानाङ्गंप्रजायते ॥ २ ॥ समस्तैःशोभनैरङ्गैर्नराःकेचिद्यदूत्तम ॥ काणाःकुंताश्चजायंतेत्रुटितश्रवणास्तथा ॥ ३ ॥ नराणांयोषि
तांचैवसमस्ताङ्गसुरूपता ॥ कर्मणायेनभवतितत्पूर्वंकथयामल ॥ ४ ॥ लावण्यगतिवाक्यानिसतिरूपेमहामते ॥ कुर्वंत्यभ्यधिकांशोभां
समस्तपरमोगुणः ॥ ५ ॥ वाक्यलावण्यसंस्कारविलासललितागतिः ॥ विडंबनानुरूपाणांकेवलासाहिजायते ॥६॥ रूपकारणभूतायकर्म
णाप्रयतोभवेत् ॥ तस्मात्तन्मेसमाचक्ष्वकर्मयच्चारुरूपदम् ॥७॥श्रीकृष्णउवाच ॥ सम्यक्पृष्टंत्वयाहीदमुपवासाश्रितंनृप ॥कथयामियथाप्रो

१ अपि-इ०पा० । २ खंजाश्च-इ० पा० ।

